| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| योजनं गृहीतस्य सोमरसस्य समंत्रकं खरे सादनविधानम् । वैश्वदेवग्रहः—तत्र सार्थवादं शुक्रपात्रेण वैश्वदेवग्रहस्य ग्रहणं विधाय तदनुवादेन तन्मंत्रं विधाय च तदर्थ-विवरणं, गृहीतस्य सोमरसस्य समंत्रकं खरे सादनविधानं चेत्यादि. | १०२–११३ |
| २ माध्यन्दिनसवनग्रहाः—तत्र पूर्वस्मिन् ब्राह्मणे ऋतुग्रहैन्द्राग्नवैश्वदेवग्रहा विहिताः, तत्रैन्द्राग्नवैश्वदेवयोर्होत्रा शस्त्रे शंस्य-मानेऽध्वर्युणा प्रतिगरः कर्तव्यः स्तोत्र-मस्मिन्ब्राह्मणे कथ्यते । तत्र तावत्पूर्वं प्रतिगरशब्दस्य निर्वचनं, प्राङ्मासीन-मध्वर्युं प्रति शस्त्रमुपक्रमेतेति कथनं, प्रसङ्गात्स्तोत्रशस्त्रयोः पौर्वापर्यमुप-जीव्य शस्त्रशब्दस्य निर्वचनं, प्रतिगरा-वसरेऽध्वर्योः पर्यावृत्तिविधानं, प्रतिगरे-ऽध्वर्योः पराक्त्वे बाधं दर्शयित्वोक्तायाः पर्यावृत्तेर्दृढीकरणं, विहितस्य प्रति-गरस्य छन्दः-सम्बन्धिरसरूपेण प्रशंसनं, सकारणं प्रतिगरोच्चारणस्यावसानलक्ष-णकालविधानं, प्रसंङ्गात्प्रातःसवना-दीनां क्रमेण गायत्रत्रैष्टुभजागतत्वानि प्रदर्श्य सवनत्रयेऽपि प्रतिगरे विशेष-विवक्षया प्रस्तावकरणं, प्रकृते प्रति-गरसवनत्रयेऽपि विशेषकथनं, प्रोक्तस्य प्रतिगरस्य कालप्रदर्शनं, प्रतिगरस्य स्वरूपविधानं, प्रतिगरे केषाञ्चिच्छा-खिनां सोपपत्तिकं मतमनूद्य तन्निरा-कृत्य स्वमतमभिधाय च तन्निगमनं चेति. | ११३–११८ |
| ३ शुक्रामन्थ्यादिग्रहाः—तत्र उक्थ्यग्र-हान्तं प्रातःसवनं संस्थाप्य माध्यन्दिन-सवनाय सोमाभिषवस्य विधानं, ततः शुक्रादिपञ्चग्रहाणां ग्रहणस्य क्रमेण विधानम्, उक्थ्यमरुत्वतीययोः पौर्वापर्ये शाखान्तरमतमनूद्य निराकरणपूर्वकं स्वमतस्य स्थापनं, सम्भूय पञ्चानां ग्रहाणां ग्रहणमनूद्य तत्प्रशंसनं, मरुत्वतीयानां ग्रहणमनूद्य कारणा-भिधानम्, ग्रहाणां मरुदर्थकत्वात्तेभ्य एव ग्रहणप्रसक्तौ तत्सहितायेन्द्राय गृह्णीयादिति विधानं, कारणान्तरो-पन्यासेनोक्तार्थस्य दृढीकरणं, प्रकृत-ग्रहाणामृतुपात्राभ्यां ग्रहणविधानं, क्रमेण ग्रहाणां ग्रहणसादनमन्त्राभिधानं, तद-र्थविवरणं च, मरुत्वतीयग्रहानंतरं माहेन्द्रं ग्रहं विधाय तस्य पापनिरसन-हेतुत्वेन प्रशंसनं, पुनरपि तस्यैव माहे-न्द्रग्रहस्य यजमानसम्बन्धिमहत्त्वहेतुत्वेन प्रशंसनं, विहितं ग्रहणमनूद्य तत्र शुक्रपात्रं विधाय मन्त्रं च विनियुज्य तद्व्याख्यानं, माहेन्द्र-ग्रहे पृष्ठस्तोत्रोपाकरणानन्तरमध्वर्योः प्रैषरूपाया वाच उत्पादनं, स च प्रैष-स्तृतीयसवनार्थ इति व्याख्यानं, माध्य-न्दिनसवने तृतीयसवनार्थाभिषवादि-सम्पादनार्थस्य प्रैषस्य प्रयोजननिरूपणं चेति. | ११८–१२६ |
| ४ दक्षिणादानं—तत्र पूर्वं प्रयोजनमु-क्त्वा प्रसंगाद्दक्षिणापदनिरुक्तिं चाभि-धाय दक्षिणादानविधानं, प्रसङ्गाद्धवि-र्यज्ञे दक्षिणाक्लृप्तिं प्रदर्श्य प्रकृते सोम-यागे दक्षिणाक्लृप्तिकथनं, सोपपत्तिकं शतदक्षिणत्वेन यज्ञस्य समृद्धिनिरूपणम्, उक्तसंख्याया न्यूनत्वेनार्त्विज्यं न कुर्या-दिति निषेधकथनं, विहितदक्षिणायाः | |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयः पृष्ठाङ्काः

प्रकारान्तरेण प्रशंसनम्, उक्ताया दक्षिणायाः सहोतृकर्त्विग्सम्बन्धविधानं, सकारणं वाससि हिरण्यबन्धनरूपविशेषसहितं दाक्षिणहोमविधानं, विहिते गार्हपत्याधिकरणकहोमे मन्त्रौ विधाय तयोश्छन्दःप्रयोजनसहितं निर्देशं कृत्वा तदर्थविवरणं, विकल्पेनैकाहुतिकस्य द्व्याहुतिकस्य वा आग्नीध्रहोमस्य विधानं, विहिते होमे प्रथमाहुतौ मन्त्रं विधाय द्वितीयाहुतेर्नैमित्तिकत्वमुपवर्ण्य च तस्याः कर्तव्यपक्षे मन्त्रं विधाय तद्गतवाजशब्दप्रयोगस्य तात्पर्याभिधानं, सेतिकर्तव्यताकं समन्त्रकं दक्षिणार्थानां गवामभिमन्त्रणविधानं तत्र मन्त्रस्य चतुर्धाविभागेन व्याख्यानं च, मन्त्रतत्तात्पर्यसहितं सदोगमनविधानं, समन्त्रकं सदस्यैः सह सदः प्रेक्षणविधानं, मन्त्रमन्त्रार्थयुतं सहिरण्यमाग्नीध्रंप्रति गमनविधानम्, उपसदनानन्तरं मन्त्रमन्त्रार्थयुतमग्नीधे हिरण्यदानविविधानं, दक्षिणादाने आग्नीध्रस्य प्राथमिकत्वे कारणोपन्यासः, आग्नीध्राय हिरण्यं दत्वा तत आत्रेयाय हिरण्यं दद्यादिति विधानं, आत्रेयाय हिरण्यदाने हेतुनिरूपणं, ततो ब्रह्मादिभ्यः सप्रकारकं क्रमेण दक्षिणादानविधानं, दक्षिणादानानन्तरं मरुत्वद्ग्रहस्यानुवाक्यासम्प्रैषविधानम्, उक्तसम्प्रैषोच्चारणान्तरं न दद्यादित्यर्थविधायिन्याख्यायिका, विहितशतदक्षिणातिरिक्तानां चतुर्णां द्रव्याणां प्रयोजनाभिधानपूर्वकमृत्विग्विशेषेषु दानविधानं, क्रमशो विहितानां हिरण्यादीनां चतुर्णाम्प्रतिग्रहणमन्त्राणां प्रदर्शनं, हिरण्यादिदानानन्तरं मन्थादिदानस्य विधानम्, इच्छया दत्तस्य वस्तुनः प्रतिग्रहमन्त्रमभिधाय तस्य प्रश्नोत्तररूपार्थस्याभिधानं च, प्रतिग्रहमन्त्रेषु तत्तद्देवतावाचकपदोच्चारणस्य प्रयोजनाभिधानम्, अस्मिन्विषये देवतापदं नोच्चरेदिति केषाञ्चिन्मतनिरूपणं चेत्यादि। १२७-१४२

५ तृतीयसवनग्रहाः—तत्र प्रथममादित्यग्रहः—तृतीयसवनादावादित्यग्रहयागं विधातुमुपोद्घातः, प्रकृतादित्यग्रहोपयोगिन्याख्यायिका, तत्र द्विदेवत्यानामनुवषट्कारं दर्शयितुं द्विदेवत्ययागकाले तदुपयुक्तप्रयोगकथनं, प्रतिप्रस्थातृकृतया द्वितीयाहुत्या द्विदेवत्यानामनुवषट्कारसिद्धिकथनमुक्तहोमस्योत्तरार्द्धदेशकथनं, विहितस्य प्रतिनिग्रहणस्य द्विदेवत्यसंसृष्टादित्योत्पादकत्वेन च प्रशंसनं, सप्रयोजनं समन्त्रकं द्विदेवत्यग्रहे यागादनन्तरमादित्यपात्रेणादित्यस्थाल्याऽऽच्छादनविधानं, विहिते काले ग्रहस्य ग्रहणात्प्रागनुष्ठेयानुष्ठानविशेषस्य विधानं, समन्त्रकं ग्रहणविधानं; तत्र मन्त्रान्ते "उपयामगृहीतोऽसि" इति शेषो न वक्तव्य इति सकारणं निषेधकरणम्, उक्तमन्त्रविशिष्टग्रहणानन्तरं पात्रमपगृह्य पुनश्च समन्त्रकं ग्रहणविधानम्,

दधिग्रहः—तत्र गृहीते सोमरसे सार्थवादं दधिग्रहणविधानं, दधिग्रहस्य स्थानविषये केषाञ्चिन्मतमुक्त्वा स्वमतस्य स्थापनम्, आदित्यग्रहस्य सम्पूर्णताहेतुत्वेन प्रशंसनं, विहिते दधिग्रहणे मन्त्रस्य

ब्रा० विषयाः पृष्ठाङ्काः

विनियोजनं, आदित्यग्रहस्योपांशुसवनाख्येन ग्राव्णाऽऽलोडनविधानं, ग्रहान्तरसाधारण्येन ग्रहणानन्तरं प्राप्तस्य दशापवित्रेण मार्जनस्य सप्रयोजनं निषेधकरणम्, उपांशुसवनेन ग्रहस्य विहितं मेक्षणमनूद्य तत्र मंत्रस्य विनियोजनं, ग्रहणानन्तरं कर्तव्यकथनं, द्वारपिधानापनयनानन्तरं निष्क्रमणादिकस्य विधानम, अध्वर्योः प्रैषमुत्पाद्य कालविशिष्टस्य होमस्य विधानं, ग्रहान्तरसाधारण्येन प्राप्तस्यानुवषट्कारस्य निषेधः, यथावत्प्रतिप्रस्थात्रे विशेषप्रदानकथनम्, आदित्यग्रहयागानन्तरं हविर्द्धानगमनपूर्वकमाग्रयणस्य ग्रहणप्रकारविधानं, धाराचतुष्टयाद्ग्रहणस्य प्रशंसनम्, आग्रयणस्य ग्रहणे प्रतिप्रस्थातृकृतं संस्रवासेचनमादित्यग्रहस्यानुवषट्कारलाभहेतुत्वेन प्रशंस्य पुनः प्रकारान्तरेणापि तस्य प्रशंसनं चेत्यादि. १४२–१५३

इति तृतीयोऽध्यायः ।

**अथ चतुर्थोऽध्यायः ।**

१ **सावित्रग्रहः**–तत्र सावित्रं ग्रहं विधातुं तस्य मनस्त्वप्राणत्वरूपेणाभिध्यानं, सोपपत्तिकं सोमयज्ञस्य प्रतिसवनं संवत्सररूपेण विभावनं, तदर्थं तृतीयसवने सवितुः सर्वर्तुरूपत्वात्तत्सम्बन्धात्सावित्रग्रहस्यापि ऋतुग्रहसम्पत्तिकत्वप्रदर्शनं, सकारणं सावित्रग्रहस्योपांशुपात्रेण वाऽन्तर्यामपात्रेण वा ग्रहणविधानं, पुनरुपक्षीणे तस्य सार्थवादमाग्रयणाद्ग्रहणविधानं, विहिते ग्रहणे मंत्रस्य विनियोजनं, गृहीतस्य सोमरसस्य खरे सादनं न विधेयमिति सकारणं निषेधकथनम्, अनुवषट्कारवर्ज्यं आश्रावणादीतिकर्तव्यतासहितं होमविधानम् ।

**वैश्वदेवग्रहः**–तत्र अभक्षितेन पात्रेण वैश्वदेवग्रहग्रहणविधानं, वैश्वदेवग्रहस्य मनोरूपस्य सवितुः कृतानुकरानुवर्त्मत्वेन प्राणोदानत्वेन च प्रशंसनं, प्रसंगात्तृतीयसवनस्य वैश्वदेवत्वमभिधाय वैश्वदेवग्रहस्य ऋग्यजुःसामसम्बन्धप्रदर्शनं, तस्य सार्थवादं पूतभृतो ग्रहणविधानं सोपपत्तिकमपुरोरुक्कतया ग्रहणविधानं च, विहितं ग्रहणमनूद्य तत्र मन्त्रस्य विनियोजनं, गृहीतस्य सोरमस्य खरे सादनविधानं, होत्रा वैश्वदेवशस्त्रे शंस्यमाने द्विदैवत्यपात्राणां विमोक्षणं विधेयमिति कथनं, तत्र कारणाद्युपन्यासश्चेति १५४–१६०

२ **सौम्यश्चरुः**–तत्र सौम्यस्य चरोः सोपपत्तिकं प्रचरणविधानं, सौम्यस्य चरोर्देवपित्रोरुभयोर्हविष्ट्वमुक्त्वा तन्निमित्तककलहनिवारणाय तस्य वैश्वदेव्ये तृतीयसवनेऽनुवाक्यावर्जं प्रचरणविधानं, प्राक्पश्चाद्वुभयतोऽन्यतरतो वाऽऽज्येन परियजनसहितस्य सधर्मकस्य सौम्यस्य चरोर्होमविधानम् ।

**पात्नीवतग्रहः**–तत्र पूर्वं प्रचरण्या स्रुचा चतुर्गृहीतमाज्यं गृहीत्वाऽध्वर्युः शालाकैर्यथोपकीर्णं यथापूर्वं धिष्ण्यानां व्याघारणविधानं, तदेव प्रतिप्रस्थातुः पात्नीवतग्रहस्य ग्रहणविधानं तत्साधनत्वेन यदि सावित्रो ग्रह उपांशुपात्रेण गृहीतश्चेदस्यान्तर्यामपात्रेण ग्रहणं यदि सावित्रो ग्रह अन्तर्यामपात्रेण गृहीतश्चेदस्योपांशुपात्रेण ग्रहणं चेति व्यवस्थित-

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| विभाषया पात्रस्य विधानं, तदपि ग्रहणमपुरोरुक्तया कर्तव्यमिति विधानं, विहितं ग्रहणमनूद्य तत्र मन्त्रस्य विनियोजनं, सार्थवादं प्रचरणीशेषेणाज्येन पात्नीवतग्रहस्य श्रयणकरण ( मिश्रणकरण ) कथनं, प्रसंगात्स्त्रीणां पित्र्यस्य धनस्य वा षड्विधस्य स्त्रीधनस्य दायस्यानीश्वरत्वोपवर्णनम्, उक्ते श्रयणे मन्त्राभिधानं, सार्थवादं सप्रैषं सधर्मकं समन्त्रकं समक्षं च पात्नीवतग्रहहोमविधानं तत्र प्रैषे उक्थ्यादिसोमसंस्थासु विशेषाभिधानं चेत्यादि | १६०–१६६ |
| ३ हारियोजनग्रहः--तत्र हारियोजनग्रहविधायिन्याख्यायिका, हारियोजनग्रहस्यातिरिक्तत्वप्रतिपादनं, सकारणं द्रोणकलशेऽपुरोरुक्तया ग्रहणविधानं, विहिते ग्रहणे मंत्रस्य विनियोजनं, गृहीते सोमरसे समंत्रकं धानानामावापविधानं, सकारणं सधर्मकमुन्नेतुर्हारियोजनग्रहहोमविधानं, भक्षार्थं धानानां विभज्य ग्रहणविधानम्, अत्र द्रोणकलशभक्षविषये होतुरेव भक्ष इत्येकीयमतमनूद्य तन्निरस्य च सर्वर्त्विजां भक्ष इत्यस्य स्वमतस्य प्रतिष्ठापनं, सर्वर्त्विक्कर्तृकं धानानां समंत्रकं प्राणभक्षमर्यादवघ्राणं कृत्वा तासां सकारणमुत्तरवेदावेव निवपनविधानं, सार्थवादं पूर्णपात्राणां समवमर्शनं विधाय तत्र मंत्रं विनियुज्य च पूर्णपात्रस्थाभिरद्भिर्मुखोपस्पर्शनविधानं चेति. | १६७–१७२ |
| ४ समिष्टयजुः–तत्र ज्योतिष्टोमाङ्गभूतानां समिष्टयजुःसंज्ञकानां होमानामपूर्वो नवसंख्याविशिष्टः सोपपत्तिकोत्पत्तिविधिः, समिष्टयजुःशब्दनिर्वचनम्, एतेषां नवानां समिष्टयजुर्होमानां मध्ये प्रथमस्य त्रिकस्य यजमानाप्यायनं, द्वितीयस्य त्रिकस्य देवताविसर्जनमुत्तमस्य त्रिकस्य यज्ञप्रतिष्ठापनं चेत्येवंप्रयोजननिरूपणं, विहितेषु समिष्टयजुर्होमेषु क्वचित्क्वचिद्व्याख्यानसहितानां मंत्राणां विनियोगप्रदर्शनं चेत्यादि. | १७२–१७६ |
| ५ अवभृथस्नानं–तत्रादावप्स्ववतरणस्य सकारणमृजीषस्यापोऽभ्यवहरणस्य च विधानं प्रसङ्गादवभृथशब्दनिर्वचनं च, समिष्टयजुरन्ते बर्हिर्होमात्प्राक्सोममभितो वर्तमानस्य चमसाद्युपकरणजातस्य चात्वालंप्रति निनयनविधानं, कृष्णविषाणाया मेखलायाश्चाध्वर्योश्चात्वाले प्रासनविधानं, विहिते प्रासने सोपपत्तिकं मंत्रस्य विनियोजनम्, अध्वर्योर्यजमानाय " उरुꣳ हि " इति मंत्रस्य वाचनकथनं, तथा प्रस्तोत्रे सप्रयोजनसामगानप्रैषदानकथनं, तच्च सामाग्नेय्यामतिछंदस्कायामृचि गेयमिति प्रतिपादनं तत्साममंत्रप्रदर्शनं च, स्यन्दमानानामपां मध्ये यत्र स्थिरा आप स्तत्प्रदेशे उदङ् निष्क्रम्य जवनेन चात्वालमित्याद्युक्तप्रकारकसंचरमार्गेण सर्वेषां गमनविधानम्, अध्वर्योरपोऽवक्रमयते यजमानाय " नमो वरुणाय " इति मंत्रस्य वाचनकथनम्, अप्स्ववतरणानन्तरंचतुर्गृहीतेनाज्येन समित्पूर्वकं समंत्रकं सप्रयोजनमनीकवत्याज्याहुतिहोमविधानं, चतुर्गृहीतेन जौहवेनाज्येन सकारणमपबर्हिषां चतुर्णां प्रयाजानामनुष्ठानविधानं, प्रयाजानंतरं | |

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

प्रधानो वारुणयागस्तत्र तस्य वारुणस्यैककपालस्य पुरोडाशस्योत्पत्तिविधिकथनं, सेतिकर्तव्यताकः प्रधानो वारुणयागः तत्र धर्मेषु अवयतोऽनुवाचनमिति विशेषकथनं, सेतिकर्तव्यताकः सौविष्टकृदाग्निवरुणो यागो धर्मकृतोऽवद्यतोऽनुवाचनविशेषश्चेति कथनम्, अवभृथेष्टौ षडाहुतिपक्षमभिधाय तस्यर्तुसंवत्सरसम्पत्त्योपपादनं तथा दशाहुतिपक्षमभिधाय विराडात्मसम्पत्त्योपपादनम्, अनयोः पक्षयोःक्रमादादित्यानामाङ्गिरसानां च मार्गत्वमुपवर्ण्य यजमानेच्छयाऽन्यतरःपक्षोऽनुष्ठेय इति निरूपणं, सार्थवादं ऋजीषकुम्भस्य समंत्रकं सहेतुकं जले प्लावनविधानम्, आप्लावितं कुंभं जले विसृज्य यजमानकर्तृकं समंत्रकं सहेतुकं तदुपस्थानविधानम्, अध्वर्योर्ऋजीषकुम्भस्य समंत्रकं सहेतुकं जलस्यान्तर्मज्जनकरणविधानं, स्नानमन्योऽन्यपृष्ठप्रधावनमन्यद्वासःपरिधानं स्नानफलं गमनोपदिष्टसंचरमार्गेण पुनरेत्य यजमानस्याहवनीये समंत्रकं समिधोऽभ्याधानं तत्प्रयोजनं चेत्यादि शेषावभृथकर्मविधानं चेति. १७७–१८६

इति चतुर्थोऽध्यायः ।

अथ पञ्चमोऽध्यायः ।

१ उदयनीयेष्टिः—तस्याम्प्रधानभूतस्यादित्यस्य चरोरुत्पत्तिविधिः, औदयनीयमितिकर्तव्यताजातं सर्वं प्रायणीयवत्कर्तव्यमितिप्रतिपादनाय प्रायणीयेतिहासस्येहातिदेशः, प्रायणीयोदयनययोर्द्वयोः प्रयोजनकथनं, प्रायणीयोदयनीययोः सकारणं देवताक्रमनिरूपणं चेति.

अनुबन्ध्यायागः—तत्र प्रधानभूताया मैत्रावरुण्याया वशाया अनुबन्ध्याया उत्पत्तिविधिः, उक्तस्यानुबन्ध्यायागस्य समिष्टयजुषामन्ते कर्तव्यतया चोदितत्वात्सवनीयादन्यपशुबन्धयागत्वस्य निरूपणम्, अनुबन्ध्याया वशाया मैत्रावरुणीयत्वे कारणप्रदर्शनम्, मैत्रावरुण्यावशायागस्य प्रयोजनकथनम्, मैत्रावरुण्याया वशाया उत्पत्तिं वर्णयितुं कारणोपन्यसनं, तत्प्रसङ्गेनाङ्गारेभ्योऽङ्गिरसां तदन्वन्यपशूनां पशुष्वपि परिशिष्टपांसुभ्यो गर्दभस्य परिशिष्टाद्रसान्मैत्रावरुण्यावशायाश्चोत्पत्तिमभिधाय तस्या अन्त्यत्वे कारणाभिधानम् वशाया गोरभावे उक्षवशस्यादानकथनं च, ततो वैश्वदेव्यावशायास्तदनन्तरं बार्हस्पत्या वशायाश्चोत्पत्तिवर्णनं तत्र बार्हस्पत्या वशाया अन्त्यत्वे कारणोपवर्णनं च, ये संवत्सरं तदधिककालं वा सहस्रदक्षिणाकं तदधिदक्षिणाकं वा दीर्घसत्रं गवामयनादिकमासीरंस्तैरुक्ते दीर्घसत्रे एतासांसर्वासां मैत्रावरुणीवैश्वदेवीबार्हस्पतीनां वशानामुत्पत्तिक्रमेणालंभो विधेय इति निरूपणं चेति.

उदवसानीयेष्टिः—तत्रोदवसानीयेष्टेरुत्पत्तिविधिमभिधाय तत्प्रधानभूतस्याग्नेयस्य पञ्चकपालस्य पुरोडाशस्य सार्थवादं विधानं पञ्चकपालत्वे कारणनिरूपणं च, अस्यामिष्टौ हिरण्यमनड्वान्वा दक्षिणां दद्यादिति सकारणं विधानम्, अथवोदवसानीयास्थाने पशुवच्चतुर्गृहीतेनाज्येन वैष्णव्यर्चाऽऽहुतिर्होतव्येति सोपपत्तिकं विधानम्,

ब्रा० विषयाः पृष्ठाङ्काः

अत्रापि पक्षे यत्किंचिच्छक्त्यनुसारेण दक्षिणात्वेन दद्यादिति सहेतुकं विधानम्, उदवसानीयेष्टेस्तत्स्थानीयाहुतेरन्ते वा सायमग्निहोत्रहोमविधानं स्वकाले एव प्रातरग्निहोत्रहोमविधानं चेत्यादि. १८७-१९२

२ अनुबन्ध्याप्रायश्चित्तं-तत्र वशाया आलमनादिवपोत्खेदान्तेतिकर्तव्यतानुष्ठानानंतरं गर्भान्वेषणप्रैषदानकथनम्, अन्वेषणोत्तरं यदि गर्भो न लभ्यते तदा न काऽपि प्रायश्चित्तिः यदि च लभ्यते तदैषा प्रायश्चित्तिः कर्तव्येतिनिरूपणं, गर्भस्य लाभे तद्हिंसारूपं दोषं निरूप्य स्थाल्युष्णीषयोरुपकल्पनकरणप्रैषदानकथनं, वपाप्रचरणं विधाय अध्वर्युयजमानयोः पुनरागमनविधानम्, तदुत्तरमध्वर्योर्गर्भनिरूहणार्थकस्य प्रैषद्वयदानस्य विधानम्, निरुह्यमाणस्य गर्भस्य समन्त्रकं मन्त्रार्थयुतं चाभिमन्त्रणविधानम्, सप्रकारकं गर्भान्मेधग्रहणमुपवर्ण्य प्राकृतपशुवदवदानग्रहणकथनं च, अवदानानां मेधस्य च युगपच्छ्रपणं कृत्वा गर्भं चोष्णीषेणावेष्ट्य पशुश्रपणस्य पार्श्वतो विधानं, ततोऽध्वर्योः सेतिकर्तव्यताकं वसावदानहोमविधानं तदनु प्रतिप्रस्थातुः सेतिकर्तव्यताकं मेधहोमविधानं च, उक्ते मेधहोमे मंत्रं विनियुज्य व्याख्याय च तस्मिन्मंत्रे पुंस्त्वस्त्रीत्वादिलिङ्गस्य ज्ञानेऽज्ञाने च ऊहप्रकारवर्णनम्, अध्वर्योः सेतिकर्तव्यताकं वानस्पत्यस्य स्विष्टकृद्यागस्य विधानं तदनु प्रतिप्रस्थातुः सेतिकर्तव्यताकं सर्वस्य मेधस्य होमविधानं च, उक्ते मेधहोमे मन्त्रं विनियुज्य तदभिप्रायकथनं च, स्विष्टकृदन्तेऽस्य गर्भावशेषस्य सहेतुकं वृक्षे आसंजनमप्सु वाऽभ्यवहरणमाखूत्करे वोपकिरणं कुर्यादिति प्रतिपत्तौ पक्षत्रयं कथयित्वा तेष्वनुव्याहारभयं दर्शयित्वा चांते पशुश्रपणे शामित्रेऽग्नौ मरुत उद्दिश्य जुहुयादिति सोपपत्तिकेन चतुर्थपक्षेण प्रतिपत्तेर्निगमनं, होमात्मके चतुर्थपक्षे होमावसरं होमप्रकारं चाभिधाय मन्त्रं च विनियुज्य मन्त्रान्ते स्वाहाकारो न प्रयोक्तव्य इति साभिप्रायं निरूपणं हुतस्य गर्भस्य समन्त्रकमङ्गारैरभ्यूहनविधानं चेत्यादि. १९३-१९८

इत्यग्निष्टोमः ।

३ षोडशीग्रहः-तत्र ज्योतिष्टोमे एव षोडशीग्रहस्य काम्यं विधानं तदर्थमितिहासोपन्यासश्च, मंत्रेणोक्तेतिहासस्य दृढीकरणं फलविधिश्च उक्तस्य षोडशीग्रहस्यानुष्टुप्छन्दस्कया हरिवत्यर्चा चतुःस्रक्तिना पात्रेण सोपपत्तिकं ग्रहणविधानं, विहिते ग्रहणे प्रातःसवने आग्रयणानन्तर्यरूपं वा माध्यन्दिनसवने आग्रयणानन्तर्यरूपं वा कालं विधाय वैकल्पिकं ग्रहणसाधनभूतमंत्रद्वयविधानं, सप्रयोजनं कालविशिष्टस्य षोडशीग्रहस्तोत्रस्योपाकरणानुशंसनयोर्विधानं चेति. १९९-२०२

## अथ पृष्ठ्यः षडहो, विश्वजिदेकाहश्च ।

४ अतिग्राह्यग्रहाः-तत्र पूर्वं पृष्ठ्ये षडहे विश्वजिति चातिग्राह्यग्रहविधायिन्याख्यायिका, अतिग्राह्यशब्दनिर्वचनम्, अतिग्राह्यग्रहाणां ग्रहणे समुच्चित्य फल-

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

विधानं त्रयाणामपि तेषां प्रत्येकं प्रातिस्विकफलप्रदर्शनं च प्रातःसवने आग्रयणग्रहग्रहणानन्तरं वा माध्यन्दिनसवने उक्थ्यग्रहग्रहणानन्तरं वोपाकरिष्यन्पूतभृतोऽतिग्राह्यग्रहान्गृह्णीयादितिसकारणं पक्षपक्षान्तरेण तेषां ग्रहणावसरत्रयं विधायोक्तेषु पक्षेषु प्रथमपक्षस्यैव निगमनं, गृहीतानामेषामतिग्राह्यग्रहाणां माहेन्द्रग्रहहोमादनन्तरं सोपपत्तिकं होमकरणविधानं, क्रमेण तेषां विहिते ग्रहणे मंत्रत्रयस्य विनियोजनं, यजमानस्य तेषां सप्रयोजनं भक्षणविधानं, पृष्ठ्ये षडहे यागे तानतिग्राह्यग्रहान् पूर्वे त्र्यहेऽन्वहमेकैकं गृह्णीयादथवोत्तरेऽन्वहमेकैकं गृह्णीयादिति पक्षद्वयमुक्त्वा तन्मध्ये द्वितीयं पक्षं निषिध्य प्रथमपक्षं च सिद्धान्तीकृत्य पुनः यदोत्तरे एव जिघृक्षा तदा पूर्वे उत्तरे च त्र्यहेऽर्थादुभयत्र गृह्णीयादिति तेषां ग्रहणप्रकारकथनम्, सर्वपृष्ठे विश्वजिति त्वेतेषां यथानुपूर्व्या एकाहे एव ग्रहणविधानं चेति. २०३–२०६

इति पृष्ठ्यः षडहो, विश्वजिदेकाहश्च ।

५ यज्ञात्मकस्य प्रजापतेरुपांशुपात्रादिभ्यःप्रदेशेभ्योऽजाविमनुष्यादयः प्रजाः प्रजायन्ते तेषां च पात्राणां पौनःपुन्येन प्रयोगात्ताः प्रजा अपि पौनःपुन्येन प्रजायन्ते यदा यदा चान्ते प्रजापत्यात्मकाद्यज्ञात्सलेशो यदन्ततो हारियोजनो भवति स तदैताः प्रजाः पालयितुमभिजिघ्रति । उपांशुपात्रस्यासादनेनैव सर्वाः प्रजाः प्रजायन्ते इत्यादिरूपेण सप्रकारकेणार्थवादेन यज्ञसमृद्धेरुपपादनमित्यादि २०७–२१०

६ अवकाशमन्त्राः–तत्र ज्योतिष्टोमे एवाश्विनग्रहग्रहणोत्तरमध्वर्युर्ग्रहणक्रमाद्यजमानेनोपांश्वादीन्ग्रहानवेक्षयति प्रतिग्रहं "प्राणाय मे" इत्याद्यवकाशमन्त्राणां प्रतिमन्त्रं यजमानाय वाचनदानपूर्वकमिति सप्रकारकमवकाशमन्त्रवाचनविधानं, ततो यजमानस्यान्वङ्गमाशिषां "भूर्भुवः स्वः" इति मन्त्रेणाशासनं, एतच्चावकाशमन्त्रवाचनं ज्ञातप्रियानूचानान्यतमाय यजमानाय कर्तव्यं नान्यस्मै इति नियमनं चेति २१०–२१२

७ ज्योतिष्टौमिकं प्रायश्चित्तं–तत्र पूर्वं चतुस्त्रिंशतो मन्त्रविशेषाणां व्याहृतित्वमुपपाद्य तेषां प्रायश्चित्तार्थत्वोपपादनं, घर्मदुहो गोर्मरणेऽदोहे चान्यां गामुपसंक्रामय्येत्यादिप्रकारसहितं व्याहृतिभिश्चतुस्त्रिंशदाज्याहुतिहोमात्मकं प्रायश्चित्तं कुर्यादिति प्रतिपादनं, सोमयागे यत्र कुत्रापि कर्मणि सोमाङ्गस्य सोमाङ्गाङ्गस्य वोपपाते परमेष्ठ्यादिचतुस्त्रिंशदाहुतीनां मध्ये ब्रह्मणा सकृद्गृहीतेनाज्येन तत्तद्देवत्यैकैका कालाहुतिराहवनीये होतव्या सुत्यासु त्वाग्नीध्रीये होतव्येति सौमिकाङ्गाद्युपपातप्रायश्चित्तविधानं, सोमेऽभिषुतस्य सोमरसस्य स्कन्दने स्कन्नमद्भिरुपनिनीय वैष्णववारुण्यर्चाऽभिमृशेदिति सोपपत्तिकं सौमिकहविःस्कन्दनप्रायश्चित्तविधानम्, उक्ते प्रायश्चित्ते स्कन्नमद्भिरनुपनिनीय केवलं तत्स्कन्नं 'देवान्दिवम्' इति मन्त्रेणाभिमृशेदेवेति पक्षान्तरविधानम्, उक्तासु कालाहुतिषु ताभिः सहैव यजमानाय 'यज्ञस्य

क्रा० विषयाः पृष्ठाङ्काः | क्रा० विषयाः पृष्ठाङ्काः

दोहः ' इति मन्त्रस्य सोपपत्तिकं वाचनविधानं चेति. २१३-२१७

इति प्रायश्चित्तम् ।

८ गर्गत्रिरात्रमहीनम्—तत्रादौ सप्रकारकं साहस्र्या गोरतिरेचनविधानम्, अतिरेचनीयाया गोः परिच्छेदार्थं त्रिरूपा-रोहिण्युपध्वस्ताऽप्रवीतेति विशेषणचतुष्टयाभिधानम्, दक्षिणानयनकाले आद्येऽह्नि अस्याः साहस्र्या गोरितराभ्यस्तस्मिन्नहनि नीयमानाभ्यो गोभ्यः पूर्वं वाऽन्त्येऽह्नि पश्चात्प्रतिनयनविधानं, ततोऽस्यै साहस्र्यै गवे सप्रकारकं सप्रयोजनं समन्त्रं द्रोणकलशस्यावघ्रापणविधानम्, अस्याः साहस्र्या गोर्दक्षिणे कर्णे यजमानकर्तृकं ' इडेरन्ते ' इतिमन्त्रस्य जपविधानं तत्र मन्त्रे 'ब्रूतात्' इत्यस्य स्थाने ' वोचेः ' इति विपरिणमेदिति विधानं च, ततस्तस्याः साहस्र्या गोर्विमोचनं विधाय तस्याः स्वच्छन्दगमनेन यजमानाय फलोन्नयनविज्ञानकथनं, अनुबंध्यवपाहोमोत्तरमुदवसानीयायां वा होत्रादिभ्यः सोपपत्तिकं गोसाहस्रीदक्षिणादानविधानं तद्विभजनप्रकारकथनं च उक्तप्रकारेण दक्षिणां विभज्य दाने फलकथनं चेति. २१८-२२३

इति गर्गत्रिरात्रम् ।

९ व्यूढद्वादशाहः-तत्र प्रथमं व्यूढद्वादशाहस्योत्पत्तिविधिः, अध्वर्योर्ग्रहव्यूहनं विधाय होतुरुद्गातुश्च छन्दोव्यूहनविधानं तत्रापि पूर्वस्मिंस्त्र्यहे समूढच्छन्दस्त्वमर्यादैन्द्रवायवाग्रं ग्रहग्रहणविधानं, चतुर्थनवमयोः सकारणमाग्रयणाग्रत्वं—षष्ठसप्तमयोः शुक्राग्रत्वं—पंचमाष्टमयोरैन्द्रवायवाग्रत्वं—तथा पूर्वेषां ग्रहणात्पूर्वं शुक्राग्रायणयोः स्वस्वस्थानेनासादनं किंतु परिमार्जनप्रभृति कृत्वा प्राकृते काले आसादानं विधेयं तदप्यासादनं यस्य हिङ्कारो विहितस्तेषां तदितरेषां त्वहिङ्कृत्यैवासादनमिति विशेषप्रकारविधानम्, अनयोर्व्यूहनाव्यूहनयोरुपपादनं चेत्यादि. २२१-२२८

इति व्यूढद्वादशाहः ।

१० प्रक्रान्ते ज्योतिष्टोमे प्राकृते वैकृते वा यदि सोमोऽपहृतश्चेत्तदा सोमान्वेषणप्रैषद्वयविधानपूर्वकं पूर्वपूर्वस्यालाभे उत्तरोत्तरेषामार्जुनारुणपुष्पश्येनहृतपूतिकादारारुणदूर्वाहरितकुशानां प्रतिनिधीनां सकारणमभिधवविधानं, प्रतिनिध्यनुष्ठाने एकस्या एव गोर्दक्षिणात्वेन विधानम्, अवभृथान्ते एव प्रक्रांतं यज्ञं समाप्य पुनर्दीक्षां गृहीत्वाऽनुष्ठितयागेन पुनर्यजेतेत्येवं सोमापहरणे पुनर्यज्ञरूपप्रायश्चित्तविधानं, द्रोणकलशवसतीवर्यैकधनादिकलशभेदे सेतिकर्तव्यताकं प्रायश्चित्तविधानं, तत्रापि दक्षिणादानात्प्राग्द्रोणकलशभेदने पूर्ववत्पुनर्यज्ञरूपं प्रायश्चित्तविधानं ज्यौतिष्टौमिकास्वग्निष्टोमादिसंस्थासु सोमातिरेके प्रायश्चित्तविधानं चेति. २२८-२३१

इतिपञ्चमोऽध्यायः ।


## अथ षष्ठोऽध्यायः ।


१-अंशुग्रहः-तत्र अंशुग्रहस्याधिदैवतया प्राजापत्यत्वमध्यात्मतयाऽऽत्मत्वमधिभूततया सर्वतनूत्वमुपपाद्य सार्थवादं सोपपत्तिकं चतुः स्रक्तिनौदुम्बरेण पात्रे-

ब्रा० विषयाः — पृष्ठाङ्काः

णांशुग्रहग्रहणविधानम्, अंशुग्रहसम्बन्धिनोऽश्मादानांशुनिवपनाबुपसर्जनाद्व्युद्यमनपूर्वकसकृदभिषवनानवानन्हवनं प्रागुक्तग्रहणं चेत्येतस्य पदार्थजातस्य तूष्णीमनुष्ठेयत्वोपवर्णनं, सार्थवादमनामिका यामवबद्धस्य हिरण्यस्यावघ्राणं विधाय औपतपस्विने रामस्य मतेनोच्छ्वसन्नंशुग्रहो होतव्य इति विधानम्, आश्वतराश्वेर्बुडिलस्य मतेन ग्रावाणमुद्यम्यैवांशुग्रहं गृह्णीयात्तं नाभिषुणुयादिति सोपपत्तिकमभिषवनप्रत्याख्यानं, याज्ञवल्क्यस्य मतेन तु सकृदभिषुणुयादेव मंत्रेणोक्तत्वादिति सोपपत्तिकं प्रतिपादनम्, अंशुग्रहसम्बन्धिन्या द्वादशानां प्रथमगर्भाणां पष्ठौहीनां धेनूनां दक्षिणात्येन सार्थवादं विधानं, तत्र कौकूस्तमतेन ऋषभपञ्चविंशानां चतुर्विंशतीनां प्रथमगर्भाणां पष्ठौहीनां धेनूनां हिरण्यस्य च दक्षिणात्वेन दानविधानम्, एतस्यांशुग्रहस्य ग्रहणं यजमानो ज्ञातप्रियानूचानान्यतमश्चेत्तस्य सहस्र-सर्ववेदसविश्वजित्-सर्वपृष्ठय--वाजपेय राजसूय—सत्रेषु कर्तव्यं नान्यत्रेति प्रतिपादनं चेत्यादि. २३२–२३६

२ विषुवद्ग्रहः—तत्र गवामयनिके विषुवत्यहन्येषोंऽशुग्रहो विकुर्यात्स च विकारः समंत्रकग्रहणरूप इति प्रदर्शनं, ग्रहणमनूद्य तत्र मंत्रस्य विनियोजनं चेति. २३६--२३७

३ पश्वयनम्—तत्र गवामयनिके पश्वालम्भविषये सवनीयविकल्पात्रयः-तत्र प्रत्यहमाग्नेयादिवारुणान्ता पश्वेकादशिनी वा, प्रत्यहमैन्द्राग्नो वा, प्रत्यहं स्तोमायनं वेति कल्पत्रयं प्रथमपशुत्वेन निरूप्य द्वितीयः पशुः सौर्य उपालम्भ्यो वैषुवतेऽह्नि; गवामयनस्यैवोपान्त्यमहाव्रताख्येऽह्नि तु द्वितीयः पशुः प्राजापत्य उपालम्भ्य इत्यादि विधानम्. २३७–२३८

४ महाव्रतीयग्रहः—तत्रादौ महाव्रतीयग्रहस्योत्पत्तिं विधाय महाव्रतीयेतिसंज्ञानिर्वचनं, सप्रयोजनं महाव्रतीयग्रहग्रहणविधानं, तच्च ग्रहणम् 'इन्द्राय विमृधे' तल्लिंगकमंत्रेण कर्तव्यमथवा 'वाचस्पतये विश्वकर्मणे' तल्लिंगकमंत्रेण कर्तव्यमथवा 'इन्द्राय विश्वकर्मणे' तल्लिंगकमंत्रेण कर्तव्यमिति सकारणं विधानं चेति. २३९–२४१

५ ग्रहोपासनम्—तत्र ग्रहाधिकारप्रसङ्गादाध्यात्मिकाधिभौतिकग्रहाणां प्रदर्शनं ग्रहशब्दस्य निर्वचनान्तरं च, ज्योतिष्टोमादियागेषु ग्रहाणां मध्ये यद्ग्रहस्य बह्वशननिमित्तयाऽऽर्त्याऽऽर्तत्वं तद्दैवत्यग्रहस्य वाङ्नामान्नादिभिरुपासनं विधायाधिभौतिकस्य सोमग्रहस्याधियज्ञिके उपसंहरणम्, अधिदैवस्य तदात्मकस्य ग्रहस्याभिचारिकं समंत्रकं सप्रकारकं सफलमुपस्थानविधानं चेत्यादि. २४१–२४३

६ यज्ञोपचारः—तत्र साख्यायिकं ऋत्विग्वरिष्ठस्य ब्रह्मिष्ठस्य ब्रह्मणो दक्षिणतउपवेशनविधानं यज्ञेषु यत्कर्मस्थानविशेषतया कर्तव्यत्वेन न चोदितं तत्कर्मविहाराद्युत्तरस्मिन्देशे विधेयमिति नियमनं च, प्रसंगाद् ब्राह्मणाच्छंसिनो वरणविधानम्, इतरेषामवृतानां ब्राह्मणानां दक्षिणदिश्यवस्थानविधानं च, प्रस्तोत्रामन्त्रितस्य ब्रह्मणः

ब्रा० विषयाः पृष्ठाङ्काः

प्रसवजपविधानं मैत्रावरुणकर्तृकजपविधानं चेत्यादि. २४३–२४६

७ पुरश्चरणोपनिषत्–तस्यां च सौम्येऽध्वरे सोपपत्तिकं सफलं त्रय्या विद्यायाः प्रयुञ्जनप्रदर्शनं, वक्ष्यमाणमिथुनस्योपोद्घातार्थं वेदसिद्धस्यैव सदसि करणस्यानुवादकथनं, पुरश्चरणशब्दनिर्वचनं, वक्ष्यमाणस्य मिथुनक्रमस्योपन्यासार्थमनुवादकरणकथनम्, ऋक्साम्नोर्वाक्त्वं यजुषां मनस्त्वं चोपपाद्य सदसि ऋक्सामभ्यामनुष्ठितं प्रज्ञायते हविर्द्धानेन यजुषाऽनुष्ठितं न प्रज्ञायते इत्यादि सहेतुकं कथनं, देवैः प्रार्थिताया वाचः सफलं प्रागमनपूर्वकं प्रैषानुवचनोपाकरणादिकर्मणः प्रज्ञापनकथनं, हविर्धाने ऋचा प्रातरनुवाकादेः सयुग्मवननिरूपणं सदसि यजुषा औदुम्बर्युच्छ्रयणादेः सयुग्मवननिरूपणं च, सार्थवादं सदोहविर्धानयोः परिश्रयणकरणप्रतिपादनं, प्रसङ्गादद्वारेण सदोहविर्धाने प्रेक्षमाणस्य 'मा प्रेक्षथाः' इति सहेतुकं निषेधकथनं च, ऋक्साम्नोः सोमस्यापां च मिथुनसम्पत्तिं तत्कार्यं च प्रदर्श्य तयोरितिहासस्य यज्ञे उपसंरणं, साख्यायिकं सोपपत्तिकं सकारणं सार्थवादं यजुर्वेदसाध्यकर्मण उपांशुचरणलक्षणधर्मविशेषस्य विधानम्, अध्वर्योः पुरश्चरणनिमित्तत्वकथनम्, अन्येष्वपि कर्मस्वेतस्यैव धर्मस्यावृत्–इति सफलः पुरश्चरणोपसंहारश्चेत्यादि. २४७–२५५

८ सत्रोत्थानं–तत्र दीक्षा–निषत्–सत्र–आसन–उपायन–सत्रायण–उत्थाने–त्यादिशब्दानां निर्वचनं, तत्रापि दीक्षाशब्दस्य प्रायणीयाद्यशेषवचनव्रतानुष्ठानत्वेन नेतव्यतया पुनः सत्रादीनां सकलप्रयोगवचनस्य दर्शनं, सत्रेण दीक्षिक्षष्यमाणा यदि अग्निं चेष्यमाणा भवेयुस्तदा तेषां सर्वेषां यज्वनामग्नीनामेकीकरणाय तैः क्रियमाणे मन्थने मन्थनगतप्रकारभेदाद्वा मन्थनोत्तरं गृहपत्याहवनीये स्वस्वाग्नेरङ्गारप्रासनं वा जातस्य जातस्य स्वस्वाग्नेः सकलस्यानुप्रहरणं वा गृहपतेरेवारण्योर्जनिष्यमाणमग्निमुद्दिश्य 'अयं नः सर्वेषां साधारण' इति संवादकरणमित्येवमग्नीनां संसर्गकरणप्रकारभेदाद्वा प्राजापत्यस्य पशोरनुष्ठानस्य कालविषयकनियमविकल्पविशेषनिबन्धनाद्वा त्रयः पक्षा भवन्ति तेषां त्रयाणामपि पक्षाणां सेतिकर्तव्यताकं सविशेषं निरूपणं तत्रापि प्रथमपक्षस्य याज्ञवल्क्यसम्मतत्वप्रदर्शनं च, शालागार्हपत्यपुरोडाशपत्नीसंयाजा एकाहवद्विधेया इति सहेतुकं सफलं प्रतिपादनं चेत्यादि. १५६–२६३

९ सत्रोत्थानप्रकल्पनम्–तत्रादौ आहुतिद्वयस्योत्पत्त्यर्थमाख्यायिका, ततः प्रसङ्गात्पुरुषार्थाशने नियमविधानं, सत्रात्मकस्य द्वादशाहस्य मध्ये यो दशरात्रस्तस्य दशमेऽहनि सत्रोत्थानं कर्तव्यमिति कालविशेषं विधायैकैकस्य यजमानस्य सर्वेष्वहःसु वाग्यमनपूर्वमवस्थानमन्येषां तु समिदाहरणार्थं स्वध्यायार्थं वा वने गमनं तत्र गत्वाऽहविष उच्छिष्टस्यापि चाशनं कर्तव्यमिति प्रासङ्गिकं विधानम्, अपराह्णे दीक्षितानामप उपस्पर्शनपूर्वकं पत्नीशालायां

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|
| प्रवेशनविधानं, दीक्षितेषु समन्वारब्धेष्वध्वर्यौ शालाद्वार्ये इहरतिरित्युपसृजन्निति चैताभ्यां मन्त्राभ्यां द्वयोराहुत्योर्होमकरणविधानं, दीक्षिताः 'प्राञ्च उपनिष्क्रामन्ति' इत्याद्युक्तप्रकारेण सञ्चरमार्गेणैत्योत्तरस्य हविर्धानस्य जघन्यायां कूबर्यामुत्तरवेदेर्वोत्तरायां श्रोणौ 'सत्रस्य ऋद्धिः' इति साम गायंतीत्येतन्निरूपणम्, उक्तसामगानप्रशंसार्थमर्थवादकथनम्, दीक्षितानां हविर्द्धानान्निर्गत्य सदः प्रविश्य स्वस्वधिष्ण्येषूपवेशनार्थं सञ्चरणमार्गनिरूपणं तत्र सञ्चरणे सकारणमतिच्छंदस्कस्य 'युवन्तमिन्द्रा' इत्यस्य मन्त्रस्य विनियोजनं, प्राजापत्यस्य वायोर्ग्रहस्य ग्रहणादनन्तरं क्रियमाणस्य स्तोत्रोपाकरणस्य प्रशंसार्थमर्थवादकथनम्, तत्र स्तोत्रोपाकरणं सार्पराज्ञीषु ऋक्षु स्तुवीतेति सविशेषं निरूपणं, होतुस्तस्मिन्न जानति गृहपतेर्वा | | चतुर्होत्रव्याख्यानशस्त्रपठनविधानम्, तत्रोक्ते शस्त्रेऽध्वर्योः प्रतिगरविधानम्, सर्वेषां सार्थवादं ब्रह्मोद्यवदनकथनम्, अस्तमिते औदुम्बरीं स्थुणामुपसंगम्य सर्वेषां सार्थवादं वाग्यमनविधानम्, अस्तमिते सदसो निष्क्रम्य सर्वे उत्तरवेदिमपरेणोपविशेयुरिति प्रतिपादनं, प्रतिप्रस्थातुर्वसतीवरीणां परिहरणं विधाय सत्रर्द्धिकामानां वाग्विसर्जनविधानं, अनेककामानां तु 'भूर्भुवः स्वः' इति मन्त्रेण वाग्विसर्जनविधानं, तत्राशीराशासनं च, गृहपतेस्तदनुज्ञयाऽन्यस्य वा सुब्रह्मण्याह्वानविधानं "सुब्रह्मण्य उप मा ह्वयस्व" इत्यनुज्ञां लब्ध्वा सर्वेषां समिधोऽभ्याधानकथनं चेत्यादि. | २६३–२७२ |

इत्यप उपस्पर्शनादि सत्रोत्थानम् ।

इति षष्ठोऽध्यायः ।

इति चतुर्थं ग्रह काण्डम् ॥



# पञ्चमे सवकाण्डे-




| ग्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | **अथ प्रथमोऽध्यायः।** | |
| १ | वाजपेययज्ञः--तत्र वाजपेययाग-विधायिन्याख्यायिका, तस्यां देवासुराणा-मन्योऽन्यं विपर्ययेणानुष्ठानप्रकार-वर्णनम्, वाजपेये सर्वेषां देवानां पुर-स्ताद्वाजपेयस्यानुष्ठानेन बृहस्पतेरेव श्रैष्ठ्यं वक्तुमाजिधावनदर्शनम्, विधा-स्यमानसावित्रहोमार्थं बृहस्पतेरपि प्रथमं सवितृविषयकोपधावनदर्शनम्, वाज-पेययाजिनस्तदानीमेवोत्क्रमणं भूलोके यावदत्यन्तभोगाभिलाषस्तावदिहावस्थानं तत्र जानश्रुतेयेन प्रत्यवरूढमित्याद्युभय-स्योपपादनम्, ब्राह्मणस्याधिकारविध्यनु-मापकबृहस्पतिवृत्तान्तानन्तरं क्षत्रिय-स्याप्यधिकारोऽस्तीति दर्शयितुमिन्द्र-वृत्तान्तकथनम्, एवमाख्यायिकया ब्राह्मणक्षत्रियावधिकारिणौ प्रदर्श्येदानीं वाजपेययागस्योत्पत्तिविधिप्रदर्शनम्,सर्व-जयेन विराडात्मकप्रजापतिजयस्यानुचि-तत्वात्तत्साधनभूतो वाजपेयो नानुष्ठेय-इति पूर्वपक्षमुद्भाव्य तन्निषेधस्याधिकारि-विशेषनिरूपणेन परिहरणं, विदुष एव यष्टृत्वं विदुषामेव याजयितृत्वमित्युभय-स्योपपादनं, वाजपेयस्याधिकारविधेरुन्न-यनं, वाजपेयस्य साम्राज्यं फलमिति वक्तुं प्रसङ्गाद्राजसूयस्याधिकारिभेदेन फलभे-देन वा अवरत्वमिति प्रदर्शनं, वाजपे-यस्य साम्राज्यलक्षणं फलं दर्शयित्वा तत्र कर्मारम्भे समंत्रकं सावित्रहोमविधानम्, सवितुरुपधावनस्य बृहस्पतिसम्बन्धेन प्रशंसनं, सावित्रहोमस्य संकुचद्वृत्तिता-प्रदर्शनं चेत्यादि. | १–७ |
| २ | वाजपेये ग्रहविशेषाः--तत्रांशुग्रहं विधाय प्राकृतानामुपांश्वाद्याग्रयणान्ता-नामतिदेशकथनम्, अतिग्राह्यग्रहान्विधाय षोडशीग्रहविधानं, पञ्चानामिन्द्रदेव-त्यानां वाजपेयग्रहाणां मंत्रतदर्थसहितं ग्रहणविधानं पञ्चसंख्यायाः प्रशंसनं च, सद्रव्याणां सप्तदशानां सोमग्रहाणां सुराग्रहाणां च विधानं, द्रव्यद्वय-मनूद्य तयोः प्रशंसनम् उक्त-संख्यायाः प्रजापत्यात्मकत्वेन स्तवनं, द्विविधग्रहाणां संख्यां समुच्चित्य तत्प्र-शंसनं, प्राकृतं सोमक्रयणमनूद्य परि-स्रुत्क्रयणविधानं,ग्रहाणामासादने प्रदेश-विशेषस्य सकारणं विधानं, वसती-वरीणां हविर्धानप्रवेशनमनूद्य परिस्रु-त्प्रवेशने कस्यचिद्विशेषस्य विधानं, ग्रहवर्गद्वयग्रहणे ऋत्विजोर्नियमं दर्श-यित्वा विभागेन धारणाय व्यत्यास-विधानं, ग्रहाणामन्यदेशप्रापणे सका-रणं निषेधकथनम्, उभयग्रहधारणे कस्य-चिद्विशेषस्य सप्रयोजनं मन्त्रतत्तात्पर्य-सहितं विधानम्, अक्षप्रदेशात्तयोः स्वस्व-प्रदेशे समन्त्रकमवस्थापनविधानम्, अध्व-र्योर्हिरण्यपात्रेण मधुग्रहग्रहणं विधाय तस्य सादनप्रदेशविधानं, प्राकृतावुक्थ्य-ध्रुवग्रहौ दर्शयित्वा पृथग्ग्रहणप्रसङ्गाद्द्वि-विधग्रहाणां होमकालस्य भक्षणस्य च विधानं, प्रसंगात्सुराग्रहाणां मधुग्रहस्य च माध्यन्दिनसवनमध्ये विनियोगप्रद-र्शनं चेत्यादि. | ८–१९ |
| ३ | पशुतन्त्रम्--तत्र तावद्वाजपेयस्य सप्त-सोमसंस्थात्मकत्वं दर्शयित्वा तत्राग्निष्टो- | |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

मादिगतानामाग्नेयादिसवनीयपशूनां विधानं, सप्तदशाय स्तोत्राय सारस्वतपशोरालम्भनेन वाजपेयेऽतिरात्रस्यान्तर्भावप्रतिपादनं, वाजपेयस्य वशापृश्निरूपासाधारणपशुं विधाय तस्य प्रयोजनपूर्वकोज्ञेषगुणकमरुद्देवत्यत्वेन प्रशंसनं, प्राकृताग्नेयादीनां वपाप्रचरणेन सह विधास्यमाने मारुतीवपाप्रचरणे एकीयमतोपन्यासः, पश्ववदानानामप्यैकध्येन श्रपणं सिद्धान्तयितुं द्वैविध्यस्य पूर्वपक्षतयोद्भावनं, हविषामवदानप्रकारवर्णनमेतेषां द्विरवदानं प्रचरणं च प्रशंस्य पूर्वमर्धानां पश्चाच्चार्धानां हविषां विनियोगकथनं, तस्यास्य माहेन्द्रान्ते वपाप्रचरणस्य हविषां द्विधा श्रपणस्य च पक्षे प्रत्यवायं दर्शयित्वोक्तैकीयमतस्य दूषणं, प्राकृतपशुवपाप्रचरणकाले एव मारुतीवपाप्रचरणस्य हविषामैकध्येन श्रपणस्य च विधानं, देवतासंख्यालक्षणद्वयविशिष्टानां पश्वन्तराणां विधानं, तेषु पशुषु गुणत्रयस्य विधानं, पशुतन्त्ररूपेण प्रत्यक्षसोमात्मना च स्तुत्वा तदात्मकप्रजापतेः प्राप्तिप्रतिपादनं, पशुगतां संख्यामुपजीव्य प्रशंस्य तूपरशब्दार्थकथनं, श्यामत्वमनूद्य व्याख्याय तद्गतवर्णद्वित्वमालम्ब्य च प्रशंसनं मुष्करत्वमनूद्य तद्रूपेण प्रशंसनं च, निरुक्तत्रिविधगुणानां पशूनामसुलभत्वं प्रतिपाद्य पक्षान्तरकथनम्, अस्मिंश्च पक्षे कतिपयपशूनां वर्णान्तरयुक्तत्वेऽपि कर्मणोऽङ्गवैकल्यस्य परिहारकथनम्, एकेषां मतेन सप्तदशप्राजापत्यपशूनामन्ते वाग्देवत्यपशोरनुष्ठानं कर्तव्यमित्यमुं सोपपत्तिकं पक्षमनूद्य तन्निरसनं, प्राकृतपशुवपाहविर्भिः सह प्राजापत्यपशूनां वपाप्रचरणस्य हविर्यागस्य च विधास्यमाने होमकाले पूर्वपक्षमुद्भाव्य तस्य दूषणं कृत्वा सिद्धान्तप्रतिपादनम्, एतेषां पशूनां तद्धितश्रुतिबोधितेन पृथक्पृथग्देवतासंबन्धेन सप्तदशसंख्याकत्वात्प्रतियागं याज्यापुरोऽनुवाक्याभेदमाशंक्य दैवतैक्येन सह प्रदानकत्वाद्याज्यापुरोऽनुवाक्ययोरैक्यस्य प्रतिपादनम्, अनुवाक्यापाठात्प्रागध्वर्युणा कर्तव्येऽनुवचनप्रैषे विशेषकथनम्, आश्रावणान्तरकर्तव्ये च विशेषं कथयित्वा होतुरध्वर्योश्च कर्तव्यनिरूपणं चेति। १६—२४

४ माध्यन्दिनसवनप्रयोगः—तत्र यजमानाभिषेकस्याजिधावनस्य च प्राधान्येन विधानं तत्र कालविधानं च, पूर्वं रथवाहने काष्ठविशेषे स्थापितमाजिधावनाय सज्जीकर्तुं तस्य रथस्य तस्मात्काष्ठादवहरणस्य मन्त्रतदर्थसहितं विधानं, धूर्गृहीतस्य रथस्य वेदिमध्येऽभ्यावर्तनस्य मन्त्रतदर्थसहितं विधानम्, अश्वानां प्रोक्षणस्य तत्कालस्य च मन्त्रद्वयतदर्थसहितं विधानं, समंत्रकमश्वेन रथयोजनविधानं, सव्याश्वस्य रथे समंत्रकं योजनविधानम्, तृतीयाश्वस्य रथे समंत्रकं योजनविधानं, उक्ताश्वगतत्रित्वसंख्याप्रशंसनं, चतुर्थाश्वस्यानुगमनं विधायाध्वर्यवे रथप्रदानसमये तस्य रथे योजनविधानम्, उक्तार्थस्यान्यत्र राजसूयादावतिदेशकथनं, सार्थवादं द्रव्यदेवताविशिष्टचरोर्विधानं, देवताशरावसंख्याविचित्रयमनूद्य तत्प्रशंसनं,

ब्रा० विषयाः पृष्ठाङ्काः

सप्रयोजनं मंत्रतदर्थसहितं रथयुक्तानामश्वानामवघ्रापननिधानं चेत्यादि २४–३१

६–विहितमाजिधावनमनूद्य तत्प्रशंसस्य च सामगानस्य यूपारोहणस्य च सार्थवादं विधानं, ब्रह्मणःसामगानार्थं रथचक्राधिरोहणविधानम्, आरोहणमनूद्य तत्र ब्राह्मणाधिकारिकपक्षे राजन्याधिकारिकपक्षे च क्रमशो मंत्रविधानं, विहितब्रह्मकर्तृकसामगाने त्रित्वसंख्याविधानं, प्रसङ्गाद्ब्रह्मणो रथावरोहणविधानम्, अत्राप्यवरोहणे पूर्ववद्ब्राह्मणराजन्यरूपयजमानभेदेन मंत्रभेदप्रदर्शनं, वाग्रूपप्रजापत्युज्जयहेतुत्वेन सप्तदशानां दुन्दुभीनां वादनविधानं, सप्तदशानां दुन्दुभीनां मध्ये एकस्य दुन्दुभेः समंत्रकं वादनमितरेषां तूष्णीं वादनमिति विधानं, अत्राप्याहनने पूर्ववद्ब्राह्मणराजन्यभेदेन मंत्रभेदप्रदर्शनं, ब्राह्मणराजन्यभेदेन मंत्रभेदप्रदर्शनपुरःसरं समंत्रकं सप्रकारकं दुन्दुभ्युपावहरणविधानं, ततः सार्थवादं सकारणं राजन्यकर्तृकानां सप्तदशानामिषुप्रव्याधानां विधानम्, अश्वयुक्तस्य रथस्य यजमानकर्तृकं समंत्रकमारोहणविधानम्, उक्तार्थस्य बृहस्पतिदृष्टान्तेन दृढीकरणं, ततोऽध्वर्योःशिष्यकर्तृकं तदन्यब्रह्मचारिकर्तृकं वा ' वाजिनःइति यजमानवाचनंविधाय तद्व्याख्यानं, विहितानामाजिधावनदुन्दुभ्याहननब्रह्मकर्तृकसामगानानां प्रयोगकालविधानं, वक्ष्यमाणाभ्यां मन्त्राभ्यां हवनमनुमंत्रणं वा विकल्पेन कर्तव्यमित्युभयसमानार्थवादसहितं विधानम्, उक्तेऽर्थे मंत्रद्वयविधानं, पुनः पूर्ववद्वक्ष्यमाणेन त्र्यृचेन हवनमनुमंत्रणं वा विकल्पेन कर्तव्यमित्युभयसमानार्थवादसहितं विधानम्, उक्तेऽर्थे मंत्रत्रयस्य पाठतः प्रदर्शनं, बार्हस्पत्येन चरुणा प्रत्युपस्थाय तस्य चरोःसार्थवादमुपस्पर्शनविधानं, विहिते उपस्पर्शने मंत्रं विधाय व्याख्याय च तस्य प्रजापत्यात्मना प्रशंसनम्, उपस्थापितचरुमश्वानवघ्रापयेदिति समंत्रमंत्रार्थकं साभिप्रायं सप्रयोजनं विधानं, द्वितीयब्राह्मणान्ते प्रतिज्ञातस्य सुराग्रहाणां मधुग्रहस्य च विनियोगप्रकारस्य प्रदर्शनं, तत्र निष्क्रयं प्रशंस्य प्रतिगृहीतानां सुराग्रहाणां त्वैच्छिकव्यवहारं दर्शयित्वा च क्रीतस्य मधुग्रहस्य सार्थवादं दानकथनं, ब्रह्मणा प्रतिगृहीतस्य मधुग्रहस्यैच्छिकव्यवहारप्रदर्शनं चेत्यादि. ३२–४४

इति प्रथमोऽध्यायः ।

## अथ द्वितीयोऽध्यायः ।

१ यूपारोहणम्--तत्र प्रथममाप्तिलिङ्गकैर्मन्त्रैर्होमस्य वा यजमानवाचनस्य वा विधानं तदुभयसमानार्थवादकथनं च, होममनूद्य तत्र द्वादशमन्त्रान्विधाय तद्गतद्वादशत्वसंख्यायाः प्रशंसनं, पक्षान्तरे क्लृप्तिलिङ्गकैर्मन्त्रैर्होमस्य वा यजमानवाचनस्य वा विधानं तदुभयसमानार्थवादकथनं च, वाचनमनूद्य तत्र षण्मन्त्रान्विधाय तद्गतषड्संख्यायाः प्रशंसनं, यूपगताष्टाश्रित्वस्य तद्गतसंख्यायाश्च प्रशंसनपूर्वकं यूपस्य वाससा वेष्टनं विधाय तत्र वासोगतसंख्यायाः प्रजापत्यात्मना प्रशंसनं, चषालनामकस्य यूपशकलस्य दारुमयत्वापवादाय गोधूमपिष्टमयत्वस्य सार्थवादं विधानं, यूपे गर्त-

ब्रा० विषयाः पृष्ठाङ्काः

त्वादिगुणविशेषं विधाय तत्र गर्तस्य पितृलोकात्मना प्रशंसनं, यूपस्य चोदकप्राप्तपरिणामापवादाय परिमाणान्तरविधानं, नेष्टृकर्तृकं सार्थवादं सप्रकारकं सोपपत्तिकं पत्न्याः कौशवासःपरिधापनविधानम्, यूपे आरोहणार्थं निश्रयणीस्थापनं विधाय पूर्वोत्तरपक्षाभ्यां यूपारोहणप्रकारविषयकसिद्धान्तोपवर्णनं अन्वयव्यतिरेकाभ्यां जायासहितस्य पुंसः सम्पूर्णावयवत्वप्रतिपादनपुरःसरं यूपारोहणकाले जायाया आमंत्रणं विधाय तत्र मंत्रस्य विनियोजनं, सार्थवादं गोधूममयचषालस्पर्शनस्य समन्त्रकं विधानं, यूपमतीत्य शिरस उद्गमनस्य सफलं समंत्रकं विधानं, यूपेऽवस्थितस्य यजमानस्य सर्वासां दिशां समंत्रकं विधानं, सप्तदशाश्वत्थपत्रोपनद्धानामूषपुटानां वैश्यकर्तृकं समंत्रकं सकारणं सार्थवादमुत्क्षेपणविधानं, बृहस्पतिदृष्टान्तेन प्रशंसनपुरःसरं तत्रैव यजमानस्य मित्रत्वप्रयोजनाय समंत्रकं भूम्यवेक्षणविधानं, यूपाद्धिरण्ये रुक्मोत्तरे बस्ताजिने बस्ताजिनोत्तरायामौदुम्बर्यामासन्द्यां वाऽवरोहणस्य सप्रकारकं सार्थवादं विधानम्, आसन्द्यां बस्ताजिनास्तरणे साभिप्रायं मंत्रं विनियुज्य तस्यां मंत्रमंत्रार्थसहितं यजमानस्योपवेशनविधानं चेत्यादि. ४६–५६

२ नैवारचरोः प्रचरणविधानं, वाजप्रसवीयहोमं विधातुं तत्कालं प्रतिपाद्य होमार्थमन्नसम्भरणविधानम्, अन्नसम्भरणार्थं पात्रविशेषस्य विधानपूर्वकमपां सम्भरणविधानम्, अन्नसम्भरणे सोपपत्तिकां सप्तदशत्वसंख्यां पूर्वपक्षयित्वा तां निराकृत्य च यथोपस्मारं सर्वान्नसम्भरणपक्षस्थापनम् तत्रापि एकान्नसम्भरणनिषेधकथनं च, असम्भ्रियमाणान्नविषये किञ्चिद्विशेषविधानं, सम्भृतान्नेन सप्तदशानां वाजप्रसवीयसंज्ञकाहुतीनां सप्रकारकं समंत्रकं होमविधानं, हुतशेषान्नस्य यजमानायाभिषेककरणरूपं विनियोगं प्रदर्श्य तत्र मंत्रं विनियुज्य च मन्त्रे पूर्वोत्तरपक्षाभ्यां परमतं प्रत्याख्याय स्वमतं प्रतिष्ठाप्य चोहप्रकारकथनं, साभिप्रायं त्रिःकृत्वाऽऽवेदनविधानम्, उज्जयलिङ्गकैर्मन्त्रैः सप्तदशानामुज्जितिसंज्ञकाहुतीनां होमविधानं विकल्पेन यजमानाय वाचनविधानं वा, उभयत्र विद्यमानमंत्रगतसप्तदशसंख्यायाः प्रजापत्यात्मना प्रशंसनं, चोदकप्राप्तस्य स्विष्टकृद्यागादिकस्यानुसन्धानकथनं, स्विष्टकृत्समनन्तरभाविनां कर्मणामनुष्ठानकथनम्, एषु कर्मसूज्जितिवाचनानन्तरं माहेन्द्रग्रहणं स्तोत्रशास्त्रे च कृत्वा स्विष्टकृदादिकं यजमानस्य पश्चादवरोहणं कर्तव्यमिति कस्यचिन्मतमनूद्य तद्दूषयित्वा चानुपदमुक्त एव पक्षः श्रेयानिति स्वमतप्रतिष्ठापनं चेत्यादि. ५७–६५

इति वाजपेययागः ।

३ अथ राजसूययागः–तत्रापि राजसूयाङ्गभूते पवित्रनामके प्रथमसोमयागेऽन्ते कर्तव्यस्य पूर्णाहुतिप्रभृतिवैशेषिकोत्तरतन्त्रस्याभिधानं, तत्राप्यादौ सत्यां कामनायां सेतिकर्तव्यताकं सदक्षिणाकं पूर्णाहुतिहोमविधानम्, आरम्भणीयस्थानीयात्पवित्राख्यादग्निष्टोमादहः

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

परस्मिन्नहन्यनुमत्या अष्टाकपालपुरोडाशस्य निर्वपणं—शम्यायाः पश्चात्स्रुवे हविष्यान्नस्य संवपनं—दक्षिणाग्न्युल्मुकमादाय दक्षिणदिग्गमनं तत्रोल्मुकाग्निमाधाय स्रुवपूरितेन द्रव्येण समंत्रकं सप्रयोजनं नैर्ऋतहोमानुष्ठानं चेत्यादि विधानं, पुनरागत्यानुमतहविः प्रचरणविधानं, कपालगताष्टत्वसंख्यां गायत्रीद्वारा पृथिवीयोग्यत्वेन प्रशंस्य तत्र वासोरूपां दक्षिणां विधाय तत्प्रशंसनं, तत्परेद्युः सेतिकर्तव्यतायाः सदक्षिणाया आग्नावैष्णवेष्टेर्विधिप्रदर्शनं, तदपरेद्युरग्नीषोमीयेष्टेः प्रकृतिवत्कर्तव्यत्वेन प्रदर्शनं, तस्यामुत्सृष्टस्य गोः सार्थवादं दक्षिणात्वेन विधानं, तत्परस्मिन्नहन्यैन्द्राग्नेष्टेः सार्थवादं साण्डानुडुद्दक्षिणासहितं सविशेषं विधानं, तदपरेद्युराग्रयणेष्टेः सप्रयोजनं सार्थवादं गौर्दक्षिणासहितं सविशेषं विधानं, तत परं साभिप्रायं वाजसूयाङ्गत्वेन चातुर्मास्यानां यजनविधानं चेति। ६९–७२

४ चातुर्मास्यान्तर्गतानां वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयाणां चतुर्णामपि पर्वणां सार्थवादं सदृष्टान्तं प्राकृतैष्टिकचातुर्मास्यवत्कर्तव्यतयाऽत्र राजसूये चोदनं, पञ्चवातीयसंज्ञकहोमविधानं, तत्र प्रागादिक्रमेण पञ्चस्वग्निषु समन्त्रकं हवनविधानं, पञ्चाग्नीनेकीकृत्य तस्मिन्पूर्वोक्तैरेव मंत्रैर्हवनविधानं, पञ्चवातीयहोमानुवादेन सार्थवादं द्रव्यस्य विधानम्, अग्नीनां समासेनानुष्ठिताहुतिपञ्चकस्य प्रशंसनं, पञ्चवातीयहोमे त्रियुक्तस्याश्वरथस्य दक्षिणात्वेन विधानं, आरोग्यकामस्याप्ययं होमो भवतीति पुरुषार्थतयाऽस्य पञ्चवातीयहोमस्य स्वतन्त्रं विधानं, ततो हविश्चतुष्टयात्मकस्येन्द्रतुरीयकर्मणः साख्यायिकं विधानं, तस्मिन्निन्द्रतुरीये दक्षिणाविशेषकथनं च, ततोऽपामार्गहोमस्य सार्थवादं सप्रकारकं मन्त्रमन्त्रार्थसहितं विधानं, हवनोपयुक्तस्य पालाशवैकङ्कतयोरन्यतरस्य स्रुवस्य दिग्विशेषे सार्थवादं समन्त्रं क्षेपणविधानं, एतन्मन्त्रकरणकं पुनरागमनं विधायाभिवर्द्धमानस्यापि स्वोपद्रवपरिहारायास्यापामार्गहोमस्य विधानम्, अस्मिन्नपामार्गहोमे आभिचारिकप्रयोगप्रदर्शनं चेत्यादि। ७२–८१

५ **त्रिषंयुक्तादियागाः**—तत्र पूर्वं पुरुषप्राप्तिहेतुत्वेन प्रथमत्रिषंयुक्तयागस्य विधानं, त्रयाणां हविषां विभागपूर्वकं प्रशंसनं प्रयोजनकथनं च, तत्र वामनं पुरुषं दक्षिणात्वेन विधाय तत्प्रशसनं, पशुप्राप्तिहेतुत्वेन द्वितीयत्रिषंयुक्तयागस्य विधानम्, अत्रापि पूर्ववत्त्रयाणां हविषां विभागपूर्वकं प्रशंसनं प्रयोजनकथनं च, तत्र श्यामवर्णां गां दक्षिणात्वेन विधाय श्यामत्वस्योपपत्तिपूर्वकं तस्याः प्रशंसनं, ब्रह्मवर्चसप्राप्तिहेतुत्वेन तृतीयत्रिषंयुक्तयागस्य विधानम्, अत्रापि पूर्ववत्त्रयाणां हविषां विभागपूर्वकं प्रशंसनं प्रयोजनकथनं च, तत्र बभ्रुवर्णां गां दक्षिणात्वेन विधाय तत्प्रशंसनं, तदपरस्मिन्नहनि द्विहविष्कस्य यागस्यैकतन्त्रेण वा पूर्वेद्युर्वैश्वानरो द्वादशकपालः परेद्युर्वारुणो यवमयश्चरुरिति

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|

भिन्नतन्त्रेण वा विधानं, प्रथमस्य हविषो वैश्वानरदेवताकत्वं प्रशंस्य कपालसंख्यायाः प्रशंसनं द्वितीयहविषः प्रशंसनं च, अनयोर्हविषोः क्रमेण दक्षिणां विधाय तयोः प्रशंसनं चेत्यादि. ८१-८७

इति द्वितीयोऽध्यायः।

## अथ तृतीयोऽध्यायः।

१ रत्नयागाः—तत्र द्वादश रत्नहवींष्यनुदिनं क्रमेण कर्तव्यतया प्रतिपाद्यन्ते तेषु प्रथमेऽह्नि सकारणं सोपपत्तिकं सेनानीगृहेऽनीकवद्गुणकाग्निदेवत्यस्य रत्नहविर्यागस्य सविशेषं विधानं, तत्र सहेतुकं हिरण्यरूपदक्षिणाविधानं, द्वितीयदिवसे पुरोहितगृहे सार्थवादं सोपपत्तिकं शितिपृष्ठत्वगुणकगौर्दक्षिणाकस्य बार्हस्पत्यचरुहविष्कस्य रत्नयागस्य विधानं, तृतीयदिवसे सुन्वतो यजमानस्य गृहे ऋषभदक्षिणावत इन्द्रदेवत्यैकादशकपालपुरोडाशहविष्कस्य रत्नयागस्य विधानम्, चतुर्थे वासरे महिष्या गृहे सकारणं सार्थवादं धेनुदक्षिणाकस्यादित्यचरुहविष्कस्य रत्नयागस्य विधानं, पञ्चमेऽह्निसारथिगृहे सकारणमश्वदक्षिणाकस्य वरुणदेवत्ययवमयचरुहविष्कस्य रत्नयागस्य विधानं षष्ठे दिवसे ग्रामणीगृहे सकारणं सार्थवादं पृषद्गुणकगौर्दक्षिणाकस्य मरुद्देवत्यसप्तकपालपुरोडाशहविष्कस्य रत्नयागस्य विधानं, सप्तमे वासरेऽन्तःपुराध्यक्षस्य क्षत्तुर्गृहे सकारणं सार्थवादं श्वेतवर्णानडुद्दक्षिणाकस्य सवितृदेवत्यद्वादशकपालपुरोडाशहविष्कस्य रत्नयागस्यविधानं, अष्टमेऽह्नि रथयोजयितुर्गृहे सकारणं यमलोत्पत्तिमत्त्वानूचीनगर्भत्वान्यतमगुणकगोयुग्मदक्षिणावतः अश्विदेवत्यद्विकपालपुरोडाशहविष्कस्य रत्नयागस्य विधानं, नवमे दिवसे भागदुघस्य गृहे सकारणं सार्थवादं श्यामवर्णगौर्दक्षिणाकस्य पौष्णचरुहविष्कस्य रत्नयागस्य विधानं, दशमे दिवसे सुन्वतो यजमानस्य गृहे सोपपत्तिकं सकारणम् सार्थवादं रुद्रदेवत्यगवेधुकामयचरुहविष्कस्य रत्नयागस्य विधानम्,उक्ते रौद्ररत्नयागे शितिबाहोः शितिबालस्य वा द्विरूपस्य गोः—नखरस्यासेः—रोमस्रजा प्रवद्धस्याक्षावपनपात्रस्येति त्रयाणां सोपपत्तिकं दक्षिणात्वेन विधानम्, एकादशेऽह्नि दूतगृहे सोपपत्तिकं सकारणमुक्षणवेष्टितधनुः—सेषुकाश्चर्मतूण्यः—लोहितोष्णीषश्चेत्येतत्त्रिकदक्षिणाकस्याश्वदेवत्यचतुर्गृहीताज्यहविष्कस्य रत्नयागस्य विधानम्,एतेषामेकादशरत्नहविषां प्रशंसार्थमर्थवादकथनं, द्वादशे वासरे परिवृत्तीगृहे निर्ऋतिदेवत्यस्य नखनिर्भिन्नकृष्णतण्डुलमयचरुहविष्कस्य रत्नयागस्य समंत्रकं विधानं, प्रसङ्गात्परिवृत्तीशब्दार्थनिरूपणम्, उक्ते नैर्ऋतरत्नयागे परिमूर्ण्याः पर्यारिण्याः कृष्णाया गोर्दक्षिणात्वेन सकारणं विधानम्,इष्ट्यन्ते किञ्चित्कर्तव्यस्य सार्थवादं विधानं चेति. ८८-९६

२ उपरियागाः—तत्र प्रथमं शुक्लवत्सायाः शुक्लाया गोः पयसि श्रृतेन चरुणा सौमारौद्रयागस्य विधानं, विहितस्य सौमारौद्रयागस्याख्यायिकया प्रशंसनं, यस्याः पयसि चरुः श्रृतस्तस्या एव

| क्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | गोर्दक्षिणात्वेन विधानं, प्रसङ्गात्फलान्तरायास्य सौमारौद्रयागस्य बाह्यप्रयोगस्य प्रदर्शनं, मैत्राबार्हस्पत्यचरुहविष्कयागस्य सार्थवादं विधानं, तस्य चरोरनुष्ठानप्रकारकथनं, मैत्रचर्वर्थमाज्यकरणविधानं, देवताद्वयार्थं तण्डुलानां द्वेधाकरणपूर्वकं चरुद्वयस्य पृथक्पृथक्सप्रकारकं श्रवणविधानम्, एवं पृथक्च्छ्रपणमभिधाय देवताप्रदाने पुनः साहित्यस्य विधानं चेति। | ९७–१०१ |
| ३ | **दीक्षणीययागाः**—तत्रादौ द्वितीयस्याभिषेचनीयाख्यसोमयागस्याङ्गत्वेन चोदकप्राप्ताया दीक्षाया अभिधानम्, उपवसथेऽह्न्यग्नीषोमीयपशुपुरोडाशाभ्यां प्रचर्य देवस्वां हविषां निरूपणं, तत्र प्रथमस्य सत्यप्रसवगुणकसवितृदेवत्यस्य प्राशुकव्रीहिसाध्याष्टाकपालपुरोडाशात्मकस्य हविषः सार्थवादं विधानं, द्वितीयस्य गृहपतित्वगुणकाग्निदेवत्यस्याशुक्रव्रीहिसाध्याष्टाकपालपुरोडाशात्मकस्य हविषः सार्थवादं विधानं, तृतीयस्य वनस्पतिगुणकसोमदेवत्यस्य श्यामाकप्रकृतिकचर्वात्मकस्य हविषः सार्थवादं विधानं, चतुर्थस्य वाग्रूपबृहस्पतिदेवत्यस्य नैवारचर्वात्मकस्य हविषः सार्थवादं विधानं, पञ्चमस्य ज्येष्ठत्वगुणकेन्द्रदेवत्यस्य हायनचर्वात्मकस्य हविषः सार्थवादं विधानं, षष्ठस्य पशुपतिगुणकरुद्रदेवत्यस्य गावेधुकचर्वात्मकस्य हविषः सार्थवादं विधानं, सप्तमस्य सत्यगुणकमित्रदेवत्यस्य नाम्बसंज्ञकव्रीहिप्रकृतिकचर्वात्मकस्य हविषः सार्थवादं विधानम्, अष्टमस्य धर्मपतिगुणकवरुणदेवत्यस्य यवमयचर्वात्मकस्य हविषः सार्थवादं विधानम्, एतेषां निरूप्तानां हविषां प्रचरणकालस्य विधानं, प्रधानोत्तरं स्विष्टकृतः पूर्वं यजमानस्य दक्षिणबाहुमन्वारभ्याध्वर्योः "सविता-त्वा—इमन्देवाः" इत्येतयोर्मन्त्रयोः परोक्षप्रत्यक्षवृत्तितया जपविधानं, तत्र "इमन्देवाः" इत्यस्य मंत्रस्य तात्पर्ययुतं भागशो व्याख्यानम्, उक्तहविरष्टकस्य देवतानां सम्भूय नामनिर्वचनं, उक्तानां देवतानामेकैकस्य विशेषणविशेष्यात्मकनामद्वयस्य द्वन्द्वात्मना प्रशंसनं, ततः प्रकृतस्विष्टकृद्यागस्य सार्थवादं संसूचनं चेत्यादि। | १०२–१०८ |
| ४ | **अभिषेचनीयानामपां सम्भरणम्**—तत्राप्सम्भरणं प्रशंस्य तदर्थं पात्रविशेषस्य सार्थवादं विधानं, जलसम्भरणे क्रमविधानाय सारस्वतीनामपां समंत्रकं ग्रहणविधानं तन्मंत्रस्य प्रतिपादनमनूद्य व्याख्यानं गृहीतानामुदकानामभिषेकार्थत्वेन सरस्वत्या नद्याश्च वागात्मत्वेन प्रशंसनं च, क्रमाच्चतुर्गृहीतेनाज्येन पूर्वं पूर्वं स्वाहान्तैर्मंत्रैर्हुत्वा हुत्वा उत्तरोत्तरं ग्रहणमन्त्रैः क्रमविशिष्टोर्मिद्वयगतानामपां—प्रवहन्तीनामपां—प्रतिलोमं प्रवहन्तीनामपां—नद्याः सकाशादपच्छिद्य गच्छन्तीनामपां—सामुद्राणामुच्छलन्तीनामपां—आवर्तगतानामपां—स्यन्दमानस्थावरह्रदस्थितानामपां—आतपवर्ष्याणां भूमिमप्राप्तानामपां—सरस्यानामपां—कूप्यानामपां—नीहारस्थानामपां मधुरूपाणामपां—गोरुल्ब्यानामपां—पयोरूपाणामपां—घृतरूपाणामपां—हवनवर्जं | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| मरीचीगतानामपां चेत्येतासामपां सार्थवादंग्रहणविधानं, सम्भृतानामपां सप्तदशसंख्यां प्रजापत्यात्मना प्रशंस्य सरस्वतीप्रभृतिमरीच्यन्तानामपामाहुतीनां च संख्यां समस्य तस्याः प्रजापत्यात्मना प्रशंसनं, होमपूर्वकमपां ग्रहणस्य प्रशंसनं, सारस्वतीमारीचीनां ग्रहणे होमस्याभावे कारणाभिधानं, पृथक्पृथक्पात्रे गृहीतानामपां सम्भूयैकस्मिन्नौदुम्बरे एव पात्रे समवनयनस्य समंत्रकं विधानं, मंत्रतद्व्याख्यानसहितं संसृष्टानामपां मैत्रावरुणधिष्ण्यस्य पुरोदेशे सादनविधानं चेत्यादि. | १०९-१२० |
| ५ अभिषेकः—माध्यन्दिनसवने माहेन्द्रग्रहग्रहणात्प्राक्तनक्षणलक्षणकालविशिष्टस्य यजमानाभिषेकस्य सार्थवादं विधानं, मैत्रावरुणधिष्ण्यस्य पुरोदेशे समंत्रकं व्याघ्रचर्मास्तरणं विधाय तस्य सोमत्विषित्वस्याख्यायिकयोपपादनम्, अभिषेकस्य पुरस्तात्पश्चाच्च हूयमानानां पार्थहोमानां सफलं सार्थवादं विधानं तेषां संख्याकालयोः सार्थवादं विधानं च, अभिषेकस्य पुरस्तात्कर्तव्यं होममनूद्य मंत्राणां सार्थवादं सविशेषं विधानम्, अभिषेकस्य पश्चात्कर्तव्यं होममनूद्य तन्मंत्राणां सार्थवादं सविशेषं विधानम्, अभिषेचनीयानां पात्राणामासादनदेशविधानं, तेषां पात्राणामभिषेक्तृवर्णविशेषेण पालाशादिवृक्षकाष्ठविशेषत्वस्य सोपपत्तिकं विधानं, पवित्रकरणं विधाय तदर्थवादस्यातिदेशकथनं च, तयोर्दर्भयोर्हिरण्यप्रथनं विधाय ताभ्यां पवित्राभ्यामुत्पवनविधानम्, उत्पवनमनूद्य मन्त्रस्य सार्थवादातिदेशं विधानं, उत्पवनमंत्रस्य भागशोऽनूद्य साभिप्रायं व्याख्यानम्, अभिषेचनीयेषु पात्रेष्वेतासामपां समंत्रकमासेचनं विधाय तन्मन्त्रस्य प्रतिपदमनूद्य व्याख्यानं, यजमानाय तार्प्यपाण्ड्वाधिवासोष्णीषाणां वाससां तत्तन्मन्त्रैः सप्रकारकं सहेतुकं परिधापनविधानं, तत्रोक्तस्योष्णीषाग्रस्य पूर्वदेशेऽवगूहनं द्रढयितुं पूर्वपक्षं सोपपत्तिकमनूद्य तं दूषयित्वा सकारणं स्वमतस्य प्रतिष्ठापनं, तार्प्यादिवासःपरिधापनस्य समुच्चित्य प्रशंसनं, पूर्वं निहितस्य दीक्षितवसनस्य परित्यागविधित्सया केषाञ्चिन्मतेनैतेषां परिधापितानां तार्प्यादिवाससां विसृज्यान्यत्र निधानं तदानीमेव दीक्षितवसनस्य पुनः परिधापनं च पूर्वपक्षयित्वा सहेतुकं तदुभयस्य दूषणं, विहितस्य दीक्षितवसनस्यावभृथे प्रासनं विधाय तेषां वाससां दानकालविधानं, समंत्रकं धनुष आतननविधानं, तस्य धनुषः कोट्योः समंत्रकं विमार्जनविधानं, समंत्रकं धनुः प्रदानं विधायेषुत्रयप्रदानविधाः तेषामिषूणां लोकत्रयात्मत्वेन प्रशंसनं लक्षणसंज्ञयोः कथनं च, इषुत्रयदानमनूद्य साभिप्रायं मंत्रस्य विनियोजनं, यजमानायाविर्लिङ्गकमंत्राणां वाचनविधानं चेति. | १२१-१३७ |


इति तृतीयोऽध्यायः ।

## अथ चतुर्थोऽध्यायः ।


| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| १ सदसो मध्ये उपविष्टस्य केशवस्य पुरुषस्य मुखे समन्त्रकं सार्थवादं ताम्र- | |

| ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|
| स्यावेधनविधानं, केशवलोहायासदन्दशूकानामन्तरालवर्तित्वस्य सम्यगुपपादनमध्वर्युः प्राचीदक्षिणाप्रतीच्युदीच्यूर्ध्वा इत्येताः पञ्च दिशो यजमानमाक्रमयन्प्राच्यादितत्तद्दिग्लिङ्गकान्मन्त्रान्वाचयेदिति विधानं, दिशां समारोहणं समस्य संवत्सरारोहात्मना तस्य प्रशंसनं, आस्तृतस्य शार्दूलचर्मणोऽपरेऽन्ते पूर्वं निहितस्य सीसस्येदानीं समंत्रकं पदा प्रासनविधानं, प्रसंगान्नमुचिदैत्यशिरसः सीसेन निरासस्याख्यायिकामुखेनोपपादनं, समंत्रकं साभिप्रायं शार्दूलचर्मारोहणविधानं, रुक्मस्य मृत्युपरिहारत्वोपपादनसहितमधःप्रदेशे स्थापनस्य समंत्रकं विधानं गुणविशेषाभिधानपुरःसरं रुक्मस्य समंत्रकं शिरसि निधानविधानम्, अथऊर्ध्वप्रदेशे रुक्मनिधानस्यायुःप्रवृद्धिरूपत्वेन प्रशंसनं, यजमानस्य बाह्वोरुद्ग्रहणं विधाय तत्र पूर्वपक्षत्वेन "हिरण्यरूपा" इतीमं मंत्रं विनियुज्य च तस्य मंत्रस्याध्यात्मिकाधिदैविकार्थद्वयविवरणं, पूर्वपक्षत्वेन विनियुक्तं मंत्रं प्रतिषिध्य तत्र सिद्धान्ततया स्वमतेन "मित्रोऽसि" इत्येतस्य मंत्रस्य सार्थवादं विनियोजनम्, ऊर्ध्वबाहुत्वेनावस्थितस्य यजमानस्य विधित्सिताभिषेकप्रशंसार्थमर्थवादश्चेति. | १३८—१४४ |
| २ ऊर्ध्वबाहुकाय प्राङ्मुखत्वेन स्थिताय यजमानाय पुरोहिताध्वर्योरन्यतरेण ब्राह्मणेन पूर्वमभिषेकः कर्तव्यः पश्चादितरैरित्येतद्विधाय तत्र सार्थवादं मंत्राणां विनियोजनं, विनियुक्तेषु मंत्रेषु सर्वत्रानुषज्यमानस्य मंत्रान्तरस्य सार्थवादं विधानं, क्रियमाणाभिषेकजलस्य स्वदेहे सार्थवादं विमार्जनं विधाय तत्र मंत्रं विनियुज्य तस्य प्रथमपादतात्पर्योपेतमध्यात्माधिदैविकार्थद्वयविवरणम्, अध्वर्युः शार्दूलचर्मण्येव यजमानं त्रीन्विष्णुक्रमान्क्रामयेदिति समंत्रकं साभिप्रायं विधानं, स्वमित्रवैश्यपात्रत्रयशेषाणां ब्राह्मणस्य पालाशपात्रे सकारणं व्यासेचनविधानं, संस्रवैः प्रसिक्तं ब्राह्मणस्य पालाशपात्रं राज्ञः प्रियतमाय पुत्राय ब्राह्मणपरिपठितमन्त्रमुक्त्वा दद्यादिति विधानं, गार्हपत्यं प्रत्यागत्यान्वारब्धस्य पुत्रस्य "प्रजापते न त्व०" इत्यनेन मन्त्रेण हवनविधानं, तत्र मन्त्रे ऊहप्रकारं कथयित्वा साभिप्रायं तदर्थविवरणं, पालाशपात्रशेषस्याग्नीध्रीये उत्तरार्धप्रदेशे सोपपत्तिकं सकारणं समन्त्रकं हवनविधानं चेत्यादि. | १४५—१५० |
| ३ अभिषेकोत्तराणि कर्माणि—तत्र पूर्वं गवां शतमधिकं वा आहवनीयमुत्तरेण संस्थापयेदिति परकृतिरूपार्थवादसहितं विधानं, सार्थवादं समन्त्रकं यजमानस्य रथोपावहरणविधानं रथयजमानयोर्वैन्द्रात्मकत्वोपपादनं च, रथस्य प्रदेशविधानपुरःसरमश्वयोर्योजनस्य समन्त्रकं विधानं तत्र मन्त्रे मित्रावरुणशब्दार्थप्रदर्शनं च, रथस्याश्वचतुष्टयोपेतत्वं दक्षिणापथेन गमनं च विधाय संस्थापनप्रदेशविधानं, यजमानस्य रथरोहणं समंत्रकं विधाय तस्य मन्त्रस्य पदशोऽनूद्य व्याख्यानं, दक्षिणभागे युक्तस्याश्वस्य समन्त्रकं प्राजनविधानं तन्मन्त्र- | |

| ब्रा० विषयाः | पृष्ठाङ्काः | ब्रा० विषयाः | पृष्ठाङ्काः |
|---|---|---|---|
| व्याख्यानं च, पूर्वं स्थापितानां गवां मध्ये रथस्य समन्त्रकं स्थापनविधानं, स्वानां स्थापितानां गवां मध्ये एकस्या गोर्धनुष्कोटया समन्त्रकं स्पर्शनविधानं, स्वानां स्थापितासु गोषु रथस्थापनस्य प्रशंसनं, स्थापितानां गवां स्वामिने स्वायान्यासां तावतीनां गवां सार्थवादं प्रतिदानविधानं, स्थापितानां गवां मध्ये दक्षिणतोऽश्वानां स्थापनं विधाय रथमुदग्गमनमार्गेण नीत्वाऽन्तःपात्यदेशे स्थापयेदिति समन्त्रकं विधानं, मन्त्रार्थयुतैश्चतुर्भिर्मन्त्रै रथविमोचनीयहोमस्य सार्थवादं विधानं, सोपपत्तिकं वाराह्योरुपानहोरुपमोकविधानं, प्रत्यवेक्षमाणस्य यजमानस्य सकारणं "मा तउ इन्द्र ते" इति मन्त्रजपविधानं, समन्त्रकं रथादवरोहणं विधाय मन्त्रस्य रथपक्षे सूर्यपक्षे चार्थं प्रदर्श्य मन्त्रगतछन्दोविशेषस्य प्रशंसनं, प्रथमं यन्तुरवस्थानं सकारणं निषिध्य सयन्तृकस्य रथस्य रथवाहनेऽनसिस्थापनविधानम्, आहवनीयस्योत्तरतः पूर्वाग्रेरुद्धृततयाऽवस्थानविधानं, रथवाहनस्य दक्षिणेंऽशे शतमानयोरासंजनविधानं, वर्त्मनि औदुम्बर्याः शाखाया उपगूहनविधानं, सप्रयोजनं तयोः शतमानयोरन्यतरस्य—औदुम्बर्याः शाखायाश्च समन्त्रकमुपस्पर्शनविधानम्, एतयोर्ब्रह्मणे सार्थवादं दानविधानं, मैत्रावरुणधिष्ण्यस्य पूर्वभागे निहितायां व्याघ्रचर्मदेशे मित्रावरुणदेवत्यायां पयस्यायां यजमानस्य बाह्वोरवहरणस्य सार्थवादं समन्त्रकं विधानं चेति। | १९१-१९२ | ४ पयस्याप्रचारः—तत्र स्विष्टकृतः पूर्वं मैत्रावरुण्या पयस्यायाः प्रचरणविधानं, सार्थवादमासन्द्याहरणं विधाय तत्रासन्द्यां यजमानविशेषेण खादिरत्ववर्ध्रव्यूतत्वेति गुणद्वयविशेषस्य विधानम्, आहृताया आसन्द्या मैत्रावरुणधिष्ण्यस्याग्रे मन्त्रमन्त्रार्थयुतं निधानविधानं, समन्त्रकमधीवासास्तरणविधानम्, अधीवासोत्तरायामासन्द्यां सुन्वतो यजमानस्य समन्त्रकमुपवेशनविधानं, यजमानस्य हृदयदेशादिस्पर्शनपूर्वकं जपविधानं जपमंत्रस्य प्रतिपादनमनूद्य व्याख्यानं च, मन्त्रमन्त्रार्थसहितं यजमानहस्ते पञ्चाक्षावापस्य विधानं तेन पञ्चदिग्विजयसिद्धिर्जातेति दर्शनं, सुन्वतो यजमानस्य पृष्ठतस्तूष्णीं दण्डैरवहननविधानं, यजमानस्य वरवरणस्याभिधानं, यजमानो ब्रह्मन्निति पदं पंचकृत्व आमन्त्रयेत्तं च सवितृवरुणेन्द्ररुद्रवाचकैस्त्वं ब्रह्मासीत्यादिभिश्चतुर्भिर्मन्त्रैः प्रत्यामन्त्रयेदितर इति साभिप्रायं विधानं, यजमानकर्तृकपञ्चमामन्त्रणस्य प्रतिवचने कंचिद्विशेषं दर्शयित्वा तस्य प्रशंसनं, सुमंगलनाम्नो यजमानस्य "बहुकार" इति मन्त्रेणाह्वानं कर्तव्यमिति विधानं, पुरोहितोऽध्वर्युर्वा राजा राजभ्राता सूतः स्थपतिर्वा ग्रामणीः सजातश्चेत्येतेषां मध्ये पूर्वः पूर्व उत्तरस्मा उत्तरस्मै स्फ्यं समन्त्रकं प्रयच्छेदिति मन्त्रार्थविवरणसहितं साभिप्रायं विधानं, राजादिसजातान्तेषु स्फ्यप्रदानस्य सम्भूय प्रशंसनं, सजातप्रतिप्रस्थात्रोर्धूतस्थानकरणस्य समन्त्रकं | |

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

सविशेषं विधानं–मन्थिग्रहपुरोरुचा विमितकरणविधानञ्च, अध्वर्यो-श्चतुर्गृहीतेनाज्येनाधिदेवने हिरण्यनिधान-पूर्वकं समन्त्रकं होमकरणविधानम्, तत्र विमितेऽक्षनिवापं समन्त्रकं विधाय सोपत्तिकं तस्य देवतासन्तर्पकत्वप्रद-र्शनम्, देवनकाले गामेव पणीकृत्य "गां दीव्यध्वम्" इति प्रैषं चोक्त्वा राज-सूयकर्मविद्गृहे पणीकृतां गामानीय ताडयेदिति विधानं, पूर्वाग्निवाहयोरनु-डुहोर्द्यूतकर्मणो दक्षिणात्वेन ब्रह्मणे प्रदानकथनं, पयस्याश्विष्टकृदिडादीति-कर्तव्यता प्रदर्शनं, तत्सहैव प्रधान-स्विष्टकृदन्तरालेऽनुष्ठितस्य देवनादिकस्य प्रजापतिमध्यनिधानरूपेण प्रशंसनं चेत्यादि. १६३–१७२

९ **अत्र दशसंख्याकानि-संसृपांहवींषि दशपेयाख्यसोमयागस्य दीक्षाः–उपसद्यागः–ऋत्विग्विशेषेण दक्षि-णाश्च विधीयन्ते**–तत्रादौ हवींषि विधातुमुपोद्घातः, हविर्नामनिर्वचनं द्वेधा दशपेयशब्दनिर्वचनं च, पितामह-दशगणप्रसंख्यानेन सदःप्रसर्पणं कर्त-व्यमिति पूर्वपक्षयित्वा तद्दूषयित्वा च सवित्रादिदशदेवताः संख्याय सदप्रस-र्पणं कर्तव्यमिति सिद्धान्ततया स्वमतं प्रतिष्ठाप्य तस्य वरुणवृत्तान्तेन प्रशंसनं, संसृप्च्छब्दवाच्यहविर्निर्वापकालप्रदर्शनं, सावित्रो द्वादशाष्टान्यतरकपालः पुरो-डाशः–सारस्वतश्चरुः–त्वाष्ट्रो दश-कपालः पुरोडाशः–पौष्णश्चरुः ऐन्द्र एकादशकपालः पुरोडाशः–बार्ह-स्पत्यश्चरुः–वारुणो यवमयश्चरुः–इत्ये-तेषां हविषां प्रत्यहमेकैकस्य क्रमेण सार्थ-वादं निर्वपणं कर्तव्यमिति विधानम्, तेषु सप्तसु हविःषु प्रत्यहमेकैकं पुण्ड-रीकं प्रदेयमितिविधानं च, दत्तदास्य-मान द्वादशपुण्डरीकात्मकस्रक्प्रतिमोक-रूपाया दशपेयस्य दीक्षायाः सवि-शेषं विधानं, पुण्डरीकगतसंख्यायाः सम्भूय मासात्मकसंवत्सरात्मना प्रशं-सनं, राजानं क्रीत्वेत्याद्यनुष्ठानप्रकारं प्रदर्श्योपसद्यागविधानम्, उपसद्यागेऽ-ग्निसोमविष्णुदेवताकोपसत्प्रतिनिधि-त्वेन संसृप्हविषां मध्ये उत्तमानां आग्ने-योऽष्टाकपालः पुरोडाशः–सौम्यश्चरुः वैष्णवस्त्रिकपालः पुरोडाशश्चरुर्वा–इत्ये तेषां त्रयाणां उपसत्प्रतिनिधित्वेन निर्वापं पूर्वपक्षयित्वा तं दूषयित्वा च सप्तमाष्टमनवमदिनेषु प्रत्यहमेकैकामुप-सदमनुष्ठाय तत्तदन्ते आग्नेयसौम्यवैष्ण-वानां त्रयाणां संसृप्हविषां निर्वापकथनम्, उपसद्देवताहविषां आग्नेयादिसंसृप्हविषां चान्योऽन्यं सहेतुकं संसर्पणविधानं, दश-पेयस्य सोमसंस्थारूपत्वोपवर्णनं, द्वाद-शानां गर्भिणीनां गवां दक्षिणात्वेन दानं विधाय तद्गतायाः संख्यायाः सम्भूय संवत्सरात्मना प्रकारद्वितयेन प्रशंसनं, ऋत्विग्विशेषेण दक्षिणाविशेषस्य दान-विधानम्, एतासां विशिष्टदक्षिणानां सम्भूय संवत्सरात्मना प्रशंसनं चेत्यादि. १७२–१८०

इति चतुर्थोऽध्यायः।

**अथ पञ्चमोऽध्यायः।**

१ **पञ्चबिलाख्यश्चरुहोमाः**–तत्र आग्ने-योऽष्टाकपालः पुरोडाशः–ऐन्द्र एका-

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

दशकपालः पुरोडाशःसौम्यश्चरुर्वा-वैश्वदेवश्चरुः–मैत्रावरुणीपयस्या–बार्हस्पत्यश्चरुः–इत्येतेषां पञ्चहविषामेकस्यां पात्र्यां प्रागादिक्रमेण मध्ये चासादनविधानम, एतेषां आसादनविशेषेण पञ्चबिलात्मकत्वभवनात्पञ्चबिलसंज्ञावत्त्वकथनम्, एतेषां पञ्चबिलहविषां करणे प्रयोजनाभिधानमकरणे प्रत्यवायाभिधनं च, एतेषां पञ्चबिलहविषां क्रमेण निष्क्रयणसाधनत्वविवरणं, प्रत्येकहविः–प्रचारादनन्तरं बार्हस्पत्ये चरौ संस्रवानयनविधानं, बार्हस्पत्ये चरौ चतुर्णां हविषां संस्रवानयनस्य सम्भूयान्नाद्यसम्पादनरूपेण प्रशंसनम्, आग्नेयादिहविषामृत्विग्विशेषेभ्यो हिरण्यादिदक्षिणादानं विधाय तेषामृत्विग्विशेषाणांहिरण्यादिदक्षिणानां च प्रशंसनम्, एतस्य पञ्चबिलहविःपञ्चकस्यान्नाद्यकामनया राजसूयाद्बहिः पुरुषार्थतया स्वातन्त्र्येण प्रयोगस्य सार्थवादं विधानं चेति. १८१–१८९

२ द्वादश प्रयुजां हवींषि–तत्र प्रथमं सार्थवादं प्रयुग्घविषां विधानं, तेषां संख्यां विधाय प्रतिमासं यजनं पूर्वपक्षत्वेनोपन्यस्य पक्षान्तरेण हविःषट्कस्यैकीकृत्य यागकरणेऽपि कञ्चिद्विशेषं पूर्वपक्षत्वेनैवोपन्यस्य च तं पक्षं दूषयित्वा पूर्वस्य हविःषट्कस्य समानतन्त्रेण यजनं सिद्धान्तीकृत्य तदीयदेवताः प्रशंस्य च पूर्वस्मिन्हविःषट्के पूर्वाग्निवाहयोरनुडुहोर्दक्षिणात्वेन विधानम्,उत्तरहविःषट्कस्यापि समानतन्त्रत्वं प्रदर्श्य तदीयदेवताः प्रशंस्य चास्मिन्नुत्तरषट्केऽपि पूर्वाग्निवाहयोरनुडुहोर्दक्षिणात्वेन विधानं तेषां पूर्वाग्निवाहानुडुहां दक्षिणात्वस्य सम्भूय प्रशंसनं च, उक्तद्वादशप्रयुग्घविःकरणस्य ऋतुप्रयोगस्य कुरुपञ्चालवृत्तान्तमुखेन दृढीकरणम्, उक्तानां द्वादशप्रयुग्घविषां द्रव्यनामभ्यामुद्देशः, अदितिदेवत्यश्वेताविचित्रगर्भाऽनुबन्ध्याद्रव्यकपश्वनुष्ठानस्य मरुद्देवत्यपृषतीविचित्रगर्भाऽनुबन्ध्याद्रव्यकपश्वनुष्ठानस्य च प्राकृतेतिकर्तव्यतातिदेशसहितं स्वगुणविशिष्टयागीयद्रव्यदक्षिणासहितं च विधानम्, उक्तस्य पशुबन्धद्वयस्य शाखाभेदेन आदित्यविश्वेदेवरूपदेवतान्तरसम्बन्धप्रदर्शनं चेत्यादि. १८९–१९०

३ केशवपनीयोऽतिरात्रः–तत्र पूर्वमभिषेचनीययागादनन्तरं सकारणं केशवपनीययागविधानं, कारणत्वेनाभिहितस्य केशवपनाकरणलक्षणव्रतस्यावधिकालं प्रदर्श्य केशवपनीयशब्दस्य निर्वचनं, तत्रोद्गातृपुरुषैर्गीयमानस्तोत्रेषु चोदकेन प्रातःसवनादिषु त्रिवृदादिस्तोमानां प्राप्तौ तानपवदितुमेकविंशादिस्तोमविशेषाणां सार्थवादं विधानं, प्रकृतौ माध्यन्दिनसवने रथन्तरं बृहत्साम वा पृष्ठस्तोत्रं विकल्पेनोक्तं तन्मध्यादेकस्य रथन्तरपृष्ठस्य नियमनम्, अस्य केशवपनीयसोमयागस्यातिरात्रसंस्थात्वस्य प्रतिष्ठात्मना प्रशंसनम्, अस्य यागस्य केशवापव्रतविसर्जनार्थमनुष्ठेयत्वात्तदन्ते कर्तव्ये केशवापे कस्यचिद्विशेषस्य विधानं, सुन्वतो यजमानस्य केषांचिन्नियमानां प्रदर्शनं चेति. १९०–१९३

ब्रा० विषयाः पृष्ठाङ्काः | ब्रा० विषयाः पृष्ठाङ्काः

४ चरकसौत्रामणिः—तत्र देवतासम्बन्धविशिष्टस्य पशुत्रयस्य विधानम्, उक्तपशुषु निरुक्तगुणानामसंभवं मत्वा तदलाभे गुणान्तरविधानम्, अजत्रयपक्षे आश्विनपशोः कस्यचिद्गुणविशेषस्य विधानम्, एतेषां पशूनां सौत्रामणीसम्बन्धप्रदर्शनं, सौत्रामण्यां सुत्रामेन्द्रसम्बन्धस्याश्विसरस्वतीसम्बन्धस्य तत्रोपयुक्तद्रव्यादेश्चाख्यायिकामुखेन प्रदर्शनं, तत्र मुखवमनपक्षे प्रायश्चित्तिर्नास्तीति प्रदर्शनम्, इन्द्रियेभ्यः सोमद्रवणकाले नासिकादिस्रुतस्य सिंहाद्यात्मनोत्पत्तेः प्रदर्शनं, सौत्रामणीशब्दस्य निर्वचनं, प्रसङ्गादन्यस्य सोमातिपूतस्याप्यस्या एवेष्टेः प्रदर्शनम्, एषाऽपीष्टी राजसूययाजिना कर्तव्येतिविधानं, आश्विनसारस्वतैन्द्रपशुविधिं पृथक्पृथगनूद्य तत्प्रशंसनं, विधास्यमाने परिस्रुत्सन्धाने सिंहवृकव्याघ्रलोमसंसर्जनं सिद्धान्तयितुं शाखान्तरीयं पक्षं सोपपत्तिकमनूद्य तं निराकृत्य च स्वमतप्रतिष्ठापनं, परिस्रुत्सन्धानस्य समन्त्रकं विधानं, परिस्रुत्प्रचरणे कारणसहितमग्निद्वयोद्धरणं प्रतिपाद्य प्रचरणकालस्य विधानं परिस्रुतो दर्भैः समन्त्रकं पावनविधानं, परिस्रुति कुवलकर्कन्धुबदरसक्तुत्रयस्य निवपनविधानं, ग्रहग्रहणं विधाय तत्रैकस्यैव सोपपत्तिकं ग्रहणाभिधानम्, ग्रहग्रहणमनूद्य तत्र मन्त्रस्य विनियोजनं, ग्रहत्रयस्य ग्रहणपक्षेऽप्ययमेव मन्त्र इति प्रतिपाद्य तत्रोपयामेत्यस्मिन्नंशे विशेषकथनम्-अनुवचनप्रैषे विशेषकथनं च, होतारमनूच्याश्विसरस्वतीन्द्रप्रतिपादकमन्त्रस्याभिधानं, यजप्रैषे देवताशंसनं विधाय देवतात्रयप्रतिपादिकाया याज्यायापठनविधानं, होतुर्द्विर्वषट्कारोऽध्वर्योर्द्विर्हवनं भक्षाहरणं ग्रहत्रयपक्षेऽनुहोमं परिस्रुद्धोमौ होतव्यावित्यादेर्विधानं, परिस्रुच्छेषासेकपूर्णं रुक्मवन्तं शतच्छिद्रं नवच्छिद्रं दक्षिणाहवनीयोपरिस्थे शिक्ये निहितं स्रवन्तं कुम्भं सोमवदादिपितॄणान्त्रिभिस्त्र्यृचैरुपतिष्ठेतेति विधानम्, उपस्थाने मन्त्राणां प्रदर्शनं पित्र्यमन्त्रैरुपस्थानस्य प्रशंसनं च, पशुपुरोडाशार्थं सावित्रवारुणैन्द्रसंज्ञकहविस्त्रितयस्य विधानं पुरोडाशदेवतानां प्रशंसनं च, अनुयाजादनन्तरं स्रुग्व्यूहनात्पूर्वं पश्चाद्वा निरुक्तहविस्त्रितयस्य प्रचरणं कर्तव्यमिति पूर्वपक्षयित्वाऽस्मिंश्च पक्षे प्रचरणकालविक्षिष्टं हविरन्तरविधानं, तदुभयमपि न कर्तव्यमिति पूर्वपक्षं निराकृत्य स्वमतप्रतिष्ठापनं, तस्य दक्षिणात्वेन नपुंसकस्य गो रथवाह्या नडवाया वा सोपपत्तिकं विधानं चेत्यादि. १९३–२०९

५ त्रैधातवीसंज्ञिकोदवसानीयेष्टिः—तत्र राजसूयान्ते कर्तव्यायास्त्रैधातव्युदवसानीयेष्टेर्देवताविशिष्टस्य हविषो विधानम्, एतदिष्टिविधायककारणनिर्देशपुरःसरं देवतासम्बन्धप्रशंसार्थं

| ब्रा० | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| | पुरावृत्तकथनं, तत्र वेदप्रदानानुकरणेन यागविधानं विरुद्धमिति प्रदर्शनं, इष्टेर्नामनिर्वचनम्, इयमिष्टिरिन्द्राविष्णूभयदेवत्या संवत्सरव्यापिनी चेति निरूपणं, तत्र त्रयीविद्यारूपतासम्पादनाय हविषो व्रीहिमययवमयत्वविधानं, तयोर्व्रीहियवयोर्ग्रहणाधिश्रयणप्रकारकथनं, राजसूययज्वनोऽस्या इष्टेरवश्यकर्तव्यतया विधानं, यातयामत्वपरिहारोपपत्तिसहितं यज्ञस्यायातयामत्वं सम्पादयितुं त्रैधातवीष्टेरवश्यमनुष्ठेयेति साभिप्रायं निरूपणम्, एतस्या इष्टेर्विनियोगान्तरकथनं, पुनरप्यस्या इष्टेर्दीर्घसत्राङ्गत्वेनावश्यकर्तव्यत्वप्रतिपादनम्, एतस्या इष्टेराभिचारिकप्रयोगकथनम्, एतस्या इष्टेः परैः कृताभिचारस्य परिहरणे समर्थत्वस्योपवर्णनं, त्रैधातव्युदवसानीयेष्टेर्दक्षिणात्वेन त्रयाणां शतमानानां ब्रह्मणे—तिसृणां धेनूनां होत्रे—त्रयाणां वाससामध्वर्यवे—गोरग्निधे च प्रदानविधानम्, एतासां दक्षिणानां सम्भूय संवत्सरात्मना प्रशंसनं चेत्यादि. | २०९—२१२ |


इति राजसूयाधिकारः ।

इति पञ्चमोऽध्यायः ।

## इति सवनामके पञ्चमकाण्डे विषयानुक्रमणिका समाप्ता ॥



श्रीशः शरणम् ।

# माध्यन्दिनशतपथब्राह्मणसमागतानां विशिष्टनाम्नाम्

## अकाराद्यनुक्रमेण सूचिका ।


| नामानि | अ. ब्रा. क. |
|---|---|
| **तृतीयकाण्डे-** | |
| अग्नाविष्णू. | १ । ३ । १, ३ । ४ । २१ |
| अहल्या. | ३ । ४ । १८ |
| आतिथ्येष्टिः | २ । ३ २०, ४ । १ |
| आङ्गिरसः | ९ । १ । १३, ९ । १ । ३२ |
| आयुः | ४ । १ । २२, ९ । १ । ३२ |
| इन्द्राविष्णू. | ३ । १ । १३ |
| ऊर्ध्वनभाः ( मरुतां पुत्रः ) | ८ । २ । २८ |
| उर्वशी ( अप्सराः ) | ४ । १ । २२ |
| कद्रुः सुपर्णी च. | २ । ४ । १, ६ । २ इत्यादि. |
| कुरुपञ्चालः | २ । ३ । १९ |
| तानूनप्त्रम्. | ४ । २ |
| तनूनपात्. | ४ । २ । ९ |
| त्रिककुत् ( पर्वतः ) | १ । ३ । १२ |
| त्रैककुदम् ( अञ्जनम् ) | १ । ३ । १२ |
| दीक्षितः | १ । ३ २८, २ । २ । ३०, २ । १ । १७ |
| दीक्षा. | १ । १ १, २, ४ । ३. |
| दीक्षणीयेष्टिः | १ । ३ |
| द्यावापृथिवी. | ३ । १ । १–२, १ । ३ । २६ |
| द्युतानः ( मरुतां पुत्रः ) | ६ । १ । ३६ |
| नभाः | ९ । १ । ३२ |
| नेष्टा. | ८ । २–१, २ |
| पथ्या स्वस्तिः | २ । ३ । ८, १९ |
| पुरूरवाः | ४ । १ । २२ |
| प्रतिप्रस्थाता. | ३ । २ । २०–२३ |
| प्रातःसवनम्. | ९ । ४ |
| प्रातरनुवाकः | ९ । ३ |
| प्रायणीयेष्टिः | २ । ३ |
| मनोताः | ८ । ३ । १४ |
| मार्जालीयः | ९ । ३ । ४ |
| मार्ताण्डः | १ । ३ । २–३ |
| मेधातिथिः | ३ । ४ । १८ |
| म्लेच्छः | २ । १ । २४ |
| याज्ञवल्क्यः | १ । १ । ४, ८ । २ । २४, १ । ३ । १ |
| यूपाहुतिः | ६ । ४ |
| रक्षः | १ । ३ । १३, २ । १ । ४० |
| वार्ष्ण्यः ( वार्ष्णः ) | १ । १ । ४ |
| विवस्वान्. | १ । ३ । ४, ९ । ४ । ८ |
| विश्वावसुः ( गन्धर्वः ) | २ । ४ । २ |
| शक्करी ( छन्दः ) | ९ । २ । १७ |
| शुष्णः ( दानवः ) | १ । ३ । ११ |
| शूद्रः | १ । २ । १० |
| श्वेतकेतुः ( औद्दालकिः ) | ४ । ३ । ११ |
| सरस्वती ( देवता ) | १ । ४ । ९, । ९ । १८ |
| सहरक्षाः | ९ । १ । २१ |
| सात्ययज्ञिः ( सात्ययज्ञः ) | १ । १ । ४ |
| सुपर्णी कद्रुश्च. | २ । ४ । , ६ । २ |
| सुपर्णीकाद्रवम्. | ६ । २ । ७ |
| सुब्रह्मण्यम्. | ३ । ४ । ९, १७ |
| सोमयाजी. | २ । १ । ४० |
| सोमविक्रयी. | ४ । ३ । ३ |
| सौपर्णकाद्रवम्. | ६ । २ । ७ |


इति ।

| नामानि | अ. ब्रा. क. |
|---|---|
| **चतुर्थकाण्डे-** | |
| अङ्गिरः | ४।९।२० इत्यादि. |
| अच्छावाक्. | ३।१ |
| अत्रिः | ३।४।२१ |
| आत्रेयः | ३।४।२१ |
| आश्वतराश्विः ( वैयाघ्रपद्यः ) | ६।१।९ |
| उक्थ्यग्रहः | २।३, ३।३।२ |
| उन्नेता | ४।३।८, ९।८।१३ |
| कः | ९।६।४ |
| कुरुक्षेत्रम्. | १।९।१३ |
| कौकुस्तः ( कउक्थस्तः ) | ६।१।१३ |
| गवामयनम् | ६।२ |
| ग्रावस्तुत्. | ३।४।२२ |
| च्यवनभार्गवः ( आंगिरसः ) | १।९ |
| तुथः | ३।४।१९ |
| तृतीयसवनम्. | ३।९, १।१।१२ |
| दध्यङ् ( आथर्वणः ) | १।९।१८ |
| द्यावापृथिवी. | ३।२।१२ |
| नेष्टा. | ४।२।१७-१८ |
| पथ्या स्वस्तिः | ९।१।३-४ |
| पर्वतः | ६।९।१४ |
| प्रतिहर्ता. | ३।४।२२ |
| प्रातःसवनम्. | ३।९।२, १।१।८ |
| बुडिलः ( आश्वतराश्विः वैयाघ्रपद्यः ) ( ऋषिः ) | ६।१।९ |
| ब्राह्मणाच्छंसी. | ६।६।९ |
| मनोताः | ९।२।८ |
| मन्थीग्रहः | २।६, २।१, ३।३।२ |
| मर्कः शण्डश्च ( राक्षसौ ) | २।१।४ |
| महावैश्वदेवग्रहः | ४।१।२१ |
| महेन्द्रग्रहः | ३।३।१६-१७ |
| मैत्रावरुणः | १।९।१९, १।४ |
| याज्ञवल्क्यः | २।१७, ६।१।१०, ६।८।७ |

| नामानि | अ. ब्रा. क. |
|---|---|
| राम औपतस्विनिः ( ऋषिः ) | ६।१।९ |
| वाचस्पतिः | १।१।९ |
| वैश्वदेवग्रहः | ३।१।२९, ४।१।८ |
| वैश्वदेवशस्त्रम्. | ४।३।११ |
| वैश्वानरग्रहः | २।४।१ |
| शण्डामर्कौ ( राक्षसौ ) | २।१।४ इत्यादि. |
| शर्यातः ( मानवः ) | १।९।२ इत्यादि. |
| श्वेतकेतुः ( औद्दालकिः ) | २।९।१९ |
| सुकन्या ( च्यवनर्षेः पत्नी ) | १।९।६ |
| हरिवान् ( इन्द्रः ) | ९।३।४ |
| होत्रकः ( मैत्रावरुणो, ब्राह्मणाच्छंसी, अच्छावाक् ) | २।३।१२ |
| इति। | |
| **पञ्चमकाण्डे-** | |
| अनुमतिः | २।३।२, ९ |
| अग्नाविष्णू. | २।३।६, २।९।२ |
| अग्निनेत्राः ( देवाः ) | २।४।६ |
| अग्निपूषा. | २।९।९ |
| अग्नीषोमौ. | २।३।७, २।९।९-१०, ३।३।१ |
| अच्छावाक् | ४।९।२२ |
| अर्जुनः ( इन्द्रः ) | ४।३।७ |
| अर्यमा. | ३।१।२, ९।१।१२, ३।९।९। |
| अंशः | ३।९।९ |
| आरुणिः | ९।९।१४ |
| आग्नीध्रः ( अग्नीत् ) | ४।९।२२, ९।१।८, १८ |
| आग्नीध्रीयः | ४।२।१० |
| इन्द्र-पूषा. | २।९।९ |
| इन्द्रासोमः | २।९।९ |
| इन्द्रतुरीयम् ( हविः ) | २।४।११, १३ |

| नामानि | अ. ब्रा. क. | नामानि | अ. ब्रा. क. |
| --- | --- | --- | --- |
| इन्द्राविष्णू. | २।५।३, ५।५।१ | पृथी ( वैन्यः ) राजा. | ३।५।४ |
| उक्थ्ययागः | १।३।१ | प्रस्तोता. | ४।५।२२ |
| उक्थ्यग्रहः | १।२।१९ | प्रतिप्रस्थाता | ४।४।२१, ४।५।२२ |
| औपाविः ( जानश्रुतेयः ) ( ऋषिः ) | १।१। | बार्हस्पत्यः ( पुरोडाशः ) | १।४।१२–१३ |
| | ५, ८ | | २।१।२५, २।२।१ |
| कुरुपञ्चालः ( देशः ) | ५।२।५ | बृहस्पतिसवः ( यागः ) | २।१।१९ |
| केशवपनीयः ( यागः ) | ५।३ | ब्राह्मणाच्छंसी. | ४।५।२२ |
| ग्रामणीः | ३।१।६, ४।४।१८–१९ | भगः ( देवता ) | ३।५।९ |
| दधिक्रा. | १।५।१९ | भद्रसेनः ( आजातशत्रवः ) | ५।५।१४ |
| दधिक्रावा. | १।५।२० | भारताः | ४।४।१ |
| दशपेयः ( यागः ) | ४।५ | मित्रबृहस्पती. | ३।२।४ |
| दितिरदितिश्च. | ४।१।१५ | याज्ञवल्क्यः | ५।५।१४ |
| नमुचिः ( असुरः ) | ४।१।९, ५।४।२५ | वरुणप्रघासाः ( यागः ) | २।४।२ |
| सूतः | ३।५।१, ४।४।१७–१८ | वरुणसवः ( यागः ) | ३।४।१२, ४।३।२१ |
| सोमनेत्राः ( देवाः ) | २।४।६ | वसुः | ४।३।२२ |
| सोमा–रुद्रः | ३।३।१–२ | विश्वरूपः | ५।४।२ |
| नेष्टा. | १।२।१६, २।१।८, ४। | वैश्वदेवः | २।४।२ |
| | ५।२२ | श्रोत्रियः | ४।४।५ |
| पार्थानि ( अग्निनामानि ) | ३।५।८ | शुक्रग्रहः | ४।४।२० |
| पुरोहितः | ३।१।२, ४।२।१, | शुनासीरीयः ( यागः ) | २।४।४ |
| | ४।४।१५ | सरस्वती ( नदी ) | ३।४।३ |
| पोता. ( ऋत्विग् ) | ४।५।२२ | स्वर्भानुः ( असुरः ) | ३।२।२ |


इति विशिष्टनाम्नां सूची ।



इति
शतपथब्राह्मणस्य विशिष्टनाम्नाम्
अकाराद्यनुक्रमेणातृतीयपञ्चमकाण्डान्ता
सूची
समाप्ता ॥

श्रीः

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## तृतीयं काण्डम् ३ ।

गंगाविष्णु श्रीकृष्णदास,

मालिक-"लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस,

कल्याण बंबई.

संवत् १९९६, शके १८६१.

1939.

श्रीशः शरणम् ।

# अथ पश्ववदानानि ।

## तत्रादौ लक्षणश्लोकाः ।

हृत्पद्ममुकुलाकारं छादितं तत्पुरीतता । कुसुम्भवर्णपत्रेण यदध्वर्योः प्रदीयते ॥ १ ॥
जिह्वा प्रसिद्धा क्रोडं तु मध्यमाग्रिमपादयोः । सक्थि सव्याग्रपादस्य गृह्णीयाज्जान्वधस्त्यजम् ॥२॥
सक्थि च दक्षिणात्पादाद्ग्राह्यमौपभृतं हि तत् । पार्श्वे दक्षिणवामे तु ग्राह्ये पार्श्वास्थिसम्भवे॥ ३ ॥
अतिकृष्णं हि कालेयं यकृदित्यभिधीयते । पृथक्कुक्ष्योः स्थितौ वृक्कौ पक्वाम्रफलसन्निभौ॥ ४ ॥
सूत्रप्रायं गुदं ज्ञेयं पशुवर्चस्कपूरितम् । तत्स्थूलमुपयड्ढोमे मध्यं जौहवमुच्यते ॥ ५ ॥
तदेवौपभृतं सूक्ष्ममवद्यं तत्त्रिधा कृतिः । पार्श्वान्ते दक्षिणे पादे श्रोणिर्भवति जौहवी ॥ ६ ॥
सव्या त्वौपभृती ज्ञेयेत्यवदानविनिर्णयः । नाभ्यग्रे त्र्यंगुले प्रायः शुक्लमण्डसमा वपा ॥ ७ ॥
भागेषु लिङ्गमध्यूध्नी वनिष्ठु शतपत्रिका । विपुरीषं तु तत्कुर्यात्क्लोमा स्याद्गलनाडिका ॥ ८ ॥
उपजिह्वा स्मृतं प्लीहं पुरीतत्तु निरूपितम् ॥ ९ ॥

इत्यवदानलक्षणश्लोकाः ।

### अथैषां विवेकः ।

स च यथा—

१—वपा—नाभ्यग्रे त्र्यंगुले शुक्लमण्डसमा । "मेदस्तु वपा वसा" इत्यमरात् मेदोविशेषः सर्वोदरव्यापी पोलिकाकारोऽतिश्वेतवर्णो वपा इत्युच्यते ।

### अथ जौहवानि ।

१—हृदयम्—पद्ममुकुलाकारं मांसम् । (लोके 'पयदील' इत्युच्यते) । तथा चोक्तं—"पद्मकोशप्रतीकाशं रुचिरं चाप्यधोमुखम् । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्" इति ॥

२—जिह्वा—रसना प्रसिद्धा । ( लोके 'जीभ' इति कथ्यते ) "रसज्ञा रसना जिह्वा" इत्यमरात् ॥

३—क्रोडम्—उरः वक्षःस्थलमिति चानर्थान्तरम् । अग्रिमभुजद्वयान्तरं खण्डमिति यावत् । "न ना क्रोडं भुजान्तरम् । उरो वत्सं च वक्षश्च" इत्यमरः ॥

४—सव्यसक्थि पूर्वनडकं—सव्यस्य बाहोः पूर्वनडकं प्रथमनडकं अंसादधोवर्तमानम् । जानूपरिभाग इति यावत् । ( लोके 'चप्पु' इत्यभिधीयते ) "सक्थि क्लीबे पुमानूरुः" इत्यमरः ॥

५—६—पार्श्वे द्वे वामदक्षिणे—त्रयोदशत्रयोदशवक्रास्थिसम्बद्धे ॥

७—यकृत्—दक्षिणपार्श्वगतं कृष्णवर्णं कालेयं पित्ताधारभूतम् । ( लोके 'काळीज' इति प्रसिद्धम् ) "कालखण्डयकृती तु समे इमे" इत्यमरः ॥

८—९—वृक्कौ—अग्रमांसमिति पर्यायः । हृदयान्तर्गतं मासं "जीमूतान्हृदयौपशेन" ( वा. सं. २५ । ८ ) इत्यत्र "हृदये उपशेते इति हृदयौपशं हृदयस्थं मांसं, तेन जीमूतान्देवान्प्रीणामि" इत्युवटमहीधराभ्यां व्याख्यातत्वात् । "कुक्ष्योः स्थितौ गोलकौ वृषणाकृती वा पक्वाम्रफलतुल्यौ" इत्यन्ये । ( लोके 'गुर्दे' इति प्रसिद्धे ) "वृक्काग्रमांसम्" इत्यमरमतं चेति ॥

१०–गुदम्–अंत्रं रज्जुसदृशं सूत्ररूपं मलाधारं येन शकृन्निर्गच्छति तस्य मध्यं विषमो मध्यमो भागः । ( लोके 'पोलाई' इति गद्यते ) ॥

११–दक्षिणा श्रोणिः–दक्षिणस्य पश्चात्पादस्योपरिवर्तमानो मांसलः प्रदेशः कटिशब्दवाच्यः । "कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती" इत्यमरः । ( लोके 'कातिराणीचा पडदा' इत्युच्यते ) ॥

एवमेकादशावदानानि जुहूसम्बन्धीनि प्रधानयागसाधनानीत्यर्थः ।

## इति जौहवानि ।

## अथौपभृतानि ।

१–दक्षिणसक्थि पूर्वनडकं–दक्षिणस्य बाहोः पूर्वनडकं अंसादधोवर्तमानं जानूपरिभागः । ( लोके 'चप्पु' इति ) ॥

२–गुदतृतीयाणिष्ठं–गुदस्य तृतीयो विषमो भागः सूक्ष्मोऽतिकृशः । इति ॥

३–सव्याश्रोणिः–सव्यस्य पश्चात्पादस्योपरिवर्तमानो मांसलः प्रदेशः कटिशब्दवाच्यः । ( लोके 'कातिराणीचा पडदा' इति प्रसिद्धम् ) ॥

एवं त्रीण्यवदानाति उपभृत्सम्बधीनि स्विष्टकृद्यागसाधनानीत्यर्थः ॥

## इत्यौपभृतानि ।

## अथान्यान्यवदानानि ।

१–वर्षिष्ठं–गुदस्य वर्षिष्ठो भागस्तृतीयो विषमः स्थूलभाग उपयड्भ्य उपयड्ढोमार्थः ॥

२–वनिष्ठु–स्थूलांत्रं, इति कर्कानन्तदेवयाज्ञिकाः । शतपत्रकमिति रामः । ( चुस्ता ' इति लोके प्रसिद्धम् ) ॥
परन्तु तस्य स्थानं केनापि नोपदिष्टमतः सविशेषलक्षणं स्थानमुच्यते । अंत्रशब्दो गुदैकदेशो गुदपर्यायवाचक एव । स्थूलांत्रं स्थूलतरं गुदं मलाधारं, तत्स्थानं तु अपानरन्ध्रलग्नं ज्ञेयम् । उपरिभागे मृदुलघुतरापरिमितसंख्यैः श्वेतपर्णसदृशैरवयवैर्युक्तं श्वेतपर्णं सरन्ध्रं सपुरीषं, अपानरन्ध्रप्रदेशाद्गुदस्य वर्षिष्ठभागपर्यन्तं यावद्दीर्घं रज्जुरूपं प्रायो हस्तमात्रं लम्बायमानं स्थूलांत्रं वनिष्ठु इत्यभिधीयते । तद्वनिष्ठुभागमपानरन्ध्रतो गुदवर्षिष्ठभागप्रदेशाच्चापच्छिद्य तद्रन्ध्रे जलासेकेन विपुरीषं कृत्वा तदुक्तस्वरूपं बोधयेत् । एतद्वनिष्ठु भागप्रच्छेदस्थानतो मलाधारग्रन्थिपर्यन्तं प्रागुक्तस्त्रिविधो गुदभाग इति विवेकः ॥

३–जाघनी–जघनप्रदेशे भवा जाघनी प्रसिद्धैवेति कर्कः । जघनप्रदेशे पुच्छसंलग्ना इति श्रीअनन्तः । पशोः पुच्छकाण्डमिति देवयाज्ञिकसिद्धान्तः । ( लोके 'ढुमगजा' इति प्रथिता ) ॥

४–क्लोमा–सरन्ध्रा गलनाडिका इति कर्कः । क्लोमा–उदर्यो जलाधारः । 'हृदयस्य दक्षिणे यकृत् क्लोमा, वामे प्लीहा पुप्पुसश्च' इति वैद्यः क्षीरस्वामी । एवमेव उवटमहीधराभ्यामपि व्याख्यातम् । "तिलकं क्लोम" इत्यमरश्च । कर्कादिमते क्लोमन्शब्दः पुमान्नान्तश्च । अमरसिंहमते तु क्लीबो नांतश्चेति । ( लोके–'गलनाडी फुप्फुस' इति प्रख्यातः ) ॥

५–प्लीहा–शुक्तिकाकारं हृदयदक्षिणभागस्थं कृष्णमांसम् । हृदयवामभागे शिथिलो मांसभागः पुप्पुलसंज्ञक इत्युवटमहीधरौ । प्लीहाशब्दोऽपि पुमान्नान्तश्च । "गुल्मस्तु प्लीहा पुंस्यपि" इत्यमरात् ॥

६–अध्यूध्नी–ऊधःप्रदेशस्योपरि भवतीति कर्कः । ऊधस उपरि सतपुटः प्रसिद्ध इति श्रीअनंतः । अध्यूध्नी

शतपुट इति वा कर्कः । अच्यूध्नी लिङ्गमिति रामः । एतदेव गृह्यते याज्ञिकैः । ( तत्र लोके ' वाला शिश्न ' इति प्रसिद्धम् ) ॥

७—पुरीतत्—हृदयस्य प्रच्छादकं कौसुम्भवर्णं मांसम् । ( ' पडदा ' इति लोके निगद्यते ) ॥

इत्यन्यान्यवदानानि ।

तत्रैतेष्वङ्गेषु हृदयं सप्तधा कृत्वा अध्वर्यवे समर्पयेत् । तत्राध्वर्युरवदानद्वयं जुह्वां अवदानद्वयमिडापात्र्यां, अवदानद्वयं च प्राशित्रे कृत्वा अवशिष्टं सम्मर्शनार्थं रक्षेत् । एवं जिह्वा क्रोडं यकृत् वृक्कौ च सव्यसक्थिपार्श्वे दक्षिणाश्रोणी इत्येतेषामिडायां न । गुदतृतीयं द्वेधा कृत्वा जुह्वाम् । दक्षिणसक्थ्यवदानद्वयमुपभृति । गुदतृतीयाणिष्ठं द्वेधा कृत्य च, सव्यश्रोणेरवदानद्वयं चोपभृति । अवशिष्टं सम्मर्शनार्थं स्थापयेत् इति ॥

अथोक्तविवेकप्रदर्शककोष्ठकानि ।

अथ जौहवकोष्ठकम् १ ।

| | जौहवानि | हृदयं | जिह्वा | क्रोडं | स.न. | पार्श्वे. | यकृ. | वृक्कौ | गुदं | द. श्रो. | संकलनं. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | जुहूः | २ | २ | २ | २ | ४ | २ | ४ | २ | २ | २२ |
| २ | प्राशित्रहरणे. | २ | २ | २ | २ | ४ | २ | ४ | ० | २ | २० |
| ३ | इडापात्री. | २ | २ | २ | ० | ० | २ | ४ | ० | ० | १२ |
| ४ | शेषः | १ | १ | १ | १ | २ | १ | २ | ० | १ | १० |
| | संकलनया. | ७ | ७ | ७ | ५ | १० | ७ | १४ | २ | ५ | ६४ |

इति जौहवानि ।

अथौपभृतकोष्ठकम् २ ।

| | औपभृतानि. | द. न. | गुदं | स. श्रो. | संकलनं |
|---|---|---|---|---|---|
| १ | उपभृत् | २ | २ | २ | ६ |
| २ | प्राशित्रहरणे | ० | ० | ० | ० |
| ३ | इडापात्री. | ० | ० | ० | ० |
| ४ | शेषः | १ | ० | १ | २ |
| | संकलनया. | ३ | २ | ३ | ८ |

इत्यौपभृतानि ।

## अथांगविनियोगकोष्ठकम् ३ ।

| | अंगानि. | विनियोगः | संकलनं |
|---|---|---|---|
| १ | वर्षिष्ठम्. | उपयड्ढोमार्थं. | १ |
| २ | वनिष्ठु. | अग्नीधे. | १ |
| ३ | जाघनी. | पत्नीसंयाजार्थं. | १ |
| ४ | क्लोमा. | ब्रह्मणे. | १ |
| ५ | प्लीहा. | यजमानाय. | १ |
| ६ | अध्यूध्नी. | होत्रे. | १ |
| ७ | पुरीतत्. | अध्वर्यवे. | १ |
| | | | ७ |

इत्यंगविनियोगः ।



# अथ तृतीयकाण्डे प्रथमः प्रपाठकः ।

## प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

ओ३म् । देवयजनं जोषयन्ते । स यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन्युदन्यद्भूमेर्नाभिशयीतातो वै देवा दिवमुपोदक्रामन्देवान्वाऽएष ऽउपोत्क्रामति यो दीक्षते स सदेवे देवयजने यजते स यद्धान्यद्भूमेरभिशयीतावरतरऽइव हेष्ट्वा स्यात्तस्माद्यदेव वर्षिष्ठꣳ स्यात्तज्जोषयेरन् ॥ १ ॥

---

### अथ ज्योतिष्टोमयागाधिकारः ।

तत्रादावग्निष्टोमे देवयजनम् ।

देवयजनं जोषयन्ते । स यदेव वर्षिष्ठं स्यात्–तज्जोषयेरन् । यद्भूमेर्नाभिशयीत । अतो वै देवा दिवमुपोदक्रामन् । देवान्वा एष उपोत्क्रामति–यो दीक्षते । स सदेवे देवजने यजते । स यद्धान्यद्भूमेरभिशयीत–अवरत्तर इव हेष्ट्वा स्यात् । तस्माद्यदेव वर्षिष्ठं स्यात्–तज्जोषयेरन् ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
आधानपुनराधाने अग्निहोत्रं ततः परम् । चातुर्मास्यानि च पशुर्द्वितीये काण्ड ईरितम् ॥ २ ॥

अथ तृतीयचतुर्थाभ्यामेकाहाहीनसत्रलक्षणसकलसोमयागप्रकृतिभूतोऽग्निष्टोमोऽभिधीयते । तत्र तृतीयकाण्डस्य प्रथमाध्याये शालानिर्माणप्रभृति दीक्षाहुतिपर्यन्तं प्रतिपाद्यते । तत्रादौ शालानिर्माणार्थं देवयजनपरिग्रहं विधत्ते–**देवयजनं जोषयन्त** इति । देवा इज्यन्तेऽत्रेति 'देवयजनम्' । अधिकरणे ल्युट् (पा. सू. ३ । ३ । ११३) प्राचीनवंशसदोहविर्द्धानादिनिर्माणपर्याप्तं देवयजनस्थानम् । तत् 'जोषयन्ते' सेवन्ते (धा. पा. चु. ३०१) स्वार्थिको णिच् । परिगृह्णीयुर्यजमानपुरुषाः । तस्य विशेषमाह–**स यदेव वर्षिष्ठं स्यात् तज्जोषयेरन्निति** । 'सः' इति प्रसिद्धौ यच्छब्दविशेषणमेतत् । प्रसिद्धं 'यद्' देवयजनम्, 'तत्' 'वर्षिष्ठम्' अतिशयेन वृद्धम्, उच्छ्रितम्, जोषयितव्यमित्यर्थः । वर्षिष्ठमित्येतत् स्पष्टयति–**यदन्यादित्यादिना** । 'यत्' यस्या उपरि गृहीतायाः 'भूमेः' 'अन्यत्' परिसरस्थलं 'नाभिशयीत' अतिशयीत, अतिशयितमुच्छ्रितं न च तद् वर्षिष्ठमित्यर्थः । उक्तलक्षणं देवयजनं प्रशंसति–**अतो वा इति** । 'अतः' अस्माद् यदित्युक्तलक्षणात् 'देवाः' 'दिवम्' 'उपोत्क्रामन्' उत्क्रान्ताः, प्राप्ताः । उत्क्रामन्तु नाम, ततः किमु ? इत्यत आह–**देवान्वा इति** । यस्मात् 'एषः' दीक्षितोऽपि 'देवान्' उपोत्क्रामति, तस्माद् यादृशेन देवयजनेन देवा दिवं गताः, तादृशं कुर्वन् 'सः' दीक्षितः 'सदेवे' एव 'देवयजने' 'यजते' इष्टवान् भवति । अनेवंविधस्य परिग्रहे दोषमाह–**स यद्धेति** । निम्ने देवयजने 'इष्ट्वा' स्वयमेव 'अवरतर इव' अत्यन्तं नीच एव 'स्यात्' । **तस्मादि-**

( रंस्त ) तद्वर्ष्म सत्सम॒ᳪं स्यात् । ( त्स ) समᳪं सदविभ्रᳪंशि स्यादु-विभ्रᳪंशिसत्प्राक्प्रवणᳪं स्यात्प्राची हि देवानां दिगथोऽउदक्प्रवणमुदीची हि मनुष्याणां दिग्दक्षिणतः प्रत्युच्छ्रितमिव स्यादेषा वै दिक् पितॄणाᳪं स यद्दक्षिणाप्रवणᳪं स्यात्क्षिप्रे ह यजमानोऽमुं लोकमियात्तथो ह यजमानो ज्योग्जीवति तस्माद्दक्षिणतः प्रत्युच्छ्रितमिव स्यात् ॥ २ ॥

( न्न ) न पुरस्ताद्देवयजनमात्रमतिरिच्येत । द्विषन्तᳪं हास्य तद्भ्रातृव्यमभ्युतिरिच्यते कामᳪं ह दक्षिणतः स्यादेवमुत्तरत एतद्ध त्वेव समृद्धं देवयजनं यस्य देवयजनमात्रं पश्चात्परिशिष्यते क्षिप्रे हैवैनमुत्तरा देवयज्योपनमतीति नु देवयजनस्य ॥ ३ ॥

---

तद्वर्ष्म सत् समं स्यात् । समं सद्—अविभ्रंशि स्यात् । अविभ्रंशि सत् प्राक्प्रवणं स्यात् । प्राची हि देवानां दिक् । अथो उदक्प्रवणम् । उदीची हि मनुष्याणां दिक् । दक्षिणतः प्रत्युच्छ्रितमिव स्यात् । एषा वै दिक् पितॄणाम् । स यद्दक्षिणाप्रवणं स्यात्—क्षिप्रे ह यजमानोऽमुं लोकमियात् । अथो ह यजमानो ज्योग्जीवाति । तस्माद्दक्षिणतः प्रत्युच्छ्रितमिव स्यात् ॥ २ ॥

न पुरस्ताद्देवयजनमात्रमतिरिच्येत—द्विषन्तं हास्य तद्भ्रातृव्यमभ्यतिरिच्यते । कामं ह दक्षिणतः स्यात्, एवमुत्तरतः । एतद्ध त्वेव समृद्धं देवयजनम्—यस्य देवयजनमात्रं पश्चात्परिशिष्यते । क्षिप्रं हैवैनमुत्तरा देवयज्योपनमति । इति नु देवयजनस्य ॥ ३ ॥

---

त्युपसंहारः । अत्र कात्यायनः सौमिकमृत्विग्वरणमभिधायाह—" देवयजनं जोषयन्ते, उच्चतमम् " ( का. श्रौ. सू. १० । १० । ११ ) इति ॥ १ ॥

अन्यानपि धर्मविशेषानाह—**तद्वर्ष्मेति** । ' वर्ष्म ' उन्नतम् ' सत्, ' ' तत् ' देवयजनं ' समं स्यात् ' ; विषमस्य विसदृशदर्शनात् तदभावाय तत् समं कर्तव्यमित्यर्थः । समत्वेन ' अविभ्रंशि ' अपि स्थलं प्राचीनप्रवणम् उदीचीनप्रवणं वा भवेत्; यष्टव्यत्वेन देवानाम्, यष्टृत्वेन मनुष्याणां च देवयजनसम्बन्धसम्भवादुभयसम्बन्धिन्योर्दिशोरन्यतरस्याः प्रवणत्वाभिधानमित्यभिप्रायः । उदक्प्रवणत्वे यदर्थसिद्धं दक्षिणोन्नतत्वम्, तदाह—**दक्षिणतः प्रत्युच्छ्रितमिवेति** । विपक्षबाधमुखेन दक्षिणप्रवणत्वं निषेधति—**एषा वा** इति । ' क्षिप्रे ' अचिरेणैव कालेन ' अमुं ' परलोकम्। 'तथो ह' पूर्वोत्तरप्रवणत्वपक्षे ज्योक् चिरकालम् ( आप. श्रौ. सू. १०।२०।१ )॥२॥

अथ देवयजनप्राग्देशे देवयजनानन्तरपरिमितप्रदेशस्याधिक्यं निषेधति—**न पुरस्तादिति** । स देशातिरेको यजमानभ्रातृव्यातिरेकाय भवति । तथा चापस्तम्बः—"न प्राचीनं देवयजनाद्देवयजनमात्रमुच्छिंषेत् "— ( आप. श्रौ. सू. १० । २० । १० ) इति । दक्षिणोत्तरयोरतिरेकस्त्वैच्छिक इत्याह—**कामं हेति** । पश्चाद्भागे पुनरन्यस्य देवयजनस्य पर्याप्तप्रदेशोपेतं देवयजनं समृद्धिकरमित्याह—**एतद्ध त्वेव समृद्धमिति** । प्रतिपाद्यमर्थं निगमयति—**इति नु देवयजनस्येति** । क्लृप्तिरिति शेषः । अत्र कात्यायनः—" सममव्यतिभ्रंशि अभितो देवयजनमात्रदेशं पुरस्ताद्वर्जम्, प्राक्प्रवणमुदग्वा " ( का. श्रौ. सू. अ. ७ । ११–१३ ) इति ॥ ३ ॥

---

१–दक्षिणत उन्नतमुदीचीनावनतं प्राक्प्रवणं प्रागुदक्प्रवणं वा देवयजनम् इति ।

तद्ध होवाच याज्ञवल्क्यः । ( ल्क्यो ) वार्ष्णाय देवयजनं जोषयितुमैम तत्सात्ययज्ञोऽब्रवीत्सर्व्वा वाऽइयं पृथिवी देवी देवयजनं यत्र वाऽअस्यै क्वच यजुषैव परिगृह्य याजयेदिति ॥ ४ ॥

( त्ष्टं ) ऋत्विजो हैव देवयजनम् । ये ब्राह्मणाः शुश्रुवाᳫँसोऽनूचाना विद्वाᳫँसो याजयन्ति सैवाह्वलैतन्नेदिष्ठतमामिव मन्यामहऽइति ॥ ५ ॥

तच्छालां वा विमितं वा प्राचीनवᳫँशं मिन्वन्ति । प्राची हि देवानां दिक्पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानुपावृत्तास्तस्मात्तेभ्यः प्राङ्तिष्ठञ्जुहोति ॥ ६ ॥

---

तद्ध होवाच याज्ञवल्क्यः वार्ष्णाय । देवयजनं जोषयितुमैम । तत् सात्ययज्ञोऽब्रवीत्—'सर्वा वा इयं पृथिवी देवी देवयजनम्, यत्र वा अस्यै क च यजुषैव परिगृह्य याजयेत् '—इति ॥ ४ ॥

' ऋत्विजो हैव देवयजनम्—ये ब्राह्मणाः शुश्रुवांसोऽनूचाना विद्वांसो याजयन्ति—सैवाह्वला, एतन्नेदिष्ठतमामिव मन्यामहे—' इति ॥ ५ ॥

तच्छालां वा विमितं वा प्राचीनवंशं मिन्वन्ति । प्राची हि देवानां दिक् । पुरस्ताद्वै देवाः प्रत्यञ्चो मनुष्यानुपावृत्ताः । तस्मात्तेभ्यः प्राङ्तिष्ठन् जुहोति ॥ ६ ॥

---

अथर्षीणामाख्यानमुखेन देवयजनस्य पक्षान्तरमाह—**तद्ध होवाचेति** । वार्ष्णमृषिं ' याज्ञवल्क्य उवाच ' । यदा वयं देवयजनपरिग्रहाय गताः, तदानीं ' सात्ययज्ञः ' आह । " एतावती वै पृथिवी, यावती वेदिः—" इत्यादिश्रुतेः ( तै. सं. २ । ६ । ४ । ३ ) वेद्युपलक्षितदेवयजनस्य देवतात्मकसमस्तपृथिवीरूपत्वम्, अतो 'यत्र क च ' मन्त्रेण परिग्रहे सति तदुक्तलक्षणमेव भवेदित्यर्थः ॥ ४ ॥

याज्ञवल्क्यस्तु वक्ष्यमाणलक्षणैर्ऋत्विग्भिः परिग्रह एवोक्तलक्षणदेवयजनपरिग्रह इत्याह—**ऋत्विजो हैवेति** । ' शुश्रुवांसः ' श्रुतशास्त्राः । ' अनूचानाः ' साङ्गप्रवचनाध्येतारः । ' अह्वला ' दोषरहिताः । अर्थाद्यजुषा परिगृह्णीयात् । ऋत्विजोऽपि श्रुताध्ययनादिसम्पन्ना भवेयुरित्ययमर्थोऽप्युक्तो भवति ॥ ५ ॥

यथोक्तदेवयजने यत्कर्तव्यं गृहं तत् ' प्राचीनवंशं कर्तव्यमित्याह—**तच्छालां वेति** । ' शाला ' दीर्घचतुरस्रं गृहम् । विमितं सर्वतः समपरिमाणम्; अनयोरन्यतरत् ' प्राग्वंशम् ' प्रागग्रवंशं मिनुयात् । प्राग्दिशः प्रशंसार्थमर्थवादमाह—**प्राची हीति** । यस्मात् प्रत्यग्दिग्गतानृत्विग्यजमानान् प्रति पुरोदेशाद्धविर्भोजनाः देवाः प्रत्यङ्मुखोपावृत्ताः, ' तस्मात् ' ' तेभ्यः ' देवेभ्यः ' प्राङ् तिष्ठन् जुहोति ' । तस्मात्प्राचीनवंशत्वमुपपद्यते । ( का. श्रौ. सू. ७ । १९–१८ ) ॥ ६ ॥

---

१—अब्रवीन्मे वर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेति । शतपथश्रुतिः । ( का. १४ । ४ । १ । ८ ) वर्कुर्नामतः । वृष्णस्यापत्यं वार्ष्णः । इति नित्यानंदमुनिविरचिता मिताक्षरा । तदुह स्माहापि वर्कुर्वार्ष्णो माषान्मे पचतेति । शतपथी श्रुतिरेव ।१। १ । १ । १० । वृषा नाम कश्चित् । तस्य पुत्रो वार्ष्णः । तस्य नाम वर्कुरिति सायनाचार्याः ॥ २—' यत्किंचानूचानर्त्विजः १३ । उद्धतौषधिमूलेऽपरेऽत्ते विमितं कुर्वंति १४ । प्राग्वंशं १५ । पुरस्तादुच्चम् १६ । प्रतिदिग्द्वारम् १७ । उदग्वर्जं वा १८ । शालां वा १९ । ३—विमितपरिमाणं कात्यायनशुल्वपरिशिष्टे । विमितं चतुरस्रं स्याद्दशारत्निप्रमाणतः इति । शालापरिमाणं कात्यायनशुल्वपरिशिष्टे । विंशत्यरत्निः शाला स्यात्तदर्द्धेन तु विस्तृता इति ।

तस्माद्ु ह नु प्रतीचीनशिराः शयीत । नेद्देवानभिप्रसार्य शयाऽइति या दक्षिणा दिक्सा पितॄणां या प्रतीची सा सर्पाणां यतो देवा उच्चक्रमुः सैषाऽहीना योदीची दिक्सा मनुष्याणां तस्मान्मानुषऽउदीचीनवꣳशामेव शालां वा विमितं वा मिन्वन्त्युदीची हि मनुष्याणां दिग्दीक्षितस्यैव प्राचीनवꣳशा नादीक्षितस्य ॥ ७ ॥

तां वाऽएतां परिश्रयन्ति । नेदभिवर्षादिति न्वेव वर्षा देवान्वाऽएष ऽउपावर्त्तते यो दीक्षते स देवतानामेको भवति तिरऽइव वै देवा मनुष्ये-भ्यस्तिरऽइवैतद्यत्परिश्रितं तस्मात्परिश्रयन्ति ॥ ८ ॥

तन्न सर्व्वऽइवाभिप्रपद्येत । ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः ॥ ९ ॥

स वै न सर्व्वेणेव संवदेत । देवान्वाऽएष उपावर्त्तते यो दीक्षते स देवतानामेको भवति न वै देवाः सर्व्वेणेव संवदन्ते ब्राह्मणेन वैव राजन्येन वा

---

तस्माद्ध ह न प्रतीचीनशिराः शयीत । 'नेद्देवानभिप्रसार्य शये'—इति । या दक्षिणा दिक्—सा पितॄणाम् । या प्रतीची—सा सर्पाणाम्—यतो देवा उच्चक्रमुः—सैषाऽहीना । योदीची दिक्—सा मनुष्याणाम् । तस्मान्मानुष उदीचीनवंशामेव शालां वा विमितं वा मिन्वन्ति । उदीची हि मनुष्याणां दिक् । दीक्षितस्यैव प्राचीनवंशाः नादीक्षितस्य ॥ ७ ॥

तां वा एतां परिश्रयन्ति। 'नेदभिवर्षाद्' इति । न्वेव वर्षा । देवान्वा एष उपावर्त्तते—यो दीक्षते । स देवतानामेको भवति । तिर इव वै देवा मनुष्येभ्यः । तिर इवैतद् यत्परिश्रितम् । तस्मात्परिश्रयन्ति॥८

तन्न सर्व इवाभिप्रपद्येत । ब्राह्मणो वैव राजन्यो वा वैश्यो वा । ते हि यज्ञियाः ॥ ९ ॥

स वै न सर्वेणेव संवदेत । देवान् वा एष उपावर्त्तते—यो दीक्षते । स देवतानामेको भवति । न वै

---

प्रासङ्गिकं दीक्षितस्य शयने कञ्चिन्नियममाह—तस्माद्ध हेति । 'अभिप्रसार्य' पादावित्यर्थः । प्राग्दिक्प्रशंसार्थं दिग्विभागरूपमर्थवादमाह—या दक्षिणेति । 'यतो' 'देवाः' यजमानादीन् प्रति 'उपचक्रमुः' 'सा' प्राची 'अहीना' समृद्धा । उदीच्या मनुष्यसम्बन्धित्वं तेषामुदग्वंशशालानिर्माणात् प्रसिद्धमित्याह—तस्मान्मानुष इति । ( का. श्रौ. सू. ७ । १९ ) 'मानुषे' मनुष्यार्हे कर्मणि । 'दीक्षितस्य' प्राग्वंशत्वमेव, अन्येषां तु उदीचीनवंशत्वमिति व्यवस्था ॥ ७ ॥

सर्वतः परिश्रयणं विधत्ते—तां वा एतामिति । वृष्ट्यादिपरिहाराय परिश्रयणं कर्तव्यम्, दीक्षितस्य भाविगत्या देवानां मध्य एकत्वान्मनुष्येभ्यः सकाशाद्देवानां तिरोधानापेक्षणात्परिश्रितत्वस्य च निगूढत्वेनान्तर्हितरूपत्वादीक्षितस्येतरेभ्यो व्यवधानाय च परिश्रयणं कर्तव्यमिति परिश्रयणस्तुतिः । ( आप. श्रौ. सू. १०।९।१) ॥८॥

तत्रात्रैवर्णिकानां शूद्रादीनामभिप्राप्तिं निषेधति—तन्न सर्व इवाभिप्रपद्येतेति ॥ ९ ॥

दीक्षितस्य सर्वैः सह वाग्व्यवहारं निषेधति—स वै नेति । सर्वशब्दस्य सङ्कोचमाह—ब्राह्मणेन वैवेति ।

वैश्येन वा ते हि यज्ञियास्तस्माद्यद्येनꣳ शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयादिममिति विचक्ष्वेममिति विचक्ष्वेत्येषऽ उ तत्र दीक्षितस्योपचारः ॥ १० ॥

( ग्रेऽथा ) अथारणी पाणौ कृत्वा । शालामध्यवस्यति स पूर्वार्ध्यꣳ स्थूणाराजमभिपद्यैतद्यजुराहेदमगन्म देवयजनं पृथिव्या यत्र देवासोऽअजुषन्त विश्वऽइति तदस्य विश्वैश्च देवैर्जुष्टं भवति ये चेमे ब्राह्मणाः शुश्रुवाꣳसोऽनूचाना यद्वहास्य तेऽक्षिभ्यामीक्षन्ते ब्राह्मणाः शुश्रुवाꣳसस्तद्वहास्य तैर्जुष्टं भवति ॥ ११ ॥

---

देवाः सर्वेणेव संवदन्ते । ब्राह्मणेन वैव राजन्येन वा वैश्येन वा । ते हि यज्ञियाः । तस्माद्यद्येनं शूद्रेण संवादो विन्देद्–एतेषामेवैकं ब्रूयाद्–'इममिति विचक्ष्व–इममिति विचक्ष्व'–इति । एष उ तत्र दीक्षितस्योपचारः ॥ १० ॥

अथारणी पाणौ कृत्वा, शालामध्यवस्यति । स पूर्वार्ध्यं स्थूणाराजमभिपद्य, एतद्यजुराह–"एदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे"–( वा. सं. ४ । १ ) इति । तदस्य विश्वैश्च देवैर्जुष्टं भवति, ये चेमे ब्राह्मणाः शुश्रुवांसोऽनूचानाः–यद्वहास्य तेऽक्षिभ्यामीक्षन्ते । ब्राह्मणाः शुश्रुवांसः–तद्वहास्य तैर्जुष्टं भवति ॥ ११ ॥

---

'तस्माद्' ब्राह्मणादिवर्णत्रयस्य यज्ञार्हत्वाद् । 'यदि' 'शूद्रेण' सह 'संवादो' 'विन्देत्' लब्धश्चेत् 'एतेषां' त्रैवर्णिकानां मध्ये 'एकम्,' 'इमम्' शूद्रम् 'इति' एवं मयेदानीमुक्तप्रकारेण 'विचक्ष्व' ब्रूहीति 'स्वयं' 'ब्रूयात्' वीप्सया सर्वोऽपि वचनप्रकारः परिगृह्यते । 'एषः' 'उपचारः' व्यवहारः ( का. श्रौ. सू. ७ । ९८ ) ॥ १० ॥

समन्त्रकं शालाप्रवेशं विधत्ते–अथारणी पाणौ कृत्वेति । 'अध्यवस्यति' शालां प्रविश्य मन्त्रेणैतद् देवयजनमिति निश्चिनुयादित्यर्थः । अध्यवसानप्रकारमाह–स पूर्वार्ध्यमिति । 'स्थूणाराजः' मध्ये स्थितः उन्नतस्तम्भः, तस्य 'पूर्वार्ध्यम्' 'अभिपद्य' गृहीत्वा "एदमगन्म"–इति 'यजुः' ब्रूयात् ( आप. श्रौ. सू. १०. ३. ४ ) । अत्र कात्यायनः–"समारोह्याग्नी शालास्तम्भं पूर्वार्द्ध्यं गृहीत्वाऽरणिपाणिराहेदमगन्मेति"–( का. श्रौ. सू. ७ । ३० ) इति । मन्त्रस्य द्वितीयं पादं देवशब्दतात्पर्याभिधानेन व्याचष्टे–तदस्य विश्वैरिति । श्रुताध्ययनवद्भिर्ब्राह्मणैः । 'अक्षिभ्यां' 'यत्' 'ईक्षन्ते' 'तत्' 'तैः' 'विश्वैर्देवैः' 'जुष्टम्' इत्यर्थः ॥ ११ ॥

---

१–' मध्योदितः '–इ० पा० । २–अत्र हरिस्वामिनः–पूर्वो भागः शालायाः पूर्वार्द्धः । पूर्वार्द्धे भवः पूर्वार्ध्यः । महती स्थूणा-स्थूणाराजः । तमभिपद्य प्राप्य हस्तेनालभ्य एतद्यजुराहेति इति ॥ काण्वानां श्रुतिरपि–अथाध्यवस्यति–सा याऽसौ वर्षिष्ठा पूर्वार्द्धे शालास्थूणा भवति तामभिपद्य जपत्येदमगन्म देवयजनं पृथिव्या इति ॥ आपस्तंबोऽपि । प्राग्वंशस्य मध्यमं स्थूणाराजमालभ्य जपतीति वाजसनेयकमिति ॥ अतः स्तम्भस्य पूर्वार्द्धमभिपद्येति व्याकृतमयुक्तमिति अवसेयम् ॥

यद्वाह । यत्र देवासोऽअजुषन्त विश्वऽइति तदस्य विश्वैर्देवैर्जुष्टं भवत्यृक्सामाभ्याꣳ संतरन्तो यजुर्भिरित्यृक्सामाभ्यां वै यजुर्भिर्यज्ञस्योदृचं गच्छन्ति यज्ञस्योदृचं गच्छानीत्येवैतदाह रायस्पोषेण समिषा मदेमेति भूमा वै रायस्पोषः श्रीर्वै भूमाऽऽशिषमेवैतदाशास्ते समिषा मदेमेतीषं मदतीति वै तमाहुर्यः श्रियमश्नुते यः परमतां गच्छति तस्मादाह समिषा मदेमेति ॥ १२ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ १ ॥ १ ॥

अपराह्णे दीक्षेत । पुरा केशश्मश्रोर्वपनाद्यत्कामयेत तदश्नीयाद्यद्वा सम्पद्येत व्रतꣳ ह्येवास्यातोऽशनं भवति यद्यु नाशिशिषेदपि कामं नाश्नीयात् ॥ १ ॥ [ शतम् १४०० ] ॥

---

यद्वाह—यत्र देवासो अजुषन्त विश्वे—इति तदस्य विश्वैर्देवैर्जुष्टं भवति । " ऋक्सामाभ्यां सन्तरन्तो यजुर्भिः "—( वा० सं० ४ । १ ) इति । ऋक्सामाभ्यां वै यजुर्भिर्यज्ञस्योदृचं गच्छन्ति । ' यज्ञस्योदृचं गच्छानि ' इत्येवैतदाह । " रायस्पोषेण समिषा मदेम "—( वा० सं० ४ । १ ) इति । भूमा वै रायस्पोषः । श्रीर्वै भूमा । आशिषमेवैतदाशास्ते । समिषा मदेम—इति । इषं मदतीति वै तमाहुः—यः श्रियमश्नुते, यः परमतां गच्छाति । तस्मादाह—समिषा मदेमेति ॥ १२ ॥

**अथ तत्रादौ दीक्षासंस्काराः ।**

अपराह्णे दीक्षेत । पुरा केशश्मश्रोर्वपनाद्—यत्कामयेत—तदश्नीयाद् । यद्वा सम्पद्येत । व्रतं ह्येवास्यातोऽशनं भवति । यद्यु नाशिशिषेद्—अपि कामं नाश्नीयात् ॥ १ ॥

---

यद्वाहेति । तृतीयं पादं व्याचष्टे—ऋक्सामाभ्यामिति । ' यजुर्भिः ' क्रियमाणं यज्ञस्वरूपम् ' ऋक्सामाभ्यां ' स्तोत्रशस्त्राभ्यां ' सन्तरन्तः ' पारं प्रापयन्तः इति मन्त्रभागस्यार्थः । यजुषा ऋक्सामाभ्यां च ये तरन्ति ते यज्ञस्योदृचमेव परिसमाप्तिं गच्छन्ति । अत एतेन यज्ञस्य ' उदृचं ' परिसमाप्तिं प्राप्नोमीत्युक्तवान् भवति । चतुर्थपादस्य प्रथमभागं व्याचष्टे—रायस्पोषेणेति । ' भूमा ' बहुभाव एव ' रायस्पोषो ' धनपुष्टिः, स च ' भूमा ' साक्षात् ' श्रीः ' एव तस्माद् ' एतद् ' भागपाठे ' आशिषम् ' एव आशास्ते । तद्द्वितीयभागस्य तात्पर्यमाह—समिषेति । लोके यः श्रियं परमतां च गच्छति, तम् ' इषम् ' अन्नं ' मदति ' मोदत इत्याहुः; अतो मन्त्रे समिषेति भागमाहेत्यर्थः ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ ३—१—१ ॥

अथ दीक्षाकालं[1] विधत्ते—**अपराह्ण** इति । ' अपराह्णे अह्नस्तृतीये भागे ( आप. श्रौ. सू. १०।१२।२। ) ।

---

१—दीक्षान्तकालम् इति पा. । इयमप्सुदीक्षेत्युच्यते—एतद्दीक्षाकालस्तु—अपराह्णे दीक्षेतेति प्रथमकंडिकायामुक्तः ॥ का. । नापित उपतिष्ठति, नखानि निकृंतत्यंगुष्ठप्रभृतीनि, दक्षिणहस्तस्य प्रथममिति । ७ । ३६ [। नापिते उपतिष्ठति समीपस्थे सति अध्वर्युर्नखानि निकृन्ततीत्यर्थः ।

( द ) अथोत्तरेण शालां परिश्रयन्ति । तदुदकुम्भमुपनिदधति तत्रापित उपतिष्ठते तत्केशश्मश्रु च वपते नखानि च निकृन्ततेऽस्ति वै पुरुषस्यामेध्यं यत्रास्यापो नोपतिष्ठन्ते केशश्मश्रौ च वाऽअस्य नखेषु चापो नोपतिष्ठन्ते तद्यत्केशश्मश्रु च वपते नखानि च निकृन्तते मेध्यो भूत्वा दीक्षाऽइति ॥ २ ॥

तद्धैके । सर्व्वऽएव वपन्ते सर्व्वऽएव मेध्या भूत्वा दीक्षिष्यामहऽइति तदु तथा न कुर्याद्यद्वै केशश्मश्रु च वपते नखानि च निकृन्तते तदेव मेध्यो भवति तस्मादु केशश्मश्रु चैव वपेत नखानि च निकृन्तेत ॥ ३ ॥

स वै नखान्येवाग्रे निकृन्तते । दक्षिणस्यैवाग्रे सव्यस्य वाऽअग्रे मानुषेऽथैवं देवत्राऽङ्गुष्ठयोरेवाग्रे कनिष्ठिकयोर्वाऽअग्रे मानुषेऽथैवं देवत्रा ॥ ४ ॥

---

अथोत्तरेण शालां परिश्रयन्ति । तदुदकुम्भमुपनिदधति । तत्रापित उपतिष्ठते । तत्केशश्मश्रु च वपते, नखानि च निकृन्तते । अस्ति वै पुरुषस्यामेध्यं—यत्रास्यापो नोपतिष्ठन्ते । केशश्मश्रौ च वा अस्य नखेषु चापो नोपतिष्ठन्ते—तद्यत् केशश्मश्रु च वपते, नखानि च निकृन्तते—' मेध्यो भूत्वा दीक्षै ' इति ॥ २ ॥

तद्धैके—सर्वे एव वपन्ते—' सर्वे एव मेध्या भूत्वा दीक्षिष्यामहे ' इति । तदु तथा न कुर्यात् । यद्वै केशश्मश्रु च वपते, नखानि च निकृन्तते—तदेव मेध्यो भवति । तस्मादु केशश्मश्रु चैव वपेत, नखानि च निकृन्तेत ॥ ३ ॥

स वै नखान्येवाग्रे निकृन्तते दक्षिणस्यैवाग्रे, सव्यस्य वा अग्रे मानुषे । अथैवं देवत्रा । अंगुष्ठयोरेवाग्रे, कनिष्ठिकयोर्वा अग्रे मानुषे । अथैवं देवत्रा ॥ ४ ॥

---

अथ दीक्षिताशनविषये सर्वान्नमभ्यनुजानाति—**यत्कामयेतेत्यादिना** । यथेष्टभोजने उपपत्तिमाह—**व्रतं ह्येवास्यात** इति । ' अतः ' अस्मादुक्तभोजनादूर्ध्वकाले ' व्रतम् ' ' एव ' खलु केवलं पयःपानमेव; अत इदानीं यथेष्टं भुञ्जीत । तथा चापस्तम्बः—" तथाशितः स्याद्यथा ततो दीक्षासु कनीयः—कनीयो व्रतमुपेयात् " ( आप. श्रौ. सू. १०. ६. ७–१० ) इति । इच्छयाऽशनाभावपक्षमप्याह—**यदीति** । कात्यायनः—"अन्नमुपहरन्त्यस्मै हविष्यममांसम् ०—० अपराह्णेऽश्नातीष्टमुपपन्नं वा न वेति " ( का. श्रौ. सू. ७ । ३२ । ३३ । ३४ ) ॥१॥

शालाया उत्तरभागे क्षौरार्थं परिश्रयणं विधत्ते—**अथोत्तरेणेति** । तत्रास्मिन्नुदकुम्भपरिवृते देशे ' नापितः ' निवसेत् । तत्र केशश्मश्रुवपनं नखनिकर्तनं च कुर्यात् । तत्रोदकुम्भस्यापनप्रयोजनमाह—**अस्ति वा इति** । अमेध्यानां केशनखानां निरवशेषेण सुखच्छेदनाय उदकुम्भसन्निधानेन भवितव्यमित्यर्थः (आ.श्रौ. सू. १०।९।६)॥२

सर्वाङ्गवपनमुपन्यस्य निराचष्टे—**तद्धैके सर्वे एवेति** । सर्वस्मिन्नपि देहे केशश्मश्रुनखेष्वेव प्राचुर्येण मृतत्वसम्भवात्तज्जीवनेनैव सर्वमपि मेध्यं भवतीत्यभिप्रायः । अत्र सूत्रम्—" उत्तरे परिवृत उदकुम्भवत्यप्सु दीक्षा, नापित उपतिष्ठति "—इति ( का. श्रौ. सू. ७।३५।३६ ) ॥ ३ ॥

मानुषत्वव्यावृत्युपन्यासमुखेन नखानामेव, तत्रापि याम्यपाणिपादस्यैव तत्राप्यंगुष्ठयोरेवेति त्रयाणां प्राथम्यमाह—**स वै नखान्येवेत्यादिना** । 'देवत्रा' देवेषु, देवसम्बन्धिकर्मणि एवं कर्तव्यमित्यर्थः (का.श्रौ.सू.७।३६।९।३६) ॥४॥

स दक्षिणमेवाग्रे गोदानं वितारयति । सव्यं वाऽअग्रे मानुषेऽथैवं देवत्रा ॥ ५ ॥
स दक्षिणमेवाग्रे गोदानमभ्युनत्ति । ( त्ती ) इमाऽ आपः शमु मे सन्तु देवीरिति स यदाहेमा आपः शमु मे सन्तु देवीरिति वज्रो वाऽआपो वज्रो हि वाऽआपस्तस्माद्येनैता यन्ति निम्नं कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति तत्तदेतमेवैतद्वज्रꣳ शमयति तथो हैनमेष वज्रः शान्तो न हिनस्ति तस्मादाहेमा ऽआपः शमु मे सन्तु देवीरिति ॥ ६ ॥
( त्यु ) अथ दर्भतरुणकमन्तर्दधाति । ( त्यो ) ओषधे त्रायस्वेति वज्रो वै क्षुरस्तथो हैनमेष वज्रः क्षुरो न हिनस्त्यथ क्षुरेणाभिनिदधाति स्वधिते

---

स दक्षिणमेवाग्रे गोदानं वितारयति । सव्यं वा अग्रे मानुषे । अथैवं देवत्रा ॥ ५ ॥

स दक्षिणमेवाग्रे गोदानमभ्युनत्ति–" इमा आपः शमु मे सन्तु देवीः "–( वा. सं. ४।१) इति । स यदाह–इमा आपः शमु मे सन्तु देवीरिति । वज्रो वा आपः । वज्रो हि वा आपः तस्माद्–येनैता यन्ति निम्नं कुर्वन्ति, यत्रोपतिष्ठन्ते निर्दहन्ति । तत्तदेतमेवैतद् वज्रं शमयति । तथो हैनमेष वज्रः शान्तो न हिनस्ति । तस्मादाह–इमा आपः शमु मे सन्तु देवीरिति ॥ ६ ॥

अथ दर्भतरुणकमन्तर्दधाति–"ओषधे त्रायस्व"( वा. सं. ४ । १ )इति । वज्रो वै क्षुरः । तथो

---

वपने दक्षिणस्य भागस्य प्राथम्यमाह–स दक्षिणमेवेति । ' गोदानं ' नाम कर्णस्योपरिप्रदेशः तं ' वितारयति ' विभजेत् । यस्य चाग्रे वपनम्, तस्यैव चोन्दनप्राथम्यं युक्तम् ॥ ५ ॥

समन्त्रकं वपनमाह–इमा आप इति । ' आपः शं सन्तु '–इति शान्तिप्रार्थनायाः क्रौर्यप्रसङ्गं दर्शयति–वज्रो वा आप इति । एतत्प्राग्व्याख्यातम् ( श. प. १।१।१।१७ ) ॥ ६ ॥

क्षुरविदारणपरिहाराय केशानामुपरि दर्भस्थापनं समन्त्रमाह–अथेति । दर्भतरुणकमित्यादि । दर्भपाणिरित्यर्थः(७।३८)। क्षुरस्य हिंसकत्वात् ततः पालनप्रार्थना। तत्र समन्त्रकं क्षुरनिधानमाह-अथ क्षुरेणेति(७।३९)॥ ७

---

१–गोदानञ्च दक्षिणं शिरःपार्श्वम् । गवि पृथिव्यां दीयत इति गोदानम् इति का. श्रौ. सूत्र ७ । ३७ भाष्ये कर्कः ।

२–दक्षिणं गोदानं वितार्योनत्तीमा आप इति।७–३७।यूपवत्कुशतरुणं ३८।क्षुरेण चाभिनिधाय ३९।छित्त्वोदपात्रे प्रास्यति ४०।एवमुत्तरं तूर्ष्णीं ४१।नापिताय क्षुरं प्रयच्छति ४२ । तेन केशश्मश्रु वपति ४३ । आपो अस्मानिति स्नात्वा ४४ । वितारणं कंकतादिना केशोन्मोचनं । उनत्ति–उंदी क्लेदने–तिम्मयतीत्यर्थः। गोदानं च--दक्षिणं शिरसः पार्श्वम् । स्वपद्भिर्गवि पृथिव्यां दीयते यत्तद्गोदानम् । यूपवदिति–ओषधे त्रायस्वेति मंत्रातिदेशः। कुशतरुणं–सूक्ष्मं कुशाग्रं, दर्भतरुणमिति हरिस्वामिनः। चकारेण यूपवदित्यातिदेशः । तेन च स्वधिते मैनꣳ हिꣳसीरिति मंत्रातिदेशः। केशाः शिरोगताः। तथाहामरसिंहः–' चिकुरः कुंतलो वालः कचः केशः शिरोरुहः ' इति । श्मश्रु मुखजरोमाणि । तथाहामरसिंहः–'तनूरुहं रोमलोमतद्वृद्धौ श्मश्रु पुंमुखे'इति । तानि च भ्रूचक्षुषां रोमाणि वर्जयित्वेति देवयाज्ञिकः । मुखलक्षणमायुर्वेदे–' औष्ठौ च दंतमूलानि दंता जिह्वा च तालु च । गल्लो गल्लादिसकलं सप्तांगं मुखमुच्यते ' इति । दृष्टार्थत्वाच्चोदकुंभोदकेनैव स्नानमिति कर्कः । कर्कोक्तैनैवकारेण–स्थावराप्सु स्नाति शंखिनीष्ववकिनीषु लोमशे तीर्थें कुंडे हिरण्यमवधाय तस्मिन् स्नातीति वाजसनेयकमित्यापस्तम्वोक्तादिनिरासः । तथा देवयाज्ञिकोक्तं–उदकुंभनिधानमदृष्टार्थमितितु–दृष्टे फले संभवति नादृष्टपरिकल्पना–इति न्यायाननुगतमेव । एवमुदिदाभ्य इति मंत्रालिंगविरोधो न हि स्नानमंत्रगतः । मंत्रान्तरगतत्वाच्चेत्यपि बोध्यम् । एवं च कर्कप्रामाण्यात् स्नानार्थमुदकुंभोदकप्रतिष्ठापनविधानमेवेति सिद्धांतः ॥

मैनᳪं᳭ हिᳪं᳭सीरिति व्वज्रो वै क्षुरस्तथो हैनमेष व्वज्रः क्षुरो न हिनस्ति ॥७॥

प्रच्छिद्योदपात्रे प्रास्यति । तूष्णीमेवोत्तरं गोदानमभ्युनत्ति तूष्णीं दर्भतरुणकमन्तर्दधाति तूष्णीं क्षुरेणाभिनिधाय प्रच्छिद्योदपात्रे प्रास्यति ॥८॥

( त्यु ) अथ नापिताय क्षुरं प्रयच्छति । स केशश्मश्रु व्वपति स यदा केशश्मश्रु व्वपति ॥ ९ ॥

( त्यु ) अथ स्नाति । ( त्य ) अमेध्यो वै पुरुषो यदनृतं व्वदति तेन पूतिरन्तरतो मेध्या वाऽआपो मेध्यो भूत्वा दीक्षाऽइति पवित्रं वाऽआपः पवित्रपूतो दीक्षाऽइति तस्माद्वै स्नाति ॥ १० ॥

स स्नाति । ( त्या ) आपोऽअस्मान्मातरः शुन्धयन्त्वित्येतद्ध्याह शुन्धयन्त्विति घृतेन नो घृतप्वः पुनन्त्विति तद्वै सुपूतं यं घृतेन पुनंस्तस्मादाह घृतेन नो घृतप्वः पुनन्त्विति विश्वᳪं᳭ हि रिप्रं प्रवहन्ति देवीरिति यद्वै व्विश्वᳪं᳭ सर्व्वं तद्यदमेध्यᳪं᳭ रिप्रं तत्सर्व्वᳪं᳭ ह्यस्मादमेध्यं प्रवहन्ति तस्मादाह व्विश्वᳪं᳭ हि रिप्रं प्रवहन्ति देवीरिति ॥ ११ ॥

---

हैनमेष वज्रः क्षुरो न हिनस्ति । अथ क्षुरेणाभिनिदधाति । " स्वधिते मैनं हिंसीः " ( वा. सं. ४।१ ) इति । वज्रो वै क्षुरः, तथो हैनमेष वज्रः क्षुरो न हिनस्ति ॥ ७ ॥

प्रच्छिद्योदपात्रे प्रास्यति । तूष्णीमेवोत्तरं गोदानमभ्युनत्ति । तूष्णीं दर्भतरुणकमन्तर्दधाति । तूष्णीं क्षुरेणाभिनिधाय प्रच्छिद्योदपात्रे प्रास्यति ॥ ८ ॥

अथ नापिताय क्षुरं प्रयच्छति । स केशश्मश्रु वपति स यदा केशश्मश्रु वपति ॥ ९ ॥

अथ स्नाति । अमेध्यो वै पुरुषो—यदनृतं वदति । तेन पूतिरन्तरतः । मेध्या वा आपः । ' मेध्यो भूत्वा दीक्षै '—इति । पवित्रं वा आपः । ' पवित्रपूतो दीक्षै 'इति । तस्माद्वै स्नाति ॥ १० ॥

स स्नाति—" आपो अस्मान्मातरः शुन्धयन्तु "( वा. सं. ४ । २ ) इति । एतद्ध्याह शुन्धयन्त्विति "घृतेन नो घृतप्वः पुनन्तु"—( वा. सं. ४।२ ) इति । तद्वै सुपूतं—यं घृतेनपुनंस्त-

---

प्रच्छिद्येति स्पष्टम् ( ७।४० ) । उत्तरं गोदानोन्दनादिकममन्त्रकमित्याह—तूष्णीमेवेति ( ७।४१ ) ॥ ८ ॥

अथ नापितायेति । स्पष्टम् ( ७ । ४०—४३ ) ॥ ९ ॥

स्नानं विधाय प्रशंसति—अथ स्नातीति । एतद्व्रतोपायनार्थवादवाक्यवद् व्याख्येयम् ॥ १० ॥

स्नानमन्त्रमाह—स स्नातीत्यादिना । आपो अस्मानिति (७।४४) । ' मातरः ' ओषधिवनस्पत्यादिसकलनिर्मात्र्यः 'यं घृतेन' पावयन्ति, तस्यैव सुपूतत्वाद् घृतेन पुनन्त्विति प्रार्थनं युक्तमित्यर्थः । तृतीयपादस्य तात्पर्यमाह—विश्वं हीति । "रपो रिप्रमिति । पापनामनी भवतः " इति निरुक्तम् ४।३।९। ' यद् विश्वं ' तत् सर्वमुच्यते, ' यदमेध्यम् ' ' तत् रिप्रम् ' अतो देहगतं मालिन्यमात्मगतं पापं सर्वं द्योतमाना आपः ' अस्माद् ' यजमानात् अपगमयन्ति यतः, अत एवमाह मन्त्र इत्यर्थः ॥ ११ ॥

( त्यु ) अथ प्राङिवोदङ्ङुत्क्रामति । ( त्यु ) उदिदाभ्यः शुचिरा पूत एमीत्युद्भ्याभ्यः शुचिः पूत एति ॥ १२ ॥

( त्यु ) अथ वासः परिधत्ते । सर्व्वत्वायैव स्वामेवास्मिन्नेतत्त्वचं दधाति या ह वाऽइयं गोस्त्वक्पुरुषे हैषाऽग्रऽआस ॥ १३ ॥

ते देवा अब्रुवन् । (न्गौ) गौर्वाऽइदᳪ सर्व्वं बिभर्ति हन्त येयं पुरुषे त्वग्गव्येतां दधाम तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षिष्यतऽइति ॥ १४ ॥

तेऽवच्छाय पुरुषम् । गव्येतां त्वचमदधुस्तयैषा वर्षन्तं तया हिमं तया घृणिं तितिक्षते ॥ १५ ॥

( तेऽव ) अवच्छितो हि वै पुरुषः । ( स्तु ) तस्मादस्य यत्रैव क्व च कुशो

---

स्मादाह घृतेन नो घृतप्वः पुनन्त्विति । "विश्वं हि रिप्रं प्रवहन्ति देवीः" ( वा. सं. ४।२ ) इति । यद्वै विश्वं—सर्वं तत् । यदमेध्यं रिप्रं तत् । सर्वं—ह्यस्मादमेध्यं प्रवहन्ति । तस्मादाह—विश्वं हि रिप्रं प्रवहन्ति देवीरिति ॥ ११ ॥

अथ प्राङिवोदङ्ङुत्क्रामति—" उदिदाभ्यः शुचिरापूत एमि "—( वा. सं. ४ । २ ) इति । उद्भ्याभ्यः शुचिः पूत एति ॥ १२ ॥

अथ वासः परिधत्ते सर्वत्वायैव । स्वामेवास्मिन्नेतत्त्वचं दधाति । या ह वा इयं गोस्त्वक्—पुरुषे हैषाऽग्र आस ॥ १३ ॥

ते देवा अब्रुवन्—गौर्वा इदं सर्वं बिभर्ति । हन्त येयं पुरुषे त्वक्—गव्येतां दधाम । तयैषा वर्षन्तम् । तया हिमम् । तया घृणिम्, तितिक्षिष्यत इति ॥ १४ ॥

तेऽवच्छाय पुरुषं गव्येतां त्वचमदधुः । तयैषा वर्षन्तम्, तया हिमम्, तया घृणिम्, तितिक्षते ॥ १५ ॥

अवच्छितो हि वै पुरुषः । तस्मादस्य यत्रैव क्व च कुशो वा यद्वा विकृन्तति तत एव लोहितमुत्पताति ।

---

उदिदाभ्य इति चरमपादस्य पृथग् विनियोगमाह—अथ प्राङिवोदङ्ङुत्क्रामतीति । 'आभ्यः' अद्भ्यः सकाशात् शुद्ध एव सन् उद्गच्छामीति तस्यार्थः ॥ १२ ॥

वासःपरिधानं विधाय प्रशंसति—अथ वास इति ( का. श्रौ. सू. ७।४९ ) । 'परिधानम्' उपसंव्यानम्, तद्धारणं सर्वस्यैव दीक्षितस्य 'सर्वत्वायैव' न त्वतिरिक्तः कश्चिद्विशेषोऽस्तीत्येवकारेणाह । अतो वासोधारणेन 'त्वचमेव' धृतवान् भवति यस्मात् तत एतद्धारणवतः सर्वत्वमित्यर्थः[२] । उपरितनग्रन्थः सर्वोऽप्येतस्यैवोपपादकः । इदानीं गव्याश्रिता 'इयं' त्वक् 'अग्रे' पुरा 'पुरुषे' 'आस' स्थिता ॥ १३ ॥

ते देवा इति । 'देवाः' किमर्थमियं त्वक् पुरुषे वर्तते, गोस्तु बहूपकारवती; अतस्तां त्वचं तत आदाय गवि स्थापयामो वृष्टिहिमादिकं परिहरत्विति पुरुषाद् गवि अधारयन् ॥ १४ ॥ १५ ॥

अवच्छित इति । पुरुषादपगमे लिङ्गमाह—तस्मादस्येति । कुशाद्युपघाते सति रक्तस्रावदर्शनाद् देवैस्त्वचो

---

१—उदिदाभ्य इत्युत्क्रामत्युत्तरपूर्वार्द्धम् । का. श्रौ. सू. ७।४४। २—यस्मात्त्वच एव धारणमतः सर्वत्वमित्यर्थः । इ० क्र० ।

वा श्रुद्धा विकृन्तुति तुत एव लोहितमुत्पतति तुस्मिन्नेतां त्वचमदधुर्व्वास एव तुस्मान्नान्यः पुरुषाद्वासो बिभर्त्येताᳬ ह्यस्मिँस्त्वचमुदधुस्तुस्माद् सुवासा एव बुभूषेत्स्वया त्वचा सुमृध्याऽइति तुस्मादप्यश्लीलᳬ सुवाससं दिदृक्षन्ते स्वया हि त्वचा समृद्धो भवति ॥ १६ ॥

नो ह्यान्ते गोर्नग्नः स्यात् । ( ह ) व्वेद ह गौरहमस्य त्वचं बिभर्मीति सा बिभ्यती त्रसति त्वचं मऽआदास्यतऽइति तुस्माद् गावः सुवाससमुपैव निश्रयन्ते ॥ १७ ॥

तुस्य वाऽएतुस्य व्वाससः । ( सोऽग्नेः ) अग्नेः पर्यासो भवति व्वायोरनुच्छादो नीविः पितृणाᳬ सर्पाणां प्रघातो विश्वेषां देवानां तन्तव आरोका नक्षत्राणामेवᳬ हि वाऽएतत्सर्व्वे देवा अन्वायत्तास्तुस्माद्दीक्षितवसनं भवति ॥ १८ ॥

---

तस्मिन्नेतां त्वचमदधुः—वास एव । तस्मान्नान्यः पुरुषाद्वासो बिभर्ति । एतां ह्यस्मिंस्त्वचमदधुः । तस्माद् सुवासा एव बुभूषेत्—स्वया त्वचा समृध्यै इति । तस्मादप्यश्लीलं सुवाससं दिदृक्षन्ते । स्वया हि त्वचा समृद्धो भवति ॥ १६ ॥

नो हान्ते गोर्नग्नः स्यात् । वेद ह गौः अहमस्य त्वचं बिभर्मीति । सा बिभ्यती त्रसति त्वचं म आदास्यते ' इति । तस्माद् गावः सुवाससमुपैव निश्रयन्ते ॥ १७ ॥

तस्य वा एतस्य वाससः । अग्नेः पर्यासो भवति, वायोरनुच्छादः, नीविः पितृणाम्, सर्पाणां प्रघातः,

---

विकर्तनं सिद्धमित्यर्थः । तदा पुरुषाणां निस्त्वक्त्वपरिहाराय वस्त्रमकल्पयन् । तस्मात्तेषामेवासाधारणमभूत् । भृतेन च सम्भूषितो भवति । तथा च लौकिका आहुः—'वस्त्रं पुरुषस्यालङ्कारः' इति लोके निन्दितमपि सुवाससं समाजादौ सम्यक् पश्यन्ति ॥ १६ ॥

पुरुषस्य त्वचो गवि स्थापनं यदस्ति, तत्किमर्थमिति प्रसङ्गात् कश्चित् कश्चित् पुरुषार्थनियममाह—**नो हान्त** इति । कदाचिदपि गोसमीपे विवासा न भवेत् । यस्मात्तु सा ' अस्य त्वचं' धारयामीति जानीतेत्यतो ' न नग्नः स्यात् ' । जानातु नाम का हानिरित्यत आह—**सा बिभ्यतीति** । पुनस्त्वगपच्छेदभयात् ' त्रसति ' भीत्या कम्पते । **तस्मादिति** । स्पष्टम् ॥ १७ ॥

विहितं वस्त्रं सर्वदेवतात्मकत्वेन प्रशंसति—**तस्य वा** इति । 'तस्य' वस्त्रस्य, परितः तिर्यक् अस्यत इति 'पर्यासः' तिर्यक्तन्तुसन्दर्भः । सः 'अग्नेर्भवति' अग्निदेवताको भवति, सोऽभिमन्यत इत्यर्थः । 'अनुच्छादः' अनुलोममाच्छादयत इति । सः 'वायोः' भवति । 'नीविः' आद्यन्तप्रदेशः । स 'पितृणाम्' । 'प्रघातः'[१] सर्वहननस्थानं निबिडीभूतप्रदेशः । सः 'सर्पाणाम्' । 'तन्तवः' स्वरूपेण, 'विश्वेषां देवानाम्' । ' आरोकाः ' मध्येच्छिद्राणि[२] । तत् ' नक्षत्राणाम् ' । ' तस्मात् ' सकलदेवत्यत्वात् ' दीक्षितवसनम् ' अवश्यं भवितव्यम् ॥ १८ ॥

---

१—" प्रघातो दण्डेन शलाकोपघातेन वा प्रहारः " इति तै. सं. १।२।१;६।१।१ सा. भा. । २—"मध्ये च्छिद्राणि " इ० पा. ।

तद्वाऽअहतᳫं स्यात् । ( द ) अयातयामतायै तद्वै निष्पेष्टवै ब्रूयाद्यदेवास्यात्रामेध्यमा क्रणत्ति वा व्वयति वा तदस्य मेध्यमसदिति यद्युऽअहतᳫं स्यादद्भिरभ्युक्षेन्मेध्यमसदित्यथो यदिदᳫं स्नातवस्यं निहितमपल्यूलनकृतं भवति तेनो हापि दीक्षेत ॥ १९ ॥

तत्परिधत्ते । दीक्षातपसोस्तनूरसीत्यदीक्षितस्य वाऽअस्यैषाऽग्रे तनूर्भवत्यथात्र दीक्षातपसोस्तस्मादाह दीक्षातपसोस्तनूरसीति तां त्वा

विश्वेषां देवानां तन्तवः, आरोका नक्षत्राणाम् । एवं हि वा एतत्सर्वे देवा अन्वायत्ताः तस्माद्दीक्षितवसनं भवति ॥ १८ ॥

तद्वा अहतं स्यात्—अयातयामतायै । तद् वै निष्पेष्टवै ब्रूयात् यदेवास्यात्रामेध्या क्रणत्ति वा वयति वा तदस्य मेध्यमसदिति । यद्यु अहतं स्याद्—अद्भिरभ्युक्षेत्—मेध्यमसदिति । अथो यदिदं स्नातवस्यं निहितं अपल्यूलनकृतं भवति—तेनो हापि दीक्षेत ॥ १९ ॥

तत्परिधत्ते—“ दीक्षातपसोस्तनूरसि ” ( वा.सं. ४।२ ) इति । अदीक्षितस्य वा अस्यैषाऽग्रे

तस्य वस्त्रस्य नूतनत्वं विधत्ते—**तद्वा अहतमिति** । ‘ अयातयामतायै ’ अशिथिलत्वाय ‘ तत् ’ ‘ अहतम् ’ वस्त्रं ‘ निष्पेष्टवै ’ क्षालयितुमन्यं ‘ ब्रूयात् ’ । ‘ अस्य ’ वस्त्रस्य ‘ यत् ’ ‘ अमेध्यम् ’ ‘ आक्रणत्ति ’ आक्रणोति, आश्लिष्टं करोति निर्माणकाले, सहैव ‘ वयति ’ च । ‘ अहतं ’ चेत् अभ्युक्षणमेव कर्तव्यम् । तत्प्रयोजनं ‘ मेध्यमसदिति ’ मेध्यार्हं भवेदिति क्षालनम् ॥

पक्षान्तरमाह—**अथो यदिदमिति** । स्नातेन पुरुषेणाच्छाद्यम् धार्यम्, ‘अपल्यूलनकृतं’ क्षारद्रव्यसहितेनाधौतम् ; ( ७।४७ ) प्रतिदिनं प्रक्षाल्य यदेव धार्यते, तदित्यर्थः । तेन वा दीक्षेत ॥ १९ ॥

उक्तविधस्य वाससः समन्त्रकं परिधानं विधत्ते—**तत् परिधत्त** इति । दीक्षातपसोस्तनूरसीति ।

१–कात्यायनः ‘ क्षौमं वस्ते निष्पेष्टवै ब्रूयादहतं ’ ७ । ४५ । चेदद्भिरभ्युक्ष्य । ७ । ४६ । स्नातवस्यंवाऽमौत्रधौतं विचितकेशं प्रसारितदशं दीक्षातपसोरिति ४७ ॥ क्षौममातसं । ( जवस ) “ अतसी स्यादुमाक्षुमे ” त्यमरः । अहतमधौतमिति कर्कः । देवयाज्ञिकस्तु–वासस उपघातः परिधानेन रागेण वा भवति । अतोऽहतमपरिहितमरक्तं चेत्याह । निष्पेष्टवै–‘पिष्लसंचूर्णने’ धातुः । तेन च हस्ताभ्यां संपेष्टव्यमिति प्रैषार्थः । ततश्च ब्राह्मणहस्तसंपर्कान्मेध्यता भवतीत्यभिप्रायः । अहतं चेदद्भिरभ्युक्ष्य वा परिधत्ते । इति वासोधावनाद्भिरभ्युक्षणयोर्विकल्पः । स्नातवस्यं–स्नातेन प्रत्यहं कृतस्नानेन वस्यं वसनीयं सदा परिधानीयं यद्वासस्तत्स्नातवस्यं । तदमौत्रधौतमरजकधौतं । विचितकेशं विचिताः निष्कासिताः केशा यस्मात्तद्विचितकेशं स्नातवस्यमहतं चेत्युभयमपि विचितकेशं प्रसारितदशमित्यभ्युपेतव्यम् ।

उत्तरीयं च वासः काण्वपाठात् । तथाच श्रुतिः । “ तस्मादेतद्दीक्षणीयं तदहत ᳫ स्यादित्याहुस्तदुभयं निष्पेष्टवै ब्रूयात् ” इति ॥ हरिस्वामिनस्तु एकं वासः परिधानीयमेवाहुः । तथाहि । तदेकमेव । सर्वत्रैकत्वदर्शनात् । उपादेयगतस्यैकत्वस्याविवक्षाकारणाभावात् । “ तस्य वा एतस्य वाससः ” “ नेदिदं दीक्षितवसनं परिधाय “ अंतरं दीक्षितवसनात् । ” अथैनं परिधापयंतीति, इति हि सर्वत्रैकमेव दृश्यते । तथा–दंपत्योर्द्वे वाससी दर्शयति । “ तावन्ये वाससी परिधापयेते ” इति । तथाच “ अथैनं वासांᳫसि परिधापयन्ति” इति वहुषु वहुवचनमेव दृश्यते । तेन विवक्षितमित्यवसीयते–तच्चाधोवासः स्यात् । नीविदर्शनात् । अंतरं दीक्षितवसनादित्यादौ परिदधातेश्च तत्रैव रूढत्वादिति ॥ कर्काशयस्तु–उत्तरीयं सामर्थ्यपरिप्रापितमेवेति सूत्रकृता नोपनिवद्धं । तथा च–कृष्णविषाणां त्रिवलिं पंचवलिं वोत्तानां दशायां वध्नीते । ७ । ९१ इत्यस्मिन् सूत्रे कर्कः । सामर्थ्यपरिप्रापितत्वाच्चोत्तरे सिचि वध्नीत इति नोक्तमिति ॥

शिवाᳪं शग्मां परिदधऽइति तां त्वा शिवाᳪं साध्वीं परिदधऽइत्येवैतदाह भद्रं व्वर्णं पुष्यन्निति पापं वाऽएषोऽग्रे व्वर्णं पुष्यति यममुमदीक्षितोऽथात्र भद्रं तस्मादाह भद्रं व्वर्णं पुष्यन्निति ॥ २० ॥

( त्य ) अथैनᳪं शालां प्रपादयति । स धेन्वै चानडुहश्च नाश्नीयाद्धेन्वनडुहौ वाऽइदᳪं सर्व्वं बिभृतस्ते देवा अब्रुवन्धेन्वनडुहौ वाऽइदᳪं सर्व्वं बिभृतो हन्त यदन्येषां व्वयसां व्वीर्यं तद्धेन्वनडुहयोर्दधामेति स यदन्येषां व्वयसां व्वीर्यमासीत्तद्धेन्वनडुहयोरदधुस्तस्माद्धेनुश्चैवानड्वांश्च भूयिष्ठं भुङ्क्तस्तद्धैतत्सर्व्वाश्यमिव यो धेन्वनडुहयोरश्नीयादन्तगतिरिव तᳪं हाद्भुतमभिजनितोर्जायायै गर्भं निरवधीदिति पापमकदिति पापी कीर्तिस्तस्माद्धेन्वनडुहयोर्नाश्नीयात्तदु होवाच याज्ञवल्क्योऽश्नाम्येवाहमᳪंसलं चेद्भवतीति ॥ २१ ॥ इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ १ ॥ २ ॥

---

तनूर्भवति--अथात्र दीक्षातपसोः । तस्मादाह--दीक्षातपसोस्तनूरसीति । " तां त्वा शिवां शग्मां परिदधे"--इति (वा. सं. ४।२)। तां त्वां शिवां साध्वीं परिदध इत्येवैतदाह । "भद्रं वर्णं पुष्यन्"--( वा. सं. ४ । २ ) इति । पापं वा एषोऽग्रे वर्णं पुष्यति--यममुमदीक्षितः--अथात्र भद्रम् । तस्मादाह--भद्रं वर्णं पुष्यन्निति ॥ २० ॥

अथैनं शालां प्रपादयति । स धेन्वै चानडुहश्च नाश्नीयात् । धेन्वनडुहौ वा इदं सर्वं बिभृतः । ते देवा अब्रुवन्--धेन्वनडुहौ वा इदं सर्वं बिभृतः । हन्त यदन्येषां वयसां वीर्यम्--तद्धेन्वनडुहयोर्दधामेति । स यदन्येषां वयसां वीर्यमासीत्--तद् धेन्वनडुहयोरदधुः । तस्माद्धेनुश्चैवानड्वांश्च भूयिष्ठं भुङ्क्तः । तद्धैतत्सर्वाश्यमिव--यो धेन्वनडुहयोरश्नीयाद् अन्तगतिरिव । तं हाद्भुतमभिजनितो जायायै गर्भं निरवधीदिति पापमकदिति । पापी कीर्तिः । तस्माद्धेन्वनडुहयोर्नाश्नीयात् तदु होवाच याज्ञवल्क्यः--अश्नाम्येवाहमंसलं चेद्भवतीति ॥ २१ ॥

---

' आह ' मन्त्रभागः।द्वितीयभागे शग्मामिति तनूः संस्पृष्टत्वतनूः । ' अग्रे ' प्राक् ' अदीक्षितस्यैषा तनूः ' आसीत्, ' अथ ' इदानीं तु दीक्षितदण्डकृष्णाजिनधारणनवनीताभ्यङ्गादिसाध्यः संस्कारः, तपोऽशनवर्जनादिजन्यक्लेशसहनात्मकम्; तदुभयमनेन प्राप्तत्वाद् । दीक्षातपसोस्तनूरसि--इतिशब्दस्य तात्पर्यमाह--साध्वीमिति । वस्त्रस्य तनुत्वाभिधानात् स्त्रीलिङ्गता । तृतीयभागमनूद्य व्याचष्टे--भद्रं वर्णं पुष्यन्निति । भद्रत्वसमर्थनाय पूर्वत्राभद्रत्वं प्रसञ्जयति--पापं वा एष इति ॥ २० ॥

अथ क्षौरानन्तरं स्नातस्य धृतवाससः शालाप्रवेशं विधत्ते--अथैनमिति । ' प्रपादयति ' गमयेदध्वर्युः(का. श्रौ.सू.७।७९)।अस्याप्यशनकालत्वादत्राशने कश्चिन्नियममाह--स धेन्वै वेति । धेनोः क्षीरादिकम्, अनडुहः सम्बन्धि कर्षणसाध्यमित्यर्थः । तदुभयं ' नाश्नीयात् ' धेन्वनडुहयोः सर्वजगदुपकारकत्वात् तदीयाशनप्रतिषेध इत्यर्थः । एतदेवोपपादयति--ते देवा इत्यादिना । अनयोः सर्वोपकारकत्वं विज्ञाय देवैः'वयसाम् ' 'अन्येषां'च पशूनां 'वीर्यं,

---

१--' वाग्यतं प्रवेशयत्याहवनीयगार्हपत्यावन्तरेण ' इति ।

अपः प्रणीय । ( या ) आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्व्वपत्यग्निर्वै सर्व्वा देवताऽअग्नौ हि सर्व्वाभ्यो देवताभ्यो जुह्वत्यग्निर्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यस्तत्सर्व्वाश्चैवैतद्देवताः परिगृह्य सर्व्वं च यज्ञं परिगृह्य दीक्षाऽइति तस्मादाग्नावैष्णव ऽएकादशकपालः पुरोडाशो भवति॥१॥ तद्धैके । ( क२ ) आदित्येभ्यश्चरुं निर्व्वपन्ति तदस्ति पर्युदितमिवाष्टौ

---

अपः प्रणीय, आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति । अग्निर्वै सर्वा देवताः । अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति । अग्निर्वै यज्ञस्यावरार्ध्यः, विष्णुः परार्ध्यः । तत् सर्वाश्चैवैतद्देवताः परिगृह्य, सर्वं च यज्ञं परिगृह्य, दीक्षै इति । तस्मादाग्नावैष्णव एकादशकपालः पुरोडाशो भवति॥१॥ तद्धैके—आदित्येभ्यश्चरुं निर्वपन्ति । तदस्ति पर्युदितमिव । " अष्टौ पुत्रासो अदितेर्ये जाता-

---

सारमादाय धेन्वनडुहयोः स्थापितत्वात् तदश्नतः सर्वाशनं भवति । तस्य च जायायाः गर्भसम्भवे सति तत् सर्वाशनं तं रेतोरूपेण परिणतं 'गर्भं' हिंस्यात् । तत् पापकीर्तिः स्यात् । तदुभयोरन्नं 'नाश्नीयात्' । तत्र याज्ञवल्क्यपक्षमाह—तदु होवाचेति । चेदिति यस्मादर्थे । यस्मादुभयाशने शरीरम् 'अंसलं भवति' । तस्मात् 'अश्नाम्यहं' तयोरन्नमश्नीयामेवेत्यर्थः । एकहायनप्रभृत्यापञ्चहायना गावो वयांसि; तथैवापस्तम्बेनाभिधानात् । अत्र कात्यायनः—"धेन्वनडुहयोर्नाश्नीयात्, पुरुषधर्मो वा सम्भवात्, अंसलभोजनं वा" का. श्रौ. सू. ७।१।—१२—इति ॥ २१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ ( ३—१—२ ) ॥

अपःप्रणयनानन्तरं दीक्षाङ्गभूतायाः आग्नावैष्णवेष्टेः प्रयोगं विधत्ते—अपः प्रणीयाग्नावैष्णवमिति । 'निर्वपति' निर्वपेयुरिति विधिः । तत्र जातमग्निं प्रशंसति—अग्निर्वा इति । अग्निरवरार्ध्यः अवरार्द्धे पूर्वार्द्धे भवः आदिम इत्यर्थः । 'विष्णुः परार्द्ध्यः' निहितः, परोऽस्ति "परावराधम—"( पा. सू. ४।३।५) इत्यादिना यत् । "एते वै यज्ञस्यान्ते तन्वौ " इत्यैतरेयकम् (ऐ. ब्रा. १।१।१।) "अग्निर्मुखं प्रथमो देवतानां सङ्गतानामुत्तमो विष्णुरासीत्" ( आश्व. सू. ४।२।३। ) ( तै. ब्रा. २।४।३।३। ) इति । यष्टव्यदेवतानामाद्यन्तत्वाभिधानादुक्तरूपत्वम् । अथवा आज्यशस्त्रे " भूरग्निर्ज्योतिः—" ( ऐ. ब्रा. २ । ९ । ९ ) इति, अन्तिमे मरुत्वतीयशस्त्रे " विष्णोर्नुकम् "—( ऋ. सं. १० । १९४ । १ । ) इति, यज्ञस्याद्यन्तयोरग्नेर्विष्णोश्चाभिधानादवरार्ध्यपरार्ध्यत्वं द्रष्टव्यम् । यद्वा दीक्षणीयेष्टावाग्नावैष्णवीयाग्निसम्भवादुदवसानीयेष्ट्यवसाने वैष्णवपूर्णाहुतेर्वाजसनेयिभिराम्नातत्वात्तयोरिष्ट्योश्च यज्ञस्याद्यन्तत्वादुक्तविधत्वमग्नाविष्ण्वोः । तस्मादिति । प्रतिपादितार्थोपसंहारः ॥ १ ॥

अत्रादित्यचरुमपि स्वसमृद्धिफलकामस्य विधत्ते—तद्धैक इति । ' आदित्येभ्यः ' अदितेः पुत्रेभ्यः धात्र-

---

१—' अंसौ विद्येते यस्यासावंसलः । अंसौ च बाहुमूले, तौ तु सर्वस्यापि भवत इति विशेषणानुपपत्तिः, अतोऽत्रांसाभ्यां बलं लक्ष्यते । " वत्सांसाभ्यां कामबले "—इति हि ( पा. सू. ५ । २ । ९८ ) लच् प्रत्ययः । "बलवान् मांसलोऽसलः " इति चामरः २ । ६ । ४४ । २—" पष्ठौहीं त्वन्तर्वत्नीं दद्यात्; सा हि सर्वाणि वयांसि "—इत्यादि ( तै. ब्रा. ३ । १२ । ५ । ९ ) सायणभाष्यमप्यालोचनीयम् । ३—' अपःप्रणयनं ' इति कर्मनामधेयं; अन्यथा अपां प्रणयनमिति वाच्यं स्यात् । ४—आदित्येभ्यो वा चरुरिति । ७ । ५५ । सा चेयं स्वपदगतविभाषा । तद्धैक आदित्येभ्यश्चरुं निर्वपंतीति वचनादिति अत्रत्यः कर्कः । ततश्चायमर्थः सिद्धः । आदित्येभ्यश्चरुः कर्तव्यो वा न वेति विकल्पः, आग्नावैष्णव एकादशकपालस्तु कर्तव्य एवेति ॥

पुत्रासोऽअदितेर्यें जातास्तन्वस्परि ॥ देवा २॥ ऽउप प्रैत्सप्तभिः परामा-र्त्ताण्डमास्यदिति ॥ २ ॥

( त्य ) अष्टौ ह वै पुत्रा अदितेः। ( याँ ) यास्त्वेतद्देवा ऽआदित्या इत्या-चक्षते सप्त हैव तेऽविकृतः ४ँ हाष्टमं जनयांचकार मार्ताण्डः ४ँ संदेघो हैवास यावानेवोर्ध्वस्तावांस्तिर्यङ् पुरुषसंमित ऽइत्यु हैकऽआहुः ॥ ३ ॥

( स्तुऽ ) तऽउ हैतऽऊचुः। ( दें ) देवा ऽआदित्या यदस्मानन्वजनि मा तदमुयेव भूद्धन्तेमं विकरवामेति तं विचक्रुर्यथाऽयं पुरुषो विकृतस्तस्य यानि माः ४ँ सानि संकृत्य संन्यासुस्ततो हस्ती समभवत्तस्मादाहुर्न हस्तिनं प्रतिगृह्णीयात्पुरुषाजानो हि हस्तीति यमु ह तद्विचक्रुः स विवस्वाना-दित्यस्तस्येमाः प्रजाः ॥ ४ ॥

---

स्तन्वस्पारि। देवा २॥ऽउप प्रैत्सप्तभिः परामार्ताण्डमास्यत्– '' इति ॥ २ ॥

अष्टौ ह वै पुत्रा अदितेः–यांस्त्वेतद्देवा आदित्या इत्याचक्षते। सप्त हैव ते अविकृतं हाष्टमं जन-याञ्चकार मार्ताण्डम्। सन्देघो हैवास। यावानेवोर्ध्वस्तावांस्तिर्यङ्। पुरुषसंमित इत्यु हैक आहुः॥३॥

त उ हैत ऊचुः–' देवा आदित्या यदस्मानन्वजनि मा तदमुयेव भूत्, हन्तेमं विकरवाम ' इति। तं विचक्रुः–यथाऽयं पुरुषो विकृतः। तस्य यानि मांसानि संकृत्य संन्यासुः–ततो हस्ती समभवत्। तस्मादाहुः–न हस्तिनं प्रतिगृह्णीयात्। पुरुषाजानो हि हस्तीति। यमु ह तद्विचक्रुः, स विवस्वाना-दित्यः। तस्येमाः प्रजाः ॥ ४ ॥

---

र्यमादिभ्यः सप्तभ्यः केवलर्द्धिकामाः ' निर्वपन्ति '। ' तत् ' तत्र ' पर्युदितमिव ' परिवादश्च ' अस्ति '। तं परिवादं मन्त्रोदाहरणेन प्रदर्शयति–अष्टौ पुत्रासः ( ऋ. सं. १० । ७२ । ८ ) इति। अयमर्थः–' अदितेः ' देवमातुः ' तन्वः ' तनोः 'परि' परितः उत्पन्नाः, ' अष्टौ पुत्रासः ' अष्टौ पुत्राः, धात्रादिविवस्वदन्ताः। तेषु मध्ये ' सप्तभिः ' पुत्रैः सह ' देवान्, उपप्रैत् उपागात्, ' मार्ताण्डं ' मृताण्डसम्बन्धिनमष्टमम् ' आस्यत् ' परित्यत्याजेति ॥ २ ॥

एतद् व्याचष्टे–अष्टौ ह वै पुत्रा इति। ' सप्त हैव ' विवस्वद्व्यतिरिक्ताः। ' अविकृतम् ' करचरणादि-विकाररहितम्। ' मार्तण्डं ' ' जनयाञ्चकार ' जनयामासुः। व्यत्ययेनैकवचनम्। ' सन्देघः ' सन्देहः, सम्यगुपचितदेहः, सर्वतः सम एवासीत्। केचित् पुरुषवदूर्ध्वत्वमात्रविशिष्टोऽभूत् ' इत्याहुः ' ॥ ३ ॥

त उ हैत इति। अथ ' ते ' सप्त पुत्राः, ' अस्मान् ' पूर्वमुत्पन्नान् पादच्छिन्नान् न पश्येत्, किन्तु विकृतं करवामेत्युक्त्वा यथा मनुष्यो विकृतः, तथाऽकुर्वन्। विकरणाय च्छिन्नं मांसजातं ' हस्ती ' सम्बभूव

---

१–' मार्तण्डः ' ऋ. सं. २ । ३८ । ४ । १० । ७२ । ८, ९ । सा. प. ब्रा. २४ । १२ । ६ । महाभारत १ । ३ । १३ । पर्वसु– " न खल्वयं मृतोऽण्डस्थ इति स्नेहादभाषत। अज्ञानात्कश्यपस्तस्मान्मार्तण्ड इति चोच्यते ॥ " इति हरिवंशे। भागवतपुराणे ६ । २ । ४४ । मार्कण्डेयपुराणे ७७ । १ । १०१ । ९; १०५ । १९ ।

स होवाच । राध्नुवान्मे स प्रजायां य एतमादित्येभ्यश्चरुं निर्व्वपादिति राध्नोति हैव य एतमादित्येभ्यश्चरुं निर्व्वपत्ययं त्वेवाग्नावैष्णवः प्रज्ञातः॥९॥

( स्तु ) तस्य सप्तदश सामिधेन्यो भवन्ति । ( न्त्यु ) उपाꣳशु देवते यजति पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजाः संयाजयन्ति पत्नीः सर्व्वत्वायैव समिष्टयजुरेव न जुहोति नेदिदं दीक्षितवसनं परिधाय पुरा यज्ञस्य सꣳस्थाया ऽअन्तं गच्छानीत्यन्तो हि यज्ञस्य समिष्टयजुः ॥ १० ॥

---

स होवाच–' राध्नवान्मे स प्रजायां, य एतमादित्येभ्यश्चरुं निर्वपाद् ' इति । राध्नोति हैव–य एतमादित्येभ्यश्चरुं निर्वपति । अयं त्वेवाग्नावैष्णवः प्रज्ञातः ॥ ९ ॥

तस्य सप्तदश सामिधेन्यो भवन्ति। उपांशु देवते यजति। पञ्च प्रयाजा भवन्ति। त्रयोऽनुयाजाः।

---

तस्याप्यविस्पष्टावयवत्वात् । अत एव ' पुरुषाजानः ' पुरुषप्रकृतिकः, अनुष्ठानशेषेणोत्पन्नत्वाद्धस्तिनः प्रतिग्रहं न कुर्यात् । स च तैः विकारं गमितो विवस्वत्संज्ञोऽभूत् । ततः सर्वाः ' इमाः प्रजाः ' उत्पन्ना इति ॥४॥

उपोद्घातमुक्त्वोपोद्घातिकमर्थमाह–स होवाचेति । ' सः ' विवस्वान्, ' मे ' मम ' प्रजायां ' प्रजासु मध्ये ' यः कश्चित् ' आदित्येभ्यः ' ' चरुं ' ' निर्वपात् ' निर्वपेत्, ' सः ' तु ' राध्नवान् ' भूयात् ' इति ' ' उवाच ' । अत एतस्यादित्यचरोर्निर्वापयिता स्वयमपि ' राध्नोति ' । देवैः संवर्धितेन विवस्वता समृद्धियुतेन दत्तत्वादयमपि चरुः समृद्धिफलक इत्यर्थः । अत एव समृद्धिफलत्वेन काम्यत्वादित्यभिप्रायः । अथाग्नावैष्णवस्योक्तचरुवैलक्षण्यमाह–अयं त्वेवेति । ' प्रज्ञातः ' सर्वैः प्रसिद्धः ॥ ९ ॥

तस्या इष्टेश्चोदकतः सामिधेनीपाञ्चदश्ये प्राप्त आह–तस्य सप्तदशेति ( आप० श्रौ० सू० १०।४।९ ) । ' देवते ' प्रधानसम्बन्धिन्यौ अग्नाविष्णू ' उपांशु ' यजेत् ( का० श्रौ० सू० ७ । ९८–६० । आप० श्रौ० सू० १० । ४ । ९ । ११ ) प्रयाजानुयाजयोरपि सामिधेनीवद् वैशेषिकसंख्याप्रसक्तावाह–पञ्च प्रयाजा इति । दीक्षणीयेष्टेरवधिमाह–संयाजयन्ति पत्नीरिति । इष्टेरवैकल्याय पत्नीसंयाजमेव कुर्यात्; तदुत्तरं तु ' समिष्टयजुर्न ' जुहुयात् ( का०-श्रौ० सू० ७ । ९६ । ९७ । आप० श्रौ० सू० १० । ४ । ७ ) । तदपि किं न क्रियत इति तत्रोपपत्तिमाह–नेदिति । दीक्षाकाले धृतस्य वसनस्य यज्ञसमाप्तिपर्यन्तं धारणं कर्तव्यम्; मध्य एव समिष्टयजुषि हुते सति यज्ञस्य समाप्तेस्तदानीमेव वसनस्य त्यागः कर्तव्यो भवेत्; तस्मिन् हुते सति सोमयागसमाप्तेर्धारणं संभवेत् । अतः पुरा कृत्स्नस्य यज्ञस्य समापनादन्तं नैव प्राप्नवानीत्यभिप्रायेण समिष्टयजुर्न जुहुयात् । ननु समिष्टयजुषोऽत्र कथं यज्ञाङ्गत्वम्; यस्मिन् हुते यज्ञः समाप्येतेति, तत्राह–अन्तो हीति । अस्य सम्यगिष्टे एव यज्ञस्यावसानत्वादित्यभिप्रायः ॥ १० ॥

---

१–कल्पभाष्यकृतां श्रुत्यनुगतः सिद्धांतः । कात्यायनः । प्राक् समिष्टयजुषः करोति । ७ । ५६ । समिष्टयजुर्वर्जं वा ७ । ५७ । अत्र कर्कः । दीक्षिणीयां हि प्रकृत्य श्रूयते । तस्मात्तस्य यज्ञस्य समिष्टयजुःष्वन्नं जुह्वति ५६ । समिष्टयजुरेव वा न जुहोति । सर्व्वत्वायैव समिष्टयजुरेव न जुहोतीति वचनात् । अतश्च बर्हिर्होमादयः प्रवर्तंत एव । ध्रौवाज्यस्यौद्ग्रभणेषु विनियोग उक्तः । पंचमं जुह्वां ध्रौवमासिच्येति । तद्विनियोगोत्तरं बर्हिर्होमादय इति न्याय्यम् । इति ॥

(२) अथाग्रेण शालां तिष्ठन्नभ्यङ्क्ते । ( ह्लक्ते ) अरुर्वै पुरुषोऽवच्छितोऽनरुरेवैतद्भवति यदभ्यङ्क्ते गवि वै पुरुषस्य त्वग्गोर्वाऽएतन्नवनीतं भवति स्वयैवैनमेतत्त्वचा समर्धयति तस्माद्वाऽअभ्यङ्क्ते ॥ ७ ॥

तद्वै नवनीतं भवति । घृतं वै देवानां फाण्टं मनुष्याणामथैतन्नेहैव घृतं नो फाण्टᳬं स्यादेव घृतᳬं स्यात्फाण्टमयातयामतायै तदेनमयातयाम्नैवायातयामानं करोति ॥ ८ ॥

तमभ्यनक्ति । शीर्षतोऽग्रऽआ पादाभ्यामनुलोमं महीनां पयोऽसीति मह्य इति ह वा एतासामेकं नाम यद्गवां तासां वाऽएतत्पयो भवति तस्मा-

संयाजयन्ति पत्नीः सर्वत्वायैव । समिष्टयजुरेव न जुहोति । नेदिदं दीक्षितवसनं परिधाय पुरा यज्ञस्य संस्थाया अन्तं गच्छानीति । अन्तो हि यज्ञस्य समिष्टयजुः ॥ ६ ॥

अथाग्रेण शालां तिष्ठन्नभ्यङ्क्ते । अरुर्वै पुरुषोऽवच्छितः अनरुरेवैतद्भवति—यदभ्यङ्क्ते । गवि वै पुरुषस्य त्वक् । गोर्वा एतन्नवनीतं भवति । स्वयैवैनमेतत्त्वचा समर्धयति । तस्माद्वा अभ्यङ्क्ते ॥ ७ ॥

तद्वै नवनीतं भवति । घृतं वै देवानाम्, फाण्टं मनुष्याणाम् । अथैतन्नेहैव घृतम्, नो फाण्टम् । स्यादेव घृतम्, स्यात्फाण्टमयातयामतायै । तदेनमयातयाम्नैवायातयामानं करोति ॥ ८ ॥

तमभ्यनक्ति—शीर्षतोऽग्रे आपादाभ्यामनुलोमम् । "महीनां पयोऽसि"—( वा. सं. ४ । ३ ) इति । मह्य इति ह वा एतासामेकं नाम—यद्गवाम् । तासां वा एतत्पयो भवति । तस्मादाह—

अथ दीक्षितस्य स्वधर्मकमभ्यङ्गं विधत्ते—अथाग्रेणेति । शालायाः पुरोदेशे तिष्ठन् सर्वाङ्गे नवनीताभ्यञ्जनं कुर्यादिति विशिष्टविधिः ( का. श्रौ. सू. ७ । ६१ ) । अभ्यङ्गप्रयोजनमाह—अरुर्वा इति । 'अवच्छितः' त्वचा निर्मुक्तः 'पुरुषः' 'अरुर्वै' व्रणात्मकः खलु, तदेतेनाभ्यङ्गेन परिहरति । एतदेव विस्पष्टमुपपादयति—गवि वा इति । पुरुषत्वचो गवि धारणं वासःपरिधानार्थवादे स्पष्टमुक्तम् ( श. प. कां. ३. अ. १. ब्रा. २ कं. १५–१९ ) । गोर्नवनीतोत्पत्तिः सुप्रसिद्धा । अतो गोसम्बन्धिनवनीतधारणेन स्वकीयत्वचैव समृद्धो भवति । अत एव स्वत्वचः पुनः प्राप्तेरव्रणत्वमस्याभ्यङ्गाय नवनीतं द्रव्यं भवेदित्युक्तं भवति ॥ ७ ॥

नवनीताभ्यङ्गं प्रशंसति—तद्वै नवनीतमिति । एतदस्य योग्यमित्याह—घृतं वै देवानामिति । नवनीतभावात्प्रागवस्थापन्नं द्रव्यं 'फाण्टम्', यस्मान्नवनीतं फाण्टघृतयोरन्तरालवर्तित्वात् तदन्यत्तदन्यच्च भवति तस्मान्मनुष्यदेवताभ्यामन्यस्यानन्यस्य च दीक्षितस्य तद्युक्तमित्यर्थः । अत एव पूर्वोत्तरभावात् प्रच्यवाप्रच्यवादयातयामवता तेनाभ्यञ्जनेनाध्वर्युर्दीक्षितमपि 'अयातयामानं करोति' ॥ ८ ॥

अभ्यङ्गस्योपक्रमोपसंहारौ विधत्ते—तमभ्यनक्तीति ( का. श्रौ. सू. ७ । ६१ ) । अधोमुखावस्थाना-

१–"अवपूर्वस्य "छो छेदने"–दि. प. इत्यस्य निष्ठायां रूपम् "शाच्छोरन्यतरस्याम्"–इति ( पा. ७. ४. ४१ सू. ) सिद्धम् ।
२–'शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुशेषु नवनीतेन शीर्ष्णोऽभ्यनुलोमᳫ सपादको महीनाम्पयोऽसीति" इति ॥

दाह मह्वीनां पुयोऽसीति व्वर्चोदा असि व्वर्चो मे देहीति नात्र तिरोहित-मिवास्ति ॥ ९ ॥

( स्त्य ) अथाक्ष्यावानक्ति । ( त्त्यु ) अुरुर्वै पुरुषस्याक्षि प्रशान्ममेति ह स्माह युाज्ञवल्क्योदुरक्षुऽइव हास पूयो हैवास्य दूषीका तेऽएवैतदनरु-ष्करोति युदक्ष्यावानुक्ति ॥ १० ॥

युत्र वै देवुाः । ( ऽ ) असुररक्षसानि जघ्नुस्तच्छुष्णो दानवुः प्रत्यङ्-पतित्वा मनुष्याणामुक्षीणि प्रविवेश स एष कनीनकः कुमारकुऽइव परिभा-सते तुस्माऽएवैतद्यज्ञमुपप्रयुन्त्सर्वुतोऽश्मपुरां परिदधात्यश्मा ह्याञ्जनम् ११

महीनां पयोऽसीति । "वर्चोदा असि वर्चो मे देहि"–( वा. सं. ४ । ३ ) इति । नात्र तिरोहितमिवास्ति ॥ ९ ॥

अथाक्ष्यावानक्ति । अरुर्वै पुरुषस्याक्षि, प्रशान्ममेति ह स्माह याज्ञवल्क्यो दुरक्ष इव हास पूयो हैवास्य दूषीका । ते एवैतदनरुष्करोति–यदक्ष्यावानक्ति ॥ १० ॥

यत्र वै देवा असुररक्षसानि जघ्नुः–तच्छुष्णो दानवः प्रत्यङ्पतित्वा मनुष्याणामक्षीणि प्रविवेश । स एष कनीनकः कुमारक इव परिभासते । तस्मा एवैतद्यज्ञमुपप्रयन् सर्वतोऽश्मपुरां परिदधाति । अश्मा ह्याञ्जनम् ॥ ११ ॥

दवरोहाभ्यङ्गे सति आनुलोम्यं स्यात् । तत्र मन्त्रमाह–महीनामिति । मन्त्रस्य पूर्वभागं व्याचष्टे–मह्यो इतीति । "इडे रन्ते"–इत्युपक्रम्य "महि विश्रुति"–इत्यन्तानि अघ्निये नामानीति तैत्तिरीयकश्रुतेर्गवां महीति नाम ( तै. सं. ७ । १ । ६ । ८ ) स्पष्टमन्यत् ॥ ९ ॥

अक्ष्णोरञ्जनं विधत्ते–अथाक्ष्यावानक्तीति ( का. श्रौ. सू. ७ । ६२ । आप श्रौ. सू. १० । ७ । १ । ) । इतरावयवसंस्पर्शासहिष्णुत्वात् 'अक्षि' 'अरुः' व्रणो भवति । 'मम' 'प्रशान्' प्रशाम्येदित्यञ्जनं कर्तव्य-मिति । 'याज्ञवल्क्यः' 'आह' ब्रूते इति । अक्ष्णोर्दूषणरूपतां सम्पादयति–"दुरक्ष" इत्यादिना । नेत्रमालिन्यमेवारुः, तत्परिहारायाञ्जनमिति । 'दूषीका' नेत्रयोर्मलम्, सा 'अस्य' पुरुषस्याक्ष्णोर्भूय एवेत्यक्षे-र्दुरक्षत्वमेव, ततोऽनेन तन्नाशयतीत्यर्थः ॥ १० ॥

अञ्जनं प्रकारान्तरेण प्रशंसति–यत्र वा इति । असुरवधसमये 'शुष्णः' 'प्रत्यङ्' गत्वा, तद्भयात् पुरु-षाणामक्षिमध्यं प्रविश्य, कनीनिकारूपेण 'कुमारकः' सन् वर्तते । 'तस्मै' तस्य 'यज्ञम्' उपगच्छन् 'सर्वतः' अश्मपुरोरक्षार्थं कृतवान् भवति । अश्मशब्दार्थमाह–अश्मा ह्याञ्जनमिति । तद्विकारत्वात् ॥ ११ ॥

१–वाजसनेयिसंहितायामपि–इडे रंते हव्ये काम्ये चंद्रे ज्योतेऽदिति सरस्वति महि विश्रुति । एता ते अघ्न्ये नामानि देवेभ्यो मां सुकृतं ब्रूतात् ।८।४३। इति गोनामानि प्रसिद्धान्येव ॥ २–'इषीका' इति क. पा. मूले तु सर्वत्र दूषीका इत्येव ।

त्रैककुदं भवति । यत्र वाऽइन्द्रो वृत्रमहंस्तस्य यदक्ष्यासीत्तं गिरिं त्रिककुदमकरोत्तद्यत्त्रैककुदं भवति चक्षुष्येवैतच्चक्षुर्दधाति तस्मात्त्रैककुदं भवति यदि त्रैककुदं न विन्देदप्यत्रैककुदमेव स्यात्समानी ह्येवाञ्जनस्य बन्धुता ॥ १२ ॥

शरेषीकयाऽऽनक्ति । वज्रो वै शरो विरक्षस्तायै सतूला भवत्यमूलं वाऽइदमुभयतः परिच्छिन्नꣳ रक्षोऽन्तरिक्षमनुचरति यथाऽयं पुरुषोऽमूलऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद्यत्सतूला भवति विरक्षस्तायै १३

स दक्षिणमेवाग्रऽआनक्ति । सव्यं वाऽअग्रे मानुषेऽथैवं देवत्रा ॥ १४ ॥

---

त्रैककुदं भवति । यत्र वा इन्द्रो वृत्रमहन्–तस्य यदक्ष्यासीत् । तं गिरिं त्रिककुदमकरोत् । तद् यत्त्रैककुदं भवति–चक्षुष्येवैतच्चक्षुर्दधाति । तस्मात्त्रैककुदं भवति । यदि त्रैककुदं न विन्देद् अप्यत्रैककुदमेव स्यात् । समानी ह्येवाञ्जनस्य बन्धुता ॥ १२ ॥

शरेषीकयाऽऽनक्ति । वज्रो वै शरः । विरक्षस्तायै । सतूला भवति । अमूलं वा इदमुभयतः परिच्छिन्नं रक्षोऽन्तरिक्षमनुचरति । यथाऽयं पुरुषोऽमूल उभयतः । परिच्छिन्नोऽन्तरिक्षमनुचरति । तद्यत्सतूला भवति–विरक्षस्तायै ॥ १३ ॥

स दक्षिणमेवाग्र आनक्ति । सव्यं वा अग्रे मानुषे । अथैवं देवत्रा ॥ १४ ॥

---

अञ्जनं विशिनष्टि–त्रैककुदमिति[1] । त्रिककुत्पर्वतः तत्सम्बन्धि त्रैककुदम् । शिष्टं स्पष्टम् । तदभावे त्रैककुदादन्यदपि ग्राह्यम्[2] । ' अंजनस्य ' बन्धुता बन्धु ब्राह्मणम्, तद्भावो बन्धुता । सा ' समानी " अत्रवै पुरुषस्याक्षि " इत्यादिकं[3] ब्राह्मणं त्रैककुदात्रैककुदयोः समानमित्यर्थः । ( का० श्रौ०[4] सू० ७ । ६२ आप० श्रौ० सू० १० । ७ । २ । ) ॥ १२ ॥

तत्साधनं विधत्ते–शरेषीकयेति । शरस्तृणविशेषः, तस्य मध्यशलाका 'इषीका'[5] । ' विरक्षस्तायै ' विरक्षस्ता विगतराक्षसभावस्तस्मै तत्परिहाराय । साऽपि ' सतूला ' कर्तव्या । सतूलत्वस्य प्रयोजनमाह–अमूलमिति । ' उभयतः ' मूले अग्रे च, दिवि पृथिव्यां चेत्यर्थः । ' परिच्छिन्नम् ' इदं ' रक्षः ' राक्षसजातिः, अमूलं सत् ' अन्तरिक्षमनुचरति ' खलु; एवम् ' उभयतः ' परिधिभ्यः ' परिच्छिन्नः ' , ' अमूलः ' सन् ' पुरुषः ' अपि ' अन्तरिक्षमनुचरति ' । तस्मात् पुरुषसमानदेशवर्ति रक्षोनिर्हरणाय शरेषीका ' सतूला ' कर्तव्या ( का० श्रौ० सू०[6] ७ । ६६ ) ॥ १३ ॥

स दक्षिणमिति । ' देवत्रा ' देवेषु । एवं दक्षिणप्राथम्यमित्यर्थः ॥ १४ ॥

---

१–' सौवीरामिति यत् प्रसिद्धम् '–इति या. दे. । २–' तदलाभे ' इ. पा.– ३–अत्रैव दशमकाण्डिकायाम् । ४–' वृत्रस्येत्यक्ष्यानक्ति त्रैककुदांजनेन ' ' अभावेऽन्यत् ' इति । ५–' तस्य शलाका इषीका ' इति पा० । ६–' शरेषीकया साग्रया ' इति ।

स आनक्ति । वृत्रस्यासि कनीनक इति वृत्रस्य ह्येष कनीनकश्चक्षुर्दाऽअसि चक्षुर्मे देहीति नात्र तिरोहितमिवास्ति ॥ १९ ॥

स दक्षिणꣳ सकृद्यजुषाऽऽनक्ति।सकृत्तूष्णीमथोत्तरꣳ सकृद्यजुषाऽऽनक्ति द्विस्तूष्णीं तदुत्तरमेवैतदुत्तरावत्करोति ॥ १६ ॥

तद्यत्पञ्चकृत्व आनक्ति । संवत्सरसंमितो वै यज्ञः पञ्च वाऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्चकृत्वऽआनक्ति ॥ १७ ॥

( तस्य ) अथैनं दर्भपवित्रेण पावयति । ( तस्य ) अमेध्यो वै पुरुषो यदनृतं वदति तेन पूतिरन्तरतो मेध्या वै दर्भा मेध्यो भूत्वा दीक्षाऽइति पवित्रं वै दर्भाः पवित्रपूतो दीक्षा इति तस्मादेनं दर्भपवित्रेण पावयति ॥ १८ ॥

तद्वाऽएकꣳ स्यात् । ( द्वे )एको ह्येवायं पवते तदेतस्यैव रूपेण तस्मादेकꣳ स्यात् ॥ १९ ॥

---

स आनक्ति—"वृत्रस्यासि कनीनक"—( वा. सं. ४—३ )इति।वृत्रस्य ह्येष कनीनकः।"चक्षुर्दा असि चक्षुर्मे देहि "— ( वा. सं. ४ । ३ ) इति नात्र तिरोहितमिवास्ति ॥ १९ ॥

स दक्षिणं सकृद्यजुषाऽऽनक्ति, सकृत्तूष्णीम् । अथोत्तरं सकृद्यजुषाऽऽनक्ति, द्विस्तूष्णीम् । तदुत्तरमेवैतत्—उत्तरावत्करोति ॥ १६ ॥

तद्यत्पञ्चकृत्व आनक्ति । संवत्सरसंमितो वै यज्ञः । पञ्च वा ऋतवः संवत्सरस्य तं पञ्चभिराप्नोति । तस्मात्पञ्चकृत्व आनक्ति ॥ १७ ॥

अथैनं दर्भपवित्रेण पावयति । अमेध्यो वै पुरुषो—यदनृतं वदति । तेन पूतिरन्तरतः । मेध्या वै दर्भाः—मेध्यो भूत्वा दीक्षा इति । पवित्रं वै दर्भाः—पवित्रपूतो दीक्षा इति । तस्मादेनं दर्भपवित्रेण पावयति ॥ १८ ॥

तद्वा एकं स्यात्—एको ह्येवायं पवते । तदेतस्यैव रूपेण । तस्मादेकं स्यात् ॥ १९ ॥

---

स आनक्तीति । तत्र मन्त्रमाह—वृत्रस्येति ।'कनीनकः' अक्षिमध्यकार्ष्ण्यम् । 'वृत्रस्य ह्येष कनीनकः' । तथा चान्यत्र—"इन्द्रो वृत्रमहन्, तस्य कनीनिका परापतत्, तदाञ्जनमभवत् "इति-(तै. सं. ६।१।१।९ )॥ १९॥

स दक्षिणमिति । ' यजुषा ' उक्तमन्त्रेण । उत्तरस्याक्ष्णो दक्षिणाक्षितोऽपि एकधाराधिक्यकरणेन ' उत्तरं ' चक्षुः ' उत्तरावत् ' उत्कर्षवत् कृतवान् भवति ॥ १६ ॥

अक्ष्णोराञ्जनावृत्ती मिलित्वा प्रशंसति—तद्यत् पञ्चकृत्व इति । हेमन्तशिशिरयोरैक्यात् ( ऐ. ब्रा. १ । १ । १ ) संवत्सरः पञ्चर्तुः । अत एव संख्याद्वारा संवत्सरमेवाप्नोति ॥ १७ ॥

तस्य दर्भैः पावनं विधत्ते—अथैनमिति । लोके ह्यपवित्रं पवित्रीक्रियते, कोऽस्यापवित्रत्वप्रसङ्ग इति तद्दर्शयति—अमेध्यो वा इति । दर्भैः पावनसामर्थ्येन वाक्यस्य पावनेऽर्थान्तरशुद्धिर्भवति । दर्भान् स्तौति—मेध्या वा इति । यज्ञार्हत्वं मेध्यत्वम्, अशुद्धानां शोधकत्वं पवित्रमिति विवेकः ( निरु. ९ । २ । १ )॥ १८ ॥

तद्वा एकमित्यादि । पावनसाधनदर्भेष्वेकादिपक्षा आक्षिप्याः । ' अयं ' वायुः ' एकः ' एव ' पवते

( उ ) अथोऽअपि त्रीणि स्युः । ( रे ) एको ह्येवायं पवते सोऽयं पुरुषेऽन्तः प्रविष्टस्त्रेधा विहितः प्राण ऽउदानो व्यान ऽइति तदेतस्यैवानुमात्रां तस्मात्त्रीणि स्युः ॥ २० ॥

( उ ) अथोऽअपि सप्त स्युः । सप्त वाऽइमे शीर्षन्प्राणास्तस्मात्सप्त स्युस्त्रिःसप्तान्येव स्युरेकविंशतिरेषैव संपत् ॥ २१ ॥

( तथुँ ) त थुँ सप्तभिः सप्तभिः पावयति । चित्पतिर्मा पुनात्विति प्रजापतिर्वै चित्पतिः प्रजापतिर्मा पुनात्वित्येवैतदाह वाक्पतिर्मा पुनात्विति प्रजापतिर्वै वाक्पतिः प्रजापतिर्मा पुनात्वित्येवैतदाह देवो मा सविता पुनात्विति तद्वै सुपूतं यं देवः सविता पुनात्तस्मादाह देवो मा सविता पुनात्वित्यच्छिद्रेण पवित्रेणेति सो वाऽअयं पवतऽएषोऽच्छिद्रं पवित्रमेतेनैतदाह सूर्यस्य रश्मिभिरित्येते वै पवितारो यत्सूर्यस्य रश्मयस्तस्मादाह सूर्यस्य रश्मिभिरिति ॥ २२ ॥

---

अथो अपि त्रीणि स्युः । एको ह्येवायं पवते । सोऽयं पुरुषेऽन्तः प्रविष्टस्त्रेधा विहितः—प्राण उदानो व्यान इति । तदेतस्यैवानुमात्राम् । तस्मात्त्रीणि स्युः ॥ २० ॥

अथो अपि सप्त स्युः । सप्त वा इमे शीर्षन्प्राणाः । तस्मात्सप्त स्युः । त्रिःसप्तान्येव स्युः । एकविंशतिः, एषैव संपत् ॥ २१ ॥

तं सप्तभिः सप्तभिः पावयति । "चित्पतिर्मा पुनातु"—( वा. सं. ४ । ४ ) इति । प्रजापतिर्वै चित्पतिः । प्रजापतिर्मा पुनातु—इत्येवैतदाह । "वाक्पतिर्मा पुनातु"—( वा. सं. ४।४ ) इति । प्रजापतिर्वै वाक्पतिः । प्रजापतिर्मा पुनातु—इत्येवैतदाह । "देवो मा सविता पुनातु"—( वा. सं. ४ । ४ ) इति । तद्वै सुपूतं—यं देवः सविता पुनात् । तस्मादाह—देवो मा सविता पुना-

---

पवतिर्गतिकर्मा; ( निघं. २ । १४ । १०८ ) अन्तरिक्षे गच्छति ( निरु. ९ । २ । १ ) । 'तस्मात्' पवित्रमपि 'एकं' स्यात् ॥ १९ ॥

अथो अपीति । 'सः' एव 'अयं' वायुः 'एक एव' पुरुषे पुरुषस्य 'अन्तः प्रविष्टः' प्राणादिभेदेन 'त्रेधा' विभक्तः, अथ 'त्रीणि स्युः' ॥ २० ॥

अथो अपि सप्तेति । 'शीर्षन्' शिरसि भवाः, मुखादिच्छिद्रगताः, 'एकविंशतिः स्युः' इति । तत्र त्रिःसप्तान्येव' इति सप्तसंख्याया एवावृत्तौ 'एषैव' सप्तसङ्ख्याया उक्तिः 'सम्पद्' इत्यर्थः । यद्वा 'एषैव' पुरुषरूपैव 'सम्पत्' इत्यर्थः । "दश हस्त्या अंगुलयो दश पद्या आत्मैकविंशः"—इति श्रुत्यन्तरात् ( तै. सं. ६ । १ । १ । ८ ) ॥ २१ ॥

तं सप्तभिरिति । एकविंशतिपक्षे एकविंशतिं दर्भान् त्रेधा विभज्य 'सप्तभिः-सप्तभिः' "चित्पतिर्मा,"

तस्य ते पवित्रपतऽइति । पवित्रपतिर्हि भवति पवित्रपूतस्येति पवित्रपूतो हि भवति यत्कामः पुने तच्छकेयमिति यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥ २३ ॥

(ह्रा) अथाशिषामारम्भं वाचयति। (त्या) आ वो देवास ईमहे वामं प्रयत्य-

---

त्विति । " अच्छिद्रेण पवित्रेण "–( वा. सं. ४ । ४ ) इति । यो वा अयं पवते–एषोऽच्छिद्रं पवित्रम्, एतेनैतदाह । " सूर्यस्य रश्मिभिः "–( वा. सं. ४ । ४ ) इति । एते वै पवितारो–यत् सूर्यस्य रश्मयः । तस्मादाह–सूर्यस्य रश्मिभिरिति ॥ २२ ॥

" तस्य ते पवित्रपते "–( वा. सं. ४ । ४ ) इति । पवित्रपतिर्हि भवति । " पवित्रपूतस्य "–इति । पवित्रपूतो हि भवति । " यत्कामः पुने तच्छकेयम् "–( वा. सं. ४ । ४ ) इति । यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥ २३ ॥

अथाशिषामारम्भं वाचयति । " आ वो देवास ईमहे वामं प्रयत्यध्वरे । आ वो देवास आशिषो यज्ञियासो हवामहे "–( वा. सं. ४ । ५ ) इति। तदस्मै स्वाः सतीर्ऋत्विज आशिष आशासते ॥ २४ ॥

---

" वाक्पतिर्मा, " " देवो मा " इति त्रिषु मन्त्रेषु, एकैकेन मन्त्रेण पावयेत् । " अच्छिद्रेण पवित्रेण "–इति मन्त्रशेषः सर्वत्रानुषज्यते । तत्राप्ययं विभागः–सप्तभिः प्रथममन्त्रेण नाभित आरभ्योर्ध्वमुन्मृज्यात्, पुनश्च सप्तभिर्द्वितीयमन्त्रेणाप्येवम्, अवशिष्टैः सप्तभिस्तृतीयेन मन्त्रेण नाभेरध आरभ्यावमृज्यात् । तथा च कात्यायनः–" सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्र द्विरुपरि नाभ्युन्मृज्य प्रदक्षिणं सकृदर्वाङ्, एकेन त्रिभिः सप्तभिरेकविंशतिभिर्वा[1]–" ( का. श्रौ. सू. ७।६७।६८ ) इति । आपस्तम्बस्तु चित्पतिस्त्वेति पावकस्य, चित्पतिर्मेति पाव्यमानस्य च विभज्योभयमप्युक्तवान् ( आप. श्रौ. सू. १० । ७ । ९–१४ ) सर्वशेषभूतस्याच्छिद्रेणेत्यस्यार्थमाह–अच्छिद्रेणेति । सर्वदा सर्वत्र पवनात् ' एषः ' वायुः ' अच्छिद्रं पवित्रम् ' ॥२२॥

मन्त्रशेषं व्याचष्टे–तस्य त इति । पवित्राणि रश्मयः[4]; शोधकत्वात् ( निरु. ५ । २ । १ ) । अग्निः पवित्रपतिः ( निरु. ५ । २ । १ ) तत्पाठात्स्वरूपमपि ' पवित्रपतिर्भवति ' खलु । स्पष्टमन्यत् । ' उदृचं ' उपरिभाविनी ऋक् उदृक् । अनेन च समाप्तिर्लक्ष्यते । तेन यज्ञस्यान्तं प्राप्नवानीत्यर्थः । अमुमर्थम् ' एतत् ' एतेन " तच्छकेयम् "–इति अनेन, मन्त्रः ' आह ' इत्यर्थः ॥ २३ ॥

अथाशिषामिति । " आ वो देवासः " इति मन्त्रस्य ' आशिषामारम्भः '–इति नाम; भाव्याशिषामस्या-

---

१–यद्यपि सायणभाष्ये " एकविंशतिभिर्वा " इति सर्वपुस्तकेषु वर्तते, तथापि चौखम्बा–संस्कृतग्रन्थमालामुद्रितसकर्कभाष्यकात्यायनश्रौतसूत्रे तु " सप्तभिर्वा " इति पर्य्यन्तमेवालेखि । २–काण्वीयायां श्रुतौ नवकृत्वः पावनं–तथा च श्रुतिः–तं नवकृत्वो नव वै प्राणाः प्राणा उ वै पवित्रं–तस्मान्नवकृत्वः पावयतीति । नवकृत्वः पावनस्य सूत्रमनुसृत्योपपत्तिः कर्कभाष्ये । चित्पतिर्म्मेत्यादिभिर्मंत्रैः साभ्यासमेकं पावनमुपरि नाभि । तथा द्वितीयम् । एवमेव सकृदवाङिति । एवं चाभ्यासापेक्षया नवकृत्वः पावयतीत्युपपन्नार्थं भवति । अभ्याससमुदायापेक्षया च द्विरुपरिनाभि सकृदवाङिति च सूत्रं नेयमिति । ३–तथाहि–"अथैनमुत्तरेण बहिः प्राग्वंशात् दर्भपिञ्जुलैः पावयति=एकविंशत्या त्रेधा विभक्तया सप्तभिः सप्तभिर्द्विरूर्ध्वं नाभेरुन्मार्ष्टि सकृदर्वाक् । =चित्पतिस्त्वा पुनात्वित्येतैः प्रतिमन्त्रमच्छिद्रेण पवित्रेणेति सर्वत्रानुषजति । चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्विति पाव्यमानो जपति "–इत्यादि । ४–"रश्मयः पवित्रमुच्यते"–इत्यादिनिरुक्तम् । ५–" अग्निः पवित्रमुच्यते" इत्यादि निरुक्तम् ।

स्वरे ॥ आ वो देवास आशिषो यज्ञियासो हवामहऽइति तदस्मै स्वाः सतीर्ऋत्विज ऽआशिष ऽआशासते ॥ २४ ॥

(तुऽथा) अथाङ्गुलीर्न्यचति । स्वाहा यज्ञं मनसऽइति द्वे स्वाहोरोरन्तरिक्षादिति द्वे स्वाहा द्यावापृथिवीभ्यामिति द्वे स्वाहा वातादारभऽइति मुष्टीकरोति न वै यज्ञः प्रत्यक्षमिवारभे यथाऽयं दण्डो वा वासो वा परोऽक्षं वै देवाः परोऽक्षं यज्ञः ॥ २५ ॥

स यदाह । स्वाहा यज्ञं मनसऽइति तन्मनस आरभते स्वाहोरोरन्तरिक्षादिति तदन्तरिक्षादारभते स्वाहा द्यावापृथिवीभ्यामिति तदाभ्यां द्यावापृथिवीभ्यामारभते ययोरिदꣳ सर्वमधि स्वाहा वातादारभ ऽइति वातो वै यज्ञस्तद्यज्ञं प्रत्यक्षमारभते ॥ २६ ॥

---

अथांगुलीर्न्यचति । " स्वाहा यज्ञं मनसः "–( वा. सं. ४ । ६ ) इति द्वे; " स्वाहोरोरन्तरिक्षात् "–( वा. सं. ४ । ६ । ) इति द्वे; " स्वाहा द्यावापृथिवीभ्याम् "– ( वा. सं. ४ । ६ ) इति द्वे; " स्वाहा वातादारभे "–( वा. सं. ४ । ६ ) इति मुष्टीकरोति । न वै यज्ञः प्रत्यक्षमिवारभे । यथाऽयं दण्डो वा वासो वा । परोऽक्षं वै देवाः । परोऽक्षं यज्ञः ॥ २५ ॥

स यदाह–स्वाहा यज्ञं मनस इति–तन्मनस आरभते । स्वाहोरोरन्तरिक्षादिति । तदन्तरिक्षादारभते–स्वाहा द्यावापृथिवीभ्यामिति–तदाभ्यां द्यावापृथिवीभ्यामारभते–ययोरिदं सर्वमधि । स्वाहा वातादारभे इति । वातो वै यज्ञः । तद् यज्ञं प्रत्यक्षमारभते ॥ २६ ॥

---

रम्भरूपत्वात् । मन्त्रपाठस्य प्रयोजनमाह–तदस्मा इति । ' तत् ' तेन आशिषामारम्भवाचनेन सर्वासामाशिषामादावेव यजमानेन परिगृहीतत्वात् ' स्वाः ' स्वकीया एव ' सतीः ' ता एव ' आशिषः ' ' ऋत्विजः ' तन्मन्त्रेषु यजमानार्थमाशासते ( का. श्रौ. सू. ७ । ७० ) ॥ २४ ॥

अथाङ्गुलीरिति । 'न्यचति' सङ्कोचयतीत्यर्थः । तत्प्रकारमाह–स्वाहेत्यादिना । एकैकेन मन्त्रेण हस्तद्वयेऽपि कनिष्ठिकादिक्रमेण द्वे–द्वे अंगुली न्यञ्चतीत्यर्थः । एवं करद्वयांगुलिन्यञ्चनक्रमेणोत्तमेन मन्त्रेण पाणी मुष्टीकुर्यात् ( का. श्रौ. सू. ७।७१ ) "उत्तानेन मुष्टी कृत्वा"–( का. श्रौ. सू. ७।७३ ) इति सूत्रम् । तत्प्रयोजनमाह–न वै यज्ञ इति । यज्ञस्य वासोदण्डादिवद्धस्ते धारयितुमशक्यत्वात्; अत एव परोक्षान्मन्त्रेण मुष्टिबन्धनमेव प्रत्यक्षधारणमित्यर्थः ॥ २५ ॥

स यदाहेत्यादि । मन्त्रस्य क्रमेण व्याख्यानम् । स्पष्टम् । वातादारभे–इति । वातेन प्राणेन व्याप्रियमाणत्वात् ' वातो यज्ञः ' । ' वै '– शब्देन " वातो यज्ञः प्रयुज्यताम् "–इत्यादिमन्त्रप्रसिद्धिर्द्योत्यते॥ २६

---

१–' आवो देवास इति वाचयति ' । एवꣳशेषं प्रतिमंत्रम् । का. श्रौ. सू. ७ । ७१ । ७२ ।

( तेऽथ ) अथ यत्स्वाहा स्वाहेति करोति । यज्ञो वै स्वाहाकारो यज्ञमेवैतदात्मन्धत्तेऽत्रोऽएव व्वाचं यच्छति व्वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्ते॥२७॥

( तेऽथै ) अथैनᳫँशालां प्रपादयति । स जघनेनाहवनीयमेत्यग्रेण गार्हपत्यᳫँ सोऽस्य संचरो भवत्यासुत्यायै तद्यदस्यैष संचरो भवत्यासुत्याया ऽअग्निर्वै योनिर्यज्ञस्य गर्भो दीक्षितोऽन्तरेण वै योनिं गर्भः संचरति स यत्स तत्रैजति त्वत्परि त्वदावर्तते तस्मादिमे गर्भा ऽएजन्ति त्वत्परि त्वदावर्तन्ते तस्मादस्यैष संचरो भवत्यासुत्यायै ॥ २८ ॥

इति प्रथमपाठके तृतीयं ब्राह्मणम् ॥ १ ॥ ३ ॥

---

अथ यत्—' स्वाहा स्वाहा ' इति करोति । यज्ञो वै स्वाहाकारः । यज्ञमेवैतदात्मन्धत्ते । अत्रो एव वाचं यच्छति । वाग्वै यज्ञः । यज्ञमेवैतदात्मन्धत्ते ॥ २७ ॥

अथैनं शालां प्रपादयति । स जघनेनाहवनीयमेति—अग्रेण गार्हपत्यम् । सोऽस्य सञ्चरो भवति—आसुत्यायै । तद् यदस्य सञ्चरो भवति—आसुत्यायै । अग्निर्वै योनिर्यज्ञस्य । गर्भो दीक्षितः । अन्तरेण वै योनिं गर्भः सञ्चरति । स यत् स तत्रैजति त्वत्, परि त्वदावर्तते । तस्मादिमे गर्भा एजन्ति त्वत्, परि त्वदावर्तन्ते । तस्मादस्यैष सञ्चरो भवति—आसुत्यायै ॥ २८ ॥

इति दीक्षासंस्काराः ।

---

**अथ यत्स्वाहेति** । हविस्त्यागस्य यज्ञत्वात्, स्वाहाकारेण च हविःप्रदानात्, स्वाहाकारस्य च यज्ञात्मकता । अनन्तरं वाग्यमनं विधत्ते—**अथ वाचं यच्छतीति** ( का. श्रौ. सू. ७ । ७३ ) । वाग्व्यवहारमन्त्ररूपेण यज्ञनिष्पत्तेः ' वाक् यज्ञः ' । तस्याः बहिर्निर्गमनमकृत्वा आत्मनि नियमात् ' यज्ञमेव ' आत्मनि धृतवान् भवति ॥ २७ ॥

शालायाः फलोद्देशे यजमानस्याभ्यञ्जनादिकमुक्तम्, तस्य दीक्षाहुत्यर्थं शालाप्रवेशनं विधत्ते—**अथैनमिति** । ( का. श्रौ. सू. ७ । ७९ ) । प्रविष्टस्य तथा कर्मार्थं सञ्चरनिर्देशमाह—**स जघनेनेति** । ' आहवनीयं जघनेन ' तत्पश्चाद्देशे, ' गार्हपत्यमग्रेण ' तयोर्मध्यपथि कर्मार्थं गच्छति ( का. श्रौ. सू. ७ । ७९ ) । अयमेव ' अस्य ' ' सञ्चरो भवति ' ( का. श्रौ. सू. ७ । ७६ । आप. श्रौ. सू. १० । ८ । २ । ) । उक्तसञ्चरं प्रशंसति—**अग्निर्वा** इति । यस्मादुत्पद्यते स योनिः; आहुतिप्रदानात्मकस्य ' यज्ञस्य ' ' योनिः ' ' अग्निः ' । मानुषदेहपरित्यागेन दीक्षासंस्कारेण देवदेहोत्पत्तेस्तत्संस्कृतो दीक्षितः ' गर्भः ' । अतस्तत्र योनित्वेन संस्तुतयोरग्न्योरन्तराले सञ्चारो युक्तः । उक्तमर्थमिदानीन्तनगर्भवर्णनेन द्रढयति—**तस्मादिमे गर्भा** इति । त्वच्छब्द एकशब्दपर्यायः; एकदेत्यर्थः । अथवाऽव्ययमिदं चार्थे । ' यत् ' यस्मात् ' सः ' गर्भसंयुक्तो यजमानः ' एजति त्वत् ' चलति च, ' पर्यावर्त्तते त्वत् ' परिभ्रमति च; ' तस्मात् ' इदानीन्तना गर्भा अप्येवं भवन्तीत्यर्थः॥२८॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये तृतीयकाण्डे प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ( ३—१—३ )

---

१—स्वाहेत्युक्त्वा वाग्यतः । २—वाग्यतं प्रवेशयत्याहवनीयगार्हपत्यावन्तरेण । ३—सोऽस्य संचर आप्रसवात् । ४—' तस्य तयोरन्तराले '—इ० पा० ।

सर्व्वाणि ह वै दीक्षाया यजूᳯंष्यौद्ग्रभणानि । ( न्यु ) उद्गृभ्णीते वाऽएषोऽस्माल्लोकाद्देवलोकमभि यो दीक्षतऽएतैरेव तद्यजुर्भिरुद्गृभ्णीते तस्मादाहुः सर्व्वाणि दीक्षाया यजूᳯंष्यौद्ग्रभणानीति तत ऽएतान्यवान्तरामाचक्षतऽऔद्ग्रभणानीत्याहुतयो ह्येता ऽआहुतिर्हि यज्ञः परोऽक्षं वै यजुर्जपत्यथैष प्रत्यक्षं यज्ञो यदाहुतिस्तदेतेन यज्ञेनोद्गृभ्णीतेऽस्माल्लोकाद्देवलोकमभि ॥ १ ॥

ततो यानि त्रीणि स्रुवेण जुहोति । तान्याधीतयजूᳯंषीत्याचक्षते सम्पदऽएव कामाय चतुर्थᳯं हूयतेऽथ यत्पञ्चमᳯं स्रुचा जुहोति तदेव प्रत्यक्षमौद्ग्रभणमनुष्टुभा हि तज्जुहोति व्वाग्ध्यनुष्टुब्वाग्घि यज्ञः ॥ २ ॥

अथ औद्ग्रभणहोमः । दीक्षाहुतिः ।

सर्वाणि ह वै दीक्षाया यजूंष्यौद्ग्रभणानि । उद्गृभ्णीते वाऽएषोऽस्माल्लोकाद्देवलोकमभि—यो दीक्षते । एतैरेव तद्द यजुर्भिरुद्गृभ्णीते । तस्मादाहुः—सर्वाणि दीक्षाया यजूंष्यौद्ग्रभणानीति । तत एतान्यवान्तरामाचक्षते—औद्ग्रभणानीति । आहुतयो ह्येताः । आहुतिर्हि यज्ञः । परोक्षं वै यजुर्जपति—अथैव प्रत्यक्षं यज्ञो—यदाहुतिः । तदेतेन यज्ञेनोद्गृभ्णीते—अस्माल्लोकाद्देवलोकमभि ॥ १ ॥

ततो यानि त्रीणि स्रुवेण जुहोति—तान्याधीतयजूंषीत्याचक्षते । सम्पदऽएव कामाय चतुर्थं हूयते । अथ यत्पञ्चमं स्रुचा जुहोति—तदेव प्रत्यक्षमौद्ग्रभणम् । अनुष्टुभा हि तज्जुहोति । वाग्ध्यनुष्टुप् । वाग्घि यज्ञः ॥ २ ॥

अथ दीक्षाहुतीर्विधातुमाह—**सर्वाणि ह वा** इति । यजुस्सम्बन्धाद्दीक्षासम्बन्धीनि ' यजूंषि ' औद्ग्रभणानि ' । तदुद्ग्रभणत्वमेव कुत इति तद्दर्शयति—**उद्गृभ्णीते वा** इति । ' तत् ' तदा ' एतैः ' एव दीक्षाङ्गभूतैः सर्वैः ' यजुर्भिः ' एवातो ' दीक्षायाः ' प्रकरण उक्तानि ' सर्वाणि ' अपि ' यजूंषि ' ' औद्ग्रभणानि ' औद्ग्रहणानीति ( का. श्रौ. सू. ७ । ७९ ) । " हृग्रहोर्भः "—( पा. ८ । २ । ३२ सू. वा. १ ) इति भत्वम् । ' ततः ' तेषु यजुःषु मध्ये ' एतानि ' एव दीक्षाहुतिसाधनानि आकूत्यादीनि ' औद्ग्रभणानि ' उद्ग्रभणेऽत्यन्तं सन्निहितानीत्यर्थः । तत् कथमिति, उच्यते—**आहुतयो हीति** । तावता श्रैष्ठ्ये किमायातमिति तत्राह—**आहुतिर्हीति** । जप्यानां होम्यानां च तारतम्यमाह—**परोक्षं वा** इति ॥ १ ॥

एतासामप्युद्ग्रहणसाधनतां विभज्य दर्शयन् प्रशंसति—**ततो यानीति** । ' यानि ' आदितः ' त्रीणि ' यजूंषि ' स्रुवेण जुहोति ', 'तानि' ' आधीत-यजूंषि ' आधानलिङ्गकानि; तन्मन्त्रेष्वाधानव्यापारलिङ्गदर्शनात् । ' सम्पदे कामाय ' । सम्पद्यत इति ' सम्पत् ' काम्यत इति ' कामः ', सम्पाद्याय स्वर्गफलाय चेत्यर्थः । अयमभिप्रायः—यथा लोके किञ्चित् फलं सिषाधयिषुरादौ तज्ज्ञात्वा पश्चात् कामयित्वा तत्साधनमनुष्ठायान्ते तल्लभते; एवं त्रिभिः स्वर्गफलमाध्याय चतुर्थेन तत्साधनमनुष्ठाय पञ्चमेन तदुद्गृहीतवान् भवतीति । अथ चतुर्थस्य होमसाधनानभिधानेनापि पञ्चमस्य विशेषितत्वात् चतुर्थमपि स्रुवेणैवेति वेदितव्यम् । पञ्चमस्य साक्षादुद्ग्रहणसाधनत्वं तन्मन्त्रस्यानुष्टुप्त्वे सिद्धमित्याह—**अनुष्टुभा हीति** । ' अनुष्टुभा ' वाचा, मन्त्रेण साध्यत्वात् '. वाग् यज्ञः ' । " अनुष्टुप्चतुरुत्तराणि छन्दांस्युदपादयत् "—इति सामब्राह्मणेऽभिधानाद् वाचोऽनुष्टुप्त्वम् ॥ २ ॥

( ग्रो ) यज्ञेन वै देवाः । ( ऽ ) इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यᳬ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥ ३ ॥

तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञᳬ समभरन्यथाऽयं यज्ञः सम्भृत ऽएवं वाऽएष यज्ञᳬ सम्भरति यदेतानि जुहोति ॥ ४ ॥

तानि वै पञ्च जुहोति । संवत्सरसंमितो वै यज्ञः पञ्च वाऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च जुहोति ॥ ५ ॥

( त्य ) अथातो होमस्यैव । ( वा ) आकूत्यै प्रयुजेऽग्नये स्वाहेत्या वाऽअग्ने कुवते यजेयेति तद्यद्देवात्र यज्ञस्य तदेवैतत्संभृत्यात्मन्कुरुते ॥ ६ ॥

---

यज्ञेन वै देवाः इमां जितिं जिग्युः—यैषामियं जितिः । ते होचुः—कथं न इदं मनुष्यैरनभ्यारोह्यं स्यादिति । ते यज्ञस्य रसं धीत्वा—यथा मधु मधुकृतो निर्द्धयेयुः—विदुह्य यज्ञं, यूपेन योपयित्वा—तिरोऽभवन् । अथ यदेनेनायोपयन्—तस्माद् यूपो नाम ॥ ३ ॥

तद्वा ऋषीणामनुश्रुतमास । ते यज्ञं समभरन् । यथाऽयं यज्ञः सम्भृतः—एवं वा एष यज्ञं सम्भरति—यदेतानि जुहोति ॥ ४ ॥

तानि वै पञ्च जुहोति । संवत्सरसंमितो वै यज्ञः । पञ्च वा ऋतवः संवत्सरस्य । तं पञ्चभिराप्नोति । तस्मात्पञ्च जुहोति ॥ ५ ॥

अथातो होमस्यैव । "आकूत्यै प्रयुजेऽग्नये स्वाहा"—( वा.सं. ४ । ७) इति । आ वा अग्ने कुवते—यजेयेति । तद् यदेवात्र यज्ञस्य—तदेवैतत् संभृत्यात्मन् कुरुते ॥ ६ ॥

---

अथ पुरातनवृत्तान्तप्रदर्शनमुखेनैतेषां स्वर्गौद्ग्रहणे साधनतामुपपादयति—यज्ञेन वा इति । एतत् प्रथमकाण्डे पञ्चमप्रपाठकादावाग्नेयपुरोडाशार्थवादे ( श. प. का. १ अ. ६. ब्रा. २ कं. १ ) व्याख्यातम् ॥ ३ ॥

तद्वा इति । यथाऽयमिति । येन प्रकारेण देवानुष्ठितप्रकारं जानद्भिर्ऋषिभिः 'अयं यज्ञः' औद्ग्रभणहोमेन[1] सम्भृतः; 'एवम्' एतेषामनुष्ठानेन 'एषः' यजमानोऽपि 'यज्ञं' सम्भृतवान् भवति ॥ ४ ॥

तद्गतपञ्चसङ्ख्यां प्रशंसति—तानि वै पञ्चेति । ( का. श्रौ. सू. ७ । ७९ ) ॥ ५ ॥

अथातो होमस्यैवेति । मन्त्रा व्याख्यायन्त इति शेषः । 'अग्ने' यागानुष्ठानात् पूर्वम् 'आकुवते' खलु । 'कुर्वन्'-शब्देन[2] तत्प्रागभावी मनोव्यापारो लक्ष्यते । 'यजेय'—इति संकल्पयतीत्यर्थः । अतो 'यज्ञस्य', देवकर्तव्यमङ्गजातं सर्वं 'सम्भृत्य' संकल्प्यात्मनैकीकृत्य स्वात्मनि 'कुरुते' स्थापयति ॥ ६ ॥

---

१—औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेणाकूत्या इति प्रतिमंत्रम् । २—'कुर्-शब्देन' इति पा० ।

मेधायै मुनसेऽग्नये स्वाहेति । मेधया वै मुनसाऽभिगच्छति युजेयेति तद्य-देवात्र युज्ञस्य तुदेवैतुत्सम्भृत्यात्मुन्कुरुते ॥ ७ ॥

दीक्षायै तुपसेऽग्नये स्वाहेति । ( त्यु ) अुन्वेवैतुदुच्युते नेत्तु हूयते ॥ ८ ॥

सुरस्वत्यै पूष्णेऽग्नये स्वाहेति । व्वाग्वै सुरस्वती व्वाग्यज्ञः पशुवो वै पूषा पुष्टिर्व्वै पूषा पुष्टिः पशुवः पशुवो हि युज्ञस्तद्यदेवात्र युज्ञस्य तुदेवैतुत्सम्भृत्यात्मुन्कुरुते ॥ ९ ॥

तुदाहुः । ( रु ) अुनद्धेवैता ऽआहुतयो हूयन्तेऽप्रतिष्ठिता ऽअदेवका-स्तुत्र नेन्द्रो न सोमो नाग्निरिति ॥ १० ॥

---

"मेधायै मनसेऽग्नये स्वाहा"–( वा.सं.४।७) इति। मेधया वै मनसाऽभिगच्छति–यजेयेति। तद् यदेवात्र यज्ञस्य–तदेवैतत् सम्भृत्यात्मन्–कुरुते ॥ ७ ॥

"दीक्षायै तपसेऽग्नये स्वाहा"–(वा.सं.४ । ७) इति। अन्वेवैतदुच्यते, नेत्तु हूयते ॥ ८ ॥

" सरस्वत्यै पूष्णेऽग्नये स्वाहा "–( वा. सं. ४ । ७ ) इति । वाग्वै सरस्वती । वाग्यज्ञः । पशवो वै पूषा । पुष्टिर्वै पूषा । पुष्टिः पशवः । पशवो हिं यज्ञः । तद् यदेवात्र यज्ञस्य–तदेवै-तत्सम्भृत्यात्मन्कुरुते ॥ ९ ॥

तदाहुः–अनद्धेवैता आहुतयो हूयन्ते–अप्रतिष्ठिता, अदेवकाः । तत्र नेन्द्रो, न सोमो नाग्निरिति ॥ १० ॥

---

द्वितीयमन्त्रस्य तात्पर्यमाह–मेधायै मनस इति । मेधयेति । सङ्कल्पितस्यार्थस्य धारयित्री बुद्धिर्मेधा तया, ' मनसा ' च साधनेन उभाभ्याम् ' अभिगच्छति ' । यथा कश्चित् प्रथममिदं सम्यगिति सङ्कल्प्य तत्साधन-प्रकारविशेषमवबुद्ध्यते, तद्वदित्यर्थः ॥ ७ ॥

तृतीयस्य मन्त्रस्यापि होमसाधनत्वप्रसक्तौ जप्यतामाह–दीक्षाया इति । ' अनु उच्यते एव '–इति, एव-कारतात्पर्यार्थमाह–नेत्त्विति । अत एव कात्यायनः–" तृतीयं जपत्येव "–( का. श्रौ. सू. ७ । ८० ) इत्युक्तवान् ॥ ८ ॥

होमे तृतीयं मन्त्रं व्याचष्टे–सरस्वत्या इति । पशवो वा इति । पशूनां पूषत्वम्, पूषगतपुष्टिधर्मसद्भा-वात्; पूष्णोऽपि पोषकत्वम् " पोषाँ अपुष्यत् "–( तै. सं. ७ । १ । ९ । १ । श. प. का. १४ । ४ । २ । २९ । निरु. १२ । २ । ९ । श. प. ९ । २ । ९ । ७ ) इत्यादिश्रुतेः सिद्धम् । पशुगतक्षीरादि-साध्यत्वात् ' पशवो यज्ञः ' ॥ ९ ॥

उक्तमन्त्रत्रयेऽपि ' अग्नये ' यदस्ति, तत्राग्नेः कः प्रसङ्ग इति तद्दर्शयितुमाह–तदाहुरिति । ' अनद्धेव ' अप्रत्यक्षमिव ' एताः ' तिस्रः ' आहुतयः ' हूयन्ते ' । अस्तु को दोष इति तत्राह–अप्रतिष्ठिता इति । किमर्थमप्रतिष्ठिततेति, तत्राह–अदेवका इति । यद्यपि सन्त्याकूत्याद्याः, तथापि तासां देवतात्वेन प्रसिद्ध्यभा-वादिन्द्रादिना भवितव्यमिति प्रदर्शयति–तत्र नेन्द्र इत्यादि ॥ १० ॥

( त्या ) आकूत्यै प्रयुजेऽग्नये स्वाहेति । नात ऽएकं चनाग्निर्वाऽअद्धेवाग्निः प्रतिष्ठितः स यदग्नौ जुहोति तेनैवैता ऽअद्धेव तेन प्रतिष्ठितास्तस्मादु सर्व्वास्वेवाग्नये स्वाहेति जुहोति तत ऽएतान्याधीतयजूꣳषीत्याचक्षते ॥ ११ ॥

( तुऽ ) आकूत्यै प्रयुजेऽग्नये स्वाहेति । ( त्या ) आत्मना वाऽअग्रऽआकुवते यजेयेति तमात्मनऽएव प्रयुङ्क्ते यत्तनुते तेऽअस्यैतेऽआत्मन्देवतेऽआधीते भवत आकूतिश्च प्रयुक्च ॥ १२ ॥

मेधायै मनसेऽग्नये स्वाहेति । मेधया वै मनसाऽभिगच्छति यजेयेति तेऽअस्यैतेऽआत्मन्देवतेऽआधीते भवतो मेधा च मनश्च ॥ १३ ॥

---

आकूत्यै प्रयुजेऽग्नये स्वाहेति । नात एकं चन । अग्निर्वा । अद्धेवाग्निः प्रतिष्ठितः । स यदग्नौ जुहोति—तेनैवैता अद्धेव । तेन प्रतिष्ठिताः । तस्मादु सर्वास्वेव—अग्नये स्वाहेति—जुहोति । तत एतान्याधीतयजूंषीत्याचक्षते ॥ ११ ॥

आकूत्यै प्रयुजेऽग्नये स्वाहेति । आत्मना वा अग्र आकुवते यजेयेति । तमात्मन एव प्रयुङ्क्ते—यत्तनुते । ते अस्यैते आत्मन्देवते आधीते भवतः—आकूतिश्च प्रयुक्च ॥ १२ ॥

मेधायै मनसेऽग्नये स्वाहेति । मेधया वै मनसाऽभिगच्छति—यजेयेति । ते अस्यैते आत्मन्देवते आधीते भवतो—मेधा च मनश्च ॥ १३ ॥

---

तत्र प्रसिद्धदेवतानाममभावं दर्शयितुमनुवदति—**आकूत्या** इति । **नात एकश्चनेति** । 'अतः' अस्माद् आकूत्या इत्येवमादिकाद् वाक्यादेकमपि इन्द्रादिकं देवं नोपलभामहे । इति वदतोऽयमभिप्रायः—तेषु मन्त्रेषु आकूतिमेधादेः प्रशंसितत्वेनाग्निमतिविहायायमाक्षेप इति । अनद्धात्वपरिहारमाह—**अग्निर्वा** इति । 'सः' यजमानः 'यत्' यस्मात् 'अग्नौ' प्रत्यक्षेण 'जुहोति' अत एव 'अग्निः अद्धा इव' प्रत्यक्षमिव, अत एव 'प्रतिष्ठितः' च, 'तेन' खलु 'एताः' तिस्रोऽपि 'अद्धेव' 'प्रतिष्ठिताः' च । **तत एतानीति** । यत उक्तरीत्याऽन्यादिप्राधान्यम्, तत इत्यर्थः । इत्थमग्निं प्रशस्यावशिष्टाकूतिप्रयुगग्निदेवतात्रयमाध्यानसम्बन्धेन प्रशंसति—**तत एतान्याधीतयजूंषीति**—इति ॥ ११ ॥

**आकूत्यै प्रयुज** इति । 'अग्रे' प्रथमम् 'आत्मना' बुद्ध्यैव 'यजेयेति' । 'आ कुवते' सङ्कल्पयन्ति । 'तम्' तत्सङ्कल्पितम् 'आत्मन एव' विस्तीर्य 'प्रयुङ्क्ते' (भवतः) । प्रयुज्यत इति 'प्रयुक्' । उभयोरपि बुद्धिविषयभावादुभे अपि 'देवते' आकूतिप्रयुजौ, 'अस्य' यजमानस्य 'आत्मन्' आत्मनि 'आधीते' आध्यानेन विषयीकृते भवतः । आधीतप्रतिपादकत्वात् 'आधीतयजूंषि'—इत्युच्यन्ते । एवमुत्तरवाक्यान्यपि योज्यानि ॥ १२ ॥ १३ ॥

सुरस्वत्यै पूष्णेऽग्नये स्वाहेति । व्वाग्वै सुरस्वती व्वाग्यज्ञः साऽस्यैषाऽऽत्मुन्देवताऽऽधीता भवति व्वाक्पशुवो वै पूषा पुष्टिर्व्वै पूषा पुष्टिः पशुवः पशुवो हि यज्ञुस्तेऽस्यैतुऽआत्मुन्पशुव आधीता भवन्ति तद्युदस्यैताऽआत्मुन्देवुता ऽआधीता भुवन्ति तुस्मादाधीतयजूᳬंषि नाम ॥ १४ ॥

(मा) अथ चतुर्थीं जुहोति । (त्या) आपो देवीर्बृहतीर्व्विश्वशम्भुवो द्यावापृथिवीऽउरोऽअन्तरिक्ष ॥ बृहस्पतये हविषा व्विधेम स्वाहेत्येषा ह नेदीयो यज्ञस्यापाᳬं हि कीर्तयत्यापो हि यज्ञो द्यावापृथिवीऽउरोऽअन्तरिक्षेति लोकानाᳬं हि कीर्तयति बृहस्पतये हविषा व्विधेम स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्म यज्ञ एतेनो हैषा नेदीयो यज्ञस्य ॥ १५ ॥

( स्या ) अथ यां पञ्चमीᳬं स्रुचा जुहोति । सा हैव प्रत्यक्षं यज्ञोऽनुष्टुभा हि तां जुहोति व्वाग्घ्यनुष्टुब्वाग्घि यज्ञः ॥ १६ ॥

---

सरस्वत्यै पूष्णेऽग्नये स्वाहेति । वाग्वै सरस्वती । वाग्यज्ञः । साऽस्यैषाऽऽत्मन्देवताऽऽधीता भवति–वाक् । पशवो वै पूषा । पुष्टिर्वै पूषा पुष्टिः पशवः । पशवो हि यज्ञः । तेऽस्यैत आत्मन्पशव आधीता भवन्ति । तद्यदस्यैता आत्मन्देवता आधीता भवन्ति–तस्मादाधीतयजूंषि नाम ॥ १४ ॥

अथ चतुर्थीं जुहोति–"आपोदेवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उरोऽअन्तरिक्ष ॥ बृहस्पतये हविषा विधेम स्वाहा "–( वा. सं. ४ । ७ ) इति । एषा ह नेदीयो यज्ञस्य । अपां हि कीर्तयति । आपो हि यज्ञः । द्यावापृथिवी उरो अन्तरिक्षेति । लोकानां हि कीर्तयति । बृहस्पतये हविषा विधेम स्वाहेति । ब्रह्म वै बृहस्पतिः । ब्रह्म यज्ञः । एतेनो हैषा नेदीयो यज्ञस्य ॥ १५ ॥

अथ यां पञ्चमीं स्रुचा जुहोति । सा हैव प्रत्यक्षं यज्ञः । अनुष्टुभा हि तां जुहोति । वाग्घ्यनुष्टुप् वाग्घि यज्ञः ॥ १६ ॥

---

सरस्वत्यै पूष्ण इति । अत्र ' पूषन् ' शब्दवाच्यानां पशूनां बहुत्वात्पृथङ्निर्दिश्यते । पशवो वा इत्यादि । प्राग् व्याख्यातम् ॥ १४ ॥

इत्थमाधीतत्वसमानधर्मसम्भवादाहुतित्रयं पृथग्विधाय, प्रशस्य च चतुर्थीमाहुतिं तन्मन्त्रं च विधत्ते–अथ चतुर्थीमित्यादि । मन्त्रवाक्यानि क्रमेणोदाहृत्य व्याचष्टे–एषा हेति । ' एषा ' ऋगित्यर्थः । ' यज्ञस्य ' ' नेदीयः ' अत्यन्तं सन्निहितम् । कथम् ? यस्मात् ' एषा अपां कीर्तयति ' तस्मान्नेदीयः । तत्कीर्तनेन यज्ञं प्रति कथं नेदीयस्त्वमिति तत्राह–आपो हीति । अभिषवसंयवनादिसाधनत्वादपां यज्ञत्वम् । स्पष्टमन्यत् ॥

उक्ताहुतिचतुष्टयस्याज्यस्थाल्याः स्रुवेण होमः । तथा च सूत्रम्–" औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेणाहुत्यै प्रतिमन्त्रम् " ( का. श्रौ. सू. ७ । ७९ ) इति ॥ १५ ॥

अथ यां पञ्चमीमिति । स्पष्टम् ॥ १६ ॥

(ज्यो॒ऽथ) अथ य॒द्ध्रुवाया॑मा॒ज्यं परि॑शिष्टं॒ भव॑ति। त॒ज्जुह्वा॑मा॒नय॑ति त्रि॒: स्रुवे॒णाज्यवि॒लाप॒न्याऽ अधि॒ जुह्वां॑ गृह्णाति य॒त्तृ॒तीयं॑ गृह्णाति त॒त्स्रु॒वम॒भिपू॑रयति १७

स॒ जु॒होति। वि॒श्वो दे॒वस्य॑ ने॒तुर्म्म॒र्त्तो वु॒रीत स॒ख्यम्॑ ॥ वि॒श्वो रा॒य इ॑षु॒ध्यति द्यु॒म्नं वृ॑णीत पु॒ष्यसे॒ स्वाहेति॑ ॥ १८ ॥

सैषा दे॒वता॑भिः प॒ङ्क्तिर्भ॑वति । वि॒श्वो दे॒वस्ये॑ति वै॒श्वदे॒वं ने॒तुरि॑ति सावि॒त्रं म॒र्त्तो वु॒री॑तेति मै॒त्रं द्यु॒म्नं वृ॒णी॑तेति बार्हस्प॒त्यं द्यु॒म्नᳪं हि बृ॒हस्प॑तिः पु॒ष्यस॒ऽइ॑ति पौ॒ष्णम्॑ ॥ १९ ॥

---

अथ यद् ध्रुवायामाज्यं परिशिष्टं भवति–तज्जुह्वामानयाति । त्रिः स्रुवेणाज्यविलापन्या आधिजुह्वां गृह्णाति । यत्तृतीयं गृह्णाति–तत्स्रुवमभिपूरयति ॥ १७ ॥

स जुहोति–" विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा "–( वा. सं. ४ । ८ ) इति ॥ १८ ॥

सैषा देवताभिः पङ्क्तिर्भवाति । विश्वो देवस्येति वैश्वदेवम् (१) । नेतुरिति सावित्रम् (२ । ) मर्त्तो वुरीतेति मैत्रम् ( ३ ) । द्युम्नं वृणीतेति बार्हस्पत्यम् ( ४ ) । द्युम्नं हि बृहस्पातिः । पुष्यसे इति पौष्णम् ( ५ ) ॥ १९ ॥

---

पञ्चमस्य द्रव्यमाह–अथ यद् ध्रुवायामाज्यं परिशिष्टमित्यादिना । अयमर्थः । दीक्षणीयेष्टेः सम्बन्धि 'यदाज्यम्' 'ध्रुवायाम्' अवशिष्टम्, 'तत्' पञ्चमाहुत्यर्थं 'जुह्वाम्' अवनयेत् । एतदेकमवत्तम् । अथाज्यस्थाल्याः सकाशात् 'स्रुवेण' जुह्वामुपरि 'त्रिः' निनयति । एवं चतुरवत्तं भवति । तत्र 'यत्' 'तृतीयम्', 'तत्' 'आज्यविलापन्या अधि' जुह्वा उपरि उत्तानं स्रुवं निधाय यथा पूर्णं भवति तथा स्रुवस्याभित आज्येन पूरयेत् । तथा च सूत्रम्–" जुह्वां ध्रौवमासिच्य द्विश्च स्थाल्याः स्रुवेण तृतीयं स्रुवमभिपूरयति विश्वो देवस्येति"–( का. श्रौ. सू. ७ । ८१ ) इति ॥ १७ ॥

पञ्चमस्य मन्त्रमाह–स जुहोति विश्वो देवस्येति । ( का. श्रौ. सू. ७ । ८१ ) ॥ १८ ॥

तं प्रशंसति–सैषा देवताभिरिति । " पञ्चाक्षरा पङ्क्तिः " ( तै. ब्रा. २ । ७ । १० । २ )–इति श्रुतेः पञ्चसङ्ख्यासम्बन्धात् 'एषा' 'पङ्क्तिर्भवति' । तद्योजयति–विश्वो देवस्य इति । विश्वदेवशब्दश्रवणात् 'इदं' मन्त्रवाक्यं 'वैश्वदेवं' । नयनस्य सवितृव्यापारत्वात् 'नेतृ'–शब्दश्रवणात् 'सावित्रम्' । 'मर्तो वुरीत' इत्येतेन मनुष्यैर्वरणीयत्वाभिधानात् 'मैत्रम्'; मित्रस्य हि वरणीयत्वं प्रसिद्धम् । मैत्रत्वं बार्हस्पत्यमन्त्रेषु 'द्रविणं धेहि चित्रम्'–इति द्युम्नसमानार्थस्य द्रविणस्य दाने बृहस्पतिसम्बन्धश्रवणात् द्युम्नं वृणीत–इत्यनेन बार्हस्पत्यम् । 'पुष्यसे'–इति पोषणधर्मश्रवणात्–'पौष्णम्' इति ॥ १९ ॥

---

१–'त्रिरानयति' । इति क० पा० ।

( १५ ) सैषा देवताभिः पङ्क्तिर्भवति । पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चऽर्तवः संव्वत्सरस्यैतमेवैतयाऽऽप्नोति यद्देवताभिः पङ्क्तिर्भवति ॥ २० ॥

तां वाऽअनुष्टुभा जुहोति । व्वाग्वाऽअनुष्टुब्वाग्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति २१
तदाहुः । ( २ ) एतामेवैकां जुहुयाद्यस्मै कामायेतरा हूयन्तऽएतयैव तं काममाप्नोतीति तां वै यद्येकां जुहुयात्पूर्णां जुहुयात्सर्व्वं वै पूर्णꣳ सर्व्वमेवैनयैतदाप्नोत्यथ यत्स्रुवमभिपूरयति स्रुचं तदभिपूरयति तां पूर्णां जुहोत्यन्वेवैतदुच्यते सर्व्वास्त्वेव हूयन्ते ॥ २२ ॥

तां वाऽअनुष्टुभा जुहोति । सैषाऽनुष्टुप्सत्येकत्रिꣳशदक्षरा भवति दश पाण्याऽअङ्गुलयो दश पाद्या दश प्राणा आत्मैकत्रिꣳशो यस्मिन्नेते प्राणाः प्रतिष्ठिताऽएतावान्वै पुरुषः पुरुषो यज्ञः पुरुषसंमितो यज्ञः स यावानेव यज्ञो

---

सैषा देवताभिः पङ्क्तिर्भवति । पाङ्क्तो यज्ञः । पाङ्क्तः पशुः । पञ्चर्तवः संवत्सरस्य । एतमेवैतयाऽऽप्नोति—यद्देवताभिः पङ्क्तिर्भवति ॥ २० ॥

तां वा अनुष्टुभा जुहोति । वाग्वा अनुष्टुब् । वाग्यज्ञः । तद्यज्ञं प्रत्यक्षमाप्नोति ॥ २१ ॥

तदाहुः—एतामेवैकां जुहुयात् । यस्मै कामायेतरा हूयन्ते—एतयैव तं काममाप्नोतीति । तां वै यद्येकां जुहुयात्—पूर्णां जुहुयात् । सर्वं वै पूर्णम् । सर्वमेवैनयैतदाप्नोति । अथ यत् स्रुवमभिपूरयति—स्रुचं तदभिपूरयति । तां पूर्णां जुहोति । अन्वेवैतदुच्यते । सर्वास्त्वेव हूयन्ते ॥ २२ ॥

तां वा अनुष्टुभा जुहोति । सैषाऽनुष्टुप्सत्येकत्रिंशदक्षरा भवति । दश पाण्या अंगुलयः, दश पाद्याः, दश प्राणाः, आत्मैकत्रिंशः—यस्मिन्नेते प्राणाः प्रतिष्ठिताः । एतावान्वै पुरुषः । पुरुषो यज्ञः ।

---

सैषेति । देवताभिः पङ्क्तित्वं भवति । ततः किमित्यत आह—पाङ्क्तो यज्ञ इत्यादिना ॥ २० ॥
अथ छन्दोद्वारा प्रशंसति—तां वा अनुष्टुभेति ॥ २१ ॥

इत्थं पञ्चानामाहुतीनां समुच्चयपक्षमुक्त्वा पञ्चमीमेवैकां जुहुयादिति केषाञ्चित् पक्षमाह—तदाहुरिति । इतराभ्यो यत् फलं तस्यैकयैव सिद्धेरकामे 'एतामेव' 'जुहुयात्' तत्रापि पूर्णां कृत्वा 'जुहुयात्' पूर्णाहुतिं कुर्यादित्यर्थः । यत् 'पूर्णम्' तदन्यूनत्वेन 'सर्वम्' अतस्तेन सर्वं फलमाप्नोति । 'यत्' यदा पूर्णाहुतिसमये 'स्रुवम्' अभिपूरयेत्, 'तत्' तदा, स्रुवेणैव होममकृत्वा आज्येन 'स्रुचम्' अभिपूरयेत् । तथा कृत्वा 'ताम्' आहुतिं पूर्णाहुतिं कृत्वा जुहुयात् । तथा च सूत्रम्—"एतामेव वा पूर्णां जुहुयात्"—( का. श्रौ. सू. ७ । ८२ ) इति ॥ २२ ॥

अक्षरसङ्ख्याद्वारा तं मन्त्रं प्रशंसति तं वा अनुष्टुभेति । दश प्राणाः इति । शीर्षगतसप्तच्छिद्रस्थाः सप्त प्राणाः, अवाञ्चौ द्वौ, इत्यसाधारणा नव; मुख्यप्राणस्त्वेकः; इति प्राणानां दशत्वम् । 'आत्मा' देहः । 'एकत्रिंशः'

यावत्यस्य मात्रा तावन्तमेवैनयैतदाप्नोति यदनुष्टुभैकत्रिँ॑शदक्षरया जुहोति ॥ २३ ॥

## इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ १ ॥ ४ ॥

---

**पुरुषसंमितो यज्ञः । स यावानेव यज्ञो, यावत्यस्य मात्रा—तावन्तमेवैनयैतदाप्नोति—यदनुष्टुभैकत्रिंश-दक्षरया जुहोति ॥ २३ ॥ इत्यौद्ग्रभणहोमः ॥**

---

पुरुषः । 'एतावान्' एकत्रिंशदात्मकः । 'पुरुषो यज्ञः'—इत्यस्योपपादनम्—पुरुषसम्मितो यज्ञ इति । यज्ञस्य पुरुषसम्मितत्वमुपरिष्टाद् वक्ष्यते ( श. प. कां. ३ अ. ५ ब्रा. ३ कं. १–६ ) 'यावानेव यज्ञः' इत्यस्य विवरणं—यावत्यस्य मात्रेति । 'अस्य' यज्ञस्य 'मात्रा' । मीयत इति मात्रा, अवयवसमष्टिः, एकत्रिंश-दात्मिका । अनया "विश्वो देवस्य"—( श. प. कां ३ अ.१ ब्रा ४ कं १८ ) इत्यनया 'तावन्तमेव' यज्ञम् 'आप्नोति' ॥ २३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ( ३–१–४ )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ १ ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

# द्वितीयाध्याये प्रथमं ब्राह्मणम् ।

द॒क्षि॒णेना॑हव॒नी॒यं प्रा॒ची॒नग्री॑वे कृ॒ष्णा॒जि॒नेऽउ॑पस्तृ॒णा॒ति । त॒योरे॑नमु॒धि दी॒क्ष॒य॒ति य॒दि द्वे भ॑व॒तस्त॒द॒नु॒योर्लो॒क॒यो रू॒पं त॒दे॒न॒म॒नु॒योर्लो॒क॒यो॒र॒धि दी॒क्षय॒ति ॥ १ ॥

सं॒ब॒द्धा॒न्ते भ॑वतः । सं॒ब॒द्धा॒न्ता॒वि॒व ही॒मौ लो॒कौ त॒र्न्नस॑मु॒ते प॒श्चा॒द्भ॑व॒तस्त॒दि॒मा॒वे॒व लो॒कौ मि॒थु॒नी॒कृत्य त॒योरे॑नमु॒धि दी॒क्ष॒य॒ति ॥ २ ॥

य॒द्यु॒ऽए॒कं भ॒व॒ति । त॒दे॒षां लो॒का॒ना॒ᳪं रू॒पं त॒दे॒न॒मे॒षु॒ लो॒के॒ष्वु॒धि दी॒क्ष॒य॒ति या॒नि शु॒क्ला॒नि ता॒नि दि॒वो रू॒पं या॒नि कृ॒ष्णा॒नि ता॒न्य॒स्यै य॒दि वे॒त॒र॒था या॒न्ये॒व कृ॒ष्णा॒नि ता॒नि दि॒वो रू॒पं या॒नि शु॒क्ला॒नि ता॒न्य॒स्यै या॒न्ये॒व ब॒भ्रू॒णी॒व ह॒री॒णि ता॒न्य॒न्त॒रि॑क्षस्य रू॒पं त॒दे॒न॒मे॒षु॒ लो॒के॒ष्वु॒धि दी॒क्ष॒य॒ति ॥ ३ ॥

---

**अथ कृष्णाजिनदीक्षा ।**

दक्षिणेनाहवनीयं प्राचीनग्रीवे कृष्णाजिने उपस्तृणाति । तयोरेनमधिदीक्षयति । यदि द्वे भवतः—तदनयोर्लोकयो रूपम् । तदेनमनयोर्लोकयोरधिदीक्षयति ॥ १ ॥

संबद्धान्ते भवतः । संबद्धान्ताविव हीमौ लोकौ । तर्न्नसमुते पश्चाद्भवतः । तदिमावेव लोकौ मिथुनीकृत्य तयोरेनमधिदीक्षयति ॥ २ ॥

यद्यु एकं भवति—तदेषां लोकानां रूपम् । तदेनमेषु लोकेष्वधिदीक्षयति । यानि शुक्लानि तानि दिवो रूपम् । यानि कृष्णानि तान्यस्यै । यदि वेतरथा—यान्येव कृष्णानि—तानि दिवो रूपम् । यानि शुक्लानि तान्यस्यै । यान्येव बभ्रूणीव हरीणि—तान्यन्तरिक्षस्य रूपम् । तदेनमेषु लोकेष्वधिदीक्षयति ॥ ३ ॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्। निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

दीक्षाहुतीर्विधायाथ कृष्णाजिनदीक्षामाह—**दक्षिणेनाहवनीयमिति** । आहवनीयस्य दक्षिणे देशे द्वे कृष्णाजिने आस्तीर्य ' तयोरधि ' ' एनं ' यजमानं ' दीक्षयति ' तद्गतं द्वित्वं प्रशंसति—**यदि द्वे भवत इति** ॥ १ ॥

**सम्बद्धान्ते भवत इति** । ते च परस्परं सम्बद्धपर्यन्तप्रदेशे भवतः । आस्तरणप्रकारं कात्यायन आह—" आहवनीयं दक्षिणेन कृष्णाजिने मांसंहिते स्यूतान्ते तर्न्नसु पश्चादासञ्जनवती निदधाति "—( का. श्रौ. सू ७ । ८३ ) इति । **तर्न्नसमुते इति** । यथोभयोर्मांसप्रदेशयोः सम्बन्धो भवति, यथा च तर्न्नप्रदेशेषु पश्चाद्भागे ' उते ' ' परस्परं स्यूते भवतः, तथैकस्योपर्यपरमास्तृणुयात् । तथाऽऽपस्तम्बोऽपि—" अन्तर्मांसाभ्यां बहिर्लोमभ्याम् "—( आप. श्रौ. सू. १० । ८ । १२ ) इति ॥ २ ॥

एककृष्णाजिनपक्षमुक्त्वा प्रशंसति—**यद्यु एकमिति** । ' तत् ' ' एकम् ' एव कृष्णाजिनं लोकत्रयात्मकम्; अत एकेनापि दीक्षयेत् । ' दिवः ' द्योतमानत्वेन शुक्लरोमांशस्तद्रूपं भवति । पृथिव्याः श्यामत्वात् कृष्णानां

( त्य ) अन्तकमु तर्हि पश्चात्प्रत्यस्येत् । (त्त) तदिमानेव लोकान्मिथुनीकृत्य तेष्वेनमधिदीक्षयति ॥ ४ ॥

( त्यु ) अथ जघनेन कृष्णाजिने पश्चात् । (त्प्रा) प्राङ् जान्वाक्न उपविशति स यत्र शुक्लानां च कृष्णानां च सन्धिर्भवति तदेवमभिमृश्य जपत्यृक्सामयोः शिल्पे स्थ ऽइति यद्वै प्रतिरूपं तच्छिल्पमृचां च साम्नां च प्रतिरूपे स्थ इत्येवैतदाह ॥ ५ ॥

ते वामारभ इति । गर्भो वा ऽएष भवति यो दीक्षते स छन्दांसि प्रविशति तस्मान्न्यक्नाङ्गुलिरिव भवति न्यक्नाङ्गुलय ऽइव हि गर्भाः ॥ ६ ॥

---

अन्तकमु तर्हि पश्चात्प्रत्यस्येत् । तदिमानेव लोकान्मिथुनीकृत्य तेष्वेनमधिदीक्षयति ॥ ४ ॥

अथ जघनेन कृष्णाजिने पश्चात् प्राङ् जान्वाक्न उपविशति । स यत्र शुक्लानां च कृष्णानां च सन्धिर्भवति—तदेवमभिमृश्य जपति—"ऋक्सामयोः शिल्पे स्थः"—( वा. सं. ४ । ९ ) इति । यद्वै प्रतिरूपम्—तच्छिल्पम् । ऋचां च साम्नां च प्रतिरूपे स्थः—इत्येवैतदाह ॥ ५ ॥

" ते वामारभे "—( वा. सं. ४ । ९ ) इति । गर्भो वा एष भवति—यो दीक्षते । स च्छन्दांसि प्रविशति । तस्मान्न्यक्नाङ्गुलिरिव भवति । न्यक्नाङ्गुलय इव हि गर्भाः ॥ ६ ॥

---

तद्रूपत्वम् । यदि वेतरथेति । भूलोकस्वर्लोकयोर्मनुष्यैः परिदृश्यमानापरिदृश्यमानत्वमपेक्ष्य वैपरीत्योपन्यासः । यान्येवेति । 'यान्येव' लोमानि ' बभ्रूणि ' बभ्रुवर्णानि, ' हरीणि ' हरितवर्णानि च दृश्यन्ते 'तानि अन्तरिक्षस्य रूपम्;' " नीलं नभः " इति लोकप्रसिद्धेः ॥ ३ ॥

अन्तकमु तर्हीति । ' तर्हि ' तस्मिन्नेककृष्णाजिनपक्षे ' अन्तकमु ' अन्तप्रदेशमेव ' पश्चाद्-भागे ' प्रत्यस्येत् ' सङ्कोचयेत्, सन्धिप्रदेशेन द्विगुणीकुर्यादित्यर्थः । तथा च सूत्रम्—" एकं चेत्पश्चात् पादद्विगुणम्"—( का. श्रौ. सू. ७ । ८४ ) इति ॥ ४ ॥

कृष्णाजिनदीक्षार्थमुपवेशनप्रकारमाह—अथ जघनेनेति । कृष्णाजिनयोः पश्चाद्भागेन स्वयमपि पश्चात् प्राङ्मुखो दक्षिणजान्वाक्नः उपविशेत् । ' जान्वाक्नः ' सङ्कुचितजानुकः, आरुह्योपविशेदित्यर्थः । " दक्षिणं जान्वाच्यास्ते पश्चादेनयोः " ( का. श्रौ. सू. ७ । ८९ ) इति सूत्रम् । आसीनः तत्सन्धिस्थानमित्यर्थः । ( का. श्रौ. सू. ७ । ८६ ) । एवमभिमृश्य जपतीति । एवमित्यभिमर्शनप्रकारस्याभिनयः ॥

मन्त्रस्थं शिल्पपदं व्याचष्टे—यद्वा इति । ' प्रतिरूपम् ' प्रतिकृतिः । ' वै— ' शब्देन लोकप्रसिद्धिरुच्यते । लौकिका हि हरितुरगादिप्रतिरूपं शिल्पमित्याहुः । शुक्लकृष्णयोरेवर्क्सामप्रतिरूपत्वं तैत्तिरीयके उक्तम्—" एष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्यैष साम्नो यत् कृष्णम्—" ( तै. सं. ६ । १ । ३ । १ ) इति ॥ ५ ॥

द्वितीयं भागं व्याचष्टे—ते वामिति । गर्भो वा एष भवति इति । ' वै— ' शब्देनात्र श्रुत्यन्तरप्रसिद्धि-

---

१—शुक्लसन्धिमालभते ऋक्सामयोरिति । २—शतपथे हविर्यज्ञकांडेऽपि । १।१।४।२। अथ कृष्णाजिनमादत्ते इत्युपक्रम्य—तस्य यानि शुक्लानि च कृष्णानि च लोमानि । तान्यृचां च साम्नां च रूपम् । यानि शुक्लानि तानि साम्नाꣳ रूपम् । यानि कृष्णानि तान्यृचाम् । यदि वेतरथा । यान्येव कृष्णानि तानि साम्नाꣳ रूपम् । यानि शुक्लानि तान्यृचाम् । यान्येव बभ्रूणीव हरीणि तानि यजुषाꣳ रूपमिति ॥

स यदाह । ते त्वामारभ ऽइति ते वां प्रविशामीत्येवैतदाह ते मा पातमाऽस्य यज्ञस्योदृच ऽइति ते मा गोपायत माऽस्य यज्ञस्य सᳬस्थाया इत्येवैतदाह ॥ ७ ॥

( द्वा ) अथ दक्षिणेन जानुनाऽऽरोहति । शर्मासि शर्म मे यच्छेति चर्म वाऽएतत्कृष्णस्य तदस्य तन्मानुषᳬ शर्म देवत्रा तस्मादाह शर्मासि शर्म मे यच्छेति नमस्तेऽअस्तु मा मा हिᳬसीरिति श्रेयाᳬसं वाऽएष उपाधिरोहति यो यज्ञं यज्ञो हि कृष्णाजिनं तस्माऽएवैतद्यज्ञाय निह्नुते तथो हैनमेषु यज्ञो न हिनस्ति तस्मादाह नमस्तेऽअस्तु मा मा हिᳬसीरिति ८

स वै जघनार्धऽइवैवाग्रऽआसीत । ( त्रा ) अथ यदग्रऽएव मध्यऽउपविशेद्यऽएनं तत्रानुष्ठ्याहरेद्द्रप्स्यति वा प्र वा पतिष्यतीति तथा हैव स्यात्तस्माज्जघनार्धऽइवैवाग्र ऽआसीत ॥ ९ ॥

---

स यदाह--ते वामारभ इति । ते वां प्रविशामीत्येवैतदाह-" ते मा पातमाऽस्य यज्ञस्योदृचः"-( वा. सं. ४ । ९ ) इति । ते मा गोपायतम्--आस्य यज्ञस्य संस्थाया इत्येवैतदाह ॥ ७ ॥

अथ दक्षिणेन जानुनाऽऽरोहति-"शर्मासि शर्म मे यच्छ"-( वा.सं.४ । ९ ) इति। चर्म वा एतत् कृष्णस्य । तदस्य तन्मानुषम् । शर्म देवत्रा । तस्मादाह-शर्मासि शर्म मे यच्छेति । "नमस्ते अस्तु मा मा हिंसीः"-( वा. सं. ४ । ९ ) इति । श्रेयांसं वा एष उपाधिरोहति-यो यज्ञम् । यज्ञो हि कृष्णाजिनम् । तस्मा एवैतद्यज्ञाय निह्नुते । तथो हैनमेष यज्ञो न हिनस्ति । तस्मादाह-नमस्ते अस्तु मा मा हिंसीरिति ॥ ८ ॥

स वै जघनार्द्ध इवैवाग्र आसीत । अथ यदग्र एव मध्य उपविशेत्-य एनं तत्रानुष्ठ्याहरेत् । द्रप्स्यति वा प्र वा पतिष्यतीति । तथा हैव स्यात्तस्माजघनार्ध इवैवाग्र आसीत ॥ ९ ॥

---

रुच्यते । तथा चैतरेयकम्-" पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति "-इति ( ऐ. ब्रा.१ । १।३ ) । ' छन्दांसि ' गायत्र्यादीनि । ' न्यक्नाङ्गुलिः ' मुष्टीकरणेन सङ्कुचिताङ्गुलिः । उक्तलक्षणमुपवेशनं प्रसिद्धगर्भसामान्येन द्रढयति-न्यक्नाङ्गुलय इव हीति ॥ ६ ॥

स यदाहेति । उदृक्-शब्दार्थमाह-आस्य यज्ञस्येति । संस्थाया इत्यर्थः । उत्तमा ऋक् ' उदृक् ' तेन समाप्तिर्लक्ष्यत इति ह्यसकृदुक्तम् ( श. प. कां. ३ । १ । १ । १२ भाष्ये कां. ३।१।३।२३ भाष्ये )॥ ७ ॥

अनन्तरं कृष्णाजिनारोहणं विधत्ते-अथ दक्षिणेनेति । चर्म वा इत्यादि । मनुष्येषु यत् ' चर्म- ' इति प्रसिद्धम्, ' एतद् ' ' देवत्रा ' देवेषु सुखहेतुत्वात् ' शर्म '-शब्दाभिधेयम् ; अतो वैदिकेन स्वरूपेण शर्मासीति कृष्णाजिनस्य स्तुतिः । हिंसापरिहारप्रसक्तिं दर्शयति-श्रेयांसमित्यादिना । यज्ञाख्यश्रेयोऽतिक्रमणापराधप्रार्थनं युक्तमित्यर्थः ॥ ८ ॥

स जघनार्द्ध इति । 'सः' आरूढः ' जघनार्द्धे ' कृष्णाजिनस्य पश्चाद्भागे एव ' अग्रे ' प्रथमं 'आसीत' ।

( ता ) अथ मेखलां परिहरते । ( तेऽङ्गि ) अङ्गिरसो ह वै दीक्षिता न बल्यमविन्दंस्ते नान्यद्व्रतादशनमवाकल्पयंस्तऽएतामूर्जमपश्यन्त्समाप्तिं तां मध्यत ऽआत्मन ऊर्जमदधत समाप्तिं तया समाप्नुवंस्तथोऽएवैष ऽएतां मध्यत ऽआत्मन ऊर्जं धत्ते समाप्तिं तया समाप्नोति ॥ १० ॥

सा वै शाणी भवति । मृद्व्यसदिति न्वेव शाणी यत्र वै प्रजापतिरजायत गर्भो भूत्वैतस्माद्यज्ञात्तस्य यन्नेदिष्ठमुल्बमासीत्ते शणास्तस्मात्ते पूतयो वान्ति यद्वस्य जराय्वासीत्तद्दीक्षितवसनमन्तरं वा ऽउल्बं जरायुणो भवति तस्मादेषाऽन्तरा वाससो भवति स यथैवातः प्रजापतिरजायत गर्भो भूत्वैतस्माद्यज्ञादेवमेवैषोऽतो जायते गर्भो भूत्वैतस्माद्यज्ञात् ॥ ११ ॥

---

अथ मेखलां परिहरते। अङ्गिरसो ह वै दीक्षिता न बल्यमविन्दन्। ते नान्यद्व्रतादशनमवाकल्पयन्। त एतामूर्जमपश्यन्–समाप्तिम्। तां मध्यत आत्मन ऊर्जमदधत–समाप्तिं, तया समाप्नुवन्। तथो एवैष एतां मध्यत आत्मन ऊर्जं धत्ते–समाप्तिम्, तया समाप्नोति ॥ १० ॥

सा वै शाणी भवति–मृद्व्यसदिति न्वेव शाणी। यत्र वै प्रजापतिरजायत–गर्भो भूत्वैतस्माद्यज्ञात्। तस्य यन्नेदिष्ठमुल्बमासीत्–ते शणाः। तस्मात्ते पूतयो वान्ति–यद्वस्य जराय्वासीत्–तद्दीक्षितवसनम्। अन्तरं वा उल्बं जरायुणो भवति। तस्मादेषाऽन्तरा वाससो भवति। स यथैवातः प्रजापतिरजायत–गर्भो भूत्वैतस्माद्यज्ञात्–एवमेवैषोऽतो जायते–गर्भो भूत्वैतस्माद्यज्ञात् ॥ ११ ॥

---

( का. श्रौ. सू. ७।८७ )। विपक्षे बाधमाह–अथ यदग्र इति। 'यः' 'एवम्' मध्यप्रदेशमारूढं ब्रूयात् अन्यः 'द्रप्स्यति' दप्तः कुत्सितगतिर्भविष्यति ततः पतिष्यति चेति ॥ ९ ॥

अथ मेखलादीक्षामाह–अथ मेखलामिति। 'परिहरति' मध्ये परितो वेष्टयेदित्यर्थः। पुरावृत्तान्ताभिधानेन तां मेखलां प्रशंसति–अङ्गिरस इति। 'बल्यं' बलार्हं बलकरं वस्तु 'नाविन्दन्' दौर्बल्ये कारणमाह–व्रतात् तत्साधनात् पयसः 'अन्यत्' अशनं 'नावाकल्पयन्' यतः, अत इत्यर्थः। 'ते' 'एताम्' 'ऊर्जम्'। 'ऊर्क्' बलं तत्साधनत्वान्मेखला ऊर्गित्युच्यते। ऊर्गिति विशिनष्टि–समाप्तिमिति। सम्यगाप्यायते बलमनयेति समाप्तिर्मेखला ॥ १० ॥

तस्या उपादानद्रव्यमाह–सा वै शाणीति। 'सा' समाप्तिः 'शाणी' शणमयी भवेत्। 'मृद्वी' सुखसंस्पर्शा 'असत्' भवेत्। 'इति न्वेव' अनेन खल्वभिप्रायेण, गर्भाणां मार्दवस्यापेक्षितत्वादित्यर्थः। शणवाससोरुत्पत्तिमाह–यत्र वा इति। 'यत्र' यस्मिन् काले 'प्रजापतिः' यज्ञसकाशादुत्पन्नः; 'तस्य' प्रजापतेर्गर्भभूतस्य 'नेदिष्ठम्' अत्यन्तसन्निहितं 'यदुल्बमासीत्' 'ते' 'शणाः' अभवन्। 'तस्मात्' गर्भ-

---

१–यद्यपि सर्वत्र मूलपुस्तकेषु–" अविंदत "–इत्येव पाठस्तथाप्यविन्दन्–इति भाष्यसम्मतः साधीयांश्च।

२–दक्षिणजानुनाऽऽरोहति–शर्मासीति तेनास्तेऽपरेऽन्ते।

( त्सा ) सा वै त्रिवृद्भवति । त्रिवृद्ध्यन्नं पशवो ह्यन्नं पिता माता यज्जायते तत्तृतीयं तस्मात्त्रिवृद्भवति ॥ १२ ॥

मुञ्जवल्शेनान्वस्ता भवति । वज्रो वै शरो विरक्षस्तायै स्तुकासर्गꣳ सृष्टा भवति सा यत्प्रसलवि सृष्टा स्याद्यथेदमन्या रज्जवो मानुषी स्याद्यदपसलवि सृष्टा स्यात्पितृदेवत्या स्यात्तस्मात्स्तुकासर्गꣳ सृष्टा भवति ॥ १३ ॥

---

सा वै त्रिवृद्भवति । त्रिवृद्ध्यन्नम् । पशवो ह्यन्नम् । पिता, माता, यज्जायते—तत् तृतीयम् । तस्मात्त्रिवृद्भवति ॥ १२ ॥

मुञ्जवल्शेनान्वस्ता भवति । वज्रो वै शरः । विरक्षस्तायै । स्तुकासर्गं सृष्टा भवति । सा यत् प्रसलवि सृष्टा स्यात् । यथेदमन्या रज्जवो मानुषी स्यात् । यदपसलवि सृष्टा स्यात्—पितृदेवत्या स्यात् । तस्मात्स्तुकासर्गं सृष्टा भवति ॥ १३ ॥

---

मालिन्यसम्भवात् ‘ ते ’ शणाः पूतयो वान्ति ’ दुर्गन्धा भवन्ति । उल्बं नाम पटसदृशं गर्भस्यान्तर्वेष्टनम् । “ स उल्बावृतो गर्भो भवति ”—( ऐ. ब्रा. १ । १ । ३ । नि. ६ । ६ । ७ ) इत्येतदारण्यकम् । प्रतिनिर्देशे बहुवचनं शणापेक्षम् । जरायुर्बहिर्वेष्टनम् । प्रजापतेः सम्बन्धि तत् दीक्षितेन धार्यं वस्त्रमभूत् । उभे अपि गर्भरूपप्रजापतिवद्दीक्षितस्यापि गर्भत्वाद्धार्ये अभूताम् । मेखलाया वसनादान्तरत्वं विधत्ते— अन्तरं वेति । स यथैवेत्यादि । स्पष्टम् ॥ ११ ॥

सा वा इत्यादि । अजाव्यादिरूपमन्नं पितृमातृपुत्रात्मना ‘ त्रिवृद् भवति ’ यतः अतस्तदात्मकत्वान्मेखलाऽपि त्रिगुणा कर्तव्या ॥ १२ ॥

तस्या मुञ्जशाखामिश्रितत्वं विधत्ते—मुञ्जवल्शेनान्वस्ता इति । शरस्य वज्रावयवत्वाद् रक्षोविवासकत्वम् । तथा च तैत्तिरीयकम्— “ इन्द्रो वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् ” ( तै. सं. ६ । २ । ६ । २ ) इत्युपक्रम्य “ येऽन्तःशरा आशीर्यन्त ताः शर्करा अभवन्, तच्छर्कराणां शर्करत्वं वज्रो वै शर्कराः—( तै. सं. ६ । २ । ६ । २ ) इति *। मेखलायाः केशवेणीवन्निर्माणं विधत्ते—स्तुकासर्गं सृष्टा भवतीति । ‘ स्तुका ’ केशवेणी, सा यथा सृज्यते, तथा सृष्टा निर्मिता भवेत् । उक्तप्रकारं प्रशंसितुं प्रकारान्तरयोर्दोषमाह—सा प्रसलवीति । ‘सा’ मेखला ‘ यत् ’ यदि ‘ प्रसलवि सृष्टा ’ दक्षिणपाणेर्व्यापारेण निर्मिता स्यात्, तदा ‘ यथा ’ येन प्रकारेण ‘ अन्याः ’ लौकिक्यः, गवादिबन्धनरज्जवो मानुष्या भवन्ति । एवमियमपि मानुष्येव भवेत् । ‘ यत् ’ यदि ‘ अपसलवि सृष्टा ’ सव्यपाणिनोपरि व्यापृतेन निर्मिता स्यात्, तदा ‘ पितृदेवत्या स्यात् ’ । तस्मात् स्तुकासर्गं सृष्टेत्युपसंहारः ॥ १३ ॥

---

*—शतपथे हविर्यज्ञकांडे १ । अ. २।४।१ । इंद्रो ह यत्र वृत्राय वज्रं प्रजहार । स प्रहृतश्चतुर्द्धाऽभवत् । तस्य स्फ्यस्तृतीयं वा यावद्वा यूपस्तृतीयं वा यावद्वा । रथस्तृतीयं वा यावद्वा । अथ यत्र प्राहरत्तच्छकलोऽशीर्यत । स पतित्वा शरोऽभवत् । तस्माच्छरो नाम यदशीर्यत । एवमु स चतुर्द्धा वज्रोऽभवत् । १ ।

तां पुरिहरते । (त॰) ऊर्गस्याङ्गिरसीत्युङ्गिरसो ह्येतामूर्जमुपश्यन्नूर्णम्रदा ऊर्जं मुयि धेहीति नात्र तिरोहितमिवास्ति ॥ १४ ॥

( स्त्यु ) अथ नीवीमुद्गूहते सोमस्य नीविरसीत्यदीक्षितस्य वाऽअस्यैषाऽग्रे नीविर्भवत्यथात्र दीक्षितस्य सोमस्य तस्मादाह सोमस्य नीविरसीति ॥ १५ ॥

(त्यु ) अथ प्रोर्णुते । गर्भो वाऽएष भवति यो दीक्षते प्रावृता वै गर्भाऽउल्बेनेव जरायुणेव तस्माद्वै प्रोर्णुते ॥ १६ ॥

स प्रोर्णुते । विष्णोः शर्मासि शर्म यजमानस्येत्युभयं वाऽएषोऽत्र भवति यो दीक्षते विष्णुश्च यजमानश्च यदह दीक्षते तद्विष्णुर्भवति यद्यजते तद्यजमानस्तस्मादाह विष्णोः शर्मासि शर्म यजमानस्येति ॥ १७ ॥

---

तां परिहरते । "ऊर्गस्याङ्गिरसी"–( वा. सं. ४ । १० ) इति अङ्गिरसो ह्येतामूर्जमपश्यन् । "ऊर्णम्रदा ऊर्जं मयि धेहि"–( वा. सं. ४ । १० ) इति । नात्र तिरोहितमिवास्ति ॥ १४ ॥

अथ नीविमुद्गूहते–"सोमस्य नीविरसि"–( वा. सं०४ । १० ) इति । अदीक्षितस्य वा अस्यैषाऽग्रे नीविर्भवति, अथात्र दीक्षितस्य सोमस्य । तस्मादाह–सोमस्य नीविरसीति ॥ १५ ॥

अथ प्रोर्णुते । गर्भो वा एष भवति–यो दीक्षते । प्रावृता वै गर्भाः–उल्बेनेव, जरायुणेव । तस्माद्वै प्रोर्णुते ॥ १६ ॥

स प्रोर्णुते–"विष्णोः शर्मासि शर्म यजमानस्य"–( वा० सं० ४।१० ) इति । उभयं वा एषोऽत्र भवति–यो दीक्षते–विष्णुश्च यजमानश्च । यदह दीक्षते तद्विष्णुर्भवति । यद्यजते तद्यजमानः । तस्मादाह–विष्णोः शर्मासि शर्म यजमानस्येति ॥ १७ ॥

---

बन्धनमन्त्रं विधाय व्याचष्टे–तां परिहरत इति । अङ्गिरसो ह्येतामूर्जमिति । अत्र 'हि'–शब्देन श्रुत्यन्तरे प्रसिद्धिराविष्क्रियते । तथा च तैत्तिरीयकम्–"अङ्गिरसः सुवर्गं लोकं यन्त ऊर्जं व्यभजन्त"–( तै. सं. ९ । ४ । २ । ३ ) इत्यादि । अत्र कात्यायनः–" मेखलां बध्नीते वेणीं त्रिवृतं शणमुञ्जमिश्रामन्तरां वासस ऊर्गसीति "–( का. श्रौ. सू. ७ । ८८ ) इति ॥ १४ ॥

वस्त्रान्तस्य समन्त्रकमुद्गूहनमाह–अथ नीविमिति ( नीविं कुरुते सोमस्य नीविरिति का. श्रौ. सू. ७ । ८९ ) । 'अग्रे' सोमयागात् पूर्वम् । अदीक्षितस्य । इदानीं तु 'दीक्षितस्य 'सोमस्य' सोमयागकर्तृत्वाद् दीक्षितो ह्युपचारेण सोम इत्याचक्षते ॥ १५ ॥

वाससा आच्छादनं विधत्ते–अथ प्रोर्णुत इति । ऊर्णुते आच्छादयति ॥ १६ ॥

स प्रोर्णुत इति । आच्छाद्यप्रदेशविशेषः सूत्रे स्पष्टमुक्तः–" शिरः प्रोर्णुते विष्णोः शर्मासीति "–( का.

(त्यु) अथ कृष्णविषाणाᳯं सिचि बध्नीते । देवाश्च वाऽअसुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुर्मन एव देवाऽउपायन्वाचमसुरा यज्ञमेव तद्देवा उपायन्वाचमसुरा अमूमेव देवाऽउपायन्निमामसुराः ॥ १८ ॥

( स्तु ) ते देवा यज्ञमब्रुवन् । ( न्यो ) योषा वा ऽइयं वागुपमन्त्रयस्व ह्वयिष्यते वै त्वेति स्वयं वा हैवैक्षत योषा वाऽइयं वागुपमन्त्रयै ह्वयिष्यते वै मेति तामुपामन्त्रयत सा हास्माऽआरकादिवैवाग्रऽआसूयत्तस्माद्‌ स्त्री पुᳯँसोपमन्त्रिताऽऽरकादिवैवाग्रेऽसूयति स होवाचारकादिव वै मऽआसूयीदिति ॥ १९ ॥

---

अथ कृष्णविषाणां सिचि बध्नीते । देवाश्च वा असुराश्चोभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुः । मन एव देवा उपायन्, वाचमसुराः । यज्ञमेव तद्देवा उपायन्, वाचमसुराः । अमूमेव देवा उपायन्, इमामसुराः ॥ १८ ॥

ते देवा यज्ञमब्रुवन्–' योषा वा इयं वाक् । उपमन्त्रयस्व । ह्वयिष्यते वै त्वा ' इति । स्वयं वा हैवैक्षत । योषा वा इयं वाक् । उपमन्त्रयै । ह्वयिष्यते वै मेति । तामुपामन्त्रयत । सा हास्मा आरकादिवैवाग्र आसूयत् । तस्माद्ध स्त्री पुंसोपमन्त्रिता–आरकादिवैवाग्रेऽसूयति । स होवाच–आरकादिव वै म आसूयीत्–इति ॥ १९ ॥

---

श्रौ. सू. ७ । ९० ) इति । विष्णुशब्दः पुरुषोत्तमे प्रसिद्धः । अथाभिमतमर्थमाह–उभयं वा एष इति ' दीक्षणीयेष्टौ आग्नावैष्णवे हविषि विष्णुर्देवतेति तत्संस्कारसंस्कृतो यजमानोऽपि विष्णुरित्यभिप्रायः ॥ १७ ॥

वस्त्रान्ते कृष्णविषाणाबन्धनमाह–अथ कृष्णविषाणामिति[1] । सिचि सिग् वस्त्रान्तस्तत्र बध्नीयात् । कृष्णविषाणोत्पत्त्यर्थमाख्यायिकामाह–देवाश्च वा असुराश्चेत्यादिना । ' प्राजापत्याः ' प्रजापतेः पुत्राः ' पितुर्दायं ' पैतृकं धनम् । इन्द्रियेषु मध्ये ' मन एव देवाः ' प्राप्ताः, ' वाचम् ' वागिन्द्रियम् ' असुराः ' तथा यज्ञमेव ' देवाः ' उपगताः ' वाचम् ' इन्द्रियरूपाम् ' असुराः ' ' अमूम् ' दिवमेव ' देवाः ' ' इमाम् ' पृथिवीम् ' असुराः ' ॥ १८ ॥

ते देवाः इति । एवं सति देवा वाचोऽपि स्वाधीनत्वकरणाय ' यज्ञम् ' ' एवम् ' अब्रुवन् '–यज्ञ ! ' इयं वाक् ' ' योषा ' स्त्री, त्वं तु पुमान्; तस्मात् ताम् ' उपामन्त्रयस्व ' सम्भोगार्थं सङ्केतेनाह्वय । सापि ' त्वा ' त्वां ह्वयिष्यते आकारयिष्यति ' इति ' अब्रुवन् । तत्तद्वृत्तान्तं जानती श्रुतिर्ब्रूते–न केवलं तेषां वचनमेव, किन्तु 'स्वयं वा ह एव' वाशब्दश्चार्थे, यज्ञः स्वयमपि 'ऐक्षत ' विचारितवान् । ईक्षणप्रकारमनुवदति–योषेति ।

---

१–कात्यायनः । कृष्णविषाणां त्रिवलिं पंचवलिं वोत्तानां दशायां बध्नीते इति ७ । ९१ । अत्र कर्कः । सामर्थ्यपरिप्राप्तित्वाच्चोत्तरसिचि बध्नीत इति नोक्तमिति । ततश्चोत्तरीयप्रांते दशायां कृष्णविषाणाबंधनमिति तात्पर्यम् । काण्वश्रुतिरपि । अथोत्तरसिचि कृष्णविषाणां बध्नीत इति ।

ते होचुः । उपैव भगवो मन्त्रयस्व ह्वयिष्युते वै त्वेति तामुपामन्त्रयत सा हास्मै निपलाशमिवोवाद तस्माद् स्त्री पुꣳसोपमन्त्रिता निपलाशमिवैव वदति स होवाच निपलाशमिव वै मेऽवादीदिति ॥ २० ॥

ते होचुः । ( रु ) उपैव भगवो मन्त्रयस्व ह्वयिष्युते वै त्वेति तामुपामन्त्रयत सा हैनं जुहुवे तस्माद् स्त्री पुमाꣳसꣳ ह्वयतऽएवोत्तमꣳ स होवाचाह्वत वै मेति ॥ २१ ॥

ते देवा ईक्षांचक्रिरे । योषा वाऽइयं वाग्यदेनं न युवितेहैव मा तिष्ठन्तमभ्येहीति ब्रूहि तां तु न आगतां प्रतिप्रब्रूतादिति सा हैनं तदेव तिष्ठन्तमभ्येयाय तस्माद् स्त्री पुमाꣳसꣳसꣳस्कृते तिष्ठन्तमभ्यैति ताꣳ हैभ्य आगतां प्रतिप्रोवाचेयं वाऽआगादिति ॥ २२ ॥

---

ते होचुः—उपैव भगवो मन्त्रयस्व, ह्वयिष्यति वै त्वा—इति । तामुपामन्त्रयत । सा हास्मै निपलाशमिवोवाद । तस्माद् स्त्री पुंसोपमन्त्रिता निपलाशमिवैव वदति । स होवाच—निपलाशमिव वै मेऽवादीदिति ॥ २० ॥

ते होचुः—उपैव भगवो मन्त्रयस्व । ह्वयिष्यते वै त्वा—इति । तामुपामन्त्रयत । सा हैनं जुहुवे । तस्माद् स्त्री पुमांसं ह्वयत एवोत्तमम् । स होवाच—आह्वत वै मेति ॥ २१ ॥

ते देवा ईक्षांचक्रिरे—योषा वा इयं वाक् । यदेनं न युविता—इहैव मा तिष्ठन्तमभ्येहि—इति ब्रूहि । तां तु न आगतां प्रतिप्रब्रूतादिति । सा हैनं तदेव तिष्ठन्तमभ्येयाय । तस्माद् स्त्री पुमांसं संस्कृते तिष्ठन्तमभ्यैति । तां हैभ्य आगतां प्रतिप्रोवाच—इयं वा आगादिति ॥ २२ ॥

---

' मा ' मामपि ' ह्वयिष्यते ' अतः ' उपमन्त्रयै ' अहमिति । उपमन्त्रिता ' सा ' ' अग्रे ' प्रथमवारम् ' आरकात् ' आरमेव आरकम् । ते न च आरकाग्रेण व्यथिता इवेत्यर्थः । आसूयत् आरकाग्रनुन्नो बलीवर्दादिरिवासूयामकरोदित्यर्थः । तस्माद्धिति लोकदृष्टान्तकथनं स्पष्टम् । जातं वृत्तान्तं देवेभ्यो निवेदयति—स होवाचेति ॥ १९ ॥

ते होचुरिति । अथ पुनर्देवैर्याच्यमानो यज्ञः ' तामुपामन्त्रयत ' । ' सा ' अपि ' निपलाशमिव ' निपतितपर्णं वृक्षादिकमिव, तद्यथा केवलं कम्पते, एवं शिरश्चालनेन ' उवाच ' इत्यर्थः । अथवा पलाशनिपतनमिव ओष्ठचालनेनेत्यर्थः । तस्मादित्यादि । पूर्ववत् ॥ २० ॥ २१ ॥

ते देवा इति । तृतीयवारे त्वाहूतवती । आह्वानवृत्तान्तं ज्ञातवन्तो ' देवाः हि ईक्षाञ्चक्रिरे ' कथम् ? ' इयं वाक् योषा;' खलु । अस्तु नामेत्यत आह ' यत् ' यस्मात् ' एनं ' यज्ञम् ' न युविता ' न मिलितवती, अतो न विश्वसितव्येत्यर्थः । एवमीक्षित्वा हे यज्ञ ! तवान्तिके कथं गच्छामि । किन्तु हे वाक् ! त्वं ' इह ' स्थाने ' तिष्ठन्तं ' ' मा ' माम् अभिगच्छ ' इति ब्रूहि ' इत्यब्रुवन् । तथा तामागतां ' वाचं ' नः '

---

१-आरकं-आरा चर्मप्रभेदिका इत्यमरः । चर्मखंडनार्थः शस्त्रभेदः-आरी-इति प्रसिद्धः ।

तां देवाः । (ऽ) असुरेभ्योऽन्तरायँस्ताᳪं स्वीकृत्याग्नावेव परिगृह्य सर्व्वंहुतमजुहवुराहुतिर्हि देवानाᳪं स यामेवामूमनुष्टुभाऽजुहवुस्तदेवैनां तद्देवाः स्व्यकुर्वत तेऽसुरा आत्तवचसो हेऽलवो हेऽलव ऽइति वदन्तः पराबभूवुः ॥ २३ ॥

( स्तु ) तत्रैतामपि वाचमूदुः । ( रु ) उपजिज्ञास्याᳪं स म्लेच्छस्तस्मान्न ब्राह्मणो म्लेच्छेदसुर्या हैषा वागेवमेवैष द्विषताᳪं सपत्नानामादत्ते वाचं तेऽस्यात्तवचसः पराभवन्ति य एवमेतद्वेद ॥ २४ ॥

सोऽयं यज्ञो वाचमभिदध्यौ । मिथुन्येनया स्यामिति ताᳪं संबभूव॥२५॥

---

तां देवा असुरेभ्योऽन्तरायन् । तां स्वीकृत्याग्नावेव परिगृह्य–सर्वहुतमजुहवुः । आहुतिर्हि देवानाम् । स–यामेवामूमनुष्टुभाऽजुहवुः–तदेवैनां तद्देवाः स्व्यकुर्वत । तेऽसुरा आत्तवचसो–हेलवो हेलव इति वदन्तः पराबभूवुः ॥ २३ ॥

तत्रैतामपि वाचमूदुरुपजिज्ञास्याम् । स म्लेच्छः । तस्मान्न ब्राह्मणो म्लेच्छेत् । असुर्या हैषा वाक् । एवमेवैष द्विषतां सपत्नानामादत्ते वाचम् । तेऽस्यात्तवचसः परा–भवन्ति–य एवमेतद्वेद॥२४॥

सोऽयं यज्ञो वाचमभिदध्यौ–मिथुन्येनया स्यामिति । तां संबभूव ॥ २५ ॥

---

अस्माकं 'प्रतिप्रब्रूतात्' निवेदयतु 'इति' च अब्रुवन् । साप्याकारिता 'तदेव' तत्र सङ्केतप्रदेशे तिष्ठन्तमेव यज्ञमभिगता । अथ स यज्ञो वागागतेति देवेभ्यः प्रोवाच ॥ २२ ॥

तां देवा इति । 'तां' वाचं 'देवाः' 'असुरेभ्यः' 'अन्तरायन्' तया वर्जितानकुर्वन् । 'स्वीकृत्य' चाग्निमुखमन्तरेण स्वभोगायोगात् 'अग्नावेव' 'ताम्' वाचम् 'अनुष्टुभा' "विश्वो देवस्य नेतुः"–इत्येतया कृत्वा यथा पुनरसुराणां निराशा भवति तथा सर्वतः 'अजुहवुः' । केवला किं न स्वीकृतेत्यत आह–आहुतिर्हीति । आहुतिरूपेणाग्नौ दत्तमेव देवानां प्रियमित्यर्थः । अथ 'ते असुराः' 'आत्तवचसः' देवैः स्वीकृतवचसः "हे अरयः हे अरयः"–इत्युच्चारयितुमशक्ताः "हेऽलवः हेऽलवः" 'इति वदन्तः' पराभूताः ॥ २३ ॥

प्रसङ्गात् कञ्चिद् वाग्विषयं नियममाह–तत्रेति । 'उपजिज्ञास्यां' ज्ञातव्यां सन्दिग्धां वाचम् 'ऊचुः' उक्तवन्तोऽसुराः । 'स म्लेच्छः' सन्दिग्धार्थस्यापभ्रंशरूपस्य वचसो भाषणं यत्, तन्म्लेच्छमित्यर्थः । यद्वा य ईदृशीं वाचं वदति स म्लेच्छः । 'तस्मात् न म्लेच्छेत्' म्लेच्छो न भवेत्, तदीयामपार्थिकां भाषां नब्रूयादित्यर्थः । 'असुर्या' असुरेष्वाहिता । उक्तार्थपरिज्ञानं प्रशंसति–एवमेवैष इति । 'अस्य' सपत्नाः, अनेन ज्ञात्रा अपहृतवचसः सन्तः 'पराभवन्ति' ॥ २४ ॥

यदर्थमाख्यायिका प्रपञ्चिता, तमर्थं विधातुमाह–सोऽयं यज्ञ इति । अभिध्यानप्रकारः प्रदर्श्यते–मिथुनीति । 'सम्बभूव' सङ्गतोऽभूत् ॥ २५ ॥

---

१–'आत्तवाचसः'–इति वैदिकपाठपुस्तके पाठः । २–' पातञ्जलिमहाभाष्ये पस्पशायां तु हेऽलयो–हेऽलयः' इति पाठो दृश्यते ।

( वे ) इन्द्रो ह वाऽईक्षांचक्रे । महद्वाऽइतोऽभ्वं जनिष्यते यज्ञस्य च मिथुनाद्वाचश्च यन्मा तन्नाभिभवेदिति सऽइन्द्र एव गर्भो भूत्वैतन्मिथुनं प्रविवेश ॥ २६ ॥

स ह संवत्सरे जायमान ईक्षांचक्रे । महावीर्या वाऽइयं योनिर्या मामदीधरत यद्वै मेतो महद्देवाभ्वं नानुप्रजायेत यन्मा तन्नाभिभवेदिति ॥ २७ ॥

तां प्रतिपरामृश्यावेष्ट्याच्छिनत् । ( त्वां ) तां यज्ञस्य शीर्षन्प्रत्यदधाद्यज्ञो हि कृष्णः स यः स यज्ञस्तत्कृष्णाजिनं योषा योनिः सा कृष्णविषाणाऽथ यदेनामिन्द्रऽआवेष्ट्याच्छिनत्तस्मादावेष्टितेव स यथैवातऽइन्द्रोऽजायत गर्भो भूत्वैतस्मान्मिथुनादेवमेवैषोऽतो जायते गर्भो भूत्वैतस्मान्मिथुनात् ॥ २८ ॥

---

इन्द्रो ह वा ईक्षाञ्चक्रे—महद्वा इतोऽभ्वं जनिष्यते—यज्ञस्य च मिथुनात्, वाचश्च—यन्मा तन्नाभिभवेदिति । स इन्द्र एव गर्भो भूत्वैतन्मिथुनं प्रविवेश ॥ २६ ॥

स ह संवत्सरे जायमान ईक्षाञ्चक्रे । महावीर्या वा इयं योनिः या मामदीधरत । यद्वै मेतो महद्देवाभ्वं, नानुप्रजायेत, यन्मा तन्नाभिभवेदिति ॥ २७ ॥

तां प्रतिपरामृश्यावेष्ट्याच्छिनत् । तां यज्ञस्य शीर्षन्प्रत्यदधात् । यज्ञो हि कृष्णः । स यः स यज्ञः—तत्कृष्णाजिनम् । योषा योनिः सा कृष्णविषाणा । अथ यदेनामिन्द्र आवेष्ट्याच्छिनत् । तस्मादावेष्टितेव । स यथैवात इन्द्रोऽजायत गर्भो भूत्वैतस्मान्मिथुनाद्—एवमेवैषोऽतो जायते गर्भो भूत्वैतस्मान्मिथुनात् ॥ २८ ॥

---

इन्द्रो ह वा इति । 'इतः' अस्मात् 'मिथुनात्' 'अभ्वम्' अपत्यं यज्ञवाचोर्मिथुनात् 'यत्' 'जनिष्यते' 'तत्' तस्मात् 'मा' मां 'नाभिभवेत्' इति । एवमीक्षित्वा अन्योत्पत्तिभयात् 'सः इन्द्रः एव' वाग्योन्यां स्वयं 'गर्भो' भूत्वा प्रविष्टः ॥ २६ ॥

स ह संवत्सर इति । तत्र संवत्सरमुषित्वा अजायत । मामदीधरतेति । स्वसामर्थ्याविष्करणम्, तच्च योनेर्बहुवीर्यत्वप्रशंसनायोपयुज्यते । एतस्मान्मिथुनान्मामनु अन्यन्महत् 'अभ्वं' अपत्यं नोत्पद्येत तद्यद्युत्पद्येत तन्मामभिभवेदिति विचार्य ॥ २७ ॥

तां परामृश्येति । प्रतिपरामृश्येति । 'प्रतिपरामृश्य' योनिदेशे किमुत्पादकमिति विचार्य 'ताम्' 'आवेष्ट्य' हस्तेनावेष्टनं कृत्वाऽऽच्छिद्य 'अदधात्' यज्ञशिरसि स्थापितवान् । यज्ञशब्दार्थमाह—यज्ञो हि कृष्ण इति । 'हि'—शब्देन "यज्ञो देवेभ्यो निलायत कृष्णो रूपं कृत्वा"—इत्यादि श्रुतिप्रसिद्धिरभिधीयते । अतः प्रसिद्धो 'यः' 'कृष्णः' मृगोऽस्ति, 'स' एव निदानेन 'यज्ञः', 'तत्' एव यजमानेन धार्यं 'कृष्णाजिनम्' तस्या वाचो 'योनिः' । 'सा कृष्णविषाणा' याऽन्या । कृष्णविषाणाधारणे लिङ्गं दर्शयति—यदेनामिति । उक्तार्थज्ञं प्रशंसति—स यथैवात इति ॥ २८ ॥

---

१—'कृष्णविषाणाभावे'—इति क० पा० ।

( त्वां ) तां वाऽउत्तानामिव बध्नाति । ( त्यु ) उत्तानेव वै योनिर्गर्भं बिभ-र्त्त्यथ दक्षिणां भ्रुवमुपर्युपरि ललाटमुपस्पृशतीन्द्रस्य योनिरसीतीन्द्रस्य ह्येषा योनिरतो वा ह्येनां प्रविशन्प्रविशत्यतो वा जायमानो जायते तस्मा-दाहेन्द्रस्य योनिरसीति ॥ २९ ॥ [ शतम् १५०० ]

( त्य ) अथोल्लिखति । सुसस्याः कृषीस्कृधीति यज्ञमेवैतज्जनयति यदा वै सुषमं भवत्यथालं यज्ञाय भवति यदो दुःषमं भवति न तर्ह्यात्मने च नालं भवति तद्यज्ञमेवैतज्जनयति ॥ ३० ॥

( त्यु ) अथ न दीक्षितः । काष्ठेन वा नखेन वा कण्डूयेत गर्भो वाऽएष भवति यो दीक्षते यो वै गर्भस्य काष्ठेन वा नखेन वा कण्डूयेदपास्यन्म्रि-त्येत्ततो दीक्षितः पामनो भवितोर्दीक्षितं वाऽअनु रेताꣳसि ततो रेताꣳसि

---

तां वा उत्तानामिव बध्नाति । उत्तानेव वै योनिर्गर्भं बिभर्ति । अथ दक्षिणां भ्रुवमुपर्युपरि ललाट-मुपस्पृशति । "इन्द्रस्य योनिरसि"–( वा. सं. ४ । १० ) इति । इन्द्रस्य ह्येषा योनिः । अतो वा ह्येनां प्रविशन्प्रविशति । अतो वा जायमानो जायते । तस्मादाह–इन्द्रस्य योनिरसीति ॥ २९ ॥

अथोल्लिखति–"सुसस्याः कृषीस्कृधि"–( वा.सं. ४।१० ) इति । यज्ञमेवैतज्जनयति । यदा वै सुषमं भवति–अथालं यज्ञाय भवति । यदो दुःषमं भवति–न तर्ह्यात्मने च नालं भवति । तद्यज्ञमेवैतज्जनयति ॥ ३० ॥

अथ न दीक्षितः काष्ठेन वा नखेन वा कण्डूयेत । गर्भो वा एष भवति–यो दीक्षते । यो वै गर्भस्य काष्ठेन वा नखेन वा कण्डूयेद्–अपास्यन्म्रित्येत् । ततो दीक्षितः पामनो भवितोः । दीक्षितं

---

तस्या बन्धने ऊर्ध्वमुखत्वं विधत्ते–तां वा इति । योनिर्यद्यधोमुखं गर्भं बिभृयात्, तदा पतेदेव, अत उत्तानभरणं सिद्धम्; तत्साधर्म्यात् 'ताम्' 'उत्तानाम्' बध्नीयात् । बन्धनप्रकारमाह–'दक्षिणां भ्रुवम्' आरभ्य ललाटस्येषदुपरिप्रदेशं स्पृशेत् । अत्र सूत्रम्–"कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां दशायां बध्नीते, तया कण्डूयनम्, उपस्पृशत्येनया दक्षिणस्या भ्रुव उपरीन्द्रस्य योनिरिति"–( का. श्रौ. सू. ७ । ९१–९२–९३ ) इति । मन्त्रं व्याचष्टे–इन्द्रस्येति । 'अतो हि' अस्या योनेः सकाशात् खलु 'प्रविशति' गर्भरूपेणेन्द्रः । अतो गर्भप्रवेशनिर्गमयोः साधनत्वादिन्द्रस्य योनित्वं सिद्धम् ॥ २९ ॥

तथा भूमेरुपरि समन्त्रकमुल्लेखनं विधत्ते–अथोल्लिखतीति । ( का. श्रौ. सू. ७ । ९४ ) 'कृषीः' कृष्ट-स्थलीः समृद्धसस्याः 'कृधीति' मन्त्रार्थः । कृषीस्कृधि–इत्यत्र कस्कादित्वात् षत्वम् ( पा. सू. ८ । ३ । ४८ ) 'एतत्' एतेनोल्लेखनेन । स्पष्टमन्यत् । यदा वा इति । 'यदा' खलु सुषमं कृष्यादिसम्पत्त्या 'सुषमं' सुखप्रदः संवत्सरो 'भवति' तदैव यज्ञोऽनुष्ठानाय प्रभवति; यदा उक्तवैपरीत्येन 'दुःषमं' दुःखहेतुः संवत्सरो भवति तदा 'आत्मने' स्वशरीररक्षणायापि न प्रभवति, का कथा यज्ञस्येति ॥ ३० ॥

कृष्णविषाणया कण्डूयनप्रशंसनार्थं साधनान्तरं निन्दति–अथ न दीक्षित इति । 'यः कश्चिद्' 'गर्भस्य'

---

१–भूमौ चोल्लिखति सुसस्या इति ।

पामनानि जनितोः स्वा वै योनी रेतो न हिनस्त्येषा वाऽएतस्य स्वा योनिर्भवति यत्कृष्णविषाणा तथो हैनमेषा न हिनस्ति तस्माद्दीक्षितः कृष्णविषाणयैव कण्डूयेत नान्येन कृष्णविषाणायाः ॥ ३१ ॥

( ऽ ) अथास्मै दण्डं प्रयच्छति । वज्रो वै दण्डो विरक्षस्तायै ॥ ३२ ॥

( याऽओ ) औदुम्बरो भवति । ( त्य ) अन्नं वाऽऊर्गुदुम्बर ऊर्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरो भवति ॥ ३३ ॥

मुखसंमितो भवति । ( त्ये ) एतावद्वै वीर्यथं॒ स यावदेव वीर्यं तावांस्तद्भवति यन्मुखसंमितः ॥ ३४ ॥

(स्त) तमुच्छ्रयति । (त्य) उच्छ्रयस्व वनस्पतऽऊर्ध्वो मा पाह्यथं॒हस

---

वा अनु रेतांसि । ततो रेतांसि पामनानि जनितोः । स्वा वै योनी रेतो न हिनस्ति । एषा वा एतस्य स्वा योनिर्भवति—यत्कृष्णविषाणा । तथो हैनमेषा न हिनस्ति । तस्माद्दीक्षितः कृष्णविषाणयैव कण्डूयेत नान्येन कृष्णविषाणायाः ॥ ३१ ॥

अथास्मै दण्डं प्रयच्छति । वज्रो वै दण्डः । विरक्षस्तायै ॥ ३२ ॥

औदुम्बरो भवति । अन्नं वा ऊर्क् । उदुम्बर ऊर्जः । अन्नाद्यस्यावरुध्यै । तस्मादौदुम्बरो भवति ॥ ३३

मुखसंमितो भवति । एतावद्वै वीर्यम् । स यावदेव वीर्यं-तावांस्तद्भवति यन्मुखसंमितः ॥ ३४ ॥

तमुच्छ्रयति—" उच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यंहसः । आस्य यज्ञस्योदृचः "—( वा. सं. ४।१० ) इति । ऊर्ध्वो मा गोपाय आस्य यज्ञस्य संस्थाया इत्येवैतदाह ॥ ३५ ॥

---

इति कर्मणि षष्ठी । गर्भं काष्ठादिना विकर्षेत्, तदा स ' गर्भः ' अपगच्छन् मृतिं प्राप्नुयात् ततोऽन्यस्य साधनस्य दुष्टत्वात्तेन विकर्षमाणः ' दीक्षितः पामनो भवितोः ' । ' पामा ' विचर्चिका, मत्वर्थीयो नः ( पा. सू. ५ । २ । १०० ) तद्वान् भवितुं समर्थो भवतीत्यर्थः । न केवलं दीक्षितः स्वयमेव पामनो भवति किन्तु तदुत्पन्नाः पुत्रा अपि तादृशा भवन्तीत्याह—दीक्षितं वा अन्विति । विपक्षे दोषमुक्त्वा स्वपक्षे तदभावं दर्शयितुमाह—स्वा वा इति । कृष्णविषाणाया योनित्वात्, दीक्षितस्य गर्भत्वात्, हिंसाभावाय ' कृष्णविषाणयैव ' कण्डूयेत इति विधिः ( का. श्रौ. सू. ७ । ९२ ) ॥ ३१ ॥

अथ दण्डेन दीक्षां विधत्ते—अथास्मा इति । प्रहारसाधनत्वाद्दण्डस्य वज्रत्वम् ॥ ३२ ॥

औदुम्बरो भवतीति । ' ऊर्क् ' बलकररसरूपम ' अन्नम् ' उदुम्बरस्योक्तरूपत्वं तैत्तिरीयक आम्नातम् " देवा वा ऊर्जं व्यभजन्त तत उदुम्बर उदतिष्ठत् " इति ( तै. ब्रा. १ । १ । ३ । १० ) ॥ ३३ ॥

मुखसम्मित इत्यादि ( का० श्रौ० सू० ७ । ९५ । ) स्पष्टम् । मुखपर्यन्तम् । प्रत्यंगे वीर्यसम्भवात् ततोऽधः कण्ठादिसम्मितं न कुर्यादित्यर्थः ॥ ३४ ॥

दण्डस्योच्छ्रयणं समन्त्रकं विधत्ते—तमुच्छ्रयतीति ( का० श्रौ० सू० ७ । ९६ ) । उदक्छन्दस्य समाप्ति-

---

१—कच्छ्वां तु पाम पामा विचर्चिकेत्यमरः । इति चतुष्कं—खर्जूविशेषस्य (ओलीखरूज) इति ख्यातस्य । २—मुखसंमितमौदुम्बरं दण्डम्प्रयच्छति । ३—उच्छ्रयस्वेत्येनमुच्छ्रयति ।

आस्य यज्ञस्योदृच ऽइत्यूर्ध्वो मा गोपायास्य यज्ञस्य सᳬंस्थाया इत्येवैतदाह ॥ ३५ ॥

( ह्रा ) अत्र हैके । ( केऽङ्गु ) अङ्गुलीश्च न्युचन्ति व्वाचं च यच्छन्त्युतो हि न किंच नु जपिष्यन्भवतीति व्वदन्तस्तदु तथा नु कुर्याद्यथा पराञ्चं धावन्तमनुलिप्सेत तं नानुलभेतैवᳫं ह स यज्ञं नानु लभते तस्मादमुत्रै-वाङ्गुलीर्न्युचेदमुत्र व्वाचं यच्छेत् ॥ ३६ ॥

( हु ) अथ यद्दीक्षितः । ( ऽ ) ऋचं वा यजुर्वा साम वाऽभिव्याहरत्य-भिस्थिरमभिस्थिरमेवैतद्यज्ञमारभते तस्मादमुत्रैवाङ्गुलीर्न्युचेदमुत्र व्वाचं यच्छेत् ॥ ३७ ॥

( हु ) अथ यद्वाचं यच्छति । व्वाग्वै यज्ञो यज्ञमेवैतदात्मन्धत्तेऽथ यद्वाचं-यमो व्याहरति तस्मादु हैष व्विसृष्टो यज्ञः पराङावर्तते तत्रो व्वैष्णवी-

---

अत्र हैके अंगुलीश्च न्यचन्ति, वाचं च यच्छन्ति, अतो हि किंच जपिष्यन्भवतीति वदन्तः । तद्रु तथा न कुर्याद् । यथा पराञ्चं धावन्तमनुलिप्सेत–तं नानुलभेत–एवं ह स यज्ञं नानुलभते । तस्मादमुत्रैवांगुलीर्न्यचेद्, अमुत्र वाचं यच्छेत् ॥ ३६ ॥

अथ यद्दीक्षितः ऋचं वा यजुर्वा साम वा व्याहरति–अभिस्थिरमभिस्थिरमेवैतद्यज्ञमारभते । तस्मादमुत्रैवांगुलीर्न्यचेदमुत्र वाचं यच्छेत् ॥ ३७ ॥

अथ यद्वाचं यच्छति । वाग्वै यज्ञः । यज्ञमेवैतदात्मन्धत्ते । अथ यद्वाचंयमो व्याहरति । तस्माद्रु

---

वाचकत्वप्रकारोऽसकृत् प्रदर्शितः श० प० ३ । १ । १ । १२ भाष्ये तथा श० प० ३ । १ । ३ । २३, भाष्ये ॥ ३५ ॥

दर्भैः पावनान्तरं मुष्टीकरणवाग्यमावुक्तौ । स एव स्वाभिमतः कालः । स्वाभिमतत्वश्चात्र 'वाचं च यच्छन्ति' इति चकारेणावगम्यते, दण्डदीक्षानन्तरं तयोः काल इतीमं केषाञ्चित् पक्षमुपन्यस्य तेषामभिप्रायमाविष्कृत्य स्वपक्षमुपसंहरति–अत्र हैक इत्यादिना । 'अतो' हि ' अस्माद्दण्डग्रहणकालादूर्ध्वकाले किञ्चिदपि ' न जपिष्यन् भवति ' जप्यस्य च सर्वस्य पूर्वमेव निष्पन्नत्वादिति भावः । यथा पराञ्चमिति । तेषां पक्षे दोषप्रदर्शनं परावृत्तस्य पुनर्ग्रहणं दुर्घटमिति । 'अमुत्रैव' प्रागुक्ते ( श. प. ३ कां. १ अ. ३ ब्रा २९–२७ कं ) काले, दर्भपावनानन्तरमेव कर्तव्यमित्यर्थः ॥ ३६ ॥

स्वपक्षे गुणान्तरमाह–अथ यद्दीक्षित इति । चाञ्चल्यकारणस्य व्यर्थवचसो नियमितत्वेन . ऋगादिमन्त्रा-भिव्याहरणसमयस्यैव स्थैर्योपादानान्मन्त्रोच्चारणकृतो न वाङ्नियमस्य भङ्ग इति प्रागेव कर्तव्यम् । कात्यायनस्तु दण्डधारणानन्तरं वाग्यमनमपि विकल्पेनोक्तवान् " अत्र वा मुष्टिकरणवाग्यमने "–(का.श्रौ.सू.७।९८) इति॥ ३७॥

गृहीतवचसः पुनर्वाग्व्यवहारे प्रायश्चित्तमभिधातुं वाग्यमनस्य प्रयोजनमाह–अथ यदिति । 'वैष्णवीमृचम्'

---

१–' अथवा –' इ. पा. ।

मृचं वा यजुर्वा जपेद्यज्ञो वै विष्णुस्तद्यज्ञं पुनरारभते तस्यो हैषा प्रायश्चित्तिः ॥ ३८ ॥

(र) अथैक उद्वदति । दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मण इति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्यो यो यज्ञं प्रापदित्ययं युष्माकैकोऽभूत्तं गोपायतेत्येवैतदाह त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञः ॥ ३९ ॥

(ज्रो२) अथ यद्ब्राह्मण इत्याह । (ह्रा) अनद्धेव वाऽअस्यातः पुरा जानं भवतीदꣳ ह्याहू रक्षाꣳसि योषितमनुसचन्ते तदुत रक्षाꣳस्येव रेत ऽआदधतीत्यथात्राद्धा जायते यो ब्रह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद् ब्रह्मणो हि जायते यो यज्ञाज्जायते तस्मादाहुर्न सवनकृतꣳ हन्यादेनस्वी हैव सवनकृतेति ॥ ४० ॥

इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ १ ॥ ५ ॥ ( २ । १ )

प्रथमः प्रपाठकश्च समाप्तः ॥ कण्डिकासंख्या ॥ ११४ ॥

---

हैष विसृष्टो यज्ञः पराङावर्तते । तत्रो वैष्णवीमृचं वा यजुर्वा जपेत् । यज्ञो वै विष्णुः । तद्यज्ञं पुनरारभते । तस्यो हैषा प्रायश्चित्तिः ॥ ३८ ॥

अथैक उद्वदति—दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मण इति । निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयति । अयं महावीर्यो यो यज्ञं प्रापदिति । अयं युष्माकैकोऽभूत्—तं गोपायत इत्येवैतदाह । त्रिष्कृत्व आह । त्रिवृद्धि यज्ञः ॥ ३९ ॥

अथ यद् ब्राह्मण इत्याह । अनद्धेव वा अस्यातः पुरा जानं भवति । इदं ह्याहुः--रक्षांसि योषितमनुसचन्ते; तदुत रक्षांस्येव रेत आदधतीति । अथात्राद्धा जायते--यो ब्रह्मणो—यो यज्ञाज्जायते । तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात् । ब्रह्मणो हि जायते--यो यज्ञाज्जायते । तस्मादाहुः--न सवनकृतं हन्यात्--एनस्वी हैव सवनकृतेति ॥ ४० ॥

---

"इदं विष्णुर्विचक्रमे" (ऋ० सं० १ । २२ । १७ । वा. सं. ५ । १५ । ११) इत्येवमादिकाम् ॥३८॥

अध्वर्युकर्तृकं दीक्षितावेदनं विधत्ते—**अथैक उद्वदतीति** । 'एकः' अध्वर्युः 'उद्वदति' उच्चैरावेदयति । 'अयं ब्राह्मणः दीक्षितः' दीक्षणीयेष्टिकृष्णाजिनादिदीक्षासंस्कारेण संस्कृतः 'इति' । 'अयं महावीर्यः' इत्येतत् पूर्वं व्याख्यातम् । सूत्रे तु अध्वर्युव्यतिरिक्तेन कर्त्रा आवेदनमुक्तम् । "अन्यो दीक्षितोऽयं ब्राह्मण इत्याह त्रिरुच्चैः"—( का. श्रौ. सू. ७ । १०४ ) इति । "अन्यशब्दोऽध्वर्युसन्निकर्षादाध्वर्यवसमाख्यानबलात् प्रतिप्रस्थातृपरः, उच्चैरित्यनेन चानुपांशुपक्षः सूचितः"—इति कर्कोपाध्यायेन व्याख्यातम् । तस्य चावेदनवाक्यस्य त्रिरावृत्तिं विधत्ते—**त्रिष्कृत्व** इति ॥ ३९ ॥

आवेदनवाक्यगतस्य ब्राह्मणपदस्य प्रयोजनमाह—**अथ यद्ब्राह्मण** इति । 'अतः' 'अस्याः' दीक्षायाः 'पुरा' 'जानम्' जन्म 'अनद्धेव' अविनिश्चितमिव 'भवति' अनद्धात्वे कारणमाह—**इदं ह्याहुरिति** । 'इदं'

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।
# द्वितीयाध्याये च द्वितीयं ब्राह्मणम् ॥

वाचं यच्छति । स वाचंयमऽआस्तऽआस्तमयात्तद्यद्वाचं यच्छति ॥ १॥
यज्ञेन वै देवाः । (ऽ) इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं नऽ-
इदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु
मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेने-
नायोपयंस्तस्माद्यूपो नाम ॥ २ ॥
तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञः सम्भृतऽएवं
वाऽएष यज्ञꣳ सम्भरति यो दीक्षते वाग्वै यज्ञः ॥ ३ ॥
( स्ता ) तामस्तमिते वाचं विसृजते । संवत्सरो वै प्रजापतिः प्रजा-
पतिर्यज्ञोऽहोरात्रे वै संवत्सरऽएते ह्येनं परिप्लवमाने कुरुतः सोऽहन्न-

---

अथ दीक्षितधर्माः ।

वाचं यच्छति । स वाचंयम आस्ते–आस्तमयात् । तद्यद्वाचं यच्छति ॥ १ ॥

यज्ञेन वै देवा इमां जितिं जिग्युः–यैषामियं जितिः । ते होचुः–कथं न इदं मनुष्यैरनभ्यारोह्यं स्यादिति । ते यज्ञस्य रसं धीत्वा–यथा मधु मधुकृतो निर्धयेयुः–विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन् । अथ यदेनेनायोपयन्–तस्माद्यूपो नाम ॥ २ ॥

तद्वा ऋषीणामनुश्रुतमास । ते यज्ञं समभरन् । यथाऽयं यज्ञः सम्भृतः–एवं वा एष यज्ञं सम्भरति यो दीक्षते । वाग्वै यज्ञः ॥ ३ ॥

तामस्तमिते वाचं विसृजते । संवेत्सरा वै प्रजापतिः । प्रजापतिर्यज्ञः । अहोरात्रे वै संवत्सरः ।

---

वक्ष्यमाणम् ' आहुः ' अभिज्ञाः । यतो राक्षसाः स्त्रियम् अनुसचन्ते अनुसंश्रवयन्ति गर्भाधानसमये ' रेतः ' च ' आदधति, ' अतो योनितो जन्यते । ब्राह्मण इत्यस्य व्याख्यानं–यज्ञादिति । यज्ञशब्दाभिधेयाद्ब्रह्मणो जातत्वाद् ' ब्राह्मण '–शब्दव्यवहारः । अत एव राजन्यवैश्ययोरपि दीक्षितयोः " दीक्षितोऽयं ब्राह्मणः "–( का. श्रौ. सू. ७।१०९ ) इत्येवं ब्रूयात् । यज्ञजन्मप्रशंसार्थं कञ्चिन्नियममाह–न सवनकृतमिति । 'सवनकृतं' अभिषवकर्तारं यष्टारं त्रैवर्णिकेष्वन्यतममपीत्यर्थः । ' सवनकृता ' सवनकृता निमित्तेन, तद्वधेनेत्यर्थः ॥ ४० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे
द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ ( ३–२–१ )

गृहीतस्य वचसो विसर्गकालविधानाय पुनरनुवदति–वाचं यच्छतीति । ( का. श्रौ. सू. ७।१०६ ) ॥१॥

वाग्यमनं प्रशंसितुमाख्यायिकामाह–यज्ञेन वै देवा इत्यादिना ( श. प. ब्रा. १ । ६ । २ । १) । एतत्प्राग् व्याख्यातम् ॥ २ ॥ ३ ॥

वाग्विमोकं विधत्ते–तामस्तमिते वाचमिति ( का. श्रौ. सू. ७।१०७) । अस्तमयानन्तरभावित्वं वाग्विमो-

---

१–ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेः । २–आस्तमयाद्वाचं यच्छति । ३–अस्तमिते दीक्षित वाचं विसृजस्व परिन वाचं विसृजस्वेति त्रिराह ।

दीक्षिष्ट स रात्रिं प्रापत्स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतदाप्त्वा वाचं विसृजते ॥ ४ ॥

तद्धैके । नक्षत्रं दृष्ट्वा वाचं विसर्जयन्त्यत्रानुष्ठ्याऽस्तमितो भवतीति वदन्तस्तदु तथा न कुर्यात्क ते स्युर्यन्मेघः स्यात्तस्माद्यत्रैवानुष्ठ्याऽस्तमितं मन्येत तदेव वाचं विसर्जयेत् ॥ ५ ॥

(द) अनेनो हैके वाचं विसर्जयन्ति । भूर्भुवः स्वरिति यज्ञमाप्याययामो यज्ञꣳ संदध्म इति वदन्तस्तदु तथा न कुर्यान्न ह स यज्ञमाप्याययति न संदधाति य एतेन वाचं विसर्जयति ॥ ६ ॥

(त्य) अनेनैव वाचं विसर्जयेत् । (द्र) व्रतं कृणुत व्रतं कृणुताग्नि-

---

एते ह्येनं परिप्लवमाने कुरुतः । सोऽहन्नदीक्षिष्ट, स रात्रिं प्रापत् । स यावानेव यज्ञो, यावत्यस्य मात्रा— तावन्तमेवैतदाप्त्वा वाचं विसृजते ॥ ४ ॥

तद्धैके—नक्षत्रं दृष्ट्वा वाचं विसर्जयन्ति—अत्रानुष्ठ्याऽस्तमितो भवतीति वदन्तः । तदु तथा न कुर्यात्—क ते स्युः—यन्मेघः स्यात् । तस्माद्यत्रैवानुष्ठ्याऽस्तमितं मन्येत—तदेव वाचं विसर्जयेत् ॥ ५॥

अनेनो हैके वाचं विसर्जयन्ति—भूर्भुवः स्वः—इति । यज्ञमाप्याययामः, यज्ञं संदध्मः—इति वदन्तः । तदु तथा न कुर्यात् । न ह स यज्ञमाप्याययति, न संदधाति—य एतेन वाचं विसर्जयति॥ ६॥

अनेनैव वाचं विसर्जयेत्—"व्रतं कृणुत,व्रतं कृणुताग्निर्ब्रह्माऽग्निर्यज्ञो वनस्पतिर्यज्ञियः"—

---

कस्य प्रशंसति—संवत्सरो वा इति । 'एते' एव 'अहोरात्रे' 'परिप्लवमाने' पुनः पुनरावर्तमाने 'एनं' संवत्सरं 'कुरुतः' निष्पादयतः । 'सः' उक्तलक्षणः 'प्रजापतिः' पुरा स्वयज्ञसमये 'अहन्' अहनि 'अदीक्षिष्ट' लुङ् (पा. सू. ३ । ३ । ११०) दीक्षितवान् । कृतदीक्षः 'सः' प्रजापतिः, 'रात्रिम्' 'प्रापत्' प्राप्तवान् । दीक्षितोपलक्षितां वाचं रात्रिपर्यन्तमन्ववर्तयदित्यर्थः । अतस्तावत्पर्यन्तं वाग्यमनं कुर्वन् दीक्षितो 'यावान्' 'यज्ञः' संवत्सर—प्रजापत्यात्मकोऽस्ति, 'अस्य' च 'यावती' 'मात्रा' परिमितिरस्ति, 'तावन्तं' सकलमपि 'एतत्' एतेन नियमेन 'आप्त्वा' 'वाचं' विसृष्टवान् भवति ॥ ४ ॥

वाग्विमोके केषाञ्चित्पक्षमाह—तद्धैक इति (आ. श्रौ. सू. १० । १६ । १)। 'अत्र' नक्षत्रदर्शन-काले । 'अनुष्ठ्या' सम्यगित्यर्थः । सर्वैः प्रज्ञातत्वेन सूर्यः 'अस्तमितो भवतीति' 'वदन्तः' । तमिमं पक्षं दूषयति—तदु तथेति । 'ते' तथाऽनुष्ठातारो यदि 'मेघः' नक्षत्राच्छादकः 'स्यात्,' तर्हि 'क स्युः' कुत्र वाग्विसर्गकर्तारो भवेयुः । 'तस्माद्' 'यत्र' काले 'अस्तमितम्' 'अनुष्ठ्या सम्यक् प्रज्ञातं' 'मन्येत' तदैव परित्यजेत्; न नक्षत्रोदये वाग्विसर्गः ॥ ५ ॥

मन्त्रविषये केषाञ्चित् पक्षमनूद्य निराचष्टे—अनेनो हैक इति ('भूर्भुवः स्वरिति वा' का.श्रौ.सू. ७।१०९)। यज्ञाप्यायनसन्धानयोस्तन्मन्त्रे स्फुटमप्रतिभानात् 'न ह' इत्युक्तम् ॥ ६ ॥

अतः स्वाभिप्रेतमाह—अनेनैवेति । अत्र व्रतं कृणुतेत्यस्य व्रतग्रहणार्थत्वं सामर्थ्यादवसेयम् । वीप्सया तत्तु

ब्रह्माऽग्निर्यज्ञो वनस्पतिर्यज्ञियऽइत्येषु ह्यस्यात्र यज्ञो भवत्येतद्धविर्यथा पुराऽग्निहोत्रं तद्यज्ञेनैवैतद्यज्ञꣳ सम्भृत्य यज्ञे यज्ञं प्रतिष्ठापयति यज्ञेन यज्ञꣳ संतनोति संततꣳ ह्येवास्यैतद्व्रतं भवत्या सुत्यायै त्रिष्कृत्वऽआह त्रिवृद्धि यज्ञः ॥ ७ ॥

( ज्ञोऽथा ) अथाग्निमभ्यावृत्य वाचं विसृजते । न ह स यज्ञमाप्याययति न संदधाति योऽतोऽन्येन वाचं विसृजते स प्रथमं व्याहरन्त्सत्यं वाचोऽभिव्याहरति ॥ ८ ॥

( त्य ) अग्निर्ब्रह्मेति । ( त्य ) अग्निर्ह्येव ब्रह्माऽग्निर्यज्ञऽइत्यग्निर्ह्येव यज्ञो वनस्पतिर्यज्ञियऽ इति वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन्यद्वनस्पतयो न स्युस्तस्मादाह वनस्पतिर्यज्ञिय इति ॥ ९ ॥

---

( वा. सं. ४ । ११ ) इति । एष ह्यस्यात्र यज्ञो भवति, एतद्धविः—यथा पुराऽग्निहोत्रम् । तद् यज्ञेनैवैतद्यज्ञं सम्भृत्य, यज्ञे यज्ञं प्रतिष्ठापयति । यज्ञेन यज्ञं संतनोति । संततं ह्येवास्यैतद्व्रतं भवति—आसुत्यायै । त्रिष्कृत्व आह । त्रिवृद्धि यज्ञः ॥ ७ ॥

अथाग्निमभ्यावृत्य वाचं विसृजते । न ह स यज्ञमाप्याययति, न संदधाति—योऽतोऽन्येन वाचं विसृजते । स प्रथमं व्याहरन्--सत्यं वाचोऽभिव्याहरति ॥ ८ ॥

अग्निर्ब्रह्मेति । अग्निर्ह्येव ब्रह्म । अग्निर्यज्ञ इति । अग्निर्ह्येव यज्ञः । वनस्पतिर्यज्ञिय इति । वनस्पतयो हि यज्ञियाः । नहि मनुष्या यजेरन्—यद्वनस्पतयो न स्युः । तस्मादाह वनस्पतिर्यज्ञिय इति ॥ ९ ॥

---

द्विर्ब्रूयादित्यर्थः सूचितः । अग्निर्ब्रह्मेत्यादिः पृथङ्मन्त्रो वाग्विसर्जनार्थः । तथा च सूत्रम्—"अग्निमभ्यावृत्य व्रतं कृणुतेति वाग्विसर्जनं त्रिरुक्त्वाऽग्निर्ब्रह्मेति च सकृदिति"—( का. श्रौ. सू. ७ । १०८ ) इति । व्रतकरणं प्रशंसति--**एष** हीति । 'एषः' व्रताख्यः पदार्थः 'अत्र' दीक्षाकाले 'यज्ञो भवति' । तथा 'एतत्' एव व्रतं 'हविः' अपि भवति । 'यथा' 'पुरा' दीक्षादिवसात्पूर्वम् ' अग्निहोत्रम्, ' एवमिदमप्याग्निहोत्रप्रत्याम्नाय एवेत्यर्थः । यथाहापस्तम्बः--"न त्वेव न व्रतयेदग्निहोत्रस्याविच्छेदाय"—( आ. सू. १०।१६।११ ) इति । अत एतद्व्रताख्येन 'यज्ञेन' प्रवर्तमानेन चिकीर्षितं ज्योतिष्टोमं ' यज्ञम्' व्रताख्यं ' सम्भृत्य ' एकीकृत्य तत्रैव प्रतिष्ठाप्य च तं ज्योतिष्टोममेतेन विस्तारितवान् भवति । अत एतन्मन्त्रेऽभिगतयज्ञसन्धानसम्भवादयं पक्ष एव श्रेयानित्यर्थः । विहितव्रतं सुत्यादिवसपर्यन्तं कर्तव्यमित्याह—**सन्ततमिति** ॥ ७ ॥

वाग्विमोकोऽप्यभिमुखं कर्तव्य इत्याह—**अथाग्निमिति** ( का. श्रौ. सू. ७ । १०.८ ) । उक्तमर्थं व्यतिरेकेण प्रशंसति—**न हेति** । ' अतोऽन्येन ' भूर्भुवः स्वरित्यनेन । मन्त्रपदानि व्याचष्टे--**स प्रथममिति** । वाग्व्यवहारस्यादावग्निर्ब्रह्मेति ब्रुवन् सत्यमेवोक्तवान् भवति; " सत्यं ब्रह्म " इति श्रुतेः ( बृ. आ. उ. ५।४।१ ) ॥ ८ ॥

**अग्निरिति** । वनस्पतेर्यज्ञार्हत्वं श्रुतिरेवोपपादयति--**न हि मनुष्या** इति ॥ ९ ॥

( त्यु ) अथास्मै व्रतꣳ श्रपयन्ति । देवान्वाऽएष ऽउपावर्तते यो दीक्षते स देवतानामेको भवति शृतं वै देवानाꣳ हविर्नाशृतं तस्माच्छ्रपयन्ति तदेष ऽएव व्रतयति नाग्नौ जुहोति तद्यदेषऽएव व्रतयति नाग्नौ जुहोति ॥ १० ॥

यज्ञेन वै देवाः । ( ऽ ) इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न ऽइदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥ ११ ॥

तद्वाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञः सम्भृत ऽएष वा ऽअत्र यज्ञो भवति यो दीक्षतऽएष ह्येनं तनुतऽएष ऽएनं जनयति तद्यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति यदेष ऽएव व्रतयति नाग्नौ जुहोति न ह्याप्याययेद्यदग्नौ जुहुयाज्जुहद ह्येव मन्येत नाजुहवत् ॥ १२ ॥

---

अथास्मै व्रतं श्रपयन्ति। देवान्वा एष उपावर्तते—यो दीक्षते । स देवतानामेको भवति । शृतं वै देवानां हविः—नाशृतम् । तस्माच्छ्रपयन्ति । तदेष एव व्रतयति, नाग्नौ जुहोति । तद्यदेष एव व्रतयति; नाग्नौ जुहोति ॥ १० ॥

यज्ञेन वै देवाः इमां जितिं जिग्युः—यैषामियं जितिः । ते होचुः—कथं न इदं मनुष्यैरनभ्यारोह्यं स्यादिति । ते यज्ञस्य रसं धीत्वा—यथा मधु मधुकृतो निर्धयेयुः । विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन् । अथ यदेनेनायोपयन्—तस्माद्यूपो नाम ॥ ११ ॥

तद्वा ऋषीणामनुश्रुतमास । ते यज्ञं समभरन्—यथाऽयं यज्ञः सम्भृतः । एष वा अत्र यज्ञो भवति—यो दीक्षते । एष ह्येनं तनुते । एष एनं जनयति । तद् यदेवात्र यज्ञस्य निर्धीतम्, यद्विदुग्धं—तदे-

---

अथास्मा इति । शृतं वा इत्यादि । 'श्रृतम्' पक्वम् । 'वै' शब्देन श्रुत्यन्तरप्रसिद्धिरभिधीयते । तथा च तैत्तिरीयकम्--"यः शृतः स सदेवस्तस्माद‌विदहता शृतंकृत्यः सदेवत्वाय"--( तै. सं. २।६।३।४ ) इति 'तत्' शृतं क्षीरम् 'एषः' दीक्षित एव' पिबति[1] ( का. श्रौ. सू[2]. ७ । ११३ ) एवकारव्युदसनीयमाह—नाग्नाविति ॥ १० ॥

आत्मन्येव होमं पुरातनवृत्तान्ताभिधानेन प्रशंसति—यज्ञेन वा इति । ( श. प. ब्रा. १।६।२।१ भाष्ये ) गतम् । देवैराच्छादितस्यापि पयोव्रतस्य तदवगच्छद्भिः पूर्वोक्तर्षिभिः सम्भृतत्वादनेनापि सम्भर्तव्यमित्यर्थः ॥ ११ ॥

तद्वा ऋषीणामिति । ननु सर्वमपि हविरग्नावेव हूयते, किमिदं पीयत इत्याशङ्क्य दीक्षितस्याप्यग्नित्वमुप-

---

१—'पिबेत्—' इ. क. पा. । २—तत्क्षीरव्रतौ भवतः ।

( दि ) इमे वै प्राणाः । ( ० ) मनोजाता मनोयुजो दक्षक्रतवो वागेवाग्निः प्राणोदानौ मित्रावरुणौ चक्षुरादित्यः श्रोत्रं विश्वे देवा ऽएतासु हैवास्यैतद्देवतासु हुतं भवति ॥ १३ ॥

तद्धैके । प्रथमे व्रतऽउभौ व्रीहियवावावपन्त्युभाभ्यां रसाभ्यां यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तत्पुनराप्याययाम इति वदन्तो यद्यु व्रतदुघा न दुहीत यस्यैवातः कामयेत तस्य व्रतं कुर्यादेतद्दु ह्येवास्यैताऽउभौ व्रीहियवावन्वारब्धौ भवत ऽइति तदु तथा न कुर्यान्न ह स यज्ञमाप्याययति न संदधाति य उभौ व्रीहियवावावपति तस्मादन्यतरमेवावपेद्धविर्भ्याऽअस्यैताऽउभौ व्रीहियवौ भवतः स यदेवास्यैतौ हविर्भवतस्त-

---

वैतत् पुनराप्याययति । यदेष एव व्रतयति, नाग्नौ जुहोति । न हाप्याययेद्—यदग्नौ जुहुयात् । जुहद्धु हैव मन्येत—नाजुह्वत् ॥ १२ ॥

इमे वै प्राणाः-मनोजाता मनोयुजो दक्षक्रतवः । वागेवाग्निः । प्राणोदानौ मित्रावरुणौ । चक्षुरादित्यः । श्रोत्रं विश्वेदेवाः । एतासु हैवास्यैतद्देवतासु हुतं भवति ॥ १३ ॥

तद्धैके—प्रथमे व्रत उभौ व्रीहियवावावपन्ति । उभाभ्यां रसाभ्याम्—यदेवात्र यज्ञस्य निर्धीतम् यद्विदुग्धम्—तत्पुनराप्याययाम—इति वदन्तः । यद्यु व्रतदुघा न दुहीत—यस्यैवातः कामयेत—तस्य व्रतं कुर्यात् । एतद्दु ह्येवास्यैता उभौ व्रीहियवावन्वारब्धौ भवत इति । तदु तथा न कुर्यात् । न ह स यज्ञमाप्याययति, न सन्दधाति—य उभौ व्रीहियवावावपति । तस्मादन्यतरमेवावपेत् । हविर्भ्यां

---

पादयति—एष वा अत्रेति । 'यज्ञ'—शब्देनात्राग्निरभिधीयते यज्ञोत्पादकत्वाभिधानात् । अतः स्वात्माग्नौ होमेन 'यज्ञस्य' ज्योतिष्टोमस्य 'यत्' 'निर्धीतम्' निष्पीतम् अनुष्ठानेन विफलम्, 'यत्' च 'विदुग्धं' विपरीतानुष्ठानेन विपरीतफलमङ्गम्, 'तत्' 'पुनः' आप्यायितवान् भवति । व्यतिरेके दोषमाह—न हेति । जुहद्धु हैव मन्येतेति । उक्तम् ॥ १२ ॥

देवताप्रीणनाभावात् कथं तादृशी मतिरुत्पद्यत इत्यत आह—इमे वा इति । वागादीनां मुख्यप्राणप्रवेशेन प्राणशब्दव्यवहारस्य 'इमे प्राणाः' वागादयः 'मनोजाताः' मनसः सकाशादुत्पन्नाः, मनोव्यतिरेकेण इतस्ततः प्रवृत्त्यभावात् । 'मनोयुजः' च स्वस्वव्यापारेषु मनसः कर्तृत्वात् । त एवं 'दक्षक्रतवः' दक्षाः प्रवृद्धाः स्वस्वोचिताः क्रतवः कर्माणि येषां ते तथोक्ताः । तेषां देवता विभज्य योजयति—वागेवाग्निरित्यादिना । "अग्निर्वाग्भूत्वा मुखं प्राविशत्" इति श्रुतेः ( ऐ. २. आर. ४. अ. २. खं ) इन्द्रिय-तदभिमानिदेवतयोरभेदव्यवहारः । यस्मात् 'एतासु' 'देवतासु' प्रीणयति, तस्मादेतासु निमित्तभूतासु स्वात्मनि 'हुतं भवति' । यद्वा अग्नौ चेदेकस्मिन्नेव हुतं भवेत्, आत्मनि तु तत्तदिन्द्रियदेवतासु सर्वास्वपि हुतं भवतीति व्याख्येयम् । तस्माज्जुह्वन्मन्येत इत्यर्थः ॥ १३ ॥

प्रथमदिवस ( देय ) व्रतविषयकमेकेषाञ्चित्पक्षमाह—तद्धैक इति । 'प्रथमे व्रते' प्रथमव्रतार्हे क्षीरे निर्द्धीतविदुग्धयोरप्यङ्गयोराप्यायनायोभयोरपि समाधानायोभयावापे सत्युभे अपि हविषी अन्वारब्धे भवत इति तेषा-

**देवास्यैतावन्वारब्धौ भवतो यद्यु व्रतदुघा नु दुहीत यस्यैवातः कामयेत तस्य व्रतं कुर्यात् ॥ १४ ॥**

**( त ) तद्धैके । प्रथमे व्रते सर्व्वौषधᳪं सर्व्वसुरभ्यावपन्ति यदि दीक्षितमार्तिर्व्विन्देद्येनैवातः कामयेत तेन भिषज्येद्यथा व्रतेन भिषज्येदिति तदु तथा न कुर्यान्मानुषᳪं ह ते यज्ञे कुर्व्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति यदि दीक्षितमार्तिर्व्विन्देद्येनैवातः कामयेत तेन भिषज्येत्समाप्तिर्ह्येव पुण्या ॥ १५ ॥**

---

अस्यैता उभौ व्रीहियवौ भवतः । स यदेवास्यैतौ हविर्भवतः—तदेवास्यैतावन्वारब्धौ भवतः । यद्यु व्रतदुघा न दुहीत—यस्यैवातः कामयेत—तस्य व्रतं कुर्यात् ॥ १४ ॥

तद्धैके—प्रथमे व्रते सर्वौषधं सर्वसुरभ्यावपन्ति । यदि दीक्षितमार्त्तिर्विन्देत्—येनैवातः कामयेत—तेन भिषज्येत्—यथा व्रतेन भिषज्येदिति । तदु तथा न कुर्यात् । मानुषं ह ते यज्ञे कुर्वन्ति । व्यृद्धं वै तद् यज्ञस्य—यन्मानुषम् । नेद्व्यृद्धं यज्ञे करवाणीति । यदि दीक्षितमार्तिर्विन्देद्—येनैवातः कामयेत—तेन भिषज्येत् । समाप्तिर्ह्येव पुण्या ॥ १५ ॥

---

मभिप्रायः । तन्निषेधति—**तद्धिति** । उभयावापस्याप्रयोजकतामाह—**न हेति** । तर्हि किं कुर्यादिति तत्राह—**तस्मादन्यतरमिति** । अन्यतरावापपक्षे उभयान्वारम्भः कथं सिद्ध्यतीति तत्राह—**हविर्वा अस्येति** । दर्शपूर्णमासयोर्व्रीहियवयोरुभयोरपि हविष्करणात् तत्रैवान्वारब्धौ भवतो न नूतने । अतोऽप्रयोजकत्वादुभयोरेकत्रावापोऽनपेक्षित इत्यर्थः । व्रतधुग्दुग्धाभावे किं कुर्यादित्यत आह—**यद्यु** इति । यतो व्रीहियवावन्वारब्धौ ' अतः ' अनयोर्व्रीहियवयोर्मध्ये ' यस्यैव ' व्रतं ' कामयेत ' ' तस्य ' एतद् ' व्रतं ' कुर्यात्[२] ॥ १४ ॥

प्रथमव्रतविषय एवेतरेषां पक्षमाह—**तद्धैक** इति । कचित्तु प्रथमव्रत एव यत् ' सर्वौषधम् ' व्रीहियवप्रियंगुगोधूमादिकं, यच्च ' सुरभि ' सुगन्धि पिप्पल्यादि, तत् सर्वम् ' आवपन्ति ' । तथा सत्युत्तरत्र दीक्षितस्यार्तौ सत्यां यादृशाया आर्तेर्यदौषधमिति आर्त्यार्तः कामयेत, तत् क्षीरे प्रक्षिप्य पाकं कृत्वा प्रयच्छेत् । तथा सति प्रथमव्रते सर्वौषधस्यान्वारब्धत्वाद् व्रताविरोधेनैव चिकित्सा कृता भवतीति तेषामभिप्रायः । तन्निराचष्टे—**तद्धिति** । तथा सति यथा मनुष्या औषधं क्षीरे प्रक्षिप्य प्रयच्छन्ति, तद्वदेतत्स्यात् । तच्च यज्ञविरुद्धम् । अतो यद्यस्य प्रतिक्रियां कामयेत, केवलं तदेव प्रयच्छेत् यस्मात् ' समाप्तिः ' यागसम्पूर्तिः 'पुण्या' इष्टा, तस्मादन्वारब्धेनान्यौषधेन भिषज्येदित्यर्थः । अनेनैवार्त्यभावेऽपि सर्वौषधपक्षो निरस्तः आर्तेरेवोपेक्षितत्वात्, सर्वप्रक्षेपाभावेऽपि तत्सम्भवात् । अत्र सूत्रम्—" प्रथमे व्रते व्रीहियवयोरन्यतरमावपत्युभावेके, एकैतरव्रतमदोहे, सर्वौषधं सर्वसुरभि चैके "—इति । आवपेदिति शेषः ॥ १५ ॥

---

१—प्रथमे व्रते व्रीहियवयोरन्यतरमावपत्युभावेके । का. श्रौ. सू ७ । ११४ । २—तद्व्रतमदोहे । का. श्रौ. सू. ७ । ११५ । ३—सर्व्वौषधᳪं सर्व्वसुरभि चैके । का० श्रौ० सू० ७ । ११६ । ४—" तद्व्रतमदोहे " इति चौखंबा-संस्कृतग्रन्थमालामुद्रित का. श्रौ. सू. पुस्तके सूत्रस्य रूपान्तरं दृश्यते ।

(ण्या॒ऽ)अ॒थास्मै॑ व्र॒तं प्रय॑च्छति।(त्य)अ॒ति॒नीय॒ मानु॑षं॒ काल॒ꣳसा॒यं दु॒ग्धम॑पररा॒त्रे प्रा॒तर्दु॒ग्धम॑परा॒ह्णे व्याकृ॑त्या॒ऽएव दैवं चै॒वैतन्मा॑नुषं च॒ व्याक॑रोति १६

(त्य)अ॒थास्मै॑ व्र॒तं प्र॒दास्य॑न्न॒प॒ऽउ॒पस्प॑र्शयति । दै॒वीं धियं॑ मनामहे सुमृडी॒काम॒भिष्ट॑ये व॒र्चो॒धां य॒ज्ञवा॑हस॒ꣳसु॒ती॒र्था नो॑ऽअस॒द्वशे॒ऽइति मानु॒षाय॒ वाऽ ए॒ष पु॒राऽशना॑यावनेनिक्ते॒ऽथात्र॒ दैव्यै॒ धि॒ये त॒स्मादा॑ह दै॒वीं धियं॑ मनामहे सुमृडी॒काम॒भिष्ट॑ये व॒र्चो॒धां य॒ज्ञवा॑हस॒ꣳसु॒ती॒र्था नो॑ऽअस॒द्वशे॒ऽइति स या॒वत्कि॒यच्च॒ व्र॒तं व्र॑तयि॒ष्यन्न॒पऽउ॑पस्पृ॒शेदे॒तेनै॒वोप॑स्पृशेत् ॥ १७ ॥

( दु ) अ॒थ व्र॒तं व्र॑तयति । ये॒ दे॒वा म॑नोजा॒ता म॑नो॒युजो॑ द॒क्षक्र॑तव॒स्ते नो॑ऽवन्तु॒ ते नः॒ पान्तु॒ तेभ्यः॒ स्वाहेति॒ तद्य॑था व॒षट्कृ॑त॒ꣳहु॒तमे॒वम॑स्यै॒तद्भ॑वति ॥ १८ ॥

---

अथास्मै व्रतं प्रयच्छति–अतिनीय मानुषं कालम् । सायं दुग्धमपररात्रे, प्रातर्दुग्धमपराह्णे व्याकृत्या एव दैवं चैवैतन्मानुषं च व्याकरोति ॥ १६ ॥

अथास्मै व्रतं प्रदास्यन्नप उपस्पर्शयति–"दैवीं धियं मनामहे, सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसं सुतीर्था नो असद्वशे "–( वा. सं. ४।११ ) इति । मानुषाय वा एष पुराऽशनायावनेनिक्ते । अथात्र दैव्यै धिये । तस्मादाह–दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसं सुतीर्था नो असद्वश इति । स यावत्कियच्च व्रतं व्रतयिष्यन्नप उपस्पृशेत् । एतेनैवोपस्पृशेत् ॥ १७ ॥

अथ व्रतं व्रतयति–"ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते । नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा "( वा. सं. ४ । ११ )–इति । तद्यथा वषट्कृतं हुतम्–एवमस्यैतद् भवति ॥ १८ ॥

---

अथास्मा इत्यादि । मानुषकालातिक्रान्तौ कौ कालाविति, तौ दर्शयति–सायन्दुग्धमित्यादिना । व्याकृत्या एवेति । 'व्याकृतिः' व्याकरणम्, देवमानुषयोर्विभाग इति यावत् ॥ १६ ॥

अध्वर्युकारयितृकं यजमानकर्तृकमुदकोपस्पर्शनं विधत्ते–अथास्मै व्रतं प्रदास्यन्निति । लौकिकाशनाय हस्तावनेजनव्यापृतये मन्त्रेणावनेजनं युक्तम्, तत्रापि पयोव्रतस्य दीक्षितविषयत्वेन देवाशनत्वात् "दैवीं धियम्" इति मन्त्रो युज्यत इत्यर्थः । प्रकरणात् पयोव्रत एव हस्तप्रक्षालनेऽयं मन्त्र इति प्राप्तौ सर्वव्रतावनेजनसाधारणतामाह–स यावदिति ॥ १७ ॥

समन्त्रकं व्रतपानं विधत्ते–अथ व्रतं व्रतयतीति । मनोजातादयो व्याख्याताः । यथा अन्यत्र यागे वषट्कारेण दत्तं हविर्हुतं भवति, एवमस्य समन्त्रकं व्रतं स्वाहाकृतत्वाद्धुतमेव भवतीत्यर्थः ॥ १८ ॥

---

१–'व्रतं प्रयच्छत्यनुत्सिक्तमपररात्रे सायंदोहमपराह्णे प्रातर्दोहं । का. श्रौ. सू. ७ । ११९ । २–दैवीं धियमिति व्रतायोपस्पर्शन ऽस्वासने । का. श्रौ. सू. ७ । १२० । उपस्पर्शनमाचमनमिति ककः । उदकोपस्पर्शनमात्रमेवेति संप्रदायः । हरिस्वामिनस्तु उपस्पर्शनपदेन स्पर्शमात्रमाहुः । शतपथे सर्वत्रोपस्पृशतेस्तदर्थे प्रयोगादिति । ३–ये देवा इति व्रतयत्यमृण्मयपात्रे । लौहे का. श्रौ. सू. ७ । १२१ । ४–अस्मिन्नेव ब्राह्मणे त्रयोदशकाण्डिकाभाष्ये ।

( त्यु ) अथ व्रतं व्रतयित्वा नाभिमुपस्पृशते श्वात्राः पीता भवत यूयमापोऽअस्माकमन्तरुदरे सुशेवाः । ताऽअस्मभ्यमयक्ष्माऽअनमीवाऽअनागसः स्वदन्तु देवीरमृताऽऋतावृधऽइति देवान्वाऽएष उपावर्तते यो दीक्षते स देवतानामेको भवत्यनुत्सिक्तं वै देवानाᳬहविरथैतद्व्रतप्रदो मिथ्या करोति व्रतमुपोत्सिञ्चन्व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथोहास्यैतन्न मिथ्या कृतं भवति न व्रतं प्रमीणाति तस्मादाह श्वात्राः पीता भवत यूयमापोऽअस्माकमन्तरुदरे सुशेवाः। ताऽअस्मभ्यमयक्ष्माऽअनमीवाऽअनागसः स्वदन्तु देवीरमृताऽऋतावृधऽ इति स यावत्कियच्च व्रतं व्रतयित्वा नाभिमुपस्पृशेदेतेनैवोपस्पृशेत्कस्तद्वेद यद्व्रतप्रदो व्रतमुपोत्सिञ्चेत् ॥१९॥

(द)अथ यत्र मेक्ष्यन्भवति। तत्कृष्णविषाणया लोष्टं वा किंचिद्वोपहन्तीयं ते यज्ञिया तनूरितीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिह्या तस्या ऽएतदुदग्गृहैव यज्ञियां तनूमथायज्ञियᳬ शरीरमभिमेहत्यपो

---

अथ व्रतं व्रतयित्वा नाभिमुपस्पृशति–"श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः । ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः"–(वा.सं.४।१२) इति। देवान्वा एष उपावर्तते यो–दीक्षते । स देवतानामेको भवति । अनुत्सिक्तं वै देवानां हविः । अथैतद्व्रतप्रदो मिथ्या करोति । व्रतमुपोत्सिञ्चन्व्रतं प्रमीणाति । तस्यो हैषा प्रायश्चित्तिः । तथो हास्यैतन्न मिथ्या कृतं भवति, न व्रतं प्रमीणाति । तस्मादाह–श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः । ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृध इति । स यावत्कियच्च व्रतं व्रतयित्वा नाभिमुपस्पृशेत् । एतेनैवोपस्पृशेत् । कस्तद्वेद–यद्व्रतप्रदो व्रतमुपोत्सिञ्चेत् ॥ १९ ॥

अथ यत्र मेक्ष्यन्भवति–तत् कृष्णविषाणया लोष्टं वा, किंचिद्वोपहन्ति। "इयं ते यज्ञिया तनूः" (वा.सं.४।१३) इति। इयं वै पृथिवी देवी देवयजनी । सा दीक्षितेन नाभिमिह्या । तस्या एतदुदग्गृह्यैव

---

अथ व्रतं व्रतयित्वेति । समन्त्रकनाभ्युपस्पर्शनस्य प्रयोजनमाह–देवान्वा इत्यादिना । देवार्थस्य हविषः स्कन्दनायोग्यत्वाद् दीक्षितस्यापि देवत्वाद् व्रतप्रदानेऽप्यध्वर्योः प्रमादात् स्कन्दनादेः सम्भवाद् यज्ञदोषः सम्भाव्येत, तस्यायं मन्त्रः प्रायश्चित्तमित्यर्थः । अस्मिन्मन्त्रे पयसामितस्ततः पतनराहित्येन शीघ्रपीतत्वस्योदरान्तः प्रवेशस्य च प्रार्थनात उदकोपस्पर्शनमन्त्रवन्नाभ्युपस्पर्शनमन्त्रस्यापि सर्वव्रतसाधारण्यमाह–स यावत्कियदिति । नाभ्युपस्पर्शनात्मकप्रायश्चित्तस्य सर्वत्र कर्तव्यत्वे कारणमाह–कस्तदिति । 'उपोत्सिञ्चेत्' सर्वतो विकिरेत्॥ १९

दीक्षितस्य मूत्रोत्सर्गे विशेषमाह–अथ यत्रेति । 'यत्र' यस्मिन् प्रदेशे 'मेक्ष्यन्' मूत्रसेकं करिष्यन् 'भवति' । 'किञ्चिद्वा' लोष्टाभावे तत्सम्बन्धि मृदादिकं वा 'कृष्णविषाणया' 'उपहन्ति' उपाददीत-

---

१–श्वात्राः पीता इति नाभिमालभते । का. श्रौ. सू. ७ । १२२॥

मुञ्चामि न प्रजामित्युभयं वाऽअत ऽएत्यापश्च रेतश्च सऽएतदपऽएव मुञ्चति न प्रजामᳫँहोमुचः स्वाहाकृताऽइत्यᳫँहस ऽइव ह्येता मुञ्चन्ति यदुदरे गुष्ठितं भवति तस्मादाहाᳫँहोमुचऽ इति स्वाहाकृताः पृथिवीमाविशतेत्याहुतयो भूत्वा शान्ताः पृथिवीमाविशतेत्येवैतदाह ॥ २० ॥

( ह्वा ) अथ पुनर्लोष्टं न्यस्यति । पृथिव्या सम्भवेतीयं वै पृथिवी देवी देवयजनी सा दीक्षितेन नाभिमिह्षा तस्या एतदुद्गृह्यैव यज्ञियां तनूमथायज्ञियᳫँ शरीरमभ्यमिक्षत्तामेवास्यामेतत्पुनर्यज्ञियां तनूं दधाति तस्मादाह पृथिव्या सम्भवेति ॥ २१ ॥

( त्यु ) अथाग्नये परिदाय स्वपिति । देवान्वाऽएषऽ उपावर्त्तते यो दीक्षते स देवतानामेको भवति न वै देवाः स्वपन्त्यनवरुद्धो वाऽएतस्या-

---

यज्ञियां तनूम्—अथायज्ञियं शरीरमभिमेहति । " अपो मुञ्चामि न प्रजाम् "–( वा. सं. ४ । १३ ) इति । उभयं वाऽअत एति अपश्च रेतश्च । स एतदप एव मुञ्चति, न प्रजाम् । "अंहोमुचः स्वाहाकृताः"–( वा. सं. ४ । १३ ) इति । अंहस इव ह्येता मुञ्चन्ति--यदुदरे गुष्ठितं भवति तस्मादाह—अंहोमुच इति । " स्वाहाकृताः पृथिवीमाविशत"–( वा. सं. ४ । १३ ) इति । आहुतयो भूत्वा शान्ताः पृथिवीमाविशतेत्येवैतदाह ॥ २० ॥

अथ पुनर्लोष्टं न्यस्याति–" पृथिव्या सम्भव "--( वा.सं.४।१३ ) इति । इयं वै पृथिवी देवी देवयजनी । सा दीक्षितेन नाभिमिह्या । तस्या एतद्धुद्गृह्यैव यज्ञियां तनूम्--अथायज्ञियं शरीरमभ्यमिक्षत्--तामेवास्यामेतत्पुनर्यज्ञियां तनूं दधाति । तस्मादाह--पृथिव्या सम्भवेति ॥ २१ ॥

अथाग्नये परिदाय स्वपिति । देवान्वा एष उपावर्तते--यो दीक्षते । स देवानामेको भवति । न वै

---

त्यर्थः । " लोष्टं वा किञ्चिद्वा"–इति सूत्रात् । तत्र मन्त्रमाह--इयं त इति । व्याचष्टे--इयं वा इति । पृथिव्या देवयजनार्हत्वं कृतवान् भवतीत्यर्थः । मेहनमन्त्रमाह--अपो मुञ्चामीति । ' अतः ' अस्मान्मूत्रद्वारात् अत्रेतसोरुभयोरपि निर्गमसम्भवादप एव मुञ्चामि न प्रजोत्पादकं रेत इति मन्त्रेणोच्यत इत्यर्थः । अतोऽनेन मूत्रं कुर्यादिति विधिरुन्नेयः । तथा च कात्यायनः--" अपो मुञ्चामीति मेहति " इति ( का. श्रौ. सू. ४ । १२९ ) । द्वितीयभागं व्याचष्टे--अंहोमुच इति देहान्तर्गतेन पापेन सहैवैता मूत्ररूपा अपो मुञ्चन्ति खलु मूत्रयितारः तस्मादंहोमुच इति पठेत् । " स्वाहाकृताः "–इत्यस्य तात्पर्याभिधानं स्पष्टम् ॥ २० ॥

अथ पुनरिति । स्वीकृतस्य लोष्टस्य पुनः प्रक्षेपमन्त्रब्राह्मणं पूर्ववद् व्याख्येयम् । हे स्वीकृतलोष्ट ! त्वं ' पृथिव्या ' ' सम्भव ' सङ्गतो भवेत्यर्थः । एतन्मन्त्रपाठेन या पूर्वं यज्ञिया तनूः स्वीकृता, सा पुनः--स्थापिता भवति ॥ २१ ॥

दीक्षितस्य स्वापकाले अग्नये परिदानमाह—अथाग्नय इति । ' परिदानं ' रक्षणार्थं दानम् । परिदाने

---

१–मेक्ष्यन् कृष्णविषाणया लोष्टं किंचिद्वाऽऽदत्त इयं त इति । का. श्रौ. सू. ७ । १२४। २–पृथिव्या संभवेत्यात्तं निदधाति । का. श्रौ. सू. ७ । १२६ ।

स्वप्नो भवत्यग्निर्वै देवानां व्रतपतिस्तस्मा ऽएवैतत्परिदाय स्वपित्यग्ने त्वᳬ सुजागृहि वयᳬ सु मन्दिषीमहीत्यग्ने त्वं जागृहि वयᳬ स्वप्स्याम ऽइत्येवैतदाह रक्षाणो ऽअप्रयुच्छन्निति गोपाय नो ऽप्रमत्त इत्येवैतदाह प्रबुधे नः पुनस्कृधीति यथेतः सुप्त्वा स्वस्ति प्रबुध्यामहा ऽएवं नः कुर्वित्येवैतदाह ॥ २२ ॥

( ब्रा ) अथ यत्र सुप्त्वा पुनर्नावद्रास्यन्भवति । तद्वाचयति पुनर्मनः पुनरायुर्म ऽआगन्पुनः प्राणः पुनरात्मा म ऽआगन्पुनश्चक्षुः पुनः श्रोत्रं म ऽआगन्निति सर्व्वे ह वा ऽएते स्वपतो ऽपक्रामन्ति प्राण एव न तैरेवैतत्सुप्त्वा पुनः संगच्छते तस्मादाह पुनर्मनः पुनरायुर्म ऽआगन्पुनः प्राणः पुनरात्मा म ऽआगन्पुनश्चक्षुः पुनः श्रोत्रं म ऽआगन् ॥ वैश्वानरो ऽअदब्धस्तनूपा ऽअग्निर्नः पातु दुरितादवद्यादिति तद्यदेवात्र स्वप्नेन वा येन वा मिथ्याकर्म तस्मान्नः सर्व्वस्मादग्निर्गोपायत्वित्येवैतदाह तस्मादाह वैश्वानरो ऽअदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यादिति ॥ २३ ॥

---

देवाः स्वपन्ति । अनवरुद्धो वा एतस्यास्वप्नो भवति । अग्निर्वै देवानां व्रतपतिः । तस्मा एवैतत्परिदाय स्वपिति । " अग्ने त्वं सुजागृहि, वयं सु-मन्दिषीमहि "–( वा. सं. ४ । १४ ) इति । अग्ने त्वं जागृहि, वयं स्वप्स्याम–इत्येवैतदाह । " रक्षाणो अप्रयुच्छन् "– ( वा. सं. ४।१४ ) इति । गोपाय नोऽप्रमत्तः–इत्येवैतदाह । " प्रबुधे नः पुनस्कृधि "–( वा. सं. ४।१४ ) इति । यथेतः सुप्त्वा स्वस्ति प्रबुध्यामहै–एवं नः कुरु–इत्येवैतदाह ॥ २२ ॥

अथ यत्र सुप्त्वा पुनर्नावद्रास्यन् भवति–तद्वाचयति–"पुनर्मनः पुनरायुर्मऽआगन्, पुनः प्राणः पुनरात्मा मऽआगन्, पुनश्चक्षुः पुनः श्रोत्रं मऽआगन्"–( वा.सं. ४।१५ ) इति । सर्वे ह वा एते

---

प्रसक्तिं दर्शयति–देवान्वा इत्यादिना । अत्र " अग्ने त्वम् "–इत्येतन्मन्त्रपाठ एव परिदानम् । पूर्वार्द्धस्य तात्पर्यमाह–अग्ने त्वमिति । हे ' अग्ने ! ' ' त्वं ' ' सुजागृहि ' निद्राणस्य मम भयपरिहाराय सुष्ठु विनिद्रो भवेत्यर्थः । ' मन्दिषीमहि '–इत्यस्य तात्पर्याभिधानं ' स्वप्स्यामः '–इति । स्वापविघाते सति मोदस्यैवाभावादेवं प्रार्थ्यते । ' अप्रयुच्छन् '–इत्यस्य तात्पर्याभिधानम्–' अप्रमत्तः'–इति । " युच्छ प्रमादे "–( धा. पा. भ्वा. प. २१४ ) । यथेत इति । ' इतः ' अस्मात् स्थानात् स्वापानन्तरं ' स्वस्ति ' क्षेमेण ज्वरशिरोव्यथादिराहित्येन यथा ' प्रबुद्धयामहे ' तथा ' कुर्विति ' मन्त्रभागः ' आह ' इत्यर्थः ॥ २२ ॥

दीक्षितस्य स्वापानन्तरं प्रबोधे सति पुनर्निद्राया अप्राप्तौ तदा समन्त्रकं जपं विधत्ते–अथ यत्रेति । ' यत्र ' यस्मिन् काले ' तत् ' तदा मनआदेः पुनःप्राप्तिसमर्थनाय । तदपगमनप्रसक्तिं दर्शयति–सर्वे ह वा इति ।

---

१–अग्ने त्वमित्युक्त्वा स्वपित्यधः प्राग्दक्षिणतः का. श्रौ. सू. ७ । १२७ । दक्षिणतोवितानस्य प्राक्शिराः स्वपितीति सूत्रार्थः ।

(त्यु) अथ यद्दीक्षितः। (तो॒) अव्रत्यं वा व्याहरति क्रुध्यति वा तन्मिथ्या करोति व्रतं प्रमीणात्यक्रोधो ह्येव दीक्षितस्याग्निर्वै देवानां व्रतपतिस्तमेवैतदुपधावति त्वमग्ने व्रतपा असि देवऽआ मर्त्येष्वा ॥ त्वं यज्ञेष्वीड्यऽइति तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह त्वमग्ने व्रतपा असि देवऽआ मर्त्येष्वा। त्वं यज्ञेष्वीड्य इति ॥ २४ ॥

(त्यु) अथ यद्दीक्षितायाभिहरन्ति। तस्मिन्वाचयति रास्वेयत्सोमा भूयो भरेति सोमो ह वाऽअस्माऽएतद्युते यद्दीक्षितायाभिहरन्ति स यदाह

---

स्वपतोऽपक्रामन्ति,प्राण एव न। तैरेवैतत्सुप्त्वा पुनः संगच्छते। तस्मादाह–पुनर्मनः पुनरायुर्म आगन्, पुनः प्राणः पुनरात्मा मऽआगन्, पुनश्चक्षुः पुनः श्रोत्रं मऽआगन्।"वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात्"–(वा. सं. ४।१५।) इति। तद् यदेवात्र स्वप्नेन वा येन वा मिथ्याऽकर्म तस्मान्नः सर्वस्मादग्निर्गोपायतु–इत्येवैतदाह। तस्मादाह–वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यादिति ॥ २३ ॥

अथ यद्दीक्षितः–अव्रत्यं वा व्याहरति, क्रुध्यति वा तन्मिथ्या करोति। व्रतं प्रमीणाति। अक्रोधो ह्येव दीक्षितस्य। अग्निर्वै देवानां व्रतपतिः। तमेवैतदुपधावति–"त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा। त्वं यज्ञेष्वीड्यः"–(वा. सं. ४।१६) इति। तस्यो हैषा प्रायश्चित्तिः। तथो हास्यैतन्न मिथ्या कृतं भवति, न व्रतं प्रमीणाति। तस्मादाह–त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा। त्वं यज्ञेष्वीड्य इति ॥ २४ ॥

अथ यद्दीक्षितायाभिहरन्ति–तस्मिन् वाचयति–"रास्वेयत्सोमा भूयो भर"–(वा.सं.४।१६)

---

'प्राण एव' 'न' अपक्रामतीति शेषः। प्राणस्याप्यपगमे सर्वात्मना मृतिप्रसङ्गात् प्राणस्यानपगमाभिधानम्। 'प्राणः' घ्राणेन्द्रियम्। 'आत्मा' बुद्धिः। द्वितीयभागस्य तात्पर्यमाह–वैश्वानर इति। 'स्वप्नेन वा' साधनेन 'येन वा' अन्येन्द्रियद्वारा मलनिर्गमनादिनिमित्तेन 'मिथ्या' अशास्त्रीयम्, 'अकर्म' कृतवन्तः स्म। स्पष्टमन्यत् ॥ २३ ॥

अथ यदित्यादि। 'अव्रत्यं' व्रतं दीक्षा व्रतविरोधि व्यर्थं वचनमभिवदेत्, क्रोधं करोति 'वा,' 'तत्' तेनोभयेन 'मिथ्या' यज्ञविरोध्येव 'करोति'। तावता को दोष इत्यत आह–'व्रतं प्रमीणाति' हिनस्ति। क्रोधस्य दीक्षितेन वर्ज्यतामाह–अक्रोधो हीति। अग्निर्वा इत्यादि। व्रतहिंसासमाधानाय–'एतत्' एतेन "त्वमग्ने व्रतपाः"–इत्यनेन साक्षाद् व्रतपतिम् 'तमेव' अग्निमेव 'उपधावति' रक्षणाय प्राप्तवान् भवति। अत्र सूत्रम्–"त्वमग्न इत्याह क्रुद्धा अव्रत्यं वा व्याहृत्य–"इति ॥ २४ ॥

दीक्षितस्य यज्ञार्थगवादिधनलाभे वाच्यं मन्त्रं विधत्ते–अथ यद् दीक्षितायेति। 'अभिहरन्ति' धनं प्रय-

---

१–अग्निमभ्यावृत्तं विबुधमस्तत्रप्स्यन्तं पुनर्मन इति वाचयति। का. श्रौ. सू. ७।१२८। २–का. श्रौ. सू. ७। १२९। ३–लब्धमालभ्य वाचयति रास्वेयदिति। का. श्रौ. सू. ७। १३०। अशक्येऽभिमंत्रणं। का. श्रौ. सू. ७। १३१।

रास्वेयत्सोमेति रास्व न ऽइयत्सोमेत्येवैतदाहा भूयो भरेत्या नो भूयो हरेत्येवैतदाह देवो नः सविता व्वसोर्दाता व्वस्वदादिति तथो हास्मा ऽएतत्सवितृप्रसूतमेव दानाय भवति ॥ २५ ॥

पुरास्तमयादाह । दीक्षित व्वाचं यच्छेति तामस्तमिते व्वाचं व्विसृजते पुरोदयादाह दीक्षित व्वाचं यच्छेति तामुदिते व्वाचं व्विसृजते संतत्याऽ-एवाहरेवैतद्रात्र्या संतनोत्यह्ना रात्रिम् ॥ २६ ॥

(१) नैनमन्यत्र चरन्तमभ्युस्तमियात् । (२) न स्वपन्तमभ्युदियात्स यदेन-मन्यत्र चरन्तमभ्यस्तमियाद्रात्रेरेनं तदन्तरियाद्यत्स्वपन्तमभ्युदियादह्नऽ-एनं तदन्तरियान्नात्र प्रायश्चित्तिरस्ति प्रतिरुप्यमेवैतस्मान्न पुराऽवभृथादपोऽभ्युवेयान्नैनमाभिवर्षेदनवक्लृप्तᳬह तद्यत्पुराऽवभृथादपोऽभ्यवेयाद्यद्वैनम-

इति । सोमो ह वा अस्मा एतद्युते—यद्दीक्षितायाभिहरन्ति । स यदाह—रास्वेयत्सोमेति । रास्व न इय-त्सोमा—इत्येवैतदाह । आ भूयो भरेति । आ नो भूयो हरेत्येवैतदाह । "देवो नः सविता वसोर्दाता वस्वदात्—" ( वा. सं ४।१६) इति । तथोहास्मा एतत् सवितृप्रसूतमेव दानाय भवति ॥ २५ ॥

पुरास्तमयादाह—दीक्षित वाचं यच्छेति । तामस्तमिते वाचं विसृजते । पुरोदयादाह—दीक्षितं वाचं यच्छेति । तामुदिते वाचं विसृजते—सन्तत्या एव । अहरेवैतत्—रात्र्या सन्तनोति, अह्ना रात्रिम् ॥ २६ ॥

नैनमन्यत्र चरन्तमभ्यस्तामियात् ( १ ) । न स्वपन्तमभ्युदियात् ( २ ) । स यदेनमन्यत्र चरन्त-मभ्यस्तमियात्—रात्रेरेनं तदन्तरियात् । यत् स्वपन्तमभ्युदियाद्—अह्न एनं तदन्तरियात् । नात्र प्राय-

च्छन्ति । ' वाचयति ' अध्वर्युः । दाने सोमसम्बन्धस्य कः प्रसङ्ग इति तत्राह—सोमो ह वा इति । ' अस्मै दीक्षिताय ' ' एतत् ' धनं खलु ' युते ' मिश्रयति ' इयत् तदिति ' प्रदेयं धनं हस्तेनापि(भि)नीयते । द्वितीय-भागस्य तात्पर्यमाह—आ नो भूय इति । न केवलमियत्परिमितमेव किन्तु ततो ' भूयः ' अन्यदपि ' आहर ' इति, मन्त्रः ' आह ' इत्यर्थः । देवो न इत्यादि । एतन्मन्त्रभागपाठेन सवित्राऽभ्यनुज्ञातत्वाल्लब्धं धनं दक्षि-णार्हं भवतीत्यर्थः ॥ २५ ॥

**पुरास्तमयादि**त्यादि । अस्तमयोदयकालयोः प्रतिदिवसं वाग्यमनाय ततः प्रागेव " दीक्षित ! वाचं यच्छ "-इति सम्प्रैषमध्वर्युर्ब्रूयात् । अस्तमिते उदिते च तस्या वाचो विसर्जनमिति सान्तत्यप्रदर्शनम्[1]—अहरेवैतदिति । ( का. श्रौ.[2] सू. ७ । ११० ) ॥ २६ ॥

अस्तमयोदयकाले दीक्षितस्य स्वस्थानादन्यत्र सञ्चारं स्वापं च निषेधति—**नैनमि**ति । विपक्षे बाधं[3]माह—स यदिति । रात्रेरह्नश्च सायम्प्रातःकालयोरुभयोरुपक्रमरूपत्वादन्यत्र सञ्चारस्वापयोः करणे कृच्छ्रयोरपि तयोः सकाशा-

१—' स्वातन्त्र्यप्रदर्शनम् '—इति क. पा. । २—अत ऊर्ध्वमामुष्टिविसर्गादनस्तामितेऽनुदिते च त्रिराह दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति । ३—' दोषम् '—इति क. पु. पा. ।

भिवर्षेदथ परिह्वालं वाचं वदति न मानुषीं प्रसृतां तद्यत्परिह्वालं वाचं वदति न मानुषीं प्रसृताम् ॥ २७॥

यज्ञेन वै देवाः । ( ऽ ) इमां जितिं जिग्युर्येषामियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥ २८ ॥

तद्धाऽऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञः सम्भृतऽएवं वाऽएष यज्ञꣳसम्भरति यो दीक्षते वाग्वै यज्ञस्तद्यदेवात्र यज्ञस्य निर्धीतं

श्चित्तिरस्ति । प्रतिगुप्यमेवैतस्मात् । न पुराऽवभृथादपोऽभ्यवेयात् ( ३ )। नैनमभिवर्षेत् ( ४ )। अनवक्लृप्तं ह तत्—यत्पुराऽवभृथादपोऽभ्यवेयात् । यद्धैनमभिवर्षेत् । अथ परिह्वालं वाचं वदति ( ५ ) न मानुषीं प्रसृताम् । तद् यत्परिह्वालं वाचं वदति, न मानुषीं प्रसृताम् ॥ २७ ॥

यज्ञेन वै देवा इमां जितिं जिग्युः—यैषामियं जितिः । ते होचुः—कथं न इदं मनुष्यैरनभ्यारोह्यं स्यादिति । ते यज्ञस्य रसं धीत्वा—यथा मधु मधुकृतो निर्धयेयुः—विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन् । अथ यदेनेनायोपयन्—तस्माद्यूपो नाम ॥ २८ ॥

तद्धाऽऋषीणामनुश्रुतमास । ते यज्ञं समभरन् । यथाऽयं यज्ञः सम्भृतः । एवं वा एष यज्ञं सम्भरति—

द्यमन्तरितो भवतीत्यर्थः । न प्रायश्चित्तिरस्तीति । प्रायश्चित्तस्य निषेधेन सञ्चारस्वापयोर्निषेधस्यावश्यकत्वमुक्तं भवति । यस्मादेवं तस्मात्, 'एतस्मात्' सञ्चारस्वापात् 'प्रतिगुप्यमेव' रक्षणं कर्तव्यमेवेत्यर्थः । दीक्षितस्यावभृथपर्यन्तं जलावगाहनमभिमर्शणं च वर्जनीयमित्याह—न पुराऽवभृथादिति । यागान्तेऽनुष्ठेयस्य अवभृथाभिषेकस्य दीक्षिततावियोचनार्थत्वात् ततः प्रागेव जलावसेचनस्य दीक्षाविघातकत्वात् 'तत्' अनवक्लृप्तम् । अविहितमित्यर्थः । अभिवदनप्रस्तुते सत्यपि दैवीमेव वाचं वदेन्न मानुषीमित्याह—अथ परिह्वालमिति । 'परिह्वालम्' परिणीतां संस्कृतामित्यर्थः । "ह्वल ह्मल—संचलने" ( भ्वा. प. ८०७।८०८ )। 'प्रसृताम्' सर्वत्र व्याप्ताम् । 'मानुषीं' केवलसर्वमनुष्यसाधारणीं तादृशीं न वदेत् । तथा चापस्तम्बः—"परिणयेन मानुषीं वाचं वदति"—( आप. श्रौ. सू. १०।१२।९ ) इति ॥ २७ ॥

एतदेव प्रशंसितुमुपोद्घातमाह—यज्ञेन वा इत्यादिना । एतदसकृद् गतम् ( श. प. ब्रा. १।६।२।१ ) कं. भाष्ये ( श. प. ब्रा. २।२।२।२, २८ ) ॥ २८ ॥

तद्धा इति । औपोद्घातिकमाह—एवं वा इति । यज्ञाप्यायनरूपत्वेन प्रशस्तत्वात् परिह्वलवाग्व्यवहारः कर्तव्य इत्यर्थः ॥ २९ ॥

१—शालासनास्वप्नौ संधिवेलयोः ७।१३५। वेद्याꣳसुत्यासु १३६। अप्रायश्चित्तमपराधे । का. श्रौ. सू. ७।१३७। २—शूद्रसंप्रवेशसंभाषाप्रत्युत्थानाभिवादनोदकावायवर्षाणि वर्जयेत्प्रागवभृथात् ७।१३२। ३—परिह्वालं वदति ७। १३३। विचक्षणचनसितवतीं वाचम् का. श्रौ. सू. ७।१३४। परिह्वालं मृदु—विचक्षणां संस्कृतां—चन इत्यन्ननाम—चनवतीं अन्नवतीं अविद्राणां । सितवतीं सत्यवतीं—वाचं—वदतीति कर्कः ।

यद्विदुग्धं तदेवैतत्पुनराप्याययति यत्परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृतां न ह्याप्याययेद्यत्प्रसृतां मानुषीं व्वाचं व्वदेत्तस्मात्परिह्वालं व्वाचं व्वदति न मानुषीं प्रसृताम् ॥ २९ ॥

(७ं) स वै धीक्षते । व्वाचे हि धीक्षते यज्ञाय हि धीक्षते यज्ञो हि व्वाग्धीक्षितो ह वै नामैतद्यद्दीक्षित इति ॥ ३० ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ २ ॥ १ ॥ (२।२)

आदित्यं चरुं प्रायणीयं निर्व्वपति । देवा ह वाऽअस्यां यज्ञं तन्वाना ऽइमां यज्ञादन्तरीयुः सा हैषामियं यज्ञं मोहयाञ्चकार कथं नु मयि यज्ञं तन्वाना मां यज्ञादन्तरीयुरिति तँ ह यज्ञं न प्रजज्ञुः ॥ १ ॥

---

यो दीक्षते । वाग्वै यज्ञः । तद्यदेवात्र यज्ञस्य निर्धीतम्, यद्विदुग्धम्—तदेवैतत्पुनराप्याययति—यत्परिह्वालं वाचं वदति, न मानुषीं प्रसृताम् । न ह्याप्याययेत्—यत्प्रसृतां मानुषीं वाचं वदेत् । तस्मात्परिह्वालं वाचं वदति, न मानुषीं प्रसृताम् ॥ २९ ॥

स वै धीक्षते । वाचे हि धीक्षते । यज्ञाय हि धीक्षते । यज्ञो हि वाक् । धीक्षितो ह वै नामैतत् यद्दीक्षित इति ॥ ३० ॥ इति दीक्षितधर्माः ॥

अथ प्रायणीयेष्टिः ।

प्रायणीयदेवताविधिः ।

आदित्यं चरुं प्रायणीयं निर्वपति । देवा ह वा अस्यां यज्ञं तन्वाना इमां यज्ञादन्तरीयुः । सा हैषामियं यज्ञं मोहयाञ्चकार—कथं नु मयि यज्ञं तन्वाना मां यज्ञादन्तरीयुरिति । तं ह यज्ञं न प्रजज्ञुः ॥ १ ॥

---

वाचं यज्ञसाधनत्वेन प्रशंसति—स वै धीक्षत इति । प्रसङ्गाद्दीक्षितशब्दं निर्वक्ति—धीक्षितो ह वा इति । 'यद्' यस्मात् 'दीक्षित इति नाम' तादृशी दीक्षा वाक्साध्येति वाक्स्तुतिः ॥ ३० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम् ( ३-२-२ ) ॥

एवं वाग्यमनादयो दीक्षितधर्मा उक्ताः; अवशिष्टासु दीक्षणीयासु[1] अनुष्ठेयां प्रायणीयेष्टिं संविधत्ते—( का. श्रौ. सू. ७।१४० )[2]—आदित्यं चरुं प्रायणीयं निर्वपतीति । अदितिर्देवता अस्येति आदित्यः; न त्वादित्यो देवता अस्येति; उत्तरत्रादितेः संस्तूयमानत्वात् । "दित्यदित्यादित्य"—इति साऽस्य देवतेत्यर्थे प्राग्दीव्यतीयो ण्यः ( पा. सू. ४।२।२४; ४।६।८३-८९ ) प्रेति प्रारमत अनेन सौमिकं कर्मेति प्रायणीयः । तथा च तैत्तिरीयकम्[3]—"स्वर्गं वा एतेन लोकमुपप्रयन्ति यत् प्रायणीयस्तत् प्रायणीयस्य प्रायणीयत्वम्"—( तै. ब्रा. १।२।१ ) इति । अत्र तद्धितश्रुत्यवगतद्रव्यदेवतानुबन्धान्यथानुपपत्त्या यागे परिकल्प्ये सति इतराङ्गत्वा-

---

१–'अवशितासु दीक्षास्वनुष्ठेयां' इति 'दीक्षणीयासु' इति च क. पा. । २–दीक्षन्ति प्रायणीयमदित्यै चरुं निर्वपति । ३–अत्रैतरेयकमिति पाठः । "स्वर्गं वा" इत्येतस्य तत्रैव दृष्टत्वात् ।

( स्ते ) ते होचुः । ( र्यु ) युन्न्वस्यामेवु यज्ञमतᳪंस्महि कथं नु नोऽमुहत्कथं न प्रजानीम इति ॥ २ ॥

ते होचुः । ( र ) अस्यामेवु यज्ञं तन्वाना ऽइमां यज्ञादन्तरगाम सा नऽइयमेवु यज्ञममूमुहदिमामेवोपधावामेति ॥ ३ ॥

ते होचुः । ( र्य ) यन्नु त्वय्येवु यज्ञमतᳪंस्महि कथं नु नोऽमुहत्कथं न प्रजानीम इति ॥ ४ ॥

---

ते होचुः—यन्न्वस्यामेव यज्ञमतंस्महि—कथं नु नोऽमुहत्—कथं न प्रजानीम इति ॥ २ ॥

ते होचुः—अस्यामेव यज्ञं तन्वाना इमां यज्ञादन्तरगाम, सा न इयमेव यज्ञममूमुहत्, इमामेवोपधावामेति ॥ ३ ॥

ते होचुः—यन्नु त्वय्येव यज्ञमतंस्माहि, कथं नु नोऽमुहत्, कथं न प्रजानीम इति ॥ ४ ॥

---

चोदकप्राप्तस्य निर्वापस्य निर्वपतिरनुवादः, "सौर्यं चरुं निर्वपेत्"—इतिवत् । न च द्रव्यदेवतयोरुभयोरपि विधाने विधेयद्वैविध्याद् वाक्यभेद इति वाच्यम् । कर्मणोऽप्राप्तत्वेन तदुभयविशिष्टस्य तस्यैव विधेयत्वात् । यत् "आग्नेयोऽष्टाकपालः" इत्युक्तं तद्वदेव द्रव्यदेवताविशिष्टस्य विधानादेकवाक्यतेति । अत्र कात्यायनः—"दीक्षान्ते प्रायणीयमदित्यै चरुं निर्वपति" इति का. श्रौ. सू. ७-१४०। उक्तमदितिदेवताकत्वमाख्यायिकया प्रतिपादयितुं स्तुतिः । तदुपोद्घातत्वेन तया कृतं मोहमुपन्यस्यति—**देवा ह वा** इत्यादिना । **यज्ञं तन्वाना** इत्यादि । अत्रेदमा संनिहितवस्तुवर्णनात्सर्वदा सर्वजनसन्निहिता पृथिवी परामृश्यते । 'अस्यां' पृथिव्यां यज्ञं विस्तारयन्तो 'देवाः', 'इमाम्' पृथिवीं 'यज्ञात्' 'अन्तरीयुः' अन्तरितां भागरहिताम् अकुर्वन् । 'सा' 'इयम्' पृथिवी 'एषाम्' देवानाम् 'यज्ञं मोहयाञ्चकार' यज्ञविषयं मोहं जनयामास, यज्ञो यथा देवैर्न ज्ञायते तथा कृतवतीत्यर्थः । **कथन्नु मयीत्यादि**, तस्या अभिप्रायवर्णनम् । एवं मोहने सति ते च देवास्तं यज्ञं न प्रज्ञातवन्तः ॥ १ ॥

तदनन्तरं देवैर्विचारपुरःसरं तदप्रज्ञानकारणं निर्णीतम्, तद्दर्शयति—**ते होचुरिति** । **अतंस्महीति** । अतनिष्महे, तननमकार्ष्मेत्यर्थः । "तनु विस्तारे"—( धा. पा. त. उ. १ ) इत्यस्माल्लुङि च्छान्दस इडभावः । 'कथं नु' केन खलु कारणेन 'नः' अस्माकं यज्ञः 'अमुहत्' मुग्धः, अदृश्योऽभूदित्यर्थः । लुङि पुषादित्वादङ् ( पा. सू. ३ । १ । ५५ ) ॥ २ ॥

**ते होचुरिति** । **अन्तरगामेति** । अन्तरितामकृष्महि "इणो गा लुङि"—( पा. सू. २ । ४ । ४५ ) इति गादेशः । "गातिस्था"—( पा. सू. २ । ४ । ७७ ) इति सिचो लुक् । **सा न इति** । 'सा' 'इयम्' पृथिवी 'एव' कृतापराधानां 'नः' अस्माकं 'यज्ञम् अमूमुहत्' यज्ञविषयं मोहमज्ञानं प्रापयदित्यर्थः । मोहयतेर्लुङि—"णिश्रिद्रुस्रुभ्यः"—( पा. सू. ३ । १ । ४८ ) इति च्लेश्चङादेशः । 'इमामेव' पृथिवीम् 'उपधावाम' कृत्स्नेन हविर्भागेनोपगच्छामेत्यर्थः ॥ ३ ॥

**ते होचुरिति** । 'यत्' यस्मात् हे अदिते ! त्वय्येव यज्ञमतंस्महि । 'कथं नु' कस्मात् कारणात् 'नः' अस्माकम् यज्ञः 'अमुहत्'. मोहविषयोऽभूत्, वयं च किंकारणं 'न प्रजानीमः' । 'इति'—शब्दः प्रश्नसमाप्तौ ॥ ४ ॥

सा हो॑वाच । म॒य्ये॒व य॒ज्ञं तन्वा॒ना मां य॒ज्ञाद॒न्तर॑गात सा वो॑ऽहमे॒व य॒ज्ञम॑मूमुहं भा॒गं नु मे॑ कल्पयता॒थ य॒ज्ञं द्र॑क्ष्यथा॒थ प्र॑ज्ञास्यथे॒ति ॥ ५ ॥

तथे॒ति दे॒वा अ॑ब्रुवन् । ( वंस्तु ) त॒वै॒व प्रा॑यणी॒यस्त॑वोदयनी॒य इ॒ति त॒स्मादे॒ष आ॑दि॒त्यऽ ए॒व प्रा॑यणी॒यो भ॑वत्यादि॒त्य ऽउदयनी॒य ऽइ॒य॑ᳪं ह्ये॒वादि॑ति॒स्त॒तो य॒ज्ञम॑पश्यंस्त॒मत॑न्वत ॥ ६ ॥

स य॒दादि॒त्यं च॒रुं प्रा॑यणी॒यं नि॒र्व्व॑पति । य॒ज्ञस्यै॒व दृ॑ष्ट्यै य॒ज्ञं दृ॒ष्ट्वा क्री॑णानि॒ तं त॑नवा॒ऽइति॒ त॒स्मादा॑दि॒त्यं च॒रुं प्रा॑यणी॒यं नि॒र्व्व॑पति त॒द्वै नि॒रुप्त॑ᳪं ह॒विर॑सीद॒निष्टा दे॒वता॑ ॥ ७ ॥

---

सा होवाच–मय्येव यज्ञं तन्वाना मां यज्ञादन्तरगात, सा वोऽहमेव यज्ञममूमुहम्, भागं नु मे कल्पयत–अथ यज्ञं द्रक्ष्यथ–अथ प्रज्ञास्यथेति ॥ ५ ॥

तथेति देवा अब्रुवन् । तवैव प्रायणीयस्तवोदयनीय इति । तस्मादेष आदित्य एव प्रायणीयो भवति–आदित्य उदयनीयः । इयं ह्येवादितिः ( १ ) । ततो यज्ञमपश्यन्–तमतन्वत ॥ ६ ॥

स यदादित्यं चरुं प्रायणीयं निर्वपति । यज्ञस्यैव दृष्ट्यै । यज्ञं दृष्ट्वा क्रीणानि–तं तनवा इति । तस्मादादित्यं चरुं प्रायणीयं निर्वपति । तद्वै निरुप्तं हविरासीत् । अनिष्टा देवता ॥ ७ ॥

---

**सा होवाचेत्यादि** । हे देवाः ! यूयं ' मां ' यज्ञात् अन्तरगात ' अन्तरितां भागरहितां मा कृतवन्तः । यत एवम् अतः कारणात् ' अहमेव ' ' वः ' युष्माकम् ' यज्ञम् ' ' अमूमुहम् ' मोहं प्रापयम् । येन भागेन ' यज्ञम् ' ' द्रक्ष्यथ, ' तं ' भागम् ' मदर्थं कल्पयत । ' अथ ' अनन्तरम् । एवं मोहापसरणाद् यज्ञं द्रक्ष्यथ; यदा चैवं दर्शनविषयो यज्ञो जातः, अथानन्तरं तं प्रकर्षेण ज्ञास्यथेति सम्बन्धः ॥ ५ ॥

एवमदितिदेवतयोक्तैर्देवैः कृतां भागक्लृप्तिं दर्शयति–**तथेति** । **देवा** इत्यादि । प्रायणीयोदयनीयाख्यौ सोमयागस्य पुरस्तादुपरिष्टाच्चानुष्ठेयौ यागौ तव भागत्वेनास्माभिर्दत्तावित्यर्थः । उपपादितमर्थमुपसंहरति–**तस्मादेष इति** । अत्रोदनीययागस्यादितिदेवताकत्वप्रतिपादनं प्रासङ्गिकम् । ननु देवा ह वा अस्यामित्यादौ ( श. प. ब्रा. ३ । २ । ३ । १ ) ' इदं ' शब्देन पृथिवी निर्दिष्टा, तत् कथमदितेर्देवतात्ववर्णनमित्यत आह–**इयं ह्येवादितिरिति** । दितिः खण्डनं न विद्यतेऽस्यामिति व्युत्पत्तेः ' इयमेव ' पृथिवी ' अदिति '–शब्दवाच्या । अत एव पृथिवीनामसु यास्केन परिपठितम्–" **अदितिः इला निर्ऋतिः** " इति ( नि. घ. १ । १४ । १९ । १६ ) । अत एव तैत्तिरीयके[1]–" इयं वा अदितिः "–इति । यत्तूपरिष्टात् ' अदिति '–शब्दस्य निर्वचनमाम्नास्यते " स यद्यदेवासृजत तत्तदत्तुमध्रियत, सर्वं वा अत्तीति तददितेरदितित्वम्– " ( श. प. ब्रा. १० । ६ । ५ । ५ ) इति तत्सृष्ट्यादिकारणेन ब्रह्मविषयम् । स्वात्मनि जातमोषधिवनस्पत्यादिकं पार्थिवं सर्वमत्तीत्यदितिरिति योजनीयम् । एवमदितियागे सति देवानां यज्ञप्राप्तिर्जातेत्याह–**ततो यज्ञमपश्यंस्तमतन्वतेति** । ' ततः ' तस्मात्, अदितेर्हविर्भागकल्पनात्[2] । स्पष्टमन्यत् ॥ ६ ॥

अनयाऽऽख्यायिकया प्रायणीयस्य चरोर्यज्ञदर्शनहेतुत्वमुपपाद्य प्रकृते योजयति–**स यदिति** । यदेतत् प्राय-

---

१–तै. ब्रा. १. अष्ट. ६. अ० १० अ० ५ कं. । २–' हविर्भाक्त्वकल्पनात् '–इ० क० पा० ।

( ता॒ऽ ) अथै॑भ्यः प॒थ्या॑ स्व॒स्तिः प्रारो॑चत । ताम॑यजन्वाग्वै प॒थ्या॑ स्व॒स्तिर्वाग्य॒ज्ञस्तद्य॒ज्ञम॑पश्यँ॒स्तम॑तन्वत ॥ ८ ॥
( ता॒ऽ ) अथै॑भ्योऽग्निः प्रारो॑चत । तम॑यजन्त्स य॒दाग्ने॒यं य॒ज्ञस्या॑सी॒त्तद॑पश्य॒न्यद्वै शुष्कं॑ य॒ज्ञस्य॒ तदा॑ग्ने॒यं तद॑पश्यँ॒स्तद॑तन्वत ॥ ९ ॥

---

अथैभ्यः पथ्या स्वस्तिः प्रारोचत ( २ ) । तामयजन् । वाग् वै पथ्या स्वस्तिः । वाग् यज्ञः । तद् यज्ञमपश्यन् । तमतन्वत ॥ ८ ॥
अथैभ्योऽग्निः प्रारोचत (३) । तमयजन् । स यदाग्नेयं यज्ञस्यासीत्—तदपश्यन् । यद्वै शुष्कं यज्ञस्य तदाग्नेयम् । तदपश्यन्, तदतन्वत ॥ ९ ॥

---

णीययागस्यानुष्ठानं तद् व्यामोहविषयतामापन्नस्य कृत्स्नस्य ' यज्ञस्यैव ' दर्शनाय सम्पद्यते । तद्दर्शनमपि किमर्थमित्यत आह—यज्ञं दृष्ट्वेति । सोमसाध्यं ' यज्ञम् ' प्रथमं ' दृष्ट्वा, ' पश्चात्तत्साधनं सोमं ' क्रीणानि ' सोमविक्रयिणः सकाशात्,—" तं वै ते क्रीणानि " इत्यादिवक्ष्यमाणप्रकारेण, ( श. प. ब्रा. ३ । ३ । ३ । १ ) स्वीकरवाणि । तेन च क्रीतेन सोमेन ' तं ' सोमसाध्यं यज्ञं ' तनवै विस्तारयाणि । ' इति '—शब्दो वाक्यसमाप्तौ । एवं यज्ञदर्शनस्य सप्रयोजनतां प्रतिपाद्य तद्धेतुभूतं प्रायणीययागं निगमयति—तस्मादादित्यमिति । एवं प्रायणीयेष्टौ चरुसाध्यमादित्ययागं विधायान्यांश्चतुरो यागान् विधित्सुस्तेषां कालमाह—तद्वा इत्यादि । निरुप्तमिति, हविःसंस्कारोपलक्षणम् । आदित्यस्य हविषो निर्वापप्रोक्षणाद्यासादनान्ताः संस्काराः कृता भवेयुः । प्रधानदेवता च ' अनिष्टा ' अकृतयागा भवति । तस्मिन् काले वक्ष्यमाणाश्चतस्रो देवता यष्टव्या इत्यर्थः ( ऐ. ब्रा. १ । २ । ९ ) ॥ ७ ॥

अथ तान् यागान् पूर्ववदाख्यायिकया विधित्सुस्तत्र प्रथमयागस्य विधिमर्थवादेनोन्नयति—अथैभ्य इति । अथेत्याज्यभागानन्तर्ये । ननु प्रायणीयायामाज्यभागौ न स्तः, अत एवाश्वलायनोऽप्यसूत्रयत्—" शंय्वन्तेयमनाज्यभागा " इति ( आश्व. श्रौ. सू. ४ । ३ । २ । ३ ) । अस्यैवानाज्यभागपक्षस्य लिङ्गमापस्तम्बेनापि दर्शितम्—" स्विष्टकृतं षष्ठम् " इति ( आ. श्रौ. सू. १० । २१ । १२ ) । यदि ह्याज्यभागौ स्यातां तदा पथ्यास्वस्त्यादयः पञ्चेति स्विष्टकृदष्टमः स्यात् । नैष दोषः; वाजसनेयिशाखान्तराभिप्रायेणाज्यभागसद्भावात् । अत एव कात्यायनेन सूत्रितम्—"आज्यभागाविष्ट्वाऽऽज्येन देवताश्चतस्रो यजति, पथ्यां स्वस्तिमग्निं सोमं सवितारं च"—( का. श्रौ. सू. ७ । १४१ ) इति । पथ्या स्वस्तिरिति । ' एभ्यः ' इति " रुच्यर्थानां प्रीयमाणः "—(पा. सू. १ । ४ । ३३ ) इति चतुर्थी । ते च देवाः ' ताम् ' ' पथ्यां स्वस्तिम् ' ' अयजन् ' । मन्त्ररूपा वाक् एव ' पथ्या स्वस्तिः '—इत्युच्यते । पथोऽनपेता ' पथ्या ' । " धर्मपथ्यर्थन्यायादनपेते "—( पा. सू. ४ । ४ । ९२ ) इति यत् । ' स्वस्तिः ' शोभनरूपेति । ' पथ्या—स्वस्ति '—शब्दनिर्वचनस्य वाचि सम्भवात् ( निरु. ११ । ४ । ११ ) । सा च वाग् यज्ञात्मिका । अतस्तस्या दर्शनेन ' यज्ञम् ' एव ' अपश्यन् ' । एवं पुरावृत्तप्रतिपादनेन पथ्या स्वस्तिः प्रथमं यष्टव्येति प्रतिपादितं भवति ॥ ८ ॥

अथाग्नेयस्य द्वितीययागस्य विधिमुन्नयति—अथैभ्योऽग्निरिति । ' आग्नेयम् '—इति सामान्योक्तस्य विवर-

---

१—पथ्यास्वस्त्योरभेदज्ञापनार्थं चतस्रग्रहणमिति कर्कः । २—चशब्दादादि चोदनेति कर्कः ।

( ता॒ऽ ) अ॒थै॑भ्यः सो॒मः प्रा॒रो॑चत । त॒मय॑जन्त्स य॒त्सौम्यं॑ य॒ज्ञस्या॒सीत्त॒-द॑पश्य॒न्यद्वा ऽआर्द्रं॒ य॒ज्ञस्य॑ त॒त्सौम्यं॑ त॒द॑पश्यंस्त॒द॑तन्वत ॥ १० ॥

( ता॒ऽ ) अ॒थै॑भ्यः सवि॒ता प्रा॒रो॑चत । त॒मय॑जन्पश॒वो वै॒ सवि॒ता प॒शवो॑ य॒ज्ञस्त॒द्य॒ज्ञम॑पश्यंस्त॒मत॑न्वत॒ाथ य॒स्यै दे॒व॒ता॑यै ह॒विर्नि॑रु॒प्तमा॒सी॒त्ता॒मय॑जन् ॥ ११ ॥

( जंस्ता ) ता वा॒ऽए॒ताः । प॒ञ्च दे॒व॒ता य॑जति यो वै स य॒ज्ञो मु॒ग्धऽ-आ॒सी॒त्पा॒ङ्क्तो वै स ऽआ॒सी॒त्त॒मे॒ता॒भिः प॒ञ्चभि॑र्दे॒व॒ता॒भिः प्रा॒जा॒नन् ॥ १२ ॥

---

अथैभ्यः सोमः प्रारोचत (४) । तमयजन् । स यत्सौम्यं यज्ञस्यासीत्—तदपश्यन् । यद्वा आर्द्रं यज्ञस्य—तत्सौम्यम् । तदपश्यन्, तदतन्वत ॥ १० ॥

अथैभ्यः सविता प्रारोचत (५) । तमयजन् । पशवो वै सविता । पशवो यज्ञः । तद् यज्ञमपश्यन् । तमतन्वत । अथ यस्यै देवतायै हविर्निरुप्तमासीत्—तामयजन् ॥ ११ ॥

ता वा एताः पञ्च देवता यजति । यो वै स यज्ञो मुग्ध आसीत्—पाङ्क्तो वै स आसीत् । तमेताभिः पञ्चभिर्देवताभिः प्राजानन् ॥ १२ ॥

---

णम्—यद्वै शुष्कमिति । यत् खलु यज्ञसम्बन्धि 'शुष्कम्' नीरसं समिदादि द्रव्यम्, 'तद् आग्नेयम्' । अन्यत् समानं पूर्वेण ॥ ९ ॥

अथ सौम्यस्य तृतीययागस्य विधिमुन्नयति—**अथैभ्यः सोम** इति । स यदिति । सर्वत्र तच्छब्दः प्रसिद्धि-द्योतकः । 'सौम्यम्' सोमदेवत्यम् । "सोमाट्ट्यण्"—(पा. सू. ४ । २ । ३) । 'यत्' खलु यज्ञ-सम्बन्धि 'आर्द्रम्' रसयुक्तम् सोमादिद्रव्यम् 'तत् सौम्यम्' शुष्कार्द्रयोर्ह्यग्नीषोमावभिमानिदेवते । एतच्च प्रागप्याम्नातम्—"द्वयं वा इदं न तृतीयमस्त्यार्द्रञ्चैव शुष्कञ्च"—( श. प. ब्रा. १ । ६ । ३ । २३ भाष्ये ) इत्यादिना ॥ १० ॥

अथ सावित्रस्य चतुर्थयागस्य विधिमुन्नयति—**अथैभ्यः सवितेति** । सवितुः प्रेरकत्वात् पशूनां च तत्प्रेर्य-त्वात् प्रेर्यप्रेरकयोरभेदं विवक्षित्वा 'सविता पशवः'—इति तादात्म्यव्यपदेशः । सवितुश्च पशुप्रेरकत्वं—"देवो वः सविता प्रार्पयतु" इति (वा. सं. १ । १ । ४) मन्त्रवर्णादवगम्यते । ते च पशवो हृदयाद्यवदानद्वारेण पयःप्रभृतिद्रव्यापादानत्वेन च यज्ञात्मकाः । यस्मादेवं चतसृभिर्देवताभिर्देवाः कृत्स्नं यज्ञमपश्यम्, दृष्ट्वा चाकु-र्वन्, तस्मादिमाश्चतस्रो देवताश्चिकीर्षितयज्ञस्य प्रथमत आज्येन यष्टव्या इति समुदायार्थः । एवमाज्यहविष्काां-श्चतुरः प्रधानयागान् कृत्वा प्रथमनिरुप्तेन हविषा अदितिर्यष्टव्येत्याह—**अथ यस्यै देवताया** इति । यस्मादेवं देवा पञ्चमीमदितिमयजन् तस्मादिदानीन्तनोऽपि यजमानो यागसमये अदितियागं पञ्चमं कुर्यादित्यर्थः ॥ ११ ॥

पञ्चसङ्ख्यामनूद्य प्रशंसति—**ता वा** इति । 'एताः' पथ्यास्वस्त्याद्याः । 'मुग्ध आसीत्' मोहविषयोऽभव-

---

१—पथ्यादीनां प्रधानत्वेऽपि तदंगत्वं—तथाच—दीक्षांते प्रायणीयमदित्यै चरुं निर्वपतीति ७ । १४० । सूत्रे—चरुग्रहणं न कर्तव्यम् । अदित्यै चरुरन्यत्रापि इत्युक्तत्वात् । कर्तव्यं वा । चरोः प्रायणीयज्ञापनार्थम् । अदित्यै चरुं प्रायणीयं निर्वपतीति वचनात् । एवं च पथ्यादीनां तदंगत्वादंतराये सति अप्रयोक्तृत्वं—इति कर्कभाष्यात् । ततश्चादित्यचरोरंतराये प्रयोक्तृत्वम् । न पथ्यादीनामंतराये—इति फलितोऽर्थः ।

(न्तृ) ऋतवो मुग्धाऽआसन्पञ्च । तानेताभिरेव पञ्चभिर्दैवताभिः प्राजानन् १३

( न्दि ) दिशो मुग्धा ऽ आसन्पञ्च । ताऽएताभिरेव पञ्चभिर्दैवताभिः प्राजानन् ॥ १४ ॥

( न्नु ) उदीचीमेव दिशम् । पथ्यया स्वस्त्या प्राजानंस्तस्मादत्रोत्तरा हि वागवदति कुरुपञ्चालत्रा वाग्घ्येषा निदानेनोदीचीᳬं ह्येतया दिशं प्राजानन्नुदीची ह्येतस्यै दिक् ॥ १५ ॥

---

ऋतवो मुग्धा आसन् पञ्च-तानेताभिरेव पञ्चभिर्दैवताभिः प्राजानन् ॥ १३ ॥

दिशो मुग्धा आसन्पञ्च । ता एताभिरेव पञ्चभिर्दैवताभिः प्राजानन् ॥ १४ ॥

उदीचीमेव दिशं पथ्यया स्वस्त्या प्राजानन् । तस्मादत्रोत्तरा हि वागवदति कुरुपञ्चालत्रा । वाग्घ्येषा निदानेन । उदीचीं ह्येतया दिशं प्राजानन् । उदीची ह्येतस्यै दिक् ॥ १५ ॥

---

दित्यर्थः । अस्तेर्हि लङि " अस्तिसिचोऽपृक्ते " ( पा. सू. ७ । ३ । ९६ ) इतीट् । पाङ्क्तो वा इति । पञ्चपदा पंक्तिः तद्वाचिना पंक्तिशब्देन पञ्चसंख्या लक्ष्यते, तद्योगाद् 'यज्ञः पांक्तः' । तद्योगश्च तैत्तिरीयके स्पष्टमाम्नातः—" धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पंक्तिराप्यते, तद् यज्ञस्य पांक्तत्वम् "—( तै. सं. ६ । ५ । ११ । ५ ) ऐतरेयके तु तत् पांक्तत्वम् " यो वै यज्ञं हविष्पंक्तिं वेद "—( ऐ. ब्रा. २ । ३ । ६ ) इत्यादिना बहुश आम्नातम् ॥ १२ ॥

ऋतुपरिज्ञानहेतुत्वादपि तां पञ्चसङ्ख्यां प्रशंसति—ऋतवो मुग्धा इति । हेमन्तशिशिरावेकीकृत्य ऋतूनां पञ्चत्वम् । तथा चैतरेयकं प्रागुदाहृतम्—" हेमन्तशिशिरयोः समासेन" इति ( ऐ.ब्रा. १।१।१ ) । ऋतुपरिज्ञानाभावे हि वसन्तादिकालसाध्यो यज्ञो विकलः स्यात् । अतस्तत्परिहारायैतद्यागपञ्चकानुष्ठानमिति स्तुतिः ॥ १३ ॥

दिङ्मोहनिवृत्तिहेतुत्वेनापि पञ्चसङ्ख्यां प्रशंसति—दिशो मुग्धा इति । यज्ञानुष्ठानाय वसन्तादिकाला इव तदुपयुक्ताः प्राच्याद्याः ' पञ्च दिशः ' ' मुग्धा आसन् ' व्यामूढा अभवन् । गतमन्यत् ॥ १४ ॥

तत्र कीदृश्या देवतया कतमा दिक् प्रज्ञातेत्याशङ्क्य प्रथमदेवतया ज्ञातां दिशं प्रदर्श्योपपादयति—उदीचीमेवेति । यस्मादेवं पथ्यास्वस्त्याख्यया प्रथमदेवतया उदीची दिक् देवैः प्रज्ञाता, तस्मात् 'अत्र' अस्मिन् लोके कुरुपञ्चालाख्येषु जनपदेषु ' उत्तरा ' उच्चतरा ' वाग् ' ' वदति ' भृशं शब्दायते अत्युन्नतसम्भाषणस्य तत्रोपलम्भात् । " देवमनुष्य "—इत्यादौ—(पा. सू.५।४।५६।) परिगणनाभावेऽपि बहुलग्रहणात् कुरुपञ्चालशब्दादपि त्राप्रत्ययः । ननु वाच उत्तरदिक्सम्बन्धोऽस्तु, कुतः पथ्या-स्वस्त्या दिशः सम्बन्धः ? इति, तत्राह—वाग्घीति । ' एषा 'पथ्या स्वस्तिः यस्मात्, ' निदानेन ' कारणेन निरूप्यमाणा सती 'वाक्' एव "वाग्वै पथ्या स्वस्तिः"—इति ह्युक्तम् ( कौ. ब्रा. ७ । ६ । ) अत उत्तरस्यां दिशि वाचः प्रसिद्धिर्युक्तेति भावः । ' हि ' यस्माच्चैवम् 'एतया' 'उदीचीं दिशं' देवाः ' प्राजानन् ' । तस्मात् ' एतस्यै ' षष्ठ्यर्थे चतुर्थी, ( पा.सू.२।३।६२।वा.१) एतस्याः पथ्यायाः स्वस्तेः ' उदीची दिक् ' स्वभूता ॥ १५ ॥

(क्प्रा) प्राचीमेव दिशम् । (म) अग्निना प्राजानंस्तस्मादग्निं पश्चात्प्राञ्चमुद्धृत्योपासते प्राचीᳪं ह्येतेन दिशं प्राजानन्प्राची ह्येतस्य दिक् ॥ १६ ॥

( ग्द ) दक्षिणामेव दिशम् ( ॡं ) सोमेन प्राजानंस्तस्मात्सोमं क्रीतं दक्षिणा परिवहन्ति तस्मादाहुः पितृदेवत्यः सोम ऽइति दक्षिणाᳪं ह्येतेन दिशं प्राजानन्दक्षिणा ह्येतस्य दिक् ॥ १७ ॥

( क्प्र ) प्रतीचीमेव दिशम् (ॡं) सवित्रा प्राजानन्नेष वै सविता य एष तपति तस्मादेष प्रत्यङ्ङेति प्रतीचीᳪं ह्येतेन दिशं प्राजानन्प्रतीची ह्येतस्य दिक् ॥ १८ ॥

( गू ) ऊर्ध्वामेव दिशम् । ( म ) अदित्या प्राजानन्नियं वाऽअदितिस्तस्मादस्यामूर्ध्वा ओषधयो जायन्तऽऊर्ध्वा वनस्पतय ऊर्ध्वाᳪं ह्येतया दिशं प्राजानन्नूर्ध्वा ह्येतस्यै दिक् ॥ १९ ॥

---

प्राचीमेव दिशमग्निना प्राजानन् । तस्मादग्निं पश्चात्प्राञ्चमुद्धृत्योपासते । प्राचीं ह्येतेन दिशं प्राजानन् । प्राची ह्येतस्य दिक् ॥ १६ ॥

दक्षिणामेव दिशं सोमेन प्राजानन् । तस्मात्सोमं क्रीतं दक्षिणा परिवहन्ति । तस्मादाहुः—पितृदेवत्यः सोम इति । दक्षिणां ह्येतेन दिशं प्राजानन् । दक्षिणा ह्येतस्य दिक् ॥ १७ ॥

प्रतीचीमेव दिशं सवित्रा प्राजानन् । एष वै सविता—य एष तपति । तस्मादेष प्रत्यङ्ङेति । प्रतीचीं ह्येतेन दिशं प्राजानन् । प्रतीची ह्येतस्य दिक् ॥ १८ ॥

ऊर्ध्वामेव दिशमदित्या प्राजानन् । इयं वा अदितिः । तस्मादस्यामूर्ध्वा ओषधयो जायन्ते । ऊर्ध्वा वनस्पतयः । ऊर्ध्वां ह्येतया दिशं प्राजानन् । ऊर्ध्वा ह्येतस्यै दिक् ॥ १९ ॥

---

अथ द्वितीयदेवतया प्रज्ञातां दिशमुपन्यस्योपपादयति—प्राचीमेवेति । यस्मादग्निः प्राच्या दिशो ज्ञानहेतुः, तस्मात् ‘ पश्चात् ’ अवस्थितम् ‘ अग्निम् ’ आहवनीयरूपेण ‘ प्राञ्चमुद्धृत्योपासते ’ अग्निहोत्रहोमादिरूपमुपासनं कुर्वन्ति । यस्माद् देवाः ‘ प्राचीं दिशम् ’ ‘ एतेन ’ अग्निना ‘ प्राजानन् ’ तस्मात् ‘ एतस्य ’ अग्नेः ‘ प्राची दिक् ’ स्वभूतेत्यर्थः । अत एवान्यत्राम्नायते—“ प्राची दिगग्निर्देवता ” ( कौ.ब्रा. ७।६ ) इति ॥ १६ ॥

अथ तृतीयदेवतया प्रज्ञातां दिशमुपन्यस्योपपादयति—दक्षिणामेवेति । यस्माद् दक्षिणा दिक् ‘ सोमेन ’ परिज्ञाता ‘ तस्मात् ’ उपरवदेशे ‘ क्रीतं सोमम् ’ महावेदेर्दक्षिणतोऽनसा ‘ परिवहन्ति ’ । “ दक्षिणादाच् ” ( पा. सू. ५ । ३ । ३६ ) इत्याच् प्रत्ययः । ‘ तस्मात् ’ दक्षिणादिक्प्रवर्तनाद्धेतोः वल्लीरूपः ‘ सोमः ’ ‘ पितृदेवत्यः ’ । पितृदेवताकदक्षिणादिक्प्राप्तेः सोमस्य पितृदेवत्यत्वं युक्तम् ॥ १७ ॥

अथ चतुर्थदेवतया प्रज्ञातां दिशमुपन्यस्यति—प्रतीचीमेवेति । ‘ एषः ’ सूर्यः ‘ प्रत्यङ्ङेति ’ प्रत्यङ्मुखो गच्छति । स्पष्टमन्यत् ॥ १८ ॥

अथ पञ्चमदेवतया प्रज्ञातां दिशमुपन्यस्यति—ऊर्ध्वामेवेति । यस्माद् भूम्यासुत्पन्नाः ओषधिवनस्पतयः

१—‘ संप्रदर्श्य ’—इ० क० पा० ।

( क्वि ) शिरो वै युज्ञस्यातिथ्यम् । बाहू प्रायणीयोदयनीयावभितो वै शिरो बाहू भवतस्तुस्मादुभित ऽआतिथ्यमेते हविषी भवतः प्रायणीयश्चोदयनीयश्च ॥ २० ॥

तुदाहुः । (खं) युदेव प्रायणीये क्रियेत तुदुदयनीये क्रियेत युदेव प्रायणीयस्य बर्हिर्भवति तुदुदयनीयस्य बर्हिर्भवतीति तुदपोद्धृत्य निदधाति ताᳪं स्थालीᳪं सुक्षामकर्षां प्रमृज्य मेक्षणं निदधाति युऽएव प्रायणीयस्यऽर्त्विजो भवन्ति तुऽउदयनीयस्यऽर्त्विजो भवन्ति तद्युदेतुत्समानं युज्ञे क्रियते तेन बाहू सदृशौ तेन सुरूपौ ॥ २१ ॥

---

शिरो वै यज्ञस्यातिथ्यम् । बाहू प्रायणीयोदयनीयौ । अभितो वै शिरो बाहू भवतः । तस्मादभित आतिथ्यमेते हविषी भवतः—प्रायणीयश्चोदयनीयश्च ॥ २० ॥

तदाहुः—यदेव प्रायणीये क्रियेत—तद् उदयनीये क्रियेत । यदेव प्रायणीयस्य बर्हिर्भवति—तदुदयनीयस्य बर्हिर्भवतीति । तदपोद्धृत्य निदधाति । तां स्थालीं सक्षामकर्षां प्रमृज्य मेक्षणं निदधाति । य एव प्रायणीयस्यर्त्विजो भवन्ति—त उदयनीयस्यर्त्विजो भवन्ति । तद् यदेतत्समानं यज्ञे क्रियते—तेन बाहू सदृशौ—तेन सरूपौ ॥ २१ ॥

---

ऊर्ध्वमुखा एव वर्द्धन्ते, तस्माददित्यभिधानाया भूम्याः सकाशादूर्ध्वदिक्परिज्ञानं युक्तमित्यर्थः । इत्थं पञ्चदिग्व्यामोहपरिहारोपन्यासमुखेन प्रायणीयेष्टौ पञ्च देवता यष्टव्या इत्युक्तम् ॥ १९ ॥

अथातिथ्यायाः प्राक् प्रायणीयः कर्तव्य इत्यभिधातुं प्रायणीयोदयनीययोर्बाहुद्वयरूपतामातिथ्यायाः शिरोरूपताञ्चाह—शिरो वै यज्ञस्येति । आतिथ्यमध्येऽनुष्ठेयत्वेन प्राधान्याच्छिरस्त्वव्यवहारः । ' एते हविषी ' एतौ यागावित्यर्थः; यागस्य हविःप्रधानत्वात् । लोके शिरस उभयतो बाह्वोर्दर्शनात्, आतिथ्यस्य शिरस्त्वाभिधानात्, बाहुस्थानीययोरनुष्ठानं युक्तम् ( श. प. ब्रा. ३ । ९ । ३ ) ॥ २० ॥

उक्तबाहुत्वमुपजीव्य प्रायणीयोदयनीययोरेकरूपतामाह—तदाहुरिति । सङ्ग्रहेणोक्तं यच्छन्दार्थं विशदयति—यदेवेति । मध्ये कर्मान्तरव्यवधानात् कथं तस्य बर्हिषोऽवस्थानमित्याशङ्क्य तदुपायं दर्शयति—तदपोद्धृत्येति । प्रहरणमकृत्वा बर्हिरुद्धृत्योपरि प्रज्ञातं निदध्यात् । बर्हिर्वत् स्थालीमेक्षणयोरप्युदयनीयार्थमवस्थानमाह—तां स्थालीमिति । या प्रायणीयचरुस्थाली ' तां ' ' सक्षामकर्षाम्, अग्निसंयोगेनान्तरीषद्दग्धश्चरुः ' क्षामः, ' तस्य ' कर्षो ' लेपः, तत्सहितामित्यर्थः । " क्षायो मः "—( पा. सू. ८ । २ । ५३ ) इति निष्ठातकारस्य मत्वम् । ' मेक्षणम् ' चरुनिष्पादनसाधनं काष्ठम् ( श. प. ब्रा. २ । ४ । २ । १३ ) । तत् ' प्रमृज्य ' चरुणा लेपयित्वा स्थाल्या सह विदध्यादित्यर्थः । ऋत्विगैक्यं च विधत्ते—य एव प्रायणीयस्येति । इदानीन्तनमपि बाह्वोः स्वरूपत्वं प्रायणीयोदयनीययोरैक्यरूपनिबन्धनमित्याह—तद्यदेतादिति । सादृश्यमेकदेशेनापि भवतीति तद् विशेष्यते—सरूपाविति ॥ २१ ॥

तदु तथा न कुर्यात् । (त्का) काममेवैतद्बर्हिरनुप्रहरेदेवं मेक्षणं निर्णिज्य स्थालीं निदध्याद्य ऽएव प्रायणीयस्यऽर्त्विजो भवन्ति तऽउदयनीयस्यऽर्त्विजो भवन्ति यद्यु ते विप्रेताः स्युरप्यन्यऽएव स्युः स यद्वै समानीदैवता यजति समानानि हवीꣳषि भवन्ति तेनैव बाहू सदृशौ तेन सरूपौ ॥ २२ ॥

स वै पञ्च प्रायणीये देवता यजति । पञ्चोदयनीये तस्मात्पञ्चेत्थादङ्गुलयः पञ्चेत्थात्तच्छंय्वन्तं भवति न पत्नीः संयाजयन्ति पूर्वार्धं वाऽअन्वात्मनो बाहू पूर्वार्धमेवैतद्यज्ञस्याभिसंस्करोति तस्माच्छंय्वन्तं भवति न पत्नीः संयाजयन्ति ॥ २३ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ २ ॥ २ ॥ ( २ । ३ )

---

तद्ु तथा न कुर्यात् । काममेवैतद्बर्हिरनुप्रहरेत् । एवं मेक्षणं निर्णिज्य स्थालीं निदध्यात् । य एव प्रायणीयस्यर्त्विजो भवन्ति–त उदनीयस्यर्त्विजो भवन्ति । यद्यु ते विप्रेताः स्युः–अप्यन्य एव स्युः । स यद्वै समानीदैवता यजति–समानानि हवींषि भवन्ति । तेनैव बाहू सदृशौ–तेन सरूपौ॥ २२॥

स वै पञ्च प्रायणीये देवता यजति, पञ्चोदयनीये । तस्मात्–पञ्चेत्थादङ्गुलयः, पञ्चेत्थात् । तच्छंय्वन्तं भवति । न पत्नीः संयाजयन्ति । पूर्वार्धं वा अन्वात्मनो बाहू । पूर्वार्धमेवैतद्यज्ञस्याभिसंस्करोति । तस्माच्छंय्वन्तं भवति । न पत्नीः संयाजयन्ति ॥ २३ ॥

---

उक्तो बर्हिराद्यैकरूप्यपक्षो न नियत इत्याह–तद्ु तथेति । एवं मेक्षणमिति । बर्हिर्वदग्नौ प्रहरेदित्यर्थः । 'स्थालीं' 'निर्णिज्य' क्षामकर्षमपि प्रगमय्य ऋत्विजामेव च नियममङ्गीकृत्य, तेषामपि केनचिन्निमित्तेन विगमे सति तदेकत्वमपि नियमेन भवितव्यमित्याह–य एव प्रायणीयस्येति । 'विप्रेताः स्युः' विविधदेशं प्राप्ता भवेयुः । तर्ह्येकरूपत्वं किन्निबन्धनमित्याह–स यदिति । 'यद्वै' यदेव बर्हिर्यागस्य स्वरूपम् । अतस्तयोरैकरूप्यमेव नियमेन भवितव्यमित्यर्थः । 'तेनैव–' इति एवकारेण पूर्वोक्तं बर्हिराद्यैकरूप्यं व्यावर्त्यते । तेनैव द्रव्यदेवतैक्येन कारणेनैवेदानीमपि मनुष्याणां 'बाहू सरूपौ' भवत इत्यर्थः । तथा च कात्यायनोऽपि–"चरुमेक्षणबर्हिर्निदधात्युदयनीयायै, सलेपं चरुं प्रमृष्टं मेक्षणं, प्रक्षालयति वा चरुम्, अनुप्रहरतीतरे, त एवर्त्विजो, विप्रेतेष्वन्येऽपि" ( का. श्रौ. सू. ७ । १४२–१४७ ) इति । 'इतरे' बर्हिर्मेक्षणे ॥ २२ ॥

देवतैक्याभिधानप्रसङ्गेन पञ्चसङ्ख्यां प्रशंसति–स वा इति । 'सः' अध्वर्युः । 'तस्मात्' देवतानां पञ्चत्वाद्धेतोः 'इत्था' इत्थम् अनेन इदानीं परिदृश्यमानेन प्रकारेण । 'पञ्चाङ्गुलयः' लभ्यन्ते । हस्तद्वयमभिनीय प्रदर्शनीयं द्विरभिधानम् । प्रकृतिभूतदर्शपूर्णमासेष्टिवत् साकल्येनानुष्ठानप्रसक्तौ तत् प्रतिषेधति–तच्छंय्वन्तं भवतीति । अन्तग्रहणेन सिद्धावुपरितनाङ्गनिषेधो नित्यानुवादतया पुनर्निषिद्ध्यते–न पत्नीः संयाजयन्तीति । प्रायणीयोदयनीययोर्बाहुत्वनिरूपणादप्युत्तराङ्गजातं न कर्तव्यमित्याह–पूर्वार्द्धं वा अन्वात्मनो

दिवि वै सोमऽआसीत् । (द) अथेह देवास्ते देवाऽअकामयन्ता नः सोमो गच्छेत्तेनागतेन यजेमहीति तऽएते मायेऽअसृजन्त सुपर्णीं च कद्रूं च तद्धिष्ण्यानां ब्राह्मणे व्याख्यायते सौपर्णीकाद्रवं यथा तदास ॥ १ ॥
तेभ्यो गायत्री सोममुच्छापतत् । ( च ) तस्याऽआहरन्त्यै गन्धर्वो

---

## अथ सोमक्रयणविधिः ।

दिवि वै सोम आसीत्—अथेह देवाः । ते देवा अकामयन्त—आनः सोमो गच्छेत्, तेनागतेन यजेमहीति । तऽएते माये असृजन्त—सुपर्णीं च कद्रूं च । तद्धिष्ण्यानां ब्राह्मणे व्याख्यायते—सौपर्णी-काद्रवं—यथा तदास ॥ १ ॥

तेभ्यो गायत्री सोममच्छापतत् । तस्याऽआहरन्त्यै गन्धर्वो विश्वावसुः पर्यमुष्णात् । ते देवा अविदुः—प्रच्युतो वै परस्तात्सोमः—अथ नो नागच्छति—गन्धर्वा वै पर्यमोषिषुरिति ॥ २ ॥

---

बाहू इति । 'आत्मनः' शरीरस्य 'पूर्वार्द्धमनु' 'बाहू' वर्तेते न सर्वाङ्गे, अतः 'एतत्' एतेन तदुभयत्र शंय्वन्तानुष्ठानेन यज्ञस्य 'पूर्वार्द्धमेव' संस्कृतं भवति' ॥ २३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ( ३ । २ । ३ ) ॥

सोमक्रयं विधातुमाख्यायिकामाह—**दिवि वै सोम** इत्यादिना । **दिवि वा** इति । 'वै'—शब्देन "तृतीयस्या-मितो दिवि सोमः"—( तै. सं. ३ । ५ । ७ । १ ) इत्यादिश्रुत्यन्तरप्रसिद्धिर्द्योत्यते । 'इह' भूमौ 'देवाः' आसन्निति शेषः । सोमागमनप्रयोजनम्—**तेनागतेन यजेमहीति** । **त एत** इत्यादि । परव्यामोहनकारिणी शक्तिः 'माया' । 'ते' देवाः 'एते' द्वे मायाभिरूपे स्त्रियौ सोमरक्षकाणां गन्धर्वाणां व्यामोहाय सृष्टवन्त इत्यर्थः । तथा चोत्तरत्राम्नास्यते—" त एते माये असृजन्त सुपर्णीञ्च कद्रूञ्च वागेव सुपर्णीयं कद्रूः "—( श. प. ब्रा. ३ । ६ । २ । २ ) ( तै. सं. ६ । १ । १ । ६ । १ ) इति । होतृमैत्रावरुणादीनां शंसनप्रदेशेषु पुरतः स्थापिता अग्नयो धिष्ण्याः होत्रीयादयः । ते खलु पुरा दिवि सोमरक्षकाः, पश्चात् सोमे आहृते सति तेन सह भूमावागत्य देवेभ्यो लब्धवराः सन्तोऽत्रापि सोमरक्षणाय धिष्ण्यतां प्राप्ताः । तथा चोपरिष्टाद् वक्ष्यते—" तमेते गन्धर्वाः सोमरक्षा जुगुपुरिमे धिष्ण्या इमे होत्राः "— ( श. प. ब्रा. ३ । ६ । २ । ९ ) इति । तेषां 'धिष्ण्यानाम्' 'ब्राह्मणे' 'व्याख्यायते सौपर्णीकाद्रवम्' सुपर्णीकद्र्वोर्वृत्तान्तः सर्वोऽपि विवरिष्यत इत्यर्थः ( श. प. ब्रा. ३ । ६ । २ । ७ ) । तत्र हि मायामय्योः सुपर्णीकद्र्वोरुत्पत्तिः; तयोर्मिथः कलहः, परस्परजयपराजयनिमित्तकः समयबन्धः, ततः कद्रूजयः, पराजितायाः सुपर्ण्याः स्वात्मनिष्क्रयाय सोमोपहरणार्थं छन्दसां सुपर्ण्याः सकाशादुत्पत्तिर्गायत्र्या च सोमाहरणम्,—इत्येवमादयोऽर्था अस्मिन्नेव काण्डे पञ्चमप्रपाठकादौ " विजामानो हैवास्य धिष्ण्याः "—इत्याद्युपक्रम्य, " दिवि वै सोम आसीदथेह देवास्ते देवा अकामयन्त "—इत्यादिना आम्नायते—( श. प. ब्रा. ३ । ६ । २ । १–१६ ) ॥ १ ॥

**तेभ्यो गायत्रीति** । 'तेभ्यः' देवेभ्योऽर्थाय सुपर्ण्या निर्मिता 'गायत्री'—छन्दोदेवता पक्षिरूपेण दिवि

---

१–'शंय्वन्तं भवति ७ । १४८ । अंतवचने पूर्वप्रसङ्गः १४९ । अविशेषश्रुतेः १५० । उत्तरं वा प्रकृत्यनुग्रहानुयाजप्रतिषेधाभ्याम् १५१ । ग्रहणादप्रवृत्तिः १५२ । संवराश्रुतेश्च १५३ । नित्यानुवादोऽनुयाजप्रतिषेधः । का. श्रौ. सू. ७।१५४ ॥

विश्वावसुः पुर्यमुष्णात्ते देवाऽअविदुः प्रच्युतो वै पुरस्तात्सोमोऽथ नो नाग-च्छति गन्धर्व्वा वै पुर्यमोषिषुरिति ॥ २ ॥

ते होचुः । ( यो ) योषित्कामा वै गन्धर्व्वा व्वाचमेवैभ्यः प्रहिणवाम सा नः सह सोमेनागमिष्यतीति तेभ्यो व्वाचं प्राहिण्वन्त्सैनान्त्सह सोमे-नागच्छत् ॥ ३ ॥

( त्ते ) ते गन्धर्व्वा अन्वागत्याब्रुवन् । ( न्त्सो ) सोमो युष्माकं व्वागेवा-स्माकमिति तथेति देवाऽअब्रुवन्निहो चेदागान्मैनामभीषहे व नैष्ट व्विह्वया-महाऽइति तां व्यह्वयन्त ॥ ४ ॥

तस्यै गन्धर्व्वाः । ( ० ) व्वेदानेव प्रोचिरऽइति वै व्वयं व्विद्मेति व्वयं व्विद्मेति ॥ ५ ॥

---

ते होचुः—योषित्कामा वै गन्धर्वाः । वाचमेवैभ्यः प्रहिणवाम । सा नः सह सोमेनागमिष्यतीति । तेभ्यो वाचं प्राहिण्वन् । सैनान्त्सह सोमेनागच्छत् ॥ ३ ॥

ते गन्धर्वा अन्वागत्याब्रुवन्—सोमो युष्माकम्, वागेवास्माकमिति । तथेति देवा अब्रुवन् । इहो चेदागात्, मैनामभीषहे व, नैष्ट, विह्वयामहा इति । तां व्यह्वयन्त ॥ ४ ॥

तस्यै गन्धर्वाः वेदानेव प्रोचिरे । इति वै वयं विद्म—इति वयं विद्म—इति ॥ ५ ॥

---

स्थितम् ' सोमम् ' 'अच्छ' अभिमुखमगमत् । ' आहरन्त्यै ' आहरन्त्यास्तस्याः स्वभूतं सोमम्, षष्ठ्यर्थे चतुर्थी, ( पा. सू. २ । ३ । ६२ वा. १ ) ' विश्वावसुः ' नाम ' गन्धर्वः ' ' पर्यमुष्णात् ' अपजहार । ततः ' ते देवाः ' ' अविदुः ' । किमिति ' पुरस्तात् ' द्युलोकात् ' सोमः प्रच्युतः, ' ' अथ ' ' नः ' अस्मान् ' नाग-च्छति;' ' गन्धर्वाः ' विश्वावसोर्भृत्याः ' वै ' नूनं ' पर्यमोषिषुः ' स्तेयमकार्षुः ' इति ' ॥ २ ॥

ते होचुरिति । योषितः कामयन्त इति ' योषित्कामाः ' । ' एभ्यः ' गन्धर्वेभ्यो व्यामोहाय ' वाचं ' ' प्रहिणवाम ' प्रेषयाम । वाचं प्रेषयतामभिप्रायः—सा नः सह सोमेनागमिष्यतीति ॥ ३ ॥

ते गन्धर्वा इति । सोममुपायेनानयन्ती स्वयमपि प्रतिनिवर्तयिष्यत इति ' सोमो युष्माकं वागेवास्माकम् ' अस्त्विति । अथ गन्धर्वाविरोधेनैव देवैर्दृष्टं वाग्लाभोपायं दर्शयति—इहो चेदागादित्यादिना । प्रेषयामो वयं वाचं सोमैरिह ' आगात् ' आगच्छेत् । ' उ '—शब्दोऽनर्थकः । हे गन्धर्वाः ! ' एनाम् ' ' इह ' आगताम ' अभीषहे ' । ' व '—इति वाक्यालङ्कारे । अभिषहनमभीषट्, अभिभवः । तेन बलात्कारेण ' मा नैष्ट ' मा प्रहार्ष्ट । " न माङ्योगे "—( पा. सू. ६ । ४ । ६४ ) इत्यडभावः । ' विह्वयामहै ' यूयं वयं च वाचं विविधमाकारयाम ॥ ४ ॥

एवं मिथः समये कृते गन्धर्वाणामाह्वानप्रकारमाह—तस्यै गन्धर्वा वेदानेवेति । ' प्रोचिरे ' प्रवचनमकुर्वन् । तस्या वाचो वशीकरणायेति शेषः । एवमिदं ब्रुवतां तेषामभिप्रायः—इति वै वयं विद्मेति । एवं खलु वाचः स्वाधीनत्वकरणोपायं जानीम इति, अयमुपायः सर्वेषां स्वकीयानामभिमत इति प्रदर्शयितुं वीप्सयाऽभिधानम् ॥ ५ ॥

(त्यु)अथ देवाः।(०)व्वीणामेव सृष्ट्वाव्वादयन्तो निगायन्तो निषेदुरिति वै ते व्वयं गास्याम इति त्वा प्रमोदयिष्यामह ऽइति सा देवानुपावदर्त सा वै सा तन्मोघमुपावदर्त या स्तुवद्भ्यः शᳪंसद्भ्यो नृत्तं गीतमुपाववृर्त तस्मादप्येतर्हि मोघसᳪंहिताऽएव योषाऽएवᳪंहि व्वागुपावर्तत तामु हयन्या अनु योषास्तस्माद्य एव नृत्यति यो गायति तस्मिन्नेवैता निमिश्लतमा इव ॥ ६ ॥

तद्वाऽएतदुभयं देवेष्वासीत् । (त्सो) सोमश्च व्वाक् च स यत्सोमं क्रीणात्यागत्याऽएवागतेन यजाऽइत्यनागतेन ह वै स सोमेन यजते योऽक्रीतेन यजते ॥ ७ ॥

---

अथ देवा वीणामेव सृष्ट्वा, वादयन्तो निगायन्तो निषेदुः । इति वै ते वयं गास्यामः इति । त्वा प्रमोदयिष्यामहे—इति । सा देवानुपाववर्त । सा वै सा तन्मोघमुपाववर्त—या स्तुवद्भ्यः शंसद्भ्यो नृत्तं गीतमुपाववर्त । तस्मादप्येतर्हि मोघसंहिता एव योषाः । एवं हि वागुपावर्तत । तामु ह्यन्या अनु योषाः । तस्माद्य एव नृत्यति, यो गायति—तस्मिन्नेवैता निमिश्लतमा इव ॥ ६ ॥

तद्वाऽएतदुभयं देवेष्वासीत्—सोमश्च वाक् च । स यत् सोमं क्रीणाति—आगत्या एव आगतेन यजा इति । अनागतेन ह वै स सोमेन यजते योऽक्रीतेन यजते ॥ ७ ॥

---

देवैः स्वीकृतं वाचः स्वीकरणोपायमाह—अथ देवा वीणामेवेति । ' वीणां वादयन्तः ' निषादादिस्वरानुकूल्येन ध्वनिमुत्पादयन्तः, तदनु स्वयं ' गायन्तः ' ' निषेदुः ' उपसन्नाः । इति वा इति । एवं खलु ' ते ' त्वदर्थं ' गास्यामः ' । न केवलमीदृशं गानमस्माकं किन्तु हे वाग्देवते ! ' त्वा ' त्वाम् ' इति ' एवम्प्रकारेण खलु तोषयामः । ' इति '—शब्दो वाक्यसमाप्तौ । ' सा देवान् उपाववर्त ' उपावर्ततेस्म । प्रत्यावृत्ता ' या ' वाक् ' स्तुवद्भ्यः शंसद्भ्यः ' स्तोत्रशस्त्ररूपं वेदानुवचनं कुर्वद्भ्यो गन्धर्वेभ्यः सकाशाद् देवैः कृतं ' नृत्तं ' ' गीतम् ' चोपावृत्ता, ' सा वै ' सैव खलु । ' सा ' पूर्वं सोमाहरणाय प्रेषिता वाक् ' तत् ' तदानीं ' मोघं ' व्यर्थमेवोपावृत्ता । स्तुतशस्त्ररूपपरित्यागस्यानौचित्यादिति भावः । इदानीन्तनस्त्रीणां मोघस्वभावत्वं वाग्देवतोपक्रम[1]मित्याह—तस्मादिति । ' ताम् ' अप्रकृतां वाचम् ' अनु ' ' अन्याः ' अपि योषितः । अप्रकृतमपि नर्तनं गानवत् स्त्रीव्यामोहसाधनमिति गानेन सहोपन्यस्तम् । ' एताः ' योषितः ' निमिश्लतमा इव ' विशेषेणैकीभूताः, अत्यन्तमनुरक्ता भवन्तीति शेषः । अयमर्थः सर्वोऽप्यैतरेयब्राह्मणे सोमो वै राजा गन्धर्वेष्विति खण्डे ( ऐ. ब्रा. १ । ५ । १ ) प्रपंचितः ॥ ६ ॥

इदानीं गानसिद्ध्यर्थमनूद्य सोमक्रयं विदधाति—तद्वा एतदुभयमिति । यस्मात् सोमो देवानां स्वमासीत् तस्मात् ' आगत्या एव ' सोमप्राप्त्या एव ' सोमं ' ' क्रीणाति ' क्रीणीयात् । अपूर्वार्थत्वाद् यच्छब्दमनादृत्य विधिः कल्पयितव्यः । आगत्या अपि प्रयोजनमाह—आगतेन यजा इति । अक्रीतस्य यागानर्हतामाह—अनागतेनेति । आगतोऽपि सोमः क्रयसंस्कारेणानागतत्वादनागत इत्युच्यते ॥ ७ ॥

---

१–' वाग्देवतोपक्षेमम् '–इ. क. पा. ।

( तेऽथ ) अथ यद्ध्रुवायामाज्यं परिशिष्टं भवति । तज्जुह्वां चतुष्कृत्वो विगृह्णाति बर्हिषा हिरण्यं प्रबध्यावधाय जुहोति कृत्स्नेन पयसा जुहवानीति समानजन्म वै पयश्च हिरण्यं चोभयꣳ ह्यग्निरेतसम् ॥ ८ ॥

( थꣳ ) स हिरण्यमवदधाति । ( त्ये ) एषा ते शुक्र तनूरेतद्वर्च ऽइति वर्चो वाऽएतद्यद्धिरण्यं तया सम्भव भ्राजं गच्छेति स यदाह तया सम्भवेति तया सम्पृच्यस्वेत्येवैतदाह भ्राजं गच्छेति सोमो वै भ्राट् सोमं गच्छेत्येवैतदाह ॥ ९ ॥

---

अथ यद् ध्रुवायामाज्यं परिशिष्टं भवति—तत् जुह्वां चतुष्कृत्वो विगृह्णाति । बर्हिषा हिरण्यं प्रबध्य अवधाय जुहोति—कृत्स्नेन पयसा जुहवानीति । समानजन्म वै पयश्च हिरण्यं च । उभयं ह्यग्निरेतसम् ॥ ८ ॥

स हिरण्यमवदधाति—"**एषा ते शुक्र तनूरेतद्वर्चः**"—( वा. सं. ४।१७ ) इति । वर्चो वाऽएतत्—यद्धिरण्यम् । "**तया सम्भव भ्राजं गच्छ**"—( वा. सं. ४।१७ ) इति । स यदाह-तया सम्भवेति । तया संपृच्यस्वेत्येवैतदाह । भ्राजं गच्छेति । सोमो वै भ्राट् । सोमं गच्छेत्येवैतदाह॥९॥

---

सोमक्रयात् प्राक् कर्तव्यं च कश्चिद्धोमं विदधाति—**अथेति** । 'ध्रुवायामाज्यं परिशिष्टम्' प्रायणीयार्थमुपयुज्य यद्घृतं ध्रुवायामवशिष्टम् 'तत्' 'जुह्वां' 'चतुष्कृत्वः' चतुर्वारं गृहीत्वा ' 'बर्हिषा' दर्भेण 'हिरण्यं' 'प्रबध्य' जुह्वाम् 'अवधाय' आधाय जुहुयात् । तथा च कात्यायनः—" शालाद्वाराण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति, बर्हिस्तृणेन हिरण्यं बद्ध्वाऽवदधात्येषा त इति " ( का. श्रौ. सू. ७।१९।११० ) इति । हिरण्यावधानप्रयोजनम्—**कृत्स्नेन पयसेति** । पयःप्रकृतिकत्वाद् आज्यं पयः । सति हिरण्यस्य पयस्त्वे भवत्येव कार्त्स्न्यम् । तदेव कुत इत्यत आह—**समानजन्म वा इति** । पयश्च हिरण्यञ्च इति वस्तुद्वयं 'समानजन्म' समानोत्पत्तिकम्, एकत्रोत्पन्नमित्यर्थः । कथं समानत्वं जन्मनः ? 'हि' यस्मात् 'उभयम्' अपि 'अग्निरेतसम्' अग्ने रेतो वीर्यं यस्योभयस्य तत् तथोक्तम् । यस्मादेवं तस्मादित्यर्थः । " अनसन्तान्नपुंसकाच्छन्दसि "—( पा. सू. ५ । ४ । १०३ ) इति अच्प्रत्ययः समासान्तः । पयसोऽग्निरेतस्त्वं द्वितीयकाण्डे उक्तम् । तथाहि—गोरुत्पत्तिं प्रस्तुत्य—" तामु हाग्निरभिदध्यौ । मिथुन्येनया स्यामिति तां सम्बभूव तस्यां रेतः प्रासिञ्चत् । तत् पयोऽभवत् "—( श. प. ब्रा. २ । २ । ४ । १५ ) इति । हिरण्यस्याप्यग्निरेतस्त्वं तैत्तिरीये—" आपो वरुणस्य पत्नय आसन्, ता अग्निरभ्यध्यायत्, ताः समभवत्, तस्य रेतः परापतत्, तद्धिरण्यमभवत् "—( तै. ब्रा. १ । १ । ३ । ८ ) इति ॥ ८ ॥

मन्त्रमभिधाय पुनरनुवदति—**स हिरण्यमिति** । 'सः' अध्वर्युः । हिरण्यनिधानमन्त्रं त्रेधा विभज्य व्याचष्टे—**एषा त इत्यादिना** । हे 'शुक्र !' 'एषा' एतद्धिरण्यं 'ते' तनूः शरीरम् । तन्वपेक्षया स्त्रीलिङ्गता, अथवा 'एषा' जुहूरिति व्याख्येयम् । 'एतत्' एवाज्यं तव 'वर्चः' तेजः । शिष्टं ब्राह्मणेनैव व्याख्यातम् । व्याख्येयभागद्वयमुपादाय प्रथमभागस्य 'सम्भव'—शब्दस्यार्थमाह—**यदाह तया सम्भवेत्यादि** । 'यदाह' मन्त्रः, 'एतत्' एतेन 'तया सम्पृच्यस्व' इत्येवाह । अत्र सम्पर्क एकीभावः । 'भ्राट्'—शब्दार्थमाह—**सोमो वै**

तां यथैवादो देवाः । प्राहिण्वन्त्सोममच्छैवमेवैनामेषऽ एतत्प्रहिणोति सोममच्छ वाग्वै सोमक्रयणी निदानेन तामेतयाऽऽहुत्या प्रीणाति प्रीतया सोमं क्रीणानीति ॥ १० ॥

स जुहोति । जूरसीत्येतद्ध वा ऽअस्या ऽएकं नाम यज्जूरसीति धृता मनसेति मनसा वाऽइयं वाग्धृता मनो वाऽइदं पुरस्ताद्वाच ऽइत्थं वद मैतद्वादीरित्यलग्लमिव ह वै वाग्वदेद्यन्मनो न स्यात्तस्मादाह धृता मनसेति ॥ ११ ॥

---

तां यथैवादो देवाः प्राहिण्वन्–सोममच्छ–एवमेवैनामेष एतत्प्रहिणोति–सोममच्छ । वाग्वै सोमक्रयणी निदानेन । तामेतयाऽऽहुत्या प्रीणाति । प्रीतया सोमं क्रीणानीति ॥ १० ॥

स जुहोति–"जूरसि"–( वा. सं. ४।१७ ) इति । एतद्ध वा अस्या एकं नाम यज्जूरसीति । "धृता मनसा"–( वा. सं. ४ । १७ ) इति । मनसा वाऽइयं वाग्धृता । मनो वाऽइति पुरस्ताद्वाचः । इत्थं वद, मैतद्वादीरिति । अलग्लमिव ह वै वाग् वदेद्–यन्मनो न स्यात् । तस्मादाह–धृता मनसेति ॥ ११ ॥

---

आडिति । भ्राजमानत्वाद् 'भ्राट्' सोमः । अतः आज्यं भ्राजं गच्छेति ब्रुवती श्रुतिः, सोमं गच्छेत्युक्तवतीत्यर्थः । सोमप्राप्तिप्रकारस्त्वित्थं वेदितव्यः–हिरण्यसंस्कृताज्यहोमः सोमक्रयणार्थः, स च क्रेतव्यसोमार्थ इति विहितामाहुतिं सोमक्रयणीप्रीतिहेतुत्वेन प्रशंसयन् तदर्थः ॥ ९ ॥

तदर्थं सोमक्रयण्यानयनप्रयोजनप्रकारमाह–तां यथैवेति । 'अदः' व्यवहितकाले 'ताम्' वाचं 'प्राहिण्वन्' गन्धर्वापहृतां प्रति प्रागमयन् । 'एवमेव' अध्वर्युः एतेन सोमक्रयणीप्रेरणेन प्रेरितवान् भवति । तयोः कः सम्बन्ध इति तत्राह–वाग्वै सोमक्रयणीति । 'निदानं' वास्तवं स्वरूपम् ॥ १० ॥

होममन्त्रं पञ्चधा विभज्य व्याचष्टे–स जुहोतीति । जूरसीत्यादिना ब्राह्मणेनैव मन्त्रस्य साकल्येन व्याख्यातत्वान्नास्माभिर्व्याख्यातः । 'जू'–इति सौत्रो धातुर्गत्यर्थः । जवति सोमं प्रति गच्छतीति 'जूः' । 'अस्याः' वाग्रूपायाः सोमक्रयण्याः प्रतिज्ञातं । मनसो वागाधारत्वमुपपत्त्या साधयति–मनो वा इदं पुरस्ताद् वाच इति । मनः पूर्वरूपम् , वागुत्तररूपम् । मनो वा इति । 'वै'–शब्देन "यद्वै मनसा ध्यायति तद्वाचा वदति"–( श. प. ब्रा. १२ । ९ । १ । १३ ) इत्यादिश्रुत्यन्तरप्रसिद्धिर्द्योत्यते । धारणप्रकारं दर्शयति–इत्थं वदेति । यद्यपि हितोपदेष्टृवन्मनो न वाग्व्यापारं करोति, तथापीदं वक्तव्यमिदं नेति गुणदोषविकल्पनस्य मनोव्यापारत्वाद् वाग्विधिनिषेधकर्तृव्यवहारः । व्यतिरेकदोषोपन्यासेन मनोवाचोरेकत्वं द्रढयति–अलग्लमिवेति । 'अलग्लमिव' अलग्नमिव वक्तव्यपदार्थेन सहासंसृष्टमिव; हृदयपूर्वकत्वाभावात् ॥ ११ ॥

---

१–जूरसीति जुहोति । का.श्रौ.सू. ७।९।६१। अस्मिन् सूत्रे कर्कः–प्रायणीयाशेषभूतद्रव्यसाध्याऽपीयमाहुतिः सोमक्रयार्था । एवं हि श्रूयते । वाग्वै सोमक्रयणी निदानेन तामेतयाऽऽहुत्या प्रीणाति प्रीतया सोमं क्रीणानीति । एवं च सति उदयनीयायां न भवतीति ॥

जुष्टा विष्णवऽइति जुष्टा सोमायेत्येवैतदाह यमच्छेम इति तस्यास्ते सत्यसवसः प्रसव ऽइति सत्यप्रसवा न ऽएधि सोमं नोऽच्छेहीत्येवैतदाह तन्वो यन्त्रमशीय स्वाहेति स ह वै तन्वो यन्त्रमश्नुते यो यज्ञस्योदृचं गच्छति यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥ १२ ॥

(ह्वा) अथ हिरण्यमपोद्धरति । तन्मनुष्येषु हिरण्यं करोति स यत्सहिरण्यं जुहुयात्पराग्घ हैवैतन्मनुष्येभ्यो हिरण्यं प्रवृञ्ज्यात्तन्न मनुष्येषु हिरण्यमभिगम्येत ॥ १३ ॥

सोऽपोद्धरति । शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसीति कृत्स्नेन पयसा हुत्वा यदेवैतत्तदाह शुक्रमसीति शुक्रꣳ ह्येतच्चन्द्रमसीति चन्द्रꣳ

---

"जुष्टा विष्णवे"–( वा. सं. ४ । १८ ) इति । जुष्टा सोमायेत्येवैतदाह । यमच्छेम इति । "तस्यास्ते सत्यसवसः प्रसवे"–( वा. सं. ४ । १८ ) इति । सत्यप्रसवा न एधि, सोमं नोऽच्छेहीत्येवैतदाह । "तन्वो यन्त्रमशीय स्वाहा"–( वा. सं. ४ । १८ ) इति । स ह वै तन्वो यन्त्रमश्नुते–यो यज्ञस्योदृचं गच्छति । यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥ १२ ॥

अथ हिरण्यमपोद्धरति । तन्मनुष्येषु हिरण्यं करोति । स यत्सहिरण्यं जुहुयात्–पराग्घ हैवैतन्मनुष्येभ्यो हिरण्यं प्रवृञ्ज्यात् । तन्न मनुष्येषु हिरण्यमभिगम्येत ॥ १३ ॥

सोऽपोद्धरति–"शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि"–( वा. सं. ४ । १८ ) इति । कृत्स्नेन पयसा हुत्वा यदेवैतत्–तदाह शुक्रमसीति । शुक्रं ह्येतत् । चन्द्रमसीति । चन्द्रं ह्येतत् ।

---

जुष्टा विष्णव इतीति । विष्णुशब्दस्याभिमतमर्थमाह–जुष्टासोमायेत्येवैतदाहेति । भुवनत्रयव्यापकत्वात् सोमो विष्णुः । "रुच्यर्थानां प्रीयमाणः"–( पा. सू. १ । ४ । ३३ ) इति जुषतियोगे चतुर्थी । 'यं' सोमं 'अच्छ' अभिमुखम् 'इमः' गच्छेम वयम् 'इति' अनेनाभिप्रायेण सोमायेत्याहेत्यर्थः । 'सत्यसवसः' सत्यानुज्ञायाः 'तस्याः' 'देव्याः' प्रेरिताया वाचः 'प्रसवे' अनुज्ञायां सत्यामिति मन्त्रभागस्यार्थः । अस्य भागस्य तात्पर्यमाह–सत्यप्रसवा न एधीति । नः अस्माकं सत्यानुज्ञा भवेत्यर्थः । 'न एधि' इत्यत्र न इत्यस्य नः सोममित्यर्थ इति व्याचष्टे–सोमं नोऽच्छेहीति । चरमभागस्य तात्पर्यमाह–तन्वो यन्त्रमिति । 'उदृक्' उत्तमा ऋक्, उदृक्तया यज्ञसमाप्तिर्लक्ष्यते; अतो 'यः' यज्ञसमाप्तिं 'गच्छति' 'सः' एव 'तन्वो यन्त्रम् अश्नुते' ॥ १२ ॥

हिरण्यस्यापोद्धारं विधाय प्रशंसति–अथ हिरण्यमिति । प्राण्युपभोगस्य धनमूलत्वाद् हिरण्यस्यापोद्धारेण मनुष्येषु हिरण्यस्थापनं च कृतं भवति । विपक्षे बाधदर्शनेन विहितमर्थं प्रशंसति–स यत् सहिरण्यमिति । 'सहिरण्यम्' हिरण्येन सहितमाज्यम् । 'पराक् प्रवृञ्ज्यात्' अपुनरागमनं 'मनुष्येभ्यः' सकाशाद् वर्जयेत् । अस्तु, किं तत इत्यत आह–तन्नेति । 'तत्' तर्हि 'मनुष्येषु' 'हिरण्यम्' 'न' अनुवर्तेत ॥ १३ ॥

अपोद्धारमनूद्य मन्त्रमाह–सोऽपोद्धरति शुक्रमसीति । हे हिरण्य ! त्वं 'शुक्रं' दीप्तम् 'असि' 'चन्द्रं'

ह्येतदमृतमसीत्यमृतꣳ ह्येतद्वैश्वदेवमसीति वैश्वदेवꣳ ह्येतत्प्रमुच्य तृणं बर्हिष्युपिसृजति सूत्रेण हिरण्यं प्रबध्नीते ॥ १४ ॥

( तेऽथा ) अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । ( त्वाऽन्वा ) अन्वारभस्व यजमानेत्याहापोर्णुवन्ति शालायै द्वारे दक्षिणतः सोमक्रयण्युपतिष्ठते तत्प्रहितामेवैनामेतत्सतीं प्राहैषीद्वाग्वै सोमक्रयणी निदानेन तामेतयाऽऽहुत्याऽप्रैषीत्प्रीतया सोमं क्रीणानीति ॥ १५ ॥

---

अमृतमसीति । अमृतं ह्येतत् । वैश्वदेवमसीति । वैश्वदेवं ह्येतत् । प्रमुच्य तृणं बर्हिष्यपिसृजति । सूत्रेण हिरण्यं प्रबध्नीते ॥ १४ ॥

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा—अन्वारभस्व यजमानेत्याह । अपोर्णुवन्ति शालायै द्वारे । दक्षिणतः सोमक्रयण्युपतिष्ठते । तत्प्रहितामेवैनामेतत्सतीं प्राहैषीत् । वाग्वै सोमक्रयणी निदानेन । तामेतयाऽऽहुत्याऽप्रैषीत्—प्रीतया सोमं क्रीणानीति ॥ १५ ॥

---

सर्वाह्लादकम् । 'असि' 'अमृतम्' अमरणधर्मकम् 'असि'; अत्यन्ताग्निसंयोगेऽपि विनाशादर्शनात् । 'वैश्वदेवम्' सर्वदेवताप्रीतिकरत्वात् । तदीयोऽयमपोद्धारो होमानन्तरं कार्य इत्याह—कृत्स्नेनेति । प्रागेव यद्यपोद्धरेत्—तदा हिरण्यात्मकस्य पयसोऽभावादाज्यं रूपं पयसोऽकृत्स्नं स्यात्, तस्मादुच्यते—कृत्स्नेन पयसा हुत्वेति । मन्त्रगतं हिरण्यस्य शुक्राद्यात्मकत्वं न स्तुत्यर्थमित्याह—यदेवैतत्तदाह शुक्रमसीत्यादिना । 'यदेव' 'एतत्' हिरण्यस्य स्वाभाविकं रूपम् 'शुक्रं' शुक्ररूपं 'तत्' एष मन्त्रः 'आह' । यद्यपि हिरण्यमाग्नेयं तथापि सर्वप्रियत्वाद् वैश्वदेवमुच्यते । प्रमुच्य तृणमिति । हिरण्ये बद्धं तृणं विमुच्य 'बर्हिषि' अपिसृज्य पुनः 'सूत्रेण' बध्नीयात् । तथा च सूत्रम्—"शुक्रमसीति हिरण्यमुद्धृत्य वेद्यां तृणं निदधाति, सूत्रे बद्धं हिरण्यं कुरुते"–( का. श्रौ. सू. ७ । १६२ । १६३ ) इति ॥ १४ ॥

अथापरमिति । पूर्वोक्तप्रायणीयशेषादेवान्यतः 'चतुर्गृहीतमाज्यं गृहीत्वा' 'यजमान अन्वारभस्व'—'इति ब्रूयात्' । अध्वर्योरनुस्पर्शोऽन्वारम्भः । 'शालायै' शालायाः 'अपोर्णुवन्ति' द्वाराणीति शेषः । सूत्रकारेण "शालाया द्वाराण्यपिधाय"—इत्युक्तत्वात् ( का. श्रौ. सू. ७ । १९९ ) । पूर्वं पिहितानि द्वाराणि सर्वाण्यपवृत्तानि कुर्युः । 'द्वारे' आहवनीयात्—प्राक्तने, सोमक्रयार्थं 'दक्षिणतः' दक्षिणदेशे 'सोमक्रयणी' गौः 'उपतिष्ठते' । सोमक्रयण्यवस्थापनं प्रशंसति—तत्प्रहितामित्यादिना । 'एतत्' 'एतेनावस्थापनेन 'एनां' सोमक्रयणीं 'तत्प्रहितामेव सतीं' तया देवैः प्रेषितया वाचा प्रेरितां सतीम् । अथवा 'तत्' तथा सतीव 'प्रहितामेव' इमां सोमक्रयार्थं गमयेति स्वप्रेरितां सतीमेवैताम् 'एतत्' एतेनावस्थापनेन 'प्राहैषीत्' प्रेरितवान् भवति । तस्या इतरगोसाधारण्यं वारयति—वाग्वै सोमक्रयणीति । तामे-

---

१—चतुर्गृहीतं गृहीत्वाऽन्वारभस्व यजमानेत्याह । का. श्रौ. सू. ७।१६४। २—अपावृतद्वारे निष्क्रामतः। का. श्रौ. सू. ७।१६५। अपावृतद्वारे इति सप्तम्यंतम् । विमिते इति शेषः । विमित इति शालाया उपलक्षणं च । ३—दक्षिणेन द्वारः सोमक्रयणी तिष्ठत्यलक्षिताऽव्यंगाऽप्रवीताऽरज्जुबद्धा बभ्रुः पिंगला पिंगलाभावेऽरुणाऽरुणाभावे रोहिण्यश्येताक्षी । का. श्रौ. सू. ७ । १६६ । आहवनीयात्प्राक्तनं द्वारं दक्षिणत इत्यर्थः ।

(त्य)अथोपनिष्क्रम्याभिमन्त्रयते । चिदसि मनासीति चित्तं वाऽइदं मनो वागनुवदति धीरासि दक्षिणेति धिया धिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्रकामोद्येनेव गाथाभिरिव तस्मादाह धीरसीति दक्षिणेति दक्षिणा ह्येषा क्षत्रियाऽसि यज्ञियाऽसीति क्षत्रिया ह्येषा यज्ञिया ह्येषाऽदितिरस्युभयतःशीर्ष्णीति स यदेनया समानᳪ सद्विपर्यासं वदति यदुपरं तत्पूर्वं करोति यत्पूर्वं तदुपरं तेनोभयतःशीर्ष्णी तस्मादाहादितिरस्युभयतःशीर्ष्णीति ॥ १६ ॥

अथोपनिष्क्रम्याभिमन्त्रयते–" चिदसि मनासि "–( वा. सं. ४ । १९ ) इति । चित्तं वाऽइदं मनो वागनुवदति ।" धीरसि दक्षिणाऽसि "–( वा. सं ४ । १९ ) इति । धियाधिया ह्येतया मनुष्या जुज्यूषन्ति । अनूक्तेनेव, प्रकामोद्येनेव, गाथाभिरिव, तस्मादाह–धीरसीति । दक्षिणेति । दक्षिणा ह्येषा । " क्षत्रियासि यज्ञियासि "–इति । क्षत्रिया ह्येषा, यज्ञिया ह्येषा । " अदितिरस्युभयतःशीर्ष्णी "–( वा. सं. ४ । १९ ) इति । स यदेनया समानं सद्विपर्यासं वदति । यदपरन्तत्पूर्वं करोति, यत् पूर्वं–तदपरम् । तेनोभयतःशीर्ष्णी । तस्मादाह–अदितिरस्युभयतःशीर्ष्णीति ॥ १६ ॥

तयेति । ' तां वाग्रूपां सोमक्रयणीं यस्मात् ' एतया ' पूर्वविहितया " धूरसि "–इत्यादिमन्त्रदेवतया ' अप्रैषीत् ' अध्वर्युः प्रेरितवान् । कया बुद्ध्या ? ' प्रीतया ' तृप्तया ' सोमं क्रीणानीति '॥ १९ ॥

तस्या अभिमन्त्रणं विधत्ते–अथोपनिष्क्रम्याभिमन्त्रयत इति । ' उपनिष्क्रम्य ' शालातो निर्गम्य । अभिमन्त्रणमन्त्रं विभज्य व्याचष्टे–चिदसि मनासीत्यादिना । मन्त्रवाक्यानि तु ब्राह्मणेनैव साकल्येन व्याख्यातानीत्यतो नास्माभिर्वक्तव्यमस्ति । ' इदम् ' इदानीं सर्वविदितप्रकारेण ' चित्तं ' ' मनः; ' मनसा ' वागनुवदति, ' चित्तेन ज्ञानम् । मनसा मतमेवार्थं वाक् प्रकाशयतीत्यर्थः । अतो हे सोमक्रयणि ! त्वं चेतनावस्थापन्ना सती ' चिदसि ' तथा मननेन 'मना' अपि ' असि ' । धीरूपत्वसमर्थनम्–धिया धियेति । ' धिया ' इत्थं वदिष्यामीति बुद्ध्या चित्तवदभिवदनरूपेण कर्मणा वा । धीरिति कर्मनाम ( निघं. २ । १ । २१ ) । ' जुज्यूषन्ति ' जीवितुमिच्छन्ति मनुष्याः । " जीव प्राणधारणे "–( धा. पा. भ्वा. प. ५६२ ) इत्यस्मात्सन्नन्ताद्वुठि कृते रूपम् । तया जीवनप्रकारं स्वयमेव दर्शयति–अनूक्तेनैवेत्यादिना । ' अनूक्तेन ' अनुवचनेन, वेदाध्ययनेनेत्यर्थः । ' प्रकामोद्यम् ' इच्छया लौकिकभाषणम् । ' गाथा ' गद्यपद्यगीत्याद्यात्मिका । सर्वत्र इव–शब्दो वाक्यालङ्कारार्थः । एवंविधैर्वाग्विशेषैर्यतो जीवितुमिच्छन्ति, अतो धीरसीत्युक्तम् । सोमविक्रयिण आनत्यर्थं दीयमानत्वात् साक्षाद् दक्षिणापि खल्वेषा वस्तुतो भवति । क्षत्रं बलं तदर्हतीति ' क्षत्रिया ' गौः । पयआदिसाधनत्वेन तस्या बलकरत्वं सिद्धम् । अथवा क्षत्रं सोमः; " सोमो वै राजा "–( ऐ. ब्रा. १ । ३ । १, ३ । ३ । १ ) इति सर्वत्र राजशब्देन व्यवहारात् । न यज्ञयोगाद्राजत्वं किन्तु राजत्वं नाम क्षत्रियत्वमित्युक्तम् । श्रूयते च–" यान्येतानि देवतया क्षत्रियाणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यः"–( श. प. ब्रा. ४ । ४ । २ । २३–२७ ) इत्यादि । अतस्तत्सम्बन्धात् क्षत्रियैवैषा । यज्ञियत्वं तु सिद्धमेव ।

१–चिदसीत्येनामभिमंत्रयते । का. श्रौ. सू. । ७ । १६७ ॥

सा नः सुप्राची सुप्रतीच्येधीति । सुप्राची न ऽएधि सोमं नोऽच्छेहीत्येवैतदाह सुप्रतीची न ऽएधि सोमेन नः सह पुनरेहीत्येवैतदाह तस्मादाह सा नः सुप्राची सुप्रतीच्येधीति ॥ १७ ॥

मित्रस्त्वा पदि बध्नीतामिति । वरुण्या वाऽएषा यद्रज्जुः सा यद्रज्ज्वाऽभिहिता स्याद्वरुण्या स्याद्यद्वनभिहिता स्यादयतेव स्यादेतद्वाऽअवरुण्यं यन्मैत्रꣳ सा यथा रज्ज्वाऽभिहिता यतैवमस्यैतद्भवति यदाह मित्रस्त्वा पदि बध्नीतामिति ॥ १८ ॥

---

" सा नः सुप्राची सुप्रतीच्येधि "–( वा. सं. ४ । १९ ) इति । सुप्राची न एधि, सोमं नोऽच्छेहीत्येवैतदाह । सुप्रतीची न एधि, सोमेन नः सह पुनरेहीत्येवैतदाह । तस्मादाह–सा नः सुप्राची सुप्रतीच्येधीति ॥ १७ ॥

" मित्रस्त्वा पदि बध्नीताम् "–( वा. सं. ४ । १९ ) इति । वरुण्या वाऽएषा यद्रज्जुः–सा यद्रज्ज्वाऽभिहिता स्याद् वरुण्या स्यात् । यद्वनभिहिता स्याद्–अयतेव स्याद् । एतद्वाऽअवरुण्यं–यन्मैत्रम् । सा यथा रज्ज्वाऽभिहिता यता । एवमस्यैतद्भवति । यदाह–मित्रस्त्वा पदि बध्नीतामिति ॥ १८ ॥

---

अदितिरसीति । हे सोमक्रयणि ! वस्तुतो वाग्रूपा त्वम् ' उभयतः शीर्ष्णी अदितिरसि ' प्रदेशद्वयशिरोयुक्ता अखण्डनीया गौरसि । कुत एतदित्यत आह–स यदिति । ' सः ' वक्ता ' यत् ' यस्मात् ' एनया ' अदित्या उभयतःशिरस्कया निमित्तभूतया ' समानम् ' एकमेव ' सद् ' वाक्यं ' विपर्यासम् ' व्यत्यासेन ' वदति ' तथाहि–" भुङ्क्ष्व देवदत्त ! तिष्ठ विष्णुमित्र ! "–इत्यादौ ' यदेवापरं ' वचनं देवदत्तेत्येवमादि ' तदेव पूर्वं करोति ' उक्तवैपरीत्येन; यत् पूर्वं भुङ्क्ष्वेत्यादिकम्, ' तद् ' 'अपरम् ' " देवदत्त ! भुङ्क्ष्व "–इत्यादिरूपेणापरं च ' करोति ' । तस्माद् वाग्रूपां सोमक्रयणीम् ' उभयतःशीर्ष्णी अदितिरसि '–' इत्याह ' मन्त्रः । तैत्तिरीयके तु सोमयागस्याद्यन्तभूतयोः प्रायणीयोदयनीययोः शिरोवत्प्रधानभूतयोर्वर्तमानयोरदितिर्देवताऽस्ति साऽसीत्यर्थः । तथा च तैत्तिरीयकम्–" अदितिरस्युभयतःशीर्ष्णीत्याह–यदेवादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयः "–( तै. सं. ६ । १ । ७ । ५ ) इति ॥ १६ ॥

" सा नः " इति मन्त्रभागे न इत्यस्य ' नः सोमम्–' इत्यर्थ इति व्याचष्टे–सा नः सुप्राचीति । सोमक्रयणावसरे ' सुप्राची ' भव पुनर्यजमानगृहप्राप्त्यवसरे क्रीतेन सोमेन सह ' सुप्रतीची ' भव। यथा देवप्रेरिता वाक् सोमेन सह पुनरागता, तदात्मकत्वात् त्वमपि सोमक्रयं साधयित्वा क्रीतेन सोमेन सह पुनरावर्तस्वेत्यर्थः॥ १७

मित्रस्त्वेत्यादि । मित्रदेवतायाः पादबन्धनोपयोगं दर्शयति–वरुण्या वा इति । पाशस्य वरुणस्वामिकत्वात् वरुणदेवताका ' रज्जुः ' । ' यत् ' यदि तया ' अभिहिता ' बद्धा यदि स्यात् । तदा वरुण्या स्यात् । सोमार्थता न स्यात् । यत् यदि वा ' 'अनभिहिता स्यात् तदा 'अयता' अस्वाधीना स्यात् । तदा अवरुण्या स्यात् । अत एव तद्दोषपरिहाराय मन्त्रे मित्रकर्तृकपादबन्धनमित्याह–एतद्वा अवरुण्यमिति । सा यथेति । दृष्टान्तेन मन्त्रभागपाठमात्राद् बन्धनं भवत्येवेति समर्थ्यते ॥ १८ ॥

---

१–उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथायेति माध्यन्दिनसंहिता ४ । १९ । ऋ. सं. १ । २५ । १५।

पूषाऽध्वनस्पात्विति । (ती)इयं वै पृथिवी पूषा यस्य वाऽइयमध्वन्गोप्त्री भवति तस्य न का चन ह्वला भवति तस्मादाह पूषाऽध्वनस्पात्विति॥१९॥

(ती) इन्द्रायाध्यक्षायेति । स्वध्यक्षाऽसदित्येवैतदाह यदाहेन्द्रायाध्यक्षायेत्यनु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्य इति सा यत्ते जन्म तेन नोऽनुमता सोममच्छेहीत्येवैतदाह सा देवि देवमच्छेहीति देवी ह्येषा देवमच्छैति यद्वाक्सोमं तस्मादाह सा देवि देवमच्छेहीतीन्द्राय सोममितीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय सोममिति रुद्रस्त्वाऽऽवर्तयत्वित्यप्रणाशायैतदाह रुद्रᳯं हि नाति पशवः स्वस्ति सोमसखा पुनरेहीति स्वस्ति नः सोमेन सह पुनरेहीत्येवैतदाह॥२०॥

---

" पूषाऽध्वनस्पातु "–( वा. सं. ४ । १९ ) इति । इयं वै पृथिवी पूषा । यस्य वाऽइयमध्वन्गोप्त्री भवति–तस्य न का चन ह्वला भवति । तस्मादाह–पूषाऽध्वनस्पात्विति ॥ १९ ॥

" इन्द्रायाध्यक्षाय "–( वा. सं. ४ । १९ ) इति । स्वध्यक्षाऽसद्–इत्येवैतदाह–यदाहेन्द्रायाध्यक्षायेति । " अनु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः "–( वा. सं. ४ । २० ) इति । सा यत्ते जन्मतेन नोऽनुमता सोममच्छेहि–इत्येवैतदाह । " सा देवि देवमच्छेहि "–( वा. सं ४।२० ) इति । देवी ह्येषा देवमच्छैति–यद्वाक् सोमम् । तस्मादाह–सा देविदेवमच्छेहीति । " इन्द्राय सोमम् "–( वा. सं. ४ । २० ) इति । इन्द्रो वै यज्ञस्य देवता । तस्मादाह–इन्द्राय सोममिति । " रुद्रस्त्वाऽऽवर्तयतु "–( वा. सं. ४ । २० ) इति । अप्रणाशायैतदाह । रुद्रं हि नाति पशवः । " स्वस्ति सोमसखा पुनरेहि "–( वा. सं. ४ । २० ) इति । स्वस्ति नः सोमेन सह पुनरेहि–इत्येवैतदाह ॥ २० ॥

---

पूषाऽध्वन इत्यादि । पोषणात् ' पूषा ' 'पृथिवी' । यस्य वा इयमिति । ' अध्वन् ' अध्वनि । 'ह्वला' " ह्वल संचलने " ( धा. पा. भ्वा. प. ४०७ ) । ' प्रच्युतिः ' विनाशः यस्मात् पूष्णा रक्षितस्य प्रच्युतिर्नास्ति, तस्मात् " पूषाऽध्वनः–" इत्याह मन्त्रः । पूष्णो मार्गाणां त्वं नेतृत्वं " पूषा त्वेतो नयतु–"( ऋ. सं. ८ । २ । २९ ) इत्यादिमन्त्रप्रसिद्धम् ॥ १९ ॥

इन्द्रायाध्यक्षायेति । अध्यक्षः स्वामी, तथाविधेन्द्रार्थं पूषा पात्वित्यर्थः । सोमस्येन्द्रस्वामिकत्वात् तदर्थायाः सोमक्रयण्या अपि तत्स्वामित्वम् । ' स्वध्यक्षा असत् '–एषा शोभनस्वामिका भवेत्,–इत्यनेनाभिप्रायेण मन्त्र एवमाहेत्यर्थः । अनु त्वा मातेत्यादि । हे सोमक्रयणि ! ' त्वा ' त्वाम् मात्रादिबन्धुवर्गः क्रयार्थं गमनम् ' अनुमन्यताम् ' अनुमतिं करोत्विति मन्त्रभागस्यार्थः । ' सगर्भ्यः ' समानगर्भभवः, अनेन 'भ्राता' विशेष्यते । ' सयूथ्यः ' यूथं सजातीयानां सङ्घः, समाने यूथे भवः ' सयूथ्यः ' तादृशः ' सखा ' च ' अनु ' मन्यताम् । यत्ते जन्मेति । तादृश्यास्तव सम्बन्धि ' यत् ' तव ' जन्म ' जायत इति जन्म, मात्रादिबन्धुवर्गः, ' तेन ' ' अनुमता ' इत्यर्थः । " सा देवि " इत्यत्र सोमस्य देवत्वं विधित्सितसोमेनानन्यत्वाच्च सिद्धम् । सोमक्रयिण्या देवीत्वं न स्तुत्यर्थमित्यवगमयितुं यद्वाक् सोममित्युक्तम् । इन्द्राय सोममिति । सम्पादये इति

तां युथैवाद्रो देवाः । प्राहिण्वन्त्सोममुच्छ सैनान्त्सह सोमेनागच्छद्देवु-मेवैनामेषु॒ऽएतत्प्रहिणोति सोममुच्छ सैनं॑ सह सोमेनागच्छति ॥२१॥

तां युथैवाद्रो देवाः (०)। व्युह्वयन्ते गन्धर्वैः सा देवानुपावर्ततैवुमेवैनामे-तद्यजमानो विह्वयते सा यजमानमुपावर्तते तामुदीचीमत्याकुर्व्वन्त्युदीची हि मनुष्याणां दिक्सोऽएव यजमानस्य तस्मादुदीचीमत्याकुर्व्वन्ति ॥ २२ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ २ ॥ ३ ॥ (२--४)

---

तां यथैवादो देवाः प्राहिण्वन् सोममच्छ—सैनान्त्सह सोमेनागच्छत् । एवमेवैनामेष एतत्प्रहि-णोति—सोममच्छ । सैनं सह सोमेनागच्छति ॥ २१ ॥

तां यथैवादो देवा व्यह्वयन्त गन्धर्वैः; सा देवानुपावर्तत—एवमेवैनामेतद्यजमानो विह्वयते । सा यजमानमुपावर्तते । तामुदीचीमत्याकुर्वन्ति । उदीची हि मनुष्याणां दिक् । सोऽएव यजमानस्य । तस्मादुदीचीमत्याकुर्वन्ति ॥ २२ ॥

---

शेषः। अतो ' देवमच्छेहीति ' पूर्वत्रान्वयः । इन्द्रो वै यज्ञस्य देवतेति । ' यज्ञस्य ' तत्साधनस्य, सोमस्य ' इन्द्रो देवता ' । तथा च तैत्तिरीयकम्—" इन्द्राय हि सोम आह्रियते "—( तै. सं. ६ ।१।७।७ ) इति । रुद्रस्त्वावर्तयत्विति । रुद्रस्य पश्वधिपतित्वात् स्वयमगृह्णन् पुनरावर्तयत्वित्यभिधानं तस्या अप्रणाशाय भवति । कथं हिंसाप्रसङ्ग इति तत्राह—रुद्रं हीति । ' नाति ' वर्तन्तत इति शेषः । स्वस्ति सोमसखेति । स्वस्तीत्य-विनाशनाम—इति निरुक्तम् । ( निरु. ३ । ४ । ४ ) उक्तो नाशप्रसङ्गः, अतः क्षेमेण 'सोमसखा' तेन सहिता पुनरागच्छेति मन्त्रस्यार्थः ॥ २० ॥

इत्थं मन्त्रवाक्यानां विभज्य तात्पर्यमभिधायेदानीं कृत्स्नमन्त्रतात्पर्यमाह—तां यथैवादो देवा इत्यादिना । सोमक्रयण्या वस्तुतो वागात्मकत्वात् तस्याः सोमक्रयप्रदेशप्राप्तिप्रार्थनं देवैः कृतं सोमानयनार्थवाक्प्रेषणस्थानी-यम् । पुनरागमनप्रार्थनन्तु देवानां पुनर्वागाह्वानस्थानीयमिति सङ्ग्रहार्थः ॥ २१ ॥

तां यथैवाद इति । यथा विप्रकृष्टे काले, पूर्वमित्यर्थः । ' गन्धर्वैः '—सोमपालैः विश्वावसुप्रभृतिभिः साकं ' व्यह्वयन्त '—विविधमाह्वयन् । गन्तव्यद्वारदक्षिणदेशस्थायाः[1] सोमक्रयण्याः उदक् प्रापणम् सार्थवादं विधत्ते—तामुदीचीमिति[2] । ' उदीचीमत्याकुर्वन्ति ' उदङ्मुखातदंत्यध्वर्युः मुखा यन्ति—अध्वर्युप्रमुखाः । ' सो एव ' सैव मनुष्यान्तर्वर्तित्वाद् यजमानस्यापि दिक् ॥ २२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये तृतीयकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥ ( ३—२—४ )

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

---

१—' दक्षिणद्वारदेशस्थायाः ' इति क. पा. । २—उदीचीन्नीयमानामनुगच्छतो व्रस्यसीति ७ । १६८ । ३— तामुदीचीमित्युदङ्-नयनविधिः । उदीचीमतिक्रमणायाकुर्वंति—अभिमुखीकुर्वंति—अतिक्रमयंति यजमानपुरःसः । अध्वर्युयजमानौ त्वनुगमिष्यत इति हरिस्वामिनः । उदीचीन्नीयमानामनुगच्छतो वस्यसीति सूत्राशयोऽपीहगेवेति ।

# तृतीयाध्याये प्रथमं ब्राह्मणम् ।



सप्त पदान्यनु निक्रामति । वृङ्क्तऽएवैनामेतत्तस्मात्सप्त पदान्यनु नि-क्रामति यत्र वै वाचः प्रजातानि च्छन्दाᳫंसि सप्तपदा वै तेषां पराध्यां शक्करी तामेवैतत्परस्तादर्वाचीं वृङ्क्ते तस्मात्सप्त पदान्यनु निक्रामति ॥ १ ॥

सप्त पदान्यनु निक्रामति । वृङ्क्तऽएवैनामेतत् । तस्मात्सप्त पदान्यनु निक्रामति । यत्र वै वाचः प्रजातानि छन्दांसि—सप्तपदा वै तेषां पराध्यां शक्करी । तामेवैतत्परस्तादर्वाचीं वृङ्क्ते । तस्मात्सप्त पदान्यनु निक्रामति ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं सप्ताब्धीन् पञ्चसीरीं स्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्त्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ २ ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा रत्नाढयो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ३
इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे द्वितीयोऽध्यायः समाप्तः ॥ २ ॥ २ ॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्म्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ तृतीयाध्याये सोमक्रयण्यनुगमाद्युपसदन्ताः प्रयोगा निरूप्यन्ते । तत्र, सोमक्रयण्या अनुक्रमणं विधत्ते—**सप्त पदानीति । अनुंनिक्रामतीति** । सा यदा प्रथमं पदं निष्क्रामति तदा तदनु अध्वर्युः स्वयमपि प्रथमं पदं निष्क्रामेत्; द्वितीयमनु द्वितीयम् । तत्र वृङ्क्ते केवलोऽपि वृजिराङ्पूर्वो द्रष्टव्यः आवर्जितवान् भवति । सप्तसङ्ख्यां प्रशंसति—**यत्र वा** इति । 'यत्र' छन्दसामुत्पत्तिकाले 'वाचः' सुपर्णीरूपेणावस्थितायाः सकाशात् 'प्रजातानि' यानि च्छन्दांसि । वाचः सकाशाच्छन्दसामुत्पत्तिरुत्तरत्र "वागेव सुपर्णी" इत्यभिधाय "तथेति सा च्छन्दांसि ससृजे"—इत्याम्नाता ( श. प. ब्रा. ३ । ६ । २ । २–८ ) । तेषां छन्दसां 'पराद्धर्या शक्करी' । परार्द्धे उपरिभागे भवा पराध्यां । "परावराधमोत्तमपूर्वाच्च"—( पा. सू. ४ । ३ । ९ ) इति यत् । शक्कर्याः सप्तपदत्वं प्रसिद्धम् + ( तै. सं. ६ । १ । ८ । १ ) "परस्तादर्वाचीं वृङ्क्ते"—इति । पदादिक्रमेण 'परस्तात्' अवस्थितां गायत्र्याद्यन्तर्भावेन सर्वच्छन्दोरूपां शक्करीम् 'आर्वाचीं वृङ्क्ते' आवृङ्क्ते स्वाभिमुखमावर्जितवान् भवतीत्यर्थः ॥ १ ॥

---

१–अनुनिक्रामतीति–अनुनिष्क्रमणं–पदोपरि पदनिधानं । यत्र सोमक्रयणी पदं निदधाति तत्र द्वयोः–पदयोर्निधानम् । इति शास्त्रदीपिकाव्याख्याने सोमनाथदीक्षिताः । २–षट् पदान्यतीत्य सप्तमं पर्युपविशंति । का. श्रौ. सू. ७।६९ । पर्युपवेशनं च ब्रह्मयजमानाध्वर्युप्रतिप्रस्थातॄणमिति अत्रैव सूत्रे कर्कः । +–काण्वानां शतपथश्रुतिः । सप्तपदा वै शक्करीति । अध्वरकांड अ. ३ ब्रा. १ कं. १ ।

स वै व्वाच ऽ एव रूपेणानुनिक्रामति । व्वस्व्यस्यदितिरस्यादित्याऽसि रुद्राऽसि चन्द्राऽसीति व्वस्वी ह्येषाऽदितिर्ह्येषाऽऽदित्या ह्येषा रुद्रा ह्येषा चन्द्रा ह्येषा व्बृहस्पतिष्ट्वा सुम्ने रम्णात्विति ब्रह्म वै व्बृहस्पतिर्बृहस्पतिष्ट्वा साधुनाऽऽवर्तयत्वित्येवैतदाह रुद्रो व्वसुभिराचकऽइत्यप्रणाशायैतदाह रुद्रँ हि नाति पशवः ॥ २ ॥

( व्रोऽथ ) अथ सप्तमं पदं पर्युपविशन्ति । स हिरण्यं पदे निधाय जुहोति न वाऽअनग्नावाहुतिर्हूयतेऽग्निरेतसं वै हिरण्यं तथो हास्यैषाऽग्निमत्येवाहुतिर्हुता भवति व्वज्रो वाऽआज्यं व्वज्रेणैवैतदाज्येन स्पृणुते ताँ स्पृत्वा स्वीकुरुते ॥ ३ ॥

---

स वै वाच एव रूपेणानु निक्रामति। "वस्व्यस्यदितिरस्यादित्याऽसि रुद्राऽसि चन्द्राऽसि"–( वा. सं. ४।२१ ) इति । वस्वी ह्येषा । अदितिर्ह्येषा । आदित्या ह्येषा। रुद्रा ह्येषा । चन्द्रा ह्येषा । "बृहस्पतिष्ट्वा सुम्ने रम्णातु"–( वा. सं. ४ । २१ ) इति । ब्रह्म वै बृहस्पतिः । बृहस्पतिष्ट्वा साधुनाऽऽवर्तयतु–इत्येवैतदाह । "रुद्रो वसुभिराचके"–( वा. सं. ४।२१ ) इति । अप्रणाशायैतदाह । रुद्रं हि नाति पशवः ॥ २ ॥

अथ सप्तमं पदं पर्युपविशन्ति । स हिरण्यं पदे निधाय जुहोति । न वाऽअनग्नावाहुतिर्हूयते । अग्निरेतसं वै हिरण्यम् । तथो हास्यैषाऽग्निमत्येवाहुतिर्हुता भवति। वज्रो वाऽआज्यम् । वज्रेणैवैतदाज्येन स्पृणुते । तां स्पृत्वा स्वीकुरुते ॥ ३ ॥

---

अनुक्रमणं समन्त्रकं कर्तव्यमित्याह–**स वै वाच** इति । अनुक्रमणमन्त्रे सोमक्रयण्यवस्थादिरूपत्वाभिधानं न स्तुत्यर्थमित्याह–**वस्वी ह्येषे**त्यादिना । वसुरुद्रादित्याः सवनत्रयदेवताः । 'अदितिः' प्रायणीयोदयनीयदेवता । चन्द्रशब्देनाह्लादकत्वादिह सुवर्णम् । हे सोमक्रयणि ! त्वं वस्वादीनां स्वरूपमसि । तदपेक्षितसोमसाधनत्वात् 'वस्वी ह्येषा'–इत्यभिधानम् । 'रम्णातु' रमयतु । "रमु क्रीडायाम्" ( धा. पा. भ्वा. आ. ८९३ ) व्यत्ययेन श्ना ( पा. सू. ३ । १ । ८५ ) । बृहस्पतिस्त्वेत्यस्यार्थमाह–**ब्रह्म वै बृहस्पति**रिति । 'बृहस्पतिः' बृहतो मन्त्रस्य पालयिता । तदभिमानिदेवता गच्छन्तीं त्वां 'सुम्ने' सुखकरे। यत् सुखकरं तत् साधु; अतः "सुम्ने रम्णातु" इति यदाह तेन 'साधुना' मार्गेण 'आवर्तयत्वित्येवाह'। **रुद्रो देवो वसुभि**रिति । हे सोमक्रयणि ! तव सुखं 'वसुभिः' सहितो 'रुद्रः' 'आचके' कामयते इति मन्त्रभागस्यार्थः । रुद्रौत्सुक्यप्रार्थनाया उपयोगं दर्शयति–**अप्रणाशाये**ति। शिष्टं गतम् ( श. प. ब्रा. ३।२। २० कं० भाष्ये ) ॥२॥

**अथ सप्तमं पद**मिति[२] । यजमानमितरांश्चर्त्विजोऽपेक्ष्य 'पर्युपविशन्ति'–इति बहुवचनम् । 'परि' परितः सप्तमपदस्य सर्वदिक्षु । 'सः' अध्वर्युः । होमाय हिरण्यनिधानं प्रशंसति–**न वा अनग्ना**विति । हिरण्यस्याग्निरेतस्त्वं प्रागुक्तम् । होमसाधनमाज्यं प्रशंसति–**वज्रो वा** इति । "घृतं वै देवा वज्रं कृत्वा सोममघ्नन्" ( तै.

---

१–"रम्णातिः संयमनकर्मा विसर्जनकर्मा वा" इति निरुक्त । १० । १ । ९ । २–का. श्रौ. सू. ७।६९ ।

सु जुहोति । ( त्यु ) अदित्यास्त्वा मूर्धन्नाजिघर्मीतीयं वै पृथिव्युदितिरस्यै हि मूर्धञ्जुहोति देवयजनेति पृथिव्याऽइति देवयजने हि पृथिव्यै जुहोतीडायास्पदमसि घृतवत्स्वाहेति गौर्वाऽइडा गोर्हि पदे जुहोति घृतवत्स्वाहेति घृतवद्ध्येतदभिहुतं भवति ॥ ४ ॥

(त्यु)अथ स्फ्युमादाय पुरिलिखति।वुज्रो वै स्फ्यो वुज्रेणैवैतत्पुरिलिखति त्रिष्कृत्वः पुरिलिखति त्रिवृतैवैतद्वज्रेण समन्तं पुरिगृह्णात्युनतिक्रमाय ॥ ५ ॥

---

स जुहोति–" अदित्यास्त्वा मूर्धन्नाजिघर्मि "–( वा. सं ४ । २२ ) इति । इयं वै पृथिव्यदितिः । अस्यै हि मूर्धञ्जुहोति । " देवयजने पृथिव्याः "–( वा. सं ४ । २२ ) इति । देवयजने हि पृथिव्यै जुहोति । " इडायास्पदमसि घृतवत्स्वाहा "–( वा. सं ४ । २२ ) इति । गौर्वाऽइडा । गोर्हि पदे जुहोति । घृतवत्स्वाहेति । घृतवद्ध्येतदभिहुतं भवति ॥ ४ ॥

अथ स्फ्यमादाय परिलिखति । वज्रो वै स्फ्यः । वज्रेणैवैतत्परिलिखति । त्रिष्कृत्वः परिलिखति । त्रिवृतैवैतद्वज्रेण समन्तं परिगृह्णात्यनतिक्रमाय ॥ ५ ॥

---

सं ६ । २ । २ । ४ ) ( श. प. ब्रा. ३ । ४ । ४ । ६ ) इत्यादिश्रुत्यन्तरप्रसिद्धिर्वज्रो वा इति । ' वै ' शब्देन द्योत्यते । ' स्पृणुते ' हिनस्ति ' तां ' पदप्रदेशस्थां मृदमित्यर्थः ॥ ३ ॥

पदे समन्त्रकं होमं विधत्ते–**स जुहोत्यदित्या** इति[1] । अयमर्थः । हे आज्य ! ' त्वा ' त्वाम् ' अदित्याः ' पृथिव्याः ' मूर्द्धन् ' मूर्द्धनि 'आजिघर्मि' सर्वतः क्षारयामि, जुहोमि । "घृ क्षरणदीप्त्योः"–(धा.पा.जु.प.१४) अत्र क्षरणमर्थः । कीदृशे ? पृथिव्या अवयवभूते देवयजने देवा इज्यन्ते अत्रेति देवयजनम् । ' घृतवत् ' घृतोपेतम् । 'इडायाः'गोः । इडेति गोनाम[2] ( निघं. २।११। ७ ) । तस्याः सोमक्रयण्याः 'पदं' पादनिधानमस्ति । अत इदं 'स्वाहा'स्वाहुतमस्तु । इडापदस्य घृतोपेतत्वं तैत्तिरीयके श्रुतम्–"[3]यदेवास्यै पदाद् घृतमपीड्यत तस्मादेवमाह"–( तै. सं. ६ । १ । ८ । २ ) इति । मन्त्रं व्याचष्टे–**इयं वै पृथिव्यदितिरि**त्यादिना । ' घृतवत्स्वाहा '– इत्यस्य तात्पर्यमाह–**घृतवद्ध्येत**दिति । ' एतत् ' एतेन मन्त्रभागपाठेन घृतयुक्तमेव सत् पुनराज्येन चापि संयुक्तं स्यादित्यर्थः ॥ ४ ॥

पदस्य परिलेखनं सार्थवादं विधत्ते–**अथ स्फ्यमादाये**ति[4] । स्फ्यस्य वज्रत्वं तैत्तिरीये स्पष्टमाम्नातम्– " इन्द्रो वृत्राय वज्रं प्राहरत्, स त्रेधा व्यभवत् स्फ्यस्तृतीयं, रथस्तृतीयं, यूपस्तृतीयम् "–( तै. सं. ६ । १ । ३ । ४ ) इति । परिलेखनस्य त्रिरावृत्तिं विधत्ते–**त्रिष्कृत्व** इति ॥ ५ ॥

---

१–हिरण्यमस्मिन्निधायाभिजुहोत्यदित्यास्त्वेति । का. श्रौ. सू. ७ । १७० । २–इडे रंते हव्ये काम्ये चंद्रे ज्योतेऽरदिति सरस्वति महि विश्रुति ॥ एता ते अघ्न्येनामानीति माध्यंदिनसंहितायाम् ८ अष्टमेऽध्याये गोनामसु पठ्यते । ३–' सा यत्र यत्र न्यक्रामत्ततो घृतमपीड्यत तस्माद्घृतपद्युच्यते ' इति क्वचित् पुस्तके पाठः । पूर्वपाठापेक्षया भिन्न इव दृश्यते । ४–स्फ्येन पदं त्रिः परिलिखत्यस्मे-रमस्वेति । का. श्रौ. सू. ७ । १७१ ।

स परिलिखति । ( त्य ) अस्मे रमस्वेति यजमाने रमस्वेत्येवैतदाहाथ समुल्लिख्य पदꣳ स्थाल्याꣳ संवपत्यस्मे ते बन्धुरिति यजमाने ते बन्धुरित्येवैतदाह ॥ ६ ॥

( ह्वा ) अथाप ऽउपनिनयति । यत्र वाऽअस्यै खनन्तः क्रूरीकुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदद्भिः संदधाति तस्मादप ऽउपनिनयति ॥ ७ ॥

(त्य) अथ यजमानाय पदं प्रयच्छति । त्वे राय इति पशवो वै रायस्त्वयि पशव ऽइत्येवैतदाह तद्यजमानः प्रतिगृह्णाति मे राय इति पशवो वै रायो मयि पशव ऽइत्येवैतदाह ॥ ८ ॥

---

स परिलिखति–" अस्मे रमस्व "–( वा. सं. ४।२२ ) इति । यजमाने रमस्वेत्येवैतदाह । अथ समुल्लिख्य पदं स्थाल्यां संवपति । "अस्मे ते बन्धुः"–( वा. सं. ४।२२) इति । यजमाने ते बन्धुरित्येवैतदाह ॥ ६ ॥

अथाप उपनिनयति । यत्र वाऽअस्यै खनन्तः क्रूरीकुर्वन्ति–अपघ्नन्ति । शान्तिरापः । तदद्भिः शान्त्या शमयति । तदद्भिः संदधाति । तस्मादप उपनिनयति ॥ ७ ॥

अथ यजमानाय पदं प्रयच्छति–" त्वे राय "–( वा. सं. ४।२२ ) इति । पशवो वै रायः । त्वयि पशव इत्येवैतदाह । तद् यजमानः प्रतिगृह्णाति । " मे रायः "–( वा. सं. ४।२२ ) इति । पशवो वै रायः । मयि पशवः इत्येवैतदाह ॥ ८ ॥

---

परिलेखनमन्त्रं विधत्ते–**स परिलिखतीति** । ' अस्मे '–इत्यस्य तात्पर्यमाह–**यजमाने** इति । ' अस्मे ' अस्मदीये ' यजमाने ' । सप्तमपदपांसोः स्थाल्यां स्थापनं समन्त्रकं विधत्ते–**अथ समुल्लिख्येति** । हे पदपांसो ! ' ते ' तव ' बन्धुः ' स्नेहबन्धुः ' अस्मे ' अस्मदीये ' यजमाने ' अस्त्विति मन्त्रार्थः । " सुपां सुलुक् "–( पा. सू. ७ । १ । ३९ ) इत्युभयत्र सप्तम्याः शेभावः ॥ ६ ॥

**अथापं** इति । परिलिखितप्रदेशे अपां निनयनं विधाय, प्रशंसति–**यत्रेत्यादिना** । खननं हि हिंसात्मकत्वात् क्रूरीकरणम्, अपान्त्वौष्ण्यनिवारकत्वाच्छान्तिरूपत्वं प्रसिद्धम् । अतः 'शान्त्या अद्भिः' शान्तिरूपाभिरद्भिः तत् क्रौय शमितवान् भवति । निनयनस्य प्रयोजनान्तरम्–**तदद्भिरिति** ॥ ७ ॥

**अथ यजमानायेति** । **पदं प्रयच्छन्तीति** ( का.श्रौ. सू.७।१७३) । 'पदं' स्थालीस्थं पदपांसुम् । ' रै '–शब्दार्थमाह–**पशवो वै राय** इति । ' त्वे ' इत्येतत् सप्तम्यन्तमिति व्याचष्टे–**त्वयि पशव इत्येवैतदाहेति** । अध्वर्युदत्तस्य पांसोः समन्त्रकं प्रतिग्रहं विधत्ते–**तद्यजमान** इति । ' मे रायः ' इति पूर्ववद् व्याख्येयम् ॥ ८ ॥

---

१–समुद्धृत्य पद [२]स्थाल्यामावपत्यस्मे ते बंधुरिति । कां. श्रौ. सू. ७ । १७२ । उद्धरणं हिरण्यस्य । समुद्धृत्य हिरण्यमिति वचनादिति कर्कः । उपोद्धृत्य हिरण्यमिति काण्वश्रुतिः । अध्वरकांडे अ. ३ ब्रा.१ कं.४ । समुद्धृत्य हिरण्यमिति माध्यंदिनश्रुताव-भावात् उपोद्धृत्य हिरण्यमिति वचनादिति कर्कलेखो युक्तः । समुद्धृत्येति लेखकप्रमाद इत्यवगंतव्यम् । २–अपः स्थाने निषिच्य यजमानाय पदं प्रयच्छति त्वे राय इति । का.श्रौ.सू. ७।१७३। ३–मे राय इति यजमानः प्रतिगृह्णाति पदम् । का.श्रौ.सू.७।१७४।

( ह्वा ) अथाध्वर्युरात्मानमुपस्पृशति । मा व्वयꣳ रायस्पोषेण व्वियौ-ष्मेति तथो हाध्वर्युः पशुभ्य आत्मानं नान्तरेति ॥ ९ ॥

( त्यु ) अथ पत्न्यै पदं प्रतिपराहरन्ति । गृहा वै पत्न्यै प्रतिष्ठा तद्गृ-हेष्वेवैनामेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मात्पत्न्यै पदं प्रतिपराहरन्ति॥१०॥

तां नेष्टा व्वाचयति । तोतो राय इत्यथैनाꣳ सोमक्रयण्या संख्यापयति व्वृषा वै सोमो योषा पत्न्येष वाऽअत्र सोमो भवति यत्सोमक्रयणी मिथुन-मेवैतत्प्रजननं क्रियते तस्मादेनाꣳ सोमक्रयण्या संख्यापयति ॥ ११ ॥

---

अथाध्वर्युरात्मानमुपस्पृशति । " मा वयं रायस्पोषेण वियौष्म "–( वा. सं. ४ । २२ ) इति । तथो ह्याध्वर्युः पशुभ्य आत्मानं नान्तरेति ॥ ९ ॥

अथ पत्न्यै पदं प्रतिपराहरन्ति । गृहा वै पत्न्यै प्रतिष्ठा । तद्गृहेष्वेवैनामेतत्प्रतिष्ठायां प्रतिष्ठा-पयति । तस्मात्पत्न्यै पदं प्रतिपराहरन्ति ॥ १० ॥

तां नेष्टा वाचयति–"तोतो रायः ( वा. सं४।२२)"इति । अथैनां सोमक्रयण्या संख्यापयति। वृषा वै सोमो–योषा । पत्नी एष वाऽअत्र सोमो भवति–यत् सोमक्रयणी । मिथुनमेवैतत्प्रजननं क्रियते । तस्मादेनां सोमक्रयण्या संख्यापयति ॥ ११ ॥

---

अथाध्वर्युरात्मानमिति[1] । वयं वियौष्म इति । पूजार्थं बहुवचनम् । वियुक्ता भूत्वा मा यौष्मेति । "यु मिश्रणामिश्रणयोः"–( धा. पा. अ.प.२३ ) इत्यस्य लुङि माङ्योगादडभावः (पा. सू. ६।४।७४)॥९॥

अथ पत्न्या इति । ' प्रतिपराहरन्ति ' प्रयच्छेयुरित्यर्थः । तथा च कात्यायनः–" हृत्वा पत्न्यै पदं प्रय-च्छति "–( का. श्रौ. सू. ७।१७६ )इति । पत्नी खलु प्रतिष्ठा निलयनरूपा । गृहाणां बहुत्वेऽपि प्रतिष्ठाया एकत्वादेकवचनम् । गृहं यथा धान्यादिनिक्षेपस्थानमेवं पत्न्यपीत्यर्थः । स्पष्टमन्यत् ॥ १० ॥

तां नेष्टेति । ' तां ' गृहीतपांसुपत्नीम् । ' तोतः ' इति तोकसमानार्थः । ' रायः ' धनानि ' तोतः ' पुत्रः, स्वीकरोत्वित्यर्थः । यद्वा ' तोतः ' त्वत्तः, त्वयि रायः सन्त्विति शेषः । अथैनां सोमक्रयण्येति । ' एनां ' पत्नीं ' सोमक्रयण्या ' ' सङ्ख्यापयति ' ' नेष्टा ' सोमक्रयणी सेयं तया पत्नीमनेन मन्त्रेण दर्शयेत् । गतिबुद्ध्याद्यर्थाभावात् ( पा. सू. १ । ४ । ५२ ) सोमक्रयण्याः कर्मत्वाभावः । सङ्ख्यापनं प्रशंसति–वृषा वा इति । " वृषा वै सोमः " इति सोमो निर्दिष्टः । कस्तस्य प्रसङ्ग इति तत्राह–एष वा अत्रेति । ' अत्र ' सोमक्रयप्रस्तावे सोमक्रयण्याः सोमसम्पत्त्यर्थत्वात् । सैव ' एषः सोमः ' । सोम इति विधेयस्य पुँल्लि-ङ्गत्वमपेक्ष्यैष इति पुँल्लिङ्गत्वम् । अतः ' एतत् ' एतेन उभयोः सम्बन्धेन उत्पादनसमर्थं ' मिथुनमेव ' सम्पादितं भवति ॥ ११ ॥

---

१–माव्वयमित्यध्वर्युरात्मान ९सꣳस्पृशति । का. श्रौ. सू. ७।१७५। २–नेष्टा तोत इत्येनां व्वाचयति ।का. श्रौ. सू. ७।१७७

स सुंख्यापयति । सुमख्ये देव्या धिया सं दक्षिणयोरुचक्षसा । मा मऽआयुः प्रमोषीर्मोऽअहं तव व्वीरं व्विदेय तव देवि संदृशीत्याशिषमेवैतदाशास्ते पुत्रो वै व्वीरः पुत्रं व्विदेय तव संदृशीत्येवैतदाह ॥ १२ ॥

सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी यत्र वाऽइन्द्राविष्णू त्रेधा सहस्रं व्यैरयेतां तदेकाऽत्यरिच्यत तां त्रेधा प्राजनयतां तस्माद्योऽप्येतर्हि त्रेधा सहस्रं व्याकुर्यादेकैवातिरिच्येत ॥ १३ ॥

---

स संख्यापाति " समख्ये देव्या धिया सं दक्षिणयोरुचक्षसा । मा मऽआयुः प्रमोषीर्मो अहं तव वीरं विदेय तव देवि संदृशि"–( वा. सं ४।२३ ) इति । आशिषमेवैतदाशास्ते । पुत्रो वै वीरः । पुत्रं विदेय–तव संदृशि–इत्येवैतदाह ॥ १२ ॥

सा या बभ्रुः पिङ्गाक्षी सा सोमक्रयणी । यत्र वाऽइन्द्राविष्णू त्रेधा सहस्रं व्यैरयेताम्, तदेकाऽत्यरिच्यत । तां त्रेधा प्राजनयताम् । तस्माद्योऽप्येतर्हि त्रेधा सहस्रं व्याकुर्याद्–एकैवातिरिच्येत ॥ १३ ॥

---

स संख्यापयतीति । संख्यापनमन्त्रं पठति–समख्ये देव्येत्यादिना । अत्र कात्यायनः–" एनां वाचयति सोमक्रयण्या च समीक्ष्यमाणां समख्य इति "–( का. श्रौ. सू. ७ । १७७ । १७८ ) इति मन्त्रस्यायमर्थः । अहं 'धिया देव्या' धीर्देवी हि सोमक्रयणी प्रागुक्ता ( श. प. ब्रा ३ । २ । ४ । १६ भाष्ये ) अतो वाग्रूपया सोमक्रयण्या समख्ये द्रष्टा भवामीत्यर्थः । " ख्या प्रकथने "–( धा. पा. अ. प. ५० ) इत्यस्य लुङुत्तमैकवचने " अस्यतिवक्ति "–( पा. सू. ३ । १ । ५२ ) इत्यादिना अङ् कर्मणि द्रष्टव्यः । अत एवात्मनेपदम् । " दक्षिणासि यज्ञियासि "–( श. प. ब्रा. ३ । २ । ४ । १६ ) इति प्रागुक्तत्वाद् दक्षिणाऽपि सोमक्रयणी । अतः ' उरुचक्षसा ' प्रभूतदर्शनया तया समख्ये । अथ प्रत्यक्षवादः । हे सोमक्रयणि ! ' मे आयुः मा प्रमोषीः ' । ' मा ऊ अहम् ' अहमपि ' तव ' आयुः मा प्रमोषिषम् । हे ' देवि ' ! 'तव ' ' संदृशि ' सन्दर्शने सति ' वीरं ' पुत्रं ' विदेय ' लभेय । अयं मन्त्र आशीःपर इत्याह–आशिषमेवैतदिति । ' वीर '–शब्दार्थमाह–पुत्रो वै वीरः–इति ॥ १२ ॥

सोमक्रयण्या लक्षणमभिधातुमाह–सा या बभ्रुः पिङ्गाक्षीत्यादिना । बभ्रुः पिङ्गाक्षी सोमक्रयणी श्रेष्ठेत्यभिधातुमाख्यायिकामाह–यत्र वेति । गोसहस्रदक्षिणाविभागसमये ' सहस्रं ' त्रेधा ' व्यैरयेताम् ' विभज्य प्रेरितवन्तौ । ' ताम् ' अतिरिक्तां ' त्रेधा ' बभ्रुवरुणरोहिणीरूपेण त्रिविधां ' प्राजनयताम् ' उदपादयताम् । उत्पादनप्रकारस्तैत्तिरीयकेऽपि स्पष्टमाम्नातः–" तामप्सु प्रावेशयन्त्सोमायोदेहीति सा रोहिणी पिङ्गलैकहायनी रूपं कृत्वा त्रयस्त्रिंशता च त्रिभिश्च शतैः सहोदैत् "–( तै. सं. ७ । १ । ६ । २ ) इत्यादिना । अतः ' एतर्हि ' इदानीमपि ॥ १३ ॥

---

१–चकारान्नैव पत्नीं वाचयतीति कर्कः ।

सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयण्यथ या रोहिणी सा वार्त्रघ्नी यामिदꣳ राजा संग्रामं जित्वोदाकुरुतेऽथ या रोहिणी श्येताक्षी सा पितृदेवत्या यामिदं पितृभ्यो घ्नन्ति ॥ १४ ॥ [ शतम् १६०० ॥ ]

सा या बभ्रुः पिङ्गाक्षी । सा सोमक्रयणी स्याद्यदि बभ्रुं पिङ्गाक्षीं न विन्देदरुणा स्याद्यद्यरुणां न विन्देद्रोहिणी वार्त्रघ्नी स्याद्रोहिण्यै ह त्वेव श्येताक्ष्याऽआशां नेयात् ॥ १५ ॥

( त्सा ) सा स्यादप्रवीता । वाग्वाऽएषा निदानेन यत्सोमक्रयण्ययातयाम्नी वाऽइयं वागयातयाम्न्यप्रवीता तस्मादप्रवीता स्यात्सा स्यादवण्डाऽकूटाऽकाणाऽकर्णाऽलक्षिताऽसप्तशफा सा ह्येकरूपैकरूपा हीयं वाक् ॥ १६ ॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ २ ॥ ४ ॥ ( ३।१ )

---

सा या बभ्रुः पिङ्गाक्षी सा सोमक्रयणी । अथ या रोहिणी सा वार्त्रघ्नी । यामिदं राजा संग्रामं जित्वोदाकुरुते । अथ या रोहिणी—श्येताक्षी—सा पितृदेवत्या—यामिदं पितृभ्यो घ्नन्ति ॥ १४ ॥

सा या बभ्रुः पिङ्गाक्षी—सा सोमक्रयणी स्यात् । यदि बभ्रुं पिङ्गाक्षीं न विन्देत्—अरुणा स्यात् । यद्यरुणां न विन्देद्—रोहिणी वार्त्रघ्नी स्यात् । रोहिण्यै ह त्वेव श्येताक्ष्या आशां नेयात् ॥ १५ ॥

सा स्यादप्रवीता । वाग्वाऽएषा निदानेन—यत्सोमक्रयणी । अयातयाम्नी वाऽइयम् वाग् । अयातयाम्न्यप्रवीता । तस्मादप्रवीता स्यात् । सा स्यादवण्डाऽकूटाऽकाणाऽकर्णाऽलक्षिताऽसप्तशफा । सा ह्येकरूपा । एकरूपाहीयं वाक् ॥ १६ ॥

---

त्रिविधायास्तस्या गोः मुख्यानुकल्पभेदेन सोमक्रयणीत्वं प्रदर्शयितुं तद्विभागमाह—सा येति । 'बभ्रुः' चतुर्वर्णा । पिङ्गे पिङ्गले अक्षिणी यस्याः सा 'पिङ्गाक्षी' 'सा' सोमदेवतार्हत्वात् 'सोमक्रयणी'। 'रोहिणी' रोहितवर्णा, सा 'वार्त्रघ्नी' वृत्रहा इन्द्रः, तद्देवत्या । इदानीन्तनो 'राजा संग्रामं जित्वा' परकीयाद् राष्ट्रात् 'यां' रोहिणीम् 'उदाकुरुते' स्वीकरोति सा वार्त्रघ्नीत्यर्थः । 'श्येताक्षी' कृष्णलोचना । सा पितृदेवत्या । 'इदं' इदानीम् 'पितृभ्यः' अर्थाय घ्नन्ति ॥ १४ ॥

इत्थं विधानस्वरूपमभिधाय विनियोगप्रकारमाह—सा येति । बभ्रुः—पिङ्गाक्षी सोमक्रये मुख्या । तदभावे 'अरुणा' अव्यक्तरागा । तदभावे 'रोहिणी'। सा यदि श्येताक्षी स्यात् तादृश्याः 'आशाम्' अपि 'नेयात्' न कुर्यात् । तत्र कात्यायनः—"सोमक्रयणी तिष्ठत्यलक्षिताऽव्यङ्गाऽप्रवीताऽरज्जुबद्धा बभ्रुः पिङ्गला पिङ्गलाभावे अरुणा अरुणाभावे रोहिण्यश्येताक्षी"—( का. श्रौ. सू. ७ । १६६ ) इति ॥ १५ ॥

सोमक्रयण्या गर्भात् प्राग् अवस्थानं सार्थवादं विधत्ते—सा स्यादप्रवीतेति । "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु"—(धा. पा. अ.प. ३८ ) अत्र प्रजननमर्थः । 'अप्रवीता' अगृहीतगर्भेत्यर्थः । 'अयातयाम्नी.'

पदॅ᳖ सुमुप्य पाणीऽअुवनेनिक्ते । तद्युत्पाणी ऽअवनेनिक्ते व्वुज्रो वाऽअुाज्यᳪं रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमᳪं हिनुसानीति तुस्मात्पाणीऽअुवनेनिक्ते ॥ १ ॥

( क्रेऽथा ) अुथास्याᳪं हिुरण्यं बध्नीते । द्वयं वाऽइदं न तृतीयमस्ति सत्यं चैवानृतं च सत्यमेवु देवा ऽअुनृतं मनुष्या अग्निरेतसं वै हिुरण्यᳪं सत्येनाᳪंशूनुपस्पृशानि सत्येन सोमं पुराहणानीति तुस्माद्वाऽअस्याᳪं हिुरण्यं बध्नीते ॥ २ ॥

---

पदं समुप्य पाणी अवनेनिक्ते । तद् यत्पाणी अवनेनिक्ते । वज्रो वा आज्यम्, रेतः सोमः । नेद्वज्रेणाज्येन रेतः सोमं हिनसानीति । तस्मात्पाणी अवनेनिक्ते ॥ १ ॥

अथास्यां हिरण्यं बध्नीते । द्वयं वा इदम्, न तृतीयमस्ति—सत्यं चैवानृतं च । सत्यमेव देवाः, अनृतं मनुष्याः । अग्निरेतसं वै हिरण्यम् । सत्येनांशूनुपस्पृशानि, सत्येन सोमं पराहणानीति । तस्माद्वाऽअस्यां हिरण्यं बध्नीते ॥ २ ॥

---

अगतरसा । बहुभिरसकृदुच्यमानाया अपि वाचोऽगतरसत्वं प्रसिद्धम् । अतः सोमक्रयण्या वाग्रूपत्वादयातयाम्न्या भवितव्यम् ( तै. सं. ६ । १ । ७ । २ । ) अत एकहायनीपरिग्रहे गर्भरूपरसनिर्गमाभावाद्वागगुगुण्यं भवति । तस्मादप्रवीता भवेत् । इत्थं वर्णवयोविशेषमभिधाय अङ्गवैकल्याभावमाह—अवण्डाऽकूटेति । 'वण्डा' वर्धिष्णुः, 'अवण्डा' तद्विपरीता भवेत् । एवमुत्तरत्रापि । 'कूटा' एकशृङ्गी । 'काणा' एकाक्षी । 'कर्णा' छिन्नकर्णा । 'लक्षिता' तप्तायःशलाकया चिह्निता, 'सप्तशफा' एकस्मिन् पादे एकेन शफेन हीना; उक्तदोषवर्जिता । 'एकरूपा' उक्तदोषवर्जितत्वमेवैकरूप्यम्, सम्पूर्णावयवेत्यर्थः ( तै. सं. ६ । १ । ७ । २ ) ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ ( ३—३—१ ) ॥

प्रासङ्गिकमभिधायेदानीमध्वर्योः पात्रे पांसुप्रक्षेपानन्तरं हस्तप्रक्षालनं विधत्ते—पदं समुप्येति[1] । अवनेजनमुदकेन शोधनम् । उक्तावनेजनं सोमहननपरिहारत्वेन प्रशंसति—तद्यत्पाणी इति । " घृतं वै देवा वज्रं कृत्वा सोममघ्नन् "—( तै. सं. ६ । २ । २ । ४ । श. प. ब्रा. ३ । ४ । ४ । ६ ) इति श्रुतेः । आज्यस्य वज्रत्वम् । सोमस्य यागसाधनद्वारेण सर्वौषधीयत्वेनान्नाद्यात्मकतया च सर्वजगदुत्पादकत्वाद्रेतस्त्वम् । एतस्य हिंसानर्हत्वाद्, यजनीयाज्यस्य सोमघातकत्वात्, सोमहतिपरिहारायावनेजनं कर्तव्यमिति स्तुतिः ॥ १ ॥

अध्वर्योः स्वांगुल्यां हिरण्यबन्धनं विधाय प्रशंसति—अथास्यामिति । 'अस्याम्' इत्यनामिकांगुल्यामभिनयेन प्रदर्शनम् । हिरण्यस्य देवसम्बन्धद्वारा सत्यत्वाभिधानाय सत्यानृतद्वैविध्याभिधानम् । उक्तं हिरण्य-

---

१—प्रक्षाल्य पाणी । का. श्रौ. सू. ७ । १७९ । २—हिरण्यं बध्नीतेऽनामिकायाम् । का. श्रौ. सू. ७ । १७९ ।

(तुऽथ) अथ सम्प्रेष्यति । सोमोपनहनमाहर सोमपर्याणहनमाहरोष्णीषमाहरेति स यदेव शोभनं तत्सोमोपनहनꣳ स्याद्वासो ह्यस्यैतद्भवति शोभनꣳ ह्येतस्य वासः स यो हैनꣳ शोभनेनोपचरति शोभते हाथ स आह यदेव किंचेति यद्वैव किंच भवति तस्माद्यदेव शोभनं तत्सोमोपनहनꣳ स्याद्यदेव किंच सोमपर्याणहनम् ॥ ३ ॥

---

अथ सम्प्रेष्यति । सोमोपनहनमाहर, सोमपर्याणहनमाहर, उष्णीषमाहरेति । स यदेव शोभनं तत्सोमोपनहनं स्यात् । वासो ह्यस्यैतद्भवति । शोभनं ह्येतस्य वासः । स यो हैनं शोभनेनोपचरति—

---

स्याग्निरेतस्त्वम् ( श. प. ब्रा. ३ । २ । ४ । ८ ) । उक्तप्रकारेण हिरण्यस्य सत्यत्वात् । तेन 'अंशूनुपस्पृशानि' अभिषवाप्यायनादिषु । तेन 'सोमं' 'पराहणानि' व्यापारयाणि । उपस्पर्शाद्युपयोगाय हिरण्यं धारयेदित्यर्थः ।*पाणेर्हिरण्यबन्धनस्य कालविकल्पं कात्यायनो दर्शयति—"हिरण्यं बध्नीतेऽनामिकायामाप्यायनाभिषवाꣳश्वदाम्येषु वा"—इति ॥ २ ॥

सोमार्थमध्वर्योः सम्प्रैषं दर्शयति—अथ सम्प्रेष्यतीति[२] । सोम उपनह्यते येन तत् 'सोमोपनहनम्' सोमबन्धनवस्त्रम् । 'सोमपर्याणहनम्' शकटेन सह सोमस्य परितो बन्धनवासः । 'उष्णीषं' सोमोपनहने स्थापि-

---

*—पाणेरित्यारभ्य—वा इत्यंतम् अपव्याख्यानम् । तथाहि देवयाज्ञिकः—प्रक्षाल्य पाणी हिरण्यं बध्नीतेऽनामिकायामित्युपक्रमे हिरण्यबंधनानुवृत्तिमुपजीवन्नाह । आप्यायनाभिषवाꣳश्वदाभ्येषु च । सोमाप्यायने सोमाभिषवे अंशुग्रहग्रहणे अदाभ्यग्रहग्रहणे चानामिकायां हिरण्यं बध्नीतेऽध्वर्युः । पाणिप्रक्षालनं त्वत्र नानुकृष्यते । तस्य दृष्टार्थत्वात् । आप्यायनादिषु तस्याश्रवणाच्च । सोमाप्यायने हिरण्यबंधनं शाखांतरात् । अभिषवे स्वशाखायामेव । अथास्याꣳ हिरण्यं बध्नीत इति । ३–९–४–१ । अंशुग्रहे अथास्याꣳ हिरण्यं बद्धं भवतीति । अदाभ्ये च अथ हिरण्यमभिव्यनित्यसावेव बन्धुरिति । यदि चात्र पाणिप्रक्षालनमपि अभिमतं भवेत् तदा हिरण्यबंधनवत् श्रूयेत । न श्रूयते च । अतो न भवति । याज्ञिकैः पितृभूत्याचार्यैश्चैवमेव व्याख्यातमस्तीति ॥

अथानंतदेवयाज्ञिकाः । प्रक्षाल्य पाणी हिरण्यं बध्नीतेऽनामिकायामिति सूत्रं व्याख्याय—अग्रे लाघवायेदमुच्यते । आप्यायनाभिषवाꣳश्वदाभ्येषु च । चशब्देन समनंतरं हिरण्यबंधनमनुकृष्यते । न व्यवहितं पाणिप्रक्षालनमिति । ननु समानकर्तृकत्वे पूर्वापरकालत्वं च प्रतीयमानं पाणिप्रक्षालनपूर्वमेव हिरण्यबंधनं सर्वत्र । यस्य तेन हि कालमात्रनियमो अंगाङ्गित्वप्रत्यायकः । यत्रोभे वचनतः प्राप्नुतस्तत्र पूर्वापरकालयोगित्वं नियम्यते । यत्र त्वेकस्य विधानं न तत्र पूर्वपरत्वार्थमपरमप्याक्षेपणीयं । अतएव श्रुतौ पाणिप्रक्षालनरहितहिरण्यबंधनमात्रमेव पठ्यते आप्यायनेतावच्छाखान्तरात् । अभिषवे अथाधिषवणे पर्युपविशंत्यथास्याꣳ हिरण्यं बध्नीते । अꣳश्वदाभ्ययोः अथास्याꣳ हिरण्यं बद्धं भवति । अथ हिरण्यमभिव्यनिति । मदंत्युपस्पर्शनविधानाच्च । नच सामान्योदकव्यावृत्तिर्मदंतीनियमनात् क्रियत इति वक्तव्यं । उदकार्थस्ततः स्वमुखेनैव नियमनात् । तस्मादेतेषु हिरण्यबंधनमात्रमेवेति ॥

अथ कर्काचार्याः । प्रक्षाल्य पाणी हिरण्यं बध्नीतेऽनामिकायामित्येतत्प्रवचनोत्तरं अधिकारमुपजीवन्नाह । आप्यायनाभिषवाꣳश्वदाभ्येषु च । पाणिप्रक्षालनंहिरण्यबंधने भवत इति ॥ पाणिप्रक्षालनं दृष्टार्थं व्यवहितं अवाचनिकं चापि चकारेणानुकृष्यत इति कर्काशयः स्फुट एव भवति ।

अथ पितृभूत्याचार्याः । प्रक्षाल्य पाणी इति सूत्रं प्रख्याय अधिकारमुपजीवन् ब्रवीति । आप्यायनाभिषवाꣳश्वदाभ्येषु च । सोमाप्यायने सोमाभिषवे च अꣳश्वदाभ्यग्रहणे च हिरण्यं बध्नीतेऽनामिकायाम् । सोमाप्यायने शाखांतरात् । अभिषवे स्वशाखायामेवाथाधिषवणे पर्युपविशंत्यथास्याꣳ हिरण्यं बध्नीत इति । अꣳशुग्रहे अथास्याꣳ हिरण्यं बद्धं भवतीति । अदाभ्यं हि अथ हिरण्यमभिव्यनित्यसावेव बन्धुरिति ॥ अंश्वदाभ्यश्रुती काण्वीये एवमालोचने श्रुतौ सूत्रे भाष्येषु च वाशब्दस्याभावेन कात्यायनोक्तः पाणेर्हिरण्यबन्धनस्य कालविकल्प इति अपव्याख्यानं निर्णीतमेवेति ॥

२—प्रेष्येति च सोमोपनहनमाहर सोमपर्याणहनमाहरोष्णीषमाहरेति । का. श्रौ. सू. ७ । १८१ ।

**स्यद्युष्णीषं विन्देत् । ( दु ) उष्णीषः स्याद्यद्युष्णीषं नु विन्देत्सोम-पर्याणहनस्यैवु द्व्यङ्गुलं वा त्र्यङ्गुलं वाऽवकृन्तेदुष्णीषभाजनमध्वर्युर्वा युज-मानो वा सोमोपनुहनमादत्ते यु एव कश्च सोमपर्याणुहनम् ॥ ४ ॥**

**( म ) अथाग्रेण राजानं विचिन्वन्ति । तुदुदकुम्भ ऽउपनिहितो भवति तद्ब्राह्मण उपास्ते तुदभ्यायन्ति प्राञ्चः ॥ ५ ॥**

---

शोभते ह । अथ य आह—यदेव किञ्चेति । यद्वैव किं च भवति । तस्माद्यदेव शोभनं—तत्सोमोपनहनं स्यात् । यदेव किं च सोमपर्याणहनम् ॥ ३ ॥

यद्युष्णीषं विन्देत्—उष्णीषः स्यात् । यद्युष्णीषं न विन्देत्—सोमपर्याणहनस्यैव द्व्यंगुलं वा त्र्यंगुलं वाऽवकृन्तेद्—उष्णीषभाजनम् । अध्वर्युर्वा यजमानो वा सोमोपनहनमादत्ते । य एव कश्च सोम-पर्याणहनम् ॥ ४ ॥

अथाग्रेण राजानं विचिन्वन्ति । तदुदकुंभ उपनिहितो भवति । तद्ब्राह्मण उपास्ते । तदभ्या-यन्ति प्राञ्चः ॥ ५ ॥

---

तस्य सोमस्य बन्धनार्थं वासः । ' यद् ' वस्त्रं ' शोभनम् ' बहुमूल्यम् तत्, ' एव ' सोमोपनहनं कर्तव्यम् । तथा च कात्यायनः—" शोभनं सोमोपनहनम् " ( का. श्रौ. सू. ७ । १८३ ) इति । आपस्तम्बस्तु क्षौमं तत्कर्तव्यमित्याह—" क्षौमं वासो द्विगुणं त्रिगुणं वा "—इत्यादिना ( आ. श्रौ. सू. १० । ७ ) । शोभनत्वे उप-पत्तिमाह—**वासो ह्यस्यैतद् भवतीति** । सोमस्याच्छादनार्थत्वाच्छोभनेन भवितव्यम् । अतस्तेनोपचरन्नपि शोभन-वस्त्रादिना स्वयं शोभते । विपर्यये क्षेपमाह—**अथ य आहेति** । यत् किञ्चिद् वासोऽत्र सोमायानयेति[1] ब्रुवन्, स्वयं यत् किञ्चिद् भवति लौकैरविदितांभासो[2] भवतीत्यर्थः । सोमपर्याणहने नायं नियम इत्याह—**यदेव किञ्चेति** ॥ ३ ॥

उष्णीषस्थाने विकल्पमाह—**यद्युष्णीषं विन्देदिति**[3] । उष्णीषस्य स्वीकारः कर्तव्य इति शेषः । कर्तित-वस्त्रांशः ' उष्णीषभाजनम् ' उष्णीषस्थाने भवतीत्यर्थः । आनीतानां मध्ये सोमक्रयस्थानं प्रति सोमोपनहनस्या-दानमध्वर्युयजमानयोरन्यतरेण कर्तव्यमित्याह—**अध्वर्युर्वेति**[4] । सोमपर्याणहनस्यादाने तु न नियमः ॥ ४ ॥

**अथाग्रेणेति** । ' अग्रेण ' प्राचीनवंशस्य पुरोदेशे, उपरवप्रदेशे इत्यर्थः । ' विचिन्वन्ति ' साधयन्ति, अनुपादेयांशमपनयन्ति । ' तत् ' तत्र क्रयप्रदेशे निहितोदककुम्भस्य समीपे ' ब्राह्मणः ' सोमविक्रयी निवसेत्, ' तत् ' स्थानं प्रत्यभिगच्छन्ति[5] । ' प्राञ्चः ' सोमक्रयप्रदेशाभिमुखाः ॥ ५ ॥

---

१–" वासोमात्रमानयेति " इति पा. । २–"लौकैरविदितप्रभासो" इति क. पा. ३–उष्णीषाभावे सोमपर्याणहनात् द्व्यंगुलं त्र्यंगुलं वोष्णीषायावकृन्तति । का. श्रौ. सू. ७।१८४ । काण्वश्रुतिस्तु–स यद्युहोष्णीषं विन्देयुः स एव स्याद्यद्युष्णीषं न विन्देयुः सोमपर्या-णहनस्यैव पूर्वार्द्धमवकृत्य तदुष्णीषभाजनं स्यादिति । ४–अध्वर्युर्यजमानो वा सोमोपनहनं हरत्यन्य इतरे । का. श्रौ.सू.७।१८५। ५–सोमं गच्छंत्येष त इति वाचयति । का. श्रौ. सू. । ७ । १८६ । काण्वश्रुतिस्तु तौ प्रांचौ जपंतावित एष ते गायत्रो भाग इति ।

( स्तु ) तदायत्सु वाचयति । ( त्ये) एष ते गायत्रो भाग इति मे सोमाय
ब्रूतादेष ते त्रैष्टुभो भागऽइति मे सोमाय ब्रूतादेष ते जागतो भागऽइति मे
सोमाय ब्रूताच्छन्दोनामानाᳫँ साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्येकं
वाऽएष क्रीयमाणोऽभिक्रीयते च्छन्दसामेव राज्याय च्छन्दसाᳫँ साम्रा-
ज्याय घ्नन्ति वाऽएनमेतद्यदभिषुण्वन्ति तमेतदाह च्छन्दसामेव त्वा
राज्याय क्रीणामि च्छन्दसाᳫंसाम्राज्याय न वधायेत्यथैत्य प्राङुपविशति ६
सोऽभिमृशति । (त्या)आस्माकोऽसीति स्वऽइव ह्यस्यैतद्भवति यदागत-

---

तदायत्सु वाचयति–"एष ते गायत्रो भाग इति मे सोमाय ब्रूतात् । एष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतात् एष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोनामानां साम्राज्यं गच्छेति मे सोमाय ब्रूतात् "–( वा.सं.४।२४ ) इति । एकं वाऽएष क्रीयमाणोऽभि क्रीयते–छन्दसामेव राज्याय, छन्दसां साम्राज्याय । घ्नन्ति वाऽएनमेतत्–यदभिषुण्वन्ति । तमेतदाह–च्छन्दसामेव त्वा राज्याय क्रीणामि, च्छन्दसां साम्राज्याय–न वधायेति । अथैत्य प्राङुपविशति ॥ ६
सोऽभिमृशति " आस्माकोऽसि "–( वा.सं.४।२४ ) इति । स्व-इव ह्यस्यैतद्भवति–यदागतः

---

तदायत्स्वित्वति । ' आयत्सु ' ऋत्विग्यजमानेषु क्रयदेशं समागच्छत्सु अध्वर्युर्यजमानम् " ऐष ते "–इति अमुं ' वाचयति ' वाचयेत् । अयमर्थः–हे सोम ! ' ते ' तव 'भागः' ' गायत्रः ' प्रातस्सवनो गायत्र्याः सम्बन्धी भवति । अतो गायत्र्यादिदेवताप्रीत्यर्थ एव तव क्रयो न वधार्थ इत्यभिप्रायः । ' इति ' एवंरूपं सोमस्तुत्या-त्मकं ' मे ' वचनं ' सोमाय[1] ' ब्रूतात् हे अध्वर्यो ! ब्रूहि । एवमुत्तरयोरपि द्रष्टव्यम् । " गायत्रं प्रातःसव-नम्–" " त्रैष्टुभं माध्यन्दिनं सवनम् "–( तै. सं. २ । २ । ९ । ९६ । ऐ. ब्रा. ६ । १ । १० ) इत्यादि-श्रुत्या प्रातस्सवनादीनां गायत्र्याद्यभिमानात्तत्सवनार्हाणां गायत्रादिसम्बन्धः । ' छन्दोमाः ' चतुर्विंशचतुश्चत्वा-रिंशाष्टचत्वारिंशाः, तेषां ' छन्दोमानाम् ' ' साम्राज्यं गच्छ ' । सोमगतचतुर्विंशत्यादिसंख्यासाम्याद् गायत्रा-दयः ' छन्दोमाः ' तेषां साम्राज्यप्राप्तिर्नाम सवनत्रयप्राप्तिरेव । " गायत्रं प्रातःसवनम्–" इत्यादिश्रुतेः । सवनत्रयप्राप्तिरेव तेषां साम्राज्यप्राप्तिरित्यर्थः । शिष्टं पूर्ववत् ॥

एतत् प्रशंसति–**एकं वा एष** इति । ' एषः ' ' क्रीयमाणः ' क्रयेण सम्पाद्यमानः सोमः ' एकं वै ' एकं खलु प्रयोजनम् ' अभि '–लक्ष्य ' क्रीयते ' विक्रीयते, अभिषवादिना रसात्मना संस्क्रियते । किं तदेकमिति, तदुच्यते–' छन्दसां राज्याय ' तत्प्राप्तये । न केवलाय राज्याय, किन्तु ' साम्राज्याय ' । प्रोत्साहनस्यार्थ-वत्तायै वाधप्रसक्तिं दर्शयति–**घ्नन्ति** वेति । वस्तुत एवं सत्यपि सोमभीत्यपगमाय ' तम् ' सोमं प्रति ' एतत् ' छन्दसां साम्राज्यमिति वाक्यमाह–किमिति ' छन्दसामेव राज्याय त्वा क्रीणामि इत्याह, न वधायेति ' । अथेत्यादि । ' अथ ' सोमम् ' एत्य ' ' प्राङ् ' प्राङ्मुखः ' उपविशति[2] ॥ ६ ॥

**सोऽभिमृशतीति** । " आस्माकोऽसि "–इत्यादिना सोममभिमृशेत् । हे सोम ! त्वम् ' आस्माकोऽसि '

---

१–' मे सोमाय वा ' इति क. पा. । २–प्राङुपविश्यास्माकोऽसीति सोममालभते । का. श्रौ. सू. ७ । १८७ । काण्वश्रुतिस्तु अथ जघनेन जान्वक्नुपविशत्यास्माकोऽसीति ।

**स्तुस्मादाहास्माकोऽसीति शुक्रस्ते ग्रह्य इति शुक्रꣳ ह्यस्माद्ग्रहं ग्रहीष्यन्भवति विचितस्त्वा विचिन्वन्त्विति सर्व्वत्वायैतदाह ॥ ७ ॥**

**(ह्रा) अत्र हैके । तृणं वा काष्ठं वा विच्त्वाऽपास्यन्ति तदु तथा न कुर्यात् क्षत्रं वै सोमो विडन्याऽओषधयोऽन्नं वै क्षत्रियस्य विट् स यथा ग्रसितमनुह्रायाच्छिद्य परास्येदेवं तत्तस्मादभ्येव मृशेद्विचितस्त्वा विचिन्वन्त्विति तद्यऽएवास्य विचेतारस्तऽएनं विचिन्वन्ति ॥ ८ ॥**

**( न्त्यु ) अथ वासः । ( सो ) द्विगुणं वा चतुर्गुणं वा प्रागदशं वोदग्दशं वोपस्तृणाति तद्राजानं मिमीते स यद्राजानं मिमीते तस्मान्मात्रा मनुष्येषु मात्रो यो चाप्यन्या मात्रा ॥ ९ ॥**

---

तस्मादाह-आस्माकोऽसीति । " शुक्रस्ते ग्रह्यः "-( वा. सं. ४ । २४ ) इति । शुक्रं ह्यस्माद्ग्रहं ग्रहीष्यन्भवति । "विचितस्त्वा विचिन्वन्तु"-( वा. सं. ४।२४ ) इति । सर्वत्वायैतदाह ॥७॥

अत्र हैके-तृणं वा काष्ठं वा विच्त्वापास्यन्ति । तदु तथा न कुर्यात् । क्षत्रं वै सोमः, विडन्या ओषधयः । अन्नं वै क्षत्रस्य विट् । स यथा ग्रसितमनुह्रायाच्छिद्य परास्येद् एवं तत् । तस्मादभ्येव मृशेत् । विचितस्त्वा विचिन्वन्त्विति । तद्य एवास्य विचेतारः-त एनं विचिन्वन्ति ॥ ८ ॥

अथ वासो द्विगुणं वा चतुर्गुणं वा प्रागदशं वोदग्दशं वोपस्तृणाति । तद्राजानं मिमीते । स यद्राजानं मिमीते-तस्मान्मात्रा मनुष्येषु, मात्रो यो चाप्यन्या मात्रा ॥ ९ ॥

---

अस्माकं सम्बन्ध्यसि । " तस्मिन्नणि च युष्माकास्माकौ "-( पा. सू. ४ । ३ । २ ) इत्यण्, तत्सन्नियोगेनास्माकादेशश्च । ' एतत् ' एतेन पाठेन ' स्व इव ' य एव ' भवति ' ' शुक्रः ' शुक्राख्यः ' ते ' ' ग्रह्यः ' ग्रहीतव्यः । " प्रत्यपिभ्यां ग्रहेः"- ( पा. सू. ३ । १ । १८ ) इति अनुपसृष्टादपि ग्रहेश्छान्दसः क्यप् । ग्राह्य इत्यर्थः । " अमात्योऽसि शुक्रस्ते ग्रहः "-( तै. सं. १ । २ । ६ । १) इति तैत्तिरीयकम् । 'विचितः' विचयनस्य शोधनस्य कर्तारः ' ते ' त्वां ' विचिन्वन्तु ' शोधयन्तु, विचिन्वद्भिरेव विवेके सति वैगुण्यासम्भवात् सर्वत्वं कात्स्न्र्यं भवति ॥ ७ ॥

विवेचने विषये पक्षान्तरमुपन्यस्य निराचष्टे-**अत्र हैक** इति । ' अत्र ' सोमविवेचनविषये सोममध्यगतं ' तृणं वा काष्ठं वा ' ' विच्त्वा ' सोमसकाशाद् भेदं कृत्वा बहिः प्रक्षिपन्ति । अत्र चैकं दोषमाह-**क्षत्रं वै सोम** इति । सोमस्य क्षत्रत्वं श्रूयते-" यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः "-(श.प. १४।४।२।२३) इत्यादिना । इयं प्रसिद्धिः " क्षत्रं वै"-इति वैशब्देन द्योत्यते । ' ग्रसितम् ' ग्रस्तम्, भुञ्जितम् । 'अनुग्रहाय' गृहीत्वा 'आच्छिद्य' पृथक्कृत्य 'परास्येत्' बहिः प्रक्षिपेत् । यस्मात् सोमान्तर्गतं तृणादिकं सोमस्यान्नम्, 'तस्मात्' स्वयमविवेचयन् यजमानोऽभ्यावमर्शमेव कुर्यात्; शोधनार्थन्तु ' विचिन्वन्त्विति ' पठेत् । अत्र सूत्रम्-" प्राङ्मुख उपविश्यास्माकोऽसीति सोममालभते न विचिनोत्यतस्तृणकाष्ठापासनमेके " इति (कात्या ७।१८७।१८८) ॥ ८ ॥

**अथ वास** इत्यादि । ' वासः ' सोमोपहननार्थं दशा वस्त्राग्रम् । प्राग्दशं वा, उदग्दशं वा प्रागग्रमुदगग्रं

---

१-सोमोपनहनं द्विगुणं चतुर्गुणं वास्तृणातिप्राग्दशमुदग्दशं वा । का. श्रौ. सू. ७ । १८९ ॥

सावित्र्या मिमीते । सविता वै देवानां प्रसविता तथो हास्माऽएष सवितृप्रसूत ऽएव क्रयाय भवति ॥ १० ॥

(त्य)अतिच्छन्दसा मिमीते । (तऽए) एषा वै सर्व्वाणि च्छन्दाᳬसि यदतिच्छन्दास्तथो हास्यैष सर्व्वैरेव च्छन्दोभिर्मितो भवति तस्मादतिच्छन्दसा मिमीते ॥ ११ ॥

स मिमीते । (तेऽभि) अभि त्यं देवᳬ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवᳬ रत्नधामभि प्रियं मतिं कविम् ॥ ऊर्ध्वा यस्यामतिर्भा ऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वरिति ॥ १२ ॥

---

सावित्र्या मिमीते । सविता वै देवानां प्रसविता । तथो हास्मा एष सवितृप्रसूत एव क्रयाय भवति १०

अतिच्छन्दसा मिमीते । एषा वै सर्वाणि छन्दांसि यदतिच्छन्दाः । तथोहास्यैष सर्वैरेव छन्दोभिर्मितो भवति । तस्मादतिच्छन्दसा मिमीते ॥ ११ ॥

स मिमीते—" अभि त्यं देवं सवितारमोण्योः, कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियं मतिं कविम् । ऊर्ध्वा यस्मामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः "–( वा. सं. ४ । २५ ) इति ॥ १२ ॥

---

वेत्यर्थः । आस्तृते वाससि सोमोन्मानं विधत्ते—तद्राजानं मिमीते ( का. श्रौ. [१]७ । १९० ) इति । ' तत् ' तत्रं वाससि । ' तस्मात् ' सोमोन्मानात् हेतोः ' मनुष्येषु ' ' मात्रा ' षण्णवत्यंगुल्यादिरूपा इदानीं वर्तते इत्यर्थः । मात्रा यैवात्र सोमे सा मनुष्येषु सोमस्याखिलजगत्कारणत्वात् । न केवलं मनुष्यगतैव अपि तु ' यो चापि ' यैव खलु ' अन्या ' पक्षिमृगवृक्षादिगता साऽपि सोममात्रात्मिकैव ॥ ९ ॥

विधीयमानोन्मानमन्त्रं देवताद्वारा प्रशंसति—सावित्र्या मिमीत इति । ' देवानां मध्ये ' प्रसविता ' सर्वकर्मविषयानुज्ञाप्रदः ॥ १० ॥

मन्त्रगतं छन्दः प्रशंसति—अतिच्छन्दसेति । [२]अष्टिरतिच्छन्दएवास्य छन्दः अतोऽतिच्छन्दस्त्वम् । तस्मिन् छन्दसि चतुर्णां चतुर्णामक्षराणां परित्यागेनाधस्तनानां छन्दसामुत्पत्तेः सर्वच्छन्दस्त्वम् ॥ ११ ॥

इदानीं मन्त्रं विधत्ते—स मिमीतेऽभित्यं देवमिति । मन्त्रस्यायमर्थः । ' त्यं ' तं ' सवितारं ' ' देवम् ' ' अभ्यर्चामि ' इति सम्बन्धः । कीदृशम् ? ' ओण्योः ' अवित्र्योः द्यावापृथिव्योर्मध्ये वर्तमानमित्यर्थः । ' कविक्रतुं ' क्रान्तकर्माणम् ' सत्यसवम् ' सत्यानुज्ञम् । ' रत्नधां ' रमणीयानां फलानां धारकम् ' अभि ' अभितः ' प्रियम् ' ' मतिं ' मननवन्तम्, ' कविम् ' क्रान्तप्रज्ञम् । ' यस्य ' सवितुः ' अमतिः ' अन्येषामविषया मतिरमतिः, ' भाः ' च; अथवा अमतिविशेषणम् । भासमाना सा ' ऊर्द्ध्वा ' ' अदिद्युतत् ' द्योतते । किमर्थम् ? ' सवीमनि ' प्रसवे निमित्तभूते सति, अनुज्ञार्थमित्यर्थः । स तादृशः ' स्वरणः ' शोभनगमनः आदित्यः ' कृपा ' कृपया ' हिरण्यपाणिः ' सन् ' अमिमीत ' मिमीते सोमोन्मानं करोति करोत्वित्यर्थः ॥ १२ ॥

---

१–तस्मिन्त्सोमं मिमीते दशकृत्वोऽभित्यमिति । २–अभित्य० सावित्र्यष्टिः । इति कात्यायनसर्वानुक्रमः । १ । १८ । ७ । चतुःषष्ट्यक्षरा ६४ अष्टिरित्युच्यते । अतिछन्दसा मिमीते अनयाद्वादशकंडिकाश्रुत्या–अष्टेरेव–अतिच्छन्द इति नामांतरं बोध्यम् ।

( त्ये ) एतया सर्व्वाभिः । ( रे ) एतया चतसृभिरेतया तिसृभिरेतया द्वाभ्यामेतयैकयैतयैवैकयैतया द्वाभ्यामेतया तिसृभिरेतया चतसृभिरेतया सर्व्वाभिः समस्याञ्जलिनाऽध्यावपति ॥ १३ ॥

स वाऽउदाचं न्याचं मिमीते । स यदुदाचं न्याचं मिमीतऽइमा ऽएवैतदङ्गुलीर्नानाजानाः करोति तस्मादिमा नाना जायन्तेऽथ यत्सह सर्व्वाभिर्मिमीते सꣳश्लिष्टा इव हैवेमा जायेरंस्तस्माद्वाऽउदाचं न्याचं मिमीते॥१४॥

---

एतया सर्वाभिः, एतया चतसृभिः, एतया तिसृभिः, एतया द्वाभ्याम्, एतयैकया । एतयैवैकया, एतया द्वाभ्याम्, एतया तिसृभिः, एतया चतसृभिः, एतया सर्वाभिः । समस्याञ्जलिनाऽध्यावपति॥ १३॥

स वाऽउदाचं न्याचं मिमीते–स यदुदाचं न्याचं मिमीते–इमा एवैतदङ्गुलीर्नानाजानाः करोति ।

---

दशकृत्व उन्मानेऽप्ययमेव मन्त्र इत्यादि समानप्रकारं दर्शयति–एतया सर्वाभिरिति । 'एतया' "अभित्यं देवम्"–इत्यनयैव 'सर्वाभिः' अङ्गुलीभिः पञ्चभिर्मिमीते । 'एतया' एव 'चतसृभिः' अप्यङ्गुलीभिर्मिमीते । एवमवरोहक्रमेणैकैकाङ्गुल्युत्सर्गेण पञ्चवारं मीत्वा पुनरारोहणक्रमेणैकैकाङ्गुलिसंयोजनेन पुनरेतयैवर्चा पञ्चवारं मिमीते । एवं दशवारमुन्माय अनन्तरं पाणिद्वयम् 'समस्य' अञ्जलिं कृत्वा तेनैकवारमभिमितस्य सोमस्योपरि 'आवपति' । शिष्टं सर्वं प्रक्षिपेत् । अत्र सूत्रम्–"सर्वाभिः प्रथमम्, अङ्गुष्ठप्रभृति चैकोत्सर्गम्, द्विः कनिष्ठिकया, एकोपचयञ्च, अञ्जलिना दशमम्, अन्यद्वाध्यावापश्रुतेः" ( का. श्रौ. सू. ७ । १९१–१९६ ) इति । मानस्य दशसंख्यया स्तूयमानत्वादाधिक्ये सति दशसंख्याविरोधात् सूत्रकारेणाञ्जलिना दशममन्यद्वेति विकल्पितम् * ॥ १३ ॥

अङ्गुलीनां क्रमेणोत्सर्गे संयोजने च कृते योऽर्थसिद्धो मानविषयः समञ्चनप्रसारणभावः, तमनूद्य बहुधा प्रशंसति–स वा उदाचं न्याचमित्यादिना । 'उदाचं न्याचम्' अङ्गुलीः समच्य प्रसार्य चेत्यर्थः । 'तेन?

---

१–तस्मिन्सोमं मिमीते दश कृत्वोऽभित्यमिति । का. श्रौ. सू. ७ । १९० ॥

* भगवान् सूत्रकारः कात्यायनो नैतद्विकल्पयति । किंतु अध्यावापश्रुत्या समंत्रकं दशकृत्वो मानाद्बहिरेकादशं तूष्णीममानरूपमध्यावापं ब्रवीति । तथा चात्र याज्ञिकानंतदेवाः । "अन्यद्वाऽध्यावापश्रुतेः"–दशभ्योऽन्यदिदमेकादशं मानमध्यावापोऽजलिना । कुतः । अध्यावापश्रुतेरेव । अधीत्युपरिभाववचनोऽधिकवचनो वा । न चात्रोपरिभावः । वस्त्वंतरस्याभावात् । तेन सोमस्यावशिष्टं मानादेकत्र राशीकृत्यांजलिना गृहीत्वाऽधिकं मितादावपतीत्यर्थः । तथाच–अधिकः स्याद्यदा दशकृत्वो मानादन्यदावपनं स्यात् । तस्मादेकादश एवाध्यावापः । यदा चोपरिभावस्तदापि नियताच्छास्त्रोक्तादधिकं तदुपर्येव वर्तत एकइत्येकादशमेव । ननु एतया सर्वाभिः समस्यांजलिनाऽध्यावपतीति सामानाधिकरण्येन दशममेव प्रतीयते । तथाच । सर्वं मानसमभिधायोच्यते । अथ दशकृत्वो मिमीत इति । तेन दशममेव युक्तम् । अत्रोच्यते–एतयर्चा सर्वाभिरित्यारभ्य दशमांतं पुनरेतया सर्वाभिरित्युक्ते मिमीत इत्यनेनैव निराकांक्षीकृतम् । तेन मंत्रप्रयुक्तानि दश मानानि । तान्येवोपसंहारेऽथ यद्दश कृत्वो मिमीत इति संपादनार्थं परामृश्यंते । अध्यावापस्य त्वावापरूपत्वेनामानरूपत्वान्न परिगणनम् । तेनाधिकमेव । अपि च । एतयैतस्य सर्वत्र मिमीत इत्यनेन ज्ञातसंबंधत्वान्नाध्यावापेन संबंधाकांक्षा । ततोऽप्यध्यावापस्य स्वातंत्र्यान्न पूर्वेणैकवाक्यता । ततोऽप्यसंभित्र स्तूष्णीं च । एतयेत्यसंबंधात् । दशकृत्वोऽभित्यमिति वाक्यांतरसंबंधाच्च । इति पितृभूत्याचार्या देवयाज्ञिकाश्चाप्येवमेवाहुः । कर्काचार्याणामयमेव सिद्धांतः । अथवाऽन्यदेकादशमंजलिना कर्तव्यम् । येन एतया सर्वाभिरित्युक्त्वा समस्यांजलिनाऽध्यावपतीत्याह । यत्पुनरुक्तं दश कृत्वोऽभित्यमिति । तन्मंत्रेणाभिसंबध्यते । दश कृत्वोऽभित्यमित्यनेन मंत्रेण । तस्मादेकादशोऽध्यावाप इति ॥

यद्वेवोदाचं न्याचं मिमीते । (तऽ) इमा ऽएवैतन्नानावीर्याः करोति तस्मादिमा नानावीर्यास्तस्माद्वाऽउदाचं न्याचं मिमीते ॥ १९ ॥

यद्वेवोदाचं न्याचं मिमीते । विराजमेवैतदर्वाचीं च पराचीं च युनक्ति पराच्यह देवेभ्यो यज्ञं वहत्यर्वाची मनुष्यानवति तस्माद्वाऽउदाचं न्याचं मिमीते ॥ १६ ॥

(तेऽथ) अथ यद्दश कृत्वो मिमीते । दशाक्षरा वै विराड् वैराजः सोमस्तस्माद्दशकृत्वो मिमीते ॥ १७ ॥

(तेऽथ) अथ सोमोपनहनस्य समुत्पार्यान्तान् । (नु) उष्णीषेण विग्रथ्नाति प्रजाभ्यस्त्वेति प्रजाभ्यो ह्येनं क्रीणाति स यदेवेदᳬं शिरश्चाᳬंसौ चान्तरोपेनितमिव तदेवास्यैतत्करोति ॥ १८ ॥

---

तस्मादिमा नाना जायन्ते । अथ यत्सह सर्वाभिर्मिमीते–संश्लिष्टा इव हैवेमा जायेरन् । तस्माद्वा उदाचं न्याचं मिमीते ॥ १४ ॥

यद्वेवोदाचं न्याचं मिमीते । इमा एवैतन्नानावीर्याः करोति । तस्मादिमा नानावीर्याः । तस्माद्वा उदाचं न्याचं मिमीते ॥ १९ ॥

यद्वेवोदाचं न्याचं मिमीते । विराजमेवैतदर्वाचीं च पराचीं च युनक्ति । पराच्यह देवेभ्यो यज्ञं वहति, अर्वाची मनुष्यानवति । तस्माद्वाऽउदाचं न्याचं मिमीते ॥ १६ ॥

अथ यद्दश कृत्वो मितीते । दशाक्षरा वै विराट् । वैराजः सोमः–तस्माद्दश कृत्वो मिमीते॥ १७॥

अथ सोमोपनहनस्य समुत्पार्यान्तानुष्णीषेण विग्रथ्नाति–" प्रजाभ्यस्त्वा "–(वा.सं.४।२९) इति । प्रजाभ्यो ह्येनं क्रीणाति। स यदेवेदं शिरश्चांसौ चान्तरोपेनितमिव–तदेवास्यैतत्करोति॥ १८॥

---

तेनोक्तप्रकारमानेन 'अङ्गुलीः' 'नानाजानाः' पृथक्–पृथग्–जन्मवत्यः 'करोति' कर्मफलभोगार्थत्वात् स्रष्टुः । व्यतिरेके दोषमाह–अथ यत्सहेति । 'सर्वाभिः' सहताभिरङ्गुलीभिः दशवारमपि मानं यदि कुर्यात्, तथा सति संश्लिष्टाः परस्परसंहता एवाङ्गुलयो 'जायेरन्' ॥ १४ ॥

यद्वेवोदाचमिति । उक्तरीत्या मानेन तु 'नानावीर्याः' पृथक्–पृथक् कार्यसमर्थाः 'करोति' ॥ १९ ॥

यद्वेवेति । विराजमेवैतदर्वाचीं च पराचीं च युनक्तीति । 'एतत्' एतेन अर्वाक्–पराग् गतेन विराट् छन्दोदेवतामेव संख्याद्वारा अर्वाक् च पराक् च सोमे योजितवान् भवत्यध्वर्युः। सा सोमयुक्ता विराट्। पराच्यहेति । 'अह'–इति विनिग्रहार्थो निपातः । (निरु० १ । २।४ ) । 'पराची' पराग्भूता ऊर्ध्वमुखी सती उदञ्चनसामर्थ्येन 'यज्ञं' सोमरसं 'देवेभ्यः वहति'; तथैव 'अर्वाची' अवाङ्मुखी सती, समञ्चनसामर्थ्येन 'मनुष्यान्' ऋत्विगादीन् 'अवति' ॥ १६ ॥

मानगतसंख्यां प्रशंसति–अथ यद् दशकृत्व इति । विराजो दशाक्षरत्वं प्रसिद्धम् । सोमोऽपि दशसंख्याकैर्द्रव्यैः क्रीयमाणत्वेन संख्याद्वारा विराट्सम्बन्धाद् 'वैराजः' ॥ १७ ॥

अथ सोमोपनहनस्येत्यादि । 'अन्तान् समुत्पार्य' अधः प्रसारितस्य वस्त्रस्य पर्यन्तप्रदेशानेकत्र उच्चं सङ्गृह्य

( त्यु ) अथ मुध्येऽङ्गुल्याकाशं करोति प्रजास्त्वानुप्राणन्त्विति तमुयतीव वाऽएनमेतत्समायुच्छन्नप्राणमिव करोति तुस्यैतदुतऽएव मध्यतः प्राणमुत्सृजति तं तुतः प्राणन्तं प्रजाऽअनुप्राणन्ति तुस्मादाह प्रजास्त्वानुप्राणन्त्विति तुᳫँसोमविक्रयिणे प्रयच्छत्यथातः पुणनस्यैव ॥ १९ ॥

इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ २ ॥ ५ ॥ ( ३. २. ) ॥

स वै राजानं पणते । स यद्राजानं पुणते तुस्मादिदुᳫँसकृत्सुर्वं पुण्यᳫँ स ऽआह सोमविक्रयिन्क्रुय्यस्ते सोमो राजा ३ इति क्रुय्यऽ इत्याह सोमविक्रयी तं वै ते क्रीणानीति क्रीणीहीत्याह सोमविक्रयी कलया ते क्रीणानीति भूयो वाऽअतः सोमो राजाऽर्हतीत्याह सोमविक्रयी भूय ऽएवातः सोमो राजाऽर्हति महाँस्त्वेव गोर्महिमेत्यध्वर्युः ॥ १ ॥

---

अथ मध्येऽङ्गुल्याकाशं करोति । "प्रजास्त्वानु प्राणन्तु"–(वा. सं. ४।२५) इति । तमयतीव वाऽएनमेतत्समायच्छन्नप्राणमिव करोति । तस्यैतदत एव मध्यतः प्राणमुत्सृजति । तं ततः प्राणन्तं प्रजा अनुप्राणन्ति । तस्मादाह–प्रजास्त्वानु प्राणन्त्विति । तं सोमविक्रयिणे प्रयच्छति । "अथातः पणनस्यैव" ॥१९॥

स वै राजानं पणते–स यद्राजानं पणते तस्मादिदं सकृत् सर्वं पण्यम् । स आह–सोमविक्रयिन् ! क्रय्यस्ते सोमो राजा३ इति । क्रय्य इत्याह सोमविक्रयी । तं वै ते क्रीणानीति । क्रीणीहि, इत्याह

---

'उष्णीषेण' ग्रन्थिं कुर्यात्[1] । तत्र मन्त्रः–प्रजाभ्यस्त्वेति । 'प्रजाभ्यः' सदस्येभ्यः ऋत्विग्भ्यः । उष्णीषेण ग्रथनं प्रशंसति–स यद्वेवेदमिति । शिरसः अंसयोश्चान्तरालप्रदेशो यथा विलग्न इव वर्तते; एवं ग्रन्थिकरणेन कृतवान् भवति ॥ १८ ॥

ग्रन्थिमध्ये सुषिरं समन्त्रकं विधत्ते–अथ मध्ये अङ्गुल्येति । मध्ये सोमग्रन्थिमध्ये सुषिरप्रदानेन 'प्राणन्तं' तं 'त्वा' सर्वाः 'प्रजाः' अपि 'अनुप्राणन्तु' 'इति' । 'समायच्छन्' अन्तान् संगृह्णन् 'तम्' 'अयतीव' ग्लापयतीव 'अप्राणं' सोमं प्राणरहितम् 'इव' करोति[2], अत एव उपद्रवसम्भवाद्धेतोः तत्परिहाराय देहमध्ये उच्छ्वासरूपम् 'प्राणम्' उद्गमयति । 'तस्मात्' प्रजास्त्वेत्यादिमन्त्रं पठेत् । तं सोमोपनहनवस्त्रे, बद्धं सोमं 'सोमविक्रयिणे प्रयच्छति'[3] । 'अथातः पणनस्यैव' विधिरुच्यत इति शेषः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ ३-३-२ ॥

सोमक्रयार्थं व्यवहारं विधत्ते–स वा इति[4] । 'पणते' व्यवहरेत् । 'तस्मात्' सोमस्य व्यवहारभूतत्वात्

---

१–अंतान्संगृह्योर्ष्णीषेण बध्नाति प्रजाभ्यस्त्वेति । का० श्रौ० सू० ७।१९७ । २–अंगुल्या मध्ये विवृणोति प्रजास्त्वाऽनुप्राणंत्विति का. श्रौ. सू. ७ । १९८ । ३–तं विक्रयिणे प्रयच्छति । का. श्रौ. सू. ७ । १९९ । ४–पंच कृत्वः सोमं पणते । का. श्रौ. सू. ७।२०० ।

( गोँ ) गोर्वै प्रतिधुक् । ( क्र ) तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्याऽआतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्याऽआमिक्षा तस्यै वाजिनम् ॥ २ ॥

( ध्रँ ) शफेन ते क्रीणानीति । भूयो वाऽअतः सोमो राजाऽर्हतीत्याह सोमविक्रयी भूय एवातः सोमो राजाऽर्हति महाँस्त्वेव गोर्महिमेत्यध्वर्यु-

सोमविक्रयी कलया ते क्रीणानीति । भूयो वाऽअतः सोमो राजार्हति-इत्याह सोमविक्रयी । भूय एवातः सोमो राजार्हति, महांस्त्वेव गोर्महिमा-इत्यध्वर्युः ॥ १ ॥

गोर्वै प्रातिधुक्, तस्यै शृतम्, तस्यै शरः, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनम्, तस्यै नवनीतम्, तस्यै घृतम्, तस्या आमिक्षा, तस्यै वाजिनम् ॥ २ ॥

शफेन ते क्रीणानीति । भूयो वाऽअतः सोमो राजार्हतीत्याह—सोमविक्रयी । भूय एवातः सोमो

'इदम्' इदानीमपि 'सर्वं' दधिमध्वादि वस्तु 'सकृत्' 'पण्यम्' लोके पणितव्यं भवति । व्यवहारप्रकारं दर्शयति—स आहेत्यादिना[1] । 'सः' अध्वर्युः "क्रय्यस्ते सोमो राजा"—'इति' पृच्छेत् । 'क्रय्यः' क्रयार्थं प्रसारितः । "क्रय्यस्तदर्थे" ( पा. सू. ६ । १ । ८२ ) इति 'क्रय्य' शब्दो निपातितः । प्रश्नार्थे प्लुतिः ( पा० सू० ८ । २ । १०० ) 'क्रय्य इति सोमविक्रयी' प्रतिब्रूयात् । 'तत्' तर्हि 'ते' तव स्वभूतं सोमं 'क्रीणानि[2]' 'इति' अध्वर्युर्ब्रूयात् । अथ तेन सोमविक्रयिणा 'क्रीणीहि' 'इति' उक्तोऽध्वर्युः कलया गोरेकदेशेन 'ते' तव सम्बन्धिनं सोमं 'क्रीणानि' 'इति' ब्रूयात् । स विक्रेता 'अतः' अस्मात् कला-लक्षणात् 'भूयः' प्रभूतमधिकमूल्यमर्हतीति ब्रूयात् । अथ सोमविक्रयिणोक्तोऽध्वर्युः गोर्महत्त्वमाविष्करोति—महाँस्त्वेवेति । यदि सोमो बहुमूल्यमर्हति तर्हि कृत्स्ना गौर्दातव्या भवति—तथा सति 'गोर्महिमा महान्' 'इति' ब्रूयात्[3] ॥ १ ॥

कथं महत्त्वमिति तद्दर्शयति—गोर्वा इत्यादिना[4] । 'गोः प्रतिधुक्' सद्यो दुग्धम् इदमेकं वीर्यम् । 'तस्यै' तस्याः 'शृतम्' पक्वं पयः । 'शरः' पक्वक्षीरस्योपरिसारभूतम् । घनीभूतमम्लास्वादं वस्तु दधि । दधिभवं सारभूतमुदकं 'मस्तु' । 'आतञ्चनम्' दधि । दधिभावकारणम् । तप्ते पयसि दध्यानयने सति यद् घनीभूतं वस्तु जायते सा 'आमिक्षा' । द्रवात्मकं तत् वाजिनम् । एवं दशविधानि गोर्वीर्याणि प्रख्यापयेत् ॥२॥

शफेनेति । द्वितीयवारक्रये 'शफेन ते क्रीणानीति' ब्रूयात्[5] । 'शफः' पादाग्रस्यार्द्धभागः । 'भूयो वा अतः'—इत्याद्युक्तिप्रत्युक्तिवचनं पूर्ववद् व्याख्येयम्[6] । 'अध्वर्युः' 'एतान्येव दश वीर्याणि' इति प्रतिधुगा-

१–स आह सोमविक्रयिन् क्रय्यस्ते सोमो राजा ३ इति । का. श्रौ. सू. ७ । २०१ । २–क्रय्य इत्याह सोमविक्रयी । का.श्रौ. सू. ७ । २०२ । तं वै ते क्रीणानीति । ७ । २०३ । ३–क्रीणीहीत्याह सोमविक्रयी । का. श्रौ. सू. ७ । २०४ । कलया ते क्रीणानीति । का. श्रौ. सू. । ७ । २०५ । भूयो वा अतः सोमो राजाऽर्हतीत्याह सोमविक्रयी । का. श्रौ. सू. ७ । २०६ । ४–भूयएवातः सोमो राजाऽर्हति महाँस्त्वेव गोर्महिमेत्यध्वर्युर्गोर्वै प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतंचनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनमिति । का. श्रौ. सू. ७ । २०७ ॥ ५–एकैकेनांते पणते शफेन पदाऽर्द्धेन गवा । का. श्रौ. सू. ७ । २०९ । ६–भूय एवेत्यतः प्रभृति चतुरावर्तयति । का. श्रौ. सू. ७ । २०८ ।

एतान्येव दशवीर्याण्युदाख्यायाह पदा तेऽर्धेन ते गवा ते क्रीणामीति क्रीतः सोमो राजेत्याह सोमविक्रयी वयाᳪसि प्रब्रूहीति ॥ ३ ॥

स आह । चन्द्रं ते वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्या इति स यदार्वाक्पणन्ते परः सम्पादयन्ति तस्मादिदᳪ सकृत्सर्वं पण्यमर्वाक्पणन्ते परः सम्पादयन्त्यथ यदध्वर्युरेव गोर्वीर्याण्युदाचष्टे न सोमस्य सोमविक्रयी महितो वै सोमो देवो हि सोमोऽथैतदध्वर्युर्गां महयति तस्यै पश्यन्वीर्याणि क्रीणादिति तस्मादध्वर्युरेव गोर्वीर्याण्युदाचष्टे न सोमस्य सोमविक्रयी ॥ ४ ॥

---

राजाऽर्हति, महांस्त्वेव गोर्महिमा—इत्यध्वर्युः । एतान्येव दश वीर्याण्युदाख्यायाह—पदा ते। अर्धेन ते। गवा ते क्रीणामीति । क्रीतः सोमो राजा—इत्याह सोमविक्रयी । वयांसि प्रब्रूहीति ॥ ३ ॥

स आह—चन्द्रं ते, वस्त्रं ते, छागा ते, धेनुस्ते, मिथुनौ ते गावौ, तिस्रस्तेऽन्या इति । स यदर्वाक् पणन्ते—परः सम्पादयन्ति । तस्मादिदं सकृत्सर्वं पण्यमर्वाक् पणन्ते—परः सम्पादयन्ति । अथ यदध्वर्युरेव गोर्वीर्याण्युदाचष्टे—न सोमस्य सोमविक्रयी । महितो वै सोमः । देवो हि सोमः । अथैतदध्वर्युर्गां महयति । तस्यै पश्यन् वीर्याणि क्रीणादिति । तस्मादध्वर्युरेव गोर्वीर्याण्युदाचष्टे—न सोमस्य सोमविक्रयी ॥ ४ ॥

---

दिकमित्यर्थः । तृतीयवारे गोः 'पदा ते' इति ब्रूयात् । चतुर्थवारे 'अर्द्धेन ते' इति ब्रूयात् । भूयो वा इत्यादि पूर्ववत् । पञ्चमवारे 'गवा ते क्रीणामि' 'इति' ब्रूयात् । एवमुक्ते 'सोमो राजा' त्वया 'क्रीतः' 'इत्याह' उचितमूल्यस्य दत्तत्वात् । अथ 'वयांसि प्रब्रूहि' 'इति' 'सोमविक्रयी' ब्रूयात्[३] ॥ ३ ॥

स आहेति । 'वयः'—शब्दार्थं स्वयमेवाह—चन्द्रं त इत्यादिना । 'हेम चन्द्रम्' इति हिरण्यनामसु पाठात् 'चन्द्रम्' आह्लादकारि हिरण्यम् । "चन्द्रं ते" इति । "शुक्रं त्वेति हिरण्यमालम्य वाचयति"—इति कात्यायनः ( ७ । २१४ ) । 'अन्याः तिस्रः', गा इति शेषः ॥

व्यवहारपूर्वकं क्रय्यं प्रशंसति—स यदर्वागिति । 'अर्वाक्' सम्पादनात् प्राक् व्यवहारं कृत्वा 'परः' परस्तात् 'सम्पादयन्ति' । अथवा 'अर्वाक्' अल्पमेव व्यवहारकाले व्यवहरन्ति सम्पादनकाले तु 'परः' देयं मूल्यमधिकं कृत्वा । 'तस्मात्' 'इदम्' इदानीमपि 'सर्वं पण्यं' वस्तु 'सकृत्' 'एकवारम्' 'अर्वाक्' सत् 'परः' 'सम्पादयन्ति' ॥

गोर्वीर्याणामुदाख्यानवत् सोमवीर्याण्यप्युदाख्यातव्यानि, तथा करणे कारणमाह—अथ यदध्वर्युरेव गोर्वीर्याणीति । 'महितः' महत्त्वोपेतः खलु सोमः । तत् कथम् ? वस्तुतो दिवि खलु दिवि वर्तमानस्य चन्द्रस्य सोमवल्लीरूपेण परिणामात्, "दिवि वै सोम आसीत्"—( श. प. ब्रा ३ । २ । ४ । १ )

---

१—प्रश्नान्ते प्रश्नान्ते । का. श्रौ. सू. ७ । २११ । २—ते क्रीणामीत्यंततः । का. श्रौ. सू. ७ । २१० । ३—क्रीतः सोमो राजेत्यन्ते वयाᳪसि प्रब्रूहीत्याह सोमविक्रयी । का. श्रौ. सू. ७ । २१२ ।

( ब्धु ) अथ यत्पुञ्च कृत्वः पुणते । संव्वत्सरसंमितो वै युज्ञः पुञ्च वाऽऋतुवः संव्वत्सरस्य तं पञ्चभिराप्नोति तुस्मात्पुञ्च कृत्वः पणते ॥ ५ ॥

( तेऽथ ) अथ हिरण्ये व्वाचयति । शुक्रं त्वा शुक्रेण क्रीणामीति शुक्रᳬं ह्येतच्छुक्रेण क्रीणाति यत्सोमᳬं हिरण्येन चन्द्रं चन्द्रेणेति चन्द्रᳬं ह्येतच्चन्द्रेण क्रीणाति यत्सोमᳬं हिरण्येनामृतममृतेनेत्यमृतᳬं ह्येतदमृतेन क्रीणाति यत्सोमᳬं हिरण्येन ॥ ६ ॥

( नृा ) अथ सोमविक्रयिणमभिप्रकम्पयति । सग्मे ते गोरिति यजमाने ते गौरित्येवैतदाह तद्युजमानमभ्याहृत्य न्यस्यत्यस्मे ते चन्द्राणीति सुऽआत्मन्येव व्वीर्यं धत्ते शरीरमेव सोमविक्रयी हरते तत्तुतः सोमविक्रय्यादत्ते ७

---

अथ यत्पञ्च कृत्वः पणते । संवत्सरसंमितो वै यज्ञः । पञ्च वाऽऋतवः संवत्सरस्य । तं पञ्चभिराप्नोति । तस्मात्पञ्च कृत्वः पणते ॥ ५ ॥

अथ हिरण्ये वाचयति--" शुक्रं त्वा शुक्रेण क्रीणामि "–( वा. सं. ४ । २६ ) इति । शुक्रं ह्येतच्छुक्रेण क्रीणाति–यत्सोमं हिरण्येन । " चन्द्रं चन्द्रेण "–( वा. सं. ४ । २६ ) इति । चन्द्रं ह्येतच्चन्द्रेण क्रीणाति–यत्सोमं हिरण्येन । "अमृतममृतेन"–( वा. सं. ४ । २६ ) इति । अमृतं ह्येतदमृतेन क्रीणाति–यत्सोमं हिरण्येन ॥ ६ ॥

अथ सोमविक्रयिणमभिप्रकम्पयति–" सग्मे ते गोः "–( वा. सं. ४ । २६ ) इति । यजमाने ते गौरित्येवैतदाह । तद्यजमानमभ्याहृत्य न्यस्यति । "अस्मे ते चन्द्राणि"–( वा. सं. ४ । २६ ) इति । स आत्मन्येव वीर्यं धत्ते । शरीरमेव सोमविक्रयी हरते । तत्ततः सोमविक्रय्यादत्ते ॥ ७ ॥

---

इत्युक्तत्वाच्च । अतरे हेतोः सोमस्यानपेक्षितत्वात् । ' अध्वर्युः ' ' गां महयति ' पूजयति । ' तां पश्यन् ' 'तस्यै' तस्याः 'वीर्याणि' प्रतिधुगादीनि । केनाभिप्रायेण ? सोममनया क्रीणानीत्यभिप्रायेण । तस्मादित्युपसंहारः ॥४॥

कलाशफादिरूपं पञ्चवारपणनं प्रशंसति–**अथ यत् पञ्च कृत्व** इति । स्पष्टमेतत् ॥ ५ ॥

**अथ हिरण्ये** इति । एकहायन्या सह देयेषु हिरण्यवस्त्रच्छागादिदशसु द्रव्येषु मध्ये 'हिरण्ये' दीयमाने सति यजमानं ' वाचयति ' " शुक्रं त्वा " इति मन्त्रम् । मन्त्रस्यायमर्थः–हे सोम ! ' शुक्रम् ' दीप्यमानम् 'त्वा' त्वां ' शुक्रेण ' दीप्तेन ' हिरण्येन ' ' क्रीणामि ' तथा ' चन्द्रं ' त्वां ' चन्द्रेण ' आह्लादकेन ' हिरण्येन ' । ' अमृतम् ' अमरणधर्माणं त्वाम् ' अमृतेन ' ' हिरण्येन ' क्रीणामीत्यर्थः । मन्त्रगतानि शुक्रचन्द्रामृतपदानि तृतीयान्तानि हिरण्यनामानि, द्वितीयान्तानि सोमस्येति व्याचष्टे--**शुक्रं त्वा शुक्रेण**त्यादिना । स्पष्टोऽर्थः । अत्र सूत्रम्–" स आह चन्द्रं ते वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्याः शुक्रं त्वेति । हिरण्यमालभ्य वाचयति " ( का. श्रौ. सू. ७ । २१३-२१४ ) इति ॥ ६ ॥

अथ समन्त्रकं सोमविक्रयिणो हिरण्येनाभिप्रकम्पनं विधत्ते–**अथ सोमविक्रयिण**मिति । ' अभिप्रकम्पयति '

---

१–" चन्द्रं त्वेति ' इ. क्वचित् पाठः ।

( तृऽस्था ) अथाजायां प्रतीचीनमुख्यां वाचयति । तपसस्तनूरसीति तपसो ह वाऽएषा प्रजापतेः सम्भूता यदजा तस्मादाह तपसस्तनूरसीति प्रजापतेर्व्वर्णऽइति सा यत्त्रिः संव्वत्सरस्य व्विजायते तेन प्रजापतेर्व्वर्णः परमेण पशुना क्रीयसऽइति सा यत्त्रिः संव्वत्सरस्य व्विजायते तेन परमः पशुः सहस्रपोषं पुषेयमित्याशिषमेवैतदाशास्ते भूमा वै सहस्रं भूमानं गच्छानीत्येवैतदाह ॥ ८ ॥

---

अथाजायां प्रतीचीनमुख्यां वाचयति—" तपसस्तनूरसि "—( वा. सं. ४ । २६ ) इति । तपसो ह वाऽएषा प्रजापतेः सम्भूता—यदजा । तस्मादाह—तपसस्तनूरसीति । " प्रजापतेर्वर्णः"—( वा. सं. ४ । २६ ) इति । सा यत्त्रिः संवत्सरस्य विजायते—तेन प्रजापतेर्वर्णः । "परमेण पशुना क्रीयसे"—( वा. सं. ४ । २६ ) इति । सा यत्त्रिः संवत्सरस्य विजायते—तेन परमः पशुः । " सहस्रपोषं पुषेयम् "—( वा. सं. ४ । २६ ) इति । आशिषमेवैतदाशास्ते । भूमा वै सहस्रम् । भूमानं गच्छानीत्येवैतदाह ॥ ८ ॥

---

हिरण्येन प्रलोभयति । मन्त्रगतं ' सग्म'—पदं व्याचष्टे—यजमाने ते गौरिति । ऋत्विग्भिः सह गच्छति तत्तत्कर्मस्विति ' सग्मो ' यजमानः, तस्मिन् । हे सोमविक्रयिन् ! ते गौरस्तु । " सग्मे त इति सोमविक्रयिणं हिरण्येनाभिकम्पयति"—( का. श्रौ. सू. ७ । २१५ ) इति सूत्रम् ।

तद्यजमानमित्यादि । ' तत् ' अभिप्रकम्पनसाधनं हिरण्यं यजमानं प्रत्यानीय " अस्मे ते "—इति मन्त्रेण स्थापयेत् । ' अस्मे ' अस्मदीये यजमान इत्यर्थः । हिरण्यस्य वीर्यरूपत्वात् तत्स्वीकारेणात्मनि वीर्यधारणं कृतं भवति । मंत्रसामर्थ्येन वीर्यस्य स्वीकाराभिवीय हिरण्यशरीरमात्रमेव सोमविक्रयी हरते । ततो यजमानसमर्पणानंतरं तद्यजमानसमीपे न्यस्तं हिरण्यं सोमविक्रयी स्वीकुर्यात् । " सोमविक्रय्येतदादत्ते " ( का. श्रौ. सू. ७ । २१७ )इति सूत्रम् ॥ ७ ॥

अथाजायामिति । क्रयाय दत्तामजां प्रतीचीनमुखीं कृत्वा अध्वर्युस्तामालम्भ्य स्थितं यजमानं " तपसस्तनूरसि " इत्यादिमन्त्रं वाचयेत् । तथा च सूत्रम् " अजां प्रत्यङ्मुखीमालभ्य वाचयति तपसस्तनूरसीति " ( का. श्रौ.सू. ७ । २१८ ) इति । मन्त्रस्यायमर्थः । हे अजे ! त्वं ' प्रजापतेस्तपसः ' ' तनूः ' शरीरमसि । तत्परिणामरूपत्वात् । ' प्रजापतेः वर्णोऽसि ' " संवत्सरो वै प्रजापतिः"—( ऐ. ब्रा. १ । ३ । २ । ९; ९, ३ ) इति श्रुतेः । संवत्सरस्य सम्बन्धिनि काले जायमानत्वेन संवत्सरद्वारा संवत्सररूपप्रजापतिशरीरसारूप्यात् प्रजापतिवर्णात्मकत्वम् । सम्वत्सरे त्रिर्जायमानादेवेतरपशोरप्युत्कर्षात् अजा ' परमः पशुः, ' तेन क्रीयसे । हे सोम ! अतोऽहं तवानुग्रहात् ' सहस्रपोषं ' पुत्रपौत्रादिरूपेण बहुविधपुष्टिं प्राप्नवानीति ॥

तमिमं मन्त्रं विभज्य व्याचष्टे—तपसस्तनूरसीति । मन्त्रचतुर्थभागस्याशीःपरतामाह—आशिषमेवैतदिति । आशासनप्रकारमेव दर्शयति—भूमा वै सहस्रमिति ॥ ८ ॥

---

१—अस्मे त इति यजमानसहितं निदधाति । का. श्रौ. सू. ७ । २१६ ।

स वाऽ अनेनैवाजां प्रयच्छति । ( त्य ) अनेन राजानमादत्तऽआजा ह वै नामैषा यदजैतया ह्येनमन्तत आजति तामेतत्परोऽक्षमजेत्याचक्षते ॥९॥

( तेऽथ ) अथ राजानमादत्ते । मित्रो नऽएहि सुमित्रध इति शिवो नः शान्तऽएहीत्येवैतदाह तं यजमानस्य दक्षिणऽऊरौ प्रत्युह्य वासो निदधातीन्द्रस्योरुमाविश दक्षिणमित्येष वाऽअत्रेन्द्रो भवति यद्यजमानस्तस्मादाहेन्द्रस्योरुमाविश दक्षिणमित्युशन्नुशन्तमिति प्रियः प्रियमित्येवैतदाह स्योनः स्योनमिति शिवः शिवमित्येवैतदाह ॥ १० ॥

---

स वाऽअनेनैवाजां प्रयच्छति । अनेन राजानमादत्ते । आजा ह वै नामैषा यदजा । एतया ह्येनमन्तत आजति । तामेतत्परोऽक्षमजेत्याचक्षते ॥ ९ ॥

अथ राजानमादत्ते—"मित्रो न एहि सुमित्रधः"—( वा. सं. ४ । २७ ) इति । शिवो नः शान्त एहीत्येवैतदाह । तं यजमानस्य दक्षिणऽऊरौ प्रत्युह्य वासो निदधाति । "इन्द्रस्योरुमाविश दक्षिणम्"—( वा. सं. ४।२७ ) इति । एष वाऽअत्रेन्द्रो भवति—यद्यजमानः । तस्मादाह—इन्द्रस्योरुमाविश दक्षिणमिति । "उशन्नुशन्तम्"—( वा. सं. ४।२७ ) इति । प्रियः प्रियमित्येवैतदाह । "स्योनः स्योनम्"—( वा. सं. ४।२७ ) इति । शिवः शिवमित्येवैतदाह ॥ १० ॥

---

वाम-दक्षिणबाहू क्रमेण अजाप्रदाने सोमादाने च निर्दिशति—स वा अनेनेति । अनेन राजानमादत्त—इति । यद्यत्र विशेषो न श्रूयते तथापि सूत्रकारेण विशेषितम्—"सव्येनाजां प्रयच्छन्—'मित्रो न'—इति दक्षिणेन सोममादायागत उत्तिष्ठति वा" । ( का.श्रौ.सू.७।२।१९ ) इति । अजाप्रदानेन सोमादानं तन्निर्वचनद्वारेण प्रशंसति—अजा ह वा इति । यस्मात् 'एतया' अजया 'एनम्' सोमम् एकाहनि हिरण्यादिक्रयद्रव्याणाम् 'अन्ततः' 'आजत्' अभिमुखेनागच्छति । आजनसाधनत्वात् 'आजा' वस्तुतः, 'तां' परोक्षेण 'अजेत्याक्षते' ॥९॥

सोमस्यादाने मन्त्रं विधत्ते—अथ राजानमादत्ते मित्रो न एहीति । 'हे सोम ! त्वं' 'सुमित्रधः' शोभनयजमानधारकः, त्वं 'मित्रः' मित्रभूतः प्रियभूतः सन् आगच्छेत्यर्थः । अस्मिन् मन्त्रे मित्रशब्दार्थमाह—शिवो नः शान्त इति । शिवशब्दस्य व्याख्यानं 'शान्त' इति । तं यजमानस्येति । 'दक्षिणे' 'ऊरौ' ऊरुप्रदेशे तत्रान्तर्धायकं 'वासः' 'प्रत्युह्य' प्रसार्य तत्र सोमं निदध्यात् ॥

निधाने मन्त्रं विधाय प्रशंसति—इन्द्रस्योरुमिति । 'अत्र' अस्मिन् सोमक्रयकर्मणि यस्मात् यजमानः एव 'इन्द्रो' भवति स्वतन्त्रत्वात् 'तस्मात्'—"इन्द्रस्योरुम्" इति मन्त्रं ब्रूते । द्वितीयभागतात्पर्यमाह—उशन्नुशन्तमिति इति । "वश कान्तौ"—( धा. पा. अ. प. ७० ) । कामयमानस्त्वं कामयमानमूरुमाविशेति मन्त्रभागस्यार्थः । यः कामनाविषयः, स प्रियो भवतीति प्रसिद्धम्, अतः 'उशन्नुशन्तम्'—इत्यनेन 'प्रियः प्रियम्'—'इति' 'आह' मन्त्रः । एवं—स्योनः स्योनमिति । स्योनमिति सुखनाम; ( निघ. २ । ६ । १९ ) सुखस्य शिवात्मकत्वात् 'शिवः शिवम्' इति व्याख्यातम् । "दीक्षितोरौ दक्षिणे प्रत्युह्य वासो निदधातीन्द्रस्योरुमिति ( का. श्रौ. सू. ७ । २२० ) ॥ १० ॥

( द्रा ) अथ सोमक्रयणाननुदिशति । स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन्निति धिष्ण्यानां वाऽएते भाजनेनैतानि वै धिष्ण्यानां नामानि तान्येवैभ्य ऽएतदन्वदिक्षत् ११

( द ) अथात्रापोर्णुते । गर्भो वाऽएष भवति यो दीक्षते प्रावृता वै गर्भा ऽउल्बेनेव जरायुणेव तमत्राजीजनत तस्मादपोर्णुतऽएष वाऽअत्र गर्भो भवति तस्मात्परिवृतो भवति परिवृताऽइव हि गर्भा उल्बेनेव जरायुणेव १२

---

अथ सोमक्रयणाननुदिशति—" स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान् रक्षध्वं मा वो दभन् "—(वा. सं. ४।२७ ) इति । धिष्ण्यानां वाऽएते भाजनेनैतानि वै धिष्ण्यानां नामानि । तान्येवैभ्य एतदन्वदिक्षत् ॥ ११ ॥

अथात्रापोर्णुते । गर्भो वाऽएष भवति यो दीक्षते। प्रावृता वै गर्भा उल्बेनेव जरायुणेव । तमत्राजीजनत—तस्मादपोर्णुत । एष वाऽअत्र गर्भो भवति । तस्मात्परिवृतो भवति । परिवृता इव हि गर्भा-उल्बेनेव जरायुणेव ॥ १२ ॥

---

अथ सोमक्रयणाननुदिशतीति—( का. श्रौ. सू. ७ । २२१ ) । हे स्वानभ्राजादयः ' वः ' युष्माकम् ' एते ' ' सोमक्रयणाः ' । यतः तैर्गवादिभिः सोमः क्रीयते अतः ' तान् ' क्रयसाधनपदार्थान् ' रक्षध्वम् ' । रक्षःसम्बन्धिनः तान् ' मा दभन् ' मा हिंसिष्ठाः ॥

अनुदेशनं प्रशंसति—धिष्ण्यानां वा एते भाजनेनेति । भाजयतीति भाजनं स्थानम्, तेन तत्स्थानेनोपाधिना ' एते ' स्वानादयो ' धिष्ण्यानाम् ' सम्बन्धिनः खलु । कथं तेषां धिष्ण्यसम्बन्ध इति तत्राह—एतानि वै धिष्ण्यानां नामानीति । स्वानादयो धिष्ण्यानां ( निरु. ८ । १ । ४ ) नामान्येव, परं न तदतिरिक्ताः । अथवा अनुदेशनार्हाः ' एते ' गवादिपदार्थाः ' धिष्ण्यानाम् ' एव, न तु स्वानादयः सोमरक्षकाः; अतस्तेषामेव ' एते ', न धिष्ण्यानामिति, तत्राह—एतानि वा इति । तथा चोत्तरत्र वक्ष्यति—" तमेते गन्धर्वाः सोमरक्षा जुगुपुः, इमे धिष्ण्या इमाः होत्रा "—( श. प. ब्रा. ३ । ६ । २ । ९ ) इति । ' तान्येव ' दश क्रयद्रव्याणि ' एतत् ' एतेन ' एते वः सोमक्रयणाः '—इति पाठेन ' एभ्यः ' धिष्ण्यभूतेभ्यः स्वानादिभ्यः 'अन्वदिक्षत्' अनुदिष्टवान् भवति । दिशतेः ( धा. पा. तु. उ. ३ ) " शल इगुपधा० "—( पा. सू. ३ । १ । ४५ ) इति क्सः । अत्र सूत्रम्—" स्वान भ्राजेति जपति सोमविक्रयिणमीक्षमाण इति " । ( का. श्रौ. सू. ७ । २२१ ) ॥ ११ ॥

दीक्षासमये धृतस्य शिरःप्रावरणस्यापवारणं विधत्ते—अथात्रापोर्णुत इति । धृतस्य शिरःप्रावरणस्यापवारणं विधाय प्रशंसति—उल्बेनेव जरायुणेवेति । उभयत्रेव-शब्दो वाक्यालङ्कारार्थः । ' उल्बं ' गर्भस्यान्तरमावरणम्, ' जरायु ' बाह्यमावरणम् । तथा च प्रागाम्नातम् । " अन्तरं वा उल्बं जरायुणो भवति "—( श. प. ब्रा. ३ । २ । १ । ११ ) इति । स्पष्टमन्यत् । ' तं ' गर्भभूतं यजमानम् ' अत्र ' अस्मिन् सोमविक्रयसमनन्तरकाले

---

१–अपोर्णुते दीक्षितः शिरः । । का. श्रौ. सू. ७ । २२२ । पत्नी च । २२३ ।

( वा ) अथ वाचयति । परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजे-त्यासीनं वाऽएनमेष ऽआगच्छति स आगत ऽउत्तिष्ठति तन्मिथ्या करोति व्रतं प्रमीणाति तस्यो हैषा प्रायश्चित्तिस्तथो हास्यैतन्न मिथ्याकृतं भवति न व्रतं प्रमीणाति तस्मादाह परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजेति ॥ १३ ॥

( त्यु ) अथ राजानमादायोत्तिष्ठति । ( त्यु ) उदायुषा स्वायुषोदस्था-ममृता२ँ॥ऽअन्विुत्यमृतं वाऽएषोऽनूत्तिष्ठति यः सोमं क्रीतं तस्मादाहो-दायुषा स्वायुषोदस्थाममृता२ँ॥ऽअन्विति ॥ १४ ॥

( त्यु ) अथ राजानमादायारोहणमभिप्रैति । प्रति पन्थामपद्महि स्वस्ति-गामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्विति ॥ १५ ॥

---

अथ वाचयति–"परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज"–(वा. सं. ४।२८) इति। आसीनं वाऽ एनमेष आगच्छति । स आगतऽउत्तिष्ठति–तन्मिथ्या करोति–व्रतं प्रमीणाति । तस्यो हैषा प्रायश्चित्तिः । तथो हास्यैतन्न मिथ्याकृतं भवति–न व्रतं प्रमीणाति । तस्मादाह–परिमाग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजेति ॥ १३ ॥

अथ राजानमादायोत्तिष्ठति–"उदायुषा स्वायुषोदस्थाममृता२ँ॥ अनु"–(वा. सं. ४।२८) इति । अमृतं वाऽएषोऽनूत्तिष्ठति–यः सोमं क्रीतम् । तस्मादाह–उदायुषा स्वायुषोदस्थाममृता२ँ॥ अन्विति ॥ १४ ॥

अथ राजानमादायारोहणमभिप्रैति । "प्रतिपन्थामपद्महि स्वस्तिगामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु"( वा. सं. ४।२९ ) इति ॥ १५ ॥

---

'अजीजनत' प्रादुरभावयत् अध्वर्युः । उत्पन्नस्यावरणयोगात् अपवरणं युक्तमित्यर्थः । पूर्वं सति प्रावरणे पश्चा-दपवरणं युज्यते, तदेव कुत इत्यत आह–एष वा अत्र गर्भ इत्यादिना ॥ १२ ॥

अथ वाचयतीति । अध्वर्युः "परि माग्ने दुश्चरितात्"–इति अमुं मन्त्रं यजमानं वाचयेत् । अयमर्थः । 'मा' मां दुश्चरितात् सकाशात् 'परिबाधस्व' त्रायस्वेत्यर्थः । 'मा' मां 'सुचरिते' सदाचारे 'आभज' आभाजय । अथवा सुचरिते वर्तमानं माम् 'आभज' अनुगृहाण । मन्त्रतात्पर्यमाह–आसीनं वा एनमिति । 'एनम्' यजमानम्, 'एषः' सोमो राजा । श्रेष्ठस्यागमनात् प्रागेवोत्थानेन भवितव्यम्, अत्र तद्वैपरीत्यान्मि-थ्याकरणम्; तच्च 'व्रतं' कर्म 'प्रमीणाति' प्रहिनस्ति; तदनेन मन्त्रवाचनेन समाधीयत इति ॥ १३ ॥

अथ राजानमादायेति[२] । उत्थानमन्त्रस्यार्थः । 'आयुषा स्वायुषा' च सह तत्साधनेन वा आयुष्क-रणेन सोमेन सह 'उदस्थाम्' । 'आयुषा' निमित्तेनेति वा । 'अमृतान्' अवयवापेक्षया बहुवचनम् । सोमांशून्–' अनु'–सृत्य 'उदस्थाम्' । अमृतशब्दस्य तात्पर्यमाह–अमृतं वा एषोऽनूत्तिष्ठति यः सोमं क्रीतम् इति । अनूत्तिष्ठतीति शेषः ॥ १४ ॥

अथ राजानमादायारोहणमभिप्रैतीति । आरोहन्त्यत्रेति 'आरोहणं' शकटम् । अभिगमनमन्त्रस्या-

---

१–गृहीतसोमं परि माम इति वाचयति । का. श्रौ. सू. ७ । २२५ । २–उदायुषेत्युत्थानम् । का. श्रौ. सू. ७ । २२७ ।

देवा ह वै यज्ञं तन्वानाः। (स्ते) तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुस्तऽएतद्यजुः स्वस्त्ययनं ददृशुस्तऽएतेन यजुषा नाष्ट्रा रक्षाᳬं᳭स्यपहत्यै तस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समाश्नुवत तथोऽएवैष एतेन यजुषा नाष्ट्रा रक्षाᳬं᳭स्यपहत्यैतस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समश्नुते तस्मादाह प्रति पन्थामपद्महि स्वस्तिगामनेहसम्। येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्विति॥ १६॥

तं वाऽइति हरन्ति। (न्त्यु) अनसा परिवहन्ति महयन्त्येवैनमेतत्तस्माच्छीर्ष्णा बीजᳬं᳭ हरन्त्यनसोदावहन्ति॥ १७॥

---

देवा ह वै यज्ञं तन्वानाः। तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुः। तऽएतद्यजुः स्वस्त्ययनं ददृशुः। तऽएतेन यजुषा नाष्ट्रा रक्षांस्यपहत्यैतस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समाश्नुवत। तथो एवैष एतेन यजुषा नाष्ट्रा रक्षांस्यपहत्यैतस्य यजुषोऽभयेऽनाष्ट्रे निवाते स्वस्ति समश्नुते। तस्मादाह—प्रति पन्थामपद्महि स्वस्तिगामनेहसम्। येन विश्वाः परि द्विषो वृणक्ति विन्दते वस्विति॥ १६॥

तं वाऽइति हरन्ति अनसा परिवहन्ति। महयन्त्येवैनमेतत्। तस्माच्छीर्ष्णा बीजं हरन्ति, अनसोदावहन्ति॥ १७॥

---

यमर्थः। वयं 'पन्थां' पन्थानं 'प्रत्यपद्महि' प्रतिपद्येमहि। कीदृशम्? 'स्वस्तिगां शोभनगमनम्' 'अनेहसम्' 'अपापम्'। 'येन' पथा गच्छन् पुरुषो 'विश्वाः' 'द्विषः' द्वेष्टॄन् 'परिवृणक्ति' परिवर्जयति, 'वसु' धनं च 'विन्दते' लभते तं प्रतिपद्येमहीति॥ १९॥

अमुं मन्त्रमाख्यायिकया प्रशंसति—देवा ह वा इति। पुरा किल 'देवाः' देवत्वप्राप्तये 'यज्ञं तन्वानाः' असुराद्यासङ्गेन भीताः तत्परिहारोपायत्वेन क्षेमप्रापकम् 'एतत्' 'यजुः' इमं मन्त्रं दृष्ट्वा प्रयुज्य, 'नाष्ट्रा रक्षांसि' नाशकारिणो राक्षसान् घातयित्वा, एतन्मन्त्रसम्बन्धिनि भयरहिते, नाशरहिते, 'वातरहिते स्थाने अविनाशलक्षणं क्षेमं प्राप्ताः। तस्मात् इदानीन्तनोऽपि तद्यजुःप्रयोगेणोक्तलक्षणं क्षेमं प्राप्नोति। यस्मादस्य मन्त्रस्य सामर्थ्यमेवंविधम्, तस्माच्छकटसमीपं गच्छन् "प्रति पन्थाम्" इति मन्त्रं ब्रूयादित्यर्थः। ब्राह्मणोक्तस्य कृत्स्नस्यार्थस्य मन्त्रे दर्शनादित्यभिप्रायः॥ १६॥

तं वा इतीति। हरणप्रकारोऽभिनीयते। 'इति' अनेन प्रकारेण शिरसा धृत्वेत्यर्थः। 'हरन्ति प्रथमं क्रयात्' प्राक् पर्वतात्, पश्चात्तु 'अनसा परिवहन्ति' अनेन सोमं 'महयन्ति' सत्कुर्वन्ति। यस्मात् पूर्वमेवं कृतम् 'तस्मात्' इदानीमपि आवापसमये कृष्टक्षेत्रं प्रति 'बीजं शीर्ष्णा हरन्ति' पश्चात् फलितानामानयनसमये 'अनसा' 'उदावहन्ति' उदानयन्ति। अत्र सूत्रम्—"शैर्ष्णि सोमं कृत्वा पाणिमन्तर्द्धाय प्रतिपन्थामित्यनोऽभ्येति, दक्षिणतस्तिष्ठच्छन्नं समङ्गि धौतम्, प्रउगाच्चोद्धते फलके, कृष्णाजिनमस्मिन्नास्तृणा-

---

१—'बाधरहिते'—इ. क. पा.। २—शीर्ष्णेति—तं वा हरतीत्यत्र—तस्माच्छीर्ष्णा बीजᳬं᳭ हरन्तीति वाक्यशेषात्। ३—पाणिमन्तर्द्धायेति शाखान्तरादिति हरिस्वामिनः।

( न्त्यु ) अ॒थ य॒दपा॒मन्ते॑ क्रीणा॒ति॑ । र॒सो वा॑ऽआ॒पः स॒रस॑मे॒तत्क्री॑णा॒त्यथ॒ यद्धिर॑ण्यं भ॒वति॑ स॒शु॒क्रमे॒वैतत्क्री॑णा॒त्यथ॒ यद्वासो॑ भ॒वति॑ स॒त्वच॑समे॒वैत॒त्क्री॑णा॒त्यथ॒ य॒द॒जा भ॒वति॑ स॒तप॑समे॒वैत॒त्क्री॑णा॒त्यथ॒ य॒द्धे॒नुर्भ॒वति॑ सा॒शिर॑मे॒वैत॒त्क्री॑णा॒त्यथ॒ य॒न्मि॑थु॒नौ भ॒वतः॑ स॒मि॒थु॒नमे॒वैत॒त्क्री॑णा॒ति तं वै॒ द॒श॒भि॑रे॒व क्री॑णीया॒न्नाद॑शभि॒र्दशा॑क्षरा॒ वै वि॒राड्वै॑रा॒जः सोम॒स्तस्मा॑द्द॒श॒भि॑रे॒व क्री॑णीया॒न्नाद॑शभिः ॥ १८ ॥

इति द्वितीये प्रपाठके षष्ठं ब्राह्मणम् ॥ २ ॥ ६ ॥ ( ३. ३ )
इति द्वितीयप्रपाठकः समाप्तः ॥ कण्डिकासंख्या १२८ ॥

---

अथ यदपामन्ते क्रीणाति । रसो वाऽआपः । सरसमेवैतत्क्रीणाति । अथ यद्धिरण्यं भवति–सशुक्रमेवैतत्क्रीणाति । अथ यद् वासो भवति–सत्वचसमेवैतत्क्रीणाति । अथ यदजा भवति–सतपसमेवैतत्क्रीणाति । अथ यद्धेनुर्भवति–साशिरमेवैतत्क्रीणाति । अथ यन्मिथुनौ भवतः–समिथुनमेवैतत्क्रीणाति । तं वै दशभिरेव क्रीणीयात्–नादशभिः । दशाक्षरा वै विराट् । वैराजः सोमः । तस्माद्दशभिरेव क्रीणीयाद्–नादशभिः ॥ १८ ॥

---

त्यदित्यास्त्वगिति" ( वा. सं. ४ । ३० । १ ) तस्मिन्त्सोमं निदधात्यदित्यै सद ( वा. सं. ४ । ३० । २ ) इति "–( का. श्रौ. सू. ७ । २२७–२३० ) इति ॥ १७ ॥

उदकुम्भसमीपे क्रयं प्रशंसति–अथ यदपामिति । स्पष्टोऽर्थः । हिरण्यादिदशरूपद्रव्यं क्रमेणानूद्य प्रशंसति–अथ यद्धिरण्यं भवतीत्यादिना । क्रयाय 'हिरण्यं भवति' इति 'यत्' 'एतत्' एतेन सोमं 'सशुक्रम्' शुक्रेण दीप्त्या सहितं सन्तं क्रीतवान् भवति; हिरण्यस्य तेजोरूपत्वात् । वासस आच्छादनसाधनत्वात्, तेन क्रये सति सोमं 'सत्वचसम्' क्रीतवान् भवति । ब्रह्मणस्तपसा सम्भूतत्वात् 'अजया' क्रये सति तपसा सहितः क्रयो भवति । धेन्वामाशिरस्य क्षीरादेः सम्भवात्, तया क्रये सति सोमः साशिरो भवति । 'अथ यन्मिथुनौ भवतः'–इति स्पष्टम् । क्रयणद्रव्यगतां दशसङ्ख्यामनूद्य प्रशंसति–" तं वै दशभिरेव क्रीणीयात्, नादशभिः " इति । स्पष्टोऽर्थः ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये तृतीयकाण्डे तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ( ३–३–३ ) ॥

---

# अथ तृतीयप्रपाठके प्रथमं ब्राह्मणम् ।
# तृतीयाध्याये च चतुर्थं ब्राह्मणम् ।

नीडे कृष्णाजिनमास्तृणाति । (त्य) अदित्यास्त्वगसीति सोऽसावेव बन्धुरथैनमासादयत्यदित्यै सद ऽआसीदेतीयं वै पृथिव्यदितिः सेयं प्रतिष्ठा तदस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति तस्मादाहादित्यै सद ऽआसीदेति ॥ १ ॥

(त्य) अथैवमभिपद्य व्वाचयति । (त्य) अस्तभ्नाद्द्यां वृषभोऽअन्तरिक्षमिति देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयांचक्रुस्तऽएनमेतज्ज्यायाᳬंसमेव व्वधाञ्चक्रुर्यदाहास्तभ्नाद्द्यां व्वृषभोऽअन्तरिक्षमिति ॥ २ ॥

### अथ सोमानयनम् ।

नीडे कृष्णाजिनमास्तृणाति–"अदित्यास्त्वगसि"–(वा. सं. ४ । ३०) इति । सोऽसावेव बन्धुः । अथैनमासादयति–"अदित्यै सद आसीद"–(वा. सं. ४ । ३०) इति । इयं वै पृथिव्यदितिः । सेयं प्रतिष्ठा । तदस्यामेवैनमेतत्प्रतिष्ठायां प्रतिष्ठापयति । तस्मादाह अदित्यै सद आसीदेति ॥ १ ॥

अथैवमभिपद्य वाचयति–"अस्तभ्नाद् द्यां वृषभोऽअन्तरिक्षम्"–(वा. सं. ४ । ३०) इति ।

---

शकटमध्ये सोमस्थापनाय कृष्णाजिनास्तरणं समन्त्रकं विधत्ते–नीडे कृष्णाजिनमिति । "उद्धते प्रउग्ये फलके भवतः" (श. प. ब्रा. ३ । ३ । ४ । ९) इति वक्ष्यति । तदुद्धतप्रउग्यफलकद्वयोपेतस्यानसो 'नीडे' । परितः प्रावृतः शकटमध्यदेशो नीडम् अस्मिन् 'कृष्णाजिनम्' प्रसारयेत् । हे कृष्णाजिन ! त्वम् 'अदित्याः' भूम्याः त्वग्रूपम् 'असि' यद्यद् भूम्या उपरि स्तृतम् तत् सर्वं तस्यास्त्वक्स्थानीयमित्यर्थः । दर्शपूर्णमासगतं कृष्णाजिनास्तरणमन्त्रब्राह्मणम् (श. प. ब्रा. १ । १ । ४ । ९) अत्रातिदिशति–सोऽसावेव बन्धुरिति । योऽसौ अवहननप्रस्तावगतः–"इयं वै पृथिव्यदितिस्तस्याऽअस्यै त्वग् यदिदमस्यामधि किञ्च तस्मादाहादित्यास्त्वगसीति"–(श. प. ब्रा. १ । १ । ४ । ९) इत्युक्तो यो ब्राह्मणभागः 'सः' एवास्य 'बन्धुः' समानार्थकः, ब्राह्मणमित्यर्थः । अथैनमिति । 'एनं' सोमम् 'आसादयति'–अदित्यै सद इत्यनेन मन्त्रेण 'अदित्यै' अदित्याः सम्बन्धि 'सदः' सदनं स्थानम । पृथिव्याः सर्वास्पदत्वेन प्रतिष्ठात्वम्, 'तस्मात्' प्रतिष्ठात्मकत्वात्; इति भावनया कृष्णाजिने आसादितोऽपि सोमोऽदित्यां प्रतिष्ठापितो भवति, यतः अतोऽमुं मन्त्रं पठेत् ॥ १ ॥

अथैनमिति । 'एनं सोमम् 'अभिपद्य' आलभ्य 'वाचयति' अध्वर्युः । "अस्तभ्नाद् द्याम्" इति

---

१–अथैनम् इति सायणसंमतः पाठः । २–कृष्णाजिनमस्मिन्नास्तृणात्यदित्यास्त्वगिति ।·का.श्रौ. सू.७ । २२९ । ३–तस्मिन्त्सोमं निदधात्यदित्यैसद इति का. श्रौ. सू. ७ । २३८ ।

( त्यु ) अुमिमीत व्वरिमुाणं पृृथिव्या इुति । तुदेनेनेमुाँल्लोकानुास्पृ-णोति तुस्य हि नु हन्ताऽस्ति नु वधो येनेमे लोका ऽअुास्पृतास्तुस्मादा-ह्वामिमीत व्वरिमुाणं पृथिव्या इति ॥ ३ ॥

( त्या ) अुासीदद्विश्वा भुुवनानि सम्राडिति । तुदेनेनेदथं सुर्व्वमुास्पृ-णोति तुस्य हि नु हन्तास्ति नु वधो येनेदथं सुर्व्वमुास्पृतं तुस्मादा-ह्वासीदद्विश्वा भुुवनानि सम्राडिति ॥ ४ ॥

---

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयाञ्चक्रुः । त एनमेतज्ज्यायांसमेव वधाच्चक्रुः । यदाह—अस्तभ्नाद् द्यां वृषभोऽअन्तरिक्षामिति ॥ २ ॥

"अमिमीत वरिमाणं पृथिव्याः"–(वा.सं.४।३०) इति । तदेनेनेमाँल्लोकानास्पृणोति । तस्य हि न हन्तास्ति । न वधः—येनेमे लोका आस्पृताः। तस्मादाह—अमिमीत वरिमाणं पृथिव्या इति॥३

"आसीदद्विश्वाभुवनानि सम्राट्" (वा.सं.४।३०)–इति । तदेनेनेदं सर्वमास्पृणोति । तस्य हि न हन्तास्ति—न वधः—येनेदं सर्वमास्पृतम् । तस्मादाह—आसीदद्विश्वा भुवनानि सम्राडिति ॥४॥

---

(मन्त्रं) सोममालभ्य वाचयति" ( का. श्रौ. सू. ७ । २३१) इति सूत्रम् । मन्त्रस्यायमर्थः । 'वृषभः' अपां वर्षिता सोमः । अथवा वृषभ—शब्दः श्रेष्ठवाची, सर्वदेवश्रेष्ठः सोमः । 'उपरि' 'द्याम' दिवम् 'अस्तभ्नात्' सर्वप्राणिरक्षणाय स्तम्भितवान् । तथा 'अन्तरिक्षम्' अस्तभ्नात् । किञ्च 'पृथिव्याः' 'वरिमाणम्' परिमाणमहत्त्वमपि 'अमिमीत' इयती पृथिवीति मानं कृतवान् । स तादृशः 'सम्राट्' सम्यग्राजमानः सोमो 'विश्वा' विश्वानि 'भुवनानि' भूतजातानि 'आसीदद्' अधिपतित्वेनाधिष्ठितवान् । 'तानि' इमानि 'विश्वा' विश्वानि सर्वाणि 'इत्' अपि 'व्रतानि' आयुस्तम्भनादिकर्माणि 'वरुणस्य' पापनिवारकस्य सोमदेवस्य सम्बन्धीनि, सर्वे देवादयोऽनुसरन्तीत्यर्थः ॥

अमुं मन्त्रं चतुर्द्धा विभज्य व्याचष्टे—देवा ह वै यज्ञमित्यादिना । पुरा 'देवाः' 'एनम्' 'एव' सोमम् 'एतत्' एतस्मिन् प्रस्तुते कर्मणि 'वधात्' असुररक्षःकृतोद्वेगात्, तत्परिहाराय 'ज्यायांसं' प्रशस्यतरं श्रेष्ठं चक्रुः । 'यदाह' मन्त्रः 'अस्तभ्नाद् द्यां वृषभोऽअन्तरिक्षमिति' स पूर्वमेतद्ब्राह्मणोक्तप्रकारेण देवैः कृतत्वादाहेत्यर्थः; तस्मिन् मन्त्रभागे श्रेष्ठवाचकवृषभशब्दस्य श्रवणात् ॥ २ ॥

अमिमीतेति । 'तत्' तस्मात् सोमेन पृथिव्या मितत्वात्, 'एनेन' बलप्रकाशकमन्त्रपाठेन, अथवा 'एनेन' पृथिवीमानकर्त्रा सोमेन 'इमान्' त्रीनपि 'लोकान्' 'आस्पृणोति' सर्वतो बलिनः कारयति । सोमस्य बलवत्त्वमर्थापत्त्या द्रढयति—तस्य हीति । हन्तुर्हननस्य च लोकत्रयान्तःपातित्वात् तस्य चैतदार्थापत्त्यमित्यर्थः । आस्पृताः बलिनः कृताः । यस्मादेवं 'तस्मात्' 'अमिमीत वरिमाणं पृथिव्या इति' मन्त्रभागस्तमर्थम् 'आह' । अथवा 'तस्मात्' तं मन्त्रभागं ब्रूयादित्यर्थः ॥ ३ ॥

आसीददिति । तृतीयपादस्यापि बलप्रकाशनरूपार्थत्वात् तृतीयपादब्राह्मणमेवात्र पुनः पठितम्; "तदेनेनेमाँल्लोकान्"—इत्यस्य स्थाने "तदेनेनेदꣳसर्वम्" इति विशेषः ॥ ४ ॥

विश्वेत्तानि वरुणस्य व्रतानीति । तदस्मा ऽइदꣳ सर्वमनुवर्त्म करोति यदिदं किं च न कं चन प्रत्युद्यामिनं तस्मादाह विश्वेत्तानि वरुणस्य व्रतानीति ॥ ५ ॥

( त्यु ) अथ सोमपर्याणहनेन पर्याणह्यति । नेदेनं नाष्ट्रा रक्षाꣳसि प्रमृशानिति गर्भो वाऽएष भवति तिरऽइव वै गर्भास्तिर ऽइवैतद्यत्पर्याणद्धं तिरऽइव वै देवा मनुष्येभ्यस्तिर इवैतद्यत्पर्याणद्धं तस्माद्वै पर्याणह्यति ॥ ६ ॥

स पर्याणह्यति । वनेषु व्यन्तरिक्षं ततानेति वनेषु हीदमन्तरिक्षं विततं वृक्षाग्रेषु वाजमर्वत्सु पय उस्रियास्विति वीर्यं वै वाजाः पुमाꣳसोऽर्वन्तः पुꣳस्वेवैतद्वीर्यं दधाति पय उस्रियास्विति पयो हीदमुस्रियासु हितꣳ

---

"विश्वेत्तानि वरुणस्य व्रतानि"–( वा. सं. ४।३० ) इति । तदस्माऽइदं सर्वमनुवर्त्मकरोति यदिदं किं च, न कं चन प्रत्युद्यामिनम् । तस्मादाह विश्वेत्तानि वरुणस्य व्रतानीति ॥ ५ ॥

अथ सोमपर्याणहनेन पर्याणह्यति । नेदेनं नाष्ट्रा रक्षांसि प्रमृशानिति । गर्भो वाऽएष भवति । तिर–इव वै गर्भाः–तिर इवैतद् यत्पर्याणद्धम् । तिर–इव वै देवा मनुष्येभ्यः । तिर इवैतद् यत्पर्याणद्धम् । तस्माद्वै पर्याणह्यति ॥ ६ ॥

स पर्याणह्यति–"वनेषु व्यन्तरिक्षं ततान"–( वा.सं. ४।३१) इति । वनेषु हीदमन्तरिक्षं विततं वृक्षाग्रेषु । "वाजमर्वत्सु, पय उस्रियासु"–(वा.सं.४।३१) इति । वीर्यं वै वाजाः, पुमांसोऽर्वन्तः ।

---

विश्वेत्तानीति । चतुर्थभागपाठस्य तात्पर्यमाह–तदस्मा इदं सर्वमनुवर्त्म करोतीति । 'इदं सर्वम्' भूतजातम् 'अनुवर्त्म' तदधीनस्थितिकं कृतवान् भवति । प्रत्युद्यामः प्रतिकूलोद्योगः, तत्कर्तारम 'प्रत्युद्यामिनम्' 'न करोति' इति सम्बन्धः ॥ ५ ॥

अथ सोमपर्याणहनेनेति । शकटेन सार्द्धं सोमस्य वेष्टनसाधनं वासः 'पर्याणहनम्' पर्याणहनप्रयोजनकथनम्–नेदेनं नाष्ट्रा रक्षांसीति । 'नेत्' इति परिभये । तथा च यास्कः–"नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये" इति ( निरु. ३।१।६ ) यदि पर्याणहनं न कुर्यात् तदा 'नाष्ट्रा' नाशकराणि रक्षांसि 'एनं' 'प्रमृशान्' प्रमृशेयुः, एतत्तु भयकरम् । तस्मात् तत्परिहाराय पर्याणहनमित्यर्थः । पर्याणहनं प्रकारान्तरेण प्रशंसति–गर्भो वा एष भवतीति । 'तिर इव वै गर्भाः' अन्तर्हिता वर्तन्त इत्यर्थः । यस्माद् गर्भाणां तिरोधानमपेक्षितम्, यस्माच्च मनुष्येभ्यः सकाशात् देवस्य सोमस्य, तस्मात् पर्याणहनं युक्तमित्यर्थः ॥ ६ ॥

तत्र मन्त्रं विधाय प्रशंसति–स पर्याणह्यतीति । वनेषु व्यन्तरिक्षमित्यादिना । 'वनेषु' 'वृक्षसमूहेषु' 'अन्तरिक्षं' 'विततान' सोमो विस्तारितवान् । तद् यद् 'वाजं' वेगं बलं वा 'अर्वत्सु' अरणवत्सु

---

१–वनेषु व्यंतरिक्षमिति सोमपर्याणहनेन परितत्य । का. श्रौ. सू. ७।२३२।

हृत्सु क्रतुं वरुणो विक्ष्वग्निमिति हृत्सु ह्ययं क्रतुर्मनोजवः प्रविष्टो विक्ष्वग्निमिति विक्षु ह्ययं प्रजास्वग्निर्दिवि सूर्यमदधात्सोममद्राविति दिवि ह्यसौ सूर्यो हितः सोममद्राविति गिरिषु हि सोमस्तस्मादाह दिवि सूर्यमदधात्सोममद्राविति ॥ ७ ॥

( त्यु ) अथ यदि द्वे कृष्णाजिने भवतः । ( स्तु ) तयोरन्यतरत्प्रत्यानह्यति प्रतीनाहभाजनं यद्युऽएकं भवति कृष्णाजिनग्रीवा एवावकृत्य प्रत्यानह्यति प्रतीनाहभाजनꣳ सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकम् । यत्रैतशेभिरीयसे भ्राजमानो विपश्चितेति सूर्यमेवैतत्पुरस्तात्करोति सूर्यः पुरस्तान्नाष्ट्रा रक्षाꣳस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण परिवहन्ति ॥ ८ ॥

---

पुंस्वेवैतद्वीर्यं दधाति । पय उस्रियास्विति । पयो हीदमुस्रियासु हितम् । " हृत्सु क्रतुं वरुणो विक्ष्वग्निम् "–( वा. सं. ४।३१ ) इति । हृत्सु ह्ययं क्रतुर्मनोजवः प्रविष्टः । विक्ष्वग्निमिति । विक्षु ह्ययं प्रजास्वग्निः । " दिवि सूर्यमदधात्सोममद्रौ–"( वा. सं. ४।३१ ) इति । दिवि ह्यसौ सूर्यो हितः । सोममद्राविति । गिरिषु हि सोमः । तस्मादाह–दिवि सूर्यमदधात्सोममद्राविति॥७॥

अथ यदि द्वे कृष्णाजिने भवतः । तयोरन्यतरत्प्रत्यानह्यति–प्रतीनाहभाजनम् । यद्यु एकं भवति–कृष्णाजिनग्रीवा एवावकृत्य प्रत्यानह्यति–प्रतीनाहभाजनम् । " सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकम् । यत्रैतशेभिरीयसे भ्राजमानो विपश्चिता "–( वा. सं. ४ । ३२ इति । सूर्यमेवैतत्पुरस्तात्करोति । सूर्यः पुरस्तान्नाष्ट्रा रक्षांस्यपघ्नन्नेति । अथाभयेनानाष्ट्रेण परिवहन्ति ॥ ८ ॥

---

पुरुषेषु योग्यम् । ' व्यदधात्–' इति सर्वत्र सम्बध्यते । ' उस्रिया ' ( निघं. २ । ११ । ३ ) इति गोनाम । तासु ' पयः ' । ' हृत्सु ' इति प्राणिबहुत्वापेक्षया बहुवचनम् । तत्र ' हृत्सु ' ' क्रतुं ' सङ्कल्पम् । ' विक्षु ' प्रजासु अग्निम् भुक्तस्यान्नपानस्य पाकसाधनमग्निम् । ' दिवि सूर्यम् ' । ' अद्रौ ' जातावेकवचनम ( पा. सू. १ । २ । ५८ ) पर्वतेषु ' सोमम् ' । ' वरुणः ' पापनिवारकः । सोमो देवः ' अदधात् ' स्थापितवानिति मन्त्रार्थः । ' वन '–शब्दस्यार्थान्तरभ्रमं व्युदस्यन् वनेष्वन्तरिक्षविस्तरणं लोकसिद्धमित्याह–वनेषु हीदं विततमन्तरिक्षं वृक्षाग्रेष्विति । यद्यपि सर्वत्रान्तरिक्षं विततम् तथापि पामरदृष्ट्या सान्द्रवृक्षाग्रेषु पटास्तरणवत् प्रतिभासादेवमुक्तम् । ' अर्वत्सु ' पुंस्त्वसम्भवात् वाजस्य वीर्यत्वात् ' एतत् ' एतेन " वाजमर्वत्सु–" इति पाठेन पुंस्वेव वीर्यं स्थापितवान् भवति । उस्रियाहृदादिषु पयःक्रत्वादिस्थितेर्लोकप्रसिद्धिः ' पयो हीदम् ' ' हृत्सु ह्ययं क्रतुः–'इत्यादि ' हि– ' कारेण द्योत्यते ॥ ७ ॥

अथ यदि द्वे इति । दीक्षायां ' यदि ' ' द्वे कृष्णाजिने ' स्वीकृते तयोः ' एकं ' कृष्णाजिनम् ' ' प्रतिनाहभाजनम् ' भवति । नद्धस्य पुरोदेशप्रसारितो ध्वजः प्रतिनाहः; तद्भाजनम् तत्स्थानीयं भवतीत्यर्थः । द्वितीयालाभे उपायमाह–यद्यु एकं भवति, कृष्णाजिनग्रीवा एवावकृत्येति ॥

प्रतिनाहमन्त्रः–सूर्यस्य चक्षुरिति । तथा च सूत्रम्–" कृष्णाजिनं पुरस्तादासजति सूर्यस्य चक्षुरित्यासनयो-

१–प्रतिनाह इति ह्रस्वान्तः सायणसम्मतः ।

( त्यु ) उद्धते प्रऽउग्ये फलके भवतः । (स्त) तदन्तरेण तिष्ठन्त्सुब्रह्मण्यः प्राजति श्रेयान्वाऽएषोऽभ्यारोहाद्भवति को ह्येतमर्हत्यभ्यारोढुं तस्मादन्तरेण तिष्ठन्प्राजति ॥ ९ ॥

पलाशशाखया प्राजति । यत्र वै गायत्री सोममच्छापतत्तदस्याऽआहरन्त्याऽ अपादस्ताभ्यायत्य पर्णं प्रचिच्छेद गायत्र्यै वा सोमस्य वा राज्ञस्तत्पतित्वा पर्णोऽभवत्तस्मात्पर्णो नाम तद्यदेवात्र सोमस्य न्यक्तं तदिहाप्यसदिति तस्मात्पलाशशाखया प्राजति ॥ १० ॥

---

उद्धते प्रऽउग्ये फलके भवतः । तदन्तरेण तिष्ठन्त्सुब्रह्मण्यः प्राजति । श्रेयान्वाऽ एषोऽभ्यारोहाद्भवति । को ह्येतमर्हत्यभ्यारोढुम् । तस्मादन्तरेण तिष्ठन्प्राजति ॥ ९ ॥

पलाशशाखया प्राजति । यत्र वै गायत्री सोममच्छापतत्—तदस्याऽआहरन्त्याऽअपादस्ताभ्यायत्य पर्णं प्रचिच्छेद । गायत्र्यै वा सोमस्य वा राज्ञः । तत्पतित्वा पर्णोऽभवत् । तस्मात्पर्णो नाम । तद्यदेवात्र सोमस्य न्यक्तम्, तदिहाप्यसदिति । तस्मात्पलाशशाखया प्राजति ॥ १० ॥

---

रन्यतरत्, एकं चेद् ग्रीवा अवक्षत्य "—( का. श्रौ. सू. ७ । २३२ । २३३ ) इति । मन्त्रस्यायमर्थः । हे कृष्णाजिन ! त्वं 'सूर्यस्य' 'चक्षुः' चक्षुःस्थानीयम्, प्रकाशनस्थानमित्यर्थः । उपरि हि सूर्यः प्रकाशते, अतस्त्वमनसि ऊर्ध्वदिशमारोहेत्यर्थः । तथा 'अग्नेः' देवस्याक्ष्णः सम्बन्धि 'कनीनकम्' अक्षिमध्यगतः कृष्णप्रदेशः कनीनिका ताम् 'आरोह' । 'अग्नेरक्ष्णः' कनीनिकास्थानमन्तरिक्षम्; नीलं नभ इति प्रसिद्धेः । अनस उपर्यारोहे सति एतदुभयारोहणं सम्पद्यते । 'यत्र' यस्मिन्नारोहे सति 'एतशेभिः' अश्वैः 'ईयसे' गच्छसि 'विपश्चिता' मेधाविना सोमेन सह 'भ्राजमानः' दीप्यमानः सन् ॥

एतन्मन्त्रपाठं प्रशंसति—**सूर्यमेवैतत्पुरस्तादिति** । मन्त्रे 'सूर्यस्य चक्षुः' इत्यभिधानेन 'सूर्यमेव' सोमस्य 'पुरस्तात्' कृतवान् भवति । ततश्च किमित्याह—**सूर्यः पुरस्तान्नाष्ट्रेति** । 'नाष्ट्रा' नाष्ट्राणि यज्ञनाशकानि 'रक्षांसि' हिंसन् पुरो गच्छति तस्मिन् सति 'अभयेन' नाशकरहितेन मार्गेण सोमं 'परिवहन्ति' ॥ ८ ॥

**उद्धते प्रउग्ये फलके भवत इति** । 'प्रउग्ये फलके' प्रउगसम्बन्धिफलके 'उद्धते' प्रउगादप्युन्नते, चुबुकप्रमाणे 'भवतः' । अत एव सूत्रकारः तस्मिन्नेव प्रदेशे फलकयोरौद्धत्यं सूत्रयामास—"प्रयुगाच्चोद्धते फलके भवतः—"( का. श्रौ. सू. ७ । २२८ ) इति । **तदन्तरेणेति** । 'तत्' तयोः फलकयोः 'अन्तरेण' मध्ये 'तिष्ठन् सुब्रह्मण्यः' । भूमिष्ठ एव सन् 'प्राजति' प्रेरयति अनड्वाहौ । अधः स्थितिं प्रशंसति—**श्रेयान्वेति** । करितुरगाद्यारूढस्य प्रशस्तत्वं लोकसिद्धम्, अतस्तदभ्यारोहात् सोमः 'श्रेयान् भवति' अतस्तदधिष्ठितं शकटम् 'अभ्यारोढुं कः अर्हति' न कोऽपीति ॥ ९ ॥

**पलाशशाखया प्राजतीति** । भूयिष्ठास्वेव प्राजनयोग्यासु सतीष्वप्यन्यशाखासु पलाशशाखायाः कोऽतिशय इति जिज्ञासायां तस्याः सोमस्य सम्बन्धं दर्शयति—**यत्र वै गायत्रीति** । व्याख्यातमिदम् ( श. प. ब्रा. १ । ७ ।

---

१—ईषांतरे भूमिष्ठः सुब्रह्मण्यः पलाशशाखया प्राजति । का. श्रौ. सू. ७ । २३६ ।

( त्यु ) अथानड्वाहावाजति । तौ यदि कृष्णौ स्यातामन्यतरो वा कृष्णस्तत्र विद्याद्वर्षिष्यत्यैषमः पर्जन्यो वृष्टिमान्भविष्यतीत्येतदु विज्ञानम् ॥ ११ ॥

( मु ) अथ युनक्ति । ( त्त्यु ) उस्रावेतं धूर्षाहावित्युस्रौ हि भवतो धूर्षाहाविति धूर्वाहौ हि भवतो युज्येथामनश्रू३इति युज्येते ह्यनश्रू३इत्युनार्ताविति तदवीरहणावित्युपापकृताविति तद्ब्रह्मचोदनाविति ब्रह्मचोदनौ हि भवतः स्वस्ति यजमानस्य गृहान्गच्छतमिति यथैनावन्तरा नाष्ट्रा रक्षाᳬंसि न हिᳬंस्युरेवमेतदाह ॥ १२ ॥

---

अथानड्वाहावाजति । तौ यदि कृष्णौ स्याताम्—अन्यतरो वा कृष्णः । तत्र विद्याद्वर्षिष्यत्यैषमः पर्जन्यः । वृष्टिमान्भविष्यतीत्येतदु विज्ञानम् ॥ ११ ॥

अथ युनक्ति—" उस्रावेतं धूर्षाहौ "—( वा. सं. ४।३३ ) इति । उस्रौ हि भवतो धूर्षाहाविति । धूर्षाहौ हि भवतः । " युज्येथामनश्रू "—( वा. सं. ४।३३ ) इति । युज्येते ह्यनश्रू३इत्यनार्ताविति तत् । " अवीरहणौ "—( वा. सं. ४।३३ ) इति । अपापकृताविति तद् । " ब्रह्मचोदनौ "—( वा. सं. ४।३३ ) इति । ब्रह्मचोदनौ हि भवतः । " स्वस्ति यजमानस्य गृहान् गच्छतम् "—( वा. सं. ४।३३ ) इति । यथैनावन्तरा नाष्ट्रा रक्षांसि न हिंस्युरेवमेतदाह ॥ १२ ॥

---

१ । १ । ) ' यदेव ' ' सोमस्य ' अङ्गम् ' न्यक्तम ' अवाङ्निपतितमासीत् ' तत् ' अङ्गम् ' इहापि ' अस्मिन् सोमे एव ' असद् ' भवेदिति पलाशशाखया प्राजनस्याभिप्रायः ॥ १० ॥

अनडुहोर्वर्णविशेषमभिधातुं पुनरनुवदति—अथानड्वाहाविति । ' आजति ' युगवहनाय प्रेरयति । उभयोरन्यतरस्य वा यदि कृष्णत्वं लभ्येत, ' तत्र ' पर्जन्यवर्णसाम्यात् अनडुत्कृष्णत्वेन निमित्तेन ' ऐषमः ' अस्मिन् संवत्सरे ' पर्जन्यः ' बहुवृष्टिप्रदो भवति । ' इति एतत् उ विज्ञानम् ' वृष्टेः परिज्ञानम, तदुपाय इत्यर्थः ॥ ११ ॥

इदानीं समन्त्रकमुस्रयोजनं विधत्ते—अथ युनक्त्युस्रावेतमिति[1] । मन्त्रस्यायमर्थः । हे ' उस्रौ ' अनड्वाहौ युवां वहनाय ' एतम् ' प्रत्यागच्छतम् । कीदृशौ युवाम् ? ' धूर्षाहौ धुरं सोढुं समर्थौ । तादृशौ युवाम् ' युज्येथाम् ' स्वयमेव युक्तौ भवतम् । तौ विशिष्येते—' अनश्रू ' अश्रुरहितौ, अव्यथावित्यर्थः । ' अवीरहणौ ' शृङ्गाग्रेण वीराणां पुत्रादीनामहन्तारौ ' ब्रह्मचोदनौ ' ब्रह्मणा मन्त्रेण प्रेरितावित्यर्थः । एवमनड्वाहौ प्रशस्येदानीं प्रयोजनमाह—स्वस्ति यजमानस्येति । ' स्वस्ति ' अविनाशेन यजमानस्य गृहान् गच्छतम् ॥

अमुं मन्त्रं विभज्य व्याचष्टे—उस्रौ हि भवत इत्यादिना । उस्राविणावनयोर्भोगावित्युस्रौ । एषा प्रसिद्धिः ' हि ' शब्देन द्योत्यते । धूर्षाहावित्यस्य तात्पर्यं—धूर्वाहाविति । आर्तेष्वश्रुपातस्य दृष्टत्वात् ' अनश्रु ' इत्य-

---

१—अनड्वाहौ युनक्त्युस्रावेतमिति युगपत्तद्वचनत्वात् । का० श्रौ० सू० ७—२३४ । भेदे मंत्रावृत्तिः सान्निपातित्वात् । ७—२३५ । इति सूत्रेण भेदेनानडुहोर्योजनमित्येव सिद्धान्तः । न युगपदिति । कर्कभाष्ये श्रुतिरप्युदाहृता । दाक्षिणा युग्यमेवाग्रे युनक्त्यथ सव्यायुग्यमिति । काण्वीयश्रुतिरेवमेव । स दक्षिणमेवाग्रे युनक्ति । अपसव्यमिति । एतच्छ्रुतेः काण्वानां तूष्णींयोजनम् । तावभिमंत्रयते उस्रावेतं धूर्वाहाविति काण्वश्रुत्या उस्रावेतमिति मंत्रेणानडुहोरभिमंत्रणमिति काण्वानां विशेषस्त्वत्र ।

( ड्रा ) अथ पश्चात्परिक्रम्य । ( म्या ) अपालम्बमभिपद्याह सोमाय क्रीतायानुब्रूहीति सोमाय पर्युह्यमाणायेति वाऽतो यतरथा कामयेत ॥ १३ ॥ ( त्रा ) अथ वाचयति । भद्रो मेऽसि प्रच्यवस्व भुवस्पतऽइति भद्रो ह्यस्यैष भवति तस्मान्नान्यमाद्रियतेऽप्यस्य राजानः सभागा ऽआगच्छन्ति पूर्वौ राज्ञोऽभिवदति भद्रो हि भवति तस्मादाह भद्रो मेऽसीति प्रच्यवस्व भुवस्पतऽइति भुवनानाꣳ ह्येष पतिर्विश्वान्यभि धामानीत्यङ्गानि वै विश्वानि धामान्यङ्गान्येवैतदभ्याह मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो विदन्निति मथैनमन्तरा नाष्ट्रा रक्षाꣳसि न विन्देयुरेवमेतदाह ॥ १४ ॥

---

अथ पश्चात्परिक्रम्य अपालम्बमभिपद्याह—सोमाय क्रीतायानुब्रूहीति सोमाय पर्युह्यमाणायेति वा । अतो यतरथा कामयेत ॥ १३ ॥

अथ वाचयति—"भद्रो मेऽसि प्रच्यवस्व भुवस्पते"—( वा. सं. ४।३४ ) इति । भद्रो ह्यस्यैष भवति । तस्मान्नान्यमाद्रियते अप्यस्य राजानः सभागा आगच्छन्ति—पूर्वो राज्ञोऽभिवदति । भद्रो हि भवति । तस्मादाह—भद्रो मेऽसीति । प्रच्यवस्व भुवस्पतऽइति । भुवनानां ह्येष पतिः । "विश्वान्यभि धामानि"—( वा. सं. ४। ३४ ) इति । अङ्गानि वै विश्वानि धामान्यङ्गान्येवैतदभ्याह—" मा

---

स्यानार्ताविति व्याख्यानम् । वीरहत्यायाः पापसाधनत्वात् ' अपापकृतौ '—इति तात्पर्याभिधानम् । ' ब्रह्मणा ' " उस्रावेतम् " इति मन्त्रेण इदानीं चोद्यमानत्वाद् ब्रह्मचोदनाप्रसिद्धिरित्यभिप्रेत्य " ब्रह्मचोदनौ हि भवतः " इत्युक्तम् । "स्वस्ति यजमानस्य" इत्यत्र स्वस्तिशब्दाभिप्रायमाह—यथैनावन्तरेति । ' यथा ' ' एनौ ' अनड्वाहौ ' अन्तरा ' मध्ये मार्गे ' नाष्ट्राः ' हिंस्राः न हिंस्युः तथा भवेदिति स्वस्तिवाचनमन्त्रं कृतवानित्यर्थः ॥ १२ ॥

**अथ पश्चात् परिक्रम्येति** । शकटस्य पश्चाद्भागं गत्वा । अपकृष्य आलम्ब्यत इति ' अपालम्बः ' शकटस्य पश्चाद्भागः । तमालम्ब्य ब्रूयात्—" सोमाय क्रीताय "—" सोमाय पर्युह्यमाणाय "—इति वा । अनुवचनविकल्पस्यायमभिप्रायः—सोमे क्रीते सति अनन्तरं यत्कर्तव्यम्, तत्परिवहणमेव, तच्च क्रयानन्तरभावीत्यन्यतरोपादानेऽन्यतरस्यार्थात्सिद्धिरिति । ऐतरेयके तु समुच्चयोपदेश उक्तः—"सोमाय क्रीताय प्रोह्यमाणायानुब्रूहीत्याहाध्वर्युरिति " ( ऐ. ब्रा. १ । ३ । २ ) । अयं विकल्पो न व्यवस्थितः, किन्तु ऐच्छिक इत्याह—**अतो यतरथा कामयेतेति** । ' अतः ' अनयोः पक्षयोर्मध्ये । अत्र कात्यायनः—" पश्चात्परीत्यापालम्बं गृहीत्वा सोमाय क्रीतायानुवाचयति पर्युह्यमाणायेति वा " ( का. श्रौ. सू. ७ । २३७ ) इति ॥ १३ ॥

**अथ वाचयतीति** । अध्वर्युर्यजमानम् " भद्रो मेऽसि " इत्यादिकमित्यर्थः । मन्त्रस्यायमर्थः—हे सोम ! त्वं भद्रोऽसि कल्याणकरोऽसि स्तुत्यो वा । हे ' भुवस्पते ' भुवनानां पालक ! त्वं ' प्रच्यवस्व ' प्रगच्छ ।

---

१—अपालंबशब्देन पश्चादाबद्धा रज्जुरभिधीयते । ययाऽवतरेऽनः प्रवर्त्यमानं विधार्यते इति कर्कः पश्चाद्भागेन लंबमानं काष्ठमपालम्बशब्देनोच्यते । येनोर्ध्वप्रदेशे प्रचलतः शकटस्य पर्यावर्तनं वार्यते इति हरिस्वामिनः । २—दीक्षितश्चान्वारभते । का. श्रौ. सू. ७। २३८। त्रिरुक्तायां प्राङ्मुखत्वादाक्षिणाव्वर्त्य शालां गच्छंति । ७ । २३९ । भद्रो म इति वाचयति । ७ । २४० ।

श्येनो भूत्वा परापतेति व्वयऽ एवैनमेतद्भूतं प्रपातयति यद्वाऽउग्रं तन्नाष्ट्रा रक्षाᳪंसि नान्ववयन्त्येतद्वै व्वयसामोजिष्ठं बलिष्ठं यच्छ्येनस्तमेवैतद्भूतं प्रपातयति यदाह श्येनो भूत्वा परापतेति ॥ १९ ॥

( त्यु ) अथ शरीरमेवान्ववहन्ति । यजमानस्य गृहान्गच्छ तन्नौ सᳪंस्कृतमिति नात्र तिरोहितमिवास्ति ॥ १६ ॥

---

त्वा परिपरिणो विदन, मा त्वा परिपन्थिनो विदन, मा त्वा वृका अघायवो विदन्"–( वा. सं. ४ । ३४ ) इति । यथैनमन्तरा नाष्ट्रा रक्षांसि न विन्देयुरेवमेतदाह ॥ १४ ॥

"श्येनो भूत्वा परापत ।"–( वा. सं. ४ । ३४ ) इति । वय एवैनमेतद्भूतं प्रपातयति । यद्वाऽउग्रं–तन्नाष्ट्रा रक्षांसि नान्वयन्ति । एतद्वै वयसामोजिष्ठं बलिष्ठं–यच्छ्येनः । तमेवैतद्भूतं प्रपातयति–यदाह श्येनो भूत्वा परापतेति ॥ १९ ॥

अथ शरीरमेवान्ववहन्ति । "यजमानस्य गृहान् गच्छ तन्नौ संस्कृतम् "–( वा. सं. ४ । ३४ ) इति । नात्र तिरोहितमिवास्ति ॥ १६ ॥

---

'विश्वानि' 'अभि' 'धामानि' स्थानान्यभिलक्ष्य 'त्वा' त्वां 'परिपरिणो मा विदन्' उपर्यवस्थातारो मा विदन्' । तथा त्वां 'परिपन्थिनः' प्रतिकूलाः शत्रवः 'मा विदन्' । "छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि"–( पा. सू. ५ । २ । ८९ ) इति 'इनि'–प्रत्ययान्तो निपातितः । तथा 'अघायवः' अघमिच्छन्तो 'वृकाः' विकर्तनशीलाः 'मा विदन्' मा जानन् । किञ्च 'श्येनः' शंसनीयगमनः पक्षी स 'भूत्वा' स इव बलिष्ठोत्पतनशीलः सन् 'परापत' उद्गच्छ, यजमानस्य गृहान् गच्छ, 'तत्' तत्र 'नौ' आवयोः तव च मम च 'संस्कृतम्' सर्वोपस्करणसंयुक्तं स्थानं विद्यते, तद् गच्छेति ॥

"भद्रो मेऽसि"–इत्यत्र भद्रशब्दस्य तात्पर्यमाह–**भद्रो ह्यस्यैष भवतीत्यादिना** । 'अस्य' यजमानस्य 'एषः' सोमः यस्माद् 'भद्रो भवति' तस्मान्मन्त्रभाग एवमाह । यतोऽसावेव यजमानस्य भद्रकारी 'तस्मात्' 'अन्यं' सोमव्यतिरिक्तम् 'अयं' यजमानः 'न आद्रियते' आदरं न करोति । अन्यशब्दार्थं विशिनष्टि–**अप्यस्य राजान इति** । 'सभागाः' इत्यनेन राज्ञामनतिक्रमणीयत्वमुक्तं भवति । अपिः सम्भावनायाम् । "मधुपर्कमाहरेद्राज्ञे चाचार्यर्त्विक्स्नातकप्रियातिथिश्वशुरमातुलानाञ्च" इति सम्भवनीयानां मध्ये राज्ञां प्रथमतो निर्देशेन श्रैष्ठ्यापगमादितरपूज्योपलक्षकत्वेन 'अप्यस्य राजानः' इति निर्देश इति मन्तव्यम् । राज्ञ आगमनात् स्वयमप्रह्व एव सन् 'पूर्वः' 'तेभ्यः' प्रागेव 'अभिवदति' वाग्व्यवहारं करोति । किमिति–**भद्रो हि भवतीति** । तस्माद् 'भद्रो मेऽसीति' युक्तम् । भुवस्पत इत्यत्र 'भू' शब्देन सर्वाण्यपि भुवनान्युपलक्षितानीति व्याचष्टे–**भुवनानां ह्येष पतिरिति** । धामशब्दतात्पर्यमाह–**अङ्गानि वै विश्वानि धामानीति** । अत्राङ्गानि ग्रहचमसादीनि; क्रयप्रदेशादागमनस्य तदर्थत्वात् । परिपरि–परिपन्थिवृकशब्दानामवयवार्थभेदे सत्यपि पर्यवसितार्थ एष एवेत्याह–**यथैनमन्तरा नाष्ट्रा रक्षांसि न विन्देयुरिति** ॥ १४ ॥

**श्येनो भूत्वेति** । मन्त्रभागपाठस्य तात्पर्यमाह–**वय एवैनमेतद् भूतं प्रपातयतीति** । एतेन पाठेन पक्षिरूपमेव सन्तं प्रापितवान् भवति । 'रक्षांसि' 'नान्ववयन्ति' हन्तुं नानुगच्छन्ति । स्पष्टमन्यत् ॥ १९ ॥

**अथ शरीरमेवान्ववहन्तीति** । यदि प्रमादात् सोमं रक्ष-आदिर्हन्यात् तदानीं श्येनो भूत्वेति मन्त्रसामर्थ्येन

( स्त्यु ) अथ सुब्रह्मण्यामाह्वयति । युथा येभ्यः पक्ष्यन्त्स्यात्तान्ब्रूयादित्यहे वः पक्तास्मीत्येवमेवैतद्देवेभ्यो यज्ञं निवेदयति सुब्रह्मण्यो ३ ऽम् सुब्रह्मण्यो ३ मिति ब्रह्म हि देवान्प्रच्यावयति त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञः ॥ १७ ॥

( ऽ ) इन्द्रागच्छेति । ( त्री ) इन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रागच्छेति हरिव आगच्छ मेधातिथेर्मेषवृषणश्वस्य मेने ॥ गौरावस्कन्दिन्नहल्यायै जारेति तद्यान्येवास्य चरणानि तैरेवैनमेतत्प्रमुमोदयिषति ॥ १८ ॥

---

अथ सुब्रह्मण्यामाह्वयति । यथा येभ्यः पक्ष्यन्त्स्यात्–तान्ब्रूयाद्–इत्यहे वः पक्तास्मीत्येवमेवैतद्देवेभ्यो यज्ञं निवेदयति । सुब्रह्मण्यो ३ म्, सुब्रह्मण्यो ३ म्–इति । ब्रह्म हि देवान्प्रच्यावयति । त्रिष्कृत्व आह । त्रिवृद्धि यज्ञः ॥ १७ ॥

" इन्द्रागच्छेति "–इन्द्रो वै यज्ञस्य देवता । तस्मादाह–इन्द्रागच्छेति । " हरिव आगच्छ

---

श्येनीभावादुपादेयस्य सारांशस्यैवध्याभावात् हन्ता श्येनशरीरमेवानुगत्य हन्ति नात्मानमित्यर्थः । ' यजमानस्य गृहान् गच्छ तन्नौ संस्कृतम् ' इति मन्त्रभागस्यार्थः स्पष्ट इत्याह–नात्र तिरोहितमिवास्तीति ॥ १६ ॥

अथ सुब्रह्मण्यामित्यादि । ब्रह्म देवानामाह्वानसाधनो मन्त्रः, शोभनं ब्रह्म 'सुब्रह्म', तदर्हतीति 'सुब्रह्मण्या' काचन देवता तां " सुब्रह्मण्यो३म् " इत्यादिनिगदेनाह्वयेत् । तत्प्रकारः सूत्रे दर्शितः–" सुब्रह्मण्यो ३ मिति त्रिरुक्त्वा सकृन्निगदम् "–( का. श्रौ. सू. ७ । २४१ ) इति । निगदपदानां ब्राह्मणेनैव व्याख्यानात् नास्माभिर्व्याख्यायते ॥

आह्वानं प्रशंसति–यथा येभ्य इति । ' यथा ' लोके ' येभ्यः ' अर्थाय ' पक्ष्यन् ' पाकं कर्तुमिच्छन् भवति ' तान् ' भोक्तॄन् ' ब्रूयात् ' ' इत्यहे व पक्तास्मीति' । इत्यह इति पाकदिवसो निर्दिश्यते; इतो द्वितीयेऽहनि तृतीयेऽहनीति रूपेणेत्यर्थः ॥

ननु मन्त्रेणाह्वानेऽपि कथमिन्द्र आगच्छतीत्यत आह–ब्रह्म देवान् प्रच्यावयतीति । ' हि '–शब्दो " वायवायाहि दर्शत "–( ऋ. सं. १ । २ । १ ) इत्येवमादिमन्त्रगतां देवताप्रच्यावनप्रसिद्धिं द्योतयति । सुब्रह्मण्यपदस्य पाठसिद्धां त्रिरावृत्तिं प्रशंसति–त्रिष्कृत्व आहेत्यादि । यज्ञस्य त्र्यावृत्तिरूपत्वं सवनत्रयापेक्षयेति द्रष्टव्यम् ( ऐ. ब्रा. ६ । २ । १ ) ॥ १७ ॥

इन्द्रागच्छेतीति । इन्द्रो वै यज्ञस्य देवतेत्यादि । स्पष्टम् । "हरिव आगच्छ"–इत्यादि "अहल्यायै जार" इत्यन्तानां पञ्चानां वाक्यानां पृथक्–पृथगर्थे सम्भवत्यपि तात्पर्यस्यैकत्वमभिप्रेत्य सङ्गृह्य तात्पर्यमाह–हरिव

---

१–' सारांशस्य बाधाभावात् '–इ० क० पा० । २–सुब्रह्मण्यां चाह्वयति सुब्रह्मण्यो ३म् सुब्रह्मण्यो ३ मिति त्रिरुक्त्वा–सकृन्निगदं यावदहे सुत्या तथाह । का. श्रौ. सू. ७।२४१। ३–अहल्यायै जार इति–मीमांसादर्शने तु–एतत्कथायाः कविकल्पनामूलत्वमेव सिद्धांतितम् । तथापि–तंत्रवार्तिके विशेष उक्तः । जै. सू. ९–१–४२–४४ । अधिकरणे । सवितैवाहनि लीयमानतया रात्रेरहल्याशब्दवाच्यायाः क्षयात्मकजरणहेतुत्वात् जीर्यत्यस्मादनेन वोदिते न वेत्यहल्याजार उच्यते । न परस्त्रीव्यवहारात्–इति ॥

कौशिक ब्राह्मण गौतम ब्रुवाणेति । शश्वद्धैतदारुणिनाऽधुनोपज्ञातं यद्गौतम ब्रुवणेति स यदि कामयेत ब्रूयादेतद्यद्यु कामयेतापि नाद्रियेतेत्यहे सुत्यामिति यावदहे सुत्या भवति ॥ १९ ॥

देवा ब्रह्माण आगच्छतेति । तद्देवांश्च ब्राह्मणांश्चाहैतैर्ह्यत्रोभयैरर्थो भवति यद्देवैश्च ब्राह्मणैश्च ॥ २० ॥

( श्रा ) अथ प्रतिप्रस्थाता । ( ताग्रे ) अग्रेण शालामग्नीषोमीयेण पशुना प्रत्युपतिष्ठतेऽग्नीषोमौ वाऽएतमन्तर्जम्भऽआदधाते यो दीक्षतऽआग्नावैष्णवᳪं ह्यदो दीक्षणीयᳪं हविर्भवति यो वै विष्णुः सोमः स हविर्वाऽएष देवानां भवति यो दीक्षते तदेनमन्तर्जम्भऽआदधाते तत्पशुनाऽऽत्मानं निष्क्रीणीते ॥ २१ ॥

---

मेधातिथेर्मेषवृषणश्वस्य मेने । गौरावस्कन्दिन् अहल्यायै जारेति"—तद् यान्येवास्य चरणानि—तैरेनमेतत्प्रमुमोदयिषति ॥ १८ ॥

" कौशिक ब्राह्मण गौतम ब्रुवाणेति "—शश्वद्धैतदारुणिनाऽधुनोपज्ञातम्—यद्गौतम ब्रुवाणेति । स यदि कामयेत—ब्रूयादेतद् । यद्यु कामयेत—अपि नाद्रियेत—"इत्यहे सुत्यामिति"—यावदहे सुत्या भवति ॥ १९ ॥

" देवा ब्रह्माण आगच्छतेति "—तद् देवांश्च ब्राह्मणांश्चाह । एतैर्ह्यत्रोभयैरर्थो भवति यद्देवैश्च ब्राह्मणैश्च ॥ २० ॥

अथ प्रतिप्रस्थाता—अग्रेण शालामग्नीषोमीयेण पशुना प्रत्युपतिष्ठते । अग्नीषोमौ वा एतमन्तर्जम्भऽआदधाते—यो दीक्षते । आग्नावैष्णवं ह्यदो दीक्षणीयं हविर्भवति । यो वै विष्णुः । सोमः सः । हविर्वाऽएष देवानां भवति—यो दीक्षते । तदेनमन्तर्जम्भऽआदधाते—तत्पशुनाऽऽत्मानं निष्क्रीणीते २१

---

आगच्छ मेधातिथेर्मेषेत्यादिना । तद्यान्येवास्य चरणानि तैरेवैनमेतत् प्रमुमोदयिषतीति । 'तत्' तथा सति 'अस्य' इन्द्रस्य 'यान्येव' चरणानि चरित्राणि पूर्वपक्षापरपक्षलक्षणाभ्याममभिमतस्य वस्तुनो हरणं मेधातिथेः काण्वायनेर्मेषो भूत्वा हरणम्—इत्येवमादीनि; 'तैरेव' 'एनम्' प्रमोदयितुमिच्छति ॥

हरिवआदीनि पदानि सामब्राह्मणे व्याख्यातानि ( सा. ब्रा. १ । १ । २ ) ॥ १८ ॥ १९ ॥

देवा ब्रह्माण इति । अनयोस्तात्पर्यमाह—तद्देवांश्च ब्राह्मणांश्चाहेति । 'अत्र' अस्मिन् यज्ञे 'उभयैः' द्विविधैः 'देवैर्ब्राह्मणैश्च' यष्टव्यत्वेन याजकत्वेन च 'अर्थः' प्रयोजनं यज्ञसिद्धिः यजमानस्य 'भवति' तानेवैतान् 'देवाः ब्राह्मणाः'—इति पदद्वयमाह—नेतरानित्यर्थः ॥ २० ॥

अथ प्रतिप्रस्थातेति । 'अग्नीषोमीयेण पशुना प्रत्युपतिष्ठते प्रतिप्रस्थाता' शालायाः पुरोदेशे अग्नीषोमीयं पशुमादाय गच्छतः सोमस्याभिमुखं स्थापयेदित्यर्थः । अग्नीषोमीयस्यावस्थितिं यजमानस्य आत्मनिष्क्रय-

---

१—शालां पूर्वेण प्रतिप्रस्थाताऽग्नीषोमीयं पशुमादाय तिष्ठति कृष्णसारंगं मेध्यमभावे लोहितसारंगम् । का. श्रौ. सू., ७ । २४२ ।

तद्धैके । ( क१ ) आहवनीयादुल्मुकमाहरन्त्ययमग्निरयꣳ सोमस्ताभ्याꣳ सहसञ्ज्यां निष्क्रेष्यामहऽइति व्वदन्तस्तदु तथा न कुर्याद्यत्र वाऽएतौ क्व च तत्सहैव ॥ २२ ॥

स वै द्विरूपो भवति । द्विदेवत्यो हि भवति देवतयोरसमदे कृष्णसारंगः स्यादित्याहुरेतद्ध्येनयो रूपतममिवेति यदि. कृष्णसारङ्गं न विन्देदथोऽअपि लोहितसारङ्गः स्यात् ॥ २३ ॥

( त ) तस्मिन्वाचयति । नमो मित्रस्य व्वरुणस्य चक्षसे महो देवाय

---

तद्धैके आहवनीयादुल्मुकमाहरन्ति—अयमग्निः, अयं सोमः । ताभ्यां सहसञ्ज्यां निष्क्रेष्यामहे—इति वदन्तः । तदु तथा न कुर्यात् । यत्र वाऽएतौ क्वच—तत्सहैव ॥ २२ ॥

स वै द्विरूपो भवति । द्विदेवत्यो हि भवति । देवतयोरसमदे । कृष्णसारंगः । स्यादित्याहुः । तद्ध्येनयो रूपतममिवेति । यदि कृष्णसारङ्गं न विन्देदथोऽअपि लोहितसारंगः स्यात् ॥ २३ ॥

तस्मिन्वाचयति—" नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतं सपर्यत ॥ दूरे—

---

रूपेण प्रशंसति—अग्नीषोमौ वा एतमिति । 'एतम्' दीक्षितम् 'अन्तर्जम्भे' अन्नखादनस्थानं जम्भः, दन्तपङ्क्त्योरन्तरालं इत्यर्थः । एतदेवोपपादयति—आग्नावैष्णवं ह्यद इति । यस्मादस्य यजमानस्य 'अदः' विप्रकृष्टे काले दीक्षणीयेष्टौ 'हविः' अभूत् । अस्तु किं तत इत्यत आह—यो वै विष्णुरिति । तत्र विष्णुरिति योऽस्ति 'स सोमः', सोमस्य यागनिर्वर्तकत्वेन यज्ञत्वाद् ; " यज्ञो वै विष्णुः—" ( श. प. ब्रा. १ । १ । २ । १३ ) इति श्रुतेः । यज्ञद्वारा विष्णोः सोमत्वम् 'दीक्षा' संस्कारः दीक्षणीयेष्ट्या संस्कृतत्वादेव दीक्षणीयेष्टिदेवतयोर्हविश्च 'एनं' जम्भे स्थितम् । अतो जम्भाद् विमोक्षाय अग्नीषोमीयं दत्त्वा आत्मनिष्क्रयणं कृतवान् भवतीत्यर्थः ॥ २१ ॥

तद्धैक इति । 'अयम्' उल्मुकरूपः 'अग्निः', 'अयं सोमः'; । 'ताभ्यां' सकाशादात्मानं 'निष्क्रेष्यामहे' इत्युल्मुकस्याहर्तुरभिप्रायः । अमुं पक्षं निराकरोति—तदु तथा नेति । तर्हि कथं सहभाव उपपद्यत इति, तत्राह—यत्र वा एतौ क च तत् सहैवेति । 'एतौ' अग्नीषोमौ 'यत्र क्वच' स्थाने सह वर्तेते 'तत्' तादृग्रूपा स्थितिरेवात्र सहभाव एवेत्यर्थः । एवकारेण संयोजना व्युदस्यते ॥ २२ ॥

स वै द्विरूपो भवतीति' । 'सः' अग्नीषोमीयः पशुः । द्वैरूप्ये कारणाभिधानम्—द्विदेवत्यो हीति । द्वैरूप्यसिद्धयेऽपेक्षितौ वर्णावाह—कृष्णसारङ्गः स्यादित्याहुरिति । 'सारङ्गः' शबलवर्णः । 'एतत्' कृष्णत्वं शबलत्वं च 'एनयोः' अग्नीषोमयोः 'रूपतममिव' अत्यन्तमभिमतं रूपमित्यर्थः । आग्नेयः कृष्णग्रीवः "–( वा. सं. २४ । १; ४, ६, ९, ४ । २८–९८ ) इत्यादौ अग्नेः कार्ष्ण्यसम्बन्धश्रवणात् तदेव तदुचितं रूपम्, सारङ्गवर्णस्य सोमयोग्यत्वमपि श्राद्धावल्यां द्रष्टव्यम् । तदलाभेऽपि वा 'लोहितसारङ्गः स्यात्' लोहितस्याग्निवर्णसाम्यं प्रसिद्धम् ॥ २३ ॥

तस्मिन् वाचयतीति । 'तस्मिन्' अजे, आगते इति शेषः । नमो मित्रस्येति । 'नमो मित्रस्येत्येनमालभ्य वाचयति " इति कात्यायनः ( का. श्रौ. सू. ७ । २४३ ) ॥

---

१—आहवनीयाच्चोल्मुकमाहत्र्येके । का. श्रौ. सू. ७ । २४५ ।

तद्दतुꣳ सपर्यत । दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसतेति नम एवास्माऽएतत्करोति मित्रधेयमेवैनेनैतत्कुरुते ॥ २४ ॥

( तेऽथा ) अथाध्वर्युराराहेणं विमुञ्चति । वरुणस्योत्तम्भनमसीत्युपस्तम्भनेनोपस्तभ्नाति वरुणस्य स्कम्भसर्जनी स्थ इति शम्येऽउद्वृहति स यदाह वरुणस्य स्कम्भसर्जनी स्थ इति वरुण्यो ह्येषु ऽएतर्हि भवति यत्सोमः क्रीतः ॥ २५ ॥

( तोऽथ ) अथ चत्वारो राजासन्दीमाददते । द्वौ वाऽअस्मै मानुषाय राज्ञ ऽआददातेऽथैतां चत्वारो योऽस्य सक्रत्सर्वस्येष्टे ॥ २६ ॥

---

दृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शंसत "–( वा. सं. ४ । ३६ ) इति । नम एवास्माऽएतत्करोति । मित्रधेयमेवैनेनैतत्कुरुते ॥ २४ ॥

अथाध्वर्युराराेहणं विमुञ्चति–"वरुणस्योत्तम्भनमसि"–(वा.सं.४।३६) इति । उपस्तम्भनेनोपस्तभ्नाति । " वरुणस्य स्कम्भसर्जनी स्थः "–( वा.सं. ४ । ३६) इति । शम्ये उद्वृहति स यदाह–वरुणस्य स्कम्भसर्जनी स्थ इति । वरुण्यो ह्येष एतर्हि भवति–यत्सोमः क्रीतः ॥ २५ ॥

अथ चत्वारो राजासन्दीमाददते । द्वौ वाऽअस्मै मानुषाय राज्ञऽआददाते । अथैतां चत्वारो योऽस्य सकृत्सर्वस्येष्टे ॥ २६ ॥

---

मन्त्रस्यायमर्थः । ' मित्रस्य ' मितेस्त्राता मित्रः सूर्यः, वरुणस्तमो निवारकः सूर्यः, तस्य, तस्मै इत्यर्थः । ' नमः ' नमस्कारः प्रह्वीभावः, अस्तु । अथवा " मैत्रं वा अहर्वारुणी रात्रिः " ( तै. सं. २ कां. २ प्र. ६ अ. )–इति श्रुत्यन्तरादहरभिमानिदेवाय, रात्र्यभिमानिदेवाय सूर्याय नम इत्यर्थः । 'चक्षसे' सर्वस्य द्रष्ट्रे नमः । ' महो देवाय ' महते देवाय च नमः । स्वयं नत्वेतरेभ्योऽप्युपदिशति–हे प्राणिनः ! यूयमपि ' तत् ' प्रसिद्धम्, ऋतं सत्यभूतम् आदित्याख्यं वस्तु ' सपर्यत ' अर्चयत । ' दूरेदृशे ' दूरे दर्शनाय ॥ २४ ॥

अथाध्वर्युरिति । उपस्तम्भेनोपस्तभ्नातीति । उपस्तभ्यते प्रतिबध्यते इति ' उपस्तम्भः ' शकटाग्राधारकाष्ठम् । तेन ' उपस्तभ्नाति ' शकटाग्रम् । हे काष्ठ ! त्वं ' वरुणस्य ' उपनह्य स्थापितस्य सोमस्य ' उत्तम्भनमसि ' । शकटस्योत्तम्भकत्वाद् तद्द्वारा वरुणस्याप्युत्तम्भकत्वम् । " उदः स्थास्तम्भोः पूर्वस्य "–( पा. सू. ८ । ४ । ६१ ) इति सकारलोपः ॥

शम्ययोः समन्त्रकमुद्धरणं विधत्ते–वरुणस्य स्कम्भसर्जनी स्थ इति । ' वरुणस्य ' सोमस्य तदाधारभूतस्यानसोऽङ्गस्य यत् स्कम्भनम्, तस्य सर्जन्यौ स्रष्ट्र्यौ ' स्थः ' तादृश्यौ युवामुद्गृह्णामीत्यर्थः ॥

अमुं मन्त्रं व्याचष्टे–वरुण्यो ह्येष एतर्हीति । ' एतर्हि ' एतस्मिन् क्रीतावसरे सोमो ' वरुण्यः ' भवति । " तयोर्दार्हिलौ च च्छन्दसि "–( पा. सू. ५ । ३ । २० ) इति एतच्छब्दस्य र्हिल् ॥ २५ ॥

अथ चत्वारो राजासन्दीमाददत इति (का. श्रौ. सू. ७ । २४८) । चत्वारोऽत्राध्वर्युप्रतिप्रस्थात्रादयो-

---

१–' दूरे दर्शनीयम् '–इ. क. पा. । २–सर्मापेऽन उपस्थाप्योत्तंभनेनोपस्तभ्नाति वरुणस्योत्तंभनमिति । का. श्रौ. सू. ७।२४६ । ३–शम्ये चोद्वृहति वरुणस्य स्कंभसर्जनी स्थ इति । का. श्रौ. सू. ७ । २४७ । ४–औदुंबरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीं मूतामाहरन्ति चत्वारः । इति ।

( ष्ट१ ) औदुम्बरी भवति । ( त्यु ) अन्नं वाऽऊर्ग्गुदुम्बर ऊर्जोऽन्नाद्यस्यावरुद्ध्यै तुस्मादौदुम्बरी भवति ॥ २७ ॥

नाभिदघ्ना भवति । ( त्यु ) अत्र वाऽअन्नं प्रतितिष्ठत्युन्नᳲ सोमस्तुस्मान्नाभिदघ्ना भवत्युत्रोऽएव रेतस आशयो रेतः सोमस्तुस्मादुत्रदघ्ना भवति २८

तामभिमृशति । व्वरुणस्य ऽऋतसुदन्यसीत्युथ कृष्णाजिनमास्तृणाति व्वरुणस्यऽऋतसुदनमसीत्युथैनमासादयति व्वरुणस्यऽऋतसुदनमासी-

---

औदुम्बरी भवति । अन्नं वाऽऊर्क् । उदुम्बर ऊर्जः । अन्नाद्यस्यावरुद्ध्यै । तस्मादौदुम्बरी भवति ॥ २७ ॥

नाभिदघ्ना भवति । अत्र वाऽअन्नं प्रतितिष्ठति, अन्नं सोमः । तस्मान्नाभिदघ्ना भवति । अत्रोऽएव रेतस आशयः । रेतः सोमः । तस्मादत्रदघ्ना भवति ॥ २८ ॥

तामभिमृशति–" वरुणस्यऽऋतसदन्यसि "–( वा. सं. ४।३६ ) इति । अथ कृष्णाजिन-

---

ऽध्वर्युवर्ग्या एव । तथा चापस्तम्बः–" तां सर्वेऽध्वर्यवोऽग्रेण प्राग्वंशं राजन्योद्गृह्यमान उद्गृह्णन्ति " ( आप. श्रौ. सू. १० । २९ । ७ ) इति । व्यतिरेकप्रदर्शनमुखेन ऋत्विक्चतुष्टं प्रशंसति–द्वौ वा अस्मै मानुषाय राज्ञे आददाते इति । आन्दोलिकामित्यर्थः । ' यः ' ' अस्य ' प्रतीयमानस्य ' सर्वस्य ' अपि जगतः ' सकृत् ' उपायेनैव ' ईष्टे ' ईश्वरो भवति, ' अथ ' ' एताम् ' एतदीयामासन्दीं ' चत्वारः ' ' आददते '–इति पूर्वत्रान्वयः ॥ २६ ॥

आसन्द्या औदुम्बरीत्वं विधाय प्रशंसति–औदुम्बरी भवत्यन्नं वा ऊर्गुदुम्बर इति । " देवा इषमूर्जं व्यभजन्त तत उदुम्बरः समभवत् "–( ऐ. ब्रा. ५ । ४ । ९ ) इति श्रुत्यन्तरप्रसिद्धिर्वै-शब्देन द्योत्यते ॥

ननु इदम् " ऊर्जोऽन्नाद्यस्यावरुद्ध्यै "–इति उदुम्बरस्य फलविधानम्; कुतः ' अवरुद्ध्यै '–इति चतुर्थ्या फलत्वप्रतिभानात् । अत ऊर्जोऽवरोधलक्षणाय फलायौदुम्बरी कर्तव्येत्यर्थः । नैतदेवम् । नात्रौदुम्बरी भवतीति विधिरुपलभ्यते, वर्तमानव्यपदेशात्; अर्थवादेनैव स विधिरुन्नेयः; अतोऽत्र तस्यौदुम्बरत्वस्य विधातुमशक्यत्वात् कस्येदं फलं स्यात् । ननु स्तुतिश्च करोतु, फलमपि विदधात्विति मन्तव्यम्; तथा द्वैविध्ये वाक्यभेदापत्तेः । अत इदं केवलं स्तावकमिति सिद्धम् ॥ २७ ॥

नाभिदघ्ना भवतीति । नाभिप्रमाणा भवेत् । " प्रमाणे द्वयसज्–दघ्नञ्–मात्रचः "–( पा. सू. ५ । २ । ३७ ) इति दघ्नच्–प्रत्ययः । अत्र वा अन्नमिति । ' अत्र '–इति नाभिप्रदेशस्याभिनयः । अन्नस्य नाभिप्रतिष्ठितत्वे सोमस्य किमायातमित्यत आह–अन्नं सोम इति । प्रकारान्तरेण नाभिदघ्नत्वं प्रशंसति–अत्रो एव रेतस आशय इति । ' अत्रो एव ' अत्रैव च । ' अत्रदघ्ना ' नाभिदघ्नेत्यर्थः । अत्र कात्यायनः–" औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीमूतामाहरन्ति चत्वारः "–( का. श्रौ. सू. ७ । २४८ ) इति ॥ २८ ॥

तस्या अभिमर्शनं समन्त्रकं विधत्ते–तामभिमृशतीति । ' ताम् ' आसन्दीमित्यर्थः । वरुणस्य ऋत-

---

१–अभिमृशत्येनां वरुणस्य ऋतसदन्यसीति । का. श्रौ. सू. ७ । २४९ ।

डेति स यदाह वरुणस्यऽऋतसदनमासीदेति वरुण्यो ह्येष एतर्हि भवति ॥ २९ ॥

(त्यु) अथैनꣳ शालां प्रपादयति । स प्रपादयन्वाचयति या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यानिति गृहा वै दुर्या गृहान्नः शिवः शान्तोऽपापकृत्प्रचरेत्येवैतदाह ॥ ३० ॥

---

मास्तृणाति–" वरुणस्यऽऋतसदनमसि "–( वा. सं. ४ । ३७ ) इति । अथैनमासादयति– " वरुणस्यऽऋतसदनमासीद "–( वा. सं. ४ । ३६ ) इति । स यदाह–वरुणस्यऽऋतसदनमासीदेति । वरुण्यो ह्येष एतर्हि भवति ॥ २९ ॥

अथैनं शालां प्रपादयति । स प्रपादयन् वाचयति । " या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यान् "–( वा. सं. ४।३७ ) इति । गृहा वै दुर्याः । गृहान्नः शिवः शान्तोऽपापकृत्प्रचरेत्येवैतदाह ॥ ३० ॥

---

सदन्यसीतीति । हे आसन्दि ! त्वं ' वरुणस्य ' सोमस्य ' ऋतसदनम् ' ऋतमिति यज्ञनाम । " सत्यं वा यज्ञं वा " ( निरु. ४ । ३ । ३ ) इति यास्कः । यज्ञार्हं स्थानमसीत्यर्थः ॥

आसन्दीवत्कृष्णाजिनस्यापि सोमासादनार्हत्वादासन्दीस्पर्शनमन्त्र एव कृष्णाजिनास्तरणेऽपि विनियुक्तः । सोमासादनमन्त्रे त्वासीदेति विशेषः । अतो न मन्त्राः पृथग्व्याख्यानार्हाः । स यदाह वरुणस्येत्यादि । स्पष्टम् ॥ २९ ॥

अथैनं शालामित्यादि । प्राग्वंशस्य पुरोदेशे आसन्द्यां स्थापितं सोममासन्द्या सह प्राचीनवंशं गमयेदित्यर्थः । प्रपादनसमये " या ते धामानि " इति मन्त्रं यजमानं वाचयेत् । अध्वर्योः प्राधान्यात् तदपेक्षया ' प्रपादयति '–इत्येकवचनम् । वस्तुतस्तु चत्वारः प्रपादयन्ति । तथा च सूत्रकारः–" शालां प्रवेशयन्ति दीक्षितसञ्चरेण, या त इति वाचयति, आहवनीयं दक्षिणेन स्थापयन्ति–" ( का. श्रौ. सू. ७ । २९२–२९४ )इति ॥

मन्त्रस्यायमर्थः । ' हे सोम ' ! ' ते ' ' या ' यानि ' धामानि ' स्थानानि नामानि जन्मानि च त्रीण्यपि ( निरु. ९ । ३ । ७ ) ' धाम ' शब्दवाच्यानि ' हविषा ' ' यजन्ति ' ' ते ' तव सम्बन्धीनि ' ता ' तानि ' विश्वानि ' सर्वाण्यपि । ' यज्ञम् '–इति विभक्तिव्यत्ययः । अयं यज्ञः 'परिभूः' परितो भावयिता 'अस्तु' त्वं च ' गयस्फानः ' पशुपुत्रादिना गृहस्य वर्द्धयिता, ' प्रतरणः ' आपद्भ्यः प्रकर्षेण तारयिता, ' सुवीरः ' शोभनवीरोपेतः, तत्प्रद इत्यर्थः, ' अवीरहा ' पुत्रादेरहन्ता च सन्, ' दुर्यान् ' गृहान् ' प्रचर ' प्रकरोषि । चतुर्थपादगतदुर्य-शब्दार्थं ब्रुवन् कृत्स्नमन्त्रतात्पर्यमाह–गृहा वै दुर्या इत्यादिना ॥ ३० ॥

---

१–कृष्णाजिनमस्यामास्तृणाति वरुणस्य ऋतसदनमसीति । का श्रौ. सू. ७ । २५० । तस्मिन्सोमं निदधाति वरुणस्य ऋतसदनमासीदेति । का. श्रौ. सू. ७ । २५१ ।

(ह्यऽत्र) अत्र हैके। (कऽ) उदपात्रमुपनिनयन्ति यथा राज्ञऽआगतायोदकमाहरेदेवमेतदिति वदन्तस्तदु तथा न कुर्यान्मानुषꣳ ह ते यज्ञे कुर्वन्ति व्यृद्धं वै तद्यज्ञस्य यन्मानुषं नेद्व्यृद्धं यज्ञे करवाणीति तस्मान्नोपनिनयेत् २१॥

इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥३॥१॥ [३.४.] इति तृतीयोऽध्यायः ॥

---

अत्र हैके उदपात्रमुपनिनयन्ति । यथा राज्ञऽआगतायोदकमाहरेदेवमेतादिति वदन्तः । तदु तथा न कुर्यात् । मानुषं ह ते यज्ञे कुर्वन्ति । व्यृद्धं वै तद्यज्ञस्य-यन्मानुषम् । नेद्व्यृद्धं यज्ञे करवाणीति । तस्मान्नोपनिनयेत् ॥ २१ ॥

---

अत्र हैक उदपात्रमुपनिनयन्तीति । मनुष्योपचारवत् देवस्य सोमस्योदपात्रनिनयनलक्षणोपचारे सति तदुपचरणं मानुषं भवति, एतत् 'यज्ञे व्यृद्धम्' अतो मानुषत्वपरिहाराय उदपात्रं नोपनिनयेत् ॥ २१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥३॥३॥४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ १ ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजाः,
रत्नाढयो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥२॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

---

१–उदपात्रमुपनिनयंत्येके । का. श्रौ. सू. ७ । ७५५ ।

# चतुर्थाध्याये प्रथमं ब्राह्मणम् ।

शिरो वै यज्ञस्यातिथ्यं बाहू प्रायणीयोदयनीयौ । (ग्राव) अभितो वै शिरो बाहू भवतस्तस्मादभितऽआतिथ्यमेते हविषी भवतः प्रायणीयश्चोदयनीयश्च ॥ १ ॥

(श्रा) अथ यस्मादातिथ्यं नाम । (ग्रा) अतिथिर्वाऽएष एतस्यागच्छति यत्सोमः क्रीतस्तस्माऽएतद्यथा राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत्तदह मानुषꣳ हविर्देवानामेवमस्माऽएतदातिथ्यं करोति ॥ २ ॥

तदाहुः । पूर्वोऽतीत्य गृह्णीयादिति यत्र वाऽअर्हन्तमागतं नापचायन्ति क्रुध्यति वै स तत्र तथा ह्यपचितो भवति ॥ ३ ॥

---

## अथ आतिथ्येष्टिः ।

शिरो वै यज्ञस्यातिथ्यम्—बाहू प्रायणीयोदयनीयौ । अभितो वै शिरो बाहू भवतः । तस्मादभित आतिथ्यमेते हविषी भवतः—प्रायणीयश्चोदयनीयश्च ॥ १ ॥

अथ यस्मादातिथ्यं नाम । अतिथिर्वाऽएष एतस्यागच्छति—यत्सोमः क्रीतः । तस्माऽएतद्—यथा राज्ञे वा ब्राह्मणाय वा महोक्षं वा महाजं वा पचेत्—तदह मानुषम्, हविर्देवानाम्, एवमस्माऽएतदातिथ्यं करोति ॥ २ ॥

तदाहुः—पूर्वोऽतीत्य गृह्णीयादिति । यत्र वाऽअर्हन्तमागतं नापचायन्ति—क्रुध्यति वै स तत्र । तथा ह्यपचितो भवति ॥ ३ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

आतिथ्यस्य प्रायणीयानन्तर्यं विधत्ते—शिरो वै यज्ञस्यातिथ्यमिति । [1]व्याख्यातमिदम् ॥ १ ॥

यत्सम्बन्धादिदं हविरातिथ्यं तस्य सोमस्य कथमतिथित्वमिति निर्वचनप्रदर्शनद्वारेण तद्दर्शयति—अथ यस्मादातिथ्यं नामेति । यस्मान्निमित्तादातिथ्यमिति हविषो नाम अत उच्यत इति शेषः । 'एतस्य' यजमानस्य वसतिं यः 'अतिथिः' सन् यस्मात् 'आगच्छति;' न विद्यते प्रतिनियता तिथिर्यस्य सोऽतिथिरित्यर्थः । तस्मादतिथये सोमाय 'एतद्' हविः निरुप्यत इत्यातिथ्यं नाम सम्पन्नम् । अतिथित्वमुपजीव्यातिथ्यमवश्यं कर्तव्यमित्याह—यथा राज्ञ इति । राज्ञे वा ब्राह्मणाय वेति । राज्ञः "गौर्मधुपर्कः स्यात् स्नातकायोपस्थिताय राज्ञे वा"—इति स्मृतेः सिद्धः ( आप. श्रौ. सू. । २ । ८ । ८ ) । ब्राह्मणः श्रोत्रियोऽभिमतः । "महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्" (याज्ञ. सं. १ । १ । १०८) इति स्मृतेः । 'तदह मानुषम्' आतिथ्यमिति शेषः । हविर्देवानामिति । देवानां हविरेवातिथ्यमित्यर्थः । एवमस्मा एतदिति । दार्ष्टान्तिकम् ॥ २ ॥

तदाहुः पूर्वोऽतीत्य गृह्णीयादित्यादि । सोमम् 'अतीत्य' पृष्ठतः कृत्वा, स्वयं ततः 'पूर्वः' सन् पूर्वमागत्य

---

१—आतिथ्यं निर्वपति वैष्णवं नवकपालं । का.श्रौ.सू. ८।१। २—एतदग्रे—'आददते आन्दोलिकाम् इत्यर्थः—' इ० क० पा० ।

तद्वा ऽअन्यतर ऽएव विमुक्तः स्यात् । ( द ) अन्यतरोऽविमुक्तोऽथ गृह्णीयात्स यद्न्यतरो विमुक्तस्तेनागतो यद्न्यतरोऽविमुक्तस्तेनापचितः ॥४॥

( स्तु ) तद्दु तथा न कुर्यात् । ( द्वि ) विमुच्यैव प्रपाद्य गृह्णीयाद्यथा वै देवानां चरणं तद्वाऽअनुमनुष्याणां तस्मान्मानुषे यावन्न विमुञ्चते नैवास्मै तावदुदकथ्ठं हरन्ति नापचितिं कुर्वन्त्यनागतो हि स तावद्भवत्यथ यदैव विमुञ्चतेऽथास्माऽउदकथ्ठं हरन्त्यथापचितिं कुर्वन्ति तर्हि हि स आगतो भवति तस्माद्विमुच्यैव प्रपाद्य गृह्णीयात् ॥ ५ ॥

---

तद्वाऽअन्यतर एव विमुक्तः स्यात्—अन्यतरोऽविमुक्तः । अथ गृह्णीयात् । स यदन्यतरो विमुक्तस्तेनागतः । यद्वन्यतरोऽविमुक्तस्तेनापचितः ॥ ४ ॥

तद्दु तथा न कुर्यात् । विमुच्यैव प्रपाद्य गृह्णीयात् । यथा वै देवानां चरणम् । तद्वाऽअनुमनुष्याणाम् । तस्मान्मानुषे यावन्न विमुञ्चते—नैवास्मै तावदुदकं हरन्ति, नापचितिं कुर्वन्ति । अनागतो हि स तावद्भवति । अथ यदैव विमुञ्चते—अथास्माऽउदकं हरन्ति, अथापचितिं कुर्वन्ति । तर्हि हि स आगतो भवति । तस्माद्विमुच्यैव प्रपाद्य गृह्णीयात् ॥ ५ ॥

---

हविः ' गृह्णीयात् ' । विपक्षबाधपुरःसरं हविर्ग्रहणं प्रशंसति—यत्र वा अर्हन्तमागतं नापचायन्तीति । 'अर्हन्तं' पूज्यं गृहम् 'आगतम्' आगतमात्रम् ' न अपचायन्ति ' । चायतेर्लेटयडभावश्छान्दसः ( पा. सू. ३।४।९४ ) ( धा. पा. भ्वा. उ. ९०९ ) पूजां न कुर्युः; ' सः ' ' तत्र ' तस्मिन्नपचितिविषये ' क्रुध्यति ' । 'तथा ह' तथा सति सोमप्रवेशात् प्रागेव हविर्ग्रहणे सति ' अपचितो भवति ' ॥ ३ ॥

अपचितिश्च द्वेधा सम्भवति—अन्यतरानडुद्विमोकानन्तरम्, उभयविमोकानन्तरं च; तत्रान्यतरविमोकानन्तरपक्षमुपन्यस्यति—तद्वा अन्यतर एवेति । एतदेवोपपादति—स यदन्यतरो विमुक्तस्तेनागत इति । तथा हि लोके यानाद्यविमोके सति आगमनिश्चयो न भवेत्; इह त्वन्यतरानडुद्विमोकेन तन्निश्चयो भवति । अन्यतरस्याविमोके तदागमनात् प्रागेव सा कृता स्यात् ॥ ४ ॥

अमुं पक्षं निराचष्टे--तद्दु तथा न कुर्यादिति । इदानीं स्वाभिमतं पक्षमाह--विमुच्यैव प्रपाद्य गृह्णीयादिति । ' विमुच्यैव ' उभावपीत्यर्थः । एकतरं विमोच्यापि अन्यतरस्याविमोकादनागमनं सम्भाव्येत । ' प्रपाद्य ' सोमं शालां प्रवेश्य । लौकिकातिथ्यदृष्टान्तबलेन श्रौतस्यातिथ्यस्य निर्वापकालं प्रतिपिपादयिषुरुभयविमोकपक्षं समर्थयते—यथा वै देवानां चरणमिति । ' यावत् न विमुञ्चते ' प्रयाणसाधनं यानादिकं न परित्यजति । स्पष्टमन्यत् ॥ ५ ॥

---

१—एकविमुक्ते वा । का. श्रौ. सू. ८ । २ । २—तद्वा अन्यतर एव विमुक्तः स्यादन्यतरोऽविमुक्तोऽथ गृह्णीयादिति श्रुतेः—तद्दु तथा न कुर्यात् विमुच्यैव प्रपाद्य गृह्णीयादिति च । अतो विहितप्रतिषिद्धत्वाद्विकल्प इति देवयाज्ञिकाः । वाशब्दो विकल्पार्थः । एवमपि हि श्रूयते । विमुच्यैव प्रपाद्य गृह्णीयादिति कर्काचार्याश्च ।

( त्स ) स वै संत्वरमाण इव गृह्णीयात् । ( त्त ) तथा ह्यपचितो भवति तत्पत्न्यन्वारभते पर्य्युह्यमाणं वै यजमानोऽन्वारभतेऽथात्र पत्न्युभयत एवैतन्मिथुनेनान्वारभेते यत्र वाऽअर्हन्नागच्छति सर्व्वगृह्याऽइव वै तत्र चेष्टन्ति तथा ह्यपचितो भवति ॥ ६ ॥

स वाऽअन्येनैव ततो यजुषा गृह्णीयात् । (द्य)येनो चान्यानि हवीᳬंष्येकं वाऽएष भागं क्रीयमाणोऽभिक्रीयते च्छन्दसामेव राज्याय च्छन्दसाᳬं साम्राज्याय तस्य च्छन्दाᳬंस्यभितः साचयानि यथा राज्ञोऽराजानो राजकृतः सूतग्रामण्य एवमस्य च्छन्दाᳬंस्यभितःसाचयानि ॥ ७ ॥

---

स वै संत्वरमाण इव गृह्णीयात् । तथा ह्यपचितो भवति । तत्पत्न्यन्वारभते । पर्य्युह्यमाणं वै यजमानोऽन्वारभते । अथात्र पत्नी । उभयत एवैतन्मिथुनेनान्वारभेते । यत्र वाऽअर्हन्नागच्छति । सर्व-गृह्या-इव वै तत्र चेष्टन्ति-तथा ह्यपचितो भवति ॥ ६ ॥

स वाऽअन्येनैव ततो यजुषा गृह्णीयात् । येनो चान्यानि हवींषि । एकं वाऽएष भागं क्रीयमाणोऽभिक्रीयते । छन्दसामेव राज्याय, छन्दसां साम्राज्याय । तस्य च्छन्दांस्यभितः साचयानि । यथा राज्ञोऽराजानो राजकृतः सूतग्रामण्यः-एवमस्य छन्दांस्यभितः साचयानि ॥ ७ ॥

---

स वै सन्त्वरमाण इति । सन्त्वराया अभावे अनादरः प्रतिभाति, अतस्त्वरया गृह्णीयात् । निर्वापे पत्न्यन्वारम्भं विधाय प्रशंसति-तत्पत्न्यन्वारभते पर्य्युह्यमाणं वै यजमान इति । 'तत्' तेन आदौ परिवहणकाले यजमानान्वारम्भणेन 'अत्र' सोमार्थहविर्निर्वापकाले 'उभयतः' उभयोः पार्श्वयोरपि 'मिथुनेनान्वारभेते' । जायापती मिथुनमध्ये एकस्यान्वारम्भे अपरस्य तदविनाभूतस्यापि सिद्धत्वादित्यभिप्रायः । यत्र वा अर्हन्नित्यादि । 'सर्वगृह्या इव' गृहे स्थिताः सर्वे पदार्था अत्यर्थमनिर्ग्राह्याः, ते सर्वगृह्याः । 'तत्र' तस्मिन् आगमने निमित्ते सति तादृशास्तिष्ठन्ति ॥ ६ ॥

स वा अन्येनेत्यादि । 'ततः' तस्मात् प्राकृतान्निर्वापमन्त्रात् 'अन्येन यजुषा'-" अग्नेस्तनूरसि "-इत्यादिना । तत इत्यस्यार्थमाह-- येनो चेति । मन्त्रान्यत्वे कारणमाह-एकं वा एष भागमिति । 'एषः' 'क्रीयमाणः' आतिथ्येन प्याय्यमानः सोमः । 'एकम्' समानम् ' 'भागम्' 'अभि-लक्ष्य' 'क्रीयते' । छन्दसां राज्यायेति । यथाऽसौ 'छन्दसां' राज्यं साम्राज्यं च प्राप्नोति; तथा सम्पादनायेत्यर्थः । कथं छन्दःसम्बन्ध इति तत्राह-तस्य छन्दांसीति । 'अभितः साचयः' पुरः पश्चाच्च सहागन्तारः प्रधानपुरुषा इत्यर्थः । " यथा राज्ञोऽराजानः "-इत्यत्र अराजान इति अकारप्रश्लेषः । ते के 'राजकृतः' राजत्वसम्पादकाः पट्टाभिषेकस्य कर्तारः 'सूतग्रामण्यः' सूतश्रेष्ठाः ॥ ७ ॥

---

१-पत्न्यन्वारब्धस्तूर्णम् । का. श्रौ. सू. ८ । २ । २-'पटाभिषेकस्य' इति क. पाठः ।

न वै तदवकल्पते। यच्छन्दोभ्य इति केवलं गृह्णीयाद्यत्र वाऽअर्हते पचन्ति तदभितः साचयोऽन्वाभक्ता भवन्त्यराजानो राजकृतः सूतग्रामण्यस्तस्माद्यत्रैवैतस्यै गृह्णीयात्तदेव च्छन्दाᳪंस्यन्वाभजेत् ॥ ८ ॥

( त्स ) स गृह्णाति। ( त्य ) अग्नेस्तनूरसि विष्णवे त्वेत्यग्निर्वै गायत्री तद्गायत्रीमन्वाभजति ॥ ९ ॥

सोमस्य तनूरसि विष्णवे त्वेति । क्षत्रं वै सोमः क्षत्रं त्रिष्टुप्त्रिष्टुभमन्वाभजति ॥ १० ॥

---

न वै तदवकल्पते—यच्छन्दोभ्य इति केवलं गृह्णीयात् । यत्र वाऽअर्हते पचन्ति—तदभितः साचयोऽन्वाभक्ता भवन्ति—अराजानो राजकृतः सूतग्रामण्यः । तस्माद्यत्रैवैतस्यै गृह्णीयात् तदेव छन्दांस्यन्वाभजेत् ॥ ८ ॥

स गृह्णाति । " अग्नेस्तनूरसि विष्णवे त्वा "—( वा. सं. ५ । १ ) इति । अग्निर्वै गायत्री। तद्गायत्रीमन्वाभजति ॥ ९ ॥

" सोमस्य तनूरसि विष्णवे त्वा "—( वा. सं. ५ । १ ) इति । क्षत्रं वै सोमः । क्षत्रं त्रिष्टुप् । तत्त्रिष्टुभमन्वाभजति ॥ १० ॥

---

निर्वापे समप्राधान्यपक्षं दूषयित्वा असमस्यैव निर्वापमाह—न वै तदवकल्पत इत्यादिना । अयमर्थः । यदि प्रधानस्योपसर्जनानाञ्च सदृशीं प्रतिपत्तिं कुर्यात् तदा प्रधानस्य प्रतिपत्तिर्न कृता स्यात्, अतो यथा प्रधानस्य आमन्त्रणे सति अप्रधाना अप्यनाहूता एव तमनुगच्छन्ति, एवं सोमार्थनिर्वापेण छन्दसामपि प्रसङ्गसिद्धेरन्वाभजनं सिद्धमिति सोमस्यैव निर्वापं कुर्यादित्यर्थः ॥ ८ ॥

हविर्ग्रहणे मन्त्रं विधत्ते—स गृह्णात्यग्नेस्तनूरसीति । हे निरुप्यमाणव्रीहिपदार्थ ! 'त्वं अग्नेः तनूरसि' त्वं शरीरं भवसि । शरीरोपचयहेतुत्वाद्वा तनूवदाच्छादकत्वाद्वा तनूत्वम् । "यो वै विष्णुः सोमः सः"—( श. प. ब्रा. ३।३।४।२१ ) इति श्रुतेः, सवनत्रयव्यापित्वाद्वा सोमो विष्णुः, अतो 'विष्णवे त्वा' इति सोमस्य विष्णुत्वेन निर्देश उपपद्यते । अथवा "विष्णवे हि गृह्णाति यो यज्ञाय गृह्णाति" ( श. प. ब्रा. ३।३।१।१४ ) इति श्रुतेः त्वां यज्ञाय गृह्णामीत्यर्थः । मन्त्रगतमग्निपदं गायत्र्यन्वाभक्तिसाधनत्वेन प्रशंसति—अग्निर्वै गायत्रीत्यादिना । अग्नेर्गायत्रीरूपत्वं प्रजापतिमुखात् सहोत्पन्नत्वाद्द्रष्टव्यम्—" तमग्निर्देवताऽन्वसृज्यत गायत्रीछन्दः " ( तै. सं. ७।१।१।४ ) इति हि श्रूयते । एवमुत्तरमन्त्रवाक्यान्यपि व्याख्येयानि ॥ ९ ॥

सोमस्य तनूरसीत्यादि । सोमस्यान्नत्वेन साक्षाच्छरीरोपचयहेतुत्वात् तनूत्वम् । सोमस्य राज्ञः क्षत्रत्वमसकृदुक्तम् । प्रजापतेरुरसो बाहुभ्याञ्च राजन्येन सह त्रिष्टुभोऽप्युत्पत्तेः क्षत्रत्वम् ( तै.सं.७।१।१।४) ॥ १० ॥

(त्यु) अतिथेरातिथ्यमसि विष्णवे त्वेति । सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार एवमस्यैष ऋते च्छन्दोभ्यः ॥ ११ ॥

श्येनाय त्वा सोमभृते विष्णवे त्वेति । तद्गायत्रीमन्वाभजति सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्तेन सा श्येनः सोमभृत्तेनैवैनामेतद्वीर्येण द्वितीयमन्वाभजति ॥ १२ ॥

(त्य) अग्नये त्वा रायस्पोषदे विष्णवे त्वेति । पशवो वै रायस्पोषः पशवो जगती तज्जगतीमन्वाभजति ॥ १३ ॥

(त्यु) अथ यत्पञ्च कृत्वो गृह्णाति । संवत्सरसंमितो वै यज्ञः पञ्च

---

" अतिथेरातिथ्यमसि विष्णवेत्वा "-( वा. सं. ५ । १ ) इति । सोऽस्योद्धारः-यथा श्रेष्ठस्योद्धारः । एवमस्यैषः । ऋते छन्दोभ्यः ॥ ११ ॥

" श्येनाय त्वा सोमभृते विष्णवे त्वा"-( वा. सं. ५ । १ ) इति । गायत्रीमन्वाभजति । सा यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्-तेन सा श्येनः सोमभृत् । तेनैवैनामेतद्वीर्येण द्वितीयमन्वाभजति ॥ ११ ॥

"अग्नये त्वा रायस्पोषदे विष्णवे त्वा"-( वा. सं. ५ । १ ) इति । पशवो वै रायस्पोषः । पशवो जगती । तज्जगतीमन्वाभजति ॥ १२ ॥

अथ यत्पञ्च कृत्वो गृह्णाति । संवत्सरसंमितो वै यज्ञः । पञ्च वाऽऋतवः संवत्सरस्य । तं पञ्चभि-

---

अतिथेरातिथ्यमसीति । अत्रातिथिशब्दस्य तात्पर्यमाह--सोऽस्योद्धारो यथा श्रेष्ठस्येति । उद्ध्रियते असाधारण्येन विभज्यत इत्युद्धारः प्रतिनियतभागः ॥ ११ ॥

पुनरपि गायत्र्या अन्वाभजनरूपतया श्येनशब्दं प्रशंसति-श्येनाय त्वेति । श्येनरूपमास्थाय सोमाहरणाद् गायत्री सोमभृत् श्येनः । एतदेव दर्शयति-सा यद् गायत्री श्येनो भूत्वेति । ' तेनैव वीर्येण ' हेतुना ' एनां गायत्रीं ' ' द्वितीयं ' भागं प्रति ' अन्वाभजति ' अध्वर्युः एतद्भागपाठेनेत्यर्थः ॥ १२ ॥

अग्नये त्वेति । ' अग्नये ' अङ्गनादिगुणविशिष्टाय ' रायस्पोषदे ' धनपोषप्रदात्रे ' विष्णवे ' सोमाय हे हविः ! 'त्वा' त्वाम् गृह्णामीत्यर्थः । जगत्यन्वाभजनरूपतया मन्त्रभागं प्रशंसति-पशवो वै रायस्पोष इति । वर्द्धमानधनरूपत्वं पशूनामेवेति ' पशवो वै रायस्पोषः ' इत्युक्तम् । पशूनां जगतीत्वं जगत्या सोमाहरणसमये आहृतत्वाद्द्रष्टव्यम्-तथा च तैत्तिरीयकम्-" सा पशुभिश्च दीक्षया चागच्छदिति"-( तै. सं. ६।१।६।२ )॥ १३॥

प्रकृतौ चतुःकृत्वो ग्रहणादत्रापि चोदकतस्तत्प्राप्त्यै पञ्चसङ्ख्यां विधाय प्रशंसति-अथ यत्पञ्चकृत्व[1] इति ।

---

१-निर्व्वपेदग्नेस्तनूरिति पंच कृत्वः प्रतिमंत्रम् । का. श्रौ सू. ८ । २ । सावित्रनिवृत्तिः श्रुतिविधेयाभ्याम् । का. श्रौ. सू. ८ । ३ । सवितृशब्दसंबंधाद्देवस्य त्वेत्येष मंत्रः सावित्र इत्युच्यते । स च चोदकप्राप्तः । अग्नेस्तनूरसीत्यादयो मंत्राः प्रत्यक्षश्रुतिचोदिताः । तत्र हरिस्वामिपितृभूतिकर्काचार्ययाज्ञिकानंतदेवदेवयाज्ञिकादिभाष्यकृतांमते प्रथमद्वितीयतृतीयग्रहणमंत्रेषु ( समुच्चयश्रुतेः ) उभयोश्चोदकप्रत्यक्षाशिष्टयोर्मंत्रयोः समुच्चयः । नांत्ययोश्चतुर्थपंचमयोः । समुच्चयश्रुतिस्त्वस्मिन्नेव ब्राह्मणे सप्तमीकं. ७ । स वाऽअन्येनैव ततो यजुषा गृह्णीयात् । येनो चान्यानि हवींषीति । ' इति सर्वेषामैकमत्यम् । परं त्वत्र वैमत्यं चेत्थम्-हरिस्वामियाज्ञिका-

वाऽऋतवः संवत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्च कृत्वो गृह्णात्यथ यद्विष्णवे त्वा विष्णवे त्वेति गृह्णाति विष्णवे हि गृह्णाति यो यज्ञाय गृह्णाति ॥ १४ ॥

नवकपालः पुरोडाशो भवति । शिरो वै यज्ञस्यातिथ्यं नवाक्षरा वै गायत्र्यष्टौ तानि यान्यन्वाह प्रणवो नवमः पूर्वार्धो वै यज्ञस्य गायत्री पूर्वार्ध एष यज्ञस्य तस्मान्नवकपालः पुरोडाशो भवति ॥ १५ ॥

---

राप्नोति । तस्मात्पञ्च कृत्वो गृह्णाति । अथ यद् विष्णवे त्वा, विष्णवे त्वेति गृह्णाति । विष्णवे हि गृह्णाति—यो यज्ञाय गृह्णाति ॥ १४ ॥

नवकपालः पुरोडाशो भवति । शिरो वै यज्ञस्यातिथ्यम् । नवाक्षरा वै गायत्री । अष्टौ तानि—यान्यन्वाह । प्रणवो नवमः । पूर्वार्धो वै यज्ञस्य गायत्री । पूर्वार्ध एष यज्ञस्य । तस्मान्नवकपालः पुरोडाशो भवति ॥ १५ ॥

---

( का. श्रौ. सू. ८ । २ ) । यज्ञस्य संवत्सरसम्मितत्वं गवामयनादिसत्ररूपस्य यज्ञस्य संवत्सरसाध्यत्वाद्वा ( ऐ. ब्रा. २ । ३ । २ । तै. सं. ७ । ४ । ७ ) संवत्सरात्मकप्रजापतिसम्मितत्वाद्वा, ( ऐ. ब्रा. २ । २ । ७ ) "द्वादशाग्निष्टोमस्य स्तोत्राणि"—इति श्रुतेस्तद्गतसङ्ख्यया संवत्सरसाम्याद्वा द्रष्टव्यम् । ग्रहणमन्त्रेषु सर्वत्र विष्णुशब्दोपादानं प्रशंसति—अथ यद् विष्णवे त्वा विष्णवे त्वेति । यत्र यत्र हविर्गृह्यते, तत्र तत्र यज्ञार्थत्व नियमात्सोमस्य हविष्ट्वेन यज्ञार्थत्वात् सर्वत्र 'विष्णवे—विष्णवे' इति ग्रहणं युक्तमित्यर्थः ॥ १४ ॥

नवकपालः पुरोडश इति । नवसु कपालेषु संस्कृतो नवकपालः । नवकपालस्यातिथ्यार्हत्वमाह—शिरो वा इति । यान्यन्वाहेति । 'यानि' अक्षराणि अनुक्रमेण उच्चारणकाले ब्रूते तान्यष्टौ भवन्ति, प्रयोगकाले "प्रणवष्टेः" इति ( पा. सू. ८ । २ । ८९ ) प्रयुज्यमानः 'प्रणवः' एव 'नवमः' "गायत्रं प्रातस्सवनम्" ( तै. सं. ३. २. ९. ) इति श्रुतेः । 'यज्ञस्य पूर्वार्द्धो गायत्री'; तस्माद् गायत्र्यानुगुण्याय 'नवकपालः' कर्तव्यः ॥ १९ ॥

---

—ऽनन्तदेवदेवयाज्ञिकमते—विरोधात्सावित्रमंत्रे त्वाशब्दमात्रस्यं निवृत्तिः । पितृभूतिकर्काचार्यमते तु सा नेति । तत्रापि—पूर्वं चोदकप्राप्तः । पश्चात्प्रत्यक्षशिष्ट इति । जुष्टशब्दस्तु चोदकप्राप्तोऽपि देवतादेशादुत्तर एव भवति । प्रकृतावेवमेव दृष्टत्वाद् । सावित्रस्य तु ग्रहणत्रय एव प्रयोगः । प्रकृतौ दृष्टत्वात् । नोत्तरयोः । जुष्टशब्दस्य चेति कर्कः । ततश्च मंत्रपाठे द्वैविध्यम् । ओ३म् देवस्य सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नेस्तनूरसि विष्णवे त्वा जुष्टं गृह्णामीति प्रथमम् । १ । देवस्य सवितुरित्यादि—सोमस्य तनूरसि विष्णवे त्वा जुष्टं गृह्णामीति द्वितीयम् । २ । ओ३म् देवस्य सवितुरित्यादि—अतिथेरातिथ्यमसि विष्णवे जुष्टं गृह्णामीति तृतीयम् । ३ । ओ३म् श्येनाय त्वा सोमभृते विष्णवे त्वा गृह्णामि—इति चतुर्थम् । ४ । ओ३म् अग्नये त्वा रायस्पोषदे विष्णवे त्वा गृह्णामीति च पंचमम् । ५ । एकोऽयं पाठः । अपरस्तु । ओ३म् देवस्य त्वा सवितुरित्यादिस्त्वाविशिष्टो मंत्रः । परतस्तु सर्वं समानम् इति ।

१—आतिथ्यं निर्वपति वैष्णवं नवकपालम् । का. श्रौ. सू. ८ । १ ।

कार्ष्मर्यमयाः परिधयः । ( यो ) देवा ह वाऽएतं वनस्पतिषु राक्षोघ्नं ददृशुर्यत्कार्ष्मर्यꣳ शिरो वै यज्ञस्यातिथ्यं नेच्छिरो यज्ञस्य नाष्ट्रा रक्षाꣳसि हिनसन्निति तस्मात्कार्ष्मर्यमयाः परिधयो भवन्ति ॥ १६ ॥

( न्त्या ) आश्ववालः प्रस्तरः । ( ग्रे ) यज्ञो ह देवेभ्योऽपचक्राम सोऽश्वो भूत्वा पराङाववर्त तस्य देवा अनुहाय वालानभिपेदुस्तानालुलुपुस्तानालुप्य सार्धꣳ संन्यासुस्तत एता ऽओषधयः समभवन्यदश्ववालाः शिरो वै यज्ञस्यातिथ्यं जघनार्धो वालाऽ उभयत ऽएवैतद्यज्ञं परिगृह्णाति यदाश्ववालः प्रस्तरो भवति ॥ १७ ॥

( त्यै ) ऐक्षव्यौ विधृती । नेद्बर्हिश्च प्रस्तरश्च संलुभ्याताऽइत्यथोत्पूयाज्यꣳ सर्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति न ह्यत्रानुयाजा भवन्ति १८

---

कार्ष्मर्यमयाः परिधयः । देवा ह वाऽएतं वनस्पतिषु राक्षोघ्नं ददृशुः—यत् कार्ष्मर्यम् । शिरो वै यज्ञस्यातिथ्यम् । नेच्छिरो यज्ञस्य नाष्ट्रा रक्षांसि हिनसन्निति । तस्मात्कार्ष्मर्यमयाः परिधयो भवन्ति १६

आश्ववालः प्रस्तरः—यज्ञो ह देवेभ्योऽपचक्राम । सोऽश्वो भूत्वा पराङाववर्त । तस्य देवा अनुहाय वालानभिपेदुः । तानालुलुपुः । तानालुप्य सार्द्धं संन्यासुः । तत एता ओषधयः समभवन्—यदश्ववालाः । शिरो वै यज्ञस्यातिथ्यम् । जघनार्धो वालाः । उभयत एवैतद्यज्ञं परिगृह्णाति—यदाश्ववालः प्रस्तरो भवति ॥ १७ ॥

ऐक्षव्यौ विधृती । नेद्बर्हिश्च प्रस्तरश्च संलुभ्यातै—इति । अथोपूत्याज्यम्, सर्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति । न ह्यत्रानुयाजा भवन्ति ॥ १८ ॥

---

**कार्ष्मर्यमयाः परिधय** इति । 'कार्ष्मर्यः' भद्रपर्णी तन्मया एव 'परिधयः' कर्तव्याः । प्रकृतौ पलाशवैकङ्कतादीनामैच्छिकत्वादत्र नियमविधिः । देवा ह वा इत्यादि । कार्ष्मर्यमयत्वस्योपपादनम् ॥ १६ ॥

**आश्ववालः प्रस्तर** इति । आश्ववालत्वं तन्नामनिवचनद्वारेण प्रशंसति—**यज्ञो ह देवेभ्य** इति । 'तान्' आश्ववालान् 'आलुलुपुः' "लुप्लृ छेदने"—( धा. पा. तु. उ. ९० ) चिच्छिदुः 'सार्द्धं सन्न्यासुः' एकीकृत्य सम्यग् भूमौ प्रचिक्षिपुः । तेभ्यः ताः 'एताः' अश्ववालाख्याः 'ओषधयः' सञ्जाताः । आश्ववालानामातिथ्येष्टियोग्यत्वमाह—**शिरो वै यज्ञस्यातिथ्यम्, जघनार्द्धो वाला** इति । आतिथ्यस्य सोमात् प्रथममनुष्ठेयत्वेन शिरस्त्वात् तस्यादावनुष्ठितत्वाज्जघनार्द्धावस्थितवालपरिणामरूपस्याश्ववालस्य तत्र प्रयोगे सति अपगतस्य यज्ञस्य 'उभयतः' परिग्रहः कृतो भवति ॥ १७ ॥

**ऐक्षव्यौ विधृती** इति । बर्हिःप्रस्तरयोरन्तराले तिर्यक्प्रसार्यमाणौ दर्भौ 'विधृती' ते अत्र इक्षुपत्ररूपे

---

२—कार्ष्मर्यमयाः परिधय आश्ववालः प्रस्तरऽऐक्षव्यौ विधृती । का. श्रौ. सू. ८ । १० । कार्ष्मर्यः ( शिवणी ) इति लोके प्रसिद्धः । तथाऽऽहामरः—'गंभारी सर्वतोभद्रा काश्मरी मधुपर्णिका । श्रीपर्णी भद्रपर्णी च काश्मर्यश्च' इति । अश्ववालाः—दर्भविशेषाः काशाः । "आश्ववालः काशप्रस्तरः" इति श्रुतत्वात् । न चायं समासः अश्वस्य वालः अश्ववाल इति । कथं तर्ह्यश्ववाला उच्यन्ते । तन्मयः प्रस्तरः । वाक्यशेषात् । "तत एता ओषधयः समभवन्यदश्ववालाः" इति पितृभूतिः । "ते वालाः काशतां प्राप्ताः कार्योऽतः प्रस्तरस्तु तैः" इति मीमांसायां प्रथमाध्याये तृतीयपादे चोक्तमिति ।

( न्त्या ) आसाद्य हवीᳬंष्यग्निं मन्थति । शिरो वै यज्ञस्यातिथ्यं जनयन्ति वाऽएनमेतद्यन्मन्थन्ति शीर्षतो वाऽअग्रे जायमानो जायते शीर्षत ऽएवैतदग्रे यज्ञं जनयत्यग्निर्वै सर्वा देवताऽअग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति शिरो वै यज्ञस्यातिथ्यᳬंशीर्षत ऽएवैतद्यज्ञᳬं सर्वाभिर्देवताभिः समर्धयति तस्मादग्निं मन्थति ॥ १९ ॥

सोऽधिमन्थनᳬं शकलमादत्ते । (त्तेऽग्ने)अग्नेर्जनित्रमसीत्यत्र ह्यग्निर्जायते तस्मादाहाग्नेर्जनित्रमसीति ॥ २० ॥

---

आसाद्य हवींष्यग्निं मन्थति । शिरो वै यज्ञस्यातिथ्यम् । जनयन्ति वाऽएनमेतद्यन्मन्थन्ति । शीर्षतो वाऽअग्रे जायमानो जायते शीर्षत । एवैतदग्रे यज्ञं जनयति । अग्निर्वै सर्वा देवताः । अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति । शिरो वै यज्ञस्यातिथ्यम् । शीर्षत एवैतद्यज्ञं सर्वाभिर्देवताभिः समर्धयति । तस्मादग्निं मन्थति ॥ १९ ॥

सोऽधिमन्थनं शकलमादत्ते । "अग्नेर्जनित्रमसि"-( वा.सं. ५।२ ) इति । अत्र ह्यग्निर्जायते । तस्मादाहाग्नेर्जनित्रमसीति ॥ २० ॥

---

स्याताम् । ' संलुभ्यातै ' पञ्चमलकारः । संलोभनमाकुलीभावो मिश्रणम् । तद्भयाद् ' ऐक्षव्यौ ' ( तै. सं. ६ । २ । १ ) कर्तव्ये इत्यर्थः । अथोत्पूयाज्यमित्यादि । उत्पवनं प्रकृतिवत् कर्तव्यम् । ' सर्वाण्येव ' जुहूपभृद्-ध्रुवाख्येषु पात्रेषु गृह्यमाणानि ' आज्यानि ' ' चतुर्गृहीतानि ' एव कुर्यात् । प्रकृतिवदेवेतरयोश्चतुर्गृहीतत्वं सिद्धम् । अत उपभृति अष्टगृहीतत्वनिवृत्त्यर्थमेवाभिधानम् । तत्र चतुर्गृहीतत्वे उपपत्तिं श्रुतिरेवाह-न ह्यत्रानुयाजा भवन्तीति ॥ १८ ॥

अग्निमन्थनं तत्कृतं विधत्ते-आसाद्य हवींष्यग्निं मन्थतीति । आतिथ्यायामेवाग्निमन्थने को विशेष इत्यत आह-शिरो वै यज्ञस्येति । जनयन्ति वा एनमेतद् यन्मन्थन्तीति । ' एतत् ' एतेन मन्थनजातेनाग्निना यज्ञनिष्पत्तिदर्शनादग्न्युत्पादनमेव यज्ञोत्पादनम् । प्रकारान्तरेणातिथ्यायामग्निमन्थनं प्रशंसति-अग्निर्वै सर्वा देवता इति । सोमयागस्य शिरोभूतायामातिथ्यायां सर्वदेवतामयस्याग्नेरुत्पादनेन सर्वासामपि देवतानामुत्पत्तेर्यज्ञ-प्रारम्भ एव सर्वैर्देवैर्यज्ञं समृद्धं कारितवान् भवति ॥ १९ ॥

सोऽधिमन्थनं शकलमिति । यूपतक्षणोत्पन्नोऽधरारण्या अधः स्थाप्यमानः शकलः ' अधिमन्थनशकलः ' यस्योपरि मथ्यते; तमादत्ते । तत्र मन्त्रः-अग्नेर्जनित्रमसीति । हे शकल ! त्वम् 'अग्नेः' 'जनित्रम्' उत्पादकम् ' असि ' । कथमस्य जनित्रत्वमिति, तत्राह-अत्र ह्यग्निरिति । 'अत्र' अधरारणिव्यवहिते शकल इत्यर्थः॥ २०॥

---

१-आसाद्याग्निमंथनमाहोमात्करोति । का. श्रौ. सू. ८ । १२ । आसाद्याग्निमंथनं । का. श्रौ. सू. ५ । २७ । २-अग्नेर्जनित्रमिति शकलमादाय तूष्णीं व्वेधां निधानम् । का. श्रौ. सू. ५ । २२ ।

**( त्यु ) अथ दर्भतरुणके निदधाति । वृषणौ स्थऽइति तद्यावेवेमौ स्त्रियै साकंजावेतावेवैतौ ॥ २१ ॥**

**( ताव ) अथाधरारणिं निदधाति । ( त्यु ) उर्व्वश्यसीत्यथोत्तरारण्याऽऽज्यविलापनीमुपस्पृशत्यायुरसीति तामभिनिदधाति पुरूरवाऽअसीत्युर्व्वशी वाऽअप्सराः पुरूरवाः पतिरथ यत्तस्मान्मिथुनादजायत तदायुरेवमेवैषऽएतस्मान्मिथुनाद्यज्ञं जनयत्यथाहाग्नये मथ्यमानायानुब्रूहीति ॥ २२ ॥**

---

अथ दर्भतरुणके निदधाति—" वृषणौ स्थः "—( वा. सं. ५ । २ ) इति । तद्यावेवेमौ स्त्रियै साकञ्जौ—" एतावेवैतौ " ॥ २१ ॥

अथाधरारणिं निदधाति—" उर्वश्यसि "—( वा. सं. ५ । २ ) इति । अथोत्तरारण्याऽऽज्यविलापनीमुपस्पृशति—" आयुरसि "—( वा. सं. ५ । २ ) इति । तामभिनिदधाति—" पुरूरवा असि "—( वा. सं. ५ । २ ) इति । उर्वशी वाऽअप्सराः । पुरूरवाः पतिः । अथ यत् तस्मान्मिथुनादजायत—तदायुः । एवमेवैष एतस्मान्मिथुनाद्यज्ञं जनयति । अथाह—' अग्नये मथ्यमानायानुब्रूहि ' इति ॥ २२ ॥

---

**अथ दर्भतरुणके** इति । 'दर्भतरुणके' कोमलौ परस्परसदृशौ दर्भौ, तौ अधो निदध्यात् " वृषणौ स्थः " इति तत्र मन्त्रः । हे दर्भौ ! युवां वृषणौ अभिमतफलवर्षकौ भवथ इति तस्यार्थः । तौ प्रशंसति—**तद्यावेवेमौ स्त्रियै साकञ्जावेतावेवैताविति** । ' स्त्रियै ' स्त्रियाः सकाशात् ' साकञ्जौ ' सहोत्पन्नौ ' याविमौ ' परस्परसदृशौ पुत्रौ ' एतौ ' दर्भौ, ' एतावेव ' युगलौ पुत्रावेव । रूपकोपन्यासेनात्यन्तसादृश्यमभिमतमिति द्रष्टव्यम् ॥ २१ ॥

**अथाधरारणिमिति**[२] । तत्राधरारणिनिधाने मन्त्रः—**उर्वश्यसीति** । हे अधरारणे ! त्वम् ' उर्वशी ' भवसि । आज्यं विलाप्यते यस्यां सा आज्यविलापनी स्थाली ताम्, उत्तरारण्या सम्पर्शं कुर्यात् ' आयुरसीति ' मन्त्रेण[३] । तामुत्तरारणिं ' पुरूरवा असीति ' तस्या उपरि निदध्यात् ॥

अरण्योराज्यविलापन्याश्च यदुर्वश्याद्यात्मकत्वम्, तत्—त्रयं प्रशंसितुं पुरावृत्तदृष्टान्तमाह—**उर्वशी वा अप्सरा** इत्यादि । ' उर्वशी अप्सराः ' पत्नी अभवत्, ' पुरूरवाः ' ' पतिः ' अभवत्, ' तस्मान्मिथुनात्, ' ' आयुः ' नाम पुत्रः ' अजायत ' । एतत्सर्वमग्रे समाम्नास्यते—"उर्वशी हाप्सराः पुरूरवसमैलं चकमे " इति । ( श. प. ब्रा. ११ । ५ । १।१—१७ ) । "एवमेवैषः—" इति दार्ष्टान्तिकाभिधानम् । ' यज्ञं जनयति ' यज्ञसाधनत्वाद्—यज्ञमित्युच्यते । 'अथ' अरण्योरासादनानन्तरम् " अग्नये मथ्यमानायानुब्रूहि " इति होतारम् ' आह ' ॥ २२ ॥

---

१—वृषणाविति कुशतरुणे तस्मिन् । का. श्रौ. सू. ५ । २३ । २—उर्व्वश्यसीत्यधरारणिं तयोः । का. श्रौ. सू. । ५ । २४ । ३—आयुरसीत्युत्तरयाऽऽज्यस्थालीं संस्पृश्य पुरूरवा इत्यभिनिधानं तया । का. श्रौ. सू. ५ । २५ । ४—अग्नये मथ्यमानायानुवाचयति । का. श्रौ. सू. ५ । २६ ।

स मन्थति । गायत्रेण त्वा च्छन्दसा मन्थामि त्रैष्टुभेन त्वा च्छन्दसा मन्थामि जागतेन त्वा च्छन्दसा मन्थामीति तं वै छन्दोभिरेव मन्थति च्छन्दाᳬंसि मथ्यमानायान्वाह च्छन्दाᳬंस्येवैतद्यज्ञमन्वायातयति यथाऽमुमादित्यᳬं रश्मयो जातायानुब्रूहीत्याह यदा जायते प्रह्रियमाणायेत्यनुप्रहरन् ॥ २३ ॥

(न्त्सो) सोऽनुप्रहरति । भवतं नः समनसौ सचेतसावरेपसौ । मा यज्ञᳬं हिᳬंसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य न इति शान्तिमेवा-भ्यामेतद्वदति यथा नाऽन्योऽन्यᳬं हिᳬंस्याताम् ॥ २४ ॥

---

स मन्थति—" गायत्रेण त्वा च्छन्दसा मन्थामि, त्रैष्टुभेन त्वा च्छन्दसा मन्थामि, जागतेन त्वा च्छन्दसा मन्थामि "—( वा. सं. ५ । २ ) इति । तं वै छन्दोभिरेव मन्थति । छन्दांसि मथ्यमानायान्वाह । छन्दांस्येवैतद्यज्ञमन्वायातयति—यथाऽमुमादित्यं रश्मयः । ' जातायानुब्रूहि ' इत्याह—यदा जायते । ' प्रह्रियमाणाय '—इत्यनुप्रहरन् ॥ २३ ॥

सोऽनुप्रहरति—" भवतं नः समनसौ सचेतसावरेपसौ । मा यज्ञं हिंसिष्टम्, मा यज्ञपतिम्, जातवेदसौ शिवौ भवतमद्य नः "—( वा. सं. ५ । ३ ) इति । शान्तिमेवाभ्यामेतद्वदति—यथा नाऽन्योऽन्यं हिंस्याताम् ॥ २४ ॥

---

समन्त्रकं मन्थनं विधत्ते--स मन्थतीति[1] । गायत्रेण त्वा च्छन्दसेत्यादि । तं वै छन्दोभिरेवेति । यद्यप्यन्यैः साधनैः मन्थति, तथापि " गायत्रेण त्वा च्छन्दसा " इत्यादिमन्त्रसामर्थ्येन छन्दोभिरेव साधनैर्मन्थनं कृतवान् भवतीत्यर्थः । अस्त्वेवम्, छन्दसां किं फलं, जातमित्यस्या आशङ्कायाः फलं वक्ष्यति—छन्दांस्येवैतद्यज्ञमन्वायातयतीति । छन्दसामनुप्रवेशनं न केवलं छन्दोलिङ्गकैर्मन्त्रैर्मन्थनाद् भवति, अपि तु तस्मिन् काले होत्रा छन्दसामनुवचनादपि भवतीत्याह—छन्दांसि मथ्यमानायान्वाहेति । होतेति शेषः । नियमेनानुप्रवेशे दृष्टान्तः—यथाऽमुमादित्यमिति । ' रश्मयः ' अन्वायत्ता इति शेषः । प्रह्रियमाणायेत्यनुप्रहरन्निति[3] । ' प्रह्रियमाणाय ' आहवनीये प्रक्षिप्यमाणाय, अनुब्रूहीत्यनुषज्यते ॥ २३ ॥

समन्त्रकमनुप्रहरणं विधत्ते—सोऽनुप्रहरतीति[4] । " भवतं नः "—इत्यादिमन्त्रस्यायमर्थः । हे आहवनीयनिर्मन्थ्यौ उभावग्नी ! ' नः ' अस्माकं , ' समनसौ ' अस्मदभिमतप्रदानविषये समानमनस्कौ ' भवतम् ' । अथवा परस्परं कलहमकृत्वा समनसौ भवतम् । ' समौकसौ ' समानस्थानौ, ' अरेपसौ ' अपापौ । एवम्भूतौ युवां ' यज्ञं ' मदीयम् ' मा हिंसिष्टम् ' । तथा ' यज्ञपतिं ' यजमानं च मा हिंसिष्टम् । हे ' जातवेदसौ ' जातप्रज्ञौ ! युवाम् ' अद्य ' ' नः ' अस्माकम् ' शिवौ ' सुखकरौ ' भवतम् ' । मन्त्रस्य तात्पर्यमाह—शान्तिमेवाभ्यामेतद्वदतीति । ' एतत् ' मन्त्रवचनम् ' आभ्यांम् ' अपेक्षिताम् ' शान्तिमेव ' ' वदति ' नान्यमर्थमित्यर्थः । अत्र शान्तेः कः प्रसङ्ग इति तत्राह—यथा नान्योऽन्यमिति ॥ २४ ॥

---

१—मंथति गायत्रेणेति प्रतिमंत्रं त्रिः प्रदक्षिणम् । का. श्रौ. सू. ५ । २७ । २—जाते जातायेति । का. श्रौ. सू. ५ । २८ ३—प्रह्रियमाणायेति प्रास्यन् । का. श्रौ. सू. ५ । २९ । ४—भवतन्न इति प्रास्यति । का. श्रौ. सू. ५ । ३० ।

( मु ) अथ स्रुवेणोपहत्याज्यम् । ( म ) अग्निमभिजुहोत्यग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रोऽअभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यँ सदमप्रयुच्छन्त्स्वाहेत्याहुत्यै वा ऽएतमजीजनत तमेतयाऽऽहुत्याऽप्रैषीत्तस्मादेवमभिजुहोति ॥ २५ ॥

तदिडान्तं भवति । नानुयाजान्यजन्ति शिरो वै यज्ञस्यातिथ्यं पूर्वार्धो वै शिरः पूर्वार्धमेवैतद्यज्ञस्याभिसँस्करोति स यद्धानुयाजान्यजेद्यथा शीर्षतः पर्याहृत्य पादौ प्रतिदध्यादेवं तत्तस्मादिडान्तं भवति नानुयाजान्यजन्ति ॥ २६

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥३॥२॥ [ ४।१ ] ॥

---

अथ स्रुवेणोपहत्याज्यम्, अग्निमभिजुहोति—" अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रोऽअभिशस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यं सदमप्रयुच्छन्त्स्वाहा"—( वा. सं. ५।४ ) इति । आहुत्यै वाऽएतमजीजनत । तमेतयाऽऽहुत्याऽप्रैषीत् । तस्मादेवमभिजुहोति ॥

तदिडान्तं भवति । नानुयाजान्यजन्ति । शिरो वै यज्ञस्यातिथ्यम् । पूर्वार्द्धो वै शिरः । पूर्वार्धमेवैतद्यज्ञस्याभिसंस्करोति । स यद्धानुयाजान् यजेत्—यथा शीर्षतः पर्याहृत्य पादौ प्रतिदध्यात्—एवं तत् । तस्मादिडान्तं भवति । नानुयाजान् यजन्ति ॥ २६ ॥ इत्यातिथ्येष्टिः ॥

---

अनुप्रहृते अग्नौ समन्त्रकं होमं विधत्ते—अथ स्रुवेणेति[1] । 'उपहत्य' अवदाय 'अग्निमभि' प्रहृत्य अग्नेरुपरि जुहुयात् । मन्त्रस्यायमर्थः । 'अग्नौ' आहवनीये 'अग्निः' निर्मथितः प्रविष्टः सन् 'चरति' इतस्ततो ज्वालाभिः सञ्चरति । कीदृशः ? 'ऋषीणां पुत्रः' मन्त्रेणोत्पद्यमानत्वात् । 'अभिशस्तिपावा' अभिशस्तेर्निन्दातः सकाशात् पाता । "आतो मनिन्"—( पा. सू. ३ । २ । ७४ ) इति वनिप् । 'सः' तादृशः त्वं 'नः' अस्मदर्थं इह 'हव्यम्' हविः 'सुयज' शोभनेन यागेन यज, सङ्गमयेत्यर्थः । केभ्यः ? 'देवेभ्यः' । कदा ? 'सदं' सदा, सर्वदा । 'अप्रयुच्छन्' अप्रमाद्यन् उद्दिष्टेषु देवेषु कमप्यपरित्यज्येत्यर्थः । 'स्वाहा' इदं द्रव्यं स्वाहुतमस्तु । आहुत्यै वा एतमिति । 'अजीजनत' उदपादयत्, अध्वर्युः; 'अप्रैषीत्' तर्पितवान् भवति ॥ २५ ॥

प्रकृतदर्शपूर्णमासेष्टिवत्समापनप्रसक्तावाह—तदिडान्तं भवतीति[2] । अर्थसिद्धेऽप्युत्तराङ्गनिषेधे पुनर्नित्यानुवादतया दार्ढ्यायानुवदति—नानुयाजानिति । इडान्तत्वं प्रशंसति—शिरो वै यज्ञस्यातिथ्यमिति । उत्तराङ्गजातस्यानुष्ठानं दोषोपन्यासेन समर्थयते—स यद्धानुयाजान् यजेदिति । 'यथा' कश्चित् 'शीर्षतः' शीर्ष्णि, सार्वविभक्तिकस्तसिः ( पा. सू. ५ । ३ । १४ ) । 'पादौ' पर्याहृत्य 'प्रतिदध्यात्' 'एवं तत्' अनुयाजाद्यङ्गजातमनुष्ठितं सद् भवति आतिथ्यस्य शिरस्त्वात् तस्मादित्युपसंहारः ॥ २६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥ ( ३–४–१ )

---

१–अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेण । का. श्रौ. सू. ५ । ३१ । २–इडांतं भवति । का. श्रौ. सू. ८ । ३१ ।

आतिथ्येन वै देवा ऽइष्ट्वा । तान्त्समुदविन्दत्ते चतुर्धा व्यद्रवन्नन्योऽन्यस्य श्रियाऽअतिष्ठमाना ऽअग्निर्वसुभिः सोमो रुद्रैर्वरुणऽआदित्यैरिन्द्रो मरुद्भिर्बृहस्पतिर्विश्वैर्देवैरित्यु हैकऽआहुरेते ह त्वेव ते विश्वे देवा ये ते चतुर्धा व्यद्रवंस्तान्विद्रुतानसुररक्षसान्यनुव्यवेयुः ॥ १ ॥

(स्ते)तेऽविदुः। पापीयाꣳसो वै भवामोऽसुररक्षसानि वै नोऽनुव्यवागुर्द्विषद्भ्यो वै रध्यामो हन्त संजानामहाऽएकस्य श्रियै तिष्ठामहाऽइति तऽइन्द्रस्य श्रिया ऽअतिष्ठन्त तस्मादाहुरिन्द्रः, सर्वा देवताऽइन्द्रश्रेष्ठा देवा इति ॥२॥

---

## अथ प्रवर्ग्यकर्मणि तानूनप्त्रम् ।

आतिथ्येन वै देवा इष्ट्वा, तान्त्समदविन्दत् । ते चतुर्धा व्यद्रवन् अन्योऽन्यस्य श्रियाऽअतिष्ठमानाः। अग्निर्वसुभिः, सोमो रुद्रैः, वरुण आदित्यैः, इन्द्रो मरुद्भिः । बृहस्पतिर्विश्वैर्देवैः—इत्यु हैकऽआहुः । एते ह त्वेव ते विश्वे देवाः—ये ते चतुर्धा व्यद्रवन् । तान्विद्रुतानसुररक्षसान्यनुव्यवेयुः ॥ १ ॥

तेऽविदुः—पापीयांसो वै भवामः । असुररक्षसानि वै नोऽनुव्यवागुः । द्विषद्भ्यो वै रध्यामः । हन्त संजानामहै । एकस्य श्रियै तिष्ठामहाऽइति । तऽइन्द्रस्य श्रियाऽअतिष्ठन्त । तस्मादाहुः—इन्द्रः सर्वा देवताः, इन्द्रश्रेष्ठा देवा इति ॥ २ ॥

---

अथ तानूनप्त्रं विधातुमाख्यायिकामाह—आतिथ्येन वै देवा इष्ट्वा, तान्त्समदविन्ददित्यादिना । पुरा किल देवाः ' आतिथ्येनेष्ट्वा व्यद्रवन् ' इति सम्बन्धः। विद्रवणे कः प्रसङ्गः? इति तं दर्शयति—तान्त्समदविन्ददिति । तस्मिन् समये ' तान् ' देवान् ' समत् ' कलहः ' अविन्दत् ' प्राप्तवान् । समच्छब्दः संग्रामवाची । " सङ्गे समत्सु वृत्रहा" (ऋ. सं. १०।१३३।१।) "येनासमत्सु सासहः" ( वा.सं. १९—३९ ) इत्यादौ समच्छब्दः सङ्ग्रामे प्रसिद्धः । ते देवाः ' चतुर्द्धा ' 'व्यद्रवन् ' पृथग्भूताः । किमर्थम् ? 'अन्योऽन्यस्य श्रिया अतिष्ठमानाः' ' श्रियै ' ज्योतिष्टोमफलरूपायै आत्मनोऽभिप्रायमप्रकाशयन्तः तामसहमाना इत्यर्थः । " प्रकाशनस्थेयाख्ययोश्च " ( पा. सू. १ । ३ । २३ ) इति तिष्ठतेरात्मनेपदम् । " श्लाघह्नुङ् " ( पा. सू. १।४।३४ ) इति श्रिया ज्ञापयितुमिष्टत्वाच्चतुर्थी । विद्रवणप्रकारं विभज्य दर्शयति—अग्निर्वसुभिरित्यादि । शाखान्तरप्रसिद्धं ( तै. सं. ६ । २ । २ । ) पञ्चमं गणमुदाहृत्य सोपपत्तिकं पराचष्टे—बृहस्पतिर्विश्वैर्देवैरित्युहैक आहुरिति । तत्रोपपत्त्यभिधानम्—एते ह त्वेव ते विश्वे देवा ये ते चतुर्द्धा व्यद्रवन्निति । 'तान् विद्रुतान्' परस्परं विश्लिष्टान् असुरराक्षसाश्चायमवसर इति निश्चित्यानुप्राप्ताः ॥ १ ॥

तेऽविदुरिति। स्पष्टम् । 'असुररक्षसानि वै' 'नः' 'अनुव्यवागुः' अनुगताः । एतेर्लुङि गादेशः ( पा.सू.२। ४।४५ ) । 'द्विषद्भ्यो वै रध्यामः' रध्यतिर्वशगमनकर्मा, ( निरु.६।६।४) वशं प्राप्ता इत्यर्थः । हन्त सञ्जानामहा इति । शत्रुजयोपायपरिज्ञानहर्षद्योतनार्थो 'हन्त'—शब्दः । " अकर्मकाच्च" ( पा. सू. १।३।२९) इति सम्पूर्वस्य जानातेरात्मनेपदम् । सङ्गता भवेम, ऐकमत्यं प्राप्नुवामेत्यर्थः । तत्प्रकारमाह—एकस्य श्रियै तिष्ठामहा इति । त इन्द्रस्य श्रिया अतिष्ठन्तेत्यादि । स्पष्टम् ॥ २ ॥

तस्माद्‌ ह न स्वाऽऋतीयेरन् । ( न्यु ) य॒ऽएषां परस्तरामिव भवति स ऽएनाननुव्यवैति ते प्रियं द्विषतां कुर्वन्ति द्विषद्भ्यो रध्यन्ति तस्मान्नऽर्तीयेरन्त्स यो हैवं विद्वान्नऽर्तीयतेऽप्रियं द्विषतां करोति न द्विषद्भ्यो रध्यति तस्मान्नऽर्तीयेत ॥ ३ ॥

ते होचुः । ( ई ) हन्तेदं तथा करवामहै यथा न ऽइदमाप्रदिवमेवाजर्यमसदिति ॥ ४ ॥ [ शतम् १७०० ] ( अर्ध प्रपाठकः )

ते देवाः । ( ० ) जुष्टास्तनूः प्रियाणि धामानि सार्धꣳ समवददिरे ते होचुरेतेन नः स नानाऽसदेतेन विष्वङ्‌यो नऽ एतदतिक्रामादिति कस्योपद्रष्टुरिति तनूनप्तुरेव शाक्वरस्येति यो वाऽअयं पवतऽएष तनूनपाच्छाक्वरः सोऽयं प्रजानामुपद्रष्टा प्रविष्टस्ताविमौ प्राणोदानौ ॥ ५ ॥

---

तस्माद्‌ ह न स्वा ऋतीयेरन् । य एषां परस्तरामिव भवति—स एनाननुव्यवैति । ते प्रियं द्विषतां कुर्वन्ति । द्विषद्भ्यो रध्यन्ति । तस्मान्नऽर्तीयेरन् । स यो हैवं विद्वान्नऽर्तीयते । अप्रियं द्विषतां करोति । न द्विषद्भ्यो रध्यति । तस्मान्नऽर्तीयेत ॥ ३ ॥

ते होचुः—हन्तेदं तथा करवामहै—यथा न इदमाप्रदिवमेवाजर्यमसदिति ॥ ४ ॥

ते देवा जुष्टास्तनूः प्रियाणि धामानि सार्धं समवददिरे । ते होचुः—एतेन नः स नानाऽसत्, एतेन

---

तस्माद्‌ न स्वा ऋतीयेरन्निति । यस्माद् देवानां परविश्लेषात् शत्रूणामभिभवः प्राप्तः, 'तस्माद्‌ ह' तस्मात् खलु कारणात् । 'स्वाः' ज्ञातयः परस्परं न ऋतीयेरन् वैमत्येन विश्लेषं न कुर्युः । "ऋतेरीयङ्" ( पा. सू. ३ । १ । २८ ) । विश्लेषे को दोष इति तत्राह—य एषां परस्तरामिव भवतीति । 'यः' शत्रुः 'एषाम्' विश्लिष्टानाम् 'परस्तरामिव' अत्यन्तदूरदेशस्थो 'भवति' 'सः' 'एतान्' शत्रून् विश्लिष्टान् 'अनुव्यवैति' अनुप्रविशति' तस्मात् 'द्विषताम्' अवकाशप्रदानेन स्वयमेव 'प्रियं कुर्वन्ति,' स्वयं यद् 'द्विषद्भ्यः' शत्रुभ्यो 'रध्यन्ति' वशं प्राप्नुवन्ति 'तस्मात्' 'न ऋतीयेरन्' भेदं न गच्छेयुः । उक्तार्थस्य कश्चित्पुरुषार्थनियमं विधत्ते—स यो हैवं विद्वानिति । यः कश्चिदेवं वृत्तान्तं देवेषु मनुष्येषु च दृष्टं जानन् 'न ऋतीयते' भेदं न गच्छेत् अथवा परैरुत्पादितो, ज्ञातिभेद एवंविदि न प्रवर्तत इत्यर्थः । अत एव 'द्विषताम्' अपि 'अप्रियं करोति' तत्प्रवेशावकाशस्यासम्भवात् 'न द्विषद्भ्यः' 'रध्यति' वशं याति । 'तस्मात्' विद्वान् 'न ऋतीयेत' ॥ ३ ॥

प्रासङ्गिकमुक्त्वा प्रकृतमनुसरति—ते होचुर्हन्तेदं तथा करवामहै, यथा न इदमाप्रदिवमेवाजर्यमसदितीति । 'यथा' 'नः' 'इदम्' ऐकमत्यं कर्म 'आप्रदिवम् एव' द्युलोकावस्थित्यवसानम् 'अजर्यम्' । "अजर्यं संगतम्"—( पा. सू. ३ । १ । १०५ ) इत्यनेन निपात्यते, 'अविनाश्यम्' 'असत्' भवेत्, 'तथा करवामहै' 'इति' उक्तवन्तः ॥ ४ ॥

अनन्तरं—ते देवा इति । 'ते देवाः' 'जुष्टाः' प्रियभूताः 'तनूः' स्वस्वमूर्तीः । अस्य व्याख्यानम्—प्रियाणि धामानीति । 'प्रियाणि धामानि' अभिमतानि भोगायतनानि 'सार्द्धम्' एकत्र 'समवददिरे'

तस्मादाहुः । ( मु ) मनो देवा मनुष्यस्याजानन्तीति मनसा संकल्पयति तत्प्राणमपिपद्यते प्राणो वातं वातो देवेभ्य ऽआचष्टे यथा पुरुषस्य मनः ॥ ६ ॥

( स्तु ) तस्मादेतदृषिणाऽभ्यनूक्तम् । मनसा संकल्पयति तद्वातमपि गच्छति ॥ वातो देवेभ्य ऽआचष्टे यथा पुरुष ते मन ऽइति ॥ ७ ॥

ते देवाः । (०) जुष्टास्तनूः प्रियाणि धामानि सार्धꣳ समवददिरे ते होचुरेतेन नः स नानासदेतेन विष्वङ्यो न ऽएतदतिक्रामादिति तद्देवा ऽअप्ये-

---

विष्वङ्–यो न एतदतिक्रामादिति । कस्योपद्रष्टुरिति । तनूनप्तुरेव शाक्वरस्येति । यो वाऽअयं पवते–एष तनूनपाच्छाक्वरः । सोऽयं प्रजानामुपद्रष्टा प्रविष्टः । ताविमौ प्राणोदानौ ॥ ९ ॥

तस्मादाहुः–मनो देवा मनुष्यस्याजानन्तीति । मनसा संकल्पयति–तत् प्राणमपिपद्यते, प्राणो वातम्–वातो देवेभ्य आचष्टे-यथा पुरुषस्य मनः ॥ ६ ॥

तस्मादेतदृषिणाऽभ्यनूक्तम्–"मनसा संकल्पयति तद् वातमपि गच्छति । वातो देवेभ्य आचष्टे यथा पुरुष ते मनः "–( ऋ. सं. १२ । ४ । ४ ) इति ॥ ७ ॥

ते देवा जुष्टास्तनूः प्रियाणि धामानि सार्द्धं समवददिरे । ते होचुः–एतेन नः स नानाऽसद्, एतेन

---

विभज्य स्थापितवन्तः । तस्मिन् काले एवमब्रुवन् ' एतेन ' स्थापितेन शरीरेण ' नः ' अस्माकं मध्ये ' सः ' समयातिक्रमकारी ' नाना ' ' असत् ' विना भवेत् । एतदेव व्याचष्टे--एतेन विष्वङ्ङिति । ' विष्वङ् ' सर्वतो भवेत् विशीर्णो भवत्वित्यर्थः । तच्छब्दार्थमाह–यो न एतदतिक्रामादिति । ' एतत् ' सङ्केतकर्म ' अतिक्रामात् ' अतिक्रमेत् । कस्योपद्रष्टुरिति । ' उपद्रष्टा ' साक्षी, ' कस्य ? ' तस्य पुरस्तादिदं भवेदिति शेषः । एवं प्रश्नमुपगम्य तैरेवेदमुत्तरमुक्तम्–तनूनप्तुरेव शाक्वरस्येति । तन्वो देहस्य न पातयिता रक्षको देवः ' तनूनप्ता ' ( ऐ. ब्रा. १ । ४ । ७ । ) ( आ. श्रौ. सू. ११ । १ । १–३ ) । अथवा सर्वतनूरात्मा प्रजापतिः तस्याकाशः पुत्रः, तत्पुत्रो वायुरिति सः ' तनूनप्ता ' स च ' शाक्वरः ' शक्तः सर्वं कर्तुम् । तस्य पुरस्तादित्यर्थः । सः कः ? इति, तं विशिनष्टि–यो वा अयं पवत इति । ' योऽयम् ' ' पवते ' गच्छति, वायुरित्यर्थः । बाह्यस्य वायोः पुरुषचित्तद्रष्टृत्वं कथं घटते ? इति, तत्राह–योऽयं प्रजानामुपद्रष्टा प्रविष्ट इति । प्रविष्टस्य कथं नोपलभ्यतेति तत्राह--ताविमौ प्राणोदानाविति । ' इमौ ' प्रसिद्धौ यौ ' प्राणोदानौ ' ' तौ ' एव स इत्यर्थः ॥ ९ ॥

उक्तेऽर्थे लौकिकवचनं प्रमाणयति–तस्मादाहुर्मनो देवा मनुष्यस्याजानन्तीति । दूरस्थानां देवानां कथं मनुष्यचित्तपरिज्ञानमित्याशङ्क्य तद्द्वारद्वारिकयेति दर्शयति–मनसा सङ्कल्पयति, तत्प्राणमपिपद्यत इत्यादि । प्राणप्रज्ञयोः परस्पराविनाभावान्मनसा सङ्कल्पितं प्राणं प्राप्नोति । बाह्यवायोरिव शरीरप्रवेशेन प्राणत्वात् " प्राणो वातः " इत्युक्तम् । अपिपद्यते सङ्कल्पितार्थविशिष्टः सन्नेवेति भावः । स च ' वातः ' सर्वत्राप्रतिहतगतित्वात् देवेभ्यः आचष्टे, यथा पुरुषस्य मनः वर्तते । पुण्ये पापे वा वर्तते, तमनतिवृत्त्यैवाचष्ट इत्यर्थः ॥ ६ ॥

उक्तेऽर्थे मन्त्रं प्रमाणयति–तस्मादेतदिति । मनसा सङ्कल्पयति, तद्वातमपि गच्छतीत्यादि । स्पष्टोऽर्थः ॥ ७ ॥

विशेषाभिधानाय पूर्वोक्तं तानूनप्त्रमनुवदति–ते देवा जुष्टास्तनूरित्यादिना । तद्देवा इति । ' तत् '

तर्हि नातिक्रामन्ति के हि स्युर्यदतिक्रामेयुरनृतꣳ हि व्वदेयुरेकꣳ ह वै देवा व्व्रतं चरन्ति सत्यमेव तस्मादेषां जितमनपजय्यं तस्माद्यश ऽएवꣳ ह वाऽअस्य जितमनपजय्यमेवं यशो भवति य एवं विद्वान्त्सत्यं व्वदति तदेतत्तानूनप्त्रं निदानेन ॥ ८ ॥

ते देवाः । (०) जुष्टास्तनूः प्रियाणि धामानि सार्धꣳ समवदन्दिरे- ऽथैतऽआज्यान्येव गृह्णाना जुष्टास्तनूः प्रियाणि धामानि सार्धꣳ समवद्यन्ते तस्माद् ह न सर्वेणेव समभ्यवेयान्नेन्मे जुष्टास्तन्वः प्रियाणि धामानि सार्धꣳ समभ्यवायानिति येनो ह समभ्यवेयान्नास्मै द्रुह्येदिदꣳ ह्याहुर्न सतानूनप्त्रिणे द्रोग्धव्यमिति ॥ ९ ॥

---

विष्वङ्—यो न एतदतिक्रामादिति । तद्देवा अप्येतर्हि नातिक्रामन्ति । के हि स्युर्यदतिक्रामेयुः । अनृतं हि वदेयुः । एकं ह वै देवा व्रतं चरन्ति—सत्यमेव । तस्मादेषां जितमनपजय्यम्, तस्माद्यशः । एवं ह वाऽअस्य जितमनपजय्यम्, एवं यशो भवति—य एवं विद्वान्त्सत्यं वदति । तदेतत् तानूनप्त्रं निदानेन ॥ ८ ॥

ते देवा जुष्टास्तनूः, प्रियाणि धामानि, सार्धं समवदन्दिरे । अथैतऽआज्यान्येव गृह्णाना जुष्टास्तनूः प्रियाणि धामानि सार्धं समवद्यन्ते । तस्माद्ध ह न सर्वेणेव समभ्यवेयात् । नेन्मे जुष्टास्तन्वः प्रियाणि धामानि सार्धं समभ्यवायानिति । येनो ह समभ्यवेयात्—नास्मै द्रुह्येत् । इदं ह्याहुः—न सतानूनप्त्रिणे द्रोग्धव्यमिति ॥ ९ ॥

---

" एतेन नः स नानाऽसत् "—इत्युक्तमित्यर्थः । 'अप्येतर्हि' इदानीमपि । अतिक्रमे बाधमाह—के हि स्युरिति । यद्यतिक्रामेयुः तर्हि के स्युः । उपपत्तिमाह—अनृतं हि वदेयुरिति । देवत्वमतिहाय अनृतवदनात् कुत्सिता मनुष्या भवन्तीत्यर्थः । देवानां सत्यवादित्वनियमे सति ( ऐ. ब्रा. १ । १ । ६ ) अनृतं हीत्ययं दोषः स्यात् । स एव तेषु कुत इत्यत आह—एकं ह वै देवा व्रतमिति । सत्यवादफलमाह—तस्मादेषां जितमनपजय्यमिति । यत् ' अनपजय्यं ' जेतुमशक्यम् ( पा.सू. ६ । १ । ८१ ) तत् ' जितम् ' भवति । तस्माद् यश इति । प्राप्नुवन्तीति शेषः । अथवा यशोरूपा एव भवन्तीत्यर्थः । " एवं ह "—इत्यादिना उक्तार्थज्ञप्रशंसा—तदेतत् तानूनप्त्रं निदानेनेति । स्वस्वशरीरसमवदानपूर्वकं शपथकर्म तानूनप्त्रम् ( ऐ.ब्रा. १।४।७ ) । ' तत् ' इदानीमनुष्ठीयमानं ' तानूनप्त्रम् ' आज्यग्रहणस्पर्शनात्मकं कथमेतद् भवेत् ? तत्राह—' निदानेन ' कारणेनेत्यर्थः ॥ ८ ॥

निदानमेव दर्शयति—ते देवा इत्यादिना । देवा आज्यानि गृह्णाना एव स्वतनूरपि आज्येन ' सार्द्धं ' ' समवदन्दिरे ' अत इदानीन्तनैरपि तानूनप्त्रमेवं समवदातव्यमित्यनुमीयते ॥

प्रसङ्गात् किञ्चित् पुरुषार्थमाह—तस्माद्ध ह न सर्वेणैवेति । ' सर्वेण ' बहुजनेन सह समवगतिं शपथपूर्वकं समयं ' न ' कुर्यात् । तद्दोषमाह—नेन्मे जुष्टास्तन्व इति । ' मे ' मम ' जुष्टाः ' अत्यन्तं प्रियभूताः

---

१—' तदानीम् ' इ० क० पा० ।

(त्य) अथातो गृह्णात्येव । (वा) आपतये त्वा परिपतये गृह्णामीति यो वाऽअयं पवतऽएष आ च पतति परि च पतत्येतस्माऽउ हि गृह्णाति तस्मादाहापतये त्वा परिपतये गृह्णामीति ॥ १० ॥

तनूनप्त्रे शाक्करायेति । यो वाऽअयं पवतऽएष तनूनपाच्छाक्करऽएतस्माऽउ हि गृह्णाति तस्मादाह तनूनप्त्रे शाक्करायेति ॥ ११ ॥

शक्मनऽओजिष्ठायेति । (त्ये) एष वै शक्मौजिष्ठऽएतस्माऽउ हि गृह्णाति तस्मादाह शक्मनऽओजिष्ठायेति ॥ १२ ॥

---

अथातो गृह्णात्येव—" आपतये त्वा परिपतये गृह्णामि "–( वा. सं. ५ । ५ ) इति । यो वाऽअयं पवते–एष आ च पतति, परि च पतति । एतस्माऽउ हि गृह्णाति । तस्मादाह–आपतये त्वा परिपतये गृह्णामीति ॥ १० ॥

" तनूनप्त्रे शाक्कराय "–( वा. सं. ५ । ५ ) इति । यो वाऽअयं पवते–एष तनूनपात् शाक्करः । एतस्माऽउ हि गृह्णाति । तस्मादाह–तनूनप्त्रे शाक्करायेति ॥ ११ ॥

" शक्मनऽओजिष्ठाय "–( वा. सं. ५ । ५ ) इति । एष वै शक्मौजिष्ठः । एतस्माऽउ हि गृह्णाति । तस्मादाह–शक्मनऽओजिष्ठायेति ॥ १२ ॥

---

' तन्वः ' प्रियधामभूताः सर्वैः साकम् ' नेत् समभ्यवायान् ' नैव सङ्गता भवेयुरिति । 'नेत्' परिभये । अभ्यवपूर्वादेतेर्लेट् ( पा. सू. ३ । ४ । ७ ) । " अथापि नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये " ( निरु. १ । ३ । ५ ) इति हि निरुक्तम् । 'येनो ह' येनापि खलु सह अशक्यत्वात् ' अभ्यवेयात् ' तस्मै द्रोहं न कुर्यात् । तथा च लौकिका अपि 'इदम्' ' आहुः ' । किम् ? इति–' सतानूनप्त्रिणे ' सम्भूयशपथकारिणे ' न द्रोग्धव्यम् इति ' द्रोहो न कर्तव्य इति । " क्रुधद्रुहेर्ष्या–" ( पा. सू. १ । ४ । ३७ ) । इत्यादिना चतुर्थी ॥ ९ ॥

अथ तानूनप्त्रार्थमाज्यग्रहणं समन्त्रकं विधत्ते–अथातो गृह्णात्येवापतये त्वा परिपतय इति । अत्र गृह्णामीत्यन्त एको मन्त्रः । तनूनप्त्रे शाक्करायेति द्वितीयः । शक्मन ओजिष्ठायेति तृतीयः । अस्मिन् पक्षे 'गृह्णामि'–इत्ययमुत्तरयोरपि मन्त्रयोरनुषज्यते । तत्र स्रुवेण सर्वस्य ध्रौवाज्यस्यैकवारं ग्रहणम्, स्थाल्याः स्रुवेण द्विर्ग्रहणम् । अथवा "तनूनप्त्रे शाक्कराय"–"शक्मन ओजिष्ठाय" । इत्येतौ पूर्वमन्त्रशेषौ । तथा सत्येक एव मन्त्रः ॥

अत्र ब्राह्मणम्–"अथैत आज्यान्येव गृह्णाना जुष्टास्तनूः " इति प्रत्येकमाज्यग्रहणस्य श्रुतत्वात् सर्वे गृह्णीयुः । तथा च कात्यायनः–"ध्रौवं व्रतप्रदाने गृह्णात्यापतय इति, द्विश्च स्थाल्याः स्रुवेण तनूनप्त्रे शाक्करायेति, शक्मन ओजिष्ठायेति, गृह्णामीति सर्वत्र साकाङ्क्षत्वात् पूर्वशेषौ वोत्तरौ" ( का. श्रौ.सू. ८।१४–१७ ) । " प्रतिपुरुषं च ग्रहणमाज्यानि गृह्णाना इति श्रुतेः " इति ॥

मन्त्रस्यायमर्थः–' आपतये ' आ अभिमुखं पतत्यागच्छतीति ' आपतिः', परिपततीति ' परिपतिः ' वायुः आज्य ! त्वां तस्मै ' गृह्णामि ' ॥ १० ॥

तनूनप्त्र इति । उक्तार्थौ तनूनप्तृशाक्करशब्दौ ( श. प. ब्रा. ३। ४ । २ । ९ ) । 'शक्मने' सर्वत्र शक्ताय, ' ओजिष्ठाय ' अतिशयेन बलवते । " यो वा अयं पवते "–इत्यादि ब्राह्मणं स्पष्टम् ॥ ११ ॥ १२ ॥

( त्य ) अथातः समवमृशन्त्येव । ( वै ) एतद्ध देवा भूयः सुमामिरऽइत्थं नुः सोऽमुथासद्यो न ऽएतदतिक्रामादिति तुथोऽएुवैतुऽएतत्सुममन्तऽइत्थं नुः सोऽमुथासद्यो न ऽएतुदतिक्रामादिति ॥ १३ ॥

ते समवमृशन्ति । ( न्त्यु ) अुनाधृष्टमस्यनाधृष्यं देवुनामोज ऽइत्युनाधृष्टा हि देवा ऽअुसन्ननाधृष्युाः सहसुन्तः समानं व्वुदन्तः समानुं दध्राणा देवुनामोज इति देवुानां वै जुष्टास्तुन्वः प्रियाणि धामान्युनभिशस्त्यभिशस्तिपा ऽअनभिशस्तेन्यमितिं सुर्व्वा॑ᳪ॑ हि देवा ऽअभिशस्ति तीर्णा ऽअुञ्जसा सत्यमुपगेषमिति सत्युं व्वदानि मेदमुतिक्रमिषमित्यैवैतुदाह स्विते माऽधा ऽइति स्विते हि तुद्देवा ऽआत्मानमुदधत युत्सत्यमुवदन्युत्सत्यमुकुर्व्वंस्तुस्मादाह स्विते माऽधा इति ॥ १४ ॥

---

अथातः समवमृशन्त्येव । एतद्ध देवा भूयः समामिरे—इत्थं नः सोऽमुथासद्—यो न एतदतिक्रामादिति । तथो एवैत एतत्सममन्ते—इत्थं नः सोऽमुथासत्—यो न एतदतिक्रामादिति ॥ १३ ॥

ते समवमृशन्ति—" अनाधृष्टमस्यनाधृष्यं देवानामोजः "—( वा० सं० ५ । ५ ) इति । अनाधृष्टा हि देवा आसन्, अनाधृष्याः, सहसन्तः, समानं वदन्तः, समानं दध्राणाः । देवानामोज इति । देवानां वै जुष्टास्तन्वः प्रियाणि धामानि । " अनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यम् "—( वा० सं० ५ । ५ ) इति । सर्वा हि देवा अभिशस्ति तीर्णाः । " अञ्जसा सत्यमुपगेषम् "—( वा० सं० ५ । ५ ) इति । सत्यं वदानि, मेदमतिक्रमिषमित्येवैतदाह । " स्विते माऽधाः "—( वा० सं० ५ । ५ ) इति । स्विते हि तद्देवा आत्मानमदधत—यत् सत्यमवदन्, यत् सत्यमकुर्वन्—तस्मादाह—स्विते माऽधा इति ॥ १४ ॥

---

गृहीतस्याज्यस्य सर्वैरवमर्शनं विधत्ते—अथातः समवमृशन्त्येवेति[१] । स्पर्शकाले देवैः कृतमन्यसङ्केतं दर्शयति—एतद्ध वै देवा भूयः समामिर इति । 'एतद्' वक्ष्यमाणं 'भूयः समामिरे' पूर्वोक्तसंकेतमन्तरेण पुनस्सङ्गता अभवन् । " अम गत्यादिषु "—( धा० पा० भ्वा० प० ४६६ ) 'यः' 'नः' अस्माकं मध्ये 'एतत्' 'अतिक्रामात्' अतिक्रामेत् । 'सः' 'इत्थं' देवभूत एव सन् 'अमुथा' अन्यथा प्रकारेण 'असत्' देवभावाद् विनश्येदित्यर्थः । न केवलं देवानामेवायं सङ्केतः, किन्त्विदानीन्तनानुष्ठातॄणामित्याह—तथो एवैत इति ॥ १३ ॥

ते समवमृशन्तीति । अवमर्शनमन्त्रस्यायमर्थः । हे आज्य ! त्वं पूर्वापरैः 'अनाधृष्टम्' आधर्षमप्राप्तं भवसि । तथा अनाधर्षणीयमप्यसि । 'देवानाम्' 'ओजः' बलरूपमसि । 'अनभिशस्ति' निन्दकरहितम् । कर्तरि क्तिच् ( पा. सू. ३ । ३ । १७४ ) । न केवलं तादृगेव, किन्तु 'अभिशस्तिपाः' । लिङ्गव्यत्ययः ( पा. सू. ३ । १ । ८५ ) । अभिशस्तेर्निन्दायाः सकाशात् पातृ असि । 'अनभिशस्तेन्यम्' अर्हि-

---

१—दक्षिणस्यां वेदिश्रोणौ निधायावमृशंत्यृत्विजो यजमानश्चानाधृष्टमिति । का. श्रौ. सू. ८ । १९ ।

(त्यु) अथ यास्तद्देवाः । (०) जुष्टास्तनूः प्रियाणि धामानि सार्द्धᳫँसमवदिरे तदिन्द्रे सुंन्यदधतैष वाऽइन्द्रो य एष तपति न ह वाऽएषोऽग्रे ततापु यथा हैवेदमन्यत्कृष्णमेवᳫँ हैवास तेनैवैतद्वीर्येण तपति तस्माद्यदि बहवो दीक्षेरन्गृहपतयऽएव व्रतमभ्युत्सिच्य प्रयच्छेयुः स हि तेषामिन्द्रभाजनं भवति यद्यु दक्षिणावता दीक्षेत यजमानायैव व्रतमभ्युत्सिच्य प्रयच्छेयुरिदᳫँ ह्याहुरिन्द्रो यजमान इति ॥ १५ ॥

अथ यास्तद्देवा जुष्टास्तनूः प्रियाणि धामानि सार्धं समवददिरे—तदिन्द्रे संन्यदधत । एष वाऽइन्द्रो—य एष तपति । न ह वाऽएषोऽग्रे ततापु—यथा हैवेदमन्यत्कृष्णमेवं हैवास । तेनैवैतद्वीर्येण तपति । तस्माद्यदि बहवो दीक्षेरन्—गृहपतय एव व्रतमभ्युत्सिच्य प्रयच्छेयुः । स हि तेषामिन्द्रभाजनं भवति । यद्यु दक्षिणावता दीक्षेत—यजमानायैव व्रतमभ्युत्सिच्य प्रयच्छेयुः । इदं ह्याहुः—इन्द्रो यजमान इति ॥ १५ ॥

स्यम् । कृत्यार्थे केन्य—प्रत्ययः[1] न ( पा. सू. ३ । ४ । १४ ) । अथवा अनभिशस्तस्य स्वर्गादेः प्रदातृत्वेन सम्बन्ध्यसि । यत एवं महानुभावं त्वाम् ' अञ्जसा ' प्रगुणेन मुख्यया वृत्त्या ' सत्यं ' यथार्थस्वरूपम् ' उपगेषम् ' उपगच्छेयम् । " गाङ् गतौ "—( धा. पा. भा. आ. ९७९ ) इत्यस्य "लिङर्थे लेट् "—( पा० सू० ३ । ४ । ७ ) " सिब्बहुलम् "—( पा० सू० ३ । १ । ३४ ) इति सिप्त्वं च । तेन सत्येन ' स्विते ' सुष्ठु प्राप्तौ ' मा ' माम् ' अधाः ' धारय ॥

मन्त्रं विभज्य व्याचष्टे—**अनाधृष्टा हि देवा आसन्ननाधृष्या** इति । पूर्वं कैरप्यनाधृष्टा अपि देवाः परस्परापरागेणाधर्मविषया अपि सन्तः, पश्चात् सङ्केतपूर्वकेणाज्यग्रहणेन स्वशरीराण्यवमर्शन्तः पुनः ' अनाधृष्या आसन् ' अतस्त्वमनाधृष्टानां पुनरनाधर्षहेतुत्वात् तद्रूपमसि । " सहसन्तः "—इत्यादि पदत्रयमनाधृष्यत्वे हेतुत्वेन निर्दिष्टम् । " सहसन्तः "—परस्परैकमत्येन वर्तमानाः; तथा ' समानं वदन्तः ' यदेको ब्रूते, तदन्येऽप्यनुकुर्वन्तः ' समानम् ' एकमेव कार्यं मनसि ' दध्राणाः ' धारयमाणाः । द्वितीयभागस्य तात्पर्यमाह—**देवानामोज** इति । ओजोरूपाणां प्रियधाम्नामाज्ये स्थापनात् । अनभिशस्त्यादिपदत्रयस्यैकतात्पर्यतामाह—**सर्वा हि देवा अभिशस्तिं तीर्णा** इति । ' सत्यमुपगेषम् '—इत्येतस्य सत्यप्राप्तेः प्रतिज्ञानरूपत्वेन वागात्मकत्वात् ' सत्यं वदानि '—इत्येवंरूपा सत्यप्राप्तिरुक्ता । तदेव सत्यं ' मेदम् '—इत्यत्र ' इदं '—शब्देन निर्दिष्टम् । ' स्विते माऽधाः '—इत्यत्र ' स्वित ' शब्दार्थमाह—**स्विते हि तद्देवा** इति । सुष्ठु प्राप्तव्यं स्वितम्; तदत्र सत्यमेव वदानीति प्रतिज्ञापूर्वकं तदनुष्ठानमेवेत्यर्थः ॥ १४ ॥

तानूनप्त्रमाज्यं सर्वैः स्पृष्टमपि सद् यजमानायैव दातव्यमिति विधातुमाह[2]—**अथ यास्तद्देवा** इति । इन्द्रशब्दस्य विवक्षितमर्थमाह—**एष वा इन्द्रो य एष तपतीति** । इन्द्रेणैतत्प्राप्तौ कोऽतिशयो लब्ध इति तत्राह—**न ह वा एष** इति । तापकतया, न ततापेत्यर्थः; ' यथा ह एव ' ' इदम् ' इदानीं परिदृश्यमानं तपनम् ।

१—केन् प्रत्ययो नकारोपजनो यश्च । इ.पा. । २—अपराह्णे व्रतमिश्रं दीक्षिताय प्रयच्छति । बहुषु गृहपतये । का.श्रौ.सू. ८।२२।२३।

( त्यु ) अथ यास्तद्देवाः । ( ० ) जुष्टास्तनूः प्रियाणि धामानि सार्द्धꣳ समवददिरे तत्सार्धꣳ संजज्ञे तत्सामाभवत्तस्मादाहुः सत्यꣳ साम देवजꣳ सामेति ॥ १६ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ३ ॥ ३ ॥ [ ४. २. ]

आतिथ्येन वै देवा इष्ट्वा । तान्त्समुदविन्दत्ते तानूनप्त्रैः समशाम्यंस्त ऽएतस्य प्रायश्चित्तिमैच्छन्यदन्योऽन्यं पापमवदन्नाह पुराऽवभृथात्पुनर्दीक्षामवाकल्पयंस्त ऽएतामवान्तरां दीक्षामपश्यन् ॥ १ ॥

---

अथ यास्तद्देवा जुष्टास्तनूः प्रियाणि धामानि सार्द्धं समवददिरे, तत् सार्धं संजज्ञे । तत्सामाभवत् । तस्मादाहुः—सत्यं साम, देवजं सामेति ॥ १६ ॥

अथ प्रवर्ग्यकर्मण्यवान्तरदीक्षा ।

आतिथ्येन वै देवा इष्ट्वा, तान् समदविन्दत् । ते तानूनप्त्रैः समशाम्यन् । त एतस्य प्रायश्चित्तिमैच्छन्—यदन्योऽन्यं पापमवदन् । नाह पुराऽवभृथात् पुनर्दीक्षामवाकल्पयन् । त एतामवान्तरां दीक्षामपश्यन् ॥ १ ॥

---

तर्हि कथमास ? ' कृष्णम् एव ' कृष्णरूपमेव ' आस ' । तस्मात् ' तेनैव ' तानूनप्त्राज्यस्वीकारजनितेनैव ' वीर्येण ' दुर्द्धर्षः सन् ' तपति ' इत्यर्थः । " तस्माद् यदि बहवः " इत्यादि प्रकृतपर्यवसानवाक्यं स्पष्टम् । 'अभ्युत्सिच्य' उपरि तदाज्यमासिच्य । स हि तेषामिन्द्रभाजनं भवतीति । 'इन्द्रभाजनम् ' इन्द्रस्थानीयः । फलस्य साम्येऽपि गृहपतित्वेन वरणेन प्राधान्यादिन्द्रत्वम् । यद्यु दक्षिणावतेति । यदि तु दक्षिणायुक्तेनैकाहादिना सोमयागेन दीक्षितेत्यर्थः । स्पष्टमन्यत् ॥ १५ ॥

यजमानेन क्रियमाणस्य सामोपायस्य देवैः कृतं साम मूलमित्याह—अथ यास्तद्देवा जुष्टास्तनूरित्यादिना । ' तत् ' अवत्तं ' सार्द्धम् ' ' सञ्जज्ञे ' । तदाज्येन साकं प्रक्षिप्तशरीरकदम्बकम् संहतमेकमभूत्, ' तत् सामाभवत् ' देवानां सत्येनोत्पन्नत्वात् ' सत्यं देवजम् ' च ' साम ' ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥ ( ३ । ४ । २ ) ॥

अवान्तरदीक्षां विधातुमाह—आतिथ्येन वै देवा इष्ट्वा, तानिति । ' ते ' 'एतस्य' तानूनप्त्रस्य शपथात्मकस्य दोषपरिहाराय । तानूनप्त्रस्य निन्दितत्वमाह—यदन्योऽन्यं पापमवदन्निति । "सत्यं वदानि, मेदमतिक्रमिषम्" इत्येवंरूपमित्यर्थः । "नाह पुरा" इत्यनेन दोषपरिहारोपायाभाव उक्तः । स्वीकृताया दीक्षाया अवभृथपर्यन्तानुवर्तने सति प्रागतस्य पापवदनस्य परिहारो भवति, सा चानुवृत्तिर्न तैः कृतेत्यर्थः; मध्ये दीक्षापरित्यागादिति भावः । यद्वा स्वीकृताया दीक्षाया इदानीमप्यपरित्यागात् तन्मध्ये नूतनां ' दीक्षां ' ' पुनः ' ' न ' ' अवाकल्पयन्,' किन्तु प्रकृतदीक्षाया अविरोधिनीम् ' अवान्तरदीक्षाम् ' ' अपश्यन् ' ॥ १ ॥

(इयंस्ते) तेऽग्निनैव त्वुचं व्विपुल्याङ्क्ष्यन्त । तुपो व्वाऽअग्निस्तुपो दीक्षा तुदवान्तरां दीक्षामुपायंस्तद्यदवान्तरां दीक्षामुपायँस्तुस्मादवान्तरदीक्षा सन्तराुमङ्गुलीराुश्चन्त सन्तरां मेखलां पुर्यस्तामेवैनामेतुत्सतीं पुर्या- स्यन्त तुथोऽएवैषु एतद्यदुतः प्राचीनमव्रत्यं वा करोत्यव्रत्यं वा व्वदति तुस्यैवैतत्प्रायश्चित्तिं कुरुते ॥ २ ॥

सोऽग्निनैव त्वुचं व्विपुलयङ्क्ष्यते । तुपो व्वाऽअग्निस्तुपो दीक्षा तुदवान्तरां दीक्षामुपैति सन्तराुमङ्गुलीरुचते सन्तरां मेखलां पुर्यस्तामेवैनामेतुत्सतीं पुर्यस्यते प्रजामु हैव तुद्देवा उपायुन् ॥ ३ ॥

( युंस्ते ) तेऽग्निनैव त्वुचं व्विपुल्याङ्क्ष्यन्त । ( न्ता ) अग्निर्व्वै मिथुनुस्य कर्ता प्रजनयिता तुत्प्रजामुपायन्तसन्तराुमङ्गुलीराुश्चन्त सन्तरां मेखलां तुत्प्रजामात्मुन्नकुर्व्वत तुथो एवैषु ऽएतुत्प्रजामेवोपैति ॥ ४ ॥

---

तेऽग्निनैव त्वचं विपल्याङ्क्ष्यन्त । तपो वा अग्निः, तपो दीक्षा । तदवान्तरां दीक्षामुपायन् तद् यद- वान्तरां दीक्षामुपायन्—तस्मादवान्तरदीक्षा । सन्तरामंगुलीराश्चन्त, सन्तरां मेखलां पर्यस्तामेवैनामेत- त्सतीं पर्यास्यन्त । तथो एवैष एतद्—यदतः प्राचीनमव्रत्यं वा करोति, अव्रत्यं वा वदति । तस्यैवै- तत्प्रायश्चित्तिं कुरुते ॥ २ ॥

सोऽग्निनैव त्वचं विपल्यङ्क्ष्यते । तपो वा अग्निः, तपो दीक्षा । तदवान्तरां दीक्षामुपैति—सन्तरा- मङ्गुलीरचते, सन्तरां मेखलां पर्यस्तामेवैनामेतत्सतीं पर्यस्यते । प्रजामु हैव तद्देवा उपायन् ॥ ३ ॥

तेऽग्निनैव त्वचं विपल्याङ्क्ष्यन्त । अग्निर्वै मिथुनस्य कर्ता प्रजनयिता तत् प्रजामुपायन् । सन्तरा- मङ्गुलीराश्चन्त, सन्तरां मेखलाम् । तत्प्रजामात्मन्नकुर्वत । तथो एवैष एतत्प्रजामेवोपैति ॥ ४ ॥

---

अवान्तरदीक्षाकल्पनप्रकार उच्यते—तेऽग्निनैव त्वचामिति । ' विपल्याङ्क्ष्यन्त ' विविधं ' परि ' परितः ' आङ्क्ष्यन्त अवेष्टयन्; अग्निमेव त्वचमकुर्वन्नित्यर्थः । अग्नेस्त्वग्भावे कः सम्बन्ध इति, तत्रोच्यते—तपो वा अग्निरिति । तपनसाधनत्वात् अग्निः ' तपः ' ' दीक्षा ' तु क्लेशात्मकत्वादेव ' तपः ' । अवान्तरदीक्षां नाम निर्वचनेन प्रशंसति—तद्यदवान्तरामिति । सन्तरामित्यादि । ' सन्तरामाश्चन्त ' अतिशयेन, संश्लिष्टा अङ्गुलीरकुर्वन् । तथा मेखलाम् अपि पूर्वां शिथिलबद्धां पुनः संलग्नामकुर्वन् । तदेवाह—पर्यस्तामेवेति । ' पर्य- स्तामेव ' परितः क्षिप्तामेव । व्रतमर्हतीति ' व्रत्यम् ,' तद्विरोधि ' अव्रत्यं ' । ' तस्य ' ' एतत् ' अवान्तर- दीक्षाख्यं कर्म ' प्रायश्चित्तम् ' तस्य पापस्य निर्हरणमित्यर्थः ॥ २ ॥

यदर्थमाख्यायिकामुखेनावान्तरदीक्षोक्ता, तामिदानीं विधत्ते—सोऽग्निनैवेति । ' सः ' यजमानः। शिष्टं पूर्ववत्। अवान्तरदीक्षां प्रजासाधनत्वेन प्रशंसति—प्रजामु हैवेत्यादिना ॥ ३ ॥

तेऽग्निनैव त्वचमिति । अग्निर्वै मिथुनस्य कर्तेति । वधूवरयोर्युग्मीभावस्याग्निसव्यपेक्षत्वान्मिथुनकर्ताऽग्नि-

सोऽग्निनैव त्वचं विपल्यङ्गयते । ( तेऽग्नि ) अग्निर्वै मिथुनस्य कर्ता प्रजनयिता तत्प्रजामुपैति सन्तरामङ्गुलीरचते सन्तरां मेखलां तत्प्रजामात्मन्कुरुते ॥ ५ ॥

देवानामु ह स्म दीक्षितानाम् । यः समिद्धारो वा स्वाध्यायं वा विसृज्यते तं ह स्मेतरस्यैवेतरᳫं रूपेणेतरस्येतरमसुररक्षसानि जिघाᳫंसन्ति ते ह पापं वदन्त उपसमेयुरिति वै मां त्वमचिकीर्षीरिति माजिघाᳫंसीरित्यग्निर्हैव तथा नान्यमुवादाग्निं तथा नान्यः ॥ ६ ॥

( स्ते ) ते होचुः । ( र ) अपीत्थन्त्वामग्नेऽवादिषू ३ रिति नैवाहमन्यं न मामन्य इति ॥ ७ ॥

---

सोऽग्निनैव त्वचं विपल्यङ्गयते । अग्निर्वै मिथुनस्य कर्ता प्रजनयिता । तत् प्रजामुपैति । सन्तरामङ्गुलीरचते, सन्तरां मेखलाम् । तत्प्रजामात्मन कुरुते ॥ ५ ॥

देवानामु ह स्म दीक्षितानां यः समिद्धारो वा, स्वाध्यायं वा—विसृज्यते । तं ह स्मेतरस्यैवेतरं रूपेण—इतरस्येतरमसुररक्षांसि जिघांसन्ति । ते ह पापं वदन्त उपसमेयुः—इति वै मां त्वमचिकीर्षीः इति । मा जिघांसीरिति । अग्निर्हैव तथा नान्यमुवाद—अग्निं तथा नान्यः ॥ ६ ॥

ते होचुः—अपीत्थं त्वामग्नेऽवादिषूः ३ इति । नैवाहमन्यं न मामन्य इति ॥ ७ ॥

---

रुच्यते । सा प्रसिद्धिः ' वै '—शब्देनोक्ता । अशितपीतयोः शुक्रशोणितरूपेण परिणामस्य, पुनश्च देहाकारेण परिणामस्य चाग्न्यधीनत्वात् ' प्रजनयिता ' । अथवा कथम् ' अग्निर्मिथुनस्य कर्ता ' यतोऽसौ ' मिथुनस्य प्रजनयिता ' इति व्याख्यानव्याख्येयभावो द्रष्टव्यः । देवानां प्रजार्थत्वमुक्त्वा इदानीन्तनयजमानस्यापि तदर्थत्वमाह—तथो एवैष एतत्प्रजामेवोपैतीति । ' एतत् ' एतया अवान्तरदीक्षया ॥ ४ ॥ ५ ॥

अवान्तरदीक्षारूपेण समिदाधानं विधास्यते, तन्मन्त्रे " या तनूरियं सा मयि " इत्यादि वक्ष्यते, तदुपोद्धातत्वेनाख्यायिकामाह—देवानामु ह स्म दीक्षितानामित्यादिना । 'समिद्धारो वा' समिधं हरतीति ' समिद्धारः ' " हरतेरनुद्यमनेऽच् " ( पा. सू. ३ । २ । ८ ) इत्यत्रानुद्यमन इति पर्युदासात्तादृशोद्यमनस्य सम्भवात्सामान्येन प्राप्तः " कर्मण्यण् " ( पा. सू. ३ । २ । १ ) इत्यण् । स्वाध्यायं वा विसृजत इति । ' विसृजते ' नोच्चारयति कश्चित्[1] । ' तं ह ' समिदाहर्तारं वा ऋत्विजं वा मन्त्रोत्स्रष्टारं वा । उपलक्षणमेतत् । ऋत्विजां मध्ये यं कञ्चिन्न व्यापृतम्, तम् । ' इतरम् इतरस्य रूपेण '—' इतरम् इतरस्य रूपेण ' समिदाहर्तृरूपेण प्रवचनकर्तारम्, प्रवचनकर्तृरूपेण समिदाहर्तारमित्यर्थः । एवम् ' असुररक्षसानि ' असुराश्च रक्षांसि च ' जिघांसन्ति ' हन्तुमिच्छन्ति । तथा सति देवाः ' इति ' खलु ' मां त्वम् ' ' अचिकीर्षीः ' कर्तुमैच्छः ' इति ' । ' मा ' मां ' जिघांसीः ' हन्तुमैच्छः, ' इति ' । ' पापं वदन्तः ' ' उपसमेयुः ' अन्योऽन्यं प्राप्नुवन्ति । किमग्निरपि तादृग्विषयापन्नः ? नेत्याह—अग्निर्हैव तथा नान्यमिति । ' उवाद ' उदितवान् ॥ ६ ॥

ते होचुरिति । ' ते ' असुरैरभिभूता देवाः । ' अग्ने ! ' ' त्वामपि ' ' इत्थम् ' अनेन प्रकारेण अस्मा-

---

[1]—' विसृजते ' इति सायणसम्मतः पाठः ।

तेऽविदुः । ( र ) अयं वै नो विरक्षस्तमोऽस्यैव रूपमसाम तेन रक्षाᳪंस्यतिमोक्ष्यामहे तेन स्वर्गं लोकᳪं समश्नुविष्यामह इति तेऽग्नेरेव रूपमभवंस्तेन रक्षाᳪंस्यत्यमुच्यन्त तेन स्वर्गं लोकᳪं समाश्नुवत तथोऽएवैष ऽएतदग्नेरेव रूपं भवति तेन रक्षाᳪंस्यतिमुच्यते तेन स्वर्गं लोकᳪं समश्नुते स वै समिधमेवाभ्यादधदवान्तरदीक्षामुपैति ॥ ८ ॥

स समिधमभ्यादधाति । ( त्य ) अग्ने व्रतपास्त्वे व्रतपा इत्यग्निर्हि देवानां व्रतपतिस्तस्मादाहाग्ने व्रतपास्त्वे व्रतपा इति या तव तनूरियᳪं सा मयि यो मम तनूरेषा सा त्वयि ॥ सह नौ व्रतपते व्रतानीति तदग्निना त्वचं विपल्यङ्गयतेऽनु मे दीक्षां दीक्षापतिर्मन्यतामनुतपस्तपस्पतिरिति तदवान्तरां दीक्षामुपैति सन्तरामङ्गुलीरचते सन्तरां मेखलां पर्यस्तामेवैनामेतत्सतीं पर्य्यस्यते ॥ ९ ॥

---

तेऽविदुः । अयं वै नो विरक्षस्तमः—अस्यैव रूपमसाम—तेन रक्षांस्यतिमोक्ष्यामहे—तेन स्वर्गं लोकं समश्नुविष्यामहे—इति । तेऽग्नेरेव रूपमभवन्, तेन रक्षांस्यत्यमुच्यन्त । तेन स्वर्गं लोकं समाश्नुवत । तथोऽएवैष एतदग्नेरेवं रूपं भवति, तेन रक्षांस्यतिमुच्यते, तेन स्वर्गं लोकं समश्नुते । स वै समिधमेवाभ्यादधदवान्तरदीक्षामुपैति ॥ ८ ॥

स समिधमभ्यादधाति—" अग्ने व्रतपास्त्वे व्रतपाः "—( वा. सं ५ । ६ । ) इति । अग्निर्हि देवानां व्रतपतिः । तस्मादाह—अग्ने व्रतपास्त्वे व्रतपा इति । " या तव तनूरियं—सा मयि । यो मम तनूरेषा सा त्वयि । सह नौ व्रतपते ! व्रतानि "—(वा. सं. ५।६) इति । तद् अग्निना त्वचं विपल्यङ्गयते । " अनु मे दीक्षां दीक्षापतिर्मन्यताम् । अनुतपस्तपस्पतिः "—( वा. सं. ५ । ६ ) इति । तदवान्तरां दीक्षामुपैति । सन्तरामंगुलीरचते, सन्तरां मेखलां पर्यस्तामेवैनमितत्सतीं पर्यस्यते ॥ ९ ॥

---

नित्र किम् ? ' अवादिष्टुः ३ ' । ( पा. सू. ८ । २ । १०० ) प्रश्ने प्लुतिः । तस्योत्तरम्—' नैवाहमन्यम्, नमामन्यः ' वा अवादीदित्यग्निः प्रत्युवाच ॥ ७ ॥

तेऽविदुरिति । ' अयम् ' अग्निः 'नः' अस्माकं मध्ये 'विरक्षस्तमः' विरक्षो यस्मात् स विरक्षाः, अतिशयेन विरक्षाः ' विरक्षस्तमः ' । " अस्यैव रूपमसाम "—इत्यादि । स्पष्टम् । यद्यपि मेखलाकृष्णाजिनधारणादिकमपि दीक्षाङ्गम्, तथाप्यवान्तरदीक्षायां समिदाधानस्य मुख्यत्वात्—समिधमेवाभ्यादधदवान्तरदीक्षामुपैतीत्युक्तम् ॥ ८ ॥

स समिधमभ्यादधातीति[1] । " अग्ने व्रतपा इत्यादिः समिदाधानमन्त्रः । हे ' व्रतपा अग्ने ' ! ' त्वे ' त्वयि व्रतस्य पातरि सति, अहं ' व्रतपाः ' व्रतस्य पालयिता, भूयासमित्यर्थः । सप्तम्याः शे आदेशः ।

---

१—अग्नेव्रतपा इत्याहवनीयसमिधमाधाय मदंतीरुपस्पृश्य गाढतरं मुष्टिमेखलं कुरुते । का. श्रौ. सू. ८ । २४ ।

( ते॒ऽथै ) अ॒थैनम॒तो म॒दन्तीभि॒रुपचरन्ति त॒पो वा॒ अ॒ग्नि॒स्त॒पो म॒दन्त्य॑स्त॒स्मादे॒नं म॒दन्तीभि॒रुपचरन्ति ॥ १० ॥

( न्त्यु ) अ॒थ म॒दन्तीरु॒पस्पृ॒श्य । रा॒जानमा॒प्याययन्ति त॒द्यन्म॒दन्तीरु॒पस्पृ॒श्य रा॒जानमाप्याय॒यन्ति व॒ज्रो वा आ॒ज्य॑थ्ं॑ रे॒तः सोमो नेद्व॒ज्रेणा॒ज्येन रे॒तः सो॒म॑थ्ं॑ हिनसा॒मेति त॒स्मान्म॒दन्तीरु॒पस्पृ॒श्य रा॒जानमा॒प्याययन्ति॥ ११॥

त॒दाहुः । ( यु॒ ) य॒स्माऽए॒त॒दा॒प्यायनं क्रियत ऽआतिथ्य॑थ्ं॑ सो॒माय त॒मेवा॒ग्रऽआप्याययेयु॒र॒थावान्तरदीक्षाम॒थ ता॒नूनप्त्रा॒णीति त॒दु त॒था न॒ कुर्याद्य-

अथैनमतो मदन्तीभिरुपचरन्ति । तपो वा अग्निः, तपो मदन्त्यः । तस्मादेनं मदन्तीभिरुपचरन्ति ॥ १० ॥

अथ मदन्तीरुपस्पृश्य राजानमाप्याययन्ति । तद् यन्मदन्तीरुपस्पृश्य राजानमाप्याययन्ति; वज्रो वा आज्यम्, रेतः सोमः । नेद्वज्रेणाज्येन रेतः सोमं हिनसामेति । तस्मान्मदन्तीरुपस्पृश्य, राजानमाप्याययन्ति ॥ ११ ॥

तदाहुः । यस्माऽएतदाप्यायनं क्रियते—आतिथ्यं सोमाय—तमेवाग्रऽआप्याययेयुः—अथावान्तर-

( पा. सू. ७।१।३९ ) । अथवा ' व्रतपाः ' भवसि ' त्वे ' त्वम् । "अग्निर्हि देवानां व्रतपतिः" इत्यत्र 'हि'—शब्देन " त्वमग्ने व्रतपा असि देव आ मर्त्येषु "—इत्यादि ( वा. सं. ४ । १६ ) श्रुत्यन्तरप्रसिद्धिर्द्योत्यते । ' या तव ' तेजोमयी ' तनूः ' अस्ति ' सा ' ' इयं ' ममापि भवतु, तथा ' या मम ' इत्येतद् व्याख्येयम् । हे ' व्रतपते ' अग्ने ! ' नौ ' आवां ' सह ' ' व्रतानि ' चरिष्यावः इति शेषः । ' तत् ' तेन तनूविनिमयेन मन्त्रगतेन । " अनु मे दीक्षाम् " इति मन्त्रभागे ' दीक्षा '—शब्दश्रवणात् तन्मन्त्रभागपाठेनावान्तरदीक्षां प्राप्तवान् भवति ॥

दीक्षाहुत्यनन्तरं पुनरङ्गुल्यादिसमञ्जनस्याभिधानादादौ दीक्षाहुतिः कर्त्तव्या पश्चात् समञ्जनमिति क्रमोऽवगम्यते॥९॥

अथ यद्यद्यजमानस्य तत्तन्मदन्तीभिः कर्तव्यमिति विधत्ते—अथैनमतो मदन्तीभिरिति ( का. श्रौ. सू. ८।२४)। एनं सोमं यजमानं वा । तप्ता आपो ' मदन्त्यः ' । अग्नेर्मदन्तीनाञ्च सन्तापकत्वात् तपोरूपत्वम् ॥ १० ॥

मदन्त्युपस्पर्शनपूर्वकं राजाप्यायनं विधत्ते—मदन्तीभिरुपस्पृश्य राजानमिति । वज्रो वा आज्यमिति । " घृतं वै देवा वज्रं कृत्वा सोममघ्नन् "—( तै. सं. ६ । २ । २ । ४ ) इति श्रुतेराज्यस्य वज्रत्वम् । सोमस्य सर्वौषध्यनुप्रवेशाद्रेतसश्चौषधिजन्यत्वात् रेतस्त्वं सोमस्य । अथवा " पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति "—( छा. ब्रा. ७ । ९ । १ । श. प. १४ । ९ । १ । १९ ) इति आहुतिरूपस्य सोमस्य क्रमेण रेतोरूपेण परिणामाद्रेतस्त्वम् ॥ ११ ॥

अनुष्ठेयपदार्थक्रमविषये किञ्चिद् ब्रह्मवादिनश्चोद्यमुद्भावयन्ति—तदाहुर्यस्मा एतदाप्यायनं क्रियत इति ।

१-मदंतीरुपस्पृश्य यजमानगृह्याः सोममाप्याययंत्य२ शुरिति । का. श्रौ. सू. ८।२६। २-'रेतसश्चौषधसाररूपत्वात्' इति क. पा.।

ज्ञस्य वा ऽएवं कर्मात्र वा ऽएनान्त्समदविन्दत्ते सछंशममेव पूर्वमुपायन्न- थावान्तरदीक्षामथाप्यायनम् ॥ १२ ॥

तद्यदाप्याययन्ति । देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम आसी- त्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तदेषोऽशाना नामौषधिर्जायत इति ह स्माह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याभिषुण्वन्ति तां दीक्षोपसद्भि- स्तानूनप्त्रैराप्यायनेन सोमं कुर्वन्तीति तथोऽएवैनामेष ऽएतद्दीक्षोपसद्भि- स्तानूनप्त्रैराप्यायनेन सोमं करोति ॥ १३ ॥

मधु सारघमिति वा आहुः । ( र्य ) यज्ञो ह वै मधुसारघमथैतऽएव सरघो

---

दीक्षाम्—अथ तानूनप्त्राणीति । तद्व तथा न कुर्याद् । यज्ञस्य वा एवं कर्म । अत्र वा एनान्त्समद- विन्दत् । ते संशममेव पूर्वमुपायन्—अथावान्तरदीक्षाम्—अथाप्यायनम् ॥ १२ ॥

तद् यदाप्याययन्ति । देवो वै सोमः । दिवि हि सोमः, वृत्रो वै सोम आसीत् । तस्यैतच्छरीरम्— यद्गिरयो, यदश्मानः । तदेषोऽशाना नामौषधिर्जायते—इति ह स्माह श्वेतकेतुरौद्दालकिः । तामेतदाहृ- त्याभिषुण्वन्ति । तां दीक्षोपसद्भिः, तानूनप्त्रैः, आप्यायनेन सोमं कुर्वन्तीति । तथोऽएवैनामेष एत- द्दीक्षोपसद्भिस्तानूनप्त्रैराप्यायनेन सोमं करोति ॥ १३ ॥

मधु सारघमिति वा आहुः । यज्ञो वै मधु सारघम् । अथैत एव सरघो मधुकृतो यदृत्विजः । तद्यथा मधु मधुकृत आप्याययेयुः--एवमेवैतद्यज्ञमाप्याययन्ति ॥ १४ ॥

---

' यस्मै सोमाय एतदातिथ्यं क्रियते ' ' तमेव ' ' अग्रे ' आप्यायनादिभिः सत्कर्तुं युक्तम् । सोमसम्बन्धाभि- प्रायेण चोद्य उद्भाविते यागसम्बन्धेन परिहरति—यज्ञस्य वा एवं कर्मेति । एवम्प्रकारक्रमविशिष्टं कर्मजातं यज्ञस्य खलु क्रियत इत्यर्थः । ' अत्र ' खलु ' एनान् ' ' समत् ' कलहः ' अविन्दत् ' आप्नोत् ' ते ' च देवाः ' पूर्वं संशममेवोपायन् ' कलहोपशमनरूपं तानूनप्त्रं ते कृतवन्त इत्यर्थः । अथावान्तरदीक्षामिति । शपथजनितदोषपरिहाराय अनन्तरमेव अवान्तरदीक्षा कार्या । अतः परिशेषादाप्यायनस्यान्ते निवेश इति॥ १२॥

तद्यदाप्याययन्तीति । आप्यायनं प्रशंसति—देवो वा इति । सोमस्य देवत्वं समर्थयते—दिवि हीति । अस्त्वेवं सोमस्य, सोमस्याप्यायने किमायातमित्यत आह—वृत्रो वा इत्यादि । त्वष्ट्रेन्द्रघातकोत्पत्त्यर्थं हुतस्येन्द्र- पीतसोमशेषस्य वृत्रत्वेनोत्पत्तेः सोमस्य वृत्रत्वम् । ' तस्य ' इन्द्रेण हतस्य वृत्रस्य ' शरीरं ' ' गिरयोऽश्मानः ' चाभवन् । सोमाख्यं वस्त्वेव सोमशरीरभूतेषु गिर्यादिषु वर्तते ' तत् एषः ' अशानाख्या ' ओषधिः ' 'जायते' ' इति ' एवं ' श्वेतकेतु ' रौद्दालकिः आह स्म । अतः ' तामेव ' गिरावुत्पन्नामेव इदानीन्तना यजमानाः अभिषुण्वन्ति, न साक्षात् ' सोमम् ' । अतः ' ताम् ' ओषधीं दीक्षादिभिः संस्कारैः साक्षात् ' सोमं कुर्वन्ति ' तथो एवैनामेष इत्यादि । स्पष्टम् ॥ १३ ॥

ऋत्विग्यजमानकर्तृकमाप्यायनं सरघमधुकल्पनया प्रशंसति—मधु सारघमिति वा आहुरित्यादिना ॥ १४ ॥

---

१—दुधानाख्या इति उषानाख्या इति च क. पा. । २—सारघमधुकल्पनया इति क. सरघसारघमधुकल्पनया इति क. सरघसारघमधुकल्पनया इति च क. पा. ।

मधुकृतो यदृत्विजस्तद्यथा मधु मधुकृत ऽआप्याययेयुरेवमेवैतद्यज्ञमाप्याययन्ति ॥ १४ ॥

यज्ञेन वै देवाः । ( ० ) इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं न इदं मनुष्यैरनभ्यारोह्यꣳ स्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्धयेयुर्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेनायोपयंस्तस्माद्यूपो नाम ॥ १५ ॥

तद्वा ऋषीणामनुश्रुतमास । ते यज्ञꣳ समभरन्यथाऽयं यज्ञः सम्भृत ऽएवं वा ऽएष यज्ञꣳ सम्भरति यो दीक्षते वाग्वै यज्ञस्तद्यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत्पुनराप्याययति ॥ १६ ॥

ते वै षड्भूत्वाऽऽप्याययन्ति । षड्वा ऋतव ऽऋतव ऽएवैतद्भूत्वाऽऽप्याययन्ति ॥ १७ ॥

त ऽआप्याययन्ति । ( न्त्य ) अꣳशुरꣳशुष्टे देव सोमाप्यायतामिति तदस्याꣳशुमꣳशुमेवाप्याययन्तीन्द्रायैकधनविद ऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रायेत्येकधनविद ऽइति शतꣳ शतꣳ ह स्म वा एष देवान्प्रत्येकैक ऽएवाꣳशुरेकधनानाप्यायते दश दश वा तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेतीन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता

---

यज्ञेन वै देवाः इमां जितिं जिग्युः—यैषामियं जितिः । ते होचुः—कथं न इदं मनुष्यैरनभ्यारोह्यं स्यादिति । ते यज्ञस्य रसं धीत्वा—यथा मधु मधुकृतो निर्धयेयुः—विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन् । अथ यदनेनायोपयन् । तस्माद्यूपो नाम ॥ १५ ॥

तद्वा ऋषीणामनुश्रुतमास । ते यज्ञं समभरन् । यथाऽयं यज्ञः सम्भृतः—एवं वा एष यज्ञं सम्भरति—यो दीक्षते । वाग् वै यज्ञः । तद्यदेवात्र यज्ञस्य निर्धीतं, यद्विदुग्धं—तदेवैतत्पुनराप्याययति ॥ १६ ॥

ते वै षड्भूत्वाऽऽप्याययन्ति । षड् वा ऋतवः । ऋतव एवैतद् भूत्वाऽऽप्याययन्ति ॥ १७ ॥

त आप्याययन्ति—" अंशुरंशुष्टे देव सोमाप्यायताम् "—( वा. सं. ५।७ ) इति । तदस्यांशुमंशुमेवाप्याययन्ति । "इन्द्रायैकधनविदे "—( वा. सं. ५।७ ) इति । इन्द्रो वै यज्ञस्य देवता । तस्मादाह—इन्द्राय इति । एकधनविदऽइति । शतं शतं ह स्म वा एष देवान्प्रत्येकैक एवांशुः । एक-

---

एतदेवाप्यायनं गतसारत्वपरिहारात्मना प्रशंसति—यज्ञेन वै देवा इमां जितिं जिग्युरित्यादिना । यदेवात्र यज्ञस्य निर्धीतं यद्विदुग्धं तदेवैतत् पुनराप्याययन्तीत्यन्तेन एतदसकृद् व्याख्यातम् ॥ १५ ॥ १६ ॥

ते वै षड्भूत्वाऽऽप्याययन्तीत्यादि । स्पष्टम् ॥ १७ ॥

त आप्याययन्तीति । आप्यायनमन्त्रस्य प्रथमभागं व्याचष्टे—अंशुरंशुष्टे देवेत्यादि । यद्यप्याप्यायने सोमस्य सर्वोऽशुर्नाप्यायते, तथापि मन्त्रे ' अंशुरंशुः ' इति वीप्साभिधानसामर्थ्येनैव प्रत्यंशु आप्याययन्तो भवन्तीत्यर्थः ।

तामेवैतदाप्याययत्या त्वमिन्द्राय प्यायस्वेति तदेतस्मिन्नाप्यायनं दधात्याप्याययास्मान्त्सखीन्त्सन्न्या मेधयेति स यत्सनोति तत्तदाह यत्सन्येत्यथ यदनुब्रूते तदु तदाह यन्मेधयेति स्वस्ति ते देव सोम सुत्यामशीयेत्येका वा ऽएतेषामाशीर्भवत्यृत्विजां च यजमानस्य च यज्ञस्योदृचं गच्छेमेति यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥ १८ ॥

( ह्रा ) अथ प्रस्तरे निह्नुवते । ( त ऽ ) उत्तरतउपचारो वै यज्ञोऽथैत-

धनानाप्यायते, दश–दश वा ।"आतुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व"–(वा. सं. ५ । ७ ) इति। इन्द्रो वै यज्ञस्य देवता । सा थैव यज्ञस्य देवता–तामेवैतदाप्याययति । आ त्वमिन्द्राय प्यायस्व इति । तदेतस्मिन्नाप्यायनं दधाति । " आप्याययास्मान्त्सखीन्त्सन्न्या मेधया "–(वा. सं ५।७) इति । स यत्सनोति-तत्तदाह यत्सन्येति । अथ यदनुब्रूते । तदु तदाह–यन्मेधयेति । " स्वस्ति ते देव सोम सुत्यामशीय "–( वा. सं. ५ । ७ ) इति । एका वा एतेषामाशीर्भवति–ऋत्विजां च यजमानस्य च " यज्ञस्योदृचं गच्छेम "–इति । यज्ञस्योदृचं गच्छानीत्येवैतदाह ॥ १८ ॥

अथ प्रस्तरे निह्नुवते । उत्तरतउपचारो वै यज्ञः । अथैतद् दक्षिणेवान्वित्याप्याययन्ति । अग्निर्वै

इन्द्रायैकधनाविद इति । अत्रेन्द्रशब्दतात्पर्यमाह–इन्द्रो वै यज्ञस्येति । एकधनानाप्यायते दश दश वेति। एक एव सोमादिरूपो हविःपदार्थ एव धनं येषां ते देवा एकधनाः; तान् विन्दति यज्ञे सोमपानाय लभत इतीन्द्रः 'एकधनवित्' । 'तस्मात्' एकैक एवांशुः शतशो दशशो वा 'एकधनान्' देवान् 'आप्यायते' वर्द्धयति, शरीरोपचयं करोति, अतः उक्तप्रकारेण सोमाख्यैकधनेन देवानामेकधनत्वान्मन्त्रः 'इन्द्रायैकधनविदे' 'इति' 'आह' इत्यर्थः । आ तुभ्यमिन्द्रः प्यायतामिति । हे सोम ! 'तुभ्यं' त्वदर्थं त्वां पातुं स इन्द्रः समर्थो भवत्विति । यज्ञसाधनभूतस्य सोमस्येन्द्रार्थत्वावगमादिन्द्रस्यैवाप्यायनं कृतं भवतीत्यर्थः । आ त्वमिन्द्राय प्यायस्वेति । अत्र सोमाप्यायनस्येन्द्रार्थत्वावगतेस्तस्मिन्नेवाप्यायनं दधातीत्युक्तम् । आप्याययास्मान्त्सखीन्त्सन्न्या मेधयेति । अनेन मन्त्रभागेन धनमेषां दित्सया प्यायनायास्मत्सखिभूतानामृत्विजामाशासनं क्रियते । अत्र 'सनि-मेधा'– शब्दयोर्दातव्यं धनमनुवचनीयं मन्त्रादिकं चार्थ इत्याह–स यत् सनोति तत्तदाह यत्सन्येतीति । 'सन्या' 'इति' एवंरूपेण शब्देन यदाहार्थजातम् 'तद्' 'यत् सनोति' धनं यज्ञेन यजमानः, 'तदाह' इत्यर्थः। एवमुत्तरवाक्यमपि योज्यम् । पूर्वापरभूतस्यानुवचनस्य मेधामन्तरेणासम्भवान्मेधाशब्दस्यानुवचनमर्थ इति व्याख्यातम् । स्वस्ति ते देव सोमेति । 'हे सोम !' तव 'स्वस्ति' विनाशाभावः क्षेमः, अस्त्विति शेषः । अहं त्वदनुग्रहात् 'सुत्याम्' सोमाभिषवम् 'अशीय' आप्नुयाम् । सुत्याप्राप्तिप्रार्थनायास्तात्पर्यमाह–एको वा एतेषामाशीर्भवतीति । यज्ञस्योदृचमिति । उपरिभाविनी[1] ऋक् 'उदृक्' तया समाप्तिर्लक्ष्यते ॥ १८ ॥

आप्यायनमभिधाय निह्नवमाह–अथ प्रस्तरे निह्नुवत इति[2] । प्रस्तरस्योपरि पाणी सम्पुटीकृत्य "एष्टा रायः"–

१–तदुपरिभाविनी । इ० पा० । २–आज्यमालभ्योपस्पृशेदपः सोममालिप्समानस्तथाविपर्यस्यप्रत्येत्य प्रस्तरे निह्नुवत उत्तानहस्ता दक्षिणोत्तानावेष्टाराय इति । का० श्रौ० सू० । ८–२७ ।

दक्षिणेवान्वित्याप्याययन्त्यग्निर्वै यज्ञस्तद्यज्ञं पृष्ठतः कुर्वन्ति तन्मिथ्या कुर्वन्ति देवेभ्य ऽआवृश्च्यन्ते यज्ञो वै प्रस्तरस्तद्यज्ञं पुनरारभन्ते तस्यो हैषा प्रायश्चित्तिस्तथो हैषामेतन्न मिथ्याकृतं भवति न देवेभ्य आवृश्च्यन्ते तस्मात्प्रस्तरे निह्नुवते ॥ १९ ॥

तदाहुः । (र) अक्ते निह्नुवीरा३ नक्ता३ इत्यनक्ते हैव निह्नुवीरन्न नु प्रहरणꣳ ह्येवाक्तस्य ॥ २० ॥

ते निह्नुवते । ( त ऽ ) एष्टा रायः प्रेषे भगाय ऽऋतमृतवादिभ्य इति सत्यꣳ सत्यवादिभ्य ऽइत्येवैतदाह नमो द्यावापृथिवीभ्यामिति तदाभ्यां द्यावापृथिवीभ्यां निह्नुवते ययोरिदꣳ सर्वमधि ॥ २१ ॥

---

यज्ञः । तद् यज्ञं पृष्ठतः कुर्वन्ति । तन्मिथ्या कुर्वन्ति, देवेभ्य आवृश्च्यन्ते । यज्ञो वै प्रस्तरः । तद् यज्ञं पुनरारभन्ते । तस्यो हैषा प्रायश्चित्तिः । तथो हैषामेतन्न मिथ्याकृतं भवति । न देवेभ्य आवृश्च्यन्ते । तस्मात् प्रस्तरे निह्नुवते ॥ १९ ॥

तदाहुः—अक्ते निह्नुवीरा३ ननक्ता ३ इति । अनक्ते हैव निह्नुवीरन् । न नु प्रहरणं ह्येवाक्तस्य॥२०

ते निह्नुवते । " एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्यः "— ( वा. सं. ९ । ७ ) इति । सत्यं सत्यवादिभ्य इत्येवैतदाह । " नमो द्यावापृथिवीभ्याम् "—( वा. सं. ९ । ७ ) इति । तद् आभ्यां द्यावापृथिवीभ्यां निह्नुवते; ययोरिदं सर्वमधि ॥ २१ ॥

---

( वा. सं. ९ । ७ । ) इति मन्त्रजपो निह्नवः । निह्नवशब्दोऽपलापे प्रसिद्धो लोके, इह देवानां नमस्कारादिना सान्त्वनं विहितम् । निह्नवं सोमाप्यायनकाले सम्भावितस्यातिक्रमस्य परिहाररूपेण प्रशंसति—**उत्तरत उपचारो वै यज्ञ** इति । उत्तर उपचार इति व्यतिरेकप्रदर्शनाय अभिधानं साध्यसाधनयोरभेदाभिप्रायेण । अग्नेर्यज्ञत्वमृत्विजां दक्षिणत उपचारेण । पश्चाद्भागस्थितस्य गार्हपत्यस्य पृष्ठतः करणं भवति, तेन ' मिथ्या ' अकृतं कुर्वन्ति; अग्नेः सर्वदेवात्मकत्वात् सर्वदेवेभ्योऽपि वर्जितो भवति । तर्हि प्रस्तरनिह्नवेन कथं समाधानमिति, तत्राह—**यज्ञो वै प्रस्तर** इति । हविराधारकत्वेन यज्ञनिर्वर्त्तकत्वात् प्रस्तरस्य यज्ञत्वोपचारः ॥ १९ ॥

निह्नवस्य कालं निर्द्धारयितुं ब्रह्मवादिनां विचारं दर्शयति—**तदाहुरक्ते निह्नुवीरा ३ ननक्ता ३ ई३ति** । किमु ' अक्ते ' प्रस्तरे निह्नवः कर्त्तव्यः उतानक्ते ? इति विचार्यमाणत्वात्—( पा. सू. ८ । २।९७ ) । प्लुतिः अक्तस्य अविलम्बेनाग्नौ प्रहरणादनक्त एव प्रस्तरे कर्तव्यमित्यर्थः ॥ २० ॥

**ते निह्नुवत एष्टा रायः प्रेष** इति । ( तै. सं. १ । २ । २ । १ ) निह्नवमन्त्रस्यायमर्थः । हे ' एष्टः ' ! तृजन्तस्य सम्बुद्धिः । धनं यजमानार्थमिच्छन् अग्ने ! अत्र ब्राह्मणे सोमाप्यायननिह्नवातिक्रमस्योक्तत्वात् स एव प्रसाध्यः । ' रायः ' धनानि, प्रयच्छन्निति शेषः । किमर्थम् ? ' इषे ' अन्नाय, ' भगाय ' सौख्याय च ।

---

१—व्यूहनपरिध्यंजने कृत्वेके । का० श्रौ० सू० । ८–२८ ।

(घ्यु)अ॒थाह॑ समु॒ल्लु॒प्य प्र॒स्त॒रम् । (म्र)अ॒ग्नी॒न्मु॒द॒न्त्याप॒ा ३ इ॒ति मु॒दन्ती॒त्य॒ग्नीदा॑ह ता॒भिरे॒हीत्यु॑प॒र्य्यु॑प॒र्य्य॒ग्निमु॑ति॒ह॑रति॒ स य॒न्नानु॑प्र॒हर॒त्येते॒न ह्यु॑त ऊ॒र्ध्वा॒न्य॒हा॑नि॒ प्र॒च॑रि॒ष्य॒न्भ॒व॒त्यथ॒ य॒दु॑प॒र्य्यु॑प॒र्य्य॒ग्नि॒मति॒ह॑रति॒ त॒दे॒वा॒स्या॒नु॒प्र॒हृ॑तभाज॒नं भ॒व॒ति॒ त॒म॒ग्नी॒धे प्र॒य॒च्छ॒ति॒ त॒म॒ग्नी॒न्नि॒द॒धा॒ति ॥ २२ ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥३॥४॥ ( ४ । ३ )

ग्री॒वा वै य॒ज्ञस्यो॑प॒सदः॒ शिरः॑ प्रव॒र्ग्यः॒ । ( स्तु ) त॒स्मा॒द्यदि॒ प्र॒व॒र्ग्य॒वा॒न्भ॒व॒ति॒ प्र॒व॒र्ग्येण॒ प्र॒च॒र्य्याथो॑प॒स॒द्भिः॒ प्र॒च॒रन्ति॒ त॒द्ग्री॒वाः॒ प्र॒ति॒द॒धा॒ति ॥ १ ॥

---

अथाह समुल्लुप्य प्रस्तरम्; अग्नीन्मदन्ति–आपा ३॥ इति । मदन्तीत्यग्नीदाह । ताभिरेहीत्युपर्य्युपर्य्यग्निमतिहराति । स यन्नानुप्रहरति; एतेन ह्यतः ऊर्ध्वान्यहानि प्रचरिष्यन्भवति । अथ यदुपर्य्युपर्य्यग्निमतिहरति; तदेवास्यानुप्रहृतभाजनं भवति । तमग्नीधे प्रयच्छाति। तमग्नीन्निदधाति ॥२२॥

ग्रीवा वै यज्ञस्योपसदः । शिरः प्रवर्ग्यः । तस्माद् यदि प्रवर्ग्यवान्भवति । प्रवर्ग्येण प्रचर्य्य, अथोपसद्भिः प्रचरन्ति । तद् ग्रीवाः प्रतिदधाति ॥ १ ॥

---

तथा 'ऋतवादिभ्यः' सत्यवादिभ्योऽस्मभ्यम् 'ऋतं प्रयच्छ' क्रियमाणं कर्म यथा न वृथा स्यात्, तथा कुर्वित्यर्थः । सर्वदेवाश्रयाभ्यां 'द्यावापृथिवीभ्यां' 'नमः' अस्तु। ऋतशब्दस्योदकयज्ञाद्यर्थेषु अभिमतमर्थमाह–सत्यवादिभ्य इतीति । द्यावापृथिवीभ्यां नमस्कार एव निह्नव इत्याह–द्यावापृथिवीभ्यामेव निह्नुवत इति । अस्तु नमस्कारेण तयोर्निह्नवः, इतरेषां देवानां स कथं कृतः स्यादिति, तत्राह–यथोरिदं सर्वमधीति । यस्मात् तयोरन्तः 'इदम्' परिदृश्यमानं सर्वम् 'अधि' स्थितमिति शेषः । तस्मादित्यर्थः । अथवा 'अधि'–इति सप्तम्यर्थानुवादी तयोरधीदं सर्वमिति ॥ २१ ॥

अध्वर्युकर्तृकं प्रैषं दर्शयति–अथाह समुल्लुप्य प्रस्तरमग्नीन्मदन्त्यापा ३ इतीति । 'प्रस्तरं' 'समुल्लुप्य' सम्यगाहत्येत्यर्थः । हे 'अग्नीत्'! 'आपः' किम् 'मदन्ती' मदन्त्यः तप्ताः किमासन्नित्यर्थः । 'ताभिरेहि' इति, 'आह' इति शेषः । तं प्रस्तरम् 'अग्निम् उपर्युपरि' अग्नेरुर्ध्वोर्ध्वभावे 'अतिहरति' अनुप्रहरेत् । अनुप्रहरणस्य प्रयोजनमाह–एतेन ह्यत ऊर्ध्वानीति । 'एतेन' आतिथ्यार्थप्रस्तरेण । उपर्युपरि प्रहरणस्य प्रयोजनमाह–तदेवास्यानुप्रहृतभाजनं भवतीति । 'तम्' अध्वर्युणा दत्तं प्रस्तरम्, 'अग्नीत्' आग्नीध्रः सुरक्षिते देशे 'निदधाति' स्थापयेत् ॥ २२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥ ३–४–३ ॥

इत्थमातिथ्यमभिधाय अथोपसदस्तत्कालञ्चाह–ग्रीवा वै यज्ञस्योपसदः । शिरः प्रवर्ग्यः; तस्माद् यदि

---

१–मुधा–इ. क.पा. । २–समुल्लुप्य प्रस्तरमक्त्वा परिधींश्चादायाहाग्नीन्मदंत्यापा ३ इति । मदंतीत्यग्नीत् । का.श्रौ.सू. ८।२९–३० । ३–न प्रहरेत् इति क. प°. । ४–ताभिरेहीति ब्रुवन्नध्याहवनीयं हृत्वाऽभ्युक्ष्याग्नीधे प्रयच्छति निधानाय । का. श्रौ. सू. ८ । ३१ ।

तद्याः पूर्व्वाह्णेऽनुवाक्या भुवन्ति । ता अपराह्णे याज्या या याज्यास्ता ऽअनुवाक्यास्तद्व्यतिषजति तुस्मादिमानि ग्रीवाणां पुर्वाणि व्युतिषक्तानीमान्युस्थीनि ॥ २ ॥

देवाश्च वाऽअसुराश्च । ( श्रो ) उभये प्राजापत्याः पस्पृधिरे ततोऽसुराऽएषु लोकेषु पुरश्चक्रिरेऽयस्मयीमेवास्मिँल्लोके रजतामन्तरिक्षे हरिणीं दिवि ॥ ३

तद्वै देवाऽअस्पृण्वत । तऽएताभिरुपसद्भिरुपासीदंस्तद्यदुपासीदंस्तस्मादुपसदो नाम ते पुरः प्राभिन्दन्निमाँल्लोकान्प्राजयंस्तस्मादाहुरुपसदा पुरं जयन्तीति यदद्योपासते तेनेमां मानुषीं पुरं जयन्ति ॥ ४ ॥

---

तद् याः पूर्वाह्णेऽनुवाक्या भवन्ति; ता अपराह्णे याज्याः । या याज्यास्ता अनुवाक्याः । तद् व्यतिषजति । तस्मादिमानि ग्रीवाणां पर्वाणि व्यतिषक्तानीमान्यस्थीनि ॥ २ ॥

देवाश्च वाऽअसुराश्च, उभये प्राजापत्याः पस्पृधिरे । ततोऽसुरा एषु लोकेषु पुरश्चक्रिरे—अयस्मयीमेवास्मिँल्लोके । रजतामन्तरिक्षे । हरिणीं दिवि ॥ ३ ॥

तद्वै देवा अस्पृण्वत । तऽएताभिरुपसद्भिरुपासीदन् । तद् यदुपासीदंस्तस्मादुपसदो नाम । ते

---

प्रवर्ग्यवान् भवति, प्रवर्ग्येण प्रचर्याथोपसद्भिः प्रचरन्तीति[1] । 'तत्' तेन प्रवर्ग्यानन्तरमुपसदनुष्ठानेन 'ग्रीवाः' अवयवापेक्षया बहुवचनम् । 'प्रतिदधाति' शिरसा सह योजितवान् भवति । "न प्रथमयज्ञे प्रवृञ्ज्यात्"—इति निषेधसम्भवाद् "यदि प्रवर्ग्यवान्[2]" इत्युक्तम् । आश्वलायनोऽपि प्रथमयज्ञेनैके घर्म्मम्" इति ( आ. सू. ४ । ८ । १६ ) ॥ १ ॥

तद्याः पूर्वाह्णेऽनुवाक्या भवन्ति ता अपराह्णे याज्याः "—इति "अग्निर्वृत्राणि जङ्घनद्"—"य उग्र इव शर्यहा[3]"— ( ऋ. सं. ६ । १६ । ३४ ३९ । ) "त्वं सोमासि सत्पतिः"—"गयस्फानो अमीवहाः"— ( ऋ. सं. १ । ९१ । ५, १२ ) "इदं विष्णुर्विचक्रमे"—"त्रीणि पदा विचक्रमे"—( ऋ. सं. १ । २३ । १७ । १८ ) इति त्रीणि युगलानि क्रमेणाग्निसोमविष्णूनां याज्याः पुरोऽनुवाक्याः । ( ऐ. ब्रा. १ । ४ । ८ ) तेष्वाद्याः प्रातःकालोपसदि पुरोऽनुवाक्या भवन्ति, द्वितीया याज्याः; सायङ्कालीनोपसदि तु द्वितीयाः पुरोऽनुवाक्याः प्रथमा याज्या इत्यर्थः । ग्रीवाणामंगुलिवत् प्रसिद्धपर्वाभावात् 'अस्थीनि' इत्युक्तम् ॥ २ ॥

उपसदो लोकजयसाधनत्वेन प्रशंसति—देवाश्च वा असुराश्चेत्यादिना । 'अयस्मयीम्' इत्यत्र "अयस्मयादीनि च्छन्दसि"—( पा. सू. १ । ४ । २० ) इति भसंज्ञायां पदसंज्ञाया बाधादुत्वाभावः । हरिणीं दिवीति । हरितवर्णां पुरीम्, सुवर्णमयीमित्यर्थः ॥ ३ ॥

तद्वै देवा अस्पृण्वतेति । 'तत्' पुरत्रयम् 'अस्पृण्वत' "स्पृ हिंसायाम्[4]" ( धा. पा. स्वा. प. १२ )

---

१—प्रवर्ग्योपसदावतः । का. श्रौ. सू. ८ । ३३ । २—उपसदेव वाऽप्रवर्ग्ये । का. श्रौ. सू. ८ । ३४ । ३—शांखायनानां तु—अग्निर्वृत्राणि जंघनत् । य इव उग्र शर्यहाः १ । त्वं सोमक्रतुभिः । सोममषालां कुरु २ । यः पूर्व्याय वेधसे न वीयसे । तमु स्तोतारं पूर्व्यं यथा विदक्षत् ३ । इति क्रमेणाग्निसोमविष्णूनां युगलानि त्रीणि । ४—प्रीत्याद्यर्थकस्य हिंसार्थत्वं छांदसत्वात् इति ।

( न्त्ये ) एताभिर्वै देवा ऽउपसद्भिः । पुरः प्राभिन्दन्निमाँल्लोकान्प्राजयंस्तथोऽएवैषु ऽएतन्नाहैवास्माऽअस्मिँल्लोके कश्चन पुरः कुरुत ऽइमानेवैतल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति तस्मादुपसद्भिर्यजते ॥ ५ ॥

ता वा ऽआज्यहविषो भवन्ति । वज्रो वा ऽआज्यमेतेन वै देवा वज्रेणाज्येन पुरः प्राभिन्दन्निमाँल्लोकान्प्राजयंस्तथो ऽएवैषु ऽएतेन वज्रेणाज्येनेमाँल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति तस्मादाज्यहविषो भवन्ति ॥ ६ ॥

स वा ऽअष्टौ कृत्वो जुह्वां गृह्णाति । चतुरुपभृत्यथो इतरथाऽऽहुश्चतुरेव कृत्वो जुह्वां गृह्णीयादष्टौ कृत्व उपभृतीति ॥ ७ ॥

---

पुरः प्राभिन्दन् । इमाँल्लोकान्प्राजयन् । तस्मादाहुः—उपसदा पुरं जयन्तीति । यदहोपासते तेनेमां मानुषीं पुरं जयन्ति ॥ ४ ॥

एताभिर्वै देवा उपसद्भिः पुरः प्राभिन्दन् । इमाँल्लोकान्प्राजयन् । तथोऽएवैष एतन्नाहैवास्माऽअस्मिँल्लोके कश्चन पुरः कुरुते । इमानेवैतल्लोकान्प्रभिनत्ति । इमाँल्लोकान्प्रजयति । तस्मादुपसद्भिर्यजते ॥ ५ ॥

ता वाऽआज्यहविषो भवन्ति । वज्रो वाऽआज्यम् । एतेन वै देवा वज्रेणाज्येन पुरः प्राभिन्दन् । इमाँल्लोकान् प्राजयन् । तथो एवैष एतेन वज्रेणाज्येनेमाँल्लोकान्प्रभिनत्ति । इमाँल्लोकान् प्रजयति । तस्मादाज्यहविषो भवन्ति ॥ ६ ॥

स वाऽअष्टौ कृत्वो जुह्वां गृह्णाति, चतुरुपभृति । अथो इतरथाऽऽहुः—चतुरेव कृत्वो जुह्वां गृह्णीयात्, अष्टौ कृत्व उपभृतीति ॥ ७ ॥

---

हिंसितवन्तः ते 'देवाः' यस्मात् 'एताभिः' त्रिभिराग्नेयादीष्टिकर्मभिः सामर्थ्येनेत्यर्थः । 'उपासीदन्'—असुरनिर्गमनप्रतिबन्धात् त्रीणि पुराण्यावृत्य न्यवसन्नित्यर्थः । अत उपसदनसाधनत्वादासामुपसन्नाम सम्पन्नमित्यर्थः । उक्तमुपसदां जयसाधनत्वं लोकप्रसिद्ध्या द्रढयति—**तस्मादाहुरुपसदा पुरं जयन्तीति** । 'आहुः' अभिज्ञाः कथयन्ति, 'उपसदा' उपसदनदुर्गवेष्टनेन । अभिज्ञानामभिधानं न मृषेत्याह—**यदहेति** । 'उपासते' उपेत्यावृण्वन्ति ॥ ४ ॥

**एताभिर्वै देवा** इति । **तथो एवैष एतादिति** । एतया उपसदा 'एषः' यजमानोऽपि पुरः प्रभिनत्ति, जयति चेति शेषः । न केवलं पुरस्य जयः अपि तु जेतव्यपुरमेव न भवेदित्याह—**नाहैवास्मा अस्मिँल्लोके कश्चन पुरः कुरुत** इति ( तै. सं. ६।२।३ ) ( ऐ. ब्रा. १।४।६ ) ॥ ५ ॥

"तथो एवैष एतत्"—इति यत् सङ्ग्रहेणोक्तम् तदेव स्पष्टयति—**ता वा आज्यहविष** इत्यादि । स्पष्टम् ॥ ६ ॥

प्रधानयागत्रयार्थमाज्यग्रहणप्रकारमाह—**स वा अष्टौ कृत्वो जुह्वां गृह्णाति चतुरुपभृतीति** । 'अष्टौ कृत्वः' अष्टवारावृत्त्या ॥ ७ ॥

---

१–प्रणीताद्युपसत् । का. श्रौ. सू. ८ । ३५ । २–अष्टगृहीतं जुह्वां चतुरुपभृति यथाप्रकृति वा । का. श्रौ. सू. ८ । ४४ ।

स वा ऽअष्टावेव कृत्वो जुह्वां गृह्णाति । चतुरुपभृति तद्वज्रमभिभारं करोति तेन व्वज्रेणाभिभारेणेमाँल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति ॥ ८ ॥

( त्य ) अग्नीषोमौ वै देवानाᳬंसयुजौ । ताभ्याᳬं सार्द्धं गृह्णाति व्विष्णव ऽएकाकिने ऽन्यतरमेवाघारमाघारयति यᳬं स्रुवेण प्रतिक्रामति वा ऽउत्तरमाघारमाघार्याभिजित्या ऽअभिजयानीति तस्मादन्यतरमेवाघारमाघारयति यᳬं स्रुवेण ॥ ९ ॥

( णा ) अथाश्राव्य न होतारं प्रवृणीते । सीद होतरित्येवाहोपविशति होता होतृषदन ऽउपविश्य प्रसौति प्रसूतो ऽध्वर्युः स्रुचावादत्ते ॥ १० ॥

---

स वाऽअष्टावेव कृत्वो जुह्वां गृह्णाति, चतुरुपभृति । तद् वज्रमभिभारं करोति; तेन वज्रेणाभिभारेणेमाँल्लोकान्प्रभिनत्ति । इमाँल्लोकान्प्रजयति ॥ ८ ॥

अग्नीषोमौ वै देवानां सयुजौ; ताभ्यां सार्द्धं गृह्णाति । विष्णवऽएकाकिनेऽन्यतरमेवाघारमाघारयति । यं स्रुवेण । प्रतिक्रामति वाऽउत्तरमाघारमाघार्य । अभिजित्याऽअभिजयानीति । तस्मादन्यतरमेवाघारमाघारयति यं स्रुवेण ॥ ९ ॥

अथाश्राव्य न होतारं प्रवृणीते—सीद होतरित्येवाह । उपविशति होता होतृषदने । उपविश्य प्रसौति । प्रसूतोऽध्वर्युः स्रुचावादत्ते ॥ १० ॥

---

स वा अष्टावेव कृत्वो जुह्वामिति । अत्र 'एव'-कारेण "अथो इतरथाऽऽहुः"—इति केषाञ्चित्पक्षो निरस्यते । तद्वज्रमभिभारं करोतीति । 'तत्' तेन जुह्वामष्टौ कृत्वो ग्रहणेन आज्यस्य वज्रत्वात्, तस्य च मुखत एवाष्टवारग्रहणात्, वज्रमेव मुखप्रदेशभारयुक्तं कृतवान् भवति ॥ ८ ॥

प्रकारान्तरेण जुह्वामष्टौ कृत्वो ग्रहणं प्रशंसति—अग्नीषोमौ वै देवानां सयुजौ, ताभ्यां सार्द्धं गृह्णाति; विष्णव एकाकिन इति । गृह्णातीति शेषः । प्रकृतिवदाघारद्वयप्रसक्तौ स्रुच्यां द्वितीयमाघारं निषेधति—अन्यतरमेवाघारमिति । 'यं स्रुवेणाघारयति ' तमन्यतरमित्यर्थः । अभिजयसाधनत्वेनान्यतरमाघारं प्रशंसति—प्रतिक्रामति वेति । उत्तराघारानन्तरं प्रतिक्रमणसम्भवात् तस्य चाभिजयरूपत्वात् जेतव्याभिजयाय स्रौचमेवाघारमाघारयेदिति स्तुतिः ॥ ९ ॥

अथाश्राव्य न होतारं प्रवृणीत इति । अध्वर्युराह—'आश्रावय' इत्युक्त्वा, "अग्निर्देवो दैव्यो होता" इत्यादि—"असौ मानुषः" इत्यन्तं—न ब्रूयादित्यर्थः—किन्तु 'सीद होतः' इत्येव ब्रूयात् । तथा चाश्वलायनः—"ईक्षितः सीद होतारिति वोक्त उपविशेत्"—इति । होता होतृषदन उपविश्य प्रसौतीति । वेदेरुत्तरा श्रोणिर्होतृषदनम् । "घृतवतीमध्वर्यो स्रुचमास्यस्व"—इत्यनुजानीयादित्यर्थः । 'स्रुचौ' जुहूपभृतौ ॥ १० ॥

---

१—स्रुवाघारमाघार्य सम्मृष्ट आश्राव्य सीद होतारित्येव ब्रूयात् । का. श्रौ. सू. ८ । ४७ ।

स आहातिक्रामन्नग्नयेऽनुब्रूहीति । ( त्या ) आश्राव्याहाग्निं यजेति व्वषट्कृते जुहोति ॥ ११ ॥

( त्यु ) अथाह सोमायानुब्रूहीति । ( त्या ) आश्राव्याह सोमं यजेति व्वषट्कृते जुहोति ॥ १२ ॥

( त्यु ) अथ यद्दुपभृत्याज्यं भवति । तत्समानयमान आह व्विष्णवेऽनुब्रूहीत्याश्राव्याह व्विष्णुं यजेति व्वषट्कृते जुहोति ॥ १३ ॥

स यत्समानत्र तिष्ठञ्जुहोति । न यथेदं प्रचरन्त्सञ्चरत्यभिजित्या ऽअभिजयानीत्यथ यदेता देवता यजति व्वज्रमेवैतत्सᳪंस्करोत्यग्निमनीकᳪं सोमᳪं शल्यं विष्णुं कुल्मलम् ॥ १४ ॥

---

स आहातिक्रामन्–अग्नयेऽनुब्रूहीति । आश्राव्याह–अग्निं यजेति । वषट्कृते जुहोति ॥ ११ ॥
अथाह–सोमायानुब्रूहीति । आश्राव्याह–सोमं यजेति । वषट्कृते जुहोति ॥ १२ ॥
अथ यद्दुपभृत्याज्यं भवति; तत्समानयमान आह–विष्णवेऽनुब्रूहीति । आश्राव्याह–विष्णुं यजेति । वषट्कृते जुहोति ॥ १३ ॥
स यत् समानत्र तिष्ठन् जुहोति । न यथेदं प्रचरन्त्सञ्चरति । अभिजित्याऽअभिजयानीति । अथ यदेता देवता यजति; वज्रमेवैतत्संस्करोत्यग्निम्–अनीकम्, सोमम् शल्यम्, विष्णुं कुल्मलम् ॥ १४ ॥

---

स आहातिक्रामन्नित्यादि । 'अतिक्रामन्' आहवनीयस्य दक्षिणभागं प्रतिगन्तुं वेद्यतिक्रमं कुर्वन् "अग्नयेऽनुब्रूहि"–इति होतारम् 'आह'[1] । अग्नेर्यागार्थमनुवचनं ब्रूहीत्यर्थः । पुनराश्रावणप्रत्याश्रावणानन्तरम् "अग्निं यज"–'इति' आह । याज्यां पठेति ब्रूयादित्यर्थः । 'वषट्कृते' होत्रा "वौषट्"–इत्युक्ते ॥ ११ ॥ १२ ॥

विष्णोरनुवचनकालमाह–अथ यद्दुपभृत्याज्यं भवति तत्, समानयमान आह विष्णवेऽनुब्रूहीतीति ( का. श्रौ. सू. ८ । ४९ )[2] । 'समानयमानः' जुह्वां प्रक्षिपेत् ॥ १३ ॥

स यत् समानत्र तिष्ठन् जुहोतीति । 'अत्र' एकस्मिन्नेवाहवनीयदक्षिणदेशे । न यथेदं प्रचरन् सञ्चरतीति । दर्शपूर्णमासेष्ट्यां 'यथेदं' येन मार्गेण गतः तेनैव पुनरपि हविरवदानाय गच्छति, तथाऽत्र न कर्त्तव्यमित्यर्थः । तथाविधे एकत्रैव होमः 'अभिजित्यै' भवति । अतः 'अभिजयानि'–इति एकत्रैव तिष्ठन् जुहुयात् । प्रकृतिवत् प्रतियागमाक्रमणप्रत्याक्रमणे न कार्ये; अपि तु सकृदेवातिक्रम्य त्रीन् यागान् कुर्यादिति तात्पर्यार्थः[3] । अग्न्यादियागत्रयं प्रशंसति–अथ यदेता इति । कथमेतासां यागेन यज्ञः संस्कृतो भवतीति तद्वि-

---

१–प्रसूतोऽतिक्रामन्नग्नयेऽनुवाचयति । का. श्रौ. सू. ८ । ४८ । २–अर्द्धं हुत्वा सोमाय व्विष्णवे समानीय । का. श्रौ. सू. ८।४९। ३–अयं तात्पर्यार्थः सूत्रादुदयते–प्रसूतोऽतिक्रामन्नग्नयेऽनुवाचयति–अर्द्धं हुत्वा सोमाय व्विष्णवे समानीय सादयित्वा स्रुचौ सोमाप्यायनायासुब्रह्मण्यप्रैषात्–इत्येवम् अतिक्रमणादिवैष्णवयागांते स्रुचोरासादनविधिना प्रतियागमाक्रमणप्रत्याक्रमणे न भवतः । किंतु–सकृदतिक्रमणेनैव यागत्रयसिद्धिरिति ।

( ष्टं ) संव्वत्सरो हि व्वज्रः । ( ग्रोऽग्नि ) अग्निर्वाऽअहः सोमो रात्रिरथ यदन्तरेण तद्विष्णुरेतद्वै परिप्लुवमानᳬं संव्वत्सरं करोति ॥ १९ ॥

संवत्सरो व्वज्रः । ( ऽ ) एतेन वै देवाः संव्वत्सरेण व्वज्रेण पुरः प्राभिन्दन्निमाँल्लोकान्प्राजयंस्तथोऽएवैष एतेन संव्वत्सरेण व्वज्रेणेमाँल्लोकान्प्रभिनत्तीमाँल्लोकान्प्रजयति तस्मादेता देवता यजति ॥ १६ ॥

स वै तिस्रऽउपसदऽउपेयात् । ( त्र ) त्रयो वाऽऋतवः संव्वत्सरस्य संव्वत्सरस्यैवैतद्रूपं क्रियते संव्वत्सरमेवैतत्सᳬंस्करोति द्विरेकया प्रचरति द्विरेकया ॥ १७ ॥

ताः षट् सम्पद्यन्ते । षड्वाऽऋतवः संव्वत्सरस्य संव्वत्सरस्यैवैतद्रूपं क्रियते संव्वत्सरमेवैतत्सᳬंस्करोति ॥ १८ ॥

---

संवत्सरो हि वज्रः, अग्निर्वाऽअहः, सोमो रात्रिः । अथ यदन्तरेण; तद् विष्णुः । एतद्वै परिप्लवमानं संवत्सरं करोति ॥ १९ ॥

संवत्सरो वज्रः । एतेन वै देवाः संवत्सरेण वज्रेण पुरः प्राभिन्दन्, इमाँल्लोकान्प्राजयन् । तथो एवैष एतेन संवत्सरेण वज्रेणेमाँल्लोकान् प्रभिनत्ति, इमाँल्लोकान्प्रजयति । तस्मादेता देवता यजति॥ १६॥

स वै तिस्र उपसद उपेयात् । त्रयो वाऽऋतवः संवत्सरस्य, संवत्सरस्यैवैतद्रूपं क्रियते । संवत्सरमेवैतत्संस्करोति । द्विरेकया प्रचरति द्विरेकया ॥ १७ ॥

ताः षट् सम्पद्यन्ते । षड् वाऽऋतवः संवत्सरस्य; संवत्सरस्यैवैतद्रूपं क्रियते । संवत्सरमेवैतत्संस्करोति ॥ १८ ॥

---

भज्य दर्शयति—अग्निमनीकमित्यादिना । ' अनीकम् ' वज्रस्य मुखप्रदेशः ' शल्यं ' तत्पूर्वो भागः ' कुल्मलम् ' तत्पुच्छभागः ( तै. सं. ६ । २ । ३ । १ । ऐ. ब्रा. १ । ४ । ८ ) ॥ १४ ॥

उक्तं वज्रत्वं संवत्सरतयोपपाद्य प्रशंसति—संवत्सरो हि वज्रोऽग्निर्वा अहः सोमो रात्रिरथ यदन्तरेण तद् विष्णुरिति । अह्नो रात्रेश्च योऽन्तरालः कालः, स विष्णुरित्यर्थः । पूर्वोत्तरोभयकालव्यापित्वादिति भावः । ' एतत् ' त्रयं ' परिप्लवमानं ' पुनःपुनरावर्तमानं ' संवत्सरं ' निष्पादयति ॥ १९ ॥

संवत्सरो वज्र इति । स च ' संवत्सरः ' ' वज्रः '; वज्ररूपाग्न्यादित्रयावृत्तिरूपत्वात् । तस्मादेता देवता यजतीति । उपसंहारः ॥ १६ ॥

उपसदां त्रित्वं विधाय प्रशंसति—स वै तिस्र उपसद उपेयात् त्रयो वा ऋतव इत्यादिना[1] । द्विरेकया प्रचरतीति । आग्नेयादियागत्रयस्य व्यापकोपसत्तया एकस्मिन्नह्नि ' द्विः प्रचरति ' अनुतिष्ठेत् । तथाविधानुष्ठानस्य दिनत्रयकर्तव्यता वीप्सयोच्यते ॥ १७ ॥

दिनत्रयेऽपि द्विर्द्विरनुष्ठानं प्रशंसति—ताः षट् सम्पद्यन्त ( तै. सं ६।२।३।४ ) इत्यादिना ॥ १८ ॥

---

१—एकाहस्त्र्युपसत्को द्वादश वा । का० श्रौ० सू० ८–५४ । २—द्विरेकया चरति सुसायᳲ सुपूर्वाह्णे च । का०श्रौ० सू०८–५२। सूत्रे सायंशब्दोऽपराह्णवाची । तथाः पूर्वाह्णेऽनुवाक्या भवंति ता अपराह्णे याज्याः । इति श्रुतौ ३ । ४ । १ । २ अपराह्णश्रवणात् इति पितृभूतिः ।

यद्यु द्वादशोपसदऽउपेयाद् । (द्वा) द्वादश वै मासाः संव्वत्सरस्य संव्वत्सरस्यैवैतद्रूपं क्रियते संव्वत्सरमेवैतत्सꣳस्करोति द्विरेकया प्रचरति द्विरेकया ॥ १९ ॥

ताश्चतुर्विꣳशतिः सम्पद्यन्ते । चतुर्विꣳशतिर्वै संव्वत्सरस्यार्द्धमासाः संव्वत्सरस्यैवैतद्रूपं क्रियते संव्वत्सरमेवैतत्सꣳस्करोति ॥ २० ॥

स यत्सायम्प्रातः प्रचरति । तथा ह्येव सम्पत्सम्पद्यते स यत्पूर्वाह्णे प्रचरति तज्जयत्यथ यदपराह्णे प्रचरति सुजितमसदित्यथ यज्जुहोतीदं वै पुरं युद्धचन्ति तां जित्वा स्वाꣳ सतीं प्रपद्यन्ते ॥ २१ ॥

स यत्प्रचरति । तद्युध्यत्यथ यत्सन्तिष्ठते तज्जयत्यथ यज्जुहोति स्वामेवैतत्सतीं प्रपद्यते ॥ २२ ॥

---

यद्यु द्वादशोपसद उपेयात् । द्वादश वै मासाः संवत्सरस्य; संवत्सरस्यैवैतद्रूपं क्रियते । संवत्सरमेवैतत्संस्करोति । द्विरेकया प्रचरति । द्विरेकया ॥ १९ ॥

ताश्चतुर्विंशतिः सम्पद्यन्ते । चतुर्विंशतिर्वै संवत्सरस्यार्द्धमासाः; संवत्सरस्यैवैतद्रूपं क्रियते । संवत्सरमेवैतत्संस्करोति ॥ २० ॥

स यत् सायम्प्रातः प्रचरति; तथा ह्येव सम्पत्सम्पद्यते । स यत् पूर्वाह्णे प्रचरति; तज्जयति । अथ यदपराह्णे प्रचरति सुजितमसदिति । अथ यज्जुहोति । इदं वै पुरं युद्धचन्ति; तां जित्वा स्वां सतीं प्रपद्यन्ते ॥ २१ ॥

स यत् प्रचरति तद्युध्यति । अथ यत् सन्तिष्ठते । तज्जयति । अथ यज्जुहोति स्वामेवैतत् सतीं प्रपद्यते ॥ २२ ॥

---

त्रित्वपक्षवदुपसद्द्वादशत्वपक्षमपि विकल्पयति—यद्यु द्वादशोपसद इति । अस्मिन्नपि पक्षे प्रतिदिनमुपसदो-र्द्विर्द्विरनुष्ठानं विधत्ते—द्विरेकया प्रचरति द्विरेकयेति । वीप्सा पूर्ववत् ॥ १९ ॥

'द्विरेकया' इत्युक्तं द्विरनुष्ठानमनूद्य शत्रुजयसम्पत्त्यानुकूल्यात्मना प्रशंसति—ताश्चतुर्विंशतिरित्यादिना ॥ २०

स यत् सायंप्रातरिति । सम्पत्तिसाम्यं विभज्य दर्शयति—स यत् पूर्वाह्णे प्रचरतीति । पूर्वाह्णप्रचारः शत्रुजयमात्ररूपः, अपराह्णप्रचारस्तु साकल्येन जयात्मक इत्यर्थः । आग्नेयादियागत्रयवदर्विहोमरूपं कञ्चिदुपसद्धोमं विधत्ते—अथ यज्जुहोतीति । अत्रापूर्वार्थत्वाद् यच्छब्दतिरस्कारेण विधिरभ्युपगन्तव्यः । विहितमुपसद्धोमं पूर्वयागैर्जितस्य स्वाधीनीकरणात्मना प्रशंसति—इदं वै पुरं युद्धचन्ति तां जित्वा स्वां सतीं प्रपद्यन्त इति । इदं हि लोके दृश्यत इति शेषः । जेतारः प्रथमं पुरं युद्धयन्ति, भिन्दन्ति, पश्चात् तां जयन्ति, सुविजितां च पुनः 'स्वाम्' आत्मीयां प्रपद्यन्त इति ॥ २१ ॥

लोकप्रकारं प्रकृतकर्मणि विभज्य दर्शयति—स यत् प्रचरतीति । 'प्रचारः' आनुपूर्व्येण समाप्तिपर्यन्तो यागत्रयप्रयोगः स एव युद्धस्थानीयः । कृत्स्नसमापनं, तज्जयस्थानीयम् । योऽयमुपसद्धोमः, स जितस्य स्वाधीनत्वसम्पादनात्मकः ॥ २२ ॥

स जुहोति । यया द्विरेकस्याह्नः प्रचरिष्यन्भवति या तेऽअग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहेत्येवꣳरूपा हि साऽऽसीदयस्मयी हि साऽऽसीत् ॥ २३ ॥

(द) अथ जुहोति । यया द्विरेकस्याह्नः प्रचरिष्यन्भवति या तेऽअग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचोऽअपावधीत्त्वेषं वचोऽअपावधीत्स्वाहेत्येवꣳरूपा हि साऽऽसीद्रजता हि साऽऽसीत् ॥ २४ ॥

(द) अथ जुहोति । यया द्विरेकस्याह्नः प्रचरिष्यन्भवति या तेऽअग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो ऽ अपावधीत्त्वेषं वचोऽअपावधीत्स्वाहेत्येवꣳरूपा हि साऽऽसीद्धरिणी हि साऽऽसीद्यद्यु द्वादशोपसदऽ उपेयाच्चतुरहमेकया प्रचरेच्चतुरहमेकया ॥ २५ ॥

---

स जुहोति यया द्विरेकस्याह्नः प्रचरिष्यन्भवति । " या ते ऽअग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो ऽअपावधीत्त्वेषं वचो अपावधीत् स्वाहा "–( वा. सं. ५।८ ) इति । एवंरूपा हि साऽऽसीद्; अयस्मयी हि साऽऽसीत् ॥ २३ ॥

अथ जुहोति । यया द्विरेकस्याह्नः प्रचरिष्यन् भवति । " या तेऽअग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो ऽअपावधीत्त्वेषं वचो ऽअपावधीत स्वाहा "–(वा. सं.५।८) इति । एवंरूपा हि साऽऽसीद् रजता हि साऽऽसीत् ॥ २४ ॥

अथ जुहोति यया द्विरेकस्याह्नः प्रचरिष्यन्भवति । " या ते ऽअग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो ऽअपावधीत्त्वेषं वचो ऽअपावधीत स्वाहा "–( वा. सं. ५।८ )

---

प्रथमदिनोपसद्धोमे मन्त्रं विधातुमाह–स जुहोति यया द्विरेकस्याह्नः प्रचरिष्यन्भवतीति । उक्तानुसङ्कीर्तनमुपसद्यागवदुपसद्धोमोऽपि एकस्मिन्नहनि द्विः कर्तव्य इति ज्ञापनार्थम् । मन्त्रस्यायमर्थः । हे अग्ने ! ' ते ' तव या ' तनूः ' ' अयःशया ' अयसि शेते इत्ययःशया अयोरूपेत्यर्थः । ' वर्षिष्ठा ' उरुतरा ' ' गह्वरेष्ठा ' गह्वरे परैरनिर्गम्ये स्थाने वर्तमाना अस्ति, सा तनूः मम ' उग्रं ' ' त्वेषं ' ' वचः ' अपावधीत् ' । उग्रत्वेषयोरर्थस्तैत्तिरीयके स्पष्टमाम्नातः–" अशनायापिपासे ह वा उग्रं वचः, एनश्च वैरहत्यञ्च त्वेषं वचः "–( तै. सं. १ । २ । ११ सायणभाष्ये ) इति मन्त्रे यादृग्रूपा तनूर्निर्दिष्टा, सा न स्तुत्यर्थेत्याह–**एवंरूपा हि साऽऽसीदिति** ॥ २३ ॥

एवं द्वितीयतृतीयोपसन्मन्त्रावपि व्याख्येयौ ॥ २४ ॥

एवमुपसत्त्रयस्य मन्त्रान् निर्दिश्य, द्वादशोपसत्पक्षे न्यायसिद्धमर्थं ब्राह्मणं स्वयमेव विस्पष्टं दर्शयति–यद्यु द्वादशोपसद उपेयाच्चतुरहमेकया प्रचरेच्चतुरहमेकयेति । अयःशयेत्येतन्मन्त्रसाध्या एकोपसद् तादृशी

---

१–अक्त्वाप्रस्तरमुपसदं जुहोति स्रुवेण या त इत्ययःशयामन्वारब्धे । का. श्रौ. सू. ८ । ५१ ।

(या॒ऽथा) अथा॒तो व्र॒तोप॑स॒दा॑मे॒व । प॒र॒उ॒र्वी॑र्वा॒ अ॒न्या ऽउ॒प॒सदः॑ पु॒रो॒ऽह्वी॑र॒न्याः स॒ या॒सा॑मे॒कं प्र॒थ॒मा॒हे दो॒ग्ध्यथ॒ द्वाव॒थ त्रीं॒स्ताः प॑र॒उ॒र्वी॒र॒थ॒ या॒सां॒ त्री॒न्प्र॒थ॒मा॒हे॒ दो॒ग्ध्यथ॒ द्वाव॒थै॒कं॒ ताः॒ प॒रो॒ऽह्वी॒र्या॒ वै॒ पु॒रो॒ऽह्वी॒स्ताः॒ प॒र॒उ॒र्व्वी॒र्याः॒ प॒र॒उ॒र्व्वी॒स्ताः॒ पु॒रो॒ऽह्वीः ॥ २६ ॥

(स्त॒)त॒प॒सा वै लो॒कं ज॑यन्ति । त॒द॒स्यै॒तत्प॒रः॑पर॒ एव॒ व्व॒री॒य॒स्त॒पो॒ भ॒व॒ति॒ प॒रः॑पर॒ः श्रे॒या॒ᳫँसं॒ लो॒कं ज॑यति॒ व्व॒सी॒या॒नु॒ है॒वा॒स्मि॒ँल्लो॒के॒ भ॒व॒ति॒ य॒ ए॒वं वि॒द्वा॒न्पु॒रो॒ऽह्वी॒रु॒प॒स॒द॒ऽउ॒पै॒ति॒ त॒स्मा॒दु॒ पु॒रो॒ऽह्वी॒रे॒वो॒प॒स॒द॒ऽउ॒पे॒या॒द्य॒द्य॒ द्वा॒द॒शो॒प॒स॒द॒ ऽउ॒पे॒या॒त्त्रीं॒श्च॒तु॒र॒ह॒ं दो॒ह॒ये॒द्द्वौ च॒तु॒र॒ह॒मे॒कं च॒तु॒र॒ह॒म् ॥ २७ ॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ३ ॥ ५ ॥ ( ४-४ )

तृतीयः प्रपाठकः समाप्तः ॥ ३ ॥

---

इति । एवंरूपा हि साऽऽसीद् हरिणी हि साऽऽसीद् । यद्यु द्वादशोपसद उपेयात्; चतुरहमेकया प्रचरेच्चतुरहमेकया ॥ २५ ॥

अथातो व्रतोपसदामेव—परउर्वीर्वा अन्या उपसदः । परोऽह्वीरन्याः । स यासामेकं प्रथमाहे दोग्धि । अथ द्वौ । अथ त्रीन्; ताः परउर्वीः । अथ यासां त्रीन् प्रथमाहे दोग्धि । अथ द्वौ । अथैकम्; ताः परोऽह्वीः । या वै परोऽह्वीस्ताः परउर्वीः । याः परउर्वीस्ताः परोऽह्वीः ॥ २६ ॥

तपसा वै लोकं जयन्ति; तद् अस्यैतत् परः—पर एव वरीयस्तपो भवति । परःपरः श्रेयांसँल्लोकं जयति । वसीयानु हैवास्मिँल्लोके भवति; य एवं विद्वान् परोऽह्वीरुपसद उपैति । तस्मादु परोऽह्वीरेवोपसद उपेयाद् । यद्यु द्वादशोपसद उपेयात्; त्रींश्चतुरहं दोहयेद् । द्वौ चतुरहम् । एकं चतुरहम् ॥२७॥

---

चतुर्ष्वहस्सु आवर्तयेत् । पुनश्च द्वितीयमन्त्रसाध्ययाऽपि चतुर्दिनमावर्तयेत् । तृतीययाऽप्येवम् । एवं द्वादश सम्पाद्याः । कोऽर्थ उक्तो भवति ? अयःशयादीनां त्रयाणां मन्त्राणां मध्ये एकैकस्य मन्त्रस्यैकैकोपसदं गत्वा चतुर्षु दिनेषु प्रथमं "या ते अग्नेऽयःशया"—इति मन्त्रमावर्तयेत्, पुनः पञ्चमादिषु चतुर्षु दिनेषु रजःशयेति मन्त्रमावर्तयेत्, ततो नवमादिषु चतुर्षु दिनेषु हरिशयेति मन्त्रमावर्तयेदित्यर्थः ॥ २५ ॥

अथातो व्रतोपसदामेवेत्यादि । यासूपसत्सु यजमानो व्रतयति पयः, ताः 'व्रतोपसदः' तासां मीमांसा क्रियत इत्यर्थः । 'परउर्वीः' उपर्युपरि एकद्व्यादिस्तनवृद्ध्या व्रतवृद्धिर्यास्वस्ति ताः 'परउर्व्यः' उपसदः । 'ताः' केचनानुष्ठातारोऽनुतिष्ठन्तीति शेषः । उक्तवैपरीत्ययुक्ताः 'परोऽह्व्यः' उपर्युपरि ह्रसीयस्य इत्यर्थः । 'ताः' केचनानुष्ठातारोऽनुतिष्ठन्तीति । तद् द्विविधानामप्युपसदां स्वरूपतो विचार्यमाणे पर्यवसानस्यैकरूप्यान्न वस्तुतो भेदोऽस्ति ॥ २६ ॥

अथापि परोऽह्वीरेवोपेयात्, कस्माद्धेतोरिति तत्राह—तपसा वै लोकं जयन्तीति । परोऽह्वीषु उपर्युपरि

---

१—एवमितरे अन्वहं रजःशयां हरिशयां च । का. श्रौ. सू. ८ । ५३ । २—त्रिस्तनं प्रथमायां दोहयति । का० श्रौ० सू० ८—५५ । एकापचयेनोत्तरयोः । ८—५६ ।

# चतुर्थप्रपाठके प्रथमं ब्राह्मणं ।
# पञ्चमाध्याये च प्रथमं ब्राह्मणम् ।

**तद्य ऽएष पूर्वार्द्ध्यो व्वर्षिष्ठः स्थूणाराजो भवति । तस्मात्प्राङ्प्रक्रामति त्रीन्विक्रमांस्तच्छङ्कुं निहन्ति सोऽन्तःपातः ॥ १ ॥**

---

तद् य एष पूर्वार्द्ध्यो वर्षिष्ठः स्थूणाराजो भवति । तस्मात् प्राङ्प्रक्रामति त्रीन् विक्रमान् तच्छङ्कुं निहन्तिः सोऽन्तःपातः ॥ १ ॥

---

स्तनह्रासेन पयोह्रासात् तयोर्वृद्धिरुपर्युपरि भवति, तथा लोकमप्युपर्युपरि जयति तथा परउर्वीपक्षे स्तनबाहुल्य-सम्भवेन शरीरक्षयाभावाच्चिरकालं भूलोके 'वसीयानेव' वसुमत्तर एव 'भवति'। द्वादशोपसत्पक्षो व्रत-प्रकारः कथमिति, तत्राह—यद्यु द्वादशेति । प्रथमं 'चतुरहं' प्रथमेषु चतुर्षु दिनेषु प्रतिदिनं 'त्रींस्त्रीन्' स्तनान् 'दोहयेत्' द्वितीये चतुरहे 'द्वौ—द्वौ' तृतीये च 'एकैकम्' ( तै. सं. ६।२।३।५।६। ) इति ॥ २७॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे चतुर्थेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ३—४—४ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥
ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च॥ २॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ३

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये द्वितीयकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ३॥४॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यतीर्थमहेश्वरम् ॥ १ ॥
आतिथ्या तानूनप्त्रे च सोमाप्यायननिह्नवौ । उपसच्चेति पञ्चार्थाश्चतुर्थेऽत्र निरूपिताः ॥ २ ॥

अथ पञ्चमे सौमिकवेदिकरणादिकं निरूप्यते । अथ यदुक्तं कात्यायनेन—"औपवसथ्यात्पूर्वेऽहनि पौर्वाह्णिक्या प्रचर्य्य वेदिं मिमीते—" ( का. श्रौ. सू. ८ । १० ) इत्यादि; तदेतदाह—**तद्य एष पूर्वार्द्ध्यो वर्षिष्ठः स्थूणाराजो भवति, तस्मात् प्राङ् प्रक्रामति त्रीन् विक्रमांस्तच्छङ्कुं निहन्तीति** । 'य एषः' स्थूणा-राजः 'पूर्वार्द्ध्यः' पूर्वार्द्धमर्हतीति पूर्वार्द्ध्यः । प्राचीनवंशस्य पूर्वभागे आहवनीयपुरोदेशे वर्तमानः पृथुस्तम्भोऽस्ति 'तस्मात्' स्तम्भात् 'प्राङ् प्रक्रमान् प्रक्रामति त्रीन्'। 'तत्' तत्र तृतीयप्रक्रमावसाने 'शङ्कुं' निह-न्यात्, स्थापयेत् 'सोऽन्तःपातः' ऐष्टिकवेदेर्महावेदेश्चान्तरालसञ्चरः ॥ १ ॥

---

१—विपर्यस्य वानमिचित्ये । ८—५७ । एवं प्रवृद्धौ समं विभजेत् । का० श्रौ० सू० । ८—५८ । २—स्वस्थानविवृद्धिः । का० श्रौ० सू० ८—५९ । ३—पूर्वार्द्धात्स्तम्भात्पुरस्तात्त्रिषु प्रक्रमेषु शंकुं निहन्ति सोऽन्तःपात्य इति । का. श्रौ. सू. ८ । ६१ ।

( स्तु ) तुस्मान्मध्यमाच्छङ्कोः । ( दे ) दक्षिणा पञ्चदश विक्रमान्प्रक्रामति तुच्छङ्कुं निहन्ति सा दक्षिणा श्रोणिः ॥ २ ॥

( स्तु ) तुस्मान्मध्यमाच्छङ्कोः । ( रु ) उदङ्पञ्चदश विक्रमान्प्रक्रामति तुच्छङ्कुं निहन्ति सोत्तरा श्रोणिः ॥ ३ ॥

( स्तु ) तुस्मान्मध्यमाच्छङ्कोः । प्राङ्षट्त्रिꣳशतं विक्रमान्प्रक्रामति तुच्छङ्कुं निहन्ति स पूर्वार्धः ॥ ४ ॥

( स्तु ) तुस्मान्मध्यमाच्छङ्कोः । ( दे ) दक्षिणा द्वादश विक्रमान्प्रक्रामति तुच्छङ्कुं निहन्ति स दक्षिणोऽꣳसः ॥ ५ ॥

( स्तु ) तुस्मान्मध्यमाच्छङ्कोः । ( रु ) उदङ्द्वादश विक्रमान्प्रक्रामति तुच्छङ्कुं निहन्ति स उत्तरोऽꣳस ऽएषा मात्रा वेदेः ॥ ६ ॥

---

तस्मान्मध्यमाच्छङ्कोः—दक्षिणा पञ्चदश विक्रमान् प्रक्रामति । तत् शङ्कुं निहन्ति—सा दक्षिणा श्रोणिः ॥ २ ॥

तस्मान्मध्यमाच्छङ्कोः—उदङ् पञ्चदश विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति सोत्तरा श्रोणिः ॥ ३ ॥

तस्मान्मध्यमाच्छङ्कोः—प्राङ् षट्त्रिंशतं विक्रमान् प्रक्रामति । तच्छङ्कुं निहन्ति स पूर्वार्द्धः ॥ ४ ॥

तस्मान्मध्यमाच्छङ्कोः—दक्षिणा द्वादश विक्रमान् प्रक्रामति । तच्छङ्कुं निहन्ति स दक्षिणोंऽसः ॥ ५ ॥

तस्मान्मध्यमाच्छङ्कोः—उदङ् द्वादश विक्रमान्प्रक्रामति । तच्छङ्कुं निहन्ति स उत्तरोंऽसः । एषा मात्रा वेदेः ॥ ६ ॥

---

दक्षिणश्रोणिप्रमाणमाह—तस्मान्मध्यमाच्छङ्कोर्दक्षिणेति । मध्यमशङ्कोर्दक्षिणतः पञ्चदशविक्रमावसाने शङ्कुं स्थापयेत् । 'सा दक्षिणा श्रोणिः' मर्यादा भवति[1] ॥ २ ॥

एवमुत्तरश्रोणिवाक्यमपि—तस्मान्मध्यमाच्छङ्कोरुदङ्ङित्यादि ॥ ३ ॥

आयामस्य पश्चाद्भागावधिं प्रदर्श्य प्राचीनावधिमाह—तस्मान्मध्यमाच्छङ्कोः षट्त्रिंशतं विक्रमान् प्रक्रामतीति[2] ॥ ४ ॥

अथ दक्षिणोत्तरावंसौ दर्शयति—तस्मान्मध्यमाच्छङ्कोरिति । 'तस्मात्' पुरोदेशस्थात् 'मध्यमाच्छङ्कोः' श्रोणितः सकाशादंसयोरीषन्न्यूनत्वादुभयतो द्वादशप्रक्रमाभिधानम्[3] । इत्थं सर्वतो मितायां वेदिमात्रायां न्यूनाधिकत्वशङ्कामाशङ्क्य स्वयमेव व्यवच्छिनत्ति—एषा मात्रा वेदेरिति ॥ ५ ॥ ६ ॥

---

१—दक्षिणोत्तरौ च पञ्चदशसु पञ्चदशसु । का. श्रौ. सू ८ । ६३ । २—तस्मात्पुरस्तात्षट्त्रिंशति । का. श्रौ. सू. ८ । ६२
३—पूर्वार्द्धाच्च द्वादशसु । का. श्रौ. सू. ८ । ६५ ।

( र ) अथ यत्त्रिꣳशद्विक्रमा पश्चाद्भवति । त्रिꣳशदक्षरा वै विराड् विराजा वै देवा ऽअस्मिँल्लोके प्रत्यतिष्ठंस्तथो ऽएवैष ऽ एतद्विराजैवास्मिँ-ल्लोके प्रतितिष्ठति ॥ ७ ॥

( त्य ) अथोऽअपि त्रयस्त्रिꣳशत्स्युः । ( स्त्र ) त्रयस्त्रिꣳशदक्षरा वै विराट्तद्विराजैवास्मिँल्लोके प्रतितिष्ठति ॥ ८ ॥

( त्य ) अथ यत्षट्त्रिꣳशद्विक्रमा प्राची भवति । षट्त्रिꣳशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गं लोकꣳ समाश्नुवत तथो ऽएवैष ऽएतद् बृहत्यैव स्वर्गं लोकꣳ समश्नुते सोऽस्य दिव्याहवनीयो भवति ॥ ९ ॥

( त्य ) अथ यच्चतुर्विꣳशतिविक्रमा पुरस्ताद्भवति । चतुर्विꣳशत्य-क्षरा वै गायत्री पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्ध ऽएष यज्ञस्य तस्मा-च्चतुर्विꣳशतिविक्रमा पुरस्ताद्भवत्येषा मात्रा वेदेः ॥ १० ॥

---

अथ यत् त्रिंशद्विक्रमा पश्चाद् भवति । त्रिंशदक्षरा वै विराट् । विराजा वै देवाऽअस्मिँल्लोके प्रत्य-तिष्ठन् । तथोऽएवैष एतद्विराजैवास्मिँल्लोके प्रतितिष्ठति ॥ ७ ॥

अथो ऽअपि त्रयस्त्रिंशत्स्युः । त्रयस्त्रिंशदक्षरा वै विराट् विराजैवास्मिँल्लोके प्रतितिष्ठति ॥ ८ ॥

अथ यत् षट्त्रिंशद्विक्रमा प्राची भवति । षट्त्रिंशदक्षरा वै बृहती । बृहत्या वै देवाः स्वर्गं लोकं समाश्नुवत । तथोऽएवैषऽएतद् बृहत्यैव स्वर्गं लोकं समश्नुते । सोऽस्य दिव्याहवनीयो भवति ॥ ९ ॥

अथ यत् चतुर्विंशतिविक्रमा पुरस्ताद्भवति । चतुर्विंशत्यक्षरा वै गायत्री । पूर्वार्द्धो वै यज्ञस्य गायत्री, पूर्वार्द्ध एष यज्ञस्य । तस्माच्चतुर्विंशतिविक्रमा पुरस्ताद्भवति । एषा मात्रा वेदेः ॥ १० ॥

---

अथ विहितं वेदिमानं क्रमेण प्रशिशंसिषुरादौ पश्चान्मानं प्रशंसति—अथ यत् त्रिंशद्विक्रमा पश्चाद् भव-तीति । त्रिंशत्पक्षे, विराजः प्रतिपादं दशाक्षरत्वात् त्रिंशदक्षराणि । स्पष्टमन्यत् ॥ ७ ॥

पश्चान्माने पक्षान्तरमाह—अथो अपि त्रयस्त्रिंशत्स्युरिति[1] । 'अथो'—शब्दः पक्षं व्यावर्तयति—"न वा एकेनाक्षरेण छन्दांसि वियन्ति"—( ऐ. ब्रा. १ । १ । ६ । ) इति न्यायात् । प्रतिपादमेकैकाधिक्येन विराजस्त्रयस्त्रिंशदक्षरत्वम् ॥ ८ ॥

अथ प्रागायामस्येयत्तां प्रशंसति—अथ यत्षट्त्रिंशद्विक्रमा प्राची भवतीति । चतुर्विंशत्यक्षरगायत्र्या-श्चतुरक्षराधिक्येनोष्णिगादिक्रमेण बृहत्याः षट्त्रिंशदक्षराणि भवन्ति । स्पष्टमन्यत् ॥ ९ ॥

प्राग्दिगवस्थितयोरंसयोः प्रमाणं मिलित्वा प्रशंसति—अथ यच्चतुर्विंशतिविक्रमा पुरस्ताद् भवतीति । 'पुरस्तात्' पूर्वस्यां दिशि विस्तारेण 'चतुर्विंशतिविक्रमा भवति' । पूर्वार्द्धो वै यज्ञस्येति । 'यज्ञस्य' यज्ञाङ्गस्य, वेदिस्वरूपस्य 'एषः पूर्वार्द्धः' इत्यर्थः । गायत्र्याः पूर्वार्द्धत्वं "गायत्रं वै प्रातस्सवनम्"—( ऐ. ब्रा. ६ । १ । २ ) ( नि. ७ । ३ । १ ) इति श्रुतेः सिद्धम् ॥ १० ॥

---

१ अर्द्धसप्तदशेषु वा । का. श्रौ. सू. ८ । ६४ ।

(३) अथ यत्पश्चाद्वरीयसी भवति । पश्चाद्वरीयसी पृथुश्रोणिरिति वै योषां प्रशꣳसन्ति यद्वेव पश्चाद्वरीयसी भवति पश्चादेवैतद्वरीयः प्रजननं करोति तस्मात्पश्चाद्वरीयसः प्रजननादिमाः प्रजाः प्रजायन्ते ॥ ११ ॥

नासिका ह वा ऽएषा यज्ञस्य यदुत्तरवेदिः । (३) अथ यदेनामुत्तरां वेदेरुपकिरति तस्मादुत्तरवेदिर्नाम ॥ १२ ॥

द्वय्यो ह वा ऽइदमग्रे प्रजा आसुः । (२) आदित्याश्चैवाङ्गिरसश्च ततोऽङ्गिरसः पूर्वे यज्ञꣳ समभरꣳस्ते यज्ञꣳ सम्भृत्योचुरग्निमिमां नः श्वःसुत्यामादित्येभ्यः प्रब्रूह्यनेन नो यज्ञेन याजयतेति ॥ १३ ॥

---

अथ यत् पश्चाद्वरीयसी भवति । पश्चाद्वरीयसी पृथुश्रोणिः । इति वै योषां प्रशंसन्ति । यद्वेव पश्चाद्वरीयसी भवति । पश्चादेवैतद्वरीयः प्रजननं करोति । तस्मात् पश्चाद्वरीयसः प्रजननादिमाः प्रजाः प्रजायन्ते ॥ ११ ॥

नासिका ह वा एषा यज्ञस्य—यदुत्तरवेदिः । अथ यदेनामुत्तरां वेदेरुपकिरति; तस्मादुत्तरवेदिर्नाम ॥ १२ ॥

द्वय्यो ह वा इदमग्रे प्रजा आसुः, आदित्याश्चैव, अङ्गिरसश्च । ततोऽङ्गिरसः पूर्वे यज्ञं समभरन् । ते यज्ञं सम्भृत्योचुरग्निम्—इमां नः श्वःसुत्यामादित्येभ्यः प्रब्रूहि । अनेन नो यज्ञेन याजयतेति॥१३॥

---

श्रोणिभागस्योरुत्वमंसभागस्य ह्रस्वत्वं यदस्ति तत् प्रशंसति—अथ यत्पश्चाद्वरीयसी भवतीति । श्रोणिभागस्य त्रिंशत्प्रक्रमत्वोक्तेः, अंसभागस्य चतुर्विंशत्यभिधानात् पश्चाद्वरीयस्त्वम् । यस्माल्लोके 'पृथुश्रोणिः योषा' प्रशस्ता तस्माद् वेद्याः पश्चाद्भागस्यापि श्रोणित्वात् पृथुत्वं युक्तमित्यर्थः । श्रोणिपृथुत्वं कुत्रोपयुज्यते इति, तदुपयोगमाह—तस्मात् पश्चाद् वरीयस इति । प्रजायन्तेऽत्रेति 'प्रजननं' पश्चाद्भागे उरुतरं यत् तत् 'पश्चाद्वरीयः'। तादृक् प्रजननात् प्रजायन्ते, अतः प्रजननहेतुत्वात्—पश्चाद्वरीयस्त्वं प्रशस्तम् ॥ ११ ॥

सार्थवादमुत्तरवेदिनिर्माणं विधत्ते—नासिका ह वा एषा यज्ञस्येति । नासिकाया मुखप्रदेशादपि समुच्छ्रितत्वादुत्तरवेदेर्मृदोच्छ्रितता कर्तव्या । उन्नतत्वमुत्तरवेदिनामनिर्वचनद्वारेण प्रशंसति—अथ यदेनामुत्तरां वेदेरुपकिरतीति । यस्माद् 'वेदेः' सौमिक्याः 'उत्तराम्' अत्युन्नताम् 'उपकिरति' मृदं क्षिपति 'तस्माद्' वेदेः प्रागवयवभूतस्य प्रदेशस्योन्नततरत्वात् 'उत्तरवेदिः' इति 'नाम' सम्पन्नम् ॥ १२ ॥

अथोत्तरवेदिव्याघारणविध्यर्थमाख्यायिकामाह—द्वय्यो ह वा इदमग्रे प्रजा आसुरिति । 'अग्रे' सृष्टेः पूर्वम् 'द्वय्यः' द्विविधा एव 'प्रजाः' 'आसुः' अभवन् । कास्ताः ? 'आदित्याश्चैवाङ्गिरसश्च ।' ते 'अङ्गिरसः' 'पूर्वे' आदित्येभ्यः पूर्वभाविनः सन्तो 'यज्ञं' सम्भृतवन्तः । सम्भृतयज्ञाः 'ते' 'अग्निम्' इत्थम् 'ऊचुः—' हे अग्ने ! त्वं 'नः' अस्माकं 'इमाम्' 'श्वःसुत्यां' परेद्युः क्रियमाणमभिषवम् 'आदित्येभ्यः प्रब्रूहि;' त्वमपि 'अनेन' सोमयागेन 'नः' अस्मान् 'याजयेति'। एवमुक्तोऽग्निरादित्येभ्यः पूर्वभाविनः वृत्तान्तं प्रोवाच ॥ १३ ॥

---

१—याजयेति सायणसंमतः पाठः । स च युक्तो भाति ।

ते हादित्या ऽऊचुः । ( रु ) उपजानीत यथा वाऽस्मानेवाङ्गिरसो याज-
यान्न व्वयमङ्गिरस इति ॥ १४ ॥

ते होचुः । ( र्न ) न वाऽअन्येन यज्ञादपक्रमणमस्त्यन्तरामेव सुत्यां
ध्रियामहाऽइति ते यज्ञꣳ सञ्जह्रुस्ते यज्ञꣳ सम्भृत्योचुः श्वःसुत्यां वै
त्वमस्मभ्यमग्ने प्रावोचोऽथ व्वयमद्य सुत्यामेव तुभ्यं प्रब्रूमोऽङ्गिरोभ्यश्च
तेषां नस्त्वꣳ होताऽसीति ॥ १५ ॥

तेऽन्यमेव प्रतिप्रजिघ्युः । ( र ) अङ्गिरसोऽच्छ ते हाप्यङ्गिरसोऽग्नयेऽन्वा-
गत्य चुक्रुधुरिव कथं नु नो दूतश्चरन्न प्रत्याहथाऽइति ॥ १६ ॥

---

ते हादित्या ऊचुः । उपजानीत यथा वाऽस्मानेवाङ्गिरसो याजयान् । न वयम् अङ्गिरस इति ॥ १४ ॥

ते होचुः—न वाऽअन्येन यज्ञादपक्रमणमस्ति । अन्तरामेव सुत्यां ध्रियामहाऽइति । ते यज्ञं संजह्रुः । ते यज्ञं संभृत्योचुः; श्वः सुत्यां वै त्वमस्मभ्यमग्ने प्रावोचः । अथ वयमद्यसुत्यामेव तुभ्यं प्रब्रूमः, अङ्गिरोभ्यश्च, तेषां नस्त्वं होताऽसीति ॥ १५ ॥

तेऽन्यमेव प्रतिप्रजिघ्युः अङ्गिरसः—अच्छ ते हाप्याङ्गिरसोऽग्नयेऽन्वागत्य, चुक्रुधुरिव—कथं नु नो दूतश्चरन् न प्रत्याहथा इति ॥ १६ ॥

---

ते हादित्या ऊचुरिति । त आदित्या आहूता इत्थं व्यचारयन् । कथम् ? ' यथा ' येन प्रकारेण ' अस्मानेव ' ' अङ्गिरसः ' ' याजयान् ' याजयेयुः ' वयं ' तु ' न ' तान् याजयामः । तत्प्रकारश्चिन्त्यतामिति ॥ १४ ॥

ते होचुरिति । विचार्येत्थमूचुः । न वा अन्येन यज्ञादपक्रमणमस्तीति । ' अन्येन ' वक्ष्यमाणात् साद्यस्क्रानुष्ठानात् अन्येन ' यज्ञात् ' अङ्गिरोभिरनुष्ठीयमानात् अस्मात् ' अपक्रमणमस्ति; ' अतः ' सुत्यामन्तरामेव ' अङ्गिरसां सुत्यातः पूर्वमेवास्माकं सुत्याम् ' ध्रियामहै ' व्यवस्थापयिष्यामः ' इति ' विचारितवन्तः । ' ते ' ' यज्ञं ' सुत्यालक्षणं ' सम्भृत्य ' अग्निम् ' ऊचुः ' । ' त्वम् ' अस्मभ्यं ' श्वःसुत्यां ' ' अग्ने ! ' प्रावोचः । ' अथ '—शब्दस्त्वर्थे । ' वयं ' तु ' तुभ्यम् ' ' अङ्गिरोभ्यश्च ' अद्यसुत्यां ' अद्य क्रियमाणा सुत्या अद्यसुत्या, तां ' प्रब्रूमः ' । ' तेषां ' ' नः ' तथा कुर्वतामस्माकं ' त्वं ' ' होता ' भव ॥ १५ ॥

तेऽन्यमेव प्रतिप्रजिघ्युरिति । एवमुक्तवन्तस्तु ' अङ्गिरसः ' एतद्वृत्तान्तावबोधनाय अग्निप्रतिनिधिम् ' अन्यम् ' ' प्रजिघ्युः । " हि गतौ वृद्धौ च "—( धा. पा. स्वा. प. १० ) प्रैरयन् । ' ते ' अङ्गिरसः ' अग्नयेऽन्वागत्य ' ' चुक्रुधुः ' । " क्रुधद्रुहेर्ष्या "—( पा. सू. १ । ४ । ३७ ) इत्यादिना क्रुधियोगे चतुर्थी । कथं नु नो दूत इति । क्रोधप्रकार उक्तः । ' न प्रत्याहथाः ' आदरस्य प्रत्यादरं न कृतवानसि ॥ १६ ॥

स होवाच । (चा) अनिन्द्या वै माऽवृषत सोऽनिन्द्यैर्वृतो नाशकमुपक्रमितुमिति तस्माद्ध हानिन्द्यस्य वृतो नापक्रामेत्त ऽएतेन सद्यःक्रियाऽङ्गिरस ऽआदित्यानयाजयन्त्स सद्यःक्रीः ॥ १७ ॥

( स्ते ) तेभ्यो व्वाचं दक्षिणामानयन् । ( यंस्तां ) तां न प्रत्यगृह्णन्हास्यामहे यदि प्रतिग्रहीष्यामऽइति तद्ध तद्यज्ञस्य कर्म्म न व्यमुच्यत यद्दाक्षिणमासीत् ॥ १८ ॥

( द्व ) अथैभ्यः सूर्यं दक्षिणामानयन् । ( यंस्तं ) तं प्रत्यगृह्णंस्तस्माद्ध ह स्माहुरङ्गिरसो व्वयं वाऽआर्त्विजीनाः स्मो व्वयं दक्षिणीया ऽअपि वाऽअस्माभिरेष प्रतिगृहीतो यऽएष तपतीति तस्मात्सद्यःक्रियोऽश्वः श्वेतो दक्षिणा ॥ १९ ॥

---

स होवाच । अनिन्द्या वै माऽवृषत । सोऽनिन्द्यैर्वृतो नाशकमपक्रमितुमिति । तस्माद्ध हानिन्द्यस्य वृतो नापक्रामेत् । त एतेन सद्यःक्रियाऽङ्गिरस आदित्यानयाजयन्, स सद्यःक्रीः ॥ १७ ॥

तेभ्यो वाचं दक्षिणामानयन्, तां न प्रत्यगृह्णन्; हास्यामहे यदि प्रतिग्रहीष्याम इति । तद्ध तद्यज्ञस्य कर्म न व्यमुच्यत; यद्दाक्षिणमासीत् ॥ १८ ॥

अथैभ्यः सूर्यं दक्षिणामानयन्, तं प्रत्यगृह्णन्, तस्माद्ध ह स्माहुः; अङ्गिरसो वयम्, वाऽआर्त्विजीनाः स्मो, वयं दक्षिणीया अपि वाऽअस्माभिरेष प्रतिगृहीतो य एष तपतीति । तस्मात् सद्यःक्रियोऽश्वः श्वेतो दक्षिणा ॥ १९ ॥

---

अग्नेरुत्तरम्—स होवाचानिन्द्या वै माऽवृषतेत्यादि । प्रासङ्गिकं किञ्चिद्धर्मविशेषं विधत्ते—तस्माद्ध हानिन्द्यस्य वृतो नापक्रामेदिति । 'सः' 'सद्यःक्रीः' एकाहः सोमयागः । 'एतेन अङ्गिरसः आदित्यान् अयाजयन्' । दीक्षासोमक्रयादीनां सद्य एव क्रियमाणत्वात् 'सद्यःक्रीः' इति नाम ॥ १७ ॥

तेभ्यो वाचं दक्षिणामिति । तेभ्यः साद्यस्क्रयाजकेभ्यः 'वाचम्' एव दक्षिणात्वेन प्रादुरित्यर्थः । वाग्दक्षिणाया निराकरणस्याभिप्रायमाह—हास्यामहे यदि प्रतिग्रहीष्याम इति । 'यदि' स्वीकरिष्यामः, तर्हि 'हास्यामहे' त्यक्ष्यामहे, दक्षिणोत्तरकालमपि वाचोऽपेक्षितत्वात्; तथा सति यज्ञोऽदक्षिणः स्यात् अस्तु, को दोष इत्यत आह—यद्दाक्षिणमासीदिति । दक्षिणासम्बन्धि 'दाक्षिणं' कर्म । 'तद्' 'यज्ञस्य' सम्बन्धि 'कर्म,' 'न व्यमुच्यत' विमुक्तं न आसीत्, सम्पूर्णं नाभवदित्यर्थः ॥ १८ ॥

अथैभ्यः सूर्यमित्यादि । स्पष्टम् । तस्माद्ध ह स्माहुरिति । 'आहुः अङ्गिरसः' स्वयं ब्रुवते—'आर्त्विजीनाः' ( पा. सू. ५ । १ । ७१ । ) 'स्मः' सम्यगृत्विक्त्वयोग्याः स्मः । तथा 'दक्षिणीयाः' दक्षिणायोग्याः । आर्त्विजीनत्वदक्षिणीयत्वयोरुभयोरपि हेतुरुच्यते—अस्माभिरेष प्रतिगृहीत इति । एतच्छब्दार्थमाह—य एष तपतीति । प्रसङ्गात् साद्यस्क्रस्य दक्षिणामाह—तस्मात् सद्यःक्रियोऽश्वः श्वेत इति । अश्वः

तस्य रुक्मः पुरस्ताद्भवति । तदेतस्य रूपं क्रियते य एष तपति यद्यश्वꣳ श्वेतं न विन्देदपि गौरेव श्वेतः स्यात्तस्य रुक्मः पुरस्ताद्भवति तदेतस्य रूपं क्रियते यऽएष तपति ॥ २० ॥

तेभ्यो ह वाक् चुक्रोध । केन मदेष श्रेयान्बन्धुना ३केना३ यदेतं प्रत्यग्रहीष्ट न मामिति सा हैभ्योऽपचक्राम सोभयानन्तरेण देवासुरान्त्संयत्तान्त्सिꣳही भूत्वाऽऽददाना चचार तामुपैव देवाऽआमन्त्रयन्तोपासुरा अग्निरेव देवानां दूत ऽआस सहरक्षा ऽइत्यसुररक्षसामसुराणाम् ॥ २१ ॥

(५ꣳ) सा देवानुपावत्स्यन्त्युवाच । यद्द ऽउपावर्तेय किं मे ततः स्यादिति

---

तस्य रुक्मः पुरस्ताद् भवति । तद् एतस्य रूपं क्रियते; य एष तपति । यद्यश्वं श्वेतं न विन्देत्, अपि गौरेव श्वेतः स्यात्, तस्य रुक्मः पुरस्ताद् भवति । तद् एतस्य रूपं क्रियते य एष तपति॥२०॥

तेभ्यो ह वाक् चुक्रोध–केन मद् एष श्रेयान्, बन्धुना ३ केना ३ यद् एतं प्रत्यग्रहीष्ट; न मामिति । सा हैभ्योऽपचक्राम। सोभयानन्तरेण देवासुरान् संयत्तान् सिंही भूत्वाऽऽददाना चचार । तामुपैव देवाऽअमन्त्रयन्त, उपासुराः। अग्निरेव देवानां दूत आस, सहरक्षा इति असुररक्षसामसुराणाम्॥२१॥

सा देवानुपावत्स्यन्त्युवाच । यद्द उपावर्तेय किं मे ततः स्यादिति । पूर्वामेव त्वाऽग्नेराहुतिः

---

सूर्यप्रतिनिधित्वेन दीयते । सूर्यस्याश्वत्वेनोपासनाविधानात् ( श. प. ब्रा. १० । ६ । ४ । १ ) अध्वाशनसाम्याच्च सूर्यस्याश्वस्थानीयत्वम् ( नि. १ । ४ । १ । २।७।९ ) । सोऽपि वर्णसाम्याय श्वेतो भवेत् ॥ १९ ॥

तस्य रुक्मः पुरस्ताद्भवतीति । तस्य पुरोदेशे ' रुक्मः ' हिरण्यफलको वर्तुलाकारो भवेत् । यद्यश्वमित्यादि स्पष्टम् ॥ २० ॥

तेभ्यो ह वागित्यादि । ' तेभ्यः ' अङ्गिरोभ्यः ' वाक् ' कुपितवत्यासीत् । केन मदेष श्रेयान् बन्धुना ३ इति । ' केन ३ ' इति असूयार्थे प्लुतिः ( पा. सू. ८ । २।१०३ ) । ' मत् ' मत्तः सकाशात् ' केन ' बन्धुना, बध्नातीति बन्धुः विशेषगुणः; केन विशेषगुणेन ' एषः ' सूर्यः ' श्रेयान् ' अतिशयेन प्रशस्यः । प्रशस्यहेतुभूतानां सर्वगुणानामभिधानाय पुनः ' केना ३– ' इति ग्रहणम् । यदेतं प्रत्यग्रहीष्टेति । ' यत् ' येन अतिशयेन ' एतम् ' आदित्यम् ' प्रत्यग्रहीष्ट, ' ' न माम् ' । मय्यविद्यमानः[1] कोऽतिशयस्तत्र दृष्टः ? न कोऽप्यस्तीत्यर्थः । ' उभयान् संयत्तान् देवासुरान् ' परस्पर–कलहायोपयुक्तान् देवानसुरांश्च ' अन्तरेण ' मध्ये ' सा ' अङ्गिरोभ्योऽपक्रान्ता वाक् । ' सिंही भूत्वा ' ' आददाना ' जिर्वत्सया[2] समीपस्थं सर्वं स्वीकुर्वती ' चचार ' । तदानीम् ' अग्निरेव देवानां दूतः ' अभवत्; असुरार्थाह्वानाय सहरक्षोनामकोऽसुरो दूतोऽभवदित्यर्थः ॥ २१ ॥

सा देवानिति । उभयैरप्याहूता सती पूर्वं देवान् प्रत्येव उपावर्तमाना, आगमनोत्कोचरूपं किञ्चित्

---

१–' अप्यविद्यमानः ' इति पा । २–' जिन्वमाना ' इति क० पा० ।

पूर्व्वामेव त्वाऽग्नेराहुतिः प्राप्स्यतीत्यथ हैषा देवानुवाच यां मया काञ्चाशिषमाशासिष्यध्वे सा वः सर्व्वा समर्द्धिष्यत इति सैवं देवानुपाववर्त॥२२॥
स यद्धार्यमाणेऽग्नौ । (ग्राऽउ) उत्तरवेदिं व्याघारयति यदेवैनामदो देवाऽअब्रुवन्पूर्व्वां त्वाऽग्नेराहुतिः प्राप्स्यतीति तदेवैनामेतत्पूर्व्वामग्नेराहुतिः प्राप्नोति वाग्घ्येषा निदानेनाथ यदुत्तरवेदिमुपकिरति यज्ञस्यैव सर्व्वत्वाय वाग्घि यज्ञो वागु ह्येषा ॥ २३ ॥
तां वै युगशम्येन विमिमीते । युगेन यत्र हरन्ति शम्यया यतो हरन्ति युगशम्येन वै योग्यं युञ्जन्ति सा यदेवादः सिꣳही भूत्वा शान्तेवाचरत्तदेवैनामेतद्यज्ञे युनक्ति ॥२४॥

---

प्राप्स्यतीति । अथ हैषा देवानुवाच–यां मया काञ्चाशिषमाशासिष्यध्वे सा वः सर्वा समर्द्धिष्यत इति । सैवं देवानुपाववर्त ॥ २२ ॥
स यद्धार्यमाणेऽग्नौ उत्तरवेदिं व्याघारयति; यदेवैनामदो देवा अब्रुवन्–पूर्वां त्वाऽग्नेराहुतिः प्राप्स्यतीति । तदेवैनामेतत् र्वामग्नेराहुतिः प्राप्नोति । वाग्घ्येषा निदानेन । अथ यदुत्तरवेदिमुपकिरति–यज्ञस्यैव सर्वत्वाय । वाग्घि यज्ञः, वागु ह्येषा ॥ २३ ॥
तां वै युगशम्येन विमिमीते । युगेन यत्र हरन्ति, शम्यया यतो हरन्ति युगशम्येन वै योग्यं युञ्जन्ति । सा यदेवादः सिंही भूत्वा शान्तेवाचरत्–तदेवैनामेतद्यज्ञे युनक्ति ॥ २४ ॥

---

अर्थयामास । ते च देवाः अग्नेः पूर्वभाविनीमाज्याहुतिमागमनोपाधिना प्राहुः । 'सा' 'देवान्' इदम् 'उवाच' । हे देवाः ! 'यां कां च आशिषम्' 'आशासिष्यध्वे' इच्छथ, 'सा' सर्वोप्याशीः 'वः', युष्माकं 'समर्द्धिष्यते' समृद्धा भविष्यतीति । ततः सा प्रतिनिवृत्ताऽऽसीत् ॥ २२ ॥
इदानीमुत्तरवेदिव्याघारणं विधत्ते–स यद् धार्यमाणेऽग्नावुत्तरवेदिं व्याघारयतीति । अग्नावुत्तरवेदेरुपरि धार्यमाणे सति तामुत्तरवेदिं व्याघारयेदित्यर्थः । यदेवैनामित्यादि । एतद्व्याघारणेन या आहुतिः अपवृत्तायै वेदिरूपायै वाचे देवैः कल्पिता, सा कृता भवति; अतो व्याघारयेदित्यर्थः । उत्तरवेद्यामाघारणेन वाचः किमायातमित्यत आह–वाघ्येषा निदानेनेति । अत एव वागात्मकत्वात् उत्तरवेदिप्रक्षेपस्यवापगताया वाचोऽवरोधनरूपत्वात् उत्तरवेद्युपतापेन यज्ञः सफलो भवतीत्यर्थः ॥ २३ ॥
उत्तरवेद्या मानादिसाधनं द्रव्यं विधत्ते–तां वै युगशम्येनेति । युगेन शम्यया चेत्यर्थः । युगवच्छम्याया अपि साधनत्वमस्तीत्याह–युगेन यत्र हरन्तीति । 'यत्र' यस्मिन् देशे 'युगेन हरन्ति,' 'यतः' यस्मात् तत्र 'शम्यया' अपि 'हरन्ति'; अतो युगवच्छम्याया अपि हरणक्रियासम्बन्धोऽस्त्येवेत्यर्थः । तत् कुत इत्यत आह--युगशम्येन वा इति । 'योग्यम्' योजनार्हमश्वम् । 'अदः' विप्रकृष्टकाले, देवासुरयोर्युद्धकाले 'सा'

---

१–'वरधनरूपत्वात्' इति क० पा० ।

तस्मान्निवृत्तदक्षिणां न प्रतिगृह्णीयात् । (त्सि) सिꣳही हैनं भूत्वा क्षिणोति नो हामा कुर्वीत सिꣳही हैवैनं भूत्वा क्षिणोति नो हान्यस्मै दद्या-द्यज्ञं तदन्यत्रात्मनः कुर्वीत तस्माद्योऽस्यापि पापऽइव समानबन्धुः स्यात्त-स्माऽएनां दद्यात्स यद्ददाति तदेनꣳ सिꣳही भूत्वा न क्षिणोति यद्ु समान-बन्धवे ददाति तदु नान्यत्रात्मनः कुरुतऽएषो निवृत्तदक्षिणायै प्रतिष्ठा ॥ २५ ॥

(छ्राऽथ) अथ शम्याश्च स्फ्यश्चादत्ते । तद्य ऽएष पूर्वार्द्धर्च्य ऽउत्तरार्द्धर्च्यः शङ्कुर्भवति तस्मात्प्रत्यङ्प्रक्रामति त्रीन्विक्रमांस्तच्चात्वालं परिलिखति सा चात्वालस्य मात्रा नात्र मात्राऽस्ति यत्रैव स्वयं मनसा मन्येताग्रेणोत्करं तच्चात्वालं परिलिखेत् ॥ २६ ॥

---

तस्मात् निवृत्तदक्षिणां न प्रतिगृह्णीयात्—सिंही हैनं भूत्वा क्षिणोति; नो हामा कुर्वीत, सिंही हैवैनं भूत्वा क्षिणोति; नो हान्यस्मै दद्यात्, यज्ञं तद् अन्यत्रात्मनः कुर्वीत । तस्माद्योऽस्यापि पाप इव समानबन्धुः स्यात् तस्माऽएनां दद्यात् । स यद्ददाति तदेनं सिंही भूत्वा न क्षिणोति । यद्ु समानबन्धवे ददाति तदु नान्यत्रात्मनः कुरुते । एषो निवृत्तदक्षिणायै प्रतिष्ठा ॥ २५ ॥

अथ शम्याश्च स्फ्यश्चादत्ते । तद् य एष पूर्वार्द्धर्च्य उत्तरार्द्धर्च्यः शङ्कुर्भवति, तस्मात् प्रत्यङ्

---

यज्ञस्य सम्बन्धिनी वाक् 'सिंही भूत्वा' 'अशान्ता' क्रूरा सती 'अचरत्' । 'तत्' तत्र युगेन शम्यया च मानेन 'एनां' वाचम् 'एतत्' इदानीम् 'यज्ञे' योजितवान् भवति ॥ २४ ॥

प्रासङ्गिकं कञ्चिन्नियमं विधत्ते—तस्मान्निवृत्तदक्षिणां न प्रतिगृह्णीयादिति । अन्येन[1] परित्यक्ता दक्षिणा । नो ह अमा कुर्वीतेति । 'अमा' सह स्वात्मनेत्यर्थः । 'नो ह' नैव कुर्वीत । 'क्षिणोति' हिनस्ति । 'क्षिणु हिंसायाम्' (धा. पा. त. उ. ४) । नो हान्यस्मा इत्यादि । स्पष्टम् । 'अस्य' यजमानस्य । समानबन्धुः एकविधिनिबन्धनः, एकविषय इत्यर्थः । तादृशोऽन्यः 'पाप इवापि स्यात्' पापी यदि भवेत्, 'तस्मै दद्यात्' । तांदृग्विधाय दाने उक्तदोषद्वयराहित्यं दर्शयति—स यद्ददाति तदेनमित्यादिना । 'एषा उ निवृत्त-दक्षिणायै प्रतिष्ठा' निवृत्तदक्षिणाया एषा गतिरित्यर्थः । अथवा यजमानबन्धुरेव तस्या आस्पदमित्यर्थः ॥ २५ ॥

अथ शम्याश्चेति । 'य एषः' शङ्कुः 'पूर्वार्द्धर्च्यः' सन्नपि 'उत्तरार्द्धच्यः' भवति । सौमिकवेदेरुत्तरांसस्य शङ्कुरित्यर्थः । 'तस्मात्' शङ्कोः सकाशात् 'प्रत्यङ्' प्रत्यङ्मुखः 'त्रीन्' 'विक्रमान्' प्रक्रमान् 'प्रक्रामति' । तत्र चात्वालार्थं परितो लेखनं कुर्यात्, 'सा चात्वालस्य मात्रा' । यैवोत्तरवेदेरुक्ता, सैवेत्यर्थः, चात्वालखननोत्पन्नयैव मृदा उत्तरवेदिकरणात् । तदेवाह—नात्र मात्राऽस्तीति[2] ॥

---

१—"अन्येन परित्यक्तां दक्षिणाममा सह स्वात्मनि न कुर्वीत"—इति क. पा. । २—उत्तरांसात्पश्चादध्यर्द्धे पदे चात्वालम् । का. श्रौ. सू. ८ । ६८ । अत्र प्रक्रमद्वयपरिमाणं पदमिति कर्कः । तथा च शुल्बे कात्यायनः—आधाने पदिकः प्रोक्तः सोमे तु द्विपदो भवेत् । अग्नौ तु त्रिपदो ज्ञेय एतत्प्रक्रमलक्षणम् ॥ इति । पदं द्वादशांगुलमिति च शुल्बे । कात्यायनः—पंचारत्निर्दशवितस्ति-विंशत्यङ्गुलः पुरुष इत्येतस्माद्द्वादशांगुलं पदमिति चेति स च प्रक्रमस्त्वध्वर्योरेव न यजमानस्येति । का. श्रौ. सू. ५ । ३ । १९ ।

( त्स ) स वेद्यन्तात् । ( उ ) उदीचीᳪ शम्यां निदधाति स परिलिखति तप्तायनी मेऽसीतीमामेवैतदाहास्याᳪ हि तप्त एति ॥ २७ ॥

( त्थ ) अथ पुरस्तात् । ( उ ) उदीचीᳪ शम्यां निदधाति स परिलिखति वित्तायनी मेऽसीतीमामेवैतदाहास्याᳪ हि विविदान एति ॥ २८ ॥

( त्थ ) अथानुवेद्यन्तम् । ( प्रा ) प्राचीᳪ शम्यां निदधाति स परिलिखत्यवतान्मा नाथितादितीमामेवैतदाह यत्र नाथे तन्माऽवतादिति ॥ २९ ॥

---

प्रक्रामति त्रीन् विक्रमान् । तच्चात्वालं परिलिखति । सा चात्वालस्य मात्रा । नात्र मात्राऽस्ति, यत्रैव स्वयं मनसा मन्येताग्रेणोत्करं तच्चात्वालं परिलिखेत् ॥ २६ ॥

स वेद्यन्तात् उदीचीं शम्यां निदधाति । स परिलिखति । " तप्तायनी मेऽसि "–( वा. सं. ५ । ९ ) इति । इमामेवैतदाह । अस्यां हि तप्त एति ॥ २७ ॥

अथ पुरस्तात् उदीचीं शम्यां निदधाति । स परिलिखति । " वित्तायनी मेऽसि "–( वा. सं. ५ । ९ ) इति । इमामेवैतदाह । अस्यां हि विविदान एति ॥ २८ ॥

अथानुवेद्यन्तं प्राचीं शम्यां निदधाति । स परिलिखति । " अवतान्मा नाथिताद "–( वा. सं. ५ । ९ ) इति । इमामेवैतदाह । यत्र नाथे तन्माऽवतादिति ॥ २९ ॥

---

उत्तरार्द्धवंशक्ङ्कोः प्रत्यक्प्रक्रमे चात्वाल इति यः पक्ष उक्तः, तेन सह विकल्पितं पक्षमाह–यथैव स्वयं मनसा मन्येताग्रेणोत्करमिति ॥ २६ ॥

चात्वालस्य सर्वतः परिलेखनप्रकारं तन्मन्त्रांश्च दर्शयति–स वेद्यन्तादुदीचीं शम्यामिति । दक्षिणश्रोणिरूपवेद्यन्तादित्यर्थः । 'स परिलिखति' शम्यानुगुण्येन लेखनं कुर्यात् । अनेनैव पश्चादवधिनिर्देशः कृतो भवति । तस्य मन्त्रः–तप्तायनी मेऽसीति । हे भूमे ! त्वं 'तप्तायनी असि' तप्तः पुमान् यस्यामिति तप्तायनी, तद्रूपा भवसि । मन्त्रं व्याचष्टे–इमामेवैतदाहेति । 'हि' यस्मात् 'तप्तः' पुरुषो दारिद्र्येण दुःखितः सन् धनादिसाधनेच्छया 'एति', तस्मादित्यर्थः ॥ २७ ॥

अथ पुरस्तादित्यादि[3] । स्पष्टम् । अस्यां हि विविदान एतीति । 'विविदानः' धनादिकं लब्धवान् पुरुषः पुनः 'अस्याम्' एव खलु 'एति' गच्छति अतो 'वित्तायनी' इति भूम्यभिधानं युक्तमित्यर्थः ॥ २८ ॥

अथानुवेद्यन्तमिति ( का. श्रौ. सू. ५ । ६७ ) । 'अनुवेद्यन्तं प्राचीं शम्यां निदधाति' अनेन चात्वालस्य दक्षिणसीमोच्यते । तत्र खननमन्त्रस्यायमर्थः । 'मा' मां 'नाथिताद्' याचिताद्धिरण्यादिरूपादर्थाद् भूमे ! 'अवतात्' रक्ष । यत्र नाथे तन्माऽवतादितीति । 'यत्र' यस्मिन् विषये 'नाथे' याचे धनादिकम् 'तत्,' तस्मात् त्वं माम् 'अवतात्' अव रक्षेत्यर्थः ॥ २९ ॥

---

१–यथोक्तं वा । ८ । ६९ । यथोक्तमिति–पूर्व्वेणोत्करं संचरं परिहाप्येति कर्कः । २–शम्यामुदीचीं निदधाति पुरस्ताच्च ५ । ६५ । शम्यामानं शुल्बे-चत्वारोऽष्टकाः शम्येति । द्वात्रिंशदंगुलेत्यर्थः । का. श्रौ. सू. । ३२ । स्फ्येनांतर्लिखतितप्तायनीति प्रतिमंत्रम् । का. श्रौ. सू. ५ । ६८ । ३–" दक्षिणतः प्राचीमुत्तरतश्च " का. श्रौ. सू. ५ । ६६ ।

( त्यु ) अुथोत्तरतः । प्राचीᳬ शुम्यां निुदधाति स पुरिलिखत्युवतान्मा व्यथितादितीमामेुवैतदाह युत्र व्युथै तुन्माऽवतादिति ॥ ३० ॥

( त्यु ) अुथ हरति । युत्र हुरति तदग्नीद्रुपसीदति स वाऽअग्नीनामेव नुामानि गृह्णन्हरति यान्वाऽअमून्देवाऽअुग्रेऽग्नीन्होत्राय प्रावृणत ते प्राध- न्वंस्तु ऽइमाऽएवु पृथिवीरुपासर्पन्निमामुहैव द्वेऽअस्याः पुरे तेनैुवैतु- न्निदानेन हरति ॥ ३१ ॥

स प्रुहरति । विदेुदग्निर्नभो नामाग्ने ऽअङ्गिरऽ आयुना नाम्नेह्नीति स युत्प्राधन्वंस्तदायुर्दधाति तत्सुमीरयति योऽस्यां पृथिव्यामसीति योऽस्यां पृथिव्यामसीति हत्वा निुदधाति यत्तेऽनाधृष्टं नुाम युज्ञियं तेन त्वाऽऽदध-

---

अथोत्तरतः प्राचीं शम्यां निदधाति । स परिलिखति । "अवतान्मा व्यथितात्"–(वा. सं. ५।९) इति । इमामेवैतदाह । यत्र व्यथै तन्माऽवतादिति ॥ ३० ॥

अथ हरति यत्र हरति तद्–अग्नीद्रुपसीदति । स वाऽअग्नीनामेव नामानि गृह्णन्हरति । यान् वाऽअमून् देवाऽअग्रेऽग्नीन् होत्राय प्रावृणत । ते प्राधन्वन् । त इमा एव पृथिवीरुपासर्पन् इमामहैव द्वेऽअस्याः परे । तेनैवैतन्निदानेन हरति ॥ ३१ ॥

स प्रहरति । "विदेदग्निर्नभो नामाग्नेऽअङ्गिर आयुना नाम्नेहि"–( वा. सं. ५।९ ) इति । स यत् प्राधन्वंस्तदायुर्दधाति । तत् समीरयति । " योऽस्यां पृथिव्यामसि "–( वा. सं. ५।९ )इति । योऽस्यां पृथिव्यामसीति हत्वा निदधाति । " यत्तेऽनाधृष्टं नाम यज्ञियं तेन

---

अथोत्तरत इति । चात्वालस्योत्तरावधिपरिलेखनस्य " अवतान्मा व्यथितात् "–इति मन्त्रः । तस्य व्याख्यानम्–यत्र व्यथै तन्माऽवतादिति । 'यत्र' यस्मिन् धनादिविषये 'व्यथै' लाभोपायमजानानो व्यथितः स्याम् 'तत्' तस्मात् सकाशात् 'अवतात्' अव ॥ ३० ॥

खाताया मृदश्चात्वालादुत्तरवेदिं प्रति हरणं विधत्ते–अथ हरतीति । 'यत्र हरति', 'तत्' तत्र उत्तर-वेदिप्रदेशे 'अग्नीद्रुपसीदति' उपविशति आग्नीध्रः । 'अग्नीनां' 'नामानि' वक्ष्यमाणानि ( श. प. ब्रा. ३ । १ । २ । २१ ) 'गृह्णन्' एव हरेत् । सत्सु अग्निषु चात्वालप्रदेशे तन्नामग्रहणमुपपद्यते, त एवात्र कुत इत्यत्राह–यान् वा अमून् देवा अग्रेऽग्नीनिति । 'होत्राय' होमनिष्पादनाय हविर्वहनाय 'प्रावृणत' प्रावृ-ण्वन् । 'ते प्राधन्वन्' धन्वतिर्गतिकर्मा ( धा. पा. भ्वा. प. ५९८ ) । 'इमाम्' 'अहैव' । अहेति विनि-ग्रहार्थीयः ( निरु. १।२।२ ) । इमां पृथिवीं परिविद्वेष्य असुरादयोऽपि 'उपासर्पन्' । 'तेनैव' 'एतत्' एतेन 'निदानेन' मूलकारणेनैव हरणं कृतवान् भवति ॥ ३१ ॥

स प्रहरतीति । 'सः' मृदो हर्त्ता अध्वर्युः स्फ्येन 'प्रहरति' खनेत् । मन्त्रस्यायमर्थः–हे 'अङ्गिरः' अङ्गिरोनामकर्षिरूप ! 'अग्ने' ! त्वम् । " येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन् ( ऐं. ब्रा. ३ । ३ । १० )

---

१–विदेदग्निरिति चात्वाले प्रहरति स्फ्येनान्वारब्धे । का. श्रौ. सू. ५ । ६९ ।

इति यत्तेऽनाधृष्टꣳ रक्षोभिर्नाम यज्ञियं तेन त्वाऽऽदधऽइत्येवैतदाहानु त्वा देववीतयऽइति चतुर्थꣳ हरति देवेभ्यस्त्वाजुष्टाꣳ हरामीत्येवैतदाह तां वै चतुःस्रक्तेश्चात्वालाद्धरति चतस्रो वै दिशः सर्वाभ्य ऽएवैनामेतद्दिग्भ्यो हरति ॥ ३२ ॥

( त्यु ) अथानु व्यूहति । सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्वेति सा यद्देवाद्युः सिꣳही भूत्वा शान्तेवाचरत्तदेवैनामेतदाह सिꣳह्यसीति

---

त्वाऽऽदधे "–( वा. सं. ५ । ९ ) इति । यत्तेऽनाधृष्टं रक्षोभिर्नाम यज्ञियं तेन त्वाऽऽदध इत्येवैतदाह । "अनु त्वा देववीतये "–( वा. सं. ९ । ५ ) इति । चतुर्थं हरति देवेभ्यस्त्वा जुष्टां हरामीत्येवैतदाह । तां वै चतुःस्रक्तेश्चात्वालाद्धरति । चतस्रो वै दिशः, सर्वाभ्य एवैनामेतद्दिग्भ्यो हरति ॥ ३२ ॥

अथानु व्यूहति । " सिंह्यसि सपत्नसाही देवेभ्यः कल्पस्व "–( वा. सं. ५ । १० )

---

( निरु. ५।३।९ )"–इति श्रुतिः । अग्निः आहुत्याधारभूतः । ' नमो नाम विदेत् ' । न मातीति ' नमः ', एतत् ' नाम ' विन्देदित्यर्थः । यद्वा, नभो नामाग्निरिति ' विदेः '[1] जानीया इत्यर्थः । त्वञ्च ' आयुना ' एतदात्मना ' नाम्ना ' अभिधानेन युक्तः ' एहि ' आगच्छ । स यदित्यादि । आयुर्दधातीति । ' आयुः '–शब्दः सामान्येन श्रुतिः । ' तत् ' अवदारितं ' समीरयति ' उत्तरवेदिं प्रति सम्यक् प्रेरयति[2] । तत्र मन्त्रः–योऽस्यां पृथिव्यामसीति[3] । ' यः ' त्वम् ' अस्यां ' चात्वाललक्षणायां 'पृथिव्यां' भूम्यां 'असि' भवसि स त्वमायुना नाम्नेहीति सम्बन्धः । अथवा यो मृन्निचयरूपस्त्वं अस्यां खातायां भूम्यां भवसि तं त्वां समीरयामीत्यर्थः॥

आनीताया मृदो वेद्याकारेण स्थापनं समन्त्रकं विधत्ते–हृत्वा निदधाति यत्तेऽनाधृष्टमिति । मृदा एकीभूत ! यत् ते यद्वा हे तिरोहिताग्निविशिष्टे मृत् ! ' यत् ' ' ते ' ' अनाधृष्टं ' रजोभिरहिंस्यम्, ' यज्ञियम् ' यज्ञार्हं ' नाम ', ' तेन ' नाम्ना ' त्वा ' त्वाम् ' आदधे ' स्थापयामि । " योऽस्याम् "–इति[4] मन्त्रेण त्रिवारं हरेत् ॥

चतुर्थवारहरणमन्त्रस्यायमर्थः–हे आह्रियमाणपदार्थ ! ' त्वा ' त्वाम् ' अनु ' पूर्वं हरणत्रयमनुकृत्य आहरामीति शेषः । किमर्थम् ? ' देववीतये ' देवा व्यन्ति हविर्भक्षयन्ति अत्रेति देववीतिर्यज्ञस्तदर्थम्[5] ॥

अर्थसिद्धमनूद्य प्रशंसति–तां वै चतुःस्रक्तेरिति । चतस्रः स्रक्तयो यस्य चात्वालस्य स तथोक्तः, चतुरस्रात् साकल्येन हरतीत्यर्थः ॥ ३२ ॥

अथानुव्यूहतीति[6] । अनुक्रमेण व्यूहनं मृत्प्रसारणं कुर्यात् । " सिंह्यसि "–इति व्यूहनमन्त्रः । हे अनु-

---

१–अत्र विदेदित्यस्य पुरुषव्यत्ययेन ' विदेः ' इति भाष्यकारो व्याजहार । २–' सम्यगीरयाति '–इति क० पा० । ३–अमे अंगिर इति पुरीषꣳ हरति हस्तेन च । ५ । ७० । योऽस्यामिति निवपति पूर्वार्द्धे शंकुसहितं । ५ । ७१ अग्नीदुत्करवत्तूष्णीꣳ हृतं । का. श्रौ. सू. ५ । ७२ । ४–एवं द्विरपरं द्वितीयस्यां तृतीयस्यामिति विशेषः । का. श्रौ. सू. ५ । ७३ । ५–अनुत्वेति चतुर्थं यथार्थमाहृत्य । का. श्रौ. सू. ५ । ७५ । ६–सिंह्यसीति व्यूहत्युत्तरवेदिम् । का. श्रौ. सू. ५ । ७५ ।

सपत्नसाहीति त्वया व्वयꣳ सपत्नान्पापीयसः क्रियास्मेत्येवैतदाह देवेभ्यः कल्पस्वेति योषा वाऽउत्तरवेदिस्तामेवैतद्देवेभ्यः कल्पयति ॥ ३३ ॥

तां वै युगमात्रीं वा सर्व्वतः करोति । यजमानस्य वा दशदश पदानि दशाक्षरा वै विराड्वाग्वै विराड्वाग्यज्ञो मध्ये नाभिकामिव करोति समानत्रासीनो व्याघारयाणीति ॥ ३४ ॥

तामद्भिरभ्युक्षति । सा यदेवादः सिꣳही भूत्वा शान्तेवाचरच्छान्ति-

---

इति । सा यदेवादः सिंही भूत्वा शान्तेवाचरत्, तदेवैनामेतदाह–सिंह्यसीति, सपत्नसाहीति । त्वया वयं सपत्नान् पापीयसः क्रियास्मेत्येवैतदाह–देवभ्यः कल्पस्वेति । योषा वाऽउत्तरवेदिस्तामेवैतद्देवेभ्यः कल्पयति ॥ ३३ ॥

तां वै युगमात्रीं वा सर्वतः करोति, यजमानस्य वा दश–दश पदानि । दशाक्षरा वै विराट् । वाग्वै विराट् । वाग्यज्ञः । मध्ये नाभिकामिव करोति; समानत्रासीनो व्याघारयाणीति ॥ ३४ ॥

तामद्भिरभ्युक्षति–सा यदेवादः सिंही भूत्वा शान्तेवाचरत् शान्तिरापस्तामद्भिः शमयति । योषा वाऽउत्तरवेदिस्तामेवैतद्देवेभ्यो हिन्वति । तस्मादद्भिरभ्युक्षति ॥ ३५ ॥

---

-व्यूह्यमाने वेदे ! त्वं 'सिंही असि' प्रागुक्तप्रकारेण सिंही भवसि । कीदृशी 'सपत्नसाही शत्रूणामभि-भवित्री । तादृशी त्वं 'देवेभ्यः' तेषामर्थाय 'कल्पस्व' योषारूपा सती भोगसाधनं भवेत्यर्थः ॥

सिंह्यसीति मन्त्रभागस्य तात्पर्यमाह–सा यदेवादः सिंही भूत्वेति । उक्तः सिंहीभावः । सपत्नसाहीत्यस्य तात्पर्यमाह–त्वया वयं सपत्नानिति । देवेभ्यः कल्पस्वेत्यस्य तात्पर्याभिधानम्–योषा वेत्यादि ॥ ३३ ॥

तां वै युगमात्रीं वेत्यादि[1] । षडशीत्यङ्गुलपरिमिता 'युगमात्री' । दिक्चतुष्टयापेक्षया "दश–दश"–इति वीप्सा । युगमात्रस्य पूर्वमभिहितत्वात् तत् परित्यज्य दशपदपक्षं प्रशंसति–दशाक्षरा वै विराडिति । सर्वत्र विराजमानत्वाद् वाचा उच्चार्यमाणत्वाच्च 'विराड्–वाक्' । मन्त्रादिरूपतया निष्पाद्यमानत्वाद् 'वाग् यज्ञः' अतो द्वारद्वारिकया यज्ञसम्बन्धात् दशसङ्ख्या युज्यत इति स्तुतिः । मध्ये नाभिकामिव करोतीति[3] । अल्पा नाभिर्नाभिका । तस्या निर्माणप्रयोजनमाह–समानत्रेति । एकत्र स्थित्वा सर्वत्रोत्तरवेद्यां व्याघारणस्याशक्यत्वात् तत्सिद्धये मध्ये नाभिकरणमित्यर्थः ॥ ३४ ॥

वेद्या अद्भिरभ्युक्षणं विधत्ते–तामद्भिरभ्युक्षतीति[4] । अभ्युक्षणस्य प्रयोजनद्वयम्–सिंही भूत्वा अशान्तायाः

---

१–शम्यामात्रीं वितृतीयामपरिमितां युगमात्रीं यजमानदशपद्यां वा । का. श्रौ. सू. । ५ । ७६ । २–सोमे वोत्तरे व्युपस्फुरणश्रुतेरसंभवाच्च । का. श्रौ. सू. ५–७७ । ३–मध्ये नाभिं करोति प्रादेशसमां चतुःस्रक्तिं । का. श्रौ. सू. ५ । ७८ । युगमानं शुल्बे कात्यायनः–षडशीत्यंगुलं ८६ युगमिति । युगमात्री त्र्यरत्निः स्यादंगुलानि चतुर्दश इति । ह. । १४ अंगुल । यजमानस्य वा दशदश पदानीत्यत्र सर्व्वतः करोतीत्यस्यानुवृत्तौ–दशदशपदा शतपदक्षेत्रफलका इत्यर्थो भवति । सोमे वोत्तरे व्युपस्फुरणश्रुतेरसंभवाच्चेति वदता कात्यायनेन शतपदक्षेत्रफलैव प्रदर्शिता । शुल्बपरिशिष्टकारस्तु–यजमानदशपद्यां वा–इत्येतावदेव सूत्रमालोच्य–दशपदक्षेत्रफलकामाह ॥ दशपदक्षेत्रफलकासाधनं शुल्बे । पदं तिर्यङ्मानी त्रिपदा पार्श्वमानी तस्याक्ष्णया रज्जुर्दशकरणीति । त्रिपदा पार्श्वमानी तु–त्रिःप्रमाणा नवकरणीति–इति शुल्बम् । त्रिःप्रमाणा करणी तु–४६ अं. ६य. । १ यु. । ४–प्रोक्षत्युत्तरवेदिꣳ सिकताश्च प्रकिरति सिꣳह्यसीति प्रतिमंत्रम् । का. श्रौ. सू. । ५–७९ ।

आपस्तामद्भिः शमयति योषा वाऽउत्तरवेदिस्तामेवैतद्देवेभ्यो हिन्वति तस्मादद्भिरभ्युक्षति ॥ ३५ ॥

सोऽभ्युक्षति । सिꣳहयसि सपत्नसाही देवेभ्यः शुन्धस्वेत्यथ सिकताभिरनुविकिरत्यलङ्कारो न्वेव सिकता भ्राजन्तऽइव हि सिकताऽअग्नेर्वाऽएतद्वैश्वानरस्य भस्म यत्सिकताऽअग्निं वाऽअस्यामाधास्यन्भवति तथो हैनामग्निर्न हिनस्ति तस्मात्सिकताभिरनुविकिरति सोऽनुविकिरति सिꣳहयसि सपत्नसाही देवेभ्यः शुम्भस्वेत्यथैनां छादयति सा च्छन्नैताꣳ रात्रिं वसति ॥ ३६ ॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ४ ॥ १ ॥ ( ५ । १ )

---

सोऽभ्युक्षति । " सिंह्यसि सपत्नसाही देवेभ्यः शुन्धस्व "-(वा. सं. ५ । १०) इति । अथ सिकताभिरनुविकिरति; अलङ्कारो न्वेव सिकताः, भ्राजन्तऽइव हि सिकताः, अग्नेर्वाऽएतद्वैश्वानरस्य भस्म यत्सिकताः। अग्निं वाऽअस्यामाधास्यन् भवति; तथो हैनामग्निर्न हिनस्ति । तस्मात् सिकताभिरनुविकिरति । सोऽनु विकिरति । " सिंह्यसि सपत्नसाही देवेभ्यः शुम्भस्व "-( वा. सं. ५ । १० ) इति । अथैनां छादयति; सा छन्नैतां रात्रिं वसति ॥ ३६ ॥

---

शान्तिरेकं प्रयोजनम्, स्निग्धभावेन रमणीयत्वमपरम्; तदुभयमुच्यते—सा यदेवाद इत्यादिना । तामेवैतद्देवेभ्यो हिन्वतीति । हिन्वतिः प्रीणनकर्मा ( धा. पा. भ्वा. प. ५९२ ) । तस्या अभ्युक्षणेन प्रीणनं देवेभ्योऽर्थाय भवति; योषात्वेनाभिधानात् । योषाया अलङ्करणेन पत्युः प्रीतिर्भवतीति सुप्रसिद्धम् ॥ ३५ ॥

सोऽभ्युक्षतीति ( का. श्रौ. सू. ५ । ७८ ) । अभ्युक्षणमन्त्रः—सिंह्यसीति । अयं स्पष्टार्थः । सिकतानां प्रक्षेपस्योक्तमलङ्काररूपत्वं समर्थयते—भ्राजन्त इव हि सिकता इति । अतिधवलत्वाद् भ्राजमाना भवन्ति । वेद्यलङ्कारत्वेन प्रशस्य अग्निसंयोगकृतसन्तापनिवर्तकत्वेन प्रशंसति—अग्नेर्वा एतद् वैश्वानरस्य भस्मेत्यादिना । अग्न्यवयवभूतानामेव सिकतानामुत्तरवेद्यवयवत्वसम्पादनेन भूमेः स्वाङ्गस्य स्वात्मदाहकत्वाभावाद्धिंसापरिहार इत्यभिप्रायः । सिकता—प्रकिरणमन्त्रार्थस्तु स्पष्टएव ॥

अथोत्तरवेदेर्यज्ञियवृक्षशाखया प्रच्छादनं विधत्ते—अथैनां छादयतीति ॥ ३६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ ( ३–५–१ ) ॥

इध्ममभ्यादधति । ( त्यु ) उपयमनीरुपकल्पयन्त्याज्यमधिश्रयति स्रुवं च स्रुचं च सम्मार्ष्ट्यथोत्पूयाज्यं पञ्चगृहीतं गृह्णीते यदा प्रदीप्त इध्मो भवति ॥ १ ॥

( त्यु ) अथोद्यच्छन्तीध्मम् । ( मु ) उपयच्छन्त्युपयमनीरथाहाग्नये प्रह्रियमाणायानुब्रूह्येकस्फ्ययाऽनूदेहीत्यनूदैति प्रतिप्रस्थातैकस्फ्ययैतस्मान्मध्यमाच्छङ्कोर्य एष वेदेर्जघनार्धे भवति तद्यदेवात्रान्तःपातेन गार्हपत्यस्य वेदेर्व्यवच्छिन्नं भवति तदेवैतदनुसन्तनोति ॥ २ ॥

तद्धैके । (कुऽ) ओत्तरवेदेरनूदायन्ति तदु तथा न कुर्यादेवैतस्मान्मध्यमाच्छङ्कोरनूदेयात्तऽआयन्त्यागच्छन्त्युत्तरवेदिम् ॥ ३ ॥ ( शतम् १८०० )

इध्ममभ्यादधति । उपयमनीरुपकल्पयन्ति, आज्यमधिश्रयति । स्रुवं च स्रुचं च सम्मार्ष्टि । अथोत्पूयाज्यं पञ्चगृहीतं गृह्णीते । यदा प्रदीप्त इध्मो भवति ॥ १ ॥

अथोद्यच्छन्तीध्मम् । उपयच्छन्त्युपयमनीः । अथाह—' अग्नये प्रह्रियमाणायानुब्रूहि । एकस्फ्ययाऽनूदेहि ' इति । अनूदैति प्रतिप्रस्थातैकस्फ्यया । एतस्मान्मध्यमाच्छङ्कोर्य एष वेदेर्जघनार्धे भवति । तद् यदेवात्रान्तःपातेन गार्हपत्यस्य वेदेर्व्यवच्छिन्नं भवति—तदेवैतदनु सन्तनोति ॥ २ ॥

तद्धैके ओत्तरवेदेरनूदायन्ति । तदु तथा न कुर्यात् । एवैतस्मान्मध्यमाच्छङ्कोरनूदेयात् । तऽआयन्ति, आगच्छन्त्युत्तरवेदिम् ॥ ३ ॥

---

उत्तरवेदिनिर्माणमभिधाय अथोत्तरवेद्यामग्निप्रणयनप्रयोग उच्यते—इध्ममभ्यादधतीत्यादिना । आहवनीयेऽग्नौ प्रणीयमानानामङ्गाराणां सम्पादनाय काष्ठसमूहं स्थापयेयुरित्यर्थः । उपयमनीरित्यादि । ' उप ' अग्नेरधस्तात् यम्यन्ते इत्युपयमन्यः, सिकताः । व्याघारणार्थम् ' आज्यम् ' अग्नौ ' अधिश्रयति ' विलापयेत् । आज्यमुत्पूतं कृत्वा स्रुवेण स्रुचि पञ्चवारं गृह्णीयात् ॥ १ ॥

अथोद्यच्छन्तीति । इध्मे प्रदीप्ते सति ' अथ ' अनन्तरमेव ' इध्मम् ' अङ्गारतां प्राप्तमूर्ध्वं धारयेत् । इध्मपात्रस्याधः ' उपयमनीः ' उपयच्छेत् । ' अग्नये प्रह्रियमाणाय ' उत्तरवेदिं प्रति नीयमानाय तदनुकूलं सूक्तं पठेति होतारं ब्रूयात् । ' एकस्फ्यया ' एकः स्फ्यो यस्यां रेखायां सा तथोक्ता, तया मामनुगच्छ; स्फ्येन रेखां कुर्वन्ननुगच्छेति प्रतिप्रस्थातारं ब्रूयात् । एकस्फ्यानुगमनस्यावधिमाह—आ एतस्मान्मध्यमाच्छङ्कोर्य एष वेदेर्जघनार्धे भवतीति । ' वेदेः ' सौमिक्याः ' जघनार्द्धे ' ' य एषः ' शंकुर्भवति । स्थूणाराजात् प्रक्रमत्रितये यः शंकुरन्तःपातः स्थापितः, स एव मध्यमशंकुः; तावत्पर्यन्तमित्यर्थः । गार्हपत्यस्य वेदेरिति । ' यतः प्रणयति स गार्हपत्यः '—इति न्यायादाहवनीयादुत्तरवेदिं प्रति प्रणयनस्योक्तत्वात् आहवनीय एव गार्हपत्य इत्युच्यते । रेखाकर्षणेनान्तःपात्यरूपो व्यवच्छेदः परिहृतो भवति ॥ २ ॥

रेखानुगतिविषये केषाञ्चित्पक्षमुपन्यस्य व्यवच्छेदपरिहाराय प्रयोजनाभावाभिप्रायेण निराचष्टे तद्धैके ओत्तरवेदेरनूदायन्तीति ॥ ३ ॥

---

१–अग्नी प्रणयतीध्माभ्यामुपयम्य । का. श्रौ. सू. ५–८१ । २–आज्यप्रोक्षणीस्रुचम्याग्नी चाग्निभ्यां प्रह्रियमाणाभ्यामनुब्रूह्येकस्फ्ययानूदेहीति का. श्रौ. सू. ५–८६ । ३–प्रतिप्रस्थाता स्फ्येन लिखत्यावेदिश्रोणेरुत्तरवेदेर्वा । का. श्रौ. सू. ५–८७ । ८८ ।

प्रोक्षणीरध्वर्युरादत्ते । स पुरस्तादेवाग्रे प्रोक्षत्युदङ्तिष्ठन्निन्द्रघोषस्त्वा वसुभिः पुरस्तात्पात्विुतीन्द्रघोषस्त्वा वसुभिः पुरस्ताद्गोपायत्विुत्येवैतदाह ॥ ४ ॥

( ब्रा ) अथ पश्चात्प्रोक्षति । प्रचेतास्त्वा रुद्रैः पश्चात्पात्विति प्रचेतास्त्वा रुद्रैः पश्चाद्गोपायत्विुत्येवैतदाह ॥ ५ ॥

( ब्रा ) अथ दक्षिणतः प्रोक्षति । मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति मनोजवास्त्वा पितृभिर्दक्षिणतो गोपायत्विुत्येवैतदाह ॥ ६ ॥

( ब्रा ) अथोत्तरतः प्रोक्षति । विश्वकर्मा त्वाऽऽदित्यैरुत्तरतः पात्विति विश्वकर्मा त्वाऽऽदित्यैरुत्तरतो गोपायत्विुत्येवैतदाह ॥ ७ ॥

( ब्रा ) अथ याः प्रोक्षण्यः परिशिष्यन्ते । तद्ये ऽएते पूर्वे स्रक्ती तयोर्या दक्षिणा तान्यन्तेन बहिर्वेदि निनयतीदमहं तप्तं वार्बहिर्द्धा यज्ञान्निःसृजा-

---

प्रोक्षणीरध्वर्युरादत्ते । स पुरस्तादेवाग्रे प्रोक्षति–उदङ्तिष्ठन् । " इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु "–(वा. सं. ५ । ११ ) इति । इन्द्रघोषस्त्वा वसुभिः पुरस्ताद्गोपायत्वित्येवैतदाह ॥४॥

अथ पश्चात्प्रोक्षति । " प्रचेतास्त्वा रुद्रैः पश्चात्पातु "–( वा. सं. ५ । ११ ) इति प्रचेतास्त्वा रुद्रैः पश्चाद्गोपायत्वित्येवैतदाह ॥ ५ ॥

अथ दक्षिणतः प्रोक्षति । " मनोजवास्त्वा पितृभिर्दक्षिणतः पातु "–(वा. सं. ५ । ११) इति । मनोजवास्त्वा पितृभिर्दक्षिणतो गोपायत्वित्येवैतदाह ॥ ६ ॥

अथोत्तरतः प्रोक्षति । "विश्वकर्मा त्वाऽऽदित्यैरुत्तरतः पातु"–(वा. सं. ५ । ११ ) इति । विश्वकर्मा त्वाऽऽदित्यैरुत्तरतो गोपायत्वित्येवैतदाह ॥ ७ ॥

अथ याः प्रोक्षण्यः परिशिष्यन्ते–तद्ये एते पूर्वे स्रक्ती–तयोर्या दक्षिणा–तान्यन्तेन बहिर्वेदि निनयति । " इदमहं तप्तं वार्बहिर्द्धा यज्ञान्निःसृजामि "–( वा. सं ५ । ११ । ) इति । सा

---

प्रोक्षणीरध्वर्युरित्यादि[2] । अध्वर्योः प्रोक्षण्यादानविधानात् अग्निप्रणेता अग्नीदेव ' अग्रे ' उत्तरादिभ्यः पूर्वम् ' पुरस्तात् ' पूर्वस्यां दिशि ' प्रोक्षति ' ' उदङ् ' उदङ्मुखस्तिष्ठन् ॥

प्रोक्षणमन्त्रस्यायमर्थः । इन्द्र इति घुष्यते शब्द्यते इति ' इन्द्रघोषः ' इन्द्रनामा देवः, सः ' वसुभिः ' सहितः ' पातु ' रक्षतु, असुरादिभ्यः सकाशाद् ' गोपायतु ' इत्यर्थः । ' प्रचेताः ' प्रकृष्टप्रज्ञो वरुणः । ' पितरः ' अग्निष्वात्ताप्रमुखाः । ' मनोजवाः ' मनोवेगोपमवेगः । ' विश्वकर्मा ' विश्वविषयं कर्म यस्य स एतन्नामको देवः । निनेतव्यायाः दक्षिणपूर्वस्रक्तेः स्पष्टप्रदर्शनाय पूर्वदिग्गतस्रक्तिद्वयोपन्यासः ॥ ४॥५॥६॥७ ॥

अथ याः प्रोक्षण्य इति । ता न्यन्तेनेति । ' ताः ' प्रोक्षणीः ' न्यन्तेन ' अत्यन्तान्तदेशन । तत्रापि

---

२–वेद्यंतरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्षतींद्रघोष इति प्रतिमंत्रं प्रतिदिशं यथालिंगम् । का. श्रौ. सू. ५–८९ ।

मीति सा यदेवादः सिᳩंही भूत्वा शान्तेवाचरत्तामेवास्याऽएतच्छुचं बहिर्द्धा यज्ञान्निःसृजति यदि नाभिचरेद्यद्युऽअभिचरेदादिशेदिदमहं तप्तं वारसुमभि निःसृजामीति तमेतया शुचा विध्यति स शोचन्नेवामुं लोकमेति ॥ ८॥

स यद्धार्य्यमाणेऽग्नौ । ( घ्राऽउ ) उत्तरवेदिं व्याघारयति यदेवैनामदो देवा अब्रुवन्पूर्व्वा त्वाऽग्नेराहुतिः प्राप्स्यतीति तदेवैनामेतत्पूर्व्वामग्नेराहुतिः प्राप्नोति यद्वेषा देवानब्रवीद्यां मया काञ्चाशिषमाशासिष्यध्वे सा वः सर्व्वा समर्द्धिष्यतऽइति तामेनयाऽत्रार्त्विजो यजमानायाशिषमाशासते साऽस्मै सर्व्वा समृद्ध्यते ॥ ९ ॥

तद्वाऽएतदेकं कुर्व्वन्द्वयं करोति । यदुत्तरवेदिं व्याघारयत्यथ यैषां मध्ये नाभिकेव भवति तस्यै ये पूर्व्वे स्रक्ती तयोर्या दक्षिणा ॥ १० ॥

---

यदेवादः सिंही भूत्वा शान्तेवाचरत्—तामेवास्या एतच्छुचं बहिर्द्धा यज्ञान्निःसृजति । यदि नाभिचरेद् । यद्युऽअभिचरेदादिशेदिदमहं तप्तं वारसुमभि निःसृजामीति । तमेतया शुचा विध्यति । स शोचन्नेवामुं लोकमेति ॥ ८ ॥

स यद्धार्यमाणेऽग्नौ उत्तरवेदिं व्याघारयति—यदेवैनामदो देवा अब्रुवन्—पूर्वा त्वाऽग्नेराहुतिः प्राप्स्यतीति । तदेवैनामेतत्पूर्वामग्नेराहुतिः प्राप्नोति । यद्वेषा देवानब्रवीत्—यां मया काञ्चाशिषमाशासिष्यध्वे—सा वः सर्वा समर्द्धिष्यतऽइति । तामेनयाऽत्रार्त्विजो यजमानायाशिषमाशासते । साऽस्मै सर्वा समृद्ध्यते॥९॥

तद्वाऽएतदेकं कुर्वन् द्वयं करोति—यदुत्तरवेदिं व्याघारयति । अथ यैषां मध्ये नाभिकेव भवति—तस्यै ये पूर्वे स्रक्ती—तयोर्या दक्षिणा ॥ १० ॥

---

स्रक्त्यन्ते प्रोक्षणीये शेषनिनयनप्रसक्तावाह—बहिर्वेदी[1]ति । निनयनमन्त्रस्यायमर्थः । ' इदं' प्रोक्षणीशेषं 'तप्तम्' ' वेद्याः ' सिंहीरूपायाः क्रौर्यव्युत्सादनतः तस्मिन् सन्तापप्राप्तेः सम्भवादवशिष्टमम्भस्ततं भवति तथाविधं वाः ' अहं ' ' यज्ञाद् ' यज्ञसाधनाद् वेदिदेशात् 'बहिः निःसृजामि' । सा यदेवाद इत्यादिनिनयनार्थवादः स्पष्टः ॥

अयं निनयनमन्त्रोऽभिचारेच्छाराहित्यविषय इत्याह—यदि नाभिचरेदिति । ' यदि उ ' यद्यपि अभिचारं कर्तुमिच्छेत्, तदा ' यज्ञादुबहिः ' स्थाने ' अमुमभि निःसृजामि '—इत्यादिशेत्[1] । अमुमित्यत्र द्वेष्यस्य नाम गृह्णीयात् । ' सः ' अभितप्तः ' शोचन्नेवामुं लोकमेति ' दुःखेन प्राणान् जहातीत्यर्थः ॥ ८ ॥

इदानीं प्राप्तावसरत्वाद्व्याघारणमाह—स यद्धार्यमाणेऽग्नाविति । आग्नीध्रेण उत्तरवेदेरुपरि देशे ' अग्नौ धार्यमाणे ' सत्यध्वर्युर्व्याघारयति । यदेवैनामद इत्यादिकमुत्तरवेदेर्विध्यर्थाख्यायिकाप्रसङ्गे व्याख्यातम् ( श. प. ब्रा. ३ । ५ । १ । २३ ) । यस्मादपक्रान्ताया वाचः प्रतिनिवृत्तये देवैर्व्याघारणं दत्तम्, तस्मादेवेत्थमेतत्कर्तव्यमित्यर्थः । यस्माच्च व्याघारणपरितुष्टया वाचा सर्वाशीःसमृद्धिरूपस्य वरस्य देवेभ्यो दत्तत्वाद् यजमानार्थमृत्विग्भिराशास्यमानाशिषां समृद्ध्यै चोत्तरवेदिव्याघारणं कर्त्तव्यमित्यर्थः ॥ ९ ॥

तद्वा एतदेकमिति । ' एकम् ' उत्तरवेदिव्याघारणं कुर्वन् ' द्वयं करोति ' व्याघारणं यजमानाशीराशासनं

---

१—दक्षिणांसस्रसहितं बहिर्वेदिदिशेषं निषिंचतीदमहं तप्तं वारित्यमुमभिचरन् । का. श्रौ. सू. ५–९० ।

तुस्यामुाघारयति । सिꣳहृयसि स्वाहेत्यथापरयोरुत्तरस्याꣳ सिꣳहृयस्यादित्यवुनिः स्वाहेत्यथापरयोर्दुक्षिणस्याꣳ सिꣳहृयसि ब्रह्मवुनिः क्षत्रवुनिः स्वाहेति बह्वी वै युजुःष्वाशीस्तद्ब्रह्म च क्षत्रं चाशास्तऽउभे व्वीर्य्ये ॥ ११ ॥

( यैंऽअ ) अुथ पूर्व्वयोरुत्तरस्याम् । ( ꣳ ) सिꣳहृयसि सुप्रजावुनी रायस्पोषवुनिः स्वाहेति तुत्प्रजामुाशास्ते यदाह सुप्रजावुनिरिति रायस्पोषवुनिरिति भूमा वै रायस्पोषस्तुद्भूमानमुाशास्ते ॥ १२ ॥

( स्तेऽथ ) अुथ मुध्यऽआघारयति । सिꣳहृयस्यावह देवान्यजमानाय स्वाहेति तुद्देवान्युजमानायुावाहयत्युथ स्रुचमुद्यच्छति भूतेभ्यस्त्वेति प्रजा वै भूतानि प्रजाभ्यस्त्वेत्येवैतदाह ॥ १३ ॥

---

तस्यामाघारयति । " सिंह्यसि स्वाहा "–( वा. सं. ५ । १२ ) इति । अथापरयोरुत्तरस्याम् । " सिंह्यस्यादित्यवनिः स्वाहा "–( वा. सं. ५ । १२ ) इति । अथापरयोर्दक्षिणस्याम् । " सिंह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहा "–( वा. सं. ५ । १२ ) इति । बह्वी वै यजुःष्वाशीः । तद् ब्रह्म च क्षत्रं चाशास्ते–उभे वीर्ये ॥ ११ ॥

अथ पूर्वयोरुत्तरस्याम् । " सिंह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहा "–( वा. सं. ५ । १२ ) इति । तत् प्रजामाशास्ते–यदाह–सुप्रजावनिरिति । रायस्पोषवनिरिति । भूमा वै रायस्पोषः । तद् भूमानमाशास्ते ॥ १२ ॥

अथ मध्यऽआघारयति । " सिंह्यस्यावह देवान् यजमानाय स्वाहा "–( वा. सं. ५ । १२ ) इति । तद्देवान् यजमानायावाहयति । अथ स्रुचमुद्यच्छति । " भूतेभ्यस्त्वा "–( वा. सं. ५ । १२ ) इति । प्रजा वै भूतानि । प्रजाभ्यस्त्वेत्येवैतदाह ॥ १३ ॥

---

चेत्यथः । उत्तरवेदिमध्यङ्कतायाश्चतुःस्रक्तेरुत्तरनाभेर्दक्षिणया व्याघारप्रकार उच्यते–अथ यैषां मध्ये नाभिर्केव भवतीत्यादिना । ' ये पूर्वे स्रक्ती ' ईशानाग्नेयदिग्गते, ' तयोः ' मध्ये ' दक्षिणा ' स्रक्तिराग्नेयदिग्गता, तस्यां " सिंह्यसि स्वाहा " ' इति ' व्याघारयति । अथापरयोरुत्तरस्यामिति । नाभेः पश्चाद्दिग्गतयोर्मध्ये ' उत्तरस्यां ' वायव्यदिगवस्थितायां स्रक्त्यामित्यर्थः । आदित्यान् यजमानार्थं वनति भजत इति ' आदित्यवनिः ', तादृशी ' सिंह्यसि ' तुभ्यं स्वाहुतमस्तु । ' अथ ' ' अपरयोः ' दक्षिणस्यां ' नैर्ऋतकोणकोष्ठे इत्यर्थः । अत्र ब्रह्मक्षत्रोभयाशासनस्याभिप्रायमाह–बह्वी वै यजुःष्वाशीरिति । ' यजुःषु ' आशीःपरेषु प्रायेण ' बह्वी आशीः ' बहुविधान्याशासनान्युपलभ्यन्ते । अतो युक्तमित्यर्थः । ' अथ ' ' पूर्वयोरुत्तरस्याम् ' ईशानस्रक्त्यां ' सुप्रजावनिः ' शोभनपुत्रादिलक्षणप्रजासम्भक्तिः, ' रायस्पोषवनिः ' रायस्पोषो धनपुष्टिः ॥ १०–१२ ॥

अथ मध्य आघारयतीति । नाभिमध्यव्याघारणमन्त्रः–" सिंह्यस्यावह देवान् " इत्यादिः । स्पष्टार्थः ।

---

१–नाभ्याः श्रोण्यꣳसेषु पंचगृहीतं जुहोत्यक्ष्णया दक्षिणेऽꣳसे श्रोण्याꣳश्रोण्या ꣳसे मध्ये च–हिरण्यं निधाय सिꣳह्यसीति प्रतिमंत्रम् । का. श्रौ. सू. ५।९।१ ।

( ह्रा ) अथ परिधीन्परिदधाति । ध्रुवोऽसि पृथिवीं दृꣳहेति मध्यमं ध्रुवक्षिदस्यन्तरिक्षं दृꣳहेति दक्षिणमच्युतक्षिदसि दिवं दृꣳहेत्युत्तरमग्नेः पुरीषमसीति सम्भारानुपनिवपति तद्यत्सम्भारा भवन्त्यग्नेरेव सर्व्वत्वाय ॥ १४ ॥

शरीरꣳ हैवास्यै पीतुदारु । तद्यत्पैतुदारवाः परिधयो भवन्ति शरीरेणैवैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ १५ ॥

माꣳसꣳ हैवास्य गुल्गुलु । तद्यद्गुल्गुलु भवति माꣳसेनैवैनमेतत्समर्द्धयति कृत्स्नं करोति ॥ १६ ॥

---

अथ परिधीन् परिदधाति—" ध्रुवोऽसि पृथिवीं दृंह "—( वा. सं. ५ । १३ ) इति—मध्यमम् । " ध्रुवक्षिदस्यन्तरिक्षं दृंह "—( वा. सं. ५ । १३ ) इति—दक्षिणम् । " अच्युतक्षिदसि दिवं दृंह "—( वा. सं. ३ । २३ ) इति—उत्तरम् । " अग्नेः पुरीषमसि "—( वा. सं. ५ । १३ ) इति—सम्भारानुपनिवपति । तद्यत्सम्भारा भवन्ति—अग्नेरेव सर्वत्वाय ॥ १४ ॥

शरीरं हैवास्य पीतुदारु । तद् यत् पैतुदारवाः परिधयो भवन्ति—शरीरेणैवैनमेतत् समर्द्धयति, कृत्स्नं करोति ॥ १५ ॥

मांसं हैवास्य गुल्गुलु । तद् यत् गुल्गुलु भवति—मांसेनैवैनमेतत् समर्द्धयति—कृत्स्नं करोति ॥ १६ ॥

---

' अथ ' ' स्रुचम् ' ' उद्यच्छति ' ऊर्ध्वं धारयेत् । स्रुगुद्यमनमन्त्रस्थस्य भूतशब्दस्य भूतकार्यमर्थं इत्याह—प्रजा वै भूतानीति ॥ १३ ॥

अथ परिधीन् परिदधातीति । तन्मन्त्रस्यार्थः—हे परिधे ! त्वं यस्मात् ' ध्रुवोऽसि, ' अतः ' पृथिवीं ' ' दृंह ' दृढां कुरु । अनेन मध्यमपरिधिं परिदधाति । ध्रुवमविचलं क्षियति निवसतीति ' ध्रुवक्षित् ' । अच्युतं परैरच्यावितं यथा न चलति तथा क्षियतीति ' अच्युतक्षित् ' । उत्तरवेदिनाभिदेशे गुग्गुलुसुगन्धितेजनादिसम्भारप्रक्षेपं समन्त्रकं विधत्ते—अग्नेः पुरीषमसीति । सम्भारानुपनिवपतीति । स च सम्भारनिवापः 'अग्नेः' ' सर्वत्वाय ' कृत्स्नत्वाय सम्पद्यते गुग्गुल्वादीनामग्न्यवयवत्वं स्वयमेव वक्ष्यति,—अतस्तेषामग्निना संयोजनेन स सर्वः सम्पूर्णो भवति ॥ १४ ॥

शरीरं हैवेति । ' अस्य ' अग्नेः ' पीतुदारु ' उदुम्बरविशेषः । " स यां वनस्पतिष्ववसत्तां पितुद्रौ " ( तै. सं. ६ । २ । ८ । ४ ) इति च तैत्तिरीयके श्रवणात् पीतुदारुणोऽग्नेः शरीरत्वम् ॥ १५ ॥

मांसं हैवास्येति । " यन्मांसमुपस्तुतं तद् गुल्गुलु " इति ( तै. सं. ६ । २ । ८ । ४ ) श्रुतेः गुग्गुलोरग्नेर्मांसत्वम् ॥ १६ ॥

---

१—भूतेभ्यस्त्वेति स्रुचमुद्यच्छति । का.श्रौ.सू. ५।९२। २—नार्मैः पैतुदारवैः परिदधाति पूर्ववद् ध्रुवोऽसीति प्रतिमंत्रम् । का.श्रौ.सू. ५।९३। ३—अग्नेः पुरीषमिति निवपति गुग्गुलुसुगंधितेजनवृष्णिस्तुकाश्वोपारिशर्विण्या अभावेऽन्याः इति । का. श्रौ. सू. ५-९४ ।

गन्धो हैवास्य सुगन्धितेजनम् । तद्यत्सुगन्धितेजनं भवति गन्धेनैवैन-मेतत्समर्द्धयति कृत्स्नं करोति ॥ १७ ॥

( त्यु ) अथ यद्वृष्णे स्तुका भवति । व्वृष्णेर्ह वै व्विषाणेऽअन्तरेणा-ग्निरेकाᳬं रात्रिमुवास तद्यदेवात्राग्नेर्न्यक्तं तदिहाप्यसदिति तस्माद्वृष्णे स्तुका भवति तस्माद्या शीर्ष्णो नेदिष्ठᳬं स्यात्तामाच्छिद्याहरेद्यद्यु तां नु विन्देदपि यामेव काञ्चाहरेत्तद्यत्परिधयो भवन्ति गुप्त्याऽएव दूरऽइव ह्येनमुत्तरे परिधय ऽआगच्छन्ति ॥ १८ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥४॥२॥(५॥२)॥

---

गन्धो हैवास्य सुगन्धितेजनम् । तद् यत् सुगन्धितेजनं भवति–गन्धेनैवैनमेतत् समर्द्धयति, कृत्स्नं करोति ॥ १७ ॥

अथ यद् वृष्णेः स्तुका भवति । वृष्णेर्ह वै विषाणे अन्तरेणाग्निरेकां रात्रिमुवास । तद् यदेवात्राग्नेर्न्यक्तं–तदिहाप्यसदिति । तस्माद् वृष्णेः स्तुका भवति । तस्माद्या शीर्ष्णो नेदिष्ठं स्यात्–तामाच्छिद्याहरेत् । यद्यु तां न विन्देदपि यामेव काञ्चाहरेत् । तद् यत्परिधयो भवन्ति–गुप्त्याऽएव । दूरऽइव ह्येनमुत्तरे परिधय आगच्छन्ति ॥ १८ ॥

---

गन्धो हैवास्येति । "यामोषधीषु तां सुगन्धितेजने–" ( तै. सं. ६ । २ । ८ । ४ ) इति श्रुतेः सुगन्धितेजनाख्यौषधिविशेषे अग्नेरेकरात्रनिवासादग्नेर्गन्धः सुगन्धितेजने सङ्क्रान्तः । तदुपवापेन अग्नेर्गन्धाख्यांशस्य पुनर्योजना । अतः कृत्स्नत्वमग्नेः ॥ १७ ॥

अथ यद्वृष्णे स्तुका भवतीति । वृष्णिर्मेषः, तस्य स्तुका रोम । स्तुकाया अग्न्यवयवत्वमुपपादयति–वृष्णेर्ह वै विषाणे अन्तरेणेति । "यां पशुषु तां पेत्वस्यान्तरा शृङ्गे–" ( तै. सं. ६ । २ । ८ । ४ ) इति तैत्तिरीयकम् ॥

या शीर्ष्णो नेदिष्ठं स्यात् तामाच्छिद्याहरेदिति । वृष्णेरलाभे कथमित्यत आह–अपि यामेव कां चाहरेदिति । तदवान्तरजातिसम्बन्धामपीत्यर्थः । परिधीनां परिधानं तद्दारुविशेषत्वं चोक्तम्, इदानीं तदावश्यकत्वमाह–तद् यत् परिधयो भवन्तीत्यादि । यस्मात् 'उत्तरे' उपरि क्रियमाणाः 'परिधयः' 'दूरे' विप्रकृष्टकाले होमकाले 'आगच्छन्ति' अतोऽग्नेर्गुप्तिस्तावत्पर्यन्तमपेक्षिता; तस्मादिदानीमवश्यं कर्तव्यमित्यर्थः ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये तृतीयकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ ( ३–५–२ )

---

१–'शीर्ष्णो' इति क. पा. भाष्येऽपि 'शीर्ष्णो' इत्येव । २–'सुगन्धितेजनादोषधिविशेषे' इति जयपुरीयपु० पा० ।

पुरुषो वै यज्ञः । पुरुषस्तेन यज्ञो यदेनं पुरुषस्तनुतऽएष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः ॥ १ ॥

शिर ऽएवास्य हविर्द्धानम् । वैष्णवं देवतयाथ यदस्मिन्त्सोमो भवति हविर्वै देवानाꣳ सोमस्तस्माद्धविर्द्धानं नाम ॥ २ ॥

मुखमेवास्याहवनीयः । स यदाहवनीये जुहोति यथा मुखऽआसिञ्चेदेवं तत् ३ (त्स्तु) स्तुपऽएवास्य यूपः । (पो) बाहूऽएवास्याग्नीध्रीयश्च मार्जालीयश्च ॥ ४ ॥

---

## अथ हविर्धानकर्म ।

पुरुषो वै यज्ञः । पुरुषस्तेन यज्ञः–यदेनं पुरुषस्तनुते । एष वै तायमानो यावानेव पुरुषस्तावान् विधीयते । तस्मात् पुरुषो यज्ञः ॥ १ ॥

शिर एवास्य हविर्द्धानम्–वैष्णवं देवतया । अथ यदस्मिन् सोमो भवति । हविर्वै देवानां सोमः । तस्माद्धविर्द्धानं नाम ॥ २ ॥

मुखमेवास्याहवनीयः । स यदाहवनीये जुहोति–यथा मुख आसिञ्चेद्; एवं तत् ॥ ३ ॥
स्तुप एवास्य यूपः । बाहूऽएवास्याग्नीध्रीयश्च, मार्जालीयश्च ॥ ४ ॥

---

उत्तरत्र ( श. प. ब्रा. ३ । ५ । ३ । ७ ) सदोहविर्द्धानादिकं विधास्यति, तदुपोद्घातत्वेन तेषां पुरुषाकारसन्निवेशतामाह–**पुरुषो वै यज्ञ** इत्यादिना । अत्र यज्ञशब्देन तदाधारभूतः सदोहविर्द्धानादिक उच्यते । प्रतिज्ञाते पुरुषत्वे हेतुमाह–**पुरुषस्तेन यज्ञ** इति । 'तेन' कारणेन 'यज्ञः' 'पुरुषः' इत्यर्थः । हेतुं विवृणोति–**यदेनं पुरुषस्तनुत** इति । यस्मात् पुरुषेण यज्ञस्तायते, तेन यज्ञः पुरुष इत्यर्थः । तत् किं पुरुषेण तायमानः सर्वोऽपि पुरुषः ? नेत्याह–**एष वै तायमानो, यावानेव पुरुषः, तावान् विधीयत** इति । पुरुषाकारेण तायमानत्वात् पुरुष इत्यर्थः ॥ १ ॥

**शिर एवास्येति** । हविर्द्धानस्य यज्ञशिरस्त्वे कारणमाह–**वैष्णवं देवतयेति** । विष्णुदेवताकैर्मन्त्रैर्निर्मातव्यत्वात्, वैष्णवत्वम् । विष्णोः सर्वदेवतानामुत्तमत्वात्, शिरसोऽप्यङ्गानामुत्तमत्वाद् युक्तं हविर्द्धानस्य शिरस्त्वम् । हविर्द्धानं नामनिर्वचनेन प्रशंसति–**अथ यदस्मिन्निति** ॥ २ ॥

**मुखमेवास्याहवनीय** इति । आहवनीयस्य मुखत्वसाम्यं दर्शयति–**स यदाहवनीये जुहोतीति** । अत्र प्रक्षेपसाम्यान्मुखमित्यर्थः ॥ ३ ॥

**स्तुप एवास्य यूप** इति । 'यूप एव' 'अस्य' यज्ञस्य 'स्तुपः' केशनिचयः, दैर्घ्यसाम्यात् । हविर्द्धानस्योत्तरस्याम् 'आग्नीध्रीयः' दक्षिणस्यां 'मार्जालीयः,' अत एव 'बाहू'; उभयतः समानत्वात्तौ बाहुस्थानीयौ ॥ ४ ॥

( श्रो ) उदरमेवास्य सदः । ( स्तु ) तस्मात्सदसि भक्षयन्ति यद्धीदं किञ्चाश्नन्त्युदरऽएवेदᳬं सर्वं प्रतितिष्ठत्यथ यदस्मिन्विश्वे देवाऽअसीदं-स्तस्मात्सदो नाम त उऽएवास्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्ति ॥ ५ ॥

( न्त्य ) अथ यावेतौ जघनेनाग्नी । पादावेवास्यैतावेष वै तायमानो यावानेव पुरुषस्तावान्विधीयते तस्मात्पुरुषो यज्ञः ॥ ६ ॥

( ऽ ) उभयतोद्वारᳬं हविर्द्धानं भवति । ( त्य ) उभयतोद्वारᳬं सद-स्तस्मादयं पुरुषऽआन्तᳬं सन्तृण्णः प्रणिक्ते हविर्द्धानेऽउपतिष्ठते ॥ ७ ॥

ते समववर्तयन्ति । दक्षिणेनैवं दक्षिणमुत्तरेणोत्तरं यद्वर्षीयस्तद्द-क्षिणᳬं स्यात् ॥ ८ ॥

---

उदरमेवास्य सदः । तस्मात् सदसि भक्षयन्ति । यद्धीदं किञ्चाश्नन्ति—उदरऽएवेदं सर्वं प्रतितिष्ठति । अथ यदस्मिन् विश्वेदेवाऽअसीदन्—तस्मात्सदो नाम । त उ एवास्मिन्नेते ब्राह्मणा विश्वगोत्राः सीदन्ति ॥

अथ यावेतौ जघनेनाग्नी—पादावेवास्यैतौ । एष वै तायमानो यावानेव पुरुषः, तावान्विधीयते । तस्मात् पुरुषो यज्ञः ॥ ६ ॥

उभयतोद्वारं हविर्द्धानं भवति, उभयतोद्वारं सदः । तस्मादयं पुरुषऽआन्तं सन्तृण्णः । प्रणिक्ते हविर्द्धाने उपतिष्ठते ॥ ७ ॥

ते समववर्तयन्ति—दक्षिणेनैव दक्षिणम्, उत्तरेणोत्तरम् । यद्वर्षीयस्तद्दक्षिणं स्यात् ॥ ८ ॥

---

उदरमेवास्य सद इति । सदसि भक्षणसम्भवाद् भक्षणसाम्यात् 'सदः उदरम्' । 'सदः'—शब्दो यौगिक इत्याह—अथ यदस्मिन् विश्वेदेवा असीदन्निति । सीदन्त्यत्रेति सदः । विश्वेदेवा वस्वादिरूपेण नानाजातीयाः । ब्राह्मणेषु कथं विश्वदेवत्वमिति तत्राह—ब्राह्मणा विश्वगोत्राः सीदन्तीति ॥ ५ ॥

अथ यावेतौ जघनेनाग्नी इति । सौमिकवेदेः पश्चाद्भागे 'अग्नी' आहवनीयगार्हपत्यौ, तौ जघनदेशवर्तित्वात् 'पादौ' । उपपादितमर्थं गमयति—एष वै तायमान इति ॥ ६ ॥

उभयतोद्वारमिति ( "पृष्ठ्यामुभयतोद्वार्ये" इति का. श्रौ. सू. ८ । ११० ) हविर्द्धानं सदश्चेत्युभयम्, 'उभयतोद्वारम्' प्राक् पश्चाच्च । यस्मात् पुरुषरूपो यज्ञ उभयतोद्वारकः, 'तस्मात्' 'पुरुषः' मनुष्यः 'आन्तम्' अन्तपर्यन्तम् 'सन्तृण्णः' सुषिरवान् भवति । आन्तसाम्यात् पुरुषाकारत्वं यज्ञस्य सिद्धम् । हविर्द्धानप्रवर्तनायोभयोर्निर्णिज्य स्थापनं विधत्ते—प्रणिक्ते हविर्द्धाने उपतिष्ठते इति । अत्र कात्यायनः—"ओपनिवपनात्कृत्वा हविर्द्धाने स्थापयति पृष्ठ्यामुभयतः—" इति ( का. श्रौ. सू. ८ । ७३ ) ॥ ७ ॥

ते समववर्तयन्तीति । 'दक्षिणेन' पृष्ठ्याख्यमध्यरज्ज्वोर्दक्षिणदेशेन 'दक्षिणं' हविर्द्धानम्, तथा 'उत्तरेण उत्तरम्' 'समववर्तयन्ति' हविर्धानमण्डपं प्रति सम्यग्गमयन्ति । 'यद्' 'वर्षीयः' अतिशयेन वृद्धम्, 'तद्' 'दक्षिणम्' हविर्द्धानं कर्तव्यम् ॥ ८ ॥

---

१–द्वर्षीयोदक्षिणं । का. श्रौ. सू. ८ । ७३ ।

( त्तु ) तयोः समववृत्तयोः । (इछ) छदिरधिनिदधाति यदि च्छदिर्न विन्देयुश्छदिः सम्मितां भित्तिं प्रत्यानह्यन्ति रराट्यां परिश्रयन्त्युच्छ्रायीभ्यां छदिः पश्चादधिनिदधति च्छदिः सम्मितां वा भित्तिम् ॥ ९ ॥

( मु ) अथ पुनः प्रपद्य । चतुर्गृहीतमाज्यं गृहीत्वा सावित्रं प्रसवाय जुहोति सविता वै देवानां प्रसविता सवितृप्रसूताय यज्ञं तनवामहाऽइति तस्मात्सावित्रं जुहोति ॥ १० ॥

स जुहोति । युञ्जते मनऽउत युञ्जते धियऽइति मनसा च वै व्वाचा च यज्ञं तन्वते स यदाह युञ्जते मनऽइति तन्मनो युनक्त्युत युञ्जते धिय इति तद्वाचं युनक्ति धिया धिया ह्येतया मनुष्या जुज्यूषन्त्यनूक्तेनेव प्रकामोद्येनेव गाथाभिरिव ताभ्यां युक्ताभ्यां यज्ञं तन्वते ॥ ११ ॥

---

तयोः समववृत्तयोः छदिरधिनिदधति । यदि छदिर्न विन्देयुः—छदिः संमितां भित्तिं प्रत्यानह्यन्ति । रराट्यां परिश्रयन्ति । उच्छ्रायीभ्यां छदिः पश्चादधिनिदधति, छदिः सम्मितां वा भित्तिम् ॥ ९

अथ पुनः प्रपद्य चतुर्गृहीतमाज्यं गृहीत्वा सावित्रं प्रसवाय जुहोति । सविता वै देवानां प्रसविता । सवितृप्रसूताय यज्ञं तनवामहाऽइति । तस्मात् सावित्रं जुहोति ॥ १० ॥

स जुहोति । "युञ्जते मन उत युञ्जते धियः"—( वा. सं. ५ । १४ ) इति । मनसा च वै वाचा च, यज्ञं तन्वते । स यदाह—युञ्जते मनऽइति—तन्मनो युनक्ति । उत युञ्जते धिय—इति—तद्वाचं युनक्ति । धिया—धिया ह्येतया मनुष्या जुज्यूषन्ति—अनूक्तेनेव, प्रकामोद्येनेव, गाथाभिरिव । ताभ्यां युक्ताभ्यां यज्ञं तन्वते ॥ ११ ॥

---

तयोःसमववृत्तयोरिति । 'समववृत्तयोस्तयोः' 'अधि' उपरि 'छदिः' तृणमयं कटम् उभयतः स्थापयेत् तदभावे 'भित्तिं वा' प्रत्यानह्येत् । तथा च कात्यायनः "वर्षीयो दक्षिणम् तयोश्छदिरध्यस्यति भित्तिं वाऽभावे"[१] ( का. श्रौ. सू. ८ । ७३—७५ ) इति । 'रराट्यां' हविर्द्धानयोर्मुखप्रदेशे उच्छ्रायीभ्यां तोरणकाष्ठाभ्यामन्तराले परिश्रये 'पश्चात्' पृष्ठभागेऽपि 'छदिः' 'अधि' निदध्यात् । तदभावे 'भित्तिः' पूर्ववत् कर्तव्या ॥ ९ ॥

हविर्द्धानप्रवर्तनाभ्यनुज्ञापनाय सावित्रं होमं विधत्ते—अथ पुनः प्रपद्य चतुर्गृहीतमाज्यं गृहीत्वा सावित्रं प्रसवाय जुहोतीति । व्याघारणायाज्यं ग्रहीतुं पूर्वमाहवनीयं प्रति गतत्वात् 'पुनः प्रपद्य'—इत्युच्यते । सत्स्वन्येषु देवेषु सवित्रे किमर्थं हूयत इत्यत आह—सविता वै देवानामिति । देवानां मध्ये सविता अनुज्ञाकर्ता ॥ १० ॥

होममन्त्रमाह—स जुहोतीति । मन्त्रस्यायमर्थः—'विप्राः' मेधाविनः, अध्वर्युप्रमुखाः ऋत्विजः ! 'विप्रस्य' विशेषेणाभिमतफलपूरकस्य प्रापकस्य 'बृहतः' महतः, 'विपश्चितः' मेधाविनः, यज्ञस्य । इतरे विपश्चितो-

---

१—रल्योरैक्याद्रराटनाम ललाटपट्टिका इत्यर्थः । २—चतुर्गृहीतं शालाद्वार्ये जुहोति युञ्जत इति । का. श्रौ. सू. ८ । ७९ ।

विप्रा विप्रस्य बृहतो विपश्चित इति । ये वै ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते विप्रास्तानेवैतदभ्याह बृहतो विपश्चितऽइति यज्ञो वै बृहन्विपश्चिद्यज्ञमेवैतदभ्याह विहोत्रा दधे वयुनाविदेक इदिति वि हि होत्रा दधते यज्ञं तन्वाना मही देवस्य सवितुः परिष्टुतिः स्वाहेति तत्सावित्रं प्रसवाय जुहोति ॥ १२ ॥

---

"विप्रा विप्रस्य बृहतो विपश्चितः"–( वा. सं. ९ । १४ ) इति । ये वै ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते विप्राः । तानेवैतदभ्याह । 'बृहतो विपश्चित'–इति । यज्ञो वै बृहन् विपश्चित् । यज्ञमेवैतदभ्याह । "विहोत्रा दधे वयुनाविदेकऽइत्"–( वा. सं. ९ । १४ ) इति । वि हि होत्रा दधते–यज्ञं तन्वानाः । "मही देवस्य सवितुः परिष्टुतिः स्वाहा"–( वा. सं. ९ । १४ ) इति । तत्–सावित्रं प्रसवाय जुहोति ॥ १२ ॥

---

ऽल्पविपश्चितः, असौ तु 'यज्ञो बृहन् विपश्चित्;' अतः पदद्वयसामर्थ्याद् यज्ञ एवाभिमतः । तं यज्ञं सवितृप्रसूतं 'मनः' 'धियः' बुद्धीश्च 'युञ्जते' अन्तः करणस्य मनसः पृथङ् निर्देशात् 'धी'–शब्देन तत्पूर्विका वागुच्यते । तथा 'होत्राः' वषट्कर्तारः सप्त होत्रकाश्च यज्ञविषये सवित्राऽनुज्ञाता एव मनो धियश्च 'विदधे' विदधते, कुर्वते । "लोपस्त आत्मनेपदेषु"–( पा. सू. । ७ । १ । ४१ ) इति तलोपः । कुत ईदृङ्माहात्म्यं सवितुरिति, तत्राह–यस्मात् सविता 'एक इत्' एक एव 'वयुनावित्' । वयुनमिति प्रज्ञानाम ( निघं. ३ । ९ । १० ) प्रज्ञावानित्यर्थः । यद्वा वीयते गम्यत इति वयुनं, यज्ञमार्गः । "वयुनं वेतेः" इति निरुक्तम् ( निरु. ५ । ३ । २ ) । तस्य वेदिता एक एव । तस्य सवितुर्देवस्य 'परिष्टुतिः' 'मही' महती 'स्वाहा' स्तुतिरूपमिदं द्रव्यं स्वाहुतमस्तु ॥

मन्त्रं व्याचष्टे–**मनसा च वै वाचा** चेत्यादिना । 'धी'–शब्दस्य विवक्षितमर्थमाह–**उत युञ्जते धिय** इति । **तद्वाचं युनक्तीति** । 'धिया–धिया' यदा यदा बुद्धिर्जायते तदा–तदा खलु 'एतया' वाचा 'जुज्यूषन्ति' जीवितुमिच्छन्ति । अतः केवलबुद्धेर्जीवनसाधनत्वाभावेन वाचोऽपेक्षितत्वात् 'धी'–शब्देन तत्पूर्विका वागुच्यते । जीवनसाधनत्वमेव विशदयति–**अनूक्तेनेवेति** । 'अनूक्तम्' अनुवचनम्, अध्ययनादिकम् । 'प्रकामः' स्वैच्छिकलौकिकभाषणम् । 'गाथाः' गद्यपद्यात्मिकाः ॥ ११ ॥

**विप्रा विप्रस्य बृहत इति** । मन्त्रगतस्य प्रथमविप्रशब्दस्याभिमतमर्थमाह–**ये वै ब्राह्मणा** इति । ऋत्विज इत्यर्थः । 'एतत्' 'विप्राः'–इति पदम्, 'तानेव' ब्राह्मणानेव 'अभ्याह' ब्रूते इत्यर्थः । बृहद्विपश्चिच्छब्दाभ्यां यज्ञो विवक्ष्यत इत्याह–**यज्ञो वै बृहन् विपश्चिदिति** । 'होत्रा'–शब्देन यज्ञकर्तारोऽभिमताः । 'दधे–' इत्येतद् 'दधते'–इत्यस्य बहुवचनस्य स्थाने इति व्याचष्टे–**वि हि होत्रा दधते यज्ञं तन्वाना इति** । **तत् सावित्रं प्रसवाय जुहोतीति** । यस्मान्मन्त्रे "सवितुर्देवस्य"–इति सविता देवः श्रूयते, 'तत्' तस्मादेव मन्त्रसाध्यं 'सावित्रं' होमं 'प्रसवाय' जुहुयात् ॥ १२ ॥

---

१–'तं निर्वाहाय'–इ. क. पा. ।

( त्य ) अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । (त्वो) उपनिष्क्रामति दक्षिणया द्वारा पत्नीं निष्क्रामयन्ति स दक्षिणस्य हविर्द्धानस्य दक्षिणायां वर्तन्याᳪं हिरण्यं निधाय जुहोतीदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाᳪंसुरे स्वाहेति सᳪंस्रवं पत्न्यै पाणावानयति साक्षस्य सन्तापमुपानक्ति देवश्रुतौ देवेष्वाघोषतमिति प्रयच्छति प्रतिप्रस्थात्रे स्रुचं चाज्यविलापनीं च पर्याणयन्ति पत्नीमुभौ जघनेनाग्नी ॥ १३ ॥

चतुर्गृहीतमाज्यं गृहीत्वा । प्रतिप्रस्थातोत्तरस्य हविर्द्धानस्य दक्षिणायां वर्तन्याᳪं हिरण्यं निधाय जुहोतीरावती धेनुमती हि भूतᳪं सूयवसिनी

---

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा उपनिष्क्रामति । दक्षिणया द्वारा पत्नीं निष्क्रामयन्ति । स दक्षिणस्य हविर्द्धानस्य दक्षिणायां वर्तन्यां हिरण्यं निधाय जुहोति । " इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । **समूढमस्य पांसुरे स्वाहा** "–( वा. सं. ५।१५ ) इति । संस्रवं पत्न्यै पाणावानयति साक्षस्य सन्तापमुपानक्ति । " देवश्रुतौ देवेष्वाघोषतम् "–( वा. सं. ५।१७ ) इति प्रयच्छति प्रतिप्रस्थात्रे–स्रुचं च आज्यविलापनीं च । पर्याणयन्ति पत्नीमुभौ जघनेनाग्नी ॥ १३ ॥

चतुर्गृहीतमाज्यं गृहीत्वा प्रतिप्रस्थाता उत्तरस्य हविर्द्धानस्य दक्षिणायां वर्तन्यां हिरण्यं निधाय

---

अथापरमित्यादि । दक्षिणहविर्द्धानशकटवर्त्मनि होमार्थमन्यत्, ' चतुर्गृहीतमाज्यं गृहीत्वा ' प्राचीनवंशाद्रुपनिष्क्रामेत् । ' पत्नीं ' च अक्षधुराभ्यञ्जनाय ' दक्षिणया द्वारा ' निष्क्रामयेत् । ' सः ' अध्वर्युः । ' दक्षिणस्य ' ' हविर्द्धानस्य ' शकटस्य दक्षिणचक्ररेखायां ' हिरण्यं ' ' निधाय ' अध्वर्युर्जुहुयात् ॥

होममन्त्रस्यायं संगृहीतोऽर्थः–' इदं ' विश्वं ' विष्णुः ' त्रिविक्रमावतारधारी ' विचक्रमे ' विक्रान्तवान् । विक्रमणप्रकारमाह–' त्रेधा ' त्रिप्रकारेण त्रिषु स्थानेषु क्षित्यादिषु ' पदं ' ' निदधे ' स्थापितवान् । ' अस्य ' विष्णोः ' पांसुरे ' रजोयुक्ते पदे लोकत्रयं ' समूढम् ' गृहीतं सम्मितमासीदित्यर्थः । 'स्वाहा' इदं सुहुतमस्तु । ' संस्रवं ' जुहूलिप्तम् । ' सा ' पत्नी संस्रवेणाज्येन ' अक्षस्य ' ' सन्तापं ' सन्तप्यते चक्रसङ्घर्षेणेति सन्तापः, चक्रवलयसंस्पर्शप्रदेशः । चक्रद्वयम् ' उपानक्ति ' अनुलोमाञ्जनं कुर्यात्, न प्रतिलोमम् । पुनः पाणिमावर्तयेत् । तथा च कात्यायनः–" पत्नी पाणिभ्यां शेषं प्रतिगृह्याक्षधुरावनक्ति पराग् देवश्रुताविति–" ( का. श्रौ. सू. ८ । ८२ ) इति ॥

आञ्जनमन्त्रस्यायमर्थः–हे' देवश्रुतौ ' ! देवान् श्रावयत इति देवश्रुतौ, अक्षयोराधारप्रदेशौ । युवां ' देवेषु ' मध्येऽस्मान् ' आघोषतम् ' ते सम्यग् यजन्तीति शब्दं कुरुतम् ॥

**पर्याणयन्ति पत्नीमुभौ जघनेनाग्नी**–इति । दक्षिणहविर्द्धानाञ्जनानन्तरप्रादक्षिण्यक्रमेण उभौ ' जघनेन ' आहवनीयगार्हपत्ययोः पश्चाद्भागेन पत्नीं ' पर्याणयन्ति ' परितो गमयन्ति ॥ १३ ॥

चतुर्गृहीतमाज्यमिति । प्रतिप्रस्थाता उत्तरहविर्द्धानस्य दक्षिणवर्तन्यां ' हिरण्यं निधाय ' " इरावती "

---

१–अपरं दक्षिणे व्वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाभिजुहोतीदं व्विष्णुरिति । का. श्रौ.सू. ८।८१। २–'निष्क्रामेत्' इति क.

मनवे दशस्या ॥ व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहेति सꣳस्रवं पत्न्यै पाणावानयति साक्षस्य सन्तापमुपानक्ति देवश्रुतौ देवेष्वाघोषतमिति तद्यदेवं जुहोति ॥ १४ ॥

देवा ह वै यज्ञं तन्वानाः । ( स्ते ) तेऽसुररक्षसेभ्य आसङ्गाद्बिभयाञ्चक्रुर्वज्रो वाऽआज्यं तऽएतेन वज्रेणाज्येन दक्षिणतो नाष्ट्रा रक्षाꣳस्यवाघ्नꣳस्तथैषां नियानं नान्ववायंस्तथोऽएवैष ऽएतेन वज्रेणाज्येन दक्षिणतो नाष्ट्रा रक्षाꣳस्यवहन्ति तथास्य नियानं नान्ववयन्ति तद्यद्वैष्णवीभ्यामृग्भ्यां जुहोति वैष्णवꣳ हि हविर्धानम् ॥ १५ ॥

---

जुहोति—"इरावती धेनुमती हि भूतं सूयवसिनी मनवे दशस्या । व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा"—( वा. सं. ५।१६ ) इति । संस्रवं पत्न्यै पाणावानयति साक्षस्य सन्तापमुपानक्ति । "देवश्रुतौ देवेष्वाघोषतम्"—( वा. सं. ५। १७ ) इति । तद् यदेवं जुहोति ॥ १४ ॥

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद् बिभयाञ्चक्रुः । वज्रो वा ऽआज्यम् । त एतेन वज्रेणाज्येन दक्षिणतो नाष्ट्रा रक्षांस्यवाघ्नन्, तथैषां नियानं नान्ववायन् । तथो ऽएवैष एतेन वज्रेणाज्येन दक्षिणतो नाष्ट्रा रक्षांस्यवहन्ति, तथाऽस्य नियानं नान्ववयन्ति । तद् यद्वैष्णवीभ्यामृग्भ्यां जुहोति, वैष्णवं हि हविर्धानम् ॥ १५ ॥

---

इति मन्त्रेण चतुर्गृहीतमाज्यं जुहुयात्[1] । मन्त्रस्यायमर्थः—हे द्यावापृथिव्यौ ! युवां 'मनवे' मनुष्याय यजमानाय 'इरावती' अन्नवत्यौ 'धेनुमती' बहुधेनुयुक्ते च 'भूतम्' भवतम् । तथा 'सूयवसिनी' शोभनघासयुक्ते, 'दशस्या' दशस्यौ अभिमतफलदात्र्यौ भवतम् । एवं महानुभावे एते रोदस्यौ हे विष्णो ! त्वं 'व्यस्कभ्नाः' विविधं स्कम्भितवानसि । तथा विशेषेण 'पृथिवीम्' 'अभितः' सर्वतः मयूखैः मयूखवत् सन्ततैर्जीवैस्तेजोभिर्वा 'दाधर्थ' धारयसि । तादृशाय तुभ्यम् इदमुत्तरहविर्धान—दक्षिणचक्रमार्गे हूयमानमन्नं 'स्वाहा' सुहुतमस्तु ॥

संस्रवमित्यादि पूर्ववत् । तद्यदेवं जुहोतीति । 'यद्' यदा एवं वर्त्मद्वये जुहोति, 'तत्' तदा 'संस्रवं' 'पत्न्यै' पत्न्याः 'पाणौ' इति पूर्वत्र सम्बन्धः ॥ १४ ॥

विहितं मार्गहोमं रक्षसां मार्गानुगमनपरिहारसाधनत्वेन प्रशंसति—देवा ह वै यज्ञं तन्वाना इत्यादिना । आज्यस्य यज्ञस्य असकृत् नियात्यत्रेति नियानो मार्गः । स्पष्टमन्यत् । मन्त्रयोर्विष्णुदेवताकत्वं हविर्धानयोरुचितमित्याह—तद्यद्वैष्णवीभ्यामिति । हविर्धानस्य वैष्णवत्वं शिर एवास्य हविर्धानमित्यत्रोक्तम् ( श. प. ब्रा. ३ । ५ । ३ । २ ) ॥ १५ ॥

---

१—स्रुक्स्थाल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तरस्येरावतीति पूर्ववत् । का. श्रौ. सू. ८ । ८४ ।

( मु ) अथ यत्पत्न्यक्षस्य सन्तापमुपानक्ति । प्रजननमेवैतत्क्रियते यदा वै स्त्रियै च पुꣳसश्च सन्तप्यतेऽथ रेतः सिच्यते तत्ततः प्रजायते पराग्गुपानक्ति पराग्घ्येव रेतः सिच्यतेऽथाह हविर्द्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीति ॥ १६ ॥

( त्यु ) अथ वाचयति । प्राची प्रेतमध्वरं कल्पयन्तीऽइत्यध्वरो वै यज्ञः प्राची प्रेतं यज्ञं कल्पयन्तीऽइत्येवैतदाहोर्ध्वं यज्ञं नयतं मा जिह्वरतमित्यूर्ध्वमिमं यज्ञं देवलोकं नयतमित्येवैतदाह मा जिह्वरतमिति तदेतस्माऽअह्वलामाशास्ते समुद्गृह्येव प्रवर्तयेयुर्यथा नोत्सर्जेतामसुर्य्या वाऽएषा वाग्याऽक्षे नेदिहासर्या वाग्वदादिति यद्युत्सर्जेताम् ॥ १७ ॥

---

अथ यत्पत्न्यक्षस्य सन्तापमुपानक्ति—प्रजननमेवैतत्क्रियते । यदा वै स्त्रियै च पुंसश्च सन्तप्यते—अथ रेतः सिच्यते, तत् ततः प्रजायते । पराग्गुपानक्ति । पराग्घ्येव रेतः सिच्यते । अथाह—' हविर्द्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहि ' इति ॥ १६ ॥

अथ वाचयति " प्राची प्रेतमध्वरं कल्पयन्ती "—( वा. सं. ५ । १७ ) इति । अध्वरो वै यज्ञः । प्राची प्रेतं यज्ञं कल्पयन्ती इत्येवैतदाह । " ऊर्ध्वं यज्ञं नयतम् "—( वा. सं. ५ । १७ ) इति । " मा जिह्वरतम् "—( वा. सं. ५ । १७ ) इति । ऊर्ध्वम् इमं यज्ञं देवलोकं नयतम् इत्येवैतदाह-मा जिह्वरतम् इति । तत्—एतस्मा ऽअह्वलामाशास्ते समुद्गृह्येव प्रवर्तयेयुः—यथा नोत्सर्जेताम् । असुर्य्या वाऽएषा वाक् याऽक्षे नेदिहासुर्या वाग् वदादिति यद्युत्सर्जेताम् ॥ १७ ॥

---

अथ यत्पत्न्यक्षस्येत्यादि । सन्ताप्यमानस्याक्षस्योपाञ्जनमेव प्रजननोत्पादनम् । यस्मात् स्त्रीपुरुषयोः सम्भोगकाले सन्तापेन रेतस उत्पादनद्वारा प्रजननसम्भवस्तस्मात् सन्तापोपाञ्जनकरणम् । उपाञ्जनस्य पराग्रूपतां विधाय प्रशंसति—पराग्गुपानक्तीति ॥ १६ ॥

अथ वाचयतीति[1] । अथ प्रैषानन्तरं हविर्द्धानयोः प्रवर्तनकाले ' वाचयति ' । मन्त्रस्यायमर्थः—हे हविर्द्धाने ' प्राची ' प्रागञ्चने प्रगच्छतम् ' अध्वरं ' सोमयागं ' कल्पयन्ती ' फलजननसमर्थं कर्तुं शक्ते । ' यज्ञम् ' सोमयागम् ' ऊर्ध्वं ' स्वर्गलोकं ' नयतम् ' प्रापयतम् । ' मा जिह्वरतम् ' चलनभ्रंशं मा कुरुतम् ॥

अध्वरो वै यज्ञ इति । " ध्वरतिर्हिंसाकर्मा । " ( निरु. १ । ३ । ३ । ) हिंसा नास्तीत्यध्वरः स ' यज्ञः ' नयतमित्युक्ते किमिति कर्मापेक्षायां तद्दर्शयति—ऊर्ध्वमिमं यज्ञं देवलोकं नयतमिति । ह्वला चलनम् ( धा. पा. भ्वा. प. ८०७ ) तदभावः, ' अह्वला ' तयोः प्रवर्तनकाले ' समुद्गृह्येव ' सम्यगुद्धृतं गृहीत्वेव । तस्य व्याख्यानम्—यथा नोत्सर्जेतामिति । दुष्टध्वनिविसर्गः यथाऽत्यन्तकर्षणे च ध्वनिर्नोत्पद्येतामित्यर्थः । अक्षध्वनेः श्रवणकटुत्वादसुर्यत्वम् ॥ १७ ॥

---

१—हविर्द्धानाभ्यां प्रवर्त्यमानाभ्यामनुवाचयति । का. श्रौ. सू. ८ । ८६ । प्राची प्रेतमिति वाचयति । ८ । ८८ ।

( मे ) एतद्वाचयेत् । ( त्स्वु ) स्वङ्गोष्ठमावदतं देवी दुर्य्येऽआयुर्मा निर्व्वादिष्टं प्रजां मा निर्व्वादिष्टमिति तस्यो हैषा प्रायश्चित्तिः ॥ १८ ॥

( स्तु ) तदाहुः । ( रु ) उत्तरवेदेः प्रत्यङ्प्रक्रामेत्त्रीन्विक्रमांस्तद्धविर्द्धाने स्थापयेत्सा हविर्द्धानयोर्मात्रेति नात्र मात्राऽस्ति यत्रैव स्वयं मनसा मन्येत नाहैव सत्राऽत्यन्तिके नो दूरे तत्स्थापयेत् ॥ १९ ॥

( त्ते ) तेऽअभिमन्त्रयते । ( तेऽत्र ) अत्र रमेथां वर्ष्मन्पृथिव्याऽइति वर्ष्म ह्येतत्पृथिव्यै भवति दिवि ह्यस्याहवनीयो भवति नभ्यस्थे करोति तद्धि क्षेमस्य रूपम् ॥ २० ॥

---

एतद्वाचयेत्–" स्वङ्गोष्ठमावदतम् देवी दुर्य्ये आयुर्मा निर्वादिष्टम्, प्रजां मा निर्वादिष्टम् "–( वा. सं. ५ । १७ ) इति । तस्यो हैषा प्रायश्चित्तिः ॥ १८ ॥

तदाहुः–उत्तरवेदेः प्रत्यङ् प्रक्रामेत, त्रीन् विक्रमांस्तद्धविर्द्धाने स्थापयेत्, सा हविर्द्धानयोर्मात्रेति । नात्र मात्राऽस्ति । यत्रैव स्वयं मनसा मन्येत । नाहैव सत्राऽत्यन्तिके, नो दूरे–तत् स्थापयेत् ॥ १९ ॥

तेऽअभिमन्त्रयते–" अत्र रमेथां वर्ष्मन् पृथिव्याः "–( वा. सं. ५ । १७ ) इति । वर्ष्म ह्येतत् पृथिव्यै भवति । दिवि ह्यस्याहवनीयो भवति । नभ्यस्थे करोति । तद्धि क्षेमस्य रूपम् ॥ २० ॥

---

एतद्वाचयेदिति[1] । प्रमादाद्ध्वन्युत्पत्तौ " स्वं गोष्ठम् "–इति 'एतद् वाचयेत्' हे 'देवी' हविर्द्धाने ! हे 'दुर्ये गृहेषु साधुरूपे । युवां 'स्वं' यजमानस्य स्वभूतं 'गोष्ठं' गवां स्थानम् 'आवदतं' सर्वतः शब्दयतम् पशवः समृद्धाः स्युरिति ब्रूतमित्यर्थः । 'आयुः' अस्मदायुषं 'मा' 'निर्बाधिष्टम्' 'प्रजां' पुत्रादिरूपां च 'मा निर्बाधिष्टम्' । 'तस्य' ध्वनेरसुर्यस्य 'एषा' मन्त्रोच्चारणरूपा 'प्रायश्चित्तिः' ॥ १८ ॥

हविर्द्धानयोः स्थापनप्रदेशे पक्षान्तरमभिधातुं केषाञ्चित्पक्षमाह–तदाहुरिति । 'उत्तरवेदेः' पश्चात्सञ्चराय विक्रमत्रयं परित्यज्य यत्र देशे तयोः स्थापनं भवति, 'सा हविर्द्धानयोर्मात्रा' स्थापनप्रदेशप्रमाणम् । स्वपक्षमाह–नात्रेति । तत्र स्थापयेदिति शेषः । मनसा यत्र मन्येतेति विशिनष्टि–नाहैवेति । 'सत्रा' अभिमतदेशेऽपि अतिदूरमतिसमीपञ्च विसृज्य मध्ये स्थापयेदित्यर्थः । तथा च कात्यायनः–" पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेषु मत्या वा "–( का. श्रौ. सू. ८ । ९० । ) इति ॥ १९ ॥

ते अभिमन्त्रयते[2] इति । स्थापनानन्तरं हविर्द्धाने अभिमन्त्रयेत–अत्र रमेथामिति । 'पृथिव्यै' पृथिव्याः 'वर्ष्मणि' शरीरे अत्र च देशे हविर्द्धाने 'रमेथाम्' रतिं कुरुतम् । दिवि ह्यस्येति । एतद्धविर्द्धानस्य पृथिवीत्वे हेतुः । । यस्मादुपरिभाग उत्तरवेदिरूपः 'आहवनीयः' द्युलोकस्थानीयः, अतस्तदधोवर्तिवेदिदेशस्य पृथिवीशरीरत्वं युज्यते । 'नभ्यस्थे करोति' यथा नाभ्याधारफलके भूमिष्ठे भवतः, तथा कुर्यात् । " नामि

---

१–स्वं गोष्ठमिति च खर्जति । का. श्रौ. सू. ८ । ८९ । २–अत्र मूलपुस्तकेषु सर्वत्र निर्वादिष्टमित्येव दृश्यते । भाष्ये तु निर्बाधिष्टमिति । महीधरस्तु ( वा. सं. ५ । १७ ) मन्त्रभाष्ये 'निर्वादिष्टम्' इत्येव पाठमवलम्ब्य 'निराकार्ष्टम्' इति व्याचख्यौ । ३–अभिमन्त्रयतेऽत्र रमेथामिति । ८ । ९० ।

(म) अथोत्तरेण पर्य्येत्याध्वर्य्युः । (दे) दक्षिणᳪं हविर्द्धानमुपस्तभ्नाति विष्णोर्नुकं वीर्य्याणि प्रवोचं यः पार्थिवानि विममे रजाᳪंसि । योऽअस्कभायदुत्तरᳪं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वेति मेथीमुपनिहन्तीतरतस्ततो यद्दु च मानुषे ॥ २१ ॥

(षेऽथ) अथ प्रतिप्रस्थाता । (तो) उत्तरᳪं हविर्द्धानमुपस्तभ्नाति दिवो वा विष्णऽउत वा पृथिव्या महो वा विष्णऽउरोरन्तरिक्षात् । उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वेति मेथी-

---

अथोत्तरेण पर्य्येत्याध्वर्य्युर्दक्षिणं हविर्द्धानमुपस्तभ्नाति–" विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । यो ऽअस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा "–( वा. सं. ५ । १८ ) इति । मेथीमुपनिहन्तीतरतः, ततो यद्दु च मानुषे ॥ २१ ॥

अथ प्रतिप्रस्थाता उत्तरं हविर्द्धानमुपस्तभ्नाति–"दिवो वा विष्ण ऽउत वा पृथिव्या महो

---

नमं च " ( पा. सू. ५ । १ । २ । ग. सू. ९९ ) इति यत्प्रत्यययोगे नभादेशः । उत्तरत्र प्रदेशस्य भूस्पर्शे भ्रंशः कदाचिद् भवेत्, अत एव तत् ' क्षेमस्य रूपम् ' भवति ॥ २० ॥

**अथोत्तरेण पर्येत्येति** । दक्षिणहविर्द्धानस्योत्तरतः ' परीत्य ' पुरोदेशं गत्वा ' दक्षिणं हविर्द्धानम् ' उपस्तभ्नाति ' । यथाऽधो न पतेत्, तथा कस्मिंश्चित् काष्ठे स्थापयेत् ॥

तन्मन्त्रः–" विष्णोर्नुकम् "–इति । ' विष्णोः ' त्रिविक्रमावतारस्य ' वीर्याणि ' ' प्रवोचम् ' प्रब्रवीमि । कानि तानि ? तदुच्यन्ते–' यः ' विष्णुः 'पार्थिवानि' पृथिवीविकारान्, ' रजांसि ' " लोका रजांस्युच्यन्ते " ( निरु० ४ । ३ । ३ ) इति निरुक्तम्, लोकान् विविधं परिच्छिन्नवान् । 'यः' च 'उत्तरम्' उपरितनं 'सधस्थं' सहस्थानं द्युलोकम् ' अस्कभायत् ' स्तम्भितवान् । किं कुर्वन् ? ' त्रेधा ' त्रिप्रकारेण ' विश्वं ' ' विचक्रमाणः' विविधं क्रममाणः सन्, ' ' उरुगायः ' बहुभिर्महात्मभिर्बहुविधं वा श्रुत्यादिमुखेन गीयमानः । यो विष्णुरेवमकरोत् तस्य वीर्याणि प्रवोचम् इति ॥

**विष्णवे त्वेति मेथीमुपहन्तीति**[२] । हे ' मेथी ' स्तम्भ ! ' विष्णवे ' हविर्द्धानशकटाय ' त्वा ' त्वाम् उपहन्मीत्यर्थः । कस्मिन् देशे निहन्यादिति तमाह–**इतरतस्ततो यद्दु च मानुषे** इति । ' मानुषे ' शकटधारणे ' यत् ' स्थानमीषाग्रेतरभागः तदुत्तरत्र ' मेथीं ' स्तम्भं निहन्यादित्यर्थः । तथा च सूत्रकार उभयोरपि दक्षिणतो निहननस्येदं ब्राह्मणवाक्यं प्रमाणयामास " उभे वा दक्षिणतः, इतरतस्ततः, यद्दु च मानुष इति श्रुतेः ( का. श्रौ. सू. ८ । ९६–९७ ) "–इति ॥ २१ ॥

**अथ प्रतिप्रस्थातेति**[३] । दक्षिणहविर्द्धानोत्तम्भनमन्त्रस्यायमर्थः । हे ' विष्णो ' ! ' दिवः ' द्युलोकात्

---

१–उत्तरेण परिक्रम्य दक्षिणमुपस्तभ्नाति–विष्णोर्नुकमिति । का. श्रौ. सू. ८ । ९१ । २–दक्षिणतः स्थूणामुपनिहंति विष्णवे त्वेति । का. श्रौ. सू.८ ९२ । ३–दिवो वेत्युत्तरं प्रतिप्रस्थाता । का. श्रौ. सू. ८ । ९३ ।

मुपनिहन्तीतरतस्ततो यदु च मानुषे तद्यद्वैष्णवैर्य्यजुर्भिरुपचरन्ति व्वैष्णवꣳ हि हविर्द्धानम् ॥ २२ ॥

(मु)अथ मध्यमं छदिरुपस्पृश्य व्वाचयति । प्रतद्विष्णुस्तवते व्वीर्य्येण मृगो नु भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु व्विक्रमणेष्वधिक्षियन्ति भुवनानि व्विश्वेतीदꣳ हैवास्यैतच्छीर्षकपालं यदिदमुपरिष्टादधीव ह्येतत्क्षियन्त्यन्यानि शीर्षकपालानि तस्मादाहाधिक्षियन्तीति ॥ २३ ॥

---

वा विष्ण ऽउरोरन्तरिक्षात् । उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वा "–( वा. सं. ५ । १९ ) इति । मेथीमुपनिहन्तीतरतस्ततो यद्द च मानुषे तद् यद्वैष्णवैर्यजुर्भिरुपचरन्ति वैष्णवं हि हविर्द्धानम् ॥ २२ ॥

अथ मध्यमं छदिरुपस्पृश्य वाचयति–" प्रतद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा "–( वा. सं. ५ । २० ) इति । इदं हैवास्यैतत् शीर्षकपालम्–यद् इदमुपरिष्टात् । अधीव ह्येतत् क्षियन्त्यन्यानि शीर्षकपालानि । तस्मादाह–अधिक्षियन्तीति ॥ २३ ॥

---

' वा ' अथवा ' पृथिव्याः ' सकाशात् हे ' विष्णो ! ' ' महः ' महतो गुणात् ' उरोः ' विस्तीर्णात् ' अन्तरिक्षात् ' वा उभौ हस्तौ तावकौ ' वसुना ' धनेन ' पृणस्व ' पूरय । ततो ' दक्षिणात् ' हस्तात्, अपि चोत्तराच्च ' आ ' सर्वतः ' प्रयच्छ' पूर्णं वसु यजमानार्थम् ॥

"विष्णवे त्वा "-इति उत्तरहविर्द्धानस्य मेथीं प्रतिप्रस्थाता उपहन्यात् "इतरतस्ततः" इति पूर्ववत् ( श. प. ब्रा. ३ । ५ । ३ । २१ ) ॥ २२ ॥

अथ मध्यमं छदिरित्यादि " तयोः समववृत्तयोश्छदिरधि निदधाति " इति छदिः प्रागुक्तम् ( श. प. ब्रा. ३ । ५ । ३ । १० ) । तत् ' उपस्पृश्य ' " प्रतद्विष्णुः "–इति वाचयेत् ॥

तस्यार्थः–' विष्णुः ' ' वीर्येण ' वीरस्य कर्म वीर्यम् ,तेन निमित्तेन ' प्रस्तवते ' प्रस्तूयते । वीर्येण स्तूयमानत्वे दृष्टान्तः–मृगो न इति । ' कुचरः ' कुत्सितं हिंसन् सञ्चरन् ' भीमः ' सर्वप्राणिभीतिजनकः, ' गिरिष्ठाः ' गिरिस्थायी ' मृगो न ' सिंहतुल्यः । ' यस्य ' विष्णोः, ' उरुषु ' लोकत्रयव्यापकत्वेनातिविस्तृतेषु ' त्रिषु ' ' विक्रमणेषु ' ' विश्वा ' सर्वाणि ' भुवनानि ' लोकाः ' अधिक्षियन्ति ' अधिनिवसन्ति ॥

अथवा ब्राह्मणानुसारेणायं मन्त्रोऽधियज्ञपरतया व्याख्येयः । ' विष्णुः ' हविर्द्धानाख्यः, तस्य यदुपरि वर्तमानं मध्यमं छदिरस्ति, तत् स्तूयत इत्यर्थः । उत्तरवेदेः प्रत्यक् त्रिषु विक्रमणेष्वतीतेषु निधीयमानस्य यस्य उपरिशीर्षकपालस्थानीयं मध्यमं छदिरस्ति, तस्य ' अधि' उपरि सर्वतो विश्वा भुवनानि भवन्तीति । भुवनानि उपरिशीर्षकपालस्थानानि अन्यानि छदींषि क्षियन्ति निवसन्ति ॥

अधिक्षियन्तीत्येतं मन्त्रभागं व्याचष्टे–इदं हैवास्यैतच्छीर्षकपालमित्यादिना ॥ २३ ॥

---

१–उत्तरतः स्थूणां पूर्ववत् । का. श्रौ. सू. ८ । ९४ । २–प्रतद्विष्णुरिति वाचयति मध्यमं छदिरालभ्य । का. सू. ८ । ९८ ।

( त्यु ) अथ रराट्यामुपस्पृश्य व्वाचयति । व्विष्णो रराटमसीति ललाटर्ठ० हैवास्यैतदथोच्छ्रायाऽउपस्पृश्य व्वाचयति व्विष्णोः श्नप्त्रे स्थ इति स्रक्के हैवास्यैतेऽअथ यदिदं पश्चाच्छदिर्भवतीदर्ठ० हैवास्यैतच्छीर्षकपालं यदिदं पश्चात् ॥ २४ ॥

( दु ) अथ लस्पूजन्या स्पन्द्यया प्रसीव्यति । व्विष्णोः स्यूरसीत्यथ ग्रन्थिं करोति व्विष्णोर्ध्रुवोऽसीति नेद्व्यवपद्याताऽइति तं प्रकृते कर्म्मन्विष्यति तथो हाध्वर्युं वा यजमानं वा ग्राहो न विन्दति तन्निष्ठितमभिमृशति व्वैष्णवमसीति व्वैष्णवर्ठ० हि हविर्द्धानम् ॥ २५ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ ४ ॥ ३ ॥ ( ५ । ३ )

---

अथ रराट्यामुपस्पृश्य वाचयति—" विष्णो रराटमसि "–(वा. सं. ५ । २१) इति । ललाटं हैवास्यैतत् । अथोच्छ्राया ऽउपस्पृश्य वाचयति—" विष्णो श्नप्त्रे स्थः "–(वा. सं. ५ । २१)इति। स्रक्के हैवास्यैते । अथ यत् इदं पश्चाच्छदिर्भवति इदं हैवास्यैतत् शीर्षकपालं–यदिदं पश्चात् ॥ २४ ॥

अथ लस्पूजन्या स्पन्द्यया प्रसीव्यति । " विष्णो स्यूरसि "–( वा. सं. ५ । २१ ) इति । अथ ग्रंथिं करोति । " विष्णोर्ध्रुवोऽसि "–( वा. सं. ५ । २१ ) इति । नेद्व्यवपद्याताऽइति । तं प्रकृते कर्मन् विष्यति । तथो हाध्वर्युं वा यजमानं वा ग्राहो न विन्दति । तन्निष्ठितमभिमृशति । " वैष्णवमसि "–( वा. सं. ५ । २१ ) इति । वैष्णवं हि हविर्द्धानम् ॥ २५ ॥

---

अथ रराट्यामुपस्पृश्येति[२] । ' रराटयाम् ' रराटीमित्यर्थः । ' अस्य ' हविर्द्धानस्य ' एतत् ' रराट्याख्यमङ्गं ललाटं खलु ' अथ ' अतः ' उच्छ्रायौ, ' द्वारशाखे द्वारस्योभयपार्श्ववर्तिनी तृणादिनिर्मिते प्रावरणे, तौ ' उपस्पृश्य ' ' वाचयति '—विष्णोरिति । ' विष्णोः ' हविर्द्धानस्य ' श्नप्त्रे ' सृक्किणी, ओष्ठसन्धी 'स्थः ' भवथः । श्नप्त्रशब्दार्थमाह—स्रक्के हैवास्यैते इति । पश्चाच्छदिषः स्थानं प्रशंसति—अथ यदिदं पश्चाच्छदिरिति । ' इदं पश्चाच्छदिः ' हविर्धानाख्यस्य यज्ञशिरसः पश्चात्, कपालस्थानीयमित्यर्थः ॥

अथ मध्यच्छदिष उपरिगतानि त्रीण्यपि छर्दींषि उदगग्राणि कर्तव्यानि; त्रयाणामपि प्रागग्रीकरणे पश्चाच्छदिरिति श्रूयमाणं पश्चादित्युक्तं न युज्येत । तथा च कात्यायनः—" उदगग्राणि च्छर्दींषि भवन्ति पश्चाच्छुतेः " इति ( का. श्रौ, सू. ८ । १०२ ) ॥ २४ ॥

अथ लस्पूजन्या स्पन्द्यया प्रसीव्यतीति[३] । ' लस्पूजनी ' नाम सीवनसाधनसूच्यादिः तत्र सम्बद्धया रज्ज्वेत्यर्थः । द्वारशाखां दर्भैरावेष्ट्य रज्ज्वा " विष्णोः स्यूरसि "—इति मन्त्रेण सीव्येत् । हे द्वार्ये ! यद्वा हे रज्जो ! त्वं ' विष्णोः ' हविर्द्धानस्य ' स्यूः ' स्यूतप्रदेशः ' असि ' । हे ग्रथ्यमानप्रदेश ! त्वं विष्णोः हविर्द्धानस्य ' ध्रुवः ' अच्युतावयवः ' असि ' । अतस्त्वां ग्रथ्नामीत्यर्थः[४] ॥

---

१–" विष्णवे त्वा " इत्यधिको मन्त्रभागः संहितायाम् । २–व्विष्णोरराटमिति रराटयाम् । का. श्रौ. सू. ८ । १०० । ३–द्वार्याः परिषीव्यति लस्पूजनिप्रातिहृतया रज्ज्वाव्विष्णोः स्यूरसीति।का.श्रौ.सू.८।१०३।४–व्विष्णोर्ध्रुवोऽसीति ग्रंथिं करोति।का.श्रौ.सू.८।१०४।

द्व॒यं वा॑ऽअ॒भ्यु॒प॒र॒वाः खा॑यन्ते । शिरो॒ वै य॒ज्ञस्य॑ ह॒वि॒र्धानं॒ तद्य॑ऽइ॒मे शी॒र्षँश्च॒त्वारः॑ कू॒पा॑ऽइमा॒वह॑ द्वावि॒मौ द्वौ ता॒नेवै॒तत्क॑रोति॒ तस्मा॑दुपर॒वा-न्ख॑नति ॥ १ ॥

दे॒वाश्च॒ वा॑ऽअसु॒राश्च॑ । ( श्रो ) उ॒भये॑ प्राजाप॒त्याः पस्पृ॑धिरे॒ ततो॑ऽसु॒-रा॑ऽए॒षु लो॒केषु॑ कृ॒त्यां व॑ल॒गान्नि॒च॑ख्नुरु॒तैव॒श्चि॒द्दे॒वान॑भिभ॒वे॑मे॒ति ॥ २ ॥

तद्वै॑ दे॒वा॑ऽअस्पृण्वत॒ । त॑ऽए॒तैः कृ॒त्यां व॑ल॒गानु॒द॑ख॒नन्य॒दा॒ वै कृ॒त्यामु॒त्ख॒-न॑न्त्य॒थ सा॑ऽल॒सा मो॒घा भ॑वति॒ त॒थो॑ऽए॒वै॒षु ऽए॒तद्य॒स्मा॑ऽअ॒त्र कश्चि॒द्-

---

**उपरवविधिः ।**

द्वयं वाऽअभ्युपरवाः खायन्ते । शिरो वै यज्ञस्य हविर्धानम् । तद् यऽइमे शीर्षँश्चत्वारः कूपाः इमावह द्वौ, इमौ द्वौ । तानेवैतत् करोति । तस्मादुपरवान् खनति ॥ १ ॥

देवाश्च वाऽअसुराश्च उभये प्राजापत्याः पस्पृधिरे । ततोऽसुरा एषु लोकेषु कृत्यां वलगान् निचख्नुः, उतैवश्चिद्देवानभिभवेमेति ॥ २ ॥

तद्वै देवाऽअस्पृण्वत, तऽएतैः कृत्यां वलगानुदखनन् । यदा वै कृत्यामुत्खनन्ति—अथ साऽलसा

---

ग्रन्थिकरणप्रयोजनमाह—नेद् व्यवपद्याता इतीति । अवाग् विविधं नैव पतेदित्येवमर्थमित्यर्थः । तं ग्रन्थि ' कर्मन् ' कर्मणि ' प्रकृते ' प्रकर्षेण कृते परिसमाप्ते ' विष्यति ' विमुञ्चेत्[1] । तत ऊर्ध्वमपि बन्धने सति तदपराधेन ' अध्वर्युं ' ' यजमानं ' च ' ग्राहः ' गृह्णाति विश्लेषे सति स न भवतीत्यर्थः । **निष्ठितमभिमृशति वैष्णवमसीतीति** ( का. श्रौ. सू. ८ । १०७ ) । ' निष्ठितं ' सीवनेन सुनिष्पन्नम् । स्पष्टमन्यत् ॥ २९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥ ( ३–५–३ ) ॥

सोमाभिषवायोपरवाणां खननं विवक्षुः खननस्योभयार्थतामाह—**द्वयं वा इति** । प्रयोजनद्वयमभिलक्ष्य खायन्त इत्यर्थः । प्रथमं प्रयोजनमाह—**शिरो वै यज्ञस्येति** । यस्मात् शिरसि ' चत्वारः कूपाः ' कर्णच्छिद्रे द्वे, नासिकाछिद्रे द्वे इति ' चत्वारः ' ' कूपाः ' कूपवन्निम्नप्रदेशाः । ' इमौ '—इति अभिनयोक्तिः । हविर्धानस्यापि यज्ञशिरोरूपत्वात् तत्र चतुरः ' उपरवान् ' खनेत्[2] ॥ १ ॥

द्वितीयं प्रयोजनमाह—**देवाश्च वा असुराश्चेति** । द्वेष्यवधार्थं भूमौ स्थापिताः कृत्याविशेषाः ' वलगाः ' तान् निखातवन्तः ' उत ' ' एवश्चित् ' एवमपि युद्धेनाशक्नुवन्तः । अनेनाप्युपायेन ' देवान् अभिभवेम ' ' इति ' तेषामभिप्रायः ॥ २ ॥

**तद्वै देवा अस्पृण्वतेति** । ' तत् ' असुरैः कृतं खननाख्यम् 'अस्पृण्वत' देवाः तदुत्खननेन हिंसितवन्तः ।

---

१—उपक्रान्ते प्रमुंचति । का. श्रौ. सू. ८ । १०५ ॥ निष्ठाप्य वैष्णवमसीत्यालभते । १०७ । २—दक्षिणस्यानसोऽधः प्रउगं खनत्युपरवान् । का. श्रौ. सू. ८ । १११ । प्रउगं—ईषाद्वयसंयोजनप्रदेशः ।

द्विषन्भ्रातृव्यः कृत्यां वलगान्निखनति तानेवैतदुत्किरति तस्मादुपरवान्खनति स दक्षिणस्य हविर्धानस्याऽधोऽधः प्रउगं खनति ॥ ३ ॥

सोऽभ्रिमादत्ते । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्य्यसीति समानऽएतस्य यजुषो बन्धुर्योषा वा ऽएषा यदभ्रिस्तस्मादाह नार्य्यसीति ॥ ४ ॥

तान्प्रादेशमात्रं विना परिलिखति । (ती) इदमहꣳ रक्षसां ग्रीवाऽअपिकृन्तामीति वज्रो वा अभ्रिर्वज्रेणैवैतन्नाष्ट्राणाꣳरक्षसां ग्रीवाऽअपिकृन्तति ॥ ५ ॥

---

मोघा भवति । तथोऽएवैष एतद् । यद्यस्माऽअत्र कश्चिद् द्विषन् भ्रातृव्यः कृत्यां वलगान् निखनति, तानेवैतदुत्किरति । तस्मादुपरवान् खनति । स दक्षिणस्य हविर्धानस्याधोऽधः प्रउगं खनति ॥ ३॥

सोऽभ्रिमादत्ते–"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां, पूष्णो हस्ताभ्यामाददे नार्यसि"–( वा. सं. ५। २२ ) इति । समान एतस्य यजुषो बन्धुः । योषो वा एषा–यदभ्रिः । तस्मादाह–नार्यसीति ॥ ४ ॥

तान् प्रादेशमात्रं विना परिलिखति–"इदमहं रक्षसां ग्रीवा अपि कृन्तामि"–( वा. सं. ५ । २२ ) इति वज्रो वा ऽअभ्रिः । वज्रेणैवैतन्नाष्ट्राणां रक्षसां ग्रीवा ऽअपि कृन्तति ॥ ५ ॥

---

हिंसाप्रकारमाह–त एतैरिति । 'एतैः' उपरवैः । 'अथ' कृत्योत्खनननानन्तरमेव 'सा' कृत्या 'अलसा' स्वव्यापारं हननं कर्तुमसंहमाना, अत एव 'मोघा' व्यर्था भवति । यथा देवेषु, एवं मनुष्येषु अयं कृत्यापरिहारोपाय इत्याह–तथो एवैष एतदिति । खननप्रदेशमाह–स दक्षिणस्य हविर्धानस्येति । ईषाद्वयसंयोजनप्रदेशः 'प्रउगम्,' तस्य 'अधोऽधः' सन्निहिताधःप्रदेशे । 'अधोऽधः' शब्दयोगात् प्रउगमिति द्वितीया ( पा. सू. २ । ३ । २ ॥ १ । ४ । ४८ । वा. ३ ) ॥ ३ ॥

खननायाभ्र्यादानं समन्त्रकं विधत्ते–सोऽभ्रिमादत्त इति[1] । "देवस्य त्वा". इति । "नार्यसि"–इति मन्त्रान्तरम् । नरस्यापत्यं स्त्री 'नारी' । हे अभ्रे ! त्वं नारी असि । इत्यपि स्तुतिः । यत् प्राक् "देवस्य त्वा"–इत्यस्य ब्राह्मणमुक्तं, ( श. ब्रा. १ । १ । २ । २७ ) तदत्रातिदिशति–समान एतस्य बन्धुरिति । 'एतस्य' 'यजुषः' देवस्य त्वेत्यस्य यजुर्मन्त्रस्येत्यर्थः । आदीयमानाया अभ्र्याः स्त्रीत्वान्मन्त्रे नारीशब्देनाभ्रिरभिहितेत्याह–योषा उ वा एषेत्यादि ॥ ४ ॥

तान् प्रादेशमात्रं विनेति[3] । मध्ये–मध्ये प्रादेशमात्रान्तरालं विहाय समचतुरस्रे खननप्रदेशे चतुरोऽवटान् प्रादेशमात्रान् परिलिखेदित्यर्थः । इदमहमिति लेखनमन्त्रः ॥ ५ ॥

---

१–अभ्र्यादि करोत्यवटवदापरिलेखनात् । का. श्रौ. सू. ८ । ११२ । २–देवस्य त्वेत्यभ्रिमादाय । का. श्रौ. सू. ६ । ४१ ।
३–प्रादेशमात्रांस्तदंतरान् । का. श्रौ, सू, ८ । ११८ ।

तद्यावेतौ पूर्वौ । तयोर्दक्षिणमेवाग्रे परिलिखेदथापरयोरुत्तरमथापरयोर्दक्षिणमथ पूर्वयोरुत्तरम् ॥ ६ ॥

( मु ) अथोऽइतरथाऽऽहुः । (र) अपरयोरेवाग्रऽउत्तरं परिलिखेदथ पूर्वयोर्दक्षिणमथापरयोर्दक्षिणमथ पूर्वयोरुत्तरमित्यथोऽअपि समीच एव परिलिखेदेतं त्वेवोत्तमं परिलिखेद्य ऽएष पूर्वयोरुत्तरो भवति ॥ ७ ॥

तान्यथापरिलिखितमेव यथापूर्वं खनति । बृहन्नसि बृहद्रवा ऽइत्युपस्तौत्येवैनानेतन्महयत्येव यदाह बृहन्नसि बृहद्रवाऽ इति बृहतीमिन्द्राय व्वाचं व्वदेतीन्द्रो वै यज्ञस्य देवता व्वैष्णवꣳ हविर्धानं तत्सैन्द्रं करोति तस्मादाह बृहतीमिन्द्राय व्वाचं व्वदेति ॥ ८ ॥

---

तद् यावेतौ पूर्वौ तयोर्दक्षिणमेवाग्रे परिलिखेत् । अथापरयोरुत्तरम् । अथापरयोर्दक्षिणम् । अथ पूर्वयोरुत्तरम् ॥ ६ ॥

अथोऽइतरथाऽऽहुः—अपरयोरेवाग्रऽउत्तरं परिलिखेत् । अथ पूर्वयोर्दक्षिणम् । अथापरयोर्दक्षिणम् । अथ पूर्वयोरुत्तरमिति । अथोऽअपि समीच एव परिलिखेत् । एतं त्वेवोत्तमं परिलिखेत् । य एष पूर्वयोरुत्तरो भवति ॥ ७ ॥

तान् यथापरिलिखितमेव यथापूर्वं खनति । " बृहन्नसि बृहद्रवाः "–( वा. सं. ५।२२ ) इति । उपस्तौत्येवैनानेतत् महयत्येव यदाह–बृहन्नसि बृहद्रवा इति । " बृहतीमिन्द्राय वाचं वद "–( वा. सं. ५।२२ ) इति । इन्द्रो वै यज्ञस्य देवता वैष्णवं हविर्धानम् । तत् सेन्द्रं करोति । तस्मादाह–बृहतीमिन्द्राय वाचं वदेति ॥ ८ ॥

---

अवटखनने द्वौ प्रकारौ, अक्ष्णया सम्यक् चेति । अक्ष्णयाऽपि द्विविधोपपद्यते तत्रैकं प्रकारमाह–तद्यावेतौ पूर्वौ तयोर्दक्षिणमेवाग्र इत्येवमादिना । आग्नेयवायव्यनैर्ऋतैशानक्रमेणेत्येकः प्रकारः ॥ ६ ॥

द्वितीयं प्रकारमाह–'अथो इतरथाऽऽहुः' 'अपरयोरेवाग्रउत्तर' मित्यादिना वायव्याग्नेयनैर्ऋतेशानक्रमेणेत्यर्थः । स्वकीयं सम्यक्परिलेखनपक्षमाह–अथो इतरथाऽऽहुरिति । अथो अपि समीच । एवेति आग्नेयादिप्रादक्षिण्यक्रमेणेत्यर्थः[1] ॥ ७ ॥

य एष पूर्वयोरुत्तरः, तमुत्तरं कुर्यादित्यभिधानात् खननमपि परिलेखनक्रमेण कर्तव्यमित्याह–तान् यथा परिलिखितमेवेति[2] । तत्र मन्त्रः–बृहन्नसीति । हे अवट ! त्वं ' बृहन् ' स्वरूपतो महान् ' असि ' । तथा ' बृहद्रवाः ' प्रभूतध्वनिरसि । अतो ' बृहतीं ' महतीं ' वाचम् ' ' इन्द्राय ' इन्द्रार्थम्, सोमस्येन्द्रार्थत्वात् तदर्थत्वादुपरवखननस्य स्तुतिकरीं वाचं ' वद ' शब्दय ॥

पुनर्वाग्विशेष्यते–' रक्षोहणम् ' । हन्तेः " बहुलं छन्दसि " ( पा. सू. ३।२।८८ ) इति क्विप् । रक्षांसि हन्ति तादृशीम् । ' व्वलगहनम् ' वलगान् हन्तीति वलगहा, तां व्वलगहनम् । ' वैष्णवीम् ' विष्णुदेवत्यां वाचम् । वदेति सम्बन्धः ॥

---

१–अक्ष्णया व्याघारणवत् । उत्तरापरं वा प्रथमम् । सम्यग्वा । उत्तरपूर्वं त्वंत्यम् । का. श्रौ. सू. ८।११४–११७ ।
२–बृहन्नसीति यथापरिलिखितं खनति । का. श्रौ. सू. ८–११९ ।

रक्षोहणं व्वलगहनमिति । रक्षसाᳬं ह्येते व्वलगानां व्वधाय खायन्ते व्वैष्णवीमिति व्वैष्णवी हि हविर्द्धाने व्वाक् ॥ ९ ॥

( क्रा ) तान्यथाखातमेवोत्किरति । ( ती ) इदमहं तं व्वलगमुत्किरामि यम्मे निष्टयो यममात्यो निचखानेति निष्टयो वा वाऽअमात्यो वा कृत्यां व्वलगान्निखनाति तानेवैतदुत्किरति ॥ १० ॥

(ती) इदमहं तं व्वलगमुत्किरामि । यम्मे समानो यमसमानो निचखानेति समानो वा वाऽअसमानो वा कृत्यां व्वलगान्निखनाति तानेवैतदुत्किरति ११

( ती ) इदमहं तं व्वलगमुत्किरामि । यम्मे सबन्धुर्यमसबन्धुर्निचखानेति सबन्धुर्व्वा वाऽअसबन्धुर्व्वा कृत्यां व्वलगान्निखनाति तानेवैतदुत्किरति ॥ १२ ॥

---

" रक्षोहणं वलगहनम् "–(वा. सं. ९ । २३) इति । रक्षसां ह्येते वलगानां वधाय खायन्ते । " वैष्णवीम् "–( वा. सं. ९ । २३ ) इति । वैष्णवी हि हविर्द्धाने वाक् ॥ ९ ॥

तान् यथाखातमेवोत्किरति । " इदमहं तं वलगमुत्किरामि यम्मे निष्टयो यममात्यो निचखान "–( वा. सं. ९ । २३ ) इति । निष्टयो वा वा ऽअमात्यो वा कृत्यां वलगान् निखनति तानेवैतदुत्किरति ॥ १० ॥

" इदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखान "–( वा. सं. ९ । २३ ) इति । समानो वा वा ऽअसमानो वा कृत्यां वलगान् निखनाति तानेवैतदुत्किराति ॥ ११ ॥

" इदमहं तं वलगमुत्किरामि, यं मे सबन्धुर्यमसबन्धुर्निचखान "–( वा. सं. ९।२३ ) इति । सबन्धुर्वा वा ऽअसबन्धुर्वा कृत्यां वलगान् निखनति । तानेवैतदुत्किरति ॥ १२ ॥

---

मन्त्रं चतुर्द्धा विभज्य व्याचष्टे–बृहन्नसि बृहद्रवा इत्युपस्तौत्यैवैनानित्यादिना । प्रत्यक्षतो बृहत्त्वबृहद्रवत्वयोः प्रतीतिरुपस्तुत्यमिधानमित्यर्थः । सा च किमथत्यत आह–महयत्येवेति । इन्द्रो वा इत्यादि । " इन्द्राय " इत्यभिधानेनान्यदेवताकस्य हविर्द्धानस्योपरवाधारभूतस्य सेन्द्रत्वं कृतवान् भवतीत्यर्थः । रक्षोहणमित्यादि । स्पष्टम् ॥ ८ ॥ ९ ॥

खाताया मृद उद्वपनेऽपि खननक्रम एवेत्याह–तान् यथाखातमेवेति[१] । चतुर्णां खातानां चत्वारो मन्त्राः । " यं मे निष्टयो यममात्यो निचखान " इति प्रथमगर्ते । " यं मे समानो यमसमानः " इति द्वितीये । " यं मे सबन्धुर्यमसबन्धुः " इति तृतीये । " यं मे सजातो यमसजातः " इति चतुर्थे । " इदमहं तं व्वलगमुत्किरामि "–इति, " निचखान "–इति च सर्वशेषः ॥

' इदं ' मृदुत्किरणप्रकारेणाहतम्, निष्टयेनामात्येन वा खातम्, वलगकृत्याविशेषम्, मृद्व्याजेन ' उत्किरामि ' ऊर्ध्वं प्रक्षिपामि । ' तम् '-इत्युक्तम्, कमित्याह–यमित्यादि । ' निष्टयः ' असमत्तो नीचः । " सनाभिर्यश्च

---

१–इदमहमित्युत्किरति यथाखातं प्रतिमंत्रम् । का. श्रौ. सू. ८–१२० ।

( ती ) इदमहं तं वलगमुत्किरामि । यम्मे सजातो यमसजातो निचखानेति सजातो वा वाऽअसजातो वा कृत्यां वलगान्निखनाति तानेवैतदुत्किरत्युत्कृत्यां किरामीत्यन्ततऽउद्वपति तत्कृत्यामुत्किरति ॥ १३ ॥

तान्बाहुमात्रान्खनेत् । ( ड ) अन्तो वाऽएषोऽन्तेनैवैतत्कृत्यां मोहयति तानक्ष्णया सन्तृन्दन्ति यद्यक्ष्णया न शक्नुयादपि समीचस्तस्मादिमे प्राणाः परः सन्तृण्णाः ॥ १४ ॥

(स्ता)तान्यथाखातमेवावमर्शयति। स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्यमित्रहेत्याशीरेवैषैतस्य कर्मणऽआशिषमेवैतदाशास्ते ॥ १५ ॥

---

" इदमहं तं वलगमुत्किरामि, यं मे सजातो यमसजातो निचखान "–( वा. सं. ५ । २३ ) इति । सजातो वा वाऽअसजातो वा कृत्यां वलगान् निखनाति । तानेवैतदुत्किरति । " उत्कृत्यां किरामि "–( वा. सं. ५ । २३ ) इति । अन्तत उद्वपति । तत् कृत्यामुत्किरति ॥ १३

तान् बाहुमात्रान् खनेत् । अन्तो वा ऽएषः, अन्तेनैवैतत् कृत्यां मोहयति । तानक्ष्णया सन्तृन्दन्ति । यद्यक्ष्णया न शक्नुयात्–अपि समीचः । तस्मादिमे प्राणाः परः सन्तृण्णाः ॥ १४ ॥

तान् यथाखातमेवावमर्शयति । " स्वराडसि सपत्नहा, सत्रराडस्यभिमातिहा, जन-

---

निष्ट्यः ( ऋ. सं. १० । १३३ । ५ ) " –इत्यादिमन्त्रवर्णान्नीचार्थता ' निष्ट्य '–शब्दस्य । ' अमात्यः ' सह वर्तमानः । ' अमा '–शब्दः सहवचनो गृहवचनो वा तत्र भवोऽमात्यः । " अव्ययात्त्यप् " ( पा. सू. ४ । २ । १०४ ) एकगृहवासीत्यर्थः । तयोरेव कलहस्य सम्भावितत्वात् । सहोत्पन्नो वा । निखातवान् । तमुत्किरामीति सम्बन्धः । निष्ट्यो वेत्यादि प्रथमस्योत्किरणम् । निष्ट्यामात्ययोर्वलगोत्किरणरूपमित्यर्थः । समानः सदृशः बन्धुः ' सबन्धुः, ' समानबन्धनः । एकस्मिन्नेव विषये व्यापारवानित्यर्थः । ' सजातः ' सहोत्पन्नः । स्पष्टमन्यत् ॥ १०–१३ ॥

खननस्य प्रमाणमाह–तान् बाहुमात्रानिति[1] । अंगुलिप्रादेशाद्यपेक्षया बाहुप्रमाणस्य अन्तत्वात् ततोऽधिकात्प्रदेशात् मृदुद्धरणस्याशक्यत्वाद्बाहुमात्रस्यान्तत्वम् । छिद्राणामन्तरप्रदेशसन्तर्दनं तत्प्रकारं च विधत्ते–तानक्ष्णया सन्तृन्दन्तीति[2] । पूर्वयोर्दक्षिणस्यापरयोरुत्तरस्य चान्तरालदेशम् । अनेनावशिष्टयोरप्युक्तं भवति । अपि समीच इति ( का. श्रौ. सू. ८ । १२३ ) । वक्रस्याशक्यत्वे समीचेवाभितृन्द्यात् । तस्मादिति । अर्थवादः पक्षद्वयसाधारणः । यस्मादेतेऽन्तः सन्तृण्णाः ' तस्मात् ' ' इमे ' ' प्राणाः ' मुखच्छिद्राणि अन्तः सन्तृण्णानि ॥ १४ ॥

तान् यथाखातमेवावमर्शयतीति । ' अवमर्शयति ' अन्तःप्रदेशस्य निम्नोन्नतत्वपरिहाराय सम्मृशेत् ।

---

१–बाहुमात्रान् । का. श्रौ. सू. ८ । १२२ । २–अक्ष्णया संभिंद्यादशक्तौ सम्यक् । का० श्रौ० सू० ८– । १२३ ।

( स्तुऽथा ) अथाध्वर्युश्च यजमानश्च सम्मृशेते । पूर्वयोर्दक्षिणेऽध्वर्यु-र्भवत्युपरयोरुत्तरे यजमानः सोऽध्वर्युः पृच्छति यजमान किमत्रेति भद्र-मित्याह तन्नौ सहेत्युपाᳬंश्वध्वर्युः ॥ १६ ॥

( र ) अथापरयोर्दक्षिणेऽध्वर्युर्भवति । पूर्वयोरुत्तरे यजमानः स यजमानः पृच्छत्यध्वर्यो किमत्रेति भद्रमित्याह तन्म इति यजमानस्तद्यदेवᳬं सम्मृ-शेते प्राणानेवैतत्सयुजः कुरुतस्तस्मादिमे प्राणाः परः संविद्रेऽथ यत्पृष्टो भद्रमिति प्रत्याह कल्याणमेवैतन्मानुष्यै वाचो वदति तस्मात्पृष्टो भद्रमिति प्रत्याहाथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यानेवैतत्करोति १७॥

---

राडसि रक्षोहा, सर्वराडस्यमित्रहा "–( वा. सं. ५ । २४ ) इति । आशीरेवैषैतस्य कर्मणः– आशिषमेवैतदाशास्ते ॥ १५ ॥

अथाध्वर्युश्च यजमानश्च सम्मृशेते । पूर्वयोर्दक्षिणेऽध्वर्युर्भवति । अपरयोरुत्तरे यजमानः । सोऽध्वर्युः पृच्छति–यजमान ! किमत्रेति ? भद्रमित्याह । तन्नौ सह–इत्युपांश्वध्वर्युः ॥ १६ ॥

अथापरयोर्दक्षिणेऽध्वर्युर्भवति । पूर्वयोरुत्तरे यजमानः । स यजमानः पृच्छति–अध्वर्यो ! किमत्रेति ? भद्रमित्याह । तत् मऽइति यजमानः । तद् यदेवं सम्मृशेते प्राणानेवैतत् सयुजः कुरुतः । तस्मादिमे प्राणाः परः संविद्रे । अथ यत् पृष्टो भद्रमिति प्रत्याह–कल्याणमेवैतन्मानुष्यै वाचो वदति । तस्मात् पृष्टो भद्रमिति प्रत्याह । अथ प्रोक्षति । एको वै प्रोक्षणस्य बन्धुः,–मेध्याने-वैतत्करोति ॥ १७ ॥

---

तन्मन्त्रचतुष्टयस्यार्थः–स्वयमेव राजत इति वा स्वकीयमेव राज्यमस्येति वा 'स्वराट्' । हे उपरव ! तादृक् त्वम् 'असि' । 'सपत्नहा' भव । अस्मानपि स[...]नस्य शत्रोर्हननेन स्वराजं कुर्विति भावः । 'सत्रा' सह, एकधा एकोद्योगेन राजत इति 'सत्रराट्' । अ[...]ति हिंसकोऽभिमातिः तस्य हन्ता 'अभिमातिहा' । सर्वेषु राजत इति 'सर्वराट्' मितः सकाशात् त्राता 'मित्रः' अतथाभूतः 'अमित्रः' । अत्र कात्यायनः– "स्वराडित्यवमर्शयति यथाखातं प्रतिमन्त्रम्" (का० श्रौ० सू० ८ । १२४ ) इति ॥ १५ ॥

'अध्वर्युश्च यजमानश्च सम्मृशेते–' परस्परं हस्तसंस्पर्शं कुर्यातामित्यर्थः । तयोर्दिशं व्यवस्थापयति–पूर्वयोर्दक्षिणेऽध्वर्युर्भवति, अपरयोरुत्तरे यजमानः–इति । सोऽध्वर्युणा किमत्र विद्यत इति पृष्टो यजमानो भद्रमिति प्रतिब्रूयात् । "तन्नौ सह–" 'इति' 'उपांशु' वदतोऽध्वर्योरयमभिप्रायः–यज्ञसंसृष्टं यद्यत्र फलम्, तस्य सर्वस्य यजमानस्वामिकत्वादुच्चैरभिधानमयुक्तमिति ॥ १६ ॥

अथापरयोर्दक्षिणेऽध्वर्युरिति । पूर्वस्मिन् सम्मर्शनवाक्येऽध्वर्युः पृच्छेत्, अत्र तु यजमान इति विशेषः ।

---

१–अध्वर्युयजमानौ सम्मृशेते पूर्वदक्षिणेऽध्वर्युरपरोत्तरे यजमानः । का० श्रौ० सू० ८ । १२५ । २–अध्वर्युः पृच्छति यजमान किमत्रेति । भद्रमित्याह । तन्नौ सहेत्यध्वर्युरुपांशु । का० श्रौ० सू० १२६ । १२७ । १२८ । ३–पुनर्दक्षिणापरेऽध्वर्युः पूर्वोत्तरे यजमानो यजमानः पृच्छत्यध्वर्यो किमत्रेति भद्रमिति प्रोक्ते तन्म इति यजमानः का० श्रौ० सू० ८–१२९ ।

स प्रोक्षति । रक्षोहणो वो वलगहन ऽइति रक्षोहणो ह्येते वलगहनो ह्येते प्रोक्षामि वैष्णवानिति वैष्णवा ह्येते ॥ १८ ॥

( तेऽथ ) अथ याः प्रोक्षण्यः परिशिष्यन्ते । ताऽअवटेष्ववनयति तद्या ऽइमाः प्राणेष्वापस्ताऽएवैतद्दधाति तस्मादेषु प्राणेष्विमाऽआपः ॥ १९ ॥

सोऽवनयति । रक्षोहणो वो वलगहनोऽवनयामि वैष्णवानित्यथ बर्हीꣳषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति तद्यानीमानि प्राणेषु लोमानि तान्येवैतद्दधाति तस्मादेषु प्राणेष्विमानि लोमानि ॥२०॥

---

स प्रोक्षति । "रक्षोहणो वो वलगहनः"–( वा. सं. ५। २५ ) इति । रक्षोहणो ह्येते, वलगहनो ह्येते । " प्रोक्षामि वैष्णवान् "–( वा. सं. ५ । २५ ) इति । वैष्णवा ह्येते ॥ १८ ॥

अथ याः प्रोक्षण्यः परिशिष्यन्ते–ता अवटेष्ववनयति । तद् या इमाः प्राणेष्वापः–ता एवैतद्दधाति । तस्मादेषु प्राणेष्विमाऽआपः ॥ १९ ॥

सोऽवनयति । "रक्षोहणो वो वलगहनोऽवनयामि वैष्णवानिति"–( वा. सं. ५ । २५ ) इति । अथ बर्हींषि प्राचीनाग्राणि च उदीचीनाग्राणि चावस्तृणाति । तद् यानीमानि प्राणेषु लोमानि–तान्येवैतद्दधाति । तस्मादेषु प्राणेष्विमानि लोमानि ॥ २० ॥

---

यजमानस्य स्वामित्वेन स्वातन्त्र्यादध्वर्युदृष्टस्यापि भद्रस्य स्वद्रव्यत्वात् " तन्मे " ' इति ' ब्रूयात् । सम्मर्शनं प्राणसंयोगहेतुत्वेन प्रशंसति–तद्यदेवमिति । सह युञ्जते इति ' सयुजः ' अन्तरेकीभूतान् कृतवन्तौ भवतः । अत इदानीन्तना मनुष्यशिरस्थाः प्राणाः ' संविद्रे ' संविद्रते सङ्गता भवन्ति । " लोपस्त आत्मनेपदेषु "–( पा. सू. ७ । १ । ४१ ) इति ' त '–लोपः । " वेत्तेर्विभाषा "–( पा. सू. ७ । १ । ७ ) इति रुट् । ' भद्रम् '–' इति ' प्रतिवदनं यदस्ति, तद् ' एतन्मानुष्यै वाचः कल्याणं वदति ' हस्तसंस्पर्शनकालकृतभद्रवचनप्रतिवदनमित्यर्थः । तस्माल्लौकिकवचनेषु भद्रत्वाय अवश्यं भद्रवचनं कर्तव्यम् ॥

अथ प्रोक्षतीति । प्रतिगर्तं प्रोक्षणम् । प्रोक्षणस्य मेध्यत्वलक्षणोऽर्थवादः सर्वत्रैकविध एवेत्याह–एको वै प्रोक्षणस्य बन्धुरिति ॥ १७ ॥

समन्त्रकं प्रोक्षणं विधत्ते–स प्रोक्षतीति । ' रक्षोहणः–' इति बहुवचननिर्देशात्सहप्रोक्षणम् । पृथक्प्रोक्षणपक्षे मन्त्रावृत्तिः । तथा च कात्यायनः–" प्रोक्षत्येनान् रक्षोहण इति, भेदे च मन्त्रावृत्तिः सन्निपातित्वात्–" ( का. श्रौ. सू. ८ । १३०–१३१ ) इति । मन्त्राणां क्रियासहावर्तनत्वेन व्यभिचारादित्यर्थः । सहत्वपक्षे बहुवचनमौपचारिकम् । स्पष्टो मन्त्रार्थः ॥ १८ ॥

अथ याः प्रोक्षण्य इति । अवटेषु प्रोक्षणीशेषावनयनं प्रशंसति–तद्या इमाः प्राणेष्वाप इति । 'प्राणेषु' कर्णनासादिविवरेषु ' याः ' ' आपः ' सन्ति ' ता एव ' ' एतत् ' एतेनावनयनेन यज्ञशिरस्योपरवाख्यप्राणेषु स्थापितवान् भवति । तस्मादित्यादि । ' एषु प्राणेषु ' मनुष्यप्राणेषु ॥ १९ ॥

सोऽवनयतीति । स्पष्टोऽवनयनमन्त्रः । अवटेषु अन्तर्बर्हिःस्तरणविधितदर्थवादतन्मन्त्राः पूर्ववद् व्याख्येयाः ।

सोऽवस्तृणाति । रक्षोहणो वो व्वलगहनोऽवस्तृणामि व्वैष्णवानित्यथ बर्हीꣳषि तनूनीवोपरिष्टात्प्रच्छादयति केशा हैवास्यैते ॥ २१ ॥

( तेऽथा ) अथाधिषवणे फलकेऽउपदधाति । रक्षोहणौ वां व्वलगहना ऽउपदधामि व्वैष्णवीऽइति हनू हैवास्यैते ऽअथ पर्य्यूहति रक्षोहणौ वां व्वलगहनौ पर्य्यूहामि व्वैष्णवीऽइति दृꣳहत्येवैने ऽएतदशिथिले करोति ॥ २२ ॥

( त्यु ) अथाधिषवणं परिकृत्तं भवति । सर्व्वरोहितं जिह्वा हैवास्यैषा तद्यत्सर्व्वरोहितं भवति लोहिनीव हीयं जिह्वा तन्निदधाति व्वैष्णवमसीति व्वैष्णवꣳ ह्येतत् ॥ २३ ॥

---

सोऽवस्तृणाति । "रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान्"–(वा. सं. ५।२५) इति । अथ बर्हीषि तनूनीवोपरिष्टात् प्रच्छादयति । केशा हैवास्यैते ॥ २१ ॥

अथाधिषवणे फलकेऽउपदधाति । "रक्षोहणौ वां वलगहनाऽउपदधामि वैष्णवी"–(वा. सं. ५। २५) इति । हनू हैवास्यैते । अथ पर्यूहति–"रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी"–( वा. सं. ५।२५ ) इति । दृंहत्येवैने एतद् । अशिथिले करोति ॥ २२ ॥

अथाधिषवणं परिकृत्तं भवति । सर्वरोहितम् । जिह्वा हैवास्यैषा । तद् यत् सर्वरोहितं भवति–लोहिनीव हीयं जिह्वा । तन्निदधाति । "वैष्णवमसि"–( वा. सं.५।२५) इति । वैष्णवं ह्येतत् ॥२३॥

---

अवनयनावस्तरणयोर्न्यायः प्रोक्षणवत् । "अवनयनावस्तरणे चावटवत्–"( का. श्रौ. सू. ८ । १३२ ) इति हि सूत्रम् । यूपावटवदवनयावस्तरणे कार्ये इत्यर्थः । अवटानामुपर्यपि सूक्ष्माणां बर्हिषामाच्छादनं विधत्ते–अथ बर्हींषि तनूनीति । केशा हैवास्यैत इति । निर्दिश्यमानानि यद्यपि बर्हींषि, तथापि प्रतिनिर्दिश्यमानकेशापेक्षया 'एते'–इति पुँल्लिङ्गता ॥ २० ॥ २१ ॥

अथाधिषवणे फलके इति । 'अधि' उपरि सूयते सोमोऽनयोरिति 'अधिषवणे' द्वे 'फलके' उपदध्यात् । 'रक्षोहणौ वां व्वलगहनौ'–इत्युपधानमन्त्रः । स च स्पष्टार्थः । 'ते' च 'अस्य' हविर्द्धानस्य शिरसः हनुस्थानीये । अत्र कात्यायनः–"अथाधिषवणे फलके द्व्यंगुलान्तरे प्रक्षालिते प्राची अरत्निमात्रे सन्तृण्णे वोपदधाति"–( का. श्रौ. सू. ८ । १३३ ) इति ॥

अथ पर्यूहतीति । फलके परिदृंहति परितो मृदा दृढीकुर्यात् ॥ २२ ॥

अथाधिषवणमिति । सर्वरोहितमित्यादि । एतच्च रक्तवर्णाया जिह्वायाः स्थाने भवति । तच्च "वैष्णवमसि–" इति मन्त्रेण 'निदध्यात्' अधिषवणफलकयोरुपरि स्थापयेत् ॥ २३ ॥

---

१–तनूनुपरि कुशान् कृत्वा । का. श्रौ. सू. ८ । १३३ । २–पर्यूहति च रक्षोहणौ रक्षोहणाविति । का० श्रौ० सू० ८–१३३ । ३–तयोश्चर्माधिषवणं परिकृत्तꣳ सर्व्वरोहितं निदधाति व्वैष्णवमसीति । का० श्रौ० सू० ८ । १३४ ।

( उ ) अथ ग्राव्ण उपावहरति । दन्ता हैवास्य ग्रावाणस्तद्यद्ग्रावभिरभिषुण्वन्ति यथा दद्भिः प्सायादेवं तत्तान्निदधाति वैष्णवा स्थेति वैष्णवा ह्येत ऽएतद्ध यज्ञस्य शिरः सꣳस्कृतम् ॥ २४ ॥

इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥४॥४॥ (५.४.)

---

अथ ग्राव्ण उपावहरति । दन्ता हैवास्य ग्रावाणः । तद् यद् ग्रावभिरभिषुण्वन्ति–यथा दद्भिः प्सायात्–एवं तत् । तान् निदधाति । " वैष्णवा स्थ "–( वा. सं. ५ । २५ ) इति । वैष्णवा ह्येते । एतद्ध यज्ञस्य शिरः संस्कृतम् ॥ २४ ॥

---

अथ ग्राव्ण इत्यादि[1] । अधिषवणचर्मणि अभिषवसाधनान् पाषाणान् पञ्च आहरन्ति । ते 'ग्रावाणः' 'अस्य' 'दन्ताः' दन्तस्थानीयाः । तदेवोपपादयति–तद्यद् ग्रावभिरिति । दद्भिः प्सायात् एवं तदिति । यथा दन्तैर्भक्षयति एवं तत् । " प्सा भक्षणे " ( धा०पा०अ०प०४९ ) इति धातुः । एतद्ध यज्ञस्येति । " पुरुषो वै यज्ञः "–इति प्रतिज्ञाय " शिर एवास्य हविर्द्धानम् "–इति यद्धविर्द्धानस्य शिरस्त्वं निर्दिष्टम्, ( श. प. ब्रा. ३ । ५ । ३ । २ । १, २ ) तदिदं 'यज्ञस्य शिरः संस्कृतं' मध्यमच्छदिरादि–सोमाभिषवग्रावान्तानां यज्ञाङ्गानां शिरोललाटादिदन्तान्तकल्पनया हविर्द्धानस्य शिरस्त्वं साधितमित्यर्थः । केवलं प्रयोगजातमानुपूर्व्येणाभिधाय तत्तदवयवरूपकल्पनयाऽभिधीयते, तेन तत्तदङ्गजातं तत्तदवयवध्यानेनानुष्ठीयमानं सन्महते फलाय भवतीत्युक्तं भवति ( तै. सं. ६ । २ । ११ ) ॥ २४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ३ । ५ । ४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥
ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥२॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ३
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ४

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे पञ्चमोऽध्यायः समाप्तः ॥ ३॥५॥

---

१–तस्मिन् ग्राव्णः पंच वैष्णवाः स्थेति । का० श्रौ० सू० ८ । १३५ ।

# षष्ठाध्याये प्रथमं ब्राह्मणम् ।



उ॒दर॑मे॒वास्य॒ सदः॑ । (स्तु) तस्मा॒त्सद॑सि भक्षयन्ति॒ यद्धी॒दं किञ्चा॒श्नन्त्यु॒दर॑ऽए॒वेद॑ꣳ सर्वं॑ प्रतितिष्ठ॒त्यथ॒ यद॑स्मिन्वि॒श्वे दे॒वाऽअसी॑दं॒स्तस्मा॒त्सदो॒ नाम॒ तऽउऽए॒वास्मि॑न्ने॒ते ब्रा॑ह्म॒णा वि॒श्वगो॑त्राः सीद॒न्त्यैन्द्रं॑ दे॒वत॑या ॥ १ ॥

तन्म॒ध्यऽऔदु॑म्बरीं मिनोति (त्यु) अन्नं॒ वाऽऊर्गु॑दु॒म्बर॑ऽउ॒दर॑मे॒वास्य॒ सद॒स्तन्म॒ध्य॒तोऽन्ना॒द्यं द॑धाति॒ तस्मा॒न्मध्य॒ औदु॑म्बरीं मिनोति ॥ २ ॥

(त्यु) अथ॒ य ए॒ष म॑ध्य॒मः श॒ङ्कुर्भ॑वति । वे॒देर्ज॑घना॒र्द्धे तस्मा॒त्प्राङ्प्र॒क्राम॑ति षड्वि॑क्र॒मान्द॑क्षि॒णा स॑प्त॒मम॑प॒क्राम॑ति॒ सम्प॑दः॒ कामा॑य॒ तद॑व॒टं परि॑लिखति ॥ ३ ॥

## औदुम्बरी ।

उदरमेवास्य सदः । तस्मात् सदसि भक्षयन्ति । यद्धीदं किञ्चाश्नन्ति—उदर एवेदं सर्वं प्रतितिष्ठति । अथ यदस्मिन् विश्वे देवा असीदन्—तस्मात् सदो नाम । तऽ उऽएवास्मिन्नेते ब्राह्मणा-विश्वगोत्राः सीदन्ति—ऐन्द्रं देवतया ॥ १ ॥

तन्मध्य औदुम्बरीं मिनोति । अन्नं वाऽऊर्गुदुम्बरः । उदरमेवास्य सदः । तन्मध्यतोऽन्नाद्यं दधाति । तस्मान्मध्य औदुम्बरीं मिनोति ॥ २ ॥

अथ य एष मध्यमः शंकुर्भवति—वेदेर्जघनार्द्धे । तस्मात् प्राङ् प्रक्रामति—षड्विक्रमान्—दक्षिणा सप्तममपक्रामति—सम्पदः कामाय । तदवटं परिलिखति ॥ ३ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्म्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

यज्ञशिरस्त्वं हविर्द्धानस्योक्त्वा तत् समर्थ्य, इदानीं सदसो यज्ञोदरत्वं प्रतिपादयितुं पूर्वोक्तमनुवदति—**उदरमेवास्य सदस्तस्मात् सदसि भक्षयन्ती**त्यादिना । **ऐन्द्रं देवतये**ति । यथा हविर्द्धानं विष्णुदेवत्यम् । एवं सद इन्द्रदेवत्यमित्यर्थः । तृतीयाविधाने "प्रकृत्यादिभ्य उपसङ्ख्यानम्" (पा. सू. २ । ३ । १ । वा. १।) इति तृतीया ॥ १ ॥

**तन्मध्य औदुम्बरीमि**त्यादि । 'तन्मध्ये' तस्य सदसो मध्यदेशे 'औदुम्बरीं' स्थूणां 'मिनुयात्' । औदुम्बर्या मध्यदेशस्थापनयोग्यतां दर्शयति—**अन्नं वा ऊर्गि**त्यादिना । ऊर्ग्वा उदुम्बरः "देवा वा ऊर्जं व्यभजन्त, तत उदुम्बर उदतिष्ठत् ऊर्ग्वा उदुम्बरः"—(तै. ब्रा. १ । १ । २ । १०) इति श्रुतेः ऊर्ग्रूपत्वमुदुम्बरस्य । मध्ये हुतशेषस्य भक्षणात् सदस उदरत्वम्, अतः सदोमध्ये औदुम्बरीमानेन उदरमध्येऽन्नं स्थापितम् ॥ २ ॥

तदपि मध्यदेशं विशिनष्टि—**अथ य एष मध्यमः शंकु**रित्यादिना । सौमिकवेद्या जघनार्द्धस्य मध्यदेशे यः शंकुर्विहितः- ततः प्राक् षट्प्रक्रमान् विक्रम्य, सप्तमं दक्षिणाभिमुखं विक्रम्य, तत्र अवटं परिलिखेत् ॥ ३ ॥

---

१—अंतःपात्यात्षट्प्रक्रमान् प्राङ् यात्वा दक्षिणा सप्तमं महांतं तत्रौदुंबरीं मिनोति यजमानमात्रीं वा । का. श्रौ. सू. ८—१३७ ।

सो॑ऽग्निमा॑दत्ते । दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वे॑ऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्या॒मा द॑दे॒ नार्य॑सी॒ति स॑मा॒न ऽए॒तस्य॑ य॒जुषो॑ ब॒न्धुर्यो॒षो॑ वा ए॒षा यद॑ग्नि॒स्तस्मा॑दाह॒ नार्य॑सी॒ति ॥ ४ ॥

( त्यु ) अ॒थाव॒टं परि॑लिखति । (ती) इ॒दम॒हꣳ र॒क्षसां॑ ग्री॒वाऽअपि॑कृन्ता॒मी॑ति॒ वज्रो॑ वा अ॒ग्निर्वज्रे॑णै॒वैत॒न्नाष्ट्रा॑णाꣳ र॒क्षसां॑ ग्री॒वाऽअपि॑कृन्तति ॥ ५ ॥

( त्यु ) अ॒थ ख॑नति । प्रा॒ञ्चमु॑त्क॒रमु॒त्कि॑रति॒ यज॑मानेन॒ सम्मा॑यौदु॒म्बरीं॑ परि॒वास॑यति॒ ताम॒ग्रेण॒ प्राचीं॒ निद॑धात्ये॒ताव॑न्मात्राणि ब॒र्हीꣳष्युप॒रिष्टा॑दधि॒निद॑धाति ॥ ६ ॥

( त्यु ) अ॒थ य॒वम॑त्यः॒ प्रोक्ष॑ण्यो भवन्ति । ( न्त्या ) आ॒पो॑ ह॒ वा ओष॑धी॒नाꣳ र॒सस्तस्मा॑दो॒षध॑यः॒ के॒वल्यः॒ खादि॑ता॒ न धि॑न्व॒न्त्योष॑धयऽउ॒ हापाꣳ

सोऽग्निमादत्ते–" देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्य्यसि "–( वा. सं. ५ । २६ ) इति । समान एतस्य यजुषो बन्धुः । योषो वा एषा–यदग्निः । तस्मादाह–नार्य्यसीति ॥ ४ ॥

अथावटं परिलिखति–" इदमहं रक्षसां ग्रीवा अपिकृन्तामि "–( वा. सं० ५ । २६ ) इति । वज्रो वा अग्निः । वज्रेणैवैतन्नाष्ट्राणां रक्षसां ग्रीवा अपिकृन्तति ॥ ५ ॥

अथ खनति । प्राञ्चमुत्करमुत्किरति । यजमानेन सम्मायौदुम्बरीं परिवासयति । तामग्रेण प्राचीं निदधाति । एतावन्मात्राणि बर्हींषि उपरिष्टादधिनिदधाति ॥ ६ ॥

अथ यवमत्यः प्रोक्षण्यो भवन्ति । आपो ह वा ओषधीनां रसः । तस्मादोषधयः केवल्यः

अवटखननार्थमभ्र्यादानं समन्त्रकं विधत्ते–सोऽग्निमादत्ते देवस्य त्वेति[1] । व्याख्यातमेतत् ॥ ४ ॥

अथावटं परिलिखतीति । अवटपरिलेखनमन्त्रस्यायमर्थः–' इदम् ' एतेन परिलेखनेन ' रक्षसां ' ग्रीवाः ' कण्ठावयवान् ' अपिकृन्तामि ' छिनद्मि । वज्रवत्तीक्ष्णधारत्वादग्निर्वज्रत्वेन स्तूयते । ' नाष्ट्राणां ' नाशकानाम् । स्पष्टमन्यत् ॥ ५ ॥

अथ खनतीति[2] । 'उत्करं' खातं मृन्निचयं 'प्राञ्चम्' अवटस्य समीपे प्राग्देशे 'उत्किरति' । 'यजमानेन सम्माय' यजमानप्रमाणं कृत्वा 'परिवासयति' अवशिष्टमंशं छिनत्ति । ' ताम् ' औदुम्बरशाखाम् ' अग्रेण ' अवटस्य प्राग्देशे 'प्राचीं' प्रागग्रां स्थापयेत् । 'एतावन्मात्राणि' औदुम्बरीप्रमाणानि 'बर्हींषि' 'उपरिष्टाद्' औदुम्बर्या उपरि 'निदधाति' आच्छादयेदित्यर्थः ॥ ६ ॥

औदुम्बरीप्रोक्षणसाधनानामपां यवसाहित्यं विधाय प्रशंसति–अथ यवमत्यः प्रोक्षण्यो भवन्तीति । उक्तमपां रसत्वं युक्त्या समर्थयते–तस्मादोषधयः केवल्य इति । ' तस्मात् ' गतरसत्वात् ' न धिन्वन्ति ' न

१–अभ्र्यादि करोत्यावटस्तरणात् । का. श्रौ. सू. ८–१३९ । देवस्यत्वेत्यभ्रिमादाय यूपावटं परिलिखतीदमहमित्याहवनीयस्य पुरस्तादंतर्व्वेयर्द्धम् । का. श्रौ. सू. ६–४१ । २–उपरसम्मितं खनति । प्राचः पाः ऽसूत्तुद्वपाति का. श्रौ. सू. ६।४२।४३ ।

रसस्तस्मादापः पीताः केवल्यो नु धिन्वन्ति युदैवोभुय्यः सुꣳसृष्टा भवन्त्युथैवु धिन्वन्ति तुर्हि हि सुरसा भुवन्ति सुरसाभिः प्रोक्षाणीति ॥७॥

देवाश्च वाऽअसुराश्च । ( श्चो ) उभये प्राजापत्याः पस्पृधिरे तुतो देवेभ्यः सुर्व्वाऽएवौषधय ऽईयुर्य्यवा हैवैभ्यो नेयुः ॥ ८ ॥

( स्त ) तद्वै देवा ऽअस्पृण्वत । तऽएतैः सुर्व्वाः सपत्नानामोषधीरयुवत यदयुवत तुस्माद्यवा नाम ॥ ९ ॥

ते होचुः । ( हुं ) हुन्त यः सुर्व्वासामोषधीनाꣳ रुसस्तं युवेषु दुधामेति सु यः सर्व्वासामोषधीनाꣳ रुसऽआसीत्तं युवेष्वदधुस्तुस्माद्यत्रान्या ऽओषधयो म्लायन्ति तुदेते मोदमाना व्वर्धन्तऽएवुꣳ ह्येषु रुसमदधुस्तथोऽएवैषुऽएतैः सुर्व्वाः सपुत्नानामोषधीर्युते तुस्माद्यवमत्यः प्रोक्षण्यो भवन्ति १०

---

खादिता न धिन्वन्ति । औषधय उहा अपां रसः । तस्मादापः पीताः केवल्यो न धिन्वन्ति । यदैवोभय्यः संसृष्टा भवन्ति—अथैव धिन्वन्ति—तर्हि हि सरसा भवन्ति । सरसाभिः प्रोक्षाणीति ॥ ७ ॥

देवाश्च वाऽअसुराश्च उभये प्राजापत्याः पस्पृधिरे । ततो देवेभ्यः सर्वा एवौषधय ईयुः—यवा हैवैभ्यो नेयुः ॥ ८ ॥

तद्वै देवा अस्पृण्वत । तऽएतैः सर्वाः सपत्नानामोषधीरयुवत, यदयुवत; तस्माद्यवा नाम ॥ ९ ॥

ते होचुः—हन्त यः सर्वासामोषधीनां रसः, तं यवेषु दधामेति । स यः सर्वासामोषधीनां रस आसीत् तं यवेष्वदधुः । तस्माद्यत्रान्या ओषधयो म्लायन्ति, तदेते मोदमाना वर्द्धन्ते । एवं ह्येषु रसमदधुः । तथोऽएवैष एतैः सर्वाः सपत्नानामोषधीर्युते । तस्माद्यवमत्यः प्रोक्षण्यो भवन्ति ॥ १० ॥

---

प्रीणयन्ति । केवलतण्डुलभक्षणे तृप्तेरदर्शनात् । “ धिन्विकृण्व्योर च ” इत्युप्रत्ययः ( पा. सू. ३।१।८० ) तत्सन्नियोगेन वकारस्याकारादेशः । ओषधीनां प्रतिज्ञातमन्नरसत्वमुपपादयति—तस्मादापः पीताः केवल्य इति । ‘यदा’ ‘उभय्यः’ ओषधय आपश्च ‘संसृष्टाः’ स्युः ‘अथ’ तथा सति ‘धिन्वन्ति’ ‘तर्हि’ तथा सति ‘ सरसाः ’ ‘भवन्ति’ भवेयुः । केनाभिप्रायेणेत्याह—सरसाभिः प्रोक्षाणीति ॥ ७ ॥

अथ शब्दव्युत्पत्तिप्रदर्शनमुखेन यवान् प्रशंसति—देवाश्च वा असुराश्चेत्यादिना । ‘ सर्वा एव ओषधयः ईयुः’ देवेभ्यः सकाशात् पलायिताः ॥ ८ ॥

तद्वै देवा अस्पृण्वतेति । ‘ अस्पृण्वत ’ सर्वा ओषधीर्वाञ्छितवन्तः । तदेव विशदयति—त एतैः सर्व्वाः सपत्नानामोषधीरयुवतेति । ‘ ते ’ ‘ एतैः ’ यवैः ‘ अयुवत ’ अमिश्रयन् । ‘ तस्माद् ’ यवनसाधनत्वाद् ‘ यवाः ’ इति तन्नामनिर्वचनम् । गतानाम् ओषधीनां यवनसाधनाः सम्पन्ना इति यवस्तुतिः ॥ ९ ॥

ते होचुरिति । सर्व्वौषधिरसानां यवेषु स्थापनं प्रत्यक्षप्रमाणेन द्रढयति—तस्माद् यत्रान्या ओषधयो म्लायन्तीति ॥ १० ॥

स य॒वानाव॑पति । य॒वो॑ऽसि य॒वया॒स्मद्द्वेषो॑ य॒वया॒राती॒रिति॒ नात्र॑ ति॒रो॑हितमि॒वास्त्यथ॒ प्रोक्ष॑त्येको॒ वै प्रोक्ष॑णस्य॒ बन्धु॒र्मे॑ध्यामे॒वैतत्क॑रोति ॥११॥

स प्रोक्ष॑ति । दि॒वे त्वा॒ऽन्तरि॑क्षाय॒ त्वा पृ॑थि॒व्यै त्वेती॒मा॒नेवैत॒ल्लोका॒नूर्जा॒ र॒सेन॑ भाज॒यत्ये॒षु लो॒केषू॒र्जꣳ र॒सं द॑धाति ॥ १२ ॥

( त्यु ) अथ॒ याः प्रो॑क्षण्यः परिशि॒ष्यन्ते॑ । ता ऽअ॑वटेऽवन॑यति शु॒न्धन्तां॑ लो॒काः पि॑तृषद॒ना॒ऽइति॑ पि॒तृदे॑व॒त्यो वै कूपः॒ खात॒स्तमे॒वैत॒न्मेध्यं॑ करोति १३

( त्यु ) अथ ब॒र्हीꣳषि॑ । प्रा॒ची॑नाग्राणि॒ चोदी॒ची॑नाग्राणि॒ चाव॑स्तृणाति पि॒तृष॒दन॑मसी॒ति॒ पि॒तृदे॑व॒त्यं॒ वा ऽअ॒स्या ऽए॒तद्भ॑वति॒ यन्नि॑खात॒ꣳ सा यथा॑ निखा॒तौष॑धिषु॒ मि॑ता॒ स्या॒दे॒वमे॑तास्वोष॑धिषु॒ मि॑ता भ॑वति ॥ १४ ॥

---

स यवानावपति–" यवोऽसि यवयास्मद्द्वेषो यवयारातीः "–( वा. सं. ५ । २६ ) इति । नात्र तिरोहितमिवास्ति । अथ प्रोक्षति । एको वै प्रोक्षणस्य बन्धुः–मेध्यामेवैतत्करोति ॥ ११ ॥

स प्रोक्षति–" दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा "–(वा. सं. ५।२६) इति । इमानेवैतल्लोकानूर्जा रसेन भाजयति । एषु लोकेषूर्जं रसं दधाति ॥ १२ ॥

अथ याः प्रोक्षण्यः परिशिष्यन्ते–ताऽअवटेऽवनयति–" शुन्धन्तां लोकाः पितृषदनाः "–( वा. सं. ५।२६ ) इति । पितृदेवत्यो वै कूपः खातः, तमेवैतन्मेध्यं करोति ॥ १३ ॥

अथ बर्हींषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति–"पितृषदनमसि"–(वा.सं.५।२६)

---

स यवानावपतीति[1] । यवावापे मन्त्रमाह–यवोऽसि यवयेति । हे यवपदार्थ ! त्वं ' यवोऽसि ' पृथक्कर्ताऽसि, अतः ' यवय ' अस्मत्तो द्वेष्टॄन् पृथक् कुरु । तथा ' अरातीः ' अदानशीलान् ॥

अथ प्रोक्षतीति[2] । औदुम्बरीः । एको वै प्रोक्षणस्य बन्धुरिति । यत्र यत्र प्रोक्षणमस्ति तस्य सर्वस्यापि मेध्यमेतत् करोतीति एवंरूपं ब्राह्मणमेकमेवेत्यर्थः ॥ ११ ॥

स प्रोक्षतीति । हे उदुम्बरशाखाग्र ! 'त्वा' त्वाम् 'दिवे' द्युलोकाय तद्दूरीभावाय प्रोक्षामीति शेषः[3] । एवमुत्तरवाक्येऽपि योज्यम् ॥ १२ ॥

अथ याः प्रोक्षण्य[4] इति । शुन्धन्तामिति मन्त्रेण प्रोक्षणीशेषमवटेऽवनयेत् । पितरः सीदन्त्येषु इति 'पितृषदनाः' भूम्यधोवर्तिनो लोकाः प्रायेण गर्तस्य पित्र्यकार्येषु दर्शनादवटस्य पितृषदनत्वम्, तदेवाह–पितृदेवत्यो वै कूपः खात इति ॥ १३ ॥

अथ बर्हींषीत्यादि[5] । सुविशदम् । सा यथा निखाता ओषधिषु मिता स्यात्, एवमेतास्वोषधिषु मिता । भवतीति वने ' अनिखाता ' दृढमूला स्वभावेनोत्पन्ना 'यथा' ओषधिषु सदोत्पन्नेषु तृणगुल्मादिषु मध्ये ' मिता ' भवति, सबर्हिष्के गर्ते 'मिता' शाखापि 'एवं' भवतीत्यर्थः ॥ १४ ॥

---

१–यवोऽसीत्यप्सु यवानोप्य । का.श्रौ.सू । ६ । ४८ । २–प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमंत्रम् । का. श्रौ. सू. । ६ । ४८ । ३–प्रोक्षामीति सर्वत्र साकांक्षात्वात् । का. श्रौ. सू. । ६ । ४९ । ४–अवटे शेषमासिंचति शुन्धन्तामिति । का. श्रौ. सू. । ६ । ५० । ५–बर्हींषि प्रांच्युदंचि च प्रास्यति पितृषदनमसीति । ६–५१ ।

तामुच्छ्रयति । ( त्यु ) उद्दिवᳬं स्तभानान्तरिक्षं पृण दृᳬंहस्व पृथिव्यामितीमानेवैतल्लोकानूर्ज्जा रसेन भाजयत्येषु लोकेषूर्जᳬं रसं दधाति ॥ १९ ॥

( त्यु ) अथ मिनोति । द्युतानस्त्वा मारुतो मिनोत्विति यो वाऽअयं पवतऽएष द्युतानो मारुतस्तदेनामेतेन मिनोति मित्रावरुणौ ध्रुवेण धर्म-णेति प्राणोदानौ वै मित्रावरुणौ तदेनां प्राणोदानाभ्यां मिनोति ॥ १६ ॥

( त्यु ) अथ पर्यूहति । ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामीति बह्वी वै यजुःष्वाशीस्तद्ब्रह्म च क्षत्रं चाशास्तऽउभे वीर्ये रायस्पोषव-नीति भूमा वै रायस्पोषस्तद्भूमानमाशास्ते ॥ १७ ॥

---

इति । पितृदेवत्यं वाऽ अस्या एतद्भवति । यन्निखातम् । सा यथा निखातौषधिषु मिता स्यात्—एव-मेतास्वोषधिषु मिता भवति ॥ १४ ॥

तामुच्छ्रयति—" उद्दिवं स्तभानान्तरिक्षं पृण दृᳬंहस्व पृथिव्याम् "—( वा. सं. ९।२७) इति । इमानेवैतल्लोकानूर्जा रसेन भाजयति । एषु लोकेषूर्जं रसं दधाति ॥ १९ ॥

अथ मिनोति—" द्युतानस्त्वा मारुतो मिनोतु "—( वा. सं. ९ । २७ ) इति । यो वाऽ-अयं पवते—एष द्युतानो मारुतः । तदेनामेतेन मिनोति—" मित्रावरुणौ ध्रुवेण धर्मणा—( वा. सं. ९ । २७ ) इति । प्राणोदानौ वै मित्रावरुणौ । तदेनां प्राणोदानाभ्यां मिनोति ॥ १६ ॥

अथ पर्यूहति—"ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि"—( वा. सं. ९ । २७ ) इति । बह्वी वै यजुःष्वाशीः । तद्ब्रह्म च क्षत्रं चाशास्ते । उभे वीर्ये । रायस्पोषवनीति । भूमा वै रायस्पोषः । तद्भूमानमाशास्ते ॥ १७ ॥

---

तामुच्छ्रयतीति[1] । 'उच्छ्रयति' ऊर्ध्वं स्थापयेत् । तन्मन्त्रस्यायमर्थः—हे उदुम्बरशाखे ! तवाग्रभागेन ' दिवम् ' ' उत्तभान ' उत्तम्भनं कुरु; शरीरस्थौल्येन ' अन्तरिक्षं ' ' पृण ' पूरय; ' पृथिव्यां ' ' दृंहस्व ' दृढा भव, पृथिवीमपि दृढां कुर्वित्यर्थः; पृथिव्याः शैथिल्ये शाखाया अपि दार्ढ्यायोगात् । ऊर्ग्रूपस्यौदुम्बरस्य लोकत्रयेऽपि सम्बन्धाल्लोकेषूर्ग्रसस्थापनं कृतं भवति । स्पष्टमन्यत् ॥ १९ ॥

अथ मिनोतीति[2] । औदुम्बरीमानमन्त्रः—' द्युतानः ' दीप्यमानः, एतन्नामको वायुर्देवः, ' मारुतः ' मरुतां देवानां वायूनां सम्बन्धी, सः ' मिनोतु ' अवटे प्रक्षिपतु । तथा ' मित्रावरुणौ ' देवौ ' ध्रुवेण ' अवि-चलितेन ' धर्म्मणा ' धारणेन मिनुताम् । स्पष्टमन्यत् । मित्रावरुणशब्दयोरर्थमाह—प्राणोदानौ वै मित्रा-वरुणाविति । एतदधिदैवतम्; अहोरात्राभिमानिनौ देवाविति ( ऐ. ब्रा. ४ । २ । ४ ) अध्यात्मम् ॥ १६ ॥

समन्त्रकं पर्यूहणं विधत्ते—अथ पर्यूहति ब्रह्मवनि त्वेति । हे शाखाद्रव्य ! ' ब्रह्मवनि ' ब्रह्मणः सम्भक्तृ ' त्वा ' त्वाम् ' पर्यूहामि ' प्रक्षिपामि । एवमुत्तरवाक्यान्यपि योज्यानि ।

---

१–उद्दिवमित्युच्छ्रयति । का. श्रौ. सू. ८ । १४० । २–द्युतान इति मिनोति । का. श्रौ. सू. ८ । १४१ ।
३–ब्रह्मवनि त्वेति पाङ्सुभिः पर्यूहति का. श्रौ. ६ । ६३ ।

( स्तेऽथ ) अथ पर्य्यृषति । ब्रह्म दृꣳह क्षत्त्रं दृꣳहायुर्दृꣳह प्रजां दृꣳहेत्याशीरेवैषैतस्य कर्मणऽआशिषमेवैतदाशास्ते समम्भूमि पर्य्येषणं करोति गर्त्तस्य वाऽउपरिभूम्यथैवं देवत्रा तथा हागर्त्तमिद्भवति ॥ १८ ॥

( त्यु ) अथापऽउपनिनयति । यत्र वाऽअस्यै खनन्तः क्रूरीकुर्वन्त्यपघ्नन्ति शान्तिरापस्तदद्भिः शान्त्या शमयति तदाद्भिः सन्दधाति तस्मादपऽउपनिनयति ॥ १९ ॥

( त्यु ) अथैवमभिपद्य वाचयति । ध्रुवाऽसि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया भूयादिति पशुभिरिति वैवं यं कामं कामयते सोऽस्मै कामः समृद्ध्यते ॥ २० ॥

---

अथ पर्यृषति–" ब्रह्म दृंह, क्षत्रं दृंह, आयुर्दृंह, प्रजां दृंह "–( वा. सं. ५ । २७ ) इति । आशीरेवैषैतस्य कर्मणः । आशिषमेवैतदाशास्ते । समंभूमि पर्येषणं करोति । गर्तस्य वाऽउपरि भूमि । अथैवं देवत्रा । तथा हागर्तमिद्भवति ॥ १८ ॥

अथापऽउपनिनयति । यत्र वाऽअस्यै खनन्तः क्रूरीकुर्वन्ति अपघ्नन्ति । शान्तिरापः, तद् अद्भिः शान्त्या शमयति । तदद्भिः सन्दधाति । तस्मादप उपनिनयति ॥ १९ ॥

अथैवमभिपद्य वाचयति–" ध्रुवाऽसिध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया भूयात् "–

---

मन्त्रं व्याचष्टे–बह्वी वा इति । प्रायेण 'यजुःषु' मन्त्रेषु 'आशीः' बह्वी परिदृश्यते । अतोऽत्र ब्रह्मक्षत्रोभयरूपं फलमाशास्यते । " भूमा वै रायस्पोष इत्याद्यसकृद् गतम् " ( श. प. ब्रा. ३।९।२।१२। ) ॥१७॥

अथ पर्यृषतीति[1] । ' पर्यृषति ' परितः सङ्घट्टयेत् । " ऋषी गतौ "–( धा. पा. तु. प. ७ ) इति धातुः । ब्रह्म दृंहेत्यादिर्दृंहणमन्त्रो यजमानापेक्षितस्य कर्मफलस्य प्रतिपादक इत्याह–आशीरेवैतस्य कर्मण इति । ' एतस्य ' शाखादृंहणकर्मणः फलरूपाऽऽशीः प्रतिपाद्यत इत्यर्थः । परिघट्टनं–पर्येषणम्, भूमिप्रमाणमद्भिः कर्त्तव्यमित्याह–समम्भूमि पर्य्येषणमिति । भूम्या समं ' समम्भूमि ', ' पर्येषणं ' भूमिसमं ' करोति ' । व्यतिरेकमाह–गर्त्तस्य वा इति ॥ अथैवं देवत्रेति । ' अथ '–शब्द उक्तवैलक्षण्यद्योतनार्थः । एवं साम्ये सति ' देवत्रा ' देवेषु अन्वितो भवतीत्यर्थः । तथा हागर्त्तमिद् भवतीति । ' तथा ह ' तथा सति, भूमिसाम्ये सति ' अगर्तमित् ' अगर्तमिता भवति । मिनोतेः कर्मणि क्विप् ॥ १८ ॥

अथाप उपनिनयतीति[2] । ' उपनिनयति ' मृत्परमाणूनां संश्लेषाय ' अस्यै खनन्तः ' अस्या भूम्याः भागं विदारयन्तः, तामेव भूमिम् । अक्रूरां ' क्रूरीकुर्वन्ति ' । ' आपः ' तु शमनहेतुत्वात् ' शान्तिः ' अतः ' तत् ' तेन ' अद्भिः ' ' शान्त्या ' शान्तेरेकत्वादेकवचनम् । ' क्रौर्यशमनमदृष्टं प्रयोजनम्; अद्भिः सन्धानं तु संहतिहेतु दृष्टं प्रयोजनम् ॥ १९ ॥

अथैवमभिपद्येति[3] । ' अभिपद्य ' शाखामालभ्य, एवं ' वाचयति ' ध्रुवासीत्येवम्प्रकारेण । हे शाखे !

---

१–ब्रह्म दृꣳहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यृषति । का. श्रौ. सू. ६ । ६४ । २–समां भूमिं कृत्वाऽद्भिरुपसिच्य । का. श्रौ. सू. ६ । ६५ । ३–पर्यूहणाद्योपसेचनात् कृत्वा ध्रुवाऽसीति व्वाचयत्यौदुंबरीमलभ्य प्रजया भूयादिति पशुभिरीति वा । कां. श्रौ. सू. ८ । १४२ ।

( तेऽथ ) अथ स्रुवेणोपहत्याज्यम् । विष्टपमभि जुहोति घृतेन द्यावापृथिवी पूर्येथामिति तदिमे द्यावापृथिवीऽऊर्ज्जा रसेन भाजयत्यनयोरूर्जँ रसं दधाति ते रसवत्याऽउपजीवनीये ऽइमाः प्रजाऽउपजीवन्ति॥२१॥

( न्त्यु ) अथ च्छदिरधिनिदधाति । ( ती ) इन्द्रस्य च्छदिरसीत्यैन्द्रँ हि सदो विश्वजनस्य च्छायेति विश्वगोत्रा ह्यस्मिन्ब्राह्मणाऽआसते तदुभयतश्छदिषीऽउपदधात्युत्तरतस्त्रीणि परस्त्रीणि तानि नव भवन्ति त्रिवृद्वै यज्ञो नव वै त्रिवृत्तस्मान्नव भवन्ति ॥ २२ ॥

---

( वा. सं. ५।२८ ) इति । " पशुभिः "–( वा. सं. ५।२८ ) इति । वा एवं यं कामं कामयते–सोऽस्मै कामः समृद्ध्यते ॥ २० ॥

अथ स्रुवेणोपहत्याज्यं विष्टपमभि जुहोति–" घृतेन द्यावापृथिवी पूर्येथाम् "–( वा. सं. ५।२८ ) इति । तदिमे द्यावापृथिवीऽऊर्ज्जा रसेन भाजयति । अनयोरूर्जं रसं दधाति । ते रसवत्याऽउपजीवनीये इमाः प्रजा उपजीवन्ति ॥ २१ ॥

अथ च्छदिरधिनिदधाति–"इन्द्रस्य च्छदिरसि"–( वा. सं. ५।२८ ) इति । ऐन्द्रं हि सदः–" विश्वजनस्य छाया "–( वा. सं. ५ । २८ ) इति विश्वगोत्रा ह्यस्मिन् ब्राह्मणाऽआसते । तदुभयतश्छदिषी उपदधाति–उत्तरतस्त्रीणि, परस्त्रीणि, तानि नव भवन्ति । त्रिवृद्वै यज्ञो नव वै त्रिवृत् । तस्मान्नव भवन्ति ॥ २२ ॥

---

त्वमिदानीं कृतप्रकारेण ' ध्रुवा ' अविचला ' असि ' । ' अयं ' ' यजमानः ' अपि ' अस्मिन् ' स्वकीये एव गृहे ' प्रजया ' ' पशुभिः ' सहितः सन् ' ध्रुवः ' भवतु । न केवलं ' प्रजया पशुभिः ' इत्यभिधानेन तद्द्वयं समृद्ध्यते, किन्तर्हि ? प्रजापशुव्यतिरिक्तमन्यच्च धनादिकं ' यं कामं कामयते ' स सर्वोऽप्युभयकामनयैव समृद्ध्यते । अत्र ' पशुभिरिति वा ' इति ' वा '–शब्देन ' प्रजया '–इत्यनेन मन्त्रपदेन ' पशुभिः '–इत्यस्य विकल्पः । ( का. श्रौ. सू. ८ । १४२ ) ॥ २० ॥

औदुम्बरीशाखाग्रे होमं विधत्ते–अथेति । विष्टपमभि जुहोतीति । ' विष्टपं ' विशाखम् ' अभि ' विष्टपस्याग्रभागस्याभितः, यथा शाखाया अग्रमूलभागो मध्यदेशश्च अक्ता भवन्ति, एवमाज्यं जुहोति ॥

तन्मन्त्रस्यायमर्थः–' द्यावापृथिवी ' हे द्यावापृथिव्यौ शाखाग्रमूलभागवर्त्तिन्यौ युवां ' घृतेन ' हूयमानेन ' पूर्येथाम् ' पूर्णौ भवतम् । अत्र सूत्रम्–' स्रुवेण विशाखे जुहोति घृतेन द्यावापृथिवी इति भूमिप्राप्ते स्वाहाकरोति ' ( का. श्रौ. सू. ८ । १४३ ) इति । द्यावापृथिवीपूर्त्यभिधानस्य प्रयोजनमाह–तदिमे द्यावापृथिवी ऊर्जा रसेन भाजयतीत्यादिना । ऊर्गूपौदुम्बर्युक्तेन आज्येन यद् द्यावापृथिवीपूरणम्, तदूर्ग्रसेनैव द्यावापृथिवीप्रापणं कृतं भवति । तेन तयोः किं कृतं भवति ? " अनयोरूर्जं रसं दधाति " । स्पष्टमन्यत् ॥ २१ ॥

मध्यमच्छदिर्निधानं विधत्ते–अथ च्छदिरधिनिदधातीन्द्रस्य च्छदिरसीति । इन्द्रदेवत्यत्वात् सदोऽत्रेन्द्रः,

---

१–इन्द्रस्य च्छदिरिति मध्यमं छदिरारोप्यापरपूर्वे च । त्रिवर्गौ चोत्तरतः । का. श्रौ. सू. ८ । १५१ ।

तदुदीचीनवꣳशꣳ सदो भवति । प्राचीनवꣳशꣳ हविर्द्धानमेतद्वै देवानां निष्केवल्यं यद्धविर्द्धानं तस्मात्तत्र नाश्नन्ति न भक्षयन्ति निष्केवल्यꣳ ह्येतद्देवानाꣳ स यो ह तत्राश्नीयाद्वा भक्षयेद्वा मूर्द्धा हास्य विपतेदथैते मिश्रे यदाग्नीध्रं च सदश्च तस्मात्तयोरश्नन्ति तस्माद्भक्षयन्ति मिश्रे ह्येते ऽउदीची वै मनुष्याणां दिक्तस्मादुदीचीनवꣳशꣳ सदो भवति ॥२३॥

तदुदीचीनवंशं सदो भवति । प्राचीनवंशं हविर्द्धानम् । एतद्वै देवानां निष्केवल्यं-यद्धविर्द्धानम् । तस्मात्तत्र नाश्नन्ति, न भक्षयन्ति । निष्केवल्यं ह्येतद्देवानाम् । स यो ह तत्राश्नीयाद्वा, भक्षयेद्वा-मूर्द्धा हास्य विपतेत् । अथैते मिश्रे-यदाग्नीध्रं च, सदश्च । तस्मात्तयोरश्नन्ति, तस्माद्भक्षयन्ति । मिश्रे ह्येते । उदीची वै मनुष्याणां दिक्, तस्मादुदीचीनवंशं सदो भवति ॥ २३ ॥

तस्याच्छादकमसि तथा 'विश्वजनस्य छायाऽसि' विश्वेषां सदसि स्थितानां जनानां छायाकारी असि । एतयोर्मन्त्रभागयोर्ब्राह्मणे स्पष्टे । उभयतश्छदिषी उपदधातीति ( 'परपूर्वेच' का. श्रौ. सू. ८ । ६ । ) मध्यमस्य च्छदिषः 'उभयतः' दक्षिणोत्तरयोः;-तानि मध्यमच्छदींषि त्रीण्यपि प्रमाय, तेषाम् 'उत्तरतः त्रीणि' छदींषि उपदध्यात्, तथा 'परः' परस्तादपि दक्षिणतोऽपि 'त्रीणि' 'उपदधाति' ॥

छदिषां नवत्वं प्रशंसति-तानि नव भवन्तीति । त्रिवृत्स्तोमसाध्यत्वाद् यज्ञस्य त्रिवृत्त्वम् । स च 'त्रिवृत्' स्तोमो 'नव वै' नवस्तोत्रियात्मकः खलु; "तिसृभ्यो हिङ्करोति स एकया" ( अ. ३ खं. १ ) इत्यादिसामताण्ड्यब्राह्मणोक्तप्रकारेण त्रिवृत्स्तोमे तिसृणामृचां नवत्वसंपादनात् । तस्मात् छदिषां नवत्वं युक्तम् ॥ २२ ॥

सदस उदगायतत्वं विधत्ते । तदुदीचीनवंशं सदो भवतीति । सदस उदीचीनवंशत्वं प्रशंसितुं हविर्द्धानस्य सदोवैलक्षण्यं दर्शयति-प्राचीनवंशं हविर्द्धानमित्यादिना । 'एतत्' हविर्द्धानं 'देवानां निष्केवल्यम्' मनुष्यलक्षणाभावेन निःशेषेणैव देवानां केवलं भवति । "भवे छन्दसि" ( पा. सू. ४ । ४ । ११० ) इति यत् । तस्मात् तत्र नाश्नन्ति, न भक्षयन्तीति । 'नाश्नन्ति' पुरोडाशादिकम्, न भक्षयन्ति सोमम् । प्रमादाद्भक्षणे दोषमाह-मूर्द्धा हास्य विपतेदिति । उक्तवैपरीत्यमाग्नीध्रसदसोर्दर्शयति-अथैते मिश्रे इति । 'एते मिश्रे' स्तोत्रशस्त्रादिपाठाश्रयत्वाद् दैवम्, भक्षणसम्भवान्मानुषं चेति 'मिश्रे' भवतः । उदीची वै मनुष्याणां दिगिति । प्रायेणोदीच्यां दिशि मनुष्यवृद्धिदर्शनान्मनुष्यसम्बन्धव्यपदेशः । सदोनिर्माणप्रकारं सूत्रकार आह-"नाभिदघ्नं सदः, मत्या वा, उदग्वंशम्, अष्टादशारत्नि, एकविंशतिश्चतुर्विंशतिर्वा, नव तिर्यक्, अर्द्धायामो वा, औदुम्बरीं मध्ये, पृष्ठ्यामेके, इन्द्रस्य च्छदिरिति मध्यमं छदिरारोप्यापरपूर्वे च, त्रिवर्गौ चोत्तरतः"-( का. श्रौ. सू. ८ । १४९-१९२ ) इति । अष्टादशारत्न्यादयस्त्रयः पक्षाः उदगायामविषये विकल्पिताः; तिर्यक्प्रमाणविषये नवारत्नित्वमायामार्धपरिमाणत्वं च विकल्पितम् । उक्तपरिमाणे सदसि औदुम्बरी मध्या भवति, पृष्ठ्या दक्षिणतः स्थिता वेत्यर्थः ॥ २३ ॥

१-'अर्धपरिमाणत्वम्-'इ. क. पा. । २-इतोऽग्रे-'यथा पृष्ठ्या रज्जुर्मध्या भवति रज्जुर्दक्षिणतः स्थिता औदुम्बरी मध्या भवति यथा पृष्ठ्या रज्जुर्मध्या भवति तथान्यतरपक्षं कुर्यादित्यर्थः'-इ. क. पा. ।

तत्परिश्रयन्ति । परि त्वा गिर्व्वणो गिरऽइमा भवन्तु विश्वतः । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयऽइतीन्द्रो वै गिर्व्वा विशो गिरो विशैवैतत्क्षत्रं परिबृꣳहति तदिदं क्षत्रमुभयतो विशा परिबृढम् ॥ २४ ॥

( मु ) अथ लस्पूजन्या स्पन्द्यया प्रसीव्यति । (त्री) इन्द्रस्य स्यूरसीत्यथ ग्रन्थिं करोतीन्द्रस्य ध्रुवोऽसीति नेद्व्यवपद्याताऽइति तं प्रकृते कर्म्मन्विष्यति तथो हाध्वर्युं वा यजमानं वा ग्राहो न विन्दति तन्निष्ठितमभिमृशत्यैन्द्रमसीत्यैन्द्रꣳ हि सदः ॥ २५ ॥

( दोऽथ ) अथ हविर्द्धानयोः । ( र्ज ) जघनार्द्धꣳ समन्वीक्ष्योत्तरेणाग्नीध्रं मिनोति तस्यार्द्धमन्तर्व्वेदि स्यादर्द्धं बहिर्वेद्यथो ऽअपि भूयोऽर्द्धादन्तर्वेदि

---

तत्परिश्रयन्ति–" परित्वा गिर्वणो गिर इमा भवन्तु विश्वतः । वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः"–( वा. सं. ५ । २९ । ) इति । इन्द्रो वै गिर्वा, विशो गिरः, विशैवैतत् क्षत्रं परिबृंहति । तदिदं क्षत्रमुभयतो विशा परिबृढम् ॥ २४ ॥

अथ लस्पूजन्या स्पन्द्यया प्रसीव्यति–" इन्द्रस्य स्यूरसि " ( वा. सं. ५ । ३० ) इति । अथ ग्रन्थिं करोति–" इन्द्रस्य ध्रुवोऽसि "–( वा. सं ५ । ३० ) इति । नेद्व्यवपद्याताऽइति प्रकृते कर्मन् विष्यति । तथो हाध्वर्युं वा यजमानं वा ग्राहो न विन्दति । तन्निष्ठितमभिमृशति–"ऐन्द्रमसि "–( वा. सं. ५ । ३० ) इति । ऐन्द्रं हि सदः ॥ २५ ॥

**आग्नीध्रीया भूयोऽष्टौ धिष्ण्याः ।**

अथ हविर्द्धानयोर्जघनार्द्धं समन्वीक्ष्योत्तरेणाग्नीध्रं मिनोति । तस्यार्द्धमन्तर्वेदि स्यात्, अर्द्धं बहि-

---

सदसः परिश्रयणं समन्त्रकं विधत्ते–तत् परिश्रयन्ति परि त्वा गिर्वणो गिर इतीति । मन्त्रस्यायमर्थः । हे ' गिर्वणः ' गीर्भिः वननीय इन्द्र ! ' त्वा ' त्वाम् ' इमाः ' अस्माभिः प्रयुज्यमानाः ' गिरः ' स्तुतिरूपाः वाचः ' विश्वतः ' सर्वतः ' परिभवन्तु ' । किञ्च ' वृद्धायुम् ' वृद्धा आयवो मनुष्याः, ऋत्विग्यजमानलक्षणाः यस्य स तथोक्तः, तादृशम् ' अनु ' ' वृद्धयः ' समृद्धिमत्यो भवन्तु । तथा ' जुष्टयः ' प्रीणयन्त्यो वाचः ' जुष्टाः ' प्रीताः ' भवन्तु ' । तव गिरां च वृद्धिजोषावुपर्युपरि वर्द्धेतामित्यर्थः ॥

प्रथमपादं व्याचष्टे–इन्द्रो वै गिर्वा, विशो गिर इत्यादिना । इन्द्रस्य देवेषु मध्ये क्षत्रियजातित्वाद्गिराञ्च स्त्रीत्वाद् बहुत्वाच्च विशां रूपत्वम्; अतो गीर्भिरिन्द्रपरिग्रहाभिधानात् क्षत्रियस्योभयतस्तत्क्षेमार्थं प्रजाः कल्पितवान् भवति ॥ २४ ॥

सदसो द्वारशाखाप्रभृतीनां हविर्द्धानञ्च दर्भैराच्छाद्य सीवनादिकं विधत्ते–अथ लस्पूजन्येत्येवमादिना । सीवनग्रन्थीकरणाभिमर्शनवाक्यानि हविर्द्धानवद् व्याख्येयानि । मन्त्रेष्वैन्द्रत्वं विशेषः ॥ २५ ॥

आग्नीध्रस्य स्थानमाह–अथ हविर्द्धानयोरित्यादिना[3] । हविर्द्धानशकटयोः पश्चाद्भागस्य साम्येन य उत्तरो

---

१–परित्वेति परिवार्य । का. श्रौ. सू. ८ । १५३ । २–' परिषीवणग्रंथ्यभिमर्शनान्यैंद्रैः । का. श्रौ. सू. ८ । १५३ । ३–हविर्द्धानापरांतमुत्तरेणाग्नीध्रमग्न्यागारद्वारमंतर्वेद्यर्द्धं भूयः सर्वं वा । का. श्रौ. सू. ८ । १५४ ॥

स्यात्कनीयो बहिर्व्वेद्यथो ऽअपि सर्व्वमेवान्तर्व्वेदि स्यात्तन्निष्ठितमभिमृशति व्वैश्वदेवमसीति द्वयेनैतद्वैश्वदेवं यदस्मिन्पूर्व्वेद्युर्व्विश्वे देवा व्वसतीवरीषूपवसन्ति तेन व्वैश्वदेवम् ॥ २६ ॥

देवा ह वै यज्ञं तन्वानाः । (स्ते) तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयाञ्चक्रुस्तान्दक्षिणतोऽसुररक्षसान्यासेजुस्तान्त्सदसो जिग्युस्तेषामेतान्धिष्ण्यानुद्रापयाञ्चक्रुर्य्य ऽएतेऽन्तःसदसम् ॥ २७ ॥

(७।) सर्व्वे ह स्म वा ऽएते पुरा ज्वलन्ति । यथाऽयमाहवनीयो यथा गार्हपत्यो यथाऽऽग्नीध्रीयस्तद्यत ऽएनानुदवापयंस्तत ऽएवैतन्न ज्वलन्ति तानाग्नीध्रमभि समँरुरुधुस्तानप्यर्द्धमाग्नीध्रस्य जिग्युस्ततो व्विश्वे देवा ऽअमृतत्वमपाजयंस्तस्माद्वैश्वदेवम् ॥ २८ ॥

---

वेदि । अथोऽअपि भूयोऽर्द्धाद् अन्तर्वेदि स्यात्, कनीयो बहिर्वेदि । अथोऽअपि सर्वमेवान्तर्वेदि स्यात् । तन्निष्ठितमभिमृशति—" वैश्वदेवमसि "—( वा. सं. ५ । ३० ) इति । द्वयेनैतद्वैश्वदेवम्, यदस्मिन् पूर्वेद्युर्विश्वेदेवा वसतीवरीषूपवसन्ति तेन वैश्वदेवम् ॥ २६ ॥

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयाञ्चक्रुः । तान् दक्षिणतोऽसुररक्षसान्यासेजुः । तान्त्सदसो जिग्युः । तेषामेतान् धिष्ण्यानुद्रापयाञ्चक्रुः—य एतेऽन्तःसदसम् ॥ २७ ॥

सर्वे ह स्म वा एते पुरा ज्वलन्ति—यथाऽयमाहवनीयो, यथा गार्हपत्यो, यथाऽऽग्नीध्रीयः । तद् यत एनानुदवापयंस्तत एवैतन्न ज्वलन्ति । तानाग्नीध्रमभिसंरुरुधुः, तानप्यर्द्धमाग्नीध्रस्य जिग्युः । ततो विश्वेदेवा अमृतत्वमपाजयन्[1], तस्माद्वैश्वदेवम् ॥ २८ ॥

---

देशः, तत्र ' आग्नीध्रम् ' आग्नीध्रीयं मण्डपं कुर्यात् । तत्रापि त्रयः पक्षाः । आग्नीध्रीयस्य यावत् परिमाणं तस्यार्द्धं सौमिकवेद्या उत्तरभागे स्वीकुर्यादित्येकः पक्षः । अर्द्धादधिकमंशं वेद्याः स्वीकुर्यादिति द्वितीयः । सर्वमपि सौमिकवेद्यामिति तृतीयः । तदेतत् पक्षत्रयम्—तस्यार्द्धमन्तर्वेदीत्यादिनोक्तम् । ' निष्ठितं ' निष्पन्नमाग्नीध्रीयम्, " वैश्वदेवमसि "—' इति ' मन्त्रेण अभिमृशेत् । अस्य वैश्वदेवत्वं कारणद्वयेन । तत्र प्रथमं कारणमाह—यदस्मिन् पूर्वेद्युरिति । ' वसतीवर्यः ' सोमाभिषवार्था आपः; तासु विश्वेदेवाः सुत्यादिनात्पूर्वेद्युरधिवसन्ति अतो वैश्वदेवत्वम् । तथा चोपरिष्टादाम्नास्यते—" ता आग्नीध्रे सादयति विश्वेषां देवानां भागधेयी स्थेति "—इति (श. प. ब्रा. ३ । ९ । २ । १६कं.)।तदासु विश्वान् देवान् संवेशयतीत्यतो विश्वेषां देवानामाश्रयभूतानामपामाधारभूतत्वाद् वैश्वदेवत्वम् ॥ २६ ॥

द्वितीयं कारणमाह—देवा ह वा इत्यादिना । तान्त्सदसो जिग्युरिति । ' तान् ' सदोनिविष्टान् देवान् ' सदसः ' सकाशात् जितवन्तः, ततो निष्कासितवन्त इत्यर्थः । न केवलं तानेव देवान्, अपि तु ' अन्तःसदसं ' सदोमध्येऽवस्थितान् ' धिष्ण्यान् ' अग्नीननाशयन्, तेषामग्नीनां तत्र सद्भाव एव नास्ति ॥ २७ ॥

तत्र ते न सन्तीति चेत् कथं ज्वलन्तीत्याह—सर्वे ह स्म वा एत इति । तानाग्नीध्रमभि संरुरुधुरिति ।

---

१—अयाजयन् इति क. पा. एवमुत्तरकण्डिकायामपि ।

तान्देवाः प्रतिसमैन्धत । यथा प्रत्यवस्येत्तस्मादेनान्त्सवनेसवनऽएव प्रतिसमिन्धते तस्माद्यः समृद्धः स ऽआग्नीध्रं कुर्य्याद्यो वै ज्ञातोऽनूचानः स समृद्धस्तस्मादग्नीधे प्रथमाय दक्षिणां नयन्त्यतो हि विश्वे देवाऽअमृतत्वमपाजयंस्तस्माद्यं दीक्षितानामबल्यं विन्देदाग्नीध्रमेनं नयतेति ब्रूयात्तदनार्त्तं तन्नारिष्यतीति तद्यदतो विश्वे देवा ऽअमृतत्वमपाजयंस्तस्माद्वैश्वदेवम् ॥ २९ ॥

इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ ४ ॥ ५ ॥ ( ६. १. )

चतुर्थप्रपाठकश्च समाप्तः ॥

---

तान् देवाः प्रतिसमैन्धत—यथा प्रत्यवस्येत् । तस्मादेनान्त्सवने सवनऽएव प्रतिसमिन्धते । तस्माद्यः समृद्धः स आग्नीध्रं कुर्यात् । यो वै ज्ञातोऽनूचानः—स समृद्धः । तस्मादग्नीधे प्रथमाय दक्षिणां नयन्ति । अतो हि विश्वेदेवाः अमृतत्वमपाजयन् । तस्माद् यं दीक्षितानामबल्यं विन्देत्—'आग्नीध्रमेनं नयत'—इति ब्रूयात् । तदनार्तम्, तन्नारिष्यतीति । तद् यदतो विश्वेदेवा अमृतत्वमपाजयन्—तस्माद् वैश्वदेवम् ॥ २९ ॥

---

सदसो निष्कासिता आग्नीध्रप्रविष्टाः तत्राप्यसुरैः संरुद्धाः, ते देवा आग्नीध्रधिष्ण्यगतस्याग्नेः 'अर्द्धं' समीपं प्राप्य 'तान्' असुरान् 'जिग्युः'। 'ततः' आग्नीध्रस्याग्नेः सामर्थ्याद् 'विश्वेदेवाः' 'अमृतत्वम्' असुरकृतहिंसारहितत्वं प्राप्ता इत्यर्थः । 'तस्मात्' विश्वेषां देवानामाश्रयत्वाद् 'वैश्वदेवम्' वैश्वदेवत्वम् ॥ २८ ॥

**तान् देवा** इति । 'तान्' उद्घाटितान् धिष्ण्यान् 'देवाः' 'प्रतिसमैन्धत' पुनरदीपयन् । 'यथा' येन प्रकारेण 'प्रत्यवस्येत्' प्रतितिष्ठेत् । यद्वा प्रत्यवसानं भोजनम्; यथा आहुत्याधारो भवेत् । तथा समैन्धत । **तस्मादेनानिति** । स्पष्टम् । **तस्माद्य इति** । 'तस्मात्' आग्नीध्रस्य विश्वेषां देवानां जयहेतुत्वात् 'यः समृद्धः', 'सः' 'आग्नीध्रम्' आग्नीध्रस्य कर्म 'कुर्यात्'। **यो वा इति** । 'यो वै' 'ज्ञातः' अयं सदाचारीति विदितः, 'अनूचानः' साङ्गप्रवचनाध्यायी 'समृद्धः'। आग्नीध्रस्य श्रैष्ठ्यं दक्षिणाप्राथम्यभाक्त्वेन समर्थयते—**तस्मादग्नीधे प्रथमायेत्यादि** ।

प्रसङ्गाद्यजमानार्थं कञ्चिदपूर्वनियममाह—**तस्माद्यं दीक्षितानामबल्यं विन्देदिति** । 'दीक्षितानां' मध्ये 'यं' दीक्षितम्, यद्वा तेषां सम्बन्धिनं कञ्चिदृत्विजम् 'अबल्यं' दौर्बल्यं 'विन्देत्,' लभेत, तद्दौर्बल्यपरिहाराय "एनम् आग्नीध्रं नयत"—'इति' ब्रूयात् । एवं वदतामभिप्रायमाह—**यत्तदनार्तं तन्नारिष्यतीतीति** । लोके 'यद्' भयादिरहितम्, 'तत्' 'नारिष्यति' आर्तिं न लभेत; अत एतस्याग्नीध्रस्य देवानामार्तिपरिहारसाधनत्वादसावप्यनार्तो भवेदित्यभिप्रायेण नयतेति ब्रूयादित्यर्थः । **तद् यदत** इत्यादिरुक्तार्थोपसंहारः ॥ २९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे षष्ठाऽध्याये प्रथमं ब्राह्मणम् ॥ ( ३–६–१ ) ॥

# अथ पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ।
# षष्ठाध्याये च द्वितीयं ब्राह्मणम् ।

विज॒ामानो॒ हैवास्य धिष्ण्याः । ( ऽ ) इ॒मे स॒मङ्का॒ ये वै॒ स॒मङ्का॒स्ते वि॒ज॒ामान एतु॒ऽउ हैवास्यैतु॒ऽआत्मा॒नः ॥ १ ॥

( नो ) दिवि वै सो॒मऽआ॒सीत् । ( उ ) अथे॒ह दे॒वास्ते दे॒वा॒ ऽअकाम॒यन्ता॒ नः सो॒मो गच्छेत्तेना॒गतेन यजेमहीति तु॒ऽए॒ते मायेऽअसृजन्त सुपर्णीं च कद्रूं च वा॒गेव सु॒पर्णीयं कद्रूस्ताभ्याᳬं स॒मदं चक्रुः ॥ २ ॥

( स्ते ) ते ह॒ऽर्त्तीय॒माने ऽऊचतुः । ( यं ) य॒त॒रा नौ दवीयः पुरापश्यादा॒त्मानं नौ सा॒ जयादिति तथेति सा ह कद्रूरुवाच पुरेक्षस्वेति ॥ ३ ॥

---

विजामानो हैवास्य धिष्ण्याः । इमे समङ्काः । ये वै समङ्कास्ते विजामानः । एतऽउ हैवास्यैत आत्मानः ॥ १ ॥

दिवि वै सोम आसीत्—अथेह देवाः । ते देवा अकामयन्त—आ नः सोमो गच्छेत्; तेनागतेन यजेमहीति । तऽएते मायेऽअसृजन्त—सुपर्णीं च कद्रूं च । वागेव सुपर्णी, इयं कद्रूः । ताभ्यां समदं चक्रुः ॥ २ ॥

ते हऽर्त्तीयमानेऽऊचतुः—यतरा नौ दवीयः परापश्याद्—आत्मानं नौ सा जयादिति । तथेति । सा ह कद्रूरुवाच—परेक्षस्वेति ॥ ३ ॥

---

धिष्ण्यपदार्थविधानार्थमाख्यायिकामाह—विजामानो हैवास्येत्यादिना । ये 'धिष्ण्याः' ते 'अस्य' यज्ञस्य 'विजामानः' भ्रातरः, बान्धवाः । कुत इत्यत आह—'इमे' 'समङ्काः' समानचिह्नाः, यत एवमतो विजामान इत्यर्थः । समानचिह्नानां भ्रातृत्वे व्याप्तिं दर्शयति—ये वै समङ्कास्ते विजामान इति । 'एत उ' एते खलु 'अस्य' यज्ञस्य 'आत्मानः;' अतो विजामान इत्येतदुपपन्नम् । तस्मात् सोमयागे धिष्ण्याः कर्त्तव्या इत्यर्थः ॥ १ ॥

सूत्रत्वेनोक्तं विशदयितुमाह—दिवि वै सोम आसीदथेह देवा इत्यादिना । 'इह' भूलोके 'त एते माये' वस्तुतः अतथाभूते । सुपर्णीकद्र्वोस्तयोः किं वास्तवं रूपमिति तद्दर्शयति—वागेव सुपर्णीयं कद्रूरिति । 'ताभ्याम्' 'तयोः समदं चक्रुः' परस्परं कलहमुदपादयन् ॥ २ ॥

ते हर्त्तीयमाने इति । 'ऋतीयमाने' परस्परं कलहायमाने । 'ऋतिः' सौत्रो धातुः (पा. सू. ३।१।२९) 'ऊचतुः' । कथम् ? 'नौ' आवयोर्मध्ये 'यतरा' 'दवीयः' अत्यन्तं दूरं 'परापश्यात्' पश्येत् । 'सा' दूरदर्शिनी । सुपर्णी दूरम् 'ईक्षस्व' 'इति' 'उवाच' ॥ ३ ॥

---

१—'आत्मनः' इति पाठो लेखप्रमादादेव । 'आत्मानः' इति पाठः साधीयान् भाष्यसंमतश्च । २—"धिष्ण्योपधानपदार्थ" इति क. पा. । ३—'अत्तारः' इति क. पा. ।

सा ह सुपर्ण्युवाच । ( चा ) अस्य सलिलस्य पारेऽश्वः श्वेत स्थाणौ सेवते तमहं पश्यामीति तमेव त्वं पश्यसीति तᳫं हीत्यथ ह कद्रूरुवाच तस्य वालो न्यषञ्जि तममुं वातो धूनोति तमहं पश्यामीति ॥ ४ ॥

सा यत्सुपर्ण्युवाच । ( चा ) अस्य सलिलस्य पार ऽइति वेदिर्वै सलिलं वेदिमेव सा तदुवाचाश्वः श्वेत स्थाणौ सेवतऽइत्यग्निर्वा ऽअश्वः श्वेतो यूप स्थाणुरथ यत्कद्रूरुवाच तस्य वालो न्यषञ्जि तममुं वातो धूनोति तमहं पश्यामीति रशना हैव सा ॥ ५ ॥

सा ह सुपर्ण्युवाच । ( चे ) एहीदं पताव वेदितुं यतरा नौ जयतीति सा ह कद्रूरुवाच त्वमेव पत त्वं वै न आख्यास्यसि यतरा नौ जयतीति ॥ ६ ॥

---

सा ह सुपर्ण्युवाच—अस्य सलिलस्य पारेऽश्वः श्वेत स्थाणौ सेवते—तमहं पश्यामीति । तमेव त्वं पश्यसीति । तं हीति । अथ ह कद्रूरुवाच—तस्य वालो न्यषञ्जि । तममुं वातो धूनोति । तमहं पश्यामीति ॥ ४ ॥

सा यत् सुपर्ण्युवाच—अस्य सलिलस्य पार इति । वेदिर्वै सलिलम्, वेदिमेव सा तदुवाच । अश्वः श्वेतः, स्थाणौ सेवतऽइति । अग्निर्वाऽअश्वः श्वेतः । यूपः स्थाणुः । अथ यत् कद्रूरुवाच—तस्य वालो न्यषञ्जि, तममुं वातो धूनोति, तमहं पश्यामीति—रशना हैव सा ॥ ५ ॥

सा ह सुपर्ण्युवाच—एहीदं पताव वेदितुम्, यतरा नौ जयतीति । सा ह कद्रूरुवाच—त्वमेव पत । त्वं वै न आख्यास्यसि—यतरा नौ जयतीति ॥ ६ ॥

---

सा हेति । 'सा' दूरं पश्यन्ती 'सुपर्णी' 'उवाच' । किमिति ? उच्यते—'अस्य सलिलस्य पारे अश्वः श्वेतः स्थाणौ सेवते, तमहं पश्यामि इति' । अस्यार्थं श्रुतिरेवाविष्करिष्यति । 'तमेव' मया दृष्टं श्वेताश्वमेव हे कद्रु ! 'त्वम्' अपि 'पश्यसि'—'इति' नतु ततोऽतिरिक्तम् । सा कद्रूः दूरं विलोक्य 'तं हि'—'इति' 'उवाच' । तमश्वं खलु त्वं पश्यसीत्यर्थः । ततोऽधिकमपि दृष्ट्वा कद्रूः पुनर्ब्रूते । किमिति उच्यते—'तस्य वालो न्यषञ्जि, तममुं वातो धूनोति, तमहं पश्यामि इति' । 'वालः' पुच्छं 'न्यषञ्जि' स्थाणौ निषक्तमभूत्, 'तं' वालं 'वातः' वायुः 'धूनोति' कम्पयति ॥ ४ ॥

सुपर्ण्यभिहितस्य अस्य सलिलस्येत्यादेस्तात्पर्यं श्रुतिरेवाह—सा यत्सुपर्ण्युवाचेति । अस्य सलिलस्येत्यादि । 'सलिलं' सागरादिसम्बद्धं यथा अनतिलङ्घ्यं भवति, एवं वेदिरपीति सलिलत्वेन निरूप्यते । अग्नेः शुक्लभास्वरत्वात् सर्वाशनत्वाच्च श्वेतरूपत्वम् । यूपस्य स्थाणुत्वं तु साक्षादेव । कद्र्वा यदुक्तं तस्य वाल इत्यादिकम्, तदभिप्रायं दर्शयति—अथ यत् कद्रूरित्यादिना । रशना हैव सेति । वालवदतिदैर्ध्याद्युपवेष्टिता रशना वालमित्युच्यते ॥ ५ ॥

सा ह सुपर्ण्युवाचेति । सा ह कद्रूरित्यादि । सुपर्ण्या श्वेताश्वादेर्दर्शनार्थमाहूता कद्रूः । सुपर्णि ! त्वदृष्टस्य वालस्य सुसिद्धत्वात् 'त्वमेव' दृष्ट्वाऽऽवयोः कस्या जय इति ब्रूहीत्यर्थः ॥ ६ ॥

सा ह सुपर्णी पपात । तद्ध तथैवास यथा कद्रूरुवाच तामागतामभ्युवाद त्वमजैषी ३ रहा ३ मिति त्वमिति होवाचैतद्व्याख्यानꣳ सौपर्णीकाद्रवमिति ॥ ७ ॥ ( शतम् १९०० )

सा ह कद्रूरुवाच । (चा) आत्मानं वै त्वाऽजैषं दिव्यसौ सोमस्तं देवेभ्य ऽआहर तेन देवेभ्यऽआत्मानं निष्क्रीणीष्वेति तथेति सा च्छन्दाꣳसि ससृजे सा गायत्री दिवः सोममाहरत् ॥ ८ ॥

( द्वि ) हिरण्मय्योर्ह कुश्योरन्तरवहितऽआस । ते ह स्म क्षुरपवी निमेषं निमेषमभिसन्धत्तो दीक्षातपसौ हैव ते ऽआसतुस्तमेते गन्धर्वाः सोमरक्षा जुगुपुरिमे धिष्ण्याऽइमा होत्राः ॥ ९ ॥

---

सा ह सुपर्णी पपात । तद्ध तथैवास—यथा कद्रूरुवाच । तामागतामभ्युवाद—त्वमजैषी ३ रहा ३ मिति । त्वमिति होवाच । एतद्व्याख्यानं सौपर्णीकाद्रवमिति ॥ ७ ॥

सा ह कद्रूरुवाच—आत्मानं वै त्वाऽजैषम् । दिव्यसौ सोमः—तं देवेभ्य आहर । तेन देवेभ्य आत्मानं निष्क्रीणीष्वेति । तथेति । सा छन्दांसि ससृजे । सा गायत्री दिवः सोममाहरत् ॥ ८ ॥

हिरण्मय्योर्ह कुश्योरन्तरवहित आस । ते ह स्म क्षुरपवी निमेषं निमेषमभिसन्धत्तः । दीक्षातपसौ हैव तेऽआसतुः । तमेते गन्धर्वाः सोमरक्षा जुगुपुः । इमे धिष्ण्याः, इमा होत्राः ॥ ९ ॥

---

सा ह सुपर्णी पपातेति । एवमुक्ता सुपर्णी । गत्वा कद्रूक्तं वास्तवमवगत्य पुनः 'आगतां' 'तां' सुपर्णीं कद्रूः 'उवाद'—"त्वमजैषी ३ रहा ३ मिति" । प्रश्ने प्लुतिः ( पा. सू. ८ । २ । १०० ) । तया पृष्टा सुपर्णी 'त्वमजैषीः' 'इति' उवाच । विहितस्याख्यानस्य प्रसिद्धत्वाविष्करणाय नाम करोति—एतद्व्याख्यानमिति । 'एतत्' दिवि वै सोम आसीदित्यादि होवाचेत्येतदन्तमित्यर्थः ( तै. सं. ६ । १ । ६ । १ ) ( ऐ. ब्रा. ३।३।१।२;६।३।६ ) ॥ ७ ॥

सा ह कद्रूरुवाचेति । पराजितया सुपर्ण्या गायत्र्यादिच्छन्दांसि सृष्ट्वा गायत्र्या दिवि स्थितं सोममाहृत्य देवेभ्यः सकाशादात्मनिष्क्रयणं कृतमित्यर्थः "सा ह कद्रूरुवाच आत्मानं वै त्वाऽजैषम्" इत्यादिनोक्तः॥८॥

"सा गायत्री दिवः सोममाहरत्"—इति यत् संग्रहेणोक्तम्, तद्विस्पष्टयति—हिरण्मय्योर्ह कुश्योरित्यादिना । हिरण्मय्योः कुश्योः आयुधयोः 'अन्तः' 'अवहितः' आच्छन्नः सोमोऽभूत् । "जानपद०" ( पा. सू. ४ । १ । ४२ ) इत्यादिना अयोविकारार्थात् कुशशब्दात् ङीष् । 'ते' कुश्यौ क्षुरपवी क्षुरधारे इव तीक्ष्णाग्रे 'निमेषं-निमेषं' सर्वदेत्यर्थः । 'अभिसन्धत्तः' यथाऽन्यो नापहरेदेवं रक्षत इत्यर्थः । कुश्योर्वास्तवस्वरूपमाह—दीक्षातपसाविति । तमेते गन्धर्वा इति । 'सोमरक्षाः' सोमरक्षकाः 'एते गन्धर्वाः' 'तं' 'सोमं' 'जुगुपुः' । ते के ? ये इमे' सदसि वर्त्तमानाः 'धिष्ण्याः', 'इमा होत्राः' इमे होत्रकाः, होतृवर्जमैत्रावरुणादयः ॥ ९ ॥

( स्तु ) तयोरन्यतरां कुशीमाचिच्छेद । तां देवेभ्यः प्रददौ सा दीक्षा तया देवाऽअदीक्षन्त ॥ १० ॥

( न्ताथ ) अथ द्वितीयां कुशीमाचिच्छेद । तां देवेभ्यः प्रददौ तत्तपस्तया देवास्तपऽउपायन्नुपसदस्तपो ह्युपसदः ॥ ११ ॥

खदिरेण ह सोममाचखाद । तस्मात्खदिरो यदेनेनाखिदत्तस्मात्खादिरो यूपो भवति खादिरः स्फ्योऽच्छावाकस्य हैनं गोपनायां जहार सोऽच्छावाकोऽहीयत ॥ १२ ॥

तमिन्द्राग्नी ऽअनुसमतनुताम् । प्रजानां प्रजात्यै तस्मादैन्द्राग्नोऽच्छावाकः ॥ १३ ॥

---

तयोरन्यतरां कुशीमाचिच्छेद । तां देवेभ्यः प्रददौ । सा दीक्षा । तया देवा अदीक्षन्त ॥ १० ॥

अथ द्वितीयां कुशीमाचिच्छेद । तां देवेभ्यः प्रददौ । तत्तपः । तया देवास्तप उपायन् उपसदः । तपो ह्युपसदः ॥ ११ ॥

खदिरेण ह सोममाचखाद । तस्मात् खदिरो—यदेनेनाखिदत् । तस्मात् खादिरो यूपो भवति । खादिरः स्फ्यः । अच्छावाकस्य हैनं गोपनायां जहार । सोऽच्छावाकोऽहीयत ॥ १२ ॥

तमिन्द्राग्नी अनुसमतनुताम्—प्रजानां प्रजात्यै । तस्मादैन्द्राग्नोऽच्छावाकः ॥ १३ ॥

---

तयोरन्यतरां कुशीमाचिच्छेदेति । गायत्री 'तां' छित्वा च 'देवेभ्यः' 'प्रददौ' । 'तया देवा अदीक्षन्त' ॥ १० ॥

अथ द्वितीयामिति । गायत्र्या छिन्ना द्वितीया कुशी देवेभ्यो दत्ता; सा तपोनामोपसद इत्याह—तपो ह्युपसद इति ॥ ११ ॥

खदिरेण हेति । सोमाहरणसमये खदिरस्यातिसारत्वात् तं साधनं कृत्वा सोमं भक्षितवती, अतः खादनसाधनत्वात् खदिर इति नाम सम्पन्नम् । अतः खदिरस्य सोमाहरणोपयोगात् सोमयागे यूपः स्फ्यश्च खादिरौ कर्त्तव्यौ । 'अच्छावाकस्य' 'गोपनायाम्' । होत्रकाणामेव सोमरक्षकगन्धर्वरूपत्वादच्छावाकाख्यो होत्रको यदा सोमरक्षकेषु मध्ये रक्षितवान्, तदा गायत्री 'जहार'; अतः 'अच्छावाकः' 'अहीयत' हीनो निकृष्टोऽभूत् । अत एवेतरहोत्रकवत् प्रथमत एव सदःप्रवेशमपि (न) समालभत ॥ १२ ॥

तमिन्द्राग्नी इति । 'तं' हीनमच्छावाकम्, 'इन्द्राग्नी' ऐन्द्राग्नशस्त्रपाठेन सन्तुष्टौ, 'अनुसमतनुताम्' सन्तानमनुप्रवेशमकुरुताम् । अतः 'अच्छावाकः' 'ऐन्द्राग्नः' इन्द्राग्निदेवताकः । तथा चोत्तरत्र अच्छावाकचमसहोमकाले[1] आम्नास्यते ( श. प. ब्रा. ४ । ३ । १ । १, २ । )—"अहीयत वा अच्छावाकस्तमिन्द्राग्नी"—इत्यादिना ॥ १३ ॥

---

१—'अच्छावाकहोमकाले' इति क. पा. ।

( स्तु ) तुस्मादीक्षिता राजानं गोपायन्ति । नेन्नोऽपहरानिति तुस्मा-त्तत्र सुगुप्तं चिकीर्षेद्यस्य ह गोपनायामपहरन्ति हीयते ह ॥ १४ ॥

तुस्माद्ब्रह्मचारिण ऽआचार्यं गोपायन्ति । गृहान्पशून्नेन्नोऽपहरानिति तुस्मात्तत्र सुगुप्तं चिकीर्षेद्यस्य ह गोपनायामपहरन्ति हीयते ह तेनैतेन सुपर्णी देवेभ्य ऽआत्मानं निरक्रीणीत तुस्मादाहुः पुण्यलोक ऽईजान ऽइति ॥ १५ ॥

( त्सृ ) ऋणꣳ ह वै पुरुषो जायमान एव । मृत्योरात्मना जायते स यद्यजते यथैव तत्सुपर्णी देवेभ्य ऽआत्मानं निरक्रीणीतैवमेवैष ऽएतन्मृत्योरात्मानं निष्क्रीणीते ॥ १६ ॥

तेन देवा ऽअयजन्त । तमेते गन्धर्वाः सोमरक्षा ऽअन्वाजग्मुस्तेऽन्वागत्याब्रुवन्ननु नो यज्ञऽआभजत मा नो यज्ञादन्तर्गातास्त्वेव नोऽपि यज्ञे भाग इति ॥ १७ ॥

ते होचुः । किं नस्ततः स्यादिति यथैवास्यामुत्र गोप्तारोऽभूमैवमेवास्यापीह गोप्तारो भविष्याम इति ॥ १८ ॥

---

तस्माद् दीक्षिता राजानं गोपायन्ति—नेन्नोऽपहरानिति । तस्मात्तत्र सुगुप्तं चिकीर्षेत्—यस्य ह गोपनायामपहरन्ति । हीयते ह ॥ १४ ॥

तस्माद्ब्रह्मचारिण आचार्यं गोपायन्ति । गृहान् पशून्नेन्नोऽपहरानिति । तस्मात्तत्र सुगुप्तं चिकीर्षेद्—यस्य ह गोपनायामपहरन्ति । हीयते ह । तेनैतेन सुपर्णी देवेभ्य आत्मानं निरक्रीणीत । तस्मादाहुः—पुण्यलोक ईजान इति ॥ १५ ॥

ऋणं ह वै पुरुषो जायमान एव मृत्योरात्मना जायते । स यद् यजते—यथैव तत् सुपर्णी देवेभ्य आत्मानं निरक्रीणीत—एवमेवैष एतन्मृत्योरात्मानं निष्क्रीणीते ॥ १६ ॥

तेन देवा अयजन्त । तमेते गन्धर्वाः सोमरक्षा अन्वाजग्मुः । तेऽन्वागत्याब्रुवन्—अनु नो यज्ञ आभजत, मा नो यज्ञादन्तर्गात, अस्त्वेव नोऽपि यज्ञे भाग इति ॥ १७ ॥

ते होचुः—किं नस्ततः स्यादिति । यथैवास्यामुत्र गोप्तारोऽभूम—एवमेवास्यापीह गोप्तारो भविष्याम इति ॥ १८ ॥

---

तस्माद्दीक्षिता राजानमित्यादि । औपोद्घातिकं वाक्यं स्पष्टम् । 'अपहरान्' अपहरेयुः ॥ १४ ॥ १५ ॥ सोमाहरणप्रसङ्गात् सुपर्णीदृष्टान्तमुखेन मृत्युभयपरिहाराय सोमयागस्यावश्यकर्त्तव्यतामाह—ऋणं ह वै पुरुषो जायमान एव मृत्योरात्मना जायत इत्यादिना । 'जायमान एव मृत्योः' ऋणभावे जननमेवोपाधिरित्यर्थः । इदमृणं प्रातिभाव्यवदन्यत आयातं न भवति, किन्तु स्वत एवायातमित्येवमर्थमाह—'आत्मना'—इति ॥ १६ ॥ तेन देवा अयजन्तेत्यादि । 'तेन' गायत्र्याहृतेन । अनु नो यज्ञ आ भजतेति । 'नः' अस्मानपि

तथेति देवा ऽअब्रुवन् । ( न्तसो ) सोमक्रयणा व इति तानेभ्यऽ एतत्सोमक्रयणाननुदिशत्यथैनानब्रुवंस्तृतीयसवने वो घृत्याऽऽहुतिः प्राप्स्यति न सौम्याऽपहृतो हि युष्मत्सोमपीथस्तेन सोमाहुतिं नार्हथेति सैनानेषा तृतीयसवनऽएव घृत्याऽऽहुतिः प्राप्नोति न सौम्या यच्छालाकैर्धिष्ण्यान्व्याघारयति ॥ १९ ॥

( त्य ) अथ यदग्नौ होष्यन्ति । तद्वोऽविष्यतीति स यदग्नौ जुह्वति तदेनानवत्यथ यद्वः सोमं बिभ्रत ऽउपर्युपरि चरिष्यन्ति तद्वोऽविष्यतीति स यदेनान्त्सोमं बिभ्रत ऽउपर्युपरि चरन्ति तदेनानवति तस्मादध्वर्युः समया धिष्ण्यान्नातीयादध्वर्युर्हि सोमं बिभर्त्ति तमेते व्यात्तेन प्रत्यासते सऽएतेषां व्यात्तमापद्येत तमग्निर्वाभिदहेद्यो वाऽयं देवः पशूनामीष्टे स वा हैनमभिमन्येत तस्माद्यद्यध्वर्योः शालायामर्थः स्यादुत्तरेणैवाग्नीध्रीयꣳ सञ्चरेत् ॥ २० ॥

---

तथेति देवा अब्रुवन् । सोमक्रयणा व इति । तानेभ्य एतत् सोमक्रयणाननुदिशति । अथैनानब्रुवन्–तृतीयसवने वो घृत्याऽऽहुतिः प्राप्स्यति, न सौम्या; अपहृतो हि युष्मत्सोमपीथः । तेन सोमाहुतिं नार्हथ इति । सैनानेषा तृतीयसवनऽएव घृत्याऽऽहुतिः प्राप्नोति, न सौम्या । यच्छालाकैर्धिष्ण्यान् व्याघारयति ॥ १९ ॥

अथ यदग्नौ होष्यन्ति–तद् वोऽविष्यतीति । स यदग्नौ जुह्वति–तदेनानवति । अथ यद् वः सोमं बिभ्रते उपर्युपरि चरिष्यन्ति–तद्वोऽविष्यतीति । स यदेनान् सोमं बिभ्रते उपर्युपरि चरन्ति–तदे-

---

अस्मिन् ' यज्ञे ' ' अन्वाभजत ' अन्वाभाजयत, हविर्भागयुक्तान् युष्मानस्मानपि भागिनः कुरुत । उक्तवैपरीत्यप्रतिषेधः–मा नो यज्ञादिति । ' अन्तर्गात ' अन्तारितान् मा कार्ष्ट । " इणो गा लुङि "–( पा. सू. २ । ४ । ४५ ) इति गादेशे, " गातिस्था "–( पा. सू. २।४।७७ ) इति सिचो लुक् ॥ १७ ॥ १८ ॥

तथेतीति । सोमक्रयणा व इतीति । सोमः क्रीयते यैर्गन्धर्वादिभिः, ते ' सोमक्रयणाः ', ' वः ' युष्माकं ' तान् ' भागान् एतस्मिन् सोमक्रयकाले ' एभ्यः ' गन्धर्वेभ्यः, धिष्ण्यरूपेणावस्थितेभ्यः ' अनुदिशत ' अनुदिशेत्; एते युष्मभ्यं भागा इति ब्रूयात् । घृतेभवा ' घृत्या ' घृतसाध्या, ' सा ' ' तृतीयसवने ' युष्मान् ' प्राप्स्यति ', ' न सौम्या '; ' अपहृतो हि युष्मत्सोमपीथः ' इति । पातव्यः सोमः ' सोमपीथः ' सोमस्यास्मदर्थमेवापहृतत्वादित्यर्थः । यच्छालाकैर्धिष्ण्यान् व्याघारयतीति । ' यद् ' यया आहुत्या ' शालाकैः ' तृणसमूहैः विहृतान् ' धिष्ण्यान् ' घृतेन ' व्याघारयति ' सैषा घृतेति ॥ १९ ॥

अथ यदग्नौ होष्यन्तीति । ' अथ ' प्रदीपनानन्तरम्, ' अग्नौ ' प्रदीप्ते, अग्निष्वित्यर्थः । ' होष्यन्ति ', ' तद् ' आज्यं ' वः ' युष्मान् ' अविष्यति ' तर्पयिष्यति ' इति ' देववाक्यम् । तत्तात्पर्यं श्रुतिः स्वयमेव

( त्ते ) ते वा ऽएते । सोमस्यैव गुप्त्यै न्युप्यन्तऽआहवनीयः पुरस्ता-न्मार्जालीयो दक्षिणत ऽआग्नीध्रीयऽउत्तरतोऽथ ये सदसि ते पश्चात् ॥२१॥

( त्ते ) तेषां वाऽअर्द्धाननुपकिरन्ति । ( न्त्य ) अर्द्धाननुदिशन्त्येतऽउ हैवैतद्दध्रिरेऽर्द्धान्न ऽउपकिरन्त्वर्द्धाननुदिशन्तु तथा यस्माल्लोकादागताः स्मो दिवस्तथा तं लोकं प्रति प्रज्ञास्यामस्तथा न जिह्मा ऽएष्याम इति॥२२॥

स यानुपकिरन्ति । तेनास्मिँल्लोके प्रत्यक्षं भवन्त्यथ याननुदिशन्ति तेनामुष्मिँल्लोके प्रत्यक्षं भवन्ति ॥ २३ ॥

---

नानवति । तस्मादध्वर्युः समया धिष्ण्यान्नातीयात् । अध्वर्युर्हि सोमं बिभर्ति । तमेते व्यात्तेन प्रत्यासते । स एतेषां व्यस्तमापद्येत। तमग्निर्वाभिदहेत्, यो वाऽयं देवः पशूनामीष्टे—स वा हैनमभि-मन्येत । तस्माद् यद्यध्वर्योः शालायामर्थः स्यात्—उत्तरेणैवाग्नीध्रीयं सञ्चरेत् ॥ २० ॥

ते वा एते सोमस्यैव गुप्त्यै न्युप्यन्ते—आहवनीयः पुरस्तात्, मार्जालीयो दक्षिणतः, आग्नीध्रीय उत्तरतः अथ ये सदसि—ते पश्चात् ॥ २१ ॥

तेषां वाऽअर्द्धाननुपकिरन्ति,अर्द्धाननुदिशन्ति । एत उ हैतद् दध्रिरे—अर्द्धान्न उपकिरन्तु,अर्द्धाननु-दिशन्तु । तथा यस्माल्लोकादागताः स्मो दिवः—तथा तं लोकं प्रतिप्रज्ञास्यामः । तथा न जिह्मा एष्याम इति ॥ २२ ॥

स याननुपकिरन्ति—तेनास्मिँल्लोके प्रत्यक्षं भवन्ति । अथ याननुदिशन्ति—तेनामुष्मिँल्लोके प्रत्यक्षं भवन्ति ॥ २३ ॥

---

दर्शयति—स यदग्नौ जुह्वतीति । तर्हि सोमाहुतिः कथं लभ्यत इति तत्राह—अथ यद् वः सोमं बिभ्रत उपर्युपरि चरिष्यन्ति, तद् वोऽविष्यतीति । स्पष्टमन्यत् । सोमधारकस्याध्वर्योर्धिष्ण्यातिक्रमं प्रसक्तं निषे-धति—तस्मादध्वर्युः समया धिष्ण्यान्नातीयादिति । तमेते व्यात्तेन प्रत्यासत इत्यादि । 'तम्' अध्वर्युम् 'एते' सोमरक्षकाः धिष्ण्याग्नयः 'व्यात्तेन' विवृतेनास्येनोपलक्षिताः सन्तः, प्रतीक्ष्य निवसन्ति । 'सः' अपि धिष्ण्यानतिक्रामन् 'एतेषां' 'व्यात्तं' विवृतं मुखं प्रविशेत् । प्रवेशे का हानिरित्यत आह—तमग्निर्वाऽभिदहेद् यो वाऽयं देवः पशूनामिति । स वा हैनमभि मन्येतेति । अभिमानो हिंसेच्छा । तर्हि सञ्चारेऽपेक्षिते क उपाय इति तं दर्शयति—तस्माद् यद्यध्वर्योः शालायामिति । 'यदि' 'अर्थः स्यात् शालायां' प्राग्वंशे प्रयोजनं भवेत् ॥ २० ॥

धिष्ण्यानां सोमरक्षकत्वमभिधातुं सर्वेषां तद्रक्षकत्वमाह—ते वा एते सोमस्यैवेति ॥ २१ ॥

सर्वेषां सोमरक्षकत्वे समाने सदोगतानां धिष्ण्यानामिव कथमितरेषामनुदेशनं नास्तीत्यत आह—तेषां वा अर्द्धा-ननुपकिरन्त्यर्द्धाननुदिशन्तीत्यादिना । अनुदेशो नाम विद्यमानपदार्थ एवं भवतीति निर्देशः । अत एवाहव-नीयादौ तत्तद्गन्धर्वात्मना "सम्राडसि कृशानुः"—( वा. सं. ५ । ३२ । ८ ) इत्याद्यनुदेशः क्रियते । अर्द्धा धिष्ण्याः कर्त्तव्याः, केचन अनुदेश्या इति विधिरुन्नीयते । द्वैरूप्ये कारणमाह—तथा यस्मादिति । 'तथा'

ते वै द्विनामानो भवन्ति । ( न्त्ये ) एत॒ उऽउ हैवैतद्द॑धिरे न वा॒ ऽएभि॒र्नामभिरराल्स्म येषां नः सोमम॑पाहार्षुर्हन्त द्वितीयानि नामानि करवामहा॒ऽइति ते द्वितीयानि नामान्यकुर्वत तैरराध्नुवन्यानुपहूतसोमपीथान्त्सतो॒ऽथ यज्ञ॒ ऽआभजंस्तस्माद्द्विनामानस्तस्माद्ब्राह्मणोऽनृद्ध्यमाने द्वितीयं नाम कुर्वीत राध्नोति हैव य॒ एवं विद्वान्द्वितीयं नाम कुरुते ॥ २४ ॥

स यदग्नौ जुहोति । तद्देवेषु जुहोति तस्माद्देवाः सन्त्यथ यत्सदसि भक्षयन्ति तन्मनुष्येषु जुहोति तस्मान्मनुष्याः सन्त्यथ यद्धविर्धानयोर्नाराशꣳसाः सीदन्ति तत्पितृषु जुहोति तस्मात्पितरः सन्ति ॥ २५ ॥

---

ते वै द्विनामानो भवन्ति । एतऽउ हैवैतद् दध्रिरे । न वाऽएभिर्नामभिरराल्स्म—येषां नः सोममपाहार्षुः, हन्त द्वितीयानि नामानि करवामहाऽइति । ते द्वितीयानि नामान्यकुर्वत । तैरराध्नुवन् । यानपहूतसोमपीथान् सतोऽथ यज्ञऽआभजन् । तस्माद् द्विनामानः । तस्माद्ब्राह्मणोऽनृद्ध्यमाने द्वितीयं नाम कुर्वीत । राध्नोति हैव—य एवं विद्वान् द्वितीयं नाम कुरुते ॥ २४ ॥

स यदग्नौ जुहोति—तद्देवेषु जुहोति । तस्माद्देवाः सन्ति । अथ यत्सदसि भक्षयन्ति—तन्मनुष्येषु जुहोति । तस्मान्मनुष्याः सन्ति । अथ यद्धविर्धानयोर्नाराशंसाः सीदन्ति,—तत्पितृषु जुहोति । तस्मात्पितरः सन्ति ॥ २५ ॥

---

सति, धिष्ण्यनिवापाभावे सति यल्लोकं पूर्वमवस्थितं द्युलोकं ' प्रति प्रज्ञास्यामः ' जानीम इति, ' तथा न जिह्माः एष्याम इतीति ' । द्युलोकं सर्वथा परित्यज्य भूमौ कृतनिवासानां पुनर्द्युगमने सति जिह्मता स्यात् । सर्वेषां केवलमनुदेशने भूलोके प्रत्यक्षता न स्यात् । अत उभयार्थमुभयथाकरणम् ॥ २२ ॥ २३ ॥

यथा स्थानद्वैविध्यम्, एवं नामद्वैविध्यमपि, तत्तु सङ्केतपूर्वकमित्याह—**ते वै द्विनामानो भवन्त्येत उ हैवैतद्दधिर** इति । नामान्तरधारणविषये मतिं चक्रुरित्यर्थः । पूर्वेषां नाम्नामपरितोषे कारणमाह—**न वा एभिर्नामभिरराल्स्मेति** । ' न अराल्स्म ' समृद्धा न भवामः । येषामित्यादि, स्पष्टम् । " विभूरसि प्रवाहणः "—( वा. सं. ९ । ३१ ) इत्याद्यग्न्युपस्थानमन्त्रेषु प्रतिपादितानि द्विनामानि । द्वितीयनाम्ना प्राप्तां समृद्धिं दर्शयति—**यानपहूतसोमपीथान्त्सतोऽथ यज्ञ आभजन्निति** । यज्ञभागन्तु " तृतीयसवने वो घृत्याऽऽहुतिः प्राप्स्यति " इत्युक्तमित्यर्थः ॥ २४ ॥

अथ प्रसङ्गात् सोमयागं देवमनुष्यपितृद्वारेण सर्वजगत्स्थितिहेतुरिति प्रशंसति—**स यदग्नौ जुहोतीति** । अग्नौ तत्तद्देवोद्देशेन होम एव सर्वदेवेषु होमो भवति । ' तस्मात् ' यज्ञभागलाभात् ' देवाः ' ' सन्ति ' आत्मानं लभन्ते; इदानीमपि ' अपराभूताः ' अविनष्टा वर्त्तन्त इत्यर्थः । एवं मनुष्यपितृवाक्ये अपि योज्ये । **अथ यद्धविर्धानयोर्नाराशंसाः सीदन्ति, तत् पितृषु जुहोतीति** । हविर्धानशकटस्य दक्षिणभागे चमसेषु ( ऋ. सं. १० । १६ । ८ ) ये सोमा हुतावशिष्टा भक्षिताः पुनराप्यायिताश्च वर्तन्ते, ते नाराशंसाः; तेन पितृदेवत्याः । तत्र स्थानेषु पितृषु जुहोति ॥ २५ ॥

या वै प्रजा यज्ञेऽनन्वाभक्ताः । पराभूता वै ता एवमेवैतद्या इमाः प्रजाऽ-अपराभूतास्ता यज्ञ ऽआभजति मनुष्याननु पशवो देवाननु वयाᳪस्योषधयो वनस्पतयो यदिदं किञ्चैवमु तत्सर्वं यज्ञ ऽआभक्तं ते ह स्मैत ऽउभये देवमनुष्याः पितरः सम्पिबन्ते सैषा सम्पा ते ह स्म दृश्यमानाऽ-एव पुरा सम्पिबन्त ऽउतैतर्ह्यदृश्यमानाः ॥ २६ ॥

इति पञ्चमप्रपाठके प्रथमं ब्राह्मणम् ॥ ५ ॥ १ ॥ ( ६–२ )

सर्वं वा ऽएषोऽभिदीक्षते । यो दीक्षते यज्ञᳪं ह्यभि दीक्षते यज्ञᳪं ह्येवेदᳪं सर्वमनु तं यज्ञᳪं सम्भृत्य यमिममभिदीक्षते सर्वमिदं विसृजते ॥ १ ॥

---

या वै प्रजा यज्ञेऽनन्वाभक्ताः–पराभूता वै ताः । एवमेवैतद्–या इमाः प्रजा अपराभूताः–ता यज्ञऽ-आभजति । मनुष्याननु पशवः, देवाननु वयांसि, ओषधयः, वनस्पतयो–यदिदं किञ्च । एवमु तत्सर्वं यज्ञ आभक्तम् । ते ह स्मैतऽउभये देवमनुष्याः पितरः सम्पिबन्ते । सैषा सम्पा । ते ह स्म दृश्यमाना एव पुरा सम्पिबन्ते, उतैतर्ह्यदृश्यमानाः ॥ २६ ॥

**वैसर्जनहोमः ।**

सर्वं वाऽएषोऽभिदीक्षते यो दीक्षते–यज्ञं ह्यभिदीक्षते । यज्ञं ह्येवेदं सर्वमनु । तं यज्ञं सम्भृत्य–यमिममभिदीक्षते–सर्वमिदं विसृजते ॥ १ ॥

---

**या वै प्रजा** इति । 'या वै प्रजाः' देवपितृमनुष्यव्यतिरिक्ताः, असुररक्षःप्रभृतिकाः, 'ताः' 'पराभूताः' विनष्टा अभवन् । याप्येवं पूर्वमासीत् परमा च । 'एतद्' इदानीमपि, 'अपराभूताः' 'याः' सन्ति, 'ताः' देवाद्याः 'यज्ञे' 'आभजति' । अस्तु तेषां यज्ञभागः, तदितरेषां पशुपक्षिप्रभृतीनां कथं यज्ञेऽनुप्रवेश इति, तत्प्रकारमाह–**मनुष्याननु पशव** इति । वयसामन्तरिक्षसञ्चारसाम्येन देवानुप्रवेशाभिधानम् । ओषध्यादीनां रक्षकाभावेन देवाधीनस्थितिकत्वम् । **उभये देवमनुष्याः पितर** इति । देवमनुष्य एको राशिः, पितरश्चैकः, द्वैराश्यमापन्ना उभयेऽपि 'सम्पिबन्ते' साहित्येनैकीभावेन सह पानं कुर्वन्ति । 'सैषा' 'सम्पा' सहपीतिः । "आतश्चोपसर्गे"–(पा. सू. ३ । १ । १३६) इति भावे अङ् । प्रथमं देवैरग्निमुखेन पानम्, पश्चान्मनुष्यैः सदसि शेषपानम्, पश्चान्नाराशंसेन पितॄणाम्; इत्येवंरूपानुसन्धेयेत्यर्थः । तेषामागमनमेव न दृश्यते, कुतः सहपानमिति, तत्राह–**ते ह स्म दृश्यमाना एवे**ति ( का. श्रौ. सू. ८ । १९६–१६४ ) ॥ २६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे षष्ठाध्याये द्वितीयं ब्राह्मणम् ॥ ( ३–६–२ ) ॥

वैसर्जनीयानि विधातुमाह–**सर्वं वा एषोऽभिदीक्षत** इति । यो दीक्षते एष इति सम्बन्धः । कथं सर्वमभीति, तत्राह–**यज्ञं ह्यभिदीक्षत** इति । यज्ञस्य कथं सर्वत्वमिति, तत्राह–**यज्ञं ह्येवेदं सर्वमन्विति** । 'इदं सर्वं' 'यज्ञम्' 'अनु'–सृत्य उत्पन्नम्; कर्म्मफलं वा सर्वस्य जगतः । 'यमिमं' सर्वं भूतं 'यज्ञम्'

---

१–धिष्ण्यान्निवपत्युद्धतावोक्षिते पुरीषन्निवपति स्फ्ये नान्वारब्ध उदङ्ङुपविश्य विभूरसीति प्रतिमंत्रं, आग्नीध्रीयं पूर्वं, सिकताश्चोपरि, रौद्रेणेति सर्वत्र, षट्सदसि, प्रत्यङ्मुखो द्वारसपरेण होतुः, दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य, होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान्ब्राह्मणाच्छ ः सिपोतृनेष्टृच्छावाकानाम्, आग्नीध्राद्दक्षिणः सम्प्रति–वेध्यन्ते दक्षिणामुखो मार्जालीयम् ॥ इति ॥

यद्वैसर्जनानि जुहोति । स यदिदꣳ सर्वं विसृजते तस्माद्वैसर्जनानि नाम तस्माद्योऽपिव्रतः स्यात्सोऽन्वारभेत यद्युऽअन्यत्र चरेन्नाद्रियेत यद्वै जुहोति तदेवेदꣳ सर्वं विसृजते ॥ २ ॥

यद्वेव वैसर्जनानि जुहोति । यज्ञो वै विष्णुः स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषामियं विक्रान्तिरिदमेव प्रथमेन पदेन पस्पाराथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेनैतामेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते यज्जुहोति तस्माद्वैसर्जनानि जुहोति ॥ ३ ॥

---

यद्वैसर्जनानि जुहोति । स यदिदं सर्वं विसृजते—तस्माद्वैसर्जनानि नाम । तस्माद्योऽपिव्रतः स्यात्—सोऽन्वारभेत । यद्युऽअन्यत्र चरेन्नाद्रियेत । यद्वै जुहोति—तदेवेदं सर्वं विसृजते ॥ २ ॥

यद्वेव वैसर्जनानि जुहोति। यज्ञो वै विष्णुः, स देवेभ्य इमां विक्रान्तिं विचक्रमे—यैषामियं विक्रान्तिः। इदमेव प्रथमेन पदेन पस्पार, अथेदमन्तरिक्षं द्वितीयेन दिवमुत्तमेन । एतामेवैष एतस्मै विष्णुर्यज्ञो विक्रान्तिं विक्रमते—यज्जुहोति । तस्माद्वैसर्जनानि जुहोति ॥३ ॥

---

'अभि—' लक्ष्य 'दीक्षते' 'तं' यज्ञं 'सम्भृत्य' वैसर्जनहोमान्तं प्राचीनमङ्गजातं कृत्वेत्यर्थः । कृष्णाजिन-मेखलादिकं तदिदं 'सर्वं' 'विसृजते'। पूर्वं व्रतपरित्यागासम्भवात् होमानन्तरं व्रतपरित्यागः ॥ १ ॥

यद् वैसर्जनानि जुहोतीति । विसर्जनसाधनत्वाद् वैसर्जनानीति नाम सम्पन्नम् । 'तस्माद्' विसर्जन-सम्बन्धित्वाद् 'योऽपिव्रतः स्यात्' व्रतं भोजनं, यजमानेन सह प्राप्तभोजनः स्याद्, बन्धुवर्गः स्यादित्यर्थः । "समपिव्रतान् ह्वयध्वमिति सम्प्रेष्यति—" (आप. श्रौ. सू. ११।१६।१२) इत्यापस्तम्बेनोक्तम्। 'सः' यजमानः 'अन्वारभेत'। यद्यपि कश्चिद् 'अन्यत्र' देशान्तरे वर्त्तते, 'तन्नाद्रियेत' सर्वथाऽऽह्वातव्य इति बुद्धिं न कुर्य्यात् । तथा च कात्यायनः—"अपिव्रताश्चान्वारभन्ते यजमानं, वाससाऽऽच्छादयत्येनान्, चरत्सु नाद्रियेत"—इति (का. श्रौ. सू. ८।१७८—१८०) 'यद् वै' यदेव जुहोति वैसर्जनानि, 'तदेवेदं' 'सर्वं' व्रतं 'विसृजते' विसर्जयेत् ॥ २ ॥

वैसर्जनहोमं प्रकारान्तरेण प्रशंसति—यद्वेव वैसर्जनानि जुहोति यज्ञो वै विष्णुरित्यादिना(तै.सं.६।३।२।१)। विक्रान्तिं विशिनष्टि—यैषामियं विक्रान्तिरिति । येयमिदानीं परिदृश्यमानप्रकारा स्वाधीनलोकत्रयरूपा 'विक्रान्तिः' इति एष यज्ञाख्यो 'विष्णुः' 'एतस्मै' यजमानाय 'विक्रमते'। विष्णोर्विक्रमणं कुतो लभ्यत इति तद् दर्शयति—यज्जुहोतीति । आहवनीयाग्नीध्रोत्तरवेदिरूपेषु त्रिषु स्थानेषु होम एवात्र यज्ञाख्यस्य विष्णोर्यजमानार्थभूरादिलोकत्रयव्याप्तिरित्यर्थः । तस्माद्वैसर्जनहोमाः कर्त्तव्या इत्यर्थः(तै. सं ६।३।२।१) ॥३॥

---

१—वैसर्जिनानि इति क्वचित् पाठः । २—"अपिव्रतास्त उच्यन्ते येषां यजमानव्रते अपित्वमस्ति । दायाद्येनाविभक्ता इति पितृभृतिः। अपिः संसर्गे। व्रतमिति कर्मनाम। संसृष्टं साधारणं कर्म येषां ते अपिव्रता अविभक्तदायादाः, ते ह्येकेनापि कृतं कृष्यादि-कर्म सर्वे "उपजीवन्ति" इति हरिस्वामिनः।

सोऽपराह्णे व्वेदिᳪ स्तीर्त्वा । ( र्त्वाऽर्द्ध ) अर्द्धव्व्रतं प्रदाय सम्प्रपद्यन्त ऽइध्ममभ्यादधत्युपयमनीरुपकल्पयन्त्याज्यमधिश्रयति स्रुचः सम्माष्टर्युपस्थे राजानं यजमानः कुरुतेऽथ सोमक्रयण्यै पदं जघनेन गार्हपत्यं परिकिरति पदा वै प्रतितिष्ठति प्रतिष्ठित्या ऽएव ॥ ४ ॥

तद्धैके । चतुर्द्धा कुर्व्वन्ति यत्राहवनीयमुद्धरन्ति तासूपयमनीषु चतुर्भागमक्षं चतुर्भागेणोपाञ्जन्त्येतासूपयमनीषु चतुर्भागं जघनेन गार्हपत्यं चतुर्भागं परिकिरति ॥ ५ ॥

तदु तथा न कुर्य्यात् । ( त्सा ) सार्द्धमेव परिकिरेज्जघनेन गार्हपत्यमथोत्पूयाज्यं चतुर्गृहीते जुह्वां चोपभृति च गृह्णाति पञ्चगृहीतं पृषदाज्यं

---

सोऽपराह्णे वेदिं स्तीर्त्वा, अर्द्धव्रतं प्रदाय, सम्प्रपद्यन्ते । इध्ममभ्यादधति । उपयमनीरुपकल्पयन्ति । आज्यमधिश्रयति । स्रुचः सम्मार्ष्टि । उपस्थे राजानं यजमानः कुरुते । अथ सोमक्रयण्यै पदं जघनेन गार्हपत्यं परिकिरति । यदा वै प्रतितिष्ठति प्रतिष्ठित्याऽएव ॥ ४ ॥

तद्धैके चतुर्द्धा कुर्वन्ति । यत्राहवनीयमुद्धरन्ति । तासूपयमनीषु चतुर्भागमक्षं चतुर्भागेणोपाञ्जन्ति । एतासूपयमनीषु चतुर्भागं जघनेन गार्हपत्यं चतुर्भागं परिकिरति ॥ ५ ॥

तदु तथा न कुर्यात् । सार्द्धमेव परिकिरेत् । जघनेन गार्हपत्यम् । अथोत्पूयाज्यं चतुर्गृहीते

---

इत्थं वैसर्जनानि विधाय तद्धोमकालं मन्त्रं च विधास्यन् अन्तरालवर्तिनमग्नीषोमीयप्रयोगमाह—सोऽपराह्णे वेदिं स्तीर्त्वेत्यादिना[1] ' । ' अपराह्णे तृतीययामे दिनस्यापराह्णकाले सौमिकवेदिं स्तीर्त्वा । अर्द्धव्रतं प्रदायेति । तस्मिन् दिने एकस्तनम्, व्रतार्द्धस्य प्रातर्व्रतार्थमुपयुक्तत्वादर्द्धव्रतं प्रदायेत्युक्तम् । स्पष्टमन्यत् । अथ सोमक्रयण्यै पदं जघनेन गार्हपत्यं परिकिरतीति । सोमक्रयकाले य एकहायन्याः सप्तमपदपांसुर्धृतः ( श. प. ब्रा. ३ । ३ । १ । ३–१० ) तं प्राचीनवंशगतस्याहवनीयस्य पश्चाद्भागे प्रक्षिपेदित्यर्थः प्रक्षेपं प्रशंसति—पदा वै प्रतितिष्ठति प्रतिष्ठित्या एवेति । पदसम्बद्धपांसोः प्रतिष्ठारूपायामाहवनीयजघनार्द्धप्रदेशलक्षणपृथिव्यां स्थापनं यजमानस्य ' पदा ' प्रतिष्ठितिर्भवति; अतः स क्षेपः ' प्रतिष्ठित्यै ' सम्पद्यते ॥ ४ ॥

पदपांसोः चतुर्द्धा विभज्य विनियोगः केषाञ्चित् पक्षः, तमुदाहृत्य निराचष्टे—तद्धैके चतुर्द्धा कुर्वन्तीत्यादिना । एतासूपयमनीष्विति । अग्नीषोमीयप्रणयनकालीनास्वित्यर्थः । अनेनैवाभिप्रायेण जघनेन सोमक्रयणी पदपांसोर्विनियोगो नोक्तः कात्यायनेन । अत्र " अग्नीषोमीयावेदेः स्तरणमग्रहणं प्रस्तरस्यापराह्णेऽर्द्धव्रते "[2] इत्यादि, " शालाद्वार्यमपरेण सोमक्रयणीपदं प्रकिरति चतुर्द्धैके "– इत्यन्तं सूत्रजातं द्रष्टव्यम् ॥ ५ ॥

तदु तथेति । अग्नीषोमीयार्थमाज्यपृषदाज्ययोर्ग्रहणं विधत्ते—अथोत्पूयाज्यं चतुर्गृहीतमिति[3] । पृषदाज्य-

---

१–इध्मं निधायाग्नीषोमीयायवेदेःस्तरणमग्रहणंप्रस्तरस्यापराह्णे, अर्द्धव्रते प्रत्ते प्रविश्यप्रणयनीयाधानम् । का. श्रौ. सू. ८।१७१–१७२
२–अग्नीषोमीयवेदेः स्तरणमग्रहणं प्रस्तरस्यापराह्णे । अर्द्धव्रतेप्रत्तेप्रविश्य प्रणयनीयाधानम् । आज्याधिश्रयणस्रुक्समार्जनोद्वासनावेक्षणानिकृत्वा शालाद्वार्यमपरेणास्ते यजमान उपस्थे सोमंकृत्वा । शालाद्वार्यमपरेण सोमक्रयणीपदं परिकिरति । चतुर्द्धैके आहवनीयस्योपयमनीष्वाग्नीध्रीयस्याक्षोपांजने च । का. श्रौ. सू. ८।७१–७५। ३–आज्यप्रोक्षणीरंतःपात्यदेश उत्पूयपश्चाज्यग्रहणम् । का. ८।७६।

ज्योतिरसि विश्वरूपं विश्वेषां देवानाᳬं समिदिति वैश्वदेवᳬं हि पृषदाज्यं धारयन्ति स्रुचो यदा प्रदीप्त इध्मो भवति ॥ ६ ॥

( त्यु ) अथ जुहोति । त्वᳬं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यऽउरु यन्ताऽसि वरूथᳬं स्वाहेति तदेतेनैवास्यां पृथिव्यां प्रतिष्ठायां प्रतितिष्ठत्येतेनेमं लोकᳬं स्पृणुते ॥ ७ ॥

( तेऽथा ) अथाप्नवे द्वितीयामाहुतिं जुहोति । जुषाणोऽअप्तुराज्यस्य वेतु स्वाहेत्येष उ हैवैतदुवाच रक्षोभ्यो वै बिभेमि यथा माऽन्तरा नाष्ट्रा रक्षाᳬंसि न हिनसन्नेवं मा कनीयाᳬंसमेव व्यधात्कृत्वाऽतिनयत स्तोकमेव स्तोको ह्यप्तुरिति तमेतत्कनीयाᳬंसमेव व्यधात्कृत्वाऽत्यनयन्त्स्तोकमेव स्तोको ह्यप्तू रक्षोभ्यो भीषा तस्मादप्नवे द्वितीयामाहुतिं जुहोति॥८॥

---

जुह्वां चोपभृति च गृह्णाति । पञ्चगृहीतं पृषदाज्यम् । "ज्योतिरसि विश्वरूपं विश्वेषां देवानां समित"–(वा.सं.५।३५) इति । वैश्वदेवं हि पृषदाज्यं धारयन्ति । स्रुचो–यदा प्रदीप्त इध्मो भवति॥६॥

अथ जुहोति–"त्वं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथं स्वाहा"–(वा. सं.५।३५) इति । तदेतेनैवास्यां पृथिव्यां प्रतिष्ठायां प्रतितिष्ठति, एतेनेमं लोकं स्पृणुते ॥ ७ ॥

अथाप्नवे द्वितीयामाहुतिं जुहोति–" जुषाणोऽअप्तुराज्यस्य वेतु स्वाहा "–( वा.सं. ५ । ३५ ) इति । एष उ हैवैतदुवाच–' रक्षोभ्यो वै बिभेमि–यथा माऽन्तरा नाष्ट्रा रक्षांसि न हिनसन्,

---

ग्रहणमन्त्रमाह–ज्योतिरसीति । हे पृषदाज्य ! त्वं ' ज्योतिः ' द्योतमानो द्योतको वा भवसि । ज्योतिर्विशेष्यते–विश्वरूपमिति । वैचित्र्याद् विश्वरूपत्वम् । आज्यस्य साधारण्येन इतरद्रव्यवत् प्रतिनियतदैवतत्वाभावात् पृषदाज्यमपि विश्वेषां देवानां समिदित्युच्यते । अनेकद्रव्यात्मकत्वाद्वा वैश्वदेवत्वम् ॥ ६ ॥

इदानीं समन्त्रकमाहवनीये वैसर्जनहोमं विधत्ते–अथ जुहोति त्वं सोम तनूकृद्भ्य इति । जुह्वा व्यापृतत्वात् प्रचरण्या होमः । मन्त्रस्यायमर्थः–हे ' सोम ' ! ' त्वं ' ' तनूकृद्भ्यः ' तनूं शरीरं कृन्तन्ति तृन्दन्तीति तनूकृन्ति रक्षांसि, द्विषन्तीति द्वेषांसि, अन्यैः अस्मद्विरोधिभिरभिचरद्भिः कृतानि प्रेरितानि, तादृशेभ्यो नियन्ताऽसि । यथा तादृशानि अस्मान् न बाधन्ते, तथा पालयसि । तस्मात् त्वमेवास्माकम् ' उरु ' प्रभूतं ' वरूथं बलम् ' असि ' । तस्मै तुभ्यमिदं सुहुतमस्तु ॥

तदेतेनेत्यादि । वैसर्जनानां लोकत्रयजयरूपत्वस्योक्तत्वाद्गार्हपत्यहोमः पृथिव्यां प्रतिष्ठारूपः । अस्यां जायापत्योश्च प्रतिष्ठोपपद्यत इति तदर्थमाह–एतेनेमं लोकं स्पृणुत इति ( तै. सं. ६ । ३ । २ । २ ) ॥७॥

आहुत्यन्तरं समन्त्रकं विधत्ते–अथाप्नवे द्वितीयामाहुतिमिति[३] ' अप्तुः ' सूक्ष्मरूपः सोमः । सः 'अप्तुः'

---

१–ध्रुवायाः पुरस्तात् पृषदाज्यमाज्यं दधिमिश्रं पंचगृहीतं ज्योतिरसीति समिदंतेन । का. श्रौ. सू. ५ । १०३ ।
२–प्रदीप्तमिध्मं त्व ᳬ सोमेति प्रचरण्याऽभिजुहोति । का. श्रौ. सू. ८।१८१। ३–जुषाणो अप्तुरिति द्वितीयम् । का.श्रौ.सू.८।१८२ ।

( त्यु ) दुद्यच्छन्तीध्मम् । ( मु ) दुपयच्छन्त्युपयमनीरथाहाग्नये प्रह्रि-यमाणायानुब्रूहि सोमाय प्रणीयमानायेति वाऽग्नये प्रह्रियमाणायानुब्रूहीति त्वेव ब्रूयात् ॥ ९ ॥

( द्यु ) आददते ग्रावणः । ( ण्णो ) द्रोणकलशं वायव्यानीध्मं कार्ष्मर्यमयान्परिधीनाश्ववालं प्रस्तरमैक्षव्यौ विधृती तद्बर्हिरुपसन्नद्धं भवति वपाश्रपण्यौ रशनेऽअरणीऽअधिमन्थनः शकलो वृषणौ तत्समादाय प्राञ्चऽआयन्ति स ऽ एष ऊर्ध्वो यज्ञ एति ॥ १० ॥

---

एवं मा कनीयांसमेव वधात् कृत्वाऽतिनयत, स्तोकमेव—स्तोको ह्यमुः ' इति । तमेतत् कनीयांसमेव वधात्कृत्वाऽत्यनयन्—स्तोकमेव—स्तोको ह्यमुः । रक्षोभ्यो भीषा । तस्मादसवे द्वितीयामाहुतिं जुहोति ॥८॥

उद्यच्छन्तीध्मम् । उपयच्छन्त्युपयमनीः । अथाह अग्नये प्रह्रियमाणायानुब्रूहि सोमाय प्रणीयमानाय—इति वा । अग्नये प्रह्रियमाणायानुब्रूहीति त्वेव ब्रूयात् ॥ ९ ॥

आददते ग्रावणः, द्रोणकलशम्, वायव्यानि, इध्मम्, कार्ष्मर्यमयान् परिधीन्, आश्ववालं प्रस्तरम्, ऐक्षव्यौ विधृती । तद् बर्हिरुपसन्नद्धं भवति, वपाश्रपण्यौ, रशने अरणी, अधिमन्थनः शकलः वृषणौ । तत् समादाय प्राञ्च आयन्ति । स एष ऊर्ध्वो यज्ञ एति ॥ १० ॥

---

आज्यस्य ' जुषाणः ' प्रीयमाणः 'वेतु' भक्षयतु आज्यम्, 'स्वाहा' सुहुतमस्तु । मन्त्रतात्पर्य्यमाह—एष उ हैवेति । ' एषः ' मन्त्रः एव, ' एतद् ' वक्ष्यमाणम् ' उवाच ' । एतच्छब्दार्थमाह—रक्षोभ्यो वा इत्यादिना । यथा माऽन्तरेति । प्रणयनकाले मध्यमार्गे शालामुखीयहविर्द्धानयोरन्तराले इत्यर्थः । कनीयांसमेव वधात्कृत्वेति । रक्षःकृताद् ' वधात् ' हेतोः ' कनीयांसं कृत्वा ' । कनीयःशब्दार्थमाह—स्तोकमेवेति । स्तोको ह्यमुरित्यादि । स्पष्टम् ॥ ८ ॥

उद्यच्छन्तीध्ममिति । उपयच्छन्त्युपयमनीरिति । इध्माधानोपयमन्युपकल्पादीनां तु कृते ( श. प. ब्रा. ३ । ९ । २ । १ ) प्रदीप्तेध्मगतम् अग्निम् ' उद्यच्छन्ति ' ऊर्ध्वं धारयेत् । तदाधारेषु नीयमानाः सिकता अपि ' उपयच्छन्ति ' अधो धारयेत् ॥

अग्नीषोमप्रणयनप्रैषविषये विकल्पपक्षं निराकृत्य " अग्नये प्रह्रियमाणाय ' इति पक्षं सिद्धान्तयति—अथाहाग्नय इत्यादिना ॥ ९ ॥

आददते ग्रावण इत्यादि । ' ग्राव्णः ' सोमाभिषवार्थान् पाषाणान् । ' द्रोणकलशः ' सोमाधारः प्रभूतः पात्रविशेषः । ' वायव्यान् ग्रहान्, वायुदेवत्यानि सोमपात्राणि । " ग्राव्णो वायव्यानि " (तै. सं. ६ । ३ ।

---

१—अग्नये प्रह्रियमाणायानुवाचयति सोमाय प्रणीयमानायेति वा । का. श्रौ. सू. ८ । १८३ । २—आहवनीयं गच्छन्त्यादाय ग्रावद्रोणकलशसोमपात्राणीध्मचतुष्टयं च सन्नद्धं वपाश्रपण्यौ रशने शकलवृषणमरणी च । का. श्रौ. सू. ८ । १८४ । ३—द्रोणकलशो द्रुममयः कलशाकारो वैकङ्कतः, यस्योपरि धाराग्रहा गृह्यन्ते । इति का. श्रौ. सू. ८ । १८४ टिप्पन्याम् । ४—नव ग्रहपात्राणि, दश चमसा, परिप्लवा, ऋतुपात्रे, ऊर्णापात्रे, स्थाल्यश्वतखः, पूतभृदाहवनीयौ, उदञ्चनः, सोमासन्दी, इत्येवमादीनि ।

तुदायत्सु व्वाचयति । ( त्य ) अग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव व्वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नुमऽउक्तिं विधेमेत्यग्निमेवैतत्पुरस्तात्करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षाᳬंस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण हरन्ति तऽआयन्त्यागच्छन्त्याग्नीध्रं तमाग्नीध्रे निदधाति ॥ ११ ॥

स निहिते जुहोति । ( त्य ) अयं नोऽअग्निर्व्वरिवस्कृणोत्वयं मृधः पुरऽएतु प्रभिन्दन् ॥ अयं व्वाजाञ्जयतु व्वाजसातावयᳬं शत्रूञ्जयतु जर्हृषाणः स्वाहेति तदेतेनैवैतस्मिन्नन्तरिक्षे प्रतिष्ठायां प्रतितिष्ठत्येतेनैतँल्लोकᳬं स्पृणुते ॥ १२ ॥

---

तदायत्सु वाचयति–"अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम "–( वा. सं. ५ । ३६ ) इति । अग्निमेवैतत् पुरस्तात्करोति । अग्निः पुरस्तान्नाष्ट्रा रक्षांस्यपघ्नन्नेति । अथाभयेनानाष्ट्रेण हरन्ति । तऽआयन्ति । आगच्छन्त्याग्नीध्रम् । तमाग्नीध्रे निदधाति ॥ ११ ॥

स निहिते जुहोति–" अयं नोऽअग्निर्वरिवस्कृणोतु । अयं मृधः पुर एतु प्रभिन्दन् । अयं वाजान् जयतु वाजसातावयं शत्रून् जयतु जर्हृषाणः स्वाहा "–( वा. सं. ५।३७) इति । तदेतेनैवैतस्मिन्नन्तरिक्षे प्रतिष्ठायां प्रतितिष्ठति, एतेनैतं लोकं स्पृणुते ॥ १२ ॥

---

२ । ३ ) इत्यादिश्रुतेरेव पात्राणां वायव्यत्वम् । 'इध्मम्' । काष्मर्यपरिध्याद्याः पश्चार्थाः तद्बर्हिरुपसन्नद्धं भवतीति । आतिथ्यायामास्तीर्णमित्यर्थः; "यदातिथ्यायां बर्हिस्तदुपसदसः, तदाग्नीषोमीयस्य " ( ऐ. ब्रा. १ । ४ । ८ ।२९। सा. भा. ) इति श्रुतेः । 'वपाश्रपण्यौ' पशुवपायाः श्रपणसाधने काष्मर्यशाखे ।'रशने' यूपपश्वर्थे द्वे । अरणी द्वे 'अधिमन्थनः शकलः' उत्तरारणेरधस्तात् स्थाप्यः । 'वृषणौ' वृषणस्थानीयौ दर्भौ । एतान् सोमार्थान् आग्नीषोमीयार्थांश्च 'समादाय' 'प्राञ्चः' 'आयन्ति' गच्छेयुः । स एष उर्ध्वो यज्ञ एतीति । अध्वर्युप्रमुखैर्यज्ञाङ्गानामुद्यमनाद् 'यज्ञः' एव 'ऊर्द्धः एति' ऊर्ध्वं गतो भवति ॥ १० ॥

तदायत्सु वाचयतीति । तेषु सर्वेषु 'आयत्सु' "अग्ने नय"–इति 'वाचयति' अध्वर्युः । तस्यायमर्थः–हे 'अग्ने' ! 'देव !' 'नय' प्रापय 'अस्मान्' 'राये' धनार्थं 'सुपथा' शोभनेन मार्गेण । त्वं 'विश्वानि' 'वयुनानि' मार्गान् 'विद्वान्' जानन् । किञ्च 'जुहुराणं' कौटिल्यम्, आचरतः 'एनः' पापं कुटिलं चेत्युभयम् 'अस्मत्' अस्मत्तः 'युयोधि' पृथक् कुरु । 'ते' तुभ्यं 'भूयिष्ठाम्' अतिप्रभूतां 'नमउक्तिं' 'विधेम' करवामेति ॥

अग्निमेवेत्यादि । स्पष्टम् । त आयन्तीति । ते प्राञ्चो गता आगच्छेयुः । कुत्रागच्छेयुः । आग्नीध्रमागच्छन्ति । सौमिकवेदेरुत्तरेण मार्गेण । तम् 'आग्नीद्ध्रे निदधाति' तं प्रणीतमग्निम् ॥ ११ ॥

स निहिते जुहोतीति । 'सः' अध्वर्युः 'निहिते' अग्नौ स्थापिते । तत्र होममन्त्रोऽयम्–अयं नो

---

१–काष्मर्यमयाः परिधय आश्ववालः प्रस्तर ऐक्षव्यौ विधृती बर्हिश्च । का. श्रौ. सू. ८ । १० । २–अग्ने नयेति वाचयति । का. श्रौ. सू. ८ ।१८५। ३–उत्तरेण सदो हृत्वाऽऽग्नीध्रेऽग्निं निदधाति । का. श्रौ. सू. ८।१८६ । ४–अयम इति जुहोत्यस्मिन् । का. श्रौ. सू. ८ । १८८ ।

तदेव निदधाति ग्राव्णः । ( व्णो ) द्रोणकलशं वायव्यान्यथेतरमादाया-यन्ति तदुत्तरेणाहवनीयमुपसादयन्ति ॥ १३ ॥

प्रोक्षणीरध्वर्युरादत्ते । स इध्ममेवाग्रे प्रोक्षत्यथ वेदिमथास्मै बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति तत्प्रोक्ष्योपनिनीय विस्रंस्य ग्रन्थिमाश्ववालः प्रस्तर उपसन्नद्धो भवति तं गृह्णाति गृहीत्वा प्रस्तरमेकवृद्बर्हिस्तृणाति स्तीर्त्वा बर्हिः कार्ष्मर्यमयान्परिधीन्परिदधाति परिधाय परिधीन्त्समिधावभ्यादधात्यभ्याधाय समिधौ ॥ १४ ॥

(धाव) अथ जुहोति । (त्यु) उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।

---

तदेव निदधाति ग्राव्णः, द्रोणकलशम्, वायव्यानि, अथेतरमादायायन्ति । तदुत्तरेणाहवनीय-मुपसादयन्ति ॥ १३ ॥

प्रोक्षणीरध्वर्युरादत्ते । स इध्ममेवाग्रे प्रोक्षति, अथ वेदिम्, अथास्मै बर्हिः प्रयच्छन्ति, तत्पुर-स्ताद्ग्रन्थ्यासादयति, तत्प्रोक्ष्योपनिनीय विस्रंस्य ग्रन्थिम् । आश्ववालः प्रस्तर उपसन्नद्धो भवति । तं गृह्णाति । गृहीत्वा प्रस्तरमेकवृद्बर्हिः स्तृणाति । स्तीर्त्वा बर्हिः कार्ष्मर्यमयान् परिधीन् परि-दधाति । परिधाय परिधीन् समिधावभ्यादधाति । अभ्याधाय समिधौ ॥ १४ ॥

अथ जुहोति–"उरु विष्णो विक्रमस्व, उरु क्षयाय नस्कृधि । घृतं घृतयोने पिब

---

अग्निरिति । तस्यायमर्थः–'अयम्' 'अग्निः' 'नः' अस्माकं 'वरिवः' धनं 'कृणोतु' । तथा 'अयम्' एव 'मृधः' संङ्ग्रामान् 'प्रभिन्दन्' 'पुर एतु'। तथा 'अयं' 'वाजसातौ' संग्रामे 'वाजान्' 'जयतु' अस्मदर्थम् । 'अयं' 'जर्हृषाणः' पुनः पुनः हृष्यन् 'शत्रून् जयतु' । 'स्वाहा' सुहुत-मस्तु इदमाज्यम् ॥

तदेतेनेत्यादि । शालामुखीयाग्नीध्रीयोत्तरवेदीनां क्रमेण भूम्यादिलोकत्रयात्मकत्वात् 'अन्तरिक्षे' 'स्पृणुते' पालयति ॥ १२ ॥

तदेवं[1] निदधातीति । स्थापयेद् ग्रावादिकम् । 'इतरम्' इध्मबर्हिरादिकम्, अग्नीषोमीयार्थम् । उत्तरे-णाहवनीयमुपसादयन्तीति[2] । उत्तरवेदिस्थस्यैवाहवनीयत्वात्तदुत्तर इत्यर्थः ॥ १३ ॥

प्रोक्षणीरध्वर्युरादत्त[3] इति । प्रोक्षणीरादाय अध्वर्युरिध्ममेव पूर्वं प्रोक्षेत् । "प्रोक्षणीरध्वर्युरादत्ते स इध्म-मेव पूर्वं प्रोक्षति" इत्यादिना प्राकृतः प्रयोगः पुनरभिधीयते; तत्र तत्र विशेषविधानार्थं प्रस्तरं पृथग्गृहीत्वा बर्हिरेकावृत्यैव स्तृणीयात् । "खरोत्तरार्द्ध एकवृत् स्तरणं पश्चाद्वोत्तरवेदेः"–इति हि सूत्रम् ( का. श्रौ. सू. ८ । १९२ ) ॥ १४ ॥

अथ जुहोतीति[4] । 'अथ' आधानसमिदाधानपर्यन्तं[5] पश्वर्थमङ्गजातं कृत्वा, पश्चाद् वैसर्जनीयं होमं तुरीयं

---

१–ग्रावद्रोणकलशसोमपात्राणि च । का. श्रौ. सू. ८ । १८७ २–उत्तरेण परिक्रम्याहवनीयस्योत्तरतो निदधात्यन्यदाज्यात्सोम-वर्जम् । का. श्रौ. सू. ८ । १८९ । ३–इध्मप्रोक्षणादि करोति का. श्रौ. सू. ८ । १९१ । ४–आहवनीयेक्षणात्कृत्वोरुविष्णविति-जुहोति । का. श्रौ. सू. ८ । १९३ । ५–'अथाघारसमिद्द्वयाधान' इति क. पा. ।

घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेति तदेतेनैवैतस्यां दिवि प्रतिष्ठायां प्रतितिष्ठत्येतेनैतं लोकꣳ स्पृणुते यदेतया जुहोति ॥ १९ ॥

यद्वेव वैष्णव्यर्चा जुहोति । कनीयाꣳसं वा ऽएनमेतद्दधात्कृत्वात्यनैषु स्तोकमेव स्तोको ह्यभूत्तमेतदभयं प्राप्य य एवैष तं करोति यज्ञमेव यज्ञो हि विष्णुस्तस्माद्वैष्णव्यर्चा जुहोति ॥ १६ ॥

( त्यु ) अथासाद्य स्रुचः । (चोऽपु) अपऽउपस्पृश्य राजानं प्रपादयति तद्यदासाद्य स्रुचोऽप ऽउपस्पृश्य राजानं प्रपादयति वज्रो वाऽआज्यꣳ रेतः सोमो नेद्वज्रेणाज्येन रेतः सोमꣳ हिनसानीति तस्मादासाद्य स्रुचोऽप ऽउपस्पृश्य राजानं प्रपादयति ॥ १७ ॥

---

प्रप्र यज्ञपतिं तिर स्वाहा "–( वा. सं. ५ । ३८ ) इति । तदेतेनैवैतस्यां दिवि प्रतिष्ठायां प्रतितिष्ठति एतेनैतं लोकं स्पृणुते–यदेतया जुहोति ॥ १९ ॥

यद्वेव वैष्णव्यर्चा जुहोति कनीयांसं वा एनमेतद्दधात्कृत्वात्यनैषुः–स्तोकमेव । स्तोको ह्यभूः । तमेतदभयं प्राप्य–य एवैष तं करोति–यज्ञमेव । यज्ञो हि विष्णुः । तस्माद्वैष्णव्यर्चा जुहोति ॥१६॥

अथासाद्य स्रुचः, अप उपस्पृश्य, राजानं प्रपादयति । तद्यदासाद्य स्रुचः, अप उपस्पृश्य राजानं प्रपादयति । वज्रो वा आज्यम्, रेतः सोमः । नेद्वज्रेणाज्येन रेतः सोमं हिनसानीति । तस्मादासाद्य स्रुचः, अप उपस्पृश्य राजानं प्रपादयति ॥ १७ ॥

---

' जुहोति ' " उरु विष्णो–" इति मन्त्रेण । अयं मन्त्रार्थः–हे ' विष्णो ! यज्ञात्मक ! त्वम् , ' उरु ' प्रभूतं द्युलोकपर्यन्तं विक्रमस्व विक्रमणं कुरु । विक्रमणप्रयोजनमाह–' क्षयाय ' अस्माकं निवासाय ' उरु ' विस्तीर्णं ' कृधि ' कुरु । ' घृतयोने ' अग्ने ! ' घृतं ' हुतं ' पिब ' । ' यज्ञपतिं ' यजमानं ' प्रतिर ' प्रपूर्वस्तिरतिर्वर्द्धने वर्तते । ' स्वाहा ' सुहुतमस्तु । तदेतेनेत्यादि । पूर्ववत् ॥ १९ ॥

मन्त्रस्य यद् वैष्णवत्वं प्राक् प्रतिपादितम्, तस्याल्पत्वपरिहारेण स्वाभाविकरूपप्राप्तिरूपत्वेन प्रशंसति–यद्वेव वैष्णव्यर्चा जुहोतीत्यादिना । तमेतदभयं प्राप्य य एवैष तं करोतीति । ' एतत् ' एतेन वैष्णवत्वकरणेन ' अभयं ' नाशकारिरक्षोभयरहितं कृत्वा ' एषः ' सोमः पूर्वं ' य एव ' यादृग्यज्ञरूपः, ' तं ' तादृग्रूपं ' करोति ' । विष्णुत्वप्रापणेन कथं स्वाभाविकरूपप्राप्तिरिति तत्राह–यज्ञो हि विष्णुरिति ॥ १६ ॥

अथासाद्य स्रुचोऽप उपस्पृश्य राजानं प्रपादयतीति । 'आसाद्य' उत्तरवेदेः पश्चाद्देशे बर्हिषि ' स्रुचः ' आसाद्य ' राजानं ' सोमं ' प्रपादयति ' हविर्द्धानं प्रवेशयति । उदकोपस्पर्शनं प्रशंसति–तस्मादासाद्येत्यादिना । वज्रो वा इत्यादि । प्रागु व्याख्यातम् (श. प. ब्रा: ३ ।४।३।११ ॥ १७ ॥

---

१–' प्रसमुपोदः पादपूरणे ' इति पा. सू. ८ । १ । ६ । प्रशब्दस्य द्वित्वम् । २–तच्च सोमानयनं यजमानकर्तृकं ब्रह्मकर्तृकं वा भवति–" हुते च सोममादायाग्निमन्वेति" " यजमानो वा सोमꣳ हरेत् " इति कात्यायनोक्तेः । का.श्रौ.सू. ( ११।३।१४। )

स दक्षिणस्य हविर्द्धानस्य नीडे कृष्णाजिनमास्तृणाति । तदेनमासादयति देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन्निति तदेनं देवायैव सवित्रे परिददाति गुप्त्यै ॥ १८ ॥

( प्त्याऽअ ) अथानुसृज्योपतिष्ठते (त८) एतत्त्वं देव सोम देवो देवा२ँ॥ ऽउपागा इदमहं मनुष्यान्त्सह रायस्पोषेणेत्यग्नीषोमौ वाऽएतमन्तर्जम्भऽआदधाते यो दीक्षतऽआग्नावैष्णवꣳ ह्यदो दीक्षणीयꣳ हविर्भवति यो वै विष्णुः सोमः स हविर्व्वाऽएष देवानां भवति यो दीक्षते तदेनमन्तर्जम्भऽआदधाते तत्प्रत्यक्षꣳ सोमान्निर्मुच्यते यदाहैतत्त्वं देव सोम देवो देवा २ँ ॥ ऽउपागा ऽइदमहं मनुष्यान्त्सह रायस्पोषेणेति भूमा वै रायस्पोषः सह भूम्नेत्येवैतदाह ॥ १९ ॥

---

स दक्षिणस्य हविर्द्धानस्य नीडे कृष्णाजिनमास्तृणाति । तदेनमासादयति–" देव सवितरेष ते सोमः, तं रक्षस्व । मा त्वा दभन्– "–( वा० सं० ५ । ३९ ) इति । तदेनं देवायैव सवित्रे परिददाति गुप्त्यै ॥ १८ ॥

अथानुसृज्योपतिष्ठते–"एतत् त्वं देव सोम देवो देवान् २ँ ॥ उपागा इदमहं मनुष्यान्त्सह रायस्पोषेण "–( वा. सं. ५ । ३९ ) इति । अग्नीषोमौ वा एतमन्तर्जम्भ आदधाते–यो दीक्षते । आग्नावैष्णवं ह्यदो दीक्षणीयं हविर्भवति । यो वै विष्णुः–सोमः सः । हविर्वाऽएष देवानां भवति–यो दीक्षते । तदेनमन्तर्जम्भे आदधाते । तत्प्रत्यक्षं सोमान्निर्मुच्यते । यदाह–एतत्त्वं देव सोम देवो देवान् २ ॥ उपागाः । इदमहं मनुष्यान्त्सह रायस्पोषेणेति । भूमा वै रायस्पोषः । सह भूम्नेत्येवैतदाह ॥ १९ ॥

---

स दक्षिणस्येति ' दक्षिणस्य ' ' हविर्द्धानस्य ' ' नीडे ' परिवृते मध्यप्रदेशे कृष्णाजिनोपरि सोमं निदध्यात् । " आसाद्याज्यानि दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन् सोमं निदधाति देव सवितरिति "–( का. श्रौ. सू. ८।१९५। ) इति सूत्रम् । " देव सवितरेष ते "–इत्यासादनमन्त्रः । स्पष्टोऽर्थः । हे सोम ! त्वां ' मा दभन् ' मा हिंसिषुः ॥ १८ ॥

अथानुसृज्योपतिष्ठत इति । ' अनुसृज्य ' विसृज्येत्यर्थः । तथा च कात्यायनः–" एतत्त्वमिति विसृज्योपतिष्ठते–" ( का. श्रौ. ८ । १९६ ) इति । मन्त्रस्यार्थः–हे ' सोम देव ! ' ' त्वम् ' इदानीं ' देवान् ' ' उपागाः ' प्राप्तोऽसि, ' अहम् ' अपि मनुष्यः सन् ' एतत् ' इदानीं ' मनुष्यान् ' अस्मदीयान् ' उपागाः ' उपागां प्राप्तोऽस्मि । न केवलः अहमेव किन्तु ' रायस्पोषेण सह ' धनपोषणसहित एव । यजमानस्याग्नीषोमयोर्जम्भानुप्रवेशेन तदीयधनस्यापि अनुप्रवेशात्, इदानीं निर्गमसाहित्यमपेक्षितम् । " अग्नीषोमौ वा एतमन्तर्जम्भे " इत्यादिकम्, एतन्मन्त्रब्राह्मणम्, " अथ प्रतिप्रस्थाता अग्रेण शालामग्नीषोमीयेण पशुना"–इत्यत्र व्याख्यातम् ( श. प. ब्रा. ३ । ३ । ४ । २१ ) । तत् एतत्त्वं देव सोम देवो देवाँ उपागा इदमहं मनुष्यान्–इत्यभिधानेन ' प्रत्यक्षम् ' एव ' सोमाद् ' विमुच्यते ॥ १९ ॥

( द्वा ) अथोपनिष्क्रामति । स्वाहा निर्व्वरुणस्य पाशान्मुच्यऽइति व्वरुणपाशे वा एषोऽन्तर्भवति योऽन्यस्यासंस्तत्प्रत्यक्षं व्वरुणपाशान्निर्मुच्यते यदाह स्वाहा निर्व्वरुणस्य पाशान्मुच्यऽइति ॥ २० ॥

( य ) अथेत्याहवनीये समिधमभ्यादधाति । (त्य) अग्ने व्व्रतपास्त्वे व्व्रतऽपाऽइत्यग्निर्हि देवानां व्व्रतपतिस्तस्मादाहाग्ने व्व्रतपास्त्वे व्व्रतपा इति या तव तनूर्म्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदिय ँ सा मयि । यथायथं नौ व्व्रतपते व्व्रतान्यनु मे दीक्षां दीक्षापतिरमँस्तानु तपस्तपस्पतिरिति तत्प्रत्यक्षमग्नेर्न्निर्मुच्यते स स्वेन सतात्मना यजते तस्मादस्यात्राश्नन्ति मानुषो हि भवति तस्मादस्यात्र नाम गृह्णन्ति मानुषो हि भवत्यथ यत्पुरा नाश्नन्ति यथा हविषोऽहुतस्य नाश्नीयादेवं तत्तस्माद्दीक्षितस्य नाश्नीयादथात्राङ्गुलीर्व्विसृजते ॥ २१ ॥

इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ५-२ ( ६. ३. ) ॥

---

अथोपनिष्क्रामति । " स्वाहा निर्वरुणस्य पाशान्मुच्ये "-( वा. सं. ५ । ३९ ) इति । वरुणपाशे वा एषोऽन्तर्भवति-योऽन्यस्यासन् । तत्प्रत्यक्षं वरुणपाशान्निर्मुच्यते । यदाह स्वाहा निर्वरुणस्य पाशान्मुच्यऽइति ॥ २० ॥

अथेत्याहवनीये समिधमभ्यादधाति " अग्ने व्रतपास्त्वे व्रतपाः "-( वा. सं. ५ । ४० ) । इति । अग्निर्हि देवानां व्रतपतिः । तस्मादाह-अग्ने व्रतपास्त्वे व्रतपा इति । " या तव तनूर्मय्यभूदेषा सा त्वयि । यो मम तनूस्त्वय्यभूदियं सा मयि । यथायथं नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिरमंस्तानु तपस्तपस्पतिः "( वा. सं. ५ । ४० ) इति । तत् प्रत्यक्षमग्नेर्निर्मुच्यते । स स्वेन सतात्मना यजते । तस्मादस्यात्राश्नन्ति । मानुषो हि भवति । तस्मादस्यात्र नाम गृह्णन्ति । मानुषो हि भवति । अथ यत् पुरा नाश्नन्ति-यथा हविषोऽहुतस्य नाश्नीयात् एवं तत् । तस्माद्दीक्षितस्य नाश्नीयात् । अथात्रांगुलीर्विसृजते ॥ २१ ॥

---

हविर्द्धानात् समन्त्रकं निष्क्रमणं विधत्ते-अथोपनिष्क्रामतीति । स्वाहा निर्वरुणस्येति । " स्वाहा निरिति निष्क्रम्य "-( का. श्रौ. सू. ८ । १९७ ) इति सूत्रम् । मन्त्रे वरुणपाशप्रसङ्गं दर्शयति-वरुणपाशो वा एषोऽन्तर्भवतीति ॥ २० ॥

अथेत्याहवनीये समिधमभ्यादधातीति[1]। समिधमेवाभ्यादधद्वान्तरदीक्षा उपैति " अग्ने व्रतपाः "- इति । तत्र स्वशरीरमग्नावेव संस्थाप्य अग्निशरीरस्य स्वस्मिन्धारणमुक्तम्, इह तु तद्वैपरीत्येन यथायथं शरीर-

---

१-अग्नेव्रतपा इत्याहवनीये समिधमाधाय । का० श्रौ० सू० ८ । १९७ ।

यूपं व्व्रक्ष्यन्वैष्णव्यर्चा जुहोति । व्वैष्णवो हि यूपस्तस्माद्वैष्णव्यर्चा जुहोति ॥ १ ॥

यद्वेव व्वैष्णव्या जुहोति । यज्ञो वै व्विष्णुर्यज्ञेनैवैतद्यूपमच्छैति तस्माद्वैष्णव्यर्चा जुहोति ॥ २ ॥

स यदि स्रुचा जुहोति । चतुर्गृहीतमाज्यं गृहीत्वा जुहोति यद्यु स्रुवेण स्रुवेणैवोपहत्य जुहोत्युरु व्विष्णो व्विक्रमस्वोरु क्षयाय नस्कृधि ॥ घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहेति ॥ ३ ॥

---

## अथ यूपसम्पादनम् ।

यूपं व्रक्ष्यन् वैष्णव्यर्चा जुहोति । वैष्णवो हि यूपः । तस्माद्वैष्णव्यर्चा जुहोति ॥ १ ॥

यद्वेव वैष्णव्या जुहोति । यज्ञो वै विष्णुः । यज्ञेनैवैतद्यूपमच्छैति । तस्माद् वैष्णव्यर्चा जुहोति॥२॥

स यदि स्रुचा जुहोति—चतुर्गृहीतमाज्यं गृहीत्वा जुहोति । यद्यु स्रुवेण—स्रुवेणैवोपहत्य जुहोति—"उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहा"—( वा. सं. ५ । ४१ ) इति ॥ ३ ॥

---

स्वीकार इति विशेषः । स स्वेन सतात्मना यजत इति । पूर्वमन्यात्मना सता, इदानीं 'स्वेन' यजमानात्मना सता 'यजते'; स्वशरीरस्य पुनः प्राप्तत्वात् । दीक्षितान्ननिषेधभावाभावयोरप्ययमेवाभिप्राय इत्याह—तस्मादस्यात्राश्नन्तीति । तस्मादिति हेतुं विवृणोति—मानुषो हीति नामग्रहणस्यापि मानुषभाव एव; अतोऽर्थाद् वैसर्जनहोमपर्यन्तं दीक्षितस्य नाम न गृह्णीयादिति विधिरुन्नीयते । यथा हविषोऽहुतस्य नाश्नीयादेवं तादिति । 'अहुतं' यथा देवातिथिषु मनुष्यो 'नाश्नीयात्' 'एवं तत्' अपि भवति; धनस्यापि यजमानेन सह प्रवेशादित्यभिप्रायः । "नामग्रहणभोजने अस्यातःकुर्वन्ति"( का. श्रौ. सू. ८।२०० ) इति सूत्रम् ॥२१॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे षष्ठाध्याये तृतीयं ब्राह्मणम् ॥ ( ३-६-३ )

अथ यूपप्रयोग उच्यते—यूपं व्रक्ष्यन्नित्यादिना । 'व्रक्ष्यन्' छेत्स्यन् । 'वैष्णव्यर्चा' आहवनीये जुहुयात् । "साऽस्य देवता"—( पा. सू. ४ । २ । २४ ) इत्यण् । "दिवं मा लेखीरन्तरिक्षं मा हिंसीः पृथिव्या सम्भव"—( वा. सं. ५ । ४३ ) इति मन्त्रेण । मन्त्रादौ लोकत्रयाक्रमणस्योक्तत्वेन विष्णुसाम्याद्वैष्णवत्वमतस्तदर्थवाच्यृचो वैष्णवत्वं युक्तम् ॥ १ ॥

ऋचो वैष्णवत्वं प्रशंसति—यद्वेव वैष्णव्या जुहोतीति । यज्ञेनैवैतद्यूपमच्छैतीति । यज्ञेनैव यूपमभिलक्ष्य गतवान् भवति ॥ २ ॥

स यदि स्रुचेत्यादि । स्पष्टम् । उरु विष्णविति । एष मन्त्रो वैसर्जनीयहोममधिकृत्य व्याख्यातः, अत एष ब्राह्मणे नेह व्याख्यातः । अत्र सूत्रम्—"यूपाहुतिं जुहोति चतुर्गृहीतं स्रुवेण वोरु विष्णविति", ( का. श्रौ. सू. ६ । ४ । ) इति ॥ ३ ॥

---

१—यूपाहुतिं जुहोति चतुर्गृहीतं स्रुवेणोरुव्विष्णविति । का. श्रौ. सू. ६ । ४ ।

यदाज्यं परिशिष्टं भवति । तदादत्ते यत्तक्षणः शस्त्रं भवति तत्तक्षा-दत्तेतऽआयन्ति स यं यूपं जोषयन्ते ॥ ४ ॥

तमेव मभिमृश्य जपति । पश्चाद्धैव प्राङ्तिष्ठन्नभिमन्त्रयतेऽत्यन्या २ँ ॥ ऽअगां नान्या २ँ॥ ऽउपागामित्यति ह्यन्यानेति नान्यानुपैति तस्मादाहा-त्यन्या २ँ॥ऽअगां नान्या २ँ॥ऽउपागामिति ॥ ५ ॥

( त्य ) अर्व्वाक्त्वा परेभ्योऽविदं परोऽवरेभ्य इति । ( त्य ) अर्व्वाग्घ्येनं परेभ्यो व्वृश्चति यऽएतस्मात्पराञ्चो भवन्ति परोऽवरेभ्य इति परो ह्येन-मवरेभ्यो व्वृश्चति यऽएतस्मादर्व्वाञ्चो भवन्ति तस्मादाहार्व्वाक्त्वा परेभ्यो ऽविदं परोऽवरेभ्य इति ॥ ६ ॥

तं त्वा जुषामहे देव व्वनस्पते देवयज्यायाऽइति । तद्यथा बहूनां मध्या-त्साधवे कर्मणे जुषेत स रातमनास्तस्मै कर्मणे स्यादेवमेवैनमेतद्बहूनां मध्यात्साधवे कर्मणे जुषते स रातमना व्वृश्चनाय भवति ॥ ७ ॥

---

यदाज्यं परिशिष्टं भवति—तदादत्ते । यत्तक्षणः शस्त्रं भवति—तत्तक्षाऽऽदत्ते । त आयन्ति । स यं यूपं जोषयन्ते ॥ ४ ॥

तमेवमभिमृश्य जपति । पश्चाद्धैव प्राङ् तिष्ठन्नभिमन्त्रयते—"अत्यन्या २ँ॥ ऽअगाम्, नान्या २ँ॥ ऽउपागाम्"—( वा. सं. ५ । ४२ ) इति । अति ह्यन्यानेति, नान्यानुपैति । तस्मा-दाह—अत्यन्या २ँ॥ऽअगाम्, नान्या २ँ॥ऽउपागामिति ॥ ५ ॥

"अर्वाक् त्वा परेभ्योऽविदम्, परोऽवरेभ्यः" ( वा. सं. ५ । ४२ ) इति । अर्वाग्घ्येनं परेभ्यो वृश्चति—यऽएतस्मात्पराञ्चो भवन्ति । परोऽवरेभ्य इति । परो ह्येनमवरेभ्यो वृश्चति—यऽएत-स्मादर्वाञ्चो भवन्ति । तस्मादाह—अर्वाक् त्वा परेभ्योऽविदम्, परोऽवरेभ्य इति ॥ ६ ॥

"तं त्वा जुषामहे देव वनस्पते देवयज्यायै"—( वा. सं. ५ । ४२ ) इति । तद् यथा—बहूनां मध्यात्साधवे कर्मणे जुषेत, स रातमनास्तस्मै कर्मणे स्यात्—एवमेवैनमेतद् बहूनां मध्या-त्साधवे कर्मणे जुषते, स रातमना व्रश्चनाय भवति ॥ ७ ॥

---

यदाज्यं परिशिष्टं भवतीति । अवशिष्टमाज्यमध्वर्युरादत्ते । यत्तक्षण इति । 'यत्' तक्षकस्य 'शस्त्रं भवति' वाशीनिशानं शिलादौ । जोषयन्ते यं यूपायालमिति, त आयन्तीति सम्बन्धः ॥ ४ ॥

तमेवमभिमृश्य जपतीति[2] 'तम्' यूपम् 'एवम्' 'अभिमृश्य जपति' "अत्यन्यानगाम्"—इत्येवंरूपेणेत्यर्थः । अथवा अभिमर्शनं न कर्त्तव्यम्, 'पश्चात्' 'प्राङ्' 'तिष्ठन् एव' 'अभिमन्त्रयते' । अत्र "यूपमभिमृशत्यत्यन्यानिति ।प्राङ् तिष्ठन्नभिमन्त्रयते वा पालाशं बहुलपर्णम्"—इत्यादि सूत्रं

---

१—आज्यशेषमादाय सतक्षागच्छति यूपम् । का. श्रौ. सू. ६ । ५ । २—अभिमृशत्यत्यन्यानिति । का. श्रौ. सू. ६ । ६ ॥

देवास्त्वा देवयज्यायै जुषन्तामिति । तद्वै समृद्धं यं देवाः साधवे कर्मणे जुषान्तै तस्मादाह देवास्त्वा देवयज्यायै जुषन्तामिति ॥ ८ ॥

( त्यु ) अथ स्रुवेणोपस्पृशति । विष्णवे त्वेति वैष्णवो हि यूपो यज्ञो वै विष्णुर्यज्ञाय ह्येनं वृश्चति तस्मादाह विष्णवे त्वेति ॥ ९ ॥

( त्यु ) अथ दर्भतरुणकमन्तर्दधाति ( त्यो ) ओषधे त्रायस्वेति वज्रो वै परशुस्तथो हैनमेष वज्रः परशुर्न हिनस्त्यथ परशुना प्रहरति स्वधिते

---

" देवास्त्वा देवयज्यायै जुषन्ताम् "–( वा. सं. ५ । ४२ ) इति । तद्वै समृद्धं–यं देवाः साधवे कर्मणे जुषान्तै–तस्मादाह–देवास्त्वा देवयज्यायै जुषन्तामिति ॥ ८ ॥

अथ स्रुवेणोपस्पृशति–" विष्णवे त्वा "–( वा. सं. ५ । ४२ ) इति । वैष्णवो हि यूपः । यज्ञो वै विष्णुः । यज्ञाय ह्येनं वृश्चति । तस्मादाह–विष्णवे त्वेति ॥ ९ ॥

अथ दर्भतरुणकमन्तर्दधाति–" ओषधे त्रायस्व "–( वा. सं. ५ । ४२ ) इति । वज्रो वै

---

द्रष्टव्यम् ( का. श्रौ. सू. ६ । ९–१० ) । मन्त्रस्यायमर्थः–हे पुरोवर्त्तिपालाशादिरूपवृक्ष ! तव प्राप्तेः पूर्वम् ' अन्यान् ' यूप्यानपि नानाजातीयान् वृक्षान् ' अत्यगाम् ' अतिक्रम्य त्वां प्राप्तोऽस्मि । एवम् ' अन्यान् ' ब्राह्मणोक्तातिरिक्तानितः परमपि ' नोपागाम् ' नोपगच्छामि । ' त्वा ' त्वाम् ' परेभ्यः ' त्वत्तोऽप्युपरि वर्त्तमाना ये सन्ति, तेभ्यः ' अर्वाक् ' अधस्तात् प्रथमं वर्त्तमानम् ' अविदम् ' । तथा ' अवरेभ्यः ' पूर्वभाविभ्यः सकाशात् त्वां ' परः ' परस्ताद् वर्त्तमानम् ' अविदम् ' । आद्यन्तयोर्वर्त्तमानानां वातातपादिकृतदोषसम्भवात् निकृष्टत्वम्, अतः सर्वेषां मध्ये वर्त्तमानं त्वामेव निर्दोषमविदमित्यर्थः । हे ' देव ! वनस्पते ' ' तं ' तादृशं वर्तमानं यूपार्हं ' त्वा ' त्वां ' देवयज्यायै ' यागार्थं 'जुषामहे' इति । मन्त्रभागस्य तात्पर्यमाह–तद्यथेति । ' यथा ' ' बहूनां ' पुरुषाणां ' मध्यात् ' एकमवकृष्य ' साधवे ' शोभनाय ' कर्मणे ' ' जुषेत ' सेवेत, ' सः ' जोष्टा ' रातमनाः ' दत्तचित्तः, कर्मार्थमङ्गीकृतमनस्कः सन् ' तस्मै कर्मणे ' तत् कर्म कर्तुं भवेत्, अथवा ' कर्मणे रातमनाः स्यात् ' कर्म कर्तुं बुद्धिः प्रवृत्तेत्यर्थः । ' एवमेवैतत् ' इति दार्ष्टान्तिकाभिधानमुक्तार्थम् ॥ ६–७ ॥

देवास्त्वेति । देवानां जोषणाभिधानस्य प्रार्थनायाः प्रयोजनमाह–तद्वै समृद्धं यं देवाः साधवे कर्मणे जुषान्ता इति । ' जुषान्तै ' जुषेरन् ॥ ८ ॥

अथ स्रुवेणेति । " विष्णवे त्वा "–' इति ' मन्त्रेण ' स्रुवेण ' 'उपस्पृशति' वृक्षम् । ' विष्णवे' यूपायेत्यर्थः । स्पृशामीति शेषः । कथं यूपस्य विष्णुत्वमिति, तत्राह–वैष्णवो हि यूप इति । ' यूपः ' ' वैष्णवो हि ' विष्णुदेवत्यः खलु । तदेव कथमिति, तत्राह–यज्ञो वै विष्णुरिति । यज्ञस्यापि विष्णुत्वे यूपस्य किमायातमित्यत आह–यज्ञाय ह्येनं वृश्चतीति ॥ ९ ॥

अथ दर्भतरुणकमिति[२] । "ओषधे त्रायस्व "–इति । कुशतरुणेन यूपं व्यवहितं कुर्यात् । हे ' ओषधे ! '

---

१–स्रुवेणोपस्पृशति विष्णवे त्वेति । का. श्रौ. सू. ६ । ११ । २–ओषध इति कुशतरुणं तिरस्कृत्य स्वधित इति परशुना प्रहरति । का. श्रौ. सू. ६ । १२ ।

मैनꣳ हिꣳसीरिति व्वज्रो वै परशुस्तथो हैनमेष व्वज्रः परशुर्न्न हिनस्ति ॥ १० ॥

स यं प्रथमꣳ शकलमपच्छिनत्ति । तमादत्ते तं वाऽअनक्षस्तम्भं व्वृश्चेदुत ह्येनमनसा व्वहन्ति तथोऽनो न प्रतिबाधते ॥ ११ ॥

तं प्राञ्चं पातयेत् । प्राची हि देवानां दिगथो उदञ्चमुदीची हि मनुष्याणां दिगथो प्रत्यञ्चं दक्षिणायै त्वेवैनं दिशः परिविबाधिषेतैषा वै दिक्पितॄणां तस्मादेनं दक्षिणायै दिशः परिविबाधिषेत ॥ १२ ॥

तं प्रच्युवमानमनुमन्त्रयते । द्यां मा लेखीरन्तरिक्षं मा हिꣳसीः पृथिव्या सम्भवेति वज्रो व्वाऽएष भवति यं यूपाय व्वृश्चन्ति तस्माद्वज्रात्प्रच्युवमानादिमे लोकाः सꣳरेजन्ते तदेभ्यऽएवैनमेतल्लोकेभ्यः शमयति तथेमाँल्लोकाञ्छान्तो न हिनस्ति ॥ १३ ॥

---

परशुः । तथो हैनमेष वज्रः परशुर्न हिनस्ति । अथ परशुना प्रहरति—" स्वधिते मैनं हिंसीः "—( वा. सं. ५ । ४२ ) इति । वज्रो वै परशुः । तथो हैनमेष वज्रः परशुर्न हिनस्ति ॥ १० ॥

स यं प्रथमं शकलमपच्छिनत्ति—तमादत्ते । तं वाऽअनक्षस्तम्भं वृश्चेद्—उत ह्येनमनसा वहन्ति—तथोऽनो न प्रतिबाधते ॥ ११ ॥

तं प्राञ्चं पातयेत् । प्राची हि देवानां दिक् । अथो उदञ्चम् । उदीची हि मनुष्याणां दिक् । अथो प्रत्यञ्चम् । दक्षिणायै त्वेवैनं दिशः परिविबाधिषेत । एषा वै दिक् पितॄणाम् । तस्मादेनं दाक्षिणायै दिशः परिविबाधिषेत ॥ १२ ॥

तं प्रच्यवमानमनुमन्त्रयते—" द्यां मा लेखीरन्तरिक्षं मा हिंसीः पृथिव्या सम्भव "—

---

त्वं प्रहारव्यथातः ' एनं ' वृक्षं ' त्रायस्व ' । ' वज्रो वै परशुः ' छेदकत्वात् परशोर्वज्रत्वम् । " स्वधिते मैनम् "—इति छेदनमन्त्रः स्पष्ट एव ॥ १० ॥

स यं प्रथममिति । प्रथमच्छिन्नं शकलं यूपावटे प्रक्षेपार्थमाददीत[1] । तं वा अनक्षस्तम्भमित्यादि । न विद्यते ' अक्षस्य ' शकटाङ्गस्य स्तम्भो यस्मिन् व्रश्चनकर्मणि, ' तम् अनक्षस्तम्भम् '; अक्षसंस्पर्शो यथा न स्यात्, एवं सर्वं वृश्चेदित्यर्थः[2] । तत्प्रयोजनमाह—उत ह्येनमनसेति । (.पक्षे ) अतो ह्यनसा यूपं नयेयुः, तदा अक्षं मा बाधिष्टेति ॥ ११ ॥

यूपस्याधः पातनविषये प्रागादिदिक्त्रयं विकल्पयति—तं प्राञ्चं पातयेदित्यादिना । अन्यस्यां दिशि पातनं निषेधति—दाक्षिणायै त्वेवैनं दिशः परिविबाधिषेतेति[3] । ' एनं ' यूपं दक्षिणायै दक्षिणस्याः ' दिशः ' परिबाधकं कारयितुमिच्छेदित्यर्थः; तस्याः पितृदेवत्यत्वात् ॥ १२ ॥

तं प्रच्यवमानमनुमन्त्रयत[4] इति । ' प्रच्यवमानम् ' अधः पतन्तमित्यर्थः । तत्प्रयोजनमाह—वज्रो वा

---

१–प्रथमं शकलं निदधाति । का. श्रौ. सू. ६ । १३ । २–अनक्षस्तंभं व्रश्चति । एकजं । का. श्रौ. सू. ६ । १४ । १५ । ३–न दक्षिणापतेत् । का. श्रौ. सू. ६ । १७ । ४–द्याम्मालेखीरिति पतंतमभिमंत्रयते । का. श्रौ. सू. ६ । १६ ।

स यदाह । द्यां मा लेखीरिति दिवं मा हिꣳसीरित्येवैतदाहान्तरिक्षं मा हिꣳसीरिति नात्र तिरोहितमिवास्ति पृथिव्या सम्भवेति पृथिव्या सञ्ज्ञानीष्वेत्येवैतदाहायꣳ हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगायेत्येष ह्येनꣳ स्वधितिस्तेजमानः प्रणयति ॥ १४ ॥

( त्यु ) अथाव्रश्चनमभिजुहोति । नेदतो नाष्ट्रा रक्षाꣳस्यनूत्तिष्ठानिति वज्रो वाऽआज्यं तद्वज्रेणैवैतन्नाष्ट्रा रक्षाꣳस्यवबाधते तथातो नाष्ट्रा रक्षाꣳसि नानूत्तिष्ठन्त्यथो रेतो वाऽआज्यं तद्वनस्पतिष्वेवैतद्रेतो दधाति तस्माद्रेतस आव्रश्चनाद्वनस्पतयोऽनु प्रजायन्ते ॥ १५ ॥

---

( वा. सं. ५ । ४३ ) इति । वज्रो वाऽएष भवति—यं यूपाय वृश्चन्ति । तस्माद्वज्रात्प्रच्यवमानादिमे लोकाः संरेजन्ते । तदेभ्य एवैनमेतल्लोकेभ्यः शमयति । तथेमाँल्लोकाञ्छान्तो न हिनस्ति ॥ १३ ॥

स यदाह—" द्यां मा लेखीः " इति । दिवं मा हिंसीरित्येवैतदाह । अन्तरिक्षं मा हिंसीः—इति । नात्र तिरोहितमिवास्ति । " पृथिव्या सम्भव " इति । पृथिव्या सञ्ज्ञानीष्वेत्येवैतदाह—" अयं हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय "—( वा. सं. ५ । ४३ ) इति । एष ह्येनं स्वधितिस्तेजमानः प्रणयति ॥ १४ ॥

अथाव्रश्चनमभिजुहोति—नेदतो नाष्ट्रा रक्षांस्यनूत्तिष्ठानिति । वज्रो वाऽआज्यम् । तद् वज्रेणैवैतन्नाष्ट्रा रक्षांस्यवबाधते । तथातो नाष्ट्रा रक्षांसि नानूत्तिष्ठन्ति । अथो रेतो वाऽआज्यम् । तद् वनस्पतिष्वेवैतद् रेतो दधाति । तस्माद्रेतस आव्रश्चनाद्वनस्पतयोऽनुप्रजायन्ते ॥ १५ ॥

---

एष भवतीति । " स्फ्यस्तृतीयं, रथस्तृतीयं, यूपस्तृतीयं " ( तै. सं. ५ । २ । ६ । २ ) इति श्रुतेः । वज्रावयवत्वाद् यूपस्य वज्रत्वम् । अतो वज्रपात इव यूपार्थवृक्षपातः । लोकाः संरेजन्त इति । " भ्यसते रेजत इति भयवेपनयोः "—( निरु. ३।४।४ ) इति यास्कः ॥ १३ ॥

स यदाहेति । " पृथिव्या सम्भव "—इत्यस्य तात्पर्यमाह—सञ्ज्ञानीष्वेत्येवैतदाहेति । सम्मतिमैकमत्यं प्राप्नुहीत्यर्थः । अयं हि त्वेति । सूत्रकारः पूर्वमन्त्रशेषत्वेन[1] स्वातन्त्र्येण चेति प्रविकल्पेनोक्तवान् । ' अयं ' खलु ' स्वधितिः ' छेदनसाधनपरशुः ' तेतिजानः ' निशितो भवन् ' महते ' ' सौभगाय ' सुभगत्वाय, अष्टाश्र्याद्याकाराश्रयणाद्धि सुभगवते; अथवा सुभगो यज्ञः, स एव सौभगः, तदर्थत्वात् प्रणयनस्य । ' प्रणिनाय ' प्रणयनं कृतवान्, पृथक् कृतवानित्यर्थः । छेदनाभावे प्रणयनासम्भवात् पूर्वशेषत्वपक्षे परशुना यज्ञार्थं छिन्नस्त्वं लोकत्रयमपीडयन्नधः पतेत्यर्थः । पृथग्विनियोगपक्षे उक्तलक्षणं त्वां शोधयामीत्यर्थः[2] ॥ १४ ॥

आव्रश्चनहोमं विधाय प्रशंसति—अथाव्रश्चनमभिजुहोति नेदतो नाष्ट्रेत्यादिना । आ समन्ताद् व्रश्चनम् ' आव्रश्चम् ', तदभि तस्मिन् जुहोति । उक्तहोमविषये सूत्रकारो विकल्पयामास—" अतस्त्वमित्याव्रश्चनेऽभिजुहोति, यूपे वा तत्संस्कारात्, स्थाणौ श्रुतेश्च " इति ( का. श्रौ. सू. ६ । २०—२२ ) होमसाधनस्याज्यस्य

---

१—अभिमंत्रणशेषोवाविशेषोपदेशात् । का. श्रौ. सू. ६ । १९ । २—अयꣳ हि त्वेति शोधनम् । का. श्रौ. सू. ६ । १८ ।

स जुहोति ( त्यु ) अतस्त्वं देव व्वनस्पते शतवल्शो व्विरोह सहस्र-वल्शा व्वि व्वयꣳ रुहेमेति नात्र तिरोहितमिवास्ति ॥ १६ ॥

तं परिवासयति । स यावन्तमेवाग्रे परिवासयेत्तावान्त्स्यात् ॥ १७ ॥

पञ्चारत्निं परिवासयेत् । (त्पा) पाङ्क्तो यज्ञः पाङ्क्तः पशुः पञ्चर्त्तवः संव्वत्सरस्य तस्मात्पञ्चारत्निं परिवासयेत् ॥ १८ ॥

(त्ष)षडरत्निं परिवासयेत् । (त्ष) षड्वाऽऋतवः संव्वत्सरस्य संव्वत्सरो व्वज्रो व्वज्रो यूपस्तस्मात्षडरत्निं परिवासयेत् ॥ १९ ॥

---

स जुहोति–"अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयं रुहेम"–( वा० सं० ५ । ४३ । ) इति । नात्र तिरोहितमिवास्ति ॥ १६ ॥

तं परिवासयति । स यावन्तमेवाग्रे परिवासयेत्–तावान्त्स्यात् ॥ १७ ॥

पञ्चारत्निं परिवासयेत् । पाङ्क्तो यज्ञः, पाङ्क्तः पशुः, पञ्चर्तवः संवत्सरस्य । तस्मात् पञ्चारत्निं परिवासयेत् ॥ १८ ॥

षडरत्निं परिवासयेत् । षड्वाऽऋतवः संवत्सरस्य । संवत्सरो वज्रः । वज्रो यूपः । तस्मात् षडरत्निं परिवासयेत् ॥ १९ ॥

---

द्वे सामर्थ्ये; वज्ररूपेण रक्षकत्वम्, रेतोरूपेणोत्पादकत्वं चेति । अत आव्रश्चनप्रदेशहोमो वज्रः । तस्मात् स्थानाद्राक्षसादिकमुत्पन्नं न भवेत्, उत्पन्नश्च परिहृतं भवति; तथा तत्र आव्रश्चनप्रदेशे रेतःस्थापनात् शाखाः बहुधा जायन्ते ( तै. सं. २।१।१।४ ) ॥ १५ ॥

स जुहोतीति । आव्रश्चनहोममन्त्रस्यायमर्थः–हे 'वनस्पते' 'देव !' 'त्वम्' 'अतः' अस्मात् प्रदेशात् 'शतवल्शः' अपरिमितांकुरः सन् 'विरोह' प्रादुर्भव । 'वयं' च 'सहस्रवल्शाः' सन्तः 'विरुहेम' विविधं प्रादुर्भवेम ॥ १६ ॥

तं परिवासयतीति[1] । 'तं' यूपं वक्ष्यमाणेन परिमाणेन कृत्वा 'परिवासयति' आच्छिनत्ति । परिवासने विशेषमाह– स यावन्तमेवाग्र इति । 'अग्रे' प्रथमम्, प्रथमच्छेदकाले 'यावन्तं' यावत्परिमाणं 'परिवासयेत्', 'तावान् स्यात्' तावतैव भवितव्यम्, स्वापेक्षितप्रमाणाय न पुनश्छिन्द्यादित्यर्थः ॥ १७ ॥

यूपमानविषये पञ्चारत्निप्रभृति पञ्चदशारत्निपर्यन्तान् बहून् प्रकारान् विकल्पितान् दर्शयति–पञ्चारत्निं परिवासयेत् पाङ्क्तो यज्ञ इत्यादिना[2] । "यो वै यज्ञे हविष्पंक्तिं वेद" ( ऐ. ब्रा २ । ३ । ६ ) इत्यादिना यज्ञस्य हविरादित्रिपञ्चसंख्यायोगात् पशोः पांक्तत्वम् ॥ १८ ॥

षडरत्निमिति । संवत्सरो वज्र इति । संवत्सरस्य, वृत्रप्रहरणकाले पुनःपुनरावर्त्तनसाम्याद्वा, संवत्सरनिर्वर्त्तकस्यादित्यस्यासुरघातकत्वाद्वा सारभूतत्वाद्वा वज्रत्वम् ॥ १९ ॥

---

१–परिवास्योच्छेदनं पुनः । का० श्रौ० सू० ६।२३ । २–त्र्यरत्निश्चतुररत्निर्वा एकारत्निप्रभृतीनेके । का० श्रौ०सू० ६।२४।२६। पंचारत्निः पंचदशपर्यंतः सोमे दशसप्तचतुर्दशवर्जमपरिमितो वा । का० श्रौ० सू० ६ । २९ ।

( द ) अष्टारत्निं पुरिवासयेत् । ( द ) अष्टाक्षरावै गायत्री पूर्वार्द्धो वै यज्ञस्य गायत्री पूर्वार्द्ध एष यज्ञस्य तस्मादष्टारत्निं पुरिवासयेत् ॥ २० ॥

( न्नु ) नुवारत्निं पुरिवासयेत् । ( त्रि ) त्रिवृद्वै यज्ञो नव वै त्रिवृत्तस्मान्नुवारत्निं पुरिवासयेत् ॥ २१ ॥

( द्वे ) एकादशारत्निं पुरिवासयेत् । ( द्वे ) एकादशाक्षरा वै त्रिष्टुब्वज्रस्त्रिष्टुब्वज्रो यूपस्तस्मादेकादशारत्निं पुरिवासयेत् ॥ २२ ॥

( द्वा ) द्वादशारत्निं पुरिवासयेत् । ( द्वा ) द्वादश वै मासाः संव्वत्सरस्य संव्वत्सरो व्वज्रो व्वज्रो यूपस्तस्माद्द्वादशारत्निं पुरिवासयेत् ॥ २३ ॥

( त्रु ) त्रयोदशारत्निं पुरिवासयेत् । ( त्रु ) त्रयोदश वै मासाः संव्वत्सरस्य संव्वत्सरो व्वज्रो व्वज्रो यूपस्तमस्मात्त्रयोदशारत्निं पुरिवासयेत् ॥ २४ ॥

पुञ्चदशारत्निं पुरिवासयेत् । पञ्चदशो वै व्वज्रो व्वज्रो यूपस्तुस्मात्पुञ्चदशारत्निं पुरिवासयेत् ॥ २५ ॥

---

अष्टारत्निं परिवासयेत् । अष्टाक्षरा वै गायत्री पूर्वार्द्धो वै यज्ञस्य गायत्री । पूर्वार्द्ध एष यज्ञस्य । तस्मादष्टारत्निं परिवासयेत् ॥ २० ॥

नवारत्निं परिवासयेत् । त्रिवृद्वै यज्ञः । नव वै त्रिवृत् । तस्मान्नवारत्निं परिवासयेत् ॥ २१ ॥

एकादशारत्निं परिवासयेत् । एकादशाक्षरा वै त्रिष्टुप् वज्रस्त्रिष्टुप् । वज्रो यूपः । तस्मादेकादशारत्निं परिवासयेत् ॥ २२ ॥

द्वादशारत्निं परिवासयेत् । द्वादश वै मासाः संवत्सरस्य । संवत्सरो वज्रः । वज्रो यूपः । तस्माद् द्वादशारत्निं परिवासयेत् ॥ २३ ॥

त्रयोदशारत्निं परिवासयेत् । त्रयोदश वै मासाः संवत्सरस्य । संवत्सरो वज्रः । वज्रो यूपः । तस्मात्त्रयोदशारत्निं परिवासयेत् ॥ २४ ॥

पञ्चदशारत्निं परिवासयेत् । पञ्चदशो वै वज्रः । वज्रो यूपः । तस्मात् पञ्चदशारत्निं परिवासयेत् ॥ २५ ॥

---

अष्टारत्निं परिवासयेदिति । पूर्वार्द्धो वै यज्ञस्य गायत्रीति--साक्षादवयवत्वेन 'गायत्री' प्रातस्सवनसम्बन्धाद् यज्ञस्य 'पूर्वार्द्धः' एषः यूपोऽपि पुरस्तान्मीयमानत्वात् 'पूर्वार्द्धः' ॥ २० ॥

नवारत्निमिति । त्रिवृद्वै यज्ञ इति । त्रिवृदादिस्तोमसाध्यत्वात् सवनभेदेन त्रिवृत्त्वाद्वा, 'यज्ञस्त्रिवृत्' । स च 'त्रिवृत्' स्तोमः 'नव वै'; स्तोत्रियनवकरूपत्वात् ॥ २१ ॥

एकादशारत्निमिति । वज्रस्त्रिष्टुबिति । त्रिष्टुभा सह प्रजापतेः सकाशादुत्पन्नत्वात् । सा चोत्पत्तिरिन्द्रद्वारा वेदितव्या ( तै. सं. ७ । १ । १ । ४ ) ॥ २२ ॥

द्वादशारत्निमिति । उक्तं संवत्सरस्य वज्रत्वम् ॥ २३ ॥ २४ ॥

पञ्चदशारत्निमिति । पञ्चदशो वै वज्र इति । एतदपि "उरसो बाहुभ्यां पञ्चदशं निरमिमीत, तमिन्द्रो देवताऽन्वसृज्यत"– ( तै. सं. ७ । १ । १ । ४ ) इति श्रुतेः । पञ्चदशस्येन्द्रसम्बन्धाद् द्रष्टव्यम् ॥ २५ ॥

सप्तदशारत्निर्व्वाजपेययूपः । (पोऽप) अपरिमित एव स्यादपरिमितेन वा ऽएतेन वज्रेण देवाऽअपरिमितमजयंस्तथो ऽएवैषऽएतेन वज्रेणापरिमितेनैवापरिमितं जयति तस्मादपरिमितऽएव स्यात् ॥ २६ ॥

स वा ऽअष्टाश्रिर्भवति । (त्य) अष्टाक्षरा वै गायत्री पूर्व्वार्द्धो वै यज्ञस्य गायत्री पूर्व्वार्द्ध ऽएष यज्ञस्य तस्मादष्टाश्रिर्भवति ॥ २७ ॥

इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥ ५ । ३ ॥ ( ६ । ४. )

---

सप्तदशारत्निर्वाजपेययूपः, अपरिमित एव स्यात् । अपरिमितेन वाऽएतेन वज्रेण देवा अपरिमितमजयन् । तथोऽएवैष एतेन वज्रेणापरिमितेनैवापरिमितं जयति । तस्मादपरिमित एव स्यात् ॥२६॥
स वाऽअष्टाश्रिर्भवति । अष्टाक्षरा वै गायत्री । पूर्वार्द्धो वै यज्ञस्य गायत्री । पूर्वार्द्ध एष यज्ञस्य । तस्मादष्टाश्रिर्भवति ॥ २७ ॥

---

सप्तदशारत्निर्वाजपेययूपं इति । अतोऽत्र स न गृह्यते । इत्थं बहून् पक्षानुपन्यस्यातोऽप्यधिकमप्युन्मानमनुजानाति—अपरिमित एव स्यादिति । तत्र कारणमाह—अपरिमितेन वेति । वज्रस्याचिन्त्यमहिमत्वाद् देवानां प्रयोजनानुसारेण तत्प्रमाणस्वीकाराद् यूपोऽप्यपरिमितो भवेदित्यर्थः ॥ २६ ॥

स वा अष्टाश्रिर्भवतीत्यादि ( का. श्रौ. सू. ६ । २७ ) स्पष्टम् । कात्यायनोऽपि पञ्चारत्न्यादिपक्षान् विकल्पयामास—" पञ्चारत्निः पञ्चदशपर्यन्तः सोमे, दशसप्तचतुर्दशवर्जमपरिमितो वा "—( का. श्रौ. सू ६ । २९ ) इति ॥ २७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
तृतीयकाण्डे षष्ठाध्याये चतुर्थं ब्राह्मणम् ॥३–६–४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ १ ॥

धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजाः
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥ २ ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे षष्ठोऽध्यायः समाप्तः ॥ ३ ॥ ६ ॥

---

१–सप्तदश व्वाजपेये । का. श्रौ. सू. ६ । ३० । २–अग्राच्चषालं पृथमात्रमष्टाश्रं मध्यसंगृहीतम् । इति ।

# सप्तमाध्याये प्रथमं ब्राह्मणम् ।



अ॒ग्निमाद॑त्ते । दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्यां॒ पू॒ष्णो हस्ता॑भ्या॒माद॑दे ना॒र्य॑सी॒ति समा॒नऽए॒तस्य॒ यजु॑षो॒ बन्धु॒र्योषो॒ वा ऽए॒षा यद॒ग्निस्त॒स्मादा॑ह ना॒र्य॑सी॒ति ॥ १ ॥

( त्यु ) अ॒थाव॒टं प॒रिलि॑खति । (ती) इ॒दम॒हꣳ रक्ष॑सां ग्री॒वा अ॒पिकृ॑न्ता॒मीति॒ वज्रो॒ वा ऽअ॒ग्निर्वज्रे॒णैवैत॒न्नाष्ट्रा॑णाꣳरक्ष॑सां ग्री॒वा अ॒पिकृ॑न्तति ॥ २ ॥

( त्यु ) अ॒थ खनति । प्रा॒ञ्चमु॒त्करमु॒त्किर॑त्यु॒परे॑ण सम्मा॒याव॒टं खनति त॒दग्रे॑ण प्रा॒ञ्चं यूपं॒ नि॒दधा॑त्येतावन्मा॒त्राणि॒ ब॒र्हीꣳष्यु॒परिष्टा॑द॒धिनि॒दधाति॒ त॒देवो॒परि॑ष्टा॒द्यू॒पश॒कल॒मधि॒नि॒दधाति॒ पु॒रस्ता॑त्पार्श्व॒तश्च॒षाल॒मुप॒नि॒दधा॑त्यथ य॒वम॑त्यः प्रो॒क्षण्यो॒ भवन्ति॒ सो॒ऽसा॒वेव॒ बन्धुः॑ ॥ ३ ॥

स य॒वाना॒वप॑ति । य॒वो॒ऽसि य॒वया॒स्मद्द्वेषो॑ य॒वया॒राती॒रिति॒ नात्र॒ तिरो॑हितमि॒वास्त्य॒थ प्रो॒क्षत्ये॒को वै प्रो॒क्षण॑स्य॒ बन्धु॒र्मे॒ध्यमे॒वैत॒त्करो॑ति ॥ ४ ॥

---

अग्निमादत्ते–" देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्य्यसि "–( वा. सं. ६ । १ ) इति । समानऽ एतस्य यजुषो बन्धुः । योषो वाऽ एषा–यदग्निः । तस्मादाह–नार्यसीति ॥ १ ॥

अथावटं परिलिखति–" इदमहं रक्षसां ग्रीवा अपिकृन्तामि "–( वा. सं. ६ । १ )। इति । वज्रो वाऽ अग्निः । वज्रेणैवैतन्नाष्ट्राणां रक्षसां ग्रीवा अपिकृन्तति ॥ २ ॥

अथ खनति । प्राञ्चमुत्करमुत्किरति उपरेण सम्मायावटं खनति । तदग्रेण प्राञ्चं यूपं निदधाति । एतावन्मात्राणि बर्हींष्युपरिष्टादधिनिदधाति । तदेवोपरिष्टाद्यूपशकलमधिनिदधाति । पुरस्तात्पार्श्वतश्चषालमुपनिदधाति । अथ यवमत्यः प्रोक्षण्यो भवन्ति–सोऽसावेव बन्धुः ॥ ३ ॥

स यवानावपति–"यवोऽसि यवयास्मद्द्वेषो यवयारातीः "–( वा. सं. ६ । १ ) इति । नात्र तिरोहितमिवास्ति । अथ प्रोक्षति । एको वै प्रोक्षणस्य बन्धुः–मेध्यमेवैतत्करोति ॥ ४ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

अग्निमादत्ते देवस्य त्वा ( १ कण्डिका )–इत्यादिकम्, स यथानिखात ओषधिषु मितः स्यादेवमेतास्वोषधिषु मितो भवति । ( ७ कण्डिका )–इत्यन्तञ्च ग्रन्थजातमौदुम्बर्याः अवटनिर्माणविधानेनैव व्याख्यातप्रायम् ( श. प. ब्रा. ३ । ६ । १ । ४–१४ ) उपरेण सम्मायेति । यूपस्यातष्टो मूलभाग उपरः; तावत्परिमितं यूपावटं कुर्यात् । एतावन्मात्राणीति । मुष्टिपरिमितानि यूपाग्रे निदध्यात् यूपशकलं च ( का. श्रौ. सू. ६ । ४१–४९ ) ॥ १–७ ॥

---

१–देवस्य त्वेत्यग्निमादाय यूपावटं परिलिखति–इदमहमित्याहवनीयस्य पुरस्तादन्तर्वेद्यर्द्धं उपरसंमितं खनति, प्राचः पांसूनुद्वपति, तदग्रेण यूपं प्राचं निदधाति, कुशमुष्टिमुपरि तस्मिन् । इति ॥

स प्रोक्षति । दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति वज्रो वै यूप एषां लोकानामभिगुप्त्या ऽएषां त्वा लोकानामभिगुप्त्यै प्रोक्षामीत्येवैतदाह ॥५॥

( द्वा ) अथ याः प्रोक्षण्यः परिशिष्यन्ते । ता अवटे ऽवनयति शुन्धन्तां लोकाः पितृषदना इति पितृदेवत्यो वै कूपः खातस्तमेवैतन्मेध्यं करोति॥६॥

( त्यु ) अथ बर्हीꣳषि । प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति पितृषदनमसीति पितृदेवत्यं वा ऽअस्यैतद्भवति यन्निखातꣳ स यथानिखात ओषधिषु मितः स्यादेवमेतास्वोषधिषु मितो भवति ॥ ७ ॥

( त्यु ) अथ यूपशकलं प्रास्यति । तेजो ह वा ऽएतद्वनस्पतीनां यद्बाह्याशकलस्तस्माद्यदा बाह्याशकलमपतक्ष्णुवन्त्यथ शुष्यन्ति तेजो ह्येषामेतत्तद्यद्यूपशकलं प्रास्यति सतेजसं मिनवानीति तद्यदेष एव भवति नान्य ऽएष हि यजुष्कृतो मेध्यस्तस्माद्यूपशकलं प्रास्यति ॥ ८ ॥

स प्रास्यति । (त्य) अग्रेणीरसि स्वावेश उन्नेतॄणामिति पुरस्ताद्वा ऽअस्मा-

---

स प्रोक्षति—" दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वा "—( वा. सं. ६ । १ ) इति । वज्रो वै यूपः । एषां लोकानामभिगुप्त्यै । एषां त्वा लोकानामभिगुप्त्यै प्रोक्षामीत्येवैतदाह ॥ ५ ॥

अथ याः प्रोक्षण्यः परिशिष्यन्ते—ता अवटेऽवनयति—"शुन्धन्तां लोकाः पितृषदनाः "—( वा. सं. ६ । १ ) इति । पितृदेवत्यो वै कूपः खातः । तमेवैतन्मेध्यं करोति ॥ ६ ॥

अथ बर्हींषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति—" पितृषदनमसि "—( वा. सं. ६ । १ ) इति । पितृदेवत्यं वाऽअस्यैतद्भवति—यन्निखातम् । स यथा निखात ओषधिषु मितः स्यात्—एवमेतास्वोषधिषु मितो भवति ॥ ७ ॥

अथ यूपशकलं प्रास्यति । तेजो ह वाऽएतद्वनस्पतीनां—यद् बाह्याशकलः । तस्माद्यदा बाह्याशकलमपतक्ष्णुवन्ति—अथ शुष्यन्ति । तेजो ह्येषामेतत् । तद् यद्यूपशकलं प्रास्यति । सतेजसं मिनवानीति । तद् यदेष एव भवति, नान्यः । एष हि यजुष्कृतो मेध्यः । तस्माद्यूपशकलं प्रास्यति ॥८॥

स प्रास्यति—" अग्रेणीरसि स्वावेश उन्नेतॄणाम् "—( वा. सं. ६ । २ । ) इति । पुरस्ताद्वा

---

यूपशकलस्य गर्त्ते स्थापनं सार्थवादं विधत्ते—अथ यूपशकलं प्रास्यति तेजो ह वा एतदित्यादिना । तत्तेजस्त्वमिदानीन्तनप्रसिद्ध्या समर्थयते—तस्माद् यदा बाह्याशकलमित्यादिना । ' अपतक्ष्णुवन्ति ' तक्षणेन लघूकुर्वन्ति ।" तनूकरणे तक्षः "—( पा. सू. ३ । १ । ७६ ) इति श्नुः । एष एव भवतीति । यूपत्वगात्मक एव भवेत् ' नान्यः ' शकलः । अत्र शकलनियमे कारणमाह—एष हि यजुष्कृतो मेध्य इति । यजुषा " स्वधिते मैनम् "—इति मन्त्रेण निष्पादितः, अत एव मेध्यः ॥ ८ ॥

शकलप्रासनं समन्त्रकं विधत्ते—स प्रास्यति अग्रेणीरसीति । छिद्यमानस्य यूपस्य प्रथमम् अग्रे नीयत इति

---

१—प्रथमशकलं निदधाति । का. श्रौ. सू. ६ । ४६ । २—'बाह्यशकलम्' इति क. । ३—प्रथमशकलं चाग्रेणीरसीति का. ६ । ५२ ।

देषोऽपच्छिद्यते तस्मादाहाग्रेणीरसि स्वावेशऽउन्नेतॄणामित्येतस्य वित्तादधि त्वा स्थास्यतीत्यधि ह्येनं तिष्ठति तस्मादाहैतस्य वित्तादधि त्वा स्थास्यतीति ॥ ९ ॥

( त्यु ) अथ स्रुवेणोपहत्याज्यम् । ( म ) अवटमभिजुहोति नेदधस्तान्नाष्ट्रा रक्षाᳬंस्युपोत्तिष्ठानिति वज्रो वा ऽआज्यं तद्वज्रेणैवैतं नाष्ट्रा रक्षाᳬंस्यवबाधते तथाधस्तान्नाष्ट्रा रक्षाᳬंसि नोपोत्तिष्ठन्त्यथ पुरस्तात्परीत्योदङ्ङासीनो यूपमनक्ति स आह यूपायाज्यमानायानुब्रूहीति ॥ १० ॥

सोऽनक्ति देवस्त्वा सविता मध्वानक्त्विति सविता वै देवानां प्रसविता यजमानो वा ऽएष निदानेन यद्यूपः सर्वं वा ऽइदं मधु यदिदं किञ्च

---

अस्मादेषोऽपच्छिद्यते । तस्मादाह–अग्रेणीरसि स्वावेश उन्नेतॄणामिति । "एतस्य वित्तादधि त्वा स्थास्यति"–( वा. सं. ६ । २ ) इति । अधि ह्येनं तिष्ठति । तस्मादाह–एतस्य वित्तादधि त्वा स्थास्यतीति ॥ ९ ॥

अथ स्रुवेणोपहत्याज्यम् । अवटमभिजुहोति । नेदधस्तात् नाष्ट्रा रक्षांस्युपोत्तिष्ठानिति । वज्रो वा आज्यं तत् वज्रेणैवैतत् नाष्ट्रा रक्षांस्यवबाधते । तथाधस्तान्नाष्ट्रा रक्षांसि नोपोत्तिष्ठन्ति । अथ पुरस्तात्परीत्योदङ्ङासीनो यूपमनक्ति । स आह–'यूपायाज्यमानायानुब्रूहि इति ॥ १० ॥

सोऽनक्ति–" देवस्त्वा सविता मध्वानक्तु "–( वा. सं० ६ । २ ) इति । सविता वै

---

'अग्रेणीः' यूपावयवभूत इत्यर्थः । यद्वा अग्रेऽवस्थितो यूपोऽवटं प्रति नीयत इति 'अग्रेणीः' पुरस्सर इत्यर्थः । यस्त्वम् अग्रेणीरसि, स त्वम् 'उन्नेतॄणाम्' ऊर्ध्वं नेतॄणामध्वर्यूणां 'स्वावेशः' यूपावटे सुखेन तैराविश्यत इति स्वावेशः । स त्वं हे यूपशकल ! 'एतस्य' कर्मणः 'वित्तात्' । "विद् ज्ञाने" ( धा. पा. अ. प. ५४ ) । कर्मणि षष्ठी । विदिर्विदितार्थो भवति । कर्म कृतवान् न भवति । अधि त्वा स्थास्यतीति । अधीत्युपरिभावे । हे यूपशकल ! 'त्वामधि' तवोपरि यूपः 'स्थास्यति' तस्यावस्थानं वित्तात् । अग्रेणीरित्यस्य तात्पर्यमाह–पुरस्ताद्वा अस्मादिति । यस्मादेव शकलः 'अस्माद्' यूपात् 'पुरस्तात्' अपि छिद्यते; अस्य प्रथमशकलत्वात्, यूपात् प्रथमं नीयमानत्वात् 'अग्रेणीः' स्वावेश इत्यर्थः । 'एतस्य' सम्यग्बन्धनं वित्तादित्यादि स्पष्टम् ॥ ९ ॥

अथ स्रुवेणोपहत्याज्यमिति । 'आज्यम् उपहत्य' स्रुवेण आदाय, 'अवटमभि' तूष्णीं 'जुहोति' "स्रुवेणावटे जुहोति तूष्णीम्" ( का. श्रौ. सू. ६ । ९३ ) इति सूत्रम् । आत्रश्चनहोमार्थवादे "नेदधस्ता" दित्यादिकम् । ( श. प. ब्रा. ३ । ६ । ४ । १९ ) व्याख्यातम् । अथ पुरस्ताद् परीत्येति । अवटस्य 'पुरस्तात्' 'परीत्य' परिक्रम्य 'उदङ्' उदङ्मुखः ; 'आसीनः' अध्वर्युर्यजमानो वा 'यूपमनक्ति' "पुरस्तात्परिक्रम्य–अध्वर्युर्यजानो वा यूपमनक्ति उदङ्ङुपविश्य" ( का. श्रौ. सू. ६ । ९४ ) इति सूत्रकारवचनात् । स्पष्टार्थो यूपाञ्जनशेषः ॥ १० ॥

सोऽनक्तीति ( "देवस्त्वेत्यनक्ति" का. श्रौ. सू. ६ । ९६ ) "देवस्त्वा"–इत्यञ्जनमन्त्रस्य तात्पर्य-

तदेनमनेन सर्व्वेण सꣳस्पर्शयति तदस्मै सविता प्रसविता प्रसौति तस्मादाह देवस्त्वा सविता मध्वानक्त्विति ॥ ११ ॥

( त्यु ) अथ चषालमुभयतः प्रत्युज्य प्रतिमुञ्चति । सुपिप्पलाभ्यस्त्वौषधीभ्य इति पिप्पलꣳ हैवास्यैतत्तद्यन्मध्ये सङ्गृहीतमिव भवति तिर्यग्वाऽइदं वृक्षे पिप्पलमाहतꣳ स यदेवेदꣳसम्बन्धनं चान्तरोपेनितमिव तदेवैतत्करोति तस्मान्मध्ये सङ्गृहीतमिव भवति ॥ १२ ॥

(त्या)आन्तमग्निष्ठामनक्ति । यजमानो वाऽअग्निष्ठा रस आज्यꣳ रसेनैवैतद्यजमानमनक्ति तस्मादान्तमग्निष्ठामनक्त्यथ परिव्ययणं प्रति समन्तं परिमृशत्यथाहोच्छ्रीयमाणायानुब्रूहीति ॥ १३ ॥

---

देवानां प्रसविता । यजमानो वाऽएष निदानेन—यद्यूपः । सर्वं वाऽइदं मधु यदिदं किञ्च । तदेनमनेन सर्वेण संस्पर्शयति । तदस्मै सविता प्रसविता प्रसौति । तस्मादाह—देवस्त्वा सविता मध्वानक्त्विति ॥ ११ ॥

अथ चषालमुभयतः प्रत्यज्य प्रतिमुञ्चति—" सुपिप्पलाभ्यस्त्वौषधीभ्यः "—( सं. वा. ६ २ । ) इति । पिप्पलं हैवास्यैतद्—यन्मध्ये संगृहीतमिव भवति । तिर्यग्वाऽइदं वृक्षे पिप्पलमाह । तम् स यदेवेदं सम्बन्धनं चान्तरोपेनितमितमिव—तदेवैतत्करोति । तस्मान्मध्ये संगृहीतमिव भवति ॥ १२ ॥

आन्तमग्निष्ठामनक्ति । यजमानो वाऽअग्निष्ठा । रस आज्यम् । रसेनैवैतद्यजमानमनक्ति । तस्मादान्तमग्निष्ठामनक्ति । अथ परिव्ययणं प्रतिसमन्तं परिमृशति । अथाह—' उच्छ्रीयमाणायानुब्रूहि इति ॥ १३ ॥

---

माह—सविता वै देवानामित्यादिना । यजमाननिष्पाद्यस्य यागस्य यूपेनापि निष्पाद्यत्वात्, तत्सिद्धिन्यायाद् यजमान एव यूपत्वेनोपचर्यते । " इयं पृथिवी सर्वेषां भूतानां मधु "— ( श. प. ब्रा. १४ । ९ । ९ । १ ) इत्याद्युक्तप्रकारेण ' सर्वमिदं मधु ' । ' ततः ' ' एनम् ' यूपमेव, यूपद्वारेण ' अनेन सर्वेण ' मधुभूतेन चराचरेण आज्यद्वारेण ' संस्पर्शयति ' ॥ ११ ॥

अथ चषालमुभयतः प्रत्यज्येति । चषालो यूपस्योपरि प्रतिमोक्तव्योऽष्टाश्रिर्मध्ये सन्नतो वलयः तम् ' उभयतः ' आज्येन ' प्रत्यज्य ' ' प्रति मुञ्चति ' उपरि बध्नाति । मन्त्रार्थस्त्वेवः—हे चषाल ! त्वां ' सुपिप्पलाभ्यः ' शोभनफलाभ्यः ' ओषधीभ्यः ' तासामर्थाय, प्रतिमुञ्चामीति शेषः । अस्य यूपस्य चषालं सुपिप्पलं खलु, तच्चषालं मध्ये संगृहीतमिव कुर्यात् ।

उक्तं यूपफलरूपत्वं लौकिकवृक्षदृष्टान्तेन द्रढयति—तिर्यग्वा इदमिति । ' आहतं ' सम्बद्धम्, ' यदेवेदं सम्बन्धनं ' सम्यग्बन्धनसाधनं वृन्तं फलं च, ' अन्तरा ' वृन्तफलयोर्मध्ये " उपेनितमिव " ' उपेनितम् ' अल्पपरिमाणं विद्यते, ' तदेव ' ' एतत् ' एतेन चषालोपेनितेन कृतवान् भवति । ' तस्मान्मध्ये ' इदमित्युपसंहारः ॥ १२ ॥

पुनराञ्जनं विधत्ते—आन्तमग्निष्ठामनक्तीति । ' अग्निष्ठा; अग्नेरभिमुखाश्रिः, ताम् ' अग्निष्ठाम् ' ' आन्तम् '

---

१—चषालमुभयतः । क. श्रौ. सू. ६।५७ । २—अक्तं प्रतिमुञ्चति सुपिप्पलाभ्य इति । का श्रौ. सू. ६।५८ ।

स उच्छ्रयति । द्यामग्रेणास्पृक्ष ऽआन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणा-दृᳮहीरिति वज्रो वै यूप एषां लोकानामभिजित्यै तेन वज्रेणेमाँल्लोका-न्त्स्पृणुतऽएभ्यो लोकेभ्यः सपत्नान्निर्भजति ॥ १४ ॥

( त्यु ) अथ मिनोति । या ते धामान्युश्मसि गमध्यै यत्र गावो भूरि शृङ्गा अयासः ॥ अत्राह तदुरुगायस्य विष्णोः परमं पदमव भारि भूरीत्ये-तया त्रिष्टुभा मिनोति वज्रस्त्रिष्टुब्वज्रो यूपस्तस्मात्त्रिष्टुभा मिनोति ॥ १५ ॥

---

स उच्छ्रयति–" द्यामग्रेणास्पृक्षऽआन्तरिक्षं मध्येनाप्राः पृथिवीमु परेणादृंहीः "–(वा. सं. ६ । २) इति । वज्रो वै यूपः । एषां लोकानामभिजित्यै । तेन वज्रेणेमाँल्लोकान्त्स्पृणुते । एभ्यो लोकेभ्यः सपत्नान्निर्भजति ॥ १४ ॥

अथ मिनोति–" या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गाऽअयासः । अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरि "–(वा. सं. ६ । ३ ) इति । एतया त्रिष्टुभा मिनोति । वज्रस्त्रिष्टुप् । वज्रो यूपः तस्मात्त्रिष्टुभा मिनोति ॥ १५ ॥

---

उपरिप्रदेशपर्यन्तम् ' अनक्ति ' । " सोपरमग्निष्ठादेशमक्त्वा " ( का. श्रौ. सू. ६।५९ )–इत्यादि च सूत्रम् । ' सोपरम ' उपरसहितम् । अग्निसन्निधिसाम्यात् ' अग्निष्ठाः ' यजमानः । अथ परिव्ययणमित्यादि । ' परि-व्ययणं ' परिव्ययणो रशनावेष्टनप्रदेशः ' तं ' प्रति ' ' समन्तम ' आज्येन ' परिमृशति ' परिमृशेत् । " उच्छ्रीयमाणायानुब्रूहि "–' इति ' सम्प्रैषमुक्त्वा ॥ १३ ॥

स उच्छ्रयति द्यामग्रेणेत्यादि । " द्यामग्रेण "–इति मन्त्रेण उच्छ्रयणं कुर्यात् । हे यूप ! ' द्याम् ' अन्त-रिक्षम् ' अग्रेण ' अग्रभागेन ' अस्पृक्षः ' स्पृष्टवानसि, तथा तव ' मध्येन ' मध्यभागेन ' अन्तरिक्षम् आ 'अप्राः' आपूरितवानसि, ' पृथिवीम् उपरेण ' भूमौ स्थाप्यो माग उपरः, तेन भूलोकम् 'अदृंहीः' दृढमकरोः । " वज्रो वै यूपः "–इत्यादि कृतशब्दार्थम् ॥ १४ ॥

अथ मिनोतीत्यादि । " या ते "–इति मन्त्रेण यूपं मिनुयात् । हे विष्णो ; ' ते ' ' या ' यानि ' धामानि ' स्थानानि ' गमध्यै ' गमनाय प्राप्तये ' उश्मसि ' कामयामहे, ' यत्र ' येषु धामसु ' गावः ' रश्मयः ' भूरिशृङ्गाः ' प्रभूतोर्द्ध्वप्रदेशाः ' अयासः ' अयनाः गन्तारो रश्मयः, तं परिवेषं हे विष्णो ! ' अत्रा ' एषु स्थानेषु ' उरुगायस्य ' प्रभूतवाग्गीयमानस्य, ' विष्णोः ' व्याप्तस्य, तव श्रुति-स्मृति-प्रसिद्धं ' परमम् ' उत्कृष्टं ' पदम् ' ' भूरि ' प्रभूतम् ' अवभाति ' सर्वदा प्रकाशते, तत् प्रार्थयामह इति शेषः । अयमधिदैवतः सङ्ग्रहेणोक्तार्थः ॥

अथवा प्रकृतेऽधियज्ञपरतया व्याख्येयः । अस्मिन् पक्षे ' विष्णोः ' सवनत्रयव्याप्तस्य, यज्ञस्य धामानीत्यादि पूर्ववत्; अत्रोरुगायस्य विष्णोस्ते ' परमं ' परार्द्ध्यं ' पदं ' यूपाख्यमवभातीति ॥

मन्त्रस्य त्रिष्टुप्त्वं यूपमानस्योचितमिति प्रशंसति–एतया त्रिष्टुभेति ॥ १५ ॥

---

१–परिव्ययणदेश १ समंतं परिमृश्याध्वर्युर्नावसृजेदापरिव्ययणात् । इति सूत्र शेषः । का. श्रौ. सू. । ६ । ५९ । २–उच्छ्रीयमाणा-यानुवाचयति । का. श्रौ. सू. ६ । ६० । ३–द्यामग्रेणेत्युच्छ्रयति । का. श्रौ. सू. ६ । ६१ । ४–या त इतिमिनोत्यग्निष्ठासम्प्रत्या-हवनीयम् । का. श्रौ. सू. । ६ । ६२ ।

सम्प्रत्यग्निमग्निष्ठां मिनोति । यजमानो वा ऽअग्निष्ठाग्निरु वै यज्ञः स यदग्नेरग्निष्ठा ऌँ ह्वलयेद्ध्वलेद्ध यज्ञाद्यजमानस्तस्मात्सम्प्रत्यग्निमग्निष्ठां मिनोत्यथ पर्यूहत्यथ पर्यृषत्यथाप उपनिनयति ॥ १६ ॥

( त्य ) अथैवमभिपद्य वाचयति । विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखेति वज्रं वा ऽएष प्राहार्षीद्यो यूपमुदशिश्रियद्विष्णोर्विजितिं पश्यतेत्येवैतदाह यदाह विष्णोः कर्म्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखेतीन्द्रो वै यज्ञस्य देवता वैष्णवो यूपस्तऌँ सेन्द्रं करोति तस्मादाहेन्द्रस्य युज्यः सखेति ॥ १७ ॥

---

सम्प्रत्यग्निमग्निष्ठां मिनोति । यजमानो वाऽअग्निष्ठा । अग्निरु वै यज्ञः । स यदग्नेरग्निष्ठां ह्वलयेद्–ह्वलेद्ध यज्ञाद्यजमानः । तस्मात् सम्प्रत्यग्निमग्निष्ठां मिनोति । अथ पर्यूहति । अथ पर्यृषति । अथाप उपनिनयति ॥ १६ ॥

अथैवमभिपद्य वाचयति–"विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा"–(वा.सं. ६।४) इति। वज्रं वाऽएष प्राहार्षीद्–यो यूपमुदशिश्रियत् । विष्णोर्विजितिं पश्यत इत्येवैतदाह–यदाह–विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे इन्द्रस्य युज्यः सखेति । इन्द्रो वै यज्ञस्य देवता । वैष्णवो यूपः । तं सेन्द्रं करोति । तस्मादाह–इन्द्रस्य युज्यः सखेति ॥ १७ ॥

---

माने विशेषमाह–सम्प्रत्यग्निमिति । 'अग्निष्ठाम्' 'सम्प्रत्यग्निम्' अग्न्यभिमुखं 'मिनोति' प्रक्रमार्थम् । विपक्षे दोषप्रदर्शनेन द्रढयति–यजमानो वा अग्निष्ठाग्निरिति । 'सः' अध्वर्युः 'यद्' यदि 'अग्नेः' सकाशात् 'अग्निष्ठाम्' 'ह्वलयेत्' चालयेत् 'यज्ञात्' 'यजमानः' अपि 'ह्वलेत्' पश्येत्, 'तस्मात्' 'सम्प्रत्यग्निं' मिनुयात् ॥' अथ पर्यूहतीति । मृदामेकीभावापादने पर्यूहणादिमन्त्राणामौदुम्बर्यामुक्तत्वात् ( श. प. ब्रा. ३ । ६ । १ । १७–१९ ) अत्र ब्राह्मणे उपेक्षिताः ॥ १६ ॥

अथैवमभिपद्येति । एवं कर्मकलापं कृत्वा यूपमन्वारभ्य 'वाचयति' "विष्णोः कर्माणि"–इत्यमुं मन्त्रम् । "विष्णोः कर्माणीति वाचयति यूपमन्वारब्धम्"–इति हि सूत्रम् ( का. श्रौ. सू. ६ । ६५ ) अयमर्थः–'विष्णोः' यज्ञात्मनः कर्माणि पश्यत ' इह नराः ! 'यतः' यस्माद् 'व्रतानि' कर्माणि जायन्ते यानि च 'पस्पशे' स्पृष्टवान् । यो विष्णुः 'इन्द्रस्य' च यज्ञाभिमानिनो देवस्य 'युज्यः' योग्यः 'सखा' सखिभूतः । मन्त्रतात्पर्यं व्याचष्टे–वज्रं वा एष इत्यादिना । 'उदशिश्रियत्'–इति, "श्रिञ् सेवायाम्"–( धा. पा. ९२२ ) इत्यस्य लुङि रूपम् । 'विजितिम्' विजयम् । कर्मणां बहुत्वेऽपि विजितेरेकत्वादेकवचनान्तं निर्दिष्टम् । चतुर्थपादे इन्द्रश्रवणं सङ्गतमित्याह–इन्द्रो वै यज्ञस्य देवतेति ॥ १७ ॥

---

१–ब्रह्मन्नित्वेतिपाः स्रुभिः पर्यूहति । २–ब्रह्मद॰ हेतिमैत्रावरुणदण्डेन समंतं त्रिः पर्यृषति । का. श्रौ. सू. ६ । ६३ । ६४ ।
३–समां भूमिं कृत्वाऽद्भिरुपसिच्य विष्णोः कर्म्माणीति वाचयति यूपमन्वारब्धम् । का. श्रौ. सू. ६ । ६५ ।

( त्यु ) अुथ चषालमुदीक्षते । तद्विष्णोः परमं पद९ँ सुदा पश्यन्ति सूुरयः । दिवीव चुक्षुरातृतमिति वज्रं वाऽएष प्राहार्षीद्यो यूपमुदशिश्रियत्तां विुष्णोर्विजितिं पश्यतेत्येवैतदाह यदाह तद्विष्णोः परमं पद९ँ सुदा पश्यन्ति सूुरयः ॥ दिवीव चुक्षुरातृतमिति ॥ १८ ॥

( त्यु ) अुथ पुरिव्ययति । ( त्य ) अनग्नतायै न्वेव पुरिव्ययति तुस्मादुत्रेव पुरिव्ययत्युत्रेवु हीदं वासो भुवत्यन्नाद्यमेवास्मिन्नेतद्दधात्युत्रेवु हीदमुन्नं प्रतितिुष्ठति तुस्मादुत्रेव पुरिव्ययति ॥ १९ ॥

त्रिवृता पुरिव्ययति । त्रिवृद्ध्युन्नं पशुवो ह्युन्नं पिता माता यज्जायते तत्तृतीयं तुस्मात्त्रिवृता पुरिव्ययति ॥ २० ॥

---

अथ चषालमुदीक्षते—"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् "—( वा. सं. ६ । ५ ) इति ' वज्रं वाऽएष प्राहार्षीद्-यो यूपमुदशिश्रियत् । तां विष्णोर्विजितिं पश्यत—इत्येवैतदाह—तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततमिति ॥ १८

अथ परिव्ययति । अनग्नतायै न्वेव परिव्ययति । तस्मादत्रेव परिव्ययति । अत्रेव हीदं वासो भवति । अन्नाद्यमेवास्मिन्नेतद्दधाति । अत्रेव हीदमन्नं प्रतितिष्ठति । तस्मादत्रेव परिव्ययति ॥१९॥

त्रिवृता परिव्ययति । त्रिवृद्ध्यन्नम् । पशवो ह्यन्नम् । पिता, माता, यज्जायते तत्तृतीयम् । तस्मात् त्रिवृता परिव्ययति ॥ २० ॥

---

अथ चषालमुदीक्षते तद्विष्णोरित्यादि[1] । ' उदीक्षते ' ऊर्ध्वमीक्षेत । ' विष्णोः ' यज्ञस्य ' तत् ' ' परमं पदम् ' पद्यत इति पदं यूपः, तं ' सदा पश्यन्ति ' ' सूरयः ' विद्वांसः । कीदृशम् ? ' दिवि ' आकाशे निरावरणे ' आततं ' प्रसृतम् ' चक्षुरिव ' । मन्त्रस्य तात्पर्यमाह—परमपदस्य यूपस्य शत्रुवधार्थमुद्यतवज्ररूपत्वात्, तद्दर्शनेन यज्ञविघातकानामसुराणां पलायनात्, उच्छ्रितयूप एव विष्णोर्विजितिस्तं ' पश्यत ' ' इति ' मन्त्र ' आह ' इत्यर्थः ॥ १८ ॥

रशनापरिव्ययणं विधाय प्रशंसति—**अथ परिव्ययती**ति[2] । परिव्ययणप्रदेशमभिनयेन निर्दिशति—' अत्रेव ' नाभिप्रदेशे इत्यर्थः । " नाभिदघ्ने परिव्ययति "—इति तैत्तिरीयकम् ( तै. सं. ६ । ३ । ४ ) । उक्तार्थे लोकस्थितिं हेतूकरोति—**अत्रेव ही**ति । लोके हि मध्यदेशे खलु ' इदं ' वसनं ' भवति '; तस्मादित्यर्थः । **अन्नाद्यमेवे**त्यादि । रशनाया अन्नसम्बन्धिविकारत्वेनान्नरूपत्वादन्नमेवास्मिन्नुपस्थापितवान् भवति ॥ १९ ॥

रशनायास्त्रैगुण्यमाह—**त्रिवृते**ति ( का. श्रौ. सू. ६ । ६७ ) । अन्नस्य त्रिवृत्त्वं कुत्र दृष्टमिति, तद्दर्शयति—**पशवो ह्यन्न**मिति । कथं तेषु त्रिवृत्त्वमिति तदुपपादयति—**पिता माते**त्यादि । दधिपयोरूपस्यान्नस्य त्रयाणामपि कारणत्वात् तेषामप्यन्नत्वोपचारः ॥ २० ॥

---

१—तद्विष्णोरिति चषालमीक्षमाणम् । का. श्रौ. सू. ६ । ६६ । २—परिवीयमाणायानुब्राचयति । त्रिगुणात्रिव्यामाकौशीरशनास्तया नाभिमात्रे त्रिवृतं परिव्ययति परिवीरसीति । का. श्रौ. सू. ६ । ६७ । सं९सृज्यान्यतरस्यामंतं प्रवेशयति । का. श्रौ. सू. ६।६८ ।

स परिव्ययति । परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं यजमानꣳ रायो मनुष्याणामिति तद्यजमानायाशिषमाशास्ते यदाह परीमं यजमानꣳ रायो मनुष्याणामिति ॥ २१ ॥

(त्यु) अथ यूपशकलमवगूहति । दिवः सूनुरसीति प्रजा हैवास्यैषा तस्माद्यदि यूपैकादशिनी स्यात्स्वꣳ स्वमेवावगूहेदविपर्यासं तस्य हैषा मुग्धानुव्रता प्रजा जायतेऽथ यो विपर्यासमवगूहति न स्वꣳ स्वं तस्य हैषा मुग्धाननुव्रता प्रजा जायते तस्मादु स्वꣳ स्वमेवावगूहेदविपर्यासम् ॥ २२ ॥

(ꣳ) स्वर्गस्यो हैष लोकस्य समारोहणः क्रियते । यद्यूपशकल इयꣳ रशना रशनायै यूपशकलो यूपशकलाच्चषालं चषालात्स्वर्गं लोकꣳ समश्नुते ॥ २३ ॥

---

स परिव्ययति–" परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं यजमानं रायो मनुष्याणाम् "–( वा. सं. ६ । ६ ) इति । तद् यजमानायाशिषमाशास्ते–यदाह परीमं यजमानं रायो मनुष्याणामिति ॥ २१ ॥

अथ यूपशकलमवगूहति–" दिवः सूनुरसि "–( वा. सं. ६ । ६ ) इति । प्रजा हैवास्यैषा । तस्माद् यदि यूपैकादशिनी स्यात्–स्वं स्वमेवावगूहेद्–अविपर्यासम् । तस्यै हैषा मुग्धानुव्रता प्रजा जायते । अथ यो विपर्यासमवगूहति–न स्वं स्वम् । तस्य हैषा मुग्धाननुव्रता प्रजा जायते तस्मादु स्वं स्वमेवावगूहेदविपर्यासम् ॥ २२ ॥

स्वर्गस्यो हैष लोकस्य समारोहणः क्रियते यद्यूपशकलः । इयं रशना । रशनायै यूपशकलः । यूपशकलाच्चषालम् । चषालात्स्वर्गं लोकं समश्नुते ॥ २३ ॥

---

स परिव्ययतीति । परिव्ययणे मन्त्रमाह– परिवीरसीति । हे यूप ! त्वं ' परिवीरसि ' परितो रशनया वेष्टितोऽसि । ' दैवीः विशः ' देवसम्बन्धिन्यः प्रजाः त्वा ' परिव्ययन्ताम् ' वेष्टयन्तु । तथा ' इमं यजमानम् ' एव ' मनुष्याणाम् ' इतरेषां मध्ये ' रायः धनानि परिव्ययन्तु ॥ २१ ॥

अथ यूपशकलमवगूहतीति । ' यूपशकलं ' स्वरुम् अवगूहेत् रशनामध्ये । तस्मात् 'स्वरोर्यूपरूपत्वात् । एवं सर्वथऽवगूहनीयत्वात् यूपैकादशित्वपक्षेऽपि स्वस्वयूपानतिक्रमेणैवावगूहेत् । ' अविपर्यासं ' विपर्यासायाः क्रमेणाग्रहणात् । दोषाविधानेनाविपर्यासं प्रशंसति–तस्य हैषा मुग्धानुव्रतेत्यादिना । अमुग्धामाह–' अनुव्रता ' यजमानव्यापारानुकूला । विपर्यासपक्षे उक्तवैपरीत्यं व्याख्येयम् ॥ २२ ॥

यूपशकल–रशना–चषालानां क्रमेणोर्ध्वभावित्वात् स्वर्गारोहणसोपानत्वेन प्रशंसति–स्वर्गस्यो हैष लोकस्य समारोहण इत्यादिना ॥ २३ ॥

---

१–यूपशकलमस्यामवगूहत्युत्तरेणाऽग्निष्ठां दिवः सूनुरसीति । बहुषुयथास्वम् । का. श्रौ. सू. ६ । ६९ । ७० ।

( तेऽथ ) अथ यस्मात्स्वरुर्न्नाम । ( मै ) एतस्माद्वा एषोऽपच्छिद्यते तद-स्यैतत्स्वमेवारुर्भवति तस्मात्स्वरुर्न्नाम ॥ २४ ॥

तस्य यन्निखातम् । तेन पितृलोकं जयत्यथ यदूर्द्ध्वं निखातादा रशनायै तेन मनुष्यलोकं जयत्यथ यदूर्द्ध्वंᳪ रशनाया आचषालात्तेन देवलोकं जय-त्यथ यदूर्द्ध्वं चषालाद्द्व्यङ्गुलं वा त्र्यङ्गुलं वा साध्या इति देवास्तेन तेषां लोकं जयति सलोको ह वै साध्यैर्देवैर्भवति य एवमेतद्वेद ॥ २५ ॥

तं वै पूर्व्वार्द्धे मिनोति वज्रो वै यूपो वज्रो दण्डः पूर्वार्द्धे वै दण्डस्या-भिपद्य प्रहरति पूर्व्वार्द्ध एष यज्ञस्य तस्मात्पूर्वार्द्धे मिनोति ॥ २६ ॥

यज्ञेन वै देवाः । ( ऽ ) इमां जितिं जिग्युर्यैषामियं जितिस्ते होचुः कथं

---

अथ यस्मात् स्वरुर्नाम । एतस्माद्वाऽएषोऽपच्छिद्यते। तस्यैतत् स्वमेवारुर्भवति । तस्मात् स्वरुर्नाम २४

तस्य यन्निखातं—तेन पितृलोकं जयति । अथ यदूदूर्ध्वं निखाताद्—आरशनायै, तेन मनुष्यलोकं जयति । अथ यदूर्ध्वं रशनाया—आचषालात्, तेन देवलोकं जयति । अथ यदूर्ध्वं चषालाद्—द्व्यङ्गुलं वा, त्र्यङ्गुलं वा—साध्या इति देवाः तेन तेषां लोकं जयति । सलोको ह वै साध्यैर्देवैर्भवति—य एवमेतद्वेद ॥ २५ ॥

तं वै पूर्वार्द्धे मिनोति । वज्रो वै यूपः । वज्रो दण्डः । पूर्वार्द्धे वै दण्डस्याभिपद्य प्रहरति पूर्वार्द्ध एष यज्ञस्य । तस्मात्पूर्वार्द्धे मिनोति ॥ २६ ॥

यज्ञेन वै देवा इमां जितिं जिग्युः—यैषामियं जितिः । ते होचुः—कथं न इदं मनुष्यैरनभ्यारोह्यं

---

यूपावयवत्वेन स्वरोः सर्वथावगूहनं प्रशंसितुं तन्नाम निर्वक्ति—अथ यस्मात्स्वरुर्नामेति । ' एतस्मात् ' एव ' एषः ' यूपशकलः ' अपच्छिद्यते ' । तत् ' एतत् ' छिन्नं द्रव्यम् अस्य यूपसम्बन्धि पुनः ' स्वमेव ' स्वकीयमेव ' अरुः' गन्ता भवति । ' तस्मात् ' स्वमियर्त्तीति ' स्वरुः ' ( " त एतं स्वरुमपश्यन् यूपशकलम् " ऐ. ब्रा. २ । १ । ३ ) ' नाम ' सम्पन्नम् ॥ २४ ॥

यूपं लोकत्रयजयात्मना प्रशंसति—तस्य यन्निखातमिति । निखन्यत इति निखातो गर्त्तान्तरालः । तेन पितृलोकं जयतीति । चषालादुपरि यूपाग्रं द्वित्र्यंगुलभागो द्रष्टव्यः, 'तेन' भागेन 'साध्या इति' एवं प्रसिद्धाः ' देवाः ' सन्ति, ' तेषां लोकं जयति ' ( तै. सं. ६ । ३ । ४ । ७ ) । वेदितुः फलमाह—सलोको ह वा इति ॥ २५ ॥

यूपस्य पूर्वार्द्धे भूमौ यन्मानम्, तद्दण्डसाम्यतः स्तौति—तं वै पूर्वार्द्धे मिनोतीति । यज्ञस्य प्रहरणसाधनत्वात् दीर्घत्वाच्च वज्रो दण्डः । ' दण्डस्य पूर्वार्द्धम् ' ' अभिपद्य ' गृहीत्वा ' प्रहरति '; ' यज्ञस्य ' अपि ' एषः ' यूपः ' पूर्वार्द्धः ' होमात् पूर्वमनुष्ठेयत्वात् । ' तस्मात् ' ' पूर्वार्द्धे पूर्वभागे ' मिनोति ' ॥ २६ ॥

प्रकारान्तरेण पूर्वार्द्धमभिमातुं भूयो द्योतयति—यज्ञेन वै देवा इत्यादिना । एतदसकृद्गतम् ( श. प.

नऽइदं मनुष्यैरनभ्यारोह्यꣳस्यादिति ते यज्ञस्य रसं धीत्वा यथा मधु मधुकृतो निर्द्धयेयुर्व्विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन्नथ यदेनेना योपयंस्तस्माद्यूपो नाम पुरस्ताद्वै प्रज्ञा पुरस्तान्मनोजवस्तस्मात्पूर्व्वार्द्धे मिनोति ॥ २७ ॥

स वाऽअष्टाश्रिर्भवति । अष्टाक्षरा वै गायत्री पूर्व्वार्द्धो वै यज्ञस्य गायत्री पूर्व्वार्द्ध एष यज्ञस्य तस्मादष्टाश्रिर्भवति ॥ २८ ॥

तꣳ ह स्मैतं देवा अनुप्रहरन्ति । यथेदमप्येतर्ह्येकेऽअनुप्रहरन्तीति देवा अकुर्व्वन्निति ततो रक्षाꣳसि यज्ञमनूदपिबन्त ॥ २९ ॥

ते देवा अध्वर्युमब्रुवन् । ( न्यू ) यूपशकलमेव जुहुधि तदाहैष स्वगाकृतो भविष्यति तथो रक्षाꣳसि यज्ञं नानूत्पास्यन्ते ऽयं वै वज्र ऽउद्यत इति॥ ३० ॥

---

स्यादिति । ते यज्ञस्य रसं धीत्वा–यथा मधु मधुकृतो निर्द्धयेयुः–विदुह्य यज्ञं यूपेन योपयित्वा तिरोऽभवन् । अथ यदेनेनायोपयन्–तस्माद्यूपो नाम । पुरस्ताद्वै प्रज्ञा । पुरस्तान्मनोजवः । तस्मात्पूर्वार्द्धे मिनोति ॥ २७ ॥

स वाऽअष्टाश्रिर्भवति । अष्टाक्षरा वै गायत्री । पूर्वार्द्धो वै यज्ञस्य गायत्री । पूर्वार्द्ध एष यज्ञस्य । तस्मादष्टाश्रिर्भवति ॥ २८ ॥

तं ह स्मैतं देवा अनुप्रहरन्ति । यथेदमप्येतर्ह्येकेऽनुप्रहरन्तीति–देवा अकुर्वन्निति । ततो रक्षांसि यज्ञमनूदपिबन्त ॥ २९ ॥

ते देवा अध्वर्युमब्रुवन्–यूपशकलमेव जुहुधि, तदा हैष स्वगाकृतो भविष्यति, तथो रक्षांसि यज्ञं नानूत्पास्यन्ते–अयं वै वज्र उद्यत इति ॥ ३० ॥

---

ब्रा. १ । ६ । २ । १ ) । देवैस्तिरोभावितस्य यज्ञस्य यूपस्य इतरेषामनुष्ठातॄणां प्रज्ञापकत्वात्, प्रज्ञापकस्य पुरस्ताद्भावित्वदर्शनाद्यूपोऽपि पुरस्ताद्देशे स्थाप्य इत्यर्थः । 'मनोजवः' मनसो वेगः । यूपस्य देवैराच्छादितयज्ञस्य प्रज्ञापकत्वं तैत्तिरीयकेऽप्युक्तम्–"यज्ञेन वै देवाः सुवर्गं लोकमायन्; तेऽमन्यन्त, मनुष्या नोऽन्वाभविष्यन्तीति; ते यूपेन योपयित्वा सुवर्गं लोकमायन् । तमृषयो यूपेनैवानुप्राजानन्; तद् यूपस्य यूपत्वम्"–( तै. सं. ६ । ३ । ४ । ७ ) इति ॥ २७ ॥

स वा अष्टाश्रिरित्यादि । स्पष्टम् ॥ २८ ॥

यूपे[1] निगूढस्य स्वरोरुत्तरत्र प्रतिपत्तिकर्मत्वेन यूपप्रतिनिध्यात्मना होममभिधातुमाह–तं ह स्मैतमित्यादिना । यथेदमप्येतर्ह्येक इति । 'अप्येतर्हि' इदानीमपि, 'एके' अनुष्ठातारः, 'इदम्'–इत्यनुप्रहरणक्रियाविशेषणम् । देवा यथा, तथा अनुप्रहरन्तीत्यर्थः । इदानीमपि अनुप्रहरणमेव कुर्वन्ति । देवा अकुर्वन्निति । न तावद् यज्ञस्थानीयस्य यूपस्य दग्धत्वेन बाधकाभावात् यथाकामम् 'उदपिबन्त' ॥ २९ ॥ ३० ॥

---

१–स्रुवेणावटे जुहोति तूर्ष्णीम् । का. श्रौ. सू. ६ । ५३ ।

सोऽध्वर्युः । ( र्यूं ) यूपशकलमेवाजुहोत्तदुहैष स्वगाकृतऽआसीत्तथो रक्षाᳬंसि यज्ञं नानूदपिबन्तायं वै वज्रऽ उद्यत इति ॥ ३१ ॥

तथो ऽएवैषऽ एतत् । ( द्यू ) यूपशकलमेव जुहोति तदुहैष स्वगाकृतो भवति तथो रक्षाᳬंसि यज्ञं नानूत्पिबन्तेऽयं वै वज्र उद्यत इति स जुहोति दिवं ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहेति॥३२॥

इति पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ५ ॥ ४ ॥ ( ७ । १ )

यावती वै वेदिस्तावती पृथिवी । वज्रा वै यूपास्तदिमामेवैतत्पृथिवी- मेतैर्वज्रैः स्पृणुतेऽस्यै सपत्नान्निर्भजति तस्माद्यूपैकादशिनी भवति द्वादश उपशयो भवति वितष्टस्तं दक्षिणतऽ उपनिदधाति तद्यद्द्वादश उप- शयो भवति ॥ १ ॥

---

सोऽध्वर्युर्यूपशकलमेवाजुहोत् । तद हैष स्वगाकृत आसीत् । तथो रक्षांसि यज्ञं नानूदपिबन्त अयं वै वज्र उद्यत इति ॥ ३१ ॥

तथोऽएवैष एतद्यूपशकलमेव जुहोति । तदहैष स्वगाकृतो भवति । तथो रक्षांसि यज्ञं नानूत्पि- बन्ते–अयं वै वज्र उद्यत इति । स जुहोति–" दिवं ते धूमो गच्छतु स्वर्ज्योतिः । पृथिवीं भस्मना पृण स्वाहा "–( माध्यं. सं. ६ । २१ ) ( तै. सं. ६।३।३।४ ) इति ॥ ३२ ॥

यावती वै वेदिस्तावती पृथिवी । वज्रा वै यूपाः तद् इमामेवैतत् पृथिवीमेतैर्वज्रैः स्पृणुते । अस्यै सपत्नान्निर्भजति । तस्माद् यूपैकादशिनी भवति । द्वादश उपशयो भवति वितष्टः । तं दक्षिणत उपनिदधाति । तद् यद्द्वादश उपशयो भवति ॥ १ ॥

---

सोऽध्वर्युरिति । देवाः ' तत् ' तेनैव खलु ' एषः ' यज्ञः ' स्वगाकृतः ' स्वं स्थानं प्राप्तः, कृतप्रति- पत्तिकः ' आसीत् ' । स्पष्टमन्यत् ॥ ३१ ॥ ३२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये

तृतीयकाण्डे सप्तमाध्याये प्रथमं ब्राह्मणम् ॥ ( ३–७–१ )

अग्नीषोमीययूपप्रसङ्गात् यूपैकादशिनीं विधातुमुपोद्घातयति–यावती वै वेदिरिति । इयं वेदिः परो अन्तः पृथिव्याः " ( माध्यं. सं. २३।६२ ) ( ऋ. सं १ । १६४ क. ३५ ) " वेदिमाहुः परमन्तं पृथिव्याः " ( माध्यं. सं. २३।६२ ) ( तै० सं ७ ।४।१८।२ ) इत्यादिश्रुतेः । ' इमां ' पृथिवीम् ' एतैः ' यूपैः ' वज्रैः ' ' स्पृणुते ' बलवतीकरोति । अतोऽत्यन्तदाढर्याय यूपैकादशिनी कर्त्तव्या । अत्र यूपैकादशिनीविधानं " यूपै- कादशिनी चेत् रथाक्षमात्राण्यन्तराणि[1] " ( का. श्रौ. सू. ८ । २१०–२१७ ) इत्यादिसूत्रेषु द्रष्टव्यम् ।

---

१–यूपैकदशिनींचेद्रथाक्षमात्राण्यंतराणि । पूर्वार्द्धवा समं विभज्य । पक्षसम्मितावाऽग्नौ । यूपाहुत्यभ्यादानयवावपनानि सकृत् । भेदेनान्यत्सान्निपातित्वात् । मध्यमं परिलिख्योत्तरं दक्षिणं वाव्यत्यासमितरान् । आवटहोमात्करोति । अञ्जनाद्याचषालेक्षणात्कृत्वै- कैकस्य ॥ का. श्रौ. सू. ८।२१०–२१७ ॥ रथाक्षप्रमाणं शुल्बे । चतुःशतमक्षः १०४ अंगुलानि । अष्टांगुलाधिकं हस्तचतु- ष्टयमित्यर्थः ।

देवा ह वै यज्ञं तन्वानाः । ( स्ते ) तेऽसुररक्षसेभ्यऽ आसङ्गाद्बिभयाश्चक्रुस्तद्यऽ एत ऽउच्छ्रिता यथेषुरस्ता तया वै स्तृणुते वा नु वा स्तृणुते यथा दण्डः प्रहृतस्तेन वै स्तृणुते वा नु वा स्तृणुतेऽथ युऽ एषु द्वादश ऽउपशयो भवति यथेषुरायतानस्ता यथोद्यतमप्रहृतमेवमेष व्वज्र ऽउद्यतो दक्षिणतो नाष्ट्राणाᳬं रक्षसामपहत्यै तस्माद्द्वादश ऽउपशयो भवति ॥२॥

तं निदधाति । ( त्ये ) एष ते पृथिव्यां लोक आरण्यस्ते पशुरिति पशुश्च वै यूपश्च तदस्मा ऽआरण्यमेव पशूनामनुदिशति तेनो ऽएष पशुमान् भवति तद् द्वयं यूपैकादशिन्यै सम्मयनमाहुः श्वःसुत्यायै ह न्वेवैके सम्मिन्वन्ति प्रकुब्द्रतायै चैव श्वः सुत्यायै यूपं मिन्वन्तीत्यु च ॥ ३ ॥

---

देवा ह वै यज्ञं तन्वानाः, तेऽसुररक्षसेभ्य आसङ्गाद् बिभयाञ्चक्रुः । तद् य एतं ऽउच्छ्रिता–यथेषुरस्ता तया वै स्तृणुते वा न वा स्तृणुते । यथा दण्डः प्रहृतः तेन वै स्तृणुते वा, न वा स्तृणुते । अथ य एष द्वादश उपशयो भवति । यथेषुरायतानस्ता, यथोद्यतमप्रहृतम्,–एवमेष वज्र उद्यतो दक्षिणतो नाष्ट्राणां रक्षसामपहत्यै । तस्माद्द्वादश उपशयो भवति ॥ २ ॥

तं निधदाति । " एष ते पृथिव्यां लोकः, आरण्यस्ते पशुः "–( वा, सं. ६ । ६ ) इति । पशुश्च वै यूपश्च । तदस्माऽआरण्यमेव पशूनामनुदिशति । तेनोऽएष पशुमान् भवति । तद्द्वयं यूपैकादशिन्यै सम्मयनमाहुः । श्वः सुत्यायै ह न्वेवैके सम्मिन्वन्ति । प्रकुब्द्रतायै चैव श्वः सुत्यायै यूपं मिन्वन्तीत्यु च ॥ ३ ॥

---

तस्मिन् पक्षे ' उपशयः ' यूपानां समीपे शेते इत्युपशयोऽन्यो यूपः, ( तै० सं ६ । ६ । ४ ) स ' द्वादशो भवति ' स च , ' वितष्टः ' विशेषेणोपरप्रदेशेऽपि तष्टः । ' तं ' यूपानां दक्षिणदेशे भूमौ निखातं कृत्वा तूर्णीं स्थापयेत् ॥ १ ॥

उपशयं रक्षोनाशकत्वेन प्रशंसति–देवा ह वै यज्ञं तन्वाना इत्यादिना । यथा मुक्तेषुः प्रहृतो दन्तिदण्डो वा यदा ऋजुर्गच्छति, तदा लक्ष्यं विध्यति, न चेन्न; एवं यूपोऽपि उपशयसहितः स्थापितः तत्पतनाशङ्काया अपगतत्वाद्रक्षसां यूपविषयं भयं नोदियादित्यर्थः । अतो यूपस्य सोपशयत्वे सति मुक्तेषुवत् यदोपशयाख्यं वज्रमुद्गच्छतीति रक्षसां भयमुत्पद्यते । तस्मादुपशयः कर्त्तव्य इत्यर्थः ॥ २ ॥

निधानमन्त्रमाह–तं निदधात्येष ते पृथिव्यां लोक आरण्यस्ते पशुरितीति । हे उपशय ! यूप ! यूपानां दक्षिणप्रदेशः ' पृथिव्यां ' ' ते ' तव ' लोकः ' स्थानम्, अतो न भूम्यामन्तर्मिनामीत्यर्थः । तर्ह्यस्य कः पशुः ? इत्याकांक्षायां तं दर्शयति–आरण्यस्ते पशुरिति । अरण्ये भवः ' आरण्यः ' व्याघ्रादिरिति निर्दिशेत पृथिव्यां स्थापयेत् । तथा च सूत्रम् "वितष्टं द्वादशं निदधात्येषत इति " ( का० श्रौ० सू० ८।२२६) इति ।

---

१–' ककुब्रतायै ' इति जर्मनीपुस्तके, ' ककुब्त्रतायै ' इति जयपुरीयपुस्तके, ' ककुब्द्रतायै ' इति वैदिकपाठपुस्तके पाठः अस्य शब्दस्यार्थस्तु न ज्ञायते ।

तद्ध तथा न कुर्यात् । ( द ) अग्निष्ठमेवोच्छ्रयेदिदं वै यूपमुच्छ्रित्याध्वर्यु-रापरिव्ययणान्नान्वर्जत्यपरिवीता वा ऽएते ऽएताᳬं रात्रिं वसन्ति सा न्वेव परिचक्षा पशवे वै यूपमुच्छ्रयन्ति प्रातर्वै पशूनालभन्ते तस्माद्ध प्रातरेवोच्छ्रयेत् ॥ ४ ॥

( त्स ) स य उत्तरोऽग्निष्ठात्स्यात् ( त्त ) तमेवाग्र ऽउच्छ्रयेदथ दक्षिण-मथोत्तरं दक्षिणार्द्ध्यमुत्तमं तथोदीची भवति ॥ ५ ॥

---

तद्ध तथा न कुर्यात् । अग्निष्ठमेवोच्छ्रयेत् । इदं वै यूपमुच्छ्रित्याध्वर्युरापरिव्ययणान्नान्वर्जति अपरिवीता वा एते । एतां रात्रिं वसन्ति । सा न्वेव परिचक्षा । पशवे वै यूपमुच्छ्रयन्ति । प्रातर्वै पशूनालभन्ते । तस्माद्ध प्रातरेवोच्छ्रयेत् ॥ ४ ॥

स य उत्तरोऽग्निष्ठात्स्यात्—तमेवाग्रऽउच्छ्रयेत् । अथ दक्षिणम् । अथोत्तरम् । दक्षिणार्द्ध्यमुत्तमम् । तथोदीची भवति ॥ ५ ॥

---

यूपस्य सर्वथा पशुसम्बन्धोऽपेक्षित इत्याह—पशुश्च वै यूपश्चेति । अविनाभूतावित्यर्थः । 'वै'-शब्द इतर-यूपानां पशुसम्बन्धनियमप्रसिद्धिद्योतनार्थः 'तत्' तस्मादव्यभिचारात् । तद्द्वयमिति । यूपैकादशिन्या 'सम्मयनं' 'द्वयं' द्विविधमित्यर्थः । 'आहुः' विवदन्ते अभिज्ञाः ॥

तत्रैकेषाञ्चित् पक्षमाह—श्वः सुत्यायै ह त्वेवैके सम्मिन्वन्तीति । 'श्वः' परेद्युः क्रियमाणायाः सुत्यायाः पूर्वस्मिन् दिने अग्निष्ठप्रमुखान् सर्वान् यूपान् निखनन्ति ॥ ३ ॥

तं पक्षं निराचष्टे—तद्ध तथेति । तस्मिन् काले 'अग्निष्ठम्' एकम् एव उत्तरवेदेः पुरोदेशस्थमेवाग्नीषोमीयपश्वर्थम् 'उच्छ्रयेत्' । इतरेषामपि पूर्वेद्युरुच्छ्रयणे दोषमाह—इदं वा इत्यादिना । 'इदं' वक्ष्यमाणं भवतीत्यर्थः । आ परिव्ययणात् 'रशनापरिव्ययणपर्यन्तम्, 'अध्वर्युः' 'नान्वर्जति' नैव हस्तस्य स्पर्शं परित्यजेत् । अतोऽग्निव्यतिरिक्तानां परिव्ययणस्य 'प्रातः' परेद्युः पशूपकरणकाले कर्त्तव्यत्वात्कृत्स्नां 'रात्रिम्' 'अपरिवीता' नग्ना वसन्ति । 'सा न्वेव' सैव, उक्तलक्षणैव 'परिचक्षा' पूर्वेद्युरुच्छ्रयमाणपक्षस्य निन्दा ॥

स्वपक्षे युक्तिमाह—पशवे वै यूपमुच्छ्रयन्तीति । 'तस्मात्' 'प्रातरेव' परेद्युरेव उच्छ्रयणं कुर्यादिति निगमनम् ॥ ४ ॥

एकादशिनीपक्षे केन क्रमेणोच्छ्रयणमिति, तमाह—स य उत्तरोऽग्निष्ठात्स्यादिति । अग्निष्ठमध्यमवधिं कृत्वा तत उत्तरतः प्रथमम्, ततो दक्षिणतो द्वितीयम्, तत उत्तरतस्तृतीयम्, ततो दक्षिणतश्चतुर्थमित्येवमुभयोः पार्श्वयोरुत्तरप्राथम्येन पञ्च पञ्च यूपा उच्छ्रिताः । एवं क्रमेण दक्षिणार्द्धे भवम् 'उत्तमं' कुर्यात् । 'तथा' सति 'उदीची भवति' उत्तरोपक्रमा भवतीत्यर्थः ॥ ५ ॥

---

१—श्वो वा दक्षिणोत्तराणामत्रगूहनान्तमालंभनासंभवात् । का.श्रौ.सू.८।२१।८। २—परिवीयमध्यममगूहनांतम् । का. श्रौ. सू.८।२१।९।३—अ ग्निष्ठेचैषा१ रशनाः परिवेष्ट्य व्यासयति । अभ्यंजनप्रभृति करोति । यथाखातमुच्छ्रयति । व्वर्षिष्ठो दाक्षिणोऽनुपूर्वा इतरे । तीव्र सुत्याग्निष्ठः प्राचीच । यथायूपं व्वेदिवर्द्धनम् । का. श्रौ. सू. ८।२२०–२२५।

( त्यु ) अथो ऽइतरथाहुः । ( ई ) दक्षिणमेवाग्रेऽग्निष्ठादुच्छ्रयेदथोत्तरमथ दक्षिणमुत्तरार्द्ध्यमुत्तमं तथो हास्योदगेव कर्मानुसन्तिष्ठत ऽइति ॥ ६ ॥

स यो वर्षिष्ठः स दक्षिणार्द्ध्यः स्यात् । ( इ ) अथ ह्रसीयानथ ह्रसीयानुत्तरार्द्ध्यो ह्रसिष्ठस्तथोदीची भवति ॥ ७ ॥

( त्यु ) अथ पत्नीभ्यः पत्नीयूपमुच्छ्रयन्ति । सर्वत्वाय न्वेव पत्नीयूपमुच्छ्रीयते तत्त्वाष्ट्रं पशुमालभते त्वष्टा वै सिक्तꣳ रेतो विकरोति तदेष एवैतत्सिक्तꣳ रेतो विकरोति मुष्करो भवत्येष वै प्रजनयिता यन्मुष्करस्तस्मान्मुष्करो भवति तन्न सꣳस्थापयेत्पर्यग्निकृतमेवोत्सृजेत्स यत्सꣳस्थापयेत्प्रजायै हान्तमियात्तत्प्रजामुत्सृजति तस्मान्न सꣳस्थापयेत्पर्यग्निकृतमेवोत्सृजेत् ॥ ८ ॥

इति पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ५।५॥ (७।२) ॥

---

अथोऽइतरथाहुः । दक्षिणमेवाग्रेऽग्निष्ठादुच्छ्रयेत् । अथोत्तरम् । अथ दक्षिणम् । उत्तरार्द्ध्यमुत्तमम् । तथो हास्योदगेव कर्मानुसन्तिष्ठतऽइति ॥ ६ ॥

स यो वर्षिष्ठः—स दक्षिणार्द्ध्यः स्यात् । अथ ह्रसीयान् । अथ ह्रसीयानुत्तरार्द्ध्यो ह्रसिष्ठस्तथोदीची भवति ॥ ७ ॥

अथ पत्नीभ्यः पत्नीयूपमुच्छ्रयन्ति । सर्वत्वाय न्वेव पत्नीयूपमुच्छ्रीयते । तत् त्वाष्ट्रं पशुमालभते । त्वष्टा वै सिक्तं रेतो विकरोति । तदेष एवैतत् सिक्तं रेतो विकरोति मुष्करो भवति । एष वै प्रजनयिता—यन्मुष्करः । तस्मान्मुष्करो भवति । तन्न संस्थापयेत् । पर्यग्निकृतमेवोत्सृजेत् । स यत्संस्थापयेत्—प्रजायै हान्तमियात् । तत्प्रजामुत्सृजति । तस्मान्न संस्थापयेत्—पर्यग्निकृतमेवोत्सृजेत् ॥ ८ ॥ इति यूपसम्पादनम् ॥

---

अथो इतरथाहुरिति । " दक्षिणमेवाग्रे " इत्यादिकं पूर्ववाक्यवैपरीत्येन व्याख्येयम् । तथो हास्येति । एवं कुर्वतः कर्म ' उदगेव ' आनुपूर्व्येण ' सन्तिष्ठते ' समाप्यते । पूर्वस्मिन् पक्षे उदगुपक्रमः, द्वितीये उदगपवर्ग इति भेदः ॥ ६ ॥

स यो वर्षिष्ठ इति । तेषामुत्तरो ' यः वर्षिष्ठः ' ' सः दक्षिणार्द्ध्यः स्यात् ' अथ ह्रसीयानित्यादिना । दक्षिणोपक्रममुदगपवर्गम् । प्रथमं वर्षिष्ठमत्युच्छ्रितं ततः परमीषदुच्छ्रितमित्येवं क्रमेणोच्छ्रयेत् । तथा सति सर्वेषामुत्तरस्तु 'ह्रसिष्ठः' अतिशयेन ह्रस्वो भवति ॥ ७ ॥

प्रसङ्गात् पात्नीवतपशुप्रयोगमाह[1]—अथ पत्नीभ्यः पत्नीयूपमुच्छ्रयन्तीति[2] । ' पत्नीयपम् ' इति पात्नीवत-

---

१–' पशुप्रयोजनमाह ' इति क. पा. २–यूपैकादशिन्यां वसावपामार्जनांतं कृत्वा शालाद्वार्येपत्नीयूपोच्छ्रयणं नाभिमात्रस्य । परिस्तरणपात्रसं॰ सादनप्रोक्षणाज्यनिर्व्वपणाधिश्रयणानि कृत्वास्फ्यादि करोति । त्वाष्ट्रोबस्तःपर्यग्निकृतमुत्सृजंति।का॰श्रौ. ८।२४१–२४३।

पशुश्च वै यूपश्च । न वा ऽऋते यूपात्पशुमालभन्ते कदाचन तद्यत्तथा नु ह वा ऽएतस्मा ऽअग्रे पशवश्चक्षमिरे यदन्नमभविष्यन्युथेदमन्नं भूता यथा हैवायं द्विपात्पुरुष उच्छ्रित एवᳫं हैव द्विपाद उच्छ्रिताश्चेरुः ॥ १ ॥

( स्तु ) ततो देवा ऽएतं वज्रं ददृशुः (स)यद्यूपं तमुच्छिश्रियुस्तस्माद्भीषा प्राल्लीयन्त ततश्चतुष्पादा अभवंस्ततोऽन्नमभवन्त्यथेदमन्नं भूता एतस्मै हि वा ऽएते ऽतिष्ठन्त तस्माद्यूप ऽएव पशुमालभन्ते नर्ते यूपात्कदाचन ॥ २ ॥

अग्नीषोमीयपशुयागः ।

पशुश्च वै यूपश्च । न वाऽऋते यूपात्पशुमालभन्ते । कदाचन । तद्—यत्तथा । न ह वाऽएतस्मा-ऽअग्रे पशवश्चक्षमिरे । यदन्नमभविष्यन्—यथेदमन्नं भूता । यथा हैवायं द्विपात् पुरुष उच्छ्रितः । एवं हैव द्विपाद उच्छ्रिताश्चेरुः ॥ १ ॥

ततो देवा एतं वज्रं ददृशुः—यद्यूपम् । तमुच्छिश्रियुः । तस्माद् भीषा प्राल्लीयन्त । ततश्चतुष्पादा अभवन् । ततोऽन्नमभवन्—यथेदमन्नं भूता । एतस्मै हि वाऽएतेऽतिष्ठन्त । तस्माद् यूपऽएव पशु-मालभन्ते । नर्ते यूपात् कदाचन ॥ २ ॥

यूपस्य सञ्ज्ञा, तं ' पत्नीभ्यः ' अर्थाय उच्छ्रयेत् । एतत्प्रशंसति—सर्वत्वाय न्विति । तत्त्वाष्ट्रमित्यादि । ( का. श्रौ. सू. ८ । २४३ ) ' तत् ' तत्र यूपे ' त्वाष्ट्रं ' त्वष्टृदेवताकं ' पशुम् ' आलभेत । देवतां प्रशं-सति—त्वष्टा वै सिक्तं रेत इति । ' वै ' शब्देन " यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो वै तत्प्रजायते—" ( तै. सं. १ । ९ । २ ) इत्यादि श्रुत्यन्तरप्रसिद्धिर्द्योत्यते । विशेषमाह—मुष्करो भवतीति । 'मुष्करः ' प्रकृष्टमुष्कः । " ऊषसुषि—( पा. सू. ५–२–१०७ ) " इत्यादिना रप्रत्ययः । इतरपशुवत्सञ्ज्ञपनप्रसक्तावाह—तं न संस्थापयेत्, पर्यग्निकृतमेवोत्सृजेदिति । ' संस्थापनम् ' पशुसञ्ज्ञप-नम् । 'एव ' शब्दो भिन्नक्रमः । उत्सृजेदेव, न संस्थापयेत् । संस्थापनपक्षे दोषमाह—स यत्संस्थापयेदिति । ' प्रजायै ' प्रजायाः, पुत्रपौत्रादिरूपायाः ' अन्तम् ' अवसानम् ' इयात् ' प्राप्नुयात् । मुष्करस्य प्रजननेन पितृत्वोपन्यासात्सञ्ज्ञपनमयुक्तम्[1] ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये तृतीय-काण्डे सप्तमाध्याये द्वितीयं ब्राह्मणम् ॥ ( ३–७–२ ) ॥

पशुनियोजनाय सर्वथा यूपेनैव भवितव्यमित्यमुमर्थमाख्यानमुखेनोपपादयति—पशुश्च वै यूपश्चेत्यादिना । अविनाभूतावित्यर्थः । व्याप्तिं दर्शयति—न वा ऋत इति । यतो यूपं विना पश्वालम्भो नास्ति, केनापि प्रकारेण न तथा स्यात्, यथा पशोर्यूपेन; अतस्तदुपपद्यत इत्यर्थः । तत् प्रदर्श्यते—न ह वा इत्यादिना । ' एतस्मै ' वक्ष्यमाणाय देवानामन्नभावाय ' न ' ' चक्षमिरे ' क्षममाणा भवन्ति, ' अन्नमभविष्यन्निति ' 'यत्' अस्ति, तस्मा इत्यर्थः । ' यथा ' ' इदम् ' इदानीं यूपनियुक्ताः ' अन्नं भूता ' अन्नमभवन्, तथा यूपाख्य-वज्रोद्यताया रहिते काले इत्यर्थः । अन्नभावाभावे कारणमाह—यथा हैवायं द्विपात्पुरुष इति ॥ १ ॥

ततो देवा इति । ' तं यूपम् ' ' उच्छिश्रियुः ' उच्छ्रयणमकुर्वन् । ' तस्मात् ' भयाद्धेतोः ' प्राल्लीयन्त '

[1]– ' संज्ञपनमयुक्तः ' इति क. पा. ।

(त्ता) अथोपाकृत्य पशुम् । (म) अग्निं मथित्वा नियुनक्ति तद्यत्तथा नु ह वा ऽएतस्मा ऽअग्रे पशवश्चक्षमिरे यद्धविरभविष्यन्यथैनानिदꣳ हविर्भूतानग्नौ जुह्वति तान्देवा उपनिरुरुधुस्त ऽउपनिरुद्धा नोपावेयुः ॥ ३ ॥

(स्ते) ते होचुः । (र्न) न वा ऽइमेऽस्य यामं विदुर्यदग्नौ हविर्जुह्वति नैतां प्रतिष्ठामुपरुद्ध्यैव पशूनग्निं मथित्वाग्नावग्निं जुहवाम ते वेदिष्यन्त्येष वै किल हविषो याम एषा प्रतिष्ठाऽग्नौ वै किल हविर्जुह्वतीति ततोऽभ्युवैष्यन्ति ततो रातमनस आलम्भाय भविष्यतीति ॥ ४ ॥

त उपरुध्यैव पशून् । (न) अग्निं मथित्वाग्नावग्निमजुहवुस्तेऽविदुरेष वै किल हविषो या त एषा प्रतिष्ठाग्नौ वै किल हविर्जुह्वतीति ततोऽभ्युवायंस्ततो रातमनस आलम्भायाभवन् ॥ ५ ॥

---

अथोपाकृत्य पशुम्, अग्निं मथित्वा नियुनक्ति । तद्यत्तथा । न ह वाऽएतस्माऽअग्रे पशवश्चक्षमिरे । यद्धविरभविष्यन्—यथैनानिदं हविर्भूतानग्नौ जुह्वति । तान् देवा उपनिरुरुधुः । तऽउपनिरुद्धा नोपावेयुः ॥ ३ ॥

ते होचुः । न वाऽ इमेऽस्य यामं विदुः—यदग्नौ हविर्जुह्वति । नैतां प्रतिष्ठामुपरुद्ध्यैव पशूनग्निं मथित्वाग्नावग्निं जुहवाम । ते वेदिष्यन्ति—एष वै किल हविषो यामः, एषा प्रतिष्ठा । अग्नौ वै किल हविर्जुह्वतीति । ततोऽभ्यवैष्यन्ति । ततो रातमनस आलम्भाय भविष्यन्तीति ॥ ४ ॥

त उपरुध्यैव पशून्, अग्निं मथित्वा, अग्नावग्निमजुहवुः । तेऽविदुः—एष वै किल हविषो यामः, एषा प्रतिष्ठा । अग्नौ वै किल हविर्जुह्वतीति । ततोऽभ्यवायन् । ततो रातमनस आलम्भायाभवन् ॥ ५ ॥

---

प्रकर्षेण व्लीना अवचनीया अभवन् । 'ततः' हेतोः मनुष्यवद् द्विपादाः सन्तः पश्चात् 'चतुष्पादा अभवन्' ॥ २ ॥

प्रासङ्गिकं यूपैकादशिनीपक्षं परिसमाप्य प्रकृतमग्नीषोमीयपशुप्रयोगमाह—अथोपाकृत्य पशुमिति । पशूपाकरणानन्तरम् अग्निमन्थनानन्तरमेव पशुं यूपे नियुञ्जीत । पशुनियोजनस्य अग्निमन्थनानन्तरकालं प्रशंसति—तद्यत्तथा नं ह वा एतस्मा अग्रे पशव इत्यादिना । पूर्वार्थवादवाक्यवत्तद्व्याख्येयम् । 'नोपावेयुः' नोपगताः पशवः ॥ ३ ॥

ते होचुरिति । 'न वा' 'इमे' पशवः 'यदग्नौ जुह्वति' । यतः 'अस्य' नियोजनस्य 'यामं' प्रायनम्, अग्नौ होमलक्षणं 'न विदुः' न ज्ञातवन्तः । तदेव विशिनष्टि—नैतां प्रतिष्ठामिति । 'एतां' होमलक्षणां 'प्रतिष्ठाम्' अन्याख्यपरमपदस्थितिम् 'अग्नौ' उत्तरवेदिस्थे 'अग्निम्' मन्थनजन्यम् । 'एष वै किल'—इत्येतच्छब्दार्थमाह—अग्नौ वै किल हविर्जुह्वतीति । 'अभ्यवैष्यन्ति' अवगतिं प्राप्स्यन्ति । 'आलम्भाय' 'रातमनसः' दत्तमनस्काः 'भविष्यन्ति' 'इति' । शिष्टं स्पष्टार्थम् ॥ ४—६ ॥

---

१—अग्नीषोमीयोऽतःपशुः । का. श्रौ. सू. ८ । २०३ । तद्देवत्यः पशुपुरोडाशः । २०४ । अङ्ग्यादि करोति ।.२०५ ।

(वंस्तु) तुथो ऽएवैषु एतुत् । (दु) उपरुद्धचैवु पशुमग्निं मथित्वाग्नावग्निं जुहोति सु व्वेदैष वै किल हविषो याम एषा प्रतिष्ठाग्नौ वै किल हविर्जुह्वतीति ततोऽभ्यवैति ततो रातमना आलम्भाय भवति तुस्मादुपाकृत्य पशुमग्निं मथित्वा नियुनक्ति ॥ ६ ॥

तुदाहुः । (नों) नोपाकुर्यान्नाग्निं मन्थेद्रशनामेवादायाञ्जसोपपरेत्याभिधाय नियुञ्ज्यादिति तदु तथा न कुर्याद्यथाधर्मं तिरश्चथा चिकीर्षेदेवं तत्तस्मादेतुदेवानुपरीयात् ॥ ७ ॥

(दु) अथ तृणमादायोपाकरोति । द्वितीयवान्निरुणधा ऽइति द्वितीयवान् हि व्वीर्यवान् ॥ ८ ॥

स तृणमादत्ते । (त्तऽ) उपावीरसीत्युप हि द्वितीयोऽवति तस्मादाहोपावीरसीत्युप देवान्दैवीर्व्विशः प्रागुरिति दैव्यो वाऽएता व्विशो यत्पशवोऽस्थिषत देवेभ्य इत्येवैतदाह यदाहोप देवान्दैवीर्व्विशः प्रागुरिति ॥९॥

---

तथोऽएवैष एतदुपरुद्धचै पशुमग्निं मथित्वा अग्नावग्निं जुहोति। स वेद एष वै किल हविषो यामः एषा प्रतिष्ठा । अग्नौ वै किल हविर्जुह्वतीति । ततोऽभ्यवैति । ततो रातमना आलम्भाय भवति तस्मादुपाकृत्य पशुमग्निं मथित्वा नियुनक्ति ॥ ६ ॥

तदाहुः—नोपाकुर्यात्, नाग्निं मन्थेद्, रशनामेवादायाञ्जसोपपरेत्याभिधाय नियुञ्ज्यादिति । तदु तथा न कुर्यात् । यथा—धर्मं तिरश्चथा चिकीर्षेद्—एवं तत् । तस्मादेतदेवानुपरीयात् ॥ ७ ॥

अथ तृणमादायोपाकरोति । द्वितीयवान्निरुणधाऽइति । द्वितीयवान् हि वीर्यवान् ॥ ८ ॥

स तृणमादत्ते—" उपावीरसि "—( वा. सं. ६ । ७ ) इति । उप हि द्वितीयोऽवति । तस्मादाह—उपावीरसीति । " उप देवान् दैवीर्विशः प्रागुः "—( वा. सं. ६ । ७ ) इति । दैव्यो वाऽएता विशो—यत्पशवः। अस्थिषत देवेभ्य इत्येवैतदाह—यदाह—उपदेवान् दैवीर्विशः प्रागुरिति॥९॥

---

केवलनियोजनपक्षमुदाहृत्य निराचष्टे--तदाहुर्नोपाकुर्यादिति । उपकरणाद्यकृत्वा प्रथमत एव ' रशनामादाय ' साम्मुख्येन यूपसमीपं गत्वा ' अभिधाय ' पशुं बद्ध्वा ' नियुञ्ज्यात् ' नियुञ्जीत ॥ ७ ॥

क्रममुक्त्वा इदानीं सार्थवादमुपाकरणं विधत्ते--अथ तृणमादायेति । तृणादानस्य प्रयोजनमाह--द्वितीयवानिति । ' निरुणधै ' पशोर्निरोधं करवाणि । तावता किमायातमित्यत आह--द्वितीयवान् हि वीर्यवानिति । असहायस्य व्यापाराक्षमत्वं लोकसिद्धम् ॥ ८ ॥

स तृणमादत्त इति[२] । तृणादानमन्त्रस्यायमर्थः—हे तृण ! त्वम् 'उपावीरसि' समीपे स्थित्वा रक्षकोऽसि,

---

१—'पशोर्निरोधं करवाणि, इति क. पा. । २—उपवीरसीति तृणमादाय तेन पशुमुपस्पृशत्युपदेवानिति । का. श्रौ. सू. ६ । ७१ ।

( त्यु ) उशिजो व्वह्नितमानिति । व्विद्वाᳬंसो हि देवास्तस्मादाहोशिजो व्वह्नितमानिति ॥ १० ॥

देव त्वष्टर्व्वसु रमेति । त्वष्टा वै पशूनामीष्टे पशवो व्वसु तानेतद्देवा अतिष्ठमानांस्त्वष्टारमब्रुवन्नुपनिमदेति यदाह देव त्वष्टर्व्वसु रमेति ॥ ११ ॥

हव्या ते स्वदन्तामिति । यदा वा ऽएत ऽएतस्मा ऽअध्रियन्त यद्धविरभविष्यंस्तस्मादाह हव्या ते स्वदन्तामिति ॥ १२ ॥

---

"उशिजो वह्नितमान्"–( वा. सं. ६ । ७ ) इति । विद्वांसो हि देवाः । तस्मादाह– उशिजो वह्नितमानिति ॥ १० ॥

"देव त्वष्टर्वसु रम"–( वा. सं. ६ । ७ ) इति । त्वष्टा वै पशूनामीष्टे । पशवो वसु । तानेतद् देवा अतिष्ठमानांस्त्वष्टारमब्रुवन्–उपनिमदेति । यदाह–देव त्वष्टर्वसु रमेति ॥ ११ ॥

"हव्या ते स्वदन्ताम्"–( वा. सं. ६ । ७ ) इति । यदा वाऽएतऽएतस्माऽअध्रियन्त, यद्धविरभविष्यन् । तस्मादाह–हव्या ते स्वदन्तामिति ॥ १२ ॥

---

एकः कार्यकरोऽसीत्यर्थः । "अवितॄस्तॄ"–( पा. सू. उ. ३ । ४६६ ) इति ई–प्रत्ययः । 'दैवीः विशः' पशुलक्षणा देवसम्बन्धिन्यः प्रजाः 'देवान्' 'उपप्रागुः' प्राप्ताः देवतार्थमुपस्थिता इत्यर्थः ॥ ९ ॥

उशिजो वह्नितमानितीति देवान् विशिनष्टि । 'उशिजः' मेधाविनामैतत्, विद्वांस इत्यर्थः । 'वह्नितमान्' वोढृतमान् ॥ १० ॥

देव त्वष्टरिति । 'त्वष्टः ! देव !' पशुस्वामिन् ! 'वसु' वस्वाख्यं धनं 'रम' रमय, नियोजयेत्यर्थः॥ ११॥

हव्या ते स्वदन्तामितीति । हे पशो ! 'ते' 'हव्या' हवींषि 'स्वदन्ताम्' रेवती रमध्वमितीति । 'रेवतीः' रेवत्यो गावः पशवः 'रमध्वं' सङ्क्रीडध्वम् । हे बृहस्पते' ! बृहतः परिबृंहणकर्मणः स्वमिन् ! त्वं 'वसूनि' पशुलक्षणानि 'धारय' अत्र स्थापय ॥

मन्त्रं व्याचष्टे–उप हि द्वितीयोऽवतीत्यादिना । 'हि' शब्दो लोकप्रसिद्धिद्योतनार्थः । लोक एकः कर्म कर्तुमशक्तः, द्वितीयः तत्साहाय्यकरणेन तमवतीति प्रसिद्धम् । दैवीर्विश इत्यस्य तात्पर्यमाह–दैव्यो वा एता विशो यत् पशव इति । यथा विशः स्वस्वामिनं पुष्णन्ति, एवं पशवो हविषा पुष्णन्तीति तेषां प्रजारूपत्वोपचारः । अस्थिषत देवेभ्य इतीति । तेषामर्थायात्मानं प्रकाशितवन्त इत्यर्थः । "प्रकाशनस्थेयाख्ययोश्च"–( पा. सू. १ । ३ । २३ ) इत्यात्मनेपदम् । उशिक्छब्दार्थमाह– विद्वांसो हि देवा इति । त्वष्टुः प्रार्थनायाः कारणमाह–त्वष्टा वै पशूनामित्यादिना । 'वै' शब्दः "त्वष्टा वै पशूनां मिथुनानां रूपकृत्"–( तै. सं. ६ । ३ । ६ । २ ) ( श. प. १३ । १ । ८ । ७ ) । इत्यादिश्रुत्यन्तरप्रसिद्धिद्योतनार्थः । "देव त्वष्टर्वसु"–' इति ' मन्त्रभागो 'यदाह,' 'अतिष्ठमानान्' पशून् प्रति 'त्वष्टारं' 'देवाः' 'उपनिमद' 'इति' यत् 'अब्रुवन्' 'एतत्' एव 'आह' इत्यर्थः । 'उपनिमद' अस्मत्समीपे नितरां मादयेति तस्यार्थः । अथवा 'यत्' अध्वर्युणा 'देवत्वष्टः' इत्यभिधानम्, तत्; पुरा यद् देवैरुक्तलक्षणं त्वष्टृप्रार्थनमुक्तम्, तत्स्थानीयमित्यर्थः । एवंविधेषु वाक्येषु सर्वत्रैवं

रेवती रमध्वमिति । रेवन्तो हि पशवस्तस्मादाह रेवती रमध्वमिति बृहस्पते धारया वसूनीति ब्रह्म वै बृहस्पतिः पशवो वसु तानेतद्देवा ऽअतिष्ठमानान्ब्रह्मणैव परस्तात्पर्यदधुस्तन्नात्यायंस्तथो ऽएवैनानेष ऽएतद्ब्रह्मणैव परस्तात्परिदधाति तन्नातियन्ति तस्मादाह बृहस्पते धारया वसूनीति पाशं कृत्वा प्रतिमुञ्चत्यथातो नियोजनस्यैव ॥ १३ ॥

इति पञ्चमप्रपाठके षष्ठं ब्राह्मणम् ॥ ५ । ६ ॥ ( ७१३ )

## षष्ठप्रपाठके प्रथमं ब्राह्मणम् ।

पाशं कृत्वा प्रतिमुञ्चति । ( त्म्र ) ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामीति वरुण्या वा ऽएषा यद्रज्जुस्तदेनमेतदृतस्यैव पाशेन प्रतिमुञ्चति तथो हैनमेषा वरुण्या रज्जुर्न हिनस्ति ॥ १ ॥

"रेवती रमध्वम्"–( वा. सं. ६ । ८ ) इति रेवन्तो हि पशवः । तस्मादाह–रेवतीरमध्वमिति । "बृहस्पते धारया वसूनि"–( वा. सं. ६ । ८ ) इति । ब्रह्म वै बृहस्पतिः । पशवो वसु । तानेतद्देवा अतिष्ठमानान् ब्रह्मणैव परस्तात्पर्यदधुः । तन्नात्यायन् । तथोऽएवैनानेष एतद् ब्रह्मणैव परस्तात्परिदधाति तन्नातियन्ति । तस्मादाह–बृहस्पते धारया वसूनीति । पाशं कृत्वा प्रतिमुञ्चति । अथातो नियोजनस्यैव ॥ १३ ॥

पाशं कृत्वा प्रतिमुञ्चति । "ऋतस्य त्वा देवहविः पाशेन प्रति मुञ्चामि–" ( वा. सं. ६ । ८ ) इति । वरुण्या वाऽएषा यद्रज्जुः । तदेनमेतदृतस्यैव पाशेन प्रतिमुञ्चति । तथो हैनमेषा वरुण्या रज्जुर्न हिनस्ति ॥ १ ॥

व्याख्येयम् । हव्या ते स्वदन्तामिति । अस्याभिप्रायमाह–यदा वा एत इति । यद्यप्युपाकरणकाले हविषामनिष्पत्तेः स्वदनं नोपपद्यते, तथापि पलायनमकृत्वा यदावृता अभवन्, तदेव हविर्भविष्यतीर्थः । अत एवमभिधानमुपपद्यते ॥ १२ ॥ ( ९–१२ )

रेवन्तो हि पशव इत्यादि ब्राह्मणं स्पष्टम् । 'ब्रह्मणैव' 'परस्तात्' परे देशे 'पर्यदधुः' परितो अधारयन् । अथातो नियोजनस्यैवेति । विधानमभिधीयत इति शेषः ॥ १३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे सप्तमाध्याये तृतीयं ब्राह्मणम् ॥ ( ३–७–३ ) ॥

समन्त्रकं संबन्धनमाह–पाशं कृत्वा प्रतिमुञ्चतीति । पाशाग्रग्रन्थ्या सुषिरं कृत्वा, तस्मिन्नितरमग्रं बहिः प्रसार्य, बहिर्गतं पाशमाकृष्य, यथा शिरो न गलति, तथा कृत्वा बध्नीयात् ॥

ऋतस्य त्वेति । हे 'देवहविः'! पशो ! त्वाम् 'ऋतस्य पाशेन' 'प्रतिमुञ्चामि'। 'मानुषः' अहं केवलं 'धर्षा' धर्षणधर्मो । वरुण्येत्यादि । बध्नामीति बन्धनकर्मणो वरुणाभिमानिकत्वात् तत्साधनभूताया वरुणसम्बन्धिरज्जोः तत्त्वम्, तमपि परिहाय मन्त्रेण बन्धे सति ऋतपाशेन बन्धो भवेत् ॥ १ ॥

१ द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वांऽन्तराश्रृंगामिदक्षिणं बध्नात्यृतस्यत्वेति । देवस्यत्वेतियूपे । का. श्रौ. सू. ६।७८।७९

धर्षा मानुष इति । न वा ऽएतमग्रे मनुष्यो ऽधृष्णोत्स यदैवर्त्तस्य पाशेनैतद्देवहविः प्रतिमुञ्चत्यथैनं मनुष्यो धृष्णोति तस्मादाह धर्षा मानुष इति ॥ २ ॥

(त्यु) अथ नियुनक्ति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नीषोमाभ्यां जुष्टं नियुनज्मीति तद्यथैवादो देवतायै हविर्गृह्णन्नादिशत्येवमेवैतद्देवताभ्यामादिशत्यथ प्रोक्षत्येको वै प्रोक्षणस्य बन्धुर्मेध्यमेवैतत्करोति ॥ ३ ॥

स प्रोक्षति । ( त्य ) अद्भ्यस्त्वौषधीभ्य इति तद्यत एव सम्भवति तत एवैतन्मेध्यं करोतीदᳮ हि यदा वर्षत्यथौषधयो जायन्त ऽओषधीर्जग्ध्वापः पीत्वा तत एष रसः सम्भवति रसाद्रेतो रेतसः पशवस्तद्यत ऽएव सम्भवति यतश्च जायते तत एवैतन्मेध्यं करोति ॥ ४ ॥

( त्यु ) अनु त्वा माता मन्यतामनु पितेति स हि मातुश्चाधि पितुश्च जायते

---

" धर्षा मानुषः "–( वा. सं. ६ । ८ ) इति । न वाऽएतमग्रे मनुष्योऽधृष्णोत् । स यदैवय पाशेनैतद्देवहविः प्रतिमुञ्चति–अथैनं मनुष्यो धृष्णोति । तस्मादाह धर्षा मानुष इति ॥ २ ॥

अथ नियुनक्ति । " देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नीषोमाभ्यां जुष्टं नियुनज्मि "–( वा. सं. ६ । ९ ) इति । तद् यथैवादो देवतायै हविर्गृह्णन्नादिशति–एवमेवैतद्देवताभ्यामादिशति । अथ प्रोक्षति । एको वै प्रोक्षणस्य बन्धुः–मेध्यमेवैतत्करोति ॥

स प्रोक्षति । " अद्भ्यस्त्वौषधीभ्यः "–( वा. सं. ६ । ९ ) इति । तद् यत एव सम्भवति–तत एवैतन्मेध्यं करोति । इदं हि यदा वर्षति–अथौषधयो जायन्ते । औषधीर्जग्ध्वा, अपः पीत्वा, तत एष रसः सम्भवति । रसाद्रेतः । रेतसः पशवः । तद् यत एव सम्भवति, यतश्च जायते–तत एवैतन्मेध्यं करोति ॥ ४ ॥

" अनु त्वा माता मन्यतामनुपिता "–( वा. सं. ६ । ९ ) इति । स हि मातुश्चाधि

---

धर्षा मानुष इतीति मन्त्रभागस्य तात्पर्यमाह–न वा एतमग्र इत्यादिना । यस्मात् पशुधर्षणसामर्थ्यं मनुष्यस्य देवकृतपाशविमोकायत्तम्, अतो मन्त्रो " धर्षा मानुषः " ' इति ' ब्रूत इत्यर्थः ॥ २ ॥

अथ नियुनक्तीत्यादि । स्पष्टम् । देवतानिर्देशस्य प्रयोजनमाह–यथैवाद इति । ' यथैव ' ' अदः ' अमुष्मिन् दर्शपूर्णमासयागे हविर्निर्वापे देवतादर्शनम्, ' एवम् ' इदानीमपि प्रोक्षतीति । " एको वा " इत्यसकृद् गतम् ॥ ३ ॥

प्रोक्षणमन्त्रमाह–स प्रोक्षतीति । अद्भ्यस्त्वौषधीभ्य इतीति । ' अद्भ्यः ' च ' ओषधीभ्यः ' च सम्भूतं त्वां 'प्रोक्षामि' । मेध्यं करोतीति । सञ्ज्ञपनार्थं प्रोक्ष्यमाणं त्वां मात्रादिरनुमन्यताम्' 'सगर्भ्यः ' समाने उदरे

---

१–अद्भ्यस्त्वेतिपशुं प्रोक्षणीभिः प्रोक्षति । का. श्रौ. सू. ६ । ८१ ।

तद्यत एव जायते तत एवैतन्मेध्यं करोत्यनुभ्राता सगर्भ्योऽनुसखा सयूथ्य इति स यत्ते जन्म तेन त्वानुमतमारभ ऽइत्येवैतदाहाग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति तद्याभ्यां देवताभ्यामारभते ताभ्यां मेध्यं करोति ॥ ५ ॥

( त्य ) अथोपगृह्णाति । ( त्य ) अपाम्पेरुरसीति तदेनमन्तरतो मेध्यं करोत्यथाधस्तादुपोक्षत्यापो देवीः स्वदन्तु स्वात्तं चित्सदेवहविरिति तदेनꣳ सर्व्वतो मेध्यं करोति ॥ ६ ॥

( त्यु ) अथाहाग्नये समिद्ध्यमानायानुब्रूहीति । स उत्तरमाघारमाघार्य्या-सꣳस्पर्शयन्स्रुचौ पर्य्येत्य जुह्वा पशुꣳ समनक्ति शिरो वै यज्ञस्योत्तर

पितुश्च जायते । तद् यत एव जायते—तत एवैतन्मेध्यं करोति । " अनु भ्राता सगर्भ्योऽनुसखा सयूथ्यः "–( वा. सं. ६ । ९ ) इति । स यत्ते जन्म तेन त्वानुमतमारभे—इत्येवैतदाह । " अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि "–( वा. सं. ६ । ९ ) इति । तद् याभ्यां देवताभ्यामारभते—ताभ्यां मेध्यं करोति ॥ ५ ॥

अथोपगृह्णाति । " अपाम्पेरुरसि "–( वा. सं. ६ । १० ) इति । तदेनमन्तरतो मेध्यं करोति । अथाधस्तादुपोक्षति । " आपो देवीः स्वदन्तु स्वात्तं चित्सद्देवहविः "–( वा. सं. ६ । १० ) इति । तदेनं सर्वतो मेध्यं करोति ॥ ६ ॥

अथाह—'अग्नये समिध्यमानायानुब्रूहि' इति । स उत्तरमाघारमाघार्यासंस्पर्शयन्स्रुचौ पर्य्येत्य

भवः, 'अनुसखः' समानख्यानः, 'सयूथ्यः' समानयूथे भवः, सर्वैरनुमतं त्वाम् 'अग्नीषोमाभ्याम्' अर्थाय 'प्रोक्षामि' ॥

मन्त्रस्य परमप्रयोजनमाह—तद् यत एवेत्यादिना । कथं ताभ्यः सकाशात् पाशासम्भव इति, तदुपपादयति—इदं हि स यदा वर्षतीत्यादिना । आपश्चौषधयश्चोपादानकारणम्, मातापितरावाश्रयत्वेन निमित्तकारणम् । अतस्तत्सकाशान्मेध्यं करोति । सगर्भ्यादीनामपि जन्मसम्बन्धसम्भवात् तेन सम्बन्धिना सगर्भ्यादिनाऽनुमन्यत इत्युक्तं भवति । स्पष्टमन्यत् ॥ ४ ॥ ५ ॥

अथोपगृह्णातीति[1] । प्रोक्षणशेषं पानार्थं मुखसमीपे धारयेत् । हे पशो ! त्वम् 'अपां' जलानां 'पेरुः' पानशीलोऽसि । 'तत्' तस्योदकस्यान्तःप्रवेशात् 'एनं' पशुम् 'अन्तरतः मेध्यं करोति'

अथाधस्तादिति[2] । अधस्तादुपोक्षणमन्त्रस्यायमर्थः—हे 'आपो देवीः' आपो देव्यः ! 'स्वदन्तु' स्वादयन्तु । तथा स पशुः 'स्वात्तं' सुष्ठु स्वीकृतं भवतु । पशुर्विशेष्यते—'देवहविः' देवतयोर्हविर्भूतमिति स पशुः स्वान्नं च भवतु ॥ ६ ॥

अथाहाग्नये समिध्यमानायेति[3] । सामिधेन्यर्थं सम्प्रैषं कुर्यात् । स उत्तरमाघारमाघार्येति[4] । द्वितीय-

१–अपांपेरुरित्यास्य उपगृह्णाति । का. श्रौ. सू. ६ । ८२ । २–आपो देवीरित्यधस्तादुपोक्षति । का. श्रौ. सू. ६ । ८३ । ३–इध्मप्रैषादिकरोत्याप्रयाजेभ्यः । का. श्रौ. सू. ६ । ८४ । ४–उत्तराघारमाघार्य पशुं पूर्व्वे२समनक्ति ललाटा२सश्रोणिषु संत इति प्रतिमंत्रम् । का. श्रौ. सू. ६ । ८५ ।

आघार ऽएष वा ऽअत्र यज्ञो भवति यत्पशुस्तद्यज्ञ ऽएवैतच्छिरः प्रतिदधाति तस्माज्जुह्वा पशुꣳ समनक्ति ॥ ७ ॥

स ललाटे समनक्ति । सन्ते प्राणो वातेन गच्छतामिति समङ्गानि यजत्रैरित्यꣳसयोः सं यज्ञपतिराशिषेति श्रोण्योः स यस्मै कामाय पशुमालभन्ते तत्प्राप्नुहीत्येवैतदाह ॥ ८ ॥

इदं वै पशोः सञ्ज्ञप्यमानस्य । प्राणो वातमपिपद्यते तत्प्राप्नुहि यत्ते प्राणो वातमपिपद्याता ऽइत्येवैतदाह समङ्गानि यजत्रैरित्यङ्गैर्वा ऽअस्य यजन्ते तत्प्राप्नुहि यत्तेऽङ्गैर्यजान्ता ऽइत्येवैतदाह सं यज्ञपतिराशिषेति यजमानाय वा ऽएतेनाशिषमाशासते तत्प्राप्नुहि यत्त्वया यजमानायाशिषमाशासान्ता ऽइत्येवैतदाह सादयति स्रुचावथ प्रवरायाश्रावयति सोऽसावेव बन्धुः ॥ ९ ॥

---

जुह्वा पशुं समनक्ति । शिरो वै यज्ञस्योत्तर आघारः । एष वाऽअत्र यज्ञो भवति—यत्पशुः । तद् यज्ञ एवैतच्छिरः प्रतिदधाति । तस्माज्जुह्वा पशुं समनक्ति ॥ ७ ॥

स ललाटे समनक्ति । " सन्ते प्राणो वातेन गच्छताम् "—( वा. सं. ६ । १० ) इति । " समङ्गानि यजत्रैः "—( वा. सं. ६ । १० ) इत्यंसयोः । " सं यज्ञपतिराशिषा "—( वा. सं. ६ । १० ) इति श्रोण्योः । स यस्मै कामाय पशुमालभन्ते—तत् प्राप्नुहीत्येवैतदाह ॥ ८ ॥

इदं वै पशोः सञ्ज्ञप्यमानस्य प्राणो वातमपिपद्यते । तत्प्राप्नुहि—यत्ते प्राणो वातमपिपद्यातै—इत्येवैतदाह—समङ्गानि यजत्रैरिति । अङ्गैर्वाऽअस्य यजन्ते । तत्प्राप्नुहि—यत्तेऽङ्गैर्यजान्तै—इत्येवैतदाह । सं यज्ञपतिराशिषेति । यजमानाय वाऽएतेनाशिषमाशासते । तत् प्राप्नुहि—यत्त्वया यजमानायाशिषमाशासान्तै इत्येवैतदाह । सादयति स्रुचौ । अथ प्रवरायाश्रावयति । सोऽसावेव बन्धुः ॥९॥

---

मित्यर्थः । ' स्रुचौ ' जुहूपभृतौ ' असंस्पर्शयन् ', पुनरुत्तरतः ' पर्येत्य ' ' जुह्वा ' उत्तराघारावशिष्टेनाज्येन ' पशुम् ' ' अनक्ति ' आर्द्रीकरोति । तत् प्रशंसति—**शिरो वै यज्ञस्योत्तराघार** इति । प्रधानत्वात् ' पशुर्यज्ञः ', तस्य प्रथमतोऽनुष्ठेयत्वात् शिरस्त्वम् । अत आघारशेषेणाञ्जनेन 'यज्ञे' ' शिरः ' स्थापितवान् भवति॥७॥

अवयवावयविभेदेन मन्त्रभेदमाह—**स ललाटे समनक्ति सन्ते प्राण** इति । ( का. श्रौ. सू. ६ । ८९ ) बाह्यवातस्यैव शरीरान्तःप्रवेशेन प्राणत्वात् तस्य वातप्राप्तिर्युक्ता । ' अङ्गानि ' ' यजत्रैः ' यागैः ' सङ्गच्छन्ताम् ' । तथा ' यज्ञपतिः ' यजमानः ' आशिषा ' ' सङ्गच्छताम् ' । एतेन ' श्रोण्योः ' अनक्ति । अथ कृत्स्नतात्पर्यं यज्ञविषया आशीरेवेत्याह—**स यस्मै कामायेति** ॥ ८ ॥

मन्त्रान् क्रमेण व्याचष्टे—**इदं वै पशोरित्यादि** । ' इदं ' वक्ष्यमाणम्, लोकप्रसिद्धमित्यर्थः । सामान्येनोक्तं विशेषणं योजयति—**ततः प्राप्नुहीति** । यद्येतन्निमित्तेन प्राणो वातमभिपद्येत, तत् प्राप्नुहीत्येवैतदाहेत्यर्थः ।

(२) अथ द्वितीयमाश्रावयति । द्वौ ह्यत्र होतारौ भवतः स मैत्रावरुणायाहैवाश्रावयति यजमानं त्वेव प्रवृणीते ऽग्निर्ह दैवीनां विशां पुर एतेत्यग्निर्हि देवतानां मुखं तस्मादाहाग्निर्ह दैवीनां विशां पुर एतेत्ययं यजमानो मनुष्याणामिति तꣳहि सोऽन्वर्द्धो भवति यस्मिन्नर्द्धे यजते तस्मादाहायं यजमानो मनुष्याणामिति तयोरस्थूरि गार्हपत्यं दीदयच्छतꣳहिमाद्वायू ऽइति तयोरनार्त्तानि गार्हपत्यानि शतं वर्षाणि सन्त्वित्येवैतदाह ॥ १० ॥

राधाꣳसीत्सम्पृश्चानावसम्पृश्चानौ तन्व इति । राधाꣳस्येव सम्पृश्चाथां मापि तनूरित्येवैतदाह तौ ह यत्तनूरपि सम्पृश्चीयातां प्राग्निर्यजमानं दहेत्स यदग्नौ जुहोति तदेषोऽग्नये प्रयच्छत्यथ यामेवात्रर्त्विजो यजमानायाशिषमाशासते तामस्मै सर्वामग्निः समर्द्धयति तद्राधाꣳस्येव सम्पृश्चाते नापि तनूस्तस्मादाह राधाꣳसीत्सम्पृश्चानावसम्पृश्चानौ तन्व इति ॥ ११ ॥

इति षष्ठप्रपाठके प्रथमं ब्राह्मणम् ॥ ६ ॥ १ ॥ ७ ॥ ४ ॥

---

अथ द्वितीयमाश्रावयति । द्वौ ह्यत्र होतारौ भवतः । स मैत्रावरुणायाहैवाश्रावयति । यजमानं त्वेव प्रवृणते । "अग्निर्ह दैवीनां विशां पुर एता"–इति । अग्निर्हि देवतानां मुखम् । तस्मादाह–अग्निर्ह दैवीनां विशां पुर एतेति । "अयं यजमानो मनुष्याणाम्"–इति । तं हि सोऽन्वर्द्धो भवति–यस्मिन्नर्द्धे यजते । तस्मादाह अयं यजमानो मनुष्याणामिति । "तयोरस्थूरि गार्हपत्यं दीदयच्छतं हिमाद्वायू"–इति । तयोरनार्तानि गार्हपत्यानि शतं वर्षाणि सन्त्वित्येवैतदाह॥ १०॥

"राधांसीत्सम्पृश्चानावसम्पृश्चानौ तन्व"–इति । राधांस्येव सम्पृश्चाथां मापि तनूरित्येवैतदाह । तौ ह यत् तनूरपि सम्पृश्चीयाताम्; प्राग्निर्यजमानं दहेत् । स यदग्नौ जुहोति–तदेषोऽग्नये प्रयच्छति । अथ यामेवात्रर्त्विजो यजमानायाशिषमाशासते–तामस्मै सर्वामग्निः समर्द्धयति । तद् राधांस्येव सम्पृश्चाते, नापि तनूः । तस्मादाह–राधांसीत्सम्पृश्चानावसम्पृश्चानौ तन्व इति ॥ ११ ॥

---

गतप्रायमन्यत् । अत्र सूत्रम्–"आ प्रयाजेभ्य उत्तराघारमाघार्य पशुं पूर्वं समनक्ति ललाटांसश्रोणिषु सन्त इति प्रतिमन्त्रम्"–इति । ( का. श्रौ. सू. ६ । ८४–८५ ) । सादयति स्रुचावथ प्रवरायाश्रावयतीति । जुहूपभृतौ सादयित्वा प्रवरायाश्रावयेत् । आश्रावणार्थवादं प्रकृतिगतमत्रादिशति–सोऽसावेव बन्धुरिति ॥९॥

अथ द्वितीयमाश्रावयतीति । मैत्रावरुणस्यापि हौत्रकर्तृत्वाद् "द्वौ ह्यत्र होतारौ भवतः" इत्युक्तम् । द्वितीयाश्रावणं किमर्थमित्याह–स मैत्रावरुणायाहैवाश्रावयतीति । 'सः' अध्वर्युः । यजयानं त्वेवेति । 'एव'–कारेणर्त्विजां प्रवरणं निषिध्यते ॥

---

१–अयं मन्त्रः प्रचलितसंहितायां न दृश्यते । १–प्रव्रत्य होतारमाश्राव्याग्निर्ह दैवीनां विशां पुरएतायं यजमानो मनुष्याणा-मुन्वभिति मुत्येतयोरस्थूरिगार्हपत्यंदीदयधृत-हिमाद्वायूराधा-सीत्संपृश्चानावसंपृश्चानौ तन्व इति । का. श्रौ. सू. ६ । ८६ ।

यजमानप्रवरनिगदस्यायमर्थः—'अग्निः' खलु 'दैवीनां विशां' देवसम्बन्धिनीनां प्रजानां 'पुर एता' मुख्य इत्यर्थः। तथा 'मनुष्याणां विशां' 'यजमानः' 'पुर एता' मुख्यः। सर्वेऽपि प्राणिनस्तमनुसृत्य भवन्तीत्यर्थः। 'तयोः' अग्नियजमानयोः 'गार्हपत्यं' गृहपतिकर्म 'अस्थूरि' अनाश्यम्। शतवर्षपर्यन्तं हि दीक्षानुष्ठव्यत्वेन अग्नेस्तत्त्वं यजमानस्य च गार्हपत्यसम्बन्धः। 'राधांसि इत्' अन्नान्येव 'सम्पृञ्चानौ' मिश्रयन्तौ। 'तन्वः' तनूः 'असम्पृञ्चानौ' शरीरसम्पर्को यथा न स्यात्; शरीरसंपर्के दाहः स्यात्॥

क्रमेण व्याचष्टे—अग्निर्हेत्यादिना। **तं हि सोऽन्वर्द्धो भवति, यस्मिन्नर्द्धे यजत** इति। 'यस्मिन्' 'अर्द्धे' राष्ट्रे अयं यजमानो 'यजते' 'सोऽन्वर्द्धः' 'तं हि' तमनु। "हीने"—( पा. सू. १।४।३६ ) इत्यनोः कर्मप्रवचनीयत्वम्। 'अस्थूरि'-शब्दार्थमाह—**अनार्त्तानि गार्हपत्यानीति**। 'राधांसि'—इत्येतद् विभज्य व्याचष्टे—**राधांस्येवे**त्यादिना। इच्छब्द एवार्थे। तेन निरसनीयमाह—**नापि तनूरिति**। विपक्षे बाधकमाह—**तौ ह यत्तनूरपीति**। ननु "सं राधांसि सम्पृञ्चानौ"—इत्युक्तम्, सम्पर्कश्च परस्परप्रदानसव्यपेक्षः कथमत्र सम्भवतीति, तदुपपादयति—**स यदग्नौ जुहोतीति**। यदग्नौ प्रदानम्, यश्च तदग्नौ सम्पर्कः, ऋत्विग्भिः यजमानार्थमाशास्यमानानां फलानां तुष्टेनाग्निना दानमस्ति, तदेवाग्नेर्यजमानसम्पर्कः। 'तत्' तेन प्रतिपादितप्रकारेण तौ 'राधांसि सम्पृञ्चाते' इति॥ १०॥ ११॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे सप्तमाध्याये चतुर्थं ब्राह्मणम्॥ ३। ७। ४॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥ १॥
ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्त्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च॥ २॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः॥ ३॥
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः॥ ४॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे सप्तमोऽध्यायः समाप्तः॥ ३—७॥



# अष्टमाध्याये प्रथमं ब्राह्मणम् ।



तद्यत्रैतत्प्रवृतो होता होतृषदन ऽउपविशति । तदुपविश्य प्रसौति प्रसूतोऽध्वर्युः स्रुचावादत्ते ॥ १ ॥

(चेऽथा) अथाप्रीभिश्चरन्ति । तद्यदाप्रीभिश्चरन्ति सर्व्वेणेव वा ऽएष मनसा सर्व्वेणेवात्मना यज्ञꣳसम्भरति सञ्च जिहीर्षति यो दीक्षते तस्य रिरिचान इवात्मा भवति तमेताभिराप्रीभिराप्याययन्ति तद्यदाप्याययन्ति तस्मादाप्रियो नाम तस्मादाप्रीभिश्चरन्ति ॥ २ ॥

ते वा ऽएत ऽएकादश प्रयाजा भवन्ति । दश वाऽइमे पुरुषे प्राणा आत्मैकादशो यस्मिन्नेते प्राणाः प्रतिष्ठिता ऽएतावान्वै पुरुषस्तदस्य सर्व्वमात्मानमाप्याययन्ति तस्मादेकादश प्रयाजा भवन्ति ॥ ३ ॥

---

तद् यत्रैतत्प्रवृत्तो होता होतृषदनऽउपविशति । तद् उपविश्य प्रसौति । प्रसूतोऽध्वर्युः स्रुचावादत्ते ॥ १ ॥

अथाप्रीभिश्चरन्ति । तद् यदाप्रीभिश्चरन्ति । सर्वेणेव वाऽएष मनसा सर्वेणेवात्मना यज्ञं सम्भरति, सञ्च जिहीर्षति । यो दीक्षते–तस्य रिरिचान इवात्मा भवति । तमेताभिराप्रीभिराप्याययन्ति । तद् यदाप्याययन्ति–तस्मादाप्रियो नाम । तस्मादाप्रीभिश्चरन्ति ॥ २ ॥

ते वाऽएतऽएकादश प्रयाजा भवन्ति । दश वाऽइमे पुरुषे प्राणाः–आत्मैकादशः–यस्मिन्नेते प्राणाः प्रतिष्ठिताः । एतावान्वै पुरुषः । तदस्य सर्वमात्मानमाप्याययन्ति । तस्मादेकादश प्रयाजा भवन्ति ॥ ३ ॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

होत्रादिप्रवरणानन्तरभाविनं प्रयोगमाह–तद्यत्रैतत्प्रवृतो होता होतृषदन उपविशतीत्यादिना । होतृषदनं वेदेरुत्तरा श्रोणिः । ' तत् ' तत्र ' उपविश्य ' 'प्रसौति' "अग्निर्होता वेतु" इत्यादि स्रुगादापनम् । निगदेनानुजानाति–" घृतवतीमध्वर्यो स्रुचमास्यस्व " (श. प. ब्रा. १ । १ । २ । १ ) इत्येवंरूपेण ॥ १ ॥

अथाप्रीभिश्चरन्तीति । समित्तनूनपादित्याद्येकादश प्रयाजा आप्रियः ( नि. रु. ८।२।१–७ ) नामनिर्वचनेनाप्रियं प्रशंसितुं तत्प्रवृत्तिनिमित्तस्याप्यायनस्य सम्भावनामाह–सर्वेणेव वा एष मनसा सर्वेणेवात्मना यज्ञं सम्भरतीत्यादिना । ' एषः ' दीक्षितः ' सर्वेणेव मनसा ' ' सर्वेणात्मना ' मनोव्यतिरिक्तेन प्राणादिसङ्घातेन, सर्वेषां तत्रैवोपजीव्यत्वात् अतः ' सञ्जिहीर्षति ' संहर्तुमिच्छति । ततो ' रिरिचान इव ' रिक्तः शून्य इव ' आत्मा भवति ' ' तस्मात् ' आप्यायनसाधनत्वात् ' आप्रियः ' इति तन्नामनिर्वचनम् ॥ २ ॥

आप्यायनसाधनत्वमेवोपजीव्यैकादशत्वं विधाय प्रशंसति–ते वा एत एकादश प्रयाजा इति । सप्त शीर्षण्याः, द्वावपानौ, नाभिर्दशमी, तेषामाधारो देह एकादश इति तद्विवेकः ॥ ३ ॥

---

१–अग्निर्होतेतिस्रुगादापनं प्रयाजेषु सन्निधेः । का० श्रौ० सू ३ । ३४

सु आश्राव्याह । समिधः प्रेष्येति प्रेष्य प्रेष्येति चतुर्थे-चतुर्थे प्रयाजे समानयमानो दशभिः प्रयाजैश्चरति दश प्रयाजानिष्ट्वाह शासमाहरेत्यसिं वै शास इत्याचक्षते ॥ ४ ॥

( तेऽथ ) अथ यूपशकलमादत्ते । तावग्रे जुह्वा अक्ता पशोर्ललाटमुपस्पृशति घृतेनाक्तौ पशूंस्त्रायेथामिति वज्रो वै यूपशकलो वज्रः शासो वज्र आज्यं तमेवैतत्कृत्स्नं वज्रᳪ सम्भृत्य तमस्याभिगोप्तारं करोति नेदेनं नाष्ट्रा रक्षाᳪसि हिनसन्निति पुनर्यूपशकलमवगूहत्येषा ते प्रज्ञाताश्रिरस्त्वित्याह शासं प्रयच्छन्त्सादयति स्रुचौ ॥ ५ ॥

---

स आश्राव्याह—समिधः प्रेष्येति । प्रेष्य प्रेष्येति । चतुर्थे चतुर्थे प्रयाजे समानयमानो दशभिः प्रयाजैश्चरति । दश प्रयाजानिष्ट्वाह शासमाहरेति । असिं वै शास इत्याचक्षते ॥ ४ ॥

अथ यूपशकलमादत्ते । तावग्रे जुह्वा अक्ता पशोर्ललाटमुपस्पृशति—" घृतेनाक्तौ पशूंस्त्रायेथाम् " (वा. सं. ६ । ११) इति । वज्रो वै यूपशकलः । वज्रः शासः । वज्र आज्यम् । तमेवैतत् कृत्स्नं वज्रं सम्भृत्य तमस्याभिगोप्तारं करोति । नेदेनं नाष्ट्रा रक्षांसि हिनसन्निति । पुनर्यूपशकलमवगूहति । ' एषा ते प्रज्ञाताश्रिरस्तु ' इत्याह—शासं प्रयच्छन् सादयति स्रुचौ ॥ ५ ॥

---

स आश्राव्याहेत्यादि । समिद्याग एव ' समिधः प्रेष्य ' ' इति ' एवं ब्रूयात् । तनूनपात्प्रभृतीनां ' प्रेष्य प्रेष्य ' ' इति ' एवं नाम निर्दिशेत् । चतुर्थे चतुर्थे प्रयाजे समानयमान इति । जुह्वगतेनाज्येन प्रयाजत्रयं कृत्वा, पुनरुपभृति स्थितमाज्यमथ चतुर्थादिसप्तमान्तप्रयाजचतुष्टयाय समवनीय पुनरष्टमाद्येकादशान्तप्रयाजचतुष्टयार्थमष्टममवनयेदित्यर्थः । दशमप्रयाजानन्तरं ' शासम् ' असिम् ' आहर ' ' इति ' ब्रूयात् । " शसु हिंसायाम् " ( धा. पा. भ्वा. प. ७२९ ) शस्यते हिंस्यते अनेनेति ' शासः ' असिः । शासशब्दस्याप्रसिद्धस्य प्रसिद्धार्थतामभिप्रेत्य व्याचष्टे—असिर्वै शास इतीति ॥ ४ ॥

अथ यूपशकलाविति । यूपशकलौ जुह्वा अग्रगतेनाज्येन समज्य ताभ्यामक्ताभ्यां पशोर्ललाटमुपस्पृशति । तन्मन्त्रस्यायमर्थः:-हे घृतेनाक्तौ स्वरुस्वधिती ! युवां ' पशून् ' त्रायेथाम् । अत्र सूत्रम्— " स्वरुमादायाक्त्वोभौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति घृतेनाक्ताविति " ( का. श्रौ. सू. ६ । ९३ ) इति ॥ वज्रो वा इत्यादि । यूपशकलादीनां वज्रत्वं प्रागुक्तम् ( श. प. ब्रा. ३ । ७ । १ । ३०-३२ ) । " एषा ते "—इति ब्रुवन्, ' शासम् ' उत्सृजतोऽस्य हविषोऽवदानाय ' प्रयच्छन् ' । ' एषा ' अष्टाश्रिः हे शमितः ! ते ' प्रज्ञाता अस्तु '—' इति आह ' ॥ ५ ॥

---

१-स्वरुमवगुह्यासिं प्रयच्छन्नाहैषा ते प्रज्ञाताश्रिरस्त्विति । का० श्रौ सू ६ । ९४ । इति च ।

(चात्त्व)अथाह पर्य्यग्नयेऽनुब्रूहीति ।(त्यु)उल्मुकमादायाग्नीत्पर्यग्निं करोति तद्यत्पर्य्यग्निं करोत्यच्छिद्रमेवैनमेतदग्निना परिगृह्णाति नेदेनं नाष्ट्रा रक्षाᳬसि प्रमृशानित्यग्निर्हि रक्षसामपहन्ता तस्मात्पर्यग्निं करोति तद्यत्रैनᳬ श्रपयन्ति तदभि परिहरति ॥ ६ ॥

तदाहुः । पुनरेतदुल्मुकᳬ हरेदथात्रान्यमेवाग्निं निर्म्मथ्य तस्मिन्नेनᳬ श्रपयेयुराहवनीयो वा ऽएष न वा ऽएष तस्मै यदस्मिन्नश्रृतᳬ श्रपयेयुस्तस्मै वा ऽएष यदस्मिञ्छृतं जुहुयुरिति ॥ ७ ॥

तदु तथा न कुर्यात् । ( ह्यु ) यथा वै ग्रसितमेवमस्यैतद्भवति यदेनेन पर्यग्निं करोति स यथा ग्रसितमनुहायाच्छिद्य तदन्यस्मै प्रयच्छेदेवं तत्तस्मादेतस्यैवोल्मुकस्याङ्गारान्निमृद्य तस्मिन्नेनᳬश्रपयेयुः ॥ ८ ॥

---

अथाह–पर्य्यग्नयेऽनुब्रूहीति । उल्मुकमादायाग्नीत्, पर्यग्निं करोति । तद् यत्पर्य्यग्निं करोति–अच्छिद्रमेवैनमेतदग्निना परिगृह्णाति । नेदेनं नाष्ट्रा रक्षांसि प्रमृशानिति । अग्निर्हि रक्षसामपहन्ता । तस्मात्पर्यग्निं करोति । तद् यत्रैनं श्रपयन्ति–तदभि परिहरति ॥ ६ ॥

तदाहुः–पुनरेतदुल्मुकं हरेत्–अथात्रान्यमेवाग्निं निर्मथ्य तस्मिन्नेनं श्रपयेयुः । आहवनीयो वाऽएषः । नवाऽएष तस्मै–यदस्मिन्नश्रृतं श्रपयेयुः । तस्मै वाऽएष–यदस्मिञ्छृतं जुहुयुरिति ॥ ७ ॥

तदु तथा न कुर्यात् । यथा वै ग्रसितम्–एवमस्यैतद्भवति–यदेनेन । पर्यग्निं करोति । स यथा ग्रसितमनुहायाच्छिद्य तदन्यस्मै प्रयच्छेद्–एवं तत् । तस्मादेतस्यैवोल्मुकस्याङ्गारान्निमृद्य तास्मिन्नेनं श्रपयेयुः ॥ ८ ॥

---

अथाह पर्यग्नयेऽनुब्रूहीति । 'अथ' स्रुचोः सादनानन्तरम्, 'पर्यग्नयेऽनुब्रूहीति' उक्त्वा, 'पर्यग्निं करोति' पशोः परितः अग्निं करोति, उल्मुकेनाग्नीद्ध्रः । 'अच्छिद्रमेवैनम्' इत्याद्यर्थवादः स्पष्टार्थः । अत्र तन्त्रम्–"सादयित्वा स्रुचौ चात्वालमुत्तरेण शामित्रायोल्लिखति, पर्यग्नयेऽनुवाचयति, आहवनीयेल्मुकमादाय आग्नीत् त्रिः समन्तं पर्येति, पश्चाज्यशामित्रदेशयूपचात्वालाहवनीयान्, आज्यपशुशामित्रान् वा" इति । ( का. श्रौ. सू. ६–९९ । ९८ ) तद्यत्रैनं श्रपयन्ति, तदभिपरिहरतीति । 'यत्र' शामित्रोत्तरभागे 'एनं पशुं' 'श्रपयन्ति' 'तत्' स्थानम् 'अभि'–लक्ष्य 'एनम्' उल्मुकं पाकार्थमाहरेत् ॥ ६ ॥

उल्मुकहरणविषये केषाञ्चित् पक्षं, तद्युक्तिञ्चोपन्यस्य निराकृत्य स्वपक्षं स्थापयति–तदाहुः पुनरेतदुल्मुकं हरेदथात्रान्यमेवाग्निं निर्मथ्य तस्मिन्नेनं श्रपयेयुरित्यादिना । 'पुनः' पर्यग्निकरणानन्तरम् 'एतत् उल्मुकम्' 'हरेत्' आहवनीये स्थापयेत् । आहवनीयो वा एष इति । यतोऽयमाहवनीयः, अतः शृतहोमार्थ-एषः, शृतश्रपणाय नार्हतीति तेषामभिप्रायः ॥ ७ ॥

तदु तथा न कुर्यादिति । पर्यग्निकरणादेवायं पशुस्तेनाग्निना ग्रसितोऽभूत्; अतो मुखस्थं हविः पुनराकृष्य पुनर्मन्थनाग्नौ श्रपणादन्यस्मै प्रदानं कृतं भवति । तस्मात् तेषां पक्षो न युक्त इत्यर्थः ॥ ८ ॥

---

१–प्रतिप्रास्योल्मुकं तावत्प्रतिपर्येति । का. श्रौ. सू. । ९९ । इति ।

( र ) अथोल्मुकमादायाग्नीत्पुरस्तात्प्रतिपद्यते । ( तेऽग्नि ) अग्निमेवैतत्पुरस्तात्करोत्यग्निः पुरस्तान्नाष्ट्रा रक्षाᳪस्यपघ्नन्नेत्यथाभयेनानाष्ट्रेण पशुं नयन्ति तं वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते प्रतिप्रस्थातारमध्वर्यु-रध्वर्युं यजमानः ॥ ९ ॥

( स्तु ) तदाहुः । ( नैं ) नैष यजमानेन्वारभ्यो मृत्यवे ह्येतं नयन्ति तस्मान्नान्वारभेतेति तदन्वेवारभेत न वा ऽएतं मृत्यवे नयन्ति यं यज्ञाय नयन्ति तस्मादन्वेवारभेत यज्ञाद्ध हैवात्मानमन्तरियाद्यन्नान्वारभेत तस्मादन्वेवारभेत तत्परोक्षमन्वारब्धं भवति वपाश्रपणीभ्यां प्रतिप्रस्थाता प्रतिप्रस्थातारमध्वर्युरध्वर्युं यजमान एतदु परोक्षमन्वारब्धं भवति ॥ १० ॥

( त्यु ) अथ स्तीर्णायै वेदेः । ( द्वैं ) द्वे तृणे ऽअध्वर्युरादत्ते स आश्राव्याहोपप्रेष्य होतर्हव्या देवेभ्य इत्येतदु वैश्वदेवं पशौ ॥ ११ ॥

---

अथोल्मुकमादायाग्नीत् पुरस्तात्प्रतिपद्यते । अग्निमेवैतत्पुरस्तात्करोति । अग्निः पुरस्तान्नाष्ट्रा रक्षांस्यपघ्नन्नेति । अथाभयेनानाष्ट्रेण पशुं नयन्ति । तं वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते । प्रतिप्रस्थातारमध्वर्युः । अध्वर्युं यजमानः ॥ ९ ॥

तदाहुः—नैष यजमानेनान्वारभ्यः । मृत्यवे ह्येतं नयन्ति । तस्मान्नान्वारभेतेति । तदन्वेवारभेत । न वाऽएतं मृत्यवे नयन्ति—यं यज्ञाय नयन्ति । तस्मादन्वेवारभेत । यज्ञाद्ध हैवात्मानमन्तरियात्—यन्नान्वारभेत । तस्मादन्वेवारभेत । तत् परोक्षमन्वारब्धं भवति । वपाश्रपणीभ्यां प्रतिप्रस्थाता । प्रतिप्रस्थातारमध्वर्युः । अध्वर्युं यजमानः । एतदु परोक्षमन्वारब्धं भवति ॥ १० ॥

अथ स्तीर्णायै वेदेर्द्वे तृणेऽध्वर्युरादत्ते । स आश्राव्याह—' उपप्रेष्य । होतर्हव्या देवेभ्य इति । एतदु वैश्वदेवं पशौ ॥ ११ ॥

---

अथाग्नीध्रप्रतिप्रस्थात्रध्वर्युयजमानानां शामित्रं प्रति गमनमाह—अथोल्मुकमादायाग्नीदित्यादिना । उल्मुकस्य पुरोगमनप्रयोजनमाह—अग्निमेवैतदिति । ततश्च किमित्यत आह—अग्निः पुरस्तादिति । अग्न्यनुगमनं न युक्तमिति ॥ ९ ॥

तदाहुरिति । तेषाममभिप्रायमन्यथयति—न वा एनमिति । केवलहननार्थं नयनं चेत् मृत्यवे नयति । यज्ञार्थं नयनं पशोः स्वर्गप्राप्त्यर्थत्वान्न मृत्यवे नयनमिति स्वपक्षे शङ्कितं बाधं परिहृत्य विपक्षे बाधमाह—यज्ञाद्ध हैवात्मानमिति । तस्मिन् समये प्रतिप्रस्थाता वपाश्रपणीभ्यां काष्मर्यमयीभ्यां पशुम् अन्वारभते, तमनु अध्वर्युश्च; अतस्ताभ्यां व्यवधानात् म्रियमाणस्य पशोः न साक्षादन्वारम्भो भवति । अतोऽपि नोक्त इत्यर्थः ॥ १० ॥

अथ स्तीर्णायै वेदेर्द्वे तृणे अध्वर्युरादत्त इति[२] । अन्वारम्भसमये वेद्यास्तीर्णे बर्हिषि, तृणद्वयमादाय

---

१—" आहवनीयोल्मुकमादायाग्नीद्भिः समन्तं पर्येति पश्चाज्यशामित्रदेशयूपचात्वालाहवनीयान् । आज्यपशुशामित्रान्वा । प्रतिप्रस्थोल्मुकं तावत्प्रतिपर्यति " इति । का. श्रौ. सू. ६ । ९७–९९ ।

२—पुनरादायोदङ् प्रतिपद्यते । पशुश्चान्वक् । प्रतिप्रस्थाताऽन्वारभत एनं व्वपाश्रपणीभ्यां काष्मर्यमयीभ्यां व्विशाखाऽविशाखाभ्याम् । तमध्वर्युर्यजमानोऽध्वर्युम् । व्वेदितृणेऽध्वर्युरादायाऽऽश्राव्याहोपप्रेष्यहोतर्हव्यादेवेभ्य इति । का. श्रौ. सू. १००–१०४ ।

( शावु ) अथ व्वाचयति । रेवति यजमान इति व्वाग्वै रेवती सा यद्वाग्बहु व्वदति तेन व्वाग्रेवती प्रियं धा आविशेत्यनार्तिमाविशेत्येवैतदाहोरोरन्तरिक्षात्सजूर्देवेन व्वातेनेत्यन्तरिक्षं वा ऽअनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथायं पुरुषो ऽमूल ऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति तद्वातेनैनꣳ संविदानान्तरिक्षाद्गोपायेत्येवैतदाह यदाहोरोरन्तरिक्षात्सजूर्देवेन व्वातेनेति ॥ १२ ॥

( त्य ) अस्य हविषस्त्मना यजेति । व्वाचमेवैतदाहानार्त्तस्यास्य हविष आत्मना यजेति समस्य तन्वा भवेति व्वाचमेवैतदाहानर्त्तस्यास्य हविषस्तन्वा सम्भवेति ॥ १३ ॥

---

अथ वाचयति–"रेवति यजमाने"–( वा. सं. ६ । ११ ) इति । वाग्वै रेवती । सा यद्वाग् बहु वदति–तेन वाग्रेवती । "प्रियं धा आविश"–( वा. सं. ६ । ११ ) इति । अनार्तिमाविशेत्येवैतदाह–"उरोरन्तरिक्षात् सजूर्देवेन वातेन"–( वा. सं. ६ । ११ ) इति । अन्तरिक्षं वाऽअनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नम्–यथायं पुरुषोऽमूलमुभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति । तद्वातेनैनं सम्विदानान्तरिक्षाद्गोपायेत्येवैतदाह–यदाह–उरोरन्तरिक्षात्सजूर्देवेन वातेनेति ॥ १२ ॥

"अस्य हविषस्त्मना यज"–( वा. सं. ६ । ११ ) इति । वाचमेवैतदाह–अनार्तस्यास्य हविष आत्मना यजेति । "समस्य तन्वा भव"–( वा. सं. ६ । ११ ) इति । वाचमेवैतदाह; अनार्तस्यास्य हविषस्तन्वा सम्भवेति ॥ १३ ॥

---

अन्वारभते । 'सः' तृणग्रहीता अध्वर्युः आश्रावणमुक्त्वा, प्रपद्य, "होतर्हव्या देवेभ्यः"–' इति ' आह । होतुर्हव्यान्युद्दिश्य, देवेभ्य उपप्रैष्य, मैत्रावरुणप्रैषादनन्तरमध्वर्युप्रैषं पठतीति तस्यार्थः । अत्र 'देवेभ्यः'– इत्यभिधानादेव पशोर्वैश्वदेवत्वापादनम् ॥ ११ ॥

अथ वाचयतीति । रेवतीति । हे 'रेवति' रयिमति धनवति वाग्देवते 'यजमाने' 'प्रियम्' अभिमतम् अनार्त्तिलक्षणं 'धाः' धेहि । दधातेर्लुङि सिचो लुकि रूपम् । यद्वा दधातेः क्विप् । धारयित्री त्वम् आविशादिन्द्रियमिति सम्बन्धः, अनार्त्तिं कुर्वित्यर्थः । यद्वा अनार्त्तस्यास्य हविषः आत्मना यजेति वक्ष्यमाणत्वात् 'प्रियम्' अनार्त्तिं कर्तुं पशूनाविशेत्यर्थः । हे वाग्देवि ! 'उरोः अन्तरिक्षात्' विस्तीर्णादन्तरिक्षात् 'वातेन' 'सजूः' समानप्रीतिः सती यजमानम् अन्तरिक्षाद्, 'गोपाय'–इति शेषः । किञ्च 'अस्य हविषः' यज्ञपशुलक्षणस्य हविषः 'त्मना' आत्मना, स्वरूपेण 'यज' । 'अस्य' 'पशोः' 'तन्वा सम्भव' शरीरेण सम्भव । हे रेवति ! यजमानपशौ च सम्भूय यागं साधयेत्यर्थः । अत्रत्यरेवतीशब्दस्य वाग्वाचकत्वमुपपादयति–सा यद् वाग् बहु वदति तेन वाग् रेवतीति । तदपेक्षितं दानादिधनार्जनं लोकप्रसिद्धम् । प्रियशब्दार्थमाह–अनार्त्तिमाविशेति । न विद्यते आर्त्तिर्यस्मिन्नित्यनार्त्तिः, प्रियः पदार्थः । उरो-

---

१–रेवति यजमान इति व्वाचयति । शामित्रं नातीयात् । शामित्रेऽग्निं निदधाति । निर्मथ्यमेके । का. श्रौ. सू. ६ ।१०५–१०८१

तद्यत्रैनं विशसन्ति । तत्पुरस्तात्तृणमुपास्यति वर्षो वर्षीयसि यज्ञे यज्ञपतिं धा इति बर्हिरेवास्मा ऽएतत्स्तृणात्यस्कन्नꣳ हविरसदिति तद्यदेवास्यात्र विशस्यमानस्य किञ्चित्स्कन्दति तदेतस्मिन्प्रतितिष्ठति तथा नामुया भवति ॥ १४ ॥

( त्य ) अथ पुनरेत्याहवनीयमभ्यावृत्यासते । नेदस्य सञ्ज्ञप्यमानस्याध्यक्षा असामेति तस्य न कूटेन प्रघ्नन्ति मानुषꣳ हि तन्नो ऽएव पश्चात्कर्णं पितृदेवत्यꣳ हि तदपिगृह्य वैव मुखं तमयन्ति वेष्कं वा कुर्वन्ति तन्नाह जहि मारयेति मानुषꣳ हि तत्सञ्ज्ञपयान्वगन्निति तद्धि देवत्रा स यदाहान्वगन्नित्येतर्हि ह्येष देवाननुगच्छति तस्मादाहान्वगन्निति ॥ १५ ॥

---

तद् यत्रैनं विशसन्ति–तत् पुरस्तात्तृणमुपास्यति । "वर्षो वर्षीयसि यज्ञे यज्ञपतिं धाः"–( वा. सं. ६ । ११ ) इति । बर्हिरेवास्माऽएतत् स्तृणाति । अस्कन्नं हविरसत्–इति । तद् यदेवास्यात्र विशस्यमानस्य किञ्चित् स्कन्दति–तदेतस्मिन् प्रतितिष्ठति–तथा नामुया भवति ॥ १४ ॥

अथ पुनरेत्याहवनीयमभ्यावृत्यासते नेदस्य सञ्ज्ञप्यमानस्याध्यक्षा असामेति । तस्य न कूटेन प्रघ्नन्ति । मानुषं हि तत् । नोऽएव पश्चात्कर्णम् । पितृदेवत्यं हि तत् । अपिगृह्य वैव मुखं तमयन्ति । वेष्कं वा कुर्वन्ति । तन्नाह जहि मारय–इति । मानुषं हि तत् । सञ्ज्ञपय, अन्वगन्–इति । तद्धि देवत्रा । स यदाह–अन्वगन्निति । एतर्हि ह्येष देवाननुगच्छति । तस्मादाह–अन्वगन्निति ॥ १५ ॥

---

रन्तरिक्षादित्यभिधानस्य प्रयोजनमाह–**अन्तरिक्षं वा अनु रक्षश्चरतीत्यादिना** । 'अमूलं' मूलसम्बन्धरहितम् । न केवलममूलमेव, किन्तु 'उभयतः' उपरि अधस्ताच्च 'परिच्छिन्नम्' संश्लेषरहितं सद्रक्षश्चरति । तत्र दृष्टान्तः–**यथायं पुरुष इति** । 'तत्' तेन, अन्तरिक्षे रक्षःसञ्चारकारणेनैतस्माद् वातादान्तरिक्षाद् गोपायतीत्याह मन्त्रः । अस्य हविषस्त्मना यज–इत्यस्याभिप्रायमाह–**वाचामेवैतदाहेति** । एतच्चयमेव विशदयति–**अनार्त्तस्यास्येति** । एतद्धवीरूपः सन् देवान् प्रीणातीत्यर्थः । एवमुत्तरवाक्यमपि व्याख्येयम् ॥ १२ ॥ १३ ॥

**तद्यत्रैनं विशसन्तीति** । ( "पश्चात्तृणमुपास्यति वर्षो वर्षीयसीति" का.श्रौ.सू.६।१०९ ) वर्षीयसीति । विशसनप्रदेशेऽध्वर्युः तृणमपास्यति–हे तृण ! 'वर्षः' वर्षीयः प्रवृद्धं त्वं 'वर्षीयसि' प्रवृद्धे 'यज्ञपतिं' 'धाः' स्थापय । एतद्बर्हिस्तरणेन स्थापनीयमिति स्तौति–**बर्हिरेवास्मा एतदित्यादिना** । 'अस्मै' पशवे । तदपि किमर्थमित्यत आह–**अस्कन्नं हविरसदिति** । तद् विशदयति–**तद् यदेवेति** । 'तत्' अन्यत्र पतितमपि 'एतस्मिन्' केवलबर्हिषि 'प्रतितिष्ठति' । **तथा नामुया भवतीति** । 'तथा' कृते सति अन्यत्र पतितमङ्गम 'अमुया' अमुत्र, अन्तरिक्षेऽनभिमतप्रदेशे 'न भवति' न विनश्यतीत्यर्थः ॥ १४ ॥

**अथ पुनरेत्याहवनीयमिति** । पुनराहवनीयमभ्यावर्त्तनस्याभिप्रायमाह–**नेदस्येति** । 'अध्यक्षाः' न भवामेति, सन्निहिताः सन्तो वा दर्शितारो न भवामेति । **न कूटेनेति** । 'कूटेन' शृङ्गेण साधनेन, शृङ्गं गृहीत्वा,

तद्यत्रैनं निविध्यन्ति तत्पुरा सञ्ज्ञपनाज्जुहोति स्वाहा देवेभ्य इत्यथ यदा प्राह सञ्ज्ञप्तः पशुरित्यथ जुहोति देवेभ्यः स्वाहेति पुरस्तात्स्वाहाकृतयो वा ऽअन्ये देवा ऽउपरिष्टात्स्वाहाकृतयोऽन्ये तानेवैतत्प्रीणाति त ऽएनमुभये देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ते वा ऽएते परिपशव्ये ऽइत्याहुती स यदि कामयेत जुहुयादेते यद्यु कामयेतापि नाद्रियेत ॥ १६ ॥

इति षष्ठप्रपाठके द्वितीयं ब्राह्मणम् ॥ ६।२ ॥ (८।३)

---

तद् यत्रैनं निविध्यन्ति, तत्पुरा सञ्ज्ञपनाज्जुहोति–" स्वाहा देवेभ्यः "–(वा. सं. ६ । ११) इति । अथ यदा प्राह–सञ्ज्ञप्तः पशुरिति–अथ जुहोति–" देवेभ्यः स्वाहा "–(वा. सं. ६ । ११) इति । पुरस्तात् स्वाहाकृतयो वाऽअन्ये देवाः, उपरिष्टात् स्वाहाकृतयोऽन्ये । तानेवैतत् प्रीणाति त एनमुभये देवाः प्रीताः स्वर्गं लोकमभिवहन्ति । ते वाऽएते परिपशव्येऽइत्याहुती । स यदि कामयेत–जुहुयादेते । यद्यु कामयेत–अपि नाद्रियेत ॥ १६ ॥

---

न हन्यात् । नैव कर्णस्य पश्चाद्भागमग्रभागं वा गृहीत्वा । तर्हि कथम् ? ' मुखमपिगृह्य ' म्लानं कुर्यात् । ' वेष्कं ' मुखवेष्टनं च शब्दाभावाय कुर्यात् ॥

सञ्ज्ञपनप्रकारः सूत्रे दर्शितः–" तस्मिन्नेनं निघ्नन्ति प्रत्यक्छिरसमुदक्पादं, प्राक्छिरसं वा, सङ्गृह्य मुखं तमयन्त्यवाश्यमानम्, वेष्केण वा, एत्याहवनीयमावृत्त्यासते, सञ्ज्ञपयान्वगन्नित्येव ब्रूयात् "–इति । ( का. श्रौ. सू. ६ । ११०–११९ ) ' जहि ' ' मारय ' इत्यादि मानुषवधवत् क्रूरवचनं न ब्रूयात्, किन्तु हे शमितः ! ' सञ्ज्ञपय ' असौ तु ' अन्वगन् ' अनुगतोऽभूत् । तद्धीत्यादि । स्पष्टम् ॥ १९ ॥

तद्यत्रैनं निविद्धचन्तीति । ' सञ्ज्ञपनात् ' प्राक् " स्वाहा देवेभ्यः " ' इति ' जुहुयात् । सञ्ज्ञपनानन्तरं " देवेभ्यः स्वाहा " ' इति ' जुहुयात् । होमभेदेन स्वाहाकारप्रयोगवैपरीत्यम् । प्रयोजनाभिधानेन प्रशंसति–**पुरस्तात् स्वाहाकृतयो वा अन्ये देवा** इत्यादिना । एतयोराहुत्योर्नाम करोति–**ते वा एते परिपशव्ये इत्याहुती** इति । उक्ते द्वे आहुती ' परिपशव्ये ' परित आज्यं तयोः पशोर्हितं यतः, अत ' परिपशव्ये ' इति नामधेये इत्यर्थः । " उगवादिभ्यो यत् "–( पा. सू. ५ । १ । २ ) इति यत्, " ओर्गुणः "–( पा. सू. ६ । ४ । १४६ ) इति भसञ्ज्ञकस्य गुणः । एतयोरनुष्ठाने ऐच्छिकत्वमाह–**स यदि कामयेतेति** ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीये काण्डे अष्टमाध्याये प्रथमं ब्राह्मणम् ॥ ३–८–१ ॥

---

१–स्वाहा देवेभ्य इति जुहोति । २–देवेभ्यः स्वाहेति जुहोति कां. श्रौ. सू. ६ । १२०–१२१ । ३–नवैते जुहुयात् । का. श्रौ. सू. ६ । १२२ ।

यदा प्राह सुञ्ज्ञप्तः पशुरिति । ( त्यु ) अुथाध्वर्युराह नेष्टः पत्नीमुदानयेत्युदानयति नेष्टा पत्नीं पान्नेजनं बिभ्रतीम् ॥ १ ॥

तां व्वाचयति । नुमस्त ऽआतानेति यज्ञो वा ऽआतानो यज्ञᳪं हि तन्वुते तेन यज्ञ आतानो जघनार्द्धो वा ऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रसादयिष्यन्भवति तुस्मा ऽएवैतद्यज्ञाय निह्नुते तुथो हैनामेष यज्ञो न हिनस्ति तुस्मादाह नुमस्त ऽआतानेति ॥ २ ॥

( त्य ) अनर्व्वा प्रेहीति । ( त्य ) असपत्नेन प्रेहीत्येवैतदाह घृतस्य कुल्या ऽउप ऽऋतस्य पथ्या ऽअन्विति साधूपेत्येवैतदाह देवीरापः शुद्धा व्वोढ्ढᳪं सुपरिविष्टा देवेषु सुपरिविष्टा व्वयं परिव्वेष्टारो भूयास्मेत्यप एवैतत्पावयति ॥ ३ ॥

---

यदा प्राह–सञ्ज्ञप्तः पशुरिति । अथाध्वर्युराह–नेष्टः पत्नीमुदानयेति । उदानयति नेष्टा पत्नीं–पान्नेजनं बिभ्रतीम् ॥ १ ॥

तां वाचयति । " नमस्तऽआतान "–( वा० सं० ६ । १२ ) इति । यज्ञो वाऽआतानः । यज्ञं हि तन्वते–तेन यज्ञ आतानः । जघनार्द्धो वाऽएष यज्ञस्य–यत्पत्नी । तामेतत् प्राचीं यज्ञं प्रसादयिष्यन् भवति । तस्माऽएवैतद्यज्ञाय निह्नुते । तथो हैनामेष यज्ञो न हिनस्ति । तस्मादाह–नमस्तऽआतानेति ॥ २ ॥

" अनर्वा प्रेहि " ( वा० सं० ६ । १२ ) इति । असपत्नेन प्रेहीत्येवैतदाह । " घृतस्य कुल्याऽउपऽऋतस्य पथ्याऽअनु " ( वा० सं ६ । १२ । इति । साधूपेत्येवैतदाह । " देवीरापः शुद्धा वोढ्वं सुपरिविष्टा देवेषु सुपरिविष्टा वयं परिवेष्टारो भूयास्म "( वा० सं ६ । १३ ) इति । अप एवैतत्पावयति ॥ ३ ॥

---

सञ्ज्ञपनानन्तरप्रयोगमाह–यदा प्राह सञ्ज्ञप्तः पशुरित्यध्वर्युराहेत्यादिना[२] ॥ १ ॥

तां वाचयतीति[३] 'तां' पशुं प्रति आगच्छतीं पत्नीं 'वाचयति' "नमस्ते आतान"इति । आसमन्तात् तन्यत इत्यातानो'यज्ञः' हे आतान !–'ते' तुभ्यं 'नमः' । यज्ञ ! त्वम् 'अनर्वा' असपत्नः सन् प्रेहि । 'घृतस्य कुल्याः' जुह्वादिषु बह्वाज्यसम्भवात् । ता विशिनष्टि–' ऋतस्य पथ्याः ' इति । पथि भवा पथ्याः । ताः कुल्याः ' अनु ' [ लक्ष्य ] ' उप ' प्रेहीति सम्बन्धः । इत्थं यज्ञं प्रसाध्य, अथापः प्रसाधयति ' सुपरिविष्टाः ' पात्रेषु परिपूरिताः ' देवीः द्योतमानाः ' आपः ' ' शुद्धाः ' स्वभावतः संस्कारेण च विशुद्धाः सत्यो यूयं ' देवेषु ' विषयभूतेषु पशुम् ' वोढ्वम् ' अपहत । ' वयं ' च देवेषु मध्ये सुपरिविष्टाः, देवानां ' परिवेष्टारः ' । नमस्कारवचनं

---

१–इह संहितायां " माहिर्भूर्मा पृदाकुः " ( अ. ६ । १२ ) इति मन्त्रोऽधिकः पठयते । २–संज्ञप्तः पशुरितिप्रोक्ते शेताम्मुहूर्तमित्याहासोमे । का. श्रौ. सू. ६ । ११७ । प्रतिप्रस्थातः पत्नीमुदानयेत्याहनेष्टरीतिसोमे । का. श्रौ. सू. ६ । १२० । ३–पान्नेजनहस्तां व्वाचयति नयन्नमस्तआतानेति । का. श्रौ. सू. । ६ । १२१ ।

( त्यु ) अथ पशोः प्राणानद्भिः पत्न्युपस्पृशति । तद्यदद्भिः प्राणानुपस्पृशति जीवं वै देवानाᳬं हविरमृतममृतानामथैतत्पशुं घ्नन्ति यत्सञ्ज्ञपयन्ति यद्विशासत्यापो वै प्राणास्तदस्मिन्नेतान्प्राणान्दधाति तथैतज्जीवमेव देवानाᳬं हविर्भवत्यमृतममृतानाम् ॥ ४ ॥

( मु ) अथ यत्पत्न्युपस्पृशति । योषा वै पत्नी योषायै वा ऽइमाः प्रजाः प्रजायन्ते तदेनमेतस्यै योषायै प्रजनयति तस्मात्पत्न्युपस्पृशति ॥ ५ ॥

सोपस्पृशति । वाचं ते शुन्धामीति मुखं प्राणं ते शुन्धामीति नासिके चक्षुस्ते शुन्धामीत्यक्ष्यौ श्रोत्रं ते शुन्धामीति कर्णौ नाभिं ते शुन्धामीति सोऽयमनिरुक्तः प्राणो मेढ्रं ते शुन्धामीति वा पायुं ते शुन्धामीति सोऽयं

---

अथ पशोः प्राणानद्भिः पत्न्युपस्पृशति ।तद्यदद्भिः प्राणानुपस्पृशति । जीवं वै देवानां हविः, अमृतममृतानाम् । अथैतत् पशुं घ्नन्ति । यत् सञ्ज्ञपयन्ति, यद्विशासति । आपो वै प्राणाः । तदस्मिन्नेतान् प्राणान् दधाति । तथैतज्जीवमेव देवानां हविर्भवति, अमृतममृतानाम् ॥ ४ ॥

अथ यत्पत्न्युपस्पृशति । योषा वै पत्नी । योषायै वाऽइमाः प्रजाः प्रजायन्ते । तद्एनमेतस्यै योषायै प्रजनयति । तस्मात्पत्न्युपस्पृशति ॥ ५ ॥

सोपस्पृशति । " वाचं ते शुन्धामि "–( वा. सं. ६ । १४ ) इति मुखम् । " प्राणं ते शुन्धामि "–( वा. सं. ६ । १४ ) इति नासिके । " चक्षुस्ते शुन्धामि "–( वा. सं. ६ । १४ )

---

यज्ञातिक्रमपरिहारत्वेन प्रशंसति–जघनार्द्ध इति । यज्ञस्य जघनार्द्धे पत्नीशालायामवस्थिता पत्न्यपि जघनार्द्ध इत्युच्यते । 'तां प्राङ् नयति,' तस्मिन् यज्ञायतने जघननिह्नवनकृता भवति । घृतकुल्याद्युपन्यासः, आगमनानुकूल्यप्रदर्शनायेति व्याचष्टे–साधूपेत्येवैतदाहेति । उपेत्युपसर्गसामर्थ्यात् एतीति क्रिया सम्बध्यते । देवीराप इत्यादिमन्त्रभागस्य तात्पर्यमाह–अप एवैतत्पावयतीति । अत्र ' शुद्धा वोड्ढ्वम् '–इति शुद्धिविधानात् शुद्धीकरणम् ॥ २ ॥ ३ ॥

अथ पशोरित्यादि[१] । प्राणमुखनासाचक्षुरादीनि अद्भिः पत्नी ' उपस्पृशति ' प्रक्षालयेदित्यर्थः । अपामुपस्पर्शनं पशोः सजीवत्वकरणात्मना प्रशंसति–जीवो वै देवानामित्यादिना । पदद्वयं व्याचष्टे–अमृतममृतानामिति । देवाः अमृताः अमृतधर्माणः, जीवनमप्यमृतं मृतिरहितम्; अतो योग्यत्वाद् देवानां जीवनं युज्यते । संज्ञपनविशसने उभे अपि हननात्मके, अतो हेतोरस्य पुनः प्राणापेक्षत्वात्, अपां च " आपोमयः प्राणः "–इति श्रुतेः प्राणरूपत्वात्, छिद्रेष्वपां प्रक्षेप एव प्राणनिधारणमित्यर्थः । ततश्च देवानां सजीवं हविर्दत्तं भवति ॥ ४ ॥

अपामुपस्पर्शनं प्रशस्य, पत्नीकर्तृकत्वं प्रशंसति–अथ यत् पत्न्युपस्पृशति ; योषा वा इत्यादिना ॥५॥

अवयवावयविभेदेनोपस्पर्शनमन्त्रभागमाह–सोपस्पृशतीति[२] । वाचं ते शुन्धामीति मुखमिति । ' मुखं '

---

१–पशोः प्राणान् छुंधति पत्नी । का. श्रौ. सू. ६ । १२३ । २–मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान् सं॰ हृत्य वाचं ते शुंधामीति प्रतिमंत्रम् । शेषेण यजमानश्च शिरः प्रभृत्यनुषिञ्चतः । का. श्रौ, सू. ६ । १२४ । १२५ ।

पश्चात्प्राणस्तत्प्राणान्दधाति तत्समीरयत्यथस॰ँहृत्य पदश्चरित्रांस्ते शुन्धामीति पद्भिर्वै प्रतितिष्ठति प्रतिष्ठित्याऽएव तदेनं प्रतिष्ठापयति ॥ ६ ॥

( त्यु ) अथ या आपः परिशिष्यन्ते । ( न्तेऽर्धा ) अर्द्धा वा यावत्यो वा ताभिरेनं यजमानश्च शीर्षतोऽग्रेऽनुषिञ्चतस्तत्प्राणांश्चैवास्मिंस्तत्तौ धत्तस्त च्चैनमतः समीरयतः ॥ ७ ॥

( स्त ) तद्यत्क्रूरीकुर्वन्ति । यदास्थापयन्ति शान्तिरापस्तदद्भिः शान्त्या शमयतस्तदद्भिः सन्धत्तः ॥ ८ ॥

( स्ता ) तावनुषिञ्चतः । ( तो ) मनस्त ऽआप्यायतां वाक्त ऽआप्यायतां प्राणस्त ऽआप्यायतां चक्षुस्त ऽआप्यायता॰ँ श्रोत्रं त ऽआप्यायतामिति

---

इति अक्ष्यौ । " श्रोत्रं ते शुन्धामि "–(वा. सं. ६ । १४) इति कर्णौ । " नाभिं ते शुन्धामि " ( वा. सं. ६ । १४ ) इति–योऽयमनिरुक्तः प्राणः । " मेढ्रं ते शुन्धामि–" ( वा. सं. ६ । १४ ) इति वा, " पायुं ते शुन्धामि "–( वा. सं. ६ । १४ ) इति–योऽयं पश्चात्प्राणः । तत् प्राणान् दधाति । तत् समीरयति । अथ संहृत्य पदः–" चरित्रांस्ते शुन्धामि "–( वा. सं. ६ । १४) इति । पद्भिर्वै प्रतितिष्ठति । प्रतिष्ठित्याऽएव । तदेनं प्रतिष्ठायपति ॥ ६ ॥

अथ या आपः परिशिष्यन्ते–अर्द्धा वा, यावत्यो वा । ताभिरेनं यजमानश्च शीर्षतोऽग्रेऽनुषिञ्चतः । तत् प्राणांश्चैवास्मिंस्तत्तौ धत्तः । तच्चैनमतः समीरयतः ॥ ७ ॥

तद् यत् क्रूरीकुर्वन्ति-यदास्थापयन्ति । शान्तिरापः । तदद्भिः शान्त्या शमयतः, तदद्भिः । सन्धत्तः ॥ ८ ॥

तावनुषिञ्चतः । " मनस्तऽआप्यायतां, वाक्तऽआप्यायतां, प्राणस्तऽआप्यायतां, चक्षुस्तऽआप्यायतां, श्रोत्रं तऽआप्यायताम् "–( वा. सं. ६ । १५ )–इति । तत् प्राणान्

---

वदनम् । हे पशो ! ' ते ' ' प्राणं ' प्राणनम्, नासिकाभ्यामुत्पद्यमानं प्राणवायुम् ' शुन्धामि ' विशुद्धं करोमि एवमुत्तरत्रापि योज्यम् । चक्षुःश्रोत्रे दर्शनश्रवणशक्तीन्द्रिये । " नाभिं ते शुन्धामि "–इति ' अनिरुक्तम् ' अनभिव्यक्तप्राणम्; अथवा किमनिरुक्तेन प्राणेन ? " मेढ्रं ते "–इति ब्रूयात् । ' पश्चात्प्राणः ' अधस्ताद् वर्त्तमानोऽपानः, तं तत्र पायौ स्थापितवान् भवति । ' अथ संहृत्य पदः ' पादानेकीकृत्य " चरित्रांस्ते शुन्धामि "–' इति ' पादानपि शोधयेत् । पादशोधनं शंसति–पद्भिर्वा इति ॥ ६ ॥

अथ या आपः परिशिष्यन्त इति । परिशिष्टाभिः अर्द्धाभिरल्पीयसीभिर्वा यजमानः पत्नी च पशोः शीर्षाग्रं प्रथमं तदारभ्य निषिञ्चतः ' तौ ' पत्नीयजमानौ ' तत् ' तेन निषिञ्चनेन 'पशोः' 'प्राणान्' 'धत्तः' धारयतः । ' तत् तेन ' एनं ' पशुम् ' अतः ' अस्मात् स्थानात् ' समीरयतः ' ॥ ७ ॥

तद् यत् क्रूरीकुर्वन्तीति । ' आस्थापयन्ति ' सञ्ज्ञपयन्तीत्यर्थः ॥ ८ ॥

तावनुषिञ्चत इत्यादि । तदेव क्रूरीकरणं ' तौ ' पत्नीयजमानौ ' अनुषिञ्चतः ' शिरसि अवशिष्टोदक-

तत्प्राणान्धत्तस्तत्समीरयतो यत्ते क्रूरं यदास्थितं तत्त ऽआप्यायतां निष्ट्यायतामिति ॥ ९ ॥

तद्यत्क्रूरीकुर्व्वन्ति । यदास्थापयन्ति शान्तिरापस्तदद्भिः शान्त्या शमयतस्तदद्भिः सन्धत्तस्तत्ते शुध्यत्विति तन्मेध्यं कुरुतः शमहोभ्य इति जघनेन पशुं निनयतः ॥ १० ॥

(स्त) तद्यत्क्रूरीकुर्व्वन्ति । यदास्थापयन्ति नेदेतदन्वशान्तान्यहोरात्राण्यसन्निति तस्माच्छमहोभ्य इति जघनेन पशुं निनयतः ॥ ११ ॥

(तोऽथो) अथोत्तानं पशुं पर्य्यस्यन्ति । स तृणमन्तर्द्दधात्योषधे त्रायस्वेति व्वज्रो वा ऽअसिस्तथो हैनमेष व्वज्रोऽसिर्न हिनस्त्यथासिनाभिनि-

---

धत्तः, तत् समीरयतः । "यत्ते क्रूरं यदास्थितं तत्तऽआप्यायतां निष्ट्यायताम्"–(वा. सं. ६ । १९)–इति ॥ ९ ॥

तद् यत् क्रूरीकुर्वन्ति–यदास्थापयन्ति । शान्तिरापः । तदद्भिः शान्त्या शमयतः । तदद्भिः सन्धत्तः । "तत्ते शुध्यतु"–(वा. सं. ६ । १९)–इति । तन्मेध्यं कुरुतः । "शमहोभ्यः"–(वा. सं. ६ । १९)–इति । जघनेन पशुं निनयतः ॥ १० ॥

तद् यत् क्रूरीकुर्वन्ति–यदास्थापयन्ति । नेदेतदन्वशान्तान्यहोरात्राण्यसन्निति । तस्माच्छमहोभ्य इति । जघनेन पशुं निनयतः ॥ ११ ॥

अथोत्तानं पशुं पर्य्यस्यन्ति । स तृणमन्तर्दधाति । "ओषधे त्रायस्व"–(वा. सं. ६ । १९)–

---

स्यैकदेशेनानुषिञ्चनं कुर्याताम् । शिरस्सेचनमन्त्रमाह–मनस्त इति । मन आदिपञ्चकस्य शिरःस्थानात् तैः पञ्चभिर्मन्त्रैः शिरो निषिञ्चत । तत्प्राणान्धत्तस्तत्समीरयत इत्याप्यायनप्रयोजनाभिधानम् । इतराङ्गनिषेकमन्त्रमाह–यत् क्रूरं ते यदास्थितमिति । "यत्ते क्रूरम्"–इत्यस्य व्याख्यानं 'यदास्थितम्' इति । आस्था सञ्ज्ञप्तिः, इत्युक्तम् । न हि सञ्ज्ञपनादन्यत् क्रूरमस्ति । 'तत् ते आप्यायताम्', कोऽर्थः ? 'निष्ट्यायताम्' संहतं भवत्वित्यर्थः ॥ ९ ॥

तद्यत् क्रूरीकुर्वन्तीति । 'ते' तव 'तत्' निष्ठितमङ्गं 'शुद्ध्यतु' मेध्यं भवतु ॥ १० ॥

तद्यत्क्रूरीकुर्वन्तीति । पशोर्जघनार्द्धस्य समन्त्रकं निनयनं विधत्ते–शमहोभ्य इतीति । जघनेनेति । पशोर्जघनप्रदेशं निनयतः स्थानभेदेन मन्त्रभेदं सूत्रकार आह–"शेषेण यजमानश्च शिरःप्रभृत्यनुषिञ्चतः, मनस्त इति शिरः, यत् ते क्रूरमित्यङ्गानि, शमहोभ्यः इति पश्चात् पशोर्निषिञ्चतः"–इति (का. श्रौ. सू. १२६ १२७) । मन्त्रे अहर्विषयं यत्सुखप्रार्थनमस्ति, तत्र कारणमाह–यत्क्रूरीकुर्वन्तीति ॥ ११ ॥

विशसनप्रयोगमाह–अथोत्तानमिति । असिनाभिनिदधाति । अत्रासेः कर्मभूतस्य कारणत्वोपचारेण तृतीया ॥ १२ ॥

---

१–मनस्त इति शिरः । अनुषिंचत इति पूर्वसूत्रादनुवर्तते । द्विवचनाद्यजमानः पत्नी च । का० श्रौ० सू० ६।१२५ । २–यत्ते-क्रूरमित्यंगानि । का. श्रौ. सू. ६ । १२६ । ३–शमहोभ्य इति पश्चात्पशोर्निषिंचतः । स्वरूपावगुह्यासिं प्रयच्छन्नाहैषा ते प्रज्ञाता श्रीरस्त्विति । का. श्रौ. सू. ६ । १२७ । ४–उत्तानं पशुं कृत्वाऽग्रेण नाभिं तृणं निदधात्योषध इति । का. श्रौ. सू. ६ । १२८ ।

दधाति स्वधिते मैनꣳ हिꣳसीरिति वज्रो वा ऽअसिस्तथो हैनमेष वज्रो-ऽसिर्न हिनस्ति ॥ १२ ॥

सा या प्रज्ञाताग्रिः । ( स्तु ) तयाभिनिदधाति सा हि यजुष्कृता मेध्या तद्यदग्रं तृणस्य तत्सव्ये पाणौ कुरुतेऽथ यद्बुध्नं तद्दक्षिणेनादत्ते ॥ १३ ॥

स यत्राच्छ्यति । यत एतल्लोहितमुत्पतति तदुभयतोऽनक्ति रक्षसां भागोऽसीति रक्षसाꣳ ह्येष भागो यदसृक् ॥ १४ ॥

( क्त ) तदुपास्याभितिष्ठति । ( ती ) इदमहꣳ रक्षोऽभितिष्ठामीदमहꣳ रक्षोऽवबाध ऽइदमहꣳ रक्षोऽधमन्तमो नयामीति तद्यज्ञेनैवैतन्नाष्ट्रा रक्षाꣳस्यवबाधते तद्यदमूलमुभयतः परिच्छिन्नं भवत्यमूलं वा ऽइदमुभयतः परिच्छिन्नꣳ रक्षोऽन्तरिक्षमनुचरति यथायं पुरुषोऽमूल उभयतःपरिच्छिन्नोऽन्तरिक्षमनुचरति तस्मादमूलमुभयतः परिच्छिन्नं भवति ॥ १५ ॥

---

इति । वज्रो वाऽअसिः । तथो हैनमेष वज्रोऽसिर्न हिनस्ति । अथासिनाभिनिदधाति—"स्वधिते मैनं हिंसीः"—( वा. सं. ६ । १५ )—इति । वज्रो वाऽअसिः । तथो हैनमेष वज्रोऽसिर्न हिनस्ति ॥ १२ ॥

सा या प्रज्ञाताग्रिस्तयाभिनिदधाति । सा हि यजुष्कृता मेध्या । तद् यदग्रं तृणस्य—तत्सव्ये पाणौ कुरुते । अथ यद् बुध्नं—तद् दक्षिणेनादत्ते ॥ १३ ॥

स यत्राच्छ्यति, यत एतल्लोहितमुत्पतति—तत् उभयतोऽनक्ति । "रक्षसां भागोऽसि"—( वा. सं. ६ । १६ )—इति । रक्षसां ह्येष भागो—यदसृक् ॥ १४ ॥

तदुपास्याभितिष्ठति । "इदमहं रक्षोऽभितिष्ठामि । इदमहं रक्षोऽवबाधे । इदमहं रक्षोऽधमन्तमो नयामि"—( वा. सं. ६।१६ )—इति । तद् यज्ञेनैवैतद् नाष्ट्रा रक्षांस्यवबाधते ।

---

सा या प्रज्ञाताग्रिरिति । 'या' पूर्वं पश्वञ्जनायासीत्, याभिर्निदध्यात्, सा यथा पशोरुपरि भवति, तथा स्थापयित्वा विन्द्यादभिनिधानं छेदनोपलक्षणतया भवितव्यमिति । अत्र हेतुमाह—सा हि यजुष्कृतेति॥ १३॥

स यत्राच्छ्यतीति । तदुभयतोऽनक्तीत्यादि । 'तत्' तस्य छिन्नस्य दर्भस्य यत् अग्रम्, तत् सव्ये पाणौ गृहीत्वा; यन्मूलम्, तद् दक्षिणेनादाय; 'यत्र' यस्मिन् प्रदेशे 'आच्छ्यति' आच्छिनत्ति, तत्र प्रदेशे 'यतः' यस्मात् 'लोहितमुत्पतति' 'तत्' तत्र मूलतृणस्य 'उभयतः' मूलमग्रञ्च 'अनक्ति' "रक्षसामिति" मन्त्रेणेति ॥ १४ ॥

तदुपास्याभितिष्ठतीति[3] । 'तत्' दर्भाग्रम्। इदमहमिति—यजमानोऽतिक्रामति । 'इदम्' इदानीम् अनेन

---

१–इह संहितायां 'निरस्त [2]रक्षः' इत्यधिकं पठ्यते । २–स्वधित इति प्रज्ञातयाऽभिनिधायछित्वाग्र[2]सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन रक्षसामिति । का. श्रौ. सू. ६ । १२९ ॥ ३–निरस्तमित्यपास्यति । उत्करे इति शेषः । रुधिराक्तं तृणमूलमिति कर्म । इदमहमित्यभितिष्ठति यजमानः का० श्रौ० सू० ६ । १३०–१३१ ।

(त्यु) अुथ व्वपामुत्खिदन्ति । तुया व्वपाश्रपण्यौ प्प्रोर्णौति घृतेन द्यावा-पृथिवी प्प्रोर्णुवाथामिति तुदिमे द्यावापृथिवीऽऊर्ज्जा रुसेन भाजुयत्यनुयो-रूर्जश्ँरुसं दधाति ते रुसवत्याऽउपजीवनीये ऽइमुाः प्रजाऽउपजीवन्ति॥ १६॥

कार्ष्मर्य्यमुय्यौ व्वपाश्रपण्यौ भवतः । ( तो ) यत्र वै देवा अुग्रे पशुमा-लेभिरे तदुदीचः कृष्यमाणस्यावाङ्मेधः पपात सु ऽएष व्वनस्पतिरजा-यत तद्युत्कृष्यमाणस्युावाङ्पतत्तुस्मात्कार्ष्मुर्य्यस्तेनैवैनमेतन्मेधेन सुमर्द्धयति कृत्स्नं करोति तुस्मात्कार्ष्मर्य्यमुय्यौ व्वपाश्रपण्यौ भवतः ॥ १७ ॥

---

तद् यदमूलमुभयतः परिच्छिन्नं भवाति । अमूलं वाऽइदमुभयतः परिच्छिन्नं रक्षोऽन्तरिक्षमनुचरति—यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति। तस्मादमूलमुभयतः परिच्छिन्नं भवाति१९॥

अथ वपामुत्खिदन्ति—तया वपाश्रपण्यौ प्रोर्णौति । "घृतेन द्यावापृथिवी प्रोर्णुवाथाम्"—( वा. सं. ६ । १६ )—इति । तादिमे द्यावापृथिवीऽऊर्ज्जारसेन भाजयतिं । अनयोरूर्जं रसं दधाति । ते रसवत्याऽउपजीवनीयेऽइमाः प्रजाः उपजीवन्ति ॥ १६ ॥

कार्ष्मर्य्यमय्यौ वपाश्रपण्यौ भवतः । यत्र वै देवा अग्रे पशुमालेभिरे—तद् उदीचः कृष्यमाणस्यावाङ्मेधः पपात । स एष वनस्पतिरजायत । तद् यत् कृष्यमाणस्यावाङ्पतत्—तस्मात् कार्ष्मर्य्यः । तेनैवैनमेतन्मेधेन समर्द्धयति—कृत्स्नं करोति । तस्मात्—कार्ष्मर्य्यमय्यौ वपाश्रपण्यौ भवतः ॥ १७ ॥

---

दर्भाक्रमणव्याजेन 'रक्षः' 'अभितिष्ठामि आक्रमामि । तथा 'अधमं तमः' निकृष्टमन्धकारं भूमेरधस्ताद्वर्त्तमानं तम एव प्रापयामि । गतमन्यत् ॥ १९ ॥

अथ वपामुत्खिदन्तीति । तया वपाश्रपण्यौ प्रोर्णौतीति । 'तया' उद्धृतया वपया वपाश्रपण्योः शाखयोरुपरि 'प्रोर्णौति' प्रच्छादयेत् । घृतेनेत्यादि, तत्र मन्त्रः । हे 'द्यावापृथिवी' द्यावापृथिव्यौ ! युवां वपाश्रपण्योराच्छादनद्वारा 'घृतेन' दीप्यमानेन वपापदार्थेन 'प्रोर्णुवाथां' प्रकर्षेणाच्छादयेथाम् । यद्वा विस्तृत्वाद् वपाश्रपण्यावेव द्यावापृथिव्यावित्युपचर्यते । "तदिमे द्यावापृथिवी"—( श. प. ब्रा. ३।६।१।२१। मा. ) इत्यादि प्राग् व्याख्यातम् ॥ १६ ॥

वपाश्रपण्योः कार्ष्मर्यमयत्वं विधाय प्रशंसति—कार्ष्मर्यमय्यौ वपाश्रपण्यौ भवतो यत्र वै देवा अग्रे पशुमालेभिर इत्यादिना । पशोः कर्षणादधःपतितस्य मेधस्य कार्ष्मर्यरूपेणोत्पत्तेः तस्य पशोः सम्बन्धेन यज्ञः कृत्स्नो भवति । अत एव कर्षणसम्बन्धात् कार्ष्मर्यमयी इति नाम सम्पन्नम् । पशोः कर्षणसम्बन्धादपि कार्ष्मर्यं प्रशस्तमित्यभिप्रायः ॥ १७ ॥

---

२—व्वपामुत्खिद्य व्वपाश्रपण्यौ प्रोर्णौति घृतेन द्यावापृथिवी इति । का. श्रौ. सू. ६ । १३२ ।

(स्तां) तां परिवासयति । तां पशुश्रपणे प्रतपति तथो हास्यात्रापि शृता भवति पुनरुल्मुकमग्नीदादत्ते ते जघनेन चात्वालं यन्ति तऽआयन्त्यागच्छन्त्याहवनीयꣳ स एतत्तृणमध्वर्युराहवनीये प्रास्यति व्वायो व्वेः स्तोकानामिति स्तोकानाꣳहैषा समित् ॥ १८ ॥

(दु) अथोत्तरतस्तिष्ठन्वपां प्रतपति । (त्य) अत्येष्यन्वाऽएषोऽग्निं भवति दक्षिणतः परीत्य श्रपयिष्यंस्तस्माऽएवैतन्निह्नुते तथो हैनमेषोऽतियन्तमग्निर्न्न हिनस्ति तस्मादुत्तरतस्तिष्ठन्वपां प्रतपति ॥ १९ ॥

तामन्तरेण यूपश्चाग्निं च हरन्ति । तद्यत्समया न हरन्ति येनान्यानि हवीꣳषि हरन्ति नेदशृतया समया यज्ञं प्रसजामेति यद्व बाह्येन न हरन्त्यग्रेण यूपं बहिर्द्धा ह यज्ञात्कुर्युस्तस्मादन्तरेण यूपं चाग्निं च हरन्ति दक्षिणतः परीत्य प्रतिप्रस्थाता श्रपयति ॥ २० ॥

---

तां परिवासयति । तां पशुश्रपणे प्रतपति । तथो हास्यात्रापि शृता भवति । पुनरुल्मुकमग्नीदादत्ते ते जघनेन चात्वालं यन्ति । तऽआयन्ति । आगच्छन्त्याहवनीयम् । स एतत्तृणमध्वर्युराहवनीये प्रास्यति । "वायो वेः स्तोकानाम्"–( वा. सं. ६।१६ ) इति । स्तोकानां हैषा समित् ॥१८॥
अथोत्तरतस्तिष्ठन्वपां प्रतपति । अत्येष्यन्वाऽएषोऽग्निं भवति दक्षिणतः परीत्य श्रपयिष्यन् । तस्माऽएवैतन्निह्नुते । तथो हैनमेषोऽतियन्तमग्निर्न्न हिनस्ति । तस्मादुत्तरतस्तिष्ठन्वपां प्रतपति ॥ १९॥
तामन्तरेण यूपश्चाग्निं च हरन्ति । तद्व यत्समया न हरन्ति–येनान्यानि हवींषि हरन्ति । नेद-

---

तां परिवासयतीति । तां तयोरुपस्तृतां 'परिवासयति' पशोः सकाशात् छिनत्ति । छिन्नां 'तां' 'पशुश्रपणे' पशुः श्रप्यते यस्मिन्नग्नौ स पशुश्रपणः तत्र, 'प्रतपति' । 'तथा' सति 'अस्य' पशोर्वपा 'अत्रापि' 'शृता' स्यादित्यभिप्रायः । 'अत्रापि'–इत्यपिशब्द आहवनीयेन सह समुच्चयार्थः । पुनरुल्मुकमग्नीदादत्त इति । प्रागाहृतमुल्मुकं श्रपणार्थमपहृताङ्गारं पुनरग्नीदादाय सर्वेऽपि चात्वालात् पश्चाद्भागादाहवनीयं प्राप्नुयुः । तत्राध्वर्युरेतत्पुरा सव्ये धृतं तृणाग्रमाहवनीये "वायो वेः"–इति प्रास्येत् । अत्र कात्यायनः–" परिवास्य चात्वालेऽवसिच्य शामित्रे प्रतपति, शामित्रकदेशमाहवनीये, प्रास्यत्यग्नीत्, तृणाग्रं चाध्वर्युर्वायोवेरिति "–( का. श्रौ. सू. ६ । १३३–१३५ ) इति । हे 'वायो' ! 'स्तोकानाम्' वपाया उपरि आज्याभिघारणकालेऽधः पतिता विन्दवः स्तोकाः, तेषाम्, आधारत्वेनेदं तृणाग्रं समित्स्थानीयं 'वेः' विद्धि, अग्निं गमय वा ॥ १८ ॥
अथोत्तरतस्तिष्ठन्नित्यादि । एतत् उत्तरतः प्रतितपनम्, उपरि तपनं दक्षिणतः प्रतितपनार्थो यः प्रतिप्रस्थातुरग्न्यतिक्रमः, तत्समाधानार्थमित्यर्थः ॥ १९ ॥
दक्षिणतः प्रतितापोपगमनमार्गं दर्शयति–तामन्तरेण यूपमिति । तद्यदिति । 'समया' समीपे, वेदि-

---

१–उत्तरतस्तिष्ठन् प्रतप्य व्वपामंतरायूपाग्ने हृत्वा दक्षिणतः प्रतिप्रस्थाता श्रपयति परीत्य । का. श्रौ. सू. ६–१३६ ।

( त्यु ) अथ स्रुवेणोपहत्याज्यम् । ( म ) अध्वर्युर्वपामभिजुहोत्यग्नि-राज्यस्य व्वेतु स्वाहेति तथो हास्यैते स्तोकाः शृताः स्वाहाकृता आहुतयो भूत्वाग्निं प्राप्नुवन्ति ॥ २१ ॥

( न्त्यु ) अथाह स्तोकेभ्योऽनुब्रूहीति । स आग्नेयी स्तोकेभ्योऽन्वाह तद्यदाग्नेयी स्तोकेभ्योऽन्वाहेतःप्रदाना वै व्वृष्टिरितो ह्यग्निर्व्वृष्टिं व्वनुते स एतैः स्तोकैरेतान्स्तोकान्वनुते त ऽएते स्तोका व्वर्षन्ति तस्मादाग्नेयी स्तोकेभ्योऽन्वाह यदा शृता भवति ॥ २२ ॥

---

शृतया समया यज्ञं प्रसजामेति । यद्व बाह्येन न हरन्ति । अग्रेण यूपम् । बहिर्द्धा ह यज्ञात् कुर्युः । तस्मादन्तरेण यूपं चाग्निं च हरन्ति । दक्षिणतः परीत्य प्रतिप्रस्थाता श्रपयति ॥ २० ॥

अथ स्रुवेणोपहत्याज्यमध्वर्युर्वपामभिजुहोति–" अग्निराज्यस्य वेतु स्वाहा "–( वा० सं० ६ । १६ ) इति । तथो हास्यैते स्तोकाः शृताः स्वाहाकृता आहुतयो भूत्वाग्निं प्राप्नुवन्ति ॥ २१ ॥

अथाह–स्तोकेभ्योऽनुब्रूहीति । स आग्नेयी स्तोकेभ्योऽन्वाह । तद्यदाग्नेयी स्तोकेभ्योऽन्वाह । इतःप्रदाना वै वृष्टिः । इतो ह्यग्निर्वृष्टिं वनुते । स एतैः स्तोकैरेतान्स्तोकान् वनुते । त एते स्तोका वर्षन्ति । तस्मादाग्नेयी स्तोकेभ्योऽन्वाह–यदा शृता भवति ॥ २२ ॥

---

मध्यदेशे ' न हरन्ति ' । केनाभिप्रायेण ? अस्य पशोस्तया ' वपया ' समया ' साम्मुख्येनैव सामीप्येन ' यज्ञम् ' आहवनीयेनैव ' प्रसजाम ' प्रकर्षेण संराध्नुमः ' इति ' । प्रसञ्जनं चेष्टनम् । आहवनीयात् पुरोदेशतो हरणेऽपि यूपाद्बहिर्न हरेत्; ' यज्ञात् सकाशात् ' बहिर्द्धा ' कुर्यात् यूपस्यापि यज्ञावयवत्वात् उत्तरतः प्रतपनमध्वर्युकर्तृकम्; विशेषाश्रवणात् ॥ २० ॥

अथ स्रुवेणोपहत्याज्यमिति । तथाध्वर्युः प्रतिप्रस्थात्रा वपायां तप्यमानायां स्रुवेणाज्यमुपहत्यादाय वपोपरि अध्वर्युर्जुहुयात् "अग्निराज्यस्य वेतु" इति । 'आज्यस्य' आज्यं 'वेतु' भक्षयतु, ' स्वाहा ' इदं सुहुतमस्तु । तथो हेत्यादि । ' अस्य ' वपाद्रव्यस्य, वपाद्वारा पशोर्वा । " स्वाहाकारेण वा वषट्कारेण वा देवेभ्योऽन्नं हूयते "–( ऐ. ब्रा. २-२-३ ) इति श्रुतेः ' स्वाहाकृताः ' स्वाहाकारेण दत्ते सति ' आहुतयः ' भवन्तीत्यर्थः ॥२१ ॥

अथाह स्तोकेभ्योऽनुब्रूहीतीति । होत्रा स्तोकेभ्योऽनूच्यमानानां मन्त्राणामाग्नेयत्वं वृष्टिसाधनत्वेन प्रशंसति–तद्यदाग्नेयी स्तोकेभ्योऽन्वाहेत्यादिना । ' इतः प्रदाना वै वृष्टिः ' अस्माद् भूलोकात् प्रजाता प्रसाधयति । " इतो ह्यग्निर्वृष्टिं वनुते "–इति सङ्ग्रहेणोक्तं विशदयति–स एतैरिति । ' एतैः ' घृतस्तोकैः 'एतान्' वृष्ट्यवयवभूतान् ' वनुते ' ' ते ' अग्निना भक्षिताः ' एते ' घृतस्तोकाः पुनरुदकात्मना परिणताः पृथिव्यां ' वर्षन्ति ' । ' तस्मात् ' उक्तप्रकारेण वृष्टेरग्न्यायत्तत्वात् ' आग्नेयी ' । ' स्तोकेभ्यः ' अनुब्रूयात् ' यदा ' वपा ' शृता ' ' भवति ' ॥ २२ ॥

---

१–व्वपा१५ स्रुवेणाभिघारयत्यग्निराज्यस्येति । का. श्रौ. सू. ६-१३७ । २–' स्तोकेभ्योऽनुवाचयति । शृतायां१६ शृताप्रचरेत्याह प्रतिप्रस्थाता स्वाहाकृतिभ्यः प्रेष्येति । का. श्रौ. सू. ६ । १३८ ।

( त्यु ) अथाह प्रतिप्रस्थाता शृता प्रचरेति । स्रुचावादायाध्वर्युरतिक्रम्याश्राव्याह स्वाहाकृतिभ्यः प्रेष्येति व्वषट्कृते जुहोति ॥ २३ ॥

हुत्वा व्वपामेवाग्रेऽभिघारयति । ( त्यु ) अथ पृषदाज्यं तदु ह चरकाध्वर्य्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति प्राणः पृषदाज्यमिति व्वदन्तस्तदु ह याज्ञवल्क्यं चरकाध्वर्य्युरनुव्व्याजहारैवं कुर्व्वन्तं प्राणं वा ऽअयमन्तरगादध्वर्युः प्राण एनछं हास्यतीति ॥ २४ ॥

स ह स्म बाहू ऽअन्ववेक्ष्याह । ( हे ) इमौ पलितौ बाहू क स्विद्ब्राह्मणस्य व्वचो बभूवेति न तदाद्रियेतोत्तमो वा ऽएष प्रयाजो भवतीदं वै हविर्यज्ञ उत्तमे प्रयाजे ध्रुवामेवाग्रेऽभिघारयति तस्यै हि प्रथमावाज्यभागौ होष्यन्भवति व्वपां वा ऽअत्र प्रथमाछं होष्यन्भवति तस्माद्वपामेवाग्रेऽ-

---

अथाह–प्रतिप्रस्थाता–शृता प्रचरेति । स्रुचावादायाध्वर्युरतिक्रम्याश्राव्याह–स्वाहाकृतिभ्यः प्रेष्येति । वषट्कृते जुहोति ॥ २३ ॥

हुत्वा वपामेवाग्रेऽभिघारयति । अथ पृषदाज्यम् । तदु ह चरकाध्वर्यवः–पृषदाज्यमेवाग्रेऽभिघारयन्ति–प्राणः पृषदाज्यमिति वदन्तः । तदु ह याज्ञवल्क्यं चरकाध्वर्युरनुव्याजहार–एवं कुर्वन्तम् । प्राणं वाऽअयमन्तरगात् अध्वर्युः प्राण एनं हास्यतीति ॥ २४ ॥

स ह स्म बाहूऽअन्ववेक्ष्याह । इमौ पलितौ बाहू क स्विद् ब्राह्मणस्य वचो बभूवेति । न तदाद्रियेत । उत्तमो वाऽएष प्रयाजो भवति । इदं वै हविर्यज्ञ उत्तमे प्रयाजे ध्रुवामेवाग्रेऽभिघारयति । तस्यै

---

अथाह प्रतिप्रस्थातेति । अनन्तरं 'प्रतिप्रस्थाता' तद्वपापरिपकासीत् अतः 'अध्वर्यो! प्रचारं कुरु' इति ब्रूयात् । 'प्रेष्यः' स्पष्टः प्रयोगप्रकारः, स्वाहाकृतयोऽन्त्यप्रयाजदेवताः सन्ति ॥ २३ ॥

हुत्वा वपामेवेति । अन्त्यप्रयाजं हुत्वा 'अग्रे' पृषदाज्यात् प्राक् 'वपामेव' प्रयाजशेषेणाभिघारयेत् । 'अथ' पश्चात् अनूयाजाद्यर्थं 'पृषदाज्यम्' । चरकशाखोक्ताऽऽध्वर्यवप्रयोगकर्त्तारः 'चरकाध्वर्य्यवः' । 'पृषदाज्यमेवाग्रेऽभिघारयन्ति' । दधिमिश्रमाज्यं पृषदाज्यम् । प्राणवत् गवामन्तर्वर्त्तमानत्वात्; प्राणः पुष्टिः, तद्धेतुत्वाद्वा पृषदाज्यस्य प्राणत्वम् । 'तदु' तस्मिन्नभिघारणप्राथम्यविषये 'याज्ञवल्क्यम्' 'अनु' लक्ष्यीकृत्य 'व्याजहार' उक्तवान् । अनुव्याजहारः शापः । याज्ञवल्क्यं विशिनष्टि–एवं कुर्वन्तमिति । पृषदाज्यमतिक्रम्य वपामेवादावभिघारयन्तम् 'अयमध्वर्युः' पृषदाज्यमतिक्रामन् 'प्राणं' खलु 'अन्तरगात्' अतः 'एनम्' अध्वर्युं 'प्राणो हास्यति'–'इति' याज्ञवल्क्यं सम्बोध्य वक्ता अध्वर्युः साधारण्येनाह ॥ २४ ॥

स ह स्मेति । एवमधिक्षिप्तः 'सः' याज्ञवल्क्यः 'ह' 'बाहू' 'अन्ववेक्ष्य' समवेक्ष्य, तस्मै प्रकाशनाय 'इमौ बाहू' 'पलितौ' जरसा युक्तौ शुक्लरोमयुक्तावभूताम् । अयमभिप्रायः–एतावान् कालो वपाप्रथमा-

---

१–हुत्वा व्वपामभिघारयति पृषदाज्यं ध्रुवां प्रथममाज्यभागौ चेत् । का. श्रौ. सू. ६ । १३९ ॥

भिघारयेदुथ पृषदाज्यमुथ युत्पशुं नाभिघारयति नेदश्रृतमभिघारयाणी-त्येतदेवास्य सर्व्वः पशुरभिघारितो भवति युद्वपामभिघारयति तस्मा-द्वपामेवाग्रेऽभिघारयेदुथ पृषदाज्यम् ॥ २९ ॥

( म ) अथाज्यमुपस्तृणीते । ( तेऽथ ) अुथ हिरण्यशकलमुवदधात्युथ व्वपामवद्यन्नाहाग्नीषोमाभ्यां छागस्य व्वपायै मेदसोऽनुब्रूहीत्युथ हिरण्य-शकलमुवदधात्युथोपरिष्टाद्द्विराज्यस्याभिघारयति ॥ २६ ॥

तद्यद्धिरण्यशकलावभितो भवतः । ( तो ) घ्नन्ति वा ऽएतत्पशुं यदग्नौ जुह्वत्यमृतमायुर्हिरण्यं तदमृत ऽआयुषि प्रतितिष्ठति तथात उदेति तथा सञ्जीवति तस्माद्धिरण्यशकलावभितो भवत आश्राव्याहाग्नीषोमाभ्यां छागस्य व्वपां मेदः प्रेष्येति न प्रस्थितमित्याह प्रसुते प्रस्थितमिति व्वषट्कृते जुहोति ॥ २७ ॥

---

हि प्रथमावाज्यभागौ होष्यन् भवति । वपां वाऽअत्र प्रथमां होष्यन् भवति । तस्माद्वपामेवाग्रेऽभिघा-रयेत् । अथ पृषदाज्यम्, अथ यत् पशुं नाभिघारयति । नेदश्रृतमभिघारयाणीति । एतदेवास्य सर्वः पशुरभिघारितो भवति—यद्वपामभिघारयति । तस्माद्वपामेवाग्रेऽभिघारयेत्—अथ पृषदाज्यम् ॥ २९ ॥

अथाज्यमुपस्तृणीते । अथ हिरण्यशकलमवदधाति । अथ वपामवद्यन्नाह—अग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहीति । अथ हिरण्यशकलमवदधाति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति ॥ २६ ॥

तद् यद्धिरण्यशकलावभितो भवतः घ्नन्ति वाऽएतत् पशुम्—यदग्नौ जुह्वति । अमृतमायुर्हिरण्यम् । तद् अमृतऽआयुषि प्रतितिष्ठति । तथा त उदेति । तथा सञ्जीवति । तस्माद्धिरण्यशकलावभितो भवतः । आश्राव्याह—अग्नीषोमाभ्यां छागस्य वपां मेदः प्रेष्येति । न प्रस्थितमित्याह—प्रसुते प्रस्थित-मिति । वषट्कृते जुहोति ॥ २७ ॥

---

भिघारणेनैव गतः, अथापि प्राणश्च न निर्गत इति स्वयमपि चरकाध्वर्युवत् परीक्षणेनैव ब्रूते—'ब्राह्मणस्य' चरकाध्वर्योः 'वचः' प्राण एनं हास्यतीत्येतदात्मकम् 'क्व बभूव' नावगतमित्यर्थः । तस्मात् 'तत्' वचनं नादर्त्तव्यमित्युपसंहारः । हविष्ट्वे समानेऽपि पशोरनभिघारणस्याभिप्रायमाविष्करोति—नेदश्रृतमिति । अभि-घारणं होतव्यहविःसंस्कारः । अश्रृतस्य होमानर्हत्वात् अभिघारणं न युज्यत इत्यभिप्रायः । तर्हि संस्कारस्यास्य पशुसंस्पर्श एव नोपलभ्यत इत्याशङ्क्य तत्प्राप्त्युपायमाह—एतदेवास्येति ॥ २९ ॥

वपायागमाह—अथाज्यमुपस्तृणीत इति । उभयतो हिरण्यशकलस्थापनमप्राणस्य पशोः सप्राणत्व-सम्पादनाय ॥ २६ ॥

तद्यद्धिरण्यशकलावभितो भवत इति । अथामृताद्यात्मना स्तौति । घ्नन्ति वा एतत् पशुं यदग्नौ जुह्वती-त्यादिना । वपां मेद इति । मेदो नाम मांससारभूतमङ्गं तदात्मना वपोच्यते । सारस्वतसंपादनाय वपां मेदः प्रेष्यति । "प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने" इत्यत्र, ( पा० सू० २।३।६१ ) 'हविषो ऽप्रस्थितस्य

---

१–वपया चरिष्यन्नुपस्तीर्यहिरण्यमवधाय व्वपामवद्यन्नाह इन्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूहि का. श्रौ. सू. ।६।१४१। इति निरूढप्रैषः । "अग्नीषोमाभ्यां छागस्य वपायैमेदसोऽनुब्रूहीति का. श्रौ. सू. ६ । १४३ सौमिकोऽयंप्रैषः । हिरण्यमवधाय द्विरभिघारण ५ सोमे । का. श्रौ. सू. । ६ । १४२ । आश्राव्याहेन्द्राग्निभ्यां छागस्य वपां मेदःप्रेष्येति । का. श्रौ. सू. ६।१४६ ।

हुत्वा व्वपाᳩंसमीच्यौ । व्वपाश्रपण्यौ कृत्वानुप्रास्यति स्वाहाकृते ऽऊर्ध्वनभसम्मारुतं गच्छतमिति नेदिमे ऽअमुया सतो याभ्यां व्वपामशिश्रपामेति ॥ २८ ॥

तद्यद्वपया चरन्ति । यस्यै वै देवतायै पशुमालभन्ते तामेवैतद्देवतामेतेन मेधेन प्रीणाति सैषा देवतैतेन मेधेन प्रीता शान्तोत्तराणि हवीᳩंषि श्रप्यमाणान्युपरमति तस्माद्वपया चरन्ति ॥ २९ ॥

( न्त्यु ) अथ चात्वाले मार्ज्जयन्ते । क्रूरी वा ऽएतत्कुर्व्वन्ति यत्सञ्ज्ञपयन्ति यद्विशासति शान्तिरापस्तदद्भिः शान्त्या शमयन्ते तदद्भिः सन्दधते तस्माच्चात्वाले मार्ज्जयन्ते ॥ ३० ॥

इति षष्ठप्रपाठके तृतीयं ब्राह्मणम् ॥ ६ ॥ ३ ॥ (८।२)

---

हुत्वा वपां समीच्यौ वपाश्रपण्यौ कृत्वानुप्रास्यति—" स्वाहाकृते । ऊर्ध्वनभसं मारुतं गच्छतम् " ( वा. सं. ६ । १६ ) इति । नेदिमेऽमुया सतो याभ्यां वपामशिश्रपामेति ॥ २८ ॥

तद् यद्वपया चरन्ति । यस्यै वै देवतायै पशुमालभन्ते—तामेवैतद्देवतामेतेन मेधेन प्रीणाति । सैषा देवतैतेन मेधेन प्रीता शान्तोत्तराणि हवींषि श्रप्यमाणान्युपरमति । तस्माद्वपया चरन्ति ॥ २९ ॥

अथ चात्वाले मार्ज्जयन्ते । क्रूरी वाऽएतत् कुर्वन्ति यत् सञ्ज्ञपयन्ति, यद्विशासति । शान्तिरापः तदद्भिः शात्न्या शमयन्ते । तदद्भिः सन्दधते । तस्माच्चात्वाले मार्जयन्ते ॥ ३० ॥

---

प्रतिषेधो वक्तव्यः " इत्युक्तम् । अतः षष्ठी प्रतिषेधायैतस्य प्रयोगे प्राप्ते प्रतिषेधति—न प्रस्थितमित्याहेति । सर्वत्रात्रवचनप्रसक्तौ सवनीयपशोः पुनः प्रसञ्जयति—प्रसुते प्रस्थितमिति[2] । ब्रूयादिति शेषः । ' प्रसुते ' अभिषवे कृते सति यो वपायागस्तत्रेत्यर्थः ॥ २७ ॥

हुत्वा वपां समीच्यौ वपाश्रपण्यौ कृत्वानुप्रास्यतीति ' समीच्यौ ' परस्पराभिमुखे । तथा च सूत्रम्— " वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितराम् " ( का० श्रौ० सू० ६ । १४५ ) इति । ' स्वाहाकृते ' स्वाहाशब्दे उच्चरिते, हविषीत्यर्थः । अस्य प्रासने मन्त्रः—ऊर्ध्वनभसमिति । ' ऊर्द्ध्वम् ' उपरि भूतं ' नभः ' अन्तरिक्षं यस्य वायोः स तथोक्तः, तम् ' ऊर्ध्वनभसम् ' तं मारुतं वायुम्, हे वपाश्रपण्यौ ! युवां ' गच्छतम् ' । ' याभ्यां शाखाभ्यां ' वपाम् अशिश्रपाम ' वपाश्रपणमकार्ष्म ते ' इमे ' ' अमुया ' अमुत्र, समुच्छ्रयरहिते अनभिमते देशे प्रणष्टे ' न ' भवत इत्यभिप्रायेणाग्नौ प्रास्यत् ॥ २८ ॥

वपायागं प्रशंसति—तद् यद् वपया चरन्तीति । अयं वपायागो विप्रकृष्टकालीनस्याङ्गयागस्य मध्यव्यवधानेन क्षुधार्त्ताया देवताया अवान्तरक्षुन्निवर्त्तकत्वेन क्रोधशान्तिहेतुरित्यर्थः ॥ २९ ॥

अथ चात्वाल इत्यादि[3] । स्पष्टम् ॥ ३० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये तृतीयकाण्डेऽष्टमाध्याये द्वितीयं ब्राह्मणम् ॥ ( ३–८–२ )

---

१–चात्वालसमीपे 'इदमापः प्रवहत' ( ६ अ. १७ कं. ) इत्यादिरात्माभ्युक्षणमन्त्रः संहितायां पठ्यते इह तु नोक्तः । २–प्रस्थितमितिच प्रसुते । का. श्रौ. सू. ६।१४४। ३–चात्वाले मार्जयंते सपत्नीका इदमापः प्रवहतेति । का० श्रौ० सू० ६ । १४६ ।

यद्देवत्यः पशुर्भवति । तद्देवत्यं पुरोडाशमनुनिर्व्वपति तद्यत्पुरोडाशमनुनिर्व्वपति सर्व्वेषां वा ऽएष पशूनां मेधो यद्व्रीहियवौ तेनैवैनमेतन्मेधेन समर्द्धयति कृत्स्नं करोति तस्मात्पुरोडाशमनुनिर्व्वपति ॥ १ ॥

( त्यु ) अथ यद्वपया प्रचर्य । ( यैं ) एतेन पुरोडाशेन प्रचरति मध्यतो वा ऽइमां व्वपामुत्खिदन्ति मध्यत ऽएवैनमेतेन मेधेन समर्द्धयतिं कृत्स्नं करोति तस्माद्वपया प्रचर्यैतेन पुरोडाशेन प्रचरत्येष न्वेवैतस्य बन्धुर्यत्र क्व चैष पशुं पुरोडाशोऽनुनिरुप्यते ॥ २ ॥

( तेऽथ ) अथ पशुं व्विशास्ति । त्रिः प्रच्यावयतात्त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुतादिति त्रिवृद्धि यज्ञः ॥ ३ ॥

---

यद्देवत्यः पशुर्भवति, तद्देवत्यं पुरोडाशमनुनिर्वपति । तद् यत्पुरोडाशमनुनिर्वपति । सर्वेषां वाऽएष पशूनां मेधो यद्व्रीहियवौ । तेनैवैनमेतन्मेधेन समर्द्धयति । कृत्स्नं करोति । तस्मात्पुरोडाशमनुनिर्वपति ॥ १ ॥

अथ यद्वपया प्रचर्य—एतेन पुरोडाशेन प्रचरति, मध्यतो वाऽइमां वपामुत्खिदन्ति, मध्यत एवैनमेतेन मेधेन समर्द्धयति, कृत्स्नं करोति । तस्माद्वपया प्रचर्यैतेन पुरोडाशेन प्रचरति । एष न्वेवैतस्य बन्धुः—यत्र क्व चैष पशुं पुरोडाशोऽनुनिरुप्यते ॥ २ ॥

अथ पशुं विशास्ति । त्रिः प्रच्यावयता(त्) त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुताद्—इति । त्रिवृद्धि यज्ञः ॥ ३ ॥

---

अथानुनिर्वाप्यपुरोडाशं तद्देवतां च विधत्ते—यद्देवत्य इति[1] । या देवता पशोः पुरोडाशोऽपि तद्देवताकः कर्त्तव्यः । पुरोडाशानुनिर्वापं पूर्यमाणस्य पशोः समृद्धिहेतुत्वेन प्रशंसति—सर्वेषां वा एष पशूनामिति । सर्वपशूनां मेधरूपत्वमैतरेयब्राह्मणे "पुरुषं वै देवाः पशुमालभन्त, तस्मादालब्धान्मेध उदक्रामत्" (ऐ. ब्रा. २ । १ । ८ ) इत्यादिना प्रपञ्चितम् ॥ १ ॥

पुरोडाशस्य वपानन्तर्यं[2] प्रशंसति—अथ यद्वपया प्रचर्येति । पशुपुरोडाशस्य पशुच्छिद्रपूर्तिरूपप्रयोजनं सर्वेषु पशुष्वतिदिशति—एष न्वेवैतस्य बन्धुरिति ॥ २ ॥

अथ पशुं विशास्तीति । ( धा. पा. भ्वा. प. ७२७ ) । शमिता । तदा शमितुरेवमनुशासनं कुर्यात्—हे शमितः ! 'त्रिः प्रच्या[3]वय' प्रधानस्विष्टकृदुपयड्भेदेन त्रिविधाङ्गानि त्रिविधचिह्नानि यथा स्युः, तथा प्रच्यावय 'त्रिः प्रच्युतस्य' पशोः 'हृदयम्' अवयवम् 'उत्तमम्' उपरिभावं 'कुरुतात्' 'इति'। यद्वा

---

१—अग्नीषोमीयोऽतःपशुः । तद्देवत्यः पशुपुरोडाशः । का० श्रौ०सू० ८–२०३।२०४। पशुदेवतायै पुरोडाश एकादशकपालः । का. श्रौ. सू. ६ । १६४। अग्नीषोमीयोवाविशेषोपदेशात् । का. श्रौ. सू. ६ । १६५ । २—विशास्तिपशुमन्यः । ऋत्विजां वैकोऽप्रक्लृप्तत्वाच्छामित्रे । उपगादर्शनाच्च । विक्रयी त्वन्यः शूद्रसंयोगात् । का. श्रौ. सू. ६ । १४७–१५० । ३—त्रिः प्रच्यावयतात् इति मूलपाठः ।

( ब्रोऽथ ) अथ शमितारꣳ सꣳशास्ति । यत्त्वा पृच्छाच्छृतꣳ हविः शमिता ३ इति शृतमित्येव ब्रूतान्न शृतं भगवो न शृतꣳ हीति ॥ ४ ॥

( त्यु ) अथ जुह्वा पृषदाज्यस्योपहत्य । ( त्या ) अध्वर्युरुपनिष्क्रम्य पृच्छति शृतꣳ हविः शमिता३इति शृतमित्याह तद्देवानामित्युपाꣳश्वध्वर्युः ॥ ५ ॥

( स्त ) तद्यत्पृच्छति । शृतं वै देवानाꣳ हविर्नाशृतꣳशमिता वै तद्वेद यदि शृतं वा भवत्यशृतं वा ॥ ६ ॥

तद्यत्पृच्छति । शृतेन प्रचराणीति तद्यद्यशृतं भवति शृतमेव देवानाꣳ हविर्भवति शृतं यजमानस्यानेनाऽध्वर्युर्भवति शमितारि तदेनो भवति

---

अथ शमितारं संशास्ति–यत्त्वा पृच्छात्–शृतं हविः शमिताः३–इति–शृतमित्येव ब्रूतात् न शृतं भगवो न शृतं हीति ॥ ४ ॥

अथ जुह्वा पृषदाज्यस्योपहत्य, अध्वर्युरुपनिष्क्रम्य, पृच्छति–शृतं हविः शमिताः ३ इति । शृतमित्याह । तद्देवानामित्युपांश्वध्वर्युः ॥ ५ ॥

तद् यत्पृच्छति–शृतं वै देवानां हविः, नाशृतम् । शमिता वै तद्वेद यदि शृतं वा भवत्यशृतं वा ॥ ६ ॥

तद् यत् पृच्छति–शृतेन प्रचराणीति । तद् यद्यशृतं भवति–शृतमेव देवानां हविर्भवति, शृतं

---

'त्रिः प्रच्यावय' अवयवान् यथाङ्गानि त्रिः प्रच्युतानि स्युः, तथा पाकं कुरु । 'त्रिः प्रच्युतस्य' पक्वस्य 'हृदयं' शूलाग्रेण पक्वम् 'उत्तमम्' उपरिवर्त्तमानं कुरु । प्रच्यावनस्य त्रित्वं प्रशंसति–त्रिवृद्धि यज्ञ इति । उक्तं त्रिवृत्त्वम् ॥ ३ ॥

**अथ शमितारं संशास्तीति** । अनुशासनं कुर्यात् । यत् यदा हे शमितः !–त्वा त्वां पृच्छात् पृच्छेत् । प्रश्न प्रकारमाह–शृतं ह विः शमिता ३ रिति प्रश्नार्थे प्लुतः । तदा शृतं चेच्छृतमित्येव ब्रूतात् । अशृतं चेत् हे भगवन्निदानीमपि न शृतमिति ब्रूतात् । प्रमादादशृतस्य शृतत्वाभिधानभीत्या प्रथमत एव संशासनम् ॥ ४ ॥

**अथ जुह्वेति** । अथ पाकानन्तरं जुह्वा पृषदाज्यस्योपहत्य' जुह्वां पृषदाज्यं हृदयावदानार्थमादाय शामित्रं प्रति गत्वा 'शमितारं' 'शृतं हविः' ? 'इति' पृच्छेत् । 'शृतम्' 'इति' प्रत्युक्ते 'तद् देवानाम्' 'इति' 'उपांशु' ब्रूयात् ॥ ५ ॥

**प्रश्नप्रयोजनमाह–तद् यत् पृच्छतीति** । प्रश्नाभावपक्षे 'अशृतम्' इति । 'शृतं वा' स्यात् । तच्च रौद्रं नैर्ऋतं वा भवेत्, न दैवम्; "यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स दैवः" ( तै॰ सं. २ । ६ । ३ । ४ ) इति हि तैत्तिरीयकम् । अतः शृताशृतविभागं शमिता जानातीति "शृतं हविः शमितः ३" ?–इति प्रश्नो युज्यत इत्यर्थः ॥ ६ ॥

**तद्यत् पच्छतीति** । अत एव प्रश्नसामर्थ्यात् प्रमादादशृतमपि भवेत् । 'यजमानस्य शृतं भवति' शृतं

---

१–शमितार२ꣳशास्ति त्रिः प्रच्यावयतात् त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुतात्यत्त्वापृछाच्छृत२ꣳ हविः शमिता ३ रिति शृतमित्येवब्रूतान्न शृतंभगवोनशृत२ꣳहीति । त्रिः प्रच्युते हृदयंप्रव्रह्योत्तमंकरोति । शूलं चाभूमौ । जुह्वापृषदाज्यस्यादायोपनिष्क्रम्य पृछति शृत२ꣳहविः शमिता ३ रिति त्रिरभिक्रामम् । प्रोक्ते तद्देवानमित्याहोपा२ꣳशु । का. श्रौ. सू. ६ । १७८–१८२ । २–'एव'–इ० ज० पा० ।

त्रिष्कृत्वः पृच्छति त्रिवृद्धि यज्ञोऽथ यदाह तद्देवानामिति तद्धि देवानां यच्छृतं तस्मादाह तद्देवानामिति ॥ ७ ॥

स हृदयमेवाग्रेऽभिघारयति । ( त्या ) आत्मा वै मनो हृदयं प्राणः पृषदाज्यमात्मन्येवैतन्मनसि प्राणं दधाति तथैतज्जीवमेव देवानाᳬं हवि-र्भवत्यमृतममृतानाम् ॥ ८ ॥

( ᳬ ) सोऽभिघारयति । सं ते मनो मनसा सं प्राणः प्राणेन गच्छता-मिति न स्वाहाकरोति न ह्येषाहुतिरुद्वासयन्ति पशुम् ॥ ९ ॥

---

यजमानस्य । अनेनाः—अध्वर्युर्भवति । शमितरि तदेनो भवति । त्रिष्कृत्वः पृच्छति, त्रिवृद्धि यज्ञः । अथ यदाह—तद्देवानामिति । तद्धि देवानाम्—यच्छृतम् । तस्मादाह—तद्देवानामिति ॥ ७ ॥

स हृदयमेवाग्रेऽभिघारयति । आत्मा वै मनो, हृदयम्, प्राणः पृषदाज्यम् । आत्मन्येवैतन्मनसि प्राणं दधाति । तज्जीवमेव देवानां हविर्भवति—अमृतममृतानाम् ॥ ८ ॥

सोऽभिघारयति—" सं ते मनो मनसा सं प्राणः प्राणेन गच्छताम् "—(वा. सं. ६।१८) इति । न स्वाहाकरोति न ह्येषाहुतिः, उद्वासयन्ति पशुम् ॥ ९ ॥

---

यत् फलं तदविकलं भवतीत्यर्थः । अत एव प्रश्नादेव ' अध्वर्युः ' ' अनेनाः ' अपापः ' भवति '; शमितार-मेव ' तदेनः ' आश्रयति । त्रिः कृत्वः इत्यादि । स्पष्टम् ॥ ७ ॥

स हृदयमेवाग्रेऽभिघारयतीति[1] । हृदयाभिघारणं प्रशंसति—आत्मा वै मन इत्यादिना । यदेतद्धृदयाख्य-मङ्गम्, तन्मन आख्यकः ' आत्मा ' खलु; "एतं मनोमयमात्मानमुपसंक्रामति"—( तै. उ. ब्र. व. अनु. ८ ) इत्यादौ आत्मत्वव्यवहारात् । अथवा मनउपाधिकः ' आत्मा ' खलु, परिपूर्णस्य परमात्मनः परिच्छेदेन जीव-भावः, मनस उपाधित्वात् । उक्तं पृषदाज्यस्य प्राणत्वम् अतः एतेन हृदयाभिघारणेन आत्मभूते मनसि प्राणं स्थापितवान् भवति । तथा सति हृदयद्वारा प्राणप्रज्ञयोः स्थापितत्वात् 'देवानाम्' इदं सजीवं 'हविः' सम्पद्यते । अग्रशब्दश्रुतेः सामर्थ्यादितराण्यङ्गान्यपि पश्चादाज्येनाभिघारयेत् ॥ ८ ॥

सोऽभिघारयतीत्यादि । मन्त्रस्यार्थः—हे अभिघार्यमाण हृदय ! ' ते ' ' मनः ' । मनःप्राणयोर्हृदयव-स्थानात् आश्रयाश्रयिणोरभेदात् ' ते ' मनः इति स्वस्वामिभावसम्बन्धोपचारः । ' मनसा ' पृषदाज्यलक्षणेन । पृषदाज्यस्य मनोलक्षणत्वेन स्तुतत्वात् प्राणमनसोरवियोगात् पृषदाज्यमपि मन इत्युच्यते । तेन ' सङ्गच्छताम् ' सङ्गतं भवतु । तथा ' ते ' ' प्राणः ' ' प्राणेन ' पृषदाज्यलक्षणेन ' सङ्गच्छताम् ' । यद्वा-हे 'पशो' ! 'ते' यौ मनःप्रणौ अपगतौ, ताभ्यां मनःप्राणाभ्यां हृदयरूपेणावस्थिताभ्यां सङ्गच्छतामित्यर्थः । न ह्येषाहुतिरिति । अभिघारणरूपत्वेनाहुतिसंस्कारत्वात् स्वत आहुतित्वाभावान्न स्वाहा कुर्यात् ॥ ९ ॥

---

1—संतेमन इति हृदयमभिघार्य सर्व्वम् । का. श्रौ. सू. ६ । १८३ ।

तं जघनेन चात्वालमन्तरेण यूपं चाग्निं च हरन्ति । तद्यत्समया न हरन्ति येनान्यानि हवीᳬँषि हरन्ति शृतᳬँ सन्तं नेदङ्गशो विकृतेन क्रूरीकृतेन समया यज्ञं प्रसजामेति यद्रु बाह्येन न हरन्त्यग्रेण यूपं बहिर्द्धा ह यज्ञात्कुर्युस्तस्मादन्तरेण यूपं चाग्निं च हरन्ति दक्षिणतो निधाय प्रतिप्रस्थातावद्यति प्लक्षशाखा ऽउत्तरबर्हिर्भवन्ति ता अध्यवद्यति तद्यत्प्लक्षशाखाऽउत्तरबर्हिर्भवन्ति ॥ १० ॥

यत्र वै देवाः । ( ऽ ) अग्रे पशुमालेभिरे तं त्वष्टा शीर्षतोऽग्रेऽभ्युवामोतैवं चिन्नालभेरन्निति त्वष्टुर्हि पशवः सऽएष शीर्षन्मस्तिष्कोनूक्यश्च मज्जा तस्मात्स वान्त इव त्वष्टा ह्येतमभ्युवमत्तस्मात्तं नाश्नीयात्त्वष्टुर्ह्येतदभिवान्तम् ॥ ११ ॥

---

तं जघनेन चात्वालम्–अन्तरेण यूपं चाग्निं च हरन्ति । तद् यत्समया न हरन्ति–येनान्यानि हवींषि हरन्ति–शृतं सन्तं नेदङ्गशो विकृतेन क्रूरीकृतेन समया यज्ञं प्रसजामेति । यद्रु बाह्येन न हरन्ति–अग्रेण यूपम्–बहिर्द्धा ह यज्ञात् कुर्युः । तस्मादन्तरेण यूपं चाग्निं च हरन्ति । दक्षिणतो निधाय प्रतिप्रस्थातावद्यति । प्लक्षशाखा उत्तरबर्हिर्भवन्ति । ता अध्यवद्यति । तद् यत्प्लक्षशाखा उत्तरबर्हिर्भवन्ति ॥ १० ॥

यत्र वै देवाः अग्रे पशुमालेभिरे, तं त्वष्टा शीर्षतोऽग्रेऽभ्युवाम–उतैवं चिन्नालभेरन्निति । त्वष्टुर्हि पशवः । स एष शीर्षन् मस्तिष्कोऽनूक्यश्च मज्जा । तस्मात् स वान्त इव । त्वष्टा ह्येतमभ्यवमत् । तस्मात्तं नाश्नीयात् । त्वष्टुर्ह्येतदभिवान्तम् ॥ ११ ॥

---

तं जघनेनेत्यादि ("वनिष्टुजाघनी चावद्यति" का. श्रौ. सू. ६ । १९८) । पूर्ववद् व्याख्येयम् । संसर्जनस्य निषेधोपयोगसिद्धये हविषः क्रूरतामाह–नेदङ्गश इति । अङ्गशः अङ्गादङ्गात् । "सङ्ख्यैकवचनाच्च वीप्सायाम्"–( पा. सू. ५।४।४३ ) इति शस् । दक्षिणत आहृतं हविः 'प्रतिप्रस्थाता' अवद्येत् । प्लक्षशाखा उत्तरबर्हिर्भवन्तीति । बर्हिष उपरिभूताः स्युः । बर्हिष उपरि हविषामवदानार्थमाच्छादयेत्, तासामुपरि अवद्येत् । प्लक्षशाखाः प्रशंसति–तद् यत् प्लक्षशाखा इत्यादिना ॥ १० ॥

यत्र वै देवा इति । पुरा देवानां पश्वालम्भनसमये 'त्वष्टा' देवः, पशुस्वामी । एवमेवोत्तरकालेऽपि आलम्भनं करिष्यति, स न भवेदिति पशुशिरसि वमनं कृतवान्, स उच्छिष्टपदार्थः, शिरसि मस्तिष्कादिरूपेण परिणतोऽभूत् । अथवा शिरसः उच्छिष्टसंस्पर्शनात् 'स एषः शिरःसम्बद्धो 'मस्तिष्कः' कपालः, 'अनूक्यश्च' तन्मांसम्, 'मज्जा' तदाश्रितः सार इत्यभक्ष्योऽभूत् ॥ ११ ॥

---

१–पश्चसी व्यपावत् हृत्वा दक्षिणतः प्रतिप्रस्थाता वेद्यां प्लक्षशाखास्ववद्यति । का. श्रौ. सू. ६ । १८४ ।

तस्याव्वाङ्मेधः पपात । स ऽएष व्वनस्पतिरजायत तं देवाः प्रापश्यंस्तस्मात्प्रख्युः प्रख्यो ह वै नामैतद्यत्प्लक्ष इति तेनैवैनमेतन्मेधेन समर्द्धयति कृत्स्नं करोति तस्मात्प्लक्षशाखा उत्तरबर्हिर्भवन्ति ॥ १२ ॥

( न्त्य ) अथाज्यमुपस्तृणीते । जुह्वां चोपभृति च व्वसाहोमहवन्यार्थं समवत्तधान्यामथ हिरण्यशकलाववदधाति जुह्वां चोपभति च ॥ १३ ॥

( चा ) अथ मनोतायै हविषोऽनुव्वाच आह । तद्यन्मनोतायै हविषोऽनुव्वाच आह सर्व्वा ह वै देवताः पशुमालभ्यमानमुपसङ्गच्छन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति सर्व्वासार्थं हि देवतानार्थं हविः पशुस्तासार्थं सर्व्वासां देवतानां पशौ मनार्थंस्योतानि भवन्ति तान्येवैतत्प्रीणाति तथो हामोघाय देवतानां मनार्थंस्युपसङ्गतानि भवन्ति तस्मान्मनोतायै हविषोऽनुवाच आह ॥ १४ ॥

---

तस्यावाङ्मेधः पपात । स एष वनस्पतिरजायत । तं देवाः प्रापश्यन् । तस्मात्प्रख्यः । प्रख्यो ह वै नामैतद्—यत्प्लक्ष इति । तेनैवैनमेतन्मेधेन समर्द्धयति । कृत्स्नं करोति । तस्मात् प्लक्षशाखा उत्तरबर्हिर्भवन्ति ॥ १२ ॥

अथाज्यमुपस्तृणीते—जुह्वां चोपभृति च वसाहोमहवन्यां समवत्तधान्याम् । अथ हिरण्यशकलाववदधाति—जुह्वां चोपभृति च ॥ १३ ॥

अथ मनोतायै हविषोऽनुवाच आह । तद् यन्मनोतायै हविषोऽनुवाच आह । सर्वा ह वै देवताः पशुमालभ्यमानमुपसङ्गच्छन्ते—मम नाम ग्रहीष्यति, मम नाम ग्रहीष्यतीति । सर्वासां हि देवतानां हविः पशुः । तासां सर्वासां देवतानां पशौ मनांस्योतानि भवन्ति । तान्येवैतत् प्रीणाति । तथो हामोघाय देवतानां मनांस्युपसङ्गतानि भवन्ति । तस्मान्मनोतायै हविषोऽनुवाच आह ॥ १४ ॥

---

तस्यावाङ्मेध इति । 'तस्य' देवैरालभ्यमानस्य पशोः सकाशादेव अवाङ् मध्ये 'मेधः' तु अधः 'पपात'। पतितो वृक्षोऽभूत् । वृक्षत्वेनाभ्युत्पन्नं 'तं' 'देवाः' 'प्रापश्यन्' अतो देवैः प्रकर्षेणाख्यानात् 'प्रख्यः' इत्युच्यते । इदानीं यः 'प्लक्षः इति' उच्यते, स वस्तुतः 'प्रख्य' इत्यर्थः ॥ १२ ॥

अथाज्यमिति । जुह्वादिषु 'उपस्तृणीते' । 'जुह्वाम्' प्रधानपश्वङ्गावदानार्थम् । 'उपभृति' स्विष्टकृदर्थम् । वसाहोमार्थं वसाहोमहवन्याम् । 'समवत्तधान्याम्' समवत्तधानी इडापात्रम् । जुहूपभृतोर्हिरण्यशकलमवधायावदीयमानस्य हविषः सम्बन्धिन्यै मनोतादेवतायै अनुवचनार्थं होतारं ब्रूयात् । मनोतानामनिर्वचनेन तदनु-

---

१—व्वपया चरिष्यन्नुपस्तीर्य हिरण्यमवधाय व्वपामवद्यन्नाह । हिरण्यमवधाय द्विरभिघारणꣳ सोमे । का. श्रौ. सू. ६ । १४१–१४२
२—जुहूपभृतोरुपस्तृणीते व्वसाहोमहवन्यां पात्र्यां च मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्युक्ते स्रुचोरवद्यति यथोक्तं द्विर्द्विः । अशेषे गुदतृतीये । व्वपावद्धिरण्यम् । का. श्रौ. सू. ६ । १८५–१८७ ॥

स हृदयस्यैवाग्रेऽवद्यति । तद्यन्मध्यतः सतो हृदयस्याग्रेऽवद्यति प्राणो वै हृदयमतो ह्ययमूर्ध्वः प्राणः सञ्चरति प्राणो वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावत्पशुरथ यदास्मात्प्राणोऽपक्रामति दार्व्वेव तर्हि भूतोऽनर्थ्यः शेते ॥ १५ ॥

हृदयमु वै पशुः । (स्तु) तदस्यात्मन एवाग्रेऽवद्यति तस्माद्यदि किञ्चिदवदानꣳ हीयेत न तदाद्रियेत सर्व्वस्य हैवास्य तत्पशोरवत्तं भवति यद्धृदयस्याग्रेऽवद्यति तस्मान्मध्यतः सतो हृदयस्यैवाग्रेऽवद्यत्यथ यथापूर्व्वम् ॥ १६ ॥

(मु) अथ जिह्वायै । सा हीयं पूर्व्वार्द्धात्प्रतिष्ठत्यथ वक्षसस्तद्धि ततोऽथैकचरस्य दोष्णोऽथ पार्श्वयोरथ तनिम्नोऽथ वृक्कयोः ॥ १७ ॥

---

स हृदयस्यैवाग्रेऽवद्यति । तद् यन्मध्यतः सतो हृदयस्याग्रेऽवद्यति । प्राणो वै हृदयम् । अतो ह्ययमूर्ध्वः प्राणः सञ्चरति । प्राणो वै पशुः । यावद्ध्येव प्राणेन प्राणिति—तावत्पशुः । अथ यदस्मात प्राणोऽपक्रामति—दार्वेव तर्हि भूतोऽनर्थ्यः शेते ॥ १५ ॥

हृदयमु वै पशुः । तस्यात्मन एवाग्रेऽवद्यति । तस्माद्यदि किञ्चिदवदानं हीयेत—न तदाद्रियेत । सर्वस्य हैवास्य तत् पशोरवत्तं भवति—यद् हृदयस्याग्रेऽवद्यति । तस्मान्मध्यतः सतो हृदयस्यैवाग्रेऽवद्यति । अथ यथापूर्वम् ॥ १६ ॥

अथ जिह्वायै । सा हीयं पूर्वार्द्धात्प्रतिष्ठति । अथ वक्षसः । तद्धि ततः । अथैकचरस्य दोष्णः । अथ पार्श्वयोः । अथ तनिम्नः । अथ वृक्कयोः ॥ १७ ॥

---

वचनं प्रशंसति—तद्यन्मनोताया इत्यादिना । 'ओतानि' सम्बद्धानि मनांसि यस्याम् । अत्र "त्वꣳ ह्यग्ने प्रथमो मनोता—" ( ऋ. सं. ६ । १ । १ ) इति मन्त्रवर्णात् 'अग्निः' 'मनोता' पशोर्मनस्सम्वन्धः । सम्बन्धस्य निमित्तमाह—सर्वासां देवानामिति । 'पशौ' आज्यवत्प्रियत्वसाधारण्यात् 'तानि' 'मनांसि' 'ओतानि' । 'एतत्' एतेन आग्नेयेनानुवचनेन । स्पष्टमन्यत् ॥ १३ ॥ १४ ॥

प्रधानार्थावद्यमानाङ्गानि तत्क्रमं च विधाय प्रशंसति—स हृदयस्यैवाग्र इत्यादिना । हृदयस्यावदानप्रदेशं विशिनष्टि—तद्यन्मध्यतः सत इति । 'सतः' देहमध्यप्रदेशे वर्त्तमानस्य । हृदयस्य प्राणत्वं तदुत्पत्तिस्थानत्वेनेत्याह—अतो ह्ययमूर्द्ध्वः प्राणः सम्भवतीति । प्राणपशुत्वब्राह्मणं प्राग्व्याख्यातम् । अत एव प्राणस्याभावे पशुत्वाभावाद्धृदयस्य प्रथमं समवदाने सति हृदयव्यतिरिक्तानामङ्गानामवदानमपि सम्पन्नम्; यदि प्रमादात् किञ्चिदेवाङ्गहीनमपि स्यात्, तथापि कृत्स्नपश्ववदानं सम्पद्यत इत्यर्थः । तस्माद्धृदयमेवाग्रेऽवद्येत् 'अथ' 'यथापूर्वं' पशोः पूर्वमङ्गमनतिक्रम्य ॥ १५ ॥ १६ ॥

सङ्ग्रहेणोक्तं विवृणोति—अथ जिह्वाया इति । जिह्वायाः सकाशात्सा खलु जिह्वा पूर्वार्द्धात्पूर्वार्द्धे प्रतिष्ठिता । अतः पूर्वस्य पूर्वमवदानाय जिह्वाया अवद्येत् । अथ जिह्वानन्तरं वक्षोपि पूर्वार्द्धे प्रतितिष्ठति । 'तद्धि ततोऽथ'

( गुं ) गुदं त्रेधा करोति । स्थविमोपयड्भ्यो मध्यं जुह्वां द्वेधाकृत्वा-ऽवद्यत्यणिम त्र्यङ्गेष्वथैकचरायै श्रोणेरेतावन्तु जुह्वामवद्यति ॥ १८ ॥

( त्यु ) अथोपभृति । त्र्यङ्गचस्य दोष्णो गुदं द्वेधा कृत्वावद्यति त्र्यङ्गचायै श्रोणेरथ हिरण्यशकलाववदधात्यथोपरिष्टादाज्यस्याभिघारयति ॥ १९ ॥

---

गुदं त्रेधा करोति । स्थविमोपयड्भ्यो मध्यं जुह्वां द्वेधा कृत्वावद्यति । अणिम त्र्यङ्गेषु । अथैकचरायै श्रोणेः । एतावन्तु जुह्वामवद्यति ॥ १८ ॥

अथोपभृति । त्र्यङ्गचस्य दोष्णो गुदं द्वेधा कृत्वावद्यति । त्र्यङ्गचायै श्रोणेः । अथ हिरण्यशकलाववदधाति । अथोपरिष्टादाज्यस्याभिघारयति ॥ १९ ॥

---

अथापि वक्षोनन्तरम्, 'पूर्वार्द्धात् प्रतिष्ठति' । 'एकचरस्य दोष्णः' सव्यादित्यर्थः । 'अथ' 'तनिम्नः' यकृत्तः इत्यर्थः । तस्य चातिकोमलत्वात् तनिमत्त्वम् । 'वृक्कः' वृक्कं कुक्ष्युभयपार्श्वस्थमाम्रफलाकारं मांसद्वयम् । एवं हृदयादीनि नव सम्पन्नानि ॥ १७ ॥

दशमं वक्तुमाह–गुदं त्रेधेति । त्रिधाकृतेषु गुदेषु गुदाङ्गेषु यदतिस्थूलं तदुपयाजार्थमवद्येत्; मध्यमं जुह्वां प्रधानहोमार्थं द्विधाकृत्वाऽवद्येत्, यद्वणुतरं त्र्यङ्गेषु, तन्मध्ये अवद्येत् ॥

एकादशं दर्शति–गुदं त्रेधा करोतीति । अथैकचरायै श्रोणेरीति । दक्षिणाया इत्यर्थः ॥ १८ ॥

स्विष्टकृदर्थमाह–अथोपभृति अङ्गस्येति । त्रीणि अङ्गानि यस्येति त्र्यङ्गम्, सौविष्टकृतं हविः । तान्येवाह–दोष्ण इति । सव्यस्य प्रधानार्थत्वविहितत्वाद् दक्षिणस्य दोष्णः सकाशादित्यर्थः । 'गुदं' गुदस्याणुभागं 'द्वेधा कृत्वा' उपभृति स्विष्टकृदर्थम् 'अवद्यति' अवद्येत् । 'त्र्यङ्गायै श्रोणेः' स्विष्टकृदर्थायाः श्रोणेः सकाशात्, सव्यायाः श्रोणेरित्यर्थः । प्रधानस्य इडायाश्चावदानं प्रत्यङ्गं द्विर्द्विः कुर्यात् । "स्रुचोरवद्यति यथोक्तं द्विर्द्विः" ( का. श्रौ. सू. ६–१८९ )–इति सूत्रात् ॥

अथ हिरण्यशकलाविति । जुह्वामुपभृति तस्योपरि हिरण्यशकलौ स्थापयेत्, अथाभिघारयेत् ॥ १९ ॥

अथ वसाँहोमं गृह्णातीति । रेडसीति वसाहोमं गृह्णीयात्; हूयत इति यत् होमद्रव्यम्, तद् वसाहोमहवन्यां गृह्णीयादित्यर्थः ॥

मन्त्रस्यायमर्थः–हे वसाद्रव्य ! त्वं 'रेडसि' हिंसकमसि रिषेर्हिंसार्थस्य विचि लघूपधगुणे रेडिति रूपम्; ( धा. पा. ६९९ ) ब्राह्मणानुगुणं लत्वाऽदिकं कृत्वा 'लेलया'–रूपम् । लेलयेवेति । द्रवद्रव्यत्वात् इतस्ततश्चलनं विवक्षित्वा व्याख्यातम् । तादृशं 'त्वा' त्वाम् 'अग्निः' 'श्रीणातु' श्रपयतु, तेन सह मिश्रयतु वा । 'आपस्त्वा समरिणन्' "री गतिरेषणयोः" ( धा. पा. प. २८ )–इत्यस्य लुङि रूपम् । उदकानि त्वां समतरन्नित्यर्थः । उदकैः सह सर्वाङ्गेभ्यो निस्सृतत्वात् । 'वातस्य' वायोः 'ध्राज्यै' गत्यै गृह्णामि ।

---

१–'त्र्यङ्गेषु मध्ये' इति क. पा. । २–'अथैकतरायै' इति पा. ज. ।

३–अंगान्यवद्यत्यभंजन् । हृदयं जिह्वां क्रोडं९ सव्यसक्थिपूर्वकं पार्श्वेयकृद्वृक्कौ गुदमध्यंदश्रोणिरितिजौहवानि । दक्षिणासक्थि-पूर्व्वनडकं गुदतृतीयाणिष्ठ १ सव्यश्रोणिरित्यौपसृतानि । व्वर्षिष्ठमुपयड्भ्यः । अवदानकालेप्रभागः । व्वनिष्ठुजाघनींचावद्यति । क्लोमप्लीहाऽध्यूध्नीपुरीततं चेच्छन् । रेडऽसीतिव्वसांगृहीत्वाद्विरभिघार्य । का. श्रौ. सू. ६।१८८ । ४–ब्राह्मणे तु लत्वं कृत्वा वर्ण-साम्येन लिपोरूपं कृत्वा लेलयेवेति । इ. पा. ५–'विवक्षितत्वाद्' इति क. पा. ।

( त्यु ) अथ वसाहोमं गृह्णाति । रेडसीति लेलयेव हि यूस्तस्मादाह रेडसीत्यग्निष्ट्वा श्रीणात्वित्यग्निर्ह्येतच्छ्रपयति तस्मादाहाग्निष्ट्वा श्रीणात्वित्यापस्त्वा समरिणन्नित्यापो ह्येतमङ्गेभ्यो रसꣳ सम्भरन्ति तस्मादाहापस्त्वा समरिणन्निति ॥ २० ॥

वातस्य त्वा ध्राज्या ऽइति । ( त्य ) अन्तरिक्षं वाऽअयमनुपवते योऽयं पवतेऽन्तरिक्षाय वै गृह्णाति तस्मादाह वातस्य त्वा ध्राज्या ऽइति ॥ २१ ॥

पूष्णो रꣳह्या ऽइति । ( त्ये ) एष वै पूष्णो रꣳहिरेतस्मा ऽउ हि गृह्णाति तस्मादाह पूष्णो रꣳह्या इति ॥ २२ ॥

( त्यू ) ऊष्मणो व्यथिषदिति । ( त्ये ) एष वा ऊष्मैतस्मा ऽउ हि गृह्णाति तस्मादाहोष्मणो व्यथिषदित्यथोपरिष्टाद्द्विराज्यस्याभिघारयति ॥ २३

---

अथ वसाहोमं गृह्णाति । " रेडसि "–( वा. सं. ६।१८ ) इति । लेलयेव हि यूस्तस्मादाह–रेडसीति । " अग्निष्ट्वा श्रीणातु "–( वा. सं. ६ । १८ ) इति । अग्निर्ह्येतच्छ्रपयति । तस्मादाह–अग्निष्ट्वा श्रीणात्विति । " आपस्त्वा समरिणन् "–( वा० सं० ६ । १८ ) इति । आपो ह्येतमङ्गेभ्यो रसं सम्भरन्ति । तस्मादाह–आपस्त्वा समरिणन्निति ॥ २० ॥

"वातस्य त्वा ध्राज्यै"–( वा. सं. ६।१८ ) इति । अन्तरिक्षं वाऽअयमनुपवते । योऽयं पवते । अन्तरिक्षाय वै गृह्णाति । तस्मादाह–वातस्य त्वा ध्राज्याऽइति ॥ २१ ॥

" पूष्णो रंह्या " ( वा. सं. ६।१८ ) इति । एष वै पूष्णो रंहिः । एतस्मा उ हि गृह्णाति–तस्मादाह–पूष्णो रंह्या इति ॥ २२ ॥

" ऊष्मणो व्यथिषत् " ( वा. सं. ६ । १८ ) इति । एष वाऽऊष्मा । एतस्माऽउ हि गृह्णाति तस्मादाहोष्मणो व्यतिषदिति । अथोपरिष्टाद् द्विराज्यस्याभिघारयति ॥ २३ ॥

---

तथा ' पूष्णः ' ' रंह्यै ' वेगाय गृह्णामि । वाय्वादित्ययोरन्तरिक्षाश्रयत्वाद्ध्राजिरंह्योरन्तरिक्षपरतया ब्राह्मणे व्याख्यातम् । ' ऊष्मणे व्यथिषत् ' इति वसाविशेषणम् । ऊष्मा, ततः सकाशाद् व्यथयतीति व्यथिषत्; तादृक् त्वमसि । तादृशं त्वां गृह्णामि ॥

' रेट् ' शब्दं व्याचष्टे–लेलयेव हि यूरिति । यौति मिश्रयतीति यूः वसा, सा 'लेलयेव'; चलनेन च इतस्ततो गमनमुपमीयते । श्रीणात्वित्यस्य पाकार्थ इति व्याचष्टे–अग्निर्ह्येतच्छ्रपयतीति । वातस्य ध्राजिः, पूष्णो रंहिश्चान्तरिक्षपराविति व्याचष्टे–अन्तरिक्षं वा अयमनुपवत इत्यादिना । ऊष्मशब्दोऽप्यन्तरिक्षपर इत्याह–एष वा ऊष्मैतस्मा उ हि गृह्णातीति ॥ २०–२३ ॥

( त्यु ) अथ पार्श्वेन वाऽसिना वा प्रयौति । प्रयुतं द्वेष इति तन्नाष्ट्रा एवैतद्रक्षाᳪँस्यतोऽपहन्ति ॥ २४ ॥

( न्त्यु ) अथ यद्यूपरिशिष्यते । तत्समवत्तधान्यामानयति तद्धृदयं प्रास्यति जिह्वां वक्षस्तनिम मतस्ने वनिष्ठुमथोपरिष्टाद्द्विराज्यस्याभिघारयति ॥ २५ ॥

तद्यद्धिरण्यशकलावभितो भवतः । ( तो ) घ्नन्ति वा ऽएतत्पशुं यदग्नौ जुह्वत्यमृतमायुर्हिरण्यं तदमृत ऽआयुषि प्रतितिष्ठति तथात उदेति तथा सञ्जीवति तस्माद्धिरण्यशकलावभितो भवतः ॥ २६ ॥

( तोऽथ ) अथ यदक्ष्णयावद्यति । सव्यस्य च दोष्णो दक्षिणायाश्च श्रोणेर्दक्षिणस्य च दोष्णः सव्यायाश्च श्रोणेस्तस्मादयं पशुरक्ष्णया पदो हर-

---

अथ पार्श्वेन वासिना वा प्रयौति । " प्रयुतं द्वेषः " ( वा. सं. ६ । १८ ) इति । तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहन्ति ॥ २४ ॥

अथ यद् यूपरिशिष्यते—तत् समवत्तधान्यामानयति । तद् हृदयं प्रास्यति । जिह्वां, वक्षः, तनिम, मतस्ने, वनिष्ठुम् । अथोपरिष्टाद् द्विराज्यस्याभिघारयति ॥ २५ ॥

तद् यद्धिरण्यशकलावभितो भवतः । घ्नन्ति वाऽएतत् पशुम्—यदग्नौ जुह्वति । अमृतमायुर्हिरण्यम् । तदमृतऽआयुषि प्रतितिष्ठति । तथात उदेति । तथा सञ्जीवति । तस्माद्धिरण्यशकलावभितो भवतः ॥ २६ ॥

अथ यदक्ष्णयावद्यति । सव्यस्य च दोष्णो, दक्षिणायाश्च श्रोणेः, दक्षिणस्य च दोष्णः सव्यायाश्च श्रोणेः । तस्मादयं पशुरक्ष्णया पदो हरति । अथ यत् सम्यगवद्येत्—समीचो हैवायं

---

अथ पार्श्वेनेत्यादि[1] । " प्रयुतं द्वेषः "—'इति' मन्त्रेण ' पार्श्वेन ' पार्श्वास्थिना 'असिना वा ' गृहीतां वसां विभजति । ' द्वेषः ' अनिष्टेभ्यः सकाशात् ' प्रयुतं ' पृथक् कृतं भवति ॥ २४ ॥

अथ यद् यूपरिशिष्यत इति । गृहीतावशिष्टां वसां ' समवत्तधान्याम् ' इडापात्र्याम् आनयेत्[2] । इडार्थं तत्र प्रधानावशिष्टानि हृदयादीनि प्रास्य पुनर्द्विरभिघारयति । ' मतस्ने ' वृक्कौ । तनिमादयः प्राग्व्याख्याताः ॥ २५ ॥

अत्र सूत्रकारेण " वपावद्धिरण्यम् "—( का. श्रौ. सू. ६ । १८७ ) इति हविषामुभयतो हिरण्यप्रक्षेप उक्तः, तं प्रशंसति—तद्यद्धिरण्यशकलावभितो भवत इति । एतद् वपायां व्याख्यातम् ॥ २६ ॥

प्रधानस्विष्टकृदर्थं यदवदानम्, तत् समुचित्य प्रशंसति—अथ यदक्ष्णयावद्यति सव्यस्य च दोष्ण इत्यादिना । ' सव्यस्य ' ' दोष्णः ' भुजस्य ' दक्षिणायाः श्रोणेश्च ' प्रधानावदानसमये, ' दक्षिणस्य च

---

१—प्रयुतमितिपार्श्वेन सꣳसृजत्यसिना वा । का० श्रौ० सू० ६ । १८८ ।

२—शेषमिडापात्र्यामासिच्य क्रोडमनस्थीनि च प्रास्यति श्रोणिवर्जम् । जाघनी गुदं निधाय । का. श्रौ. सू. ६ । १८९ । १९०

त्यथ यत्सम्यगवद्येत्समीचो हैवायं पशुः पदो हरेत्तस्माद्दक्षणयावद्यत्यथ यन्न शीर्ष्णोऽवद्यति नाꣳसयोर्नानूकस्य नापरसक्थयोः ॥ २७ ॥

( ३ )असुरा ह वा ऽअग्रे पशुमालेभिरे तद्देवा भीषा नोपावेयुस्तान्हेयं पृथिव्युवाच मैतदादृद्ध्वमहं व एतस्याध्यक्षा भविष्यामि यथायथैत ऽएतेन चरिष्यन्तीति ॥ २८ ॥

सा होवाच । (चा) अन्यतरामेवाहुतिमहौषुरन्यतरां पर्यशिषन्निति स यां पर्यशिꣳषंस्तानीमान्यवदानानि ततो देवाः स्विष्टकृते त्र्यङ्गाण्युपाभजं-स्तस्मात्र्यङ्गाण्यथासुरा अवाद्यञ्छीर्ष्णोꣳसयोरनूकस्यापरसक्थयोस्तस्मा-त्तेषां नावद्येद्यन्वेव त्वष्टानूकमभ्यवमत्तस्मादनूकस्यनावद्येदथाहाग्नीषो-माभ्यां छागस्य हविषोऽनुब्रूहीत्याश्राव्याहाग्नीषोमाभ्यां छागस्य हविः प्रेष्येति न प्रस्थितमित्याह प्रसुते प्रस्थितमिति ॥ २९ ॥

---

पशुः पदो हरेत् । तस्माद्दक्षणयावद्यति । अथ यन्न शीर्ष्णोऽवद्यति, नांसयोः, नानूकस्य नापर-सक्थयोः ॥ २७ ॥

असुरा ह वाऽअग्रे पशुमालेभिरे । तद् देवा भीषा नोपावेयुः । तान् हेयं पृथिव्युवाच—मैतदादृ-द्ध्वम् । अहं व एतस्याध्यक्षा भविष्यामि—यथा यथैतऽएतेन चरिष्यन्तीति ॥ २८ ॥

सा होवाच—अन्यतरामेवाहुतिमहौषुः, अन्यतरां पर्यशिषन्निति । स यां पर्यशिषन्—तानीमान्य-वदानानि । ततो देवाः स्विष्टकृते त्र्यङ्गाण्यपाभजन् । तस्मात्र्यङ्गाणि । अथासुरा अवाद्यन्—शीर्ष्णः, अंसयोः, अनूकस्य, अपरसक्थयोः । तस्मात्तेषां नावद्येत् । यन्वेव त्वष्टानूकमभ्यवमत्—

---

दोष्णः ' सव्यायाः श्रोणेरिति स्विष्टकृतीत्येवमवदानं सम्पद्यते । उक्तलक्षणमवदानं प्रसिद्धपशोर्यदक्षणया पाद-सञ्चरणं तन्मूलमिति प्रशंसति—तस्मादयं पशुरक्षणया पदो हरतीति । ' अक्षणया ' पादश्रोण्योर्व्यत्यासेन । उक्तं द्रढयति—अथ यत् सम्यगवद्येत् समीचो हैवायं पशुः पदो हरेदिति । अथ शिरआदीनामनवदेय-त्वोपपत्तिमाख्यानमुखेन प्रदर्शयति—अथ यन्न शीर्ष्णोऽवद्यति नांसयोरित्यादिना । असौ बाह्वोरुपरिप्रदेशौ । अनूको वङ्क्र्याधारः, आयतः पृष्ठास्थिविशेषः । तत्रत्यमपि मांस नावदेयम् । तथा ' न अपरसक्थयोः " ऊर्वोरुपरिभूतौ उच्छ्रितावयवौ सक्थौ ॥ २७ ॥

असुरा ह वा इति । असुराः किल पशुमालभन्ते, तदालभनं देवाः ' नोपावेयुः ' नोपगताः, तदा ' पृथिवी ' ' उवाच ' ' एतत् ' भयमासुरं ' मा दृद्ध्वम् ' आदरं मा कार्ष्ट ' अहं ' ' वः ' युष्मदर्थम् ' एतस्य ' पश्वालम्भस्य ' अध्यक्षा ' उपद्रष्टा ' भविष्यामि ', ' यथा ' येन प्रकारेण ' एते ' असुराः ' एतेन ' पशुना ' चरिष्यन्ति ' ' इति ' उक्त्वा, तथैव सम्यगवगता ॥ २८ ॥

सा होवाचेति । तत्सकाशं सम्यगवगत्योवाच । तेऽसुराः ' अन्यत्तरामेवाहुतिमहौषुः ' प्रधानमेव हुतवन्तः, ' अन्यतरां ' स्विष्टकृतमाहुतिं ' पर्यशिषन् ' परित्यक्तवन्तः । परिशिष्टा का ? इति, तां स्वयं श्रुतिः प्रदर्शयति—

( त्यु ) अन्तरेणार्द्धर्चौ याज्यायै व्वसाहोमं जुहोति । ( ती ) इतो वा ऽअयमूर्द्धो मेध उत्थितो यमस्या इमᳬं रसं प्रजा उपजीवन्त्यर्वाचीनं दिवो रसो वै व्वसाहोमो रसो मेधो रसेनैवैतद्रसं तीव्रीकरोति तस्मादयᳬं रसोऽद्यमानो न क्षीयते ॥ ३० ॥

तद्यदन्तरेण । ( णा ) अर्द्धर्चौ याज्यायै व्वसाहोमं जुहोतीयं वा ऽअर्द्धर्चोऽसौ द्यौरर्द्धर्चोऽन्तरा वै द्यावापृथिवी ऽअन्तरिक्षमन्तरिक्षाय वै जुहोति तस्मादन्तरेणार्द्धर्चौ याज्यायै व्वसाहोमं जुहोति ॥ ३१ ॥

---

तस्मादनूकस्य नावद्येत् । अथाह–' अग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहि ' इति । आश्राव्याह–अग्नीषोमाभ्यां छागस्य हविः प्रेष्येति । न प्रस्थितमित्याह । प्रसुते प्रास्थितमिति ॥ २९ ॥

अन्तरेणार्द्धर्चौ याज्यायै वसाहोमं जुहोति । इतो वाऽअयमूर्ध्वो मेध उत्थितः; यमस्या इमं रसं प्रजा उपजीवन्ति, अर्वाचीनं दिवः । रसो वै वसाहोमः । रसो मेधः । रसेनैवैतद्रसं तीव्रीकरोति । तस्मादयं रसोऽद्यमानो न क्षीयते ॥ ३० ॥

तद् यदन्तरेणार्द्धर्चौ याज्यायै वसाहोमं जुहोति । इयं वाऽअर्द्धर्चः, असौ द्यौरर्द्धर्चः । अन्तरा वै द्यावापृथिवीऽअन्तरिक्षम् । अन्तरिक्षाय वै जुहोति । तस्मादन्तरेणार्द्धर्चौ याज्यायै वसाहोमं जुहोति ॥ ३१

---

तानीमानीति । 'दक्षिणं दोः' सव्या श्रोणिः, गुदं तृतीयं चेति त्रीणि । 'ततः' तस्मादसुरपरित्यक्तत्वेनादुष्टत्वात् ' त्र्यङ्गाणि ' ' देवाः 'प्राप्ताः । अथ यस्मात् शिर आदीनि ' अवाधन् ', ' तस्मात् ' तैरवत्तत्वेन दुष्टत्वात् तानि 'नावद्येत' । अनूकस्य प्रकारान्तरेणापि तत्त्वं दर्शयति–त्वष्टेति । एतच्छिरसोऽप्युपलक्षणं गतम्, समानत्वात् ॥

इत्थमवदानप्रकारमुक्त्वा प्रदानप्रकारमाह–अथाहाग्नीषोमाभ्यां छागस्येत्यादि । वपाप्रैषवदग्नीषोमीयहोमप्रैषेऽपि प्रस्थितपदं निषेधति–न प्रस्थितमित्याहेति ॥ २९ ॥

वसाहोमस्य कालमाह–अन्तरेणार्द्धर्चाविति[2] । प्रधानाहुतियाज्यायाः पूर्वार्द्धावसाने प्रतिप्रस्थाता ' वसाहोमं जुहोति ' अर्द्धर्चयोरूर्ध्वमावित्वं प्रशंसति–इतो वा अयमूर्ध्व इत्यादिना । पूर्वोत्तरार्द्धर्चौ द्युपृथिव्यात्मकौ; तथा सति ' इतः ' पृथिव्याः सकाशात् उत्पन्नो ' मेधः ', ' यं ' साराङ्गवसेत्यादिरूपमूर्ध्वमुद्गतं मनुष्याः उपभुञ्जते, तथा ' दिवः ' सकाशात् उत्थितमुदकात्मकमधो निर्गतमुपभुञ्जते । एवं स लोकद्वयसारस्यान्तरिक्षे उपभोक्तव्यत्वेनावस्थानादर्द्धर्चयोरन्तरालहोमेन द्यावापृथिव्योः ' रसेन ' ' एतत् ' वसाख्यं ' रसं ' ' तीव्रीकरोति ' । होमस्यान्तरिक्षार्थत्वाच्चार्द्धर्चयोरन्तरालं कृतवान् भवति । अतस्तीव्ररसोत्पादकत्वात् होमः कर्त्तव्य इत्यर्थः ॥ ३० ॥ ३१ ॥

---

१–आहेंद्राग्निभ्यां छागस्य हविषोऽनुब्रूहीति । का. श्रौ. सू. ६ । ११० । आश्राव्याहेंद्राग्निभ्यां छागस्यं हविः प्रेष्येति । प्रस्थितमिति च प्रसुते । का. श्रौ. सू. ६ । १११ । ११२ । २–अर्धर्चान्तरे याज्यायै वसैकदेशं जुहोति घृतं घृतपावानः इति । का. श्रौ. सू. ६ । ११३ ।

स जुहोति । घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहेत्येतेन वैश्वदेवेन यजुषा जुहोति वैश्वदेवं वा ऽअन्तरिक्षं तद्यदेनेनेमाः प्रजाः प्राणत्यश्चोदनत्यश्चान्तरिक्षमनुचरन्ति तेन वैश्वदेवं वषट्कृते जुहोति यानि जुह्वामवदानानि भवन्ति ॥ ३२ ॥

( न्त्यु ) अथ जुह्वा पृषदाज्यस्योपघ्नन्नाह । वनस्पतये ऽनु ब्रूहीत्याश्राव्याह वनस्पतये प्रेष्येति वषट्कृते जुहोति तद्यद्वनस्पतये जुहोत्येतमेवैतद्वज्रं यूपं भागिनं करोति सोमो वै वनस्पतिः पशुमेवैतत्सोमं करोति तद्यदन्तरेणोभे ऽआहुती जुहोति तथोभयं व्याप्नोति तस्मादन्तरेणोभे ऽआहुती जुहोति ॥ ३३ ॥

---

स जुहोति—" घृतं घृतपावानः पिबत, वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा " ( वा. सं. ६ । १९ )—इति । एतेन वैश्वदेवेन यजुषा जुहोति । वैश्वदेवं वाऽअन्तरिक्षम् । तद् यदेनेनेमाः प्रजाः प्राणत्यश्चोदनत्यश्चान्तरिक्षमनुचरन्ति—तेन वैश्वदेवम् । वषट्कृते जुहोति—यानि जुह्वामवदानानि भवन्ति ॥ ३२ ॥

अथ जुह्वा पृषदाज्यस्योपघ्नन्नाह—'वनस्पतयेऽनुब्रूहि' इति—आश्राव्याह—' वनस्पतये प्रेष्य ' इति । वषट्कृते जुहोति । तद् यद्वनस्पतये जुहोति । एतमेवैतद्वज्रं यूपं भागिनं करोति । सोमो वै वनस्पतिः । पशुमेवैतत्सोमं करोति । तद् यदन्तरेणोभेऽआहुती जुहोति—तथोभयं व्याप्नोति । तस्मादन्तरेणोभेऽआहुती जुहोति ॥ ३३ ॥

---

वसाहोममन्त्रमाह—स जुहोति घृतं घृतपावान इति । ' घृतं ' क्षरणरूपं रसात्मकमिदं हविः हे ' घृतपावानः ' घृतस्य रसद्रव्यस्य पातारः सर्वे देवाः यूयं ' पिबत ' । एतदेव विशिनष्टि—वसां वसापावान इति । हे वसाद्रव्य ! त्वम् ' अन्तरिक्षस्य हविरसि ' । अन्तरिक्षस्य सर्वदेवाश्रयत्वादस्यापि तदर्थत्वाद् अन्तरिक्षस्य देवताद्वारा अन्तरिक्षस्यैव हविष्ट्वम् । अत्र सूत्रम् । " अर्द्धर्चान्तरे याज्यायै वसैकदेशं जुहोति "—( का. श्रौ. सू. ६ । १९३ ) इति ।

मन्त्रस्य वैश्वदेवत्वं प्रकृतहोमसङ्गतमित्याह—एतेन वैश्वदेवेनेति । अत्र बहुत्वलिङ्गाद् वैश्वदेवत्वं यजुषः 'अन्तरिक्षम् ' अपि सर्वासां देवानां प्राणोदानव्यापारयोराश्रयत्वेन ' वैश्वदेवम् ', अन्तरिक्षार्थश्च वसाहोमः; ' तेन ' होमस्य वैश्वदेवत्वेन एतदपि वैश्वदेवं यजुरत्र युज्यत इत्यर्थः । मध्ये होतव्यं वसाहोममभिधाय प्रधानहोममाह—वषट्कृते जुहोति यानि जुह्वामित्यादि ॥ ३२ ॥

अथ जुह्वेति[1] । ' अथ ' वसाहोमानन्तरं ' जुह्वा ' जुहूद्वारा ' पृषदाज्यस्य ' एकदेशम् ' उपघ्नन् ' अवद्यन् " वनस्पतयेऽनुब्रूहि "—' इति ' होतारं ब्रूयात् । वनस्पतिर्यूपाभिमानी देवः । स्पष्टमन्यत् ॥

---

१—दैवतं हुत्वाप्रदक्षिणमावृत्त्यजुह्वापृषदाज्यस्योपघ्नन्नाह वनस्पतयेऽनुब्रूहीति । का. श्रौ. सू. ६।१९४ । २—आश्राव्याह वनस्पतये प्रेष्येति । का. श्रौ. सू. ६ । १९५ ।

(त्यु) अथ यान्युपभृत्यवदानानि भवन्ति। तानि समानयमानु ऽआहाग्नये स्विष्टकृतेऽनुब्रूहीत्याश्राव्याहाग्नये स्विष्टकृते प्रेष्येति व्वषट्कृते जुहोति॥३४

( त्यु ) अथ यद्वसाहोमस्य परिशिष्यते । तेन दिशो व्याघारयति दिशः प्रदिश आदिशो व्विदिश उद्दिशो दिग्भ्यः स्वाहेति रसो वै व्वसाहोमः सुर्व्वा स्वेवैतद्दिक्षु रसं दधाति तस्मादयं दिशि दिशि रसोऽभिगम्यते ॥ ३५ ॥

( तेऽथ ) अथ पशुᳬं सम्मृशति । ( त्ये ) एतर्हि सम्मर्शनस्य कालोऽथ यत्पुरा संमृशति यऽइम ऽउपतिष्ठन्ते ते व्विमथिष्यन्त ऽइति शङ्कमानो यद्यु विमाथान्न शङ्केत्तत्रैव संमृशेत् ॥ ३६ ॥

---

अथ यान्युपभृत्यवदानानि भवन्ति–तानि समानयमानआह–' अग्नये स्विष्टकृतेऽनुब्रूहि '–इति । आश्राव्याह–' अग्नये स्विष्टकृते प्रेष्यै ' इति । वषट्कृते जुहोति ॥ ३४॥

अथ यद्वसाहोमस्य परिशिष्यते–तेन दिशो व्याघारयति । " दिशः प्रदिशऽआदिशो विदिशऽ उद्दिशो दिग्भ्यः स्वाहा "–( वा. सं. ६ । १९ ) इति । रसो वै वसाहोमः । सर्वास्वेवैतद्दिक्षु रसं दधाति । तस्मादयं दिशि दिशि रसोऽभिगम्यते ॥ ३६ ॥

अथ पशुं सम्मृशति । एतर्हि सम्मर्शनस्य कालः । अथ यत् पुरा सम्मृशति–यऽइमऽउपतिष्ठन्ते–ते विमथिष्यन्ते–इति शङ्कमानः । यद्यु विमाथात्–नशङ्केत; अत्रैव सम्मृशेत् ॥ ३६ ॥

---

वनस्पतियागं यूपद्वारा पशोः सोमत्वसम्पादकत्वेन च प्रशंसति–तद्वनस्पतय इत्यादिना । सोमस्यामावस्यायां वनस्पतिषु वासात् सोमस्वामिकत्वात् वनस्पतिः सोमः, अतस्तत्सम्बन्धिनं पशुं सोमं कृतवान् भवति । ' तत् ' तस्मात् ' यत् ' यथा ' अन्तरेण उमे आहुती ' उभयोर्दैवतसौविष्टकृतयोर्मध्ये वनस्पत्याहुतिं ' जुहोति ', ' तथा ' ' उभयं ' दैवतं सौविष्टकृतं च यूपाहुत्या व्याप्नोति ' ॥ ३३ ॥

स्विष्टकृत्प्रयोगप्रकारमाह–अथ यान्युपभृत्यवदानानि भवन्ति । तानि समानयमान आहेत्यादिना । त्र्यङ्गापेक्षया बहुवचनम् । ' समानयमानः ' जुह्वां प्रक्षिपन् ॥ ३४ ॥

वसाहोमशेषेण दिग्व्याघारणं विधत्ते–अथ यद्वसाहोमस्य परिशिष्यते तेन दिशो व्याघारयतीति । वसाहोमस्य द्रव्यस्य ' दिशः प्रदिशः '–इत्यादिका मन्त्राः । दिशो व्याघारयतीति श्रुतेरेकैको मन्त्र एकैकदिगर्थः । ' दिशः ' प्राग्दिग्भ्यः स्वाहा; ' प्रदिशः ' दक्षिणदिग्भ्यः स्वाहा, ' आदिशः ' पश्चिमदिग्भ्यः स्वाहा, ' विदिशः ' उत्तरदिग्भ्यः स्वाहा, ' उद्दिशः ' ऊर्ध्वदिग्भ्यः स्वाहा, ' दिग्भ्यः ' सर्वाभ्यो दिग्भ्यः ' स्वाहा ' । वसाहोमो ' रसो वै ' द्रवद्रव्यात्मकः खलु; दिशि दिशि सम्भूतो रसोऽभिगम्यते ॥ ३५ ॥

सम्यग्गतावयवस्य पशोः सम्मर्शनं विधत्ते–अथ पशुं सम्मृशतीति । ' अथ ' दिग्घोमानन्तरम् ' एतर्हि ' एतस्मिन् काले पशुसम्मर्शनं कुर्यात् ॥

---

१–हुत्वासमानीय सौविष्टकृतम् । का. श्रौ. सू. ६ । १९६ । २–प्रत्येत्य वा दिशोव्याघारयति व्वसाशेषेणव्वाजिनवत् । सर्वं जुहोति । का. श्रौ, सू. ६ । १९७ । १९८ । वाजिनवद्भक्षार्थं नावशेषयतीत्यर्थः ।

(दै) ऐन्द्रः प्राणः। (णो॒ऽ) अङ्गेऽअङ्गे निदीध्यदैन्द्र उदानो ऽअङ्गे ऽअङ्गे निधीत ऽइति यदङ्गशो विकृत्तो भवति तत्प्राणोदानाभ्याᳫं सन्दधाति देव त्वष्टर्भूरि ते सᳫं स मेतु सलक्ष्मा यद्विषुरूपं भवातीति कृत्स्नवृतमेवै-तत्करोति देवत्रा यन्तमवसे सखायोऽनु त्वा मातापितरो मदन्त्विति तद्य-त्रैनमहौषीत्तदेनं कृत्स्नं कृत्वानुसमस्यति सोऽस्य कृत्स्नोऽमुष्मिँल्लोक ऽआत्मा भवति ॥ ३७ ॥

इति षष्ठप्रपाठके चतुर्थं ब्राह्मणम् ६ ॥ ४ ॥ (८-३)

---

"ऐन्द्रः प्राणोऽअङ्गेऽअङ्गे निदीध्यद्। एन्द्र उदानोऽअङ्गेऽअङ्गे निधीतः"–(वा० सं० ६। २०) इति। यदङ्गशो विकृत्तो भवति–तत् प्राणोदानाभ्यां सन्दधाति। "देवत्वष्टर्भूरि ते संसमेतु सलक्ष्मा यद्विषुरूपं भवाति"–(वा. सं. ६। २०) इति। कृत्स्नवृतमेवैतत्करोति। "देवत्रा यन्तमवसे सखायोऽनु त्वा मातापितरो मदन्तु"–(वा. सं. ६। २०) इति। तद् यत्रैनमहौषीत्–तदेनं कृत्स्नं कृत्वानुसमस्यति। सोऽस्य कृत्स्नोऽमुष्मिँल्लोकऽआत्मा भवति॥ ३७॥

---

विशसनानन्तरकालस्यैतस्य व्यवस्थां दर्शयति–अथ यत् पुरा सम्मृशतीति। 'ये' च राक्षसाः 'इमे' मदीयं यज्ञम् 'उपतिष्ठन्ते' प्राप्नुवन्ति, 'ते' पशुं 'विमथिष्यन्ते' 'इति' 'शङ्कमानः' चेत्, पूर्वस्मि-न्नेव काले सम्मृशेत्; अतथाभूतश्चेत् अत्रैव दिग्घोमानन्तरकाले सम्मृशेत्। अत्र सूत्रम्–"ऐन्द्रः प्राण इति पशुं सम्मृशति' अवदाय वेडां प्राक् प्रदानात्"–(का. श्रौ. सू. ६। १९९–२००) इति ॥ ३६ ॥

सम्मर्शने मन्त्रमाह–ऐन्द्रः प्राणोऽङ्गेऽङ्गे निदीध्यदिति। इन्द्रः परमात्मा, तत्सम्बन्धी 'ऐन्द्रः' 'प्राणः' हे पशो! ते 'अङ्गे अङ्गे' सर्वेष्वङ्गेषु 'निदीध्यत्' नितरां दीप्तो भवतु, दीव्यतु वा। एवं व्यानो-ऽपि। अत्र सर्वत्र अपानस्थाने उदानव्यवहारः। हे 'त्वष्टः' पशुरूपकर्त्तः! 'देव'। "त्वष्टा वै पशूनां मिथुनानां रूपकृत्"–(तै. सं. ६। ३। ३। ११। १।) इति श्रुतेः। 'ते' तव पशोः, 'यत्' अङ्गं छेदनेन 'सलक्ष्म' अत एव 'विषुरूपं' 'भवाति' भवति, तत् 'ते' त्वत्सम्बन्धि 'सम्' सम्यक्, पूर्वस्मादपि 'भूरि' प्रभूतं 'समेतु' सङ्गतो भवतु। पूर्वं यादृशसंवेशेनाविशिष्टं तादृशसंवेशेन विशिष्टं भवेदिति; प्रवृद्धं भवत्वित्यर्थः। किञ्च 'देवत्रा' देवेषु मध्ये 'यन्तं' गच्छन्तम्। किमर्थम्? 'अवसे' अस्माकं रक्षणाय, देवानां प्रीतये वा यन्तं त्वां सखिप्रभृतयः 'अनुमदन्तु' साधु जातमिति कथयन्त्वित्यर्थः॥

क्रमेण विभज्य व्याचष्टे–यदङ्गशो विकृत्त इत्यादिना। "कृत्स्नवृतमेवैतत्करोतीति। 'एतत्' पशु-द्रव्यम्। यद्वा 'एतत्' एतेन "देव त्वष्टः"–इति मन्त्रेण वागुच्चारणसामर्थ्येन कृत्स्नैरङ्गैः वृतं व्याप्तं करोति, 'यत्र' यस्मिन् प्रदेशे 'एनं' पशुम् 'अहौषीत्, तत् तेन 'एनं कृत्स्नं कृत्वा' विकलं सकलं कृत्वा 'अनु समस्यति' गतप्राणेन त्वगस्थिमांसेन सह प्राणान् अङ्गानि चानुक्रमेण सङ्घट्टनं कृतवान् भवति। तेन 'सः' पशुः 'अमुष्मिन्' स्वर्गे लोके 'सात्मा' सजीवो 'भवति' ॥ ३७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे ऽष्टमाध्याये तृतीयं ब्राह्मणम् ॥ (३–८–३) ॥

त्रीणि ह वै पशोरेकादशानि । ( न्ये ) एकादश प्रयाजा एकादशानुयाजा ऽएकादशोपयजो दश पाण्या ऽअङ्गुलयो दश पाद्या दश प्राणाः प्राण ऽउदानो व्यान ऽइत्येतावान्वै पुरुषो यः पराद्धर्यः पशूनां स॒र्वं॒ सर्व्वेऽनु पशवः ॥ १ ॥

( स्तु ) तदाहुः । किं तद्यज्ञे क्रियते येन प्राणः सर्व्वेभ्योऽङ्गेभ्यः शिव इति ॥ २ ॥

यदेव गुदं त्रेधा करोति । प्राणो वै गुदः सोऽयं प्राङ्ततस्तमयं प्राणोऽनुसञ्चरति ॥ ३ ॥

स यदेव गुदं त्रेधा करोति । तृतीयमुपयड्भ्यस्तृतीयं जुह्वां तृतीयमुपभृति तेन प्राणः सर्व्वेभ्योऽङ्गेभ्यः शिवः ॥ ४ ॥

---

त्रीणि ह वै पशोरेकादशानि—एकादश प्रयाजाः, एकादशानुयाजाः, एकादशोपयजः । दश पाण्या अंगुलयः, दश पाद्याः, दश प्राणाः, प्राण उदानो व्यानः—इत्येतावान्वै पुरुषो—यः पराद्धर्यः पशूनाम्—सर्वेऽनु पशवः ॥ १ ॥

तदाहुः—किं तद् यज्ञे क्रियते—येन प्राणः सर्वेभ्योऽङ्गेभ्यः शिव इति ॥ २ ॥

यदेव गुदं त्रेधा करोति । प्राणो वै गुदः । सोऽयं प्राङ्ततः । तमयं प्राणोऽनु सञ्चरति ॥ ३ ॥

स यदेव गुदं त्रेधा करोति । तृतीयमुपयड्भ्यः, तृतीयं जुह्वाम्, तृतीयमुपभृति । तेन प्राणः सर्वेभ्योऽङ्गेभ्यः शिवः ॥ ४ ॥

---

प्राणस्य श्रेष्ठत्वकरणाभिधानमुखेन गुदस्य प्रधानस्विष्टकृदुपयडिष्टयर्थं त्रेधा विभज्य विनियोगं प्रशंसन् प्रयाजादीनामितराङ्गत्वमाह—त्रीणि ह वै पशोरेकादशानीत्यादिना । प्रयाजा अनुयाजाश्च एकादशैकादश प्रसिद्धाः, अनुयाजानन्तरं यष्टव्या एकादशोपयाजा उपरिष्टादाम्नास्यन्ते; एकादशत्रयं मिलित्वा त्रयस्त्रिंशत् सम्पद्यन्ते । पशुभूतस्य पुरुषस्य द्विपात्पशोरपि शीर्षण्याः प्राणाः सप्त, अवाञ्चौ द्वौ, नाभिर्दशमीति 'दश प्राणाः' । ते च पाणिपादगतविंशत्यंगुलिभिः सहिताः त्रिंशद् भवन्ति; प्राण उदानो व्यान इति त्रयो मुख्यप्राणाः; इति- त्रयस्त्रिंशदेव सन्ति यज्ञाङ्गानि ॥ १ ॥

तदाहुरिति । 'शिवः' श्रेष्ठः । पुरुषपशोर्हस्तपादांगुलयः प्राणरूपाङ्गानि भवन्ति; तथाच मुख्यप्राणस्यापि इतरांगुलिवत् साधारण्यमेव प्राप्तम्, न श्रेष्ठत्वम्; अतो यज्ञे सर्वेभ्योऽङ्गेभ्यः सकाशात् प्राणस्य श्रेष्ठत्वं केन प्रकारेण कृतमिति प्रश्नः ॥ २ ॥

तस्योत्तरमुच्यते—यदेव गुदं त्रेधा करोतीत्यादिना । तेन प्राणः सर्वेभ्योऽङ्गेभ्यः शिवः—इत्यन्तेन प्राणो वै गुदः । तस्मात् प्राणसञ्चरणाधिष्ठानत्वात् 'प्राणः' एव गुद इत्युक्तम् ॥ कथं गुदस्य प्राणत्वमिति तदुपपादयति । सोऽयं प्राङ्तत इति । गुदः प्राङ्ततः शरीरमध्ये ब्रह्मरन्ध्रपर्यन्तं ऊर्ध्वं प्रवृत्तः सन्वर्तते तं गुदमन्वयं प्राणः संचरति । अतः प्राणसंचारणाधिष्ठानत्वात्प्राण एव गुदः । तस्य प्रधानस्विष्टकृदुपयड्भेदेन त्रिषु स्थानेषु विभज्य विनियोग एव सर्वेभ्योऽङ्गेभ्यः श्रेष्ठत्वकारणमित्यर्थः ॥ ३ ॥ ४ ॥

स ह त्वेव पशुमालभेतय एनं मेधमुपनयेद्यदि कृशः स्याद्यदुदर्य्यस्य मेदसः परिशिष्येत तद्गुदे न्यृषेत्प्राणो वै गुदः सोऽयं प्राङ्गाततस्तमयं प्राणोऽनुसञ्चरति प्राणो वै पशुर्यावद्ध्येव प्राणेन प्राणिति तावत्पशुरथ यदास्मात्प्राणोऽपक्रामति दार्व्वेव तर्हि भूतोऽनर्थ्यः शेते ॥ ५ ॥

गुदो वै पशुः । (मे) मेदो वै मेधस्तदेनं मेधमुपनयति यद्यु ऽअंसलो भवति स्वयमुपेत एव तर्हि मेधं भवति ॥ ६ ॥

( त्य ) अथ पृषदाज्यं गृह्णाति । द्वयं वा ऽइदꣳ सर्पिश्चैव दधि च द्वन्द्वं वै मिथुनं प्रजननं मिथुनमेवैतत्प्रजननं क्रियते ॥ ७ ॥

---

स ह त्वेव पशुमालभेत—य एनं मेधमुपनयेत् । यदि कृशः स्यात् यद् उदर्यस्य मेदसः परिशिष्येत तद् गुदे न्यृषेत् । प्राणो वै गुदः । सोऽयं प्राङ्गाततः । तमयं प्राणोऽनु सञ्चरति । प्राणो वै पशुः यावद्ध्येव प्राणेन प्राणिति—तावत्पशुः । अथ यदाऽस्मात् प्राणोऽपक्रामति—दार्वेव तर्हि भूतोऽनर्थ्यः शेते ॥ ५ ॥

गुदो वै पशुः । मेदो वै मेधः । तदेनं मेधमुपनयति । यद्युऽअंसलो भवति—स्वयमुपेत एव-तर्हि मेधं भवति ॥ ६ ॥

अथ पृषदाज्यं गृह्णाति । द्वयं वाऽइदम्—सर्पिश्चैव दधि च । द्वन्द्वं वै मिथुनं प्रजननम् । मिथुनमेवैतत् प्रजननं क्रियते ॥ ७ ॥

---

अथ गुदस्य प्राणत्वेन श्रेष्ठत्वाभिधानप्रसङ्गात् यदि कथञ्चित् तत्पशोः कृशत्वं स्यात्, तर्हि गुदस्य सम्पूर्णत्वाय उदर्यं मांसं तेन सह मिश्रणीयमित्याह—**स ह त्वेव पशुमालभे**तेत्यादिना । 'सः' एव 'पशुमालभेत' 'यः' यजमानः 'एतं' 'मेधं' मेधार्हम् प्रवृद्धमित्यर्थः । पशुम् 'उपनयेत्' उपगच्छेत्, प्राप्नुयात् सर्वावयवपूर्णमेव पशुमालभेत न कृशं पशुम्; अयमेव मुख्यः पक्षः । 'यदि' पशुः 'कृशो लब्धः स्यात्' तदा अकरणात् करणस्य श्रैष्ठ्यात् वक्ष्यमाणप्रकारं कुर्यात् । 'उदर्यस्य' उदरे भवमुदर्यम्, तस्य 'मेदसः' सकाशादिडार्थमुद्धृत्य यन्मांसं 'परिशिष्येत्', 'तत्' आदाय अल्पीयसि 'गुदे' 'न्यृषेत्' निगमयेत्, तेन तं प्रवर्द्धयेदित्यर्थः । **प्राणो वै गुद** इत्यादि, व्याख्यातम् ॥ ५ ॥

**गुदो वै पशुरि**ति । 'यद्यु' यद्यपि पशुः 'अंसलः' प्रवृद्धांसः, पुष्टांगो(न) भवेत्, 'तर्हि' 'स्वयम्' एव 'मेधं' प्राप्तवान् भवति ॥ ६ ॥

अनुयाजार्थं पृषदाज्यग्रहणं विधाय प्रशंसति—**अथ पृषदाज्यं गृह्णाती**त्यादिना । 'इदं' वक्ष्यमाणं द्वयं खलु 'द्वन्द्वम्' । इदंशब्दार्थमाह—**सर्पिश्चैव दधि चे**ति । अस्तु द्वयम्, ततः किमित्यत आह—**द्वन्द्वं वै मिथुन**मिति । तच्च 'प्रजननम्' अन्यस्योत्पादकम् । अतः पृषदाज्यग्रहणेन प्रजननमिथुनमेव कृतवान् भवति ॥ ७ ॥

---

१—ध्रुवायाः पुरस्तात् पृषदाज्यमाज्यं दधिमिश्रं पंचगृहीतं ज्योतिरसीति समिदंतेन । अनुयाजार्थं २सर्व्वत्र । का. श्रौ. सू. ५।१०३।१०४।

तेनानुयाजेषु चरति । पशवो वा ऽअनुयाजाः पयः पृषदाज्यं तत्पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो हितं प्राणो हि पृषदाज्यमन्नꣳ हि पृषदाज्यमन्नꣳ हि प्राणः ॥ ८ ॥

( स्ते ) तेन पुरस्तादनुयाजेषु चरति । स योऽयं पुरस्तात्प्राणस्तमेवैतद्दधाति तेन पश्चादुपयजति स योऽयं पश्चात्प्राणस्तमेवैतद्दधाति ताविमा ऽउभयतः प्राणौ हितौ यश्चायमुपरिष्टाद्यश्चाधस्तात् ॥ ९ ॥

( त्त ) तद्वा ऽएतदेको द्वाभ्यां वषट्करोति । ( त्य ) अध्वर्यवे च यश्चैष उपयजत्यथ यद्यजन्तमुपयजति तस्मादुपयजो नामाथ यदुपयजति प्रैवैतज्जनयति पश्चाद्ध्युपयजति पश्चाद्धि योषायै प्रजाः प्रजायन्ते ॥ १० ॥

---

तेनानुयाजेषु चरति । पशवो वाऽअनुयाजाः, पयः पृषदाज्यम् । तत् पशुष्वेवैतत्पयो दधाति । तदिदं पशुषु पयो हितम् । प्राणो हि पृषदाज्यम् । अन्नं हि पृषदाज्यम् । अन्नं हि प्राणः ॥ ८ ॥

तेन पुरस्तादनुयाजेषु चरति । स योऽयं पुरस्तात्प्राणः—तमेवैतद्दधाति । तेन पश्चादुपयजति । स योऽयं पश्चात्प्राणः—तमेवैतद्दधाति । ताविमाऽउभयतः प्राणौ हितौ—यश्चायमुपरिष्टाद्यश्चाधस्तात् ॥ ९ ॥

तद्वाऽएतदेको द्वाभ्यां वषट्करोति—अध्वर्यवे च, यश्चैष उपयजति । अथ यद्यजन्तमुपयजति—तस्मादुपयजो नाम । अथ यदुपयजति—प्रैवैतज्जनयति । पश्चाद्ध्युपयजति । पश्चाद्धि योषायै प्रजाः प्रजायन्ते ॥ १० ॥

---

तेनानुयाजेष्विति । 'तेन' पृषदाज्येन 'अनुयाजेषु चरति' अनुयाजान् यजेदित्यर्थः । तदुभयं प्रशंसति—पशवो वा अनुयाजा इति । अनुयाजानां फलोपभोगहेतुकत्वात् पशुत्वम्, पयोविकारत्वात् 'पृषदाज्यम्' एव 'पयः'; 'तत्' तेनानुयाजानुष्ठानेन 'पशुषु' 'एव' पयःस्थापनम् 'भवति' ।

विहिताननुयाजान् विधास्यमानैरुपयड्भिः सह पुरस्तादुपरिष्टाच्च विधास्यन् प्राणात्मना प्रशंसति—प्राणो हि पृषदाज्यमिति । 'हि' शब्दद्योत्यां प्रसिद्धिमुपपादयति—'पृषदाज्यं तावत् 'अन्नम्' तत् 'अन्नं' अन्वयव्यतिरेकानुविधायित्वात् 'प्राणः'; अतः 'पृषदाज्यं प्राणः' ॥ ८ ॥

तेन पुरस्तादिति । उपयड्भ्यः 'पुरस्तात् अनुयाजेषु' पृषदाज्यानुष्ठानेन पुरस्तात्—प्राणं मुखस्थप्राणं अप्राणे पशौ निहितवान् भवति; 'पश्चात्' उपयडनुष्ठानस्य पश्चात्—'प्राणम्' उदानाख्यं पशौ स्थापितवान् भवति । मिलित्वा 'यः' 'अयम्' प्राणिषु 'उपरिष्टाच्चाधस्ताच्च' प्राणः, तत् प्राणद्वयं स्थापितवान् भवति ॥ ९ ॥

तद्वा एतदित्यादि । 'एकः' होता, 'द्वाभ्याम्' 'अध्वर्यवे' 'उपयष्ट्रे' प्रतिप्रस्थात्रे 'च,' प्रयाजार्थम् उपयड्यागार्थं च 'वषट्' कुर्यात् ॥

उपयजं नामनिर्वचनेन प्रशंसति—अथ यद् यजन्तम् उपयजति, तस्मादुपयजो नामेति । 'यजन्तम्' अध्वर्युम् 'उप' लक्ष्य एतान्यङ्गानि प्रतिप्रस्थाता 'यजति' इति पश्चाचष्टव्या उपयज "विज्रुपे छन्दसि" (पा. सू. ३ । २ । ७३) इत्यर्थः ॥

स उपयजति । समुद्रं गच्छ स्वाहेत्यापो वै समुद्रऽआपो रेतो रेत एवैतत्सिञ्चति ॥ ११ ॥

( त्य ) अन्तरिक्षं गच्छ स्वाहेति । ( त्य ) अन्तरिक्षं वा ऽअनु प्रजाः प्रजायन्तेऽन्तरिक्षमेवैतदनु प्रजनयति ॥ १२ ॥

देवꣳसवितारं गच्छ स्वाहेति । सविता वै देवानां प्रसविता सवितृप्रसूत एवैतत्प्रजनयति ॥ १३ ॥

मित्रावरुणौ गच्छ स्वाहेति । प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवैतत्प्रजासु दधाति ॥ १४ ॥

( त्य ) अहोरात्रे गच्छ स्वाहेति । ( त्य ) अहोरात्रे वाऽअनु प्रजाः प्रजायन्तेऽहोरात्रेऽएवैतदनुप्रजनयति ॥ १५ ॥

---

स उपयजति–" समुद्रं गच्छ स्वाहा "–( वा. सं. ६ । २१ ) इति । आपो वै समुद्रः । आपो रेतः । रेत एवैतत्सिञ्चति ॥ ११ ॥

" अन्तरिक्षं गच्छ स्वाहा "–(वा. सं. ६ । २१ ) इति । अन्तरिक्षं वाऽअनु प्रजाः प्रजायन्ते । अन्तरिक्षमेवैतदनु प्रजनयति ॥ १२ ॥

" देवं सवितारं गच्छ स्वाहा "–( वा. सं. ६ । २१ ) इति । सविता वै देवानां प्रसविता । सवितृप्रसूत एवैतत् प्रजनयति ॥ १३ ॥

" मित्रावरुणौ गच्छ स्वाहा "–( वा. सं. ६ । २१ ) इति । प्राणोदानौ वै मित्रावरुणौ प्राणोदानावेवैतत् प्रजासु दधाति ॥ १४ ॥

" अहोरात्रे गच्छ स्वाहा "–( वा सं. ६ । २१ ) इति । अहोरात्रे वाऽअनु प्रजाः प्रजायन्ते । अहोरात्रेऽएवैतदनुप्रजनयति ॥ १५ ॥

---

अथ यदुपयजति प्रैवैतज्जनयतीति । पृषदाज्यरूपैरनुयाजैः प्रजननस्य कृतत्वादुपयड्भिर्जनयति । कथमेतेन प्रजनयति ? उच्यते–पश्चाद्ध्युपयजतीति । योषायाः पश्चाद्भागेन प्रजा उत्पद्यन्ते ॥ १० ॥

स उपयजतीति । " समुद्रं गच्छ–" इत्यादय उपयड्यागमन्त्राः । हे गुदावयवरूप हविः ! त्वं ' समुद्रं ' समुद्राभिमानिनं देवं ' गच्छ ' ' स्वाहा ' इदं द्रव्यं सुहुतमस्तु । एवमुत्तरत्रापि द्रष्टव्यम् । एषु मन्त्रेषु मध्ये यत्र देवता स्पष्टं न प्रतिभाति, तत्र तदभिमानिदेवता द्रष्टव्या ॥ उपयाजानां प्रजननरूपत्वस्योक्तत्वात् तदनुकूलप्रयत्नपरतया मन्त्रान् व्याचष्टे–आपो वै समुद्र आपो रेत इति । पदार्थस्तु स्पष्ट एव ॥

अत्र कात्यायनः–" शामित्रादङ्गारानाहृत्य वेदिश्रोण्यां निवपत्युत्तरस्याम्, आग्नीध्रीयाद्वा–सोमे होतृधिष्ण्ये, प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छेदमनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रम् प्रतिवषट्कारम्–" ( का. श्रौ. सू. ६ । २०६–२०८ ) इति ॥ ११–१७ ॥

छ॒न्दा॑ꣳसि गच्छ॒ स्वाहे॒ति । स॒प्त वै छन्दा॑ꣳसि स॒प्त ग्रा॒म्याः प॒शवः॑ स॒प्तार॒ण्यास्ता॒नेवै॒तदु॑भ॒यान्प्र॒जनयति ॥ १६ ॥

द्या॒वापृ॑थि॒वी गच्छ॒ स्वाहे॒ति । प्र॒जाप॑ति॒र्वै प्र॒जाः सृ॒ष्ट्वा ता द्या॒वापृ॑थि॒वीभ्यां॒ प॒र्यगृह्णा॒त्ता इ॒मा द्या॒वापृ॑थि॒वीभ्यां॒ परि॑गृहीता॒स्तथो॑ऽएवै॒षऽ ए॒तत्प्र॒जाः सृ॒ष्ट्वा ता द्या॒वापृ॑थि॒वीभ्यां॒ परि॑गृह्णाति ॥ १७ ॥

( त्य ) अथा॒त्यु॒पय॑जति । स य॒न्नात्यु॒पयु॒जेद्या॒वत्यो हैवा॒ग्रे प्र॒जाः सृ॒ष्टा॒स्ता॒वत्यो है॒व स्युर्न प्र॒जायेर॒न्नथ य॒दत्यु॒पय॒जति॒ प्रै॒वै॒तज्जनयति त॒स्मादि॒माः प्र॒जाः पु॒नर॒भ्याव॒र्तं प्र॒जाय॑न्ते ॥ १८ ॥

इति षष्ठप्रपाठके पञ्चमं ब्राह्मणम् ॥ ६–५ ( ८. ४. ) ॥

इति षष्ठः प्रपाठकः समाप्तः ।

---

" छन्दांसि गच्छ स्वाहा "–( वा. सं, ६ । २१ ) इति सप्त वै छन्दांसि –सप्त ग्राम्याः पशवः सप्तारण्याः तानेवैतदुभयान्प्रजनयति ॥ ॥ १६ ॥

" द्यावापृथिवी गच्छ स्वाहा "–( वा. सं. ६ । २१ ) इति । प्रजापतिर्वै प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां पर्यगृह्णात् । ता इमा द्यावापृथिवीभ्यां परिगृहीताः । तथोऽएवैष एतत्प्रजाः सृष्ट्वा ता द्यावापृथिवीभ्यां परिगृह्णाति ॥ १७ ॥

अथात्युपयजति । स यन्नात्युपयजेत् । यावत्यो हैवाग्रे प्रजाः सृष्टाः–तावत्यो हैव स्युः–न प्रजायेरन् । अथ यद् अत्युपयजति–प्रैवैतज्जनयति । तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते ॥ १८ ॥

---

अत्युपयाजं विधत्ते–अथात्युपयजतीति । अत्युपयाजनामका[1]श्चत्वारे उपयागाः सप्तकानामनन्तरमाधिक्येन यष्टव्याः । विहितानत्युपयागानन्वयव्यतिरेकाभ्यां पुनः पुनः प्रजाभिवृद्धिहेतुतया प्रशंसति–स यन्नात्युपयजेद्यावत्यो हैवाग्रे प्रजाः सृष्टा [2]इत्यादिना ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे अष्टमाध्याये चतुर्थं ब्राह्मणम् ॥ ( ३–८–४ ) ॥

---

१–'अत्युपयड्ढोमकाश्चत्वार उपयागसप्तकानामनन्तरमाधिक्येन इति क. पा. । २–तै. सं. ६ । ३ । ११ अनुवाको द्रष्टव्यः ।

# सप्तमप्रपाठके प्रथमं ब्राह्मणम् ।
# अष्टमाध्याये च पञ्चमं ब्राह्मणम् ।

सोऽत्युपयजति । यज्ञं गच्छ स्वाहेत्यापो वै यज्ञ आपो रेतो रेत एवैतत्सिञ्चति ॥ १ ॥

सोमं गच्छ स्वाहेति । रेतो वै सोमो रेत एवैतत्सिञ्चति ॥ २ ॥

दिव्यं नभो गच्छ स्वाहेति । ( त्या ) आपो वै दिव्यं नभऽआपो रेतो रेत एवैतत्सिञ्चति ॥ ३ ॥

( त्य ) अग्निं वैश्वानरं गच्छ स्वाहेति । ( ती ) इयं वै पृथिव्यग्निर्वैश्वानरः सेयं प्रतिष्ठेमामेवैतत्प्रतिष्ठामभिप्रजनयति ॥ ४ ॥

( त्यु ) अथ मुखं विमृष्टे । मनो मे हार्दि यच्छेति तथो होपयष्टात्मानं नानुप्रवृणक्ति ॥ ५ ॥

---

सोऽत्युपयजति–" यज्ञं गच्छ स्वाहा "–( वा. सं. ६ । २१ ) इति । आपो वै यज्ञः आपो-रेतः । रेत एवैतत् सिञ्चति ॥ १ ॥

" सोमं गच्छ स्वाहा "–( वा. सं. ६ । २१ ) इति । रेतो वै सोमः रेत, एवैतत् सिञ्चति॥२॥

" दिव्यं नभो गच्छ स्वाहा "–( वा. सं ६ । २१ ) इति । आपो वै दिव्यं नभः आपो रेतः । रेत एवैतत् सिञ्चति ॥ ३ ॥

" अग्निं वैश्वानरं गच्छ स्वाहा "–( वा. सं. ६ । २१ ) इति । इयं वै पृथिव्यग्निर्वैश्वानरः । सेयं प्रतिष्ठा । इमामेवैतत्प्रतिष्ठामभिप्रजनयति ॥ ४ ॥

अथ मुखं विमृष्टे–" मनो मे हार्दि यच्छ "–( वा. सं. ६ । २१ ) इति । तथो होपयष्टात्मानं नानुप्रवृणक्ति ॥ ५ ॥

---

अत्युपयाजमन्त्रान् विधाय पुनः सृष्ट्यभिवृद्धिहेतुतया प्रशंसति–सोऽत्युपयजति यज्ञं गच्छ स्वाहेत्यादिना । " यत्र वै यज्ञस्य शिरोऽच्छिद्यत तस्य रसो द्रुत्वापः प्रविवेश " ( श. प. ३. ९. २. १ )–इति वक्ष्यमाणत्वात् यज्ञरसानुप्रवेशेन यज्ञस्याब्रूपत्वम् ॥ १ ॥

सोमं गच्छेति । सोमस्य रसात्मकत्वाद्वौषधित्वाद्वौषधिविकारत्वाद्वा रेतस इति वा सोमस्य रेतस्त्वम् ॥ २ ॥

दिव्यं नभ इति । 'दिव्यं नभः' लोकः; ततो वृष्ट्युत्पत्तेस्तस्याब्रूपत्वम्; अधिष्ठानाधिष्ठात्रोरभेदोपचारात्॥ ३॥

अग्निं वैश्वानरमिति । इयं पृथिव्यग्निर्वैश्वानरः ( निरु. ७ । २१–३१ ) इत्युच्यते, तस्याः सर्वगतत्वेन प्रतिष्ठारूपत्वं स्पष्टमेव ॥ ४ ॥

अथ मुखं विमृष्टे मनो मे हार्दीत्यादि । मुखविमर्शनमन्त्रस्यायमर्थः–हे प्राणरूप गुद ! 'मे' 'हार्दि'

---

१ प्रतिवषट्कार २ हुत्वा मनो म इति मुखोपस्पर्शनम् । का० श्रौ० सू० ६ । २०९ ।

  

( त्यु ) अथ जाघन्या पत्नीः संयाजयन्ति । जघनार्द्धो वै जाघनी जघनार्द्धाद्वै योषायै प्रजाः प्रजायन्ते तत्प्रैवैतज्जनयति यज्जाघन्या पत्नीः संयाजयन्ति ॥ ६ ॥

( त्य ) अन्तरतो देवानां पत्नीभ्यो ऽवद्यति । ( त्य ) अन्तरतो वै योषायै प्रजाः प्रजायन्त ऽउपरिष्टादग्नये गृहपतय ऽउपरिष्टाद्वै वृषा योषामधिद्रवति ॥ ७ ॥

( त्यु ) अथ हृदयशूलेनावभृथं यन्ति । पशोर्ह वा ऽआलभ्यमानस्य हृदयꣳ शुक्समभ्युवैति हृदयाद्धृदयशूलमथ यच्छृतस्य परितृन्दन्ति तदलञ्जुषं तस्माद परितृद्यैव शूलाकुर्यात्तत्रिः प्रच्युते पशौ हृदयं प्रवृह्योत्तमं प्रत्यवदधाति ॥ ८ ॥

अथ जाघन्या पत्नीः संयाजयन्ति । जघनार्द्धो वै जाघनी जघनार्द्धाद्वै योषायै प्रजाः प्रजायन्ते । तत् प्रैवैतज्जनयति—जघन्या पत्नीः सं याजयन्ति ॥ ६ ॥

अन्तरतो देवानां पत्नीभ्योऽवद्यति । अन्तरतो वै योषायै प्रजाः प्रजायन्ते—उपरिष्टादग्नये गृहपतये । उपरिष्टाद्वै वृषा योषामधिद्रवति ॥ ७ ॥

अथ हृदयशूलेनावभृथं यन्ति । पशोऽर्ह वाऽआलभ्यमानस्य हृदयं शुक् समभ्यवैति । हृदयाद्धृदयशूलम् । अथ यच्छृतस्य परितृन्दन्ति; तदलञ्जुषम् । तस्माद परितृद्यैव शूलाकुर्यात् । तत त्रिःप्रच्युते पशौ हृदयं प्रवृह्योत्तमं प्रत्यवदधाति ॥ ८ ॥

हृदयसम्बन्धि ' मनो ' ' यच्छ ' । यद्वा ' हार्दं ' हृदये स्थापितम् । पशोः प्राणरूपस्य गुदस्य विच्छिद्य होमात् उपयष्टुः मनोऽपि प्राणाविनाभूतं अपगच्छति, अत एवं प्रार्थ्यते । तथा होपयष्टेति । स्पष्टम् ॥ ९ ॥

अथ जाघन्या पत्नीः संयाजयन्तीति[1] । जाघनी वालदण्डः तया ' पत्नीः पत्न्युपलक्षिताः सोमत्वष्ट्राद्या देवताः संयाजयेत् । जघनार्द्धो वै जाघनीत्यादि । स्पष्टम् ॥ ६ ॥

जाघन्या अपि प्रदेशविशेषमाह—अन्तरतो देवानां पत्नीभ्योऽवद्यतीति[2] । देवानां पत्नीभ्य इति चतुर्थी, तासामर्थाय । ' अन्तरतः ' ऊर्ध्वमुत्थितस्य बालस्य ' अन्तरतः ' अलोमकप्रदेशादित्यर्थः । उपरिष्टादग्नये गृहपतय इति । सरोमके बाह्यप्रदेशे ॥ ७ ॥

अथ हृदयशूलेनेत्यादि[3] । हृदयशूलस्यावभृथनयनस्य प्रयोजनमाह—पशोर्ह वा इति । सुखदुःखयोर्हृदये-ऽनुभूयमानत्वान्निरुद्धश्वासस्य पशोः शुक् शोको हृदयमभिगच्छति हृदयाद्धृदयशूलमभिगच्छति । तत्प्रकारमाह—अथ यदिति । शृतस्य पक्वस्य । हृदयस्य पश्चात् शूलेन परितर्दने ' तत् ' जोषाय भक्षणाय ' अलं ' पर्याप्तं भवति; शुगनुविद्धत्वान्न यागार्हं स्यादित्यर्थः । तस्मात् पाकात् पूर्वं शूलं ' परितृद्य ' पाकं कुर्यात् । " शूलात्

१—जाघन्या पत्नीसंयाजनम् । का. श्रो. सू. ६ ।२१२। २—उत्तानाया देवानां पत्नीभ्योऽवद्यति । इडां च । परिवर्त्याग्नये गृहपतय ऽग्नीधे च । आज्येन पूर्व्वे । सर्व्वा वा जाघन्याऽविशेषात् । का.श्रौ.सू. ६।२१३-२१७ । ३—बर्हिर्हुत्वाऽपोगच्छन्तिहृदयशूलमादाय । आहवनीयं वोपस्थाय व्रतादीनिचेत् । का. श्रौ. सू. २१८ । २१९ ।

( त्यु ) अथ हृदयशूलं प्रयच्छति । तन्नु पृथिव्यां परास्येन्नाप्सु स युत्पृथिव्यां परास्येदोषधीश्च व्वनस्पतींश्चैषा शुक्प्रविशेद्यदप्सु परास्येदप ऽएषा शुक्प्रविशेत्तस्मान्न पृथिव्यां नाप्सु ॥ ९ ॥

( प्स्व ) अप एवाभ्यवेत्य । युत्र शुष्कस्य चार्द्रस्य च सन्धिः स्यात्तदुपगूहेद्यद्यु ऽअभ्यवायनाय ग्लायेदग्रेण यूपमुदपात्रं निनीय युत्र शुष्कस्य चार्द्रस्य च सन्धिर्भवति तदुपगूहति मापो मौषधीर्हिᳫंसीरिति तथा नापो नौषधीर्हिनस्ति धाम्नो धाम्नो राजंस्ततो व्वरुण नो मुञ्च ॥ यदाहुरघ्न्या इति व्वरुणेति शपामहे ततो व्वरुण नो मुञ्चेति तदेनᳫं सर्व्वस्माद्वरुणपाशात्सर्व्वस्माद्वरुण्यात्प्रमुञ्चति ॥ १० ॥

---

अथ हृदयशूलं प्रयच्छति । तन्न पृथिव्यां परास्येत्; नाप्सु । स यत् पृथिव्यां परास्येद्–ओषधीश्च वनस्पतींश्चैषा शुक् प्रविशेत् । यदप्सु परास्येद्–अप एषा शुक् प्रविशेत् । तस्मान्न पृथिव्याम्, नाप्सु ॥ ९ ॥

अप एवाभ्यवेत्य यत्र शुष्कस्य चार्द्रस्य च सन्धिः स्यात्–तदुपगूहेत् । यद्यु ऽअभ्यवायनाय ग्लायेद्–अग्रेण यूपमुदपात्रं निनीय यत्र शुष्कस्य चार्द्रस्य च सन्धिर्भवति–तदुपगूहति । "मापो मौषधीर्हिंसीः "–( वा. सं. ६ । २२ । ) इति । तथा नापो नौषधीर्हिनस्ति–" धाम्नो धाम्नो

---

पाके " ( पा. सू. ५ । ६ । ६१ । ) इति डाजन्तः । अतः पाकात् पूर्वं शूलेन परितर्द्दनात् 'शुक्' हृदयशूलं प्राप्नोतीत्यर्थः । 'त्रिः प्रच्युते पशौ' पाकोत्तरकालं 'हृदयं' शूलात् 'प्रवृह्य' 'उत्तमं प्रत्यवदधाति' इतरावयवानामुपरि स्थापयेत् ॥ ८ ॥

अथ हृदयशूलं प्रयच्छतीति[1] । परिकर्मिणे प्रयच्छति । स 'तत्' शूलं 'पृथिव्याम्' 'अप्सु' च 'न परास्येत्' । परास्यतो दोषमाह–ओषधीश्चेति । 'ओषधीश्च वनस्पतींश्च एषा शुक् प्रविशेत्', 'यत्' यदि 'पृथिव्यां परास्येत्' । तस्यामुत्पन्नेष्वोषधिवनस्पतिषु प्रवेशो युक्तः ॥ ९ ॥

उक्तदोषाभावोपायमाह–अप एवेति । 'अपः' सम्प्राप्य तत्समीपे 'यत्र' देशे अतीवारसः सरसश्च न भवति, 'तत्' तत्र 'उपगूहेत्' । अपामेवातिदूरत्वे उपायान्तरमाह–यद्यु इति ।

यदाब्विषये ग्लानिं प्राप्नुयात्, तदा यूपस्य प्राग्देशे उदपात्रनिनयनं कृत्वा, तत्रापीषदार्द्रदेशे उपगूहेत् । तत्र मन्त्रः–" मापो मौषधीर्हिंसीः "–इति । हे शूल ! अपामोषधीनाञ्च हिंसां मा कुरु । ईषदार्द्रे उपगूहनादपां हिंसाप्रसङ्गः, पृथिव्यामुपगूहनात् तदीयौषधीनां बाधप्रसङ्गः, अतस्तत्रोभयत्र हिंसापरिहारः प्रार्थ्यते ॥

तत्र मन्त्रः–धाम्नो धाम्नो राजन्निति[2] । निगूहनस्य बन्धनरूपत्वात्, तस्य वरुणाधिष्ठातृकत्वात् वरुणस्य सम्बोधनम्–हे 'राजन्' वरुण ! यस्मिन् पापरूपबन्धने अवस्थाने बद्धाः स्मः, 'ततः' तस्मात् धाम्नो बन्धस्थानात्

---

१–अभ्यवेत्य शुष्कार्द्रसन्धौ हृदयशूलमुपगूहति शुगसि तमभिशोच योऽस्मान् द्वेष्टि यंच व्वयं द्विष्मो मापो मौषधीरिति च । श्रौ. सू. ६ । २२० । २–ग्लायन्नुदपात्रं निषिच्य पूर्व्वेण यूपं यथोक्तमुपगूहति । का. श्रौ. सू. ६ । २२१ ।

( त्यु ) अथाभिमन्त्रयन्ते । सुमित्रिया न ऽआप ऽओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च व्वयं द्विष्म इति यत्र वाऽएतेन प्रचरन्त्यापश्च ह वाऽअस्मात्तावदोषधयश्चापक्रम्येव तिष्ठन्ति तदु ताभिर्मित्रधेयं कुरुते तथो हैनं ताः पुनः प्रविशन्त्येषो तत्र प्रायश्चित्तिः क्रियते स वै नाग्नीषोमीयस्य पशोः करोति नाग्नेयस्य व्वशायाऽएवानूबन्ध्यायै ताꣳ हि सर्व्वोऽनु यज्ञः सन्तिष्ठतऽएतदु हास्याग्नीषोमीयस्य पशोराग्नेयस्य च हृदयशूलेन चरितं भवति यद्वशायाश्चरन्ति ॥ ११ ॥

इति सप्तमप्रपाठके प्रथमं ब्राह्मणम् ॥ ७ ॥ १ ॥ ( ८।५ )

राजंस्ततो वरुण नो मुञ्च। यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुंच"—(वा. सं. ६।२२।) इति। तदेनं सर्वस्माद्वरुणपाशात्, सर्वस्माद्वरुण्यात् प्रमुञ्चति ॥ १० ॥

अथाभिमन्त्रयते—" सुमित्रिया न आप ओषधयः सन्तु, दुर्मित्रियास्तस्मै सन्तु—योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः "—( वा. सं. ६।२२ )—इति। यत्र वाऽएतेन प्रचरन्ति। आपश्च ह वाऽअस्मात्तावदोषधयश्चापक्रम्येव तिष्ठन्ति। तदु ताभिर्मित्रधेयं कुरुते। तथो हैनं ताः पुनः प्रविशन्ति। एषो तत्र प्रायश्चित्तिः क्रियते। स वै नाग्नीषोमीयस्य पशोः करोति, नाग्नेयस्य। वशायाऽएवानूबन्ध्यायै। तां हि सर्वोऽनुयज्ञः सन्तिष्ठते। एतदु हास्याग्नीषोमीयस्य च पशोराग्नेयस्य च हृदयशूलेन चरितं भवति—यद् वशायाश्चरन्ति ॥ ११ ॥ इत्यग्नीषोमीयपशुयागः ॥

'नः' अस्मान् 'मुञ्च' पापेन विमुक्तान् कुरु। किञ्च 'यत्' यस्मिन् आगसि सम्भाविते, आगस्कर्त्तारोऽपि 'अघ्न्याः' अहन्तव्याः, रक्षणीयाः 'वरुण' 'इति' 'वयमित्याहुः' मनुष्याः वयमपि इत्येवं प्रकारेणाऽराधीनोऽप्यघ्न्याः वयं किं तु पालयितव्या इति शपामहे आक्रोशामः। ततोऽपि नोऽस्मान्मुंच। तच्च न धाम्नो धाम्न इत्यादि मंत्रपाठेन वरुण्यादिति पुनरभिधानात्पाशव्यतिरिक्तात्सर्वस्मात्पाशाद्विमोक्षः प्रार्थ्यते ॥ १० ॥

अथाभिमन्त्रयन्त इति। अध्वर्युप्रभृतयः। सुमित्रिया न इति। 'नः' असमदर्थम् 'आपः ओषधयः' च 'सुमित्रियाः' शोभनमित्रेषु साधवः 'सन्तु' मित्रवद्धितकारिण्यो भवन्तु। 'यः' 'अस्मान् द्वेष्टि' अस्मासु द्वेषमाचरन्ति 'यं च वयं द्विष्मः तस्मै तदर्थं दुर्मित्रियास्सन्तु द्वेषिण्यो भवन्तु। अत्र सूत्रकारः—"सुमित्रिया न इत्युपस्पृशन्त्यपः, उपगूहनशेषो वा पूर्वः, अभिमन्त्रणं वोत्तरेण"—( का. श्रौ. सू. ६।२२२—२२४ ) इति ॥

एतत्प्रशंसति—यत्र वा एतेनेति। 'एतेन' हृदयशूलनिगूहनेन 'आपश्च' 'ओषधयश्च' 'अस्मात्' स्थानात् 'अपक्रम्य' अपसृत्य 'इव' 'तिष्ठन्ति'। 'तदु' तस्मादेव कारणात् 'ताभिः' सह "सुमित्रिया"—इति पाठेन मित्रत्वं कृतवान् भवति। स्पष्टमन्यत् ॥

शूलोपगूहनं विषयविशेषे निषेधति—स वै नाग्नीषोमीयस्य पशोः करोतीत्यादिना। 'स वै' सोऽध्वर्युः। "न सोमेऽनूबन्ध्यावर्जम्"—( का. श्रौ. सू. ६।२२५ ) इति। सूत्रम् ॥ ११ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे अष्टमेऽध्याये पञ्चमं ब्राह्मणम् ॥ ३—८—५ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

# नवमाध्याये प्रथमं ब्राह्मणम् ।

प्र॒जाप॑तिर्वै प्र॒जाः स॑सृजा॒नो रि॑रिचा॒न इ॑वामन्यत । त॒स्मात्परा॑च्यः प्र॒जा ऽआ॑सु॒र्नास्य॑ प्र॒जाः श्रि॒येऽन्ना॒द्याय त॑स्थिरे ॥ १ ॥

स॒ ऐ॑क्षता॒रिक्ष्य॑हम् । ( मु ) अ॒स्मा ऽउ॒ का॒माया॒सृक्षि॒ नु मे॒ स का॒मः समा॑र्द्धि॒ परा॑च्यो म॒त्प्रजा॒ अभू॑वन्नु॒ मे प्र॒जाः श्रि॒येऽन्ना॒द्याया॑स्थिषते॒ति ॥२॥

स॒ ऐ॑क्षत प्र॒जाप॑तिः । क॒थं नु पुन॑रा॒त्मान॑मा॒प्याय॑ये॒योप॑ मा प्र॒जाः स॒मा-वर्त्तेरं॒स्तिष्ठे॑रन्मे प्र॒जाः श्रि॒येऽन्ना॒द्याये॒ति ॥ ३ ॥

---

अथ पश्चैकादशिनी ।

प्रजापतिर्वै प्रजाः ससृजानो रिरिचान इवामन्यत । तस्मात्पराच्यः प्रजा आसुः । नास्य प्रजाः श्रिये अन्नाद्याय तस्थिरे ॥ १ ॥

स ऐक्षत–' अरिक्ष्यहम् । यस्मा ऽउ कामायासृक्षि '–न मे स कामः समार्द्धि, पराच्यो मत्प्रजा अभूवन्–न मे प्रजाः श्रिये अन्नाद्यायास्थिषत इति ॥ २ ॥

स ऐक्षत प्रजापतिः–कथं नु पुनरात्मानमाप्याययेय, उप मा प्रजाः समावर्तेरन्, तिष्ठेरन्मे प्रजाः श्रियेऽन्नाद्याय इति ॥ ३ ॥

---

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ २ ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ॥३॥
आज्योत्थं प्राज्यजन्मा लवणंजमनृणः शार्करं चार्कतेजा रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥४॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे अष्टमोऽध्यायः समाप्तः ॥ ३ ॥ ८ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

पश्चैकादशिनीं विधातुमाख्यायिकामाह–**प्रजापतिर्वै प्रजाः ससृजान** इत्यादिना । ' रिरिचान इवामन्यत ' आत्मानं रिक्तमिवाबुद्ध्यत । कुत इत्यत आह–**तस्मात् पराच्यः प्रजा आसुरिति** । ' तस्मात् ' प्रजापतेः सकाशात् 'प्रजाः' 'पराच्यः' पराङ्मुखा एव अभवन् । रिक्तत्वमेव विशदयति–**नास्य प्रजा** इति । लोके यथा बहुप्रजः कश्चित् ताभिरर्जितैर्धनादिभिः श्रीयुक्तोऽन्नादिमांश्च भवति, एवमस्य तथा न स्थितवत्य इत्यर्थः ॥ १ ॥

**स ऐक्षतेति** । विचारं कृतवान् ' अरिक्षि ' अतिरिक्तोऽभूवम् । रिचेर्लुङुत्तमैकवचने रूपम् । तदेव विशदयति–**अहमस्मा उ कामायासृक्षीति** । अहं यस्मै कामाय ' असृक्षि ' प्रजासृष्टिमकार्षम् । ' स कामो न मे ' ' समार्द्धि ' समृद्धियुक्तोऽभूत् । तमेव विशिनष्टि–**न मे प्रजाः श्रिये चान्नाद्यायेति** । प्रजाभ्यः सकाशात् श्रीलाभोऽन्नलाभश्च तस्य काम इत्यर्थः ॥ २ ॥

**स ऐक्षत** इति । अथ स एव प्रजापतिः केनोपायेनात्मन आप्यायनं करोमि तदर्थं ' अर्चन् ' आत्मानं पूजयन् बुद्धिचाञ्चल्यान्निवर्त्य विचारे स्थापनमेवात्रपूजा, तदर्थं ' श्राम्यन् ' आत्मानं खेदयन् ' विचारः ' अयमेवोपायः इति । विचारविषयां बुद्धिं प्रसारितवानित्यर्थः ॥ ३ ॥

सो॒ऽर्च॑ञ्छ्रा॒म्यंश्च॑चार प्र॒जाका॑मः । स॒ ऽए॒तामे॑काद॒शिनी॑मपश्य॒त्स॒ऽ एका॑द॒शिन्ये॒ष्ट्वा प्र॒जाप॑तिः पु॒नरा॒त्मान॑मा॒प्याय॑यत॒तोपै॑नं प्र॒जाः स॑मा॒वर्त॑न्ता॒तिष्ठ॑न्तास्य प्र॒जाः श्रि॒येऽन्ना॒द्याय॒ स व॒सीया॑ने॒वेष्ट्वा॒भव॑त् ॥ ४ ॥

(त्त) त॒स्मै क॒मेका॒द॒शिन्या॑ यजेत । (तै) ए॒वᳪं हैव॒ प्र॒जया॑ प॒शुभि॑रा॒प्या॑यत उ॒पैनं॑ प्र॒जाः स॑मा॒वर्त॑न्ते तिष्ठ॒न्तेऽस्य प्र॒जाः श्रि॒येऽन्ना॒द्याय॒ स व॒सीया॑ने॒वेष्ट्वा भ॑वत्ये॒तस्मै॒ क॒मेका॒द॒शिन्या॑ यजते ॥ ५ ॥

स॒ ऽआ॒ग्ने॒यं प्र॑थ॒मं प॒शुमा॒लभ॑ते । (तेऽग्नि) अ॒ग्निर्वै॒ दे॒व॒ताना॒ं मु॒खं प्र॑जनयि॒ता स॒ प्र॒जाप॑तिः स॒ उ॒ऽए॒व य॑जमान॒स्त॒स्मादा॒ग्ने॒यो भ॑वति ॥ ६ ॥

---

सोऽर्चञ्छ्राम्यंश्चचार प्रजाकामः । स एतामेकादशिनीमपश्यत् । स एकादशिन्येष्ट्वा प्रजापतिः पुनरात्मानमाप्याययत–उपैनं प्रजाः समावर्तन्त–अतिष्ठन्तास्य प्रजाः श्रियेऽन्नाद्याय–स वसीयानेवेष्ट्वाभवत् ॥ ४ ॥

तस्मै कमेकादशिन्या यजेत । एवं हैव प्रजया पशुभिराप्यायते, उपैनं प्रजाः समावर्तन्ते, तिष्ठन्तेऽस्य प्रजाः श्रियेऽन्नाद्याय–स वसीयानेवेष्ट्वा भवति । एतस्मै कमेकादशिन्या यजते ॥ ५ ॥

स आग्नेयं प्रथमं पशुमालभते । अग्निर्वै देवानां मुखम्, प्रजनयिता, स प्रजापतिः, स उऽएव यजमानः । तस्मादाग्नेयो भवति ॥ ६ ॥

---

**सोऽर्चन्निति** । यदा बाह्यव्यापारेणैव 'अर्चन्' 'श्राम्यन्' तपः 'चचार' इत्यर्थः । **स एतामिति** । 'सः' च एवं कृत्वा बहुत्वाय पश्वेकादशिनीम् 'अपश्यत्' प्रजाप्राप्तिसाधनत्वेन ज्ञातवान् । **एकादशिन्येष्ट्वा प्रजापतिरित्यादि** स्पष्टम् । **वसीयानेवेष्ट्वाभवदिति** । 'वसीयान्' वसुमत्तरः ॥ ४ ॥

न केवलं प्रजापतेरेवैकादशिनीप्रयोगादेतदुक्तं फलम्, किन्तु इदानीन्तनमपि तत्फलं तदनुष्ठानाद्भवतीत्याह—**तस्मै कमेकादशिन्या यजेतेत्यादिना** । कमिति पुरुषम् । य एकादशिन्या यजते, 'तस्मै' आप्यायनादिकामाय । स यजमानः 'प्रजया पशुभिः' 'आप्यायते' प्रवर्द्धते । आप्यायनेन 'एनं' यजमानं 'प्रजाः' पुत्रभृत्यादिरूपाः 'समावर्त्तन्ते' प्रतिनिवर्त्तन्ते । आगत्य च तदाप्यायनाय 'श्रिये अन्नाद्याय' च 'प्रजाः' 'तिष्ठन्ते' आत्मानं प्रकाशयन्ति, अनेन श्रिया चाप्यायनं प्रसिद्धम् ॥ ५ ॥

इत्थं सामान्येनैकादशिन्याः फलमभिधाय, तानेकादशिनान् पशून् क्रमेण विधाय, तत्फलं च विभज्य दर्शयति—**स आग्नेयं प्रथमं पशुमालभत इत्यादिना** । अग्निर्देवता अस्य स आग्नेयः पशुः, तम्, 'प्रथममालभते' । सत्स्वनेकदेवताकेषु प्रथममाग्नेयेन भवितव्यमित्येतस्मिन्नर्थे कारणमाह—**अग्निर्वै देवतानां मुखं प्रजनयितेति** । यः परिपाकहेतुत्वेन सर्वस्य प्रजनयिता अग्निः, सः 'देवतानां मुखम्' खलु । देवानां प्रमुखत्वम् "अग्निर्वै देवानामवमः" (ऐ. ब्रा. १ । १ । १) इति, "अग्निमुखा वै देवाः" (ता. ब्रा. २९ । १९ । ४)—इति–श्रुत्यन्तराच्च सिद्धम् । अथवा देवानां मध्ये अग्निरेव 'मुखम्' प्रजनयिता,–मुख्यत्वेनोत्पादकः,

---

१–आग्नेयः प्रथमो गच्छत्यन्वारब्धोऽनुपूर्व्या इतरे । का. श्रौ. सू. ८ । २३१ ।

( त्यु ) अथ सारस्वतम् । वाग्वै सरस्वती वाचैव तत्प्रजापतिः पुनरात्मानमाप्याययत वागेनमुपसमावर्तत वाचमनुकामात्मनोऽकुरुत वाचो एवैष एतदाप्यायते वागेनमुपसमावर्तते वाचमनुकामात्मना कुरुते ॥ ७ ॥

( तेऽथ ) अथ सौम्यम् (म्) अन्नं वै सोमोऽन्नेनैव तत्प्रजापतिः पुनरात्मानमाप्याययतान्नमेनमुपसमावर्ततान्नमनुकमात्मनोऽकुरुतान्नेनो ऽएवैष एतदाप्यायतेऽन्नमेनमुपसमावर्ततेऽन्नमनुकमात्मनः कुरुते ॥ ८ ॥

तद्यत्सारस्वतमनुभवति । वाग्वै सरस्वत्यन्नꣳसोमस्तस्माद्यो वाचा प्रसाम्यन्नादो हैव भवति ॥ ९ ॥

---

अथ सारस्वतम् । वाग्वै सरस्वती । वाचैव तत् प्रजापतिः पुनरात्मानमाप्याययत, वागेनमुपसमावर्तत, वाचमनुकामात्मनोऽकुरुत । वाचो एवैष एतदाप्यायते, वागेनमुपसमावर्तते, वाचमनुकामात्मना कुरुते ॥ ७ ॥

अथ सौम्यम् । अन्नं वै सोमः । अन्नेनैव तत्प्रजापतिः पुनरात्मानमाप्याययत, अन्नमेनमुपसमावर्तत, अन्नमनु कमात्मनोऽकुरुत । अन्नेनोऽएवैष एतदाप्यायते, अन्नमेनमुपसमावर्तते, अन्नमनु कमात्मनः कुरुते ॥ ८ ॥

तद् यत् सारस्वतमनुभवति । वाग्वै सरस्वती । अन्नं सोमः । तस्माद्यो वाचा प्रसामि—अन्नादो हैव भवति ॥ ९ ॥

---

"तामग्निरिन्धते, सोमो रेतो दधातन, सविता प्राजनयत्"—इत्यादौ अग्नेरेवेन्धकत्वदर्शनात्[1] । 'सः' अग्निः प्रजापतिना समत्वात् 'प्रजापतिः' । 'स एव' अग्निः 'यजमानः' च गार्हपत्यः सन् यजमानरूपेणावस्थानात्, यज्ञनिष्पादकत्वसाम्याद्वा यजमानत्वम् । तस्मात् स्वात्मलाभाय आग्नेयः पशु, कर्त्तव्यः ॥ ६ ॥

अथ सारस्वतमिति । आलभत इति शेषः । या 'सरस्वती' अस्ति सा 'वाग्वै' वाग्रूपा खलु । 'वाचैव' द्वितीयपशोर्देवतया स्वातिरिक्तं स्वात्मानं 'पुनराप्याययत' । 'वाग्' वाग्रूपा प्रजा एनं प्रजापतिम् उपावृत्ततया 'समावर्त्तत' । 'वाचमात्मनोऽनुकां' अनुकामयत इत्यनुका अनुकूलां अकरोत् । 'वाचम्' 'अनु' 'एव' 'एषः' यजमानः 'आत्मनः' कामनादिकं करोति ॥ एवमुत्तरेषां पशूनां ब्राह्मणानि [च] व्याख्येयानि ॥ ७॥८॥

सौम्यस्य पशोः सारस्वतानन्तर्यं प्रशंसति—तद्यत्सारस्वतमनुभवतीति । वाग्वै सरस्वत्यन्नमिति । सोमस्यौषध्यधिपतित्वात् तत्स्वरूपमधिदैवम्, देवैरद्यमानत्वादधिभूतम्, ओषध्यात्मकत्वादन्नमिति । 'तस्माद्' 'यः' पुमान् 'वाचा' 'प्रसामि' अत्यल्पं[3], सः 'अन्नादो भवति' । वाचोऽन्नसाधनत्वात् सारस्वतानन्तरः सौम्यो युक्तः ॥ ९ ॥

---

१–अग्निरेव प्रथमत्वदर्शनात् । इति क. पाठः । २–यथोच्छ्रित २ सवनीयानालभत एकतृणेनोपाकृत्याग्नेयसारस्वतसौम्यपौष्णबार्हस्पत्यवैश्वदेवैंद्र मारुतैंद्राग्नसावित्रवारुणान् । का. श्रौ. सू. ८ । २२९ । ३–'अनल्पः' इति क. पा.

( त्यु ) अ॒थ पौ॒ष्णम् । प॒शवो॒ वै पू॒षा प॒शुभि॑रे॒व तत्प्र॒जाप॑तिः॒ पुन॑रा॒त्मा॑नमा॒प्याय॑यत प॒शव॒ ऽएन॑मु॒पस॒मा॒व॑र्त॒न्त प॒शून॑नु॒काना॒त्मनो॑ऽकुरुत प॒शुभि॑र्वै॒वैष॒ ऽए॒तदा॒प्याय॑ते प॒शव॒ एन॑मु॒पस॒मा॒व॑र्त॒न्ते प॒शून॑नु॒काना॒त्मनः॑ कुरुते ॥ १० ॥

( तुऽथ ) अ॒थ बा॒र्ह॒स्प॒त्यम् । ब्रह्म॒ वै बृह॒स्पति॒र्ब्रह्म॑णै॒वैतत्प्र॒जाप॑तिः॒ पुन॑रा॒त्मा॑नमा॒प्याय॑यत॒ ब्र॒ह्मैन॑मु॒पस॒मा॒व॑र्तत॒ ब्र॒ह्मानु॑कमा॒त्मनो॑ऽकुरुत॒ ब्रह्म॑णो॒ ऽए॒वैष॒ ऽए॒तदा॒प्याय॑ते ब्र॒ह्मैन॑मु॒पस॒मा॒व॑र्त्तते ब्र॒ह्मानु॑कमा॒त्मनः॑ कुरुते ॥ ११ ॥

तद्य॒त्पौ॒ष्णम॑नु॒भव॑ति । प॒शवो॒ वै पू॒षा ब्रह्म॒ बृह॒स्पति॒स्तस्मा॑द्ब्राह्म॒णः प॒शून॑भि॒धृष्णु॑तमः पुरा॒हि॑ता ह्य॒स्य भव॑न्ति॒ मुख॒ ऽआहि॑ता॒स्तस्मा॑दु॒ तत्स॒र्वं द॒त्त्वाजिन॑वासी चरति ॥ १२ ॥

---

अथ पौष्णम् । पशवो वै पूषा । पशुभिरेव तत्—प्रजापतिः पुनरात्मानमाप्याययत, पशव एनमुपसमावर्तन्त, पशूननुकानात्मनोऽकुरुत । पशुभिर्वेवैष एतदाप्यायते, पशव एनमुपसमावर्तन्ते, पशूननुकानात्मनः कुरुते ॥ १० ॥

अथ बार्हस्पत्यम् । ब्रह्म वै बृहस्पतिः । ब्रह्मणैवैतत्प्रजापतिः पुनरात्मानमाप्याययत, ब्रह्मैनमुपसमावर्तत, ब्रह्मानुकमात्मनोऽकुरुत । ब्रह्मणोऽएवैष एतदाप्यायते, ब्रह्मैनमुपसमावर्तते, ब्रह्मानुकमात्मनः कुरुते ॥ ११ ॥

तद् यत् पौष्णमनु भवति । पशवो वै पूषा । ब्रह्म बृहस्पतिः । तस्माद् ब्राह्मणः पशूनभिधृष्णुतमः । पुराहिता ह्यस्य भवन्ति—मुख आहिताः । तस्मादु तत्सर्वं दत्त्वाजिनवासी चरति ॥ १२ ॥

---

अथ पौष्णमिति । ‘ अथ ’ सौम्यानन्तरं ‘ पौष्णं ’ पूषदेवताकं पशुमालभते । पशवो वै पूषेत्यादि, पूर्ववत् ॥ १० ॥

अथ बार्हस्पत्यमिति । ‘ बार्हस्पत्यं ’ बृहस्पतिदेवताकं पशुमालभते । बृहस्पतेर्मन्त्राभिमानिदेवत्वाद् ब्रह्मत्वम्; अथवा ‘ बृहस्पतिः ’ ‘ ब्रह्म वै ’ ब्राह्मणजातिः खलु ॥ ११ ॥

बार्हस्पत्यस्य पौष्णानन्तर्ये युक्तिमाह—तद्यत् पौष्णमनु भवतीति । पूष्णः पूषाधिदेवत्वात् पशूनां पोषकत्वात् ‘ पूषा पशवः । ‘ तस्मात् ’ बार्हस्पत्यस्य पौष्णानन्तर्याद्धेतोः ‘ ब्राह्मणः ’ ‘ पशून् ’ ‘ अभिधृष्णुतमो भवति ’ अत्यन्तधर्षको भवति । ‘ अस्य ’ एवंक्रमेणानुष्ठातुर्यजमानस्य ‘ पुराहिताः ’ पुरोहिताः, पुरः स्थापिताः ‘ भवन्ति ’ पशवः । तदेव व्याचष्टे—मुख आहिता इति । यस्माद्ब्राह्मणस्य पशुषु स्वामित्वमस्ति ‘ तस्मादु ’ तस्मादेव कारणात् ‘ सर्वं ’ ब्राह्मणेभ्यो ‘ दत्त्वा ’ ‘ अजिनवासी ’ अजिनमाच्छाद्य ‘ सञ्चरति ’ ।

---

१–‘मन्त्राधिदेवत्वात्–’ इ. पा. । २–‘ पूषाभिमानित्वात् ’ इति ज. । ३–‘ पुराहिताः’–पुरा इत्यव्ययमग्रे इत्यर्थम् । फलितमाह–पुरोहिता इति ।

( त्यु ) अथ व्वैश्वदेवम् । ( प्ॅ ) सुर्व्वं वै व्विश्वे देवाः सुर्व्वेणैव तत्प्र- जापतिः पुनरात्मानमाप्यायय‍त सुर्व्वमेनमुपसमावर्तत सुर्व्वमनुकमात्मु- नोऽकुरुत सुर्व्वेणो ऽएवैषु एतुदाप्यायते सुर्व्वमेनमुपसमावर्तते सुर्व्वमु- नुकमात्मुनः कुरुते ॥ १३ ॥

तद्यद्बार्हस्पत्यमनु भवति । ब्रह्म वै बृहस्पतिः सुर्व्वमिदं व्विश्वे देवाऽ अस्यैतत्सुर्व्वस्य ब्रह्म मुखं करोति तुस्मादस्य सुर्व्वस्य ब्राह्मणो मुखम् ॥ १४ ॥

( मु ) अथैन्द्रम् । ( मि ) इन्द्रियं वै व्वीर्यमिन्द्र इन्द्रियेणैव तद्वीर्येण प्रजापतिः पुनरात्मानमाप्याययतेन्द्रियमेनं वीर्यमुपसमावर्ततेन्द्रियं व्वीर्य- मनुकमात्मनोऽकुरुतेन्द्रियेणो ऽएवैषु एतद्वीर्येणाप्यायतऽइन्द्रियमेनं व्वीर्य- मुपसमावर्तत ऽइन्द्रियं वीर्यमनुकमात्मनः कुरुते ॥ १५ ॥

---

अथ वैश्वदेवम् । सर्वं वै विश्वे देवाः । सर्वेणैव तत् प्रजापतिः पुनरात्मानमाप्याययत, सर्वमेन- मुपसमावर्तत, सर्वमनुकमात्मनोऽकुरुत । सर्वेणोऽएवैष एतदाप्यायते, सर्वमेनमुपसमावर्तते, सर्वमनु- कमात्मनः कुरुते ॥ १३ ॥

तद् यद् बार्हस्पत्यमनु भवति । ब्रह्म वै बृहस्पतिः । सर्वमिदं विश्वे देवाः अस्यैवैतत् सर्वस्य ब्रह्म मुखं करोति । तस्मादस्य सर्वस्य ब्राह्मणो मुखम् ॥ १४ ॥

अथैन्द्रम् । इन्द्रियं वै वीर्यम् । इन्द्र इन्द्रियेणैव तद्वीर्येण प्रजापतिः पुनरात्मानमाप्याययत, इन्द्रि- यमेनं वीर्यमुपसमावर्तत इन्द्रियं वीर्यमनुकमात्मनोऽकुरुत । इन्द्रियेणोऽएवैष एतद्वीर्येणाप्यायते, इन्द्रियमेनं वीर्यमुपसमावर्तते, इन्द्रियं वीर्यमनु कमात्मनः कुरुते ॥ १५ ॥

---

सर्वस्वदक्षिणाके विश्वजिदादौ सर्वस्वं दत्त्वा अजिनवासोधारणं सामब्राह्मणे प्रपञ्चेनाम्नातम् ( सा. ब्रा. १६ । ४।९।६ ) आपस्तम्बोऽपि–"उदवसाय रोहिणं दशच्छदीः"–इति प्रक्रम्य, "वहिर्लोम परिधाय"–इति ॥१२॥

अथ वैश्वदेवमिति । बार्हस्पत्यानन्तरं 'वैश्वदेवं' पशुमालभते । वैश्वदेवस्य बार्हस्पत्यानन्तर्यार्थवादः स्पष्टार्थः १३

तद्यद् बार्हस्पत्यमनु भवतीति । अस्यैवैतत् सर्वस्य ब्रह्म मुखं करोतीति । 'अस्य' 'सर्वस्य' अपि जगतः 'एतत्' एतेन सर्वरूपस्य वैश्वदेवस्य आदौ ब्राह्मणजात्यात्मकस्य बृहस्पतेः पुरोभावित्वसम्पादनेन 'ब्रह्म मुखं करोति' ब्राह्मणजातिमेव मुखं कृतवान् भवति ॥ १४ ॥

अथैन्द्रमिति । 'ऐन्द्रं' पशुमालभते । सप्तमस्य पशोर्यद्देवता इन्द्रोऽस्ति, तम् । इन्द्रियं वै वीर्यमिति । इन्द्रेण सृष्टम् 'इन्द्रियम्,' तच्च 'वीर्यं' वीर्यात्मकम्, सृज्यस्रष्ट्रोरभेदात् 'इन्द्रः' एवेन्द्रियम्; शक्तिशक्ति- मतोरभेदादेन्द्रियत्वम् ॥ १५ ॥

---

१–'मुखत्वं' इ. पा. । २–'प्रमुखां' इ. पा. ।

तद्यद्वैश्वदेवमनु भवति । क्षत्रं वा ऽइन्द्रो विशो विश्वे देवा अन्नाद्यमेवास्मा ऽएतत्पुरस्तात्करोति ॥ १६ ॥

( त्यु ) अथ मारुतम् । विशो वै मरुतो भूमो वै विड्भूम्नैव तत्प्रजापतिः पुनरात्मानमाप्याययत भूमैनमुपसमावर्तत भूमानमनुकमात्मनोऽकुरुत भूम्नो ऽएवैष एतदाप्यायते भूमैनमुपसमावर्तते भूमानमनुकमात्मनः कुरुते ॥ १७ ॥

तद्यदैन्द्रमनु भवति । क्षत्रं वा ऽइन्द्रो विशो विश्वे देवा विशो वै मरुतो विशैवैतत्क्षत्रं परिबृꣳहति तदिदं क्षत्रमुभयतो विशा परिबृढम् ॥ १८ ॥

( म ) अथैन्द्राग्नम् । (न्ते) तेजो वा ऽअग्निरिन्द्रियं वीर्यमिन्द्र उभाभ्यामेव तद्वीर्याभ्यां प्रजापतिः पुनरात्मानमाप्याययतोभे ऽएनं वीर्ये ऽउपसमावर्तेतामुभे वीर्ये ऽअनुके ऽआत्मनोऽकुरुतोभाभ्यामेवैष एतद्वीर्याभ्यामाप्यायत ऽउभे ऽएनं वीर्ये ऽउपसमावर्तेते ऽउभे वीर्ये ऽअनुके ऽआत्मनः कुरुते ॥ १९ ॥

---

तद् यद् वैश्वदेवमनु भवति । क्षत्रं वाऽइन्द्रः । विशो विश्वे देवाः । अन्नाद्यमेवास्माऽएतत्पुरस्तात्करोति ॥ १६ ॥

अथ मारुतम् । विशो वै मरुतः । भूमो वै विद् । भूम्नैव तत् प्रजापतिः पुनरात्मानमाप्याययत भूमैनमुपसमावर्तत, भूमानमनुकमात्मनोऽकुरुत । भूम्नोऽएवैष एतदाप्यायते भूमैनमुपसमावर्तते, भूमानमनुकमात्मनः कुरुते ॥ १७ ॥

तद् यदैन्द्रमनु भवति । क्षत्रं वा इन्द्रः । विशो विश्वे देवाः । विशो वै मरुतः । विशै वैतत्क्षत्रं परिबृंहति । तदिदं क्षत्रमुभयतो विशा परिबृढम् ॥ १८ ॥

अथैन्द्राग्नम् । तेजो वाऽआग्निः । इन्द्रियम् वीर्यमिन्द्रः । उभाभ्यामेव तद्वीर्याभ्यां प्रजापतिः पुनरात्मानमाप्याययत, उभेऽएनं वीर्येऽउपसमावर्तेताम् । उभे वीर्येऽअनुकेऽआत्मनोऽकुरुत । उभाभ्यामेवैष एतद्वीर्याभ्यामाप्यायते । उभेऽएनं वीर्येऽउपसमावर्तेते, उभे वीर्येऽअनुकेऽआत्मनःकुरुते ॥ १९ ॥

---

तद्यदिति । इन्द्रस्य देवेषु मध्ये क्षत्रियजातित्वमसकृदुक्तम्, विश्वेषां देवानां तु तदधीनत्वाद् बहुत्वसाम्याद् विशां रूपत्वम्; अत ऐन्द्रस्य वैश्वदेवानन्तर्यकरणम् । नास्य स्वामिन इन्द्रस्य पुरस्ताद्भाविनो विशः कृतत्वात् कृतं भवति ॥ १६ ॥

अथ मारुतमिति । 'अथ' ऐद्रानन्तरं 'मारुतं' मरुद्देवताकं पशुमालभते ॥ १७ ॥

तद्यदिति । तदिदं क्षत्रमुभयतो विशा परिवृढमिति । पूर्वत्र विश्वदेवात्मिकया विशा, उत्तरत्र मरुद्रूपयेति द्रष्टव्यम् ॥ १८ ॥

अथैन्द्राग्नमिति । 'अथ' मारुतानन्तरम् 'ऐन्द्राग्नम्' इन्द्राग्निदेवताकम् ॥ १९ ॥

( तेऽथ ) अथ सावित्रम् । ( ४ ) सविता वै देवानां प्रसविता तथो हास्मा ऽएते सवितृप्रसूता ऽएव सर्वे कामाः समृद्ध्यन्ते ॥ २० ॥

( तेऽथ ) अथ वारुणमन्तत आलभते । तदेनꣳ सर्वस्माद्वरुणपाशात्सर्वस्माद्वरुण्यात्प्रमुञ्चति ॥ २१ ॥

तस्माद्यदि यूपैकादशिनी स्यात् । ( दा ) आग्नेयमेवाग्निष्ठे नियुञ्ज्याद्थेतरान्व्युपनयेयुर्यथापूर्वम् ॥ २२ ॥

यद्यु पश्वेकादशिनी स्यात् । ( दा ) आग्नेयमेव यूप ऽआलभेरन्नथेतरान्यथापूर्वम् ॥ २३ ॥

तान्यत्रोदीचो नयन्ति । ( न्त्या ) आग्नेयमेव प्रथमं नयन्त्यथेतरान्यथापूर्वम् ॥ २४ ॥

---

अथ सावित्रम् । सविता वै देवानां प्रसविता । तथो हास्माऽएते सवितृप्रसूताऽएव सर्वे कामाः समृद्ध्यन्ते ॥ २० ॥

अथ वारुणमन्तत आलभते । तद् एनं सर्वस्माद्वरुणपाशात् सर्वस्माद्वरुण्यात्प्रमुञ्चति ॥ २१ ॥

तस्माद्यदि यूपैकादशिनी स्यात्—आग्नेयमेवाग्निष्ठे नियुञ्ज्याद् । अथेतरान्व्युपनयेयुः—यथापूर्वम् ॥ २२ ॥

यद्यु पश्वेकादशिनी स्यात्—आग्नेयमेव यूपऽआलभेरन् । अथेतरान् यथापूर्वम् ॥ २३ ॥

तान्यत्रोदीचो नयन्ति । आग्नेयमेव प्रथमं नयन्ति । अथेतरान्यथापूर्वम् ॥ २४ ॥

---

अथ सावित्रमिति । आलभते । सावित्रवारुणयोर्ब्राह्मणे स्पष्टे ॥ २० ॥ २१ ॥

तस्माद्यदीति[1] । ' तस्मात् ' पशूनामेकादशत्वात् ' यदि स्यादेकादशिनी ' स्यादेकादशयूपसम्मानम्, तदा प्रतिपशु यूपसम्भवात् ' अग्निष्ठे ' पूर्वेद्युर्निखाते मध्ययूपे ' आग्नेयमेव ' प्रथमं ' पशुं ' नियुञ्जीत, ' अथ ' ' इतरान्' पशून्; ' यथापूर्वं व्युपनयेयुः ' यूपोच्छ्रयणानुक्रमेण प्रतियूपं पृथक् पृथक् नियुञ्जीरन्नित्यर्थः[2] । स च क्रमः—स उत्तरोऽग्निष्ठात् स्यात्, तमेवाग्रे उच्छ्रयेदथ दक्षिणमथोत्तरमित्यादिना प्राङ्निर्दिष्टः ( श. प. ब्रा. ३ । ७ । २ । ९ ) ॥ २२ ॥

यद्यु पश्वेकादशिनीति[3] । ' यद्यु ' यद्यपि ' पश्वेकादशिनी स्यात् ', यूपस्त्वेक एव, तदा ' आग्नेयमेव प्रथमं यूपे आलभेरन् ', ' अथ ' ' इतरान् ' सौम्यादिकान् ' यथापूर्वम् ' तस्मिन्नेकयूपे नियुञ्जीत सञ्ज्ञपनार्थम् ॥ २३ ॥

तान्यत्रोदीचो नयन्तीति । उदङ्ननयनकालेऽपि ' आग्नेयमेव प्रथमं नयेत्, अथेतरान् ' इदानीमुक्तक्रमेण नयेत् ॥ २४ ॥

---

१—पश्वेकादशिनी द्विविधः—प्रतिपशुरूपा एकपशुरूपा च, इत्यादि ८ । ८ । २७ । कात्यायनसूत्रवृत्तौ द्रष्टव्यम् ।

२—एकयूपेपश्वेकादशिन्यामाग्नेयं नियुज्यत तस्मिंस्तस्मिन्नितरानुदीचः । ३—आग्नेयः प्रथमो गच्छत्यन्वारब्धोऽनुपूर्व्या इतरे । का. श्रौ. सू. ८ । २३० । २३१ ।

तान्युत्र निविद्धयन्ति (न्त्या) आग्नेयुमेवु प्रथमं दक्षिणार्द्धर्चे निविध्यन्त्यु- थेतरानुदीचोऽतिनीय यथापूर्वम् ॥ २९ ॥
तेषां युत्र व्वपाभिः प्रचुरन्ति । (न्त्या) आग्नेयुस्यैवु प्रथमुस्य व्वपया प्रचरन्त्यथेतरेषां यथापूर्वम् ॥ २६ ॥
तैर्युत्र प्रचुरन्ति । (न्त्या) आग्नेयेनैवु प्रथमेन प्रचरन्त्यथेतरैर्यथापूर्वम् ॥ २७ ॥

इति सप्तमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ७ । २ ॥ ( ९-१ )

युत्र वै यज्ञस्य शिरोऽच्छिद्यत । तुस्य रसो द्रुत्वापः प्रविवेश तेनैवैतद्र- सेनापः स्यन्दन्ते तुमेवैतद्रसꣳ स्युन्दमानं मन्यन्ते ॥ १ ॥

---

तान्यत्र निविध्यन्ति । आग्नेयमेव प्रथमं दक्षिणार्द्धर्चे निविध्यन्ति । अथेतरानुदीचोऽतिनीय यथापूर्वम् ॥ २९ ॥
तेषां यत्र वपाभिः प्रचरन्ति—आग्नेयस्यैव प्रथमस्य वपया प्रचरन्ति । अथेतरेषां यथापूर्वम् ॥ २६ ॥
तैर्यत्र प्रचरन्ति—आग्नेयेनैव प्रथमेन प्रचरन्ति । अथेतरैर्यथापूर्वम् ॥ २७ ॥

### वसतीवरीग्रहणम् ।

यत्र वै यज्ञस्य शिरोऽच्छिद्यत—तस्य रसो द्रुत्वापः प्रविवेश । तेनैव तद्रसेनापः स्यन्दन्ते, तमेवैतद्रसं स्यन्दमानं मन्यन्ते ॥ १ ॥

---

तान्यत्र निबध्यन्तीति[1] । सञ्ज्ञप्यानयय ' आग्नेयमेव प्रथमं दक्षिणार्द्धर्चे निविद्धयेत, पीडयेत् ॥ २९ ॥
तेषां यत्र वपाभिः प्रचरन्तीति[2] । एवं वपाप्रचारेऽप्याग्नेयस्यैव वपां प्रथमं प्रचरेत् । किं बहुना अङ्गानां यागावसरेऽप्याग्नेयाङ्गानि प्रथमं यजेत्, ' अथेतरेषाम् ' अङ्गानि ' यथापूर्वम् ' ॥ २६ ॥ २७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे नवमाध्याये प्रथमं ब्राह्मणम् ॥ ( ३-९-१ )

अथ सोमाभिषवार्थं वसतीवरीणां ग्रहणं विधातुमाह—यत्र वै यज्ञस्येत्यादि । यस्मिन् काले यज्ञरूपस्य विष्णोः देवतानां यश आहृत्य गतवत्यो वधार्थं देवैः प्रेषिता उपदीका तत्कृतधनुर्ज्याच्छेदनेन तच्छिरः चिच्छिदुः, स कालो " यत्र वै यज्ञस्य "—इत्यनेन परामृश्यते । तत्प्रकारः प्रवर्ग्ये प्रपञ्चितः ( श. प. ब्रा. १४ । १ । १ ) पुरा ' यत्र ' यस्मिन् काले ' यज्ञस्य ' ' शिरः ' ' अच्छिद्यत ' छिन्नमभूत्, तस्मिन् काले छिन्नशिरसो यज्ञस्यरसोऽद्रवत् । ' रसः ' ' द्रुत्वा ' धावित्वा अपः उदकानि 'प्रविवेश', ' तेनैव रसेन ' ' एतत् ' इदानीमपि यथापूर्वमस्यन्दनस्वभावाः ' आपः ' ' स्यन्दन्ते ' । ' तमेव ' छिन्नशिरस्काद् यज्ञादुद्भूतमेव ' रसम् ' इदानीमप्सु ' स्यन्दमानं प्रवहन्तं ' मन्यन्ते ' अभिज्ञाः ॥ १ ॥

---

१—दक्षिणं च निघ्नन्त्येनमुत्तरमुत्तरमितरान् । २—समानमुपप्रेष्य परिपशव्ये संज्ञपयान्वगन् प्रोक्षण्युल्मुकासिशामित्रांतर्द्धानप्रच्छेदस्तोकसंप्रैषशामित्रनुशासनसंवादवनस्पतीस्विष्टकृदिडादिव्याघारणं समासिच्य प्रभूत्वात् । का. श्रौ. सू. ८ । २३२—२३३ ॥

स यद्वसतीवरीरच्छैति । तमेवैतद्रसमाहृत्य यज्ञे दधाति रसवन्तं यज्ञं करोति तस्माद्वसतीवरीरच्छैति ॥ २ ॥

ता वै सर्व्वेषु सवनेषु विभजति । सर्व्वेष्वेवैतत्सवनेषु रसं दधाति सर्व्वाणि सवनानि रसवन्ति करोति तस्मात्सर्वेषु सवनेषु विभजति ॥ ३ ॥

ता वै स्यन्दमानानां गृह्णीयात् । (दै) ऐद्धि स यज्ञस्य रसस्तस्मात्स्यन्दमानानां गृह्णीयात् ॥ ४ ॥

( द्वौ ) गोपीथाय वाऽएता गृह्यन्ते । सर्व्वं वाऽइदमन्यदिलयति यदिदं किञ्चापि योऽयं पवतेऽथैता एव नेलयन्ति तस्मात्स्यन्दमानानां गृह्णीयात् ॥ ५ ॥

---

स यद्वसतीवरीरच्छैति—तमेवैतद्रसमाहृत्य यज्ञे दधाति, रसवन्तं यज्ञं करोति । तस्माद्वसतीवरीरच्छैति ॥ २ ॥

ता वै सर्वेषु सवनेषु विभजति—सर्वेष्वेवैतत्सवनेषु रसं दधाति। सर्वाणि सवनानि रसवन्ति करोति। तस्मात्सर्वेषु सवनेषु विभजति ॥ ३ ॥

ता वै स्यन्दमानानां गृह्णीयात् । ऐद्धि स यज्ञस्य रसः । तस्मात् स्यन्दमानानां गृह्णीयात् ॥४॥

गोपीथाय वाऽएता गृह्यन्ते । सर्वं वाऽइदमन्यदिलयति—यदिदं किंचापि योऽयं पवते । अथैता एव नेलयन्ति । तस्मात्स्यन्दमानानां गृह्णीयात् ॥ ५ ॥

---

अथ वसतीवरीग्रहणं विधत्ते—स यद् वसतीवरीरच्छैतीति 'अच्छैति' अभिमुखं गच्छति 'तमेव रसं पुनराहृत्य यज्ञे सन्दधाति' वसतीवरीग्रहणकालः सूत्रे उक्तः—"अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणम्" (का. श्रौ सू. ८ । २४८ ) इति ॥ २ ॥

गृहीतानां सवनत्रयार्थं विभागमाह—ता वै सर्वेषु सवनेषु विभजतीति ॥ ३ ॥

गृहीतव्यानि उदकानि विशिनष्टि—ता वै स्यन्दमानानामिति (का. श्रौ. सू. ८ । २४८) 'हि' यस्मात् 'स' यज्ञरसः 'ऐत्' अस्रवत्, अथ ततो गच्छन्तीनामेवापां सम्बन्धिनीः 'गृह्णीयात्' ॥ ४ ॥

स्यन्दमानग्रहणे उपपत्त्यन्तरमाह—गोपीथाय वा इत्यादि । यज्ञरसानाम् 'अन्यत्' प्रवाहोदकव्यतिरिक्तं 'सर्वम्' 'इलयति' इतस्ततश्चलति । 'इदं' शब्दार्थं विशिनष्टि—यदिदं किञ्चेति । 'यत् किञ्च' 'इदं' परिदृश्यमानं जगत् । इदं शब्दोक्तानां मध्ये प्रसिद्धं किञ्चिदिहोदाहरति—अपि योऽयं पवत इति । 'योऽयं' वायुः 'पवते' गच्छति, सोऽपि नियतचलनवान् । 'एता एव' 'नेलयन्ति' न प्रतिनिर्वर्त्तन्ते । यद्यपि स्यन्दमानानामितरेषां च पदार्थानां चलनं साधारणम्, तथापि स्यन्दमानानां व्यावृत्तेरपेक्षितत्वादिलनमितस्ततश्चलनं विवक्षितम् । 'स्यन्दमानानाम्' एकरूपेण प्रवहन्तीनामपां तथाविधचाञ्चल्याभावात् 'गोपीथाय स्यन्दमाना गृह्णीयात्' ॥ ५ ॥

---

१—स्यंदमानानामनस्तमिते । का.श्रौ. सू. । ८।२४८। २—'विवर्तन्ते' इति 'विवर्तते—' इति च क० पा० ।

(द्वि) दिवा गृह्णीयात् । (त्पु) पश्यन्यज्ञस्य रसं गृह्णानीति तस्माद्दिवा गृह्णीयादेतस्मै वै गृह्णाति य एष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवास्तस्माद्दिवा गृह्णीयाद्दिवेव वा एष तस्माद्धेव दिवा गृह्णीयात् ॥ ६ ॥

(दे) एतद्ध वै विश्वे देवाः । (वा) यजमानस्य गृहानागच्छन्ति स यः पुरादित्यस्यास्तमयाद्वसतीवरीर्गृह्णाति यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीतैवं तत्तऽएतद्धविः प्रविशन्ति तऽएतासु वसतीवरीषूपवसन्ति स ऽउपवसथः ॥ ७ ॥

स यस्या गृहीता अभ्यस्तमियात् । (त्तु) तत्र प्रायश्चित्तिः क्रियते यदि

---

दिवा गृह्णीयात् पश्यन् यज्ञस्य रसं गृह्णानीति । तस्माद् दिवा गृह्णीयाद् एतस्मै वै गृह्णाति य एष तपति । विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवाः । तस्माद्दिवा गृह्णीयात् । दिवेव वा एषः । तस्माद्धेव दिवा गृह्णीयात् ॥ ६ ॥

एतद्ध वै विश्वे देवा यजमानस्य गृहानागच्छन्ति । स यः पुरादित्यस्यास्तमयाद्वसतीवरीर्गृह्णाति–यथा श्रेयस्यागमिष्यत्यावसथेनोपक्लृप्तेनोपासीत–एवं तत् । तऽएतद्धविः प्रविशन्ति । तऽएतासु वसतीवरीषूपवसन्ति । स उपवसथः ॥ ७ ॥

स यस्या गृहीता अभ्यस्तमियात्–तत्र प्रायश्चित्तिः क्रियते । यदि पुरेजानः स्यात्–निनाह्याद्-

---

दिवा गृह्णीयादिति । दिवाग्रहणस्याभिप्रायमाह–पश्यन् यज्ञस्य रसं गृह्णातीति । दर्शनपूर्वकग्रहणे सति यज्ञरसस्य परिज्ञातत्वात् तथाविधाभिरद्भिः क्रियमाणोऽभिषवः साङ्गो भवतीत्यभिप्रायः । दिवाग्रहणस्य प्रयोजनान्तरमाह–एतस्मै वै गृह्णाति य एष तपतीति । कथमेतदर्थतेति तत्र हेतुमाह–विश्वेभ्यो ह्येना देवेभ्यो गृह्णातीति । हि यस्माद् विश्वेभ्यो देवेभ्यो गृह्णाति तस्मादेतस्मै गृह्णाति । तेषामत्र कथं सम्भावनेति तत्राह–रश्मयो ह्यस्य विश्वे देवा इति । सूर्यस्य[1] चन्द्रवद्विभूतिरूपाणां विश्वेषां देवानां रश्म्यात्मनावस्थानादित्यभिप्रायः । अतो रश्मिरूपाणां विश्वेषां देवानाम्, तदधिपतेः सवितुश्च दिवैव सम्भवाद् दिवैव गृह्णीयादित्यर्थः । किञ्चैष आदित्यो दिवैव प्रकाशमनो भवति, तस्मादपि दिवैव गृह्णीयात् ॥ ६ ॥

अस्तमयात् पूर्वकालीनं ग्रहणं प्रशंसति । एतद्ध वा इत्यादि । अग्नीषोमीयेऽहनि रात्रौ विश्वेषां देवानां प्रातर्यष्टव्यत्वात्, तत्पूर्वम् यजमानगृहं प्रत्यागमनसंभवात् । श्रेयस्यागमिष्यतीति । यथा लोके गुर्वादेः पूज्यस्यागमनात्पूर्वम् । ‘उपक्लृप्तेन’ सम्पन्नेनैव ‘आवसथेन’ आवसथमावासस्थानम्, तत्तदादिकं सर्वं यज्ञोपकरणमुपलक्ष्यते, तत्संस्करोति, तेन सत्कारोचितेन पूजोपकरणेन सम्भावयति । ‘एतद्धह वै’ एतत् खलु अतिथिभूतानां विश्वेषां देवानामागमनात् पूर्वं यदि चैव ग्रहणमस्ति, ‘तत्’ तत्स्थानीयमित्यर्थः । शब्दनिर्वचनं दर्शयति–एतद्धविः प्रविशन्तीति । सोमरसेष्वनुप्रवेशाद्धविः सम्पद्यते । प्रसङ्गादुपवसथशब्दनिर्वचनं दर्शयति–त एतासु वसतीवरीषूपवसन्तीति । उपवसन्त्यासु वसतीवरीषु देवा अस्मिन् काले इत्युपवसथः, उपवासकाल इत्यर्थः ॥ ७ ॥

वसतीवरीग्रहणात्प्रागस्तमये सति तद्ग्रहणोपायमाह–स यस्या गृहीता अभ्यस्तमियात्, तत्र प्रायश्चित्तिः

---

१–‘सूर्यस्यैवेन्द्रत्वात्तद्विभूतीनां’ इ. पा. ।

पुरेजानः स्यान्निनाह्याद्गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीताभवन्ति यद्युऽअनीजानः स्याद्य एनमीजान उपावसितो वा पर्य्यवसितो वा स्यात्तस्य निनाह्याद् गृह्णीयाद्दिवा हि तस्य ताः पुरा गृहीता भवन्ति ॥८॥

यद्युऽएतदुभयं न विन्देत् । ( दु ) उल्कुषीमेवादायोपपरेयात्तामुपर्य्युपरि धारयन्गृह्णीयाद्धिरण्यं वोपर्य्युपरि धारयन्गृह्णीयात्तदेतस्य रूपं क्रियते य एष तपति ॥ ९ ॥

( त्य ) अथातो गृह्णात्येव । हविष्मतीरिमा ऽआप इति यज्ञस्य ह्यासु रसः प्राविशत्तस्मादाह हविष्मतीरिमा आप इति हविष्माँ३ऽआविवासतीति हविष्मान्ह्येना यजमान आविवासति तस्मादाह हविष्माँ३ऽआविवासतीति ॥ १० ॥

---

गृह्णीयात् । दिवा हि तस्य ताः पुरा गृहीता भवन्ति । यद्युऽअनीजानः स्याद्—य एनमीजान उपावसितो वा पर्यवसितो वा स्यात्—तस्य निनाह्याद् गृह्णीयाद् । दिवा हि तस्य ताः पुरा गृहीता भवन्ति॥८॥

यद्युऽएतदुभयं न विन्देत्—उल्कुषीमेवादायोपपरेयात् । तामुपर्युपरि धारयन् गृह्णीयात् । हिरण्यं वोपर्युपरि धारयन् गृह्णीयात् । तदेतस्य रूपं क्रियते—य एष तपति ॥ ९ ॥

अथातो गृह्णात्येव—" हविष्मतीरिमा आपः "—( वा. सं. ६ । २३ । )—इति । यज्ञस्य ह्यासु रसः प्राविशत्—तस्मादाह—हविष्मतीरिमा आप इति । " हविष्माँ ३ आविवासति "—( वा.

---

क्रियत इति । प्रायश्चित्तिभिर्दिवाग्रहणाकरणे दोषस्पर्शाभावोपायः क्रियत इत्यर्थः । तत्प्रकारः प्रदर्श्यते—यदीति । स यजमानो ' यदि ' ' पुरेजानः , इष्टप्रथमसोमयागः ' स्यात् ' स ' निनाह्यात् ' स्वगृहस्थितप्रभूतघटादेः सकाशात् ' गृह्णीयात् ' ' ताः ' आपः ' पुरा ' अस्तमयात् पूर्वं तस्य ' गृहीता भवन्ति '; प्रथमानुष्ठानेऽस्तमयात् पुरा गृहीतत्वादित्यभिप्रायः[1] । स्वयम् ' अनीजानः ' चेद् , ' यः ' ' एनं ' यजमानम् ' ईजानः ' इष्टवान्, अन्यः ' उपावसितः ' समीपे गृहे अवस्थितः, ' पर्यवसितो वा ' दूरगृहस्थितो वा ईजानः ' स्यात् ' ' तस्य ' ' निनाह्याद् ' घटादेः सकाशाद् ' गृह्णीयात् ' । एवं सति ताः पुरा दिवा परिगृहीता भवन्ति । " ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात् "—( तै. सं. ६।४।२।२ ) इति श्रुत्यन्तरम् ॥ ८ ॥

तदुभयासम्भवे आह—यद्यु एतदुभयं न विन्देदित्यादिना । ' उल्कुषीम् ' उल्कामित्यर्थः । ' एतस्य ' इत्यस्य व्याख्यानम्—य एष तपतीति । उल्काया हिरण्यस्य च सूर्यवर्णसाम्यात्तद्रूपकरणम् । अत्र सूत्रम्—" अस्तमितश्चेत् निनाह्यात् पुरेजानश्चेत् । अनीजानोऽन्यस्यापि समीपवासितस्य पुरेजानस्य । उभयाभावऽउल्कुषीᳬ हिरण्यं वोपर्युपरि धारयन् हविष्मतीरित्यनेन मंत्रेण गृह्णाति[2] " ( का. श्रौ. सू. २४९—२९१ ) इति ॥ ९ ॥

ग्रहणस्य मन्त्रं विधत्ते—अथातो गृह्णात्येव हविष्मतीरिमा आप इति । ' इमाः ' गृह्यमाणाः ' आपः '

---

१—' उपवसितः ' इ. क. पा. । २—अस्तमितश्चेन्निनाह्यात्पुरेजानश्चेत् । का. श्रौ. सू. ८ । २४९ । निनाह्यो मणिक इति कर्कः ।

हविष्मान्देवो ऽअध्वर इति । ( त्य ) अध्वरो वै यज्ञस्तद्यस्मै यज्ञाय गृह्णाति तछं हविष्मन्तं करोति तस्मादाह हविष्मान्देवो ऽअध्वर इति॥ ११॥

हविष्माँ३ऽअस्तु सूर्य इति । ( त्ये ) एतस्मै वै गृह्णाति य एष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति रश्मयो ह्यस्य विश्वे देवास्तस्मादाह हविष्माँ३ ऽअस्तु सर्य इति ॥ १२ ॥

ता आहृत्य जघनेन गार्हपत्यछं सादयति । ( त्य ) अग्नेर्व्वोऽपन्नगृहस्य सदसि सादयामीत्यग्नेर्व्वोऽनार्त्तगृहस्य सदसि सादयामीत्येवैतदाहाथ यदाग्नीषोमीयः पशुः सन्तिष्ठतेऽथ परिहरति व्युत्क्रामतेत्याहाग्रेण हविर्द्धाने यजमान आस्ते ता आदत्ते ॥ १३ ॥

---

सं. ६ । २३ ) इति । हविष्मान् ह्येना यजमान आविवासति । तस्मादाह—हविष्माँ३ आविवासतीति ॥ १० ॥

"हविष्मान् देवोऽअध्वरः"—( वा. सं. ६ । २३ ) इति । अध्वरो वै यज्ञः । तद्यस्मै यज्ञाय गृह्णाति—तं हविष्मन्तं करोति । तस्मादाह—हविष्मान् देवो अध्वर इति ॥ ११ ॥

"हविष्माँ ३ ऽअस्तु सूर्यः"—( वा. सं. ६ । २३ ) इति । एतस्मै वै गृह्णाति; य एष तपति विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति । रश्मयो ह्यस्य विश्वे देवाः । तस्मादाह—हविष्माँ ३ ऽअस्तु सूर्य इति ॥ १२ ॥

ता आहृत्य जघनेन गार्हपत्यं सादयति—"अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि"—( वा. सं. ६ । २४ ) इति । अग्नेर्वोऽनार्तगृहस्य सदसि सादयामीत्येवैतदाह । अथ यदाग्नीषोमीयः पशुः सन्तिष्ठते—अथ परिहरति व्युत्क्रामतेत्याह । अग्रेण हविर्द्धाने यजमान आस्ते । ता आदत्ते॥ १३॥

---

'हविष्मतीः' अभिषूयमाणेन सोमरूपान्नेन हविषा, स्वासु प्रविष्टेन यज्ञरसरूपेण हविषा वा तद्वत्यः । एताभिर्निष्पन्नेन सोमेन हविषा 'हविष्मान्', 'यजमानः' 'आविवासति' परिचरति एता वसतीवरीः ॥ १० ॥

हविष्मान् देवो अध्वर इतीति । 'देवः' द्योतमानः 'अध्वरः' हिंसारहितः 'यज्ञः' गृह्यमाणैर्वसतीवरीलक्षणैर्हविर्भिः 'हविष्मान्' भवति ॥ ११ ॥

हविष्माँ ३ ऽअस्तु सूर्य इतीति । ग्रहणस्य विश्वेदेवार्थत्वात्, विश्वेषां देवानां रश्मिरूपत्वात्, तद्वान् सूर्योऽपि गृह्यमाणैर्वसतीवरीलक्षणैर्हविर्भिर्हविष्मान् भवति । मन्त्रं प्रतिपादं विभज्य व्याचष्टे—हविष्मतीरिमा आप इति यज्ञस्य ह्यासु रसः प्राविशत् तस्मादाह हविष्मतीरित्यादिना । 'आसु' अप्सु ॥ १२ ॥

आहृतानामपां गार्हपत्यस्य पश्चाद्भागे सादनं तन्मन्त्रं च विधत्ते—ता ओहृत्येति । अग्नेर्वोऽपन्नगृहस्येति । 'अपन्नगृहस्य' अपतितगृहस्य, अशीर्णगृहस्येत्यर्थः । तस्य 'अग्नेः' 'सदसि' स्थाने 'सादयामि' ।

---

१—अग्नेर्व्व इति निदधाति शालाद्वार्यमपरेण । का. श्रौ. सू. । ८ । २५२ ।

स दक्षिणेन निष्क्रामति । ता दक्षिणायाᳪं श्रोणौ सादयतीन्द्राग्न्योर्भागधेयी स्थेति विश्वेभ्यो ह्येना देवेभ्यो गृह्णातीन्द्राग्नी हि विश्वे देवास्ताः पुनराहृत्याग्रेण पत्नीᳪं सादयति स जघनेन पत्नीं पर्य्येत्य ता आदत्ते ॥१४॥
स उत्तरेण निष्क्रामति । ता उत्तरायाᳪं श्रोणौ सादयति मित्रावरुणयोर्भागधेयी स्थेति नैवᳪं सादयेदतिरिक्तमेतन्नैवᳪं सम्पत्सम्पद्यत ऽइन्द्राग्न्योर्भागधेयी स्थेत्येव ब्रूयात्तदेवानतिरिक्तं तथा सम्पत्सम्पद्यते ॥ १५ ॥

स दक्षिणेन निष्क्रामति । ता दक्षिणायां श्रोणौ सादयति । "इन्द्राग्न्योर्भागधेयी स्थ"– ( वा, सं. ६ । २४ ) इति । विश्वेभ्यो ह्येना देवेभ्यो गृह्णाति । इन्द्राग्नी हि विश्वे देवाः । ताः पुनराहृत्याग्रेण पत्नीं सादयति । स जघनेन पत्नीं पर्येत्य ता आदत्ते ॥ १४ ॥
स उत्तरेण निष्क्रामति । ता उत्तरायां श्रोणौ सादयति । "मित्रावरुणयोर्भागधेयी स्थ"– ( वा. सं. ६ । २४ ) इति । नैवं सादयेत् । अतिरिक्तमेतत् । नैवं सम्पत्सम्पद्यते । इन्द्राग्न्योर्भागधेयी स्थेत्येव ब्रूयात् । तदेवानतिरिक्तम् । तथा सम्पत्सम्पद्यते ॥ १५ ॥

'अथ यदाग्नीषोमीयः पशुः सन्तिष्ठते' पत्नीसंयाजान्तः समाप्तो भवति । 'अथ' तदा 'परिहरति' वसतीवरीर्वेदेः परितो नयेत् । वेदिमध्ये स्थिता दीक्षिताः ! 'व्युत्क्रामत' 'इत्याह' अध्वर्युस्त्रिर्ब्रूयात् "व्युत्क्रामतेत्याह त्रिः"" इति कात्यायनः । 'हविर्द्धाने' हविर्द्धानस्य पुरोदेशे 'यजमानः आस्ते' । "उत्तरवेदिमपरेण यजमान उपस्थे सोमं कृत्वा"–( का. श्रौ. सू. ८ । २५६ ) इति सूत्रम् ॥ १३ ॥
स दक्षिणेन निष्क्रामतीति । अथ 'ताः' अध्वर्युरादाय, 'दक्षिणेन' द्वारेण प्राग्वंशान्निष्क्रम्य उत्तरवेद्या दक्षिणश्रोणौ 'सादयति' "इन्द्राग्न्योर्भागधेयी स्थ"–' इति ' भागधेय्यौ । मन्त्रं व्याचष्टे–विश्वेभ्यो ह्येना इति । "ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवताः" इति हि तैत्तिरीयकश्रुतिः ( तै॰ सं॰ १ । ८ । १ । साय. भा. ) अत्रैव काण्डे–"देवानामुह स्म दीक्षितानाम्"–( श. ब्रा. ३ कां. ४ अ. ३ ब्रा. ६ कं. ) इत्यत्र "ते विदुरयं वै नो विरक्षस्तमोऽस्यैव रूपमसाम" ( श. ब्रा. ३ कां. ४ अ. ३ ब्रा. ८ कं. ) इति देवानामग्निरूपधारणसाधारण्यस्योक्तत्वाच्चाग्नेः सर्वदेवमयत्वम् । इन्द्रस्य तु देवाधिपतित्वं प्रसिद्धम् । अत इन्द्राग्न्योर्भागधेयी स्थेत्यभिधानम् ॥
ताः पुनराहृत्याग्रेण पत्नीं सादयतीति । पत्न्याः पश्चाद्देशेन 'पर्येत्य' पत्न्याः पुरोदेशेऽवस्थिताः 'ताः' वसतीवरीः 'आदत्ते' ( का. श्रौ. सू. ८ । २६० । २६१ ) ॥ १४ ॥
आदाय, 'उत्तरेण' मार्गेण 'निष्क्रामति' । निष्क्रम्य, उत्तरवेदेरुत्तरश्रोणौ सादयेत् । उत्तरश्रोणौ सादने कश्चिन्मन्त्रं निर्दिश्य तस्य वक्ष्यमाणसम्पदतिरेकेण प्रातिकूल्यमभिधाय, दक्षिणवेदिश्रोणिसादनमन्त्रमेव सम्पदनुकूलत्वात् सिद्धान्तयति–मित्रावरुणयोर्भागधेयी स्थेति नैवं सादयेदित्यादिना । 'एवं' यस्मादयं मन्त्रः 'अतिरिक्तः' अधिकः, अतो वक्ष्यमाणा सप्तपदोपेतशक्वरीच्छन्दःप्राप्तिलक्षणा 'सम्पत्' 'न सम्पद्यते' "इन्द्राग्न्योः"–इत्यनेनैव चेदनतिरेकात् सम्पद्यते ॥ १५ ॥

१–शालाद्वार्यमपरेण व्वसतीवरीः परिहरति । २–दक्षिणाग्निहोमान्तमग्नीषोमीयमस्तमितेस ९ स्थाप्य व्युत्क्रामतेत्याह त्रिः । ३–निर्हृत्यदक्षिणस्यामुत्तरवेदिश्रोणौ निदधातींद्राग्न्योः । ४–आहृत्य स्थाने निदधाति । का. श्रौ. सू. ८।२५५–२५९। ५–कलशं पत्न्या लभते । उत्तरेण परिक्रम्यात्तरस्यांपूर्व्ववत् । का. श्रौ. सू. ८।२६०।२६१। ६–मित्रावरुणयोरिति वा । का. श्रौ. सू. ८।२६२।

गुप्त्यै वा ऽएताः परिह्वियन्ते । ( न्तेऽग्निः ) अग्निः पुरस्तादथैताः समन्तं पल्यङ्ङ्चन्ते नाष्ट्रा रक्षाꣳस्यपघ्नत्यस्ता आग्नीध्रे सादयति विश्वेषां देवानां भागधेयी स्थेति तदासु विश्वान्देवान्त्संवेशयत्येते वै वसतां वरं तस्माद्वसतीवर्यो नाम वसताꣳ ह वै वरं भवति य एवमेतद्वेद ॥ १६ ॥

तानि वा ऽएतानि सप्त यजूꣳषि भवन्ति । चतुर्भिर्गृह्णात्येकेन जघनेन गार्हपत्यꣳसादयत्येकेन परिहरत्येकेनाग्नीध्रे तानि सप्त यत्र वै वाचः प्रजातानि छन्दाꣳसि सप्तपदा वै तेषां पराद्ध्यां शक्वर्येतामभिसम्पदं तस्मात्सप्त यजूꣳषि भवन्ति ॥ १७ ॥

इति सप्तमप्रपाठके तृतीयं ब्राह्मणम् ॥ ७ ॥ ३ ॥ ( ९. २ )

---

गुप्त्यै वाऽएताः परिह्वियन्ते । अग्निः पुरस्तात् । अथैताः समन्तं पल्यङ्ङ्चन्ते नाष्ट्रा रक्षांस्यपघ्नत्यः । ता आग्नीध्रे सादयति । " विश्वेषां देवानां भागधेयी स्थ "–( वा. सं. ६ । २४ ) इति । तदासु विश्वान् देवान्त्संवेशयति । एते वै वसतां वरम् । तस्माद्वसतीवर्यो नाम । वसतां ह वै वरं भवति । य एवमेतद्वेद ॥ १६ ॥

तानि वाऽएतानि सप्त यजूंषि भवन्ति । चतुर्भिर्गृह्णाति, एकेन जघनेन गार्हपत्यं सादयति, एकेन परिहरति, एकेनाग्नीध्रे । तानि सप्त । यत्र वै वाचः प्रजातानि छन्दांसि । सप्तपदा वै तेषां पराद्ध्यां शक्वरी एतामभिसम्पदम् । तस्मात्सप्त यजूंषि भवन्ति ॥ १७ ॥

---

सर्वतः परिहरणमुत्तरवेदेरपरिहरणञ्च प्रशंसति–गुप्त्यै वा एताः परिह्वियन्त इति । अपां वज्रत्वेन रक्षोविघातकत्वात् सर्वतः परिहरणेन यज्ञस्य रक्षस्सकाशात् सर्वतो गुप्तिर्भवति । साक्षाद्रक्षोद्वेषिणोऽग्नेः पुरस्ताद् वर्त्तमानत्वान्न तदपेक्षा, पुरस्तात् परिहारापेक्षा नास्ति । 'पल्यङ्ङ्चन्ते' परितोऽङ्चयन्ते, ह्वियन्त इत्यर्थः । 'ता आग्नीध्रे' इति । उत्तरश्रोणितश्चादाय आग्नीध्रमण्डपे " विश्वेषां देवानामिति " मन्त्रेण सादयेत् । 'तत्' तेन, " विश्वेषां देवानाम् "–इति मन्त्रपाठेन । संवेशनप्रसङ्गाद् वसतीवरीशब्दं निर्वक्ति–एते वै वसतां वरं तस्माद् वसतीवर्यो नामेति । 'वसतां' क्वचित् क्वचित् स्थानेषु निवसतां मध्ये 'एते' खलु देवाः 'वरम्' एतेषां वासो वरं श्रेष्ठ इत्यर्थः । वसतां देवानां श्रेष्ठत्वापादकत्वाद् वसतीवर्य इति नाम निष्पन्नम् । यद्वा एतेषु 'एताः' आपः 'वसतां' विश्वेषां देवानां 'वरम्' उत्कृष्टं स्थानमिति वसतीवर्य इति नाम । उक्तार्थज्ञं प्रशंसति–वसतां ह वै वरं भवतीति ॥ १६ ॥

वसतीवरीग्रहणप्रभृतीनामाग्नीध्रसादनान्तानां मन्त्राणां या सप्तसङ्ख्या, तां शक्वरीत्वसम्पत्त्या प्रशंसति–तानि वा एतानि सप्त यजूंषीत्यादिना । चतुर्भिर्गृह्णातीत्यादि । सङ्ख्याविभागस्तु स्पष्ट एव । यत्र वै वाचः प्रजातानि छन्दांसीति । वाचः सकाशाच्छन्दसामुत्पत्तिः सोमाहरणप्रस्तावे " वागेव सुपर्णी "–इत्युक्त्वा

---

१–विश्वेषां देवानामित्यग्नीध्रे । का. श्रौ. सू. ८ । २६३ ।

तान्त्सम्प्रबोधयन्ति । तेऽप उपस्पृश्याग्नीध्रमुपसमायन्ति त ऽआज्यानि गृह्णते गृहीत्वाज्यान्यायन्त्यासाद्याज्यानि ॥ १ ॥

( न्यु ) अथ राजानमुपावहरति । ( ती ) इयं वै प्रतिष्ठा जनूरासां प्रजानामिमामेवैतत्प्रतिष्ठामभ्युपावहरति तमस्यै तनुते तमस्यै जनयति ॥ २ ॥

( त्यु ) अन्तरेणेषेऽउपावहरति । यज्ञो वा ऽअनस्तन्न्वेव यज्ञान्न बहिर्द्धा करोति ग्रावसु सम्मुखेष्वधिनिदधाति क्षत्रं वै सोमो विशो ग्रावाणः क्षत्रमे-

तान्त्सम्प्रबोधयन्ति । तेऽप उपस्पृश्याग्नीद्ध्रमुपसमायन्ति । तऽआज्यानि गृह्णते । गृहीत्वाज्यान्यायन्ति । आसाद्याज्यानि ॥ १ ॥

अथ राजानमुपावहराति । इयं वै प्रतिष्ठा जनूरासां प्रजानाम् । इमामेवैतत् प्रतिष्ठामभ्युपावहरति । तमस्यै तनुते । तमस्यै जनयति ॥ २ ॥

अन्तरेणेषेऽउपावहरति । यज्ञो वाऽअनः । तन्वेव यज्ञान्न बहिर्द्धा करोति । ग्रावसु सम्मुखेष्वधि-

" तथेति सा छन्दांसि ससृजे "–( श. प. ब्रा. ३ । ६ । २ । २–८ ) । इति प्राक् प्रतिपादिता । 'तेषां' मध्ये ' पराार्ध्या ' परार्द्धे भवा श्रेष्ठा ' शक्करी ' सप्तपदा सप्तभिः पादैरुपेता । परार्द्ध्यत्वं प्रधानभूतानां सप्तच्छंदसामुपरि भावित्वम् । एतां संख्याद्वारा शक्करीप्राप्तिलक्षणां संपदमभिलक्ष्य सप्त मंत्राः कृता भवंति । तस्मात्सप्तेति निगमनम् । एतामेव संपदमभिप्रेत्य प्राक्सम्पत्तिः- सप्तपदसद्भावरूपा ऋक् निर्वृत्ता ॥ १७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे नवमाध्याये तृतीयं ब्राह्मणम् ॥ ( ३–९–३ ) ॥

अथ सुत्यादिवसे प्रातःकालीनं सवनीयपश्वर्थं प्रयोगमाह–तान्त्सम्प्रबोधयन्तीत्यादिना । 'तान्' ऋत्विजः रात्रेरपरभागे प्रबोधयेयुरध्वर्यवः । " अपररात्रे ऋत्विजः प्रबोधयन्ति "–( का. श्रौ. सू. ९ । १ ) इति सूत्रम् । उदकोपस्पर्शनं विहितकर्मण उपलक्षणम् । गृहीत्वाज्यान्यायन्तीति । उत्तरवेदिसमीपम् । अत्र प्रयोग उक्तः सूत्रे–"अप उपस्पृश्य शालाद्वार्ये परिस्तरणपात्रसंसादनप्रोक्षणाज्यानिर्वपणाधिश्रयणस्रुक्सम्मार्जनोद्वासनावेक्षणानि कृत्वाग्नीध्र उत्पूय पश्वाज्यग्रहणम्, आज्यान्यादाय सोमं चार्थवद्वाहवनीय इध्मप्रोक्षणादि करोति, अग्नीषोमीयवत् स्तरणम्, आज्यासादनात् कृत्वेषान्तरेणार्द्धसोममद्रिषु सम्मुखेषु निदधाति हृदे त्वेति "–( का. श्रौ. सू. ९ । २–५ ) इति ॥ १ ॥

तदिदं सोमोपावहरणं समन्त्रकं विधत्ते–अथ राजानमुपावहरतीति । अधिषवणचर्म्मोपरिप्रदेशं प्रति अधो नयेत् । अधःप्रापणं प्रशंसति–इयं वै प्रतिष्ठा जनूरिति । ' आसाम् ' उत्पत्तिमतीनां सर्वासां परिदृश्यमानानां ' प्रजानाम् ' ' इयं ' खलु भूमिः ' प्रतिष्ठा ' । अस्य इदं ' जनूः ' जन्मभूमिः । अस्यापि प्रजान्तःपातित्वात् ' इमां ' ' प्रतिष्ठाम् ' ' अभि ' लक्ष्य ' एव ' ' उपावहरति ' उपावहरणं कृतवान् भवति । तथा सति ' तं ' सोमम् ' अस्यै ' अस्याः सकाशात् ' तनुते ' विस्तारितवान् भवति, ' अस्यै ' अस्याः सकाशात् उत्पादितवांश्च भवति ॥ २ ॥

उपावहरणमार्गमाह–अन्तरेणेष इति । ' ईषे ' आयतौ शकटदण्डौ । यज्ञसाधनसोमाश्रयत्वात् ' अनसः '

१–" असूर्या उपसूर्ये " इत्यादिमन्त्र इहाधिकः संहितायाम् । २–' आयत्यै ' इति क. पा. ।

वैतद्विश्यध्यूहति तद्युत्सम्मुखा भवन्ति विशमेवैतत्सम्मुखां क्षत्रियमभ्यविवादिनीं करोति तस्मात्सम्मुखा भवन्ति ॥ ३ ॥

स उपावहरति। हृदे त्वा मनसे त्वेति यजमानस्यैतत्कामायाह हृदयेन हि मनसा यजमानस्तं कामं कामयते यत्काम्या यजते तस्मादाह हृदे त्वा मनसे त्वेति ॥ ४ ॥

दिवे त्वा सूर्याय त्वेति। देवलोकाय त्वेत्येवैतदाह यदाह दिवे त्वेति सूर्याय त्वेति देवेभ्यस्त्वेत्येवैतदाहोर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छेत्यध्वरो वै यज्ञ ऊर्ध्वमिमं यज्ञं दिवि देवेषु धेहीत्येवैतदाह ॥ ५ ॥

---

निदधाति। क्षत्रं वै सोमः। विशो ग्रावाणः। क्षत्रमेवैतद् विश्यध्यूहति। तद्यत्सम्मुखा भवन्ति—विशमेवैतत्ससुखां क्षत्रियमभ्यविवादनीं करोति। तस्मात्सम्मुखा भवन्ति ॥ ३ ॥

स उपावहराति। "हृदे त्वा मनसे त्वा"—(वा. सं. ६। २५।) इति। यजमानस्यैतत्कामायाह। हृदयेन हि मनसा यजमानस्तं कामं कामयते—यत्काम्या यजते। तस्मादाह—हृदे त्वा मनसे त्वेति ॥ ४ ॥

"दिवे त्वा सूर्याय त्वा"—(वा. सं. ६। २५) इति। देवलोकाय त्वेत्येवैतदाह—यदाह—दिवे त्वेति। सूर्याय त्वेति। देवेभ्यस्त्वेत्येवैतदाह—ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छेति। अध्वरो वै यज्ञः। ऊर्ध्वमिमं यज्ञं दिवि देवेषु धेहीत्येवैतदाह ॥ ५ ॥

---

शकटस्य यज्ञत्वम्। तयोरन्तरालादधः सुप्त्वावरोहणेन 'यज्ञाद्' हविर्द्धानाद् बाह्यं न कृतवान् भवति। ग्राव्णां मध्ये स्थापनं विधाय प्रशंसति—ग्रावसु सम्मुखेष्विति। सोमस्य वेदेषु क्षत्रियजातित्वमसकृदुक्तम्; ग्राव्णां तु बहुत्वात् शेषत्वेनोपसर्जनत्वाच्च विशो रूपत्वम्। मध्ये स्थापनेन यत् सर्वग्रावसाम्मुख्यम्, तत् प्रशंसति—तद्यत्सम्मुखा भवन्तीति। 'क्षत्रियम्' क्षत्रियजातिं 'अभि'—लक्ष्य विशेषम् 'अविवादिनीम्' अविवादनशीलां 'करोति' ॥ ३ ॥

उपावहरणप्रकारमभिधायोपावहरणे मन्त्रमाह—स उपावहरति हृदे त्वा मनसे त्वेति—(का. श्रौ. सू. ९। ५)। हे सोम! त्वां 'हृदे' हरति। दूरस्थं विषयमिति विषयाभिमुखं स्वोपहितमात्मानं हरतीति वा। हृदयमन्तःकरणम्, तद्विशेषरूपं सङ्कल्पविकल्पात्मकं मनः, यजमानसम्बन्धिनोस्तयोरुभयोर्विषयोऽयं कामः, तस्य लाभार्थम् 'उपावहरामि'। कर्मकारकस्य द्विराम्नानादुपावहरामीति द्विरभ्यासः; अतो वाक्यद्वयम्; न व्याख्यान व्याख्येयभावः ॥ ४ ॥

तथा 'दिवे' देवलोकाय त्वाम्। 'सूर्याय त्वा' एतद्रश्मिभूतानां देवानामुपलक्षणम्। सर्वत्रोपावहरामीति योज्यम्। किञ्च हे सोम! 'ऊर्ध्वम्' उपरि, तायमानत्वेनोन्नतम्, 'इमं' सोमयागं 'दिवि' द्युलोके 'देवेषु' 'यच्छ'; 'होत्राः' होत्रकाश्च देवेषु यच्छन्त्वित्यर्थः ॥ ५ ॥

---

१—आज्यासादनात् कृत्वेषान्तरेणार्धसोममद्रिषु संमुखेषु निदधाति हृदे त्वेति। इति।

सोम॒ राज॑न्विश्वा॒स्त्वं प्र॒जा उ॑पा॒वरो॒हेति । तदे॑नमा॒सां प्र॒जाना॑मा॒धिप॑त्याय राज्या॑योपा॒वह॑रति ॥ ६ ॥

(त्य) अथा॑नु॒सृज्यो॑पतिष्ठते । विश्वा॑स्त्वां प्र॒जा ऽउ॑पा॒वरो॑हन्त्वि॒त्यय॑थायथमिव वा॒ ऽए॒तत्क॑रोति यदा॑ह॒ विश्वा॑स्त्वां प्र॒जा उ॑पा॒वरो॒हेति क्ष॒त्रं वै सोम॒स्तत्पा॑पव॒स्यस॑ङ्करोति त॒द्धेदम॑नु पापव॒स्यसं॑ क्रियते॒ऽथा॑त्र यथाय॒थं क॑रोति यथापू॒र्वं यदा॑ह॒ विश्वा॑स्त्वां प्र॒जा उ॑पा॒वरो॑हन्त्वि॒ति तदे॑नमा॒भिः प्र॒जाभिः॑ प्रत्य॒वरो॑हयति त॒स्मादु॑ क्ष॒त्रि॒यमा॒य॒न्तमि॒मा॒ः प्र॒जा वि॒शः प्रत्य॒वरो॑हन्ति तम॒धस्ता॑दु॒पास॑त ऽउ॒पस॑न्नो होता॑ प्रातरनुवा॒कम॑नुव॒क्ष्यन्भ॑वति॥७॥

---

" सोम राजन् विश्वास्त्वं प्रजा उपावरोह "–( वा. सं. ६ । २६ ) इति । तदेनमासां प्रजानामाधिपत्याय राज्यायोपावहरति ॥ ६ ॥

अथानुसृज्योपतिष्ठते । " विश्वास्त्वां प्रजा उपावरोहन्तु "–( वा. सं. ६ । २६ ) इति । अयथायथमिव वाऽएतत्करोति–यदाह–विश्वास्त्वां प्रजा उपावरोहेति । क्षत्रं वै सोमः । तत् पापवस्यसं करोति । तद्धेदमनु पापवस्यसं क्रियते । अथात्र यथायथं करोति–यथापूर्वम्–यदाह–विश्वास्त्वां प्रजा उपावरोहन्त्विति । तदेनमाभिः प्रजाभिः प्रत्यवरोहयति । तस्माद्दु क्षत्रियमायन्तमिमाः प्रजा विशः प्रत्यवरोहन्ति । तमधस्तादुपासते । उपसन्नो होता प्रातरनुवाकमनुवक्ष्यन् भवति ॥ ७ ॥

---

तदर्थं हे ' सोम राजन् ! ' ' त्वं ' ' विश्वाः प्रजाः ' ' उप ' लक्ष्य ' अवरोह ' इति ॥ ६ ॥

उपावरोहमन्त्रं विभज्य व्याचष्टे–हृदे त्वा मनसे त्वेति यजमानस्यैतत्कामायेत्यादिना । सूर्याय त्वेत्यत्र सूर्यशब्दः सर्वदेवतोपलक्षक इति व्याचष्टे–देवेभ्यस्त्वेत्येवैतदाहेति । " रश्मयो ह्यस्य विश्वे देवाः "–इति ( श.ब्रा.कां.३.अ.९ब्रा. २ कं. ६ इत्यत्र ) प्रागुक्तत्वादित्यभिप्रायः । ऊर्ध्वमिममित्यादेर्ब्राह्मणं स्पष्टम् ॥ ६ ॥

उपावहृतस्य सोमस्य समन्त्रकमुपस्थानमाह–अथानुसृज्योपतिष्ठेत इति । ' अनुसृज्य ' वेष्टितं वस्त्रं विसृज्येत्यर्थः । विश्वास्त्वामिति । मन्त्रार्थः स्पष्टः । अयथायथमिव वा इत्यादि । उपावहरणे यो विश्वास्त्वामिति मन्त्रशेषः, तत्र विश्वाः प्रजा उद्दिश्य तुच्छजनवत् परिचारकपुरुषनिष्पादितावरोहणमन्तरेण स्वत एवावरोहणस्य प्रजाः प्रति सोमस्यापसर्जनलक्षणस्य च प्रतीतिः । तस्याश्च क्षत्रियभूतस्य सोमस्यानुचितत्वाद् विश्वास्त्वामित्यभिधानेन ' अयथायथम् ' यथास्वरूपस्य यदुचितं तस्य तद्वैपरीत्यं कृतं भवति । ' तत् ' च ' पापवस्यसं ' पापं च वसीयश्च पापवस्यसम्, साध्वसाधुमिश्रणम् । तन्मूलत्वेनेदानीमपि जनैः ' पापवस्यसं क्रियते ' । अत उक्तवैलक्षण्येनोपस्थानमन्त्रे विश्वास्त्वामित्यभिधानाद् विश्वाभिः ' प्रजाभिः ' सोमोपावरोहणस्य कृतत्वात्, अवतरन्तं प्रति विश्वासां प्रजानां स्वस्वस्थानादवतरणस्योक्तत्वाद्वा नोक्तदोषावकाशः । पूर्वस्मिन्यथा ' अवरोहन्तु ' अवरोहयन्त्वित्यर्थः । ' तस्मात् ' त्वामवरोहन्त्विति विधानात् हेतोः ' राजानं प्रति ' प्रजानामुपक्षीणत्वसम्पादनादिदानीमपि सम्पादयन्तमवरोहन्तं ' क्षत्रियं ' सर्वाः ' प्रजाः ' परिवाररूपाः ' अवरोहन्ति ' । यद्वा ' आयन्तं '

---

१–विश्वास्त्वामिति विसृज्योपतिष्ठते । का. श्रौ. सू. ९ । ६ । २–' परिचारकरूपाः ' इति क. पा. ।

(त्यु)अथ समिधमभ्यादधदाह । देवेभ्यः प्रातर्य्यावभ्योऽनुब्रूहीति च्छन्दाꣳसि वै देवाः प्रातर्य्यावाणश्छन्दाꣳस्यनुयाजा देवेभ्यः प्रेष्य देवान्यजेति वा अनुयाजैश्चरन्ति ॥ ८ ॥

तदु हैक आहुः ( दें ) देवेभ्योऽनुब्रूहीति तदु तथा न ब्रूयाच्छन्दाꣳसि वै देवाः प्रातर्य्यावाणश्छन्दाꣳस्यनुयाजा देवेभ्यः प्रेष्य देवान्यजेति वा अनुयाजैश्चरन्ति तस्मादु ब्रूयाद्देवेभ्यः प्रातर्य्यावभ्योऽनुब्रूहीत्येव ॥ ९ ॥

( वा ) अथ यत्समिधमभ्यादधाति । छन्दाꣳस्येवैतत्समिन्धेऽथ यद्धोता प्रातरनुवाकमन्वाह च्छन्दाꣳस्येवैतत्पुनराप्याययत्ययातयामानि करोति

---

अथ समिधमभ्यादधदाह । देवेभ्यः प्रातर्य्यावभ्योऽनुब्रूहीति । छन्दांसि वै देवाः प्रातर्यावाणः छन्दांस्यनुयाजाः । देवेभ्यः प्रेष्य, देवान्यजेति वा अनुयाजैश्चरन्ति ॥ ८ ॥

तदु हैक आहुः–देवेभ्योऽनुब्रूहीति । तदु तथा न ब्रूयात् । छन्दांसि वै देवाः प्रातर्यावाणः । छन्दांस्यनुयाजाः । देवेभ्यः प्रेष्य देवान्यजेति वाऽअनुयाजैश्चरन्ति । तस्मादु ब्रूयाद्–देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीत्येव ॥ ९ ॥

अथ यत् समिधमभ्यादधाति । छन्दांस्येवैतत्समिन्धे । अथ यद् यद्धोता प्रातरनुवाकमन्वाह–

---

'प्रति' सर्वाः प्रजाः स्वस्वस्थानाद् ' अवरोहन्ति, ' तदनन्तरं राजानमुपरि कृत्वा 'अधस्तात् उपासते' प्रजाः । यद्वेदं पृथगेव वाक्यम्,–' तम् ' एव तीर्णम् ' अधस्तात् उपासते ' ऋत्विजोऽध्वर्युप्रमुखाः ॥ प्रातरनुवाकप्रयोगमाह–उपसन्नो होतेत्यादि । ' होता ' ' उपसन्नः ' स्वसूत्रोक्तप्रकारेण प्रातरनुवाकस्थाने उपविष्टः । अथ होतर्युपसन्ने सति स एव प्रातरनुवाकसम्प्रैषकाल इत्यर्थः ॥ ७ ॥

अथ समिधमभ्यादधदिति । " देवेभ्योऽनुब्रूहि "–इत्येवालम्, किम् " प्रातर्यावभ्यः "–इति विशेषणेनेत्याशङ्क्य तदुपयोगं दर्शयति–छन्दांसि वै देवा इत्यादिना । प्रातःकाले यान्ति यज्ञं गच्छन्तीति ' प्रातर्यावाणः ' । ते चानुयाजदेवाश्चोभयेऽपि ' छन्दांसि ' एव, गायत्र्यादिच्छन्दोरूपाः । एवं च सति अनुयाजच्छन्दोदेवानां प्रैषानुवचनसमये " देवेभ्य प्रेष्य देवान् यज "–' इति ' सर्वत्र केवलदेवशब्देन व्यवहारादत्रापि तथैव प्रैषे सति, अत्रापि " छन्दोदेवान् यज "–इति प्रैषादनुयाजदेवताच्छन्दांस्यपि आगमिष्यन्तीति तद्व्यावर्त्तनाय " देवेभ्यः प्रातर्यावभ्यः "–इति विशेषणेन भवितव्यमित्यर्थः ॥ ८ ॥

तदु हैक आहुरिति । अत्र देवेभ्य इत्येवालं किं प्रातर्यावभ्य इति विशेषणेनेति ' एके ' शाखिनो ब्रुवते । ' तदु ' ' तथा ' उक्तप्रकारेण ' न ब्रूयात् ' । तेषां मतातिक्रमे उपपत्तिस्तु अनुयाजव्यावृत्तिसिद्धिरेवेत्याह–छन्दांसि वै देवा इत्यादि । अत्र सूत्रम्–" देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति समिधमादधात्, देवेभ्य इत्येके " ( का. श्रौ. ९।१०।११ ) इति ॥ ९ ॥

प्रातरनुवाकोपक्रमाङ्गभूतं समिदाधानं छन्दोदेवतासमिन्धनरूपत्वेन प्रशंसति–अथ यत्समिधमभ्यादधातीति ।

---

१–प्राग्वाचंप्रवदितोः प्रातरनुवाकोपाकरणं देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति समिधमादधत्।का.श्रौ.सू.९।१०।इति सूत्रपूर्वं भागः।

यातयामानि वै देवैश्छन्दाᳬंसि च्छन्दोभिर्हि देवाः स्वर्गं लोकᳬं समाश्नुवत न वाऽअत्र स्तुवते न शᳬंसन्ति तच्छन्दाᳬंस्येवैतत्पुनराप्याययत्ययातयामानि करोति तैरयातयामैर्यज्ञं तन्वते तस्माद्धोता प्रातरनुवाकमन्वाह॥

तदाहुः । कः प्रातरनुवाकस्य प्रतिगर इति जाग्रद्धैवाध्वर्युरुपासीत स यन्निमिषति स हैवास्य प्रतिगरस्तदु तथा न कुर्याद्यदि निद्रायादपि कामᳬं स्वप्यात्स यत्र होता प्रातरनुवाकं परिदधाति तत्प्रचरणीति स्रुग्भवति तस्यां चतुर्गृहीतमाज्यं गृहीत्वा जुहोति ॥ ११ ॥

---

छन्दांस्येवैतत्पुनराप्याययति । अयातयामानि करोति । यातयामानि वै देवैश्छन्दांसि । छन्दोभिर्हि देवाः स्वर्गं लोकं समाश्नुवत । न वाऽअत्र स्तुवते, न शंसन्ति । तत् छन्दांस्येवैतत् पुनराप्याययति। अयातयामानि करोति । तैरयातयामैर्यज्ञं तन्वते । तस्माद्धोता प्रातरनुवाकमन्वाह ॥ १० ॥

तदाहुः कः प्रातरनुवाकस्य प्रतिगर इति । जाग्रद्धैवाध्वर्युरुपासीत । स यन्निमिषति–स हैवास्य प्रतिगरः । तदु तथा न कुर्याद् । यदि निद्रायात्–अपि कामं स्वप्यात् । स यत्र होता प्रातरनुवाकं परिदधाति–तत्प्रचरणीति स्रुग्भवति; तस्यां चतुर्गृहीतमाज्यं गृहीत्वा जुहोति ॥ ११ ॥

---

होतृकर्त्तव्यं प्रातरनुवाकानुवचनं छन्दसां पुनराप्यानरूपत्वेन प्रशंसति–अथ यद्धोता प्रातरनुवाकमन्वाहेति । तेनाप्यायनेन 'छन्दांसि' एव 'अयातयामानि' अगतसाराणि 'करोति' । उक्तस्याप्यायनस्य सार्थकत्वाय गतसारत्वप्रसक्तिं दर्शयति–यातयामानि वा इति । देवैः कृतानीति शेषः । छन्दोभिर्हि देवाः स्वर्गं लोकमिति । स्वर्गार्थमुपयुक्तत्वात् तेषां यातयामत्वप्राप्तिः तदेव यातयामत्वं प्रातरनुवाकस्य स्तुतशस्त्रत्वाभिधानेन समर्थयते–न वा अत्रेति । स्तौति शंसति वोभयोरभावात् अनुवचनाभिधानाच्च निगमयति–तस्माद्धोता प्रातरनुवाकमन्वाहेति ("सुब्रह्मण्यां च प्रेष्यति' का.श्रौ.सू. ९।१२)॥ १०॥

प्रातरनुवाकस्य प्रतिगरविषये केषाञ्चिन्मतं प्राप्तिपूर्वकमुदाहृत्य निराचष्टे–तदाहुः कः प्रातरनुवाकस्येति । केचन महर्षयः एवं ब्रुवते,–होतुः प्रातरनुवाककाले अध्वर्युः विनिद्रः सनिमेषं करोति । सनिमेषव्यापार एव प्रतिगरणक्रियावत्वात्प्रतिगरस्थानीय इति । 'तदु तथा न कुर्यात्' निद्राभङ्गं निमेषं च न कुर्यादित्यर्थः । तर्हि किं कुर्यात् ? 'यदि निद्रा आयात्' निद्रामात्मन इच्छेत्, 'अपि कामं' 'स्वप्यात्' यथेच्छं स्वापं कुर्यात् । अत्र सूत्रम्–" प्रातरनुवाकं जाग्रदुपासीताध्वर्युः, स्वप्याद्वा "–(का. श्रौ. सू. ९।१३ । १४) इति ॥

अत्र मध्ये–" अग्नीदैन्द्रमेकादशकपालम् " इत्यादि–( का. श्रौ. सू. ९ । १९ ) सूत्रोक्तः सवनीयनिर्वापः, ग्रहचमसपात्राणामासादनप्रयोगश्च द्रष्टव्यः ॥

---

१–अग्नीदैन्द्रमेकादशकपालं निर्व्वपति हरिभ्यां धानाः पूष्णे करंभं सरस्वत्यै दधि मित्रावरुणाभ्यां पयस्याम् । इन्द्राय वा हरिपूषसरस्वतिमित्रावरुणवते धानादीनि यथासंख्यम् । उन्नेतुः पात्रयोजनम् । खरोत्तरपूर्व्वार्द्धे उपांश्वंतर्यामयोः । दक्षिणमुपांशोः । तदपरेण द्विदेवत्यानि प्रत्यंचि । रास्नावमैन्द्रवायवम् । अजकावं मैत्रावरुणम् । औष्ठमाश्विनम् । दक्षिणपूर्व्वार्द्धे शुक्रामंथिनोः । दक्षिणं शुक्रस्याग्रयणस्थालीमध्ये । दक्षिणोक्थ्यस्थाली सपात्रा । तथादित्यस्थाल्युत्तरा । ऋतुपात्रे पूर्व्वे स्रुक्पुष्कराकृती उभयतो मुखे कार्ष्मर्यमये आश्वत्थे वा । ऊर्ध्वानीतराणि प्रादेशमात्राणि मध्यसंगृहीतानि । आग्रयणादपरां परिप्लवां स्रुक्पुष्करामधोऽधोऽक्षं प्रत्यंचं द्रोण–

यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वाऽऽपः प्रविवेश तमदः पूर्व्वेद्युर्व्वसतीवरीभिराहरत्यथ योऽत्र यज्ञस्य रसः परिशिष्टस्तमेवैतदच्छैति ॥ १२ ॥

यद्वेवैतामाहुतिं जुहोति । (त्ये) एतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते तमारुन्धे याभ्य उ चैवैतां देवताभ्य आहुतिं जुहोति ता एवैतत्प्रीणाति ता अस्मै तृप्ताः प्रीता ऽएतं यज्ञस्य रसꣳ सन्नमन्ति॥१३॥शतम्॥१२००॥

स जुहोति । शृणोत्वग्निः समिधा हवं मऽइति शृणोतु मऽइदमग्निरनु

---

यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वापः प्रविवेश–तमदः पूर्वेद्युर्वसतीवरीभिराहरति । अथ योऽत्र यज्ञस्य रसः परिशिष्टः तमेवैतदच्छैति ॥ १२ ॥

यद्वेवैतामाहुतिं जुहोति–एतमेवैतद् यज्ञस्य रसमभिप्रस्तृणीते । तमारुन्धे । याभ्य उ चैवैतां देवताभ्य आहुतिं जुहोति–ता एवैतत्प्रीणाति । ता अस्मै तृप्ताः प्रीता एतं यज्ञस्य रसं सन्नमन्ति॥१३॥

स जुहोति–" शृणोत्वग्निः समिधा हवं मे "–( वा. सं. ६ । २६ ) इति । शृणोतु मऽइद-

---

एकधनाख्यानामुदकानामानयनार्थं यः प्रचरण्या होमोऽस्ति, तं विधाय प्रशंसति–स यत्र होतेति । ' यत्र ' यस्मिन् समये ' स होता ' ' तं प्रातरनुवाकं ' ' परिदधाति ', परिधानीयाम् " अभूदुषा " ( ऋ. सं. ९ । ७९ । ९ । कं. ) इत्येतां ब्रूयात्, ' तत् ' तदा ' प्रचरणी ' । प्रचरन्त्यनया जुहूपभृतोर्व्यापारदशायामिति ' प्रचरणी ' । सा ' स्रुग् भवति ' । ' तस्यां चतुर्गृहीतमाज्यं गृहीत्वा ' ' जुहोति ' जुहुयात् । प्रातरनुवाकपरिधानप्रचरणीहोमयोरभिन्नकर्तृकत्वात् कालार्थसम्प्रयोगः ॥ ११ ॥

होमं प्रशंसति–यत्र वै यज्ञस्येति । ' द्रुत्वा ' गत्वा ' रसः ' यज्ञरसः सः ' अपः ' ' प्रविवेश ' । यः प्रविष्टो यज्ञरसः ' पूर्वेद्युः ' वसतीवर्यब्रूपेणावशिष्टोऽस्ति, ' तमेव ' रसम् ' अच्छ ' अभिमुखीकृत्याभिगच्छति । पशुहोमाभावे यज्ञरसहरणार्थगमनासम्भवात् प्रचरण्याज्याहुतिहोम एव यज्ञरसाभिमुखगमनमित्यभिप्रायः ॥ १२ ॥

आहुतिप्रस्तरणात्मनापि प्रशंसति–यद्वेवैतामाहुतिं जुहोतीति । ' यद्व एव ' यदेव । ' एतत् ' एतेन होमेन ' एतमेव ' अवशिष्टमेव ' यज्ञस्य रसम् अभिप्रस्तृणीते ' रसस्य स्तरणं कृतवान् भवति । तेन च ' तमारुन्धे ' स्वाधीनं कृतवान् भवति । न केवलमेतावदेव, अपि च 'याभ्यो देवताभ्यः' अग्न्यादिभ्यः ' एतामाहुतिं जुहोति ,' ' ता एव ' ' एतत् ' एतेन होमेन ' प्रीणाति ' । ताः' रसं ' 'सन्नमन्ति' प्रापयन्ति॥ १३॥

होममन्त्रं विच्छिद्यानूद्य व्याचष्टे–स जुहोति शृणोत्वग्निरित्यादिना । ( का. श्रौ. सू. ९ । ३७ ) ।

---

–कलशमत्युद्योपर्युपर्यक्षं पवित्रमस्मिन् करोति । शुक्लं जीवोर्णानाम् । उभयतोदशं परिप्लवायाम् । पूर्वेणोपस्तंभनमुत्तरं ध्रुवस्थालीमनंतर्हितै । धुरि प्रचरणीम् । पूर्व्वेणाक्षमुपरि पूतभृतम् । परेणाधवनीयम् । प्रागक्षाद्दशचमसान्तसव्वृंतानधः प्रत्यगेकधनानयुग्मानुदहरणांत्रिप्रभृत्यापचंदशभ्योऽभूदुषा रुशत्पशुरित्युच्यमाने चतुर्गृहीतं प्रचरण्या जुहोति शृणोत्वग्निरिति । का. श्रौ. सू. ९-१५-३७ ।

( आश्वलायनानां तु अभूदुषारुशत्पशुरग्निधात्यृत्विजः । इति । ) ( अयोजिवां वृषण्वसूदयोदस्रावयत्यो ३ म् । इति ) ।

( शांखायनानां प्रातरनुवाकपरिधानीया अभूदुषारुशत्पशुरग्निरधाय्यृत्विजो योजिषां वृषण्वसू । रथोदस्राचमसोमांध्वीमम श्रुतोहवो ३ म् । इति ।

१–' तया चतुर्गृहीतमाज्यं गृहीत्वा ' इति क. ।

मे जानात्वित्येवैतदाह शृण्वन्त्वापो धिषणाश्च देवीरिति शृण्वन्तु मऽइदमापोऽनु मे जानन्त्वित्येवैतदाह श्रोता ग्रावाणो विदुषो न यज्ञमिति शृण्वन्तु मऽइदं ग्रावाणोऽनु मे जानन्त्वित्येवैतदाह विदुषो न यज्ञमिति विद्वाꣳसो हि ग्रावाणः शृणोतु देवः सविता हवं मे स्वाहेति शृणोतु मऽइदं देवः सवितानु मे जानात्वित्येवैतदाह सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतद्यज्ञस्य रसमुच्छैति ॥ १४ ॥

( त्य ) अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । ( त्वो ) दुदङ्प्रयन्नाहाप ऽइष्य होतरित्यप इच्छ होतरित्येवैतदाह तद्यदतो होतान्वाहैतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते तमारुन्ध ऽएतानु चैवैतदनुतिष्ठते नेदेनानन्तरा नाष्ट्रा रक्षाꣳसि हिनसन्निति ॥ १५ ॥

---

मन्त्रिः—अनु मे जानातु—इत्येवैतदाह—"शृण्वन्त्वापो धिषणाश्च देवीः" ( वा. सं. ६।२६ ) इति । शृण्वन्तु मऽइदमापो—अनु मे जानन्तु—इत्येवैतदाह—"श्रोता ग्रावाणो विदुषो न यज्ञम्" ( वा. सं. ६ । २६ ) इति । शृण्वन्तु मऽइदं ग्रावाणो—अनु मे जानन्तु, इत्येवैतदाह—" विदुषो न यज्ञम् इति । विद्वांसो हि ग्रावाणः—" शृणोतु देवः सविता हवं मे स्वाहा" (वा. सं.६। २६) इति । शृणोतु मऽइदं देवः सविता—अनु मे जानातु—इत्येवैतदाह । सविता वै देवानां प्रसविता । तत्—सवितृप्रसूत एवैतद् यज्ञस्य रसमच्छैति ॥ १४ ॥

अथापरं चतुर्गृहीतमाज्यं गृहीत्वोदङ् प्रयन्नाह—अप इष्य होतरिति । अप इच्छ होतरित्येवैतदाह । तद् यदतो होतान्वाह—एतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते । तमारुन्धे । एतानु चैवैतदनुतिष्ठते । नेदेनानन्तरा नाष्ट्रा रक्षांसि हिनसन्निति ॥ १५ ॥

---

'अग्निः', 'आपः', 'धिषणाः' वाचः, 'देवीः' देव्यः, 'विदुषो न ग्रावाणः', 'सविता' च, मे 'हवम्' आह्वानं 'यज्ञमिमं शृण्वन्तु'—इति संग्रहार्थः । अत्र सर्वत्र "शृणोतु" 'शृण्वन्तु'—इति, "अनुजानातु" 'अनुजानन्तु'—इति चार्थपरतया व्याख्यातम् । 'श्रोता ग्रावाणः'—इत्यत्र "द्व्यचोऽतस्तिङः"—( पा. सू. ६ । ३ । १३६ ) इति दीर्घः । 'विदुषः,—इत्येतद् ग्रावविशेषणतया व्याचष्टे—विद्वांसो हि ग्रावाण इति । प्रथमाबहुवचने छान्दसं द्वितीयाबहुवचनम् । चरमपादे सवितृशब्दप्रयोगस्य तात्पर्यमाह—सविता वै देवानां प्रसवितेति ॥ १४ ॥

अथापरं चतुर्गृहीतमिति । पूर्वमेकवारग्रहणस्योक्तत्वादपरमित्युक्तम् । चत्वारि गृहीतानि ग्रहणानि यस्याज्यस्य तच्चतुर्गृहीतम् । अप्सु होमार्थं गृहीत्वा उदङ्मुखं गच्छन् यजमानः प्रैषान् ब्रूयात् ॥

---

१—इतोऽग्रे—" शृण्वन्तु म इदं ग्रावाणोऽनु मे जानन्त्वित्येवैतदाह विदुषो न यज्ञमिति " इति पाठस्तु क. पुस्तके विशेषः स भ्रामादिकः । २-अपरं गृहीत्वोदङ्गच्छन्नाहाप इष्य होतः । का. श्रौ. सू. ९।३८ ।

  

( त्यु ) अथ सम्प्रेष्यति । मैत्रावरुणस्य चमसाध्वर्यवेहि नेष्टः पत्नीरुदानयैकधनिन एताग्नीच्चात्वाले व्वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन चेति सम्प्रैषु एवैषः ॥ १६ ॥

( ष त ) त ऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रꣳ स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति ते वै सह पत्नीभिर्यन्ति तद्यत्सह पत्नीभिर्यन्ति ॥ १७ ॥

---

अथ सम्प्रेष्यति–मैत्रावरुणस्य चमसाध्वर्यो ! एहि । नेष्टः ! पत्नीरुदानय । एकधनिनः ! एत । अग्नीत् ! चात्वाले वसतीवरीभिः प्रत्युपतिष्ठासै । होतृचमसेन चेति । सम्प्रैष एवैषः ॥ १६ ॥

त उदञ्चो निष्क्रामन्ति–जघनेन चात्वालम्, अग्रेणाग्नीद्‌ध्रम् । स यस्यां ततो दिश्यापो भवन्ति–तद्यन्ति । ते वै सह पत्नीभिर्यन्ति । तद् यत्सह पत्नीभिर्यन्ति ॥ १७ ॥

---

तत्र प्रथमप्रैषमुक्त्वा व्याचष्टे–अप इष्य होतरिति–इत्यादि । हे ' होतः ! ' ' अपः ' प्रति ' इष्य ' इच्छ, अपः प्रतिगमनोचितं " प्रदेवत्रा " ( ऋ. सं. १० । ३० सू. )–इति अपोनप्त्रीयमनुब्रूहीत्यर्थः । ( ऐ. ब्रा. २ । ३ । १ ) इष्यतेरिच्छतिरर्थ इति व्याचष्टे–अप इच्छ होतरित्येवैतदाहेति पदं व्याख्याय तात्पर्यमाचष्टे–तद्यदतो होतान्वाहेति । गतोऽर्थः । " एता उ चैवैतदाहेति । ' उ '–शब्दोऽप्यर्थे । अपि च ' एताः ' एकधनाख्या अप उद्दिश्य ' एतत् ' अनुतिष्ठते । एतदित्युक्तम्, किं तदित्याह–नेदेना इति । ' एनाः ' अपः । ' नाष्ट्रा ' नाशकानि ' रक्षांसि ' ' हिनसन् ' हिंस्युः । नेदिति परिभवे । "नेत्येष इदित्येतेन सम्प्रयुज्यते परिभवे "–( निरु १ । ३ । ९ ) इति नैरुक्तम् । अतस्तासां हिंसा माभूदित्यर्थः ॥ १९ ॥

अन्यान् प्रैषान् दर्शयति–अथ सम्प्रेष्यतीति । "मैत्रावरुणस्य चमसाध्वर्यवेहीति । दश चमसाध्वर्यवः चमसप्रयोक्तारः, तेषु यो मैत्रावरुणस्य चमसाध्वर्युः, स सम्बोध्यते । ' एहि ' उदकानयनार्थमागच्छेति ॥

नेष्टः पत्नीरुदानयेति । हे ' नेष्टः ! ' त्वं ' पत्नीः ' पात्नेजनोदकाहरणार्थम् ' उदानय ' एकधनिन एतेति । एकधना उदकानि, तेषां धारकाः कुम्भा वा; प्रत्यगेकधनानयुग्मानिच्छासादनाभिधानात्; तेषां ग्रहीतारः ' एकधनिनः ' ' एत ' आगच्छत ॥

अग्नीच्चात्वाल इति । हे ' अग्नीत् ! ' त्वं पूर्वेद्युर्गृहीताभिः वसतीवरीभिः, ' ' होतृचमसेन ' ' च ' युक्तः सन्, चात्वालदेशे यावदागमनं ' प्रति ' ' उपतिष्ठासै ' उपतिष्ठेति निर्दिष्टः । एतेन मन्त्राश्चेद् व्याख्यातव्याः विधयश्चेत् स्तोतव्या इत्याशङ्क्याह–सम्प्रैष एवैष इति । ' एषः ' " मैत्रावरुणस्य चमसाध्वर्यो "–इत्यादिकः कर्त्तव्यः ' सम्प्रैष एव ' विस्मृतिपरिहारार्थं प्रेरणमित्यर्थः ॥ १६ ॥

तेषां जलानयनार्थं निर्गमनमार्गमाह–त उदञ्चो निष्क्रामन्तीति । आग्नीध्रचात्वालयोरन्तरालदेशेन उदग्-

---

१–' इमौ प्रैषमन्त्रौ संहितायां न स्तः । २–अपोनप्तृदेवताकं सूक्तमपोनप्त्रीयं ' इति ऋ. सं. १० । ३० । ' अपोनप्त्रीयं ' इति क. पा. । ३–प्रेष्यति च मैत्रावरुणस्य चमसाध्वर्यवेहि नेष्टः पत्नीरुदानयैकधनिन एताग्नीच्चात्वाले व्वसतीवरीभिः प्रत्युपतिष्ठासे होतृचमसेन चेति । का. श्रौ. सू. ९–३९ । ४–' प्रेषणम् '–इ० क० पा० ।

यत्र वै यज्ञस्य शिरोऽच्छिद्यत । तस्य रसो द्रुत्वापः प्रविवेश तमेते गन्धर्वाः सोमरक्षा जुगुपुः ॥ १८ ॥

( स्ते ) ते ह देवा ऊचुः । ( रि ) इयमु न्वेवेह नाष्ट्रा यदिमे गन्धर्वाः कथं न्विममभयेऽनाष्ट्रे यज्ञस्य रसमाहरेमेति ॥ १९ ॥

ते होचुः । ( यो ) योषित्कामा वै गन्धर्वाः सहैव पत्नीभिरयाम ते पत्नीष्वेव गन्धर्वा गर्द्धिष्यन्त्यथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाहरिष्याम इति ॥ २० ॥

ते सह पत्नीभिरीयुः । ( स्ते ) ते पत्नीष्वेव गन्धर्वा जगृधुरथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाजह्रुः ॥ २१ ॥

( स्त ) तथो ऽएवैष एतत् । ( त्स ) सहैव पत्नीभिरेति ते पत्नीष्वेव गन्धर्वा गृद्ध्यन्त्यथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाहरति ॥ २२ ॥

---

यत्र वै यज्ञस्य शिरोऽच्छिद्यत—तस्य रसो द्रुत्वापः प्रविवेश । तमेते गन्धर्वाः सोमरक्षा जुगुपुः ॥ १८ ॥

ते ह देवा ऊचुः—'इयमु न्वेवेह नाष्ट्रा—यदिमे गन्धर्वाः—कथं न्विममभयेऽनाष्ट्रे यज्ञस्य रसमाहरेम' इति ॥ १९ ॥

ते होचुः । योषित्कामा वै गन्धर्वाः । सहैव पत्नीभिरयाम । ते पत्नीष्वेव गन्धर्वा गर्द्धिष्यन्ति । अथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाहरिष्याम इति ॥ २० ॥

ते सह पत्नीभिरीयुः । ते पत्नीष्वेव गन्धर्वा जगृधुः । अथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाजह्रुः ॥ २१ ॥

तथोऽएवैष एतत् सहैव पत्नीभिरेति । ते पत्नीष्वेव गन्धर्वा गृद्ध्यन्ति । अथैतमभयेऽनाष्ट्रे यज्ञस्य रसमाहरन्ति ॥ २२ ॥

---

देशेन । तत्र नोपलभ्यन्ते कथमित्यत आह—स यस्यां ततो दिशीति । निर्गमने एव उदङ्नियमः । गमनसमये पत्नीसाहित्यं विधाय तदाख्यानमुखेन प्रशंसति—सहपत्नीभिर्यन्तीति ॥ १७ ॥

यत्र वै यज्ञस्येत्यादि । पुरा किल देवैर्यज्ञशिरश्छेदाद्द्रुतो रसः पलाय्य अप्सु निविष्टः, तं रसं गन्धर्वाः सोमपालकाः ररक्षुः ॥ १८ ॥

ते ह देवा इति । 'ते देवा ऊचुः'—'इमे गन्धर्वाः' एव 'नाष्ट्राः' नाशकरूपाः, 'कथम्' 'अनाष्ट्रे' नाशरहिते देशे 'रसं' यज्ञरसम् 'आहरेम' 'इति' ॥ १९ ॥

एवं विचार्य—ते होचुर्योषित्कामा इति । गन्धर्वा योषित्प्रियाः, तद्वयं पत्नीभिः सहिता एव गच्छामः, ते च गन्धर्वाः पत्नीषु कांक्षन्ति, तस्मिन् समये वयमभयेऽनाष्ट्रे यज्ञस्य रसमाहरिष्याम इति ॥ २० ॥

ते सह पत्नीभिरीयुरिति । ताभिः सह गताः ते च तथैव तास्वाकांक्षां कृतवन्तः । तस्मिन् समये देवाः यज्ञरसम् 'आजह्रुः' ॥ २१ ॥

तथो एवैष एतदिति । यथा पुरा, इदानीमपि तथैव । तदेतेन पत्नीभिः सह गमनेन एते गन्धर्वाः पत्नीषु कांक्षां कुर्वन्तो भवन्ति, तथा अबाधितस्थले रसमाहृतवान् भवति ॥ २२ ॥

सोऽपोऽभिजुहोति । ( त्ये ) एताᳬं ह वा ऽआहुतिᳬं हुतामेष यज्ञस्य रस ऽउपसमैति तां प्रत्युत्तिष्ठति तमेवैतदाविष्कृत्य गृह्णाति ॥ २३ ॥

यद्वेवैतामाहुतिं जुहोति । ( त्ये ) एतमेवैतद्यज्ञस्य रसमभिप्रस्तृणीते तमारुन्धे तमपो याचति याभ्य उ चैवैतां देवताभ्य आहुतिं जुहोति ता एवैतत्प्रीणाति ता अस्मै तृप्ताः प्रीता ऽएतं यज्ञस्य रसᳬं सन्नमन्ति ॥२४॥

स जुहोति । देवीरापो ऽअपान्नपादिति देव्यो ह्यापस्तस्मादाह देवीरापो ऽअपान्नपादिति यो व ऊर्म्मिर्हविष्य इति यो व ऊर्म्मिर्यज्ञिय इत्येवैतदाहेन्द्रियावान्मदिन्तम इति वीर्यवानित्येवैतदाह यदाहेन्द्रियावानिति मदिन्तम इति स्वादिष्ठ इत्येवैतदाह तं देवेभ्यो देवत्रा दत्तेत्येतदेना अयाचिष्ट यदाह तं देवेभ्यो देवत्रा दत्तेति शुक्रपेभ्य इति सत्यं वै शुक्रᳬं सत्यपेभ्य इत्येवैतदाह येषां भागः स्थ स्वाहेति तेषामु ह्येष भागः ॥२५॥

---

सोऽपोऽभिजुहोति । एतां ह वाऽआहुतिं हुतामेष यज्ञस्य रस उपसमैति । तां प्रत्युत्तिष्ठति । तमेवैतदाविष्कृत्य गृह्णाति ॥ २३ ॥

यद्वेवैतामाहुतिं जुहोति । एतमेवैतद् यज्ञस्य रसमभिप्रस्तृणीते तमारुन्धे । तमपो याचति । याभ्य उ चैवैतां देवताभ्य आहुतिं जुहोति—ता एवैतत्प्रीणाति । ता अस्मै तृप्ताः प्रीता एतं यज्ञस्य रसं सन्नमन्ति ॥ २४ ॥

स जुहोति । " देवीरापोऽअपान्नपाद् "—( वा. सं. ६ । २७ ) इति । देव्यो ह्यापः । तस्मादाह—देवीरापोऽअपान्नपादिति—" यो व ऊर्म्मिर्हविष्यः "—( वा. सं. ६ । २७ ) इति । यो व ऊर्म्मिर्यज्ञिय इत्येवैतदाह—" इन्द्रियावान्मदिन्तमः "—( वा. सं. ६ । २७ ) इति । वीर्यवानित्येवैतदाह—यदाहेन्द्रियावानिति । मदिन्तम इति । स्वादिष्ठ इत्येवैतदाह—" तं देवेभ्यो देवत्रा

---

प्रचरणीगृहीतस्याज्यस्याप्सु होमं विधाय प्रशंसति—सोऽपोऽभिजुहोतीति[1]। 'हुतामाहुतिम्' अनुसृत्य 'एषः' अनुप्रविष्टः ' यज्ञस्य रसः ' 'उपसमेति' अभिमुखं सम्प्राप्नोति । एतस्यैव व्याख्यानम्—तां प्रत्युत्तिष्ठतीति । ' तमेव ' रसम् ' एतत् ' एतेन होमेन 'आविष्कृत्य' उदकेष्वनुप्रविष्टं प्रादुर्भाव्य गृहीतवान् भवति ॥ २३ ॥

प्रकारांतरेणापि प्रशंसति—यद्वेवैतामाहुतिं जुहोतीति । न केवलं रसार्थं प्रस्तरणं किन्तु तं प्रवर्द्धन्तं रसमारुद्धवान् भवति । किञ्च ' तम् ' अपेक्षितं यज्ञरसम् ' अपः ' उदकानि ' याचति ' ' उ ' अपि च ' याभ्यः देवताभ्यः एताम् आहुतिं जुहोति ', ' ता एव ' ' एतत् एतेन ' प्रीणाति ' । ' तृप्ताः ' ' प्रीताः' च ' ताः ' ' अस्मै ' यजमानाय ' एतं यज्ञस्य रसं ' 'सन्नमन्ति' सन्नमयन्ति, यजमानाधीनं कुर्वन्ति ॥२४॥

मन्त्रं विधाय विच्छिद्य व्याचष्टे—स जुहोतीति । देवीराप इति । हविष्य इति पदं व्याचष्टे—यो व ऊर्म्मिर्हविष्य इति, यो व ऊर्म्मिर्यज्ञिय इत्येवैतदाहेति । हविश्शब्देन तत्साध्यो यज्ञो लभ्यते, द्रव्यदेवतयोर्हि

---

१—अपो गत्वा देवीराप इत्यप्सु जुहोति । का० श्रौ० सू ९ । ४० ।

( ग्रो॒ऽथ ) अ॒थ मैत्रावरुणचम॒सेनैताम॒हुतिमु॒पप्लावयति । कार्षि॒रसीति य॒था वा ऽअ॒ङ्गारो॒ऽग्निना प्सा॒तः स्या॒देव॒मेषा॒हुतिरे॒तया दे॒वतया प्सा॒ता भवति रा॒जानं॒ वा ऽए॒ताभिर॒द्भिरु॒पस्र॒क्ष्य॒न्भवति या॒ ए॒ता मैत्रावरुणचमसे॒ व्व॒ज्रो वा ऽआ॒ज्यꣳ रे॒तः सो॒मो नेद्व॒ज्रेणा॒ज्येन रे॒तः सो॒मꣳ हिन॒सानी॒ति त॒स्माद्वा ऽअ॒पप्लावयति ॥ २६ ॥

---

दत्त "–( वा. सं. ६ । २७ ) इति । एतदेना अयाचिष्ट–यदा–तं देवभ्यो देवत्रा दत्तेति । "शुक्रपेभ्यः "–( वा. सं. ६ । २७ ) इति । सत्यं वै शुक्रम् । सत्यपेभ्य इत्येवैतदाह–" येषां भागस्थ स्वाहा "–( वा. सं. ६ । २७ ) इति । तेषामु ह्येष भागः ॥ २९ ॥

अथ मैत्रावरुणचमसेनैतामाहुतिमपप्लावयति । " कार्षिरसि "–( वा. सं. ६ । २८ ) इति । यथा वाऽअङ्गारोऽग्निना प्सातः स्याद्–एवमेषाहुतिरेतया देवतया प्साता भवति । राजानं वाऽएताभिरद्भिरुपस्रक्ष्यन् भवति–या एता मैत्रावरुणचमसे । वज्रो वाऽआज्यम् । रेतः सोमः । नेद्वज्रेणाज्येन रेतः सोमं हिनसानीति । तस्माद्वाऽअपप्लावयति ॥ २६ ॥

---

यज्ञस्वरूपत्वात् । इन्द्रियशब्दस्य वीर्यमर्थ इति व्याचष्टे–इन्द्रियावान् मन्दिन्तम इति वीर्यवानित्येवैतदाहेति । स्पष्टमेतत् । तत्रैव वाक्ये मदिन्तमशब्दस्यार्थमाह–मदिन्तम इति, स्वादिष्ठ इत्येवैतदाहेति । यत् स्वदन्तमुन्मादयतीति व्याप्तिदर्शनात् । "तं देवेभ्यः"–इति भागस्य प्रार्थनायां तात्पर्यमिति व्याचष्टे–' एतत् ' एतेन 'अयाचिष्ट' 'यदाह तं देवेभ्यो देवत्रा दत्तेति' । "लोट् च"–( पा. सू. ३ । ३ । १६२ ) इति लोटो विध्याद्यर्थेषु मध्ये प्रार्थनायाः सम्भवात् ' एतत् ' एतेन मन्त्रभागेन 'एनाः' अपः ' अयाचिष्ट ' देवतार्थं याचितवान् भवति । " देवेभ्यः "–इत्यस्य यत् " शुक्रपेभ्यः"–इति विशेषणम् । तस्य तात्पर्यमाह–सत्यं वै शुक्रम्, सत्यपेभ्य इत्येवैतदाहेति । शुक्रं दीप्तं रसाख्यं वस्तु, तत् सत्यम् । सोमद्वारेण सत्यस्यामृतत्वधर्मस्य साधनत्वात् सत्यमित्युच्यते । तादृशस्य पातृभ्य इत्येतदेवैतत् शुक्रपेभ्य इति वाक्यमाहेत्यर्थः । " येषां भागः स्थ स्वाहा"–इति चरमभागस्य तात्पर्यमाह–तेषामु ह्येष भाग इति । ' एषः ' अपां शुक्ररसरूपो भागः, ' तेषामु ' तेषां शुक्रपानां देवानां ' भागः ' प्रतिनियतांशः खलु, अतो येषामिति मन्त्रे निर्दिष्ट इत्यभिप्रायः । मन्त्रस्यायमर्थः–हे ' देवीः ' देव्यः ! ' आपः ' ! हे ' अपान्नपात् !' न पातयति तत् ( निरु. १० । २ । ९ ) ' यः ' अयं ' वः ' युष्माकं सम्बन्धी ' ऊर्म्मिः ' प्रवृद्धः ' हविष्यः ' रसः, ' इन्द्रियावान् ' " मन्त्रे सोमाश्वेन्द्रिय–" इत्यादिना ( पा. सू. ६ । ३ । १३१ ) दीर्घः, इन्द्रियावान्, ' मदिन्तमः ' मादयितृतमः, ' तं ' रसं 'देवत्रा' " देवमनुष्य० " ( पा. सू. ५ । ४ । ५६ ) इत्यादिना–सप्तम्यर्थे त्रा-प्रत्ययः । देवेषु मध्ये ' शुक्रपेभ्यो देवेभ्यः ' ' दत्त ' प्रयच्छत । हे आपः ! यूयं ' येषां ' देवानां ' भागः ' ' स्थ ' भवथ, तदर्थं ' स्वाहा ' इदं द्रव्यं स्वाहुतमस्त्विति ॥ २९ ॥

हुताया आहुत्या अपसारणं समन्त्रकं विधत्ते–अथ मैत्रावरुणचमसेनेति । तत्र मन्त्रः–"कार्षिरसीति"। हे हुताज्यपदार्थ ! त्वं ' कार्षिः ' कर्षेर्देवतायाः, कर्षणस्य भक्षणस्य वा सम्बन्धी ' असि ' । अतस्त्वां ' समु-

---

१–कार्षिरसीति मैत्रावरुणचमसेनाज्यमपोहति । का. श्रौ. सू. ९ । ४१ ।

( त्यु ) अथ गृह्णाति । समुद्रस्य त्वाक्षित्या ऽउन्नयामीत्यापो वै समुद्रो-ऽप्स्वेवैतदक्षितिं दधाति तस्मादाप ऽएतावति भोगे भुज्यमाने न क्षीयन्ते तदन्वेकधनानुन्नयन्ति तदनु पान्नेजनान् ॥ २७ ॥

( नास्त ) तद्यन्मैत्रावरुणचमसेन गृह्णाति । यत्र वै देवेभ्यो यज्ञोऽपाक्रा-मत्तमेतद्देवाः प्रैषैरेव प्रैषमैच्छन्पुरोरुग्भिः प्रारोचयन्निविद्भिर्न्यवेदयंस्तस्मा-न्मैत्रावरुणचमसेन गृह्णाति ॥ २८ ॥

अथ गृह्णाति । " समुद्रस्य त्वाक्षित्याऽउन्नयामि "–( वा. सं. ६ । २८ ) इति । आपो वै समुद्रः । अप्स्वेवैतदक्षितिं दधाति । तस्मादापऽएतावति भोगे भुज्यमाने न क्षीयन्ते । तदन्वेकधनानुन्नयन्ति । तदनु पान्नेजनान् ॥ २७ ॥

तद्यन्मैत्रावरुणचमसेन गृह्णाति । यत्र वै देवेभ्यो यज्ञोऽपाक्रामत्–तमेतद्देवाः प्रैषैरेव प्रैषमैच्छन्, पुरोरुग्भिः प्रारोचयन्, निविद्भिर्न्यवेदयन् । तस्मान्मैत्रावरुणचमसेन गृह्णाति ॥ २८ ॥

द्रस्य ' समुन्दनरूपस्योदकस्य ' अक्षित्यै ' अक्षीणतायै ' त्वा ' त्वाम् ' अपनयामि ' अपसारयामि । उक्त-स्यापसारणस्य प्रयोजकं प्सातत्वमाह–यथा वा अङ्गारोऽग्निना प्सातः स्यादिति । ' प्सातः ' भक्षितः; ' अग्निना ' भक्षितः ' अङ्गारः ' ' यथा ' करीषभावेन त्याज्यो भवति, ' एवम् ' ' एषा आहुतिः ' ' एतया ' अब्देवतया ' प्साता भवति ' । सोमहिंसापरिहारत्वेनापि परित्यक्तव्यमित्याह–राजानं वा एताभिरिति । ' मैत्रावरुणचमसे ' ' याः ' ' एताः ' इदानीं गृह्यमाणा आपः सन्ति, ' एताभिः ' अद्भिः ' उपस्रक्ष्यन् ' अभिषवकाले सोमस्य संसर्गं करिष्यन् ' भवति ' अत एव " आधवनीये समवनयति "–( श. प. ब्रा. ३ । ९ । ३ । ३० ) इति वक्ष्यते; आधवनीये संस्पृष्टस्योदकस्य सोमरसेन संसृज्यमानत्वात् । "वज्रो वा आज्यम्"–इत्यादि, प्रागसकृद् व्याख्यातम्, ( श. प. ब्रा. १ । ९ । ३ । ४ ) " घृतं खलु वै देवा वज्रं कृत्वा " ( तै. सं. ६ । ३ । ७ । ९ । ६ ) इत्यादिप्रदर्शनेन ॥ २६ ॥

समन्त्रकं मैत्रावरुणचमसेनोन्नयनं विधत्ते–अथ गृह्णाति समुद्रस्य त्वेति । यद्यप्यत्र मैत्रावरुणचमसेनेति न श्रुतम्, तथापि " समुद्रस्य त्वेति तेन गृह्णाति "–( का. श्रौ. सू. ९ । ४२ ) । इति सूत्राद् गम्यते । अपां सङ्घातात्मकत्वात् समुद्रस्य " आपो वै समुद्रः "–इत्येकदेशस्य कृत्स्नात्मना स्तुतिः । ' एतत् ' एतेन " समुद्रस्य त्वाक्षित्यै "–इति पाठेन ' अप्सु एव ' ' अक्षितिम् ' अक्षयमक्षीणत्वं ' दधाति ' स्थापितवान् भवति । ' तस्मात् ' " अक्षित्यै "–इत्युक्तत्वात् ' एतावति भोगे भुज्यमाने ' स्थावरजङ्गमात्मकजगत्पर्याप्तेऽपि भोगे सर्वैर्भुज्यमानेऽपि ' न क्षीयन्ते ' क्षयं न प्राप्नुवन्ति, अजस्रं प्रवहन्त्येव । तदन्वित्यादि । होतृचमसोन्नय-नानन्तरमेकधनानां पान्नेजनानां चानुक्रमेणोन्नयनम् एकधनाः सोमरसाभिवृद्ध्यर्था उदकविशेषाः पाच्छब्देनोरु-प्रदेशो लक्ष्यते ' पत्न्या ऊरुक्षालनसाधनोदकविशेषाः पान्नेजनाः । ताः पत्न्यो गृह्णीयुः । तथाच सूत्रम् । " पान्नेजनांश्च पत्न्यो " इति ( का. श्रौ. सू. ९।४४ ) ॥ २७ ॥

सत्स्वितरेषां चमसेषु किं मैत्रावरुणचमसेनेत्यत आह–तद्यन्मैत्रावरुणचमसेनेति । यस्माद् देवेभ्योऽपक्रान्तं यज्ञम्, एतेन मैत्रावरुणाख्येनर्त्विजा ' प्रैषैः ' तत्कृतिगमनसाधनैः आह्वानवाक्यैः ' प्रैषं ' यज्ञस्य गमनम्,

१ एकधनांश्चोन्नयन्ति । का. श्रौ. सू. ९ । ४३ । पान्नेजनांश्च पत्न्यो द्वौ द्वौ । ९ । ४४ ।

त ऽआयन्ति । प्रत्युपतिष्ठतेऽग्नीच्चात्वाले व्वसतीवरीभिश्च होतृचमसेन च स उपर्युपरि चात्वालꣳसꣳस्पर्शयति व्वसतीवरीश्च मैत्रावरुणचमसं च समापो ऽअद्भिरग्मत समोषधीभिरोषधीरिति यश्चासौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाद्याहृतस्तमेवैतदुभयꣳसꣳसृजति ॥ २९ ॥

तद्धैके । (क२) एव मैत्रावरुणचमसे व्वसतीवरीर्नयन्त्या मैत्रावरुणचमसाद्वसतीवरीषु यश्चासौ पूर्वेद्युराहृतो यज्ञस्य रसो यश्चाद्याहृतस्तमेवैतदुभयꣳ सꣳसृजाम इति व्वदन्तस्तदु तथा न कुर्याद्यद्वा ऽआधवनीये समवनयति तदेवैष उभयो यज्ञस्य रसः सꣳसृज्यतेऽथ होतृचमसे व्वसती-

---

तऽआयन्ति । प्रत्युपतिष्ठते अग्नीच्चात्वाले वसतीवरीभिश्च होतृचमसेन च स उपर्युपरि चात्वालं संस्पर्शयाति–वसतीवरीश्च, मैत्रावरुणचमसं च । " समापोऽअद्भिरग्मत । समोषधीभिरोषधीः "–( वा. सं. ६।२८ ) इति । यश्चासौ पूर्वेद्युराहृतो यज्ञस्य रसो, यश्चाद्याहृत–स्तमेवैतदुभयं संसृजति ॥ २९ ॥

तद्धैके–आ एव मैत्रावरुणचमसे वसतीवरीर्नयन्ति । आ मैत्रावरुणचमसाद् वसतीवरीषु । यश्चासौ पूर्वेद्युराहृतो यज्ञस्य रसो, यश्चाद्याहृतः–तमेवैतदुभयं संसृजाम–इति वदन्तः । तदु

---

' ऐच्छन् ' ' निविद्भिः ' निवेदनसाधनैः " अग्निर्देवेद्धः "--( ऐ. ब्रा. २ । ९ । २ । ) इत्यादिभिर्वाक्यैः ' न्यवेदयन् ' परस्परं निवेदितवन्तः ' पुरोरुग्भिः ' पुरः ' याज्यानुवाक्याभ्यां पुरस्तात् ' रुचिम् ' इच्छां जनयन्ति देवताया इति पुरोरुचो " वायुरग्रेगाः " ( ऐ. ब्रा. ३ । १ । ९ )--इत्याद्याः, ताभिः ' प्रारोचयन् ' प्ररोचनामजनयन् । अतो मैत्रावरुणस्य प्रैषादिसाधनत्वात् तदीयश्चमसः प्रशस्त इत्यर्थः । तस्मान्मैत्रावरुणचमसेन गृह्णातीति ॥ २८ ॥

अप्सम्भरणानन्तरमनुष्ठेयं विधत्ते–त आयन्तीति । पुनर्देवयजनं प्रति आगच्छेयुः । ' अग्नीत् ' च निर्गमनकाले सम्प्रेषितप्रकारेण ' चात्वाले ' ' वसतीवरीभिः ' अद्भिः ' होतृचमसेन च ' युक्तः सन् प्रत्युपस्थानं कुर्यात् । यदुक्तं सूत्रकृता–"प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च संस्पर्शयति समाप इति, इतरस्मिन् व्यानयन्त्येके, मैत्रावरुणचमसे प्रथमम् ( का. श्रौ. सू. ९ । ४५-४६ ) इति। तदिदं सर्वं विधत्ते–स उपर्युपरि चात्वालं संस्पर्शयति, वसतीवरीश्च मैत्रावरुणचमसश्चेति । स्पष्टम् । तत्र मन्त्रमाह–समापो अद्भिरिति । ' आपः ' मैत्रावरुणचमसगताः, ' अद्भिः ' होतृचमसस्थाभिर्वसतीवरीभिः ' समग्मत ' सङ्गता अभवन् । तथा ' ओषधीः ' ओषध्यः, वर्द्धनीयाः व्राह्यादिरूपाः, ' ओषधीभिः ' व्रीह्यादिरूपाभिः ' समग्मत ' । यद्वा, उभयत्र ओषधिशब्देन प्रकृता मैत्रावरुणहोतृचमसगता आपो विवक्ष्यन्ते–यश्चासौ पूर्वेद्युरित्यादि स्पष्टम् ॥ २९ ॥

अथ केषाञ्चित्साक्षादुदकसंसर्जनपक्षमुदाहृत्य तदभिप्रायमप्याविष्कृत्य तस्यान्यथासिद्धित्वप्रदर्शनेन निराचष्टे–तद्धैक इति । ' ऐवं नयन्ति '–इति सम्बन्धः, आनयन्त्येवेत्यर्थः । ' आ मैत्रावरुणचमसाद् वसतीवरीषु ' उप-

---

१–' अत्र '–इति क. पु. पा. । २–' एवं ' नयन्ति ' इ. क. पा. ।

वरीर्गृह्णाति निग्राभ्याभ्यस्तद्यदुपर्युपरि चात्वालꣳसꣳस्पर्शयत्यतो वै देवा दिवमुपोदक्रामंस्तद्यजमानमेवैतत्स्वर्ग्यं पन्थानमनुसङ्ख्यापयति॥३०॥ त आयन्ति । तꣳ होता पृच्छत्यध्वर्योऽवेरपा३ऽइत्यविदोऽपा३ ऽइत्येवैतदाह तं प्रत्याहोतेव नन्नमुरित्यविदमुथो मेऽनꣳसतेत्येवैतदाह॥३१॥ स यद्यग्निष्टोमः स्यात् ।(य) यदि प्रचरण्याꣳ सꣳस्रवः परिशिष्टोऽलꣳ होमाय स्यात्तं जुहुयाद्यद्यु नालꣳ होमाय स्यादपरं चतुर्गृहीतमाज्यं

तथा न कुर्याद् । यद्वाऽऽधवनीये समवनयति–तदेवैष उभयो यज्ञस्य रसः सं सृज्यते । अथ होतृचमसे वसतीवरीर्गृह्णाति–निग्राभ्याभ्यः । तद् यदुपर्युपरि चात्वालं संस्पर्शयाति । अतो वै देवा दिवमुपोदक्रामन् । तद् यजमानमेवैतत् स्वर्ग्यं पन्थानमनु सङ्ख्यापयति ॥ ३० ॥

त आयन्ति । तं होता पृच्छति–"अध्वर्योऽवेरपा३ऽ" इति । "आविदोऽपा३ऽ" इत्येवैतदाह । तं प्रत्याह–" उतेव नन्नमुः " इति । आविदम् । अथो मेऽनंसत इत्येवैतदाह ॥ ३१ ॥

स यद्यग्निष्टोमः स्यात्–यदि प्रचरण्यां संस्रवः परिशिष्टोऽलं होमाय स्यात्–तं जुहुयात् । यद्यु नालं होमाय स्यात्–अपरं चतुर्गृहीतमाज्यं गृहीत्वा जुहोति–" यमग्ने पृत्सु मर्त्यमवा वाजेषु

सर्गवशान्नयन्तीत्यनुषज्यते । एवं कुर्वतां पूर्वेद्युराहृतस्य यज्ञरसस्य, अद्याहृतस्य च संसर्ग एवोपेक्षितः स उपरिष्टात् आधवनीये समवनयनाद् भविष्यति, अतः ' तत् तथा न कुर्यात् ' इत्यर्थः । यदुक्तम्–" होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छति निग्राभ्याः " ( का. श्रौ. सू. ९ । ४७ ) इति, तदेतदाह–**अथ होतृचमस** इति । आग्नीध्रहस्तस्थं होतृचमसमध्वर्युरादाय पूर्वेद्युराहृता ' वसतीवरीः ' अध्वर्युः गृह्णाति ' । कस्मै उपयोगाय ? ' निग्राभ्याभ्यः ' होतृचमसे निगृह्यमाणत्वात् " निग्राभ्या "–इति सञ्ज्ञा; निग्राभ्यासु च्यावयति, निग्राभ्यासु संसिञ्चति, इत्येवमर्थाय । पूर्वं यदुक्तम्–" यश्चासौ पूर्वेद्युरित्यादिना वसतीवरीमैत्रावरुणचमसयोः संसर्गार्थवाद उक्तः । इदानीं तस्य संसर्गस्य चात्वालोपरिभावित्वम्, तत् प्रशंसति–**तद्यदुपर्युपरि चात्वालमिति** । ' अतः ' अस्माच्चात्वालोपरिप्रदेशात् ' देवा दिवमुपोदक्रामन् ' ' तत् ' तस्मात् कारणात् ' एतत् ' एतेन चात्वालोपरि संस्पर्शेन ' यजमानम् ' अयं स्वर्गस्य पन्था इति ' पन्थानम् ' ' अनुसङ्ख्यापयति अनुक्रमेण सङ्ख्यापयति सम्यक् प्रख्यापयतीति प्रकाशयतीति यावत् ॥ ३० ॥

**त आयन्तीति** । अथाध्वर्युमुद्दिश्याब्विषयं होतुः प्रश्नमवतारयति–**तं होता पृच्छत्यध्वर्योऽवेरपा ३** इति । ' तम् ' अध्वर्युं होता ' पृच्छति ', हे ' अध्वर्यो ! ' ' अपः ' उदकानि ' अवेः ' लब्धवानसि । " प्लुतिः प्रश्नार्थे " ( पा. सू. ८ । २ । १०० ) । " अवेः "–इत्यस्य ' अविदः ' इत्यर्थ इति व्याचष्टे–**अविदोऽपा ३ इत्येवैतदाहेति** । अथाध्वर्योर्होतारं प्रति प्रतिवचनमाह–**तं प्रत्याहोतेव नन्नमुरितीति** ( का. श्रौ. सू. ९ । ४८ ) वयमिदानीं न केवलमपो लब्धार एव, अपि च ' नन्नमुः ' अत्यर्थमानता अभवन् । प्रतिवचनस्य तात्पर्यमाह–**अविदमथो मेऽनंसतेत्येवैतदाहेति** । ' अविदम् ' अपो लब्धवानस्मि ' अथो ' अपि च मे आपः ' अनंसत ' आनता आगता अभूवन् ' इत्येव ' ' एतत् ' उत्तररूपं वाक्यम् ' आह ' ॥ ३१ ॥

यदुक्तं सूत्रकृता–" प्रचरणीसंस्रवमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं यमग्न इति, । उक्थे प्रथमं परिधिमालभते,

१–शांखायनो होता चेत् । अध्वर्यवे वीरपा ३ इत्यध्वर्युं पृच्छति । आश्वलायनश्चेत् । अवेरपोऽध्वर्यो३ इत्यध्वर्युं पृच्छति । शतपथे तु अध्वर्योऽवेरपा ३ इति पृच्छति । का. सूत्रकर्कभाष्ये तु अवेरपोऽध्वर्यो इति ।

गृहीत्वा जुहोति यमग्ने पृत्सु मर्त्यमवा व्वाजेषु यं जुनाः ॥ स यन्ता शश्वतीरिषः स्वाहेत्याग्नेय्या जुहोत्यग्निर्वा ऽअग्निष्टोमस्तदग्नावग्निष्टोमं प्रतिष्ठापयति मर्त्तवत्या पुरुषसम्मितो वा ऽअग्निष्टोमऽएवं जुहुयाद्यद्यग्निष्टोमः स्यात् ॥ ३२ ॥

( य ) यद्युक्थ्यः स्यात् । ( न्म ) मध्यमं परिधिमुपस्पृशेत्त्रयः परिधय-स्त्रीण्युक्थान्येतैरु हि तर्हि यज्ञः प्रतितिष्ठति यद्यु ऽअतिरात्रो वा षोडशी वा स्यान्नैव जुहुयान्न मध्यमं परिधिमुपस्पृशेत्समुद्यैव तूष्णीमेत्य प्रपद्येत तद्यथायथं यज्ञक्रतून्व्यावर्त्तयति ॥ ३३ ॥

---

" यं जुनाः स यन्ता शाश्वतीरिषः स्वाहा "–( वा. सं. ६ । २९ ) इत्याग्नेय्या जुहोति । अग्निर्वाऽअग्निष्टोमः । तद् अग्नावग्निष्टोमं प्रतिष्ठापयति । मर्तवत्या । पुरुषसम्मितो वाऽअग्निष्टोमः । एवं जुहुयाद्–यद्यग्निष्टोमः स्यात् ॥ ३२ ॥

यद्युक्थ्यः स्यात् । मध्यमं परिधिमुपस्पृशेत् । त्रयः परिधयः–त्रीण्युक्थानि । एतै रु हि तर्हि यज्ञः प्रतितिष्ठति । यद्युऽअतिरात्रो वा षोडशी वा स्यात्–नैव जुहुयात् । न मध्यमं परिधिमुपस्पृशेत् । समुद्यैव तूष्णीमेत्य प्रपद्येत । तद् यथायथं यज्ञक्रतून् व्यावर्तयति ॥ ३३ ॥

---

प्रविशत्येवान्यत्र "–( का. श्रौ. सू. ९ । ४९, ९०, ९१ ) इति, तदेतत् क्रमेण दर्शयन्नादावग्निष्टोममाह–**स यद्यग्निष्टोमः स्यादिति** । ' सः ' वर्तमानः क्रतुरग्निष्टोमसंस्थश्चेत् ' प्रचरण्यां ' यः ' संस्रवः अवशिष्टः ' होमाय ' ' अलम् ' पर्याप्तः ' स्यात्, ' तदा ' तम ' एव जुहुयात् ' नो चेत् पुनश्च ' चतुर्गृहीतमाज्यं ' ' गृहीत्वा ' " यमग्ने पृत्सु "–इति मन्त्रेण जुहुयात् । मन्त्रस्यायमर्थः–हे ' अग्ने ! ' ' यम् ' ' मर्त्यं ' मनुष्यं ' पृत्सु ' संग्रामेषु ' अवाः ' रक्षसि, तथा ' वाजेषु ' अन्नेषु निमित्तभूतेषु ' यम् ' मर्त्यं ' जुनाः ' जवतिर्गत्यर्थः । प्राप्तवानसि, ' सः ' उभयविषयो जनः ' शश्वतीः ' शाश्वतीः ' इषः ' अन्नानि ' यन्ता ' प्राप्तवान् भवति; ' स्वाहा ' सुहुतमस्तु । मन्त्रस्याग्नेयत्वं प्रकृते ज्योतिष्टोमकर्मणि सङ्गतमिति व्याचष्टे–**आग्नेय्या-जुहोतीति । अग्निर्वा अग्निष्टोम** इति । यज्ञायज्ञीयस्यान्तिमस्तोत्रस्याग्निदेवताकत्वात् अग्निष्टोमोऽग्निः; ततो-ऽन्यात्मकमग्निष्टोममाग्नेय्या होमेन ' अग्नौ ' एव प्रतिष्ठापितवान् भवति । मन्त्रे यन्मर्त्यलिङ्गकत्वम्, तत् प्रशं-सति–**मर्त्तवत्त्या पुरुषसम्मितो वा अग्निष्टोम** इति । " द्वौ स्तोमौ प्रातस्सवनं वहतो यथा प्राणश्चापानश्च " इत्युपक्रम्य तैत्तिरीयके " पुरुषसम्मितो वा एष यज्ञः " ( तै. सं. ७ । १ । १ । १ ) इति श्रुतत्वात् पुरुष-सम्मितत्वमस्य यतः, अत एवैतया मर्त्तवत्या होमो युक्त इत्यर्थः । निगमयति–**एवं जुहुयात् तद्यग्निष्टोमः स्यादिति** ॥ ३२ ॥

उक्थसंस्थायां तु कथमित्यत आह–**यद्युक्थ्यः स्यान्मध्यमं परिधिमुपस्पृशेदिति** । ( का. श्रौ. सू. ९।९० ) अग्नेः परितो निधीयमाना परिधयः । प्राच्यां दिशि सूर्य्यस्यैव परिधित्वात् ते त्रय एव । ' उक्थानि ' अग्नि-ष्टोमादुपरि उक्थसंस्थे क्रतौ स्तोतव्यानि " त्रीणि " उक्थस्तोत्राणि । अस्तु त्रित्वम्, किं तत इत्यत आह–

(त्य)अुयुङ्गा ऽअयुङ्गा ऽएकधना भवन्ति । त्र्यो वा पुञ्च वा पुञ्च वा सप्त वा सप्त वा नुव वा नुव वैकादश वैकादशं वा त्र्योदश वा त्र्योदश वा पुञ्चदश वा द्वन्द्वमुह मिथुनं प्रजुननमुथ यु एष एकोऽतिरिच्युते स युजमानस्य श्रियमभ्युतिरिच्यते स वा एषाᳫंसधनं यो युजमानस्य श्रियमभ्यतिरिच्युते तद्युदेषाᳫंसधुनं तुस्मादेकधना नुाम ॥ ३४ ॥

इति सप्तमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ७ । ४ ॥ ( ९. ३. )

---

अयुङ्गा अयुङ्गा एकधना भवन्ति । त्रयो वा पञ्च वा । पञ्च वा सप्त वा । सप्त वा नव वा । नव वा एकादश वा । एकादश वा त्रयोदश वा । त्रयोदश वा पञ्चदश वा । द्वन्द्वमह मिथुनं प्रजननम् । अथ य एष एकोऽतिरिच्यते—स यजमानस्य श्रियमभ्यतिरिच्यते । स वा एषां सधनम्—यो यजमानस्य श्रियमभ्यातिरिच्यते । तद् यदेषां सधनम्—तस्मादेकधना नाम ॥ ३४ ॥

---

एतैरु हि तर्हीति । यतः ‘ एतैः ’ उक्थैः यज्ञः ‘ प्रतितिष्ठति ’, अतस्त्रिषु परिधिषु ‘ मध्यमं परिधिं ’ पश्चादिग्गतं प्रचरण्या ‘ उपस्पृशेत् ’ अतिरात्रषोडशिनोस्तु कथमित्यत आह—यद्यु अतिरात्रो वा षोडशी वा स्यात् ( का. श्रौ. सू. ९ । ९१ ) इति तत्रोभयत्र होममुपस्पर्शनं च न कुर्यात्, किन्तु ‘ समुचैव ’ यमग्ने पृत्सु ”—इति मन्त्रमुक्त्वैव ‘ तूर्ष्णीमेत्य ’ देवयजनं ‘ प्रपद्येत ’ । ‘ तत् ’ तथा सति क्वचिद्धोमः क्वचित् परिधिसंस्पर्शः, क्वचित् तूष्णीमिति ‘यथायथं’ पृथक्पृथक्प्रकारेण ‘ यज्ञक्रतून् ’ अग्निष्टोमादिकान् ‘व्यावर्त्तयति’ परस्परव्यावृत्तान् करोति । तथाच तैत्तिरीयकम्—“ यदग्निष्टोमो जुहोति यदुक्थः परिधौ निर्मार्ष्टि यदतिरात्रो यजुर्वदन् प्रपद्यते यज्ञक्रतूनां व्यावृत्त्यै ”—( तै. सं. ६ । ४ । २ । ९ ) इति । कात्यायनस्तु अतिरात्रषोडशिनौ प्रति विकल्पमुक्तवान्—“रराट्यालम्भनं वा षोडशिनि, छदिरतिरात्रे ” ( का. श्रौ. ९ । ९२ )—इति ॥ ३३ ॥

इदानीमेकधननामघटानामयुग्मसङ्ख्या विकल्पमाह—अयुङ्गा अयुङ्गा एकधना भवन्तीति । वक्ष्यमाणत्रिपञ्चादिपक्षबहुत्वाभिप्रायेण वीप्सा । ‘अयुङ्गाः’ त्रिःपञ्चादयः । तानेवायुग्मविकल्पानुदाहरति—त्रयो वा पञ्च वेत्यादिना । त्रयो वा पञ्च वेत्येकोऽयुग्मविकल्पः, पञ्च वा सप्त वेत्यपरः । एवमुत्तरेष्वपि द्रष्टव्यम् । तथा चासादनप्रस्तावे कात्यायनः—“ प्रत्यगेकधनानयुग्मानुदहरणांस्त्रिप्रभृत्यापञ्चदशभ्यः ”—( का. श्रौ. सू. ९ । ३७ ) इति ॥

अथ युग्मसङ्ख्यया एकधनशब्दनिर्वचनं प्रदर्शयन् प्रशंसति—द्वन्द्वमह मिथुनं प्रजननमथ य एष एकोऽतिरिच्यत इत्यादिना । एषु विकल्पेषु मध्ये यदि त्रयस्तदा द्वावेकं द्वन्द्वं तृतीयोऽतिरिच्यते; यदि पञ्च, तदा द्वे द्वन्द्वे पञ्चमोऽतिरिच्यते । एवं सप्त-नवैकादश-त्रयोदश-पञ्चदशस्वपि योज्यम् । तत्र यत् ‘ द्वन्द्वं ’ तत् ‘ मिथुनम् ’, तच्च यजमानस्य पुत्रपौत्रादिप्रजननरूपम्; ‘ य एषोऽतिरिच्यते ’ तृतीयादिकः ‘ सः ’ सर्वोऽपि ‘ यजमानस्य ’ ‘ श्रियम् ’ ‘ अभि ’ लक्ष्य ‘ अतिरिच्यते ’ । ‘ स वै ’ सोऽतिरिक्तः ‘ एषां ’ विकल्पितानां युग्मानां ‘ सधनम् ’ समानमेकमेव धनम्; तदन्तःपातित्वात् । यस्मादपां सधनमासीत् अतिरिक्तः ‘ तस्मात् ’ अयुग्मसङ्ख्याका उदकविशेषा एकधननामकाः सम्पन्नाः । अत एकधनात्मकत्वात् अयुग्मसङ्ख्याका एकधनाः प्रशस्ता इति स्तुतिः ॥ ३४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीये काण्डे नवमाध्याये तृतीयं ब्राह्मणम् ॥ ३—९—३ ॥

अथाधिषवणे पर्य्युपविशन्ति । (न्त्य) अथास्या ँ हिरण्यं बध्नीते द्वयं वा ऽइदं न तृतीयमस्ति सत्यं चैवानृतं च सत्यमेव देवा अनृतं मनुष्या अग्निरेतसं वै हिरण्य ँ सत्येनाँ शूनुपस्पृशानि सत्येन सोमं पुराहणानीति तस्माद्वा ऽअस्याँ हिरण्यं बध्नीते ॥ १ ॥

( तेऽथ ) अथ ग्रावणमादत्ते । ते वाऽएतेऽश्ममया ग्रावाणो भवन्ति देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम ऽआसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तच्छरीरेणैवैनमेतत्समर्द्धयति कृत्स्नं करोति तस्मादश्ममया भवन्ति घ्नन्ति वा ऽएनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथात ऽउदेति तथा सञ्जीवति तस्मादश्ममया ग्रावाणो भवन्ति ॥ २ ॥

---

### अथ निराभ्याप्रयोगः ।

अथाधिषवणे पर्युपविशन्ति । अथास्यां हिरण्यं बध्नीते । द्वयं वाऽइदं न तृतीयमस्ति—सत्यं चैवानृतं च । सत्यमेव देवाः, अनृतं मनुष्याः । अग्निरेतसं वै हिरण्यम् । सत्येनांशूनुपस्पृशानि, सत्येन सोमं पराहणानीति । तस्माद्वाऽअस्यां हिरण्यं बध्नीते ॥ १ ॥

अथ ग्रावाणमादत्ते । ते वाऽएतेऽश्ममया ग्रावाणो भवन्ति । देवो वै सोमः । दिवि हि सोमः । वृत्रो वै सोम आसीत् । तस्यैतच्छरीरम्—यद्गिरयः, यदश्मानः । तच्छरीरेणैवेनमेतत्समर्द्धयति—कृत्स्नं करोति । तस्मादश्ममया भवन्ति । घ्नन्ति वाऽएनमेतद्; यदभिषुण्वन्ति । तमेतेन घ्नन्ति । तथा त उदेति, तथा सञ्जीवति । तस्मादश्ममया ग्रावाणो भवन्ति ॥ २ ॥

---

इत्थमभिषवसाधनानामपां ग्रहणमभिधाय अथ सोमाभिषवप्रयोगं वक्तुमुपक्रमते--अथाधिषवणे पर्युपविशन्तीति ( का. श्रौ. सू. ९ । ५६ ) । ' अधि ' उपरि सूयेते इत्यधिषवणे दारुमये फलके, तयोरुपरि ते ' उपविशन्ति ' । उपवेशनप्रकारः सूत्रे दर्शितः—" उत्तरतोऽध्वर्युयजमानौ, पूर्वोऽध्वर्युः, अपरेण परीत्येतरे त्रयः देवस्य त्वेत्यादिना ( का. श्रौ. सू. ९ । ५७—५९ ) । ' इतरे ' अध्वर्युपुरुषा इत्यर्थः । हिरण्यबन्धनं विधाय, तत् सत्यरूपत्वेन प्रशंसति--अथास्यां हिरण्यं बध्नीते द्वयं वा इदं न तृतीयमस्तीत्यादिना । 'अस्याम्' अनामिकांगुल्यामित्यर्थः । " द्वयं वा " इत्यादि । प्रागसकृद् व्याख्यातम् ( श. प. ब्रा १ । १ । १ । ४ ) ६ । ३ । २३ कं. ) अग्नेतस्त्वं हिरण्यस्येत्थं श्रूयते—" आपो वरुणस्य पत्नय आसन्, ता अग्निरभ्यध्यायत्, ताः समभवत्, तस्य रेतः परापतत्, तद्धिरण्यमभवत् " इति । ( तै. सं. ५ । ५ । ४ । १ ) अध्वर्योर्मनुष्यत्वेनानृतरूपत्वात् सत्यभूतस्याग्निरेतसो हिरण्यस्यात्राभिषवसमये स्पर्शनेनानृतबाधात् ' सत्येन ' ' अंशून् ' सोमांशून् ' उपस्पृशानि, ' ' सत्येन ' ' सोमम् ' 'पराहणानि' अभिषुणोमीत्यभिप्रायेण हिरण्यं बध्नीयात् ॥ १ ॥

अथेति । ' अथ ' अंशुग्राहाभिषवार्थम् अध्वर्युः ' ग्रावाणमादत्ते ' । अभिषवसाधनस्य ग्राव्णोऽश्ममयत्वं विधाय प्रशंसति—ते वा एत इति । सोमस्य देवत्वसमर्थनाय दिवि हीति । ' हि '—शब्दः " तृतीयस्यामितो दिवि सोम आसीत् " ( तै. सं. ३ । ५ । ७ । १ ) इत्यादिश्रुत्यन्तरप्रसिद्ध्यर्थः । तस्य द्युस्थस्य सोमस्य वृत्रत्वप्रकारः प्राग्वर्णितः ( श. प. ३ । ६ । ३ । १३ ) । तस्य वृत्रीभूतस्य सोमस्य ' शरीरं ' परिदृश्यमानाः

तमा॒दत्ते । दे॒वस्य॑ त्वा सवि॒तुः प्र॑स॒वेऽश्विनो॑र्बा॒हुभ्यां॑ पू॒ष्णो हस्ता॑भ्या॒मा द॑दे ग्रा॒वासी॒ति सवि॒ता वै दे॒वानां॑ प्रसवि॒ता त॒त्सवि॒तृप्र॑सूत ए॒वैन॑मे॒तदा॑दत्तेऽश्विनो॑र्बा॒हुभ्या॒मित्य॒श्विना॑वध्व॒र्यू त॒त्तयो॑रे॒व बा॒हुभ्या॑मादत्ते॒ न स्वाभ्यां॑ पू॒ष्णो हस्ता॑भ्या॒मिति॑ पू॒षा भा॑ग॒दुघ॒स्तत्तस्यै॒व हस्ता॑भ्यामादत्ते॒ न स्वाभ्यां॒ वज्रो॒ वा ऽए॒ष तस्य॒ न म॑नु॒ष्यो भ॒र्त्ता तमे॒ताभि॑र्दे॒वता॑भि॒राद॑त्ते ॥ ३ ॥

( त्तऽ ) आद॑दे ग्रा॒वासी॒ति । य॒दा वा ऽए॒नमे॒तेना॑भिषु॒ण्वन्त्य॒थाहु॑तिर्भ॒वति॒ य॒दाहु॑तिं जु॒होत्य॒थ दक्षि॑णा ददा॒त्येत॒द्ध्ये॒ष द्व॒यꣳ रा॑सत ऽआहु॑तीश्च॒ दक्षि॑णाश्च॒ तस्मा॑दाह ग्रा॒वासी॒ति ॥ ४ ॥

---

तमादत्ते—" देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे रावासि "—( वा. सं. ६।३० ) इति । सविता वै देवानां प्रसविता । तत् सवितृप्रसूत एवैनमेतदादत्ते—अश्विनोर्बाहुभ्यामिति—अश्विनावध्वर्यू । तत् तयोरेव बाहुभ्यामादत्ते—न स्वाभ्याम् । पूष्णो हस्ताभ्यामिति । पूषा भागदुघः तत् तस्यैव हस्ताभ्यामादत्ते न स्वाभ्याम् । वज्रो वाऽएष तस्य न मनुष्यो भर्ता तमेताभिर्देवताभिरादत्ते ॥ ३ ॥

आददे रावासीति । यदा वाऽएनमेतेनाभिषुण्वन्ति—अथाहुतिर्भवति । यदाहुतिं जुहोति—अथ दक्षिणा ददाति । एतद्ध्येष द्वयं रासते—आहुतीश्च दक्षिणाश्च । तस्मादाह—रावासीति ॥ ४ ॥

---

' गिरयः ' तदवयवाः ' अश्मानः ' । अतः ' एतत् ' एतेन ग्राव्णामश्ममयत्वकरणेन ' एनं ' सोमं समृद्धं कृतवान् भवति । न हि स्वशरीरं स्वस्य बाधकं भवति, अतस्तेनाभिषवेणापि समृद्धिरेवेत्यर्थः । किञ्चापरावयविनौ विश्लिष्टाविदानीं सोमाभिषवव्याजेन सम्बन्धयन् सोमं ' कृत्स्नं ' सकलं कृतवान् भवति । किञ्चाभिषवो नामास्य वधः, तं कुर्वन्तोऽप्येते अश्ममया ग्रावाणः तदवयवत्वात् ' न घ्नन्ति ' न हिंसन्ति । ' अतः ' ' अस्मात् ' अभिषवस्थानात् सोमः ' उदेति ' पुनरुदितो भवति । तथैव ' सञ्जीवति ' च पुनः सम्यग्जीवोपेतो भवति । तस्मादिति पुनरुपसंहारः ॥ २ ॥

अथ तत्र मन्त्रं विधाय व्याचष्टे—तमादत्ते देवस्य त्वेत्यादिना । गतमेवैतत् । पूषा भागदुघ इति । " दुहेः कब्घश्च "—( पा. सू. ३ । २ । ७० ) इति कप्, घकारश्च । किं कारणं सवित्राद्यभिधानम् ? उच्यते—वज्रो वा एष इति । ' एषः ' ग्रावाप्रक्षेपसाधनत्वसाम्यात् सारवत्त्वाच्च ' वज्रः ' ' अतः ' ' तस्य ' अस्य देवः ' भर्ता ' स्वामी ' न मनुष्यः '; यत एवमतः ' तं ' ग्रावाणम् ' एताभिः ' सवित्रादिभिः ' देवताभिः ' ' आदत्ते ' अध्वर्युः ॥ ३ ॥

आददे रावासीति । मन्त्रभागे ग्रावाणं सम्बोध्य त्वं रावासीति मन्त्रोऽभिधत्ते, तस्य तथात्वं कुत इत्याशङ्क्य परम्परया भविष्यतीत्युपपादयति—यदा वा एनमेतेनाभिषुण्वन्तीत्यादिना । अभिषवाभावे आहुत्यसम्भवात्, आहुत्यभावे दक्षिणानामप्रसक्तेः ' आहुतीश्च दक्षिणाश्च ' इति ' एतद् ' द्वयम् ' एषः ' ग्रावा ' रासते '

---

१—' देवस्यत्वेत्यद्रिमादाय ' का. श्रौ. सू. ९ । ५९ ।

गभीरमिममध्वरं कृधीति । ( त्य ) अध्वरो वै यज्ञो महान्तमिमं यज्ञं कृधीत्येवैतदाहेन्द्राय सुषूतममितीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्रायेति सुषूतममिति सुसुतममित्येवैतदाहोत्तमेन पविनेत्येष वा ऽउत्तमः पविर्यत्सोमस्तस्मादाहोत्तमेन पविनेत्यूर्जस्वन्तं मधुमन्तं पयस्वन्तमिति रसवन्तमित्येवैतदाह यदाहोर्जस्वन्तं मधुमन्तं पयस्वन्तमिति ॥ ९ ॥

( त्य ) अथ वाचं यच्छति । देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य

---

"गभीरमिममध्वरं कृधि"–( वा. सं. ६ । ३० ) इति । अध्वरो वै यज्ञः । महान्तमिमं यज्ञं कृधीत्येवैतदाह । "इन्द्राय सुषूतमम्"–( वा. सं. ६ । ३० ) इति । इन्द्रो वै यज्ञस्य देवता । तस्मादाह–इन्द्रायेति । सुषूतममिति । सुसुतममित्येवैतदाह । "उत्तमेन पविना"–( वा. सं. ६ । ३० ) इति एष वाऽउत्तमः पविः–यत्सोमः । तस्मादाह उत्तमेन पविनेति । "ऊर्ज्जस्वन्तं मधुमन्तं पयस्वन्तम्"–( वा. सं. ६।३० ) इति । रसवन्तमित्येवैतदाह–यदाह ऊर्ज्जस्वन्तं मधुमन्तं पयस्वन्तमिति ॥ ९ ॥

अथ वाचं यच्छति । देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयाञ्चक्रुः । ते होचुः–उपांशु यजाम, वाचं यच्छामेति । तऽउपांश्वयजन्, वाचमयच्छन् ॥ १० ॥

---

ददाति । अतो 'रासत इति रावेति; रासतेर्दानार्थात्' ( निघं० ३।२२।९ ) रावशब्दो निष्पन्न इत्यभिप्रायेण मन्त्रो 'रावासीति आह' इत्यर्थः ॥ ४ ॥

**गभीरमिममध्वरमिति** मन्त्रं व्याचष्टे–योऽयम् 'अध्वरः' सः 'यज्ञः' 'वै' एव, उभौ शब्दौ पर्यायावित्यर्थः । यदतिगुम्फितत्वेन महत्, तद् 'गभीरम्' इति लोके व्यवह्रियते । अतो गभीरे महत्वदर्शनात् 'इमम् अध्वरं महान्तं कृधि' 'इत्याह' मन्त्रः । सुषूतममित्यत्र सुसुतममिति वक्तव्ये सकारलोपो दीर्घश्च छान्दस इत्यभिप्रायेण व्याचष्टे–**सुषूतममिति सुसुततममित्येवैतदाहेति** । पविशब्दस्य वज्रादौ प्रसिद्धत्वादत्र सोमार्थ इति व्याचष्टे–**एष वा उत्तमः पविः, यत् सोम इति** । पवतिर्गतिकर्मा ( निघ. २ । १४ । १०८ ) पवति, दशापवित्रे स्रवतीति पविः सोमः । अथ वा पविवद् बलरूपत्वात् पविः सोमः । सोम 'इति' यदस्ति, 'एषः' सोमः 'उत्तमः' 'पविः' खलु, सोमपानेन प्रबलस्येन्द्रस्य वृत्रादिवधश्रवणादत्र मधुररसानां वाचका ये ऊर्ज-मधु-पयः-शब्दाः, तेषां तात्पर्यतो रस एवार्थ इति व्याचष्टे–**ऊर्जस्वन्तं पयस्वन्तमित्यादिना** । अत्रोर्जमधुपयसां रसविशेषरूपत्वात् सामान्यविशेषरूपादिति भावः । नैते माधुर्यार्थतया प्रसिद्धाः, अतः कथं त एवं सङ्गच्छन्त इत्यस्या आशङ्काया अपनोदनाय, पुनर्निर्देशः कृतः–**यदाहोर्जस्वन्तं मधुमन्तं पयस्वन्तमितीति** । मन्त्रस्यायमर्थः–हे ग्रावन् ! त्वं 'रावासि', अतस्त्वां 'सवितुः देवस्य' अनुज्ञायां सत्याम 'अश्विनोर्बाहुभ्यां' 'पूष्णो हस्ताभ्याम्' च 'आददे' । उक्तो बाहुहस्तविभागः । 'इदम्' 'अध्वरं' यज्ञं 'गभीरं' महान्तं 'कृधि' कुरु । 'इन्द्राय' इन्द्रार्थं 'सुषूतमं' सुष्ठ्वभिषुतं कुरु । 'उत्तमेन पविना' सोमेन युक्त चेममध्वरम् ऊर्जादेराश्रयभूतरसोपेतं कुर्विति ॥ ९ ॥

**अथ वाचं यच्छतीति** । वाग्यमनार्थवादो **देवा ह वा इत्यादिः**, प्राग्व्याख्यातः । वाग्यमनस्यावधिः

आसङ्गाद्बिभयाञ्चक्रुस्ते होचुरुपाꣳशु यजाम व्वाचं यच्छामेति तु-ऽउपाꣳशयजन्वाचमयच्छन् ॥ ६ ॥

(ब्रा)अथ निग्राभ्या आहरति । तास्वेनं व्वाचयति निग्राभ्या स्थ देवश्रुतस्तर्पयत मा मनो मे तर्पयत व्वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा व्वितृषन्निति रसो वा ऽआपस्तास्वेवैतामाशिषमाशास्ते सर्वं च म ऽआत्मानं तर्पयत प्रजांमे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा व्वितृषन्निति स य एष उपाꣳशुसवनः स व्विवस्वानादित्यो निदानेन सोऽस्यैष व्यानः ॥ ७ ॥

---

अथ निग्राभ्या आहरति । तास्वेनं वाचयति–"निग्राभ्यास्थ देवश्रुतस्तर्पयत, मा मनो मे (६।३०।) तर्पयत, वाचं मे तर्पयत, प्राणं मे तर्पयत, चक्षुर्मे तर्पयत, श्रोत्रं मे तर्पयत, आत्मानं मे तर्पयत, प्रजां मे तर्पयत पशून्मे तर्पयत, गणान्मे तर्पयत, गणा मे मावितृषन्"–(वा. सं. ६ । ३१) इति । रसो वाऽआपः । तास्वेवैतामाशिषमाशास्ते। सर्वञ्च मऽआत्मानं तर्पयत, प्रजां तर्पयत, पशून्मे तर्पयत, गणान्मे तर्पयत, गणा मे मा वितृषन्निति । स य एष उपांशुसवनः–स विवस्वानादित्यो निदानेन । सोऽस्यैष व्यानः ॥ ७ ॥

---

सूत्रे दर्शितः–" देवस्य त्वेत्यद्रिमादाय, वाचं यच्छति प्राग्धिङ्कारात्"–( का. श्रौ. सू. ९ । ९९ ) इति॥६॥

यदुक्तं सूत्रकृता–" निग्राभ्या सुवाचयति उरस्येना निगृह्य निग्राभ्याः स्थेति " (का. श्रौ.सू.९।६१)तदिदमाह–अथ निग्राभ्या आहरति, तास्वेनं वाचयति निग्राभ्याः स्थ देवश्रुत इत्यादिना । 'तासु' आगतासु 'एनं' यजमानं 'निग्राभ्याः स्थ' इत्यादि-मन्त्रं 'वाचयति' अध्वर्युः । हे आपः ! 'देवश्रुतः' देवेषु प्रसिद्धाः सत्यो यूयं 'निग्राभ्याः स्थ' इन्द्रेणोरसि गृहीतत्वात् । वक्ष्यति हि–" तद्यदेना उरसि न्यगृह्णीत, तस्मान्निग्राभ्या नाम "–इति । तादृश्यो यूयं 'मा' मां 'तर्पयत' प्रीणयत ॥

सङ्गृह्योक्तमवयवशोऽभिधत्ते–मनो म इत्यादिना । 'आत्मानं' शरीरम् । 'प्रजां' पुत्रादिकाम् । 'गणान्' बन्धुभृत्यादीन् । युष्माभिस्तर्पिता अस्मदीयाः 'गणाः' 'मा वितृषन्' विवृद्धतृष्णा मा भूवन् । आपः स्वल्पमेव तर्पणसाधनं द्रव्यम्, तर्पयितव्यास्तु बहवः, अतस्तासां तादृशी शक्तिः कुत इत्याशङ्कायामाह–रसो वा आपस्तास्वेवैतामाशिषमाशास्त इति । अपां 'रसरूपत्वात् तास्वप्स्वेवैतां तृप्तिरूपामाशिषमाशास्ते; अतः सारवतामाशासनं युक्तम् । मन आदिकं सर्वमपि सङ्गृह्यानुवदति–सर्वं च म इति । आत्मानमित्यादिर्विविच्यानुवादः ॥

" उपांशुसवने सोमं मिमीत इन्द्राय त्वा वसुमत " इत्यादिसूत्रोक्तमर्थं दर्शयति–य एष उपांशुसवनः, स विवस्वानादित्यो निदानेन सोऽस्यैष व्यान इति । उपांशुग्रहार्थः सोमोऽभिषूयते येन, स 'उपांशु-

( स्तु ) तमभिमिमीते । घ्नन्ति वा ऽएनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथात उदेति तथा सञ्जीवति यद्वेव मिमीते तस्मान्मात्रा मनुष्येषु मात्रो यो चाप्यन्या मात्रा ॥ ८ ॥

स मिमीते । ( तऽ ) इन्द्राय त्वा व्वसुमते रुद्रवत ऽइतीन्द्रो वै यज्ञस्य देवता तस्मादाहेन्द्राय त्वेति व्वसुमते रुद्रवत इति तदिन्द्रमेवानु वसूंश्च रुद्रांश्चाभजतीन्द्राय त्वादित्यवत ऽइति तदिन्द्रमेवान्वादित्यानाभजतीन्द्राय त्वाभिमातिघ्न ऽइति सपत्नो वा ऽअभिमातिरिन्द्राय त्वा सपत्नघ्न ऽइत्येवैतदाह सोऽस्योद्धारो यथा श्रेष्ठस्योद्धार एवमस्यैष ऽऋते देवेभ्यः ॥ ९ ॥

---

तमभिमिमीते । घ्नन्ति वाऽएनमेतद्–यदभिषुण्वति । तमेतेन घ्नन्ति । तथा त उदेति, तथा सञ्जीवति । यद्वेव मिमीते–तस्मान्मात्रा–मनुष्येषु । मात्रो यो चाप्यन्या मात्रा ॥ ८ ॥

स मिमीते–" इन्द्राय त्वा वसुमते रुद्रवते "–( वा. सं. ६ । ३२ ) इति । इन्द्रो वै यज्ञस्य देवता । तस्मादाह–इन्द्रायत्वेति, वसुमते रुद्रवत इति । तदिन्द्रमेवानु वसूंश्च रुद्रांश्चाभजति । " इन्द्राय त्वादित्यवते "–( वा. सं. ६ । ३२ ) इति । तदिन्द्रमेवान्वादित्यानाभजति । " इन्द्राय त्वाभिमातिघ्न "–( वा. सं. ६ । ३२ ) इति । सपत्नो वाऽअभिमाति । इन्द्राय त्वा सपत्नघ्नऽइत्येवैतदाह । सोऽस्योद्धारो–यथा श्रेष्ठस्योद्धारः–एवमस्यैष–ऋते देवेभ्यः ॥ ९ ॥

---

सवनः ' पाषाणः; ' सः ' ' निदानेन ' मूलकारणविचारेण विवस्वत्सञ्ज्ञक आदित्य एव । तस्यैवैतदात्मनावस्थानात् । ' स एषः ' ' अस्य ' यज्ञस्य ' व्यानः '; प्राणापानरूपयोरुपांश्वन्तर्यामयोर्मध्ये स्थाप्यत्वात् । " अथ यः प्राणापानयोः सन्धिः स व्यानः "--( छां. ब्रा. ९ । ३ । ३ ) इति श्रुतेरस्य व्यानत्वम् । उपांशुसवन इति वैदिकी संज्ञा व्यवहारार्था, तदुपांशुसवनेन मिश्रयतीत्येवमर्था ॥ ७ ॥

तमभिमिमीत इति । ' तम् ' उपांशुसवनम् ' अभि ' तस्योपरि सोमं ' मिमीते ' क्रयकालीनमानेन सोमं संस्कुर्यात् । " घ्नन्ति वा " इत्यादिरूपोपांशुसवनरूपोपरिमानार्थवादवद् व्याख्यायमानस्य ग्रावोपरिभावं प्रशस्येदानीं मानं प्रशंसति–यद्वेव मिमीते तस्मान्मात्रा मनुष्येष्विति । ' उ ' शब्दोऽप्यर्थः । याऽपि मात्रा सोमे कृता, ' तस्मात् ' सोमस्य मितत्वात् ' मनुष्येषु ' व्यवहारार्थं प्रस्थ-कुडवाढकद्रोणादिका ' मात्रा ' सम्पन्ना । " यो चापि "–इत्यत्र उकारः प्रश्लेषः । ' अपि च ' ' या उ ' च ' अन्या मात्रा ' एकद्वित्र्यादिसङ्ख्याप्रयुक्ता, सापि सोममानप्रयुक्तेत्यर्थः ॥ ८ ॥

सोमोन्माने मन्त्रं विधाय व्याचष्टे–स मिमीत इन्द्राय त्वा वसुमत इत्यादिना । इन्द्रस्य विशेष्यतया निर्देशस्य वसुरुद्राणां तद्विशेषणतया निर्देशस्य च प्रयोजनमाह–इन्द्रो वै यज्ञस्य देवतेत्यादिना । ' यज्ञस्य ' सोमयागस्य 'इन्द्रो देवता'; "प्रातःसुतमपिबो हर्यश्वमाध्यन्दिनं सवनं केवलं ते । समृभुभिः पिबस्व रत्नधेभिः "–( ऋ. सं. ४ । ३२ । ७ ) इत्यादिमन्त्रलिङ्गात्सवनत्रयेऽपि इन्द्रस्य प्राधान्यात् " इन्द्रो वै यज्ञस्य देवता "–

---

१–' पात्रो ' इति वैदिकपाठपुस्तके पाठः ।

श्येनाय त्वा सोमभृत ऽइति । तद्गायत्र्यै मिमीतेऽग्नये त्वा रायस्पोषद ऽइत्यग्निर्वै गायत्री तद्गायत्र्यै मिमीते स यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्तेन सा श्येनः सोमभृत्तेनैवास्या एतद्वीर्येण द्वितीयꣳ मिमीते ॥ १० ॥

( तेऽथ ) अथ यत्पञ्चकृत्वो मिमीते । संव्वत्सरसम्मितो वै यज्ञः पञ्च वा ऽऋतवः संव्वत्सरस्य तं पञ्चभिराप्नोति तस्मात्पञ्चकृत्वो मिमीते ॥ ११ ॥

तमभिमृशति । यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे । तेनास्मै यजमानायोरु राये कृद्ध्यधि दात्रे व्वोच ऽइति यत्र वा ऽएषोऽग्रे

"श्येनाय त्वा सोमभृते"–( वा. सं. ६ । ३२ ) इति । तद् गायत्र्यै मिमीते । "अग्नये त्वा रायस्पोषदे"–( वा. सं. ६ । ३२ ) इति । अग्निर्वै गायत्री । तद् गायत्र्यै मिमीते । स यद् गायत्री श्येनो भूत्वा दिवः सोममाहरत्–तेन सा श्येनः सोमभृत् । तेनैवास्या एतद्वीर्येण द्वितीयं मिमीते ॥ १० ॥

अथ यत् पञ्चकृत्वो मिमीते । सम्वत्सरसम्मितो वै यज्ञः । पञ्च वा ऽऋतवः सम्वत्सरस्य । तं पञ्चभिराप्नोति । तस्मात्पञ्चकृत्वो मिमीते ॥ ११ ॥

तमभिमृशति–"यत्ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरावन्तरिक्षे । तेनास्मै यजमाना-

इत्युक्तम् । 'वसुमते रुद्रवते' इत्यादौ वस्वादेरिन्द्रशेषत्वप्रतीतेः इन्द्रप्रधानभूतं मुख्यं भागिनं कृत्वा वस्वादीनपि 'अन्वाभजति' पश्चाद्भागिनः करोति, इन्द्रस्यानुचरान् कृतवान् भवतीति यावत् । "इन्द्राय त्वाभिमातिघ्ने"–इत्यत्राभिमातिशब्दः सपत्नमभिधत्त इत्याह–सपत्नो वा अभिमातिरिति । "इन्द्राय त्वाभिमातिघ्ने"–इत्यत्र देवतान्तरसम्बन्धवैधुर्यं प्रशंसति–सोऽस्योद्धारो यथा श्रेष्ठस्येति । यथा धान्यादिविभागसमये मुख्यस्य राज्ञो देयो भागः प्रातिस्विकः, तं प्रथममेवापोद्धृत्य पश्चात् स्वं स्वमंशं विभजन्ति, एवं रुद्रवस्विन्द्रेभ्यः देवतान्तरसहभावमन्तरेण केवल उद्धारः कृतो भवति । श्रेष्ठत्वे बीजमभिमातिहन्तृत्वम् । यतोऽयमभिमातिहाः, अत उद्धारार्ह इत्यभिप्रायः ॥ ९ ॥

श्येनाय त्वेति । 'श्येनाय त्वा'–'अग्नये त्वा'–इति वाक्यद्वयस्य तात्पर्यमाह–तद्गायत्र्यै मिमीत इति । 'सोमभृते श्येनाय' इति सोमोन्माने कृतं गायत्र्यर्थत्वं कथं स्यादित्याशङ्क्य तदुपपादयति–स यद् गायत्री श्येनो भूत्वा दिवः सोममाहरदिति । अग्न्यर्थमितस्य, गायत्र्यर्थत्वं तु स्पष्टत्वाद् ब्राह्मणे उपेक्षितम् । तत्रेत्थमेवावगन्तव्यम्–"अग्नेर्गायत्र्यभवत्"–इति मन्त्रवर्णात् गायत्र्या निदानमग्निः; अतो जन्यजनकयोरभेदोपचारेण गायत्र्यर्थता स्यादित्यभिप्रेत्य "तद्गायत्र्यै मिमीते"–इत्युक्तम् ॥ १० ॥

मानगतपञ्चसङ्ख्यां प्रशंसति–अथ यत्पञ्चकृत्वो मिमीत इति । "एकमन्त्राणि कर्माणि" इति न्यायस्यौत्सर्गिकत्वान्मन्त्राणां पञ्चत्वान्मानमपि पञ्चकृत्व इत्यर्थसिद्धम् । गवामयनादिसत्रस्य संवत्सरसम्मितयज्ञत्वं प्रसिद्धम् । 'तस्मात्' 'पञ्च कृत्वः' मानं प्रशस्तम् । "इन्द्राय त्वा वसुमते रुद्रवत इति पञ्चकृत्वः प्रतिमन्त्रम्" ( का. श्रौ. सू. ९ । १२ ) इति सूत्रम् ॥ ११ ॥

मितस्य सोमस्य समन्त्रकमभिमर्शनं विधत्ते–तमभिमृशति यत्ते सोम दिवि ज्योतिरिति । ( "यत्त इति

१–'तद्वदनु' इति क. पु. पाठः २–'संवत्सरसाध्यत्वाद्यज्ञः संवत्सरसम्मितः । अतो मानगतपंचसंख्याद्वारेण पंचर्त्वात्मक संवत्सरसंमितं यज्ञमाप्नोति । इति क. पु. पाठः ।

देवानाᳩं हविर्बभूव तद्धेक्षाञ्चक्रे मैव सर्व्वेणेवात्मना देवानाᳩं हविर्भूवमिति स एतास्तिस्रस्तनूरेषु लोकेषु व्विन्यधत्त ॥ १२ ॥

तद्वै देवा अस्पृण्वत । तेऽस्यैतेनैवैतास्तनूराप्नुवन्त्स कृत्स्न एव देवानाᳩं हविरभवत्तथो एवास्यैष एतेनैवैतास्तनूराप्नोति स कृत्स्न एव देवानाᳩं हविर्भवति तस्मादेवमभिमृशति ॥ १३ ॥

(त्य)अथ निग्राभ्याभिरुपसृजति ।(त्या)आपो ह वै व्वृत्रं जघ्नुस्तेनैवैतद्वीर्येणापः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किञ्चन प्रतिधारयते ता ह स्वमेव व्वशश्चेरुः कस्मै नु व्वयं तिष्ठेमहि याभिरस्माभिर्व्वृत्रो हत इति सर्व्वं वा इदमिन्द्राय तस्थानुमास यदिदं किञ्चापि सोऽयं पवते ॥ १४ ॥

---

योरु राये कृद्ध्यधि दात्रे वोचः ”–( वा.सं. ६।३३ ) इति । यत्र वाऽएषोऽग्रे देवानां हविर्बभूव । तद्धेक्षाञ्चक्रे–मैव सर्वेणेवात्मना देवानां हविर्भूवमिति । स एतास्तिस्रस्तनूरेषु लोकेषु विन्यधत्त ॥१२॥

तद्वै देवा अस्पृण्वत । तेऽस्यैतेनैवैतास्तनूराप्नुवन् । स कृत्स्न एव देवानां हविरभवत् । तथोऽएवास्यैष एतेनैवैतास्तनूराप्नोति । स कृत्स्न एव देवानां हविर्भवति । तस्मादेवमभिमृशति ॥ १३ ॥

अथ निग्राभ्याभिरुपसृजति । आपो ह वै वृत्रं जघ्नुः । तेनैवैतद्वीर्येणापः स्यन्दन्ते । तस्मादेनाः

---

मितालम्भनम् ” इति का.श्रौ.सू. ९।६३ ) हे सोम ! ‘ ते ’ तव ‘ यत् ’ ‘ज्योतिः’ द्युतिमत्त्वं ‘दिवि’ अस्ति, ‘ यत् ’ ‘पृथिव्यां’ ज्योतिः वल्लीरूपः सोमः ‘यद्’ अपि ‘ उरौ ’ विस्तीर्णे ‘ अन्तरिक्षे ’ षोडशकलात्मकः, ‘ तेन ’ सर्वेण तव स्वरूपेण सहितः सन् ‘ अस्मै ’ अभिषुण्वते ‘ यजमानाय ’ ‘ राये ’ तस्य धनार्थम् ‘ उरु कृधि ’ प्रभूतं कुरु । तव शरीरमिति शेषः । ‘ दात्रे ’ हविःप्रदात्रे ‘ अधिवोचः ’ यजमानेन वचनमधिवचनम्, मदीयोऽयं सर्वथा अनुग्राह्य इति प्रब्रूहीत्यर्थः ।

सोमस्य लोकान्तरस्थाप्यंशस्य यत् परिग्रहाभिधानम्, तदाख्यायिकामुखेन प्रशंसति–यत्र वा एषोऽग्रे देवानामित्यादिना । ‘ यत्र ’ यत्काले ‘ अग्रे ’ सृष्टेः प्राक् ‘ देवानां ’ ‘ हविः बभूव ’ सोमः, ‘ तत् ’ तदा अहं ‘ सर्वेणात्मना ’ ‘ देवानां ’ ‘ हविः ’ ‘ मा भूवम् ’ न भवामि ‘ इति ’ विचार्य, ‘ एषु ’ त्रिषु ‘ लोकेषु ’ स्वाः ‘ तनूः ’ विन्यधत्त ’ विभज्य स्थापितवान् ॥ १२ ॥

तद्वै देवा अस्पृण्वतेति । ‘ तद् ’ वृत्तान्तं ‘ देवाः ’ ‘ अस्पृण्वत ’ । “ स्पृ प्रीतिबलनयोः ” ( धा. पा. स्वा. प. १३ ) बलोपलक्षितव्यापारं कृतवन्तः, ज्ञातवन्त इत्यर्थः । ‘ ते ’ देवाः ‘ अस्य ’ अग्नेः ‘ एताः ’ लोकत्रयस्थिताः ‘ तनूः ’ ‘ एतेन ’ “ यत् ते सोम दिवि ज्योतिः ”–इत्यादिमन्त्रेण ‘ आप्नुवन् ’ प्राप्तवन्तः ‘ सः ’ ‘ कृत्स्न एव ’ अविकल एव ‘ देवानां हविरभवत् ’ । तथो एवेत्यादि, दृष्टान्तवाक्यवद्व्याख्येयम् । तस्मादेवमिति निगमयति ॥ १३ ॥

अथ निग्राभ्योदकैः सोमसेचनं विधत्ते–अथ निग्राभ्याभिरुपसृजतीति । मिश्रयेदित्यर्थः ।

---

१–धात्रान्स्थेत्यासिंचति निग्राभ्याः । का. श्रौ. सू. ९ । ६५ ।

स इन्द्रोऽब्रवीत् । (त्सु) सुर्व्वं वै म ऽइदं तस्थानं युदिदं किञ्च तिष्ठध्वमेव म ऽइति ता होचुः किं नस्ततः स्यादिति प्रथमभक्ष एव वः सोमस्य राज्ञऽ इति तथेति ता अस्मा ऽअतिष्ठन्त तास्तस्थाना उरसि न्यगृह्णीत तद्य-देना उरसि न्यगृह्णीत तस्मान्निग्राभ्या नाम तथैवैना एतद्यजमान उरसि निगृह्णीते स आसामेष प्रथमभक्षः सोमस्य राज्ञो यन्निग्राभ्याभिरुपसृजति १५

---

स्यन्दमाना न किञ्चन प्रतिधारयते । ता ह स्वमेव वशं चेरुः । कस्मै नु वयं तिष्ठेमहि, याभिरस्माभि-र्वृत्रो हत इति । सर्वं वाऽइदमिन्द्राय तस्थानमास—यदिदं किञ्च—अपि योऽयं पवते ॥ १४॥

स इन्द्रोऽब्रवीत् । सर्वं वै मऽइदं तस्थानम्—यदिदं किञ्च तिष्ठध्वमेव । मऽइति । ता होचुः—किं नस्ततः स्यादिति । प्रथमभक्ष एव वः सोमस्य राज्ञ इति । तथेति । ता अस्माऽअतिष्ठन्त । तास्तस्थाना उरसि न्यगृह्णीत । तद् यदेना उरसि न्यगृह्णीत । तस्मान्निग्राभ्या नाम । तथैवैता एत-द्यजमान उरसि निगृह्णीते । स आसामेष प्रथमभक्षः सोमस्य राज्ञः, यन्निग्राभ्याभिरुपसृजति ॥ १५॥

---

मिश्रणमाख्यामुखेन प्रशंसति—आपो ह वै वृत्रं जघ्नुरित्यादिना । 'तेनैव वीर्येण' केनाप्यवध्यो वृत्रोऽस्माभिर्हत इत्येवमात्मकेन 'एतत्' इदानीमपि 'आपः' 'स्यन्दन्ते' वेगेन गच्छन्ति । यस्मादेवं तस्मात् 'स्यन्दमानाः' 'एनाः' आपः 'न किञ्चन' वस्तु, लोष्टकाष्ठपाषाणादिकं 'प्रतिधारयति' प्रति-बध्नाति, किन्तु, 'ताः' आपः 'स्वमेव वशं' स्वतन्त्रं यथा भवति तथा विश्रम्भेण 'चेरुः' अगच्छन् । तेषां स्वातन्त्र्ये कारणमाह—कस्मै नु वयं तिष्ठेमहि, याभिरस्माभिर्वृत्रो हत इतीति । सर्वस्यापि लोकस्य घातको वृत्रः, सोऽप्यस्माभिर्घातितः; अतो 'वयं' 'कस्मै' अन्यस्मै 'तिष्ठेमहि' आत्मानं प्रकाशयेमेति । इत्थमपां स्वातन्त्र्यं प्रतिपाद्य, तासामिन्द्राधीनत्वं प्रतिपादयति—सर्वं वा इदमिन्द्राय तस्थानमासेति । 'तस्थानम्' इति तिष्ठतेः कानचि रूपम् । ( पा. सू. ३ । २ । १०९ । १०६ सू. ) कैमुतिकन्यायसिद्ध्यर्थमाह—अपि योऽयं पवत इति । 'योऽयं' दुर्वहत्वेन प्रसिद्धो वायुः 'पवते' सोऽपि इन्द्राधीनः स्थितवान् किल, किमु वक्तव्यमेतत् सर्वमिन्द्रवशे स्थितमिति ॥ १४ ॥

स इन्द्रोऽब्रवीदिति । अथ 'स इन्द्रः' एवम् 'अब्रवीत्' । 'यत्' 'किञ्च' 'इदं' भूतजातं 'मे' मदर्थं स्थितम्, अतो यूयमपि 'तिष्ठध्वमेव' न गच्छत 'इति' । अथ तेन तथोक्ताः 'ताः' आपः, वयं तिष्ठेमहि, 'नः' अस्माकं 'ततः' 'किं' लब्धं 'स्यात्' ? 'इति' अब्रुवन् । अथ तासामिन्द्रः 'सोमस्य राज्ञः प्रथमभक्षे' इतरेभ्यो देवेभ्यः प्राक्, अभिषवकाले 'एव' 'वः' अस्तु 'इति' प्रादात् । 'ताः' अस्तु 'तथेति' अङ्गीकृत्य अस्मै' इन्द्राय 'अतिष्ठन्त' ॥

प्रसङ्गात् निग्राभ्यशब्दनिर्वचनमाह—तास्तस्थाना उरसि न्यगृह्णीत इति । इन्द्रेणोरसि निगृहीतत्वात् 'निग्राभ्याः' इति तासामपां नाम सम्पन्नम् । "ह्ग्रहोर्भश्छन्दसि" ( वै.प्र. ३।१।८४वा१. ) इति हकारस्य भत्वम् । निग्राह्या इत्यर्थः । कर्मणि कृत्यः । तथैवैताः एतद्यजमान उरसि निगृह्णीत इत्यर्थः । अत्र विधिरुन्नयो निगृह्णीयादिति । न चात्र प्रथमभक्षः श्रूयत इत्याशङ्क्य अभिषवकाले ताभिः संसर्ग एव भक्ष इत्याह—स आसामेष इति ॥ १५॥

स उपसृजति । श्वात्रा स्थ वृत्रतुर इति शिवा ह्यापस्तस्मादाह श्वात्रा स्थेति वृत्रतुर इति वृत्रꣳ ह्येता अघ्नन्राधो गूर्त्ताऽअमृतस्य पत्नीरित्यमृता ह्यापस्ता देवीर्देवत्रेमं यज्ञं नयतेति नात्र तिरोहितमिवास्त्युपहूताः सोमस्य पिबतेति तदुपहूता एव प्रथमभक्षꣳ सोमस्य राज्ञो भक्षयन्ति ॥ १६

( न्त्यु ) अथ प्रहरिष्यन् । (न्यं) यं द्विष्यात्तं मनसा ध्यायेदमुष्मा ऽअहं प्रहरामि न तुभ्यमिति यो न्वेवेमं मानुषं ब्राह्मणꣳ हन्ति तं न्वेव परिच-

---

स उपसृजति—“ श्वात्रा स्थ वृत्रतुरः ”—( वा. सं. ६।३४ ) इति । शिवा ह्यापः । तस्मादाह—श्वात्रा स्थेति वृत्रतुर इति । वृत्रं ह्येता अघ्नन् । “ राधो गूर्ताऽअमृतस्य पत्नीः ”—( वा. सं. ६।३४ ) इति । अमृता ह्यापः । “ ता देवीर्देवत्रेमं यज्ञं नयत ”—( वा. सं. ६।३४ ) इति । नात्र तिरोहितमिवास्ति । “ उपहूताः सोमस्य पिबत ”—( वा. सं. ६ । ३४ ) इति । तद् उपहूता एव प्रथमभक्षं सोमस्य राज्ञो भक्षयन्ति ॥ १६ ॥

अथ प्रहरिष्यन्—यं द्विष्यात्तं मनसा ध्यायेद्—अमुष्माऽअहं प्रहरामि, न तुभ्यमिति । यो न्वेवेमं मानुषं ब्राह्मणं हन्ति—तं न्वेव परिचक्षते अथ किम्—य एतम् । देवो हि सोमः । घ्नन्ति वाऽएनमेतद्—

---

उपसर्गे मन्त्रमभिधाय व्याचष्टे—स उपसृजति श्वात्राः स्थ वृत्रतुर इत्यादिना । श्वात्र—शब्दस्याभिप्रायमाह—शिवा ह्याप इति । यद्यपि “ श्वात्रमिति क्षिप्रनाम ( निघं. ४ । २ । १४ ) आशु अतनं भवति ”—( निरु. ५ । १ । ३ ) इति निरुक्तम्, तथाप्यक्षरसामान्यान्निर्ब्रूयादितिन्यायेन[1] श्वात्रशब्दविश्लेषणेन शिवशब्दप्रतिभानादपां च सर्वाप्यायनरूपत्वेन शिवत्वप्रसिद्धेः “श्वात्राः स्थ ” इत्यभ्युक्तमित्यर्थः । यस्मात् ‘ एताः ’ आपः ‘ वृत्रमघ्नन् ’ तस्माद् वृत्रतुरः । इति ’ मन्त्रो ब्रूते । तुर्वी हिंसार्थः ( धा. पा. भ्वा. प. ५७१ ) । वृत्रं तुर्वन्ति घ्नन्तीति वृत्रतुरः । ‘ अमृतस्य ’ ‘ पत्नीः ’ पालयित्र्यः । यदि ह्यापोऽमृता न भवेयुः, तर्हि तादृशीनामपां स्वामित्वमेव नोपपद्यत इत्यनया प्रसिद्ध्या “ अमृता ह्यापः ”—इति ब्राह्मणम् । प्रसिद्धिवाचकं हिशब्दमाह—ता देवीर्देवत्रेति । मन्त्रभागस्य स्पष्टार्थतामाह—नात्र तिरोहितमिवास्तीति । इदानीन्तनं सोमपानविषयमुपह्वानम् “ उपहूताः सोमस्य पिबतेति ” मन्त्राभिधानादायातमिति दर्शयति—उपहूता एव-प्रथमभक्षं सोमस्य राज्ञो भक्षयन्तीति । मन्त्रस्यायमर्थः सम्पन्नः—हे निग्राभ्या आपः ! यूयं ‘ श्वात्राः स्थ ’ शिवा भवथ, ‘ वृत्रतुरः ’ वृत्रस्य हिंसकाः स्थ, ‘ राधः ’ धनस्य ‘ गूर्ताः ’ उद्यमयित्र्यः । “ गुरी उद्यमने ” ( धा.पा.तु.आ.१५ ) “ नसत्तनिषत्त—” इत्यादिना निपातितो गूर्त-शब्दः (पा. सू. ८।२।६१ ) । ‘अमृतस्य’ ‘ पत्नीः ’ पालयित्र्यः स्थ । अतस्तादृङ्महिमोपेताः ‘ देवीः ’ हे देव्यः ! ‘ देवत्रा ’ देवान् प्रति ‘ इमं यज्ञं ’ सोमात्मकं ‘ नयत ’ प्रापयत, ‘ उपहूताः ’ अनुज्ञाताः सत्यो यूयं ‘ सोमस्य ’ सोमं पिबतेति मन्त्रार्थः । “ श्वात्रा स्थेत्यासिञ्चति निग्राभ्याः[2] ”—( का. श्रौ. सू. ९।६५ ) इति कात्यायनः ॥ १६ ॥

यदुक्तं तेन “ प्रहरिष्यन् द्वेष्यं मनसा ध्यायेदमुष्मा अहं प्रहरामि, न तुभ्यं सोमेति । अभावे तृणम् । मा भेरिति प्रहरति । एवं त्रिः—( का. श्रौ. सू ९ । ६६—६९ ) इति, तदिदमाह—अथ प्रहरिष्यन्नित्यादिना ।

---

१—“ अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्नत्वेव निर्ब्रूयात् ” इति निरु. २ । १ । १ । २—अभिषुणात्यासेचं निग्राभ्याः इति सूत्रशेषः ।

क्षतेऽथ किं य एतं देवो हि सोमो घ्नन्ति वाऽएनमेतद्यदभिषुण्वन्ति तमेतेन घ्नन्ति तथा त उदेति तथा सञ्जीवति तथाऽनेनस्यं भवति यद्यु न द्विष्यादपि तृणमेव मनसा ध्यायेत्तथो ऽअनेनस्यं भवति ॥ १७ ॥

स प्रहरति । मा भेर्मा संविक्था इति मा त्वं भैषीर्मा संविक्थाऽअमुष्मा ऽअहं प्रहरामि न तुभ्यमित्येवैतदाहोर्ज्जं धत्स्वेति रसं धत्स्वेत्येवैतदाह धिषणे वीड्वी सती वीडयेथामूर्ज्जं दधाथामितीमे ऽएवैतत्फलके आहुरित्यु हैक ऽआहुः किन्नु तत्र योऽप्येते फलके भिन्द्यादिमे ह वै द्यावापृथिवी ऽएतस्माद्वज्रादुद्यतात्संरेजेते तदाभ्यामेवैनमेतद्द्यावापृथिवीभ्याᳪं शमयति तथेमे शान्तो न हिनस्त्यूर्ज्जं दधाथामिति रसं दधाथामित्येवैतदाह पाप्मा हतो न सोम इति तदस्य सर्वं पाप्मानᳪं हन्ति ॥ १८ ॥

---

यदभिषुण्वन्ति । तमेतेन घ्नन्ति । तथा त उदेति, तथा सञ्जीवति, तथाऽनेनस्यं भवति । यद्यु न द्विष्याद्-अपि तृणमेव मनसा ध्यायेत् । तथोऽअनेनस्यं भवति ॥ १७ ॥

स प्रहरति-" माभेर्मा सं विक्थाः "-( वा. सं. ६ । ३५ ) इति । मा त्वं भैषीः, मा सं विक्थाः, अमुष्माऽअहं प्रहरामि-न तुभ्यम्-इत्येवैतदाह-" ऊर्ज्जं धत्स्व "-( वा. सं. ६।३५ )

---

' अमुष्मै ' द्वेष्ट्रे ; अत्र सोमशर्म्मण इति द्वेष्टुर्नाम मनसा गृह्णीयात्, प्रहरामि प्रक्षिपामि, पाषाणरूपं वज्रमिति शेषः । हे सोम ! 'न तुभ्यमिति' [1]नैव प्रहरणं चेत् को बाध इति, तत्राह-यो न्वेवेमं मानुषं ब्राह्मणमिति । अत्यन्तदोषाविष्करणमितीमं ब्राह्मणमिति विशेषितम् । ' तं ' ब्राह्मणस्य हन्तारं ' परिचक्षते ' ' न्वेव ' खल्वेव । ' परिख्यानं ' दूष्यत्वेन वर्जनम्, ' अथ ' ' किं ', वक्तव्यमिति शेषः । ' एतं ' माहात्म्यवन्तं पुरोवर्तिनं यो हन्ति, तं परिचक्षत इति किमुतेत्यर्थः । कैमुतिकन्यायस्य बीजमाह-देवो हि सोम इति । हि-शब्दो " देवो वै सोमः "-इत्यादिश्रुतिप्रसिद्धिद्योतनार्थः । अस्तु तथा, यदि हन्तिः स्यात्, सैवात्र कुत इत्यत आह-घ्नन्ति वा एनमिति । प्राग्व्याख्यातमिदम् । ' एते ' शत्रुनामग्रहणपूर्वकमभिषुण्वन्तः ' तं ' सोमं ' न घ्नन्ति ' ' तथा ' द्वेष्यत्वभावनायां सत्याम् । ' अतः ' अस्माद्धननसकाशात्, अस्मात् स्थानाद्वा । ' तथा ' सति अभिषुण्वन्तोऽध्वर्योः ' अनेनस्यं भवति ' न विद्यते एनः पापं यस्य सः अनेनाः, तस्य भावः अनेनस्यं भवति ॥

द्वेष्याभावे तत् कथमित्याशङ्क्याह-यद्यु न द्विष्यादपि तृणमेव मनसा ध्यायेदिति । अमुष्मै तृणाय वज्रं प्रहरामि, हे सोम ! न तुभ्यमिति ध्यायेदित्यर्थः ॥ १७ ॥

प्रहरणमनूद्य मन्त्रं विधाय व्याचष्टे-स प्रहरति माभेरित्यादिना । मा भेरिति पदं व्याकुर्वन्नेव द्वेष्यत्वभावनायां यत् प्रयोजनं प्रागुक्तम्, तदेव माभेरिति मन्त्रभागस्यापि तात्पर्यमिति व्याचष्टे-माभेर्मा संविक्था इति, मा त्वं भैषीर्मा संविक्था अमुष्मा अहं प्रहरामि, न तुभ्यमित्येवैतदाहेति । ' एतत् ' मामेरिति मन्त्रवाक्यम् । ऊर्क्शब्दस्यान्ननामसु पाठात् ( निघं. २ । ७ । १९ ) अत्रान्नसारो रसो विवक्षित इति व्याचष्टे-रसं धत्स्वेत्येवैतदाहेति । " धिषणे वीड्वी "-इति मन्त्रभागस्य धिषणफलके अर्थ इति केषाञ्चि-

---

१-' तस्मै ' इति क. पु. अधिकः पाठः ।

स वै त्रिरभिषुणोति । त्रिः सुम्भरति चतुर्न्निग्राभमुपैति तद्दश दशाक्षरा वै विराड्वैराजः सोमस्तुस्माद्दशकृत्वः सुम्पादयति ॥ १९ ॥

इति । रसं धत्स्वेत्येवैतदाह । "**धिषणे वीड्वी सती वीडयेथामूर्ज्जं दधाथाम्** "–( वा. सं. ६ । ३९ ) इति । इमेऽएवैतत् फलके आहुः–इत्यु हैकऽआहुः । किं नु तत्र–योऽन्ये फलके भिन्द्यात् । इमे ह वै द्यावापृथिवी । एतस्माद्वज्राद्वद्यतात्संरेजेते । तदाभ्यामेवैनमेतद् द्यावापृथिवीभ्यां शमयति तथेमे । शान्तो न हिनस्ति । ऊर्ज्जं दधाथाम्–इति । रसं दधाथामित्येवैतदाह । "**पाप्मा हतो न सोमः** "–( वा. सं. ६ । ३९ ) इति । तदस्य सर्वं पाप्मानं हन्ति ॥ १८ ॥

स वै त्रिरभिषुणोति, त्रिःसम्भरति, चतुर्न्निग्राभमुपैति–तद्दश । दशाक्षरा वै विराड् वैराजः सोमः । तस्माद्दशकृत्वः सम्पादयति ॥ १९ ॥

---

दाचार्याणां मतम्; तन्मतं निराकर्तुमुदाहरति–**इमे एवैतत् फलके आहुरित्यु हैक आहुरित्यादिना** । प्रथमम् 'आहुः' इति शब्दस्य पदानि 'धिषणे' इत्यादीनि । 'एतत्' एतस्मिन् वाक्ये 'इमे' सोमाधारभूते 'फलके' ब्रुवते इत्यर्थः । 'इति' अमुमर्थमेकशाखिन आहुः । 'नु' प्रश्ने । 'किं' 'तत्र' त्वदभिमते, विद्यत इति शेषः । विद्यत एवेत्याशङ्क्याह–**योऽप्येते फलके भिन्द्यादिति** । यद्येते चं द्वे स्यातां, तर्हि कदाचिदपि भग्ने स्यांताम्, अतः किन्तु तत्रेत्यर्थः । इदानीं स्वाभिमतमर्थं सोपपत्तिकं दर्शयति–**इमे ह वै द्यावापृथिवी** इत्यादिना । अत्र धिषणे अनूद्येते, तयोर्दार्ढ्यमाशास्यते, तच्च सति शैथिल्यकारणे उपपद्यते; अतस्तत्प्रसक्तिमाह–**एतस्माद् वज्राद्वद्यतात् संरेजेते** इति । वज्रवद्धिंसकात् अभिषवायोद्यतशॅस्त्रसकाशात् 'इमे द्यावापृथिवी' 'संरेजेते' कम्पेते । 'द्यावापृथिवीभ्याम्' इति चतुर्थीद्विवचनम् । 'एतत्' इदानीम्, आभ्यामर्थाय 'एनं' यज्ञं 'शमयति' शान्तं करोति, यथासौ उत्क्षेकावक्षेपाभ्यां द्यावापृथिव्यौ न हिनस्ति तथा करोति । 'तथा' सति, "धिषणे वीड्वी सती वीडयेथाम्"–इत्यभिधाने सति 'शान्तः' असौ यज्ञ इति 'इमे' द्यावापृथिव्यौ 'न हिनस्ति', प्रोत्साहनेन तयोर्दृढत्वस्य प्राप्तत्वादिति भावः । गत ऊगर्थवादः । "पाप्मा हतो न सोम इति तदस्य सर्वं पाप्मानं हन्तीत्यार्थवादिकं फलं मा मा सन्तापमिति च देवताभूतस्य सोमस्याभिषवरूपो वधोऽध्वर्योरेव सम्भावित इति तस्यैवेति मन्तव्यम् ॥ १८ ॥

यदुक्तं कात्यायनेन–" एवं त्रिरभिषुणोति "–इति, तदिदं त्रित्वं विधाय सम्भरणनिग्राभोपायनयोः सङ्ख्यया सह समुच्चित्य प्रशंसति–**स वै त्रिरभिषुणोती**त्यादिना । 'त्रिः संभरति' त्रिः सन्निषीदयति । निग्राभोपायनम् प्रागपादित्यादि मन्त्रजपः, तच्चतुर्वारं कर्त्तव्यम् । 'तत्' मिलित्वा 'दश' सम्पद्यन्ते; विराट्छन्दसश्च दशाक्षराणि; सोमोऽपि वैराजः विराट्सम्बन्धी; पञ्चकृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीमिति दशसङ्ख्यया मितत्वात्; अतो वैराजस्य सोमस्य समत्वाय अभिषवादिगता दशसङ्ख्या प्रशस्ता । ततोऽत्र सम्भरणत्रित्वस्य निग्राभोपायनचतुष्टयस्य च विधिर्निर्देशादेव द्रष्टव्यः ( श. प. ४।१।१४–१६ ) ॥ १९ ॥

---

१–' अब्रुवत ' इ. क. पा. । २–' वड्वी ' इत्याधिकः पाठः क्वचित् । ३–' माभूतां '–इ. क. पा. । ४–' यताद्ब्राह्मणः सकाशात ' इ. क. पा. । ५–' वज्रं ' इ. क. पाठः । ६–एवं त्रिरभिषुणोत्यासेचं निग्राभ्याः । का. श्रौ. सू. ९ । ६९ । ७–' निष्पीडयति ' इ. क. पा. । ८–अष्टकृत्व एकादशकृत्वो द्वादशकृत्वः । सर्व्वे पंचवर्गाः पशुकामस्याष्टवर्गा ब्रह्मवर्च्चसकामस्य । का. श्रौ. सू. ९ । ७०–७१ ।

(त्यु) अथ यन्निग्राभमुपैति । यत्र वा ऽएषोऽग्रे देवानाᳬं हविर्बभूव तद्धेमा दिशोऽभिदध्यावाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सᳬंस्पृशेयेति तमेतद्देवा आभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना समस्पर्शयन्यन्निग्राभमुपायं-स्तथो ऽएवैनमेष एतदाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सᳬंस्पर्शयति यन्निग्राभमुपैति ॥ २० ॥

स उपैति । प्रागपागुदगधराक्सर्वतस्त्वा दिश ऽआधावन्त्विति तदेन-माभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना सᳬंस्पर्शयत्यम्ब निष्पर समरीर्विदा-मिति योषा वा ऽअम्बा योषा दिशस्तस्मादाहाम्ब निष्परेति समरीर्विदा-मिति प्रजा वा ऽअरीः सम्प्रजा जानतामित्येवैतदाह तस्माद्या ऽअपि विदूरमिव प्रजा भवन्ति समेव ता जानते तस्मादाह समरीर्विदामिति॥२१॥

---

अथ यन्निग्राभमुपैति । यत्र वाऽएषोऽग्रे देवानां हविर्बभूव—तद्धेमा दिशोऽभिदध्यौ, आभिर्दि-ग्भिर्मिथुनेन प्रियेण धाम्ना संस्पृशेयेति । तमेतद्देवा आभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना समस्पर्श-यन्—यन्निग्राभमुपायन् । तथोऽएवैनमेषऽएतदाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना संस्पर्शयति—यन्निग्राभमुपैति ॥ २० ॥

स उपैति—"**प्रागपागुदगधराक् सर्वतस्त्वा दिश आधावन्तु**"—(वा. सं. ६ । ३६) इति । तदेनमाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना संस्पर्शयति । "**अम्ब निष्पर समरीर्विदाम्**"—(वा. सं. ६ । ३६) इति । योषा वा ऽअम्बा । योषा दिशः, तस्मादाह—अम्ब निष्परेति । सम-रीर्विदामिति । प्रजा वाऽअरीः । संप्रजा जानतामित्येवैतदाह । तस्माद् या अपि विदूरामिव प्रजा भवन्ति समेव ता जानते । तस्मादाह—समरीर्विदामिति ॥ २१ ॥

---

अथ निग्राभोपायनमनूद्य प्रशंसति—**अथ यन्निग्राभमुपैति, यत्र वा एषो ऽग्रे देवानां हविर्बभूवे**त्या-दिना । **इमा दिशोऽभिदध्याविति** । अभिध्यानं मैथुनविषयं ध्यानम् । अभिध्यानप्रकारमाह—**आभिर्दिग्भि**रिति । 'मिथुनेन' तद्योगेन, 'प्रियेण' दिशामभिमतेन, 'धाम्ना' मम शरीरेण 'संस्पृशेयेति' । यद्वा, दिग्भिः मिथुनेन प्रियेण धाम्ना' दिशां मिथुनार्हेण प्रियेण धाम्ना शरीरेण संस्पृशेयेति व्याख्येयम् । एवं कामयमानस्य सोमस्य निग्राभोपायनेन 'देवाः' 'आभिर्दिग्भिः' सह 'मिथुनेन प्रियेण धाम्ना' 'समस्पर्शयन्' संयोगमकारयन्, निग्राभ्भोपायनमेव संस्पर्श इत्यर्थः । **तथो एवैनामिति** । दार्ष्टान्तिकं वाक्यं दृष्टान्तवद् व्याख्येयम् । यद्वा पूर्वत्र सङ्ख्याविधिः सः, **यन्निग्राभ**मित्यत्र तु यच्छब्दमुपेक्ष्य विधिरवगन्तव्यः ॥ २० ॥

तत्र मन्त्रं विधाय प्रशंसति—**स उपैति प्रागपागि**त्यादिना । अपाञ्चतीत्यपाक्, प्रतीची दिक् । **अधरागिति**, उदक्प्रतियोगिनी दक्षिणा दिगुच्यते ("अञ्चेर्लुक्" इति । पा. सू. ५ । ३ । ३०) पश्चात्पुरस्तादधरादुदक्तादित्यादिषु तथा दर्शनात् । प्रागाद्या दिशस्तदभिमानिन्यो देवताः हे सोम त्वां सर्वतः

---

१–प्रतिवर्गं निग्राभं व्याचयति होतृचमसऽल्पानᳲ श्लवधाय प्रागपागिति । अग्रिणा चतुर्थम् । का. श्रौ. सू. ९ । ७२-७३ ।

( त्यु ) अथ यस्मात्सोमो नाम । यत्र वा ऽएषोऽग्रे देवानाᳫं हविर्बभूव तद्धेक्षाञ्चक्रे मैव सर्व्वेणेवात्मना देवानाᳫं हविर्भूवमिति तस्य या जुष्टतमा तनूरास तामपनिदधे तद्धै देवा अस्पृण्वत ते होचुरुपैवैतां प्रवृहस्व सहैव न एतया हविरेधीति तां दूर ऽइवोपप्राबृहत स्वा वै म ऽएषेति तस्मात्सोमो नाम ॥ २२ ॥

( मा ) अथ यस्माद्यज्ञो नाम । घ्नन्ति वा ऽएनमेतद्यदभिषुण्वन्ति तद्यदेनं तन्वते तदेनं जनयन्ति स तायमानो जायते स यञ्जायते तस्माद्यज्ञो यज्ञो ह वै नामैतद्यद्यज्ञ इति ॥ २३ ॥

अथ यस्मात्सोमो नाम । यत्र वाऽएषोऽग्रे देवानां हविर्बभूव । तद्धेक्षाञ्चक्रे—मैव सर्वेणेवात्मना देवानां हविर्भूवमिति । तस्य या जुष्टतमा तनूरास—तामपनिदधे । तद्धै देवा अस्पृण्वत । ते होचुः—उपैवैतां प्रवृहस्व, सहैव न एतया हविरेधीति । तां दूरऽइवोपप्राबृहत—स्वा वै मऽएषेति । तस्मात्सोमो नाम ॥ २२ ॥

अथ यस्माद्यज्ञो नाम । घ्नन्ति वाऽएनमेतद्—यदभिषुण्वन्ति । तद् यदेनं तन्वते—तदेनं जनयन्ति । स तायमानो जायते । स यन् जायते तस्माद्यज्ञः, यज्ञो ह वै नामैतद्—यद्—यज्ञ इति॥ २३॥

---

सर्वस्मात्स्थानात्, आधावन्तु सम्भोगार्थमागच्छन्तु । हे अम्ब हे योषे निष्पर नितरां सोमस्य कामं पूरयेति परस्परं ब्रुवाणा इत्यर्थः । तद्या अरीः अर्यः प्रजाः पुत्रादिरूपाः संविदां विप्रकृष्टमपि सोमं विदतां संजानतामित्यर्थः । प्रागपागित्यादेर्मंत्रप्रथमभागस्य तात्पर्यमाह—' तदेनमाभिर्दिग्भिर्मिथुनेन प्रियेण धाम्ना संस्पर्शयतीति ' । तत्तेन मन्त्रपाठेन । गतमन्यत् । अम्ब निष्परेत्यस्य तात्पर्यमाह—' योषा वा अम्बेति ' । अम्बेति मातरि प्रसिद्धेः । स्वाभिमतयोषित्सामान्यरूपोऽर्थ उक्तः । समरीर्विदामित्येतद्व्याचष्टे । प्रजा वा अरीरित्यादिना । अर्तेरिदं रूपं इयर्ति पुत्रादिप्रवाहरूपेण गच्छन्तीत्यर्थः । प्रजाः संविदां संजानतामित्येवैतदाहेति वाऽर्तेरिदं रूपमिति व्याकृतं भवति । सञ्जानतां सञ्जानमेकमनस्कत्वं प्राप्नुवन्त्वित्यर्थः । उक्तमर्थमिदानींतनव्यवहारप्रसिद्ध्या समर्थयति । तस्माद्या अपि विदूरमिव प्रजा भवंति समेव जानत इति । यस्मान्मन्त्र एवमुक्तं तस्मात्पितुर्विदूरमिव दूरदेशेऽपि प्रजा भवंति ताः संजानत एव ॥ २१ ॥

अथ सोमस्याभिषवप्रसंगात्तन्नामनिर्वचनं दर्शयति—**अथ यस्मात्सोमो नाम यत्र वा एषोऽग्र** इत्यादिना । एतत्सोमाभिमर्शनमंत्रार्थवादवद्व्याख्येयम् । अपि निदधे अपगमय्यान्यत्र स्थापितवान् । एतामपसारितां तनूं उपप्रबृहस्व तव समीपं प्रापय । एतया तन्वा सहैव नो हविरेधि भव । एवमुक्तः सोमः तां दूरतर इव अत्यंत दूरदेश एवोपप्राबृहत उपागमयत् । किं कुर्वन् ? स्वा वै म एषेति वदन् । एषा तनूः मे मम स्वा स्वकीया आत्मीयेतिब्रुवन् । ' स्वा मे ' इत्युक्तत्वात्सोमनाम सम्पन्नम् । पृषोदरादित्वादभिमतरूपसिद्धिः ॥ २२ ॥

अथ सोमास्याभिषवसम्भरणादिप्रसङ्गाद्यज्ञनामनिर्वचनं दर्शयति—**अथ यस्माद् यज्ञो नामेति** । ' यस्मात् ' प्रवृत्तिनिमित्ताद् यज्ञस्य ' यज्ञः ' ' इति ' ' नाम ' अभूत् । तस्योत्तरम्—घ्नन्तीत्यादि । अभिषवेन हतम ' एनं ' सोमं ' तन्वते ' सम्भरणग्रहणहोमादिना विस्तारयन्तीति यावत्, तदेव तस्य पुनरुत्पादनम् । ' सः ' सोमः ' तायमानः ' सन् ' जायते ', अतो 'यन्' परम्परया आहुतिभावं गच्छन् ' जायते ' पुनः पुनः सम्भवति । अतो यन् जायत इति ' यज्ञः ' । अतो वस्तुतो ' यज्ञः ' इति तस्य ' नाम,' ' तद्यज्ञ इति ' परोक्षेण व्यवहरति ( निरु. ३ । ४ । २ ) ॥ २३ ॥

तुत्रैतामुपि वाचमुवाद । त्वमङ्ग प्रशर्ठ्ंसिषो देवुः शविष्ठ मर्त्यम् ॥ न त्वदुन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते व्वच इति मर्त्यो हैवैतद्भवन्नुवाच त्वमेवेतो जनयितासि नान्यस्त्वदिति ॥ २४ ॥

( त्यु ) अथ निग्राभ्याभ्यो ग्रहान्विगृह्णते । ( तऽ ) आपो ह वै व्वृत्रं जघ्नुस्तेनैवैतुद्वीर्येणापः स्यन्दन्ते स्यन्दमानानां वै व्वसतीवरीर्गृह्णाति व्वसतीवरीभ्यो निग्राभ्या निग्राभ्याभ्यो ग्रहान्विगृह्णते तेनैवैतद्वीर्येण ग्रहान्विगृह्णते होतृचमसाद्योषा वा ऽऋग्घोता योषायै वा ऽइमाः प्रजाः प्रजायन्ते तुदेनमेतुस्यै योषाया ऽऋचो होतुः प्रजनयति तस्माद्धोतृचमसात् ॥ २५ ॥

इति सप्तमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ७ । ५ ॥ ( ९. ४. )

इति तृतीयकाण्डे सप्तमप्रपाठकः समाप्तः ॥

---

तत्रैतामपि वाचमुवाद—" त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डिता । इन्द्र ! ब्रवीमि ते वचः "—( वा. सं. ६ । ३७ ) इति । मर्त्यो हैवैतद् भवन्नुवाच । त्वमेवेतो जनयितासि—नान्यस्त्वदिति ॥ २४ ॥

अथ निग्राभ्याभ्यो ग्रहान्विगृह्णते । आपो ह वै वृत्रं जघ्नुः । तेनैवैतद्वीर्येणापः स्यन्दन्ते । स्यन्दमानानां वै वसतीवरीर्गृह्णाति, वसतीवरीभ्यो निग्राभ्याः, निग्राभ्याभ्यो ग्रहान्विगृह्णते । तेनैवैतद्वीर्येण ग्रहान्विगृह्णते—होतृचमसात् । योषा वाऽऋग्घोता । योषायै वाऽइमाः प्रजाः प्रजायन्ते । तदेनमेतस्यै योषायाऽऋचो होतुः प्रजनयति, तस्माद्धोतृचमसात् ॥ २५ ॥ इति निग्राभ्याप्रयोगः ॥

---

उक्तार्थसंवादत्वेन सोमप्रार्थनारूपं मन्त्रसंवादं दर्शयति—तत्रैतामपि वाचमुवाद, त्वमङ्ग प्रशंसिष इति । ' तत्र ' तस्मिन्नभिषवकाले ' एतां ' प्रार्थनारूपां त्वमङ्गेति ' वाचम् ' ' उवाद ' उक्तवान् । हे ' शविष्ठ ' अतिशयेन बलवन् ! ' अङ्ग ' हे इन्द्र ! ' देवः ' ' त्वं ' ' मर्त्यं ' मरणधर्माणं मां सोमं ' प्रशंसिषः ' प्रशस्तं कुरु, आहुत्यात्मना विस्तारयन् देवात्मना पुनरुत्पादयेत्यर्थः । " शंसु स्तुतौ " ( धा. पा. भ्वा. प. ७२९ ) " सिब्बहुलं लेटि " ( पा. सू. ३ । १ । ३४ ) इति सिप्, आर्द्धधातुकत्वादिट् ( पा. सू, ९ । २ । ३५ ) " इतश्च लोपः "—( पा. सू. ३ । ४ । ९७ ) इतीकारलोपः, " लेटोऽडाटौ "—( पा. सू. ३ । ४ । ९४ ) इत्यडागमः । अस्त्यन्यो देवः किमिन्द्रप्रार्थनयेति तत्राह—' हे मघवन् ! ' तत् 'त्वत्तः' 'अन्यः' 'मर्डिता' सुखयिता 'न अस्ति', यत एवम् अतः 'ते' तुभ्यं 'वचः' प्रशंसाप्रार्थनारूपम् 'ब्रवीमि'। अस्य मन्त्रस्य तात्पर्यमाह—मर्त्यो हैवैतद् भवन्नुवाच, त्वमेवैतो जनयितासि नान्यस्त्वादिति । स्पष्टोऽर्थः ॥ २४ ॥

अथ निग्राभ्याभ्योऽद्भ्यो होतृचमसेन यद् ग्रहणम्, तत्प्रशंसति—अथ निग्राभ्याभ्यो ग्रहान् विगृह्णत इति । ( का. श्रौ. सू. ९ । ७२–७४ ) । ' निग्राभ्याः ' अभिषवसमये सोमोपसर्गायोपयुक्ता आपः । कथं ताभ्यो ग्रहणमिति परम्परयेति दर्शयति—आपो ह वै वृत्रं जघ्नुरित्यादिना । वीर्यवत्यः स्यन्दमाना आपः, ताभ्यो वसतीवरीणां ग्रहणम्, ताभ्यश्च होतृचमसनिग्राभ्याणां ग्रहणम्, निग्राभ्याभ्यः सकाशात् सोमरसद्वारा

---

१–तूष्णीं वा. का. श्रौ. सू. ९ । ७४ ।

ग्रहान् विगृह्णते । तदा 'तेनैव' वृत्रवधप्रयुक्तसामर्थ्येनैव 'एतत्' एतेन निग्राभ्याभ्यो 'ग्रहान् विगृह्णते'। तच्च ग्रहणं होतृचमससकाशाद् भवति; होतृचमसं दशापवित्रस्योपरि धारयित्वा, तत्र सोमरसमासिच्य, धारां सम्पाद्य ग्रहग्रहणात् । 'योषा वै' स्त्री खलु 'ऋक्' सैव 'होता' ऋचः शस्त्राद्यवयवरूपायाः होतृप्रयोज्यत्वाद-भेदविवक्षया ऋग्घोतेति सामानाधिकरण्यम् । **तदेनमेतस्या** इति । 'एतस्यै योषायै' षष्ठ्यर्थे चतुर्थी । ( पा. सू. २ । ३ । ६२ । सू. वा. १) । एतस्या योषायाः ऋग्घोतृलक्षणायाः सम्बन्धितया 'एनं' सोमम् 'एतद्' एतेन होतृचमसाद् ग्रहणेन 'प्रजनयति' पुनरुत्पादयति । **तस्माद्धोतृचमसादिति** पुनर्निर्गमनम् । तस्मा-न्निग्राभ्योदकैर्होतृचमसेन ग्रहान् गृह्णीयादिति विधिः ॥ २९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे नवमाध्याये चतुर्थं ब्राह्मणम् ॥ ३-९-४ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ १ ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥२॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये तृतीयकाण्डे नवमोऽध्यायः समाप्तः ॥ ३-९॥

# इति श्रीशतपथब्राह्मणे सायणभाष्यसमेतं अध्वरं नाम तृतीयं काण्डं समाप्तम् ।



ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।



सायणभाष्यसमेतम् ।

तत्र

## चतुर्थं काण्डम् ४ ।



( तत्र चतुर्थाध्यायमारभ्य काण्डसमाप्तिपर्यन्तं
हरिस्वामिभाष्यसमुल्लसितम् । )



गङ्गाविष्णु श्रीकृष्णदास,

मालिक-"लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस,

कल्याण-बंबई.

संवत् १९९६, शके १८६१.

1939.

# अथ चतुर्थकाण्डे प्रथमः प्रपाठकः ।

## प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

**ओम् । प्राणो ह वा ऽअस्योपा॒ꣳशुः । ( व्या॑ ) व्यान ऽउपा॒ꣳशुसवन॑ऽ उदान ऽएवान्तर्यामः ॥ १ ॥**

**अथ ग्रहयागाः ।**

**तत्रादौ प्रातःसवनीयाः षोडश ग्रहाः । तत्रायमुपांशुग्रहः ॥**

**प्राणो ह वाऽअस्योपांशुः, व्यान उपांशुसवनः, उदान एवान्तर्यामः ॥ १ ॥**

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
प्रागुपांशुग्रहात्काण्डे तृतीये यन्निरूपितम् । तदादिसोमशेषो यश्चतुर्थे स निरूप्यते ॥ २ ॥

एकाहाहीनसत्रात्मनां सोमयागानां प्रकृतिभूतस्य ज्योतिष्टोमस्य दीक्षणीयाद्युपांशुग्रहात् प्राक्तनं प्रयोगजातमभिहितं तृतीये काण्डे । उपांशुग्रहणादिकः सकलः सोमशेषश्चतुर्थेऽभिधीयते । उपांशुग्रहमन्त्रेष्वपि " आददे " इत्यारभ्य–" वाचस्पतये " इत्यतः प्राक्तना मन्त्रास्तृतीयकाण्ड एव विनियुक्ता व्याख्याताश्च । " वाचस्पतये"– इति मन्त्रो बहिष्पवित्र उपांशुग्रहणे विनियुज्यते । बहिर्ग्रहणस्य च प्रयोजनं प्राणस्य बहिः संचारप्रातिबन्धनिरासं वक्ष्यति **' सोऽस्यायं पराङेव'** इति । तदुपपादनायोपोद्घातत्वेनोपांशोः प्राणरूपतामाह–**प्राणो ह वाऽअस्योपांशुरिति** । 'अस्य ' सोमयागस्यादौ गृह्यमाणः योऽयम् ' उपांशुः ' एषोऽस्य क्रतोः सकलस्य वा लोकस्य प्राणत्वेन प्रसिद्धः । ' ह वा ' इति निपातद्वयस्य प्रसिद्धिद्योतकत्वेनापौनरुक्त्यम् "तत्प्रयोगावसेयत्वाद्वाच्यस्तेषां स गम्यते । समुच्चयादिरर्थात्मा वाच्य एषां गवादिकः ॥ " इति प्रपठ्य, उक्तं हि निपातानां द्योतकत्वम्– "षष्ठ्यभावादसत्त्वोक्तेरेकानुक्तेः परिस्थिते । गुणाभावात्स्मृतेश्चैषां द्योतकत्वं सुनिश्चितम् ॥ " इति । यावता हि तन्तुजातेन यः पटो निष्पादितः स एव तन्त्वन्तरैर्न निष्पाद्यत इति स्वतन्त्राणामुपादानानामसमुच्चयो युक्तः । य एव पटः एकेन दीपेन प्रकाश्यते स एवान्यैर्बहुभिरपि दीपैरिति निरपेक्षसाधनेष्वपि द्योतकेषु समुच्चयो न विरुध्यते । अथवा हशब्दोक्तां शाखान्तरगतप्राणत्वप्रसिद्धिं वैशब्दः स्मारयति । उक्तं हि तैत्तिरीयके–" प्राणो वा एष यदुपांशुः"–( तै. सं. ६।४।९ ) इति । उक्तमुपांशोः प्राणत्वं द्रढयितुम् उपांशुसहचारिणः उपांशुसवनस्य अन्तर्यामस्य च व्यानोदानतामाह–**व्यान उपांशु** इति । अन्तर्यामस्य चेतरद्वयसाहचर्यम् उपांश्वन्तर्यामयोर्मध्ये उपांशुसवनस्योभयसंस्पर्शेनासादनविधानात् । यदाह कात्यायनः–" उपांशुसवनं पाणिना प्रमृज्योदञ्चं व्यानाय त्वेति संस्पृष्टम्, उपविष्टयो रभिषुण्वन्तिचत्वारः पर्युपवेशनसामर्थ्यात् " ( का. श्रौ. सू. ९ । ९२ । ९३ ) इति । तैत्तिरीयके च–" यं कामयेत प्रमायुकः स्यादित्यसंस्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ विच्छिनत्ति ताहास्य प्रमीयते । यं कामयेत सर्वमायुरियादिति संस्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ सन्तनोति सर्वमायुरेति "–( तै. सं. ६ । ४ । ६ ) इति ॥ १ ॥

१–उपा॒ꣳशुं च गृह्णाति व्वाचस्पतये देवो देवेभ्यो मधुमतीरिति । का. श्रौ. सू. ९ । ७५ । २–' प्रमिन्वते ' इ. क. पा. ।

(मो) अथ यस्मादुपाᳫंशुर्नाम । (मा) अᳫंशुर्वै नाम ग्रहः स प्रजापतिस्तस्यैष प्राणस्तद्यदस्यैष प्राणस्तस्मादुपाᳫंशुर्नाम ॥ २ ॥

तं बहिष्पवित्राद्गृह्णाति । पराञ्चमेवास्मिन्नेतत्प्राणं दधाति सोऽस्यायं पराङेव प्राणो निरर्दति तमᳫंशुभिः पावयति पूतोऽसदिति षड्भिः पावयति षड्वाऽऋतव ऋतुभिरेवैनमेतत्पावयति ॥ ३ ॥

---

अथ यस्मादुपांशुर्नाम । अंशुर्वै नाम ग्रहः । स प्रजापतिः । तस्यैष प्राणः । तद्यदस्यैष प्राणः— तस्मादुपांशुर्नाम ॥ २ ॥

तं बहिष्पवित्राद्गृह्णाति । पराञ्चमेवास्मिन्नेतत्प्राणं दधाति । सोऽस्यायं पराङेव प्राणो निरर्दति । तमंशुभिः पावयति—पूतोऽसदिति । षड्भिः पावयति । षड् वाऽऋतवः । ऋतुभिरेवैनमेतत्पावयति ॥ ३ ॥

---

उक्तमुपांशोः प्राणत्वं प्रश्नपूर्वकमुपांशुनामव्युत्पत्त्याऽपि समर्थयितुं पृच्छति—अथ यस्मादुपांशुर्नामेति । यस्माच्छब्दप्रवृत्तिनिमित्तादयमुपांशुरिति प्रसिद्धः किं तदिति ? ' अथ ' शब्दद्योतितप्रश्नपदाध्याहारेण वाक्यं पूरणीयम् । उत्तरमाह—अंशुर्वै नामेति । गृह्यतेऽनेनेति करणव्युत्पत्त्या ' ग्रहः ' दारुमयं पात्रमंशुनामकम् । तस्य यज्ञसाधनत्वेन यज्ञत्वोपचारात्, यज्ञस्य च " यज्ञो वै प्रजापतिः " ( तै. ब्रा. १ । ३ । १० ) इति प्रजापतित्वप्रसिद्धेः स ग्रहः प्रजापतिस्तस्य प्रजापत्यात्मकस्य ग्रहस्य प्राणवदन्तश्चरति तेनैष सोमरसः प्राणः । तत्सोमरसात्मकं द्रव्यं यस्मादस्यांशुग्रहात्मकप्रजापतेरेष उक्तोपपादनः प्राणस्तस्मादुपगतोऽंशुमिति विगृह्य " अत्यादयः क्रान्ताद्यर्थे द्वितीयया " इति—(पा. सू. १ । ४ । ७९ वा. २) द्वितीयासमासादुपांशुनामकत्वमित्यर्थः । यद्वा अंशुं गृह्णातीति विहितः सोमग्रहोंऽशुः, स चानिरुक्तया प्राजापत्यया गृह्यत इति प्रजापत्यात्मकः, तं प्राणरूपेणोपगतो ग्रह उपांशुः । शिष्टं समानम् । ननु प्राणत्वे नामव्युत्पत्तिर्हेतुरित्युक्तम् । नाम्नि च प्राणत्वं हेतुरधुनोच्यत इति विपरीतम् । न नामनिष्पत्तौ प्राणत्वं हेतुरधुनोक्तः । निष्पन्नं तु नाम प्राणत्वज्ञाने हेतुः प्रागुक्तः । कारकज्ञापकयोश्च हेतुहेतुमत्त्ववैपरीत्यं भूषणमेव न दूषणम् । यतोऽग्निर्धूमस्योत्पत्तौ हेतुः, धूमश्चाग्नेर्ज्ञाने हेतुरिति ॥ २ ॥

उक्तस्य प्राणात्मकस्य सोमस्य गुणविशिष्टं ग्रहणं विधत्ते—तं बहिष्पवित्राद् गृह्णातीति । ' तं ' प्रकृतं प्राणात्मकं सोमरसं, पवित्रात् दशापवित्रात् ' बहिः ' पृथक् पवित्रमन्तरेण गृह्णातीत्यर्थः । अविधानादर्थसिद्धः पवित्रविरहो नान्तरिक्ष इतिवन्नित्यप्राप्तोऽनूद्यते । नित्यप्राप्तत्वेन च कात्यायनेन बहिष्ट्वेन सूत्रितम् । आपस्तम्बेन तु अर्थसिद्धमपि विस्पष्टार्थं सूत्रितम् । " पवित्रमुपयामः सादनं च न विद्यते " इति । पवित्रविरहस्य प्रयोजनमाह—पराञ्चमेवेति । ' एतद् ' इति निधानक्रियाया विशेषणम्, तस्याश्चाख्याताभिधेयां भावनां प्रति कर्मत्वादेतदिति तद्विशेषणे द्वितीया । ' अस्मिन् ' ग्रहाख्ये प्रजापतौ ' बहिः ' सुखसञ्चारक्षमप्राणकर्मकमेतन्निधानं करोति । एवं चास्य प्रजापतेस्तत्स्रष्टतया वा तदात्मकस्य सकललोकस्य ' सोऽयं ' परिदृश्यमानः ' प्राणः ' बहिरपि ' निरर्दति ' निर्गच्छत्येव । " अर्द गतौ याचने च " (भ्वा. प. १८ ।) ननु प्रत्यगन्तरेवावतिष्ठते प्रत्यङ्मात्ररूपत्वं ह्यभिचारकर्मफलतया प्रतिकूलं श्रूयते—" अभिचरता प्रतिलोमं होतव्याः प्राणानेवास्य प्रतीचः प्रतियौति "—( तै. सं. ३ । ४ । ८ ) इति । ततश्च श्वासप्रश्वासप्रतिबन्धो न

तदाहुः । ( यं ) यदꣳशुभिरुपाꣳशुं पुनाति सर्वे सोमाः पवित्रपूताऽ अथ केनास्याꣳशवः पूता भवन्तीति ॥ ४ ॥

तानुपनिवपति । यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय

---

तदाहुः—यद् अंशुभिरुपांशुं पुनाति । सर्वे सोमाः पवित्रपूताः । अथ केनास्यांशवः पूता भवन्तीति ॥ ४ ॥

तानुपनिवपति । " यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा "–

---

कदाचिद्भवतीत्यर्थः । पवनसाधनदशापवित्राद् बहिस्त्वे विहितं ग्रहणमपूतस्यैव स्यात् । तथा मा भूदिति । पावनमंशुकरणकं विधत्ते—तमꣳशुभिः पावयतीति । पूतोऽसदिति । इकारलोपः ( पा. सू. ३ । ४ । ९७ ) " लेटोऽडाटौ " ( ३ । ४ । ९४ ) इत्यडागमः । बिलस्योपरि अंशुं निधाय तत्र रसावनयनेन ' तं ' रसं शोधयेदित्यर्थः । अतीतानामंशूनां विनियोगासंभवादर्थसिद्धमादानमिति ब्राह्मणे न पृथग्विहितम् । विस्पष्टीकरणार्थं तु सूत्रकारेण उच्यते—" प्रतिप्रस्थाताꣳशून्षडादत्ते "–(का. श्रौ. सू. ९ । ६४ ) इति कात्यायनः । " षडाद्रानंशून्संश्लिष्टानादाय चर्मणि निधाय " इत्यापस्तम्ब, श्रौ. सू. । अंशुभिरित्युक्तस्य बहुत्वसामान्यस्य तद्विशेषे पर्यवसानमाह—षड्भिः पावयतीति । विहिता षट्त्वसंख्या अंशूनामृतुरूपसम्पादकत्वेन स्तूयते—षड्वा ऋतव इति । सोमरसकर्मकमेतत्पावनमृतुरूपैरेवांशुभिः कृतवान् भवेदित्यर्थः । आत्तानां षण्णामंशूनां मध्ये वक्ष्यमाणेषु उपांशुग्रहणपर्यायेषु त्रिष्वप्येकैकस्मिन्पर्याये द्वौ द्वावंशू ग्रहबिले निदध्यात् । यदाह कात्यायनः—" आत्तानां च द्वौ द्वावन्तर्दधाति ग्रहणभेदात्, मन्त्रलिङ्गाच्च "–(का. श्रौ. सू. ९ । ७७ । ७८ ) इति । ग्रहणपर्यायाणां त्रित्वाद् " वृष्णो अꣳशुभ्यामिति "–( वा. सं. ७ । १ ) ग्रहणमन्त्रगतद्विवचनलिङ्गाच्चेत्युदाहृतसूत्रस्यार्थः । अस्मिन्पक्षे पर्यायत्रयगतांशुसंख्यां सङ्कलय्य " षड्भिः " इति ब्राह्मणे षट्त्वं द्रष्टव्यम् । "अंशुभ्यां ह्येनं पावयति" मन्त्रव्याख्यानब्राह्मणगतांशुद्वित्वपरामर्शादपि ' षड्भिः ' इति बहुवचनं संकलनाभिप्रायमेवेति गम्यते । एकैकस्मिन् ग्रहणपर्याये अंशुषट्कविधिपरं " षड्भिः पावयति " इति । ब्राह्मणवाक्यमिति तु मत्वा कात्यायनेनोक्तम्—"षड्वा श्रुतिसामर्थ्यात् "– (का. श्रौ.सू.९।७९) इति"अंशुभ्याम् " इति हि मन्त्रे द्विवचने लिङ्गम्, अंशुभ्यां ह्येनं पावयतीति तद्व्याख्यानं, ब्राह्मणवाक्यं च यथावस्थितमन्त्रार्थाविष्करणमात्रपरं; न तु द्वित्वविधिपरं, हीति च प्रसिद्धिर्मन्त्राभिप्रायविवक्षयैव । इत्थं मन्त्रलिङ्गाद्द्वित्वं, " षड्भिः " इति विधिश्रुत्या तु बहुत्वम् । श्रुतिश्च लिङ्गाद्बलीयसी यथा "कदाचनस्तरीरसि" इति (वा. सं. ३ । ३४) ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र कात्यायनस्याभिप्रायः । ' षड्भिः पावयति ' इति वाक्यस्य प्रथमकृतव्याख्यानमनुसृत्य आपस्तम्बेनाप्युक्तम् । " अथ प्रतिप्रस्थातोपांशुपात्रं धारयन्नुपात्तानामुपरि द्वावंशू अन्तर्दधाति " ( आप. श्रौ. सू. ) इति ॥ ३ ॥

आत्तानामंशूनां पुनरपि सोमे योजनविधानाय याज्ञिकानां जिज्ञासामवतारयति—तदाहुरिति । ' तत् ' तस्मिन् अंशुविषये किंचित् ' आहुः ' जिज्ञासन्ते याज्ञिकाः । ' यत् ' यस्मात् कारणादुपांशुसोमरस आस्ते, षड्भिरंशुभिः पूयते । अन्तर्यामादिसोमास्तु दशापवित्रेण पूयन्ते न च तृतीयं पावनसाधनमस्ति । अत एते अंशवः केन पूयन्त इति ॥ ४ ॥

उक्तप्रश्नस्योत्तरत्वेन समन्त्रकमुपनिवापं विदधाति—तानुपनिवपतीति । ' तान् ' षडंशूनन्तर्यामाद्यर्थे

स्वाहेति तदस्य स्वाहाकारेणैवाᳪंशवः पूता भवन्ति सर्व्वं वाऽएष ग्रहः सर्व्वेषाᳪं हि सवनानाᳪं रूपम् ॥ ५ ॥

देवा ह वै यज्ञं तन्वानाः । ( स्ते ) तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुस्ते होचुः सᳪंस्थापयाम यज्ञं यदि नोऽसुररक्षसान्यासजेयुः सᳪंस्थित एव नो यज्ञः स्यादिति ॥ ६ ॥

ते प्रातःसवनऽएव । सर्व्वं यज्ञᳪं समस्थापयन्नेतस्मिन्नेव ग्रहे यजुष्टः प्रथमे स्तोत्रे सामतः प्रथमे शस्त्रऽऋक्तस्तेन सᳪंस्थितेनैवात ऊर्ध्वं यज्ञे-

---

( वा. सं. ७ । २ ) इति । तदस्य स्वाहाकारेणैवांशवः पूता भवन्ति । सर्वं वाऽएष ग्रहः । सर्वेषां हि सवनानां रूपम् ॥ ५ ॥

देवा ह वै यज्ञं तन्वानाः । तेऽसुररक्षसेभ्य आसङ्गाद्बिभयाञ्चक्रुः । ते होचुः–संस्थापयाम यज्ञम्–यदि नोऽसुररक्षसान्यासजेयुः, संस्थित एव नो यज्ञः स्यादिति ॥ ६ ॥

ते प्रातःसवनऽएव सर्वं यज्ञं समस्थापयन्–एतस्मिन्नेव ग्रहे यजुष्टः, प्रथमे स्तोत्रे सामतः, प्रथमे

---

सन्निहिते सोमे 'यत्ते' इत्यनेन मन्त्रेण क्षिपतीत्यर्थः । मन्त्रार्थस्तु–' हे सोम ! ' त्वदीयं 'यत्' 'नाम' शत्रुभिः अदाम्यम् अतिरस्कार्यं 'जागृवि' जागरूकं हे 'सोम' 'तस्मै' सोमाय 'ते' तादृक्सोमनामधारिणे तुभ्यमिदं सोमांशुद्वयं 'स्वाहा' स्वाहुतमस्त्विति क्षेपे च सति तैरेवान्तर्यामादिसोमैः सह प्रक्षिप्तानामंशूनामपि वसतीवरीसंसर्गोऽभिषवो दशापवित्रेण पवनमिति संस्कारा भविष्यन्ति, तदिदमाह–तदस्य स्वाहाकारेणैवांशवः पूता भवन्तीति । 'तत्' तथा सति 'अस्य' उपांशोरन्तर्धानार्थाः 'अंशवः' अपि स्वाहेति क्रियते यस्मिन् प्रक्षेपे तेन प्रक्षेपेण पूता भवन्ति इति योजना ॥

उपांशोरन्तर्धानाय पृथगात्तानामंशूनां सवनत्रयसम्बन्धिनि सोमे पुनः प्रक्षेपे हेतुमाह–सर्वं वा इति । अयं 'ग्रहः' सकलसोमयागात्मकः, यतः सवनत्रयरूपमिह दृश्यते । अतः सवनत्रयात्मकैतद्ग्रहसम्बन्धिनामंशूनां सवनत्रयसम्बन्धिनि सोमे योजनमुचितमिति भावः । अस्य ग्रहस्य सवनत्रयात्मकत्वमभिषवविधिब्राह्मणे स्पष्टीभविष्यति ॥ ५ ॥

उपांशुग्रहस्य सवनत्रयात्मकत्वं प्रातःसवनस्य सवनत्रयात्मकत्वनिदर्शनेन द्रढयितुमाख्यायिकामाह–देवा ह वा इति । आ सायमनुष्ठीयमाने यज्ञे असुरा राक्षसा ज्ञात्वा आसक्ताः सन्तो जघ्नुरिति ॥ ६ ॥

प्रातःसवन एवं सवनत्रयात्मकं यज्ञं समस्थापयन् । ऋग्यजुःसाममन्त्रैर्हिसवनत्रयात्मकं कर्म सम्पद्यते । अतः प्रातःसवने उपांशुग्रहगतयजुर्मन्त्रैरेव यजुष्ट्वाविशेषात् सवनान्तरवर्तियजुःसाध्यमपि कर्म सम्पन्नम् । एवं प्रथमस्तोत्रशस्त्रगताभ्यामृक्सामाभ्यामिति संग्रहेण संस्थिते एव तु द्वितीयतृतीयसवने पुनर्विस्तारेणान्वतिष्ठन्निति ॥

अत इदानीमपि तथा अतो यथा प्रातःसवनस्य सवनत्रयात्मकत्वम्, एवमुपांशुग्रहस्यापीति । असुराश्च रक्षांसि च 'असुररक्षसानि' "अनसन्तान्नपुंसकाच्छन्दसि" ( पा. सू. ५ । ४ । १०३ ) इति

---

१–यत्त इत्यात्तान्सोमे निदधाति । का. श्रौ. सू. ९ । ८० । २–अस्मिन्नेव ब्राह्मणेऽष्टमीं कण्डिकामारभ्य षोडशीकण्डिकापर्यन्तमित्यवगन्तव्यम् ।

नाचरन्त्स एषोऽप्येतर्हि तथैव यज्ञः संतिष्ठतऽएतस्मिन्नेव ग्रहे यजुष्टः प्रथमे स्तोत्रे सामतः प्रथमे शस्त्रऽऋक्तस्तेन सꣳस्थितेनैवात ऊर्ध्वं यज्ञेन चरति ७॥

स वाऽअष्टौ कृत्वोऽभिषुणोति । (त्य) अष्टाक्षरा वै गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेवैतत्क्रियते ॥ ८ ॥

स गृह्णाति । व्वाचस्पतये पवस्वेति प्राणो वै व्वाचस्पतिः प्राण एष ग्रहस्तस्मादाह व्वाचस्पतये पवस्वेति वृष्णो ऽअꣳशुभ्यां गभस्तिपूत इति सोमाꣳशुभ्याꣳ ह्येनं पावयति तस्मादाह वृष्णो ऽअꣳशुभ्यामिति गभस्तिपूत इति पाणी वै गभस्ती पाणिभ्याꣳ ह्येनं पावयति ॥ ९ ॥

---

शस्त्रऽऋक्तः। तेनैवात ऊर्ध्वं यज्ञेनाचरन् । स एषोऽप्येतर्हि तथैव यज्ञः सन्तिष्ठते—एतस्मिन्नेव ग्रहे यजुष्टः, प्रथमे स्तोत्रे सामतः, प्रथमे शस्त्रऽऋक्तः। तेन संस्थितेनैवात ऊर्ध्वं यज्ञेन चरति ॥ ७ ॥

स वाऽअष्टौ कृत्वोऽभिषुणोति । अष्टाक्षरा वै गायत्री । गायत्रं प्रातःसवनम् । प्रातःसवनमेवैतत्क्रियते ॥ ८ ॥

स गृह्णाति ।" वाचस्पतये पवस्व "–(वा. सं. ७। १)–इति । "वृष्णोऽअंशुभ्याम् "–(वा. सं. ७ । १ ) इति । सोमांशुभ्यां ह्येनं पावयति । तस्मादाह–वृष्णोऽअंशुभ्यामिति । "गभस्तिपूतः "–(वा. सं. ७ । १) इति । पाणी वै गभस्ती । पाणिभ्यां ह्येनं पावयति ॥ ९ ॥

---

समासान्तः ( टच् ) । असुररक्षसानां तदासङ्गस्य च भयहेतुत्वेन " भीत्रार्थानाम् " ( पा. सू. १।४।२९ ) इत्यपादानतयोभयत्र पञ्चमी ॥ ७ ॥

" स प्रहरति त्रिरभिषुणोति " इति विहिताभिषवपर्यायत्रयमध्ये प्रथमपर्याये प्रहारसंख्याविशेषं विधत्ते—**स वाऽअष्टौ कृत्वोऽभिषुणोतीति** । 'अभिषुणोति ' प्रहरति । संख्यासामान्येन प्रहारस्य गायत्र्यात्मकत्वात्तदात्मकप्रातःसवनरूपमेतत् कर्म सम्पन्नमित्यर्थः । प्रातिपदिकाद्विहितस्य ( पा. सू. ५।४।१७ ) कृत्वसुचः पदादुत्पत्तिर्विभक्त्यलोपश्च छान्दसौ ॥ ८ ॥

बहिष्पवित्राद्गृह्णातीति विहितं ग्रहणं स गृह्णातीत्यनूद्य मन्त्रं विनियुज्य व्याचष्टे—**स गृह्णाति वाचस्पतये पवस्व** इत्यादिना **गभस्तिपूतः** इत्यन्तेन मन्त्रेण । प्रथमपर्याये गृह्णातीत्यर्थः । मन्त्रं विभज्य क्रमेण व्याचष्टे—**प्राणो वा इति** । ' वै '—शब्दः प्रसिद्धौ " एष एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः " ( बृ. उ. १ । ३ । २० ) इति बृहस्पतिपदनिर्वचने वागात्मिकां बृहतीं प्रति प्राणस्य पतित्वाभिधानाद्वाचस्पतित्वं प्राणस्य प्रसिद्धम् । उपांशुपात्रे गतस्य च सोमरसस्य प्राणत्वं प्रागुक्तम् " प्राणो ह वा अस्येति " ( श. प. ४ । १ । १ । १ ) हे सोमरस त्वं वाचस्पतित्वाय प्राणत्वाय पूतो भवेति मन्त्रभागार्थः ॥

द्वितीयभागं व्याचष्टे—**वृष्णो अंशुभ्यामिति** । वर्षति रसमिति वृषा सोमः, तस्य ' अंशुभ्यां गभस्तिपूत इति ' इति । अत्र पात्रधारणे पाण्योः करणत्वं तद्द्वाराऽन्तर्द्धानेन तु सोमांशोरिति द्वारभेदादेकस्मिन्नपि पात्रे पाण्योरंशोश्च न विकल्पः ॥ ९ ॥

---

१ उपांशुं च गृह्णाति वाचस्पतये देवो देवेभ्यो मधुमतीरिति । का० श्रौ० सू० ९ । ७५ ।

( त्य ) अथैकादश कृत्वोऽभिषुणोति । (त्यु)एकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभं माध्यन्दिनꣳ सवनं माध्यन्दिनमेवैतत्सवनं क्रियते ॥ १० ॥

स गृह्णाति । देवो देवेभ्यः पवस्वेति देवो ह्येष देवेभ्यः पवते येषां भागोऽसीति तेषामु ह्येष भागः ॥ ११ ॥

( ग्रोऽ ) अथ द्वादश कृत्वोऽभिषुणोति । द्वादशाक्षरा वै जगती जागतं तृतीयसवनं तृतीयसवनमेवैतत्क्रियते ॥ १२ ॥

स गृह्णाति । मधुमतीर्न इषस्कृधीति रसमेवास्मिन्नेतद्दधाति स्वदयत्येवैनमेतद्देवेभ्यस्तस्मादेष हतो न पूयत्यथ यज्जुहोति सꣳस्थापयत्येवैनमेतत् ॥ १३ ॥

---

अथैकादश कृत्वोऽभिषुणोति । एकादशाक्षरा वै त्रिष्टुप्, त्रैष्टुभं माध्यन्दिनं सवनम् । माध्यन्दिनमेवैतत्सवनं क्रियते ॥ १० ॥

स गृह्णाति । " देवो देवेभ्यः पवस्व "–( वा० सं० ७ । १ ) इति । देवो ह्येष देवेभ्यः पवते । " येषां भागोऽसि "–( वा० सं० ७ । १ ) इति । तेषामु ह्येष भागः ॥ ११ ॥

अथ द्वादश कृत्वोऽभिषुणोति । द्वादशाक्षरा वै जगती, जागतं तृतीयसवनम् , तृतीयसवनमेवैतत् क्रियते ॥ १२ ॥

स गृह्णाति । "मधुमतीर्न इषस्कृधि "–(वा० सं० ७ । २ )इति । रसमेवास्मिन्नेतद्दधाति । स्वदयत्येवैनमेतद्देवेभ्यः । तस्मादेष हतो न पूयति । अथ यज्जुहोति–संस्थापयत्येवैनमेतत् ॥ १३ ॥

---

द्वितीये ग्रहणपर्याये प्रहारसंख्याविशेषं विधत्ते–अथेति । संख्यासामान्येन प्रहारं त्रिष्टुबात्मकमाध्यन्दिनसवनमेवैतत् कर्म भवतीत्यर्थः ॥ १० ॥

द्वितीयग्रहणपर्याये मन्त्रं विनियुञ्जानः क्रमेण तद्भागौ व्याचष्टे–स गृह्णातीति । शुक्लप्रतिपदादितिथिषु चन्द्रस्यैकैककलावृद्धौ सोमलताया एकैकं पत्रमुत्पद्यते, कृष्णप्रतिपदादिषु चन्द्रस्यैकैककलाह्रासे सोमलताया एकैकं पत्रं निपततीति सुश्रुतादौ प्रसिद्धम् । अतोऽयं सोमश्चन्द्रात्मकतया 'देवः' सा प्रसिद्धिर्हिंशब्देनोच्यते–देवो हीति । येषां भागोऽसीति । तेषामु ह्येष भाग इति । 'तेषां' देवानाम् ॥ ११ ॥

तृतीये ग्रहणपर्याये प्रहारसंख्याविशेषं विधत्ते–अथ द्वादश कृत्व इति । अत्रापि पूर्ववत्सङ्ख्यासामान्यात् तृतीयसवनात्मकत्वम् ॥ १२ ॥

तृतीयपर्याये ग्रहणमनूद्य मन्त्रं विनियुङ्क्ते–स गृह्णाति मधुमतीर्न इषस्कृधीति ( का. श्रौ. सू. ९ । ७९)। हे 'सोम' त्वं 'नः' अस्माकम् 'इषः' अन्नानि 'मधुमतीः' माधुर्योपेताः कुर्वित्यर्थः । अर्थात्त्वमपि देवानामन्नात्मकः स्वादुर्भवेति गम्यते । तदाह–रसमेवास्मिन्नेतद्दधाति स्वदयत्येवैनमेतद्देवेभ्यस्तस्मादेष हतो न पूयतीति । एतन्मन्त्रवाक्यम् । 'तस्मात्' स्वादूकरणात् अभिषुतो रसान्तरं नापद्यते ॥

गृहीतस्य सोमरसस्य होमं विधत्ते–अथ यज्जुहोतीति । यत्र 'एतत्' होमाख्यं कर्म एतदुपांशुग्रहव्यापारं परिपूरयत्येव अर्थाज्जुहुयादिति गम्यते ॥ १३ ॥

---

१–सुश्रुते चिकित्सितस्थाने २९ अध्याये २५–२७ श्लोका द्रष्टव्याः ॥

 


( द ) अ॒ष्टाव॒ष्टौ कृत्व॑: । ( त्वो ) ब्र॒ह्म॒व॒र्च॒स॒का॒मस्या॒भि॒षु॒णु॒या॒दित्या॑हु-र॒ष्टाक्ष॑रा वै गा॑य॒त्री ब्रह्म॑ गाय॒त्री ब्र॑ह्मवर्च॒सी है॒व भ॑वति ॥ १४ ॥

त॒च्च॒तु॒र्वि॒ꣳ॒श॒तिं कृ॒त्वो॑ऽभिषु॒तं भ॑वति । च॒तु॒र्वि॒ꣳ॒श॒ति॒र्वै सं॑वत्स॒रस्या॑-र्धमा॒साः सं॑वत्स॒रः प्र॒जाप॑तिः प्र॒जाप॑ति॒र्य॒ज्ञः स या॒वा॑ने॒व य॒ज्ञो या॑वत्य॒स्य मा॒त्रा ता॒व॑न्तमे॒वैत॒त्स॒ꣳस्था॑पयति ॥ १५ ॥

प॒ञ्च प॑ञ्च कृत्व॑: । प॒शु॒का॒मस्या॑भिषु॒णु॒या॒दित्या॑हुः पाङ्क्ताः प॒शव॑: प॒शू॒न् है॒वाव॑रुन्धे प॒ञ्च वा ऽऋ॒तव॑: संवत्स॒रस्य॑ संवत्स॒रः प्र॒जाप॑तिः प्र॒जाप॑ति-र्य॒ज्ञः स या॒वा॑ने॒व य॒ज्ञो या॑वत्य॒स्य मा॒त्रा ता॒व॑न्तमे॒वैत॒त्स॒ꣳस्था॑पयति सो ऽए॒षा मी॑मा॒ꣳसै॒वेत॒रं त्वे॒व क्रि॑यते ॥ १६ ॥

---

अष्टावष्टौ कृत्वो ब्रह्मवर्चसकामस्याभिषुणुयादित्याहुः । अष्टाक्षरा वै गायत्री, ब्रह्म गायत्री, ब्रह्मवर्चसी हैव भवति ॥ १४ ॥

तच्चतुर्विंशतिं कृत्वोऽभिषुतं भवति । चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः, संवत्सरः प्रजापतिः, प्रजापतिर्यज्ञः, स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत्संस्थापयति ॥ १५ ॥

पञ्च पञ्च कृत्वः पशुकामस्याभिषुणुयादित्याहुः। पाङ्क्ताः पशवः, पशून् हैवावरुन्धे। पञ्च वाऽऋतवः संवत्सरस्य, संवत्सरः प्रजापतिः, प्रजापतिर्यज्ञः, स यावानेव यज्ञो यावत्यस्य मात्रा तावन्तमेवैतत् संस्थापयति । सोऽएषा मीमांसैव । इतरं त्वेव क्रियते ॥ १६ ॥

---

अभिषवे काम्यं संख्याविशेषमाह—अष्टावष्टौ कृत्वो ब्रह्मवर्चसकामस्याभिषुणुयादित्याहुरिति । प्रति-पर्यायमष्टवारमभिषुणुयादित्यर्थः । अत्र ( पा. सू. ५ । ४ । १७ ) कृत्वसुचाऽभिषवस्यावृत्तय उच्यन्ते । आवृत्तिगता तु सङ्ख्याऽष्टाविति पदेन। उक्तसङ्ख्याया आवृत्तेः पर्यायत्रयसम्बन्धो वीप्सयोच्यते।" इत्याहुः " इति परोक्तिरप्याप्तविषयत्वाद्विधिपरैव । विधेयामष्टसंख्यां ब्रह्मवर्चसफलसम्बन्धप्रदर्शनेन स्तौति—अष्टाक्षरा वै गायत्रीति।" स मुखतस्त्रिवृतं निरममीत तमग्निर्देवताऽन्वसृज्यत गायत्रीछन्दः " ( तै०सं०७।१।१ ) इति श्रुतेः। सगुणब्रह्मणः प्रजापतेर्मुखादुत्पन्नत्वाद्गायत्र्या ब्रह्मत्वम् " गायत्री ब्रह्मवर्चसम् " ( तै. सं. ७ । १ । १ । ४ ) इति श्रुतेः । गायत्र्यात्मकब्रह्मवर्चससम्बन्ध इत्यर्थः ॥ १४ ॥

पर्यायत्रयेऽप्यष्टसङ्ख्याविधिं प्रकारान्तरेण स्तौति—तच्चतुर्वि५ शतिं कृत्व इति।" संवत्सरः प्रजापतेरात्मा" इति श्रुतेः संवत्सरस्य प्रजापत्यात्मकत्वम् । " यज्ञो वै प्रजापतिः " ( तै. ब्रा. १ । ३ । १० ) इति श्रुतेः प्रजा-पतेर्यज्ञत्वम् । 'अस्य' यज्ञस्य 'यावती ' परम्परया सम्बन्धिनी 'मात्रा' परिच्छेदिनी 'चतुर्विंशतिसङ्ख्या तद्योगाद् यावान्यज्ञःतावतः सकलस्यैव यज्ञस्यैतत् परिपूरणमिति पर्यायत्रयगतैस्त्रिभिरभिषुताष्टकृत्वश्चतुर्विंशतिसङ्ख्यानिष्पत्तेः प्राशस्त्यमित्यर्थः ॥ १५ ॥

अभिषवावृत्तिषु फलान्तराय सङ्ख्यान्तरं विधत्ते—पञ्च पञ्च कृत्व इति। सङ्ख्यावीप्साकृत्वसुचो व्याख्याताः । पंक्तिगतां पञ्चत्वसंख्यां प्रशंसति—पाङ्क्ताः पशव इति । चतुर्भिः पादैरेकेन शिरसा च पञ्चसङ्ख्यायोगात्पञ्चा-क्षरपंक्तिच्छन्दःसादृश्यात्पशूनां पांक्तत्वम् । तामेव पञ्चसंख्यामन्यथापि स्तौति—पञ्च वा ऋतव इति । हेमन्त-शिशिरयोः समासेन ऋतूनां पञ्चत्वम् । इत्याहुरिति परोक्तिः सूचिताऽननुरूपा नैतत् स्वमतमिति प्रतीयते, तद्वि-

तं गृहीत्वा परिमार्ष्टि । नेद्व्यवश्चोतदिति तं न सादयति प्राणो ह्यस्यैष तस्मादयमसन्नः प्राणः संचरति यदीत्त्वभिचरेदथैनꣳ सादयेदमुष्य त्वा प्राणꣳ सादयामीति तथा ह तस्मिन्न पुनरस्ति यन्नानुसृजति तेनो ऽअध्वर्युश्च यजमानश्च ज्योग्जीवतः ॥ १७ ॥

---

तं गृहीत्वा परिमार्ष्टि, नेद्व्यवश्चोतदिति । तं न सादयति, प्राणो ह्यस्यैषः । तस्मादयमसन्नः प्राणः सञ्चरति । यदीत्त्वभिचरेद्, अथैनं सादयेत् । "अमुष्य त्वा प्राणं सादयामि"—( का० श्रौ० सू० ९-८२ ) इति । तथा ह तस्मिन्न पुनरस्ति, यन्नानुसृजति । तेनो अध्वर्युश्च यजमानश्च ज्योग्जीवतः ॥ १७ ॥

---

शदमाह—सोऽएषा मीमांसैवेति । प्रशस्तविचारवचनो मीमांसाशब्दः । स चात्र विशेषणभूतां प्रशंसामेव लक्षयति यथा "नमस्तुङ्गं शिरस्तुबि" इत्यत्र तुवेर्वक्रसंयोगवाचिनो धातोरुत्पन्नः तुबिशब्दः संयोगमात्रं लक्षयति । अतस्त्रिष्वपि पर्यायेषु पञ्चत्वाष्टत्वयोः पशुब्रह्मवर्चसे फलमिति यत्परोक्त्या प्रतीयते न तत् फलं, किन्तु तयोः सङ्ख्ययोः प्रशंसैव सेत्यर्थः । तत् किं त्रिष्वपि पर्यायेषु अष्टत्वं पञ्चत्वं वाऽनुष्ठेयमेव नेत्याह—इतरं त्वेव क्रियत इति । "नेतराच्छन्दसि" ( पा० सू० ७ । १ । २६ ) इत्यद्डभावः । फलादितरसङ्ख्यासाम्यं सङ्ख्यावैषम्यकल्पेनानुष्ठेयमेवेत्यर्थः । अत एव तैत्तिरीयके—"अष्टौ कृत्वोऽग्रेऽभिषुणोत्येषां विहितो द्वितीयस्तृतीयश्च" इति सङ्ख्यासाम्यं विधायैकादश कृत्वो द्वितीयं द्वादश कृत्वस्तृतीयमिति नित्यप्रयोगे संख्यावैषम्यं द्वैविध्यं च तत्रैव प्रयोगे—"अथो खल्वाहुरिति"—वैकल्पिकपक्षान्तरत्वेन "तस्मादष्टावष्टौ कृत्वोऽभिषुत्यम्" इति संख्यासाम्यं विहितम् । अत एवापस्तम्बे "अष्टौ कृत्वोऽग्रेऽभिषुणोत्येवं विहितो द्वितीयस्तृतीयश्च" इति संख्यासाम्यं विधाय तत्रैव "अपि वैकादश कृत्वो द्वितीयमभिषुणोति द्वादश कृत्वस्तृतीयम्" इति संख्यासाम्येन सह संख्यावैषम्यं विकल्पितमाह । कात्यायनस्तु नित्ये प्रयोगे सङ्ख्यावैषम्यं विधाय सङ्ख्यासाम्यं काम्यमेवाह—"आसेचं निग्राभ्या, अष्टकृत्व एकादशकृत्वो द्वादशकृत्वः, सर्वे पञ्चवर्गाः पशुकामस्याष्टवर्गा ब्रह्मवर्चसकामस्य" इति ( का. श्रौ. सू. । ९ । ६९ । ७१ ) । अस्मिन् पक्षे ब्राह्मणे "इत्याहुरिति परोक्तिकथनं नानूच्याभिप्रायं किन्तु सर्वेषामपि सम्मतत्वेन सङ्ख्यासाम्यस्य काम्यत्वं युक्तमेव इत्येवंपरम् । तमिमं परोक्त्यभिप्रायं श्रुतिः स्वयमेव विवृणोति—सोऽएषा मीमांसैव इति । सा त्वेषा परोक्तिः 'मीमांसा' सर्वसंमत्या काम्यत्वस्य प्रशंसैव न पुनरनूच्येत्यर्थः । अनुचितत्वशङ्का तु तैत्तिरीयके नित्यत्वदर्शनात् । यदि सफलत्वेन प्रशस्तं सङ्ख्यासाम्यं तत् किं सङ्ख्यावैषम्यमनुष्ठेयमेव; तत्राह—इतरं त्वेव क्रियते इति । इतरं सङ्ख्यावैषम्यं तु नित्यप्रयोगे गुणफलमनपेक्षमाणैः क्रियत एवेत्यर्थः ॥ १६ ॥

ग्रहणानन्तरकृत्यमाह—तं गृहीत्वा परिमार्ष्टीति[1] । तत्र प्रयोजनमाह—नेद्व्यवश्चोतदिति । अपरिमार्जने रसो विश्चोतेत मेत् ततो महद्भयमित्यर्थः । नेदिति परिभये निपातः ( निरु. १ । ३ । ९ ) यथा नेत्पाप्मानं मृत्युमन्ववायानीति । व्यवश्चोतदिति "छन्दसि लुङ्—लङ्—लिटः" "लिङर्थे लेट्" ( पा. सू. ३ । ४ । ६—७ ) इति लिङर्थे हेतौ लेट् । अन्नाद्यायाविश्चोतनप्रसङ्गाद्धेतोरित्यर्थः । ग्रहान्तरसाम्यादत्र

---

१—परिमृज्यासादनमुपांशुअन्तर्यामयोः । का. श्रौ. सू. ९ । ८१ ।

( तो॒ऽ ) अथो॑ ऽअ॒प्ये॒वैनं॑ द॒ध्यात् । ( द ) अ॒मु॒ष्य॑ त्वा प्रा॒णमपि॑ दधा॒मी॒ति त॒था ह॒ त॒स्मि॒न्न पु॒नर॑स्ति॒ यत्र॒ सा॒द॒यति॒ ते॒नो प्रा॒णान्न लो॒भय॑ति ॥ १८ ॥

स वा॒ऽअ॒न्त॒रेव स॒न्त्स्वा॒हे॒ति॒ क॒रो॒ति । दे॒वा ह॒ वै बि॒भयां॑चक्रु॒र्य॒द्वै नः॑ पु॒रै॒वास्य॒ ग्र॒ह॒स्य॒ हो॒माद॒सु॒र॒र॒क्ष॒सा॒नी॒मं ग्र॒हं न॒ ह॒न्यु॒रि॒ति॒ त॒म॒न्त॒रेव॒ स॒न्तः॒ स्वा॒हा॒का॒रे॒णा॒जु॒ह॒वु॒स्तꣳ हु॒तमे॒व स॒न्त॒म॒ग्ना॒व॒जु॒ह॒वु॒स्त॒थो ऽए॒वैन॑मे॒ष ए॒त॒द॒न्त॒रेव॒ स॒न्त्स्वा॒हा॒का॒रे॒ण जु॒हो॒ति॒ तꣳ हु॒तमे॒व स॒न्त॒म॒ग्नौ जु॒हो॒ति ॥ १९ ॥

---

अथोऽअप्येवैनं दध्यात् । "अमुष्य त्वा प्राणमपिदधामि"–( का. श्रौ. सू. ९ । ८३ ) इति । तथा ह तस्मिन्न पुनरस्ति, यत्र सादयति । तेनो प्राणान्न लोभयति ॥ १८ ॥

स वाऽअन्तरेव सन् स्वाहेति करोति । देवा ह वै बिभयाञ्चक्रुः–यद्वै नः पुरैवास्य ग्रहस्य होमाद् असुररक्षसानीमं ग्रहं न हन्युरिति । तमन्तरेव सन्तः स्वाहाकारेणाजुहवुः । तं हुतमेव सन्तमग्नावजुहवुः । तथोऽएवैनमेष एतदन्तरेव सन् स्वाहाकारेण जुहोति । तं हुतमेव सन्तमग्नौ जुहोति ॥ १९ ॥

---

शङ्कितस्य सादस्याविधानादेव सिद्धमभावं स्तुत्या द्रढयितुमनूद्य स्तौति–तं न सादयतीति । 'अस्य' प्रजापत्यात्मकस्य ग्रहस्य 'एषः' सोमरसः 'प्राणः' इति काण्डादौ ( श. ब्रा. ४।१। १ ) प्रसाधितम् । तां प्रसिद्धिं 'हि'–शब्दो द्योतयति, 'तस्मात्' प्राणात्मकसोमरसानासादनात्, 'असन्नः' अन्तरे वा शीर्णः लोकानां 'प्राणः' बहिः 'सञ्चरति' इत्यर्थः । अभिचरतो मन्त्रविशिष्टं सादनमाह–यदीत्त्वभिचरेदिति । ग्रहणमन्वेनं ग्रहम् 'अविसृजन्' सादयन् । हे सोम ! अमुकनाम्नः शत्रोः प्राणरूपं त्वां विशीर्णमवसन्नं वा करोमीति मन्त्रार्थः । तादृक्सादनफलमाह–तथा ह तस्मिन्निति । तथा कृते 'तस्मिन्' शत्रौ 'पुनः' स प्राणो न तिष्ठति किंतु तत्रैव विशीर्यत्यवसीदति वा यतः पात्रं न विसृजति । विसृजति चेदवसन्नः श्वासो निर्गच्छेदपि तेन शत्रोरवसादनेनैव निरुपद्रवावध्वर्युयजमानौ चिरञ्जीवतः ॥ १७ ॥

सादितस्य पात्रस्य समन्त्रकं पिधानमाह–अथो अपीति । अथो एनं ग्रहम् "अमुष्य" इत्यादिमन्त्रेण 'अपि दध्याद्' आच्छादयेत् 'एव' आच्छादने च 'तस्मिन्' प्राणो 'न' तिष्ठेत् । सादनापिधानयोरकरणे बाधकमाह–यत्र सादयतीति । 'न लोभयति' न विमोहयेत्, वा नाकुलीकुर्यादित्यर्थः ॥ १८ ॥

अभिचरता हि यत्तु प्राणा आकुलीकर्तव्याः इति विधत्ते–स वा अन्तरेवेति । हविर्द्धानमध्ये वर्तमान एव सन् 'स्वाहा' इत्युच्चरेदित्यर्थः । तथोच्चारणस्य प्रयोजनमाह–देवा ह वै बिभयांचक्रुरित्यादिना । होमात् प्रागसुरराक्षसकर्तृकं ग्रहस्य विघातं परिहर्तुं देवा हविर्द्धानमध्ये स्थितमेव सोमं स्वाहाकारमात्रेण हुत्वा पश्चाद् हुतमेव सन्तं ग्रहं "स्वांकृतः" ( वा. सं. ७।३ ) इत्यादिमन्त्रेणाग्नावजुहवुः । अत इदानीमपि तथा कुर्यादित्यर्थः ॥ १९ ॥

---

१–अभिचरन्नसादयेदविसृजन्नमुष्य त्वा प्राणꣳ सादयामीत्युदानमित्यन्तर्यामम् । का. श्रौ. सू. ९ । ८२ ।
२–पाणिना चापिदधात्यमुष्य त्वा प्राणमपिदधामीत्युदानमित्यन्तर्यामम् । का. श्रौ. सू. ९ । ८३ ।

( त्यु ) अथोपनिष्क्रामति । ( त्यु ) उर्वन्तरिक्षमन्वेमीत्यन्तरिक्षं वाऽ-अनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नं यथाऽयं पुरुषोऽमूल ऽउभयतः परिच्छिन्नोऽन्तरिक्षमनुचरत्येतद्वै यजुर्ब्रह्म रक्षोहा स एतेन ब्रह्मणाऽन्तरिक्ष-मुभयमनाष्ट्रं कुरुते ॥ २० ॥

( तेऽथ ) अथ वरं वृणीते । बलवद्ध वै देवा एतस्य ग्रहस्य होमं प्रेप्सन्ति तेऽस्माऽएतं वरꣳ समर्धयन्ति क्षिप्रे न इमं ग्रहं जुहवदिति तस्माद्वरं वृणीते ॥ २१ ॥

---

अथोपनिष्क्रामति । " उर्वन्तरिक्षमन्वेमि "-( वा० सं० ७ । २ ) इति । अन्तरिक्षं वा अनु रक्षश्चरत्यमूलमुभयतः परिच्छिन्नम् । यथाऽयं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्षमनुचरति । एतद्वै यजुर्ब्रह्म रक्षोहा, स एतेन ब्रह्मणाऽन्तरिक्षमभयमनाष्ट्रं कुरुते ॥ २० ॥

अथ वरं वृणीते । बलवद्ध वै देवा एतस्य ग्रहस्य होमं प्रेप्सन्ति । तेऽस्माऽएतं वरं समर्धयन्ति क्षिप्रे न इमं ग्रहं जुहवदिति । तस्माद् वरं वृणीते ॥ २१ ॥

---

स्वाहाकारोच्चारणानन्तरं हविर्धानान्निर्गमनमाह—अथोपनिष्क्रामतीति[1] । तत्र मन्त्रमाह—उर्वन्तरिक्षमन्वेमीति । विस्तीर्णेनान्तरिक्षपथेनाहमाहवनीयं गच्छामि, न भूपथेनाहमाहवनीयं गच्छामि, न भूपथेन इति मन्त्रार्थं भावयन् गच्छेत् । तथा भावने कारणमाह—अन्तरिक्षं वा इति । मूले भूलोकेन, अग्रे च स्वर्गलोकेनेति ' उभयतो ' लोकद्वयेन परिच्छिन्नेन अमूलेन भुवं ' रक्षश्चरति ' इति प्रसिद्धम् । तृतीयादौ कर्मप्रवचनेनानुपयोगात् स्पृशन् अन्तरिक्षमिति द्वितीया । येनोक्तरूपेणान्तरिक्षपथेन 'अयं पुरुषश्चरति' । तत्र मन्त्रात्मकमिदं ' यजुः ' रक्षोजातिं हन्ति । तथा सति ' सः ' अध्वर्युर्नाष्ट्राणां रक्षसामभावेन ' अन्तरिक्षमभयं ' ' कुरुते ' इत्यर्थः । वीप्सार्थस्य यथाशब्देनैवाभिधानात् " नित्यवीप्सयोः " ( पा० सू० ८ । १ । ४ । ) इति न द्विर्भावः । सादृश्ये च यथार्थे नित्यस्याव्ययीभावश्छान्दसः ( पा० सू० २ । १ । ७ ) । पुरुषरूपस्यामूलत्वमुभयतः परिच्छेदश्च भावनामात्रसिद्धादपि तादृगन्तरिक्षपथेन गमनाद्भूपृष्ठस्य चान्तरिक्षमागस्याधोभागतया मूलत्वम् । वृक्षादेरधोभागो हि मूलम्, उपरिभागश्चाग्रमिति ॥ २० ॥

वरवरणं विधत्ते—अथ वरं वृणीत इति[3] । निष्क्रमानन्तरं वरप्रार्थनाहेतुमाह—बलवद्ध वै देवा इति । 'एतस्य'[4] उपांशुसोमरसस्य ' होमं ' 'देवाः' अत्यन्तमिच्छन्ति । इत्थम् ' अस्मै ' अध्वर्यवे तं यजमानार्थं वृतं वरं समृद्धं कुर्वन्ति । समर्द्धयतां च देवानामयमाशयः—समृद्धिमभिलक्षयन्यजमानोऽध्वर्यवे वरं ददातु, दत्तवरश्चाध्वर्युस्तुष्टः सन् अस्माकम् ' इमं ' उपांशुग्रहमसुरसमागमात्प्रागेव त्वरया जुहोत्विति । देवानां च त्वराकारणं सवनत्रयात्मके अस्मिन् यज्ञे[2] असुरसमागमात्प्राक् क्षिप्रं हुते सति संपूर्णो यज्ञो नः सम्पन्नः स्यादिति यस्मादेवकर्तां समृद्धिमिच्छन् यजमानोऽवश्यं दास्यति । तस्मादध्वर्युर्वरं वृणीते ॥ २१ ॥

---

१—स्वाहेत्युक्त्वोर्व्वन्तरिक्षमिति निष्क्रमणम् । का. श्रौ. सू. ९।८४। २—अत्र प्रकरणेऽव्ययीभावस्यानुपलभ्यमानत्वाद्भाष्यकाराणां समासविचारो न संगच्छते । ३—वरं श्रुत्वा ददाति च । का. श्रौ. सू. ९ । ८६ । ४— ग्रहे इति क० पा० ।

स जुहोति । स्वांकृतोऽसीति प्राणो वा ऽअस्यैष ग्रहः स स्वयमेव कृतः स्वयं जातस्तस्मादाह स्वांकृतोऽसीति विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इति सर्वाभ्यो ह्येष प्रजाभ्यः स्वयं जातो मनस्त्वाऽष्ट्विति प्रजापतिर्वै मनः प्रजापतिष्वाऽश्नुतामित्येवैतदाह स्वाहा त्वा सुभव सूर्यायेति तदवरᳲं स्वाहाकारं करोति परां देवताम् ॥ २२ ॥

( म ) अमुष्मिन्वाऽएतमहौषीत् । ( ग्र ) य एष तपति सर्व्वं वाऽएष तदेनᳲं सर्व्वस्यैव पराध्यं करोत्यथ यदवरां देवतां कुर्यात्परᳲं स्वाहाकारᳲं स्याद्ध हैवामुष्मादादित्यात्परं तस्मादवरᳲं स्वाहाकारं करोति परां देवताम् ॥ २३ ॥

---

स जुहोति । " स्वांकृतोऽसि "–( वा. सं. ७ । ३ ) इति । प्राणो वाऽअस्यैष ग्रहः । स स्वयमेव कृतः, स्वयं जातः । तस्मादाह स्वाङ्कृतोऽसीति । " विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः"–( वा. सं. ७ । ३ ) इति । सर्वाभ्यो ह्येष प्रजाभ्यः स्वयं जातः । " मनस्त्वाऽष्टु "–( वा. सं. ७ । ३ ) इति । प्रजापतिर्वै मनः, प्रजापतिष्वाऽश्नुतामित्येवैतदाह । "स्वाहा त्वा सुभव सूर्याय "–( वा. सं. ७ । ३ ) इति । तदवरं स्वाहाकारं करोति, परां देवताम् ॥२२॥

अमुष्मिन् वाऽएतमहौषीद् य एष तपति । सर्वं वाऽएषः । तदेनं सर्वस्यैव पराध्यं करोति । अथ यद् अवरां देवतां कुर्यात्, परं स्वाहाकारम् । स्याद् उ हैवामुष्मादादित्यात्परम् । तस्मादवरं स्वाहाकारं करोति, परां देवताम् ॥ २३ ॥

---

समन्त्रकं होमं विधत्ते–स जुहोतीत्यादिना । तत्र " स्वांकृतः " इत्यादिः, " सूर्याय " इत्यन्तो मन्त्रः । तं चतुर्द्धा विभज्य प्रथमं भागं व्याख्यातुमाह–" स्वांकृतोऽसीति । व्याचष्टे–प्राणो वा इति । 'अस्य' सोमयागस्य सम्बन्धी 'एषः' उपांशुग्रहः गृह्यत इति व्युत्पत्त्या सोमरसः, स प्राणो वै । "स प्रजापतिस्तस्यैष प्राणः " इति हि प्रागुक्तम् ( श. प. ४ । १ । १ । २ ) । प्राणश्च हिरण्यगर्भः परं ब्रह्म तच्च कर्त्रन्तराभावात् स्वात्मनैव कृतम् । श्रूयते हि–" तदात्मानं स्वयमकुरुत " ( तै. उ. आ. व. अनु. ७ ) इति । स्वात्मना कृतं स्वयं जातमेव । स्वयंकृत इत्यत्र छान्दसे यलोपे सवर्णदीर्घत्वे च स्वाङ्कृत इति जातम् । द्वितीयं भागमाह–विश्वेभ्य इति । व्याचष्टे–सर्वाभ्यो ह्येष प्रजाभ्यः स्वयं जात इति । दिव्यानि यानि देवानामिन्द्रियाणि पार्थिवानि च मनुष्याणां तेषां तृप्त्यर्थः सोम इति । "वाग्देवी जुषाणा सोमस्य तृप्यतु–" इति (वा. सं. ८।३७) मन्त्रे प्रसिद्धः । सा प्रसिद्धिः 'हि'–शब्देनोच्यते । तृतीयमाह–मनस्त्वाऽष्ट्विति । व्याचष्टे–प्रजापतिर्वै मन इति । 'मन इव हि प्रजापतिः' इति श्रुत्यन्तरान्मनसः प्रजापतित्वम् । चतुर्थमाह–स्वाहा त्वा सुभव सूर्यायेति । तं व्याचष्टे–तदवरं स्वाहाकारमिति । अग्नये स्वाहेत्यादिषु हि मन्त्रेषु प्रथमं देवतापदं, चरमं च स्वाहापदम्, इह तु तद्वैपरीत्यं, तत्रायं हेतुः 'य एषः' सूर्यः 'तपति' सर्वात्मको हि सः, 'अमुष्मिन्' सूर्ये एष उपांशुग्रहो हूयते एष च परार्द्धतया सर्वस्योपरि व्यवहर्तव्यः, स्वाहाकारे पुनरुपरि प्रयुज्यमाने स व्यवहारो न स्यादिति ।

---

१–स्वांकृत इति हुत्वा । का. श्रौ. सू. ९ । ८७ ।

( मु ) अथ हुत्वोर्ध्वं ग्रहमुन्मार्ष्टि । पराञ्चमेवास्मिन्नेतत्प्राणं दधात्यथोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्टि पराञ्चमेवास्मिन्नेतत्प्राणं दधाति देवेभ्यस्त्वा मरीचिपेभ्य इति ॥ २४ ॥

( त्य ) अमुष्मिन्वाऽएतं मुण्डलेऽहौषीत् । ( द्य ) य एष तपति तस्य ये रश्मयस्ते देवा मरीचिपास्तानेवैतत्प्रीणाति तऽएनं देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ॥ २५ ॥

तस्य वा ऽएतस्य ग्रहस्य । नानुवाक्याऽस्ति न याज्या तं मन्त्रेण जुहो-

---

अथ हुत्वोर्ध्वं ग्रहमुन्मार्ष्टि, पराञ्चमेवास्मिन्नेतत्प्राणं दधाति । अथोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्टि, पराञ्चमेवास्मिन्नेतत्प्राणं दधाति । " देवेभ्यस्त्वा मरीचिपेभ्यः "–( वा० सं० ७ । ३ ) इति ॥ २४ ॥

अमुष्मिन्वाऽएतं मण्डलेऽहौषीद्, य एष तपति । तस्य ये रश्मयः । ते देवा मरीचिपास्तानेवैतत्प्रीणाति । तऽएनं देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ॥ २५ ॥

तस्य वाऽएतस्य ग्रहस्य नानुवाक्याऽस्ति । न याज्या । तं मन्त्रेण जुहोति । एतेनो हास्यैषोऽनुवाक्यवान्भवति, एतेन याज्यवान् । अथ यद्यभिचरेत्, योऽस्यांशुराश्लिष्टः स्याद्–बाह्वोर्वा, उरसि

---

इत्थं च हे उपांशुसोमदेव ! मनुष्याणां सर्वेन्द्रियतृप्त्यर्थं प्राणात्मकतया त्वं स्वात्मनैव निर्मितोऽसि अतः सर्वेन्द्रियसहकारी मनोरूपः प्रजापतिरपि ' त्वा ' त्वाम् व्याप्नोतु । हे शोभनजन्मन् ! सोम जुहोमि त्वां सूर्यायेति मन्त्रार्थः ॥ २२ ॥ २३ ॥

होमानंतरं कर्तव्यं विधत्ते–अथ हुत्वोर्ध्वं ग्रहमुन्मार्ष्टीति । होमोत्तरकाले ' अथ ' अनन्तरमविलम्बमानः ऊर्ध्वमुखत्वेन स्थितं 'ग्रहं' मूलत आरम्याग्रपर्यन्तं गृह्यादित्यर्थः । होममार्जनयोः पौर्वापर्यं क्त्वाप्रत्ययेनोच्यते, तच्च तयोः कालव्यवधानेऽपि भवति, तथा मा भूदित्यव्यवधानम् ' अथ '–शब्दार्थः । मार्जनस्योन्मुखतां स्तौति–पराञ्चमेवास्मिन्नेतत्प्राणं दधातीति । ' एतत् ' उन्मार्जनम् ' अस्मिन् ' यजमाने ' प्राणम् ' अप्रतिबद्धोर्ध्वसञ्चारं करोति । उन्मार्जनानंनरं कर्तव्यं विधत्ते–अथोत्तानेनेति । ' प्राक् ' प्रागपवर्गं तिर्यङ् मृज्यात् । स्तौ ति–पराञ्चमेवेति । उन्मुखस्य प्राणस्य बहिःसञ्चारप्रतिबन्धनिरसनमुपमार्जनस्य फलम् । तत्र मन्त्रं विधत्ते–देवेभ्यस्त्वा मरीचिपेभ्य इतीति ॥ २४ ॥

व्याचष्टे–अमुष्मिन्वा इति । ' य एषः ' आदित्यः ' तपति ' अमुष्मिन् ' मण्डलरूपेण स्थिते ' एतम् ' उपांशुम् ' अहौषीत् ' " स्वाहा त्वा सुभव सूर्याय " इति । तत्सम्बन्धिनो ' ये ' रश्मयः ' ' देवाः ' ते मरीचय एव सन्तः संक्तिरित्यादयो याज्यान् पिबन्तीति ' मरीचिपाः । ' एतत् ' मध्यमपरिधौ सोमलेपस्योपमार्जनं ' तान् ' देवान् ' प्रीणात्येव ' ' प्रीताश्च ' ' ते ' ' एनं ' यजमानं ' स्वर्गं ' प्रापयन्ति । श्रुतौ–" देवेभ्यः " इत्यादिमार्जनमन्त्रः ॥ २५ ॥

" स्वांकृतः " इत्यादिहोममन्त्रमधुना स्तौति–तस्य वा एतस्य ग्रहस्येति । शुक्रामन्थ्यादिग्रहहोममन्त्रो हि सः प्रथमः, संक्तिरित्यादयो याज्यानुवाक्ये अपेक्षन्ते । " स्वाङ्कृतः " इत्याद्युपांशुहोम-

---

१–स्वांकृत इति हुत्वा पात्रमुन्मार्ष्टि । का० श्रौ० सू० ९ । ८७ । २–मार्जनमन्त्रस्तु चतुर्विंशतिकण्डिकायामुक्तः ॥

त्येतेनो ह्यस्यैषोऽनुवाक्यवान्भवत्येतेन याज्यवानथ यद्यभिचरेद्योऽस्याᳲंशुराश्लिष्टः स्याद्बाह्वोर्वोरसि वा व्वाससि वा तं जुहुयाद्देवाᳲंशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फडिति यथा ह वै हन्यमानानामपधावेदेवमेषोऽभिषूयमाणानाᳲं स्कन्दति तथा ह तस्य नैव धावन्नापधावत्परिशिष्यते यस्माऽएवं करोति तᳲं सादयति प्राणाय त्वेति प्राणो ह्यस्यैषः ॥ २६ ॥

(षु द) दक्षिणार्धे हैके सादयन्ति । (न्त्ये) एताᳲं ह्येष दिशमनु संचरतीति

वा, वाससि वा, तं जुहुयात् । " देवांशो यस्मै त्वेडे तत्सत्यम् । उपरिप्रुता भङ्गेन हतोऽसौ फट्"– (वा. सं. ७ । ३ ) इति । यथा ह वै हन्यमानानामपधावेद्, एवमेषोऽभिषूयमाणानां स्कन्दति । तथा ह–तस्य नैव धावन्नापधावत्परिशिष्यते । यस्माऽएवं करोति तं सादयति । " प्राणाय त्वा "–( वा० सं० ७ । ३ । ) इति । प्राणो ह्यस्यैषः ॥ २६ ॥

दक्षिणार्धे हैके सादयन्ति–एतां ह्येष दिशमनु सञ्चरतीति । तदु तथा न कुर्यात् । उत्तरार्धऽए-

मन्त्रस्तु याज्यानुवाक्ये अनपेक्ष्य तत्कृत्यमपि स्वयमेव करोतीति प्रशस्त इत्यर्थः । अस्य मन्त्रस्य सम्बन्धी ' एषः ' ग्रहः ' एतेन ' एव मन्त्रेणोभयवान् भवति । ' अनुवाक्यवान् याज्यवान् ' इति । " ङ्यापोः संज्ञाछन्दसोर्बहुलम् " (पा० सू० ६ । ३ । ६३) इति आपो ह्रस्वत्वम् । अभिचरतो बाह्वादिश्लिष्टांशुहोममाह–यद्यभिचरेदिति । तत्र होममन्त्रः । " देवांशो यस्मै त्वेडे तत् सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फट् " इति । हे ' देवांशो ' हे सोमांशो । ' यस्मै ' शत्रुवधाय ' त्वा ' त्वाम् ' ईडे ' स्तुवे ' तद् ' वधकर्म ' सत्यम् ' अस्तु ' भङ्गेन ' अभिषवामर्देन ' उपरिप्रुता ' उपरिभावाय वाऽऽगतेन त्वया ' असौ ' एतन्नामा शत्रुः ' हतः ' सन् ' फट् ' विशीर्यताम् । " ञिफला विशरणे " ( धा. पा. ९१८ ) इत्यस्य क्विपि लडयोरभेदश्छान्दसः । अभिचारे स्वाहाकारस्य स्थाने ' फट् ' इति प्रयुज्यत एव । " वषड्वश्ये षडुच्चाटे फट् द्वेष्ये पौष्टिके स्वधा " इति वचनात् । एतन्मन्त्रकरणकं विहितं होमं स्तौति– यथा ह वा इति । ' हन्यमानानां ' शत्रूणां मध्ये ' यथा ' यः कश्चिदेकः ' अपधावेत् ' पलायेत तद्वत् ' अभिषूयमाणानां ' सोमांशूनां मध्ये ' एषः ' बाह्वादिलग्नांशुः ' स्कन्दति ' अपगच्छति ' यस्मै ' पुनर्यजमानाय ' एवम् ' उक्तमन्त्रकं स्कन्नांशुहोमं करोति ' अस्य ' यजमानस्य तथा होमदेवते अभिष्टुते । सोमे स्थितो वा एवमपधावन्वा कोप्यंशुर्न परिश्लिष्यत इति । खरे सादनं विधत्ते–तᳲं सादयतीति । तत्र मन्त्रः–प्राणाय त्वेति । ' प्राणाय ' ' त्वा ' त्वां सादयामि इति शेषः । व्याचष्टे–प्राणो ह्यस्यैष इति । ' अस्य ' सोमयागस्य ' एषः ' उपांशुग्रहः प्राणो हि प्रागुक्तस्य रसस्य धारणात् अतस्तत्सादनस्य प्राणनार्थता मन्त्रेणोच्यते इति हि शब्दः ॥ २६ ॥

विहितस्य सादनस्योत्तरार्धे स्थानं विधातुं मतान्तरमनूद्य निरस्य स्वाभिमतं दधाति–दक्षिणार्धे हैके सादयन्तीति । ' एके ' याज्ञिका होमानन्तरमेतं ग्रहं खरस्य दक्षिणभागे ' सादयन्ति ' तत्रोपपत्तिं च ते कथयन्ति ग्रहणात् प्राक् खरे पात्राणामासादनकाले ' एषः ' ग्रह उपांशुपात्रमुत्तरादाग्नीध्रमण्डपादासादनाय खरं

१–व्वासउरोबाहुषु श्लिष्टम् ᳲंशुमभिचरन् जुहुयाद्देवाᳲंशविति । का. श्रौ. सू. ९ । ८९ । २–प्राणाय त्वेति पात्रसादनम् । का. श्रौ. सू. ९ । ९१ ।

तदु तथा न कुर्यादुत्तरार्धऽएवैनᳬं सादयेन्नो ह्येतस्या आहुतेः काचन पराऽस्ति तᳬं सादयति प्राणाय त्वेति प्राणो ह्यस्यैषः ॥ २७ ॥

(श्रुतेऽथो) अथोपाᳬंशुसवनमादत्ते । तं न दशाभिर्न पवित्रेणोपस्पृशति यथा ह्यद्भिः प्रणिक्तमेवं तद्यद्यᳬंशुराश्लिष्टः स्यात्पाणिनैव प्रध्वᳬंस्योदञ्चमुपनिपादयेद्व्यानाय त्वेति व्यानो ह्यस्यैषः ॥ २८ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ ४ ॥ १ ॥ १ ॥

---

वैनं सादयेत् । नो ह्येतस्या आहुतेः काचन पराऽस्ति । तं सादयति । " प्राणाय त्वा "–( वा० सं० ७ । ३ ) इति । प्राणो ह्यस्यैषः ॥ २७ ॥

अथोपांशुसवनमादत्ते । तं न दशाभिर्न पवित्रेणोपस्पृशति । यथा ह्यद्भिः प्रणिक्तमेवं तत् । यद्यंशुराश्लिष्टः स्यात्, पाणिनैव प्रध्वंस्योदंचमुपनिपादयेत् । " व्यानाय त्वा "–( वा० सं० ७ । ३ ) इति । व्यानो ह्यस्यैषः ॥ २८ ॥ इत्युपांशुग्रहः ।

---

प्रत्यानीयमानम् ' एतां ' दक्षिणां दिशम् ' अनुसञ्चरति ' गच्छतीति । तथा चापस्तम्बः–" दक्षिणेंऽश उपांशुपात्रम् " इति । ' तत् ' तु सादनं ' तथा ' दक्षिणांशे 'न कुर्यात्' इति परमतं निरस्य उत्तरभाग एवैनं ग्रहं सादयेदिति स्वमतविधिः । विहितमुत्तरार्द्धं स्तौति–नो ह्येतस्या इति । ' एतस्याः ' उपांशुसोमाहुतेः " परा ' प्रशस्ता ' न ' काचिदाहुतिः ' अस्ति' । सवनत्रयात्मिका ह्रीयमित्युक्तम् । अतस्तदीयपात्रासादनस्य उत्तरभागो युक्तः, सोऽपि तर्हि प्रशस्तः " तस्मादुत्तरार्द्धस्तेजस्वितरः " इति श्रुतेः । सादने विहितं मन्त्रं स्तोतुमनुवदति–तं सादयति प्राणाय त्वेति । स्तौति–प्राणो ह्यस्यैष इति । यतः ' अस्य ' पात्रस्य सम्बन्धी ' एषः ' सोमः ' प्राणः ' । अतोऽस्यानेन मन्त्रेण सादनं प्रशस्तमित्यर्थः ॥ २७ ॥

उपांशुसवनमादानं विधत्ते–अथोपाᳬंशुसवनमादत्ते इति । उपांशुग्रहसादनानन्तरमुपांशुसवनं ग्रावाणमाददीत । सोमलेपापनोदाय प्रसक्तं दशापवित्रेणोपस्पर्शं निषेधति–तं न दशाभिरिति । पवनसाधनेन वस्त्रेण तद्दशाभिर्वा सोमलेपापनोदाय ' तं ' पाषाणं ' न ' उन्मृज्यात् । तत्रानुपस्पर्शे कारणमाह–यथा ह्यद्भिः प्रणिक्तमेवमिति । ' प्रणिक्तं ' प्रक्षालितं–" णिजिर् शौचपोषणयोः "–( धा. पा. जु. प . ११ ) " उपसर्गादसमासेऽपि णोपदेशस्य " ( पा. सू. ८ । ४ । १४ ) इति णत्वम् । यथा शुद्ध्यर्थं जलेन क्षालितं वस्तु जललेपापनोदाय न पुनर्जलान्तरेण क्षाल्यते । जललेपस्य शुद्धत्वात् । ' एवं ' सोमशेषलिप्तं ' तद् ' ग्रावस्वरूपम् । सोमशेषस्यापि पवित्रत्वादित्यर्थः । तत् किं सोमसेकवद्ग्राव्णि लग्नः सोमांशुरपि नापनेयः ? अपनीय वा स ग्राव्णः सकाशादासादनीयस्तत्राह–यद्यंशुरिति । उपर्यन्तर्यामग्रहहोमतदासादनोत्तरकाले सादितयोरुपांश्वन्तर्यामयोर्मध्ये उदगग्रं स्थापयेत् । तथा च कात्यायनः–" उपाᳬंशुसवनं पाणिना प्रमृज्योदञ्चं व्यानाय त्वेति संस्पृष्टम्, उपविष्टयोः" (का. श्रौ. सू. ९ । ९२,।९३ ) इति ' उपविष्टयोः ' सादितयोरुपांश्वंतर्यामयोर्मध्ये तदुभयसंस्पृष्टमिति सूत्रार्थः । ग्रावसादने मन्त्रः–" व्यानाय त्वा " इति । हे ग्रावन् ! यज्ञस्य ' व्यानाय ' व्यापाराय त्वामिह सादयामि । व्याचष्टे–व्यानो ह्यस्यैष इति । प्राणापानात्मकग्रहद्वयसन्धौ वर्त्तमानत्वाद्वा ग्राव्णो व्यानत्वम् । तदुभयसन्धौ वर्त्तमानस्य व्यानत्वप्रसिद्धेः " अथ यः प्राणापानयोः सन्धिः स व्यानः " इति छन्दोगोपनिषदि ( छां. उ. १ । ३ । ३ ) स्थितिं ' हि ' शब्द आह ॥ २८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे प्रथमाध्याये प्रथमं ब्राह्मणम् ॥ ४–१–१ ॥

प्राणो ह वाऽअस्योपाꣳशुः । (व्यां) व्यानु उपाꣳशुसवन उदानु एवान्तर्यामः ॥ १ ॥

( मो ) अथ यस्मादन्तर्यामो नाम । यो वै प्राणः स उदानः स व्यानस्तमेवास्मिन्नेतत्पराञ्चं प्राणं दधाति यदुपाꣳशुं गृह्णाति तमेवास्मिन्नेतत्प्रत्यञ्चमुदानं दधाति यदन्तर्यामं गृह्णाति सोऽस्यायमुदानोऽन्तरात्मन्यतस्तद्यदस्यैषोऽन्तरात्मन्यतो यद्धैनेनेमाः प्रजा यतास्तस्मादन्तर्यामो नाम ॥ २ ॥

तमन्तः पवित्राद्गृह्णाति । प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति सोऽस्यायमुदानोऽन्तरात्मन्हितु एतेनो हास्याप्युपाꣳशुरन्तः पवित्राद्गृहीतो भवति

## अन्तर्यामग्रहः ।

प्राणो ह वाऽअस्योपांशुः, व्यान उपांशुसवनः, उदान एवान्तर्यामः ॥ १ ॥

अथ यस्मादन्तर्यामो नाम । यो वै प्राणः स उदानः स व्यानः । तमेवास्मिन्नेतत्पराञ्चं प्राणं दधाति; यदुपांशुं गृह्णाति—तमेवास्मिन्नेतत्प्रत्यञ्चमुदानं दधाति यदन्तर्यामं गृह्णाति । सोऽस्यायमुदानोऽन्तरात्मन्—यतस्तद्यदस्यैषोऽन्तरात्मन्—यतः । यद्धाएनेनेमाः प्रजा यताः।तस्मादन्तर्यामो नाम॥२॥

तमन्तः पवित्राद्गृह्णाति । प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति । सोस्यायमुदानोऽन्तरात्मन्

विधास्यमानस्य ग्रहस्य अन्तर्यामताव्युत्पादनायोदानतामन्तर्यामसहचारिणोरुपांशूपांशुसवनयोः प्राणव्यानात्मकत्वेन समर्थयते—प्राणो ह वाऽअस्योपांशुरिति । उदानस्य प्राणव्यानसाहित्यवदुपांशूपांशुसवनसाहित्यादन्तर्यामस्योदानात्मकतेत्यर्थः ॥ १ ॥

उदानात्मकस्याप्यन्तर्यामग्रहस्य कथमेतन्नामेति समर्थयितुं पृच्छति—अथ यस्मादन्तर्यामो नामेति । यस्मात् शब्दप्रवृत्तिनिमित्तात् 'अन्तर्यामः' इति 'नाम' भवति किं तदित्यर्थः । ततः समर्थयते—यो वै प्राणः स उदान इति । प्राण एक एव हि सन् प्रवृत्तिभेदात् प्राणोदानव्याननामभिर्व्यवह्रियते । तत्र पराग् वृत्तिः प्राणस्तदात्मकोपांशुग्रहणेन यथा पराङ्प्रतिबद्धसञ्चारो निधीयते । एवं प्रत्यग्वृत्तिरुदानस्तदात्मकान्तर्यामग्रहणेन अन्तर्निधीयते । निहितश्चान्तर्नियम्यते यतोऽन्तर्नियम्यते अत उदानस्यान्तर्याम इति नाम । उदानात्मकत्वाच्च ग्रहस्यापि तन्नाम । एवमन्तर्यम्यत इति कर्मसाधनोऽन्तर्यामशब्दो व्युत्पादितः । 'यद्वा' अनेनोदानेन अन्तर्वर्त्तमानेन सता 'इमाः' 'प्रजाः' यथा न म्रियन्ते तथा नियमिताः । अतोऽन्तर्नियम्यतेऽनेनेति करणसाधनं वोदानस्यान्तार्यामनाम, उदानात्मतया च ग्रहस्येत्यर्थः ॥ २ ॥

तस्य ग्रहणं विधत्ते—तमन्तः पवित्राद्गृह्णातीति । 'तम्' अन्तर्यामनामकं सोमरसं दशापवित्रस्यान्तःप्रदेशाद्धारारूपेण स्रवन्तं गृह्णीयात् । अन्तःपवित्रादित्येतत्स्तौति—प्रत्यञ्चमेवास्मिन्निति । अन्तर्यामसोमस्य यदेतदन्तःपवित्रदेशप्रापणम्, एतदुदानस्य सर्वस्मिन् जने प्रत्यङ्मुखतया स्थापनं भवति । अतः 'अयमुदानः' सर्वजनस्य शरीरमध्ये निहितो दृश्यते । अन्तर्यामस्यान्तःपवित्रदेशमन्यथा स्तौति—एतेनो हास्येति ।

समानᳬं ह्येतद्यदुपाᳬंश्वन्तर्यामौ प्राणोदानौ ह्येतेनो हैवास्यैषोऽपीतरेषु ग्रहेष्वनाक्षिद्भवति ॥ ३ ॥

( त्यु ) अथ यस्मात्सोमं पवित्रेण पावयति । यत्र वै सोमः स्वं पुरोहितं बृहस्पतिं जिज्यौ तस्मै पुनर्ददौ तेन सᳬंशशाम तस्मिन्पुनर्ददुष्यासैवातिशिष्टमेनो यदीन्नूनं ब्रह्मज्यानायाभिदध्यौ ॥ ४ ॥

---

हितः । एतेनो हास्याप्युपांशुरन्तः पवित्राद्गृहीतो भवति । समानं ह्येतद्—यदुपांश्वन्तर्यामौ—प्राणोदानौ हि । एतेनो हैवास्यैषोऽपीतरेषु ग्रहेष्वनाक्षिद्भवति ॥ ४ ॥

अथ यस्मात्सोमं पवित्रेण पावयाति । यत्र वै सोमः स्वं पुरोहितं बृहस्पतिं जिज्यौ तस्मै पुनर्ददौ । तेन संशशाम । तस्मिन्पुनर्ददुषि । आसैवातिशिष्टमेनो यदीन्नूनं ब्रह्मज्यानायाभिदध्यौ ॥ ४ ॥

---

'उ' इत्यवधारणे 'ह' इति प्रसिद्धौ । 'एतेन' अन्तर्यामरसस्यान्तःपवित्रदेशप्रापणेनैव 'अस्य' यजमानस्योपांशुरसो बहिःपवित्राद् 'गृहीतोऽपि' अन्तःपवित्राद्गृहीतो भवति इति प्रसिद्धम् । 'उपांश्वन्तर्यामौ' नाम 'यद्युगलम्' 'एतत्' समानम्' एकं वस्तु 'हि' यतः एतौ 'प्राणोदानौ' तौ चैकः प्राण एव । तद्वृत्तिभेदत्वादित्यनन्तरमुक्तम् । प्रस्तुतधारास्रावस्याविच्छेदं विधत्ते--एतेनो हैवेति । 'इतरेष्वपि' ऐन्द्रवायव्यादिग्रहेषु ग्राह्यस्य 'अस्य' सोमरसस्य 'एतेनैव' दशापवित्रेण क्रियमाणः 'एषः' धारास्रावः 'अनाक्षित्' अविच्छिन्नः कर्तव्यः । तदाहापस्तम्बः—"सन्तताया आस्रावयितव्याया धाराया अन्तर्यामं गृह्णाति, सर्वांश्चातो ग्रहानाध्रुवात्" इति ॥ ३ ॥

पवित्रेणैव सोमस्य शोधने कारणं जिज्ञासते—अथ यस्मात्सोमं पवित्रेण पावयतीति । 'यस्मात्' कारणात् 'पवित्रेण पावयति' तत् 'किं कारणमित्यर्थः । आख्यायिकया कारणमाह—यत्र वै सोम इति । 'यत्र' यस्मिन् काले यदेत्यर्थः । अत्र कालस्य समभिव्याहारादिभिर्लाभादधिकरणमात्रविवक्षया सप्तम्या अलुक् । कालस्यापि तूद्देशेनोपमानविवक्षायां "सर्वैकान्यकियत्तदः काले दा" (पा. सू. ५ । ३ । १५) इति त्रलोऽपवादो दाप्रत्ययः स्यात् । 'सोमः' चन्द्रः स्वकीयं 'पुरोहितं' बृहस्पतिं 'जिज्यौ' दारापहरणेन मानहीनमकरोत् । "ज्या वयोहानौ"—(क्या. प. २८) "लिट्यभ्यासस्योभयेषाम्—" (पा. सू. ६ । १ । १७) इत्यभ्यासस्य संप्रसारणम् । वयोहानिवचनोऽपि जिनातिरिह हानिमात्रं लक्षयति । सा तु हानिरिह मानस्येति प्रकरणादवगम्यते । अपहृतान् दारान् इन्द्रबृहस्पत्यादिदेवानां वचनमनादृत्य युद्धे च ताञ्जित्वापि तैः प्रार्थ्यमानस्तान् दारान् 'पुनः' 'बृहस्पतये' 'ददौ' । 'तेन' दानेन स बृहस्पतिः सम्यगेकान्तहृदयोऽभूत् । दारान्पुनर्बृहस्पतये 'ददुषि' दत्तवत्यपि 'तस्मिन्' सोमे दारा एव गताः । 'ब्रह्मज्यानाय' ब्राह्मणमानहानाय चिन्तितवानिति यत्, तत् 'एनः' 'पापम्' 'अतिशिष्टं' 'स्थितम्' 'आस' बभूव एव ॥ ४ ॥

तुं देवाः पवित्रेणापावयन् ।(न्स) स मेध्यः पूतो देवानाᳬं हविरभवत्तथो-ऽएवैनमेषु एतत्पवित्रेण पावयति स मेध्यः पूतो देवानाᳬं हविर्भवति ॥५॥

तद्यदुपयामेन ग्रहा गृह्यन्ते । ( न्तऽ ) इयं वाऽअदितिस्तस्या अदः प्रायणीयᳬं हविरसावादित्यश्चरुस्तद्दैतत्पुरेव सुत्यायै सा हेयं देवेषु सुत्यायामपि त्वमीषेऽस्त्वेव मेऽपि प्रसुते भाग इति ॥ ६ ॥

ते ह देवा ऊचुः। (व्य्यो) व्यादिष्टोऽयं देवताभ्यो यज्ञस्त्वयैव ग्रहा गृह्यन्तां देवताभ्यो हूयन्तामिति तथेति सोऽस्या एष प्रसुते भागः ॥ ७ ॥

---

तं देवाः पवित्रेणापावयन् । स मेध्यः पूतो देवानां हविरभवत् । तथो एवैनमेष एतत्पवित्रेण पावयति । स मेध्यः पूतो देवानां हविर्भवति ॥ ५ ॥

तद् यदुपयामेन ग्रहा गृह्यन्ते। इयं वाऽअदितिः। तस्या अदः प्रायणीयं हविः—असावादित्यश्चरुः । तद्दैतत् पुरेव सुत्यायै। सा हेयं देवेषु। सुत्यायामपि त्वमीषे अस्त्वेव मेऽपि प्रसुते भाग इति ॥६॥

ते ह देवा ऊचुः—व्यादिष्टोऽयं देवताभ्यो यज्ञः त्वयैव ग्रहा गृह्यन्ताम्, देवताभ्यो हूयन्तामिति । तथेति । सोऽस्या एष प्रसुते भागः ॥ ७ ॥

---

इत्थं पापिनं चन्द्रं सोमलतारसरूपं विधाय दशापवित्रेण अपावयन् तथा पावितश्चन्द्रः 'पूतः' सन् 'देवानां' 'हविः' अभूत् । एषैवास्याख्यायिका पुराणेषु प्रसिद्धा । 'तथैव' तु 'एषः' यजमानः । 'एनम्' अभिषुत-सोमरसम् 'एतत्पवित्रेण' एतेन दशापवित्रेण 'पावयति' । 'स' च सोमरसो 'देवानां' हविष्ट्वाय योग्यो 'भवति' ॥ ५ ॥

पवित्रेण पावने कारणमुक्तम्, पूतस्योपयामेन ग्रहणे कारणं वक्तुं प्रतिजानीते—तद्यदुपयामेन ग्रहा गृह्यन्त इति । उपयच्छति सोममित्युपयामो दारुपात्रं तेन दारुपात्रेण सोमरसो गृह्यत इति यत् तत्रायं वक्ष्यमाणो हेतुरित्यर्थः । कोऽयम् ? तमाह—इयं वा आदितिरिति । "उपयामः पृथिवी" इति वक्ष्यति । सेयमुपयामा-त्मिका पृथिव्येवादितिर्देवता प्रायणीयेष्टिसम्बन्धिहविरात्मको यः चरुः 'असौ' आदित्यः अदितिदेवताक इति प्रसिद्धम् । अतोऽसावुपयामात्मिका पृथिव्येव भवति । तदेतद्धविः सुत्यादिवसात् प्रागेव दीक्षानन्तरं प्रथमो-पसद्दिवसे क्रियते । 'सेयम्' अदितिः सुत्यादिवसेऽपि देवानां मध्ये 'अपि त्वं' चरुरूपाद्भागादन्यं सोमरूपं भागम् 'ईषे' इयेष । इषेर्व्यत्ययेनात्मनेपदम् । 'त्व' शब्दोऽकारान्तः सर्वनामस्वन्यपर्यायः । "उतो त्वस्मै तन्वं विसस्रे" ( ऋ. सं. ८ । २ । २३ ) इति हि श्रूयते । अदित्या एतद्वाक्यम् । 'प्रसुते' अभिषुते सोमे पूर्वं चरुं स्वीकृतवत्या अपि मम भागोऽस्त्वेवेति ॥ ६ ॥

'ते ह देवाः' ऊचुः,आहुः 'अयं' 'यज्ञो' 'देवताभ्यो' विभज्य 'व्यादिष्टः' दत्तः अतः सर्वे सोमरसाः 'त्वयैव' 'गृह्य-न्ताम्'। त्वयैव 'देवताभ्यो' 'हूयन्ताम्' । एतावतैव त्वं सोमे लब्धभागा भविष्यसीति । सा च तथाऽस्त्वित्याह ॥७॥

(स्त) तद्यदुपयामेन ग्रहा गृह्यन्ते । ( न्तऽ ) इयं वाऽउपयाम इयं वाऽइदमन्नाद्यमुपयच्छति पशुभ्यो मनुष्येभ्यो व्वनस्पतिभ्य इतो वाऽऊर्ध्वा देवा दिवि हि देवाः ॥ ८ ॥

( स्त ) तद्यदुपयामेन ग्रहा गृह्यन्ते । ( न्तेऽनु ) अनयैव तद्गृह्यन्तेऽथ यद्योनौ सादयतीयं वाऽअस्य सर्व्वस्य योनिरस्यै वाऽइमाः प्रजाः प्रजाताः ॥ ९ ॥

( स्तं ) तं वाऽएतꣳ रेतोभूतꣳ सोममृत्विजो बिभ्रति यद्वाऽअयोनौ रेतः सिच्यते प्र वै तन्मीयतेऽथ यद्योनौ सादयत्यस्यामेव तत्सादयति ॥१०॥

प्राणोदानौ ह वाऽअस्यैतौ ग्रहौ । तयोरुदितेऽन्यतरं जुहोत्यनुदितेऽन्यतरं प्राणोदानयोर्व्यावृत्त्यै प्राणोदानावेवैतद्व्याकरोति तस्मादेतौ समानावेव सन्तौ नानेवाचक्षते प्राण इति चोदान इति च ॥ ११ ॥

---

तद् यदुपयामेन ग्रहा गृह्यन्ते । इयं वाऽउपयामः । इयं वाऽइदमन्नाद्यमुपयच्छति—पशुभ्यो मनुष्येभ्यो वनस्पतिभ्यः । इतो वाऽऊर्ध्वा देवाः । दिवि हि देवाः ॥ ८ ॥

तद् यदुपयामेन ग्रहा गृह्यन्ते । अनयैव तद्गृह्यन्ते । अथ यद् योनौ सादयति—इयं वाऽअस्य सर्वस्य योनिः । अस्यै वाऽइमाः प्रजाः प्रजाताः ॥ ९ ॥

तं वाऽएतं रेतोभूतं सोममृत्विजो बिभ्रति । यद्वाऽअयोनौ रेतः सिच्यते प्र वै तन्मीयते । अथ यद्योनौ सादयति अस्यामेवैतत्सादयति ॥ १० ॥

प्राणोदानौ ह वाऽअस्यैतौ ग्रहौ । तयोरुदितेऽन्यतरं जुहोति—अनुदितेऽन्यतरम् । प्राणोदानयो-

---

तद्यदुपयामेन ग्रहा गृह्यन्त इति । 'यत्' एष तस्या अदित्यै भागो नाम पृथिव्याश्च 'उपयाम' इति नाम प्रसिद्धम् । यत 'इयं' पृथिवी पश्वादिभ्यस्तृणादिरूपमन्नं प्रयच्छति । मृन्मयशरावादित्यागेनोपयामनामकोर्ध्वपात्ररूपातयैव च पृथिव्या सोमग्रहे अयं हेतुः । यत् 'इतः' 'ऊर्ध्वं' स्वर्गे 'देवाः' वर्तन्त इति ॥ ८ ॥

ग्रहाणां खरे सादनमभिधातुं स्तौति—अथ यद्योनौ सादयतीति । 'योनौ' खरे ग्रहान् 'सादयति' इति यत्, तत्राऽयं हेतुः—'इयं' खरात्मिका भूमिः 'अस्य' 'सर्वस्य' जगत उत्पत्तिस्थानम् । यतः पृथिव्याः सकाशात् 'प्रजाः' 'प्रजाताः' कृत्स्नपृथिव्यात्मकश्चायं खरप्रदेशः । लतासारतया रेतोवत् 'रेतोभूतम्' 'एतं' 'सोमम्' 'ऋत्विजः' 'बिभ्रति' खरात्मिकया भूम्या उद्धृतं कुर्वन्ति । यदि हि खरादन्यत्र साद्येत तदा 'अयोनौ' रेतः सिक्तः रेतोभूतः स सोमः ,स्वप्रयोजनप्रसवाय समर्थो न भवेत् । खरे सादनं योनावेव सादनम् । नायं दोषः ॥ ९ ॥ १० ॥

उपांश्वन्तर्यामयोर्होमे कालभेदं स्तुवन्विधत्ते—प्राणोदानौ ह वा इति । 'अस्य' सोमयागस्य सम्बन्धिनौ

( चा ) अहोरात्रे ह वाऽअस्यैतौ ग्रहौ । तयोरुदितेऽन्यतरं जुहोत्यनुदितेऽन्यतरमहोरात्रयोर्व्याकृत्याऽअहोरात्रेऽएवैतद्व्याकरोति ॥ १२ ॥

( त्यु ) अहः सन्तमुपाꣳशुम् । ( न्त ꣳ ) तꣳ रात्रौ जुहोत्यहरेवैतद्रात्रौ दधाति तस्मादपि सुतमिस्रायामुपेव किंचित्ख्यायते ॥ १३ ॥

रात्रिꣳ सन्तमन्तर्यामं तमुदिते जुहोति । रात्रिमेवैतदहन्दधाति तेनो हासावादित्य उद्यन्नेवेमाः प्रजा न प्रदहति तेनेमाः प्रजास्त्राताः ॥ १४ ॥

---

व्याकृत्यै । प्राणोदानावेवैतद्व्याकरोति । तस्मादेतौ समानावेव सन्तौ नानेवाचक्षते—प्राण इति चोदान इति च ॥ ११ ॥

अहोरात्रे ह वाऽअस्यैतौ ग्रहौ । तयोरुदितेऽन्यतरं जुहोति, अनुदितेऽन्यतरम् । अहोरात्रयोर्व्याकृत्यै । अहोरात्रेऽएवैतद् व्याकरोति ॥ १२ ॥

अहः सन्तमुपांशुम्, तं रात्रौ जुहोति । अहरेवैतद्रात्रौ दधाति तस्माद्—अपि सुतमिस्रायामुपैव किञ्चित् ख्यायते ॥ १३ ॥

रात्रिं सन्तमन्तर्यामं, तमुदिते जुहोति । रात्रिमेवैतदहन्दधाति । तेनो हासावादित्य उद्यन्नेवेमाः प्रजा न प्रदहति । तेनेमाः प्रजास्त्राताः ॥ १४ ॥

---

' एतौ ' उपांश्वन्तर्यामग्रहौ क्रमेण प्राणोदानात्मकौ यतः, अतः ' तयोः ' ' अन्यतरम् ' अन्तर्यामं सूर्ये ' उदिते ' जुहुयात्[1] । ' अन्यतरं ' चोपांशुम् ' अनुदिते ' । एवं हि कालभेदात्प्राणोदानावसंकीर्णौ द्विधा कृतौ भवतः । अनेन हि कालभेदेन तावुभौ विभक्तौ करोति । विभागादेव च ' एतौ ' समानरूपावपि ' सन्तौ ' एकं प्राण इति, अपरं उदान इति भेदेन व्यवहरन्ति ॥ ११ ॥

न केवलं प्राणोदानविभागः । अहोरात्रव्याकृतिरपि प्रयोजनमित्यनन्तरमेव विधिमनूद्य स्तौति—अहोरात्रे ह वा इति । स्पष्टम् ॥ १२ ॥

उक्तं कालविभागमन्यथापि स्तौति—अहः सन्तमुपांशुमिति । एकस्यैव सतः प्राणस्य वृत्तिभेदात् प्राणोदानव्यवहार इत्युक्तम् । सूर्यश्च प्राणात्मकः । अग्निवाय्वादित्यान्प्रकृत्य श्रूयते हि—" स एष प्राणस्त्रेधा विहितः " इति । सूर्यस्य उपरि सञ्चारो दिनम् । अधः सञ्चारो रात्रिः । अतः सूर्यात्मकप्राणस्यापि ऊर्ध्वगमनात्मिका प्राणवृत्तिरहः । अधःसञ्चारात्मिका उदानवृत्ती रात्रिः । इति स्थिते प्राणवृत्तिरूपतया अहरात्मकस्योपांशो रात्रिशेषे होमेन अहरेव रात्रौ दत्तं भवति । अहो रात्रौ दानादेव निबिडतमस्कायामपि च रात्रौ उदयसमीपे कियँश्चित्प्रकाशो जायते । एवमपानवृत्तिरूपतया रात्र्यात्मकस्यान्तर्यामस्य अहरुपक्रमे होमेन रात्रिरहनि दत्ता भवति । अतः प्रभाते मध्याह्न इव नातितापः । तेनाहोरात्रव्यत्यासेनाहरादावपि शैत्याद्रात्रिशेषेऽपि प्रकाशान्मुख्यव्यवहारसम्मत्या प्रजाः परित्राताः । अत उक्तः कालविभागः प्रशस्त इति विहितं ॥ १३ ॥ १४ ॥

---

१—उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति । का. श्रौ. सू. ९ । १२४ ।

( ८ ) अथातो गृह्णात्येव । ( वो ) उपयामगृहीतोऽसीत्युक्तऽउपयामस्य बन्धुरन्तर्यच्छ मघवन्पाहि सोममितीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्मादाह मघवन्निति पाहि सोममिति गोपाय सोममित्येवैतदाहोरुष्य राय एषो यजस्वेति पशवो वै रायो गोपाय पशूनित्येवैतदाहेषो यजस्वेति प्रजा वाऽइषस्ता एवैतद्यायजूकाः करोति ता इमाः प्रजा यजमाना अर्चन्त्यः श्राम्यन्त्यश्चरन्ति ॥ १५ ॥

( न्त्य ) अन्तस्ते द्यावापृथिवी दधामि । (म्य) अन्तर्दधाम्युर्वन्तरिक्षम् ॥ सजूर्देवेभिरवरैः परैश्चेति तदेनं वैश्वदेवं करोति तद्यदेनेनेमाः प्रजाः प्राण-

---

अथातो गृह्णात्येव । "उपयामगृहीतोऽसि"–( वा० सं० ७ । ४ ) इति । उक्त उपयामस्य बन्धुः । "अन्तर्यच्छ मघवन् पाहि सोमम्"–( वा. सं. ७ । ४ ) इति । इन्द्रो वै मघवान्, इन्द्रो यज्ञस्य नेता । तस्मादाह–मघवन्निति । पाहि सोममिति । गोपाय सोममित्येवैतदाह । "उरुष्य राय एषो यजस्व"–( वा. सं. ७ । ४ ) इति । पशवो वै रायः । गोपाय पशूनित्येवैतदाह । इषो यजस्वेति । प्रजा वाऽइषः, ता एवैतद्यायजूकाः करोति । ता इमाः प्रजा यजमाना अर्चन्त्यः श्राम्यन्त्यश्चरन्ति ॥ १५ ॥

"अन्तस्ते द्यावापृथिवी दधामि । अन्तर्दधाम्युर्वन्तरिक्षम् । सजूर्देवेभिरवरैः परैश्च"–( वा० सं० ७ । ५ ) इति । तदेनं वैश्वदेवं करोति । तद् यदेनेनेमाः प्रजाः प्राणत्यश्चोदनत्यश्चान्त-

---

विहितमन्तर्यामग्रहणमनूद्य तत्र मन्त्रं विनियुज्य पञ्चधा विभागेन व्याचष्टे–अथातो गृह्णात्येवेति । मन्त्रस्तु–"उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोमम्,–उरुष्य राय एषो यजस्व; अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षं, सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन् मादयस्व"(वा.सं.७।४।५)–इति ग्रहणादिखरासादनान्तप्रयोगकथनानन्तरं । यतो विहितग्रहणे तत्साधनमन्त्रापेक्षा, अतो यद् गृह्णातीति ग्रहणमनूद्य तत्र "उपयामे"–इत्यादिमन्त्रः साधनं विधीयते । "उपयामगृहीतोसि" इति मन्त्रस्य प्रथमो भागः । हे सोम ! त्वम् उपयामेन ग्रहेण गृहीतोऽसि । व्याचष्टे–उक्त उपयामस्य बन्धुरिति । बध्यते नियमेन प्रयुज्यते स्वार्थे शब्दो येन तत् प्रवृत्तिनिमित्तं 'बन्धुः' । "तद्यदुपयाम"–इति तत्रोक्तम् । "इयं वा उपयामः"–( श. प. ४ । १ । २ । ८ ) इत्यत्र । द्वितीयो भागः–"अन्तर्यच्छ मघवन् पाहि सोमम्"–इति । व्याचष्टे–इन्द्रो वै मघवानिति । 'मघवन्' इत्येतेन इन्द्र उच्यते । तस्य यज्ञं प्रति नेतृत्वेन सोमस्यान्तर्नियमने स सम्बोध्यते । 'पाहि'–इत्यादि स्पष्टम् । तृतीयभागः–"उरुष्य राय एषो यजस्व"–इति । व्याचष्टे–पशवो वै राय इति । उरुष्यती रक्षार्थः कण्ड्वादियगन्तः । इच्छन्ति स्वर्गादिफलमिति 'इषः' । 'प्रजाः' । 'यजस्व' इत्यन्तर्भावितण्यर्थः । 'यायजूकाः', यज्ञशीलाः कृते चैतद्भवति–'ता इमा' इत्यादि ॥ १५ ॥

चतुर्थो भागः–"अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षं, सजूर्देवेभिरवरैः परैश्च" इति । व्याचष्टे–तदेनं वैश्वदेवं करोतीति । 'तत्' 'तेन' मन्त्रपठनेन 'एनं' ग्रहं विश्वदेवोपकारकं 'करोति' । कथं-

---

१–उदितेऽन्तर्यामग्रहणमुपयामगृहीत इति । का. श्रौ. सू. ५-१२४ ।

त्यश्चोदनुत्यश्चान्तुरिक्षमनुचरन्ति तेन वैश्वदेवोऽन्तर्यामे मघवन्मादय-स्वेतीन्द्रो वै मघवानिन्द्रो यज्ञस्य नेता तस्मादाह मघवन्नित्यथ यदन्तुरन्त-रिति गृह्णात्यन्तुस्त्वाऽऽत्मन्दधऽइत्येवैतदाह ॥ १६ ॥

तं हीत्वा परिमार्ष्टि । नेद्व्यवश्चोतदिति तं न सादयत्युदानो ह्यस्यैष तुस्मादयमसन्न उदानः सुंचरति यदीत्त्वभिचरेदथैनं सादयेदमुष्य त्वो-दानुं सादयामीति ॥ १७ ॥

स यद्युपांशुं सादयेत् । (उ) अथैनं सादयेद्यद्युपांशुं न साद-येन्नैनं सादयेद्यद्युपांशुमपिदध्यादप्येनं दध्याद्यद्युपांशुं नापिदध्या-न्नैनमपिदध्याद्यथोपांशोः कर्म तथैतस्य समानं ह्येतद्यदुपांश्वन्त-र्यामौ प्राणोदानौ हि ॥ १८ ॥

रिक्षमनुचरन्ति—तेन वैश्वदेवः । "अन्तर्यामे मघवन् मादयस्व" —( वा० सं० ७ । ५ ) इति । इन्द्रो वै मघवान्, इन्द्रो यज्ञस्य नेता । तस्मादाह—मघवन्निति । अथ यदन्तरन्तरिति गृह्णाति । अन्तस्त्वाऽऽत्मन्दधऽइत्येवैतदाह ॥ १६ ॥

तं गृहीत्वा परिमार्ष्टि । नेद्व्यवश्चोतदिति । तं न सादयति । उदानो ह्यस्यैषः । तस्मादयमसन्न उदानः संचरति । यदीत्त्वभिचरेद्—अथैनं सादयेद् । अमुष्य त्वोदानं सादयामीति ॥ १७ ॥

स यद्युपांशुं सादयेत्—अथैनं सादयेत् । यद्युपांशुं न सादयेत्—नैनं सादयेत् । यद्युपांशुमपि-

मिति चेत्, लोकत्रयस्य तदन्तर्वर्तिपरावरदेवानां च एतद्ग्रहमध्ये स्मरणात्मकेन निधानेन ते पराश्चावराश्च सर्वे देवा अव्याहतप्राणोदानवृत्तयो यतोऽन्तरिक्षेण सुखिनश्चरन्ति । अतो विश्वेदेवोपकारकताऽस्य ग्रहस्य । "तृतीयार्थे" (पा. सू. १।४।८५) इत्यनुः कर्मप्रवचनीयः । तद्योगाद् 'अन्तरिक्षम्' इति द्वितीया (पा. सू. २।३।८) । पञ्चमो भागः "अन्तर्यामे मघवन् मादयस्व"--इति । व्याचष्टे--इन्द्रो वै मघवानिति । अथ यदन्तरिति । 'मघवन्' इत्यनेनेन्द्र उच्यते । तस्य यज्ञं प्रति नेतृत्वेनात्मनः प्राणने स सम्बोध्यते । अत्र च समस्ते मन्त्रे योऽयं 'अन्तः' 'अन्तः' इत्यसकृत् संप्रयोगः तेन हे सोमात्मक उदान ! त्वामहमात्मनि अन्तः स्थापयामीत्यु-च्यत इत्यर्थः । इत्थं च उदानात्मक हे सोम ! त्वं पात्रेण गृहीतोऽसि । हे मघवन् ! उदानात्मक त्वमिमं सोम-मन्तरे नियमय रक्ष च अस्मिन् यज्ञे प्रवर्ग्यार्थस्य च पयसो दोग्ध्रीर्गाश्च रक्ष यथा च लोकाः सर्वेऽमुना सोमेन यजन्ते तथा कुरु । हे सोम ! त्वय्येव लोकत्रयं प्रणिधानेन स्थापयामि । हे मघवन् स्वर्गमर्त्यलोकवार्तिभिर्देवैः सह अस्मिन्नन्तर्यामे ग्रहे स्वात्मानं तर्पयेति समस्तस्य मन्त्रस्यार्थः ॥ १६ ॥

परिमार्जनं विधत्ते--तं गृहीत्वा परिमार्ष्टीति उपांशुग्रहे गतमेतत् । (श. प. ४।१।१।१७) तत्रत्य-प्राणपदस्थाने अत्रोदानपदमित्येव विशेषः ॥ १७ ॥

उपांशोरभिचारे सादनविधानं च नान्यत्रेत्युक्तम् । उभयमन्तर्यामेऽपि तथेत्याह—स यद्युपांशुं सादयेदिति ।

१–अपमार्ष्टयत्र का. श्रौ. सू. ९ । १२६

ता ऽउ ह चरकाः । (का ता) नानैव मन्त्राभ्यां जुह्वति प्राणोदानौ वा-ऽअस्यैतौ नानावीर्यौ प्राणोदानौ कुर्म इति वदन्तस्तदु तथा न कुर्यान्मोहयन्ति ह ते यजमानस्य प्राणोदानावपीद्वाऽएनं तूष्णीं जुहुयात् ॥१९॥

(स) स यद्वाऽउपाꣳशुं मन्त्रेण जुहोति । तदेवास्यैषोऽपि मन्त्रेण हुतो भवति किमु तत्तूष्णीं जुहुयात्समानꣳ ह्येतद्यदुपाꣳश्वन्तर्यामौ प्राणोदानौ हि ॥ २० ॥

स येनैवोपाꣳशुं मन्त्रेण जुहोति । तेनैवैतं मन्त्रेण जुहोति स्वांकृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाऽष्टु स्वाहा त्वा सुभव सूर्यायेत्युक्तो यजुषो बन्धुः ॥ २१ ॥

---

दध्यात्—अप्येनं दध्यात् । यद्युपांशुं नापिदध्यात्—नैनमपिदध्यात् । यथोपांशोः कर्म—तथैतस्य । समानं ह्येतद्—यदुपांश्वन्तर्यामौ—प्राणोदानौ हि ॥ १८ ॥

ताऽउ ह चरकाः—नानैव मन्त्राभ्यां जुह्वति । प्राणोदानौ वा अस्यैतौ नानावीर्यौ । प्राणोदानौ कुर्म इति वदन्तः । तदु तथा न कुर्यात् । मोहयन्ति ह ते यजमानस्य प्राणोदानौ । अपीद्वाऽएनं तूष्णीं जुहुयात् ॥ १९ ॥

स यद्वाऽउपांशुं मन्त्रेण जुहोति । तदेवास्यैषोऽपि मन्त्रेण हुतो भवति । किमु तत्तूष्णीं जुहुयात् । समानं ह्येतद्—यदुपांश्वन्तर्यामौ—प्राणोदानौ हि ॥ २० ॥

स येनैवोपांशुं मन्त्रेण जुहोति । तेनैवैतं मन्त्रेण जुहोति । "स्वांकृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाऽष्टु स्वाहा त्वा सुभव सूर्याय "—(वा. सं. ७ । ६) इति । उक्तो यजुषो बन्धुः ॥ २१ ॥

---

यदुक्तमुपांशोः स्वाहेत्युक्त्वा निष्क्रमणं धरवरणं च—( श. प. ४ । १ । १ । १९—२१ कं. ) तदप्यन्तर्यामे समानमित्याह—यथोपांशोः कर्म तथैव तस्येति । तत्र हेतुः—समानं ह्येतादिति ॥ १८ ॥

होमे शाखान्तरमतमुपन्यस्यति—ताऽउ ह चरका इति । चरकनामानः केचिच्छाखिनः 'तौ' उपांश्वन्तर्यामग्रहौ भिन्नाभ्यां 'मन्त्राभ्यां' 'जुह्वति' । तथा जुह्वतामयमाशयः । 'एतौ' ग्रहौ 'अस्य' यजमानस्य 'प्राणोदानौ' । तौ च भिन्नव्यापारौ निर्गमनकर्मा प्राणः, प्रवेशकर्मा चोदान इति । भिन्नमन्त्रकरणेन एतौ ग्रहौ स्वयं प्राणापानात्मकौ 'कुर्म इति वदन्तः' । तथाविधं च तत्र कर्म तत्र कुर्यात् । 'यतः' ते 'यजमानस्य' 'प्राणोदानौ' 'मोहयन्ति' व्याकुलीकुर्वन्ति । एकस्यैव सतः प्राणस्य वृत्तिभेदान्नानात्मनोः प्राणोदानयोः नानामन्त्रकरणेन स्वरूपभेदजननाय फलीकरणमपि भ्रमजननाद् व्याकुलीकरणं यत् द्वेधा करणम् । स्वमतमाह—अपीद्वा एनमिति । 'अपि' 'वा' 'एनम्' 'इत्' इत्थमेव । इत्थंभावं विवृणोति । 'तूष्णीं' 'जुहुयात्' । वक्ष्यमाणैकमन्त्रपक्षापेक्षया विकल्पः ॥ १९ ॥

न चैवं मन्त्रैकतया होमस्य वैकल्यम् । उपांशोर्मन्त्रवत्त्वेनैवास्यापि तत्सिद्धेः । किंच यद्युपांशुमन्त्रान्मन्त्रान्तरेणान्तर्यामः क्रियेत तथाप्युपांशुमन्त्रेण कृत एव—अनयोरैक्यात् । यदा त्वमन्त्रकः क्रियते तदा

( रु ) अथ हुत्वाऽवाञ्चं ग्रहमवमार्ष्टि ।(ष्टी) इदं वाऽउपाᳫँशुᳫं हुत्वोर्ध्वमुन्मार्ष्टयथात्रावाञ्चमवमार्ष्टि प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति ॥ २२ ॥

( त्यु ) अथ नीचा पाणिना । मध्यमे परिधौ प्रत्यगुपमार्ष्टीदं वा उपाᳫँशुᳫं हुत्वोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्टयथात्र नीचा पाणिना मध्यमे परिधौ प्रत्यगुपमार्ष्टि प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति देवेभ्यस्त्वा मरीचिपेभ्य इति सोऽसावेव बन्धुः ॥ २३ ॥

( स्तुं ) तं प्रत्याक्रम्य सादयति । ( त्यु ) उदानाय त्वेत्युदानो ह्यस्यैष तानि वै सᳫंस्पृष्टानि सादयति प्राणोदानानेवैतत्सᳫँस्पर्शयति प्राणोदानान्त्सन्दधाति ॥ २४ ॥

---

अथ हुत्वाऽवाञ्चं ग्रहमवमार्ष्टि । इदं वाऽउपांशुं हुत्वोर्ध्वमुन्मार्ष्टि । अथात्रावाञ्चमवमार्ष्टि। प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति ॥ २२ ॥

अथ नीचा पाणिना मध्यमे परिधौ प्रत्यगुपमार्ष्टि । इदं वाऽउपांशुं हुत्वोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्टि । अथात्र नीचा पाणिना मध्यमे परिधौ प्रत्यगुपमार्ष्टि । प्रत्यञ्चमेवास्मिन्नेतदुदानं दधाति । "देवेभ्यस्त्वा मरीचिपेभ्यः"–( वा. सं. ७ । ६ ) इति । सोऽसावेव बन्धुः ॥ २३ ॥

तं प्रत्याक्रम्य सादयति । "उदानाय त्वा"–( वा. सं. ७ । ६ ) इति । उदानो ह्यस्यैषः । तानि वै संस्पृष्टानि सादयति । प्राणोदानानेवैतत्संस्पर्शयति । प्राणोदानान्त्सन्दधाति ॥ २४ ॥

---

विरोधिमन्त्रान्तराभावत्वेनैव मन्त्रेण कृत इति किमु वक्तव्यम् । एक एव हि स ग्रह इत्युक्तं, प्राणोदानात्मकत्वात् । तयोश्चैकप्राणवृत्तिभेदमात्रात्मकत्वादिति । यदि तु अमन्त्रकत्वानुशयपरिहाराय मन्त्रेणैवायमपि कर्तव्य इति विनिर्बन्धः । तर्हि येनैवोपांशुः क्रियते, तेनैव–"स्वांकृतः" इत्यादिना मन्त्रेणायमपि क्रियतामिति । अस्य च यजुष उपांशुग्रहलक्षणस्वार्थेन सह यो बन्धुसम्बन्ध उक्तः ; स एव प्राणद्वारा तदात्मकस्यान्तर्यामस्यापीति पृथगनुक्तोऽप्युक्त एवेति मन्तव्यम् ॥ २० ॥ २१ ॥

उपांशौ उन्मार्जनोपमार्जने यथा विहिते तद्वैलक्षण्यमन्तर्यामे सोपपत्तिकं विधत्ते–अथ हुत्वेति । 'हुत्वा' अन्तर्यामम्–'अवमार्ष्टि' इति । यदस्योपांशुवैलक्षण्यार्थं तत्र ह्युन्मार्जनमुक्तम् । इदञ्चान्तर्यामस्यावमार्जने प्रयोजनम् । यदुदानस्य प्रत्यग्विधानमिति । 'मध्यमे परिधौ' अवाङ्मुखेन पाणिना 'प्रत्यग्' अन्तर्यामे उपमृज्यात् । यत एतद्विपरीतमुपांशावुपमार्जनमिति । प्रयोजनान्तरं चान्तर्यामे परिधौ प्रत्यगुपमार्जने उदानस्य प्रत्यक्त्वाविधानं नाम । उपमार्जने मन्त्रः–देवेभ्यस्त्वा मरीचिपेभ्यः इति । अस्य मन्त्रस्योपांशावुक्तं ब्राह्मणमतिदिशति ( श.प. ४ । १ । १ । २४ ) इति । सोऽसावेव बन्धुरिति ॥ २२ ॥ २३ ॥

अन्तर्यामस्य तन्मन्त्रं च विधाय स्तौति–तं प्रत्याक्रम्येति[2] । यतोऽन्तर्याम उदानः, अतस्तदासादने–"उदा-

---

१–प्रथमे च न्युब्जेन पाणिना प्रत्यक् । का. श्रौ. सू. ९ । १२७ ।

२–उपांशुसवनस्य ... ष्टस्योदानाय त्वेति पात्रासादनम् । का. श्रौ. सू. ९ । १२८ ।

तानि वाऽअनिङ्ग्यमानानि शेरे । (रऽआ) आ तृतीयसवनात्तस्मादिमे मनुष्याः स्वपन्ति तानि पुनस्तृतीयसवने प्रयुज्यन्ते तस्मादिमे मनुष्याः सुप्त्वा प्रबुध्यन्ते तेऽनिशिताश्चराचरा यज्ञस्यैवैतद्विधामनु व्वय इव ह वै यज्ञो व्विधीयते तस्योपाᳬंश्वन्तर्यामावेव पक्षावात्मोपाᳬंशुसवनः ॥२५॥

(स्ता) तानि वाऽअनिङ्ग्यमानानि शेरे । (रऽआ) आ तृतीयसवनात्ता-युते यज्ञ एति वै तद्यत्तायुते तस्मादिमानि व्वयाᳬंसि विगृह्य पक्षावनायुवानानि पतन्ति तानि पुनस्तृतीयसवने प्रयुज्यन्ते तस्मा-दिमानि व्वयाᳬंसि समासं पक्षावायुवानानि पतन्ति यज्ञस्यैवैतद्विधा-मनु ॥ २६ ॥ ( शतम् २३०० ॥ )

---

तानि वाऽअनिङ्ग्यमानानि शेरे—आ तृतीयसवनात् । तस्मादिमे मनुष्याः स्वपन्ति । तानि पुनस्तृतीयसवने प्रयुज्यन्ते । तस्मादिमे मनुष्याः सुप्त्वा प्रबुध्यन्ते । तेऽनिशिताश्चराचरा यज्ञस्यैवै-तद्विधामनु । वय इव ह वै यज्ञो विधीयते । तस्योपांश्वन्तर्यामावेव पक्षौ । आत्मोपांशुसवनः ॥२५॥

तानि वाऽआनिङ्ग्यमानानि शेरे—आ तृतीयसवनात् । तायते यज्ञः । एति वै तद्—यत्तायते । तस्मादिमानि वयांसि विगृह्य पक्षावनायुवानानि पतन्ति । तानि पुनस्तृतीसवने प्रयुज्यन्ते । तस्मादिमानि वयांसि समासं पक्षावायुवानानि पतन्ति । यज्ञस्यैवैतद्विधामनु ॥ २६ ॥

---

नाय त्वा " इति मन्त्र इत्यर्थः । सादने विशेषं विधाय स्तौति—तानि वा इति । उपांश्वन्तर्यामोपांशुसवनानि परस्परं यथा ' संस्पृष्टानि ' भवन्ति तथा सादयेत् । एतत् संस्पृष्टासादनं प्राणोदानव्यानान् सदा संस्पृष्टान् करोति । तस्य च प्रयोजनं प्राणोदानव्यानानां सदासंगत्याऽवस्थानम् । प्राणोदानयोः सन्ध्यात्मकतया व्यानोऽपि ताभ्यामेव गृह्यत—इति तदपेक्षया ' प्राणोदानान् ' इति बहुवचनम् । तस्य तदुभयसन्धिरूपता च च्छन्दोगै-राम्नायते—" अथ यः प्राणापानयोः सन्धिः स व्यानः " ( छां. उप. १ । ३ ३ ) इति ॥ २४ ॥

आसादितानां त्रयाणां तृतीयसवनपर्यन्तमव्यापारं तत्र हेतुमाह—तानि वा अनिङ्ग्यमानानीति । ' तानि ' ' अनिङ्ग्यमानानि ' अव्याप्रियमाणानि ' शेरे ' शेरते " लोपस्त आत्मनेपदेषु "( पा. सू. ७ । १ । ४१ ) इति तलोपः । ' पुनः ' च ' तृतीयसवने प्रयुज्यन्ते ' इति यत् । तत्रायं हेतुः—' तस्माद् ' ' इमे ' मनुष्याः कियन्तमपि कालं ' सुप्त्वा प्रबुध्यन्ते ' । स्वापापनीताश्च ' तेऽनिश्चिताः ' अनलसाः व्याप्रियन्ते । मनुष्याणां च यौ स्वापप्रबोधौ तौ यज्ञस्य प्रकारमनुसृत्य सम्पन्नौ । कथमिति चेत्—वय इव ह वै यज्ञ इति । यतो ' यज्ञो ' ' वय इव ' पक्षीव । पक्षिणो हि यथा पक्षौ मध्यभागश्च । एवं यज्ञात्मकस्य पक्षिणः ' उपांश्वन्तर्यामौ ' ' पक्षौ ' । ' उपांशुसवनः ' च । मध्यभागः । अत एकरूपत्वादुपांश्वादित्रयानुवि-धानमेव उक्तानुवादपुरःसरमुक्तम् ॥ २५ ॥

यज्ञस्य पक्षिरूपतामुदाहरणान्तरेणापि विस्पष्टयति—तानि वा इति । उपांश्वादीनि तृतीयसवनारम्भपर्यन्तं निर्व्यापाराणि तिष्ठन्ति । तदभ्यात्मकस्य यज्ञस्य स्वापः । तृतीयसवने च तैः पात्रैः स ' यज्ञस्तायते ' विस्ता-

( न्वि ) इयꣳ ह वाऽउपाꣳशुः । प्राणो ह्युपाꣳशुरिमाꣳ ह्येव प्राणन्नभिप्राणित्यसावेवान्तर्याम उदानो ह्यन्तर्यामोऽमुꣳ ह्येव लोकमुदनन्नभ्युदनित्यन्तरिक्षमेवोपाꣳशुसवनो व्यानो ह्युपाꣳशुसवनोऽन्तरिक्षꣳ ह्येव व्यनन्नभिव्यनिति ॥ २७ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ( ४-१-२ )

---

इयं ह वाऽउपांशुः । प्राणो ह्युपांशुः । इमां ह्येव प्राणन्नभिप्राणिति । असावेवान्तर्यामः । उदानो ह्यन्तर्यामः । अमुं ह्येव लोकमुदनन्नभ्युदनिति । अन्तरिक्षमेवोपांशुसवनः । व्यानो ह्युपांशुसवनः । अन्तरिक्षं ह्येव व्यनन्नभिव्यनिति ॥ २७ ॥

---

र्यते । यश्च यज्ञस्य विस्तारः प्रबुद्धः । यज्ञपक्षिणो गमनं—यज्ञविस्तारसमये पात्राणि नैकत्रासादितानि तिष्ठन्ति, किन्तु तत्र तत्र व्याप्रियन्ते । तदेतद्यज्ञपक्षिणो लौकिकपक्षिवत् प्रबोधानन्तरं ' पक्षौ ' विक्षिप्य पक्ष्यन्तरसङ्गमं वियुक्तं वियति विष्कम्भेण गमनम् । अनायुवानानीति । " यु मिश्रणामिश्रणयोः "—इति ( पा. धा. अ. प. २३ ) मिश्रणे मेलने वर्तमानात् । व्यत्ययेन शानच् ( पा. सू. ३।२।१२४ ) । ताच्छील्ये वा चानश् ( पा. सू. ३ । २ । १२९ ) तानि पुनः ' तृतीयसवने ' कार्यनिष्पत्त्यनन्तरं खरे ' प्रयुज्यन्ते ' सह साद्यन्ते—तदेतद्विशदयति । श्रान्तस्य पक्षिणः पक्षौ संक्षिप्य पुनः स्वनिवासगमनं यज्ञपक्षिणः खरे सह पात्रसादनमिह भवति । ' समासं ' समस्य संक्षिप्येत्यर्थः इत्थं यज्ञपक्षिणम् ' अनु ' विधत्ते लौकिकः पक्षी ॥ २६ ॥

आसादितानामुपांश्वादीनां त्रयाणां लोकत्रयात्मकत्वेनापि प्राशस्त्यमाह—इयं ह वाऽउपांशुरित्यादि । तत्र ' उपांशुः ' भूलोकात्मकः, स हि प्राणात्मक इत्युक्तम् ( श. प. ४ । १ । १ । १ । ) । भुवमाश्रित्यैव सर्वे प्राणन्ति, अतो भूरपि प्राणात्मिका यतः—अन्तर्यामो द्युलोकात्मकः, स ह्युदानात्मक इत्युक्तम् (श.प. ४।१।१।१) उदानश्चावाग्वृत्तितया प्राणोत्क्रमप्रतिबन्धकत्वेन जीवनहेतुः । जीवन्तश्च सर्वे यागदानादिभिः ' अमुं ' लोकं साधयाम इत्येव जीवन्तीति । अमुमेव लोकं लक्षयित्वोदनन्तीत्यसौ लोक उदानात्मकः । उपांशुसवनोऽन्तरिक्षलोकात्मकः । स च प्राणोदानसन्धिरूपो व्यानात्मक इत्युक्तम् । व्यानव्यापाराणां च ऋक्सामाभिऽव्याहाराग्निमन्थनाजिसरणदृढधनुरायमनादीनामप्राणताऽनपानता चैव । [1]ध्रियमाणानामन्तरिक्षलोकमाश्रित्यैव निष्पत्तेः । अन्तरिक्षलोकोऽपि व्यानात्मको यतः । इत्युपांश्वादित्रयस्य लोकत्रयात्मकतया प्राशस्त्यमिति । " अभिरभागे " ( पा. सू. १ । ४ । ९४ ) इति । " अन्तर्लक्षणे " कर्मप्रवचनीयत्वम् । तद्योगात् ' इमाम् अमुं अन्तरिक्षं ' इति द्वितीया ॥ २७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे प्रथमाध्याये द्वितीयं ब्राह्मणम् ॥ ( ४-१-२ ) ॥

---

१-'क्रियमाणानां' इति क. पाठ ।

व्वागघ वाऽअस्यैन्द्रवायवः । ( ऽ ) एतुन्न्वध्यात्ममिन्द्रो ह युत्र व्वृत्राय व्वुज्रं प्रजहार सोऽबलीयान्मुन्यमानो नास्तृषीतीव बिभ्यन्निलयाञ्चक्रे तुदेवापि देवा ऽअपुन्यलयन्त ॥ १ ॥

ते ह देवा ऊचुः । ( र्न ) न वै हतं व्वृत्रं विद्म नु जीवथ्ँ हुन्त न एको व्वेत्तु यदि हतो वा व्वृत्रो जीवति वेति ॥ २ ॥

ते व्वायुमब्रुवन् । ( न्न ) अयं वै व्वायुर्योऽयं पुवते व्वायो त्वमिदं व्विद्धि यदि हतो वा व्वृत्रो जीवति वा त्वं वै न आशिष्ठोऽसि यदि जीविष्यति त्वमेव क्षिप्रं पुनरागमिष्यसीति ॥ ३ ॥

---

ऐन्द्रवायवग्रहः ।

वागघ वाऽअस्यैन्द्रवायवः । एतन्न्वध्यात्मम् । इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार । सोऽबलीयान् मन्यमानो 'नास्तृषि' इतीव बिभ्यन्निलयाञ्चक्रे । तदेवापि देवा अपन्यलयन्त ॥ १ ॥

ते ह देवा ऊचुः—न वै हतं वृत्रं विद्म, न जीवम् । हन्त न एको वेत्तु—यदि हतो वा वृत्रो जीवति वेति ॥ २ ॥

ते वायुमब्रुवन् । अयं वै वायुर्योऽयं पवते । 'वायो त्वमिदं विद्धि'—यदि हतो वा वृत्रो जीवति वा, त्वं वै न आशिष्ठोऽसि । यदि जीविष्यति—त्वमेव क्षिप्रं पुनरागमिष्यसीति ॥ ३ ॥

---

उपांश्वादित्रयप्रयोगानन्तरमैन्द्रवायवस्य प्रयोगमभिधास्यन् तस्य तदानन्तर्ये कारणमाह—वागघ वा अस्यैन्द्रवायव इति । प्राणापानव्यानात्मकं हि तत्त्रयम् । व्यानकार्या च वाक् तत्कार्यतया तदात्मकश्चैन्द्रवायवो व्यानात्मकोपांशुसवनसृष्ट्यनन्तरमेव सृष्टश्च । अतो युक्तं तस्य तदानन्तर्यमित्यर्थः । 'ह'—शब्दः प्रसिद्धौ । 'वै'—शब्दस्तां स्मारयति । तथा हि तैत्तिरीयके—"प्राणापानाभ्यामेवोपांश्वन्तर्यामौ निरमिमीत । व्यानादुपांशुसवनं, वाच ऐन्द्रवायवम्"—(तै. शा. अ १।९।४)इति । देहाद्बहिरुपलभ्यमानस्यैन्द्रवायवस्य देहान्तर्वर्तिवागिन्द्रियात्मकता कथमिति तत्राह—एतन्न्वध्यात्ममिति । द्विविधो ह्यैन्द्रवायवः, आधिभौतिक आध्यात्मिकश्चेति । यो बहिः स आधिभौतिकः । यस्त्वेष वाग्रूपः स आध्यात्मिक इत्यर्थः । आत्मनि 'अध्यात्मम्' विभक्त्यर्थे अधेः "अव्ययं विभक्ति" ( पा. सू. २।१।६ ) इत्यादिनाऽव्ययीभावः । "अनश्च" ( पा. सू. ४ । ६ । १०८ ) इति टच् समासान्तः । "नाव्ययीभावाद्—" ( पा. सू. २ । ४ । ८३ ) इति विभक्तेर्लुगभावोऽमादेशश्च । विधास्यमाने ग्रहे वायोः प्रथमवषट्कारः । तस्य द्विदेवत्यत्वम् ऐन्द्रवायवनाम सर्वेषां पात्राणां वायव्यनामेत्यादिव्युत्पादनार्थमाख्यायिका आरभ्यते—इन्द्रो ह यत्र वृत्रायेत्यादि । 'इन्द्रो' वृत्रं हन्तुं 'वज्रं' चिक्षेप । 'वृत्राय' इति—"क्रियार्थोपपदस्य च कर्मणि स्थानिनः" ( पा. सू. २ । ३ । १४ ) इति चतुर्थी । 'प्रजहार' इति प्रहरणे हेतुः प्रक्षेपो लक्ष्यते । 'स' इन्द्रः कृतप्रहारो न बलवान् । अतो नूनमनेनाहं वृत्रं 'नास्तृषि' न हतवान् इति मन्यमानस्तदागमनाद् भीतः सन् निलीनोऽभूत् । 'निलयांचक्रे' इति आम्—प्रत्ययः ( पा. सू. ३ । १ । ३६ ) । 'तत्' तस्माद् भयादेव कारणात् 'देवाः' 'अपन्यलयन्त' । न्यलयन्त इति व्यत्ययेन ( पा. सू. ३ । २ । १२४ ) शप् ॥ १ ॥

वृत्रहननसंशये वृत्रो हतो जीवति वेति न ज्ञायते, अस्माकमेको गत्वा जानात्विति ते देवा उक्त्वा, देवै-

स होवाच । किं मे ततः स्यादिति प्रथमवषट्कार एव ते सोमस्य राज्ञ इति तथेत्येयाय वायुरैद्धतं वृत्रꣳ स होवाच हतो वृत्रो यद्धते कुर्यात्तत्कुरुतेति ॥ ४ ॥

ते देवा अभ्यसृज्यन्त । यथा वित्तिं वेत्स्यमाना एवꣳ स यमेकोऽलभत स एकदेवत्योऽभवद्यं द्वौ स द्विदेवत्यो यं बहवः स बहुदेवत्यस्तद्यदेनं पात्रैर्व्यगृह्णत तस्माद्ग्रहा नाम ॥ ५ ॥

स एषामापूयत् । ( त्स ) स एनाञ्छुक्तः पूतिरभिववौ स नालमाहुत्याऽआस नालं भक्षाय ॥ ६ ॥

ते देवा वायुमब्रुवन् । (वा) वायविमं नो विवाहीमं नः स्वदयेति स होवाच

---

स होवाच—किं मे ततः स्यादिति । प्रथमवषट्कार एव ते सोमस्य राज्ञ इति । तथेत्येयाय, वायुरैद्धतं वृत्रम् । स होवाच—हतो वृत्रः । यद्धते कुर्यात्—तत् कुरुतेति ॥ ४ ॥

ते देवा अभ्यसृज्यन्त—यथा वित्तिं वेत्स्यमानाः—एवम् । स यमेकोऽलभत—स एकदेवत्योऽभवत् । यं द्वौ—स द्विदेवत्यः । यं बहवः—स बहुदेवत्यः । तद् यदेनं पात्रैर्व्यगृह्णत—तस्माद्ग्रहा नाम ॥ ५ ॥

स एषामापूयत् । स एनाञ्छुक्तः पूतिरभिववौ । स नालमाहुत्याऽआस, नालं भक्षाय ॥ ६ ॥

ते देवा वायुमब्रुवन् । वायो ! इमं नो विवाहि, इमं नः स्वदयेति । स होवाच—किं मे ततः स्यादिति । त्वय्यैवैतानि पात्राण्याचक्षीरन्निति । तथेति होवाच यूयं तु मे सच्युपवातेति ॥ ७ ॥

---

राज्ञस्तत्त्वेन ज्ञातुं नियुक्तो वायुस्ततो गमनान्मे किं फलं स्यादिति वरं वव्रे । सोमरसात्मकस्य हविषः सम्बन्धिनि यस्मिन् ऐन्द्रवायवग्रहे प्रथमं वषट्क्रियते स 'प्रथमवषट्कारः' सोमांशस्तव भाग इति । 'तथा' इत्युक्त्वा वायुः देवेभ्यो निरगच्छत् । "आङ् स्वार्थे" । हतं वृत्रं च प्राप । पुनरागत्य 'हतो वृत्रः' हते च यद् विभजनाय सोमग्रहविभागादिकं कर्त्तव्यं 'तत्' कुरुत' इति देवेभ्यो न्यवेदयत् ॥ २ ॥ ३ ॥ ४ ॥

ते देवाः 'अभि' सोममभिलक्ष्य 'असृज्यन्त' अन्तरिक्षं गतवन्तः—"सृज विसर्गे"—( धा. पा. दि. आ. ७२ ) दैवादिकोऽनुदात्तेत् । विद्यते लभ्यत इति वित्तिः, प्राप्तव्योऽर्थः, तं येन प्रकारेण विभजन्ते 'एवं' हि 'सः' सोमग्रहविभाग इति । अतो 'यं' ग्रहं महेन्द्रादिः 'एकः' अलभत' 'सः' माहेन्द्रादिः 'एकदेवत्यः' 'यं' 'द्वौ' स आश्विनादिः 'द्विदेवत्यः' । 'यं' 'बहवः' 'स' वैश्वदेवादिः 'बहुदेवत्यः' इति—"देवतान्तात्तादर्थ्ये" ( पा. सू. ५ । ४ । २४ ) इति यत् । तदा 'एनं' सोमं यस्मात्कारणात् 'पात्रैः' विभज्य देवा 'अगृह्णत' 'तस्मात्' तानि पात्राणि 'ग्रहाः' इति प्रसिद्धाः । "ग्रहवृदृनिश्चिगमश्च"—( पा. सू. ३ । ३ । ५८ ) इति करणे अप् ॥ ५ ॥

'एषां' सम्बन्धी 'सः' गृहीतः सोमः पूतिगन्धोऽभवत् । 'सः' पर्युषितः पूतिगन्धः 'एनान्' देवान् प्रत्याजगाम आहुत्यर्थं हुतशिष्टभक्षणार्थं वा दुर्गन्धत्वेन 'सः' सोमरसो योग्यो नासीत् ॥ ६ ॥

'देवाः' 'वायुं' सोमं 'विवाहि' विगतदुर्गन्धं कुरु अस्मभ्यमिमं रोचयेत्यूचुः । तेन च वरे वृते तन्नाम्ना

किं मे ततः स्यादिति त्वय्येवैतानि पात्राण्याचक्षीरन्निति तथेति होवाच यूयं तु मे सच्युपवातेति ॥ ७ ॥

तस्य देवाः । ( वा ) यावन्मात्रमिव गन्धस्यापजघ्नुस्तं पशुष्वदधुः स एष पशुषु कुणपगन्धस्तस्मात्कुणपगन्धान्नापिगृह्णीत सोमस्य हैष राज्ञो गन्धः ॥ ८ ॥

(न्धो) नो ऽएव निष्ठीवेत् । (च्च) तस्माद्यद्यप्यासक्त इव मन्येताभिवातं परीयाच्छ्रीर्वै सोमः पाप्मा यक्ष्मः स यथा श्रेयस्यायति पापीयान्प्रत्यवरोहे-देवꣳ हास्माद्यक्ष्मः प्रत्यवरोहति ॥ ९ ॥

( त्य ) अथेतरं वायुर्व्यवात् । ( च्च ) तदस्वदयत्ततोऽलमाहुत्याऽआसालं भक्षाय तस्मादेतानि नानादेवत्यानि सन्ति वायव्यानीत्या-

---

तस्य देवा यावन्मात्रमिव गन्धस्यापजघ्नुः, तं पशुष्वदधुः । स एष पशुषु कुणपगन्धः । तस्मात् कुणपगन्धान्नापिगृह्णीत । सोमस्य हैष राज्ञो गन्धः ॥ ८ ॥

नोऽएव निष्ठीवेत् । तस्मात् यद्यप्यासक्त इव मन्येत—अभिवातं परीयात् । श्रीर्वै सोमः पाप्मा यक्ष्मः, स यथा श्रेयस्यायति पापीयान्प्रत्यवरोहेद्—एवं हास्माद्यक्ष्मः प्रत्यवरोहति ॥ ९ ॥

अथेतरं वायुर्व्यवात् । तदस्वदयत् । ततोऽलमाहुत्या आस, अलं भक्षाय । तस्मादेतानि

---

पात्राणां व्यवहारं प्रायच्छन् 'तथा' 'इति'—अङ्गीकृत्य 'यूयं' 'मे' सर्वे 'सचि' सहायकाः स्थिता वातोपकारिणं व्यापारं कुरुत इति आह ॥ ७ ॥

'तस्य' सोमस्य सम्बन्धिनो 'गन्धस्य' यावन्तं दोषांशं 'देवाः' अपनीतवन्तः 'तं' 'पशुषु' प्राणिषु स्थापितवन्तः । 'स एषः' प्राणिषु दृश्यमानः स्वेदादिनिबन्धनो दुर्गन्धः । तत् किं ? प्रयोगमध्ये स्वेदादिनिबन्धने तस्मिन् गन्धे जुगुप्सा कृता सा चायुक्ता । यतोऽसौ पशुषु क्षितोऽपि क्षेपात् प्राक् सोमस्य राज्ञो गन्धो जातः । तदनाघ्राणाय वस्त्रादिना नासिका आच्छादनीया । मुखगतस्य परिहाराय निष्ठीवेदिति । नापि गृह्णीयात् । न निष्ठीवेत् । अपिपूर्वो गृह्णातिराच्छादने वर्तते । यथा तस्माद्दीक्षितेनापिगृह्य ष्ठीवितव्य इत्यादावपिग्रहणनिष्ठीवनाभ्यां हि तस्मिन् गन्धे जुगुप्सा कृता स्यात् । सा चायुक्ता । यतः पशुषु क्षितोऽपि क्षेपात् प्राक् सोमस्य राज्ञो गन्धः । अतः पिधाननिष्ठीवनाभ्यां सोम एवावज्ञातः स्यात् । अतोऽपवित्रेण गन्धेन 'आ' समन्तात् सक्तं व्याप्तमात्मानं 'मन्येत' तदा तत्परिहाराय पक्षिण इव प्रवातप्रदेशमासेवेत । तेन च तमपनीय प्रयुञ्जीत । न पुनस्तमपवित्रगन्धं सहमानेनैव प्रयोगो निष्पादनीयः । यतः साक्षाच्छ्रीरूपः सोमः । अपवित्रगन्धः पुनर्व्याधिरूपः पाप्मा । यथा च प्रशस्ततरे राजादावागच्छाति सति उन्नतं पर्यङ्कप्रासादादिकमारुह्य स्थितः पापीयान्—एवं सोमे राजन्यागच्छाति सति प्रवातसेवया प्रत्यवरोपितो भवति ॥ ८ ॥ ९ ॥

अनन्तरमपनीताद्गन्धात् 'इतरं' स्थितं सोमं 'वायुर्व्यवात्' स यथा विशिष्टरसगन्धादियुक्तो भवति तथा व्याप्नोत् । "वा गतिगन्धनयोः"—( धा.पा.अ.प.४० ) इति । तेन च तं सोमं देवानां स्वादुमकरोत् । ततश्च स

चक्षते सोऽस्यैष प्रथमवषट्कारश्च सोमस्य राज्ञ एतान्यु ऽएनेन पात्राण्याचक्षते ॥ १० ॥

(त इ) इन्द्रो ह वाऽईक्षांचक्रे। वायुर्वै नोऽस्य यज्ञस्य भूयिष्ठभाग्यस्य प्रथमवषट्कारश्च सोमस्य राज्ञ एतान्यु ऽएनेन पात्राण्याचक्षते हन्तास्मिन्नपित्वमिच्छाऽइति ॥ ११ ॥

स होवाच । वायवा माऽस्मिन्ग्रहे भजेति किं ततः स्यादिति निरुक्तमेव वागवदेदिति निरुक्तं चेद्वागवदेदा त्वा भजामीति तत एष ऐन्द्रवायवो ग्रहोऽभवद्वायव्यो हैव ततः पुरा ॥ १२ ॥

---

नानादेवत्यानि सन्ति वायव्यानीत्याचक्षते । सोऽस्यैष प्रथमवषट्कारश्च सोमस्य राज्ञः । एतान्युऽएनेन पात्राण्याचक्षते ॥ १० ॥

इन्द्रो ह वाऽईक्षांचक्रे—वायुर्वै नोऽस्य यज्ञस्य भूयिष्ठभाक्—यस्य प्रथमवषट्कारश्च सोमस्य राज्ञः । एतान्युऽएनेन पात्राण्याचक्षते, हन्तास्मिन्नपि त्वमिच्छाऽइति ॥ ११ ॥

स होवाच—वायो ! आ माऽस्मिन्ग्रहे भजेति । किं ततः स्यादिति । निरुक्तमेव वागवदेदिति । निरुक्तं चेद्वागवदेद्—आ त्वा भजामीति । तत एष ऐन्द्रवायवो ग्रहोऽभवत् । वायव्यो हैव ततः पुरा ॥ १२ ॥

---

सोमो होमाय हुतशिष्टभक्षणाय च शक्यो जातः । यतो वृत्रविनाशविषयप्रियवार्त्ताकथनेन सोमस्य स्वादूकरणेन च लब्धवरद्वयो वायुः, 'तस्मात्' हेतोः 'एतानि' पात्राणि देवतार्थतया तत्तद्देवैश्च व्यपदेशमर्हन्ति 'सन्ति' अपि वायोर्दत्तवरतया 'वायव्यानि' इत्युच्यन्ते । 'स एषः' इदानीं क्रियमाणः 'प्रथमवषट्कारश्च' 'अस्य' वायोरेव जातो—न केवलं तत्तद्देवैः सोमग्रहणार्थतया सोमेन व्यपदेशार्हाण्यपि सन्ति तानि 'पात्राणि' च तेन वायुनैव वायव्यानीत्याचक्षते याज्ञिकाः । "छन्दसि लुङ्लङ्लिटः"–( पा. सू. ३ । ४ । ६ )–इति वर्त्तमाने लट् । एवं वायोः प्रथमवषट्काररूपवरलाभादयं ग्रहो वायव्योऽस्तु कथमिति ? चेत्, उच्यते—वायावेवं दत्तवरे 'इन्द्रः' 'ईक्षांचक्रे' पर्यालोचितवान् । अस्मदीये अमुष्मिन् पक्षे वायोर्वा ज्ञातं यदस्मासु ज्यायस्सु स्थितेषु यस्य वायोः कनीयसः प्रथमो भागः । अस्मन्नामान्यपनीय पात्राणामपि वायव्यानीति वायुनाम्ना व्यपदेशश्चेति तर्हि किं कर्तव्यमिति कर्तव्यार्थोपलम्भनिबन्धनो हर्षो 'हन्त' इति । यदि नाम ऐन्द्राग्ने अग्निना सह भागोऽस्ति । यद्यपि चोक्थ्यमरुत्वतीयादौ ममैवासाधारणो भागोऽस्ति । तथाऽपि त्वं तेभ्योऽन्यं भागम् अस्मिन् प्रथमग्रहेऽपि अहं 'इच्छै' इच्छतेर्व्यत्ययेनात्मनेपदे लोडुत्तमैकवचनम् ॥ १० ॥ ११ ॥

इत्थमिच्छित्वा च 'सः' इन्द्रः हे वायो! 'ग्रहे' 'मा' मां 'भज' मम भागं देहीति 'उवाच' । 'ततः' तव भागप्रदानान्मम 'किं' फलं स्यादिति च वायुनोक्ते वरमिन्द्रो ददौ । 'निरुक्तमेव वागवदेत्' इति । तं च वरं वायावङ्गीकुर्वति सति तद्वरप्रदानात् पूर्वं वायुदेवत्योऽपि 'ग्रहः' इन्द्रसम्बन्धेन 'ऐन्द्रवायवः अभवत्' । 'निरुक्तं' नाम निःशेषमुक्तं विस्पष्टमित्यर्थः । अत एव देवताविशेषरूपस्यार्थस्या-

स इन्द्रोऽब्रवीत् । ( द ) अर्धं मेऽस्य ग्रहस्येति तुरीयमेव तऽइति व्वायुरर्धमेव मऽइतीन्द्रस्तुरीयमेव तऽइति व्वायुः ॥ १३ ॥ [ अर्धप्रपाठकः ॥ ६८ कंडिकाः ] ॥

तौ प्रजापतिं प्रति प्रश्नमेयतुः । स प्रजापतिर्ग्रहं द्वेधा चकार स होवाचेदं व्वायोरित्यथ पुनरर्धं द्वेधा चकार स होवाचेदं व्वायोरितीदं तवेतीन्द्रं तुरीयमेव भाजयांचकार यद्वै चतुर्थं तत्तुरीयं तत एष ऐन्द्रतुरीयो ग्रहोऽभवत् ॥ १४ ॥

(त्त) तस्य वाऽएतस्य ग्रहस्य । द्वे पुरोरुचौ व्वायव्यैव पूर्वैन्द्रवायव्युत्तरा द्वेऽअनुवाक्ये व्वायव्यैव पूर्वैन्द्रवायव्युत्तरा द्वौ प्रैषौ व्वायव्य एव पूर्वऽऐन्द्रवायव उत्तरो द्वे याज्ये वायव्यैव पूर्वैन्द्रवायव्युत्तरैवमेनं तुरीयं तुरीयमेव भाजयांचकार ॥ १५ ॥

---

स इन्द्रोऽब्रवीत्—अर्धं मेऽस्य ग्रहस्येति । तुरीयमेव तऽइति वायुः । अर्धमेव मऽइतीन्द्रः । तुरीयमेव तऽइति वायुः ॥ १३ ॥

तौ प्रजापतिं प्रति प्रश्नमेयतुः । स प्रजापतिर्ग्रहं द्वेधा चकार । स होवाच इदं वायोरिति । अथ पुनरर्द्धं द्वेधा चकार । स होवाच—इदं वायोरिति, इदं तवेति । इन्द्रं तुरीयमेव भाजयाञ्चकार । यद्वै चतुर्थं तत्तुरीयम् । तत एष ऐन्द्रतुरीयो ग्रहोऽभवत् ॥ १४ ॥

तस्य वाऽएतस्य ग्रहस्य द्वे पुरोरुचौ-वायव्यैव पूर्वा, ऐन्द्रवायव्युत्तरा । द्वेऽअनुवाक्ये—वायव्यैव पूर्वा, ऐन्द्रवायव्युत्तरा । द्वौ प्रैषौ—वायव्य एव पूर्वः, ऐन्द्रवायव उत्तरः । द्वे याज्ये—वायव्यैव पूर्वा, ऐन्द्रवायव्युत्तरा । एवमेनं तुरीयं तुरीयमेव भाजयाञ्चकार ॥ १५ ॥

---

प्रत्यायनेनाविस्पष्टाया ऋचः प्राजापत्यत्वमन्यत्र श्रूयते—“ अनिरुक्तया प्राजापत्यया गृह्णाति ” इति । अथवा परा, पश्यन्ती, मध्यमा, वैखरी, इत्येवं चतुरवस्था वागवतिष्ठते । तत्र पूर्वस्मिन् वागवस्थाभेदे उत्तरोत्तरस्याभावात् सावशेषत्वम् । वैखर्यां तु परादीनां तिसृणामपि संग्रहेण निःशेषत्वान्निरुक्तत्वम् ॥ १२ ॥

प्रजापतिकृते ऐन्द्रवायवे इन्द्रवाय्वोर्विवादपूर्वकमिन्द्रस्य चतुर्थांशभाक्त्वं तुरीयशब्दार्थं चाह-स इन्द्र इत्यादि । ‘ अर्धम् ’ इत्यादिनोभयोर्विवादः । एवं विवदमाना इन्द्रवायू प्रजापतिं पृच्छाव इति तत्समीपमगमताम् । ‘ सः ’ च ‘ प्रजापतिः ’ तं ‘ ग्रहं ’ विभज्य ‘ इन्द्रं ’ चतुर्थेनांशेन भागिनमकरोत्, अवशिष्टेन तु वायुम् । ‘ तुरीयम् ’ इति चतुर्थमित्यर्थः । “ चतुरश्छयतावाद्यक्षरलोपश्च ”–( पा. सू. ५।२।५१ वा. ) इति छप्रत्यये आदिवर्णलोपे च तुरीयशब्दव्युत्पत्तेः ॥ १३ ॥ १४ ॥

इन्द्रवाय्वोः स्वकीयग्रहभागानुसारेण ग्रहाङ्गभूतानामपि मन्त्राणां विभागमाह—तस्य वाऽएतस्येत्यादि । पुरोरुचाविति । “ उपयामगृहीतोऽसि ” ( श. प.४ । १ । २ । १९ ) इत्यस्मात् पूर्वं ग्रहप्रशंसया तद्विषयां रुचिं

स होवाच। तुरीयं तुरीयं चेन्मामब्रवीभजुंस्तुरीयमेव तर्हि व्वाङ्निरुक्तं व्वदिष्यतीति तदेतत्तुरीयं व्वाचोऽनिरुक्तं यन्मनुष्या व्वदन्त्यथैतत्तुरीयं व्वाचोऽनिरुक्तं यत्पशवो व्वदन्त्यथैतत्तुरीयं व्वाचोऽनिरुक्तं यद्वयाꣳसि व्वदन्त्यथैतत्तुरीयं व्वाचोऽनिरुक्तं यदिदं क्षुद्रꣳ सरीसृपं व्वदति ॥ १६ ॥

तस्मादेतदृषिणाऽभ्यनूक्तम् । (अ) चत्वारि व्वाक्परिमिता पदानि तानि व्विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं व्वाचो मनुष्या वदन्तीति ॥ १७ ॥

---

स होवाच—तुरीयं तुरीयं चेन्मामब्रवीभजुः—तुरीयमेव तर्हि वाङ्निरुक्तं वदिष्यतीति । तदेतत्तुरीयं वाचोऽनिरुक्तम्—यन्मनुष्या वदन्ति । अथैतत्तुरीयं वाचोऽनिरुक्तम्—यत्पशवो वदन्ति । अथैतत्तुरीयं वाचोऽनिरुक्तम्—यद्वयांसि वदन्ति । अथैतत्तुरीयं वाचोऽनिरुक्तम्—यदिदं क्षुद्रं सरीसृपं वदति ॥ १६ ॥

तस्मादेतदृषिणाऽभ्यनूक्तम्—"चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥" इति ॥ १७ ॥

---

देवतायै करोतीति पुरोरुक् । ण्यन्तात् क्विप् ( पा. सू. ३ । २ । ७६ ), णिलोपे ( पा. सू. ६ । ४ । ९१ ) "संज्ञापूर्वको विधिरनित्यः"—इति गुणो न भवति । अथवा अन्तर्भावितण्यर्थात् क्विपि रूपम् । पुरोरुगादीनां पूर्वा वायव्या एव, उत्तरास्त्वैन्द्रवायवा इति सर्वत्रेन्द्रस्य चतुर्थांशभाक्त्वमेव जातम् ॥ १५ ॥

स्वकीयग्रहादिभागानुसारेण वाचश्चतुर्थमेव निरुक्तं स्यादित्याह—स होवाचेत्यादि । ग्रहादौ सर्वत्र चतुर्थभागस्यैव मदीयत्वाद्वागपि चतुर्थभागमेव भागं विस्पष्टं वदिष्यति । वाचो विस्पष्टिश्चतुर्थे भागे वैखरीं वदत इत्यर्थः । परा-पश्यन्ती-मध्यमा-वैखरीत्येवं चतुरवस्था वागवतिष्ठते । तत्र परादीनां तिसृणां देहमध्य एवावस्थानेन परश्रोत्रग्रहणयोग्यताभावादविस्पष्टार्थत्वम् । वैखरी पुनः परश्रोत्रैर्गृह्यतेऽतिवाहितार्थप्रत्यये च समर्था भवति—इति विस्पष्टेत्यर्थः । 'अबीभजन्'[1] भजतेर्ण्यन्ताल्लुङि चङि रूपम् । यत इन्द्रेण वैखर्यात्मकं वायुमनु जातम् तदिदानीं मनुष्यादिभिस्तदेव व्यवह्रियत इत्याह—तदेतत्तुरीयमित्यादिना । मनुष्यादय इदानीं यद्वाग्रूपं वदन्ति तदिन्द्रेणाभ्यनुज्ञानं विस्पष्टं चतुर्थं वाग्रूपमित्यर्थः । क्षुद्रं सरीसृपमिति । पुनः पुनस्तानेव गच्छदन्यत् प्राणिजातमित्यर्थः । सरीसृपमिति । सृपेरचि 'यङोऽचि च' ( पा. सू. २ । ४ । ७४ ) इति यङो लुक् । "सन्यङोः" ( पा. सू. ६ । १ । ९ ) इति द्विर्वचनम् । उपधादिकाय "रुग्रिकौ च लुकि" ( पा. सू. ७ । ४ । ९१ ) इति रीगागमः । अन्यापेक्षया गुणे प्राप्ते—"न धातुलोप आर्द्धधातुके" ( पा. सू. १ । १ । ४ ) इति प्रतिषेधः ॥ १६ ॥

उक्तेऽर्थे मन्त्रसंवादं दर्शयति—तस्मादेतदित्यादि । इन्द्रो वाचश्चतुर्थभागं विस्पष्टमन्वजानात् । तस्मादेतदुक्तमर्थरूपमनुसृत्य 'ऋषिणा'[2] मन्त्रेणैवमुक्तम् । वाचः 'पदानि' परापश्यन्तीत्यादयोऽवस्थाभेदाः

---

१—अबीभजन् इति भाष्यकारपाठः । २— अयं च ब्राह्मणोत्पन्न एव मंत्रः । स च प्रायः सर्वत्र श्लोकशब्देन व्यवहृतो भवति ॥

( त्य ) अथातो गृह्णात्येव। (वा) आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार। उपो तेऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयं वायवे त्वेति ॥ १८ ॥

अथातो गृह्णात्येव । " आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार । उपो तेऽअन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम्–वायवे त्वा "–( वा. सं. ७।७ ) इति ॥ १८ ॥

चत्वारि 'परिमिता' परिमितानि यतः चत्वारि अतः परिच्छिन्नानीत्यर्थः । अथवा 'वाक्'–परिमितानि 'चत्वारि' 'पदानि' परिच्छिन्नपराद्यवस्थाभेदरूपचतुष्पदात्मिका । पूर्वस्मिन् पक्षे–" सुपां सुलुक्" ( पा. सू. ७ । १ । ३९ ) इत्यादिना षष्ठ्या लुकि सति वागित्येतद्रूपं भवति । " परिमिता " इति " शेश्छन्दसि बहुलम्" ( पा. सू. ६ । १ । ७० ) इति ( अमादेशस्य ) शेर्लोपः । 'ये' मनीषिणः ' विद्वांसस्ते 'ब्राह्मणाः' 'तानि' वाचः पदानि जानन्ति । ' मनीषिणः ' इति व्रीह्यादित्वादिनिः ( पा. सू. ५ । २ । ११६ ) अथवा "शिखादिभ्य इनिर्वाच्यः" इति । तेषां मध्ये ' 'त्रीणि' पदानि पराद्यवस्थाभेदरूपाणि शरीरमध्यरूपायां गुहायां निहितानि 'नेङ्गयन्ति' न चेष्टन्ते न विस्पष्टीभवन्तीत्यर्थः । गुहेति पूर्ववत् "सुपामिति" ( पा. सू. ७ । १ । ३९ ) सप्तम्या लुक् । आकारादेशो वा । चतुर्थमेव रूपं वैखर्यात्मकमिदानीं मनुष्या वदन्ति । मनुष्या इत्येतत् पश्वादीनामप्युपलक्षणार्थम् । पश्वादयोऽपि चतुर्थं वाग्रूपं वदन्तीति ॥ १७ ॥

इत्थमाख्यायिकया ग्रहस्य देवतादिकं प्रदर्श्य तस्य समन्त्रकं ग्रहणसंस्कारं विधत्ते–**अथात** इत्यादि[1]। 'अथातः' इत्यनेनान्तर्यामग्रहानन्तर्यं द्योत्यते । प्रकृतत्वादैन्द्रवायवं ग्रहम् "आ वायो भूष" इत्यादिना गृह्णीयात् । एतन्मंत्रकरणकेन ग्रहणेन सोमं संस्कुर्यादित्यर्थः । नन्वत्र ग्रहणवाक्ये द्रव्यदेवतासम्बन्धदर्शनाद्यागविधायकत्वं प्रतीयते । यथा "यदाग्नेयोऽष्टाकपालोऽमावास्यायां वा" ( तै. सं. २। ६ । ३) इति तत्कुतः संस्कारो विधीयत इति । न " सोमेन यजेत " इत्यनेनैव यागस्य विहितत्वात् । ननु " यदाग्नेय " इत्यादिभिर्वाक्यैर्विहितानां यागानां यथा विद्वद्वाक्यमनुवादकं, तथा ग्रहणवाक्यविहितानां यागानामेतत् " सोमेन " इत्यादि वाक्यमनुवादकं भविष्यतीति चेत् ( न ) अनुवादासम्भवात् । सति हि पुरोवादेऽनुवादः सम्भवति । न चात्र पुरोवादोऽस्ति सोमेन यजेतेत्यनेन प्रतीतस्यार्थस्य ग्रहणवाक्येष्वप्रतीतेः । न हि ग्रहणं यजनं भवति नापि तद्धितप्रत्ययोक्तो रसः सोमलता । न च वाच्यं सर्वनामार्थे विहितस्तद्धितः प्रकृतं ब्रूते, न तु रसमिति । "अन्तः पवित्राद्गृह्णाति" इति रसस्यैव प्रकृतत्वात् । अतोऽनुवादसम्भवात् सोमेनत्येतस्य विधायकत्वम् । विहिते तु तस्मिन् आग्नेयादिवाक्यानि तु संस्कारस्य विधायकानि "यदाग्नेयोऽष्टाकपालः"इत्यादिषु तु वाक्येषु द्रव्यदेवतासम्बन्धान्यथानुपपत्त्या यागः कल्प्यत इति पुरोवादसम्भवाद्विद्वद्वाक्यमनुवादकं भवति । न चैवं व्यत्यासेन विद्वद्वाक्यं यागस्य विधायकम्। विहिते तस्मिन् आग्नेयादिवाक्यानि गुणविधायकानीति शंकनीयम् । विहितयागानुवादेन नानागुणविधाने वाक्यभेदप्रसङ्गात् । तथा चोक्तम् " प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः"( तंत्र वार्तिक अ. ३ ) इति ॥ तस्मादनेन ग्रहणवाक्येन सोमरसस्य देवताविशिष्टो ग्रहणसंस्कारो विधीयते ॥नन्वेवमपि ग्रहणस्य गुणकर्मत्वं न सम्भवति गुणकर्मलक्षणरहितत्वात्, प्रधानकर्मलक्षणयुक्तत्वाच्च । तथा हि सूत्रकृता कर्म्मणां भेदस्तल्लक्षणं च सूत्रितम्–" तानि द्वैधं गुणप्रधानभूतानि । यैस्तु द्रव्यं चिकीर्ष्यते गुण-

१–' ऐन्द्रवायवं गृह्णात्यावायविति । का० श्रौ० सू० ९। १२९ ।

( त्यु ) अथापगृह्य पुनरानयति । ( त्री ) इन्द्रवायूऽइमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि । उपयामगृहीतोऽसि वायवऽइन्द्रवायुभ्यां त्वैष ते योनिः सजोषोभ्यां त्वेति सादयति स यदाह सजोषोभ्यां त्वेति यो वै वायुः स इन्द्रो य इन्द्रः स वायुस्तस्मादाहैष ते योनिः सजोषोभ्यां त्वेति ॥ १९ ॥ ३ ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ ४-१-३ ॥

---

अथापगृह्य पुनरानयति । " इन्द्रवायूऽइमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि । उपयामगृहीतोऽसि वायवऽइन्द्रवायुभ्यां त्वैष ते योनिः सजोषोभ्यां त्वा "-( वा० सं० ७ । ८ ) इति सादयति । स यदाह-सजोषोभ्यां त्वेति, यो वै वायुः स इन्द्रो य इन्द्रः स वायुः । तस्मादाह-एष ते योनिः सजोषोभ्यां त्वेति ॥ १९ ॥

---

स्तत्र प्रतीयते, तस्य द्रव्यप्रधानत्वात् । यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् " इति । यैः कर्मभिर्द्रव्यं चिकीर्ष्यते उत्पादयितुं संस्कर्तुं चेष्यते तानि गुणकर्म्माणि । यैस्तु न तथा क्रियते तानि प्रधानकर्माणि । तथा च सति यूपं मक्षतीत्यादौ यूपादिकस्योत्पादयितुमिष्टत्वात् व्रीहीनवहन्तीत्यादौ व्रीह्यादिकस्य संस्कर्तुमिष्टत्वाद् गुणकर्मत्वम् । प्रयाजादिषूक्तवैपरीत्यात्, प्रयाजादिवत् प्रधानकर्मत्वम् । एवं च सत्यवघातेन यथा व्रीहीणां तुषविमोको दृष्टः संस्कारः तथा ग्रहणेन सोमरसे न कश्चिद्विशेष उत्पद्यते, अतोऽवघातवैषम्यात्प्रयाजादिवत्प्रधानकर्मत्वमिति चेन्न । " ऐन्द्रवायवम् " इति द्वितीया कर्मकारके विहिता । कर्मत्वं चेप्सिततमत्वे भवति, " कर्तुरीप्सिततमं कर्म " (पा० सू० १।४।४९) इति कर्मसंज्ञाविधानात् । अस्ति च सोमरसस्येप्सिततमत्वं, यागसाधनत्वात् । अतः सोमरसः प्रधानभूतः । तथा सति ग्रहणक्रियाया गुणकर्मत्वमवघातवत्संसिद्धम् । एवं सर्वत्र द्रष्टव्यं ग्रहणवाक्येषु । ग्रहणमन्त्रस्त्वेवमाम्नायते-आ वायविति । यदि सोमरसे दृष्टोऽतिशयो न स्यात्, तर्ह्यपूर्वं कल्पनीयम्, तस्माद् ग्रहणस्य गुणकर्मत्वम् । हे ' वायो ! ' ' शुचिपाः ' शुद्धस्य सोमस्य पातः ' नः ' अस्माकं समीपे ' आभूष ' अलंकुरु "भूष अलङ्कारे" ( धा. भ्वा. वा. प. ६८।३ ) हे विश्वस्य व्यापक ! ' ते ' तव सहस्रसंख्याः नियुतो ( निघं. १ । १५ । ८ ) वाहनानि सन्ति, तादृशस्य च तव सम्बन्धि मदनीयं-" गदमदचरयमश्चानुपसर्गे "-( पा. सू. ३ । १ । १०० ) इति यत् । 'अन्धः' अन्नं सोमरसात्मकम् । 'उपो' उप ' अयामि ' उपगमयामि । ' अय गतौ ' ( भ्वा. प. ४७६ ) -हे ' देव ! ' द्योतमान वायो ! यस्य सोमस्य 'पूर्वपेयं' प्रथमवषट्कारलक्षणं प्रथमपानं ' दधिषे ' धारयसि । " छन्दसि लुङ्लङ्लिटः " ( पा. सू. ३ । ४ । ६ ) इति लिट् । हे सोमरस ! 'त्वा वायवे' गृह्णामीति मन्त्रस्यार्थः ॥ १८ ॥

पुनर्ग्रहणं विधत्ते-अथेति । वायव्यग्रहणानन्तरमपच्छिद्य पुनरपीन्द्रवायव्यम् 'आनयति' गृह्णीयादित्यर्थः । तत्र ग्रहणे मन्त्रः-" इन्द्रवायूऽइमे सुता उप प्रयोभिरागतम् । इन्दवो वामुशन्ति हि, उपयामगृहीतोऽसि वायवऽइन्द्रवायुभ्यां त्वा" ( वा.सं.७।८)-इति । हे ' इन्द्रवायू ' ! यस्मात् कारणात् 'इमे' सोमाः ' सुताः ' अभिषुताः

---

१--अपगृह्य पुनरैन्द्रवायू इति । का. श्रौ. सू. ९ । १२० ॥

क्रतूदक्षौ ह वाऽअस्य मित्रावरुणौ । ( णावे ) एतन्न्वध्यात्मꣳ स यदेव मनसा कामयतऽइदं मे स्यादिदं कुर्वीयेति स एव क्रतुरथ यदस्मै तत्समृध्यते स दक्षो मित्र एव क्रतुर्व्वरुणो दक्षो ब्रह्मैव मित्रः क्षत्रं व्वरुणोऽभिगन्तैव ब्रह्म कर्त्ता क्षत्रियः ॥ १ ॥

---

**मैत्रावरुणग्रहः ।**

क्रतूदक्षौ ह वाऽअस्य मित्रावरुणौ । एतन्न्वध्यात्मम् । स यदेव मनसा कामयते—इदंमे स्यात्, इदं कुर्वीयेति । स एव क्रतुः । अथ यदस्मै तत्समृध्यते—स दक्षः । मित्र एव क्रतुः । वरुणो दक्षः । ब्रह्मैव मित्रः । क्षत्रं वरुणः । अभिगन्तैव ब्रह्म । कर्ता क्षत्रियः ॥ १ ॥

---

तस्माद्युवां 'प्रयोभिः' शीघ्रगामिभिरश्वैः समीपे 'आगतम्' आगच्छतम् । 'प्रयोभिः'—इति—"इण् गतौ"—( धा. पा. अ. प. ३९ ) इत्यस्मात् शतृप्रत्ययः । "व्यत्ययो बहुलम्"—( पा. सू. ३।१।९८ ) इति हल्व्यत्ययेन तकारस्य सकारादेशः । रुत्वादिकार्ये कृते प्रपूर्वस्य रूपम् । 'आगतम्' इति—लोटि—"बहुलं छन्दसि"—(पा. सू. २।४।७३ ) इति शपो लुक् । अनुनासिकलोपः । किंच 'इन्दवः' सोमाः 'वां' युवाम् 'उशन्ति' कामयन्ते "वश कान्तौ"—( धा. पा. अ. प. ७० ) युवयोरागमनमभिलषन्तीत्यर्थः । यस्मादुशन्ति अत आगतमिति सम्बन्धः । हे सोमरस ! उपयामेन दारुपात्रेण गृहीतोऽसि 'वायवे' 'इन्द्रवायुभ्यां' 'त्वा' गृह्णामीति शेषः । अत्रापि वायव इत्येतस्य ग्रहणमस्मिन् ग्रहे इन्द्रस्य तुरीयांशभाक्त्वाभिप्रायेण । गृहीतस्य सोमरसस्य समन्त्रकं सादनं विधत्ते—एष त इत्यादिना । हे सोमरस ! 'एषः' खरप्रदेशः 'तव' स्थानम् अतोऽत्र समानप्रीतिभ्यामिन्द्रवायुभ्यां 'त्वा' सादयामीति शेषः । व्याचष्टे—स यदाहेत्यादि । 'स' मन्त्रः सजोषोभ्याम् इति । आह इति यत्, तत्कारणमुच्यत इत्यर्थः । इन्द्रवाय्वोरेकस्मिन्नेव ग्रहे हविःस्वीकारादभिन्नत्वमुपचर्यते अत इन्द्रवाय्वोरभेदान्मन्त्रः—"सजोषोभ्याम्"—इति युक्तमाहेत्यभिप्रायः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे प्रथमाध्याये तृतीयं ब्राह्मणम् ॥ ( ४ । १ । ३ ) ॥

विधास्यमानस्य ग्रहस्य देवतां प्रशंसन् तस्यैन्द्रवायवानन्तर्ये कारणं चाह—क्रतुदक्षावित्यादि । मित्रश्च वरुणश्चेति 'मित्रावरुणौ'—"देवताद्वन्द्वे च"—( पा. सू. ७ । ३ । २१ ) इति पूर्वपदस्यानङादेशः । सौ 'अस्य' यज्ञस्य समस्तस्य लोकस्य वा 'क्रतुदक्षौ ह वै' क्रतुदक्षशब्दयोरर्थौ विवरिष्यते, तस्मात्प्रशस्तावित्यर्थः । 'ह वा' इत्येतौ निपातौ शाखान्तरगतां प्रसिद्धिं द्योतयतः । तथा च तैत्तिरीयकम्—"दक्षक्रतुभ्यां मैत्रावरुणम्"(तै.शा.१।९।४)इति।ऐन्द्रवायवग्रहस्तु वागात्मक इति पूर्व प्रतिपादितम् "वाग्घ वा अस्यैन्द्रवायवः" ( श. प. ४।१।३।१) इति । वाक् पुनर्मनोऽधीना, "मनसा हि वाग्धृता" ( तै.सं.६।१।१।७) इत्यादि श्रुतेः । संकल्पोत्साहौ च मनोऽधीनौ । ततो वागात्मकैन्द्रवायवानन्तर्यं दक्षक्रत्वात्मकमित्रावरुणदेवत्यस्य ग्रहस्य युक्तमिति भावः।अत एवानेन क्रमेण तैत्तिरीयके श्रूयते—"वायव ऐन्द्रवायवं दक्षक्रतुभ्यां मैत्रावरुणम्"(तै.शा.१।९।४)इति। द्विविधौ हि मित्रावरुणौ, आध्यात्मिकावाधिभौतिकौ चेति । तत्रोक्तावाध्यात्मिकावित्याह—एतन्न्वध्यात्ममिति ।

( स्ते ) ते हैते॒ऽअग्रे॒ नानेवा॑सतुः । ( ब्र॒ ) ब्रह्म॑ च क्ष॒त्रं च॒ ततः॑ शशाकैव ब्र॒ह्म मि॒त्र ऋ॒ते क्ष॒त्राद्वरु॑णात्स्था॒तुम् ॥ २ ॥

न क्षत्रं व्वरु॑णः । ( ऽ ) ऋ॒ते ब्र॒ह्मणो मि॒त्राद्यद्ध किं च व्वरु॑णः कर्म॑ चक्रे॒ऽप्रसू॑तं ब्र॒ह्मणा मि॒त्रेण॒ न हैवास्मै॒ तत्सम॑नृधे ॥ ३ ॥

---

ते हैतेऽअग्रे नानेवासतुः—ब्रह्म च क्षत्रं च । ततः शशाकैव ब्रह्म मित्र ऋते क्षत्राद्वरुणात्स्थातुम् ॥ २ ॥ न क्षत्रं वरुण ऋते ब्रह्मणो मित्रात् । यद्ध किञ्च वरुणः कर्म चक्रे—अप्रसूतं ब्रह्मणा मित्रेण—न हैवास्मै तत्समानृधे ॥ ३ ॥

---

'अध्यात्मम्' आत्मनि । विभक्त्यर्थेऽव्ययीभावः ( पा. सू. २ । १ । ६ ) । "अनश्च" ( पा. सू. ५ । ४ । १०८ ) इति टच् समासान्तः । तत्रात्मनि विद्यमानयोर्मित्रावरुणयोः रूपम् 'एतत्' उक्तप्रकारमित्यर्थः । क्रतुदक्षशब्दयोरर्थं विवृणोति—स यदेवेत्यादि । 'सः' लोकः 'इदं' पुरोवर्ति 'मे' 'स्यात्' भवेत् । 'इदं कुर्वीयेति' मनसाऽभिलषतीति यत् 'सः' 'क्रतुः' संकल्प इत्यर्थः । तत् सङ्कल्पितं 'अस्मै' लोकाय येन 'समृद्ध्यते' 'सः' 'दक्षः' । "दक्ष वृद्धौ" ( धा. पा. भ्वा. आ. ६०९ ) क्रतुदक्षाविति क्रमो विवक्षित इत्याह—मित्र एवेत्यादि । मित्रावरुणयोराधिभौतिकरूपं सोपपत्तिकमाह—ब्रह्मैवेत्यादिना । 'ब्रह्म' इति ब्राह्मणजातिः, सैव 'मित्रो' देवः । क्षत्रियजातिरेव, 'वरुणो' देवः । 'अभिगन्ता' अभिगमनशीलः ज्ञानशक्तियुक्त इत्यर्थः । 'कर्त्ता' क्रियाशक्तियुक्तः । उभयत्रापि ताच्छील्ये तृन् प्रत्ययः ( पा. सू. ३।२।१३५ ) । यतो मित्रावरुणौ क्रतुदक्षशब्दाभिधेयज्ञानक्रियाशक्तिरूपौ, ब्रह्मक्षत्रे च ज्ञानक्रियाशक्तिमती, अत आधिभौतिकमित्रावरुणरूपत्वमनयोर्युज्यत इत्यर्थः[1] ॥ १ ॥

ब्रह्मक्षत्रयोरुक्तमेवाधिभौतिकत्वमाख्यायिकया दृढीकुर्वन् ग्रहस्य द्विदेवत्यत्वमाह—ते हैत इत्यादिना । 'अग्रे' पूर्वं 'ते एते' ब्रह्म च क्षत्रं च विभिन्ने अभूताम् । ततो विभेदानन्तरं मित्रात्मकं 'ब्रह्म' वरुणात्मकेन क्षत्रेण विनापि स्वत एव स्थातुं शक्तमभूत् । तथा वरुणात्मकं क्षत्रं मित्रात्मकेन ब्रह्मणा विना स्वत एव स्थातुं न शक्तमभूत् । ततो वरुणरूपं क्षत्रं 'यत् किं च' 'कर्म' 'चक्रे' तत् सर्वं 'मित्रेण' 'ब्रह्मणा' 'अप्रसूतम्' अननुज्ञातमनुपदिष्टमित्यर्थः । तथाविधमेवाकरोत् । ततः 'तत्' कृतं कर्म 'अस्मै' क्षत्राय न समृद्धमभूत् यस्मात् स्वत एव कृतं कर्म न समृद्धम् अतः स्थातुं न शक्तमभूत् । ततो वरुणरूपं क्षत्रं यत् किंचित् कर्म चक्रे तत् सर्वं मित्रेण ब्रह्मणा अप्रसूतमननुज्ञातं शशाकेति पूर्वेण सम्बन्धः । 'आनृध' इति "ऋधु वृद्धौ"—( धा. पा. स्वा. प. २९ ) इत्यस्माल्लिटि ( पा. सू. ३ । २ । १५ ) द्विर्वचने ( पा. सू. १ । १ । ५९ ) उरत्वादिकार्ये ( पा. सू. ७ । ४ । ६६ ) "अत आदेः"—( पा. सू. ७ । ४ । ७० ) इति दीर्घे च—"तस्मान्नुड्द्विहलः" ( पा. सू. ७ । ४ । ७१ ) इति नुडागमः । ननु ऋधेरेकहल्त्वाद्द्विहल इति कथं नुडागमो विधीयते—उच्यते—नुड्विधिहलादेशविनामेष्वृकारप्रतिविधानं कर्त्तव्यमिति ऋकारस्थस्यापि रेफस्य हल्त्वेनाङ्गीकारात् तन्निबन्धनं कार्यं भविष्यति ॥ २ ॥ ३ ॥

---

१—मूले 'क्रतूदक्षौ' इति दीर्घपाठस्तु—सत्यवस्वादित्रयोदशविश्वेदेवनिष्ठस्वस्वत्रगतयुगमत्वाभिप्रायिक इति ध्येयम् ॥

स क्षत्रं व्वरुणः । (णो) ब्रह्म मित्रमुपमन्त्रयांचक्रऽउप माऽऽवर्तस्व सꣳ सृजावहै पुरस्त्वा करवै त्वत्प्रसूतः कर्म करवाऽइति तथेति तौ समसृजेतां तत एष मैत्रावरुणो ग्रहोऽभवत् ॥ ४ ॥

( त्सो ) सो एव पुरोधा । तस्मान्न ब्राह्मणः सर्व्वस्येव क्षत्रियस्य पुरोधां कामयेत सꣳ ह्येवैतौ सृजेते सुकृतं च दुष्कृतं च नोऽएव क्षत्रियः सर्व्वमिव ब्राह्मणं पुरोदधीत सꣳ ह्येवैतौ सृजेते सुकृतं च दुष्कृतं च स यत्ततो व्वरुणः कर्म चक्रे प्रसूतं ब्रह्मणा मित्रेण सꣳ हैवास्मै तदानृधे ॥ ५ ॥

---

स क्षत्रं वरुणो ब्रह्म मित्रमुपमन्त्रयाञ्चक्रे—उप माऽऽवर्तस्व, संसृजावहै, पुरस्त्वा करवै, त्वत्प्रसूतः कर्म करवाऽइति । तथेति तौ समसृजेताम् । तत एष मैत्रावरुणो ग्रहोऽभवत् ॥ ४ ॥

सोऽएव पुरोधा । तस्मान्न ब्राह्मणः सर्वस्येव क्षत्रियस्य पुरोधां कामयेत । संह्येतौ सृजेते—सुकृतं च दुष्कृतं च । नोऽएव क्षत्रियः सर्वमिव ब्राह्मणं पुरोदधीत । सं । ह्येवैतौ सृजेते—सुकृतं च दुष्कृतं च । स यत्ततो वरुणः कर्म चक्रे प्रसूतं ब्रह्मणा मित्रेण—सं हैवास्मै तदानृधे ॥ ५ ॥

---

ततस्तद्वरुणात्मकं 'क्षत्रम्' अशक्तं सत् मित्रात्मकं ब्रह्माऽऽमन्त्रयांचक्रे । हे ब्रह्मन् ! त्वं मामनुवर्त्तस्व, आवां संसृष्टौ भवाव 'संसृजावहै' इति व्यत्ययेनात्मनेपदम् ( पा. सू. ३ । १ । ८५ ) । त्वां 'पुरः' करिष्यामि त्वयोपदिष्टमेव कर्म करिष्यामीति । तथाऽस्त्विति ब्रह्मण्यङ्गीकुर्वति सति 'तौ' ब्रह्मक्षत्रात्मकौ मित्रावरुणौ संसृष्टावभूताम् । ततः संसर्गाद्धेतोरयं 'ग्रहो' मित्रावरुणार्थं द्विदेवत्योऽभवत् ॥ ४ ॥

ततो वरुणेन संसृष्टत्वाद्ब्राह्मणजात्यात्मको मित्रं च क्षत्रियजात्यात्मकस्य वरुणस्य पुरोहितोऽभूत् । अत्र ब्रह्मक्षत्रयोर्विभागे क्षत्रस्य सामर्थ्याभावमुपन्यस्य पुनस्तदुपगमाय तयोः संसर्गोऽभिहितः । उत्साहश्च संकल्पाभावे न शक्नोति क्रियां निष्पादयितुम् । अतोऽनयोस्तत्सादृश्यलाभात्तदात्मकमित्रावरुणयोराधिभौतिकरूपत्वमुपपद्यत इति भावः । यतोऽत्र मित्रोऽनुरूपः पुरोहितोऽभूत् वरुणश्चानुरूपो राजा; अतो लोकेऽपि पुरोहितेन राज्ञा चानुरूपाभ्यामेव भवितव्यमिति दर्शयति—**तस्मान्न ब्राह्मण** इत्यादिना । यस्मादनुरूपावेतौ ब्राह्मणक्षत्रियौ 'सुकृतं दुष्कृतं' च 'संसृजेते' संसर्जयतः । सृजिरन्तर्भावितण्यर्थः । तस्माद्ब्राह्मणः अविशेषेण 'सर्वस्य' 'क्षत्रियस्य' 'पुरोधां' पुरोहितत्वं 'न कामयेत' किं तु स्वानुरूपं सुकृतिनमेव क्षत्रियं कामयेतेत्यर्थः । 'पुरोधाम्' इति दधातेः सम्पदादिलक्षणो भावे क्विप् । 'क्षत्रियः' अपि एवमनुरूपमेव ब्राह्मणं 'पुरोदधीत' पुरोहितं कुर्यात् । प्रकृते अनुरूपपुरोहितस्य मित्रस्य संसर्गेण प्राप्तं फलमाह—स यदित्यादि । 'ततः' संसर्गानन्तरं 'सः' 'वरुणो' 'यत्' 'कर्म चक्रं' तत् 'मित्रेण' ब्रह्मणोपदिष्टमिति 'अस्मै' वरुणाय समृद्धमभूत् ॥ ५ ॥

तत्तदवक्लृप्तमेव । यद्ब्राह्मणोऽराजन्यः स्याद्यद्यु राजानं लभेत समृद्धं तदेतद्ध त्वेवानवक्लृप्तं यत्क्षत्रियो ब्राह्मणो भवति यद्ध किं च कर्म कुरुतेऽप्रसूतं ब्रह्मणा मित्रेण न हैवास्मै तत्समृध्यते तस्माद्ु क्षत्रियेण कर्म करिष्यमाणेनोपसर्त्तव्य एव ब्राह्मणः सꣳ हैवास्मै तद्ब्रह्मप्रसूतं कर्मऽर्ध्यते ६॥

( तेऽथा ) अथातो गृह्णात्येव । ( वा ) अयं वां मित्रावरुणा सुतः सोम ऋतावृधा ॥ ममेदिह श्रुतꣳ हवम् । उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेति ॥ ७ ॥

---

तत् तदवक्लृप्तमेव--यद् ब्राह्मणो राजन्यः स्यात् । यद्यु राजानं लभेत--समृद्धं तत् । एतद्ध त्वेवानवक्लृप्तम्--यत् क्षत्रियो ब्राह्मणो भवति । यद्ध किं च कर्म कुरुते--प्रसूतं ब्रह्मणा मित्रेण न हैवास्मै तत्समृध्यते । तस्माद्ु क्षत्रियेण कर्म करिष्यमाणेनोपसर्तव्य एव ब्राह्मणः । सं हैवास्मै तद् ब्रह्मप्रसूतं कर्मऽर्ध्यते ॥ ६ ॥

अथातो गृह्णात्येव--"अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतं हवम्॥ उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा "--( वा. सं. ७ । ९ ) इति ॥ ७ ॥

---

ब्राह्मणस्य स्वाभाविकज्ञानशक्तिसम्भवात् क्षत्रियस्य तदभावात् क्षत्रियेण ब्राह्मणोऽनुसरणीय इत्याह-**तत्तदवक्लृप्तमित्यादि** । यस्माद्ब्राह्मणस्य स्वाभाविकज्ञानशक्तिमत्तया अन्यत उपदेशापेक्षा नास्ति तस्माद्ब्राह्मणो यदि राजन्यो भवेत् । अथवा पुरोहितो भूत्वा राजानं लभेतेति यत् ' तदवक्लृप्तं ' युक्तम् । तेन कृतं तत् कर्म समृद्धं भवेदिति । "क्षत्रियो ब्राह्मणो भवति" इत्येतदुक्तम् । ब्राह्मणः सन् ' यत् ' ' किंच ' किञ्चित् ' कर्म कुरुते ' तन्मित्रात्मकेन ब्रह्मणा नोपदिष्टं स्यात् । तथा च तदस्मै न समृद्धं भवति । क्षत्रियस्य पुरोहितकृत्यज्ञानसम्भवेऽपि स्वाभाविकज्ञानाभावात्तत्कर्म समृद्धं न भवतीत्यभिप्रायः । ब्राह्मणस्य प्रजापतेर्मुखतः उत्पन्नत्वादुपदेशकत्वं स्वाभाविकम्, क्षत्रियस्य बाहुभ्यामुत्पन्नत्वात् कर्तृत्वं स्वाभाविकम् । तथा च श्रूयते-"स मुखतस्त्रिवृतं निरमिमीत" इत्यारभ्य,०-"ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्त " ( तै. सं. ७ । १ । १ ) इति, तथा-"उरसो बाहुभ्यां पञ्चदशं निरमिमीता" इत्यारभ्य०-"राजन्यो मनुष्याणाम् " ( तै.सं.७।१।१ ) इति । अन्यत्राप्याम्नायते- "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः"-(वा. सं. ३१।११) इति । तस्मात् पुरोहितकृत्यविदापि क्षत्रियेण कर्म करिष्यमाणेन ब्राह्मण एवोपसरणीयः । तथा च सति तेनोपदिष्टत्वात् तत्कृतं कर्म समृद्ध्यत इत्यर्थः ॥ ६ ॥

एवं ग्रहस्य द्विदेवत्यत्वादिकमभिधाय समन्त्रकं ग्रहणं विधत्ते-**अथात इत्यादि** । ऐन्द्रवायवग्रहानन्तरम्--" अयं वाम् " इत्यादिना मन्त्रेण प्रकृतं मैत्रावरुणग्रहं गृह्णीयात् । हे ' मित्रावरुणा' " सुपां सुलुक् "--( पा. सू. ७ । १ । ३९ ) इत्यादिना आकारादेशः । हे ' ऋतावृधा ' ऋतस्य यज्ञस्य वर्द्धयितारौ ।पूर्ववदा-

---

१-मैत्रावरुणमयं वामिति । का० श्रौ० सू० ९ । १३१ ।

तं प॒य॑सा श्रीणाति । तद्यत्प॒य॑सा श्रीणाति वृ॒त्रो वै सोम॑ आसी॒त्तं यत्र॑ दे॒वा अघ्नं॒स्तं मि॒त्रम॑ब्रुवं॒स्त्वमपि॑ ह॒ꣳसीति॒ स न चकमे॒ सर्व॑स्य वाऽअ॒हं मि॒त्रम॑स्मि॒ न मि॒त्रꣳ स॒न्नमि॑त्रो भविष्या॒मीति॒ तं वै त्वा य॒ज्ञाद॒न्तरे॑ष्याम॒ इत्य॒हम॑पि ह॒न्मीति॒ होवाच॒ तस्मा॑त्प॒शवो॒ऽपाक्रा॑म॒न्मि॒त्रꣳ स॒न्नमि॑त्रोऽभू॒दिति॒ स प॒शुभि॒र्व्या॑र्ध्यत॒ तमे॒तद्दे॒वाः प॒शुभिः॒ सम॑र्धय॒न्यत्प॒य॑साऽश्री॑णं॒स्तथो॑ऽए॒वैन॑मे॒ष ए॒तत्प॒शुभिः॒ सम॑र्धयति॒ यत्प॒य॑सा श्रीणाति ॥ ८ ॥

तदा॑हुः । शश्व॒द्ध नैव च॑कमे॒ ह॒न्तुमिति॒ तद्यदे॒वात्र॒ पय॒स्तन्मि॒त्रस्य॒ सोम॑ऽए॒व वरु॑णस्य॒ तस्मा॑त्प॒य॑सा श्रीणाति ॥ ९ ॥

---

**तं पयसा श्रीणाति । तद् यत्पयसा श्रीणाति—वृत्रो वै सोम आसीत्—तं यत्र देवा अघ्नन्—तं मित्रमब्रुवन्—त्वमपि हंसीति । स न चकमे, सर्वस्य वाऽअहं मित्रमस्मि । न मित्रं सन्नमित्रो भविष्यामीति । तं वै त्वा यज्ञादन्तरेष्याम इति । अहमपि हन्मीति होवाच । तस्मात्पशवोऽपाक्रामन्—मित्रं सन्नमित्रोऽभूदिति । स पशुभिर्व्यार्ध्यत । तमेतद्देवाः पशुभिः समार्धयन्—यत्पयसाऽश्रीणन् । तथोऽएवैनमेष एतत्पशुभिः समर्धयति—यत्पयसा श्रीणाति ॥ ८ ॥**

**तदाहुः—शश्वद्ध नैव चकमे हन्तुमिति । तद् यदेवात्र पयः—तन्मित्रस्य, सोम एव वरुणस्य । तस्मात्पयसा श्रीणाति ॥ ९ ॥**

---

कारादेशः । "अन्येषामपि दृश्यते" ( पा. सू. ६ । ३ । १३७ ) इति पूर्वपदस्य दीर्घः । युवाभ्याम् 'अयं' 'सोमः' अभिषुतः । 'इह' यजमानानां मध्ये 'मम' एवाह्वानं श्रृणुतम् । 'इदित्यवधारणे' । 'हवम्' इति—"भावेऽनुपसर्गस्य" ( पा. सू. ३।३।७५) इत्यप्रत्ययः संप्रसारणं च । 'श्रुतम्' इति लोटि—"बहुलं छन्दसि"—( पा. सू. ९ । २ । १२२ ) इति शपो लुक् । हे सोमरस ! त्वम् उपयामेन 'गृहीतोऽसि' त्वां 'मित्रावरुणाभ्यां' गृह्णामीति शेषः ॥ ७ ॥

गृहीतस्य सोमरसस्य पयसा मिश्रणं विधत्ते—**तं पयसा श्रीणातीति** । 'श्रीणाति' मिश्रयति अनेकार्थत्वाद्धातूनामिति श्रीणातिरिह मिश्रणार्थः । विहितस्य मिश्रणस्य आख्यायिकया हेतुमाह—तद्यदित्यादिना । पयसा श्रीणातीति यत् तत्कारणमुच्यते—'वृत्रो' नाम कश्चिदसुरः सोमो बभूव । 'तं' वृत्रं यदा 'देवाः' अवधिषुस्तदा 'त्वमपि' जहीति 'मित्रमब्रुवन्' । एवमुक्तः 'सः' तं हन्तुं नाभिललाष । अनभिलषणे तस्यायमाशयः—'अहं' 'सर्वस्य' लोकस्य 'मित्रम्' इष्ट एव भवामि । तादृशोऽहमपकारेण शत्रुर्न 'भविष्यामीति' । एवं तर्हि त्वां यज्ञे भागहीनं करिष्याम इति देवैरुक्तः स मित्रो भागलोभात् 'अहमपि' 'हन्मीति' अङ्गीचकार । ततोऽस्यामित्रत्वात् पशुष्वपगतेषु स्वयं पशुविहीनोऽभवत् । ततो देवा एतद्भागं पयसा श्रीत्वा एनं 'पशुभिः' समृद्धमकुर्वन् । अत इदानीमपि 'पयसा' सोमरसस्य मिश्रणेन 'एनं' मित्रमेव 'पशुभिः' समर्द्धितवान् भवतीत्यर्थः ॥ ८ ॥

प्रकारान्तरेणापि पयसा मिश्रणस्यावश्यकत्वमाह—तदाहुरित्यादि । 'तत्' तस्मिन् मित्रविषये वदन्ति

---

१—पयसा श्रीणत्येनं कुशावंतर्द्धाय राया वयमिति । का. श्रौ. सू. ९ । १३२ ।

स श्रीणाति । राया व्वयुँ सस्वाँसो मदेम हव्व्येन देवा यवसेन गावः ॥ तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीमेष ते योनि-र्ऋतायुभ्यां त्वेति सादयति स यदाहऽर्तायुभ्यां त्वेति ब्रह्म वाऽऋतं ब्रह्म हि मित्रो ब्रह्मो ह्यृतं व्वरुण एवायुः संव्वत्सरो हि व्वरुणः संव्वत्सर आयु-स्तस्मादाहैष ते योनिर्ऋतायुभ्यां त्वेति ॥ १० ॥

## इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ४–१–४ ॥

स श्रीणाति–" राया वयं ससवांसो मदेम हव्येन देवा यवसेन गावः । तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् । एष ते योनिर्ऋतायुभ्यां त्वा"– ( वा० सं० ७ । १० ) इति सादयति । स यदाह–ऋतायुभ्यां त्वेति । ब्रह्म वा ऋतम् । ब्रह्म हि मित्रः । ब्रह्मो ह्यृतम् । वरुण एवायुः, संवत्सरो हि वरुणः, संवत्सर आयुः । तस्मा-दाह–एष ते योनिर्ऋतायुभ्यां त्वेति ॥ १० ॥

---

याज्ञिकाः । पुनः पुनर्देवैरुक्तोऽपि मित्रः सर्वथा सोमं हन्तुं नैव चकमे यतस्तस्मादत्र ग्रहे ' यत् ' ' पयः ' ' तदेव ' ' मित्रस्य ' भागः ' सोमः ' तु वरुणस्यैव भागः । अत एनं ग्रहं मित्रार्थं पयसा मिश्रयेदित्यर्थः ॥९॥

विहितं पयसा मिश्रणमनूद्य मन्त्रं विधत्ते–स श्रीणातीति। राया वयमित्यादि । हे मित्रावरुणौ ! यथा ' हव्येन ' ' देवाः ' हृष्यन्ति । यथा ' यवसेन ' ( यवस ) तृणेन ' गावः ' हृष्यन्ति । तथा च ' वयं ' ' राया ' येन धेनुरूपेण धनेन ' ससवांसः ' संभक्ताः । " वन षण संभक्तौ "–( धा. पा. भ्वा. प. ४६६ ) इत्यस्मात् क्वसुप्रत्ययः (पा. सू. ३ । २ । १०७ ) । अनुनासिकलोपश्छान्दसः । तथाविधाः सन्तो हृष्टा भवामः । ' युवं ' युवां ' प्रथमायाश्च ' ( पा. सू. ७ । २ । ८८ ) इत्यात्वं न भवति । भाषायामिति वचनात् । ' विश्वाहा ' सर्वदा विश्वानि च तान्यहानि चेति कर्मधारयः । तत्र उत्तरस्य सप्तमीबहुवचनस्या-देशात् शिलोपः । अनपगच्छन्तीं ' तां धेनुं ' ' नः ' अस्मभ्यं धनं दत्त सर्वदा अनन्यगामिनी सती यथा अस्मासु निवसति तथा संपादयतमित्यर्थः । गृहीतसोमरसस्य खरे सादनं विधत्ते–एष इत्यादिना । सादनं-मन्त्रभागगतम् " ऋतायुभ्याम् "–इत्येतत्पदं व्याचष्टे–स यदाहेति । ' ऋतं ' सत्यं तदात्मकं ' ब्रह्म ' इति प्रसिद्धम् । ब्रह्म च मित्र इति प्रागुक्तम् ( श. प. ४ । १ । २ । १ ) । ब्रह्मैव मित्र इति द्विरुक्तिः शाखान्तरप्रसिद्ध्या चानुभवप्रसिद्ध्या चोपपद्यते । ' आयुः ' इति–प्राणिनां जीवनकालः । तदात्मकः ' संवत्सरः ' । ' वरुणः ' च संवत्सररूपः । तथा च ' ऋतायु ' शब्दाभ्यां मित्रावरुणावभिधेये, तस्मात् मन्त्रे ऋतायुपदप्रयोगो युज्यत इत्यर्थः ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे प्रथमाध्याये चतुर्थं ब्राह्मणं समाप्तम् ॥ ( ४-१-४ )

श्रोत्रꣳ ह वाऽअस्याश्विनः । (स्तु) तस्मात्सर्व्वतः परिहारं भक्षयति सर्व्वतो ह्येनेन श्रोत्रेण शृणोति यत्र वै भृगवो वाङ्गिरसो वा स्वर्गं लोकꣳ समाश्नुवत तच्च्यवनो वा भार्गवश्च्यवनो वाऽङ्गिरसस्तदेव जीर्णिः कृत्यारूपो जहे ॥ १ ॥

शर्यातो ह वाऽइदं मानवो ग्रामेण चचार । स तदेव प्रतिवेशो निविविशे तस्य कुमाराः क्रीडन्तऽइमं जीर्णिं कृत्यारूपमनर्थ्यं मन्यमाना लोष्टैर्विपिपिषुः ॥ २ ॥

स शार्यातेभ्यश्चुक्रोध । तेभ्योऽसंज्ञां चकार पितैव पुत्रेण युयुधे भ्राता भ्रात्रा ॥ ३ ॥

शर्यातो ह वाऽईक्षांचक्रे । यत्किमकरं तस्मादिदमापदीति स गोपालांश्चाविपालांश्च सꣳह्वयितवाऽउवाच ॥ ४ ॥

---

## आश्विनग्रहः ।

श्रोत्रं ह वाऽअस्याश्विनः । तस्मात्सर्वतः परिहारं भक्षयति, सर्वतो ह्येनेन श्रोत्रेण शृणोति । यत्र वै भृगवो वाऽङ्गिरसो वा स्वर्गं लोकं समाश्नुवत । तत् च्यवनो वा भार्गवः, च्यवनो वाऽऽङ्गिरसः । तदेव जीर्णिः कृत्यारूपो जहे ॥ १ ॥

शर्यातो ह वाऽइदं मानवो ग्रामेण चचार । स तदेव प्रतिवेशो निविविशे । तस्य कुमाराः क्रीडन्त इमं जीर्णिं कृत्यारूपमनर्थ्यं मन्यमाना लोष्टैर्विपिपिषुः ॥ २ ॥

स शार्यातेभ्यश्चुक्रोध । तेभ्योऽसंज्ञां चकार । पितैव पुत्रेण युयुधे, भ्राता भ्रात्रा ॥ ३ ॥

शर्यातो ह वाऽईक्षांचक्रे—यत् किमकरम्, तस्मादिदमापदीति । स गोपालांश्चाविपालांश्च संह्वयितवाऽउवाच ॥ ४ ॥

---

उपांश्वादीनां ग्रहाणां विधास्यमानानां प्राणात्मकत्वेन यथा प्रशंसा विहिता तद्वदत्रापि विधित्सित आश्विनो-ग्रहो भक्षणविध्युपयोगित्वेन श्रोत्रात्मना स्तूयते—श्रोत्रं हेत्यादि । 'अस्य' यज्ञस्य 'आश्विनः' 'श्रोत्रम्' इति प्रसिद्धम् । "श्रोत्रादाश्विनम्"–(तै.शा. १।६।४) इति तदुत्पत्तिश्रुतेः। अतः श्रोत्रस्य 'सर्वतः' ग्राहकत्वात्तदात्मक-माश्विनं 'सर्वतः' परिहृत्य भक्षयेत् । 'परिहारम्' आभीक्ष्ण्ये (ऽपि) (पा. सू. ३ । ४ । २२) इति णमुल् प्रत्ययः । अथैतमाश्विनं ग्रहं विधातुमुपोद्घातत्वेनाख्यायिकामवतारयति—यत्र वा इत्यादि । पुरा खलु भृगूणामंगिरसां वा स्वर्गगमने भार्गवः 'आंगिरसो वा' जीर्णः 'कृत्यारूपः' अभिचारदेवतारूपः स्वर्गा-रोहणसमये च्युतस्तैस्त्यक्तोऽभूत् । अत्रोभयत्राप्युपाख्यानार्थस्य समानत्वाद्वाशब्दप्रयोगः ॥ १ ॥

तदा स्वकीयप्रजाभिः सह भुवं चरतः शर्यातनाम्नो राज्ञः शिबिरे तत्र निविष्टे तत्कुमारा अनर्थभ्रान्त्या एनं 'लोष्टैर्विपिपिषुः' । अर्थादनपेतोऽर्थ्यो हितः, स न भवतीत्यनर्थ्यः । 'धर्मपथ्यर्थन्यायादनपेते' (पा. सू. ४ । ४ । ९२) इति यत् । ततः क्रुद्धेन तेनोन्मादिताः परस्परम् अयुध्यन्त ॥ २ ॥ ३ ॥

ततः 'शर्यातः' 'यदकरं' तत् किं 'तस्मादिदं' प्राप्तमिति विचार्य 'गोपालान्' 'अविपालांश्च'

स होवाच । को वोऽद्येह किंचिदद्राक्षीदिति ते होचुः पुरुष ऽएवायं जीर्णिः कृत्यारूपः शेते तमनर्थ्यं मन्यमानाः कुमारा लोष्टैर्व्यपिक्षन्निति स विदांचकार स वै च्यवन इति ॥ ५ ॥

स रथं युक्त्वा । सुकन्याᳫँ शार्यातीमुपाधाय प्रसिष्यन्द सऽआजगाम यत्रऽर्षिरास तत् ॥ ६ ॥

( त्स ) स होवाच । ( ऽ ) ऋषे नमस्ते यन्नावेदिषं तेनाहिᳫँसिषमियᳫँ सुकन्या तया तेऽपह्नुवे संजानीतां मे ग्रामऽइति तस्य ह तत एव ग्रामः संजज्ञे स ह ततऽएव शर्यातो मानवऽउद्युयुजे नेदपरᳫँ हिनसानीति॥ ७॥

( त्य ) अश्विनौ ह वाऽइदं भिषज्यन्तौ चेरतुः । ( स्तौ ) तौ सुकन्यामुपेयतुस्तस्यां मिथुनमीषाते तन्न जज्ञौ ॥ ८ ॥

---

स होवाच—को वोऽद्येह किंचिदद्राक्षीदिति । ते होचुः पुरुष एवायं जीर्णिः कृत्यारूपः शेते, तमनर्थ्यं मन्यमानाः कुमारा लोष्टैर्व्यपिक्षन्निति । स विदांचकार—स वै च्यवन इति ॥ ५ ॥

स रथं युक्त्वा सुकन्यां शार्यातीमुपाधाय प्रसिष्यन्द । स आजगाम यत्रर्षिरास—तत् ॥ ६ ॥

स होवाच—ऋषे ! नमस्ते, यन्नावेदिषम्—तेनाहिंसिषम् । इयं सुकन्या, तया तेऽपह्नुवे, संजानीतां मे ग्राम इति । तस्य ह तत एव ग्रामः संजज्ञे । स ह तत एव शर्यातो मानव उद्युयुजे—नेदपरं हिनसानीति ॥ ७ ॥

अश्विनौ ह वाऽइदं भिषज्यन्तौ चेरतुः। तौ सुकन्यामुपेयतुः। तस्यां मिथुनमीषाते । तन्न जज्ञौ॥८॥

---

अप्राक्षीत् । 'वः' भवतां मध्ये किम् 'अद्राक्षीत्' इत्युक्त्वा तन्मुखात् कुमारकृतं वृत्तान्तं श्रुत्वा पश्चाच्च्यवन इत्यजानात् । अकरम् इति—"कृमृदृरुहिभ्यश्छन्दसि" ( पा. सू. ३ । १ । ५९ ) इत्यङ् । 'व्यपिक्षन्' इति—"शल इगुपधादनिटः क्सः"—( पा. सू. ३ । १ । ४५ ) ॥ ४ ॥ ५ ॥

ततः स रथं सज्जीकृत्य सुकन्यामादाय ऋषिसमीपं गत्वा अज्ञानेन 'त्वामहिंसिषं' नमस्ते अस्तु । अनया कन्यया तवापराधमपनयामि; मदीयो वर्गः पर्यवस्थितो भवत्वित्युक्ते तदनुग्रहात्तथाऽजनिष्ट । ततःप्रभृति शार्यातोऽन्यहिंसाविषये भीतः तदनुकूलमुद्योगमकरोत् "नेदिति" ( निरु. १ । ३ । ५ ) निपातः परिभये वर्त्तते ॥ ६ ॥ ७ ॥

एतस्मिन् समये भुवं विचरन्तौ 'भिषज्यन्तौ' "कण्ड्वादिभ्यो यक्"—( पा. सू. ३ । १ । २७ ) तौ 'अश्विनौ' इमां कन्यामुपेत्य 'तस्यां' 'मिथुनं' मैथुनभावम् 'ईषाते' । "इषु इच्छायाम्"—( धा. पा. तु. प. ७० ) व्यत्ययेनात्मनेपदम् ( पा. सू. ३ । १ । ८५ ) च्यवनस्तु तन्न विवेद ॥ ८ ॥

तौ होचतुः । सुकन्ये कमिमं जीर्णिं कृत्यारूपमुपशेषऽआवामनुप्रेहीति सा होवाच यस्मै मां पिताऽदान्नैवाहं तं जीवन्त ँ हास्यामीति तद्धाय-मृषिराजज्ञौ ॥ ९ ॥

स होवाच । सुकन्ये किं त्वैतदवोचतामिति तस्माऽएतद्व्याचचक्षे स ह व्याख्यातऽउवाच यदि त्वैतत्पुनर्ब्रुवतः सा त्वं ब्रूतान्न वै सुसर्व्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति तौ यदि त्वा ब्रुवतः केनाव-मसर्व्वौ स्वः केनासमृद्धाविति सा त्वं ब्रूतात्पतिं नु मे पुनर्युवाणं कुरुत-मथ वां वक्ष्यामीति तां पुनरुपेयतुस्ता ँ हैतदेवोचतुः ॥ १० ॥

सा होवाच । न वै सुसर्व्वाविव स्थो न सुसमृद्धाविवाथ मे पतिं निन्दथ इति तौ होचतुः केनावमसर्व्वौ स्वः केनासमृद्धाविति सा होवाच पतिं नु मे पुनर्युवाणं कुरुतमथ वां व्वक्ष्यामीति ॥ ११ ॥

तौ होचतुः । ( रे ) एत ँ ह्रदमभ्युवहर स येन व्वयसा कमिष्यते तेनो-दैष्यतीति त ँ ह्रदमभ्युवजहार स येन व्वयसा चकमे तेनोदेयाय ॥ १२ ॥

---

तौ होचतुः—सुकन्ये ! कमिमं जीर्णिं कृत्यारूपमुपशेषे । आवामनुप्रेहीति । सा होवाच—यस्मै मां पिताऽदात्; नैवाहं तं जीवन्तं हास्यामीति । तद्धायमृषिराजज्ञौ ॥ ९ ॥

स होवाच—सुकन्ये ! किं त्वैतदवोचतामिति । तस्माऽएतद्व्याचचक्षे । स ह व्याख्यात उवाच—यदि त्वैतत्पुनर्ब्रुवतः; सा त्वं ब्रूतात् । न वै सुसर्वाविव स्थः, न सुसमृद्धाविव । अथ मे पतिं निन्दथ इति । तौ यदि त्वा ब्रुवतः—केनावमसर्वौ स्वः, केनासमृद्धाविति । सा त्वं ब्रूतात्—पतिं नु मे पुनर्युवाणं कुरुतम्—अथ वां वक्ष्यामीति । तां पुनरुपेयतुः । तां हैतदेवोचतुः ॥ १० ॥

सा होवाच—न वै सुसर्वाविव स्थः, न सुसमृद्धाविव । अथ मे पतिं निन्दथ इति । तौ होचतुः—केनावमसर्वौ स्वः, केनासमृद्धाविति । सा होवाच—पतिं नु मे पुनर्युवाणं कुरुतम् । अथ वां वक्ष्यामीति ॥ ११ ॥

तौ होचतुः—एतं ह्रदमभ्यवहर । स येन वयसा कमिष्यते—तेनोदैष्यतीति । तं ह्रदमभ्यवजहार । स येन वयसा चकमे—तेनोदेयाय ॥ १२ ॥

---

ताभ्यां पत्यौ अरुचिमुत्पाद्य स्वानुसरणं ब्रुवद्भ्यामुक्ता नैतं 'जीवन्तं' हातुं युक्तमित्युवाच । तत एतत् ज्ञात-वता ऋषिणा पृष्टा सर्वमकथयत् । स पुनः 'व्याख्यातः' उक्तः सन्नुवाच—तावागत्य 'पुनः' अपि 'त्वा' 'यदि' 'ब्रुवतः' ब्रूतः "बहुलं छन्दसि—" ( पा. सू. २ । ४ । ३७ ) इति शपो लुगभावः । तदैवं ब्रूहि युवामसम्पूर्णौ असमृद्धौ 'अथ' अपि मदीयं पतिं 'निन्दथ इति' 'केन' कारणेनावामेवं बभूविवेति पृष्टे मदीयस्य पत्युर्यौवने कृते 'वक्ष्यामीति' । तथैव सर्वमपि संमजनि ॥ ९—११ ॥

ततस्तौ तदिष्टवयःप्राप्तौ कस्मिंश्चिद् ह्रदे मज्जनमुपायं प्रदर्श्य पुनरात्मवैकल्यमप्राप्ताम् । 'कुरुक्षेत्रे' य

तौ होचतुः । सुकन्ये केनावमसर्व्वौ स्वः केनासमृद्धाविति तौ हर्षिरेव प्रत्युवाच कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते ते व्वां यज्ञादन्तर्यन्ति तेनासर्व्वौ स्थस्तेनासमृद्धाविति तौ ह तत ऽएवाश्विनौ प्रेयतुस्तावाजग्मतुर्देवान्यज्ञं तन्वानान्त्स्तुते बहिष्पवमाने ॥ १३ ॥

तौ होचतुः । ( रु ) उप नौ ह्वयध्वमिति ते ह देवा ऽऊचुर्न वामुपह्वयिष्यामहे बहु मनुष्येषु सऽंसृष्टमचारिष्टं भिषज्यन्ताविति ॥ १४ ॥

तौ होचतुः । ( विं ) विशीर्ष्णा वै यज्ञेन यजध्वऽइति कथं विशीर्ष्णेत्युप नु नौ ह्वयध्वमथ वो व्वक्ष्याव इति तथेति ताऽ उपाह्वयन्त ताभ्यामेतमाश्विनं ग्रहमगृह्णंस्तावध्वर्यू यज्ञस्याभवतां तावेतद्यज्ञस्य शिरः प्रत्यधत्तां तददस्तद्दिवाकीर्त्यानां ब्राह्मणे व्याख्यायते यथा तद्यज्ञस्य शिरः प्रतिदधतुस्तस्मादेष स्तुते बहिष्पवमाने ग्रहो गृह्यते स्तुते हि बहिष्पवमानऽआगच्छताम् ॥ १५ ॥

---

तौ होचतुः—सुकन्ये ! केनावमसर्वौ स्वः, केनासमृद्धाविति । तौ हर्षिरेव प्रत्युवाच—कुरुक्षेत्रेऽमी देवा यज्ञं तन्वते; ते वां यज्ञादन्तर्यन्ति—तेनासर्वौ स्थः, तेनासमृद्धाविति । तौ ह तत एवाश्विनौ प्रेयतुः । तावाजग्मतुर्देवान्यज्ञं तन्वानान्—स्तुते बहिष्पवमाने ॥ १३ ॥

तौ होचतुः—उप नौ ह्वयध्वमिति । ते ह देवा ऊचुः—न वामुपह्वयिष्यामहे । बहु मनुष्येषु संसृष्टमचारिष्टं भिषज्यन्ताविति ॥ १४ ॥

तौ होचतुः—विशीर्ष्णा वै यज्ञेन यजध्वऽइति । कथं विशीर्ष्णेति । उप नु नौ ह्वयध्वम्, अथ वो वक्ष्याव इति तथेति । ताऽउपाह्वयन्त । ताभ्यामेतमाश्विनं ग्रहमगृह्णन् । तावध्वर्यू यज्ञस्याभवताम् । तावेतद्यज्ञस्य शिरः प्रत्यधत्ताम् । तददस्तद्दिवाकीर्त्यानां ब्राह्मणे व्याख्यायते । यथा तद् यज्ञस्य शिरः प्रतिदधतुः । तस्मादेष स्तुते बहिष्पवमाने ग्रहो गृह्यते । स्तुते हि बहिष्पवमानऽआगच्छताम् ॥ १५ ॥

---

तन्वाना देवाः 'वां' यज्ञविनष्टौ कुर्वन्ति 'तेन' उक्तं भवतोर्वैकल्यमिति । ऋषिरेव प्रत्युवाच—ततस्तौ बहिष्पवमानस्तोत्रानन्तरं देवानगमताम् । आवां भवत्समीपे 'ह्वयध्वमिति' अवोचतां च । भवतोश्चिरं 'मनुष्येषु' संसृष्टत्वान्नोपह्वयिष्याम इति देवैरुक्ते शिरोहीनेन 'यज्ञेन' 'यजध्वम्' इत्यूचतुः । 'कथं' विशिरस्त्वमिति तैरुक्ते तान् 'उपह्वयध्वम्' पश्चाद् 'वक्ष्याव' इत्यवोचताम् । ततः 'ताभ्यां' 'ग्रहमगृह्णन्' । 'तावध्वर्यू भूत्वा यज्ञस्य शिरः' प्रत्यदधातां, शिरसः प्रतिधानप्रकारस्तु प्रवर्ग्यमन्त्रब्राह्मणे व्याख्यायते इति नात्र प्रपञ्च्यत इत्यर्थः ॥ १२–१४ ॥

इत्थमाख्यायिकया अश्विनोर्ग्रहप्राप्तिः प्रदर्शिता । "अथातो गृह्णाति" इति ग्रहोऽपि विधास्यते, तदनुवादेनात्र कालो विधीयते—तस्मादित्यादि । बहिष्पवमानानन्तरमेव तयोरागमनात्तत्र 'ग्रहं' गृह्णीयात् ॥ १५ ॥

---

१–संहितायां 'ऋचं वाचम्' इत्यादि, द्यावापृथिवीभ्या ९ स्वाहा' इत्यन्तः पंचाध्यायात्मको मंत्रभागो दिवाकीर्त्यसंज्ञकः । तद्व्याख्यानभूतं ब्राह्मणमपि तद्योगाद्दिवाकीर्त्यमित्युच्यते । तच्च ब्राह्मणं प्रवर्ग्यकाण्डेऽस्ति । २–बृहदारण्यकान्तर्गतप्रवर्ग्यकांडे इतिबोध्यम् ।

तौ होचतुः । ( मुं ) मुख्यौ वाऽआवां यज्ञस्य स्वो यावध्वर्यूऽइह नाविमं
पुरस्ताद्ग्रहं पर्य्याहरताभि द्विदेवत्यानिति ताभ्यामेतं पुरस्ताद्ग्रहं पर्य्याज-
ह्रुरभि द्विदेवत्याँस्तस्मादेष दशमो ग्रहो गृह्यते तृतीय एव वषट्क्रियतेऽथ
यदश्विनावितीमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनाविमे हीदᳬ सर्व्वमाश्नु-
वातां पुष्करस्रजावित्यग्निरेवास्यै पुष्करमादित्योऽमुष्यै ॥ १६ ॥
( ष्याऽअ ) अथातो गृह्णात्येव । या वां कशा मधुमत्यश्विना सूनृता-
वती ॥ तया यज्ञं मिमिक्षतम् ॥ उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते
योनिर्माध्वीभ्यां त्वेति सादयति तं वै मधुमत्यर्चा गृह्णाति माध्वीभ्यां
त्वेति सादयति तद्यन्मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति ॥१७॥

---

तौ होचतुः–मुख्यौ वाऽआवां यज्ञस्य स्वः–यावध्वर्यू । इह नाविमं पुरस्ताद् ग्रहं पर्याहरत–अभिद्विदेवत्यानिति ताभ्यामेतत्पुरस्ताद्ग्रहं पर्याजह्रुरभिद्विदेवत्यान् तस्मादेष दशमो ग्रहो गृह्यते । तृतीय एव वषट् क्रियते । अथ यदश्विनाविति । इमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनौ । इमे हीदं सर्वमाश्नुवातां पुष्करस्रजाविति । अग्निरेवास्यै पुष्करम्, आदित्योऽमुष्यै ॥ १६ ॥

अथातो गृह्णात्येव । "या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् । उपयामगृहीतोऽस्यश्विभ्यां त्वा । एष ते योनिर्माध्वीभ्यां त्वा"–( वा. सं. ७ । ११ ) इति सादयति । तं वै मधुमत्यर्चा गृह्णाति, माध्वीभ्यां त्वेति सादयति । तद् यन्मधुमत्यर्चा गृह्णाति, माध्वीभ्यां त्वेति सादयति ॥ १७ ॥

---

ग्रहस्य होमकालं विधत्ते–**तौ होचतु**रित्यादि । अध्वर्युत्वेन 'आवां' 'यज्ञस्य' मुख्यौ इति । 'द्विदेवत्यान्' अभिलक्ष्यावयोः 'ग्रहं' पूर्वमेव समर्पयत इत्युक्ते देवास्तथैवान्वतिष्ठन् । द्विदेवत्यादिवहुवचनं प्रसिद्ध्यपेक्षया । अतः पश्चात् 'दशमो' गृह्यमाणोऽपि द्विदेवत्यानां तृतीय एव सन् हूयते । अश्विनोरश्विनामप्राप्तिपश्नपूर्वकं दर्शयति–**अथे**त्यादि । "अश्विनौ" इति 'यत्' नाम तत् कथमित्यर्थः । 'इमे' दृश्यमाने 'द्यावापृथिवी' द्यावापृथिव्यौ साक्षाद् 'अश्विनौ' देवौ–"वा छन्दसि" ( पा. सू. ६।१।१०६ ) इति पूर्वसवर्णदीर्घः । द्यावापृथिव्यौ कृत्स्नं जगद् व्याप्नुतः अतस्तदात्मकयोरश्विनोरपि व्यापकत्वादश्वित्वम् । 'पुष्करस्रजौ' इति अश्वित्वमेव समर्थ्यते । अश्विनोः पुष्करस्रक्त्वं कस्मिंश्चिन्मन्त्रे अम्नायते–"मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजौ"–इति ( पा. गृ. सू. १ । ३ । १९ ) ॥ १६ ॥

समन्त्रकं ग्रहणं विधत्ते–**अथात** इत्यादि । अत्र 'अथात' इत्यनेन बहिष्पवमानस्तोत्रानन्तर्यं द्योत्यते । ननु मैत्रावरुणग्रहस्यैन्द्रवायवानन्तरमेव पाठात् तद्ग्रहणवाक्ये–"अथात" इत्यनेन यथैन्द्रवायवानन्तर्यं द्योत्यते, तथात्रापि मैत्रावरुणानन्तरपाठात्तदानन्तर्यमेवाथशब्दो द्योतयतीति चेन्न; "स्तुते बहिष्पवमाने दशमो गृह्यते" इति श्रुत्या विहितत्वात् । एवं तर्हि यथा श्रुतिः क्रमबोधप्रमाणम्, तथा पाठोऽपि ।

---

१–आश्विनं गृह्णात्यन्वारब्धे वा या वामिति । का. श्रौ. सू. ९ । १६५ ।

दध्यङ् ह वाऽआभ्यामाथर्वणः । ( णो ) मधु नाम ब्राह्मणमुवाच तदेनयोः प्रियं धाम तदेवैनयोरेतेनोपगच्छति तस्मान्मधुमत्यर्चा गृह्णाति माध्वीभ्यां त्वेति सादयति ॥ १८ ॥

तानि वाऽएतानि । श्लक्ष्णानि पात्राणि भवन्ति रास्नावमैन्द्रवायवपात्रं तत्तस्य द्वितीयꣳ रूपं तेन तद्द्विदेवत्यमजकावं मैत्रावरुणपात्रं तत्तस्य द्वितीयꣳरूपं तेन तद्द्विदेवत्यमौष्ठमाश्विनपात्रं तत्तस्य द्वितीय ꣳ रूपं तेन

---

दध्यङ् ह वाऽआभ्यामाथर्वणो मधु नाम ब्राह्मणमुवाच । तदेनयोः प्रियं धाम, तदेवैनयोरेतेनोपगच्छति । तस्मान्मधुमत्यर्चा गृह्णाति, माध्वीभ्यां त्वेति सादयति ॥ १८ ॥

तानि वाऽएतानि श्लक्ष्णानि पात्राणि भवन्ति । रास्नावमैन्द्रवायवपात्रम् । तत् तस्य द्वितीयं रूपम् । तेन तद्द्विदेवत्यम् । अजकावं मैत्रावरुणपात्रम् । तत् तस्य द्वितीयं रूपम् । तेन तद्द्विदेव-

---

समिधो यजतीत्यादौ पाठस्य क्रमबोधप्रमाणत्वेनाङ्गीकारात् । तथा च सत्युभयोः प्रमाणयोः समबलत्वात् कदाचिन्मैत्रावरुणग्रहानन्तरं ग्रहणं कदाचिद्बहिष्पवमानानन्तरमिति ऐच्छिकक्रमोऽस्त्विति चेत् नैवमपि शङ्क्यम् । पाठः साक्षात् क्रमस्य न विधायकः, किन्तु अन्यथानुपपत्त्या कल्पयति । श्रुतिस्तु साक्षादेव क्रममभिधत्ते, अतः प्रत्यक्षत्वेन प्राबल्यात् श्रुत्या पाठो बाधनीयः । तथा च सत्येवं "अयात" इत्यनेन बहिष्पवमानानन्तर्यं द्योत्यत इति—उक्तं तदुपपन्नं भवति । ग्रहणमन्त्रस्यायमर्थः—हे 'अश्विना' अश्विनौ ! युवयोः शोभना 'ऋतावती' मधुब्राह्मणवती च 'या' 'कशा' ( निघं १ । ११ । ४३ ) वागस्ति 'तया' वाचा मिमिक्षतं ग्रहं सेक्तुमिच्छतम् "मिह सेचने"— (धा. पा. भ्वा. प. १०१७ ) हे सोमरस ! उपयामेन 'गृहीतोऽसि' त्वाम् 'अश्विभ्यां' गृह्णामीति शेषः । विधत्ते—तद्यदित्यादि । ग्रहणसादने—एष त इत्यादि । हे सोमरस ! 'माध्वीभ्यां' मधुब्राह्मणमधीतवद्भ्यामश्विभ्यामित्यर्थः । माध्वीशब्द "ऋत्व्यवास्त्व्य—" ( पा. सू. ६ । ४ । १७५ ) इति निपातितः । उक्तमर्थकारणमभिधित्सुरनुवदति—तं वा इत्यादि । अनूद्य कारणमाह—तद्यदित्यादि । ग्रहणसादनयोरनयोरुभयोः मधुशब्दप्रयोगस्यायमभिप्रायः ॥ १७ ॥

अथर्वणः पुत्रो 'दध्यङ्' नाम ऋषिः 'मधु' 'ब्राह्मणम्' अनयोः उपदिदेश । "अन्"—( पा. सू. ६ । ४ । १६७ ) इति प्रकृतिभावात् "नस्तद्धिते" ( पा. सू. ६ । ४ । १४४ ) इति टिलोपो न भवति । 'तत्' ब्राह्मणमनयोः 'प्रियं' स्थानम् । अतो ग्रहणसादनयोर्मधुशब्दप्रयोगेण तदेव ब्राह्मणं सम्पादितं भवतीति ॥ १८ ॥

तद्द्विदेवत्यपात्राणां लक्षणान्याह—तानि वा इत्यादिना । 'श्लक्ष्णानि' स्निग्धानि एकरूपाणीत्यर्थः । ऐकरूप्ये द्विदेवत्यत्वात्तत्सिद्धेस्तदनुसारेण द्वैरूप्यसिद्धये ऐन्द्रवायवपात्रं 'रास्नावम्' रास्ना रशना,

---

१—महीधरेण तु—'मधुमती' मधु ब्रह्म तद्वती, मधुब्राह्मणोपनिषत्प्रशंसायुता तथा 'सूनृतावती' प्रियं सत्यं वचः सूनृतं तद्वती, सत्यप्रियवचनोपेतेत्युक्तम् ।

तुद्विदेवुत्यमुथ युदश्विनाविति मुख्यौ वाऽअश्विनावौष्ठमिव वाऽइदं मुखं तुस्मादौष्ठमाश्विनपात्त्रं भवति ॥ १९ ॥

## इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ४-१-५ ॥

---

त्यम् । अथ यदश्विनाविति । मुख्यौ वाऽअश्विनौ । औष्ठमिव वा इदं मुखम्, तस्मादौष्ठमाश्विन-पात्रं भवति ॥ १९ ॥

---

परितः स्रगित्यर्थः । तद्युक्तं कर्त्तव्यम् । मत्वर्थीयो वकारः-( पा. सू. ५।२।१०९ वा. १ ) । एवमुत्तरत्रापि द्विदेवत्यत्वसिद्धये उक्तलक्षणेन द्वैरूप्यं कार्यम् । अजकाशब्देन अजागलस्तनो विवक्ष्यते । तद्युक्तम् 'अज-कावम्' । 'औष्ठं' ओष्ठाकारसहितम् । अश्विनोर्मुखत्वात् मुखसम्बन्ध्योष्ठाकारसहितत्वं तत्पात्रस्य युज्यत इत्यर्थः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे प्रथमाध्याये पञ्चमं ब्राह्मणम् ॥ ( ४-१-५ )॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ १ ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥२॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे प्रथमोऽध्यायः समाप्तः ॥ ४-१॥



# प्रथमप्रपाठके षष्ठं ब्राह्मणम्
# द्वितीयेऽध्याये च प्रथमं ब्राह्मणम् ।

चक्षुषीह वाऽअस्य शुक्रामन्थिनौ । तद्वाऽएष ऽएव शुक्रो य ऽएष तपति तद्यदेष ऽएतत्तपति तेनैष शुक्रश्चन्द्रमा ऽएव मन्थी ॥ १ ॥

तꣳ सक्तुभिः श्रीणाति । तदेनं मन्थं करोति तेनो ऽएष मन्थ्येतौ ह वाऽआसां प्रजानां चक्षुषी स यद्धैतौ नोदियातां न हैवेह स्वौ चन पाणी निर्जानीयुः ॥ २ ॥

( स्तु ) तयोरत्तैवान्यतरः । ( ऽ ) आद्योऽन्यतरोऽत्तैव शुक्र ऽआद्यो मन्थी ॥ ३ ॥

तयोरत्तैवान्यतरमनु । ( न्वा ) आद्योऽन्यतरमन्वत्तैव शुक्रमन्वाद्यो मन्थिनमनु तौ वाऽअन्यस्मै गृह्येते ऽअन्यस्मै हूयेते शण्डामर्कावित्यसुररक्षसे ताभ्यां गृह्येते देवताभ्यो हूयेते तद्यत्तथा ॥ ४ ॥

---

### शुक्रामन्थिनौ ग्रहौ ।

चक्षुषी ह वाऽअस्य शुक्रामन्थिनौ । तद्वाऽएष एव शुक्रः—य एष तपति । तद् यदेष एतत्तपति तेनैष शुक्रः । चन्द्रमा एव मन्थी ॥ १ ॥

तं सक्तुभिः श्रीणाति । तदेनं मन्थं करोति । तेनोऽएष मन्थी । एतौ ह वाऽआसां प्रजानां चक्षुषी । स यद्धैतौ नोदियाताम्—न हैवेह स्वौ चन पाणी निर्जानीयुः ॥ २ ॥

तयोरत्तैवान्यतरः, आद्योऽन्यतरः । अत्तैव शुक्रः, आद्यो मन्थी ॥ ३ ॥

तयोरत्तैवान्यतरमनु, आद्योऽन्यतरमनु । अत्तैव शुक्रमनु, आद्यो मन्थिनमनु । तौ वाऽअन्यस्मै गृह्येते, अन्यस्मै हूयेते । शण्डामर्कौ—इत्यसुररक्षसे । ताभ्यां गृह्येते । देवताभ्यो हूयेते तद्यथा ॥४॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

आश्विनं ग्रहं विधाय शुक्रामन्थिग्रहौ विधातुं चक्षुरात्मना स्तौति—चक्षुषी ह वा इत्यादि । शुक्रश्च मन्थी च 'शुक्रामन्थिनौ' । भाव्यस्य यज्ञस्य 'चक्षुषी' खलु । उक्तमेवानयोश्चक्षुष्ट्वं प्रतिपादयति—तद्वा इत्यादिना । 'तत्' तत्र 'एष' दृश्यमानस्तपति 'एष' 'एव' सूर्यः 'शुक्रः' ग्रहः 'तपति' । शोचते दीप्यते इति तस्य शुक्रनामधेयम् । 'मन्थी' 'चन्द्रमा' 'एव' 'सक्तुभिः' यवचूर्णैर्मिश्रितस्य सोमस्याऽपि मन्थत्वात् तद्भागिनोऽस्य मन्थित्वम् । अनयोः सूर्याचन्द्रमसोरनुदये 'प्रजानां' स्वकीययोरपि पाण्योरदर्शनात्तदुदये तत्सम्भवाच्चक्षुष्ट्वमिति तदात्मकौ शुक्रामन्थिनावपि चक्षूरूपावित्यर्थः । प्रजापतेश्चक्षुषः सकाशादुत्पन्नत्वाच्चानयोश्चक्षुष्ट्वम्, तथा च श्रूयते—"चक्षुषः शुक्रामन्थिनौ" ( तै. शा. १ । ९ । ४ ) इति ॥ १ ॥ २ ॥

चक्षुरात्मना स्तुतौ शुक्रामन्थिनौ पुनर्भोक्तृभोग्यात्मना स्तौति—तयोरित्यादिना । 'तयोः' शुक्रामन्थिनो-

यत्र वै देवाः । ( ऽ ) असुररक्षसान्यपजघ्निरे तदेतावेव न शेकुरपहन्तुं यद्ध स्म देवाः किं च कर्म कुर्वते तद्ध स्म मोहयित्वा क्षिप्र ऽएव पुनरुपद्रवतः ॥ ५ ॥

(स्ते)ते ह देवा ऊचुः । (रु) उपजानीत यथेमावपहनामहा ऽइति ते होचुर्ग्रहावेवाभ्यां गृह्णाम तावभ्युवैष्यतस्तौ स्वीकृत्यापहनिष्यामह ऽ इति ताभ्यां ग्रहौ जगृहुस्तावभ्युवैतां तौ स्वीकृत्यापाघ्नत तस्माच्छण्डामर्काभ्यामिति गृह्येते देवताभ्यो हूयेते ॥ ६ ॥

( तेऽअ ) अपि होवाच याज्ञवल्क्यः । ( ल्क्यो ) नो स्विद्देवताभ्य ऽएव गृह्णियामा ३ विजितरूपमिव हीदमिति तद्वै स तन्मीमाᳫँसामेव चक्रे नेत्तु चकार ॥ ७ ॥

---

यत्र वै देवाऽअसुररक्षसान्यपजघ्निरे तद्—एतावेव न शेकुरपहन्तुम् । यद्ध स्म देवाः । किञ्च कर्म कुर्वते—तद्ध स्म मोहयित्वा क्षिप्रऽएव पुनरपद्रवतः ॥ ५ ॥

ते ह देवा ऊचुः—उपजानीत—यथेमावपहनामहाऽइति । ते होचुः—ग्रहावेवाभ्यां गृह्णामः । तावभ्यवैष्यतः । तौ स्वीकृत्यापहनिष्यामहऽइति । ताभ्यां ग्रहौ जगृहुः, तावभ्यवैताम् । तौ स्वीकृत्यापाघ्नत । तस्माच्छण्डामर्काभ्यामिति गृह्येते, देवताभ्यो हूयेते ॥ ६ ॥

अपि होवाच याज्ञवल्क्यः—नो स्विद्देवताभ्य एव गृह्णीयामा ३ विजितरूपमिव हीदमिति । तद्वै स तन्मीमांसामेव चक्रे नेत्तु चकार ॥ ७ ॥

---

रन्यतरः ' अत्ता ' भोक्ता अन्यतरश्च ' आद्यो ' भोग्यस्तयोर्भोक्तृभोग्यरूपसूर्यचन्द्रात्मत्वेन स्तुतत्वात् । अत्तैचेति । तस्यैव विशेषः । यत एवमनयोर्भोक्तृभोग्यत्वमतो लोकेऽपि भोक्तृवर्गस्तयोरन्यतरं सूर्यात्मकं शुक्रमनुसृत्य वर्तते । शुक्रेऽन्तर्भूत इत्यर्थः । भोग्यवर्गोऽन्यतरं चन्द्रात्मकमेव मन्थिनमनुसृत्य वर्तते । चन्द्रात्मके मन्थिन्यन्तर्भवति । ग्रहयोर्ग्रहणहोमौदर्शयति—तौ वा अन्यस्मा इत्यादि । सुरविरोधिनौ राक्षसौ ' असुररक्षसे ' " अनसन्तान्नपुं० "—( पा. सू. ५ । ४ । १०३ ) इत्यादिना टच् । ' ताभ्यां शण्डामर्काभ्यां ' गृह्येते ' । होमस्तु 'देवताभ्यः' क्रियते । ग्रहणे शण्डामर्कयोर्देवतात्वेनोद्दिष्टत्वात् "देवताद्वन्द्वे च "—(पा. सू. ७।३।२१) इति पूर्वपदस्यानङादेशः । ग्रहणे शण्डामर्कयोः स्वीकारस्य, होमे तत्परित्यागस्य च हेतुं दर्शयिष्यन्नाख्यायिकां प्रस्तौति—तद्यत्तथा यत्रेति । 'तत' 'तथा ' ग्रहणकारणं ग्रहणे शण्डामर्कस्वीकरणमिति यत् तदुच्यत इत्यर्थः । पुरा खलु देवा असुररक्षसामपहननसमये शण्डामर्कौ ' हन्तुं ' न शक्तवन्तस्तौ सर्वं देवकृतं कर्म तिरस्कृत्यागच्छताम् । ततस्ते देवा एतयोर्हननोपायं विचारयतेत्युक्त्वा ग्रहग्रहणेन तावागमिष्यतः, पश्चात् ' तौ ' ' स्वीकृत्य ' हनिष्याम इति पर्यालोच्य तथैवाचरन् । यत एवमकुर्वन्, अत इदानीमपि शण्डामर्कावुद्दिश्यैव ग्रहणम । होमास्तु ' देवताभ्यः ' क्रियन्ते ' अपजघ्निरे '—इत्येवमादौ सर्वत्र च्छान्दसमात्मनेपदम् ॥ ३—६ ॥

शण्डामर्कावुद्दिश्य गृह्यत इति यत्प्रतिपादितं तदेव द्रढयति—अपि होवाचेत्यादि । याज्ञवल्क्योप्येवमुवाच ।

( रे ) इमामु हैके शुक्रस्य पुरोरुचं कुर्व्वन्ति । ( न्त्य ) अयं व्वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो व्विमानऽइति तदेतस्य रूपं कुर्मो य ऽएष तपतीति यदाह ज्योतिर्जरायुरिति ॥ ८ ॥

(ती)इमां त्वेव शुक्रस्य पुरोरुचं कुर्यात् । (त्तं) तं प्रत्नथा पूर्व्वथा व्विश्वथेमथा ज्येष्ठतातिं बर्हिषदᳬं स्वर्व्विदमित्यत्ता ह्येतमन्वत्ता हि ज्येष्ठस्तस्मादाह ज्येष्ठतातिं बर्हिषदᳬं स्वर्व्विदम् । प्रतीचीनं व्वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु व्वर्धसे । उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्व्वीरतां पाहीति सादयत्यत्ता ह्येतमन्वत्ता हि व्वीरस्तस्मादाहैष ते योनिर्व्वीरतां पाहीति दक्षिणार्धे सादयत्येताᳬं ह्येष दिशमनु संचरति ॥ ९ ॥

---

इमामु हैके शुक्रस्य पुरोरुचं कुर्वन्ति । " अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने "–( वा० सं० ७ । १६ ) इति । तदेतस्य रूपं कुर्मो य एष तपतीति यदाह–ज्योतिर्जरायुरिति ॥ ८ ॥

इमां त्वेव शुक्रस्य पुरोरुचं कुर्यात्–" तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् "–( वा० सं० ७ । १२ ) इति । अत्ता ह्येतमनु । अत्ता हि ज्येष्ठः । तस्मादाह–ज्येष्ठतातिं बर्हिषदं स्वर्विदम् । " प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्धसे । उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाहि "–( वा० सं० ७ । १२ ).

---

अथवा अस्मदीयाभ्यो देवताभ्य एव नो गृह्णीयाम उत गृह्णीयाम इति । " संप्रश्ने " ( पा. सू. ३ । ३ । १६१ ) इति लिङ् । " विचार्यमाणानाम् " ( पा. सू. ८ । २ । ९७ ) इति प्लुतः । एतद्देवतोद्देशेन ग्रहग्रहणं विजयरूपं खल्विति । एवं संप्रधार्य स याज्ञवल्क्यस्तत्र विचारमेव 'चक्रे', 'न तु चकार'। ततः पूर्वोक्त एव पक्षोऽनुष्ठेय इति भावः ॥ ७ ॥

विहिते शुक्रस्य ग्रहणे स्वाभिमतं मन्त्रं विधित्सुः शाखान्तरमतं स्वस्यानभिमतमुपन्यस्यति–इमामु हेत्यादिना । पुरा रोचयतीति पुरोरुक् " अयं वेन " इत्येतामृचं 'पुरोरुचं' कुर्वतामयमाशयः–मन्त्रे 'ज्योतिर्जरायुः' इत्यस्योच्चारणेन उभयतोऽस्य सूर्यस्य रूपं सम्पाद्यत इति । एतत्तैत्तिरीयकशाखामतम् । तत्र हि मन्त्रकाण्डे उपांश्वादीनां ग्रहाणां ग्रहणं मन्त्रपाठानन्तरं शुक्रस्य क्रमे " अयं वेन " इत्यस्य पाठात् । अत एव बोधायनः–" अयं वेनश्चोदयत् इति शुक्रं गृहीत्वा " इति ॥ ८ ॥

स्वाभिमतं पक्षं सोपपत्तिकमाह- इमां त्वेवेत्यादि । तं प्रत्नथेति । 'इमां' ऋचमेव कुर्यात् न पुनः शाखान्तरमतप्राप्तमित्यर्थः । अत्रेयमुपपत्तिः–सूर्यस्य भोक्तृत्वं तदात्मकत्वं च लौकिकभोक्तृजातस्य प्रागुक्तम्–"अत्तैव

---

१–अयं व्वेन इत्येके । का० श्रौ० सू० ९ । १३५ । २–शुक्रं वैल्वेन वा तं प्रत्नथेति । का० श्रौ० सू० ९ । १३४ ।

(त्यु) अथ मन्थिनं गृह्णाति । (त्य) अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपाᳬं संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति । उपयामगृहीतोऽसि मर्काय त्वेति ॥ १० ॥

इति सादयति । अत्ता ह्येतमनु । अत्ता हि वीरः । तस्मादाह–एष ते योनिर्वीरतां पाहीति । दक्षिणार्द्धे सादयति एतां ह्येष दिशमनु संचरति ॥ ९ ॥

अथ मन्थिनं गृह्णाति–" अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने । इममपां सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति । उपयामगृहीतोऽसि मर्काय त्वा"–(वा० सं० ७ । १६ ) इति ॥ १० ॥

शुक्रः, अत्रैव शुक्रमनु" इति । भोक्तृभोग्ययोर्भोक्ता प्राधान्येन ज्येष्ठः । " अतोऽत्र ज्येष्ठतातिम् " इति ज्येष्ठशब्देन भोक्ता शुक्रात्मकः सूर्यः प्रकाश्यत इति, शुक्रग्रहणे इयमेव पुरोरुक्कार्येति । होममन्त्रे–"तस्मा इन्द्राय" ( वा. सं. ७ । १९ ) इति निर्देशादस्या इन्द्रो देवता । माहेन्द्रत्वप्रसिद्धम् त्वां स्तुम इति शेषः । प्रत्नथेत्यादौ " प्रत्न-पूर्व–" ( पा. सू. ५ । ३ । २६ )इत्यादिना थाल्प्रत्ययः । अतोऽयमुपमार्थीयः । प्रत्नाः ( निघं ३ । २७ । १ ) पुरातनाः भृग्वादय इव, पूर्वे पित्रादय इव, विश्व इव, समस्ता अवशिष्टा ऋषय इव, ' इमथा ' इमे इदानीन्तना यजमाना इव, त्वा स्तुमः । कीदृशं ' ज्येष्ठतातिं ' प्रशस्तं " वृकज्येष्ठाभ्यां " ( पा. सू. ५ । ४ । ४१ ) इति स्वार्थिकस्तातिल्प्रत्ययः । स्तीर्णे बर्हिषि यज्ञे स्थितं स्वर्गं लब्धवन्तं प्रत्यगात्मभूतं त्वां स्तुमः । त्वं च ' धुनिम् ' अस्मान् कम्पयन् ' वृजनं ' वर्जनीयं पापं ' दोहसे ' क्षारयसि, विनाशयसीत्यर्थः । क पुनः स्तोत्रं ' यासु ' क्रियासु क्षिप्रमन्यान् यजमानान् ' जयन्तं ' यजमानं वर्द्धयसे तासु स्तुमः इति पूर्वेण सम्बन्धः । हे सोमरस ! ' उपयामगृहीतोऽसि ' त्वां ' शण्डाय ' गृह्णामि । नन्वस्य मन्त्रस्य " अत्ता हि ज्येष्ठः "–इत्येतद्ब्राह्मणानुसारेण सूर्यपरत्वमवगम्यते–तत् कथमिन्द्रपरत्वेन व्याख्यानमिति । उच्यते–इन्द्रोऽपि सूर्यात्मकस्तन्मूर्तिभेदत्वात् । तथा च श्रूयते–" धाता चार्यमा च अंशश्च भगश्च इन्द्रश्च विवस्वांश्चेत्येते " ( तै. आ. उ. १–१३ ) इति । तथा मन्त्रशास्त्रेऽपि इन्द्रस्य सूर्यात्मकत्वं प्रसिद्धम्–"धाता चार्यममित्रा वरुणांशभगा विवस्वदिन्द्रयुताः । पूषाह्वयपर्जन्यौ त्वष्टा विष्णुश्च भानवः प्रोक्ताः ॥"–इति । अत इन्द्रपरत्वेन व्याख्यानमुपपद्यते ॥

गृहीतस्य सोमरसस्य समन्त्रकं सादनं विधाय व्याचष्टे–एष ते योनिरित्यादि । भोक्तृवर्गः सूर्यरूपः शुक्रात्मकः अत एव समर्थः । तस्मात्प्रजानां सामर्थ्यं ' पाहि ' पालयेति मन्त्र आहेत्यर्थः । पात्रप्रयोगकाले दक्षिणभागे प्रयुज्यत इति तत्रैव सादयेत् । तथा च कात्यायनः–" दक्षिणपूर्वार्द्धे शुक्रामन्थिनोर्दक्षिणं शुक्रस्य " ( का. श्रौ. सू. ९ । २४ । २९ ) इति ॥ ९ ॥

विहितं मन्थिनोर्ग्रहणमनूद्य मन्त्रं विधत्ते–अथेत्यादि । मन्त्रस्यायमर्थः–अत्र पूर्वार्द्धे अधिदैवतमवस्थितः सोमः स्तूयते । उत्तरार्द्धे अधियज्ञम् । ' वेनः ' कान्तः । " वेनो वेनतेः कान्तिकर्मणः " इति यास्कः । ( निरु. १० । ४ । १ ) "व्रिन कान्तौ " इत्यस्मादजन्तः । ' जरायुः ' इति गर्भवेष्टनम् । ' ज्योतिः ' एव

१–मंथिनमयं व्वेन इति । का० श्रौ० सू० ९ । १३६ ।

  

तं॑ सक्तु॒भिः॑ श्रीणाति । तद्यत्स॒क्तुभिः॑ श्रीणाति॒ वरु॑णो ह॒ वै सोम॑स्य॒ राज्ञो॑ऽभीवा॒क्षि प्रति॑पिपेष॒ तद॑श्वय॒त्ततोऽश्वः॒ सम॑भव॒त्तद्य॒च्छ्वय॑थात्सम॒भ॑व॒त्तस्मा॑द॒श्वो नाम॒ तस्या॒श्रु प्रास्क॑न्द॒त्ततो॒ यवः॒ सम॑भव॒त्तस्मा॑दाहुर्व॒रु॒ण्यो यव॒ऽइति॒ तद्य॑दे॒वास्या॒त्र चक्षु॑षो॒ऽमीयत॒ तेनै॒वैन॑मे॒तत्सम॑र्धयति कृ॒त्स्नं क॑रोति॒ तस्मा॑त्सक्तु॒भिः॑ श्रीणाति ॥ ११ ॥

स॒ श्रीणाति । मनो॒ न येषु॒ हव॑नेषु ति॒ग्मं॒ विपः॒ शच्या॒ व॒नु॒थो द्रव॑न्ता । आ यः शर्या॑भिस्तुविनृ॒म्णो॒ऽअस्या॒श्रीणी॑ता दि॒शं ग॒भस्ता॒वेषु॒ ते यो॒निः॒ प्र॒जाः॒ पाही॒ति सा॑दयत्या॒द्यो ह्ये॒तम॒न्वाद्या॒ ही॒माः प्रजा॒ वि॒शस्तस्मा॑दाहै॒षु ते॒ यो॒निः॒ प्र॒जाः॒ पाही॒ति ॥ १२ ॥

---

तं सक्तुभिः श्रीणाति । तद् यत्सक्तुभिः श्रीणाति । वरुणो ह वै सोमस्य राज्ञोऽभीवाक्षि प्रतिपिपेष । तदश्वयत् । ततोऽश्वः समभवत् । तद् यच्छ्वयथात्समभवत्–तस्मादश्वो नाम । तस्याश्रु प्रास्कन्दत् । ततो यवः समभवत् । तस्मादाहुः–वरुण्यो यव इति । तद् यदेवास्यात्र चक्षुषोऽमीयत–तेनैवैनमेतत्समर्धयति; कृत्स्नं करोति । तस्मात्सक्तुभिः श्रीणाति ॥ ११ ॥

स श्रीणाति–मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता । आ यः शर्याभि-

---

जरायुर्वेष्टनं यस्य सः तथोक्तः । 'रजसः' उदकस्य 'विमाने' निर्माणस्थाने आकाश इत्यर्थः । तस्मिन् 'अयं' सोमः 'पृश्निगर्भाः' आदित्यगर्भा अपः 'चोदयत्' चोदयेत् । "लिङर्थे लेट्" ( पा. सू. ३ । ४ । ७ ) "इतश्च लोपः परस्मैपदेषु" ( पा. सू. ३ । ४ । ९७ ) इतीकारलोपः । बहुलग्रहणात् ( पा. सू. ३ । १ । ३४ ) सिप्प्रत्ययो न भवति । अपामादित्यगर्भत्वम् "आपः सूर्ये समाहिताः" (तै.आ.उ.१–८.) इति श्रुतेः । अथाधियज्ञं सोमः स्तूयते–'इमं' सोमम् 'अपां' 'सूर्यस्य' च संपर्कैर्गृहीताभिर्वसतीवरीभिरभिषुतं 'विप्राः' मेधाविनः क्षीरादिना 'शिशुं न' शिशुमिव 'मतिभिः' मतिपूर्विकाभिः स्तुतिभिः 'रिहन्ति' अर्चन्ति । रिहतिरर्चाकर्मसु पठितः ( निघं. ३ । १४ । ११ ) ॥ १० ॥

गृहीतस्य सोमरसस्य यवपिष्टैर्मिश्रणं, तस्योपाख्यानेन हेतुं चाह–तं सक्तुभिरित्यादिना । तद्यदिति । 'सक्तुभिः श्रीणाति' इति यत् तत्कारणमुच्यत इत्यर्थः । 'अश्वयत्' प्रवृद्धमभूत् । "टुओश्वि गतिवृद्ध्योः" ( धा. पा. भ्वा. प. १०३९ ) इति धातुः । 'श्वयथात्' इति (इ)उकारस्य व्यत्ययेनाकारः । वरुण्य इति । "भवे छन्दसि"–( पा. सू. ४ । ४ । ११० ) इति यत्प्रत्ययः । तद्यदिति । 'अस्य' सोमस्य 'चक्षुषः' सकाशात् देवांशरूपम् 'अमीयत' अपगतमभूत् । यदेतेन यवपिष्टमिश्रणेन 'तेनैव' अंशेन 'एनं' सोमं 'समर्द्धयति' तेन च 'कृत्स्नं' संपूर्णं करोतीत्यर्थः ॥ ११ ॥

विहितं मिश्रणमनूद्य मन्त्रं विधत्ते–स श्रीणातीति । मनो न येष्विति । हे 'विपः' विपश्चितः ! ।

---

१–सक्तुभिः श्रीणात्येनं मनो न येष्विति । का० श्रौ० सू० ९ । १३७ ।

द्वौ प्रोक्षितौ यूपशकलौ भवतः । ( तौ ) द्वावप्रोक्षितौ प्रोक्षितं चैवाध्वर्यु-रादत्तेऽप्रोक्षितं चैवमेव प्रतिप्रस्थाता प्रोक्षितं चैवादत्तेऽप्रोक्षितं च शुक्रमे-वाध्वर्युरादत्ते मन्थिनं प्रतिप्रस्थाता ॥ १३ ॥

सोऽध्वर्युः । ( स ) अप्रोक्षितेन यूपशकलेनापमार्ष्ट्यपमृष्टः शण्डऽइत्येव-मेव प्रतिप्रस्थातापमृष्टो मर्कऽइति तदाददानावेवासुररक्षसेऽअपहतो देवा-स्त्वा शुक्रपाः प्रणयन्त्वित्येवाध्वर्युर्निष्क्रामति देवास्त्वा मन्थिपाः प्रणय-न्त्वितिप्रतिप्रस्थाता तदेतौ देवताभ्यऽएव प्रणयतः ॥ १४ ॥

---

स्तुविनृम्णोऽस्याश्रीणीता दिशम् । गभस्तावेष ते योनिः प्रजाः पाहि–" ( वा. सं. ७-१७ ) इति सादयति । आद्यो ह्येतमनु । आद्या हीमाः प्रजा विशः । तस्मादाह–एष ते योनिः प्रजाः पाहीति १२

द्वौ प्रोक्षितौ यूपशकलौ भवतः, द्वावप्रोक्षितौ । प्रोक्षितं चैवाध्वर्युरादत्ते, अप्रोक्षितं च । एवमेव प्रतिप्रस्थाता प्रोक्षितं चैवादत्तेऽप्रोक्षितं च । शुक्रमेवाध्वर्युरादत्ते, मन्थिनं प्रतिप्रस्थाता ॥ १३ ॥

सोऽध्वर्युरप्रोक्षितेन यूपशकलेनापमार्ष्टि–" अपमृष्टः शण्डः "( वा. सं. ७।१२ )–इति । एवमेव प्रतिप्रस्थाता–" अपमृष्टो मर्कः " ( वा. सं. ७।१७ )–इति । तदाददानावेवासुररक्षसेऽअपहतः– "देवास्त्वा शुक्रपाः प्रणयन्तु" ( वा.सं. ७।१२ ) इत्येवाध्वर्युर्निष्क्रामति । " देवास्त्वा मन्थिपाः प्रणयन्तु–वा.सं.७।१७) " इति प्रतिप्रस्थाता । तदेतौ देवताभ्य एव प्रणयतः ॥१४॥

---

प्रातिपदिकैकदेशः । सलोपश्छान्दसः । ' येषु ' होमेषु ' तिग्मं ' ' मनो ' ' न ' तीव्रं मन इव ( निरु. १ । २ । १ ) द्रवन्तौ–" सुपां सुलुग् ", ( पा. सू. ७ । १ । ३९ ) इत्याकारादेशः । शुक्रा-मन्थिनौ ' शच्या ' कर्मणा निमित्तेन ' वनुथः ' प्राप्नुतः । व्यत्ययेन मध्यमपुरुषः ( पा. सू. ३ । १ । ८९ ) ( सकाशात् ) देवांशभूतेषु होमेषु प्राप्तौ ' यः ' ' तुविनृम्णो ' ( निघं. ३ । १ । २ ) बहुबलो ( निघं. २।९।९ ) मन्थ्यस्ति । ' अस्य ' इमं ग्रहं ' गभस्तौ ' पाणौ धृत्वा ' शर्य्याभिः ' स्वाङ्गुलीभिः ' आदिशं ' प्रतिदिशं यवपिष्टैः । ' आश्रीणीत ' मिश्रयत । गभस्तिशब्दः पाणिवचनः, " पाणी वै गभस्ती " इति श्रुतेः । ग्रहस्य सादनं समन्त्रकं विधाय व्याचष्टे–एष त इत्यादि । आद्यो हीति । ' आद्यो ' भोग्यवर्गः, चन्द्रात्मकस्य मन्थिनोऽवस्थाभेद इत्युक्तम् ( श. प. ४ । २ । १ । २–३ ) । प्रजाश्च भोग्याः; अतश्चन्द्रात्मकस्य मन्थिनो भोग्यप्रजारक्षकत्वं मन्त्र आहेत्यर्थः ॥ १२ ॥

प्रसङ्गाच्छुक्रामन्थिग्रहयोर्होमकाले कर्त्तव्यमनुष्ठानविशेषं विधत्ते–द्वौ प्रोक्षिताविति । आह–अपमार्ष्टीति । ग्रहगतं धूल्यादिकमपध्वंसयेत् । तदित्यादि । एतेन रक्षोपध्वंसनेन ग्रहौ ' आददानौ ' स्वीकुर्वाणौ । ' एव ' ' असुररक्षसे ' सुरविरोधिनौ राक्षसावपसार्य्य ' हतो ' हिंस्त इत्यर्थः ॥

उभयोर्निष्क्रमणं समन्त्रकमाह–देवास्त्वेत्यादि । हे शुक्रग्रह ! ' शुक्रपाः ' शुक्रग्रहस्य पातारो देवास्त्वां

---

१–प्रोक्षितौ यूपशकलावादायापिधानं प्रोक्षिताभ्यामपमार्जनमप्रोक्षिताभ्यामपमृष्टः शंडइत्यध्वर्युरपमृष्टो मर्क इति प्रतिप्रस्थाता । का०श्रौ०सू० ९ । १९४ । २–देवास्त्वेति निष्क्रामतो यथालिंगम् । का०श्रौ० सू० ९ । १९५ ।

( स्तौ ) तौ जघनेनाहवनीयमरत्नी संधत्तः । (स्ता) ताऽउत्तरवेदौ सादयतो दक्षिणायामेव श्रोणावध्वर्युः सादयत्युत्तरायां प्रतिप्रस्थाताताननुसृजन्तावेवानाधृष्टासीति तद्रक्षोभिरेवैतदुत्तरवेदिमनाधृष्टां कुरुतो विपर्येष्यन्तौ वाऽएतावग्निं भवतोऽत्येष्यन्तौ तस्माऽएवैतान्निह्नुवाते तथो हैनौ विपरियन्तावग्निर्न हिनस्ति ॥ १५ ॥

सोऽध्वर्युः पर्यैति । सुवीरो व्वीरान्प्रजनयन्परीहीत्यत्ता ह्येतमन्वत्ता हि व्वीरस्तस्मादाह सुवीरो व्वीरान्प्रजनयन्परीहीत्यभि रायस्पोषेण यजमानमिति तद्यजमानायाशिषमाशास्ते यदाहाभि रायस्पोषेण यजमानमिति ॥१६ ॥

---

तौ जघनेनाहवनीयमरत्नी सन्धत्तः । ता उत्तरवेदौ सादयतः दक्षिणायामेव श्रौणावध्वर्युः सादयति, उत्तरायां प्रतिप्रस्थाता अननुसृजन्तावेव । " अनाधृष्टासि "–( वा. सं. ७ । १२ ) इति । तद्रक्षोभिरेवैतदुत्तरवेदिमनाधृष्टां कुरुतः । विपर्येष्यन्तौ वाऽएतावग्निं भवतोऽत्येष्यन्तौ तस्माऽएवैतन्निह्नुवते । तथो हैनौ विपरियन्तावग्निर्न हिनस्ति ॥ १५ ॥

सोऽध्वर्युः पर्येति–"सुवीरो वीरान्प्रजनयन् परीहि"–( वा. सं. ७ । १३ ) इति । अत्ता ह्येतमनु अत्ता हि वीरः । तस्मादाह–सुवीरो वीरान्प्रजनयन्परीहीति । "अभि रायस्पोषेण यज-

---

' प्रणयन्तु ' यत्र स्थित्वा यागः क्रियते तं देशं प्रापयन्त्वित्यर्थः । एवमुत्तरत्रापि मन्त्रयोजना । तदिति । 'तत्' तेन मन्त्रोच्चारणेन देवतार्थमेव ' एतौ ' ग्रहौ प्रापयतः । शण्डामर्कार्थं गृह्यमाणावपि न तदर्थमित्यर्थः ॥ १३ ॥ १४ ॥

निष्क्रमणानन्तरं कर्त्तव्यमरत्निसन्धानादिकं विधत्ते–तौ जघनेनेत्यादि । ' आहवनीयं ' ' जघनेन ' आहवनीयस्य पश्चाद्भागे । ता उत्तरवेदाविति । ' तौ ' शुक्रामन्थिग्रहौ, " लोपः शाकल्यस्य "–( पा. सू. ८ । ३ । १९ ) इति वकारलोपः । ' अननुसृजन्तौ ' अपरित्यजन्तौ दक्षिणस्यां श्रोणौ ' अध्वर्युः ' उत्तरस्यां ' प्रतिप्रस्थाता ' सादयेत् । तत्र " अनाधृष्टाऽसि " इति मन्त्रः । हे उत्तरवेदि ! 'अनाधृष्टाऽसि' अनाधर्षिता अहिंसितेत्यर्थः । " आदितश्च "–( पा. सू. ७ । २ । १६ ) इतीडभावः । ' तत् ' इत्यनेन ' रक्षोभिः ' ' उत्तरवेदिम् ' अहिंसितां ' कुरुतः ' । किं च होमार्थमुत्तरवेदेः प्रत्यग्देशात्सकाशादाहवनीयं ' विपर्येष्यन्तौ ' विविधं दक्षिणत उत्तरतश्च परितो गमिष्यन्ताविति व्यतिक्रममेव करिष्यमाणौ भवतः । अत एतेन वेदिश्रोण्योर्ग्रहासादनेन अतिक्रमणरूपमपराधं ' तस्मा ' ' अग्नये ' 'अपह्नुवाते' अपनयतः कार्यार्थं गमिष्यावो न तु त्वामतिक्रमिष्याव इत्येतत्सूचयित्वा अग्निरनुसृतो भवति । अतः पश्चात् ' तथा ' गच्छन्तावपि ' अग्निः ' न हिनस्ति इत्यर्थः ॥ १५ ॥

अध्वर्युप्रतिप्रस्थात्रोः परितो गच्छतोर्गमनं समन्त्रकं विदधानो व्याचष्टे–" सोऽध्वर्युरित्यादिना ।

---

१–अपरेणोत्तरवेदिमरत्नी संधायोत्तरवेदिश्रोण्योर्निधत्तोऽविसृजतो दक्षिणस्यामध्वर्युरुत्तरस्यां प्रतिप्रस्थाताऽनाधृष्टासीति । का० श्रौ० सू० । ९ । २१६ । २–सुवीर इति दक्षिणं यूपदेशं गच्छत्यध्वर्युः सुप्रजा इति प्रतिप्रस्थातोत्तरम् । का० श्रौ० सू० ९ । २१७

( त्यु )·अथ प्रतिप्रस्थाता पर्य्येति । सुप्रजाः प्रजाः प्रजनयन्परीहीत्याद्यो ह्येतमन्वाद्या हीमाः प्रजा विशस्तस्मादाह सुप्रजाः प्रजाः प्रजनयन्परीहीत्यभि रायस्पोषेण यजमानमिति तद्यजमानायाशिषमाशास्ते यदाहाभि रायस्पोषेण यजमानमिति ॥ १७ ॥

तावपिधाय निष्क्रामतः।(स्ति)तिरऽएवैनावेतत्कुरुतस्तस्मादिमौ सूर्याचन्द्रमसौ प्राञ्चौ यन्तौ न कश्चन पश्यति तौ पुरस्तात्परीत्यापोर्णुतः पुरस्तात्तिष्ठन्तौ जुहुतऽआविरेवैनावेतत्कुरुतस्तस्मादिमौ सूर्याचन्द्रमसौ प्रत्यञ्चौ यन्तौ सर्व्व एव पश्यति तस्मात्पराग्रेतः सिच्यमानं न कश्चन पश्यति तदु पश्चात्प्रजायमानꣳ सर्व्व एव पश्यति ॥ १८ ॥

---

मानम् "-( वा. सं. ७ । १३ ) इति । तद्यजमानायाशिषमाशास्ते--यदाह अभि रायस्पोषेण यजमानमिति ॥ १६ ॥

अथ प्रतिप्रस्थाता पर्येति–" सुप्रजाः प्रजाः प्रजनयन्परीहि "–( वा. सं. ७ । १८ ) इति । आद्यो ह्येतमनु । आद्या हीमाः प्रजा विशः । तस्मादाह–सुप्रजाः प्रजाः प्रजनयन्परीहीति । "अभि रायस्पोषेण यजमानम् "–( वा० सं० ७ । १८ ) इति । तद् यजमानायाशिषमाशस्ते । यदाह–अभिरायस्पोषेण यजमानामिति ॥ १७ ॥

तावपिधाय निष्क्रामतः । तिर एवैनावेतत्कुरुतः । तस्मादिमौ सूर्याचन्द्रमसौ प्राञ्चौ यन्तौ न कश्चन पश्यति । तौ पुरस्तात्परीत्यापोर्णुतः, पुरस्तात्तिष्ठन्तौ जुहुतः–आविरेवैनावेतत्कुरुतः । तस्मादिमौ सूर्याचन्द्रमसौ प्रत्यञ्चौ यन्तौ सर्वे एव पश्यति । तस्मात्पराग्रेतः सिच्यमानं न कश्चन पश्यति । तदु पश्चात्प्रजायमानं सर्वे एव पश्यति ॥ १८ ॥

---

" सुवीरो वीरान् " इत्यनेनाध्वर्युः परीयात् । अत्र भोक्तृवर्गः सूर्यात्मकस्य शुक्रस्यावस्थाभेदः । भोक्ता च वीरः । अतः सुवीरो वीरानिति मन्त्रभाग आह–' रायस्पोषेण यजमानम् ' इत्यस्य मन्त्रभागस्योच्चारणेन यजमानस्याशीः सम्पाद्यत इत्यर्थः । कृत्स्नमन्त्रस्यायमर्थः–हे शुक्रग्रह ! लोके ' वीरान् ' भोक्तृन् उत्पादयन् त्वं सुवीरस्त्वं धनसमृद्ध्या सह यजमानं परिगच्छेति ॥ १६ ॥

अथ प्रतिप्रस्थाते त्यत्राप्येवं योज्यम् । ( का. श्रौ. सू. ९ । २१७ ) ' आद्यो ' भोग्यवर्गश्च चन्द्रात्मकस्य मन्थिनोऽवस्थाभेदः । प्रजायमाना ' विशः ' च भोग्याः । स्पष्टमन्यत् ॥ १७ ॥

आहवनीयस्य पश्चाद्भागे ग्रहयोराच्छादनं, पुरस्ताद् गत्वा तदपनयनं च विधत्ते–तावपिधायेत्यादि । अत्रानन्तरमेवोपात्तत्वेन प्रकृतत्वात् प्रोक्षिताभ्यां शकलाभ्यामपिदध्याताम् । पिधानस्य तु प्रयोजनं ग्रहयोः प्रागगमनसमये लोकैरनुपलम्भाय तिरोधानम् । शुक्रामन्थिनौ सूर्यचन्द्रात्मकौ, तयोश्च प्रागगतिर्न केनचिदुपलभ्यते, अतस्तदात्मकयोरनयोर्ग्रहयोरपि प्रागत्या लोकैरनुपलब्धयैव भवितव्यमिति । ' पुरस्तात् ' स्थित्वा

तौ जघनेन यूपमरत्नी सुंधत्तः। (त्तो) युद्यग्निर्नोद्धाधेत युद्युऽअग्निरुद्धाधेताप्युग्रेणैव यूपमरत्नी सुंदध्याताᳪंसंजग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषेत्येवाध्वर्युः संजग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषेति प्रतिप्रस्थाता चक्षुषोरेवैतेऽआरमणे कुरुतश्चक्षुषीऽएवैतत्संधत्तस्तस्मादिमेऽभितोऽस्थिनी चक्षुषी सुᳪंहिते ॥ १९ ॥

तौ जघनेन यूपमरत्नी संधत्तः–यद्यग्निर्नोद्बाधेत । यद्युऽअग्निरुद्बाधेत–अप्यग्रेणैवयूपमरत्नी सन्दध्याताम्–" संजग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषा "–( वा. सं. ७ । १३ ) इत्येवाध्वर्युः । " सं जग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषा "–( वा. सं. ७ । १८ ) इति प्रतिप्रस्थाता । चक्षुषोरेवैतेऽआरमणे कुरुतः चक्षुषीऽएवैतत्सन्धत्तः । तस्मादिमेऽभितोऽस्थिनी चक्षुषी संहिते ॥ १९ ॥

आच्छादनम् अपोर्णुतः अपनयतः । तस्य च प्रयोजनं ग्रहयोराविष्करणं; सूर्याचन्द्रमसौ च प्राग्गतौ सर्वैर्दृश्येते, अतस्तदात्मकयोरनयोर्ग्रहयोरपि प्राग्भागे प्रकाशनमुपपद्यत इत्यर्थः । अत एव शाखान्तरेऽप्येवमाम्नायते–" असौ वा आदित्यः शुक्रश्चन्द्रमा मन्थ्यपिगृह्य प्राञ्चौ निष्क्रामतस्तस्मात् प्राञ्चौ यन्तौ न पश्यन्ति प्रत्यञ्चावावृत्य जुहुतस्तस्मात् प्रत्यञ्चौ यन्तौ पश्यन्ति " ( त. सं. ६ । ४ । १० ) इति । ननु सर्वेषां ग्रहाणां प्रत्यग्गतिरेव प्रसिद्धा न तु प्राग्गतिः, अतः सूर्याचन्द्रमसोः प्राग्गतिरिति यदुक्तं तदनुपपन्नमिति चेत्; उच्यते–यदा सूर्यश्चन्द्रमाश्च यस्मिन् नक्षत्रे तिष्ठति तदा तेनैव सह प्रत्यग्गच्छति । तत्र प्रवहणवायुवशेन तस्मिन्नक्षत्रे पुरतः शीघ्रं नीयमाने सति स्वयं पश्चाद्धीयते । स तथाविधः सन् ततः प्राचीनेन नक्षत्रान्तरेण युज्यते । सैव प्राग्गतिः । सा तु न केनचिदप्युपलभ्यते । तथा च ज्योतिःसिद्धान्तेऽभिहितम्–" पश्चाद्व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः । नीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः ॥ प्राग्गतित्वमतस्तेषां भगणैः प्रत्यहं गतिः ॥ "–( सूर्यसि. म. प्र. ) इति । अथ च प्रागुदितौ सूर्याचन्द्रमसौ प्रत्यगस्तं गत्वा पुनः प्रागुदयाय प्रत्यक्तः सकाशात् पाताले प्राग्गच्छतः । तथा गच्छन्तौ तौ न दृश्येते, भूभागव्यवधानात् । तावेव तु प्रागुदयं गतौ दृश्येते । प्राक्तस्तु प्रत्यग् गच्छन्तावव्यवहितत्वात् सर्वैरेव दृश्येते । अतस्तदात्मनोर्ग्रहयोरपि प्राग्गतिसमये सकलाभ्यां पिधानम् । प्रत्यग्गतिसमये तदपनयनं किञ्चित्, यस्मात् प्राग्गमनसमये ग्रहयोराच्छादनं पुरतो गत्वा तदपनयनं कृतम् । ' तस्मात् ' लोकेऽपि ' पराक् ' पराचीनं ' सिच्यमानं ' ' रेतः ' ' न ' कश्चिदपि ' पश्यति ' ' पश्चात् ' प्रत्यगभिमुखं ' जायमानं ' तत् ' सर्व एव ' ' पश्यति ' ॥१८॥

यूपस्य पश्चात् पुरतो वा तयोः पुनरभिसन्धानं समन्त्रकमाह–तौ जघनेनेत्यादि । उद्बाधेत इति दहेदित्यर्थः । सन्धानमन्त्रस्यायमर्थः–' दिवा ' द्युलोकेन पृथिव्या च ' संजग्मानः ' सङ्गच्छमानः, " समो गम्यृच्छी "–( पा. सू. १ । ३ । २९ ) इत्यादिना–आत्मनेपदविधानाल्लिटः कानजादेशः ( पा. सू. ३ । २।१०६ ) द्विर्वचनम् ( पा. सू. ६।१।८ ) । " गमहन " ( पा. सू. ६।४।९८ )। इत्यादिना–उपधालोपः। तथाविधः शुक्रग्रहः शुक्रदेवतासम्बन्धिना तेजसा रक्षसामपघातं करोत्विति शेषः । एवमुत्तरत्रापि मन्त्रे

१–अपरेण यूपमरत्नी संधत्तः संजग्मान इति यथालिंगम् । का० श्रौ० सू० ९ । २१८ ।

सोऽध्वर्युः । ( रु ) अप्रोक्षितं यूपशकलं निरस्यति निरस्तः शण्ड इत्येवमेव प्रतिप्रस्थाता निरस्तो मर्क इति तत्पुराहुतिभ्योऽसुररक्षसेऽअपहतः ॥ २० ॥

( तोऽथा ) अथाध्वर्युः । प्रोक्षितं यूपशकलमाहवनीये प्रास्यति शुक्रस्याधिष्ठानमसीत्येवमेव प्रतिप्रस्थाता मन्थिनोऽधिष्ठानमसीति चक्षुषोरेवैते समिधौ चक्षुषीऽएवैतत्समिन्धे तस्मादिमे समिद्धे चक्षुषी ॥ २१ ॥

तत्र जपति ( त्यु ) अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्यामेत्याशीरेवैषैतस्य कर्मण आशिषमेवैतदाशास्ते ॥ २२ ॥

---

सोऽध्वर्युरप्रोक्षितं यूपशकलं निरस्यति–" निरस्तः शण्डः "–( वा० सं० ७ । १३ ) इति । एवमेव प्रतिप्रस्थाता–" निरस्तो मर्कः "–( वा० सं० ७ । १८ ) इति । तत्पुराहुतिभ्योऽसुररक्षसे ऽअपहतः ॥ २० ॥

अथाध्वर्युः प्रोक्षितं यूपशकलमाहवनीये प्रास्यति–"शुक्रस्याधिष्ठानमसि"–(वा० सं० ७।१३) इति । एवमेव प्रतिपस्थाता–" मन्थिनोऽधिष्ठानमसि "–( वा० सं० ७ । १८ ) इति । चक्षुषोरेवैते समिधौ । चक्षुषीऽएवैतत्समिन्द्धे । तस्मादिमे समिद्धे चक्षुषी ॥ २१ ॥

तत्र जपति–"अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम"–( वा० सं० ७ । १४ ) इति । आशीरेवैषैतस्य कर्मणः । आशिषमेवैतदाशास्ते ॥ २२ ॥

---

योजनीयम् ॥ एतेन सन्धानेन 'चक्षुषोरेव आरमणे' सञ्चारस्थाने 'कुरुतः'। एतस्मिन् स्थाने 'चक्षुषी' अपि 'सन्धत्तः' संहिते कुरुतः । यत एवं 'तस्मात्' लौकिकानां 'चक्षुषी' उभयतोऽस्थिमती 'संहिते' भवतः ॥१९॥

अप्रोक्षितस्य यूपशकलस्य निरसनं प्रोक्षितस्याहवनीये प्रासनं च समन्त्रकं विधत्ते–सोऽध्वर्युरित्यादि । तत् तेन निरसनेन आहुतिकालात् प्रागेव 'असुररक्षसे अपहतः' अपगमय्य हिंस्तः । चक्षुषोरित्यादि । 'एते' 'चक्षुषोः' चक्षुरात्मकयोर्ग्रहयोः सम्बन्धिन्यौ 'समिधौ' यतः, अतः 'चक्षुषी' 'एव' 'ताभ्यां समिन्धे' उज्ज्वलयत्यध्वर्युः प्रतिप्रस्थाता च 'तस्मात्' लौकिकानाम् । 'इमे' दृश्यमाने 'चक्षुषी' प्रकाशमाने भवतः ॥ २० ॥ २१ ॥

होमात् पुरा अध्वर्योर्मन्त्रजपं विधत्त–तत्रेत्यादि । हे 'देव' द्योतमान ! 'सोम' 'अच्छिन्नस्य' अनवखण्डितस्य शोभनप्रभावस्य 'रायो' धनस्य 'पोषस्य' पुष्टिसाधनभूतस्य । करणे घञ् ( पा. सू. ६ । ४ । २७ ) " षष्ठ्याः पतिपुत्र–" ( पा. सू. ८ । ३ । ५३ ) इत्यादिना–विसर्जनीयस्य सकारः । तादृशस्य ते 'ददितारः' देवेभ्यो दातारः 'स्याम' । अत्र सोमदानस्याभिहितत्वात् सोमसाधनकर्म्मविषयैवेयं प्रार्थना, अत एतेन मन्त्रोच्चारणेन ताम् 'एवाशिषमाशास्ते' ॥ २२ ॥

---

१–पूर्व्वेणाशाक्तौ । निरस्यतो निरस्तः शंड इत्यध्वर्युर्निरस्तो मर्क इति प्रतिप्रस्थाता । आहवनीये प्रोक्षितौ प्रास्यतः शुक्रस्याधिष्ठानमित्यध्वर्युर्मन्थिन इति प्रतिप्रस्थाता । का० श्रौ० सू० ९।२१९–२२१ । २–अच्छिन्नस्येति जपित्वा–का०श्रौ०सू०९।२२२।

( स्तेऽथा ) अथाश्राव्याह । प्रातः प्रातः सवस्य शुक्रवतो मधुश्चुतऽइन्द्राय सोमान्प्रस्थितान्प्रेष्येति वषट्कृतेऽध्वर्युर्जुहोति तदनु प्रतिप्रस्थाता तदनु चमसाध्वर्यवः ॥ २३ ॥

( स्तौ ) तौ वै पुरस्तात्तिष्ठन्तौ जुहुतः । ( श्च ) चक्षुषी वाऽएतौ तत्पुरस्तादेवैतच्चक्षुषी धत्तस्तस्मादिमे पुरस्ताच्चक्षुषी ॥ २४ ॥

( षी ऽअ ) अभितो यूपं तिष्ठन्तौ जुहुतः । ( तो ) यथा वै नासिकैवं यूपस्तस्मादिमेऽअभितो नासिकां चक्षुषी ॥ २५ ॥

---

अथाश्राव्याह–' प्रातः प्रातःसवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्य ' इति । वषट्कृतेऽध्वर्युर्जुहोति । तदनु प्रतिप्रस्थाता । तदनु चमसाध्वर्यवः ॥ २३ ॥

तौ वै पुरस्तात्तिष्ठन्तौ जुहुतः । चक्षुषी वाऽएतौ । तत् पुरस्तादेवैतच्चक्षुषी धत्तः । तस्मादिमे पुरस्ताच्चक्षुषी ॥ २४ ॥

अभितो यूपं तिष्ठन्तौ जुहुतः । यथा वै नासिका--एवं यूपः । तस्मादिमेऽअभितो नासिकां चक्षुषी ॥ २५ ॥

---

मन्त्रजपानन्तरमाश्रावणपूर्वकं प्रैषं विधत्ते–अथेत्यादि । आश्रावयेत्येतच्छब्दरूपमाश्रावणम् । प्रातःकाले प्रातःसवनस्य सम्बन्धिनः ' शुक्रवतः ' सारवतो ' मधुश्चुतः ' माधुर्यरसस्यन्दिनः ' इन्द्रार्थं ' ' प्रस्थितान् ' प्रयतान् ' सोमान् ' होतुं होतारं प्रति याज्यापाठार्थं प्रेरयेति मैत्रावरुणं विनियुञ्जीतेत्यर्थः । वषट्कारावसाने ग्रहचमसानां होमं होमार्थमेव स्थानविशेषं चाह–वषट्कृत इत्यादि । ' तदनु ' तद्वचनमनुसृत्येत्यर्थः । ' पुरस्ताद् ' आहवनीयस्य पूर्वभागे ' जुहुतः ' । शुक्रामन्थिग्रहयोश्चक्षुरात्मकत्वात् तयोः पूर्वभागे यद्धारणं तेन लौकिकानाम् ' इमे ' ' चक्षुषी ' ' पुरस्तादेव ' ध्रियेते । तथा यूपस्योभयपार्श्वयोः स्थित्वा होमाल्लोकेऽपि नासिकामुभयतश्चक्षुषी ध्रियेते इत्यर्थः । यद्यप्यत्र सौमिका एवर्त्विजश्चमससम्बन्धाच्चमसाध्वर्यव इति व्यपदिश्यन्त इति प्रतीयते–यथा देवदत्तः पचिक्रियासम्बन्धात् पाचक इति; तथापि " मध्यतः कारिणां चमसाध्वर्यवो, होत्रकाणां चमसाध्वर्यवः " इति षष्ठ्या भेदप्रतीतेरन्य एव चमसाध्वर्यवः । न चैवं शमितेत्यत्रापि यौगिक्याः सञ्ज्ञाया अनाश्रयणादन्य[2] एव स्यादिति शङ्कनीयम्, वैषम्यात् । तत्र हि वरणं नास्ति । अत्र पुनश्चमसाध्वर्यून् वृणीत इति वरणमस्ति[3] । षष्ठी च भेदस्य ज्ञापिकेति वैषम्यम ॥ २३–२५ ॥

---

१–आश्राव्याह प्रातः प्रातःसवस्य शुक्रवतो मधुश्चुत इंद्राय सोमान्प्रस्थितान्प्रेष्येति । उभयतो यूपं प्रत्यङ्मुखौ जुहुतः सा प्रथमेत्यध्वर्युः प्रथमम् । तमनु प्रतिप्रस्थाता । चमसाध्वर्यवश्च । का०श्रौ० सू० ९ । २२२–२२५ ।

२–नात्र यौगिकीसंज्ञाश्रयणाच्छमितुः प्राप्तिः । किंतु शतपथश्रुतौ " शमितैनं कंठे बध्वा नयति " "श्रृतं हविः शमिता ३ रिति" ऋत्विग्व्यतिरिक्तस्य शमितुर्दर्शनात् तत्प्रकल्पनं "व्विशास्ति पशुमन्यः" इति सूत्रकारः सूत्रयामास । अतोऽत्र अन्यशब्देन ऋत्विग्व्यतिरिक्तः शमितोच्यते। नर्त्विज।मेवैकोऽन्यः शमिता यत्र नाम कान्यः प्रकल्प्यते तत्रर्त्विजां कर्तृत्वम् । उपगादर्शनाच्चेति कर्कभाष्यात् । ऋत्विक्षु व्यापृतेषु सत्सु अन्यशब्देन ऋत्विग्व्यतिरिक्तस्य प्रकल्पनं नान्यथा इति अत्रैव सूत्रे कर्क--सिद्धांताच्चेति ॥

३–षोडशर्त्विजो ब्रह्मोद्गातृ०--दुम्नेतॄन् वृणीते का० श्रौ० सू० ७ । ७ । अत्र कर्कभाष्यम्–उपक्रमादेव तत्सिद्धेः षोडशग्रहणं न कर्तव्यम् । वा कर्तव्यम् । चमसाध्वर्युव्युदासार्थम् ।तेषामपि हि क्रतौ यजतामृत्विगाख्या मा भूदिति । अस्त्विति चेत् । न, संख्या-

तौ वै व्वुषट्कृतौ सुन्तौ मुन्त्रेण हूयेते । ( ऽ ) एतेनो हैतौ तद्गुदृश्नु- वाते यदेनौ सुर्व्वᳯं सवनमनु हूयते यद्वैवैतौ सुर्व्वᳯं सवनमनु हूयत ऽएतौ वै प्रजापतेः प्रत्यक्षतमां चुक्षुषी इष्येतौ सत्यं वै चुक्षुः सत्यᳯं हि प्रजापति- स्तुस्मादेनौ सुर्व्वᳯं सवनमनु हूयते ॥ २६ ॥

सु जुहोति । सा प्रथमा संस्कृतिर्व्विश्ववारा सु प्रथमो व्वुरुणो मित्रोऽ- अग्निः । सु प्रथमो बृहस्पतिश्चिकित्वांस्तुस्माऽइन्द्राय सुतमाजुहोत स्वाहेति ॥ २७ ॥

---

तौ वै वषट्कृतौ सन्तौ मन्त्रेण हूयेते । एतेनो हैतौ तद्गुदश्नुवाते—यदेनौ सर्वं सवनमनुहूयते । यद्वैवैतौ सर्वं सवनमनु हूयते—एतौ वै प्रजापतेः प्रत्यक्षतमाम् । चक्षुषी ह्येतौ । सत्यं वै चक्षुः । सत्यं हि प्रजापतिः । तस्मादेनौ सर्वं सवनमनुहूयते ॥ २६ ॥

स जुहोति—" सा प्रथमा संस्कृतिर्विश्ववारा । स प्रथमो वरुणो मित्रोऽअग्निः । स प्रथमो बृहस्पतिश्चिकित्वान् । तस्माऽइन्द्राय सुतमाजुहोत स्वाहा "—( वा. सं. ७ । १४, १५ ) इति ॥ २७ ॥

---

उक्तः शुक्रामन्थिग्रहयोर्होमः समन्त्रकः कर्त्तव्य इत्याह—तौ वा इत्यादि । ' तौ ' ' वषट्कृतौ ' ' सन्तौ ' वषट्कारेण याज्योपलक्ष्यते, तया दीयमानावपि मन्त्रेणाहूयेताम् । इतरेषां ग्रहाणां होमः केवलं याज्ययैव, अनयोस्तु तदतिरिक्तेन मन्त्रेणापीत्यर्थः । उक्तेऽर्थे हेतुं दर्शयति—एतेनेत्यादिना । ' एनौ ' ग्रहौ व्यत्ययेनैनादेशः। ( पा. सू. ३ । १ । ८५ ) ' सर्वं सवनमनु ' सर्वस्मिन् सवने प्रातःसवने माध्यन्दिनसवने चेत्यर्थः । ऐन्द्र- वायवादयो ग्रहा एकस्मिन्नेव सवने हूयन्ते; एतौ ग्रहौ पुनः सवनान्तरेऽपि हूयेते इति, तदभिप्रायेणात्र सर्वशब्द- प्रयोगः । ' एतेन ' व्याप्तिनिबन्धनेन ' एतौ ' शुक्रामन्थिनौ ' तत् ' समन्त्रकहोमरूपं गौरवं प्राप्नुतः । ' एतौ वै प्रजापतेः ' इत्यादिना सवनद्वये होमस्य हेतुः प्रतिपाद्यते । प्रत्यक्षतमामिति । अतिशयेन सन्नि- कृष्टौ । स च सन्निकर्षः प्रजापतेश्चक्षूरूपे तद्ग्रहयोश्च सत्यत्वाभिधानात् प्रत्यक्षमिति । " लक्षणेनाभिप्रती आभिमुख्ये "—( पा. सू. २ । १ । १४ ) इत्यव्ययीभावसमासः । " अतिशायने तमप् "—( पा. सू. ५।३।५५ ) " किमेत्तिङ्— "( पा. सू. ५ । ४ । ११ )इत्यादिना आम् प्रत्ययः । स्वरादित्वादव्ययत्वम् ( पा. सू. १।१।३७ ) चक्षुरन्यथा न पश्यतीति ' सत्यम् ' । तथा चान्यत्र श्रूयते—" चक्षुर्वै सत्यमद्राक्षम् इत्याह—अदर्शमिति । तत् सत्यम "इति । प्रजापतेश्च कृत्स्नप्रपञ्चहेतुत्वेन नित्यत्वात् सत्यत्वम् ॥ २६ ॥

" मन्त्रेण हूयेते " इति होमे यो मन्त्रः सामान्येन निर्दिष्टस्तं होमानुवादेन दर्शयति—स जुहोतीत्यादि । मन्त्रस्यायमर्थः—यस्येन्द्रस्यार्थे " सा देवि देवमच्छेहीन्द्राय सोमम् "—( वा. सं. ४ । २० ) इत्यादिना

---

-त्वात् । ज्योतिष्टोमस्य यज्ञक्रतोः षोडशर्त्विज इति । अतश्च तेषामृत्विग्भिर्बंधनं कार्यं न भवतीति कर्कः । देवयाज्ञिकैरपि अत्रैव सूत्रे अतश्चर्त्विक्संबंधिवरणमधुपर्कतानूनप्त्रसर्पणक्रतुदीक्षणादानदधिधानाभक्षणादिकं चमसाध्वर्यूणां न भवतीति प्रस्फोटितम् । अतश्चमसाध्वर्यूणां न वरणमिति ॥

स युज्जुहोति । सा प्रथमा स प्रथमऽइति शश्वद्ध वै रेतसः सिक्तस्य चक्षुषीऽएव प्रथमे सुंभवतस्तस्माज्जुहोति सा प्रथमा स प्रथमऽइति॥२८

( त्य ) अथ संप्रेष्यति । प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र युज-मानस्य प्रयन्तु सदस्यानाᳬँ होत्राणां चमसाध्वर्यव उपावर्तध्वᳬँ शुक्र-स्याभ्युन्नयध्वमिति संप्रैषऽएवैष पर्येत्य प्रतिप्रस्थाताध्वर्योः पात्रे सᳬँस्रव-मुवनयत्यत्रऽएवैतदाद्यं बलिᳬँ हारयति तमध्वर्युर्होतृचमसेऽवनयति भक्षाय व्वषट्कर्तुर्हि भक्षः प्राणो वै व्वषट्कारः सोऽस्मादेतद्वषट्कुर्वतः पराङिवाभूत्प्राणो वै भक्षस्तत्प्राणं पुनरात्मन्धत्ते ॥ २९ ॥

---

स यज्जुहोति सा प्रथमा, स प्रथम इति । शश्वद्ध वै रेतसः सिक्तस्य चक्षुषी एव प्रथमे सम्भवतः । तस्माज्जुहोति–सा प्रथमा, स प्रथम इति ॥ २८ ॥

अथ संप्रेष्यति–प्रैतु होतुश्चमसः, प्र ब्रह्मणः, प्रोद्गातॄणाम्, प्रयजमानस्य, प्रयन्तु सदस्यानाम्, होत्राणाम्, चमसाध्वर्यव उपावर्तध्वम्, शुक्रस्याभ्युन्नयध्वम् इति । संप्रैष एवैषः । पर्येत्य प्रति-प्रस्थाताऽध्वर्योः पात्रे संस्रवमवनयति–अत्रऽएवैतदाद्यं बलिं हारयति । तमध्वर्युर्होतृचमसेऽवनयति–भक्षाय । वषट्कर्तुर्हि भक्षः प्राणो वै वषट्कारः । सोऽस्मादेतद्वषट्कुर्वतः पराङिवाभूत् । प्राणो वै भक्षः, तत् प्राणं पुनरात्मन्धत्ते ॥ २९ ॥

---

मन्त्रेण सोमस्य क्रयरूपा या संस्कृतिः क्रियते 'सा' 'प्रथमा' अभिषवादिसंस्काराणां तदनन्तरभावित्वात् । 'विश्ववारा' विश्वैः समस्तैर्ऋत्विग्भिर्वरणीया । 'स' एव प्रथमसंस्कृतः सोमः वरुणादयो देवाः । 'स' एव 'चिकित्वान्' अभिज्ञो बृहस्पतिरपि, इति सर्वदेवात्मना सोमः स्तूयते । हे अध्वर्यवः ! 'तस्मा इन्द्राय' 'सुतम्' अभिषुतम् इमं सोमं स्वाहाकारेण 'आजुहोत' होममाहारयत । "तप्तनप्तनथनाश्च" ( पा. सू. ७ । १ । ४५ ) इति तस्य तबादेशेनाङित्त्वाद्गुणः ॥ २७ ॥

अस्मिन् मन्त्रे प्रथमशब्दप्रयोगस्य तात्पर्यमाह–स यज्जुहोति सा प्रथमा स प्रथम इत्यादि । 'शश्वत्' सर्वदा 'सिक्तस्य' 'रेतसः' सकाशात् चक्षुषोरेव प्रथमोत्पत्तेश्चक्षूरूपयोः शुक्रामन्थिग्रहयोर्होममन्त्रेऽपि तत्प्राथ-मिकत्वसूचनाय 'सा प्रथमा स प्रथमः' इति प्रथमशब्दप्रयोग इत्यर्थः ॥ २८ ॥

होमानन्तरं कर्तव्यमध्वर्योः प्रैषमाह–अथ संप्रेष्यतीति । 'प्रेष्यति' तत्कर्तव्ये विनियुङ्क्ते 'प्रैतु' इति–"एत्येधत्यूठ्सु" ( पा. सू. ६।१।८९ ) इति "एङि पररूपम्"–( पा. सू. ६।१।९४ ) इत्यस्यापवादत्वेन वृद्धिः । होत्राणामिति । मैत्रावरुणो, ब्राह्मणाच्छंसी, पोता, नेष्टा, आग्नीध्रश्चेत्येते होत्राशब्देन विवक्षिताः । होत्राशब्दोऽपि नियतस्त्रीलिङ्गः । शुक्रस्याभ्युन्नयध्वमिति । आपस्तम्बेनापि–"तस्मै चमसाध्वर्यवः स्वंस्वं चमसं द्रोणकलशादभ्युन्नीय हरन्ति" ( आप. श्रौ. सू. ) इत्युक्तम् । चमसाध्वर्यवः सचेतना इति तद्भागेऽयं

---

१–प्रेष्यति च । प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य प्र यंतु सदस्याना१ होत्राणां चमसाध्वर्यव उपावर्तध्व२ शुक्रस्याभ्युन्नयध्वमिति । का० श्रौ० सू० ९ । २२६ । २२७ ।

( त्तेऽथ ) अथ यदेते प्रतीची पात्रे न हरन्ति । हरन्त्यन्यान्ग्रहांश्चक्षुषी ह्येते सꣳस्रवमेव होतृचमसेऽवनयति ॥ ३० ॥

( त्यु ) अथ होत्राणां चमसानभ्युन्नयन्ति । हुतोच्छिष्टा वाऽएते सꣳस्रवा भवन्ति नालमाहुत्यै तानेवैतत्पुनराप्याययन्ति तथालमाहुत्यै भवन्ति तस्माद्धोत्राणां चमसानभ्युन्नयन्ति ॥ ३१ ॥

---

अथ यदेते प्रतीची पात्रे न हरन्ति, हरन्त्यन्यान्ग्रहान् । चक्षुषी ह्येते । संस्रवमेव होतृचमसेऽवनयति ॥ ३० ॥

अथ होत्राणां चमसानभ्युन्नयन्ति । हुतोच्छिष्टा वाऽएते संस्रवा भवन्ति—नालमाहुत्यै । तानेवैतत्पुनराप्याययन्ति—तथाऽलमाहुत्यै भवन्ति । तस्माद्धोत्राणां चमसानभ्युन्नयन्ति ॥ ३१ ॥

---

संप्रैषोऽस्तु, चमसानामचेतनत्वेन प्रैषावधारणसामर्थ्यविरहात् तद्भागेऽदृष्टार्थ इत्येतां शङ्कां निरसितुमाह—संप्रैष एवैष इति । यद्यपि ते अचेतनास्तथापि तद्व्यापारेण तेषां नयने नियुक्ताः पुरुषा लक्ष्यन्ते, यथा—" कुम्भाः प्रविशन्तु " इति । तस्मादेष सर्वोऽपि संप्रैष इत्यर्थः । प्रतिप्रस्थात्राऽध्वर्युपात्रे शेषस्यावनयनं विधत्ते—पर्येत्य प्रतिप्रस्थातेति । ' पर्येत्य ' परि आहवनीयस्य पश्चाद्भागं गत्वा । 'संस्रवम्' शेषम् । ' एतद् ' एतेन शेषावनयनेन ' अग्ने ' भोक्तृवर्गाय ' आद्यं बलिं ' भोगरूपां पूजां ' हारयति ' मन्थिग्रहस्य भोग्यरूपस्य चन्द्रात्मकत्वादित्यर्थः । अध्वर्युपात्रगतं सोमं भक्षार्थं होतृचमसेऽवनयेदित्याह—तमध्वर्युरित्यादिना । वषट्कर्तुर्हीति । वषट्कर्तुः होतुः भक्षणं प्रसिद्धम् । " वषट्कर्त्ता प्रथमः सर्वभक्षान्भक्षयति "—( ऐ. ब्रा. ३।३२) इति श्रुतेः । प्राणो वा इति । वषट्कारस्य प्राणत्वमैतरेयके श्रूयते—" वाक्च वै प्राणापानौ वषट्कारः " (ऐ. ब्रा. ३।८) इति । पराङिवेति । पराङ्मुखो निर्गतोऽभूदित्यर्थः । भक्षणस्य तु प्राणत्वं प्राणपुष्टिहेतुत्वात् ॥ २९ ॥

पूर्वस्मिन् वाक्ये—" होतृचमसेऽवनयति भक्षाय " इत्यनेन शुक्रामन्थिग्रहयोः सदः प्रति गमनं निवारितम्, सदोगमनस्य भक्षणार्थत्वाद्, भक्षणस्य होतृचमसेनैव सिद्धत्वादिति तदनूद्य तत्रोपपत्तिमाह—अथ यदेते इत्यादिना । ' अन्यान् ' ऐन्द्रवायवादीन् ग्रहान् सदः प्रति—' हरन्ति ' । ' एते ' ' पात्रे ' ' प्रतीची ' ' न हरन्ति ' सदः प्रति न हरन्त्यध्वर्यव इति यत्, तत्कारणमुच्यते—अत्र पात्रशब्देन तदन्तर्वर्त्तिनौ शुक्रामन्थिग्रहौ चक्षुरात्मकावित्युक्तम्, " चक्षुषी ह वा अस्य शुक्रामन्थिनौ "—( श. प. ४ । २ । १ । १ ) इति । तथा चक्षुषोः पुरत एवावस्थानात् तदात्मकयोरपि पुरत एवावस्थानं युक्तम्, न तु प्रत्यग्गमनम् । भक्षणं तु होतृचमसे शेषस्यावनीतत्वात् सिद्ध्यतीत्यर्थः ॥ ३० ॥

होतृचमसे शेषावनयनानन्तरं होत्रकाणां चमसाभ्युन्नयनं सहेतुकमाह—अथ होत्राणामित्यादि । संस्रवा इति । संस्रावणीयाः प्रतिपत्त्यर्हाः, अतस्तादृशाः सन्तः ' आहुत्यै ' ' नालं भवन्ति ' न पर्याप्ता भवन्तीत्यर्थः ॥ ३१ ॥

---

१—आगम्य प्रतिप्रस्थाता शेषं शुक्रपात्रेऽवनयति । का० श्रौ० सू० ९।२२८। २—तं होतृचमसे। का० श्रौ०सू० ९।२२९। ३—पंचसून्नयंति का. श्रौ. सू. ९ । २३० ।

(न्त्य) अुथ होत्राः संयाजयन्ति । होत्रा ह वै युक्ता देवेभ्यो यज्ञं व्वहन्ति ता एवैतत्सन्तर्पयन्ति तृप्ताः प्रीता देवेभ्यो यज्ञं व्वहानिति तस्माद्धोत्राः संयाजयन्ति ॥ ३२ ॥

स प्रथमायां वा होत्रायाम् । (मि) इष्टायामुत्तमायां वाऽनुमन्त्रयते तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहेति होत्राणामेवैषा तृप्तिरथेत्य प्रत्यङ्ङुपविशत्ययाडग्नीदित्यग्नीद्ध्यत्र यजतामुत्तमः संयजति तस्मादाहायाडग्नीदिति ॥ ३३ ॥

इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥ ४-१-६ । ( ४-२-१ ) ॥
प्रथमः प्रपाठकश्च समाप्तः ॥

---

अथ होत्राः संयाजयन्ति । होत्रा ह वै युक्ता देवेभ्यो यज्ञं वहन्ति–ता एवैतत्सन्तर्पयन्ति, तृप्ताः प्रीता देवेभ्यो यज्ञं वहानिति । तस्माद्धोत्राः संयाजयन्ति ॥ ३२ ॥

स प्रथमायां वा होत्रायामिष्टायामुत्तमायां वाऽनुमन्त्रयते–" तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहा"–( वा. सं. ७ । १९ ) इति । होत्राणामेवैषा तृप्तिः । अथेत्य प्रत्यङ्ङुपविशति । " अयाडग्नीद् "–( वा० सं ७ । १९ ) इति । अग्नीद्ध्यत्र यजतामुत्तमः संयजति । तस्मादाह अयाडग्नीदिति ॥ ३३ ॥

---

होत्रकाणां याजनं विधत्ते–अथ होत्रा इत्यादि । चमसाभ्युन्नयनानन्तरं होत्राः होत्रकान् मैत्रावरुणादीन् ' संयाजयन्ति ' अध्वर्यवो याजयेयुः । मैत्रावरुणादयो नियुक्ताः सन्तो देवार्थं यज्ञं वहन्ति, तेषां याज्यापाठादिना यज्ञनिष्पत्तेर्यज्ञवाहकत्वात् । एतत् एतेन संयाजनेन तानेव मैत्रावरुणादीन् ' सन्तर्पयन्ति ' तृप्तान् कुर्वन्ति । यजमानेन तेषां सोमशेषभक्षणस्य सम्पादनात् । (पा सू. ३ । ४ । ९७) तर्पयतां चाशयः–' तृप्ताः ' तृप्तिं प्राप्ताः ' प्रीताः ' हृष्टाः ' देवेभ्यो यज्ञं ' वहन्त्विति । ' वहान् ' इति लेट् । " लेटोऽडाटौ "-( पा. सू. ३ । ४ । ९४ ) इत्याडागमः । " इतश्च लोपः परस्मैपदेषु " ( पा. सू. ३।४।९७ ) इतीकारलोपः । " संयोगान्तलोपः " ( पा. सू. ८ । २ । २३ ) ॥ ३२ ॥

प्रथमहोत्रकस्योत्तमहोत्रकस्य वा याज्यापाठानन्तरं हुत्वाऽध्वर्युर्मन्त्रयेदित्याह–स प्रथमायामित्यादि । 'प्रथमायां' होत्रायामिष्टायां ' प्रथमे होत्रके वषट्कृते यागे सति सुमन्त्रयेदध्वर्युः । तथा च कात्यायनः–" प्रथमं हुत्वोत्तमं वा तृम्पन्त्विति जपति " ( का. श्रौ. सू. ९।२३३ ) इति । मन्त्रस्यायमर्थः–'यत्' यस्मात् मया 'स्वाहा' स्वाहाकृतम् अतो मद्द्वारा 'सुहुताः' 'सुप्रीताः' ' स्विष्टाः ' च ' याः ' ' होत्राः ' ' ताः ' ' मध्वः ' मधुवन्मधुररसस्य सोमस्य सकाशात् 'तृम्पन्तु' तृप्यन्तु " तृंपतृम्फ तृप्तौ " ( धा. पा. तु. प. २८ ) इति ।

---

१–तानाश्राव्याश्राव्य प्रेष्यति नामग्राहं यज यजेति प्रशास्त्रादीन् । ब्रह्मन्यजेति ब्राह्मणाच्छंसिनम् ।का०श्रौ० सू०९।२३१।१३२।

# द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।
# द्वितीयाध्याये च द्वितीयं ब्राह्मणम् ।

**आत्मा ह वाऽअस्याग्रयणः । सोऽस्यैष सर्व्वमेव सर्व्वꣳ ह्ययमात्मा तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णाति सर्व्वं वाऽइयꣳ सर्व्वमेष ग्रहस्तस्मादनया गृह्णाति ॥ १ ॥**

**आग्रयणग्रहः ।**

आत्मा ह वाऽअस्याग्रयणः । सोऽस्यैष सर्वमेव । सर्वं ह्ययमात्मा । तस्मादनया गृह्णाति । अस्यै हि स्थाली भवति । स्थाल्या ह्येनं गृह्णाति । सर्वं वाऽइयम्, सर्वमेष ग्रहः–तस्मादनया गृह्णाति ॥ १ ॥

धातुः । मध्व इति नुमभावपक्षे "संज्ञापूर्वको विधिरनित्यः" (पा. सू. ६ । ४ ।–१४६ प. ९४) इति "घेर्ङिति"(पा.सू.७।३।१११)इति गुणो न भवति । होत्राशब्दप्रयोगस्योपपत्तिमाह–होत्राणामेवेति । एषा अभिहिता 'तृप्तिः' 'होत्राणामेव' नान्येषाम् । होत्राशब्दो मन्त्र उच्चारित इत्यर्थः । चमसहोमानन्तरं सदो गत्वोपविशेदित्याह–अथेत्यादि[1] । अयाडग्नीदिति । एतद्वाक्यमुक्त्वा प्रत्यङ्मुख उपविशेदित्यर्थः । 'अयाट्' इति यजेर्लुङ् । "बहुलं छन्दसि" (पा.सू.७।३।९७) इति इडागमाभावः, "सिचि वृद्धिः"(पा. सू.:७।२।१) "झलो झलि" (पा.सू.८।२।२६) इति सिचो लोपः । व्रश्चादिना षत्वं जश्त्वं च (पा. सू. ८ । २ । ३६ ॥ ८ । २ । ३९ ॥ ८ । ४ । ५६) मैत्रावरुणादिपरित्यागेनाग्नीध्रकर्तृकयागसमाप्तिकथने कारणमाह–अयाडग्नीदिति । 'यजताम्' अस्मिन् प्रस्तावे याज्याः पठतां मध्ये आग्नीध्र एव 'उत्तमः' अन्तिमो यजति, अतस्तत्कर्तृकयागसमाप्तिकथनेन एवर्त्विजां सोमशेषभक्षणावसरस्तवनाद्धर्षमुत्पादयति । अत एवापस्तम्बः–"अयाडग्नीदिति सभद्रमं कार्यो नः सोमं पाययिष्यतीतरे प्रत्याहुः" इति । अतः 'अयाडग्नीत्' इत्येतदेव ब्रूयादित्यर्थः ॥ ३३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ ४–२–१ ॥

गतेषु ब्राह्मणेषु उपांश्वादयो ग्रहाः प्राणाद्यात्मकत्वेन विहिताः । अत्र तेषां प्राणादीनामाश्रयो यो मध्यदेह-स्तदात्मना विधास्यमानमाग्रयणं स्तौति–आत्मा ह वा इत्यादि । 'आग्रयणः' अस्य प्रजापतेर्मध्यदेहः तदुत्पत्ति-स्तैत्तिरीयके श्रूयते–"आत्मन आग्रयणम्"(तै. शा. १।९।४)इति । प्रजापतिरिति यज्ञ एव, "यज्ञो वै प्रजापतिः" (तै॰ ब्रा. १।३।१०) इति श्रुतेः । अतोऽस्य यज्ञस्याग्रयणः'आत्मा ह वै'मध्यदेह इति प्रसिद्ध इत्यर्थः । अत उक्तेनात्मनाऽस्य ग्रहस्य लब्धं सर्वत्वमाह–सोस्यैष इत्यादि । यस्मात् 'अयं' दृश्यमानो लौकिकानां मध्यदेहः । 'आत्मा' 'सर्वं' शरीरम्, अतस्तदात्मक एष आग्रयणोऽपि यज्ञस्य यजमानस्य वा सर्वं शरीरम् । उक्तं सर्वत्व-मुपजीव्य पृथिव्या ग्रहस्य ग्रहणं विधत्ते–तस्मादित्यादि । 'अनया' इति पृथिव्येत्यर्थः । ननु पृथिव्या ग्रहस्य

१–होतारं प्रत्यङ्ङुपसीदत्ययाडग्नीदिति । का॰ श्रौ॰ सू॰ ९ । २३४ ।

पूर्णं गृह्णाति । सर्व्वं वै पूर्णꣳ सर्व्वमेष ग्रहस्तस्मात्पूर्णं गृह्णाति ॥ २ ॥
विश्वेभ्यो देवेभ्यो गृह्णाति । सर्व्वं वै विश्वे देवाः सर्व्वमेष ग्रहस्तस्माद्विश्वेभ्यो देवेभ्यो गृह्णाति ॥ ३ ॥
सर्व्वेषु सवनेषु गृह्णाति । सर्व्वं वै सवनानि सर्व्वमेष ग्रहस्तस्मात्सर्व्वेषु सवनेषु गृह्णाति ॥ ४ ॥
स यदि राजोपदस्येत् । (त्त) तमत ऽएव तन्वीरन्नतः प्रभावयेयुरात्मा वाऽआग्रयण ऽआत्मनो वाऽइमानि सर्व्वाण्यङ्गानि प्रभवन्त्येतस्मादन्ततो हारियोजनं ग्रहं गृह्णाति तदात्मन्येवास्यां प्रतिष्ठायामन्ततो यज्ञः प्रतितिष्ठति ॥ ५ ॥

---

पूर्णं गृह्णाति । सर्वं वै पूर्णम्, सर्वमेष ग्रहः । तस्मात्पूर्णं गृह्णाति ॥ २ ॥
विश्वेभ्यो देवेभ्यो गृह्णाति । सर्वं वै विश्वेदेवाः, सर्वमेष ग्रहः । तस्माद् विश्वेभ्यो देवेभ्यो गृह्णाति ॥ ३
सर्वेषु सवनेषु गृह्णाति । सर्वं वै सवनानि । सर्वमेष ग्रहः । तस्मात्सर्वेषु सवनेषु गृह्णाति ॥ ४ ॥
स यदि राजोपदस्येत्—तमत एव तन्वीरन्, अतः प्रभावयेयुः । आत्मा वाऽआग्रयणः । आत्मनो वाऽइमानि सर्वाण्यङ्गानि प्रभवन्ति । एतस्मादन्ततो हारियोजनं ग्रहं गृह्णाति । तदात्मन्येवास्यां प्रतिष्ठायामन्ततो यज्ञः प्रतितिष्ठति ॥ ५ ॥

---

ग्रहणं न सम्भवति, अशक्यत्वादेतदनुपपन्नमित्याह—अस्यै हीत्यादि । अस्या इति षष्ठयर्थे चतुर्थी ( पा. सू. २।३।६२। वा.१। ) अस्याः पृथिव्याः सकाशात् 'स्थाली' 'भवति' उत्पद्यते । अतस्तादृश्या स्थाल्या ग्रहस्य ग्रहणे पृथिव्यैव ग्रहणं भवति । ग्रहस्य पृथिव्या ग्रहणे तदीयं सर्वत्वकारणमुक्तम्, तत् कथमिति तदाह—सर्वं वा इयमित्यादि । 'इयं' पृथिवी 'सर्वं' सर्वाश्रयभूता 'एषः' आग्रयणग्रहश्च मध्यदेहात्मत्वेन सर्वेषामङ्गानामाश्रयः । अतस्तस्य तया ग्रहणमुपपद्यत इत्यर्थः ॥ १ ॥

विहितं ग्रहणमनूद्य तस्य ग्रहणस्य भूयिष्ठत्वं सोपपत्तिकं विधत्ते—पूर्णं गृह्णातीति । ग्रहं 'पूर्णं' पात्रान्तराले यथा किञ्चिदप्यवकाशो न सम्भवति तथा गृह्णीयात् । लोके यत् किञ्चित् पूर्णं तत् सर्वं कृत्स्नं भवति यतः, अतोऽस्य सर्वशरीरत्वादिमं ग्रहं पूर्णं गृह्णीयात् ॥ २ ॥

विहिते ग्रहणे देवतासम्बन्धं दर्शयति—विश्वेभ्यो देवेभ्य इत्यादि । सर्वं वै विश्वेदेवा इत्यादि । विश्वेदेवाः इति काश्चन देवतास्ताः सर्वदेवताः तासां सर्वदेवतात्मकत्वं विश्वेदेवा इत्येतन्नामधेयेनैवावगम्यते । तत्र सर्वशब्दार्थस्य विश्वशब्दस्य सद्भावेन साधारण्यावगमात् । न ह्यग्न्यादयः शब्दाः तथा साधारणानि नामधेयानि । तस्माद्विश्वेदेवाः सर्वदेवात्मका इत्यर्थः ॥ ३ ॥

उक्तमेव सर्वत्वमवलम्ब्य ग्रहस्य सवनत्रयेऽपि ग्रहणमाह—सर्वेषु सवनेष्वित्यादि । सर्वं वै सवनानीति । प्रातःसवनादीनि त्रीणि सवनानि 'सर्वं' यज्ञस्य सकलं शरीरमित्यर्थः ॥ ४ ॥

पात्रान्तरगतस्य सोमरसस्य क्षये अस्मादेव ग्रहात्तं समर्त्र्येयेदित्याह—स यदीत्यादि । 'तन्वीरन्'

( त्यु ) अथ यस्मादाग्रयणो नाम । यां वाऽअमूं ग्रावाणमाददानो व्वाचं यच्छत्यत्र वै साग्रेऽवदत्तद्यत्सात्राऽग्रेवदत्तस्मादाग्रयणो नाम ॥ ६ ॥

रक्षोभ्यो वै तां भीषा व्वाचमयच्छन् । (न्ष) षड्वाऽअतः प्राचो ग्रहान्गृह्णात्यथैष सप्तमः षड्वाऽऋतवः संव्वत्सरस्य सर्व्वं वै संव्वत्सरः ॥ ७ ॥

---

अथ यस्मादाग्रयणो नाम । यां वा ऽअमूं ग्रावाणमाददानो वाचं यच्छति–अत्र वै साऽग्रेऽवदत् । तद् यत्सात्राग्रेऽवदत् । तस्मादाग्रयणो नाम ॥ ६ ॥

रक्षोभ्यो वै तां भीषा वाचमयच्छन् । षड् वाऽअतः प्राचो ग्रहान् गृह्णाति । अथैष सप्तमः । षड् वाऽऋतवः संवत्सरस्य । सर्वं वै संवत्सरः ॥ ७ ॥

---

विस्तारयेयुः समर्द्धयेयुरध्वर्यवः । अतः प्रभावयेयुरिति । अतः अस्माद्ग्रहात् पुनरुत्पादयेयुः । 'आत्मा वा' इत्यादिनोक्तस्यार्थस्योपपत्तिः प्रदर्श्यते–'आत्मनो' मध्यदेहाद्धि 'सर्वाणीमानि' करचरणादीनि 'अङ्गानि' 'प्रभवन्ति' उत्पद्यन्ते । "भुवः प्रभवः"–( पा. सू. १ । ४ । ३१ ) । इत्यपादानसंज्ञायाम् "अपादाने पञ्चमी ( पा. सू. २ । ४ । २८ ) अतस्तदात्मकानां सोमानामुत्पादनमुपपन्नम् । सवनत्रय-परिसमाप्त्यनन्तरम् अस्माद् ग्रहाद्धारियोजनं गृह्णीयादित्याह–एतस्मादित्यादि । तदात्मन्येवेति । 'तत्' तेन ग्रहणेन 'आत्मनि' स्वकीयमध्यदेहलक्षणायां प्रतिष्ठायां 'यज्ञः' उपांशुग्रहादिरूपः प्रतिष्ठितो भवति । मध्यशरीरं हि सर्वेषामङ्गानां प्रतिष्ठा ॥ ५ ॥

ग्रहस्याग्रयण इत्येतन्नामधेयं प्रश्नपूर्वकं निर्वक्ति–अथ यस्मादित्यादि । 'यस्मात्' शब्दप्रवृत्तिनिमित्ता-दाग्रयणशब्दो ग्रहस्य नामधेयं, तत् 'अथ' किमित्यर्थः । 'अथ'–शब्दः प्रश्ने ( अमर. ३ । ३।२४६ ) यं 'ग्रावाणम्' उपांशुसवनाख्यम् । 'आददानः' यां वाचम्' अयच्छत् । 'सा' वाक् 'अत्र' समये 'अग्रे' पुरस्तात् 'अवदत्' । अत्र वदतेर्गत्यर्थे पर्यवसानम्, 'तस्मात्' कारणात् अग्रे वाचः अयनम् अग्रयणम् । शकन्ध्वादित्वात् पररूपम् ( पा. सू. १ । १ । ६४ ) । अग्रयणस्य सम्बन्धी आग्रयण इति ग्रहस्य नामधेयमित्यर्थः । आग्रयणशब्दस्य अग्रे वाच आगमनं प्रवृत्तिनिमित्तमितिप्रत्यक्षं तैत्तिरीयके श्रूयते– "साऽमन्यत वागन्तर्यन्ति वै मेति साऽऽग्रयणं प्रत्यागच्छत्तदाग्रयणस्याग्रयणत्वम्" ( तै. सं. ६ । ४ । ११ । २ ) इति ॥ ६ ॥

रक्षोभ्यो वा इत्यादिना वाग्यमनस्य हेतुरभिधीयते । भीषेति । 'भीषा' भयहेतुव्यापारेणेत्यर्थः । "ञि भी भये"–( धा. पा. जु. प. २ ) इत्यस्माण्णिचि ( पा. सू. ३ । १ । २६ ) "भियो हेतुभये षुक्" ( पा. सू. ७ । ३ । ४० ) इति षुगागमे क्विपि ( पा. सू. ३ । २ । ७६ ) रूपम् । यतो ग्रहस्याग्रयण-नामधेयव्युत्पादने वाचो वचनं सिद्धवत्कृत्याभिहितम् । "अत्र वै साग्रेऽवददत्" इति, अतस्तेनैवाध्वर्योराग्रयणे वाग्वदनं प्राप्तम् । तत्रानन्तरेण ग्रन्थेनोपपत्तिमाह–षड्वा अतः प्राच इत्यादि । सर्वं वै संवत्सर इत्यादि । सर्वोऽपि कालः संवत्सरात्मक इति संवत्सरः ॥ ७ ॥

(स्ता) तां देवाः । सर्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्राग्रे व्वाचमवदंस्तथो ऽएवैष एताᳪं सर्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्राग्रे व्वाचं व्वदति ॥ ८ ॥

(त्य) अथातो गृह्णात्येव । ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ॥ अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥ उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयण इति व्वाचमेवैतदयातयाम्नीं करोति तस्मादनया समानᳪं सद्विपर्य्यासं व्वदत्यजामितायै जामि ह कुर्याद्यदाग्रयणोऽस्याग्रयणोऽसीति गृह्णीयात्तस्मादाहाग्रयणोऽसि स्वाग्रयण इति९॥

पाहि यज्ञं पाहि यज्ञपतिमिति । व्वाचमेवैतदुत्सृष्टामाह गोपाय यज्ञमिति

तां देवाः सर्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्राग्रे वाचमवदन्—तथोऽएवैष एतां सर्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्राग्रे वाचं वदति ॥ ८ ॥

अथातो गृह्णात्येव—"ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ । अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम्"—(वा. सं ७। १९) "उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणः"—( वा. सं. ७। २० ) इति । वाचमेवैतदयातयाम्नीं करोति । तस्मादनया समानं सद्विपर्यासं वदति—अजामितायै । जामि ह कुर्याद् यदाग्रयणोऽस्याग्रयणोऽसीति गृह्णीयात् । तस्मादाह—आग्रयणोऽसि स्वाग्रयण इति ॥ ९ ॥

"पाहि यज्ञं पाहि यज्ञपतिम्"—( वा. सं. ७। २० ) इति । वाचमेवैतदुत्सृष्टामाह—गोपाय

सर्वे 'देवाः' 'सर्वस्मिन्' संवत्सरे 'विजिते' स्वायत्ते 'अभयेऽनाष्ट्रे' नाशयितृ रक्षःप्रभृति नाष्ट्रं तद्रहिते सति 'अग्रे' पुरस्तात् 'तां' "वाचमवदन्" । अत ऋतुषट्करूपसंवत्सरात्मके ग्रहषट्के गृहीते सति सर्वं विजितमभयमनाष्ट्रं भवतीति तदनन्तरमाग्रयणग्रहे देवानुसारेणाध्वर्युः 'एतां' वाचमुदितवान्भवति; तस्मादाग्रयणग्रहेऽध्वर्योर्वाग्वदनमुपपन्नमिति भावः ॥ ८ ॥

ग्रहस्य विहितं ग्रहणमनूद्य मन्त्रं चतुर्धा कृत्य विदधानो मन्त्रस्य प्रथमे भागे "आग्रयणोऽसि स्वाग्रयणः" इत्येतद्वाक्यस्याभिप्रायमाह—अथात इत्यादिना[1] । वाचमेवैतदिति । 'एतत्' एतेन आग्रयणोऽसि स्वाग्रयण इत्येवमुच्चारणेनोक्तरूपां वाचमयातयाम्नीम् अनपगतसारां 'करोति' यदि आग्रयणोऽस्याग्रयणोऽसि इत्युक्त्वा गृह्णीयात् तर्हि 'जामि' नैरस्यं हि कुर्यात् । वाक्यद्वयेनाप्येकरूपस्यार्थस्य प्रतीतेरर्थविशेषानवगमाद् वाचो नैरस्यम् । 'तस्मादनया' आग्रयणोऽसि स्वाग्रयण इत्येवंविधया वाचा 'समानम्' एकरूपं 'सत्' अपि सोमद्रव्यं 'विपर्य्यासं' विपर्यस्यान्यथाकृत्वाऽध्वर्युर्वदति । विपर्यासमिति बहुलग्रहणादनाभीक्ष्ण्येऽपि णमुल्प्रत्ययः ( पा. सू. ३।१।८९ ) एवं च स्वाग्रयण इत्यत्र सु इत्यस्य शब्दस्य प्रयोगादर्थविशेषावगतेर्नैरस्यं न भवतीत्यर्थः ।

मन्त्रस्य द्वितीयं भागमुपादाय व्याचष्टे—पाहि यज्ञमित्यादि । वाचमेवैतत् इति यद्वाक्यं 'गोपाय यज्ञम्

१—आग्रयणं द्वयोर्धारयोर्ये देवास इति । का० श्रौ० सू० ९ । १३८ ।

पाहि यज्ञपतिमिति वाचमेवैतदुत्सृष्टामाह गोपाय यजमानमिति यजमानो हि यज्ञपतिर्विष्णुस्त्वामिन्द्रियेण पातु विष्णुं त्वं पाहीति वाचमेवैतदुत्सृष्टामाह यज्ञो वै विष्णुर्यज्ञस्त्वां वीर्येण गोपायत्विति विष्णुं त्वं पाहीति वाचमेवैतदुत्सृष्टामाह यज्ञं त्वं गोपायेत्यभि सवनानि पाहीति तदेतं ग्रहमाह सर्वाणि ह्येष सवनानि प्रति ॥ १० ॥

---

यज्ञमिति । पाहि यज्ञपतिमिति । वाचमेवैतदुत्सृष्टामाह—गोपाय यजमानमिति । यजमानो हि यज्ञपतिः । " विष्णुस्त्वामिन्द्रियेण पातु विष्णुं त्वं पाहि "—( वा. सं. ७ । २० ) इति । वाचमेवैतदुत्सृष्टामाह । यज्ञो वै विष्णुः । यज्ञस्त्वां वीर्येण गोपायत्विति । विष्णुं त्वं पाहीति । वाचमेवैतदुत्सृष्टामाह—यज्ञं त्वं गोपायेति । " अभि सवनानि पाहि "—( वा. सं. ७ । २० ) इति । तदेतं ग्रहमाह । सर्वाणि ह्येष सवनानिं प्रति ॥ १० ॥

---

इति ' ' उत्सृष्टां ' ' वाचमेव ' सम्बोध्याह, न त्वाग्रयणमिति भावः । प्रथमभागस्य व्याख्यानेन व्यवधानात् पाहि यज्ञपतिमिति पुनरवयवस्योपादानम् । एवं सर्वत्र पुनरवयवस्योपादानेऽवगन्तव्यम् ।

तृतीयं भागं व्याचष्टे—विष्णुस्त्वामित्यादि । यज्ञो वै विष्णुरिति । व्याप्नोतीति ' विष्णुः ' यज्ञश्च व्यापकत्वाद्विष्णुरिति व्यपदिश्यते । ' वै '—शब्दोऽत्र यज्ञस्य व्याप्तेः प्रत्यक्षप्रसिद्धिं द्योतयति । अथवा " तेनापशीर्ष्णा यज्ञेन यजमानः " इति क्वचिद् ब्रुवता तत्र " पूर्वं तेषां मखं वैष्णवं यदा आच्छीत—" इत्यादिना महतोपाख्यानेन विष्णुविषय एवार्थो वर्णितः, अतस्तस्य प्रकृतत्वादपशीर्ष्णा यज्ञेन विष्णुरेवाभिहितः । तामेतां प्रसिद्धिमत्रत्यो ' वै—' शब्दः सूचयति ।

चतुर्थं भागं व्याचष्टे—अभि सवनानि पाहीत्यादिना । ' तत् ' तेनोक्तेन वाक्येनाध्वर्युः ' एतं ' प्रकृतमाग्रयणं ' ग्रहमाह—' न तूत्सृष्टां वाचमित्यर्थः । कुत इत्यत आह—सर्वाणि ह्येष सवनानि प्रतीति । ' एषः ' चाग्रयणग्रहः ' सर्वाणि ' ' सवनानि ' ' प्रति ' प्रातरादीनि त्रीणि सवनानि ' प्रति-' लक्ष्य दृश्यते सतः, अतोऽभिसवनानीत्यादिवाक्यमाग्रयणं प्रत्येव प्रयुक्तमित्यर्थः । हे देवासः ! ' देवाः ' " आज्जसेरसुक् " ( पा. सू. ७ । १ । ५० ) ' दिवि ' द्युलोके ' एकादश स्थ ' एकादशसङ्ख्याका भवथ । ' पृथिव्यामधि ' उपरि ' एकादश स्थ ' ये च देवाः ' अप्सुक्षितः ' ' अप्सु ' इत्यन्तरिक्ष नाम ( निघं. १ । ३ । ८ )' तत्र हि ते निवसन्तः । " क्षि निवासगत्योः " ( धा. पा. तु. प. १२६ ) इति धातुः ' एकादश स्थ ' । ' महिना ' महिम्ना, मकारलोपश्छान्दसः । महिनेत्येतस्य त्रिष्वपि सम्बन्धः । ' ते ' सर्वे देवाः यूयम् ' इमं ' ' यज्ञम् ' आग्रयणलक्षणं जुषध्वम् । हे ग्रह ! त्वम् उपयामेन गृहीतोऽसि, आग्रयणनामासि, अतः ' स्वाग्रयणः ' शोभनमग्रे वाचः अयनमागमनं यस्य तादृशोऽसि । हे वाक् ! ' यज्ञं ' ' पाहि, ' यज्ञपतिं याज्ञिकं च पाहि ' विष्णुः ' यज्ञः ' त्वाम् ' ' इन्द्रियेण ' वीर्येण ' पातु ' त्वं च ' विष्णुं पाहि ' । हे आग्रयणग्रह ! त्वं ' सवनानि ' अभितः ' पाहि ' इति कृत्स्नमन्त्रस्यार्थः । यद्यप्यत्र केचित् पाहि यज्ञमित्याद्यपि ग्रहमेव सम्बोध्य व्याचक्षते तथापि " वाचमेवैतदुत्सृष्टामाह " इत्येतद्ब्राह्मणानुसारेणैवं व्याख्यातम् ॥ ९ ॥ १० ॥

( त्य ) अथ दशापवित्रमुपगृह्य हिङ्करोति सा हैषा वागनुद्यमाना तताम तस्यां देवा वाचि तान्तायाᳫँ हिङ्कारेणैव प्राणमदधुः प्राणो वै हिङ्कारः प्राणो हि वै हिङ्कारस्तस्मादपिगृह्य नासिके न हिङ्कर्तुᳫँ शक्नोति सैतेन प्राणेन समजिहीत यदा वै तान्तः प्राणं लभतेऽथ स संजिहीते तथोऽएवैषऽ एतद्वाचि तान्तायाᳫँ हिङ्कारेणैव प्राणं दधाति सैतेन प्राणेन संजिहीते त्रिष्कृत्वो हिङ्करोति त्रिवृद्धि यज्ञः ॥ ११ ॥

( ब्रोऽथा ) अथाह सोमः पवत इति । स यामेवामूं भीषाऽसुररक्षसेभ्यो न निरब्रुवंस्तामेवैतत्सर्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्र निराह तामाविष्करोति तस्मादाह सोमः पवतऽइति ॥ १२ ॥

---

अथ दशापवित्रमुपगृह्य हिङ्करोति । सा हैषा वागनुद्यमाना तताम । तस्यां देवा वाचि तान्तायां हिङ्कारेणैव प्राणमदधुः । प्राणो वै हिङ्कारः । प्राणो हि वै हिङ्कारात्तस्माद् अपिगृह्य नासिके न हिङ्कर्तुं शक्नोति । सैतेन प्राणेन समजिहीत । यदा वै तान्तः प्राणं लभते—अथ स संज्ञिहीते । तथोऽएवैष एतद्वाचि तान्तायां हिङ्कारेणैव प्राणं दधाति । सैतेन प्राणेन सञ्जिहीते । त्रिष्कृत्वो हिङ्करोति । त्रिवृद्धि यज्ञः ॥ ११ ॥

अथाह—" सोमः पवते "—( वा. सं. ७ । २१ ) इति । स यामेवामूं भीषाऽसुररक्षसेभ्यो न

---

ग्रहणानन्तरं दशापवित्रेण सह ग्रहं स्वीकृत्य हिंकुर्यादित्याह—अथेत्यादि । दशापवित्रमिति । दशापवित्रवन्तं ग्रहमित्यर्थः । अर्शआदित्वादच्—प्रत्ययः ( पा. सू. ५ । २ । १२७ ) । एवं च दशापवित्रेण सहितं ग्रहमित्ययमर्थो लभ्यते । तथा च कात्यायनः—" दशापवित्रेणाग्रयणमुपगृह्य त्रिर्हिङ्कृत्य " ( का. श्रौ. सू. ९।१३९ ) इति । विहितं हिङ्कारं प्राणात्मना स्तौति—सा हैषेत्यादि । अनुद्यमानेति । अनुच्चार्यमाणा सती ' तताम ' वाच उच्चारणमेवोज्जीवनं तदभावात् ग्लानिं प्राप्तवतीत्यर्थः । "प्राणो वै हिङ्कारः " इत्यादि हिङ्कारस्य प्राणत्वं प्रसिद्धमिति सामान्येनोक्त्वा तत्प्राणत्वं प्रत्यक्षप्रसिद्धमिति वक्तुम्—" प्राणो हि वै हिङ्कार ! "—इति पुनरभिनयेनोक्तम् । तस्मादिति । हिङ्कारस्य प्राणत्वाल्लोके कश्चिदपि नासिके अपिगृह्य हिङ्कर्तुं न शक्नोति, नासिकयोः प्राणसञ्चारस्थानत्वात् तयोर्ग्रहणे प्राणात्मकत्वाद्धिङ्कारो न सञ्चरतीति । सैतेनेत्यादि । तेन प्राणेन ' सा ' वाक् ' समजिहीत ' सङ्गताऽभूत्, अतो लोकेऽपि यदा जनः ' तान्तः ' सन् ' प्राणं ' लभते ' तदा वाचा सङ्गच्छते तद्वदेव ' एषः ' अध्वर्युः ' हिङ्कारेण ' ' तान्तायां ' 'वाचि' प्राणं दधाति । ' सा ' च तेन ' प्राणेन ' सङ्गच्छते । हिङ्कारस्यावृत्तिसङ्ख्याविशेषं सोपपत्तिकं विधत्ते—त्रिष्कृत्वो हिङ्करोति त्रिवृद्धि यज्ञ इति । यतो ' यज्ञः ' ' त्रिवृत् ' त्रिगुणः यज्ञेऽग्निपरिध्यादीनां त्रित्वात् तस्मात् त्रिवारं हिं कुर्यात् ॥ ११ ॥

हिङ्कारानन्तरमध्वर्योर्वाग्विसर्गसाधनं मन्त्रमाह—अथाह सोमः पवत इत्यादि । ' सः ' अध्वर्युः ' असुर-

(त्य) अ॒स्मै ब्र॒ह्म॒णेऽस्मै॑ क्ष॒त्राये॑ति । तद्ब्र॒ह्म॒णे च॑ क्ष॒त्राय॑ चा॒हास्मै॑ सुन्व॒ते य॑ज॒मा॒नाय॑ पवत॒ऽइति॒ तद्य॑जमा॒नाया॑ह ॥ १३ ॥

तदा॑हुः । ( रे ) ए॒ताव॑दे॒वोक्त्वा॑ सा॒दये॑दे॒ताव॑द्वा॒ऽइद॒ᳯ सर्वं॒ याव॑द्ब्रह्म॒ क्ष॒त्रं वि॒डिन्द्रा॒ग्नी वा॒ऽइद॒ᳯ सर्वं॒ तस्मा॑दे॒ताव॑दे॒वोक्त्वा॑ सा॒दये॑दि॒ति ॥ १४ ॥

तदु॑ ब्रूया॒दे॒व भूयः॑ । ( ऽ ) इ॒षऽऊ॒र्जे प॑वत॒ऽइति॒ वृष्ट्यै॒ तदा॑ह य॒दाहे॒ष॒ऽइत्यूर्ज॒ऽइति॒ यो वृ॒ष्टादूर्ग्र॒सो जा॒यते॒ तस्मै॒ तदा॑हा॒द्भ्य ओष॑धीभ्यः पवत॒ऽइति॒ तद॒द्भ्यश्चौष॑धिभ्यश्चाह॒ द्यावा॑पृथि॒वीभ्यां॒ पवत॒ऽइति॒ तदा॒भ्यां द्यावा॑पृथि॒वीभ्या॑माह॒ ययो॑रि॒दᳯ सर्व॑म॒धि सु॒भू॒ताय॒ पवत॒ऽइति॒ सा॒धवे॒ पवत॒ऽइत्ये॒वैतदा॑ह ॥ १५ ॥

---

निरब्रुवन्–तामेवैतत्सर्वस्मिन्विजितेऽभयेऽनाष्ट्रेऽत्र निराह । तामाविष्करोति । तस्मादाह–सोमः पवतऽइति ॥ १२ ॥

"अस्मै ब्रह्मणेऽस्मै क्षत्राय"–( वा० सं० ७ । २१ ) इति । तद् ब्रह्मणे च क्षत्राय चाह । "अस्मै सुन्वते यजमानाय पवते"–( वा० सं० ७ । २१ ) इति । तद् यजमानायाह ॥ १३ ॥

तदाहुः–एतावदेवोक्त्वा सादयेत् । एतावद्वाऽइदं सर्वम् । यावद्ब्रह्म क्षत्रं विट् इन्द्राग्नी वाऽइदं सर्वम् । तस्मादेतावदेवोक्त्वा सादयेदिति ॥ १४ ॥

तदु ब्रूयादेव भूयः । "इष ऊर्जे पवते"–( वा० सं० ७ । २१ ) इति । वृष्ट्यै–तदाह–

---

रक्षसेभ्यो ' ' भीषा ' भयेन ' याममू ' वाचं न निरब्रुवन् नावोचत् । व्यत्ययेन ( पा. सू. ३ । १ । ८९ ) बहुवचनम् । ' एतत् ' एतेन ' सोमः पवते ' इत्यस्योच्चारणेन ' सर्वस्मिन् ' स्वायत्ते सति ' तां ' वाचं ' निराह ' । अस्यैव व्याख्यानं तामाविष्करोति इति । तस्मादेवमुच्चारयेत् । तथा चापस्तम्बः–" आग्रयणं गृहीत्वा त्रिर्हिङ्कृत्य वाचं विसृजते" ( आप. श्रौ. सू. ) इति । सोमः पवते "–इत्यस्य पुनरुच्चारणं भयापगमसूचनार्थम् । कात्यायनोऽपि सोमः पवत इत्यस्य त्रिरुच्चारणमसूत्रयत्–" त्रिर्हिङ्कृत्य सोमः पवत इति सकृच्छेषम् " ( का. श्रौ० सू० ९ । १३९ ) इति ॥ १२ ॥

मन्त्रे द्वितीयभागस्योपयोगमाह–अस्मै ब्रह्मण इत्यादि । तद्ब्रह्मणे च क्षत्राय चाहेति । ब्राह्मणजातेः क्षत्रियजातेश्च समृद्ध्यै ब्रूत इत्यर्थः–एवम् ' अस्मै ' 'सुन्वते' इत्यादिष्ववगन्तव्यम् । मन्त्रशेषं विधातुमात्मनोऽनभिमतं केषाञ्चिन्मतमुपन्यस्यति–तदाहुरित्यादिना । ' तत् ' तत्र मन्त्रे ' एतावदेव ' उक्तमेव मन्त्रभागं पठित्वा सादयेदिति केचिदाहुः । तथा वदतां चायमाशयः–' ब्रह्म क्षत्रं विट् ' ब्रह्मक्षत्रात्मिका प्रजावती ' एतावदेव ' ' इदं ' दृश्यं समस्तं खलु ' इन्द्राग्नी ' हि प्राधान्येन सर्वात्मकौ तौ च ब्रह्मक्षत्रयोरधिदेवते अतस्तयोस्तद्रूपकत्वेन सर्वात्मकत्वात् " अस्मै ब्रह्मणेऽस्मै क्षत्राय " एतावदेवोक्त्वा ' सादयेदिति ॥ १३ ॥ १४ ॥

स्वमतमाह–तदु ब्रूयादेव भूयः इत्यादि । तत्र पुनश्च " इष ऊर्जे पवते " इत्यादि ' ब्रूयादेव '

तदु हैकऽआहुः । (ब्रं) ब्रह्मवर्चसाय पवतऽइति तदु तथा न ब्रूयाद्यद्वाऽआहास्मै ब्रह्मणऽइति तदेव ब्रह्मवर्चसायाह विश्वेभ्यस्त्वा देवेभ्यऽएष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति तं वै मध्ये सादयत्यात्मा ह्यस्यैष मध्यऽइव ह्ययमात्मा दक्षिणोक्थ्यस्थाली भवत्युत्तराऽऽदित्यस्थाली ॥ १६ ॥

इति द्वितीय प्रपाठके प्रथमं ब्राह्मणम् ॥ ४-२-१ ॥ ( २-२ ) ॥

---

यदाह-इषऽइति । ऊर्जऽइति । यो वृष्टादूर्ग्रसो जायते तस्मै तदाह । "अद्भ्य ओषधीभ्यः पवते"-(वा. सं. । ७ । २१ ) इति । तदद्भ्यश्चौषधिभ्यश्चाह " द्यावापृथिवीभ्यां पवते"-( वा. सं. ७ । २१ ) इति । तदाभ्यां द्यावापृथिवीभ्यामाह ययोऽरिदं सर्वमधि । " सुभूताय पवते "-(वा०:सं० ७ । २१ ) इति । साधवे पवतऽइत्येवैतदाह ॥ १९ ॥

तद्ध हैकऽआहुः-ब्रह्मवर्चसाय पवतऽइति । तद्ध तथा न ब्रूयात् । यद्वाऽआह-अस्मै ब्रह्मणऽइति-तदेव ब्रह्मवर्चसायाह । "विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः "-( वा० सं० ७ । २१ ) इति सादयति । विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति । तं वै मध्ये सादयाति । आत्मा ह्यस्यैषः, मध्यऽइव ह्ययमात्मा दाक्षिणोक्थ्यस्थाली भवति, उत्तराऽऽदित्यस्थाली ॥ १६ ॥

---

यद्यपि ब्रह्मक्षत्रे सर्वात्मके इति तावतैव पर्याप्तम् तथापि ब्रह्मणे क्षत्राय चेत्युक्तेस्तयोरेव समृद्ध्यर्थमिति प्रतीयेत; अत " इष ऊर्जे " इत्याद्यपि ब्रूयादेवेत्यभिप्रायः । ' इषे ' इति यदाह-तत् ' वृष्ट्यै ' इडित्यन्नं ( निघं. २ । ७ । १९ ) तत्साधनस्य वृष्टेरपि तत्कार्यकारणभेदविवक्षया इडिति व्यपदेशः । तथा ' वृष्टाद् ' वृष्टेः सकाशात् " नपुंसके भावे क्तः "-( पा. सू. ३ । ३ । ११४ ) ' ऊर्क् ' अन्नरसो ' जायते ' तत्समृद्ध्ये ' ऊर्जे ' इति वचनम् । ययोरिदं सर्वमधीति । ' ययोः ' द्यावापृथिव्योः इदं दृश्यमानं सर्वमप्याश्रितं तस्मात् " द्यावापृथिवीभ्यां पवते " इत्युक्ते तदाश्रितस्य समस्तजगतः समृद्धये भवतीत्यर्थः । सुभूतपदस्यार्थमाह-साधवे पवत इत्यादि । लोके यः कश्चन न्यायवर्त्ती जनस्तस्मै पवत इति मन्त्र आह ॥ १९ ॥

मन्त्रे ब्रह्मवर्चसायेत्येतत्पदं केचित् पठन्ति तत् पदमात्मनोऽनभिमतमित्यनूद्य निराकरोति-तद्ध हैक इत्यादि । ब्रह्मणे पवत इति यत्, ' तत् ' ' ब्रह्मवर्चसाय पवत ' इत्युक्तं भवति । तस्मात् ' तत् ' पदं ' न ब्रूयात् ' । ब्रह्मवर्चसम् इति वृत्तस्याध्ययनस्य समृद्धिः । "स्याद्ब्रह्मवर्चसं वृत्ताध्ययनार्धिः" (अम. को. २।७।३८) इत्यभिधानात् । "ब्रह्महस्तिभ्यां वर्चसः" ( पा. सू. ५ । ३ । ७८ ) इत्यच् समासान्तः । मन्त्रे वाग्विसृज्यते; तथा च पूर्वं ग्रहणमन्त्रव्याख्याने " वाचमेवैतद्विसृष्टामाह " इति यदुक्तं तदनुपपन्नमिति चेन्न, तत्र भक्षियद्वाग्विसर्जनाभिप्रायेणोक्तत्वादिति । ननु च पूर्वग्रहेष्वपि मन्त्राणामाम्नातत्वात् कथं तूष्णीं ग्रहणम् । एवं तर्हि

अयᳪं ह वाऽअस्यैषोऽनिरुक्त आत्मा यदुक्थ्यः । सोऽस्यैष आत्मै-
वात्मा ह्ययमनिरुक्तः प्राणः सोऽस्यैष आयुरेव तस्मादनया गृह्णात्यस्यै हि
स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताऽजरᳪं ह्यमृतमायु-
स्तस्मादनया गृह्णाति ॥ १ ॥

---

**उक्थग्रहः ।**

अयं ह वाऽअस्यैषोऽनिरुक्त आत्मा, यदुक्थ्यः, सोऽस्यैष आत्मैव । आत्मा ह्ययमनिरुक्तः प्राणः । सोऽस्यैष आयुरेव । तस्मादनया गृह्णाति । अस्यै हि स्थाली भवति । स्थाल्या ह्येनं गृह्णाति । अजरा हीयममृता, अजरं ह्यमृतमायुः । तस्मादनया गृह्णाति ॥ १ ॥

---

" वाचं यच्छति " इत्यनेनोपांशुध्वनिर्विवक्ष्यते–" वाचं विसृजत "–इत्यनेनोच्चैर्ध्वनिः । यत एव तैत्तिरीयके उपांशुवाक्यकाण्डे समाम्नायते–" यान् प्राचीनमाग्रयणाद् ग्रहान् गृह्णीयात् तानुपांशु गृह्णीयात्, यानूर्ध्वांस्तानुपब्दिमतः "– ( तै. सं. ३ । १ । ९ )इति । गृहीतस्य सोमरसस्य समन्त्रकं सादनं विधत्ते–**विश्वेभ्यस्त्वा देवेभ्य** इत्यादि । हे आग्रयण त्वां ' विश्वेभ्यो ' ' देवेभ्यो ' गृह्णामि ' एषः ' खरप्रदेशस्तव स्थानम्, अतस्त्वां विश्वेभ्यो देवेभ्यः सादयामीति मन्त्रस्यार्थः । मन्त्रे विश्वेभ्यो देवेभ्य इत्यस्योच्चारणमुपपन्नम् इत्याह–**विश्वेभ्यो हीति** । विहितं सादनमनूद्य मध्यदेशं तत्रासादने कारणं चाह–**तं वै मध्य** इत्यादि । ' अस्य ' यज्ञस्याग्रयणग्रह आत्मेत्युक्तम् । " आत्मा ह वा अस्याग्रयणः "–( श.प.४।२।२।१ ) इति । ' आत्मा ' च ' मध्य इव ' हि मध्यभाग इत्यर्थः। इवशब्दो वाक्यालङ्कारे। यथा सादितस्य ग्रहस्य ' उक्थ्यस्थाली दक्षिणा ' ' उत्तरा ' च ' आदित्यस्थाली ' ' भवति ' तथा मध्यशरीररूपमाग्रयणं मध्ये सादयेदित्यर्थः ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे
द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥ ४–२–२ ॥

पूर्वस्मिन् ब्राह्मणे आग्रयणग्रहो यज्ञस्य स्थूलशरीरात्मना स्तुत्वा विहितः । अथात्रोक्थ्यग्रहं विधातुं सूक्ष्मशरीरात्मना स्तूयते–**अयं ह वा अस्येत्यादि** । 'उक्थ्यः ' इति ' यत् ' 'एषोऽस्य' यज्ञस्य 'अनिरुक्त आत्मा' अविस्पष्ट आत्मा सूक्ष्मशरीरमित्यर्थः । अयमित्यभिनयेन निर्देशः । **सोऽस्यैष** इति । 'स ' ' एष ' ग्रहो यज्ञस्य ' आत्मैव ' सूक्ष्मशरीरात्मकत्वादासंसारमनुवर्तमानश्च आत्मा च स्थूलशरीरवत् प्रतिजन्म विनश्वर आत्मेत्यर्थः । उक्तं सूक्ष्मशरीरस्यात्मत्वं प्रतिपादयति–**आत्मा हीति** । प्राण आत्मा इति लोके प्रसिद्धः, अतः सूक्ष्मशरीरस्यापि प्राणात्मकत्वेनात्मत्वमित्यर्थः । **सोऽस्येति** । ' स ' ' एष ' सूक्ष्मशरीरात्मको ग्रहः ' अस्य ' यज्ञस्य ' आयुरेव ' भवति । आयुरिति जीवनकालः उक्तमायुष्ट्वमवलम्ब्य ग्रहस्य पृथिव्या ग्रहणमाह–**तस्मादित्यादि** । आयुष्ट्वं पृथिव्या ग्रहणे कथं हेतुरित्यत आह–**अजरा हीति** । ' आयुः ' च अक्षरं ' अमृतं ' भवति । यस्य यावदायुरस्ति तावत आयुषो जरा शैथिल्यं तदभावः अमृतत्वमनष्टत्वं च भवति ॥ १ ॥

तं वै पूर्णं गृह्णाति । सर्व्वं वै तद्यत्पूर्णꣳ सर्व्वं तद्यदायुस्तस्मात्पूर्णं गृह्णाति ॥ २ ॥ ( शतम् २४०० ) ॥

तस्यासावेव ध्रुव आयुः । ( ग ) आत्मैवास्यैतेन सꣳहितः पर्व्वाणि संततानि तद्वाऽअगृहीत एवैतस्मादच्छावाकायोत्तमो ग्रहो भवति ॥ ३ ॥

( त्यु ) अथ राजानमुपावहरति । तृतीयं व्वसतीवरीणामवनयति तत्पर्व समैति प्रथममहोत्तरस्य सवनस्य करोत्युत्तमं पूर्व्वस्य स यदुत्तरस्य सवनस्य तत्पूर्व्वं करोति यत्पूर्व्वस्य तदुत्तमं तद्व्यतिषजति तस्मादिमानि पर्व्वाणि व्यतिषक्तानीदमित्थमतिहानमिदमित्थम् ॥ ४ ॥

---

तं वै पूर्णं गृह्णाति । सर्वं वै तत्—यत्पूर्णम् । सर्वं तत्-यदायुः । तस्मात्पूर्णं गृह्णाति ॥ २ ॥

तस्यासावेव ध्रुव आयुरात्मैव । अस्यैतेन संहितः, पर्वाणि संततानि । तद्वाऽअगृहीत एवैतस्मादच्छावाकायोत्तमो ग्रहो भवति ॥ ३ ॥

अथ राजानमुपावहरति । तृतीयं वसतीवरीणामवनयति । तत् पर्व समैति प्रथममहोत्तरस्य सवनस्य करोति, उत्तमं पूर्वस्य । स यदुत्तरस्य सवनस्य तत्पूर्वं करोति, यत्पूर्वस्य तदुत्तमम्—तद्व्यतिषजति । तस्मादिमानि पर्वाणि व्यतिषक्तानि । इदमित्थमतिहानमिदमित्थम् ॥ ४ ॥

---

विहितग्रहणानुवादेन तस्य सम्पूर्णतां विधत्ते—तं वै पूर्णं गृह्णातीति । 'सर्वं तद्यदायुः' इति यत् तत् सर्वं सकलं नैकदेश आयुरित्यर्थः ॥ २ ॥

नन्वयं ग्रह आयुरित्यभिधीयते आत्मेति च पूर्वमुक्तम्—"अयं ह वा अस्यैषोऽनिरुक्त आत्मा"(पूर्वस्यां कंडिकायां) इति । तथा च सत्ययमुभयात्मकः स्यादित्यत आह—तस्यासावेव ध्रुव इत्यादि । 'असौ' इत्युत्तरस्मिन् ब्राह्मणे विधास्यमानो ध्रुवग्रह एव यज्ञस्यायुः । 'एतेन' उक्थ्यग्रहेण 'आत्मैव' सूक्ष्मशरीररूपः 'संहितः' संयोजितः स्वयं यज्ञस्यात्मरूप एव भवति न पुनरायूरूप इत्यर्थः । आयुरिति व्यवहारस्तु आत्मसन्धानार्थत्वादुपपद्यत इत्युत्तरत्र वक्ष्यते । "तद्यस्यैतेनात्मा संहितस्तेनास्यैष आयुः"(पंचम्यां कंडिकायां)इति । यतोऽयं ग्रहो यज्ञस्यात्मा अतोऽनेन यज्ञस्य पर्वाणि सवनत्रयरूपाणि संहितानि परस्परं संश्लिष्टानि कार्याणि । प्राणरूपेण ह्यात्मनोऽङ्गानां पर्वाणि सन्धीयन्ते । तमेव सन्धानप्रकारं विधत्ते—तद्वा अगृहीत एवैतस्मादित्यादि । उक्थ्यग्रहस्त्रेधा विभज्य हूयते; तत्र प्रथमे उक्थ्यविग्रहे मैत्रावरुणः शस्त्रं पठति । द्वितीये ब्राह्मणाच्छंसी । तृतीये अच्छावाकः । एवं सति एतस्मादुक्थ्यग्रहादच्छावाकसम्बन्धिनि चरमे उक्थ्यविग्रहे अगृहीते सति माध्यन्दिनसवनार्थं सोममभिषवस्थाने स्थापयेत् । 'वसतीवरीणां' च 'तृतीयं' भागमवनयेत् 'तत्' तथा सति 'पर्व' प्रातःसवनलक्षणं माध्यन्दिनसवनलक्षणं च 'समैति' परस्परसमेतं भवति । यतः 'उत्तरस्य' 'सवनस्य' सोमोऽभ्यवहरणरूपं 'प्रथमम्' एवाङ्गं पूर्वं करोति । 'पूर्वस्य' सवनस्य 'उत्तमम्' अङ्गं अच्छावाकोक्थ्यविग्रहहोमरूपं पश्चात् करोति । अतः परस्परं सन्नद्धं भवतीत्यर्थः । उत्तरसवनसम्बन्धिनः प्रथमाङ्गस्य पूर्वमनुष्ठाने पूर्वसवनसम्बन्धिनश्चान्तिमाङ्गस्य पश्चादनुष्ठाने व्यतिषङ्गाल्लोकेऽपि शारीराणि पर्वाणि व्यतिषक्तानि

( मे ) एवमेव माध्यन्दिने सवने । (ऽ) अगृहीतऽएवैतस्मादच्छावाकायोत्तमो ग्रहो भवत्यथ ततीयं व्वसतीवरीणामवनयाति तत्पुर्व्वं समैति प्रथममहोत्तरस्य सवनस्य करोत्युत्तमं पूर्व्वस्य स यदुत्तरस्य सवनस्य तत्पूर्व्वं करोति यत्पूर्व्वस्य तदुत्तमं तद्व्यतिषजति तस्मादिमानि पुर्व्वाणि व्यतिषक्तानीदमित्थमतिहानमिदमित्थं तद्यदस्यैतेनात्मा सꣳहितस्तेनास्यैषऽआयुः ॥ ५ ॥

सैषा कामदुघैवेन्द्रस्योद्धारः । ( त्रि ) त्रिभ्य ऽएवैनं प्रातःसवनऽउक्थेभ्यो व्विगृह्णाति त्रिभ्यो माध्यन्दिने सवने तत्षट्कृत्वः षड्वाऽऋतव ऽऋतवो वाऽइमान्त्सर्व्वान्कामान्पचन्त्येतेनो हैषा कामदुघैवेन्द्रस्योद्धारः ॥ ६ ॥

---

एवमेव माध्यन्दिने सवने अगृहीत एवैतस्मादच्छावाकायोत्तमो ग्रहो भवति । अथ तृतीयं वसतीवरीणामवनयाति । तत् पर्व समैति । प्रथममहोत्तरस्य सवनस्य करोति, उत्तमं पूर्वस्य । स यदुत्तरस्य सवनस्य तत् पूर्वं करोति, यत्पूर्वस्य तदुत्तमम्—तद्व्यतिषजति । तस्मादिमानि पर्वाणि व्यतिषक्तानि । इदमित्थमतिहानमिदमित्थम् । तद् यदस्यैतेनात्मा संहितः; तेनास्यैष आयुः ॥५॥

सैषा कामदुघैवेन्द्रस्योद्धारः । त्रिभ्य एवैनं प्रातःसवनऽउक्थेभ्यो विगृह्णाति, त्रिभ्यो माध्यन्दिने सवने—तत् षट्कृत्वः । षड्वाऽऋतवः । ऋतवो वाऽइमान्त्सर्वान्कामान्पचन्ति । एतेनो हैषा कामदुघैवेन्द्रस्योद्धारः ॥ ६ ॥

---

भवन्तीत्याह—स यदुत्तरस्येत्यादि । इदमित्थमित्यादि । ' इदम् ' उपरितनमङ्गम् ' इत्थम् ' अनेन प्रकारेण ' अतिहानम् ' अतिगमनयुक्तम् , ' इदं ' वाऽधस्तनमङ्गम् ' इत्थम ' इत्यभिनयेन दर्शयति ॥ ३ ॥ ४ ॥

उक्तः सवनसन्धानप्रकारो माध्यन्दिनसम्बन्धिन्युक्थ्यविग्रहेऽपि कर्त्तव्य इत्याह—एवमेव माध्यन्दिने सवन इत्यादि । अत्र कात्यायनः—"प्रागच्छावाकविग्रहात्सोमोपावहरणम्, वसतीवर्यर्धं चासिञ्चत्याधवनीये[1]"—( का० श्रौ० सू० ९ । ३१९, ३२० । ) इति ग्रहस्यायुष्ट्वे व्यवहारोपपत्तिमाह—तद्यदस्यैतेनात्मेत्यादि । उक्थ्यग्रहस्य यज्ञसम्बन्ध्यात्मसन्धानार्थत्वात् ' आयुः ' इति व्यवहार इत्यर्थः ॥ ५ ॥

प्रकृतं ग्रहं प्रशंसति—सैषेत्यादि । ' इन्द्रस्योद्धारः ' साधारणो भागो योऽयमुक्थ्यग्रहः ' सैषा ' ' कामदुघैव ' कामधेनुरेव । " दुहः कब्घश्च "—( पा. सू. ३ । २ । ७० ) इति कप्प्रत्ययः । यद्यप्युक्थ्यविग्रहेषु देवतान्तरसम्बन्धोऽस्ति तथापीन्द्रस्य प्राधान्यान्माध्यन्दिनसवने तस्यैव देवतात्वाच्चैन्द्रस्य भाग इत्युक्तम् । उक्तेऽर्थे कारणमाह—त्रिभ्य एवैनमित्यादि । उक्थ्यमिति स्तुतशस्त्रविशेषनामधेयम् । प्रातःसवने उक्थ्यत्रयार्थम्, माध्यन्दिनसवने चोक्थ्यत्रयार्थम् इति तद्ग्रहणं ' षट्कृत्वः ' सम्पद्यते । षट्संख्याका ' ऋतवः ' ' सर्वान् ' ' इमान् ' ' कामान् ' ' पचन्ति ' पाकं प्रापयन्ति उपभोगयोग्यान् कुर्वन्ति । कालस्य सर्वोत्पत्तिमन्निमित्तकारणत्वादित्यर्थः । अतः सङ्ख्यासामान्येन विगृह्यमाणस्योक्थ्यग्रहस्य ऋतुरूपत्वात्कामधेनुत्वम् ॥ ६ ॥

---

१—" विश्वेदवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न ज रायुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमतौ स्यामेति " सूत्रशेषः ॥

(स्तं) तं वा॒ऽअ॑पुरोरु॒क्कं गृ॑ह्णाति।(त्यु)उ॒क्थ॑ᳯं॒ हि पु॑रोरु॒गृग्घि पु॑रोरु॒गृग्घ्यु॒क्थ॑ᳯं॒ साम॒ ग्रहोऽथ॒ यदन्यज्जप॑ति॒ तद्यजु॑स्ता॒ हैता॒ऽअभ्य॑र्धं॒ एवा॒ग्र॑ऽऋ॒ग्भ्य॒ आ॑सु॒रभ्य॒र्धो य॒जुर्भ्यो॒ऽभ्य॒र्धः सा॒मभ्यः॑ ॥ ७ ॥

तं वा अपुरोरुक्कं गृह्णाति । उक्थं हि पुरोरुक् । ऋग्घि पुरोरुक् । ऋग्घ्युक्थम् । साम ग्रहः । अथ यदन्यज्जपति–तद्यजुः । ता हैता अभ्यर्धं एवाग्रऽऋग्भ्य आसुः, अभ्यर्धो यजुर्भ्यः, अभ्यर्धः सामभ्यः ॥ ७ ॥

नन्वैन्द्रवायवादिग्रहाणाम् "आ वायो" (वा.सं.७।७) इत्यादयः पुरोरुचो जाताः। का पुनरस्य ग्रहस्य पुरोरुगित्यत आह–तं वा इत्यादि । ग्रहणात् पूर्वो रोचयिता मन्त्रविशेषः पुरोरुक्, तद्रहितमेव 'तम्' एतमुक्थ्यग्रहं 'गृह्णाति' । ननु यदि ग्रहणे अपुरोरुक्त्वं होमे वा का पुरोरुगित्यत आह–उक्थं हीति । 'उक्थम्' शस्त्रं 'हि' होमात् पूर्वमेव प्रयुज्यमानं होमदेवतायै हवी रोचयतीति तेन शस्त्रेण होमः सपुरोरुक्कः । तर्हि "उपयामगृहीतोऽसीन्द्राय त्वा"–इत्ययमपि मन्त्रो ग्रहणात् पूर्वमेव प्रहीष्यमाणं हविर्देवतायै रोचयतीत्यस्यापि पुरोरुक्त्वात् कथं ग्रहणमपुरोरुक्कमित्यत आह–ऋग्घि पुरोरुगिति । न पुरोरोचयितृमात्रं पुरोरुक्शब्दस्य प्रवृत्तिनिमित्तम्, किन्तु पादबद्धत्वहेतुकेन ऋगात्मकत्वेन विशिष्टम्। न चेह पादबद्धत्वमस्ति, उक्थ्यशस्त्रस्य तु ऋगात्मकत्वेन युक्तमनन्तरोक्तं पुरोरुक्त्वमित्याह–ऋग्घ्युक्थमिति । उक्थशस्त्रस्य ऋगात्मकत्वादस्तु पुरोरुक्त्वम्। उक्थस्तोत्रस्य तु कथं न हि तदृगात्मकम्, किन्तु सामात्मकमित्यत आह–साम ग्रह इति। गृह्यतेऽनेनाभिव्यज्यत इति ग्रहः प्रगीतो मन्त्रः सामेत्युच्यते। न च गानमात्रेण तस्य ऋक्त्वं व्यावर्त्यते। पादनिबन्धनं हि तत्। उक्तं तल्लक्षणं जैमिनिना–"तेषामृग्यत्रार्थवशेन पादव्यवस्था" (जै.सू.२।१।३५) इति। तेनाप्रगीतवत् प्रगीतस्यापि ऋग्लक्षणयोगेन ऋक्त्वात्, ऋग्घि पुरोरुगित्यनेनैव प्रगीतोऽपि सङ्ग्रहीष्यते। प्रगीतमन्त्रात्मकस्य साम्नोऽप्यृक्त्वे सत्यपि–"ऋचः सामानि यजूंषि, ऋक्सामे वै देवेभ्यः" (साम. तां. ब्रा.)–इत्यभेदेन व्यवहारः प्रगीताप्रगीतत्ववैलक्षण्यमात्रनिबन्धनो भविष्यति । यदपि जैमिनीयं सामलक्षणं "गीतिषु सामाख्या" (जै. सू. २ । १ । ३६) इति, तत्रापि गीयत इति गीतिरिति कर्मणि क्तिना (पा. सू. ३।३।९४) मन्त्रो विधीयते। मन्त्रभेदा एव हि तत्र लक्षणीयतया प्रस्तुताः। मन्त्राश्च विवक्षितार्था इति प्रपञ्चितं मन्त्राधिकरणे (जै. सू. २ । १ । ३० । ३१)। न च गीतिक्रियाऽर्थवती । अथतु "ऋच्यध्यूढं साम गायति रेवेति इषुवारवन्तीयं कवतीषु रथन्तरम्" (साम. तां. ब्रा.)–इत्यादिषु गीतिक्रियामात्रे सामादिपदं व्यवहृतमिति मन्यसे, तर्हि गीतिक्रियाया अर्थानवबोधकत्वेन पुरोरुक्त्वानङ्गीकारादेव कथं पुरोरुक्त्वमिति प्रश्नानवकाशः। अस्मिन् यज्ञे "साम ग्रहः" इति श्रुतौ ग्रहशब्दो गृह्यते । ऋगक्षराण्यभिव्यज्यन्तेऽनेनेति करणसाधनो गानक्रियामेव विधत्ते–तदात्मकस्य साम्नोऽर्थानवबोधकत्वादेव पुरोरुक्त्वाभावात् ऋग्घि पुरोरुगिति न व्याहन्यते। यत्तु प्रगीताप्रगीतरूपाया ऋचोऽन्यत् "उपयाम" इत्यादि तत् पुरोरोचयितृत्वेऽपि न पुरोरुक्, किन्तु यजुरेव केवलमिति। प्रकृतग्रहस्यापुरोरुक्त्वे चोपपत्तिरित्याह–अथ यदन्यदिति । पुरोरोचयितॄणामुपयामेत्यादीनामनृक्त्वेन पुरोरुक्त्वाभावे सति अपरेणापि केनचनासाधारणेन विशेषेण भवितव्यम्, न यजुर्मात्रसाधारण्येन गणनं युक्तमिति चेत्, तत्राह–ता हैता इति । सत्यम्, अत एव ता 'एताः' उपयामेत्यादयः पुरोरोचयित्र्यो मन्त्रजातयः, 'अग्रे' पूर्वस्मिन् काले ऋग्यजुःसाममात्रेभ्यो मन्त्रेभ्यः पुरोरोचयितृत्वे-

( स्ते ) ते देवा अब्रुवन् । ( न्ह ) हन्तेमा युजुःषु दधाम तथेयं बहुलतरेव व्विद्या भविष्यतीति ता युजुःष्वदधुस्तुत ऽएषा बहुलुतरेव व्विद्याऽभवत् ॥ ८

( त्तं ) तं युदपुरोरुक्कं गृह्णाति । ( त्यु ) उक्थᳪ᳭ हि पुरोरुगृग्घि पुरोरुगृग्घ्युक्थᳪ᳭ स युदेवैनमुक्थेभ्यो व्विगृह्णाति तेनो हास्यैष पुरोरुङ्मान्भवति तुस्मादपुरोरुक्कं गृह्णाति ॥ ९ ॥

( त्य ) अथातो गृह्णात्येव । ( वो ) उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते व्वयस्वतऽइतीन्द्रो वै यज्ञस्य देवता तुस्मादाहेन्द्राय त्वेति बृहद्वते व्वयस्वतऽइति व्वीर्यवतऽइत्येवैतदाह यदाह बृहद्वते व्वयस्वतऽइत्युक्थाव्यं गृह्णामीत्युक्थेभ्यो ह्येनं गृह्णाति युत्तऽइन्द्र बृहद्वय ऽइति युत्तऽइन्द्र व्वीर्यमित्येवैतदाह तुस्मै त्वा व्विष्णवे त्वेति यज्ञस्यु ह्येनमायुषे गृह्णाति तुस्मा-

---

ते देवा अब्रुवन्–'हन्तेमा यजुःषु दधाम । तथेयं बहुलतरेव विद्या भविष्याति' इति । ता यजुःष्वदधुः । तत एषा बहुलतरेव विद्याऽभवत् ॥ ८ ॥

तं यदपुरोरुक्कं गृह्णाति उक्थं हि पुरोरुक् । ऋग्घि पुरोरुक् । ऋग्घ्युक्थम् । स यदेवैनमुक्थेभ्यो विगृह्णाति–तेनो हास्यैष पुरोरुङ्मान्भवति । तस्मादपुरोरुक्कं गृह्णाति ॥ ९ ॥

अथातो गृह्णात्येव–" उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वते "–( वा. सं. ७।२२) इति । इन्द्रो वै यज्ञस्य देवता । तस्मादाह–इन्द्राय त्वेति । बृहद्वते वयस्वत इति । वीर्यवत इत्येवै-

---

नैवासाधारणेनाभिहिताः । समृद्धा आसुः " ऋधु वृद्धौ "–( धा. पा. दि. प. १३९ ) इत्यस्य " अन्येभ्योऽपि दृश्यन्ते "–( पा. सू. ३ । २ । ७५ ) इति विचि लघूपधगुणे ( पा. सू. ७ । ३ । ८६ ) बहुवचनान्तमभ्यर्द्ध इति ॥ ७ ॥

इत्थं पृथग्भूतानां जरसां कथं यजुष्ट्वमिति तत्राह–ते देवा इति । ऋग्यजुःसामाख्याभ्यो मन्त्रजातिभ्यः अपरस्याश्चतुर्थ्या अपि पुरोरोचयितृजातेरङ्गीकारे गौरवादेवैता ' यजुःषु ' एव निहिताः, अत एषां यजुषां पुरोरोचयितृत्वेऽप्यनूक्तत्वेन पुरोरुक्त्वाभावात् प्रकृतं ग्रहमपुरोरुक्कं गृह्णातीति युक्तमित्यर्थः ॥ ८ ॥

अस्य मन्त्रस्य पुरोरुक्त्वाभावेऽपि ग्रहस्य पुरोरुक्त्वं समर्थयितुमाह–तं यदित्यादि । ' यत् ' यद्यपि ग्रहणसमये ' तम् ' अपुरोरुक्कं गृह्णाति, तथापि विभज्य ग्रहणानन्तरमुक्थ्यस्तोत्राणि भविष्यन्ति तेषां च पुरोरुक्त्वात्तैर्विगृह्यमाणोऽयं सपुरोरुक्को भविष्यति । विग्रहानन्तरैः स्तोत्रशस्त्रैः सपुरोरुक्त्वेऽपि स्वसाधनस्य यजुषोऽपुरोरुक्त्वादपुरोरुक्त्वमित्यपि सिद्धमित्याह–तस्मादिति ॥ ९ ॥

ग्रहस्य ग्रहणमनूद्य मन्त्रं चतुर्धा विभज्य विनियुञ्जानो व्याचष्टे–अथातो गृह्णात्येव । उपयामगृहीतोसीत्यादि । इन्द्रो वै यज्ञस्य देवतेति । उक्थ्यग्रहलक्षणस्य ' यज्ञस्य ' ' इन्द्रो ' ' देवता ' खलु, तथा च

---

१–उक्थ्यमुपयामगृहीत इति । का. श्रौ. सू. ९–१४४ ।

**दाह तस्मै त्वा विष्णवे त्वेत्येषु ते योनिरुक्थेभ्यस्त्वेति सादयत्युक्थेभ्यो ह्येनं गृह्णाति ॥ १० ॥**

---

तदाह–यदाह–बृहद्वते वयस्वतऽ इति । "**उक्थाव्यं गृह्णामि**"–( वा. सं. ७ । २२ ) इति । उक्थेभ्यो ह्येनं गृह्णाति । "**यत्तऽइन्द्र बृहद्वयः**"–( वा. सं. ७ । २२ ) इति । यत्तऽ इन्द्र वीर्यमित्येवैतदाह । "**तस्मै त्वा विष्णवे त्वा**"–( वा. सं. ७ । २२ ) इति । यज्ञस्य ह्येनमायुषे गृह्णाति । तस्मादाह–तस्मै त्वा विष्णवे त्वेति । "**एष ते योनिरुक्थेभ्यस्त्वा**"–( वा. सं. ७ । २२ ) इति सादयति । उक्थेभ्यो ह्येनं गृह्णाति ॥ १० ॥

---

पूर्वमुक्तम्, " सैषा कामदुघैवेन्द्रस्योद्धारः"–( श.प.४।२।३।६ ) इति । अथवा सोमस्य मानमन्त्रेषु " इन्द्राय त्वा वृत्रघ्ने " ( ऋ. सं. ) इत्येवमादिषु सर्वत्र इन्द्र एव देवतात्वेन निर्दिष्टः । अतः प्राधान्यात् स एव यज्ञस्य देवता । तस्मात् ' इन्द्राय त्वा '–इति मन्त्रपदमुपपन्नम् । **वीर्यवत इत्येवैतदित्यादि** । ' वीर्यवतः ' इति तेनैवाभिप्रायेणैतत्, " वयस्वत " इति " बृहद्वत " इति च पदमध्वर्युराह । अत्र ' बृहद्वत ' इति, बृहदिति बृहत्साम, यच्च वीर्येण सृष्टत्वाद्वीर्यरूपम् । तथा च तैत्तिरीयकम्–"उरसो बाहुभ्याम् ' इति प्रक्रम्य–' वीर्याद्धच सृज्यन्त " ( तै. सं. ७-१-१ )–इति । ' वयस्वत ' इत्यत्रापि अतिशायने मतुप् ( पा. सू. ५-२-९४ ) । मतुबादयः प्रत्यया अस्तिविवक्षायामेव भूमादिष्वर्थेषु भवन्ति । तथा चोक्तम्–"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः" ॥ ( पा. सू. ५ । २ । ९४ । वा. ३१८३ ) इति । तथा च सति ' वयः '–शब्देनात्रातिशायि यौवनलक्षणं वयोऽभिधीयते । तच्च वीर्यस्य हेतुः । अतो वीर्यवत इत्येतदभिप्रायेण ' वयःस्वत ' इत्युक्तमित्यर्थः ।

मन्त्रस्य द्वितीयं भागं व्याचष्टे–**उक्थाव्यमित्यादि** । **उक्थेभ्यो ह्येनमिति** । उक्थानि शस्त्रस्तोत्राणि तैः स्तुतिं सम्पादयितुम् 'एनं' ग्रहं ' गृह्णाति ' अतः ' उक्थाव्यम् ' इत्युक्तम् । अवतिः ( निघं.२।१४।१।२ ) अत्र गत्यर्थो गृह्यते । उक्थान्यवति गच्छतीत्युक्थावीः, तम् । "अवितॄस्तॄतन्त्रिभ्य ईः" ( उणादि पा. ३ ) इति ईकारप्रत्ययः । अथवा उक्थैराव्यः गन्तव्यः । " ऋहलोर्ण्यत् "–(पा. सू. ३ । १ । १२४ ) इति । स्तुत्यं हि स्तुतिसाधनेन गम्यते ।

तृतीयं भागं व्याचष्टे–**यत्त इन्द्रेत्यादि** । अत्रापि बृहद्वय इत्यनेन वीर्यमभिहितमित्यर्थः ।

चतुर्थं भागं व्याचष्टे–**तस्मै त्वेत्यादि** । **यज्ञस्य ह्येनमिति** । अत्र आयुरिति लिङ्गशरीरमभिधीयते, लिङ्गशरीररूपात्मसन्धानार्थत्वादस्यायुष्ट्वव्यवहार इति पूर्वमुक्तत्वात्तदर्थमस्य ग्रहणात्–" विष्णवे त्वा "–इति अध्वर्युराह । "यज्ञो वै विष्णुः"(शत.का.१।१।२।१३) इति श्रुतेः विष्णुरिति यज्ञ उच्यते । हे उक्थ्यग्रह ! ' उपयामेन ' स्थाल्या गृहीतोऽसि, बृहत्सामयुक्ताय ' यौवनलक्षणवयोयुक्ताय ' इन्द्रायोक्थ्यशस्त्रगामिनं त्वां गृह्णामि । हे इन्द्र ! 'यत्'यस्मात् ' बृहत् ' महद् 'वयो' यौवनलक्षणं तस्मात् इन्द्राय तुभ्यं त्वां ग्रहं गृह्णामि । इन्द्रार्थे ग्रहे इन्द्रत्वमुपचर्यते । हे ग्रह ! त्वां विष्णवे च गृह्णामीति कृत्स्नमन्त्रस्यार्थः । ग्रहस्य समन्त्रकं सादनं विवृत्ते–**एष त इत्यादि** । **उक्थेभ्यो ह्येनं गृह्णातीति** । उक्थैः स्तोत्रशस्त्रैः स्तुतिं सम्पादयितुमस्य ग्रहस्य ग्रहणान्मन्त्रे ' उक्थेभ्यः ' इत्यस्य शब्दस्य प्रयोग उपपद्यत इत्यर्थः ॥ १० ॥

तं व्विगृह्णाति । देवेभ्यस्त्वा देवाव्व्यं यज्ञस्यायुषे गृह्णामीति प्रशासनᳪं स कुर्याद्य ऽएवं कुर्याद्यथादेवतं त्वेव व्विगृह्णीयात् ॥ ११ ॥

(न्मि) मित्रावरुणाभ्यां त्वा । देवाव्व्यं यज्ञस्यायुषे गृह्णामीत्येव मैत्रावरुणाय मैत्रावरुणीषु हि तस्मै स्तुवते मैत्रावरुणीरनुशᳪंसति मैत्रावरुण्या यजति १२

( त्री ) इन्द्राय त्वा । देवाव्व्यं यज्ञस्यायुषे गृह्णामीत्येव ब्राह्मणाच्छᳪंसिन ऽऐन्द्रीषु हि तस्मै स्तुवत ऽऐन्द्रीरनुशᳪंसत्यैन्द्र्या यजति ॥ १३ ॥

---

तं विगृह्णाति–" देवेभ्यस्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि "–( वा. सं. ७ । २२ ) इति । प्रशासनं स कुर्यात् य एवं कुर्यात्–यथादेवतं त्वेव विगृह्णीयात् ॥ ११ ॥

"मित्रावरुणाभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि"–( वा० सं० ७ । २३ । ) इत्येव मैत्रावरुणाय । मैत्रावरुणीषु हि तस्मै स्तुवते । मैत्रावरुणीरनुशंसति । मैत्रावरुण्या यजति ॥ १२ ॥

"इन्द्राय त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि"–(वा. सं. ७ । २३ ) इत्येव ब्राह्मणाच्छंसिने । ऐन्द्रीषु हि तस्मै स्तुवते । ऐन्द्रीरनुशंसति । ऐन्द्र्या यजति ॥ १३ ॥

---

इत्थं ग्रहस्य ग्रहणादिकं विधाय होमकाले तस्यैव समन्त्रकं विभज्य ग्रहणं विधत्ते–तं विगृह्णातीत्यादि । उक्थ्यग्रहस्त्रेधं विभज्य हूयते । अत एव कात्यायनः–"उक्थं विगृह्णाति त्रैधम् (देवेभ्यस्त्वेतिसर्वेभ्यः)"–(का. श्रौ. सू. ९।३१० ) इति । तथा च सति पर्यायत्रयेऽपि " देवेभ्यस्त्वा "–इत्यनेनैव मन्त्रेण विभज्य गृह्णीयादित्यर्थः ।

उक्तमन्त्रसाधने विग्रहणे ग्रहस्य साधारणलक्षणं दोषमुद्भावयति–प्रशासनं स इत्यादि । योऽध्वर्युरेवमुक्तमन्त्रसाधनकं विग्रहणं कुर्यात् । 'सः' 'प्रशासनं' ग्रहस्य प्रकर्षेणात्यन्तं शासनं विनियोजनं कुर्यात् । मन्त्रे 'देवेभ्य' इति सर्वदेवतासाधारणस्य शब्दस्य प्रयोगादिति भावः । यत एवम्, अतस्तत्तद्देवतानुसारेण ग्रहं विगृह्णीयादित्याह–यथादेवतमित्यादि । देवतामनतिक्रम्य इति विग्रहे " यथाऽसादृश्ये "–( पा. सू. २।१।७ ) इति पदार्थानतिक्रमे यथाशब्दस्याव्ययीभावः । " अव्ययीभावश्च"–( पा. सू. १ । १ । ४१ ) इति नपुंसकत्वे " ह्रस्वो नपुंसके "–( पा. सू. १ । १ । ४७ ) इति ह्रस्वत्वम् ॥ ११ ॥

देवताप्रतिपादकं मन्त्रमाह–मित्रावरुणाभ्यामिति । अनेनैव मन्त्रेण ' मैत्रावरुणाय ' उक्थ्यं विगृह्णीयात्, न पुनः " देवेभ्यस्त्वा " इत्यनेनेत्यर्थः । हे उक्थ्यग्रह ! ' देवाव्यं ' देवै रक्षणीयं गन्तव्यं ' त्वा ' त्वाम् ' यज्ञस्यायुषे ' ' मित्रावरुणाभ्यां ' ' गृह्णामि इति मन्त्रार्थः । न केवलं तस्य मन्त्रस्य ग्रहसाधारण्यपरिहारः प्रयोजनम्, अपि तु एतदुक्थ्यविग्रहसम्बन्धिनां मन्त्रान्तराणां सादृश्यलाभोऽपीत्याह–मैत्रावरुणीष्वित्यादि । ' तस्मै ' मैत्रावरुणसम्बन्धिने उक्थ्यविग्रहाय मैत्रावरुणसम्बन्धिनीष्वृक्षु " आ नो मित्रावरुणा "–( वा. सं. २१ । ८ ) इत्यादिषु ' स्तुवते ' उद्गातारः । मैत्रावरुणश्च ' मैत्रावरुणीरनु ' मैत्रावरुणीभिर्ऋग्भिः । " आ नो मित्रा "–इत्यादिभिरेव 'शंसति' स्तौति । अनोस्तृतीयार्थे कर्मप्रवचनीयत्वात् " कर्मप्रवचनीययुक्ते द्वितीया ". ( पा. सू. २।३ । ८ )–इति द्वितीया । तथा यजमानमपि "आ नो मित्रावरुणा " इति मैत्रावरुण्यैवेति सर्वत्र मन्त्रेषु मित्रावरुणसम्बन्धाद्विग्रहणे साधनभूतोऽपि मन्त्र इतरमन्त्रसादृश्यलाभाय मैत्रावरुण एव कर्त्तव्य इत्यर्थः ॥ १२ ॥

द्वितीयतृतीययोरुक्थ्यविग्रहणे साधनभूतोऽपि मन्त्र इतरमन्त्रसादृश्ययोरपि तत्तद्देवताप्रतिपादकौ मन्त्रौ दर्शयति–इन्द्राय त्वा देवाव्यमित्यादिना । ऐन्द्रीषु हीति । "आ याहि सुखमादय ऐन्द्रः"(हौ. सू. शां.) 'ऐन्द्री' इत्यत्रापि

---

१–मित्रावरुणाभ्यां त्वेति वा प्रशास्त्रे का. श्रौ. सू. ९ । ३११ ।

( ती ) इन्द्राग्निभ्यां त्वा । देवाव्यं यज्ञस्यायुषे गृह्णामीत्येवाच्छावाकायैन्द्राग्नीषु हि तस्मै स्तुवतऽऐन्द्राग्नीरनुशꣳसत्यैन्द्राग्न्या यजतीन्द्राय त्वेत्येव माध्यन्दिने सवनऽऐन्द्रꣳहि माध्यन्दिनꣳ सवनम् ॥ १४ ॥

(न्त)तदु ह चरकाध्वर्यवो विगृह्णन्ति । (न्त्यु) उपयामगृहीतोऽसि देवेभ्यस्त्वा देवाव्यमुक्थेभ्यऽ उक्थाव्यं मित्रावरुणाभ्यां जुष्टं गृह्णाम्येष ते योनिर्मित्रावरुणाभ्यां त्वेति सादयति पुनर्हविरसीति स्थालीमभिमृशति १५

( त्यु ) उपयामगृहीतोऽसि । देवेभ्यस्त्वा देवाव्यमुक्थेभ्यऽउक्थाव्यमिन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वेति सादयति पुनर्हविरसीति स्थालीमभिमृशति ॥ १६ ॥

---

" इन्द्राग्निभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि "–( वा. सं. ७ । २३ ) इत्येवाच्छावाकाय । ऐन्द्राग्नीषु हि तस्मै स्तुवते । ऐन्द्राग्नीरनुशंसति । ऐन्द्राग्न्या यजाति । इन्द्राय त्वा इत्येव माध्यन्दिने सवने । ऐन्द्रं हि माध्यन्दिनं सवनम् ॥ १४ ॥

तदु ह चरकाध्वर्यवो विगृह्णन्ति–"उपयामगृहीतोऽसि देवेभ्यस्त्वा देवाव्ययम्।उक्थेभ्य उक्थाव्यम् । मित्रावरुणाभ्यां जुष्टं गृह्णाम्येष ते योनिर्मित्रावरुणाभ्यां त्वा "–इति सादयति । " पुनर्हविरसि "–इति स्थालीमभिमृशति ॥ १५ ॥

" उपयामगृहीतोऽसि, देवेभ्यस्त्वा देवाव्यम् । उक्थेभ्य उक्थाव्यम् । इन्द्राय जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा "–इति सादयति । " पुनर्हविरसि "–इति स्थालीमभिमृशति ॥ १६ ॥

---

"आ याहि"–इत्यादय एव । ऐन्द्या इति । " इन्द्र क्रतुविदं सुतम्" ( ऋ. सं.३।३।१ )–इत्यनया ॥१३॥

ऐन्द्राग्नीषु हि इत्यादि, " इन्द्राग्नी आगतं सुतम् " ( वा. सं. ७ । ३१ )–इत्यादय ऐन्द्राग्न्य ऋचः । ऐन्द्राग्नी इति । ता एव एन्द्राग्न्येति । ' इन्द्राग्नी आगतम् ' इत्यनयैवेत्यर्थः प्रसङ्गान्माध्यन्दिनसवनेऽपि उक्थ्यविग्रहाणां मन्त्रं तत्रोपपत्तिं चाह–इन्द्राय त्वेत्यादि । ऐन्द्रं हि इति । ' माध्यन्दिनं ' ' सवनं ' केवलम् ' ऐन्द्रम् ' इन्द्रदेवत्यमेव खलु । तथा च दाशतय्यां कश्चिन्मन्त्र आम्नायते–" प्रातःसुतमपिबोहर्यश्व माध्यन्दिनं सवनं केवलं ते " (ऋ. सं.३।७।६)इति । अत उक्थ्यपर्यायत्रयेऽपि "इन्द्राय"इत्येव विगृह्णीयादित्यर्थः॥१४॥

उक्ते उक्थपर्यायाणां त्रये शाखान्तरमतं निरसितुमुपन्यस्यति–तदु हेत्यादिना तूष्णीं तृतीयं निदधाति[३] इत्यन्तेन । ' तत् ' तस्मिन् उक्थ्यविग्रहे ' चरकाध्वर्यवः ' चरकशाखाध्यायिनोऽध्वर्यवः वक्ष्यमाणेन

---

१–इन्द्रावरुणाभ्यां त्वेत्यादि, इन्द्राबृहस्पतिभ्यां त्वेत्यादि, इन्द्राविष्णुभ्यां त्वेत्यादि च मन्त्रत्रयमधिकं संहितायाम् ।
२–' उपयामगृहीतोऽसि देवेभ्यस्त्वा ' इत्यादिः, ' पुनर्हविरसि ' इत्यादिश्च मन्त्रसङ्घः संहितायां न पठ्यते, पठ्यते च ' इन्द्रावरुणाभ्यां त्वा ' इत्यादि पूर्वोक्तं मन्त्रत्रितयम् । ३–तूष्णीं सादनम् । का. श्रौ. सू. ९ । ३१२ ।

( त्यु ) उपयामगृहीतोऽसि । देवेभ्यस्त्वा देवाव्यमुक्थेभ्यऽउक्थाव्यमिन्द्राग्निभ्यां जुष्टं गृह्णाम्येष ते योनिरिन्द्राग्निभ्यां त्वेति सादयति नात्र पुनर्हविरसीति स्थालीमभिमृशतीन्द्राय त्वेन्द्राय त्वेत्येव माध्यन्दिने सवनऽऐन्द्रᳬं हि माध्यन्दिनᳬं सवनं द्विर्हि पुनर्हविरसीति स्थालीमभिमृशति तूष्णीं तृतीयं निदधाति ॥ १७ ॥

तं वै नोपयामेन गृह्णीयात् । ( न्न ) न योनौ सादयेदग्रे ह्येवैषऽउपयामेन गृहीतो भवत्यग्रे योनौ सन्नोऽजामितायै जामि ह कुर्याद्यदेनमत्राप्युपयामेन गृह्णीयाद्योनौ सादयेदथ यत्पुनर्हविरसीति स्थालीमभिमृशति पुनर्ह्यस्यै ग्रहं ग्रहीष्यन्भवति न तदाद्रियेत तूष्णीमेव निदध्यात् ॥ १८ ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥४–२–२॥ [ २.३. ] ॥

---

" उपयामगृहीतोऽसि, देवेभ्यस्त्वा देवाव्यम् । उक्थेभ्यऽउक्थाव्यम् । इन्द्राग्निभ्यां जुष्टं गृह्णाम्येष ते योनिरिन्द्राग्निभ्यां त्वा "–इति सादयति । नात्र पुनर्हविरसि इति स्थालीमभिमृशति । " इन्द्राय त्वेन्द्राय त्वेत्येव माध्यन्दिने सवने । ऐन्द्रं हि माध्यन्दिनं सवनम् ।" द्विर्हि पुनर्हविरसीति स्थालीमभिमृशति । तूष्णीं तृतीयं निदधाति ॥ १७ ॥

तं वै नोपयामेन गृह्णीयात् । न योनौ सादयेत् । अग्रे ह्येवैष उपयामेन गृहीतो भवति, अग्रे योनौ सन्नः । अजामितायै । जामि ह कुर्याद्–यदेनमत्राप्युपयामेन गृह्णीयात् । यद्योनौ सादयेत् । अथ यत्पुनर्हविरसीति स्थालीमभिमृशति पुनर्ह्यस्यै ग्रहं ग्रहीष्यन्भवति । न तदाद्रियेत । तूष्णीमेव निदध्यात् ॥ १८ ॥

---

प्रकारेण ' विगृह्णन्ति ' विभज्य गृह्णन्ति । मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकसम्बन्धिनामुक्थ्यविग्रहाणाम् " उपयामगृहीतोऽसि "–इत्यादिना क्रमेण विग्रहणादि प्राध्यते । तृतीये पर्याये " पुनर्हविरसि " इति ' स्थालीं ' नाभिमृशेत् । माध्यन्दिनसवनस्यैन्द्रदेवत्यत्वात् । तत्र ' इन्द्राय ' इत्येव विगृह्णीयात् । यतोऽध्वर्युः प्रातःसवने प्रथमद्वितीययोः द्विःस्थालीमभिमृशति । तृतीयपर्याये तूष्णीं स्थालीमनभिमृश्यैव ग्रहं निदधाति, अतोऽत्रापि माध्यन्दिने सवने तथैव कुर्यादित्यर्थः ॥ १६–१७ ॥

उपन्यस्तं शाखान्तरमतं निरस्यसि–तं वै नेत्यादि । ' तम् ' एतमुक्थ्यविग्रहम् ' उपयामेन ' " उपयाम गृहीतोऽसि "–इत्येतदुच्चार्य–' न ' ' गृह्णीयात् ' । " एष ते योनिः " इत्यनेन खरे सादनं योनौ सादनं तदपि ' न ' कुर्यात् । ' हि ' यस्मात् ' अग्रे ' पूर्वं ग्रहग्रहणसमय एव ' एष ' ग्रहः उपयामशब्दोच्चारणेन ' गृहीतः ' । " एष ते योनिः " इत्यादिना च खरे सादितः, अतोऽत्र न तदुच्चारणं कुर्यात्, एवञ्चेतत् तथा' करणम् ' अजामितायै ' अनालस्याय भवति । आलस्यप्रसक्तिं दर्शयति–यदेनमित्यदि । " उपयामगृहीतोऽसि "–"एष ते योनिः" इत्यनयोर्ग्रहणसमये प्रयुक्तत्वात्, अत्रापि पुनस्तयोरुच्चारणं विशेषाभावादालस्याय

अयꣳ ह वाऽअस्यैष प्राणः । (णो) योऽयं पुरस्तात्स वै वैश्वानर एवाथ योऽयं पश्चात्स ध्रुवस्तौ ह स्मैतौ द्वावेवाग्रे ग्रहौ गृह्णन्ति ध्रुववैश्वानराविति तयोरयमप्येतर्ह्यन्यतरऽएव गृह्यते ध्रुवऽएव स यदि तं चरकेभ्यो वा यतो वाऽनुब्रुवीत यजमानस्य तं चमसेऽवनयेदथैतमेव होतृचमसे ॥ १ ॥

---

### ध्रुवग्रहः ।

अयं ह वाऽअस्यैष प्राणः–योऽयं पुरस्ताद् । स वै वैश्वानर एव। अथ योऽयं पश्चात्स ध्रुवः । तौ ह स्मैतौ द्वावेवाग्रे ग्रहौ गृह्णन्ति–ध्रुववैश्वानराविति । तयोरयमप्येतर्ह्यन्यतर एव गृह्यते–ध्रुव एव। स यदि तं चरकेभ्यो वा यतो वाऽनुब्रुवीत–यजमानस्य तं चमसेऽवनयेत्, अथ तमेव होतृचमसे ॥ १ ॥

---

कल्पत इत्यर्थः । चरकाध्वर्यूणां मते 'पुनर्हविरसि' (मैत्रा. सं.) इत्ययं मन्त्र उक्थ्यस्थाल्यभिमर्शने विनियुज्यत इत्युक्तम् । तन्मन्त्रेण स्थाल्या अभिमर्शने तेषामुपपत्तिमाह–अथ यत्पुनरित्यादि । 'अस्यै' 'स्थाल्यै' स्थाल्याः सकाशाद् ' ग्रहं ' ' ग्रहीष्यन् ' ' भवति ' यतः, अतः ' पुनर्हविरसि ' इति ' स्थालीम् ' अभिमृशेत् । ' अस्यै ' इति षष्ठ्यर्थे चतुर्थी ( पा० सू० २।३।६२। वा १० ) तदेतन्निराकरोति–न तदाद्रियेतेति । ' तूष्णीं ' स्थालीं मन्त्रेणानभिमृश्यैव ग्रहं 'निदध्यात्' 'पुनर्हविरसि' इति स्थालीमभिमृशतामयमाशयः–एकस्मिन् पर्याये गृहीतस्यैव हविष्ट्वम्, स्थालीगतस्तु सोमरसो न हविष्ट्वयोग्यः किन्तु प्रतिपत्त्यर्हः, अवशिष्टत्वात् इति शङ्का स्यात्, न तदर्थं प्रयतितव्यम् । ग्रहणकाले ग्रहस्य सम्पूर्णगृहीतत्वात् सर्वस्यापि हविष्ट्वसिद्धौ पश्चाद्विमज्य ग्रहणेऽप्यहविष्ट्वशङ्का न सम्भाव्यत इति । तत् समन्त्रकमभिमर्शनं नाद्रियेतेति ब्राह्मणस्याभिप्रायः । अत एव कात्यायनेन स्थाल्यभिमर्शनं न सूत्रितम् ॥ १८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
चतुर्थकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥ ४–२–३ ॥

उपांश्वादीनां ग्रहाणां प्राणाद्यवयवात्मकत्वात्, आग्रयणोक्थ्ययोः स्थूलसूक्ष्मशरीरद्वयात्मकत्वात्, तद्विधानेन कृत्स्नमपि यज्ञशरीरं निष्पादितम्, आयुर्विशेषविशिष्टमेव हि शरीरं कार्यजनकत्वेन सार्थकं भवति; अतस्तत्सार्थकत्वाय आयुषः सम्पादनीयत्वात्, तत्सम्पादनायेदानीमस्मिन् ब्राह्मणे तदात्मकत्वेन ध्रुवग्रहं विधातुं प्रस्तौति– **अयं ह वा** इति । 'अस्य' यज्ञस्य 'एषः' वक्ष्यमाणो ग्रहः–'अयं' सर्वेषां प्रत्यक्षः प्राणः खलु । अत्र प्राणशब्देन आयुर्विवक्ष्यते। आयुषः प्राणशरीरसम्बन्धात्मकत्वात्।एतच्चोत्तरत्र–"सोऽस्यैष आयुरेव"(द्वितीयस्यां कंडिकायां)इति स्वयमेव विवरणादवगम्यते । 'ह वा'–इत्यनेन शाखान्तरप्रसिद्धिर्द्योत्यते। अत एव तैत्तिरीयकम्–"आयुर्वा एतद्यज्ञस्य यद्ध्रुवः "–( तै. सं. ६ । ५ । २ ) इति । प्राणस्य मूलाधारे निष्पत्तिः । निष्पन्नस्य च तस्य मुखनासाविवरेणाभिव्यक्तिः, ततश्चैकस्यापि निष्पत्त्यभिव्यक्तिस्थानभेदमङ्गीकृत्य तदनुसारेण ग्रहद्वैविध्यमाह–**योऽयं पुरस्तादिति** । ' योऽयं ' मुखनासाविवरेणाभिव्यज्यमानः ' प्राणः ' ' स ' ' एव ' ' वैश्वानरः ' तदात्मको वैश्वानरग्रहः । ' योऽयं ' प्राणः ' पश्चात् ' मूलाधारे निष्पद्यते, ' स ' एव ध्रुवग्रहः । 'तौ' 'एतौ'

यद्वाऽअस्यावाचीनं नाभेः । ( स्तु ) तदस्यैष आत्मनः सोऽस्यैष आयुरेव तस्मादनया गृह्णात्यस्यै हि स्थाली भवति स्थाल्या ह्येनं गृह्णात्यजरा हीयममृताऽजरᳬं ह्यमृतमायुस्तस्मादनया गृह्णाति ॥ २ ॥

तं वै पूर्णं गृह्णाति । सर्व्वं वै तद्यत्पूर्णᳬं सर्व्वं तद्यदायुस्तस्मात्पूर्णं गृह्णाति ॥ ३ ॥

---

यद्वाऽअस्यावाचीनं नाभेः–तद् अस्यैष आत्मनः–सोऽस्यैष आयुरेव । तस्मादनया गृह्णाति । अस्यै हि स्थाली भवति । स्थाल्या ह्येनं गृह्णाति । अजरा हीयममृता । अजरं ह्यमृतमायुः । तस्मादनया गृह्णाति ॥ २ ॥

तं वै पूर्णं गृह्णाति । सर्वं वै तद्यत्पूर्णम् । सर्वं तद् यदाऽऽयुः । तस्मात्पूर्णं गृह्णाति ॥ ३ ॥

---

उक्तप्रकारेण द्विसङ्ख्याकौ ध्रुववैश्वानराख्यौ ‘ ग्रहौ ’ पूर्वं गृह्णाति, इति केषाञ्चिच्छाखिनाम्मतमनुवदति–तौ ह स्मैताविति । यद्यपि प्राणस्य भेदनिबन्धनो भेदोऽस्ति, तथापि न स्वरूपनिबन्धन इति, तस्यैकत्वात्तदात्मकः ‘ तयोरन्यतरः ’ ‘ एव ’ ग्रहो ग्रहीतव्य इति । स्वमतमाह–तयोरयमिति । ‘ तयोः ’ अपि ‘ अयमन्यतरः ’ ‘ एव ’ एतस्मिन् काले ‘ गृह्यते ’ । अयमिति सामान्येन निर्दिष्टार्थः प्रदर्श्यते–ध्रुव एवेति । मुखनासाविवरेण व्यज्यमानः प्राणो मूलाधारादुत्पन्न ‘ एव ’ इति तदात्मकध्रुवग्रहणेन वैश्वानरग्रहणमपि सम्पादितं भवतीति ‘ध्रुव’ ‘एव’ इत्युक्तम् । तदेवेदमेतच्छाखाध्यायिनां–द्वावेवाग्रे ग्रहौ गृह्णातीति सूचितम् । तदुभयग्रहप्रतिपादकचरकादिशाखाध्यायिनां पुनरुभयोरपि ग्रहणात् कथं तत्प्रतिपत्तिरिति, तत्राह–स यदि तमिति । चरका नाम केचन शाखिनः । तेभ्यः ‘ यतो वा ’ अन्येभ्यो वा शाखिभ्य इदं प्रतिपादकं ब्राह्मणं यद्यधीयीत तदा ‘ तम् ’ वैश्वानरग्रहं होमकाले ‘ यजमानस्य ’ ‘ चमसेऽवनयेत् ’ । एवं ध्रुवग्रहं तु होतृचमस एव ‘ अवनयेत् ’ तयोरप्यन्यतर एव गृह्यते, “ ध्रुव एव ” इति स्वेनोपादानात् “ एतम् ” इति ध्रुवस्य प्रत्यक्षनिर्देशः, तदभावात् ‘ तम् ’ इति वैश्वानरस्य परोक्षनिर्देशः ॥ १ ॥

ग्रहस्य स्थाल्या ग्रहणमुपपादयितुमायुरात्मकत्वमाह–यद्वा अस्येति । ‘ अस्य ’ यज्ञस्य ‘ नाभेः ’ अधस्तनं यच्छरीरं, यस्यात्मनस्तच्छरीरमेतस्य ‘ एषः ’ ध्रुवग्रहः, ‘ तत् ’ तस्य प्राणात्मकत्वात्, अत एव ‘ अस्य ’ यज्ञस्य ‘सः’ अयं ग्रह आयुरात्मकः । प्राणशरीरसम्बन्धात्मकत्वादायुष इति (अत्रैव १ कण्डिकाभाष्ये) प्रागुक्तम् । यतः एवमुक्तप्रकारेण ग्रहस्यायुष्ट्वं ‘ तस्मात् ’ ‘ एनं ’ ग्रहम् ‘ अनया ’ पृथिव्या गृह्णीयात् इति । ननु चायं स्थाल्या गृह्यते तत् कथमुच्यते पृथिव्या गृह्णीयादित्यत आह–अस्यै हि स्थालीति । कार्यकारणयोरभेदात् स्थाल्या ग्रहणेन पृथिव्यैव ग्रहणमस्तु, तथाऽपि ग्रहस्य पृथिव्या ग्रहणे कथमायुष्ट्वं हेतुरित्यत आह–अजरा हीति । जरा शैथिल्यम्, मरणं स्वरूपनाशः, आयुषश्च न तदुभयम्–यस्य यावद् ‘ आयुः ’ तावदिति तस्मिन् तदुभयाभावात् ॥ २ ॥

असाकल्येनापि ग्रहणे ग्रहणविधिश्चरितार्थः स्यादित्याशयेनाह–तं वै पूर्णमिति । ‘ तम् ’ ‘ वै ’ पूर्णस्य सर्वत्वमुपयवकाशाभावात् । आयुषस्तु यस्य यावद् ‘ आयुः ’ तस्य तावदविकलमेवेति ॥ ३ ॥

---

१–“ वैश्वानरं च जानन् ” ( का. श्रौ. सू. ९ । १४७ ) जानन्शब्दो ज्ञानार्थ एवेत्यपरे इति कर्कः ।

वैश्वानराय गृह्णाति । संवत्सरो वै वैश्वानरः संवत्सरऽआयुस्तस्माद्वैश्वानराय गृह्णाति ॥ ४ ॥

स प्रातःसवने गृहीतः । (ऽ) एतस्मात्कालादुपशेते तदेनᳯ सर्वाणि सवनान्यतिनयति ॥ ५ ॥

तं न स्तूयमानेऽवनयेत् । (न्न) न ह संवत्सरं यजमानोऽतिजीवेद्यत्स्तूयमानेऽवनयेत् ॥ ६ ॥

(तᳯ) तᳯ शस्यमानेऽवनयति । तदेनं द्वादशᳯ स्तोत्रमतिनयति तथा परम्परमायुः समश्नुते तथो ह यजमानो ज्योग्जीवति तस्माद्ब्राह्मणोऽग्निष्टोमसत्स्यादेतस्य होमान्न सर्पेन्न प्रस्रावयेत तथा सर्वमायुः समश्नुतऽआयुर्वाऽअस्यैष तथा सर्वमायुरेति ॥ ७ ॥

---

वैश्वानराय गृह्णाति । संवत्सरो वै वैश्वानरः । संवत्सर आयुः । तस्माद्वैश्वानराय गृह्णाति ॥ ४ ॥

स प्रातःसवने गृहीत एतस्मात्कालादुपशेते । तदेनं सर्वाणि सवनान्यतिनयति ॥ ५ ॥

तं न स्तूयमानेऽवनयेत् । न ह संवत्सरं यजमानोऽतिजीवेत्—यत्स्तूयमानेऽवनयेत् ॥ ६ ॥

तं शस्यमानेऽवनयति । तदेनं द्वादशं स्तोत्रमतिनयति—तथा परम्परमायुः समश्नुते—तथो ह यजमानो ज्योग्जीवाति—तस्माद्ब्राह्मणोऽग्निष्टोमसत्स्यात् । एतस्य होमान्न सर्पेत्, न प्रस्रावयेत, तथा सर्वमायुः समश्नुते । आयुर्वाऽअस्यैषः । तथा सर्वमायुरेति ॥ ७ ॥

---

प्रकृतग्रहस्य देवतासम्बन्धं दर्शयति—वैश्वानरायेति । 'वैश्वानरो' नाम समस्तजनहितोऽग्निरुच्यते । तस्य च संवत्सरत्वं संवत्सरपर्यन्तमुखायां निष्पादितत्वात् । संवत्सर आयुरिति । प्राणशरीरसम्बन्धकालः "आयुर्जीवितकालो वा" इत्यभिधानात्, (अम. २ । ८ । १२०) स एव च कालः उपाधिविशेषवशादहोरात्रपक्षमासर्त्वयनसंवत्सरादिभिः शब्दैर्व्यपदिश्यत इति संवत्सरोऽप्यायुरित्यर्थः ॥ ४ ॥

उपांश्वाद्या ग्रहाः प्रातःसवन एव गृह्यन्ते तत्रैव च हूयन्ते, अयन्तु ग्रहो न तथेत्याह—स प्रातःसवन इति । 'एतस्मात् कालात्' इत्येतच्छब्देन तृतीयसवने अग्निमारुतशस्त्रकालोऽवधित्वेन निर्दिश्यते । तदेनमिति । तथावस्थानेन तस्य 'सर्वाणि' 'सवनानि' अतिनीतत्वादायुरात्मकत्वमुपपादितं भवतीत्यर्थः ॥ ५ ॥

अग्निष्टोमस्तोत्रावसरे स्वल्पस्यापि सोमशेषस्यानवस्थापनात्तदाऽस्यावनयनप्रसक्तौ सोपपत्तिकं निषेधति—तन्न स्तूयमान इति ॥ ६ ॥

कदा तर्ह्येनमवनयेदिति तत्राह—तं शस्यमान इति । तदेनमिति । अग्निमारुतशंसनकाले द्वादशानामपि स्तोत्राणां समापितत्वेन द्वादशमासात्मकस्य संवत्सरस्य साकल्येन तदात्मकस्योत्तरोत्तरस्यायुषः प्राप्त्या 'यजमानः' चिरञ्जीवेदित्यर्थः । यतोऽग्निष्टोमस्तोत्रे समापिते द्वादशमासात्मकः संवत्सरः साकल्येन प्रथत इति तदैव

यद्वाऽअस्यावाचीनं नाभेः । (स्तु) तदस्यैषऽआत्मनः स यत्पुरैतस्य होमात्सर्पेद्वा प्र वा स्रावयेत ध्रुव ँ हावमेहेन्नेद्ध्रुवमवमेहानीति तस्माद्वाऽअग्निष्टोमसद्भवति तद्वैतद्यजमान एव यजमानस्य ह्येष तदात्मनः ॥८॥

स वाऽअग्निष्टोमसद्भवति । यशो वै सोमस्तस्माद्यश्च सोमे लभते यश्च नोभावेवागच्छतो यशऽएवैतद्द्रष्टुमागच्छन्ति तद्वाऽएतद्यशो ब्राह्मणाः संप्रसृप्यात्मन्दधते यद्भक्षयन्ति स ह यश एव भवति य एवं विद्वान्भक्षयति॥९॥

---

यद्वाऽअस्यावाचीनं नाभेः—तदस्यैष आत्मनः । स यत्पुरैतस्य होमात्सर्पेद्वा, प्र वा स्रावयेत—ध्रुवं हावमेहेत्—नेद्ध्रुवमवमेहानीति । तस्माद्वाऽअग्निष्टोमसद्भवति । तद्वै तद् यजमान एव, यजमानस्य ह्येषः तदात्मनः ॥ ८ ॥

स वाऽअग्निष्टोमसद्भवति । यशो वै सोमः । तस्माद् यश्च सोमे लभते, यश्च न—उभावेवागच्छतः । यश एवैतद्द्रष्टुमागच्छन्ति । तद्वाऽएतद्यशो ब्राह्मणाः सम्प्रसृप्यात्मन्दधते—यद्भक्षयन्ति । स ह यश एव भवति । य एवं विद्वान्भक्षयति ॥ ९ ॥

---

ध्रुवग्रहो हूयते । अतस्तद्धोमपर्यन्तं तत्रैव तिष्ठेत् । न त्वन्यत्र गच्छेदित्याह—तस्माद्ब्राह्मण इति । अत्र ब्राह्मणशब्देन दीक्षितास्त्रैवर्णिका अप्युच्यन्ते । तदाहापस्तम्बः—" ब्राह्मणो वा एष जायते यो दीक्षते ततोऽस्माद्राजन्यवैश्यावपि ब्राह्मणाः " इत्येवावेदयति, न केवलमायुषोऽनन्तरायान्यत्र गमनं न कार्यम् अपि तु मूत्रमपि नो कार्यमित्याह—न प्रस्रा[1]वयेतेति ॥ ७ ॥

ननु ध्रुवग्रह आयुरात्मकोऽस्तु, मूत्रावसेचने तु तस्य को बाध इत्यत आह—यद्वा अस्येति । ध्रुवग्रहो यज्ञस्य नाभेरधस्तनं शरीरमित्युक्तम् । अत एव तस्य होमात्पूर्वमन्यत्र गमने मूत्रावसेचने वा ध्रुवमेवावसिञ्चेत् । नेद्ध्रुवमवमेहानीति । नाहं ध्रुवमवसिञ्चानीति अन्यत्र न गच्छेन्नापि मूत्रमवसिञ्चेत्, किन्तु तावत्पर्यन्तं तत्रैव तिष्ठेदित्यर्थः । ननु यजमानेन मूत्रस्य सेचने यज्ञकर्मसम्बन्धी ध्रुवग्रहः सिच्यत इत्येतदनुपपन्नमित्यत आह—तद्वै तदित्यादि । ' तत् ' एतत् कर्म ' यजमान एव ' अतः ' तदात्मनः ' ' यजमानस्य ' सम्बन्धी भवत्येष ध्रुवग्रह इत्युक्तमुपपद्यत इत्यर्थः ॥ ८ ॥

अग्निष्टोमस्तोत्रपर्यन्तं सदनञ्चावश्यकर्त्तव्यत्वाय प्रशंसति--स वा अग्निष्टोम इत्यादि । यशो वै सोम इति । सोमस्य यशोरूपत्वं तैत्तिरीयके श्रूयते--" सोमो वै यशः, य एवं विद्वान् सोममागच्छति यश एवैनमृच्छति, तस्मादाहुः, यश्चैवं वेद यश्च न, तावुभौ सोममागच्छतः" ( तै. ब्रा. ) इति । सोमे लभत इति । सोमयागे दक्षिणां ' लभते ' इत्यर्थः । यश एवैतदिति । दक्षिणावांस्तद्व्यतिरिक्तश्च यशोरूपं सोमं द्रष्टुमागच्छति । अदक्षिणावानपि आगच्छतीत्यनेन सोमस्य यशस्त्वं समर्थितं भवति । ' आगच्छन्ति ' इति—" बहुलं छन्दसि " ( पा. सू. २।४।७६ ) इति बहुवचनम् । संप्रसृप्येति । सदोमध्यं गत्वा । " अभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति " ( तै. सं. ६।१।२।११ ) इति श्रुतेः ॥ ९ ॥

---

१—आहोमादस्य ध्रुवस्य मूत्रपुरीषे कुर्यात् का. श्रौ. सू. ९।१४६।

ते वाऽएते । सर्पन्त एवाग्निष्टोमसद्ये तद्यशः संनिधाय सर्पन्ति ते पराञ्चोऽयशसो भवन्ति तदेषु परिगृह्यैव पुनरात्मन्यशो धत्ते तेषाᳬँ हैषऽएव यशस्वितमो भूत्वा प्रैति स एवं विद्वानग्निष्टोमसद्भवति ॥ १० ॥

देवाश्च वाऽअसुराश्च । (श्वो) उभये प्राजापत्याः पस्पृधिरऽएतस्मिन्यज्ञे प्रजापतौ पितरि संव्वत्सरेऽस्माकमयं भविष्यत्यस्माकमयं भविष्यतीति ११

ततो देवाः । ( ऽ ) अर्चन्तः श्राम्यन्तश्चेरुस्तऽएतदग्निष्टोमसद्यं ददृशुस्त ऽएतेनाग्निष्टोमसद्येन सर्व्वं यज्ञᳬँ समवृञ्जन्तान्तरायन्नसुरान्यज्ञात्तथो ऽएवैष एतेनाग्निष्टोमसद्येन सर्व्वं यज्ञᳬँ संवृङ्क्तेऽन्तरेति सपत्नान्यज्ञात्तस्माद्वाऽअग्निष्टोमसद्भवति ॥ १२ ॥

---

ते वाऽएते सर्पन्त एवाग्निष्टोमसद्ये तद्यशः सन्निधाय सर्पन्ति । ते पराञ्चोऽयशसो भवन्ति । तदेष परिगृह्यैव पुनरात्मन्यशो धत्ते । तेषां हैष एव यशस्वितमो भूत्वा प्रैति । य एवं विद्वानग्निष्टोमसद्भवति ॥ १० ॥

देवाश्च वा असुराश्च, उभये प्राजापत्याः पस्पृधिरे—एतस्मिन्यज्ञे प्रजापतौ पितरि संवत्सरे अस्माकमयं भविष्यति, अस्माकमयं भविष्यतीति ॥ ११ ॥

ततो देवा अर्चन्तः श्राम्यन्तश्चेरुः । तऽएतदग्निष्टोमसद्यं ददृशुः । तऽएतेनाग्निष्टोमसद्येन सर्वं यज्ञं समवृञ्जन्त । अन्तरायन्नसुरान्यज्ञात् । तथोऽएवैष एतेनाग्निष्टोमसद्येन सर्वं यज्ञं संवृङ्क्ते । अन्तरेति सपत्नान्यज्ञात् । तस्माद्वाऽअग्निष्टोमसद्भवति ॥ १२ ॥

---

ते वा इत्यादि । 'ते' एते ब्राह्मणाः सवनसमाप्तौ गच्छन्त 'एव' 'अग्निष्टोमसद्ये' अग्निष्टोमपर्यन्तं यत्सदनं तदग्निष्टोमसद्यम् । भावे ण्यत् प्रत्ययः ( पा. सू. ३ । १ । १२४ ) । "संज्ञापूर्वकस्य विधेरनित्यत्वाद्" (पा. सू. ६।४।१४६।प.९४) वृद्ध्यभावः । तस्मिन् तत्र स्वायत्तं सोमरूपं 'यशो' निधाय गच्छन्ति । अयशस इति । अतोऽमो लुगभावश्छान्दसः । ते तद्यागे गच्छन्तो यशोहीना 'भवन्ति', अतोऽग्निष्टोमसद्येन यजमानः पुनरपि तद्यशः स्वाधीनीकुरुते । पश्चाद्यज्ञसमाप्तौ तेषां मध्ये यशस्वितम एव भूत्वा प्रतिगच्छति । अतोऽग्निष्टोमसदनं सोमरूपयशसः प्राप्तिहेतुत्वेन प्रशस्तमित्यर्थः ॥ १० ॥

पुनरप्याख्यायिकया तदेव स्तौति—देवाश्च वा असुराश्चेत्यादि । एतस्मिन्यज्ञ इति । 'यज्ञे' इति यज्ञरूपे संवत्सरात्मके 'पितरि' विषये 'अयमस्माकमयमस्माकम्' इत्येवंरूपेण 'पस्पृधिरे' स्पर्द्धां कृतवन्तः । यज्ञस्य संवत्सरात्मकत्वकथनं साकल्यसूचनार्थम् । संवत्सरावयवीभूतमासगतद्वादशत्वसङ्ख्याविशिष्टैः स्तोत्रैः शस्त्रैः कृत्स्नस्य यज्ञस्य समाप्यत्वात् । पस्पृधिर इति । "अपस्पृधेथाम्" ( पा. सू. ६ । १ । ३६ ) इत्यस्य छन्दसि स्पर्द्धतेरुपलक्षणार्थत्वाल्लिट्यपि संप्रसारणम् ॥ ११ ॥

ततो देवा इत्यादि । 'ततः' सर्द्धानन्तरं ते देवाश्च 'अर्चन्तः' पूजयन्तः 'श्राम्यन्तः' तपस्यन्तश्च 'चेरुः' ततः स्वकीयतपःप्रभावेण यज्ञप्राप्तौ 'अग्निष्टोमसद्यं' साधनं 'ददृशुः' ततस्तेन समस्तं यज्ञं 'समवृञ्जन्त' असुरेभ्योऽपच्छिद्य स्वायत्तं कृतवन्तः । अतः 'असुरान्' 'यज्ञाद्' 'अन्तरायन्' अन्तरितान् यज्ञहीनानकुर्वन् । तस्मात्तथैव 'अग्निष्टोमसद्येन' यजमानोऽपि सर्वं यज्ञं स्वायत्तं कुरुते, 'सपत्नान्' च यज्ञहीनान् कुरुत इत्यर्थः ॥ १२ ॥

तं गृहीत्वोत्तरे हविर्धाने सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीत्युपकीर्णे वा ऽइतरान्ग्रहान्सादयत्यथैतं व्युह्य न तृणं चनान्तर्धाय ॥ १३ ॥

यद्वा ऽअस्योर्ध्वं नाभेः । ( स्तु ) तदस्यैत ऽआत्मन ऽ उपरीव वै तद्यदूर्ध्वं नाभेरुपरीवैतद्यदुपकीर्णं तस्मादुपकीर्णे सादयत्यथैतं व्युह्य न तृणं चनान्तर्धाय ॥ १४ ॥

यद्वाऽअस्यावाचीनं नाभेः । ( स्तु ) तदस्यैष आत्मनोऽध ऽइव वै तद्यदवाचीनं नाभेरध ऽइवैतद्यद्व्युह्य न तृणं चनान्तर्धाय तस्मादेतं व्युह्य न तृणं चनान्तर्धाय सादयति ॥ १५ ॥

( त्ये ) एष वै प्रजापतिः । ( र्यं ) य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता ऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते स यानुपकीर्णे सादयति तस्माद्यास्तानु प्रजाः प्रजायन्ते ता अन्येनात्मनोऽस्यां प्रतितिष्ठन्ति या वै

---

तं गृहीत्वोत्तरे हविर्धाने सादयति । प्राणा वै ग्रहाः, नेत्प्राणान्मोहयानीति । उपकीर्णे वाऽइतरान् ग्रहान्सादयति । अथैतं व्युह्य न तृणं चनान्तर्धाय ॥ १३ ॥

यद्वाऽअस्योर्ध्वं नाभेः—तदस्यैतऽआत्मनः । उपरीव वै तद् यदूर्ध्वं नाभेः । उपरीवैतद्यदुपकीर्णम् । तस्मादुपकीर्णे सादयति । अथैतं व्युह्य न तृणं चनान्तर्धाय ॥ १४ ॥

यद्वाऽअस्यावाचीनं नाभेः—तदस्यैष आत्मनः । अध इव वै तद् यदवाचीनं नाभेः । अध इवैतद् व्युह्य न तृणं चनान्तर्धाय सादयति ॥ १५ ॥

एष वै प्रजापतिः—य एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते । स यानुपकीर्णे सादयति—तस्माद् यास्तानु प्रजाः प्रजायन्ते ता अन्येनात्मनोऽस्यां प्रति-

---

गृहीतस्य सोमरसस्य देशविशेषसादनं तत्रोपपत्तिश्चाह—तं गृहीत्वेत्यादि । प्राणा वै ग्रहा इति । 'ग्रहाः' 'प्राणाः' इन्द्रियात्मकाः, इन्द्रियाणां प्राणत्वव्यवहारः "तस्माद्द्वौ द्वौ प्राणाः" (तै. सं. ६।४।९ ) इत्येवमादिश्रुतेः । प्राणात्मकैर्ग्रहैः सहापानात्मकध्रुवग्रहस्य सादनेऽपानवाय्वनुसारेण वर्त्तमानत्वात् प्राणा मूढा भवेयुः । अतो नैव प्राणान् मोहयामीत्युत्तरहविर्द्धाने सादयेदित्यर्थः । ग्रहान्तरसादनवैलक्षण्येनैतत्सादनप्रदेशस्य विशेषमाह—उपकीर्णे वा इत्यादि । 'इतरान्' उपांश्वादीन् 'ग्रहान्' 'उपकीर्णे' पांसुभिर्न्युत्तखरप्रदेशे सादयेत् । 'एतम्' ध्रुवं ग्रहन्तु 'व्युह्य' सादनस्थानगतं यत्किञ्चिदपसार्य तत्र तृणमात्रमप्यव्यवहितं कृत्वा सादयेत् ॥ १३ ॥

उक्तेऽर्थे कारणमुपन्यस्यति—यद्वा अस्येत्यादि । 'नाभेः' ऊर्ध्वभागस्य पुरुषस्योपरिभागत्वात्तद्भागत्वाच्चक्षुरादिरूपाणां ग्रहाणामुच्छ्रिते खरे सादनं प्रयुज्यते । नाभ्यधोभागरूपस्य तु ध्रुवग्रहस्य तृणमप्यनन्तर्धायाधोभागे पृथिव्यामेव सादनं युक्तमित्यर्थः ॥ १४ ॥ १५ ॥

उक्तावुपकीर्णावनुपकीर्णौ ग्रहसादनप्रदेशौ प्रशंसति—एष वै प्रजापतिरित्यादि । 'यः' 'यज्ञस्तायते' विस्तार्यते 'एषः' 'प्रजापतिः' इति प्रसिद्धम् "यज्ञो वै प्रजापतिः" (तै. ब्रा. १।३।१० )—इत्यादिश्रुतेः । अतो 'यस्माद्'

शफैः प्रतितिष्ठन्ति ता ऽअन्येनात्मनोऽस्यां प्रतितिष्ठन्त्यथ यदेतं व्युह्य न तृणं चनान्तर्धाय सादयति तस्माद्या ऽएतमनु प्रजाः प्रजायन्ते ता आत्मनैवास्यां प्रतितिष्ठन्ति मनुष्याश्च श्वापदाश्च ॥ १६ ॥

तद्वा ऽएतत् । ( द ) अस्या एवान्यदुत्तरं करोति यदुपकिरति स यानुपकीर्णे सादयति तस्माद्यास्ताननु प्रजाः प्रजायन्ते ता अन्येनैवात्मनोऽस्यां प्रतितिष्ठन्ति शफैः ॥ १७ ॥

(स्त) तद्वा ऽएतत् । (दा) आहवनीये जुहृति पुरोडाशं धानाः करम्भं दध्यामिक्षामिति तद्यथा मुख ऽआसिञ्चेदेवं तदथैष ऽएकरूप ऽउपशेत-

---

तिष्ठन्ति । या वै शफैः प्रतितिष्ठन्ति—ता अन्येनात्मनोऽस्यां प्रतितिष्ठन्ति । अथ यदेतं व्युह्य न तृणं चनान्तर्धाय सादयति—तस्माद् याऽएतमनु प्रजाः प्रजायन्तेऽता आत्मनैवास्यां प्रतितिष्ठन्ति—मनुष्याश्च श्वापदाश्च ॥ १६ ॥

तद्वाऽएतदस्या एवान्यदुत्तरं करोति—यदुपकिरति स यानुपकीर्णे सादयति । तस्माद्यास्ताननु प्रजाः प्रजायन्ते—ताः अन्येनैवात्मनोऽस्यां प्रतितिष्ठन्ति—शफैः ॥ १७ ॥

तद्वाऽएतदाहवनीये जुह्वति पुरोडाशम्, धानाः, करम्भम्, दधि, आमिक्षामिति । तद्—यथा मुख

---

यज्ञाद् ' इमाः ' ' प्रजाः ' पूर्वमपि ' प्रजाताः ' । ' एतर्हि ' ' अपि ' अस्मिन् कालेऽपि ' एतम् ' यज्ञमेवानुलक्ष्य ' प्रजायन्ते ' । यज्ञश्च ग्रहात्मकः ' तस्माद् ' उपकीर्णखरप्रदेशे ' यान् ' ग्रहान् सादयति ' प्रजाः ' ' तान् ' ग्रहान् अनुलक्ष्य ' प्रजायन्ते ' ' ताः ' ' आत्मनः ' ' अन्येन ' वस्तुना ' अस्यां ' पृथिव्यां प्रतिष्ठिता भवन्ति । ता एव प्रदर्श्यन्ते—या वै शफैरित्यादिना । गवाश्वादयः ' शफैः ' प्रतिष्ठिताः ' प्रजाः ' शफशब्देनात्र शफाग्राणि विवक्ष्यन्ते, तेषाञ्च छेदनेऽपि न व्यथत इत्यात्मनोऽन्यत्वम् । ' अथ ' यस्माद् ' एनं ' ध्रुवं ग्रहं ' व्युह्य ' ' तृणम् ' अप्यनन्तर्धाय पृथिवीतल एव सादयन्ति ' तस्माद् ' ' एतम् ' ध्रुवं ग्रहमनुलक्ष्य याः ' प्रजाः ' ' प्रजायन्ते ' ' ताः ' ' आत्मनैव ' आत्मसम्बन्धिनाऽङ्गेनैव ' अस्याम् ' भूमौ प्रतिष्ठिता भवन्ति, न त्वन्येन ताश्च प्रजाः ' मनुष्याः ' ' श्वापदाश्च ' व्याघ्रादयो वनचराः श्वापदाः । अतोऽत्रोपकीर्णानुपकीर्णयोर्ग्रहसादनप्रदेशयोर्यज्ञस्योभयविधप्रजासृष्टौ साधनत्वात् प्रशस्तत्वमित्यर्थः ॥ १६ ॥

उपकीर्णे ग्रहाणां सादनात्ततो जाताः प्रजाः कथमात्मनोऽन्येन प्रतितिष्ठन्तीत्यत आह—तद्वा इत्यादि । ' उपकिरति ' खराकारेण पांसून् विक्षिपन्ति यत्, ' तदस्याः ' पृथिव्याः । सकाशात् ' एवान्यदुत्तरम् ' ऊर्ध्वरूपं कक्षान्तरं ' करोति ' । ' तस्मात् ' तत्र सादितेभ्यो ग्रहेभ्यः ' प्रजाताः ' ' प्रजाः ' ' आत्मनः ' ' अन्येन ' प्रतिष्ठिता भवन्ति । शफैरिति, अन्येनेत्यस्य विशेषः । अन्येनेति यत्किञ्चिद्वस्तुपरतया सामान्यनिर्देशत्वादेकवचनम् ॥ १७ ॥

अपानवाय्वात्मकत्वादस्य ग्रहस्य पृथिवीतल एव सादनात्ततो जाताः प्रजा आत्मनैव प्रतिष्ठिता इत्युक्तम् । तत्र यद्ययं ग्रहोऽपानात्मकः स्यात्तदैवं भवतु, न चासावपानात्मक इत्युक्तमनुपपन्नमित्यत आह—तद्वा एतदित्यादि ।

ऽआप इवैव तस्माद्यदनेन मुखेन नानारूपमशनमश्नात्यथैतेन प्राणेनैकरूपमेव प्रस्रावयतेऽप इवैवाथ यस्माद्ध्रुवो नाम ॥ १८ ॥

देवा ह वै यज्ञं तन्वानाः । ( स्ते ) तेऽसुररक्षसेभ्य ऽआसङ्गाद्बिभयांचक्रुस्तान्दक्षिणतोऽसुररक्षसान्यासेजुस्तेषामेतान्दक्षिणान्ग्रहानुज्जघ्नुरप्येतद्दक्षिणᳫँ हविर्धानमुज्जघ्नुरथैतमेव न शेकुरुद्धन्तुं तदुत्तरमेव हविर्धानं दक्षिणᳫँ हविर्धानमदृᳫँहत्तद्यदेतं न शेकुरुद्धन्तुं तस्माद्ध्रुवो नाम ॥ १९ ॥

तं वै गोपायन्ति । शिरो वाऽएष ऽएतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विᳫँशतिश्चतुर्विᳫँशत्यक्षरा वै गायत्री

---

ऽआसिश्चेत्—एवं तत् । अथैष एकरूप उपशेते आप इवैव । तस्माद्—यदनेन मुखेन नानारूपमशनमश्नाति—अथैतेन प्राणेनैकरूपमेव प्रस्रावयते—अप इवैव । अथ यस्माद् ध्रुवो नाम ॥ १८ ॥

देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुः । तान् दक्षिणतोऽसुररक्षसान्यासेजुः । तेषामेतान्दक्षिणान्ग्रहानुज्जघ्नुः । अप्येतद्दक्षिणं हविर्धानमुज्जघ्नुः । अथैतमेव न शेकुरुद्धन्तुम् । तदुत्तरमेव हविर्धानं दक्षिणं हविर्धानमदृंहत् । तद्यदेतं न शेकुरुद्धन्तुम्—तस्मात् ध्रुवो नाम ॥ १९ ॥

तं वै गोपायन्ति । शिरो वाऽएष एतस्यै गायत्र्यै । यज्ञो वै गायत्री । द्वादश स्तोत्राणि, द्वादश

---

' तद् ' ' एतत् ' पुरोडाशधानादिकम् ' आहवनीये ' जुह्वति ' प्रक्षिपन्ति । ' तत् ' तेन हेतुना यथा मुखमध्ये ' आसिञ्चेत् ' प्रक्षिपेद् ' एवम् ' आसेचनप्रकारः ' तत् ' क्षेपणम् ' अथ ' ' आप इव ' ' एषः ' ध्रुवग्रहोऽवतिष्ठते यतः ' तस्माद् ' अनेन ' मुखेन ' बहुविधम् ' अशनमश्नाति ' । ' अथ ' अनन्तरम् ' एतेन ' अवाचीनेन ' प्राणेन ' ' अप इव ' ' एकरूपमेव ' मूत्रं ' प्रस्रावयते ' । तस्मादेकरूपस्य ध्रुवग्रहस्यैकरूपमूत्रविस्रंसनकरणभूतापानवाय्वात्मकत्वादुक्तमुपपन्नमिति भावः ।

ग्रहस्य ध्रुवनामधेयप्राप्तिमाख्यायिकया दर्शयति—अथ यस्मादित्यादि । ' यस्मात् ' कारणात् ध्रुवशब्दो ग्रहस्य नामधेयम् तत् कारणं किमित्यर्थः । अथ शब्देनात्र प्रश्नः प्रस्तूयते ॥ १८ ॥

तान् दक्षिणत इत्यादि । 'दक्षिणतो' दक्षिणभागे । सप्तम्यर्थे तसिः । (पा.सू.५।३।८) तत्र 'असुररक्षसानि' ' तान् ' देवान् 'आसेजुः' आसक्ता बभूवुः । बहुलवचनेन "दंशसञ्जस्वञ्जां शपि" (पा. सू. ६।४।२६) इति । शबभावेऽपि नकारलोपे कृते एत्वाभ्यासलोपौ (पा.सू ६।४।१२०) । ' तेषाम ' असुररक्षसानामर्थे ' एतान् ' दक्षिणहविर्द्धानगतान् ' ग्रहान् ' ' उज्जघ्नुः ' प्रचिक्षिपुः । अत्र हिंसार्थेन हन्तिना तदर्थः प्रक्षेपो लक्ष्यते । न केवलं ग्रहमात्रं प्रक्षिप्तं ' दक्षिणम् ' ' हविर्द्धानम् ' ' अपि ' प्रचिक्षिपुः । पश्चाद् 'एतं' ग्रहमप्युद्धृत्य प्रक्षेप्तुमुद्युक्तास्तथा कर्त्तुं न शक्नुवन्तः । अत उत्तरम ' हविर्धानम् ' ' दक्षिणम् ' ' हविर्द्धानम् ' प्रति ' अदृंहत् ' दृढमभूत् । ' तस्माद् ' अस्य ग्रहस्योद्धर्त्तुमशक्यत्वाद् ध्रुवनामधेयम् । " ध्रु गतिस्थैर्ययोः "—(धा. पा. तु.प. ११९) इत्यस्मात्स्थैर्यवचनात् पचाद्यचि "संज्ञापूर्वको विधिरनित्यः" ( पा. सू. ६।४।१४६। प. ९४ ) इति गुणे निवृत्ते उवङादेशे ( पा. सू. ६ । ४ । ७७ ) ' ध्रुवः ' इति भवति ॥ १९ ॥

विधत्ते—तं वै गोपायन्तीति । ग्रहणमारभ्य होमपर्यन्तं रक्षेयुरित्यर्थः । ' गोपायन्ति " इति " गुपूधूप—"

तस्या ऽएष शिरः श्रीर्वै शिरः श्रीर्हि वै शिरस्तस्माद्योऽर्धस्य श्रेष्ठो भवत्यसावमुष्यार्धस्य शिर इत्याहुः श्रेष्ठो ह व्यथेत यदेष व्यथेत यजमानो वै श्रेष्ठो नेद्यजमानो व्यथताऽइति तस्माद्वै गोपायन्ति ॥ २० ॥

वत्सो वाऽएषः । (ऽ) एतस्यै गायत्र्यै यज्ञो वै गायत्री द्वादश स्तोत्राणि द्वादश शस्त्राणि तच्चतुर्विंशतिश्चतुर्विंशत्यक्षरा वै गायत्री तस्याऽएष वत्सस्तं यद्गोपायन्ति गोपायन्ति वाऽइमान्वत्सान्दोहाय यदिदं पयो दुह्रऽएवमियं गायत्री यजमानाय सर्वान्कामान्दोहाताऽइति तस्माद्वै गोपायन्ति ॥ २१ ॥

---

शस्त्राणि—तच्चतुर्विंशतिः । चतुर्विंशत्यक्षरा वै गायत्री । तस्याऽएष शिरः । श्रीर्वै शिरः । श्रीर्हि वै शिरः । स्तस्माद्योऽर्धस्य श्रेष्ठो भवति । असावमुष्यार्धस्य शिर इत्याहुः । श्रेष्ठो ह व्यथेत । यदेष व्यथेत । यजमानो वै श्रेष्ठः । नेद् यजमानो व्यथताऽइति । तस्माद्वै गोपायन्ति ॥ २० ॥

वत्सो वाऽएष एतस्यै गायत्र्यै । यज्ञो वै गायत्री । द्वादश स्तोत्राणि, द्वादश शस्त्राणि—तच्चतुर्विंशतिः । चतुर्विंशत्यक्षरा वै गायत्री । तस्या एष वत्सः तं यद्गोपायन्ति–गोपायन्ति वा इमान्वत्सान्दोहाय–यदिदं पयो दुहे । एवमियं गायत्री यजमानाय सर्वान्कामान्दोहाताऽइति । तस्माद्वै गोपायन्ति ॥ २१ ॥

---

( पा. सू. ३।१।२८ ) इत्यादिनाऽऽयप्रत्ययः । रक्षणे प्रयोजनमाह—शिरो वा इत्यादि । श्रीर्वै शिर इत्यादि । 'शिरः श्रीः' इति प्रसिद्धमिति लोकप्रसिद्धयभिधानम् । 'श्रीर्हि वै शिरः' इत्यभिनयेन स्थाने च प्रसिद्धिः प्रदर्श्यते । 'तस्मात्' शिरसः श्रीरूपत्वाद् 'यो' यस्य 'अर्धस्य' भागस्य 'श्रेष्ठः' श्रिया प्रशस्ततरो भवति । 'असावमुष्यार्धस्य शिरः' इति वा ये लोका वदन्ति । लोके च श्रेष्ठस्य समृद्धिमन्ये न सहन्त इति ततो बिभेति । अतोऽत्र श्रेष्ठत्वादेव ग्रहो 'व्यथेत' इति, ( एतत् ) एतेन लोके श्रेष्ठ एव व्यथते । तथा च सत्यत्र यजमानस्य श्रेष्ठत्वात्तस्यापि व्यथा स्यात् । अतो नैव यजमानो व्यथतामिति तदर्थं ध्रुवग्रहं गोपायेयुरित्यर्थः । "व्यथ भयसंचलनयोः" ( धा. पा. भ्वा. आ. ७६६ ) "लिङर्थे लेट्" ( पा. सू. ३ । ४ । ७ "लेटोऽडाटौ" ( पा० सू० ३।४।९४ ) इत्यडागमः । "एत ऐ" ( पा० सू० ३ । ४ । ९३ ) इत्यकारादेशः ॥२०॥

प्रकारान्तरेण ग्रहस्य रक्षणं प्रशंसति—वत्सो वा एष इत्यादि । यदिदं पय इत्यादि । वत्सानां रक्षणेन गौर्यथा 'इदम् पयः' 'दुहे' दुग्धे । "लोपस्त आत्मनेपदेषु"—( पा. सू. ७ । १ । ४१ ) इति तकारलोपः । "बहुलं छन्दसि"—( पा. सू. ७ । १ । ८ ) इति रुडागमः । 'एवमियम्' यज्ञरूपा 'गायत्री' वत्सरूपस्य ध्रुवग्रहस्य रक्षणेन 'यजमानाय' 'सर्वान्' 'कामान्' 'दोहाता इति' तदर्थं ध्रुवग्रहं चक्रे रक्षेयुः । ध्रुवग्रहरक्षणस्य सर्वकामप्राप्तिहेतुत्वात् प्रशस्तत्वम् ॥ २१ ॥

( न्त्यु ) अथ यदध्वर्युश्च प्रतिप्रस्थाता च । निश्च क्रामतः प्र च पद्येते अथा बद्धवत्सोपाचरेदेवमेतं ग्रहमुपाचरतस्तमवनयति गायत्रीमेवैतत्प्रस्नावयति प्रत्तेयं गायत्री यजमानाय सर्वान्कामान्दोहाताऽइति तस्माद्वाऽअवनयति ॥ २२ ॥

सोऽवनयति । ध्रुवं ध्रुवेण मनसा व्वाचा सोममवनयामीति गृह्णामीति वाथा न इन्द्र इद्विशोऽसपत्नाः समनसस्करदिति यथा न इन्द्र इमाः प्रजा व्विशः श्रियै यशसेऽन्नाद्यायासपत्नाः संमनसस्करवदित्येवैतदाह ॥२३॥

---

अथ यदध्वर्युश्च प्रतिप्रस्थाता च निश्च क्रामतः प्र च पद्येते । यथा बद्धवत्सोपाचरेद्–एवमेतं ग्रहमुपाचरतः । तमवनयति । गायत्रीमेवैतत्प्रस्नावयति । प्रत्तेयं गायत्री यजमानाय सर्वान्कामान्दोहाताऽइति । तस्माद्वाऽअवनयति ॥ २२ ॥

सोऽवनयति–" ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामि "–(वा० सं० ७ । २५ ) इति । गृह्णामीति वा । " अथा न इन्द्र इद्विशोऽसपत्नाः समनसस्करत् "–(वा० सं० ७।२५) इति । यथा न इन्द्र इमाः प्रजाः; विशः श्रियै यशसेऽन्नाद्यायासपत्नाः संमनसः करवदित्येवैतदाह ॥ २३ ॥

---

अध्वर्युप्रतिप्रस्थात्रोर्निर्गमनागमनाभ्यां ग्रहस्य वत्सरूपतां प्रतिपादयति–**अथ यदध्वर्युश्चेत्यादि** । ' निश्च क्रामतः ' ग्रहणानन्तरं निष्क्रामतः । " व्यवहिताश्च "–( पा. सू. १ । ४ । ८२ । ) इति निसश्च-कारात्पूर्वं प्रयोगः। ततो होमकाले ग्रहं 'प्रपद्येते च' अत्रापि पूर्ववत् प्रशब्दस्य प्रयोगः। इत्थञ्च 'यथा बद्धवत्सा' गौर्गत्वा पश्चाद् वत्सम् 'उपाचरेत्' वत्ससमीपमागच्छेत् । 'एवम्' तावध्वर्यू वत्सरूपं ध्रुवग्रहमुपचरितवन्तौ भवत इत्यर्थः । ग्रहस्यावनयनं विधत्ते–**तमवनयतीत्यादि** । " तं शस्यमानेऽवनयति " ( श. प. ४।२।४।७ ) "अथैतमेव होतृचमसेऽवनयति" ( शत. ४ । २ । ४ । १ ) इति, कालस्य होतृचमसस्य च विहितत्वादग्निमारुतशस्त्रशंसनकाले होतृचमसे ध्रुवग्रहमासिञ्चेत् । **गायत्रीमेवैतादित्यादि** । 'प्रस्नावयति' इति प्रस्तुतं करोति । दोहार्थं पयःपरिपूरितस्तनाग्रतः पयःक्षरणात् क्षारयन्ती प्रस्तुता । **प्रत्ता** इति । प्रदातुमुपक्रान्ता ॥ २२ ॥

विहितमवनयनमनूद्य मन्त्रं विदधानो व्याचष्टे–**सोऽवनयति ध्रुवमित्यादि** । **गृह्णामीति वेति** । ' अवनयामि ' इत्यस्य स्थाने ' गृह्णामि ' इति शब्दो 'वा' प्रयोक्तव्य इत्यर्थः। अत एव कात्यायनः–"अवनयामिस्थाने गृह्णामीति च " । अथात इत्यस्य मन्त्रभागस्योच्चारणेऽयमभिप्रायः–' नः ' अस्माकम् ' विशः ' ' प्रजाः ' ' श्रियै ' ' यशसे ' ' अन्नाद्याय ' ' असपत्नाः ' शत्ररहिताः ' समनसः ' इन्द्र एव करोत्विति । हे ग्रह ! ' ध्रुवेण ' एकाग्रेण ' मनसा वाचा ' मन्त्रोच्चारणेन च होतृचमसगतं सोमं प्रति त्वाम् ' ध्रुवम् ' अवनयामि । ' अथ ' ' इन्द्रः ' एव ' नः ' अस्माकम् ' विशः ' ' असपत्नाः ' ' समनसः ' करोत्विति मन्त्रस्यार्थः ॥ २३ ॥

---

१–अयं मन्त्रः संहितायां " मूर्द्धानं दिव " इत्युत्तरमन्त्रादूर्ध्वं पठयते। २–' इद् ' एवार्थे इति ( वा. सं. अ. ७ कं. २५ । भाष्ये महीधरः । ३–नेदं सूत्रं कातीयसूत्र उपलभ्यते । परंचैतदभिप्रायकं भाष्यं तु दृश्यते । अत इदं भाष्यमेव मंतव्यम् ।

(हा)अथातो गृह्णात्येव। मूर्धानं दिवोऽअरतिं पृथिव्या वैश्वानरमृतऽआ जातमग्निम्। कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः। उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तमऽ एष ते योनिर्वैश्वानराय त्वेति सादयति व्युह्य न तृणं चनान्तर्धाय वैश्वानराय ह्येनं गृह्णाति ॥ २४ ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ४-२-३ ॥ [ २. ४. ]

---

अथातो गृह्णात्येव—" मूर्धानं दिवोऽअरतिं पृथिव्या वैश्वानरमृतऽआ जातमग्निम्। कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः "–( वा० सं० ७ । २४ ) उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तमः, एष ते योनिर्वैश्वानराय त्वा "–( वा० सं० ७ । २५ ) इति सादयति । व्युह्य न तृणं चनान्तर्धाय । वैश्वानराय ह्येनं गृह्णाति ॥ २४ ॥

---

ग्रहस्य ग्रहणमनूद्य मन्त्रं विधत्ते—अथातो गृह्णात्येव मूर्द्धानं दिव इत्यादि । अत्र मन्त्रे सर्वात्मा वैश्वानराग्निः स्तूयते । ' दिवः ' द्युलोकस्य ' मूर्द्धानम् ' सूर्यात्मनाऽवस्थितम् ' पृथिव्याः ' पृथिवीशब्दोऽत्रान्तरिक्षवचनः ( निघं. १ । ३ । ९ । ) तस्य ' अरतिं ' पर्याप्तमतिं तदभिमानिनीं देवताम् । वायुरूपत्वाश्रयणात् । वायोश्चान्तरिक्षलोकाभिमानित्वं श्रूयते—" वायुर्वा अन्तरिक्षस्याध्यक्षाः " इति । भूमौ च तृतीये यज्ञे ' आजातम् ' अरण्योरुत्पन्नम् ' वैश्वानरम् ' विश्वेषां नराणां सम्बन्धिनम् ' अग्निम् ' ' कविम् ' प्रत्यगात्मत्वेन क्रान्तदर्शनम् ' सम्राजम् ' सम्यग्राजमानम् । ' जनानाम् ' यजमानलक्षणानाम् । 'अतिथिम्' । अत एवातिथ्येष्टौ "अग्नेरातिथ्यमसि विष्णवे त्वा" (शत.३।४।१।११) इत्यतिथिरूपायाग्नये निर्वापः क्रियते । योऽयमुक्तगुणो वैश्वानरोऽग्निस्तम् ' देवाः ' इन्द्रादयः ' आसन् ' आसनि आस्ये । आस्यशब्दस्य " पद्दन्नोमासू० "–( पा. सू. ६ । १ । ६३ ) इत्यादिनाऽऽसन्नादेशः । ' पात्रम् ' पानसाधनमाभिमुख्येन ' जनयन्त ' "बहुलं छन्दस्यमाङ्योगेऽपि" (पा. सू.६।४।७५) इति अडागमाभावः । अग्निना प्रापितः सोमो देवैः पीयत इत्यग्नेः पानसाधनत्वम् । तथा च श्रूयते—"अग्निमुखा वै देवाः" (आश्व.गृ.सू.पा.प्र. )इति । हे सोमरस ! त्वम् उपयामेन स्थालीरूपेण गृहीतोऽसि । त्वाम् ' वैश्वानराय ' अग्नये गृह्णामि । किञ्च ' ध्रुवोऽसि ' ध्रुवनामकोऽसि । अत एव ' ध्रुवक्षितिः ' स्थिरनिवासोऽसि । लोके ' ध्रुवाणाम् ' मध्ये ' ध्रुवतमः ' अतिशयेन ध्रुवोऽसि ' अस्यैव व्याख्यानम् ' अच्युतानामच्युतक्षित्तमः ' इति । अथ ' एनम् ' ' व्युह्य न तृणं चनान्तर्द्धाय ' ' सादयति ' इति सादनं विहितम् । तदनूद्यात्र मन्त्रं विधत्ते—एष ते योनिरित्यादि । मन्त्रे वैश्वानरपदप्रयोगस्योपपत्तिमाह—वैश्वानराय हीति । " उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय " इति ग्रहस्य गृहीतत्वात्तस्य सादनेऽपि वैश्वानरपदं प्रयुक्तमित्यर्थः ॥ २४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
चतुर्थकाण्डे द्वितीयेऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ४ । २ । ४ ) ॥

---

१–ध्रुवं मूर्द्धानं दिव इति । का. श्रौ. सू. ९ । १४५ ।

ग्रहान्गृहीत्वा। (त्वो)उपनिष्क्रम्य विप्रुषाᳫँ होमं जुहोति तद्यद्विप्रुषाᳫँ होमं जुहोति या ऽएवास्यात्र विप्रुष स्कन्दन्ति ता ऽएवैतदाहवनीये स्वगा करोत्याहवनीयो ह्याहुतीनां प्रतिष्ठा तस्माद्विप्रुषाᳫँहोमं जुहोति॥ १॥

स जुहोति । यस्ते द्रप्स स्कन्दति यस्ते ऽअᳫँशुरिति यो वै स्तोकः स्कन्दति स द्रप्सस्तत्तमाह यस्ते ऽअᳫँशुरिति तदᳫँशुमाह ग्रावच्युतो धिषणयोरुपस्थादिति ग्राव्णा हि च्युतो ऽधिषवणाभ्याᳫँस्कन्दत्यध्वर्योर्वा परि वा यः पवित्रादित्यध्वर्योर्वा हि पाणिभ्याᳫँस्कन्दति पवित्राद्वा तं ते जुहोमि मनसा वषट्कृतᳫँस्वाहेति तद्यथा वषट्कृतᳫँहुतमेवमस्यैतद्भवति ॥ २ ॥

---

ग्रहान्गृहीत्वा उपनिष्क्रम्य विप्रुषां होमं जुहोति । तद् यद्विप्रुषां होमं जुहोति । या एवास्यात्र विप्रुषः स्कन्दन्ति—ता एवैतदाहवनीये स्वगा करोति । आहवनीयो ह्याहुतीनां प्रतिष्ठा । तस्माद् विप्रुषां होमं जुहोति ॥ १ ॥

स जुहोति—" यस्ते द्रप्स स्कन्दति यस्ते ऽअंशुः "—( वा. सं. ७ । २६ ) इति । यो वै स्तोकः स्कन्दति स द्रप्सस्तत्—तमाह । यस्ते ऽअंशुरिति । तदंशुमाह । "ग्रावच्युतो धिषणयो-

---

गतेषु ब्राह्मणेषु प्रातःसवनिकानामुपांश्वादीनां ग्रहाणां ग्रहणं विहितम् । तदनन्तरकर्त्तव्यं बहिष्पवमानस्तोत्रादिकमस्मिन् ब्राह्मणेऽभिधीयते । तत्र तावदभिषवकाले ग्रहणकाले च स्कन्नानां सोमबिन्दूनां स्कन्दनप्रत्यवायपरिहाराय विप्रुषां होमं विधत्ते—ग्रहान्गृहीत्वोपनिष्क्रम्य विप्रुषां होमं जुहोति इति । ' उपनिष्क्रम्य ' हविर्द्धानान्निर्गत्य ' विप्रुषाम् ' अर्थे तत्र स्कन्दनप्रायश्चित्तत्वेन होमं कुर्यादित्यर्थः । यद्यप्यत्र ' जुहोति ' इत्यनेनैव होमं कुर्यादित्ययमर्थो लभ्यते । तथाप्यत्र ' होमम् ' इति पृथगुपात्तत्वाज्जुहोतिनैकदेशलक्षणया करोत्यर्थो लक्ष्यते । यथा " वाचमवोचत् " इत्यत्र । विहितस्य होमस्योपयोगमाह—तद्यद्विप्रुषां होममित्यादि । 'विप्रुषां होमं जुहोति' इति यत्, तत्कारणमुच्यते । 'अस्य' सोमस्य ' विप्रुषः ' अत्र ' ' स्कन्दन्ति' विशीर्णा भवन्ति । ' ताः ' एतेन विप्रुड्ढोमेन ' आहवनीये ' ' स्वगा करोति ' स्वस्थानमाहवनीयं गच्छन्तीति स्वगाः, तादृशीः कृतवान् भवति । यत आहवनीयः सर्वासाम् ' आहुतीनाम् ' ' प्रतिष्ठा ' आधारः । अत उक्तेन होमेन विप्रुषामाहवनीयम्प्रति प्रापणात् स्कन्दनप्रत्यवायो न भवतीत्यर्थः । ' स्वगा ' इति " अन्येष्वपि दृश्यते " ( पा. सू. ३ । २ । १०१ ) इति डप्रत्ययः । ततः स्त्रीलिङ्गाद् द्वितीयाबहुवचनस्य "सुपां सुलुक्" ( पा. सू. ७ । १ । ३९ ) इत्याकारादेशः ॥ १ ॥

विहितहोमे मन्त्रं चतुर्द्धा विभज्य विनियुञ्जानो मन्त्रस्य प्रथमभागे द्रप्सपदस्यार्थमाह—स जुहोति यस्ते द्रप्स इत्यादि । यो वै स्तोक इत्यादि । ' स्तोकः ' लघ्नो बिन्दुः स द्रप्सशब्दार्थः । अतोऽत्र ' तत् ' द्रप्सपदं ' तम् ' स्तोकम् ' आह ' इत्यर्थः ॥

---

१–अध्वर्युप्रतिप्रस्थातृप्रस्तोतृद्गातृप्रतिहर्तृसुन्वन्तः समन्वारब्धा निष्क्रामंति । अध्वर्युः प्रथमो यथासंख्यमितरे । का. श्रौ. सू. ९-१४९-१५० । २–हुत्वा वा समन्वारम्भेरन् । यस्त इति विप्रुषां होमं जुहति । अध्वर्युर्वा जुहोति । का. श्रौ. सू. ९।१५१-१५३।

(त्यु) अथ स्तीर्णायै व्वेदेः । (द्वैं) द्वे तृणेऽअध्वर्युरादत्ते तावध्वर्यू प्रथमौ प्रतिपद्येते प्राणोदानौ यज्ञस्याथ प्रस्तोता व्वागेव यज्ञस्याथोद्गातात्मैव प्रजापतिर्यज्ञस्याथ प्रतिहर्ता भिषग्वा व्यानो वा ॥ ३ ॥

तान्वाऽएतान् । पञ्चर्त्विजो यजमानोऽन्वारभतऽएतावान्वै सर्व्वो यज्ञो

---

रुपस्थात् "-( वा० सं० ७ । २६ ) इति । ग्राव्णा हि च्युतोऽधिषवणाभ्यां स्कन्दति । "अध्वर्योर्वा परि वा यः पवित्रात्"-( वा० सं० ७ । २६ ) इति । अध्वर्योर्वा हि पाणिभ्यां स्कन्दति, पवित्राद्वा । " तं ते जुहोमि मनसा वषट्कृतं स्वाहा " ( वा. सं. ७ । २६ )-इति । तद्यथा वषट्कृतं हुतम्-एवमस्यैतद्भवति ॥ २ ॥

अथ स्तीर्णायै वेदेः द्वे तृणेऽअध्वर्युरादत्ते । तावध्वर्यू प्रथमौ प्रतिपद्येते प्राणोदानौ यज्ञस्य । अथ प्रस्तोता वागेव यज्ञस्य । अथोद्गाता आत्मैव प्रजापतिर्यज्ञस्य । अथ प्रतिहर्ता भिषग्वा व्यानो वा ॥ ३ ॥

तान्वाऽएतान् पञ्चर्त्विजो, यजमानोऽन्वारभते । एतावान्वै सर्वो यज्ञो-यावन्त एते पञ्चर्त्विजो भवन्ति । पाङ्क्तो वै यज्ञः । तद् यज्ञमेवैतद्यजमानोऽन्वारभते ॥ ४ ॥

---

द्वितीयं भागं व्याचष्टे-ग्रावच्युत इत्यादि । अभिषवार्थेन ग्रा ( व्णा ) वाऽधिषवणयोरभिषवफलकयोश्च्युतस्ततोऽपि सोमसम्बन्धी द्रप्सोंऽशुश्च पतति यतः, अतोऽस्य मन्त्रस्योच्चारणम् ।

तृतीयं भागं व्याचष्टे-अध्वर्योर्वेत्यादि । ' अध्वर्योः ' ' पाणिभ्याम् ' ' पवित्राद्वा ' ' स्कन्दति ' इत्यनेनाभिप्रायेणाध्वर्योर्वेत्यादि प्रयुक्तम् ।

चतुर्थं व्याचष्टे-तं ते जुहोमीत्यादि । अत्र ' वषट्कृतम् ' इत्येतदुच्चारणेन सवषट्कारो होम एव भवतीत्यर्थः । हे सोम ! ग्राव्णश्च्युतः अधिषवणयोरुपस्थाच्च' च्युतः । अध्वर्योर्वा पवित्राद्वा च्युतो 'यस्तेंऽशुर्द्रप्सश्च ' ' ते ' तव सम्बन्धिनं तमंशुं द्रप्सं च मनसा ' वषट्कृतं ' सन्तं जुहोमि ' । इदं द्रव्यं स्वाहुतमस्तु । इति मन्त्रार्थः ॥ २ ॥

वैप्रुषहोमानन्तरं बहिष्पवमानार्थमध्वर्युणा तृणयोरादानं प्रथमं विधत्ते-अथेत्यादि । ( व्वेदितृणेऽध्वर्युरादत्ते प्रह्वा उदंचो गच्छन्ति । का० श्रौ० सू० ९ । १९४ । ) ' स्तीर्णायै ' इति षष्ठ्यर्थे चतुर्थी (पा. सू. २ । ६ । ६२ । वा. १ ) स्तीर्णायाः ' वेदेः ' सकाशात् ' तृणे०' आददीतेत्यर्थः । बहिष्पवमानायाध्वर्युप्रभृतीनां गमनम्,तेषां ( तच्च ) चानन्तर्यं विधत्ते-तावध्वर्यू प्रथमावित्यादि । ' तौ ' ' यज्ञस्य ' प्राणापानात्मकावध्वर्युप्रतिप्रस्थातारौ ' प्रथमौ ' ' प्रतिपद्येते ' गन्तुमुपक्रामतः । एवमुत्तरत्र वाक्येष्वपि योजना । अथोद्गातेति, यज्ञस्योच्यते । उद्गाता च यज्ञाङ्गत्वात् ' प्रजापतिः ' । स च ' यज्ञस्य ' ' आत्मा ' मध्यशरीरम् । अत्राध्वर्युप्रभृतीनां यज्ञसम्बन्धिप्राणाद्यात्मकत्वकथनेन यज्ञस्य मुख्याङ्गं बहिष्पवमानंप्रति गन्तृत्वे योग्यता प्रदर्शिता ॥ ३ ॥

यजमानेनाध्वर्युप्रभृतीनां स्पर्शनं सोपपत्तिकं विधत्ते-तान्वा एतानित्यादि । ' एते ' ' पञ्चर्त्विजो '

यावन्तऽएते पञ्चर्त्विजो भवन्ति यावान्वै यज्ञस्तद्यज्ञमेवैतद्यजमानोऽन्वारभते ॥ ४ ॥

(तऽथा)अथान्यतरत्तृणम्। (श्चा)चात्वालमभिप्रास्यति देवानामुत्क्रमणमसीति यत्र वै देवा यज्ञेन स्वर्गं लोकꣳ समाश्नुवत तऽएतस्माच्चात्वालादूर्ध्वाः स्वर्गं लोकमुपोदक्रामंस्तद्यजमानमेवैतत्स्वर्ग्यं पन्थानमनुसंख्यापयति ॥५॥

(त्य)अथान्यतरत्तृणम्।(म्पु)पुरस्तादुद्गातॄणामुपास्यति तूष्णीमेव स्तोमो वाऽएष प्रजापतिर्यदुद्गातारः स इदꣳ सर्वं युतऽइदꣳ सर्वꣳ संभवति तस्माऽएवैतत्तृणमपिदधाति तथो हाध्वर्युं न युते नैनꣳ सम्भवत्यथ यदा जपन्ति जपन्ति ह्यत्रोद्गातारः ॥ ६ ॥

---

अथान्यतरत्तृणं चात्वालमभि प्रास्यति–"देवानामुत्क्रमणमसि"–(वा. सं.७ । २६) इति । यत्र वै देवा यज्ञेन स्वर्गं लोकं समाश्नुवत, तऽएतस्माच्चात्वालादूर्ध्वाः स्वर्गं लोकमुपोदक्रामन् । तद्यजमानमेवैतत् स्वर्ग्यं पन्थानमनुसङ्ख्यापयति ॥ ५ ॥

अथान्यतरत्तृणं पुरस्तादुद्गातॄणामुपास्यति–तूष्णीमेव । स्तोमो वाऽएष प्रजापतिः–यदुद्गातारः । स इदं सर्वं युते, इदं सर्वं सम्भवति । तस्माऽएवैतत्तृणमपिदधाति । तथो हाध्वर्युं न युते, नैनं सम्भवति । अथ यदा जपन्ति । जपन्ति ह्यत्रोद्गातारः ॥ ६ ॥

---

'यावन्तो' यावत्परिमाणयुक्ताः । 'सर्वो यज्ञः' अपि 'एतावान्' एतत्परिमाणयुक्तः । एते पञ्चर्त्विज एव सकलो यज्ञः, तेषां यज्ञसम्बन्धिप्राणाद्यात्मकत्वेनाभिधानादित्यर्थः ॥ ४ ॥

विधत्ते–अथेत्यादि । ( "अन्यतरत्तृणं चात्वाले प्रास्यति देवानामिति" का० श्रौ० सू० ९ । १९९ । ) 'अथ' अध्वर्य्वादिगमनानन्तरमुपात्तयोस्तृणयोरन्यतरं 'चात्वालमभि' चात्वाले "देवानाम्" इत्यादिना मन्त्रेण 'प्रास्यति' प्रक्षिपेत् । हे चात्वाल ! त्वम् 'देवानामुत्क्रमणमसि' स्वर्गं प्रत्युत्क्रमणसमयेऽधिकरणमसि । चात्वाले तृणप्रक्षेपस्योपयोगमाह-यत्र वा इत्यादि । तद्यजमानमिति । 'तत्' तेन "देवानामुत्क्रमणमसि" इति मन्त्रं समुच्चार्य चात्वाले तृणप्रक्षेपेण 'यजमानमेव' 'स्वर्ग्यम्' स्वर्गप्राप्तिहेतुभूतम् 'पन्थानमनुसंख्यापयति' ज्ञापयति । सङ्ख्यातेरत्र ज्ञानार्थत्वाद् "गतिबुद्धि–" ( पा. सू. १ । ४ । ५२ ) इत्यादिना द्विकर्मकत्वम् ॥ ५ ॥

अवशिष्टस्य तृणस्य विनियोगं दर्शयति–अथान्यतरादित्यादि । स्तोमो वा, इति । स्तोत्रसाधनभूतानामृचां सङ्घः 'स्तोमः' । तेन च यज्ञो निष्पद्यत इति 'स्तोमः' एव 'एषः' प्रजापतिः' यज्ञः । स्तोमनिष्पादकानामुद्गातॄणामपि कार्यकारणाभेदविवक्षया स्तोमत्वम् । तेन प्रजापत्यात्मकत्वम् । प्रजापतिः स इदं 'सर्वम्' प्रपञ्चम् 'युते' मिश्रयति एकीकरोति । "यु मिश्रणामिश्रणयोः" ( धा. पा. अ. प. २३ ) इति धातुः ।

---

१–उद्गातॄणां पुरस्तादितरत्तूष्णीम् । का. श्रौ. सू. ९ । १५६ ।

( १ऽ४ ) अथ स्तोत्रमुपाकरोति । सोमः पवतऽइति स वै पुरागेव स्तोत्रमुपाकरोति पुराञ्च स्तुवते देवान्वाऽएतानि स्तोत्राण्यभ्युपावृत्तानि यत्पवमानाः पुराञ्चो ह्येतैर्देवाः स्वर्गं लोकꣳ समाश्नुवत तस्मात्पुरागेव स्तोत्रमुपाकरोति पुराञ्च स्तुवते ॥ ७ ॥

---

अथ स्तोत्रमुपाकरोति । "सोमः पवते"–( वा० सं० ७ । २४ ) इति । स वै परागेव स्तोत्रमुपाकरोति, पराञ्चः स्तुवते । देवान्वाऽएतानि स्तोत्राण्यभ्युपावृत्तानि–यत् पवमानाः । पराञ्चो ह्येतैर्देवाः स्वर्गं लोकं समाश्नुवत । तस्मात्परागेव स्तोत्रमुपाकरोति, पराञ्च स्तुवते ॥७॥

---

एकीकृत्य च 'इदम्' एव 'सर्वम्' स्वयं 'सम्भवति' । एतत् सर्वमात्मन्येव निधाय कारणात्मनाऽवतिष्ठत इत्यर्थः । 'तस्मात्' कारणादेतत्तृणप्रक्षेपेण प्रजापत्यात्मकानामुद्गातॄणामात्मनश्च मध्ये व्यवधानं सम्पादयति । एवञ्च प्रजापतिः 'अध्वर्युम्' 'न' मिश्रयति । 'न' अपि 'एनम्' 'सम्भवति' । तेन सह नैकी भवति, तस्य स्वरूपनाशो न भवतीत्यर्थः । कालविशेषे स्तोत्रोपाकरणं समन्त्रकं विधत्ते–अथ यदा जपन्तीत्यादि । 'यदा' यस्मिन् काले 'जपन्ति' तदा "सोमः पवते" ( वा. सं. ७ । २१ ) इत्यनेन स्तोत्रमुपाकुर्यात्, आरम्भयेत् । 'जपन्ति' ह्यत्रोद्गातारः' इत्यनेन बहिष्पवमानप्रदेशे जपः प्रसिद्ध इति दर्शितम् । यतो ब्रह्मक्षत्राद्यर्थं सोमः पवते, अतस्तं पवमानं सोमस्तुत्या समर्द्धयितुमुपक्रमध्वमित्यर्थः । अत एव "उपास्मै गायता नरः पवमानायेन्दवे" ( वा. सं. ३३ । ६२ )–इति श्रूयते । मन्त्रश्चाग्रयणब्राह्मण एव ( श. प. ४ । २ । २ । १२ ) व्याख्यातः ॥ ६ ॥

उक्ते उपाकरणमन्त्रे पवमानस्तोत्रेषु चानावृत्तिं विधत्ते–स वै परागेवेत्यादि । 'परागेव' अनावृत्त्यैव 'स्तोत्रम्' उपाकुर्यात्, स्तोत्रोपाकरणार्थं मन्त्रमुच्चारयेत् । तथाऽनावृत्त्यैव पवमानस्तोत्राणि निष्पादयेयुः । नन्वत्र पराञ्चोऽनावृत्ता एव चात्वालं गत्वा स्तुवत इति पराक्त्वं स्तोतॄणामेव विधीयते, तदनुपपन्नम् । उक्तं स्तोत्रय पराक्त्वमिति । नत्वत्र पराञ्च इति स्तोतॄणां पराक्त्वविधानेनैतन्निष्पाद्यस्तोत्रस्यापि पराक्त्वं विहितम्भवतीति । अत एव तैत्तिरियके श्रूयते–"पराञ्चो हि यन्ति पराचीभिः स्तुवते"(तै.सं.३।१।१०)इति नाऽनावृत्तिप्रसक्तावनावृत्तिर्विधातुं शक्यते, कथमत्र तत्प्रसक्तिरिति । उच्यते–तत्र च तावत् "सोमः पवते सोमः पवतेऽस्मै ब्रह्मणे" (वा.सं.७।२१) इत्यादिरत्रोपाकरणमन्त्र आम्नायते–अयञ्च मन्त्र आग्रयणग्रहग्रहानन्तरं वाग्विसर्जने विनियुक्तः । "अथाह सोमः पवते" (श.प.४।२।२।१२) इति । तद्वदेवात्रापि "सोमः पवत"–इत्येतस्य पदस्यावृत्तिः प्राप्तेत्यनावृत्तिरनुविधीयते । पवमानस्तोत्राणामपि स्तोत्रसाधारण्येनेतरस्तोत्रवदावृत्त्या गानं प्राप्तमित्यत्रानावृत्तिर्विधीयते यतः, अत एव बहिष्पवमाने त्रिवृत्स्तोमस्य विधायकं ब्राह्मणवाक्यमेवमाम्नायते । "तिसृभ्यो हिङ्करोति स पराचीभिस्तिसृभ्यो हिङ्करोति स पराचीभिः" ( साम.तां.ब्रा. ) इति । विहिते पराक्त्वे कारणमाह–देवान्वा

---

१–जपत्सुसोमः पवत इति पवमानोपाकरणं प्रस्तोत्रे तृणे प्रयच्छन् । सर्व्वेषु । अतृणो वा कुशमुष्टिं वा । नोत्तरसवनयोरयं विकल्पः । किंतु । प्रतःसवनएवायमितिकर्कः । प्रत्यङ्मुखा उपविशतः पुरस्ताद्दक्षिणो यजमानः । द्विवचनादध्वर्युः प्रतिप्रस्थाता चेति कर्कः । स्तूयमान उन्नेताऽध्वर्नायं पवित्रमंतर्द्धाय पूतभृत्यासिंचाति । सोममितिशेषः । का. श्रौ. सू. १५७–१६१ ।

(त॒ऽउ) उपा॒वर्त॑ध्वमि॒ति वा॒ऽअ॒न्यानि॒ स्तोत्रा॑णि । (ण्य) अ॒भ्याव॒र्तं धु॒र्यैं स्तुवत इ॒माऽवै॒ प्र॒जा ए॒तानि॒ स्तोत्रा॑ण्यभ्युपा॒वृत्ता॒स्तस्मादि॒माः प्र॒जाः पुनर॒भ्याव॒र्तं प्र॒जाय॑न्ते ॥ ८ ॥

(न्तेऽथ) अ॒थ यद॒त्र बहि॒ष्पवमा॒नेन स्तुवते । (ते॒ऽत्र) अ॒त्र ह वा॒ऽअसा॒वग्र॒ऽआ॒दित्य॒ऽआस त॒मृत॑वः परिगृह्यै॒वात॒ऽऊर्ध्वाः स्व॒र्गं लो॒कमु॒पोद॑क्रा॒मन्त्स॒ऽए॒ष ऋ॒तु॒षु प्र॒तिष्ठि॒त॒स्तपति त॒थो ए॒वैत॒दृत्वि॒जो य॒जमा॒नं परि॒गृह्यै॒वात ऊ॒र्ध्वाः स्व॒र्गं लो॒कमु॒पोत्क्रा॒मन्ति त॒स्मादत्र॒ बहि॒ष्पवमा॒ने॒न स्तुवते ॥ ९ ॥

---

उपावर्तध्वम् इति वाऽअन्यानि स्तोत्राणि, अभ्यावर्तं धुर्यैं स्तुवते । इमा वै प्रजा एतानि स्तोत्राण्यभ्युपावृत्ताः । तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते ॥ ८ ॥

अथ यदत्र बहिष्पवमानेन स्तुवते । अत्र ह वाऽअसावग्रऽआदित्य आस । तमृतवः परिगृह्यैवात ऊर्ध्वाः स्वर्गं लोकमुपोदक्रामन् । स एष ऋतुषु प्रतिष्ठितस्तपति । तथोऽएवैतदृत्विजो यजमानं परिगृह्यैवात ऊर्ध्वाः स्वर्गं लोकमुपोत्क्रामन्ति । तस्मादत्र बहिष्पवमानेन स्तुवते ॥ ९ ॥

---

इत्यादि । पवमानस्तोत्राणि देवानभिलक्ष्याभ्युपावृत्तत्वादितः परागभूतानि यतश्च 'देवाः' 'एतैः' स्तोत्रैः 'पराञ्चः' अनावृत्ता एव 'स्वर्गं लोकम्' प्राप्नुवन् 'तस्मात्' उपाकरणमन्त्रे पवमानस्तोत्रेषु च पराक्त्वमित्यर्थः ॥ ७ ॥

प्रसङ्गात् पवमानव्यतिरिक्तानां स्तोत्राणामुपाकरणे मन्त्रान्तरं सोपपत्तिकं दर्शयति—उपावर्त्तध्वमिति वा, इत्यादि । धुर्यशब्देनात्र पवमानव्यतिरिक्तानि स्तोत्राण्यभिधीयन्ते । तेषां यज्ञनिर्वाहकत्वात् । पुनःपुनरावृत्तिं कृत्वा स्तुवते । यतः ण्यन्ताद् "आभीक्ष्ण्ये णमुल् च"—(पा. सू. ३ । ४ । २२) इति णमुल्प्रत्ययः । द्विर्वचनाभावश्छान्दसः । अतस्तेषां स्तोत्राणामुपाकरणे "उपावर्त्तध्वम्"—इति मन्त्रः । "उपावर्त्तध्वम्" इत्यत्र अन्तर्भावितण्यर्थस्य व्यवहृतत्वात् पुनःपुनरावृत्तिं कृत्वा स्तुध्वमित्यर्थः । अत्र कात्यायनः—"स्तोत्रमुपाकरोति तृणाभ्यां ग्रहमुपस्पृश्योपावर्त्तध्वमिति । एवं धुर्येषु सर्वत्र"—(का. श्रौ. सू. ९ । ३०६, ३०७) इति । अस्तु तैरभ्यावृत्तिं कृत्वा स्तवने "उपावर्त्तध्वम्"—इति मन्त्रेणोपाकरणम्, सा चाभ्यावृत्तिस्तेषां कुत इत्यत आह—इमा वै प्रजा इत्यादि । 'एतानि' पवमानव्यतिरिक्तानि 'स्तोत्राणि' अभिलक्ष्य 'इमाः' 'प्रजाः' 'आवृत्ताः, यत एवम् 'तस्माद्' इदानीं 'प्रजाः' मृत्वापि पुनरभ्यावृत्य 'प्रजायन्ते' तस्मात् प्रजानां तथोत्पत्तिसिद्ध्यर्थं धुर्यस्तोत्राणामावृत्तिः कार्येत्यर्थः ॥ ८ ॥

चात्वालप्रदेशे बहिष्पवमानस्तोत्रसम्पादनस्य कारणमाह—अथ यदत्रेत्यादि । 'अत्र' प्रदेशे 'बहिष्पवमानेन' 'स्तुवते' इति यत्, तत्कारणमुच्यते—असाविति । अदःशब्दो विप्रकृष्टपदार्थवाची । द्युलोकगतोऽसावादित्यः पूर्वस्मिन् प्रदेशेऽभूत् । तमादित्यमृतवः स्वीकृत्यैतस्माद् भूदेशादूर्ध्वाः 'स्वर्गं' 'लोकम्' आरोहन्त । अतः एष आदित्य इदानीमृतुष्वेव प्रतिष्ठितस्तपति तस्मादत्र प्रदेशे बहिष्पवमानसम्पादनेन ऋत्विजो यजमानमादाय स्वर्गं लोकमारोहन्तीत्यर्थः ॥ ९ ॥

नौर्हं वाऽएषा स्वुर्ग्या । युद्धहिष्पवमानं तुस्या ऋत्विजऽएव स्फ्याश्चा- रित्राश्च स्वर्गस्य लोकुस्य सम्पारणास्तुस्याऽएकऽएव मज्जयिता य एव निन्द्यः स युथा पूर्णामभ्यारुह्य मज्जयेदेवुᳫं हैनाᳫं स मज्जयति तद्वै सुर्वं एवु युज्ञो नौः स्वुर्ग्या तुस्मादु सुर्वस्मादेवु युज्ञान्निन्द्यं परिबिबाधिषेत॥१०

( ता ) अुथ स्तुतुऽएतां व्वाचं व्वदाति । ( त्यु ) अुग्नीदग्नीन्विहर बर्हि- स्तृणीहि पुरोडाशाँ२॥अुलंकुरु पशुनेहीति विहरत्यग्नीदग्नीन्त्सुमिन्द्ध एवै- नानेतुत्स्तृणाति बर्हिः स्तीर्णे बर्हिषि सुमिद्धे देवेभ्यो जुहवानीति पुरोडा- शाँ२॥ऽअुलंकुर्विति पुरोडाशैर्हि प्रचरिष्यन्भवति पशुनेहीति पशुᳫं ह्युपाकरिष्यन्भवति ॥ ११ ॥

---

नौर्हं वाऽएषा स्वर्ग्या—यद्बहिष्पवमानम् । तस्या ऋत्विज एव स्फ्याश्च अरित्राश्च स्वर्गस्य लोकस्य सम्पारणाः । तस्या एक एव मज्जयिता—य एव निन्द्यः । स यथा पूर्णामभ्यारुह्य मज्जयेद्—एवं हैनां स मज्जयति । तद्वै सर्व एव यज्ञो नौः स्वर्ग्या । तस्मादु सर्वस्मादेव यज्ञान्निन्द्यं परिबिबाधिषेत ॥ १० ॥

अथ स्तुतऽएतां वाचं वदति—" अग्नीदग्नीन्विहर । बर्हिस्तृणीहि । पुरोडाशाँ २॥ऽअल-

---

प्रकृतं बहिष्पवमानस्तोत्रं नौरूपत्वसम्पादनेन प्रशंसति—नौर्हं वा इत्यादि । ' बहिष्पवमानम् ' एव ' स्वर्ग्या ' स्वर्गप्राप्त्यर्हा ' नौः ' । " छन्दसि च "—( पा. सू. ५ । १ । ६७ ) इत्यर्हार्थे यत्प्रत्ययः । नावश्च कैश्चित्साधनैर्भवितव्यम् । अतो बहिष्पवमानात्मिकाया नावः ' ऋत्विज एव ' ' स्फ्याश्च ' ' अरि- त्राश्च ' भवन्ति । ' स्फ्याः ' इति स्फ्याकाराः केचन तरणसाधनविशेषाः । ' अरित्राः ' इति तरणसाधन- भूता वंशाः । ते च ' स्वर्गस्य ' ' लोकस्य ' ' संपारणाः ' स्वर्गलोकस्य प्रापकाः । " पार तीर कर्मसमाप्तौ " ( धा. पा. चु. उ. ३७८ ) इत्यस्मात्करणे ( पा. सू. ३ । ३ । ११७ ) ल्युट् प्रत्ययः । अतो बहिष्पव- मानस्तोत्रं स्वर्गप्राप्तिहेतुत्वात् प्रशस्तमित्यर्थः ॥

उक्तं नौरूपत्वमुपजीव्य सर्वस्मिन् यज्ञेऽपि निन्दितः परिहरणीय इत्याह—तस्या एक एवेत्यादि। 'यः' जनः कुतश्चित्कारणात् ' निन्द्यः ' ' सः ' 'एव' 'तस्याः ' बहिष्पवमानात्मिकाया नावः 'मज्जयिता' नाशयितेत्यर्थः । ' यथा ' लोकेऽनिन्द्यैः ' पूर्णाम् ' नावम् ' आरुह्य ' निन्द्यो ' मज्जयेद् ' अवगाहयेज्जलस्याधः प्रापयेत् । रजस्वलादिभिर्निन्द्यैरारूढा नौर्मज्जतीति प्रसिद्धम् । तद्वदत्रापि निन्दितो मज्जयेत् । न केवलं बहिष्पवमान- स्तोत्रे निन्द्यस्य परिहरणम्, किन्तु कृत्स्नस्यापि यज्ञस्य प्राप्तौ नौरूपत्वात् ' सर्वस्माद् ' ' यज्ञात् ' ' निन्द्यम् ' ' परिबिबाधिषेत ' इति परिबाधितुमपसारयितुमिच्छेत् । अपसारणेच्छाया अपसारणप्रयोजनत्वादपसारये- दित्यर्थः ॥ १० ॥

बहिष्पवमानस्तोत्रसमाप्त्यनन्तरमध्वर्योः कर्त्तव्यं प्रैषमन्त्रमुत्साद्य व्याचष्टे—अथ स्तुत एतां वाचं वदतीति[1] ।

---

१—स्तोत्रांते प्रेष्यत्यग्नीदग्नीन् विहर बर्हिस्तृणीहि पुरोडाशाँ ३ अलंकुरु प्रतिप्रस्थातः पशुनेहीति । का० श्रौ० सू० ९ । १६२॥

( त्यु ) अथ पुनः प्रपद्य । ( द्या ) आश्विनं ग्रहं गृह्णात्याश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति परिवीय यूपं पशुमुपाकरोति रसमेवास्मिन्नेतद्दधाति ॥ १२ ॥ [ अर्धप्रपाठकः ] ॥

स प्रातःसवनऽआलब्धः । ( ऽ ) आतृतीयसवनाच्छ्रप्यमाणऽउपशेते सर्वस्मिन्नेवैतद्यज्ञे रसं दधाति सर्वं यज्ञꣳ रसेन प्रसजति ॥ १३ ॥

---

कुरु । पशुनेहि "–इति । विहरत्यग्नीदग्नीन्, समिन्ध एवैनानेतत्, स्तृणाति बर्हिः । स्तीर्णे बर्हिषि, समिद्धे देवेभ्यो जुहवानीति । पुरोडाशाँ२॥ऽअलंकुर्विति । पुरोडाशैर्हि प्रचरिष्यन्भवति । पशुनेहीति । पशुं ह्युपाकरिष्यन्भवति ॥ ११ ॥

अथ पुनः प्रपद्य आश्विनं ग्रहं गृह्णाति । आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति । परिवीय यूपं पशुमुपाकरोति । रसमेवास्मिन्नेतद्दधाति ॥ १२ ॥

स प्रातःसवनऽआलब्धः, आ तृतीयसवनाच्छ्रप्यमाण उपशेते । सर्वस्मिन्नेवैतद्यज्ञे रसं दधाति । सर्वं यज्ञं रसेन प्रसजति ॥ १३ ॥

---

अग्नीदग्नीन्विहरेति । 'अग्नीत्' इति आग्नीध्रीयात् सकाशादग्नीन् विभज्य होत्रियादिषु धिष्ण्येषु यथाक्रमं निवपेत् । एतेन निवपनेनैतानग्निरूपान् 'समिन्धे' प्रज्वालितवान् भवति । धिष्ण्यानामग्न्यात्मकत्वं तैत्तिरीयके श्रूयते–" अग्नयो वा अथ धिष्णियाः " ( तै. सं. ६।३।१ ) इति । आग्नीध्र एव 'बर्हिः' पृष्ठ्याया उपरि स्तृणीयात् । महावेदेर्मध्ये वितायमाना रज्जुः पृष्ठ्या । अत्र कात्यायनः–" यथा न्युप्तं धिष्ण्येष्वाग्नीध्रादङ्गारान्निवपति, अनुपृष्ठ्यां बर्हिस्तृणाति "–( का० श्रौ० सू० ९ । १६३, १६४ ) इति । 'स्तीर्णे बर्हिषि'– इत्यादिना 'अग्नीदग्नीन्विहर बर्हिस्तृणीहि' इति सम्प्रेष्यतोऽध्वर्योरभिप्रायः प्रदर्श्यते । पुरोडाशानलंकुर्वित्यादि । स्पष्टार्थम् ॥ ११ ॥

प्रथमाध्यायस्य पञ्चमब्राह्मणे आश्विनग्रहस्य ग्रहणकालविशेषोऽपि विहितः–" अथातो गृह्णाति या वाङ्केति "–( श. प. ४ । १ । ५ । १७ ) । " स्तुते बहिष्पवमाने ग्रहो गृह्यते "–इति च ( श. प. ४ । १ । ५ । १९ ) । तदवसरप्राप्तं विशेषविधित्सयाऽनुवदति–अथ पुनः प्रपद्येत्यादि । अनूद्य तदुत्तरकाले यूपस्य परिव्ययणं विधत्ते–आश्विनं ग्रहं गृहीत्वेत्यादि । यूपं परिव्ययतीति । रशनया यूपं परितो वेष्टयेत् । यूपपरिव्ययणानन्तरं पशूपाकरणं विधत्ते–परिवीय यूपं पशुमुपाकरोतीति । विहितमुपाकरणं प्रशंसति–रसमेवेत्यादि । 'अस्मिन्' पशौ 'रसमेव' स्वादमेव 'एतद्' उपाकरणेन कृतवान् भवति । अत्रायमभिप्रायः– उपाकरणमिति देवतार्थं निर्देशः । तेन पशोर्देवतायोग्यत्वसूचनात्तद्योग्यतायाश्च रसवत्त्वमन्तरेणानुपपत्तेरुपाकरणमेव रसनिधानहेतुरिति । अत एवोपाकरणमन्त्रे–" हव्या ते स्वदन्ताम् " ( वा. सं. ६।७) इत्याम्नायते ॥ १२ ॥

आलब्धस्य पशोः सवनत्रयव्यापित्वमाह–स प्रातःसवन इत्यादि । सर्वं यज्ञमित्यादि । सवनत्रयमेव सर्वो

---

१–आश्विनं गृह्णात्यन्वारब्धे वा यां वामिति । का० श्रौ० सू० ९ । १६५ । ध्रुवगोपं कृत्वा परिव्ययणादि करोति रशनामुदग्रपूर्व्याम् का० श्रौ० सू० ९।१७२ ।

तस्मादाग्नेयमग्निष्टोमऽआलभेत । तद्धि सलोम यदाग्नेयमग्निष्टोमऽआलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्राग्नानि ह्युक्थानि यदि षोडशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोडशी यद्यतिरात्रः स्यात्सारस्वतं चतुर्थमालभेत व्वाग्वै सरस्वती योषा वै व्वाग्योषा रात्रिस्तद्यथायथं यज्ञक्रतून्व्यावर्तयति ॥ १४ ॥

---

तस्मादाग्नेयमग्निष्टोमऽआलभेत । तद्धि सलोम—यदाग्नेयम्; अग्निष्टोमऽआलभेत । यद्युक्थ्यः स्यात्—ऐन्द्राग्नं द्वितीयमालभेत । ऐन्द्राग्नानि ह्युक्थानि । यदि षोडशी स्यात्—ऐन्द्रं तृतीयमालभेत । इन्द्रो हि षोडशी । यद्यतिरात्रः स्यात्—सारस्वतं चतुर्थमालभेत, वाग्वै सरस्वती । योषा वै वाक्, योषा रात्रिः । तद् यथायथं यज्ञक्रतून् व्यावर्तयति ॥ १४ ॥

---

यज्ञः । तत्र पशोरवस्थानेन पशोश्च रसात्मकत्वात्, तेन 'रसेन' सकलम् 'यज्ञम्' 'प्रसजति' प्रसञ्जयति मिश्रयतीत्यर्थः ॥ १३ ॥

प्रकृतस्य पशुद्रव्यस्य देवतासम्बन्धं सोपपत्तिकमाह—तस्मादाग्नेयमिति । अग्निष्टोम इति । अग्निष्टोमस्तोत्रं "यज्ञा यज्ञा वो अग्नये" ( वा० सं० २७ । ४ ) ( ऋ० सं० ४ । ८ । १ )—इत्यादिकम् । तेन समाप्यत्वाद्यज्ञोऽपि 'अग्निष्टोम' इति व्यपदिश्यते । तस्मिन् "आग्नेयं पशुमालभेत"—इति यत्, 'तद्' अग्निदेवत्यपश्वालम्भनम् 'सलोम' अनुलोममुचितम् । अग्निष्टोमसाम्ना क्रतोर्व्यपदेशादिति भावः । 'तस्मादाग्नेयमालभेत' । प्रसङ्गादुक्थ्यादिक्रतूनां पशुक्लृप्तिमाह—यद्युक्थ्यः स्यादित्यादि । आग्नेयमालभ्य तस्य 'द्वितीयमैन्द्राग्नमालभेत' । ऐन्द्राग्नानि ह्युक्थानीत्यनेनैन्द्राग्नपश्वालम्भने कारणमभिधीयते । 'उक्थानि' शस्त्राणि तेषाञ्चैन्द्राग्नत्वम् "एह्युपब्रवाणि ते" ( वा० सं० २६ । १३ )—इत्यादिष्विन्द्राग्निसम्बन्धात् इति द्रष्टव्यम् । इन्द्रो हि षोडशीति । "असावि सोम इन्द्र ते" ( ऋ० सं० १।६।९ )—इत्यादिकं षोडशिशस्त्रम्, तत्रेन्द्रसम्बन्धात् । षोडशिसंस्थायाम् 'ऐन्द्रम्' पशुमाग्नेयैन्द्राग्नयोः 'तृतीयमालभेत' । वाग्वा इति । सरस्वत्या रात्रेश्च स्त्रीसम्बन्धादिति द्रष्टव्यम् । रात्रेः सरस्वतीदेवत्यं पशुम् उक्तानां पशूनाम् 'चतुर्थमालभेत' । एवं च 'यज्ञक्रतून्' इज्यन्ते देवा एभिरिति यज्ञाः, यज्ञाश्च ते क्रतवश्च यज्ञक्रतवः । तानग्निष्टोमादीन् 'यथायथम्' यथास्वम् । यस्य यो यो विशेषस्तमनतिक्रम्य 'व्यावर्त्तयति' व्यावृत्तान् परस्परविलक्षणान् करोति । अत एव तैत्तिरीयके वाजपेयेऽग्निष्टोमादियज्ञक्रत्ववरोधः स तद्व्यावर्तकपशुसम्बन्धात्-इति श्रूयते । "ब्रह्मवादिनो वदन्ति—नाग्निष्टोमो नोक्थ्यः, न षोडशी नातिरात्रः, अथ कस्माद्वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति, पशुभिरिति ब्रूयात् । आग्नेयं पशुमालभते । अग्निष्टोममेव तेनावरुन्धे । ऐन्द्राग्नेनोक्थ्यम् । ऐन्द्रेण षोडशिनस्तोत्रम् । सारस्वतेनातिरात्रम्"—( तै. ब्रा. १ । ३ । ४ । १ ) इति ॥ १४ ॥

---

१—आग्नेयोऽग्निष्टोमे सवनीयः पशुरैन्द्राग्नश्चोक्थ्यो द्वितीयः । ऐंद्रो वृष्णिः षोडशिनि तृतीयः सरस्वत्यै चतुर्थोऽतिरात्रे मेषी वा । एतत् स्तोमायनम् । का. श्रौ. सू. । ९ । १७३–१७५ ।

१०१९

( त्यु ) अथ सवनीयैः पुरोडाशैः प्रचरति । देवो वै सोमो दिवि हि सोमो वृत्रो वै सोम ऽआसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानस्तदेषोशाना-नामौषधिर्जायत इति ह स्माह श्वेतकेतुरौद्दालकिस्तामेतदाहृत्याभि-षुण्वन्तीति ॥ १९ ॥

स यत्पशुमालभते । रसमेवास्मिन्नेतद्दधात्यथ यत्सवनीयैः पुरोडाशैः प्रचरति मेधमेवास्मिन्नेतद्दधाति तथो हास्यैष सोम एव भवति ॥ १६ ॥

---

अथ सवनीयैः पुरोडाशैः प्रचरति । देवो वै सोमः । दिवि हि सोमः । वृत्रो वै सोम आसीत् । तस्यैतच्छरीरं यद्गिरयो, यदश्मानः । तदेषोशानानामौषधिर्जायते—इति ह स्माह श्वेतकेतुरौद्दा-लकिः । तामेतदाहृत्याभिषुण्वन्तीति ॥ १९ ॥

स यत्पशुमालभते—रसमेवास्मिन्नेतद्दधाति । अथ यत्सवनीयैः पुरोडाशैः प्रचरति—मेधमेवास्मि-न्नेतद्दधाति । तथो हास्यैष सोम एव भवति ॥ १६ ॥

---

पश्वालम्भनादुपरितनं सदःसर्पणान्तं प्रयोगमुपेक्ष्य तदनन्तरं सवनीयपुरोडाशहोमं विधत्ते—अथ सवनीयै-रित्यादि । अत्र पुरोडाशो धानाः करम्भो दध्यामिक्षेति सवनीयानि पञ्च हवींषि तेषां पुरोडाशलिङ्गसमवायात् प्राणभृन्न्यायेन पुरोडाशैरिति व्यपदेशः । तथा चोक्तम्—" तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमिभिः । षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिता ॥ " इति । सवनीयपुरोडाशानां होमं प्रशंसितुं तत्प्रयोजनाभिधि-त्सयोपोद्घातमाह—देवो वै सोम इत्यादिना । 'दिवि' स्वर्गे 'सोमः' 'आसीत्' इति प्रसिद्धम् । " तृतीयस्या-मितो दिवि सोम आसीत् "—(तै. सं. ३।९।७) इत्यादिश्रुतेः । अतो द्युलोकसम्बन्धात् 'सोमः' 'देवः' । अनेन सोमस्य ग्रहत्वमभिहितम् । स एव सोमो वृत्रासुर ' आसीत् ' । सोमस्य वृत्रात्मनोत्पत्तिस्त्वष्टुर्यज्ञे श्रूयते—"तस्य यदत्यशिष्यत तत्त्वष्टाऽहवनीयमुपप्रावर्त्तयत्स्वाहेन्द्रशत्रुर्वर्धस्व इति यदवर्त्तयत्तद्वृत्रस्य वृत्रत्वम्" (तै. सं. २-९-२) इति। तस्य वृत्रासुरस्य पर्वताः पाषाणाश्च ' शरीरम् ' ' तत् ' तत्र ' उशानानाम ' 'एषा' इदानीं यज्ञे उप-युज्यमाना ' ओषधिर्जायते ' । तत्र वसतीति तस्या ओषधेरुषाणेति नामधेयम् । " वस निवासे "—( धा. पा. भ्वा. प. १०३० ) इत्यस्मात् कानजन्तः ( पा. सू. २ । ३ । १०६ ) ' उषाणा ' शब्दः । ' एतद् ' एतस्मिन् काले ' ताम् ' ' आहृत्याभिषुण्वन्तीति ' उद्दालकस्यापत्यम् ' औद्दालकिः ' ' श्वेत-केतुः ' उवाच । अनेनेदानीन्तनस्य सोमस्य सोमरूपवृत्रशरीरं गिरिपाषाणजातत्वात् परम्परया सोमत्व-मित्यभिप्रायः ॥ १९ ॥

एवमुपोद्घातमभिधाय प्रसङ्गात्पश्वालम्भनसवनीयहविषां होमस्य च प्रयोजनमभिधत्ते—स यत्पशुमालभत इत्यादि । ' रसम् ' स्वादं रुचिमित्यर्थः । मेध इति सारांशः । तथो हेति । ' तथो ' ' एव ' रुचिसारयोरेव निधाने कृतेऽस्य यजमानस्य पर्वतसकाशादाहृता ओषधिः ' एष ' "देवो वै सोमो दिवि हि सोमः "—इत्युक्तः साक्षात् सोम एव भवति । ' एष ' इति विधेयसोमापेक्षया पुँल्लिङ्गत्वम् ॥ १६ ॥

सर्व्वेऽऐन्द्रा भवन्ति । ( न्ती ) इन्द्रो वै यज्ञस्य देवता तस्मात्सर्व्वेऽ-ऐन्द्रा भवन्ति ॥ १७ ॥

( न्त्यु ) अथ यत्पुरोडाशः । (शो) धानाः करम्भो दध्यामिक्षेति भवति या यज्ञस्य देवतास्ताः सुप्रीता असन्निति ॥ १८ ॥

( ती ) इदं वाऽअपूपमशित्वा कामयते । धानाः खादेयं करम्भमश्नीयां दध्यश्नीयामामिक्षामश्नीयामिति ते सर्व्वे कामा या यज्ञस्य देवतास्ताः सुप्रीता असन्नित्यथ यदेषा प्रातःसवनऽएव मैत्रावरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोः ॥ १९ ॥

---

सर्वेऽऐन्द्रा भवन्ति । इन्द्रो वै यज्ञस्य देवता । तस्मात्सर्वेऽऐन्द्रा भवन्ति ॥ १७ ॥

अथ यत्-पुरोडाशः, धानाः, करम्भो, दधि, आमिक्षेति भवति-या यज्ञस्य देवताः-ताः सुप्रीता असन्निति ॥ १८ ॥

इदं वा अपूपमशित्वा कामयते-धानाः खादेयम्, करम्भमश्नीयाम्, दध्यश्नीयाम्, आमिक्षामश्नीयाम्-इति । ते सर्वे कामाः-या यज्ञस्य देवतास्ताः सुप्रीता असन्निति । अथ यदेषा प्रातः सवनऽ एव मैत्रावरुणी पयस्याऽवक्लृप्ता भवति, नेतरयोः सवनयोः ॥ १९ ॥

---

सवनीयानां हविषां होमकाले देवताविशेषसम्बन्धमाह-सर्वे ऐन्द्रा भवन्तीति । इन्द्रो वै यज्ञस्य देवतेति । इन्द्रस्य प्राधान्यादित्यर्थः । अत एव सुब्रह्मण्याह्वाने-" त्र्यहे सुत्यामागच्छ मघवन् "(साम. तां. ब्रा.)-इत्येवमिन्द्र एवाहूयते ॥ १७ ॥

पुरोडाशादीनां नानात्वे कारणमाह-अथ यत्पुरोडाशो धाना इत्यादि । ' याः यज्ञस्य ' सवनीयपुरोडाशैः कर्त्तव्यस्य यज्ञस्य ' याः ' देवता निर्वापकाले निर्दिष्टा इन्द्रादयः । ' ताः ' ' सुप्रीताः ' सुष्ठु तृप्ताः सन्त्विति पुरोडाशादयो निरूप्यन्त इत्यर्थः । ' असन् ' इति लेट् । "लेटोऽडाटौ"-( पा. सू. ३।४।९४ ) इत्यडागमः । " इतश्च लोपः परस्मैपदेषु "-( पा. सू. ३।४।९७ ) इतीकारलोपः ॥ १८ ॥

उक्तानां पुरोडाशादीनां कामनाविषयत्वकथनेन तत्प्रीतिसाधनत्वमाह-इदं वा अपूपमशित्वेत्यादि । लोके यः कश्चिज्जनः ' इदम् ' ' अपूपम् ' पिष्टनिर्मितं भक्ष्यं भक्षयित्वा एवं ' कामयते ' । ' धानाः ' भृष्टयवास्ताः ' खादेयम् ' । ' करम्भम् ' आज्यमिश्रं मन्थम् ' अश्नीयाम् ', भुञ्जीयाम् । ' दध्यश्नीयाम् ' ' आमिक्षाम् ' अश्नीयामिति । अतोऽत्रापि 'याः' 'यज्ञस्य' 'देवताः' ते सर्वेऽपि देवा एवं बहूनि वस्तूनि कामयन्ते । अतस्तासां प्रीत्यर्थं पुरोडाशादिबहुहविर्निर्वाप इत्यर्थः । प्रसङ्गान्माध्यन्दिनसवने तृतीयसवने च पयस्याया अभावं सूचयितुं तत्कारणं पृच्छति-अथ यदेषेत्यादि । 'एषां' हविषां मध्ये 'मैत्रावरुणी' आमिक्षा 'प्रातःसवन' एव ' ' अवक्लृप्ता ' युक्ता ' नेतरयोः ' ' सवनयोः ' इति यत् तद् 'अथ'तत्कारणं किमित्यर्थः ॥ १९ ॥

( र्गा ) गायत्री वै प्रातःसवनं व्वहति । त्रिष्टुम्माध्यन्दिनᳪ सवनं जगती तृतीयसवनं तद्वाऽअनेकाकिन्येव त्रिष्टुम्माध्यन्दिनᳪ सवनं व्वहति गायत्र्या च बृहत्या चानेकाकिनी जगती तृतीयसवनं गायत्र्योष्णिहककुब्भ्यामनुष्टुभा ॥ २० ॥

गायत्र्येवैकाकिनी प्रातःसवनं व्वहति । सैताभ्यां पङ्क्तिभ्याᳪ स्तोत्रपङ्क्त्या च हविष्पङ्क्त्या च चत्वार्याज्यानि बहिष्पवमानं पञ्चमं पञ्चपदा पङ्क्तिः सैतया स्तोत्रपङ्क्त्याऽनेकाकिनी गायत्री प्रातःसवनं व्वहति ॥२१॥

( त्री ) इन्द्रस्य पुरोडाशः । ( शो ) हर्योर्धानाः पूष्णः करम्भः सरस्वत्यै दधि मित्रावरुणयोः पयस्या पञ्चपदा पङ्क्तिः सैतया हविष्पङ्क्त्याऽनेका-

---

गायत्री वै प्रातःसवनं वहति, त्रिष्टुम्माध्यन्दिनं सवनम्, जगती तृतीयसवनम् । तद्वा अनेकाकिन्येव त्रिष्टुम्माध्यन्दिनं सवनं वहति—गायत्र्या च बृहत्या च अनेकाकिनी । जगती तृतीयसवनम्—गायत्र्योष्णिहककुब्भ्यामनुष्टुभा ॥ २० ॥

गायत्र्येवैकाकिनी प्रातःसवनं वहति । सैताभ्यां पङ्क्तिभ्यां—स्तोत्रपङ्क्त्या च हविष्पङ्क्त्या च । चत्वार्याज्यानि, बहिष्पवमानं पञ्चमम् । पञ्चपदा पङ्क्तिः । सैतया स्तोत्रपङ्क्त्यानेकाकिनी गायत्री प्रातःसवनं वहति ॥ २१ ॥

इन्द्रस्य पुरोडाशः, हर्योर्धानाः, पूष्णः करम्भः, सरस्वत्यै दधि, मित्रावरुणयोः पयस्या । पञ्च-

---

कारणमाह—गायत्री वै प्रातःसवनमित्यादिना । तद्वा इत्यादि । 'तत्' तत्र सवनेषु त्रिष्टुप् 'अनेकाकिन्येव' एकाकिनी, न भवतीत्यनेकाकिनी सहाययुक्तेत्यर्थः । कया अनेकाकिनी ? 'गायत्र्या' 'बृहत्या' चेति । तत्र माध्यन्दिने पवमाने—"उच्चा ते जातमन्धसः"—( वा. सं. २६ । १६ ) ( ऋ. सं. ७।१।१९ ) "पुनानः सोमधारया—" ऋ. सं. ७ । १ । ३९ ) "प्रतुद्रवपरिकोशविमिन्य"—( ऋ. सं. ७।३।२२) एतेषां त्रयाणां तृचानां क्रमेण गायत्रीबृहतीत्रिष्टुप्छन्दोयुक्तत्वात् । तथा जगतीच्छन्दोऽपि तृतीयसवनं गायत्र्यादिभिः ससहायं सद् 'वहति' तत्र तृतीयसवने आर्भवपवमाने "स्वादिष्ठया" ( वा. सं. २६ । २५ )—( ऋ. सं. ६ । ७ । १६ ) इत्येष तृचो गायत्रीच्छन्दाः । "पवस्वमधुमत्तमम्" ( ऋ. सं. ७ । ९ । १७ ) "इन्द्र सोम" ( ऋ. सं. ७ । ७ । १० ) इत्येतौ ककुप्छन्दस्कौ । "पुरोजिती वो अन्धसः"—( ऋ. सं. ७ । ५ । १ ) इत्येषाऽनुष्टुप्छन्दाः । 'गायत्री' तु 'एकाकिनी' असहाया 'एव' 'प्रातःसवनं' 'वहति' तत्र छन्दोऽन्तरस्याभावात् । 'सा' एषा गायत्री 'स्तोत्रपङ्क्त्या च हविष्पङ्क्त्या च' इति 'एताभ्यां पंक्तिभ्याम्' 'अनेकाकिनी' सती 'प्रातःसवनं वहति' इति योजना । चत्वार्याज्यानि इत्यादिना स्तोत्रपंक्तिस्वरूपं प्रदर्श्यते । स्तोत्रपंक्तिरिति । स्तोत्रपञ्चकम् । कथम् ? पंक्तिच्छन्दःसम्बन्धिपादगतपञ्चसंख्यासम्बन्धात् पंक्तिरिति व्यपदेशसिद्धेः ॥ २० ॥ २१ ॥

इन्द्रस्य पुरोडाश इत्यादिना हविष्पंक्तिः प्रदर्श्यते । ननु च "सर्वे ऐन्द्रा भवन्ति" इति सवनीय-

किनी गायत्री प्रातःसवनं व्वहत्येतस्या एव पङ्क्तेः सम्पदः कामाय प्रातः-सवन ऽएवैषा मैत्रावरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोः ॥२२॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ४-२-४ ॥ ( २.९ )

पदा पङ्क्तिः । सैतया हविष्पङ्क्त्यानेऽकाकिनी गायत्री प्रातःसवनं वहति-एतस्या एव पङ्क्तेः सम्पदः कामाय । प्रातःसवनऽएवैषा मैत्रावरुणी पयस्यावक्लृप्ता भवति, नेतरयोः सवनयोः ॥ २२ ॥

पुरोडाशानामिन्द्र एव देवतेत्युक्तम् । तत्कथमत्र-" इन्द्रस्य पुरोडाशः " इत्यादिनेन्द्रादयो देवता निर्दिश्यन्त इति । उच्यते-"सर्व ऐन्द्रा भवन्ति " इत्यनेन होमकाले इन्द्रो देवतात्वेन विधीयते । " इन्द्रस्य पुरोडाशः " इत्यादिना तु निर्वापकाले इन्द्रादयो देवता विधीयन्त इत्यविरोधः । यद्यपि निर्वापकाले या देवता होमकालेऽपि तयैव भवितव्यम् । तथाप्यत्र निर्वाप कालीना देवता स्वकीयैर्हविर्भिरिन्द्रमेव विचिकित्सितवतीतीन्द्र एव होमस्य देवता । एतच्च तैत्तिरीयके श्रूयते-"सोऽब्रवीत् सप्तदशेन ह्रियमाणो व्यलेशिषि । भिषज्यत मा इति । तमश्विनौ धानाभिरभिषज्यताम् । पूषा करम्भेण, भारती परिवापेण, मित्रावरुणौ पयस्यया; तदाहुः-यदश्विभ्यां धानाः । पूष्णः करम्भः । भारत्यै परिवापः । मित्रावरुणयोः पयस्या । अथ कस्मादेतेषां हविषामिन्द्रमेव यजन्ति इति । एता ह्येनं देवता इति ब्रूयात् । एतैर्हविर्भिरभिषज्यंस्तस्मादिति " ( तै.शा.१।९।११ ) इति । होमकाले देवता-पनयस्येयमेवावस्था । कचिद्द्रव्यदेवताभेदस्तु शाखाभेदादुपपद्यते । उक्तमर्थं कारणमुपन्यस्योपसंहरति-**एतस्या एव पङ्क्तेः सम्पदः कामायेत्यादि** । ' एतस्या एव ' हविष्पंक्तेः ' सम्पदः ' सम्पादनस्य ' कामाय ' काम इच्छा तत्सिद्धय इत्यर्थः ॥ २२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे द्वितीयाध्यायस्य पञ्चमं ब्राह्मणं समाप्तम् ॥४-२-९॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ १ ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥२॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे द्वितीयोऽध्यायः समाप्तः ॥४-२॥

१-इह संहितायामवकाशमन्त्रा एकादश पठ्यन्ते, ततो द्रोणकलशावेक्षणमन्त्रो जपनीयमन्त्रश्च । त इत्थं त्रयोदश मन्त्राः शतपथेऽस्मिन्ब्राह्मणे अग्निष्टोमषोडाशि-पृष्ठ्यषडहाधिकारेभ्य उपरिष्टात्कर्तव्यतया निर्देक्ष्यन्ते ।

# तृतीयाध्याये प्रथमं ब्राह्मणम् ॥

भक्षयित्वा समुपहूताः स्म इत्युक्त्वोत्तिष्ठति । पुरोडाशबृगलमादाय तद्यत्रैतदुपसन्नोऽच्छावाकोऽन्वाह तदस्मै पुरोडाशबृगलं पाणावादधदाहाच्छावाक वदस्व यत्ते वाद्यमित्यहीयत वाऽअच्छावाकः ॥ १ ॥

(स्तु)तमिन्द्राग्नीऽअनुसमतनुताम् ।(म्प्र) प्रजानां प्रजात्यै तस्मादैन्द्राग्नोऽच्छावाकः स ऽएतेन च हविषा यदस्माऽएतत्पुरोडाशबृगलं पाणावादधात्येतेन चार्षेयेण यदेतदन्वाह तेनानुसमश्नुते ॥ २ ॥

---

ऋतुग्रहाः ।

भक्षयित्वा 'समुपहूताः स्मः'—इत्युक्त्वोत्तिष्ठति पुरोडाशबृगलमादाय । तद्य यत्रैतदुपसन्नोऽच्छावाकोऽन्वाह—तदस्मै पुरोडाशबृगलं पाणावादधदाह—'अच्छावाक ! वदस्व—यत्ते वाद्यम्' इति । अहीयत वाऽअच्छावाकः ॥ १ ॥

तमिन्द्राग्नीऽअनुसमतनुतां प्रजानां प्रजात्यै । तस्मादैन्द्राग्नोऽच्छावाकः । स एतेन च हविषा यदस्माऽएतत्पुरोडाशबृगलं पाणावादधाति, एतेन चार्षेयेण—यदेतदन्वाह—तेनानुसमश्नुते ॥ २ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

द्वितीयाध्याये शुक्रामन्थ्यादिग्रहणादिकं प्रयोगजातमभिहितम्, अत्र तृतीयाध्याये सोमशेषभक्षणानन्तरभावि कर्तव्यमुपदिश्यते । तत्र तावदध्वर्युः सवनीयपुरोडाशशकलमच्छावाकस्य पाणौ प्रक्षिपेदिति विधत्ते—भक्षयित्वे-त्यादि । 'पुरोडाशबृगलं' पुरोडाशस्य शकलम् 'आदाय' 'समुपहूताः स्मः' इत्युक्त्वोत्तिष्ठेत् । सवनीय-पुरोडाशभक्षणावसरे पुरोडाशस्य शकलमच्छावाकार्थं विधातव्यम् । अत एव कात्यायनः—"पुरोडाशमात्रामैन्द्रवायवे प्रास्यति पयस्यां मैत्रावरुण आश्विने धानाः"(का.श्रौ.सू.९।२४७) इति।अत्र समुपहूता इत्येतद्वचनं सोमशेषभक्षणार्थे अनुज्ञाते प्रयुज्यते । तथा च सति सोमस्य तृप्तिहेतुत्वात्तत्प्रयोगेण सोमशेषभक्षणानुज्ञानार्थेन त्वेषां सोमशेषभक्षण-सूचनान्मनोहर्षप्रकटनं कृतं भवति । सोमभक्षणस्य तृप्त्यर्थत्वं "वाग् जुषाणा सोमस्य तृप्यतु हिन्व मे गात्रा हरिवः" इत्येवमादिनाऽवगम्यते । उत्थितश्च 'यत्र' यस्मिन्प्रदेशे 'उपसन्नोऽच्छावाकः' 'तत्' 'एतत्' निगदस्वरूपमन्वाह । तत्र 'अस्मै' अस्य अच्छावाकस्य 'पाणौ' पुरोडाशशकलं प्रक्षिपन् 'अच्छावाक !' 'वदस्व' 'यत्ते वाद्यम्' इति ब्रूयादित्यर्थः । पाणौ पुरोडाशशकलप्रक्षेपस्य निगदानुवचनार्थस्य च संप्रैषस्य कारणमाह—अहीयत वाऽअच्छावाक इत्यादिना । मैत्रावरुणादीनां होत्रकाणां यागसमये अच्छावाकस्या-भावात्तेभ्यः 'अहीयत' हीनोऽपच्छिन्नोऽभूत् ॥ १ ॥

तम् अपच्छिन्नमच्छावाकम् 'इन्द्राग्नी अनुसमतनुताम्' तैः सह संयोजयामासतुः । तत्र संयोजन-मिन्द्राग्निसम्बन्धादच्छावाकस्य मिथुनत्वे 'प्रजानां' 'प्रजात्यै' उत्पत्त्यै भवति । 'तस्मात्' 'अच्छावाकः'

---

१—पुरोडाशशकलमादाय समुपहूताः स्म इत्युक्त्वोत्तिष्ठति का. श्रौ. सू. ९-२६० । २—अच्छावाकायैनत्प्रयच्छन्नाहाच्छावाक वदस्व यत्ते वाद्यमिति । का. श्रौ. सू. ९-२६१ ।

स वै सुन्नेऽच्छावाके । ( क॒ऽ ) ऋतुग्रहैश्चरति तद्यत्सन्नेऽच्छावाकऽऋतुग्रहैश्चरति मिथुनं वाऽ अच्छावाकऽऐन्द्राग्नो ह्यच्छावाको द्वौ हीन्द्राग्नी द्वन्द्वꣳ हि मिथुनं प्रजननꣳ स ऽएतस्मान्मिथुनात्प्रजननादृतून्त्संव्वत्सरं प्रजनयति ॥ ३ ॥

यद्वेव सन्नेऽच्छावाके । ( क॒ऽ ) ऋतुग्रहैश्चरति सर्व्वं वाऽऋतवः संव्वत्सरः सर्व्वमेवैतत्प्रजनयति तस्मात्सन्नेऽच्छावाकऽऋतुग्रहैश्चरति ॥ ४ ॥

तान्वै द्वादश गृह्णीयात् । ( द्वा ) द्वादश वै मासाः संव्वत्सरस्य तस्माद्द्वादश गृह्णीयादथोऽअपि त्रयोदश गृह्णीयादस्ति त्रयोदशो मास इति द्वादश त्वेव गृह्णीयादेषैव सम्पत् ॥ ५ ॥

---

स वै सन्नेऽच्छावाके ऋतुग्रहैश्चरति । तद् यत्सन्नेऽच्छावाकऽऋतुग्रहैश्चरति । मिथुनं वाऽअच्छावाकः । ऐन्द्राग्नो ह्यच्छावाकः । द्वौ हीन्द्राग्नी । द्वंद्वं हि मिथुनं प्रजननम् । स एतस्मान्मिथुनात्प्रजननादृतून्संवत्सरं प्रजनयति ॥ ३ ॥

यद्वेव सन्नेऽच्छावाके ऋतुग्रहैश्चरति । सर्वं वाऽऋतवः संवत्सरः । सर्वमेवैतत्प्रजनयति । तस्मात्सन्नेऽच्छावाकऽऋतुग्रहैश्चरति ॥ ४ ॥

तान्वै द्वादश गृह्णीयात् । द्वादश वै मासाः संवत्सरस्य । तस्माद्द्वादश गृह्णीयात् । अथोऽअपि त्रयोदश गृह्णीयात्—अस्ति त्रयोदशो मास इति । द्वादश त्वेव गृह्णीयाद्—एषैव सम्पत् ॥ ५ ॥

---

' ऐन्द्राग्नः ' इन्द्राग्निदेवताकः । न केवलं वचनमात्रेणैन्द्राग्नः; किन्तु ' यत् ' ' एतत्पुरोडाशबृगलं पाणावादधाति ' ' एतेन च ' यदेतदच्छावाकः अग्निमित्यादिनिगदस्वरूपमन्वाह 'एतेन' 'आर्षेयेण' ऋषिर्वेदस्तत्सम्बन्धिना निगदात्मकेन मन्त्रेण चैन्द्राग्नः । तस्मिन्निगदे " इन्द्राग्निभ्यां सोमं वोचत "—इति श्रूयमाणत्वात् । पुरोडाशशकलं धृत्वा इन्द्राग्निप्रतिपादकस्य निगदस्यानुवचनात् पुरोडाशशकलधारणेनाप्यैन्द्राग्नः । ' तेन ' ऐन्द्राग्ननिगदानुवचनेन ' अनुसमश्नुते ' पश्चादपच्छिन्नोऽपि पुनस्तैर्हौत्रकैः सङ्गतो भवतीत्यर्थः ॥ २ ॥

अच्छावाककर्तृकयागस्यानन्तरकालमृतुग्रहाणां यागं विधत्ते—स वै सन्नेऽच्छावाक इत्यादि । ' सन्न ' इति सदनस्य यागार्थत्वात् कृतयाग इत्यर्थः । विहितमृतुग्रहयागकालं संवत्सरोत्पत्तिसाधनत्वेन प्रशंसति—तद्यत्सन्नेऽच्छावाक इत्यादि । स एतस्मादिति । ' सः ' अध्वर्युः ' एतस्मात् ' ' प्रजननात् ' प्रजोत्पत्तिसाधनाच्छावाकरूपात् ' मिथुनात् ' ' ऋतून् ' ' संवत्सरं ' कृत्वा ऋत्वात्मकं संवत्सरमुत्पादितवान् भवतीत्यर्थः ॥ ३ ॥

पुनरपि तमेव कालं सर्वोत्पत्तिहेतुत्वेन प्रशंसति—यद्वेव सन्नेऽच्छावाक इत्यादि । सर्वं वा ऋतवः संवत्सर इति । ऋत्वात्मकस्य संवत्सरस्य सर्वोत्पत्तिनिमित्तकारणत्वात्सर्वात्मकत्वम् ॥ ४ ॥

"ऋतुग्रहैश्चरति" इति सङ्ख्याविशेषानुपादानन सामान्येन विधानादत्र ग्रहाणां सङ्ख्याविशेषं विधत्ते—तान्वै द्वादश गृह्णीयादित्यादि । द्वादश वै मासा इति । ऋतुग्रहाणामृतुरूपसंवत्सरात्मकत्वात्संवत्सरावयवभूतमास-

---

१–ऋतुग्रहैश्चरतो द्रोणकलशादुपयामगृहीतोऽसि मधवे त्वेति द्वादश प्रातमन्त्रम् । चरत इति द्विवचनोपदेशात्प्रतिप्रस्थाता च । द्रोणकलशादिति नियमो वचनात् । द्वादशग्रहणाच्च द्वादशानामुत्तमयोर्यौगपद्यम् । न तु त्रयोदशस्येति कर्कः । अध्वर्योः पूर्व्वः पूर्व्वो मंत्रः । उत्तर उत्तरः प्रतिप्रस्थातुः । का. श्रौ. सू. ९ । २७०–२७२ ।

(द्रो) द्रोणकलशाद्गृह्णाति । प्रजापतिर्वै द्रोणकलशः सऽएतस्मात्प्रजापतेर्ऋतून्त्संव्वत्सरं प्रजनयति ॥ ६ ॥

(त्यु) उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति । कुतस्तयोरन्तो येऽउभयतोमुखे तस्मादयमनन्तः संव्वत्सरः परिप्लवते तं गृहीत्वा न सादयति तस्मादयमसन्नः संव्वत्सरः ॥ ७ ॥

---

द्रोणकलशाद् गृह्णाति । प्रजापतिर्वै द्रोणकलशः । स एतस्मात्प्रजापतेर्ऋतून्संवत्सरं प्रजनयति ॥ ६ ॥

उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति । कुतस्तयोरन्तो—येऽउभयतोमुखे । तस्मादयमनन्तः संवत्सरः परिप्लवते । तं गृहीत्वा न सादयति । तस्मादयमसन्नः संवत्सरः ॥ ७ ॥

---

गतद्वादशत्वसङ्ख्यैतेषां ग्रहाणां युज्यत इत्यर्थः । अत्रैव पक्षान्तरं सोपपत्तिकमाह—अथो अपीति । ' अथो ' ' अपि ' इत्ययं निपातसमुदायः पक्षान्तरे । ' त्रयोदशः ' अधिको मासः ' अस्ति ' इति हेतोः ' त्रयोदश ' ग्रहान् ' गृह्णीयात् ' । अधिकमासलक्षणमप्यत्र दर्शितम्—" असङ्क्रान्तावेकवर्षे द्वौ चेत्संसर्प्य आदितः । क्षयमासो द्विसङ्क्रान्तः स बार्हस्पत्यसंज्ञकः ॥" इति । पूर्वमभिहितो द्वादशपक्ष एवानुष्ठेय इत्याह—द्वादश त्वेवेत्यादि । यदेतद् द्वादशानां ग्रहणम् ' एषैव ' ' संपत् ' सम्पत्तिः पर्याप्तमित्यर्थः । अत्रायमभिप्रायः—चान्द्रमासपक्षे मासाधिक्यं भवति, सौरमासपक्षे तु मेषादिराशीनां द्वादशत्वाद्द्वादशैव मासा इति तत्रैवाधिको मासोऽन्तर्भवतीति द्वादशपक्ष एव पर्याप्त इति, एष च पक्षो लाघवमपेक्षमाणस्य नियम्यते । त्रयोदशमपि ग्रहीतुं यदीच्छेत्तदा त्रयोदशमपि गृह्णीयादेव । अनेनैवाभिप्रायेण कात्यायनेन सूत्रितम्—" त्रयोदशं गृह्णीयादिच्छन् " ( का. श्रौ. सू. ९ । २८३ ) इति ॥ ५ ॥

ध्रुवग्रहग्रहणानन्तरं धाराया विरतत्वादुक्तसङ्ख्याकानृतुग्रहान्—द्रोणकलशाद्गृह्णातीति । अधाराग्रहाणां द्रोणकलशाद्ग्रहणमापस्तम्बेन सूत्रितम्—" द्रोणकलशादधारा ग्रहाः परिप्लवेया गृह्यन्ते "—इति । प्रजापतिर्वै द्रोणकलश इति । ' प्रजापतिः ' समस्तस्य जगतः कारणम् । द्रोणकलशमपि सर्वेषां ग्रहाणां कारणम्, तत एव तेषां ग्रहणात् । तस्माद् ' द्रोणकलशः ' प्रजापतिरूपः । अतः प्रजापत्यात्मकात् ' द्रोणकलशात् ' ऋतुग्रहाणां ग्रहणे प्रजापतेः सकाशादेवर्त्वात्मकं ' संवत्सरम् ' उत्पादितवान्भवतीत्यर्थः ॥ ६ ॥

ग्रहणसाधने पात्रे उभयतोमुखे भवत इत्याह—उभयतोमुखाभ्यां पात्राभ्यां गृह्णातीति । उभयतोमुखत्वस्य प्रयोजनमाह—कुतस्तयोरन्त इत्यादि । ऋतुग्रहणपात्रयोरुभयतोमुखत्वे पृष्ठभागरूपस्यावसानस्याभावादृतुग्रहात्मकः ' संवत्सरः ' अपि ' अनन्तः ' अनवसानः सन् पर्यावर्तते । ग्रहणानन्तरं ग्रहवत् प्राप्तं खरे सादनं निषेधति—तं गृहीत्वा न सादयतीति । तस्मादिति । ' तस्मात् ' असादनात् ' अयं ' ' संवत्सरः ' असन्नः ' अविरतो वर्तते ॥ ७ ॥

(ग्रो)नानुवाक्यामन्वाह । ह्वयति वाऽअनुवाक्ययाऽऽगतो ह्येवायमृतुर्यदि दिवा यदि नक्तं नानु वषट्करोति नेदृतूनपवृणजाऽइति सहैव प्रथमौ ग्रहौ गृह्णीतः सहोत्तमाविदमेवैतत्सर्व्वᳯं संव्वत्सरेण परिगृहीतस्तदिदᳯं सर्व्वᳯं संव्वत्सरेण परिगृहीतम् ॥ ८ ॥

---

नानुवाक्यामन्वाह । ह्वयति वाऽअनुवाक्यया । आगतो ह्येवायमृतुः । यदि दिवा । यदि नक्तम् । नानु वषट् करोति–नेदृतूनपवृणजाऽइति । सहैव प्रथमौ ग्रहौ गृह्णीतः । सहोत्तमौ । इदमेवैतत्सर्वं संवत्सरेण परिगृह्णीतः । तदिदं सर्वं संवत्सरेण परिगृहीतम् ॥ ८ ॥

---

ग्रहणावसरे कर्तव्यामनुवाक्यां सोपपत्तिकं निषेधति–नानुवाक्यामित्यादि । अनुवाक्याऽनुवचनं हविःस्वीकाराय देवताह्वानार्थं भवति, प्रकृतग्रहाणां तु देवता ऋत्वात्मिका, 'ऋतुः' च 'यदि' 'दिवा' 'यदि' वा 'नक्तं' भवति; तदा सर्वदा 'आगतः' 'एव'। ऋत्वन्तर्भूतस्याहोरात्रस्याभावात् । तस्मात्तदाह्वानार्थम् 'अनुवाक्या' अनुवाचनीयं न करणीयमित्यर्थः ।

सर्वेष्वपि ग्रहेषु वषट्कारानन्तरं "सोमस्याग्नेर्वीही वौषट्"–इत्यनेन पुनरपि स्विष्टकृदर्थं हविःशेषो हूयते सोऽनुवषट्कारः; तमत्र प्राप्तं निषेधति[1]–नानु वषट् करोतीत्यादि । अनुवषट्कारस्याकरणे अयमभिप्रायः 'नेदृतूनपवृणजै' अपवर्जयानीति । अनुवषट्कारे कृते देवतान्तरस्य स्विष्टकृतोऽग्नेः स्वीकारात् प्रकृता ऋत्वात्मिका देवताः परित्यक्ताः स्युः, तथा मा भूदिति । अथवा अनुवषट्कारस्य यागावसानरूपत्वात्तस्मिन्नृतूनामप्यवसानं स्यात्, अतस्तन्मा भूदिति नानुवषट्कारं कुर्यादित्यर्थः । प्रथमद्वितीययोरेकादशद्वादशयोश्च सह ग्रहणं विधत्ते–सहैवेत्यादि[2] । द्वितीयस्यापि प्रथमसन्निकर्षात् प्रथमत्वमुपचर्यते, तथैकादशस्याप्युत्तमत्वम् । अनेन प्रथमोत्तमानां सहग्रहणविधानेनैव मध्यपातिनां ग्रहाणां पर्यायेण ग्रहणमित्यवसीयते । सहग्रहणस्य कारणमाह--इदमेवैतादित्यादि । तदेतेन सहग्रहणेन अध्वर्युप्रतिप्रस्थातारौ 'इदमेव' 'सर्वं' जगत् संवत्सरेण 'परिगृह्णीतः' परितो गृह्णीतः । 'तत्' तस्मात् 'इदं सर्वम्' 'संवत्सरेण' 'परिगृहीतम्' परितो व्याप्तं दृश्यते । यत एव तत्सर्वं संवत्सरेण परिगृहीतं परितो व्याप्तं दृश्यते, तस्मात्तत्सिद्धये आदावन्ते च सह गृह्णीयातामित्यर्थः ।

ननु चात्र संवत्सरग्रहणं संवत्सरेण सर्वस्य परिग्रहणे हेतुत्वेनोपन्यस्तम्, तथा परिग्रहणमपि सहग्रहणस्य हेतुत्वेनोपन्यस्तमित्यन्योन्याश्रयणाद्विरोध इति चेत्, न । कारकज्ञापकयोर्हेतुहेतुमद्भाववैपरीत्यमनुकूलमेव न तु प्रतिकूलम्, यथा धूमस्याग्निः कारकहेतुः, अग्नेश्च धूमो ज्ञापकहेतुरिति । तद्वदत्रापि ग्रहयोः सहग्रहणं कारकहेतुः, संवत्सरेण जगतः परिग्रहणं ज्ञापकहेतुरित्यविरोधः । एवमेतादृशेषु विषयेषु सर्वत्रावगन्तव्यम् ॥ ८ ॥

---

१–यज्ञपार्श्वे कात्यायनः "ऋतुग्रहा द्विदेवत्या ये च पात्नीवतग्रहाः । आदित्यग्रहसावित्रा एते नानुवषट्कृताः ॥" इति ।
२–युगपत्प्रथमौ गृह्णीत उत्तमौ च व्यत्यासम् । मध्ये प्रचरणं च सर्व्वेषाम् । का. श्रौ. सू. ९ । २७३ ।

( तन्नि ) निरे॒वान्यत॑रः॒ क्राम॑ति॒ । प्रान्यत॑रः पद्यते॒ तस्मा॑दि॒मेऽन्व॒ञ्चो मासा॑ यन्त्यथ॒ यदु॒भौ वा स॒ह निष्क्रामे॑तामु॒भौ वा स॒ह प्र॑पद्येयातां पृ॒थगु॒ हैवे॒मे मासा॒ऽईयु॒स्तस्मा॒न्निरे॒वान्यत॑रः॒ क्राम॑ति॒ प्रान्यत॑रः प्रद्यते ॥ ९ ॥

तौ वा॒ऽऋतु॒नेति॒ षट् प्र॒चर॑तः । ( स्तु ) तद्दे॒वा अह॑रसृजन्त॒ऽर्तुभि॒रिति॑ च॒तुस्तद्रात्रि॑मसृजन्त॒ स यद्धै॒ताव॑दे॒वाभ॑वि॒ष्यद्रात्रि॑र्है॒वाभ॑विष्य॒न्न व्य॑वत्स्यत् ॥ १० ॥

( त्तौ ) तौ वा॒ऽऋतु॒नेत्यु॒परि॑ष्टाद्द्वि॒श्चर॑तः । ( स्तु ) तद्दे॒वाः प॒रस्ता॒दह॑रदधु॒स्तस्मा॑दि॒दम॒द्याह॒रथ॒ रात्रि॒रथ॒ श्वोऽह॒र्भवि॑ता ॥ ११ ॥

---

निरेवान्यतरः क्रामति, प्रान्यतरः पद्यते । तस्मादिमेऽन्वञ्चो मासा यन्ति । अथ यदुभौ वा सह निष्क्रामेताम्, उभौ वा सह प्रपद्येयाताम्--पृथगु हैवेमे मासा ईयुः । तस्मान्निरेवान्यतरः क्रामति, प्रान्यतरः पद्यते ॥ ९ ॥

तौ वाऽऋतुनेति षट् प्रचरतः । तद् देवा अहरसृजन्त । ऋतुभिरिति चतुः । तद्रात्रिमसृजन्त । स यद्धैतावदेवाभविष्यद्--रात्रिर्हैवाभविष्यत्--न व्यवत्स्यत् ॥ १० ॥

तौ वाऽऋतुनेत्युपरिष्टाद्द्विश्चरतः । तद् देवाः परस्तादहरदधुः । तस्मात् इदम् अद्याहः । अथ रात्रिः, अथ श्वोऽहर्भविता ॥ ११ ॥

---

अध्वर्युप्रतिप्रस्थात्रोर्निष्क्रमणं प्रवेशश्च पर्यायेण कर्तव्यावित्याह--निरेवान्यतरः क्रामतीत्यादि । 'अन्यतरः' 'निष्क्रामति' 'अन्यतरश्च प्रपद्यते' प्रविशति । तस्मादिति । यत एवं पर्यायेण ऋतुग्रहणं निष्क्रमणं प्रवेशश्च सम्भवति, 'तस्मात्' तदात्मका 'मासाः' अपि 'अन्वञ्चः' अनु पर्यायेणाञ्चन्ति गच्छन्तीत्यन्वञ्चः तादृशा भवन्ति । विपक्षे बाधं प्रदर्श्योक्तमेव निष्क्रमणप्रवेशप्रकारं द्रढयति--यदुभौ वा सह निष्क्रामेतामित्यादि । पृथगु हैवेति । 'इमे' 'मासाः' 'पृथगेव' 'ईयुः' । परस्परमसम्बद्धा 'एव' भवेयुरित्यर्थः॥९॥

यागकाले अध्वर्युप्रतिप्रस्थात्रोः प्रैषमन्त्रानुत्पादयन्नहोरात्रसृष्टिहेतुत्वेन तान् प्रशंसति--तौ वा ऋतुनेत्यादि । 'तौ' अध्वर्युप्रतिप्रस्थातारौ 'ऋतुना' प्रेष्येति 'षट्' कृत्वः प्रचरतः । अत एव तैत्तिरीयके श्रूयते--"ऋतुना प्रेष्येति षट्कृत्व आह"--( तै. सं. ६ । ५ । ३ । २ ) इति । अत्र प्रथमतृतीयपञ्चमेष्वध्वर्युः प्रचरेत्, द्वितीयचतुर्थषष्ठेषु प्रतिप्रस्थाता प्रचरेदित्येवं षट्कृत्वः प्रचरणम् । 'तत्' तेन ऋतुना प्रेष्येत्यनेन च षट्कृत्वः प्रचरणेन 'देवाः' अहःसृष्टिं कृतवन्तः । पुनश्च 'ऋतुभिः' प्रेष्येत्यनेन चतुर्वारं प्रचरतः । अत्रापि सप्तमनवमयोरध्वर्युः, अष्टमदशमयोः प्रतिप्रस्थाता । तेन रात्रिसृष्टिं कृतवन्तः । 'एतावदेव' ऋतुभिरिति चतुर्वारप्रचरणान्तमेव यदि 'अभविष्यत्' तदा 'रात्रिः' 'एव' अभविष्यत् । तथा च 'रात्रिः'

---

१--निष्क्रामत्येकः प्रविशतीतरः । उत्तरः उत्तरः प्रतिप्रस्थाताऽपरकालत्वात् । का० श्रौ० सू० ९ । २७४, २७५ । २--ऋतुनेति षट्प्रेष्यतः । का. श्रौ. सू. । ९ । २७८ ।

( तत् ) ऋतुनेति वै देवाः । ( ० ) मनुष्यानसृजन्तऽर्तुभिरिति पशूंन्स यत्तन्मध्ये येन पशूनसृजन्त तस्मादिमे पशवऽउभयतः परिगृहीता वशमुपेता मनुष्याणाम् ॥ १२ ॥

तौ वाऽऋतुनेति षट् प्रचर्य । ( यं ) इतरथा पात्रे विपर्यस्येतेऽऋतुभिरिति चतुश्चरित्वेतरथा पात्रे विपर्यस्येतेऽन्यतरत एव तद्देवा अहरसृजन्तान्यतरतो रात्रिमन्यतरतऽएव तद्देवा मनुष्यानसृजन्तान्यतरतः पशून् १३

---

ऋतुनेति वै देवा मनुष्यानसृजन्त, ऋतुभिरिति पशून् । स यत्तन्मध्ये-येन पशूनसृजन्त । तस्मादिमे पशव उभयतः परिगृहीता वशमुपेता मनुष्याणाम् ॥ १२ ॥

तौ वाऽऋतुनेति षट् प्रचर्य्य, इतरथा पात्रे विपर्यस्येते । ऋतुभिरिति चतुश्चरित्वा-इतरथा पात्रे विपर्यस्येते । अन्यतरत एव तद्देवा अहरसृजन्त, अन्यतरतो रात्रिम् । अन्यतरत एव तद्देवा मनुष्यानसृजन्त, अन्यतरतः पशून् ॥ १३ ॥

---

' न व्यवत्स्यत् ' न व्युष्टाऽभविष्यत् । पुनरहरुपक्रमो न भवतीत्यर्थः । तस्मात् ' तौ ' अध्वर्यू ' ऋतुनेत्युपरिष्टात् ' द्विवारं यजतः । ' तत् ' तेन ' देवाः ' ' परस्तात् ' रात्रेः, उपरिष्टात् ' अहः ' धारयामासुः । यस्मादह्नो रात्रेः पुनरप्यह्नश्च सृष्टौ कारणम् ऋतुना ऋतुभिः ऋतुनेति क्रमेण यागः सम्पादितः ' तस्मात् ' ' अद्य ' इदानीम् ' इदम् ' ' अहः ' भवति । ' अथ ' अह्नोऽनन्तरं ' रात्रिः ' रात्रेरनन्तरं ' श्वः ' परेद्युः, पुनरपि ' अहः ' ' भविता ' । तत उक्ताः प्रैषमन्त्राः प्रशस्ता इत्यर्थः । अत्र कात्यायनः- " निष्क्रामत्येकः प्रविशतीतरः । उत्तर उत्तरः प्रतिप्रस्थाताऽपरकालत्वात् । उभयतोऽध्वर्युं पात्रेण परिप्रगृह्णाति, सर्वहुताः प्रागुत्तमाभ्याम् । ऋतुनेति षट् प्रेष्यतः । ऋतुभिरिति चतुरः पात्रमुखे विपर्यस्य । षड्द्रुतमौ"-( का. श्रौ. सू. ९ । २७४-२८० ) इति ॥ १० ॥ ११ ॥

विहितानुक्तक्रमसहितान्प्रैषमन्त्रान्प्रकारान्तरेण प्रशंसति-ऋतुनेति वै देवा इत्यादि । ' ऋतुनेति ' 'मनुष्यानसृजन्त ' ' ऋतुभिरिति ' ' पशून् ' असृजन्त । तथा च ऋतुनेत्यस्य मनुष्यसृष्टिहेतोर्मन्त्रस्याद्यन्तयोः प्रयुक्तत्वात्, ऋतुभिरित्यस्य पशुसृष्टिहेतोर्मन्त्रस्य मध्ये प्रयुक्तत्वात् ' इमे ' ' पशवः ' मनुष्यैः ' उभयतः ' ' परिगृहीताः ' पार्श्वद्वयेऽपि यत्र गच्छन्ति तत्रापि कैश्चित्स्वीक्रियन्त इति । तथाविधाः सन्तः वशमुपेताः भवन्ति ॥ १२ ॥

होममध्ये पात्रमुखयोर्विपर्यासं विधत्ते-तौ वा ऋतुनेत्यादि । अन्यतरत इति । ' अन्यतरतः ' मुखात् ' ऋतुनेति ' मन्त्रेण ' देवाः ' अहःसृष्टिं कृतवन्तः । ततः ' अन्यतरतः ' च मुखात् ऋतुभिरिति रात्रिसृष्टिं कृतवन्तः । तथा ' पशून् ' ' मनुष्यान् ' ' असृजन्त ' तस्मात्तत्तन्मन्त्रसाधने यागे पात्रमुखे विपर्यस्येदित्यर्थः ॥ १३ ॥

( न ) अथातो गृह्णात्येव। ( वो ) उपयामगृहीतोऽसि मधवे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि माधवाय त्वेति प्रतिप्रस्थातैतावेव वासन्तिकौ स यद्वसन्तऽओषधयो जायन्ते वनस्पतयः पच्यन्ते तेनो हैतौ मधुश्च माधवश्च ॥ १४ ॥

( श्वो ) उपयामगृहीतोऽसि । शुक्राय त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि शुचये त्वेति प्रतिप्रस्थातैतावेव ग्रैष्मौ स यदेतयोर्बलिष्ठं तपति तेनो हैतौ शुक्रश्च शुचिश्च ॥ १५ ॥

(श्वो) उपयामगृहीतोऽसि । नभसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि नभस्याय त्वेति प्रतिप्रस्थातैतावेव वार्षिकावमुतो वै दिवो वर्षति तेनो हैतौ नभश्च नभस्यश्च ॥ १६ ॥

---

अथातो गृह्णात्येव—" उपयामगृहीतोऽसि मधवे त्वा "—( वा. सं. ७ । ३० ) इत्येवाध्वर्युर्गृह्णाति । " उपयामगृहीतोऽसि माधवाय त्वा "—( वा. सं. ७ । ३० ) इति प्रतिप्रस्थाता । एतावेव वासन्तिकौ । स यद्वसन्तऽओषधयो जायन्ते, वनस्पतयः पच्यन्ते । तेनो हैतौ मधुश्च माधवश्च ॥ १४ ॥

"उपयामगृहीतोऽसि शुक्राय त्वा"—( वा. सं. ७ । ३० ) इत्येवाध्वर्युर्गृह्णाति । " उपयामगृहीतोऽसि शुचये त्वा "—( वा. सं. ७ । ३० )—इति प्रतिप्रस्थाता । एतावेव ग्रैष्मौ । स यदेतयोर्बलिष्ठं तपति—तेनो हैतौ शुक्रश्च शुचिश्च ॥ १५ ॥

"उपयामगृहीतोऽसि नभसे त्वा"—( वा० सं० ७ । ३० ) इत्येवाध्वर्युर्गृह्णाति । " उप-

---

इत्थमृतुग्रहाणां होमकालसङ्ख्याविशेषादिकमभिधायेदानीं प्रथमद्वितीयग्रहयोः कर्तृमन्त्रविशिष्टं ग्रहणं विधत्ते—अथातो गृह्णात्येवेत्यादि ( का. श्रौ. सू. ९ । २७०—२७२ ) । मधुमाधवाविति चैत्रवैशाखौ, ऋतुग्रहाणां चैत्रादयो मासाः देवताः । तस्मादृतुग्रहत्वान्मधुमाधवमासार्थं गृह्णामीति मन्त्रार्थः । एवमुत्तरत्रापि ।

चैत्रवैशाखयोर्मधुमाधवनामधेयप्राप्तिं दर्शयति—एतावेवेति । 'एतौ' उक्तौ मासौ 'वासन्तिकौ' । "वसन्ताच्च" ( पा. सू. ४ । ३ । २० ) इति ठक् प्रत्ययः । 'वसन्ते' च 'ओषधयः' माधुर्यरसहेतुभूता जायन्ते । 'वनस्पतयः' च 'पच्यन्ते' स्वत एव परिपक्वा भवन्ति । कर्मकर्तरि रूपम् ( पा. सू. ३ । १ । ८७ ) । परिपाके च माधुर्यरसोत्पत्तेरुपभोगयोग्या भवन्ति । तस्मात्तत्संबन्धी मासौ 'मधुः' । 'माधवः' इति । मधुरेव माधव इति स्वार्थिकोऽण् प्रत्ययः । अथवा मधुमासस्यायं माधव इति—" तस्येदम् "—( पा. सू. ४ । ३ । १२० ) इत्यण् । मधुमासानन्तरभावीत्यर्थः ॥ १४ ॥

यथोक्तगुणविशिष्टं तृतीयचतुर्थयोर्ग्रहणं विधत्ते—उपयामगृहीतोऽसीत्यादि । एतावेवेति । 'एतावेव' मासौ 'ग्रैष्मौ' ग्रीष्मर्तुसम्बन्धिनौ । एतयोर्मासयोः सूर्योऽपि 'बलिष्ठम्' अत्यन्तं 'तपति' शोचते यतः, तस्मादेतयोः 'शुक्रः' 'शुचिः' इति नामधेयम् ॥ १५ ॥

पञ्चमषष्ठयोर्ग्रहणं विधत्ते—उपयामगृहीतोऽसीत्यादि । एतावेवेत्यादि । वार्षिकाविति । " वर्षाभ्यष्ठक् "—

 


(श्रो) उपयामगृहीतोऽसि । (सी) इषे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽस्यूर्जे त्वेति प्रतिप्रस्थातैतावेव शारदौ स यच्छरद्यूर्ग्रस ओषधयः पच्यन्ते तेनो हैताविषश्चोर्जश्च ॥ १७ ॥

(श्रो) उपयामगृहीतोऽसि । सहसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि सहस्याय त्वेति प्रतिप्रस्थातैतावेव हैमन्तिकौ स यद्धेमन्त ऽइमाः प्रजाः सहसेव स्वं वशमुपनयते तेनो हैतौ सहश्च सहस्यश्च ॥ १८ ॥

(श्रो) उपयामगृहीतोऽसि । तपसे त्वेत्येवाध्वर्युर्गृह्णात्युपयामगृहीतोऽसि तपस्याय त्वेति प्रतिप्रस्थातैतावेव शैशिरौ स यदेतयोर्बलिष्ठꣳ श्यायति तेनो हैतौ तपश्च तपस्यश्च ॥ १९ ॥

---

यामगृहीतोऽसि नभस्याय त्वा "–( वा० सं० ७ । ३० ) इति प्रतिप्रस्थाता । एतावेव वार्षिकौ, अमुतो वै दिवो वर्षति–तेनो हैतौ नभश्च नभस्यश्च ॥ १६ ॥

" उपयामगृहीतोऽसि इषे त्वा "–( वा० सं० ७ । ३० ) इत्येवाध्वर्युर्गृह्णाति । " उपयामगृहीतोऽस्यूर्जे त्वा "–( वा० सं० ७ । ३० ) इति प्रतिप्रस्थाता । एतावेव शारदौ । स यच्छरद्यूर्ग्रस ओषधयः पच्यन्ते–तेनो हैताविषश्चोर्जश्च ॥ १७ ॥

" उपयामगृहीतोऽसि सहसे त्वा "–( वा० सं० ७ । ३० ) इत्येवाध्वर्युर्गृह्णाति । " उपयामगृहीतोऽसि सहस्याय त्वा "–( वा० सं० ७ । ३० ) इति प्रतिप्रस्थाता । एतावेव हैमन्तिकौ । स यद्धेमन्त इमाः प्रजाः सहसेव स्वं वशमुपनयते–तेनो हैतौ सहश्च सहस्यश्च ॥ १८ ॥

" उपयामगृहीतोऽसि तपसे त्वा "–( वा० सं० ७ । ३० ) । इत्येवाध्वर्युर्गृह्णाति ।

---

( पा. सू. ४ । ३ । १८ )–इति ठक् प्रत्ययः । अनयोर्मासयोः ' अमुतः ' ' दिवः ' नमसः सकाशाद् ' वर्षति ', ' तेन ' मासावपि नभोनभस्याविति व्यपदिश्येते । नभस्य इति । नभोमासानन्तरं भवतीति नभस्यः । " भवे छन्दसि "–( पा. सू. ४ । ४ । ११० )–इति यत् । अथवा " वसुशब्दात्स्वार्थे यद् वक्तव्यः " इत्यत्र वसुशब्दस्य नभआदीनामुपलक्षणार्थत्वात्स्वार्थिको यत्प्रत्ययः । एवं सहस्यस्तपस्य इत्यत्रा-प्यवगन्तव्यम् ॥ १६ ॥

सप्तमाष्टमयोर्ग्रहणं विधत्ते–उपयामगृहीतोऽसीषे त्वेति । ऊर्जशब्दस्यैवार्थकथनम्–ओषधयः पच्यन्ते इति अनेनान्नस्योत्पत्तिः सूच्यते । इडन्नं तदस्मिन्नस्तीति इषः । ऊर्क्शब्दाभिधेयोऽन्नरसश्चास्मिन्नस्तीत्यूर्जः । मत्वर्थीयोऽकारप्रत्ययः । ग्रहणमन्त्रयोः ' इषे ' ' ऊर्जे ' इति यश्चतुर्थ्यन्तनिर्देशः, स तु निमित्तनैमित्तिकप्रभेदाविवक्षायां मत्वर्थीयाकारप्रत्ययाभावादुपपद्यते ॥ १७ ॥

नवमदशमयोर्ग्रहणं विधत्ते–उपयामगृहीतोऽसि सहस इत्यादि । हैमन्तिकाविति । "हेमन्ताच्च"–( पा. सू ४।३।२१)इति च्छन्दसि ठञ्प्रत्ययः । स्ववशमुपनयत इति । स्वकीयं वशम् स्ववशं नयतीत्यर्थः ॥१८॥

एकादशद्वादशयोर्ग्रहणं विधत्ते–उपयामगृहीतोऽसि तपस इत्यादि । श्यायतीति । ' श्यायति ' तपति शुष्यतीत्यर्थः ॥ १९ ॥

---

१–स्ववशमिति भाष्यपाठः ।

( श्रो ) उपयामगृहीतोऽसि । (स्यᳪं) अᳪंहसस्पतये त्वेति त्रयोदशं ग्रहं गृह्णाति यदि त्रयोदशं गृह्णीयादथ प्रतिप्रस्थाताऽध्वर्योः पात्रे सᳪंस्रवमवनयत्यध्वर्युर्वा प्रतिप्रस्थातुः पात्रे सᳪंस्रवमवनयत्याहरति भक्षम् ॥ २० ॥

( सु ) अथ प्रतिप्रस्थाताऽभक्षितेन पात्रेण । ( णै ) ऐन्द्राग्नं ग्रहं गृह्णाति तद्यदभक्षितेन पात्रेणैन्द्राग्नं ग्रहं गृह्णाति न वाऽऋतुग्रहाणामनुवषट्कुर्वन्त्येतेभ्यो वाऽऐन्द्राग्नं ग्रहं ग्रहीष्यन्भवति तदस्यैन्द्राग्नेनैवानुवषट्कृता भवन्ति ॥ २१ ॥

यद्वेवैन्द्राग्नं ग्रहं गृह्णाति । सर्व्वं वाऽइदं प्राजीजनद्य ऽऋतुग्रहानग्रहीत्स इदᳪं सर्व्वं प्रजनयस्येदमेवैतत्सर्व्वं प्राणोदानयोः प्रतिष्ठापयति तदिदᳪं

---

" उपयामगृहीतोऽसि तपस्याय त्वा "-( वा० सं० ७ । ३० ) इति प्रतिप्रस्थाता । एतावेव शैशिरौ । स यदेतयोर्बलिष्ठं श्यायति-तेनो हैतौ तपश्च तपस्यश्च ॥ १९ ॥

" उपयामगृहीतोऽसि अंहसस्पतये त्वा "-( वा० सं० ७ । ३० ) इति त्रयोदशं ग्रहं गृह्णाति-यदि त्रयोदशं गृह्णीयात् । अथ प्रतिप्रस्थाताऽध्वर्योः पात्रे संस्रवमवनयति । अध्वर्युर्वा प्रतिप्रस्थातुः पात्रे संस्रवमवनयति । आहरति भक्षम् ॥ २० ॥

अथ प्रतिप्रस्थाताऽभक्षितेन पात्रेण ऐन्द्राग्नं ग्रहं गृह्णाति । तद् यदभक्षितेन पात्रेणैन्द्राग्नं ग्रहं गृह्णाति । न वाऽऋतुग्रहाणामनुवषट्कुर्वन्ति । एतेभ्यो वाऽऐन्द्राग्नं ग्रहं ग्रहीष्यन्भवति । तदस्यैन्द्राग्नेनैवानुवषट्कृता भवन्ति ॥ २१ ॥

यद्वेवैन्द्राग्नं ग्रहं गृह्णाति । सर्वं वाऽइदं प्राजीजनत्-य ऋतुग्रहानग्रहीत् । स इदं सर्वं प्रजनयस्ये-

---

त्रयोदशग्रहणपक्षे मन्त्रमाह-उपयामगृहीतोऽस्यंहसस्पतये त्वेति ( का. श्रौ. सू. ९ । २८३ । ) होमानन्तरमध्वर्योः पात्रे प्रतिप्रस्थातुर्वा पात्रे शेषमवनयेदित्याह-अथ प्रतिप्रस्थातेति ( का.श्रौ.सू. ९।२८९ ) । संस्रवशेषमाहरति-भक्षमिति । यस्मिन् 'पात्रे' शेषोऽवनीयते तत्रत्यं भक्षणार्थं सोमं सदः प्रत्याहरतीत्यर्थः ॥ २० ॥

भक्षाहरणानन्तरमैन्द्राग्नस्य ग्रहणं विधत्ते-अथ प्रतिप्रस्थातेति[1] । अभक्षितेनेति । पात्रगतस्य सोमशेषस्याभक्षितत्वात्पात्रमप्यभक्षितमित्युपचर्यते । अभक्षितपात्रेणैन्द्राग्नग्रहणे कारणमाह-तद्यदभक्षितेनेत्यादि । अनुवषट्कारे कृते ऋतूनामपवर्गः स्यादिति तद्यागे अनुवट्षकारो न्यषेधि । " नानु वषट् करोति, नेदृतूनपवृणजै " ( श. प. ४ । ३ । १ । ८ ) इति । तस्मादस्य यज्ञस्य सम्बन्धिन ऋतुग्रहा ' ऐन्द्राग्नेनैव ' ऐन्द्राग्नग्रहस्यानुवषट्कारेणैव ' अनुवषट्कृता भवन्ति ' इति । 'एतेभ्यः' ऋतुग्रहेभ्यः ' ऐन्द्राग्नं ग्रहं ग्रहीष्यन् भवति ' तत्राभक्षितेन पात्रेणैतस्य ग्रहणमन्तरेण न सम्भवतीति तेन गृह्णीयादित्यर्थः ॥ २१ ॥

ऐन्द्राग्नग्रहस्य ग्रहणं प्रयोजनाभिधानेन प्रशंसति-यद्वेवैन्द्राग्नं ग्रहं गृह्णातीति । ' यः ' अध्वर्युः ' ऋतु-

---

१-अन्यतरस्मिच्छेषो कृत्वा व्याशिनैन्द्राग्नं गृह्णाति प्रतिप्रस्थातेन्द्राग्नी इति । का. श्रौ. सू. ९ । २८५ ।

सर्व्वं प्राणोदानयोः प्रतिष्ठितमिन्द्राग्नी हि प्राणोदानाविमे हि द्यावापृथिवी प्राणोदानावनयोर्हीदथ्ँ सर्व्वं प्रतिष्ठितम् ॥ २२ ॥

यद्वेवैन्द्राग्नं ग्रहं गृह्णाति । सर्व्वं वाऽइदं प्राजीजनद्य ऽऋतुग्रहानग्रहीत्स इदथ्ँ सर्व्वं प्रजनय्यास्मिन्नेवैतत्सर्व्वस्मिन्प्राणोदानौ दधाति ताविमावस्मिन्त्सर्व्वस्मिन्प्राणोदानौ हितौ ॥ २३ ॥

( ताव ) अथातो गृह्णात्येव । ( वे ) इन्द्राग्नीऽआगतथ्ँ सुतं गीर्भिर्नभो व्वरेण्यम् ॥ अस्य पातं धियेषिता ॥ उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैष ते योनिरिन्द्राग्निभ्यां त्वेति सादयतीन्द्राग्निभ्याथ्ँ ह्येनं गृह्णाति ॥ २४ ॥

---

दमेवैतत्सर्वं प्राणोदानयोः प्रतिष्ठापयति । तदिदं सर्वं प्राणोदानयोः प्रतिष्ठितम् । इन्द्राग्नी हि प्राणोदानौ । इमे हि द्यावापृथिवी प्राणोदानौ । अनयोर्हीदं सर्वं प्रतिष्ठितम् ॥ २२ ॥

यद्वेवैन्द्राग्नं ग्रहं गृह्णाति । सर्वं वाऽइदं प्राजीजनत्—य ऋतुग्रहानग्रहीत् । स इदं सर्वं प्रजनय्यास्मिन्नेवैतत्सर्वस्मिन्प्राणोदानौ दधाति । ताविमावस्मिन्त्सर्वस्मिन् प्राणोदानौ हितौ ॥ २३ ॥

अथातो गृह्णात्येव—"इन्द्राग्नीऽआगतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता "—(वा सं. ७।३१ ) इति । "उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वा"—(वा. सं. ७।३१) इति सादयति । इन्द्राग्निभ्यां ह्येनं गृह्णाति ॥ २४ ॥

---

ग्रहानग्रहीत्' । 'सः' 'इदम्' 'सर्वम्' 'प्राजीजनत्' उदपादयत् । ऋतुग्रहाणां कृत्स्नजगदुत्पत्तिसाधनत्वं प्रागुक्तम् । "सर्वमेवैतत्प्रजनयति "—'इदं सर्वं प्रजनय्य' 'एतत्' ऐन्द्राग्नग्रहणेन प्राणापानयोः प्रतिष्ठापयति । तस्मादिदानीमपि प्राणापानयोः प्रतिष्ठितं वर्तते ॥

ननु कथं प्राणापानयोर्जगत् प्रतितिष्ठतीति । नात्र प्राणोदानशब्दाभ्यां प्राणवृत्तिभेदौ विवक्षितौ । किन्तु इन्द्राग्नीप्राणोदानात्मकत्वाद् द्यावापृथिव्योरपीन्द्राग्नित्वम् । द्यावापृथिव्योश्चेदं सर्वं प्रतिष्ठितम् । तस्मादैन्द्राग्नस्य ग्रहणं द्यावापृथिव्योः कृत्स्नजगत्प्रतिष्ठाहेतुत्वात्प्रशस्तमित्यर्थः ॥ २२ ॥

ऐन्द्राग्नग्रहस्य ग्रहणं प्रकारान्तरेण प्रशंसति—यद्वेवैन्द्राग्नमित्यादि । ताविमावस्मिन्निति । इन्द्राग्न्योः प्राणापानात्मकत्वादैन्द्राग्नग्रहणेन प्रजापतेः 'सर्वस्मिन्' प्राणापानौ 'दधाति' । तस्मात् 'ताविमौ' प्राणापानौ 'अस्मिन्' 'सर्वस्मिन्' निहितौ वर्तेते ॥ २३ ॥

विहितं ग्रहणमनूद्य मन्त्रं विधत्ते—अथातो गृह्णात्येवेन्द्राग्नीऽआगतमिति । हे इन्द्राग्नी ! 'सुतम्' अभिषुतम् । 'गीर्भिः' स्तुतिरूपाभिर्वाग्भिः 'वरेण्यम्' वरणीयम् 'नभः' लुप्तोपमानश्चैतत् । नभ इव आदित्यमिव (निरु. २।४।२) गीर्भिर्वरेण्यमिमं सोमं प्रति 'आगतम्' आगच्छतम् । "बहुलं छन्दसि "—(पा. सू. ६।४।२६) इति विकरणस्य लुक् । आगत्य च 'धिया' अस्मदीयया

---

१–एष मन्त्र इन्द्राग्निदैवत्ये विहितः । यदि तु अग्नीन्द्रदैवत्यो ग्रहो विधीयते तदा "आघा ये अग्निमिन्धते" इत्यादिमन्त्रः प्रयोज्यतया संहितायां पठ्यते ।

(त्यु) अथ वैश्वदेवं ग्रहं गृह्णाति । सर्व्वं वाऽइदं प्राजीजनद्य ऽऋतुग्रहानग्रहीत्स यद्धैतावदेवाभविष्यद्यावत्यो हैवाग्रे प्रजाः सृष्टास्तावत्यो हैवाभविष्यन्न प्राजनिष्यन्त ॥ २५ ॥

(न्ता) अथ यद्वैश्वदेवं ग्रहं गृह्णाति । (ती) इदमेवैतत्सर्व्वमिमाः प्रजा यथायथं व्यवसृजति तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते शुक्रपात्रेण गृह्णात्येष वै शुक्रो य एष तपति तस्य ये रश्मयस्ते विश्वे देवास्तस्माच्छुक्रपात्रेण गृह्णाति ॥ २६ ॥

(त्य) अथातो गृह्णात्येव । (वौ) ओमासश्चर्षणीधृतो विश्वेदेवास आगत ।

---

**वैश्वदेवग्रहः ।**

अथ वैश्वदेवं ग्रहं गृह्णाति । सर्वं वाऽइदं प्राजीजनत्—य ऋतुग्रहानग्रहीत् । स यद्धैतावदेवाभविष्यत्—यावत्यो हैवाग्रे प्रजाः सृष्टाः—तावत्यो हैवाभविष्यन् । न प्राजनिष्यन्त ॥ २५ ॥

अथ यद्वैश्वदेवं ग्रहं गृह्णाति—इदमेवैतत्सर्वमिमाः प्रजा यथायथं व्यवसृजति । तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते । शुक्रपात्रेण गृह्णाति । एष वै शुक्रो, य एष तपति । तस्य ये रश्मयः—ते विश्वेदेवाः । तस्माच्छुक्रपात्रेण गृह्णाति ॥ २६ ॥

अथातो गृह्णात्येव—" ओमासश्चर्षणीधृतो विश्वेदेवास आगत । दाश्वांसो दाशुषः

---

बुद्ध्या ' इषिता ' ( पा. सू. ७ । १ । ३९ ) । अध्येषितौ प्रार्थितौ युवाम् ' अस्य ' सोमस्य ' पातम् ' सोमं पिबतम् । अत्रापि विकरणस्य लुक् ( पा. सू. ६ । ४ । २६ ) । हे सोम ! उपयामेन दारुपात्रेण गृहीतोऽसि । त्वाम् 'इन्द्राग्निभ्याम्' गृह्णामीति शेषः । गृहीतस्य सोमरसस्य समन्त्रकं खरे सादनं विधत्ते—**एष ते योनिरित्यादि** । **इन्द्राग्निभ्यां हीति** । इन्द्राग्नी आगतमित्यादिनेन्द्राग्न्यर्थं गृहीतत्वादेष ते योनिरिन्द्राग्निभ्यामित्यनेन सादनं युज्यत इत्यर्थः ॥ २४ ॥

ऐन्द्राग्नग्रहस्य ग्रहणानन्तरं वैश्वदेवग्रहस्य ग्रहणं सार्थवादं विधत्ते—**अथ वैश्वदेवं गृह्णातीत्यादि** । **स यद्धैतावदिति** । ' एतावद् ' ऋतुग्रहणान्तमेव, यदि ' अभविष्यत् ' तदा ' अग्रे ' पूर्वं 'यावत्यः' 'प्रजाः' ' सृष्टाः ', ' तावत्यः ' एवाभविष्यन् ' न ' तु परम् ' प्राजनिष्यन्त ' ॥ २५ ॥

अथ वैश्वदेवग्रहस्य ग्रहणेन ' इदमेव ' ' सर्वम् ' ' यथायथम् ' यथास्वम् ' व्यवसृजति ' विशेषेण प्रजा उत्पादयति । वैश्वदेवस्य सर्वदेवत्यत्वात्सर्वप्रजासृष्टिहेतुत्वम् । तस्मादिमाः प्रजाः पुनरभ्यावृत्योत्पद्यन्ते ॥

विहिते ग्रहणे साधनतया शुक्रपात्रं विधत्ते—**शुक्रपात्रेण गृह्णातीत्यादि** । " एष वै शुक्रः " इत्यादिकं निगदव्याख्यानम् ॥ २६ ॥

ग्रहणानुवादेन मन्त्रं विधत्ते—**अथातो गृह्णात्येव ओमासश्चर्षणीधृत इति**[2] । मन्त्रस्यायमर्थः—

---

१—वैश्वदेवग्रहे विकल्पेन प्रयोज्यौ द्वौ मन्त्रौ संहितायामाम्नायेते । इह तु ब्राह्मणे तयोरेक एवाम्नायते न द्वितीयः । स च मन्त्रः ' विश्वे देवास आगत ' इत्येवमादिर्द्रष्टव्यः । २—भक्षप्रभृत्यानिधानात् कृत्वा वैश्वदेवं गृह्णाति । शुक्रपात्रेण द्रोणकलशादन्वारब्धे ओमास इति । ९ । ३०२ । ३०३ ।

दाश्वाᳫंसो दाशुषः सुतम् ॥ उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यऽइति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति ॥ २७ ॥

इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ४-२-५ ॥ ( ३. १. )

गृणाति ह वाऽएतद्धोता यच्छᳫंसति । तस्माऽएतद्गृणते प्रत्येवाध्वर्युरागृणाति तस्मात्प्रतिगरो नाम ॥ १ ॥

तं वै प्राञ्चमासीनमाह्वयते । सर्वे वाऽअन्यऽउद्गातुः प्राञ्चऽआर्त्विज्यं कुर्वन्ति तथो हास्यैतत्प्रागेवार्त्विज्यं कृतं भवति ॥ २ ॥

---

सुतम् । उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः, एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः "–( वा. सं. ७ । ३३ । ) इति सादयति । विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति ॥ २७ ॥

अथ माध्यन्दिनसवनग्रहाः ।

गृणाति ह वाऽएतद्धोता–यच्छंसति । तस्माऽएतत्–गृणते प्रत्येवाध्वर्युरागृणाति । तस्मात् प्रतिगरो नाम ॥ १ ॥

तं वै प्राञ्चमासीनमाह्वयते । सर्वे वाऽअन्यऽउद्गातुः प्राञ्च आर्त्विज्यं कुर्वन्ति, तथो हास्यैतत् प्रागेवार्त्विज्यं कृतं भवति ॥ २ ॥

---

'ओमासः' अवतेर्मन्प्रत्यये "ज्वरत्वर"–( पा. सू. ६ । ४ । २० ) इत्यादिना ऊठादेशे गुणे असुकि ( पा. सू. ७।१।५० ) च कृते जसि "ओमासः" इति । निपातनात् क्वस्वन्तस्य रूपम् "दाशुष" इति । दानशीलास्तादृशाः 'विश्वे देवाः' यूयं 'दाशुषः' यागदानादिकरणशीलस्य यजमानस्य 'सुतम्' अभिषुतं सोमं प्रति 'आगत' आगच्छत "बहुलं छन्दसि" ( पा. सू. २ । ४ । ७६ ) इति विकरणस्य लुक् । हे सोम ! त्वम् 'उपयामगृहीतोऽसि'–इति त्वाम् 'विश्वेभ्यः' 'देवेभ्यः' गृह्णामि । गृहीतस्य सोमस्य खरे सादनं समन्त्रकमाह–एष ते योनिरित्यादि ॥ २७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे तृतीयाध्याये प्रथमं ब्राह्मणम् ॥ ( ४-३-१ )

प्रथमे ब्राह्मणे ऋतुग्रहैन्द्राग्नवैश्वदेवग्रहा विहिताः । तत्रैन्द्राग्नवैश्वदेवयोः होत्रा शस्त्रं पठनीयम् । तत्रैवाध्वर्युणा शंसनकाले प्रतिगरः कर्तव्यः । स्तोत्रं द्वितीये ब्राह्मणेऽभिधीयते । तत्र तावदादौ प्रतिगरं विदधानस्तच्छब्दं निर्वक्ति–गृह्णाति ह वा इत्यादि । होता शंसतीति । 'यत्' एतत् 'गृणाति' 'ह' 'वै' शब्दायते । 'तस्मै' होत्रे 'अध्वर्युः' 'एतत्' प्रत्यागृणीयात् प्रतिशब्दायेत । अतः प्रतिगरशब्दो व्युत्पन्न इत्यर्थः॥ १॥ प्राञ्चमासीनमध्वर्युं प्रति शस्त्रमुपक्रमेतेत्याह–तं वै प्राञ्चमित्यादि। आहूयत इति। शोꣳसावोमित्येष आहावः शस्त्रस्योपक्रमे प्रयुज्यते तमुच्चारयेदित्यर्थः । सर्वे वा इति । उद्गातृव्यतिरिक्ताः 'सर्वे' 'प्राञ्चः' एव

प्रजापतिर्वा ऽउद्गाता । योषऽर्ग्घोता सऽएतत्प्रजापतिरुद्गाता योषायामृचि होतरि रेतः सिञ्चति यत्स्तुते तद्धोता शस्त्रेण प्रजनयति तच्छ्यति यथाऽयं पुरुषः शितस्तद्यदेनच्छ्यति तस्माच्छस्त्रं नाम ॥ ३ ॥

तदुपपल्ययस्य प्रतिगृणाति । (ती)इदमेवैतद्रेतः सिक्तमुपनिमदत्यथ यत्पराङ्तिष्ठन्प्रतिगृणीयात्पराग्घ हैवैतद्रेतः सिक्तं प्रणश्येत्तन्न प्रजायेत सम्यङ्ङासीनऽउ चैवैतद्भूत्वैतद्रेतः सिक्तं प्रजनयतः ॥ ४ ॥

---

प्रजापतिर्वाऽउद्गाता, योषऽर्ग्घोता । स एतत्प्रजापतिरुद्गाता योषायामृचि होतरि रेतः सिञ्चति । यत्स्तुते तद्धोता–शस्त्रेण प्रजनयति । तच्छ्यति–यथाऽयं पुरुषः शितः । तद् यदेनच्छ्यति–तस्माच्छस्त्रं नाम ॥ ३ ॥

तदुपपल्ययस्य प्रतिगृणाति । इदमेवैतद्रेतः सिक्तमुपनिमदति । अथ यत् पराङ्तिष्ठन्प्रतिगृणीयात् । पराग्घ हैवैतद्रेतः सिक्तं प्रणश्येत् । तन्न प्रजायेत । सम्यङ्ङासीनऽउ चैवैतद् भूत्वैतद्रेतः सिक्तं प्रजनयतः ॥ ४ ॥

---

आर्त्विज्यम् ' ऋत्विक्कर्म ' कुर्वन्ति ' । ' तथा ' च सत्यत्रोपक्रमकाले ' प्राक् ' आसनेनोपरिष्टात् प्रतिगरे प्रत्यङ्मुखेऽपि तेन ' प्रागेव ' ऋत्विक्कर्म ' कृतं ' ' भवति ' । अत्र कात्यायनः–" निर्हृत्य पात्रं होतुः पुरस्तात्प्राङास्ते, अभिहुतः शोꣳसावोमित्यावृत्त्योथामो दैवेति प्रतिगृणाति प्रणवावसानयोः, ओमिति वा "–( का० श्रौ० सू० ९ । २९३–२९४ ) इति । आश्वलायनोऽपि–" पराङध्वर्युरावृत्ते " इत्युपक्रम्य " अनभिहिङ्कृत्य शोꣳसावोमित्युच्चैराहूय–" इति ॥ २ ॥

प्रसङ्गात्स्तोत्रशस्त्रयोः पौर्वापर्य्यमुपजीव्य शस्त्रशब्दं निर्वक्ति–**प्रजापतिर्वा** इत्यादि । ' उद्गाता ' इत्यनेन गाननिष्पाद्यं साम लक्ष्यते । तच्च प्रजापत्यात्मकमिति प्रसिद्धम् । " प्रजापतिः साम बृहस्पतिरुद्गाता " ( तै. सं. ३।३।२)–इति श्रुतेः । प्रजापतेश्च सर्वसृष्टिहेतुत्वात्पतिरिति तदात्मकं सामापि पतिः।'होता' 'ऋक्' 'योषा'। निष्पाद्यनिष्पादकभावभेदाविवक्षया ऋचो होत्रात्मकत्वम् । ऋक्सामयोर्जायापतित्वमैतरेयके श्रूयते–" ऋक्त्वा वा इदमग्रे साम चास्तां सैव नाम ऋगासीदमो नाम साम सा वा ऋक् सामोपावदन्मिथुनं सम्भवाव प्रजात्यै " इत्युपक्रम्य " ते द्वे भूत्वोपावदताम् " इति । तच्छ्यतीत्यस्यैव व्याख्यानम्–' यथाऽयम् ' पुरोवर्ती ' पुरुषः ' ' शितः ' तीक्ष्णीकृतोऽवयवभागेन स्पष्टीकृतः । तथा शस्त्रेण ' तद् ' रेतः ' श्यति ' स्पष्टीकरोति । यत एवम् ' तस्मात् ' श्यत्यनेनेति शस्त्रमिति ऋक्समुदायस्य नामधेयम् । " शो तनूकरणे " ( धा. पा. दि. प. ३९ ) इत्यस्मात् त्रप्रत्यये टिलोपे असुगागमे च कृते ' शस्त्रम् ' इति भवति ॥ ३ ॥

प्रतिगरावसरेऽध्वर्योः पर्यावृत्तिं विधत्ते **तदुपपल्ययस्येति** । प्रागासीनोऽध्वर्युः पर्यावृत्य प्रतिगृणीयात् । " उपसर्गस्यायतौ "–( पा. सू. ८।२।१९ ) इति रेफस्य लत्वम् । ' एतत् ' एतेन ' इदम् ' समासिक्तं 'रेतः' एव 'उपनिमदति' तर्पयति समर्द्धयति । ' मद तृप्तियोगे ' ( धा. पा. चु. आ. १७२ ) । होतृकर्तृकं शंसनं रेतसः समर्थने कारणमित्युक्तम् । प्रतिगरस्यापि प्रतिशंसनत्वात्सोऽपि रेतसः समर्थने कारणमिति भावः।

(तो) यातयामानि वै देवैश्छन्दाᳬंसि । छन्दोभिर्हि देवाः स्वर्गं लोकᳬं समाश्नुवत मदो वै प्रतिगरो यो वाऽऋचि मदो यः सामन्रसो वै स तच्छन्दःस्वेवैतद्रसं दधात्ययातयामानि करोति तैरयातयामैर्यज्ञं तन्वते ॥ ५ ॥

तस्मादर्धर्चशः शᳬंसेत् । ( द ) अर्धर्चेऽर्धर्चे प्रतिगृणीयाद्यदि पच्छः शᳬंसेत्पदेपदे प्रतिगृणीयाद्यत्र वै शᳬंसन्नवानिति तदसुररक्षसानि यज्ञमन्ववचरन्ति तत्प्रतिगरेण संदधाति नाष्ट्राणाᳬं रक्षसामनन्ववचाराय यजमानस्यो चैवैतद्भ्रातृव्यलोकं छिनत्ति ॥ ६ ॥

---

यातयामानि वै देवैश्छन्दांसि । छन्दोभिर्हि देवाः स्वर्गं लोकं समाश्नुवत । मदो वै प्रतिगरः । यो वाऽऋचि मदः, यः सामन् । रसो वै सः । तच्छन्दःस्वेवैतद्रसं दधाति—अयातयामानि करोति । तैरयातयामैर्यज्ञं तन्वते ॥ ५ ॥

तस्मादर्धर्चशः शंसेत्—अर्धर्चेऽर्धर्चे प्रतिगृणीयात् । यदि पच्छः शंसेत्—पदे पदे प्रतिगृणीयात् । यत्र वै शंसन्नवानिति—तदसुररक्षसानि यज्ञमन्ववचरन्ति । तत् प्रतिगरेण सन्दधाति—नाष्ट्राणां रक्षसामनन्ववचाराय । यजमानस्यो चैवैतद्भ्रातृव्यलोकं छिनत्ति ॥ ६ ॥

---

प्रतिगरेऽध्वर्योः पराक्त्वे बाधमुपन्यस्योक्तां पर्यावृत्तिं द्रढयति—अथ यत्पराङित्यादि । सम्यञ्चा उ इति । पर्यावृत्तौ सत्यां 'सम्यञ्चौ' परस्परं साम्मुख्ये वर्तमानौ 'एव' 'रेतः' 'प्रजनयतः' । सम्यञ्चा उ चैवेति "लोपः शाकल्यस्य" ( पा. सू. ८ । ३ । १९ ) इति वकारलोपः । "पूर्वत्रासिद्धम्" ( पा. सू. ८।२।१) इति वकारलोपस्यासिद्धत्वाद्गुणो न भवति ॥ ४ ॥

विहितं प्रतिगरं छन्दःसम्बन्धिरसरूपेण प्रशंसति—यातयामानि वा इत्यादि । छन्दोभिर्हीति । 'छन्दोभिः' साधनैः 'देवाः' 'स्वर्गं लोकम्' प्राप्नुवन्निति प्रसिद्धम् । "छन्दोभिर्वै देवाः स्वर्गं लोकमायन्"—( तै. सं. ५ । २ । ३ ) इति श्रुतेः । सामन्निति—"सुपां सुलुक्"—( पा. सू. ७ । १ । ३९ ) इत्यादिना सप्तम्या लुक् । 'रसो वै सः' इति मदशब्दस्यार्थकथनम् ॥ ५ ॥

प्रतिगरस्य कालं विधत्ते—तस्मादित्यादि । 'यदर्द्धर्चशः' अर्द्धर्चमर्द्धर्चं शंसेत् । तदा अर्द्धर्चं प्रतिगृणीयात् । 'यदि पच्छः' पदं 'शंसेत्' तदा 'पदे पदे प्रतिगृणीयात्' । अर्द्धर्चशः पच्छ इति "सङ्ख्यैकवचनाच्च वीप्सायाम्" ( पा. सू. ५ । ४ । ४३ ) इति शस्प्रत्ययः । अवसानेषु प्रतिगरोच्चारणस्य कारणमाह—यत्र वै शंसन्निति । 'यत्र' च 'चरन्ति' अनुप्रविशन्ति । नाष्ट्राणामिति । नाशकानां 'रक्षसाम्' अननुप्रवेशाय । एवम् 'यजमानस्य' 'एव' शत्रुजनप्रवेशनिवारणादपहन्ति । तस्माद्धोता यत्रावस्येत् तत्र प्रतिगृणीयादित्यर्थः ॥ ६ ॥

चतुरक्षराणि ह वाऽअग्रे च्छन्दाᳬंस्यासुः । ( स्तु ) ततो जगती सोममच्छापतत्सा त्रीण्यक्षराणि हित्वाऽऽजगाम ततस्त्रिष्टुप्सोममच्छापतत्सैकमक्षरᳬं हित्वाऽऽजगाम ततो गायत्री सोममच्छापतत्सैतानि चाक्षराणि हरन्त्यागच्छत्सोमं च ततोऽष्टाक्षरा गायत्र्यभवत्तस्मादाहुरष्टाक्षरा गायत्रीति ॥ ७ ॥

तया प्रातःसवनमतन्वत । तस्माद्गायत्रं प्रातःसवनं तयैव माध्यन्दिनᳬं सवनमतन्वत ताᳬं ह त्रिष्टुबुवाचोप त्वाऽहमायानि त्रिभिरक्षरैरुप माऽऽह्वयस्व मा मा यज्ञादन्तर्गा इति तथेति तामुपाह्वयत तत ऽएकादशाक्षरा त्रिष्टुबभवत्तस्मादाहुस्त्रैष्टुभं माध्यन्दिनᳬं सवनमिति ॥ ८ ॥

तयैव तृतीयसवनमतन्वत । ताᳬं ह जगत्युवाचोप त्वाऽहमायान्येकेनाक्षरेणोप माऽऽह्वयस्व मा मा यज्ञादन्तर्गाऽइति तथेति तामुपाह्वयत ततो द्वादशाक्षरा जगत्यभवत्तस्मादाहुर्जागतं तृतीयसवनमिति ॥ ९ ॥

---

चतुरक्षराणि ह वाऽअग्रे छन्दांस्यासुः । ततो जगती सोममच्छापतत् । सा त्रीण्यक्षराणि हित्वाऽऽजगाम । ततस्त्रिष्टुप्सोममच्छापतत् । सैकमक्षरं हित्वाऽऽजगाम । ततो गायत्री सोममच्छापतत् । सैतानि चाक्षराणि हरन्त्यागच्छत् सोमं च । ततोऽष्टाक्षरा गायत्र्यभवत् । तस्मादाहुरष्टाक्षरा गायत्रीति ॥ ७ ॥

तया प्रातःसवनमतन्वत । तस्माद् गायत्रं प्रातःसवनम् । तयैव माध्यन्दिनं सवनमतन्वत । तां ह त्रिष्टुबुवाच—उप त्वाऽहमायानि त्रिभिरक्षरैः, उप माऽऽह्वयस्व, मा मा यज्ञादन्तर्गा इति । तथेति तामुपाह्वयत । तत एकादशाक्षरा त्रिष्टुबभवत् । तस्मादाहुः—त्रैष्टुभं माध्यन्दिनं सवनमिति ॥ ८ ॥

तयैव तृतीयसवनमतन्वत । तां ह जगत्युवाच—उप त्वाऽहमायान्येकेनाक्षरेण, उप माऽऽह्वयस्व । मा मा यज्ञादन्तर्गा इति । तथेति तामुपाह्वयत ततो द्वादशाक्षरा जगत्यभवत् । तस्मादाहुर्जागतं तृतीयसवनमिति ॥ ९ ॥

---

प्रसङ्गात्प्रातःसवनादीनां क्रमेण गायत्रत्रैष्टुभजागतत्वानि प्रदर्शयन् सवनत्रयेऽपि प्रतिगरे विशेषं वक्तुं प्रस्तौति—चतुरक्षराणि ह वा इत्यादि । सोममच्छापतादिति । 'सोमम्' अभिलक्ष्याऽऽगच्छत् । उप त्वाऽहमिति । 'अहम्' त्वाम् 'उपायानि' त्वत्समीपम् आगमिष्यामि 'त्रिभिरक्षरैः' युक्तां माम् 'उपाह्वयस्व' आमन्त्रयस्व । 'मा' माम् 'यज्ञात्' 'मा' 'अन्तर्गाः' यज्ञादन्तरितां मा कार्षीरित्यर्थः । 'ततः' त्रिष्टुबाह्वानानन्तरम् 'गायत्री' त्रिष्टुप्सम्बन्धिभिस्त्रिभिरक्षरैर्युक्ता सती 'त्रिष्टुबभवत्' । 'तस्माद्' 'माध्यन्दिनम्' 'सवनम्' 'त्रैष्टुभम्'—इत्याहुः । यद्यप्यत्र गायत्र्याः प्राधान्यात्तथैव व्यपदेशो युज्यते । तथापि त्रिष्टुवक्षरसम्बन्धाद्गायत्र्यास्त्रिष्टुप्त्वे सति विशेषेण व्यपदेशो भवतीति त्रैष्टुभमिति व्यपदिश्यते । एवमेव 'जागतं तृतीयसवनम्' इत्यत्रापि ॥ ७–९ ॥

तदाहुः । ( र्गा ) गायत्राणि वै सर्वाणि सवनानि गायत्री ह्येवैतदुपसृजमानैदिति तस्मात्सꣳसिद्धं प्रातःसवने प्रतिगृणीयात्सꣳसिद्धा हि गायत्र्यागच्छत्सकन्मद्वन्माध्यन्दिने सवनऽएकꣳहि साऽक्षरꣳहित्वाऽऽगच्छत्तेनैवैनामेतत्समर्धयति कृत्स्नां करोति ॥ १० ॥

यत्र त्रिष्टुभः शस्यन्ते । त्रिमद्वत्तृतीयसवने त्रीणि हि साऽक्षराणि हित्वाऽऽगच्छत्तैरेवैनामेतत्समर्धयति कृत्स्नां करोति ॥ ११ ॥ [शतम् २५००॥]

यत्र द्यावापृथिव्यꣳ शस्यते । ( त ऽ ) इमे ह वै द्यावापृथिवीऽइमाः प्रजा ऽउपजीवन्ति तदनयोरेवैतद्द्यावापृथिव्यो रसं दधाति ते रसवत्याऽउपजीवनीयेऽइमाः प्रजाऽ उपजीवन्ति स वाऽओ ३ मित्येव प्रतिगृणीयात्तद्धि सत्यं तद्देवा विदुः ॥ १२ ॥

---

तदाहुः—गायत्राणि वै सर्वाणि सवनानि । गायत्री ह्येवैतदुपसृजमानैदिति । तस्मात्संसिद्धं प्रातःसवने प्रतिगृणीयात् । संसिद्धा हि गायत्र्यागच्छत् । सकृन्मद्वन्माध्यन्दिने सवने । एकं हि साऽक्षरं हित्वाऽऽगच्छत् । तेनैवैनामेतत्समर्धयति—कृत्स्नां करोति ॥ १० ॥

यत्र त्रिष्टुभः शस्यन्ते । त्रिमद्वत्तृतीयसवने । त्रीणि हि साऽक्षराणि हित्वाऽगच्छत् । तैरेवैनामेतत्समर्धयति कृत्स्नां करोति ॥ ११ ॥

यत्र द्यावापृथिव्यं शस्यते । इमे ह वै द्यावापृथिवी इमाः प्रजा उपजीवन्ति । तदनयोरेवैतद् द्यावापृथिव्यो रसं दधाति । ते रसवत्याऽउपजीवनीयेऽइमाः प्रजा उपजीवन्ति । स वै " ओ३म् " इत्येव प्रतिगृणीयात् । तद्धि सत्यम् । तद्देवा विदुः ॥ १२ ॥

---

तदाहुरिति । यतो ' गायत्री ' ' एव ' छन्दोऽन्तरसंबन्धिभिरक्षरैरुपसृष्टा सती ' ऐत् ' सवनान्तरं प्राप्नोत् । तस्मात्सर्वाणि सवनानि संभूय गायत्राणीत्यप्याहुरित्यर्थः । इत्थमुपोद्घातमुक्त्वा प्रकृते प्रतिगरसवनत्रयेऽपि विशेषमाह—तस्मादित्यादि । यतो ' गायत्री ' ' संसिद्धा ' सोमाहरणार्थं गत्वा स्वकीयान्यक्षराण्यपरित्यज्याविकृता सती ' आगच्छत् ' । ' तस्मात् ' कारणाद् गायत्रे ' प्रातःसवने ' ' संसिद्धम् ' अविकृतं विधास्यमानम् " ओ३म् " इत्येव ' प्रतिगृणीयात् ' । माध्यन्दिने सवने तु प्रतिगरस्थाने ' सकृत् ' एकवारम् ' मद्वत् ' मदिधातुयुक्तं मदामो दैवेति प्रतिगरः । ' एतत् ' एतेन ' एव ' हीनेनाक्षरेण ' एनाम् ' त्रिष्टुभम् ' समर्द्धयति ' । अस्यैव व्याख्यानम् ' कृत्स्नां करोति '—इति ॥ १० ॥

यत्र त्रिष्टुभः शस्यन्त इति । अनेनोक्तस्य प्रतिगरस्य कालः प्रदर्श्यते । अत्र कात्यायनः—" जनिष्ठा उग्र इत्येतस्यां मदामो दैवेति प्रतिगरः सकृत्, " " तत्स्थाने विकृतौ "—( का. श्रौ. सू. १० । ७२—७३ ) इति । "जनिष्ठा उग्र" इत्येषा त्रिष्टुप् ( वा. सं. ३३ । ६४ )—' त्रिमद्वद् ' इत्यादिकं विस्पष्टार्थम् ॥ ११ ॥

" यत्रेति । ' यत्र ' ' द्यावापृथिव्यां शस्यते ' तत्र मदामो दैवेति त्रिः प्रतिगृणीयादित्यर्थः । अत एव कात्यायनः—"प्र द्यावा यज्ञैरित्येतासु मदामो दैवेति त्रिः प्रतिगरः "—( का. श्रौ. सू. १० । ११९ ) इति ।

( स्त ) तद्धैके । ( क॒ऽओ ) ओथामो दैव व्वागिति प्रतिगृणन्ति व्वाक्प्रतिगर ऽएतद्वाचमुपाप्नुमऽ इति व्वदन्तस्तदु तथा न कुर्याद्यथा वै कथा च प्रतिगृणात्युपाप्तैवास्य व्वाग्भवति व्वाचा हि प्रतिगृणाति तस्मादो ३ मित्येव प्रतिगृणीयात्तद्धि सत्यं तद्देवा व्विदुः ॥ १३ ॥

इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ४-२-६ ॥ ( ३. २. ) ॥

इहा ३ऽइहा ३ऽइत्यभिषुणोति । ( ती ) इन्द्रमेवैतदाच्यावयति बृहद्बृहदितीन्द्रमेवैतदाच्यावयति ॥ १ ॥

---

तद्धैके–ओथामो दैव वागिति प्रतिगृणन्ति । वाक्प्रतिगरः । एतद्वाचमुपाप्नुम इति वदन्तः । तदु तथा न कुर्यात् । यथा वै कथा च प्रतिगृणाति–उपाप्तैवास्य वाग्भवति । वाचा हि प्रतिगृणाति । तस्माद् "ओ३म्" इत्येव प्रतिगृणीयात् । तद्धि सत्यम् । तद्देवा विदुः ॥ १३ ॥

**शुक्रः, मन्थी, आग्रयणः, मरुत्वतीयः, उक्थ्यः ।**

"इहा ३ऽ इहा३ऽ" इत्यभिषुणोति–इन्द्रमेवैतदाच्यावयति । बृहद्बृहदिति–इन्द्रमेवैतदाच्यावयति ॥ १ ॥

---

इत्थं प्रतिगरस्य कालादिकं विधाय तत्स्वरूपं विधत्ते–स वा ओमित्येवेति । तद्धि सत्यमिति । 'तद्' 'ओम्'–इत्येतदक्षरं 'सत्यम्' अविनश्वरं ब्रह्मेति प्रसिद्धम् । 'तद्' ब्रह्म 'देवाः' 'विदुः' जानन्ति । तस्माद्ब्रह्मरूपत्वेन प्रशस्तत्वादोमिति तत्प्रतिगृणीयादित्यर्थः । अत एव तैत्तिरीयके उपासनाकाण्डे श्रूयते–"ओमिति ब्रह्म, ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति" (तै. आ. शी. व. ) ॥ १२ ॥

प्रतिगरे केषाञ्चिच्छाखिनां सोपपत्तिकं मतं निराकर्तुमनुवदति–तद्धैक इत्यादि । एतत्तस्मिन्प्रतिगरे 'ओथामो दैव वागिति प्रतिगृणन्ति' ते चात्रेमामुपपत्तिं वदन्ति । 'एतद्' ओथामो दैवेत्येतद्वाक्यं वाक्शब्दयुक्तत्वाद् 'वाक्प्रतिगरः' अतो 'वाचम्' प्राप्नुम इति ॥

उपन्यस्तं मतं निराकृत्य स्वमतं निगमयति–तदु तथा न कुर्यादित्यादि । यथा वै कथा च । 'यथा' 'कथा' येन केन प्रकारेण प्रतिगृणीयात् । न तु वाक्छब्दयुक्तः प्रतिगर एवेति नियमः । यतो वाचैव प्रतिगरः कर्तव्यः । वाचमन्तरेण प्रतिगरयितुमशक्यत्वात् अतस्तेनैव 'अस्य' अध्वर्योः 'वाक्' 'उपाप्ता' 'भवति' । 'तस्माद्' ब्रह्मात्मकत्वेन प्रशस्तत्वाद् 'ओ३म्' इत्येव प्रतिगृणीयात् । कात्यायनस्तु अत्र निराकृतं वाक्प्रतिगरपक्षं शाखान्तरीयत्वाद्विकल्पेन सूत्रयामास–" ओथामो दैवेति प्रतिगृणाति प्रणवावसानयोः, ओमिति वा, शस्त्रान्ते नित्यम्, वागन्तो वा पूर्वः,–( का.श्रौ.सू. ९।२९४–२९७ । ) इति । १३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ ( ४–३–२ ) ॥

ऐन्द्राग्नवैश्वदेवग्रहौ विधाय तत्रत्ययोः शस्त्रयोः प्रतिगरापेक्षायां तत्प्रकारो गते ब्राह्मणेऽभिहितः । वैश्वदेवग्रहानन्तरमुक्थ्ययागो विधातव्यः । स तु ग्रहणप्रसङ्गात्पूर्वमेवाऽभिहितः । अत उक्थ्यग्रहान्तं प्रातःसवनं सन्तिष्ठते ।

---

१–" अभिषुतः शोऽ३सावेत्यावृत्त्य " इति सूत्रस्यादिः ।

  

स शुक्रामन्थिनौ प्रथमौ गृह्णाति । शुक्रवद्ध्येतत्सवनमथाग्रयणꣳ सर्वेषु ह्येष सवनेषु गृह्यतेऽथ मरुत्वतीयमथोक्थ्यमुक्थ्यानि ह्यत्रापि भवन्ति ॥ २ ॥

तद्धैके । (क८) उक्थ्यं गृहीत्वाऽथ मरुत्वतीयं गृह्णन्ति तदु तथा न कुर्यान्मरुत्वतीयमेव गृहीत्वाऽथोक्थ्यं गृह्णीयात् ॥ ३ ॥

---

स शुक्रामन्थिनौ प्रथमौ गृह्णाति । शुक्रवद्ध्येतत्सवनम् । अथाग्रयणम् । सर्वेषु ह्येष सवनेषु गृह्यते । अथ मरुत्वतीयम् । अथोक्थ्यम् । उक्थ्यानि ह्यत्रापि भवन्ति ॥ २ ॥

तद्धैके—उक्थ्यं गृहीत्वाऽथ मरुत्वतीयं गृह्णन्ति । तदु तथा न कुर्यात् । मरुत्वतीयमेव गृहीत्वाऽथोक्थ्यं गृह्णीयात् ॥ ३ ॥

---

तत्समाप्य माध्यन्दिनसवनाय सोमाभिषवं विधत्ते—इहा३ऽइहा३ऽइत्यभिषुणोतीति । अभिषवकाले 'इहा३ऽइहा३' इत्युच्चार्य अभिषुणुयात् । तथा च सत्यागच्छेतीन्द्रं प्रत्युक्तत्वादेतेन ''इन्द्रमेव' 'आच्यावयति' आगमयति । आगच्छेत्यस्मिन् पदेऽध्याहृते सति 'इहा' इति एतदेव वाक्यं संपद्यते । एवं च "वाक्यस्य टेः प्लुत उदात्तः" (पा. सू. ८ । २ । ८२) "दूराद्धूते च" (पा. सू. ८ । २ । ८४) इति प्लुतो भवति । तथोत्तरमपि 'इहा' इति पदे वाक्यं सम्पादनीयम् । इन्द्रस्य विप्रकृष्टत्वात्तच्छ्रवणार्थं वाक्यं द्विरुच्चार्यते । द्वितीयपर्यायस्योत्तमेऽभिषवे 'बृहद्' 'बृहत्' 'इति' द्विवारमुच्चारयेत् । 'एतद्' बृहच्छन्दोच्चारणेन अभिषवमहत्त्वस्य सूचितत्वादिन्द्र आगमिष्यतीति इन्द्रमेवागमयतीत्यर्थः । अत्र कात्यायनः—"इहा इहा इति प्रथमः पर्यायः । अविलम्बितो द्वितीयस्तूर्णस्तृतीयः । अविलम्बितस्थान उत्तमे बृहद्बृहदिति ।" (का. श्रौ. सू. १० । ६–८) आपस्तम्बस्तु बृहच्छन्दोच्चारणस्य स्थानान्तरमाह—"संराधयन्तश्चाभिषुण्वन्तीहा इहेति उत्तमस्याभिषवस्य मध्यमे पर्याये बृहदधाति बृहद्बृहदिति" (आप. श्रौ. सू.) इति ॥ १ ॥

अभिषवानन्तरं शुक्रादीनां पञ्चानां ग्रहाणां ग्रहणं क्रमेण विधत्ते—स शुक्रामन्थिनावित्यादि । शुक्रवद्ध्येतत्सवनमिति । 'एतत्' माध्यन्दिनं 'सवनम्' 'शुक्रवत्' सारवत् इति प्रसिद्धम् । तथा च तैत्तिरीयके श्रुतिः—"तस्माद्द्वे सवने शुक्रवती प्रातःसवनं च माध्यन्दिनं च"—(तै. सं. ६।१।६।४) इति । सर्वेषु ह्येषु सवनेषु गृह्यत इति प्रसिद्धम्—"सवने सवनेऽभिगृह्णाति" (तै. सं. ६ । ६ । ११) इति श्रुतेः । उक्थ्यानि ह्यत्रापि भवन्तीति 'अत्रापि' माध्यन्दिनसवनेऽपि 'उक्थ्यानि' स्तोत्राणि 'भवन्ति' । तस्मादुक्थ्यं गृह्णीयात् ॥ २ ॥

उक्थ्यमरुत्वतीययोः पौर्वापर्ये शाखान्तरमतमनूद्य, निराकृत्य, स्वमतमेव निगमयति—तद्धैक उक्थ्यं गृहीत्वेत्यादि । अत्र प्रातःसवने आग्रयणानन्तरमुक्थ्यग्रहस्य ग्रहणेन तत्समत्वादत्रापि तदनन्तरं ग्रहणं प्रयुक्तमिति शाखान्तरीयाणामभिप्रायः । प्रातःसवनग्रहणकाले तथाविधक्रमाङ्गीकारेऽपि तत्र माध्यन्दिनसवने मरुत्वतीयस्य ग्रहस्य होमः प्राथमिकः । उक्थ्यग्रहस्य तु पश्चादिति होमानुसारेण ग्रहणमपि मरुत्वतीयस्य प्रथममेव भवितुमर्हतीत्येतद्ब्राह्मणस्याभिप्रायः ॥ ३ ॥

(त्ता) तान्वाऽएतान् । (न्पु) पञ्च ग्रहान्गृह्णात्येष वै वज्रो यन्माध्यन्दिनः पवमानस्तस्मात्पञ्चदशः पञ्चसामा भवति पञ्चदशो हि वज्रः स एतैः पञ्चभिर्ग्रहैः पञ्च वाऽइमाऽअङ्गुलयोऽङ्गुलिभिर्वै प्रहरति ॥ ४ ॥

( त्ती ) इन्द्रो वृत्राय वज्रं प्रजहार । स वृत्रं पाप्मानꣳ हत्वा विजितेऽभयेऽनाष्ट्रे दक्षिणा निनाय तस्मादप्येतर्हि यदेवैतेन माध्यन्दिनेन पवमानेन स्तुवतेऽथ विजितेऽभयेऽनाष्ट्रे दक्षिणा नीयन्ते तथोऽएवैष एतैः पञ्चभिर्ग्रहैः पाप्मने द्विषते भ्रातृव्याय वज्रं प्रहरति स वृत्रं पाप्मानꣳ हत्वा विजितेऽभयेऽनाष्ट्रे दक्षिणा नयति तस्माद्वाऽएतान्पञ्च ग्रहान्गृह्णाति ॥ ५ ॥

तद्यन्मरुत्वतीयान्गृह्णाति । ( त्ये ) एतद्वाऽइन्द्रस्य निष्केवल्यꣳ सवनं

---

तान्वाऽएतान् पञ्च ग्रहान्गृह्णाति । एष वै वज्रो—यन्माध्यन्दिनः पवमानः । तस्मात्पञ्चदशः पञ्चसामा भवति । पञ्चदशो हि वज्रः । स एतैः पञ्चभिर्ग्रहैः । पञ्च वाऽइमाऽअङ्गुलयः । अङ्गुलिभिर्वै प्रहरति ॥ ४ ॥

इन्द्रो वृत्राय वज्रं प्रजहार । स वृत्रं पाप्मानं हत्वा विजितेऽभयेऽनाष्ट्रे दक्षिणा निनाय । तस्मादप्येतर्हि यदेवैतेन माध्यन्दिनेन पवमानेन स्तुवते—अथ विजितेऽभयेऽनाष्ट्रे दक्षिणा नीयन्ते । तथोऽएवैष एतैः पञ्चभिर्ग्रहैः पाप्मने द्विषते भ्रातृव्याय वज्रं प्रहरति । स वृत्रं पाप्मानं हत्वा विजितेऽभयेऽनाष्ट्रे दक्षिणा नयति तस्माद्वाऽएतान्पञ्च ग्रहान् गृह्णाति ॥ ५ ॥

तद् यन्मरुत्वतीयान् गृह्णाति । एतद्वाऽइन्द्रस्य निष्केवल्यं सवनम्—यन्माध्यन्दिनं सवनम् । तेन

---

सम्भूय पञ्चानां ग्रहाणां ग्रहणमनूद्य प्रशंसति—**तान्वा एतानित्यादि** । **माध्यन्दिनः पवमान** इति । 'यत्' एषः 'वज्रो वै' 'तस्माद्' वज्रत्वात् 'पञ्चदशः' पञ्चदशस्तोमः । "स्तोमे डविधिः" (पा. सू. ५ । १ । ५८ वा. १ पञ्चदशर्चे )—इति डप्रत्ययः । वज्रो हि पञ्चदशात्मकः । "पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै" (तै. सं. ६।३।३) इति श्रुतेः । एतैः प्रकृतैः पञ्चभिर्ग्रहैर्हेतुना स माध्यन्दिनः पवमानः 'पञ्चसामा भवति' । **इमा अङ्गुलय** इति । ताभिः 'प्रहरति' इति च प्रत्यक्षं प्रसिद्धम् । तस्मात् पञ्चसङ्ख्याका एतेऽपि ग्रहास्तत्प्रहरणसाधनभूताः 'अङ्गुलयः' ते च सङ्ख्यासामान्यात् सामरूपाः सन्तः वज्रात्मकेन माध्यन्दिनपवमानेन सम्बध्यन्ते ॥ ४ ॥

**इन्द्रो वृत्राय** इत्यादिना **दक्षिणा नीयन्ते** इत्यन्तेन पञ्चसाम्नः पञ्चदशस्तोमकस्य माध्यन्दिनपवमानस्य वज्रत्वमेव प्रदर्श्यते । **तथो एवैष** इति । 'तथैव' 'एषः' अध्वर्युः 'पञ्चभिः' ग्रहैः 'अङ्गुलिभिः' अङ्गुलिस्थानीयैः 'द्विषते' द्वेषं कुर्वते भ्रातृव्याय 'वज्रम्' माध्यन्दिनपवमानरूपम् वृत्रं 'हत्वा' 'विजिते' शत्रौ 'अभये' 'अनाष्ट्रे' नाशकाभावे 'दक्षिणा नयति' 'तस्मात्' माध्यन्दिनपवमानरूपवज्रप्रक्षेपसाधनाङ्गुलिस्थानत्वेन पापरूपत्वेन पापरूपवृत्रविघातहेतुत्वात्प्रशस्तमेतेषां पञ्चानां ग्रहाणां ग्रहणमित्यर्थः ॥ ५ ॥

कारणाभिवित्सया मरुत्वतीयानां ग्रहणमनुवदति—**तद्यन्मरुत्वतीयान् गृह्णातीति** । "त्रेम्य एतौ मरुत्वतीयौ

सन्माध्यन्दिनᳪं सवनं तेन वृत्रमजिघाᳪंसत्तेन व्यजिगीषत मरुतो वाऽइत्यश्वत्थेऽपक्रम्य तस्थुः क्षत्रं वाऽइन्द्रो विशो मरुतो विशा वै क्षत्रियो बलवान्भवति तस्मादाश्वत्थेऽऋतुपात्रे स्यातां कार्ष्मर्यमये त्वेव भवतः ॥६॥

(स्ता) तानिन्द्रऽउपमन्त्रयांचक्रे । (क्रऽ) उप माऽऽवर्तध्वं युष्माभिर्बलेन वृत्रᳪं हनानीति ते होचुः किं नस्ततः स्यादिति तेभ्यऽएतौ मरुत्वतीयौ ग्रहावगृह्णात् ॥ ७ ॥

(त्ते) ते होचुः (र) अपनिधायैनमोजऽउपावर्तामहाऽइति तऽएनमपनिधायैवौजऽउपाववृतुस्तद्वाऽइन्द्रोऽस्पृणुतापानिधाय वै मौज उपावृतन्निति॥८॥

स होवाच । सहैव मौजसोपावर्तध्वमिति तेभ्यो वै नस्तृतीयं ग्रहं गृहाणेति तेभ्यऽएतं तृतीयं ग्रहमगृह्णादुपयामगृहीतोऽसि मरुतां त्वौजसऽइति

---

वृत्रमजिघांसत् । तेन व्यजिगीषत । मरुतो वाऽइत्यश्वत्थेऽपक्रम्य तस्थुः । क्षत्रं वाऽइन्द्रः, विशो मरुतः । विशा वै क्षत्रियो बलवान्भवति । तस्मादाश्वत्थेऽऋतुपात्रे स्याताम् । कार्ष्मर्यमये त्वेव भवतः ॥ ६ ॥

तानिन्द्रऽउपमन्त्रयांचक्रे—उप माऽऽवर्तध्वम्, युष्माभिर्बलेन वृत्रं हनानीति । ते होचुः—किं नस्ततः स्यादिति । तेभ्य एतौ मरुत्वतीयौ ग्रहावगृह्णात् ॥ ७ ॥

ते होचुः—अपनिधायैनमोज उपावर्तामहाऽइति । त एनमपनिधायैवौज उपाववृतुः । तद्वाऽइन्द्रोऽस्पृणुत । अपनिधाय वै मौज उपावृतन्निति ॥ ८ ॥

स होवाच—सहैव मौजसोपावर्तध्वमिति । तेभ्यो वै नस्तृतीयं ग्रहं गृहाणेति । तेभ्य एतं तृतीयं ग्रहमगृह्णात्—“ उपयामगृहीतोऽसि मरुतां त्वौजसे ”—( वा. सं. ७ । ३६ ) इति । त एनं

---

ग्रहावगृह्णात्, तेभ्यो वै नस्तृतीयं ग्रहं गृहाण ” । ( श. प. ४ । ३ । ३ । ७–९ ) इति वक्ष्यमाणत्वात् ‘ त्रीन्मरुत्वतीयान्गृह्णाति ’ इति यत्–तत्कारणमुच्यत इत्यर्थः ।

नन्वेकस्यैव मरुत्वतीयस्य ग्रहणमभिहितम्, तत्कथं त्रयाणामप्यनुवादः सम्भवतीति । एवं तर्ह्यनेन सिद्धवत्कृत्यानुवादेनेनेतरयोर्ग्रहयोरपि विधिरुन्नेयः । कारणमाह—एतद्वा इन्द्रस्येत्यादिना । ‘ निष्केवल्यम् ’ निष्कृष्य केवल इन्द्रो देवता यस्य तन्निष्केवल्यम् । मरुतो वा इत्यश्वत्थ इति । ‘ इति ’ शब्देनापक्रमणप्रकारोऽभिनयेन प्रदर्श्यते । तस्मादिति । ऋतुपात्राभ्यामेव मरुत्वतीयानां ग्रहणात्, मरुतां चाश्वत्थे स्थितत्वात्, तदवारोधाय ‘ आश्वत्थे ऋतुपात्रे स्याताम् ’ नैतदादरणीयम्, किन्तु ‘ कार्ष्मर्यमये ’ ‘ एव ’ ‘ ऋतुपात्रे ’ ‘ भवतः ’ । न त्वाश्वत्थे स्याताम् । कार्ष्मर्यो नाम कश्चिद् वृक्षविशेषः । तत्रायमाशयः—‘ वृत्रमजिघांसत् ’ इति वृत्रस्य जिघांसितत्वाद्रक्षोघातकत्वेन कार्ष्मर्यस्य, तन्मये एव पात्रे भवत इति । मरुतामवरोधस्तु “ इन्द्राय मरुत्वते ” ( श. प. ४ । ३ । ३ । १० ) इतीन्द्रेण सह मरुतां निर्देशादेव सेत्स्यति । कार्ष्मर्यस्य रक्षोघातकत्वं तैत्तिरीयके श्रूयते—“ यत्कार्ष्मर्यमयाः परिधयो भवन्ति रक्षसामपहत्यै ” ( तै. सं. ६ । २ । १ ) इति । एतद् ‘ आश्वत्थे ’ इत्यादिकम् ‘ अश्वत्थेऽपक्रम्य तस्थुः ’ इत्यस्य प्रसङ्गादभिहितम् । ‘ उपाववृतुः ’ इति

तुऽएनᳬं सुहैवौजसोपावर्तन्त तैर्व्यजयत तैर्वृत्रमहन्क्षत्रं वाऽइन्द्रो विशो मुरुतो विशा वै क्षत्रियो बुलवान्भवति तुत्क्षत्रऽएवैतद्बुलं दधाति तुस्मान्मरुत्वतीयान्गृह्णाति ॥ ९ ॥

स वाऽइन्द्रायैव मरुत्वते गृह्णीयात् । ( न्ना ) नापि मरुद्भ्यः स यद्धापि मरुद्भ्यो गृह्णीयात्प्रत्युद्यामिनीᳬं ह क्षत्राय विशं कुर्यादुथैतदिन्द्रमेवानु मरुतऽ आभजति तुत्क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति तुस्मादिन्द्रायैव मरुत्वते गृह्णीयान्नापि मरुद्भ्यः ॥ १० ॥

( द्भ्योऽप ) अपक्रमाद्ध हैवैषामेतद्बिभयांचकार । युदिमे मुन्नापक्रामेयुर्युन्नान्युद्ध्रियेरन्निति तानेवैतदनपक्रमिणोऽकुरुत तुस्मादिन्द्रायैव मरुत्वते गृह्णीयान्नापि मरुद्भ्यः ॥ ११ ॥

---

सहैवौजसोपावर्तन्त । तैर्व्यजयत । तैर्वृत्रमहन् । क्षत्रं वाऽइन्द्रः, विशो मरुतः । विशा वै क्षत्रियो बलवान्भवति । तत् क्षत्रऽएवैतद्बलं दधाति । तस्मान्मरुत्वतीयान् गृह्णाति ॥ ९ ॥

स वाऽइन्द्रायैव मरुत्वते गृह्णीयात् । नापि मरुद्भ्यः । स यद्धापि मरुद्भ्यो गृह्णीयात्–प्रत्युद्यामिनीं ह क्षत्राय विशं कुर्यात् । अथैतदिन्द्रमेवानु मरुत आभजति । तत् क्षत्रायैवैतद्विशं कृतानुकरामनुवर्त्मानं करोति । तस्मादिन्द्रायैव मरुत्वते गृह्णीयात् । नापि मरुद्भ्यः ॥ १० ॥

अपक्रमाद्ध हैवैषामेतद्बिभयाञ्चकार । यदिमे मन्नापक्रामेयुर्यन्नान्यद्ध्रियेरन्निति । तानेवैतदनपक्रमिणोऽकुरुत । तस्मादिन्द्रायैव मरुत्वते गृह्णीयात् । नापि मरुद्भ्यः ॥ ११ ॥

---

व्यत्ययेन परस्मैपदम् ( पा. सू. ३ । १ । ८५ ) । स्पष्टार्थमन्यत् । 'उपावृतन्' इति "द्युद्भ्यो लुङि" ( पा. सू. १ । ३ । ९१ ) इति परस्मैपदम् । स्पष्टार्थमन्यत् ॥ ६–९ ॥

ग्रहाणां मरुदर्थत्वस्य कथितत्वात्तेभ्य एव ग्रहणे प्राप्ते तत्सहितायेन्द्राय गृह्णीयादिति विधत्ते–स वा इन्द्रायैवेति । मरुद्भ्य एव ग्रहणे दोषं–तत्सहितायेन्द्राय ग्रहणे गुणं च प्रदर्श्य तदेव निगमयति–स यद्धापि मरुद्भ्य इत्यादि । 'क्षत्राय' 'प्रत्युद्यामिनीम्' प्रातिकूल्येनोद्यतां 'विशम्' प्रजां 'कुर्यात्' । अथेन्द्रमेवानुलक्ष्य 'मरुतः' 'आभजति' भागिनः करोति । तेन 'क्षत्राय' 'विशं' 'कृतानुकारम्' करोति ' क्षत्रायत्तां करोति । तदेतदानुकूल्येन यथा करोति तादृशीम् 'अनुवर्त्मानम्' अनुगतवर्त्मानं 'करोति' । 'तस्मात्' 'मरुत्वते' 'इन्द्राय' 'गृह्णीयात्' ॥ १० ॥

कारणान्तरमुपन्यस्योक्तमर्थं द्रढयति–अपक्रमाद्ध हेत्यादि । 'एषाम्' मरुताम् 'अपक्रमादेवेन्द्रो 'बिभयाञ्चकार' । "भीह्रीभृहुवां श्लुवच्च" ( पा. सू. ३ । १ । ३९ ) इति आम्प्रत्ययः । भीतश्च 'यत्' येनोपायेन मत्तः सकाशाद् 'इमाः' प्रजाः 'नापक्रामेयुः' येनोपायेनान्यत्र 'न ध्रियेरन्निति' विचार्य्य; तेनोपायेन 'तान्' मरुतः 'अनपक्रमिणः' अनपक्रमणशीलानात्मना सङ्गतानेव 'अकुरुत' । यत एवम्, 'तस्माद्' मरुत्सहिताय 'इन्द्रायैव' 'गृह्णीयात्' । 'न' केवलं 'मरुद्भ्यः' ॥ ११ ॥

( ऽ ) ऋतुपात्राभ्यां गृह्णाति । ( त्पृ ) ऋतवो वै संवत्सरो यज्ञस्तेऽदः प्रातःसवने प्रत्यक्षमवकल्प्यन्ते यदृतुग्रहान्गृह्णात्यथैतत्परोऽक्षं माध्यन्दिने सवनेऽवकल्प्यन्ते यदृतुपात्राभ्यां मरुत्वतीयान्गृह्णाति विशो वै मरुतोऽन्नं वै विशऽऋतवो वाऽइदꣳ सर्वमन्नाद्यं पचन्ति तस्मादृतुपात्राभ्यां मरुत्वतीयान्गृह्णाति ॥ १२ ॥

( त्य ) अथातो गृह्णात्येव । (वे) इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते ऽअपिबः सुतस्य । तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः ॥ उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वतऽएष ते योनिरिन्द्राय त्वा मरुत्वते ॥ १३ ॥

---

ऋतुपात्राभ्यां गृह्णाति । ऋतवो वै संवत्सरो यज्ञः । तेऽदः प्रातःसवने प्रत्यक्षमवकल्प्यन्ते—यदृतुग्रहान्गृह्णाति । अथैतत्परोऽक्षं माध्यन्दिने सवनेऽवकल्प्यन्ते—यदृतुपात्राभ्यां मरुत्वतीयान् गृह्णाति । विशो वै मरुतः, अन्नं वै विशः । ऋतवो वाऽइदं सर्वमन्नाद्यं पचन्ति । तस्मादृतुपात्राभ्यां मरुत्वतीयान् गृह्णाति ॥ १२ ॥

अथातो गृह्णात्येव—" इन्द्र मरुत्व इह पाहि सोमं यथा शार्यातेऽअपिबः सुतस्य । तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वतऽएष ते योनिरिन्द्राय त्वा मरुत्वते"—(वा० सं० ७।३५) इति ॥ १३ ॥

---

प्रकृतग्रहणादृतुपात्राभ्यां ग्रहणं विधत्ते—ऋतुपात्राभ्यां गृह्णातीति[1] । ऋतवो वा इत्यादि । तत्र प्रयोजनमभिधीयते—' ते ' यज्ञसंवत्सरात्मकाः ' ऋतवः ' ' प्रातःसवने प्रत्यक्षमेवावकल्प्यन्ते ' अवक्लृप्ताः स्वायत्ता भवन्ति । यस्माद् ' ऋतुग्रहान्गृह्णाति ' । ' अथ ' ' माध्यन्दिने सवने ' ' परोक्षम् ' ' अवकल्प्यन्ते ' । ' यदृतुपात्राभ्यां मरुत्वतीयान्गृह्णाति ' । अत्र ऋतुग्रहाभावेन ऋतुपात्रसम्बन्धादृतूनां परोक्षावक्लृप्तिः । तदर्थमृतुपात्राभ्यां ग्रहणम् । किञ्च ' मरुतः ' ' विशः ' हि । " मरुतो वै देवानां विशः " ( तै. सं. ५।४।७ ) इति श्रुतेः । ' विशश्च ' ' अन्नम् ' कृष्यादिना तत्सम्पादनात् । ' ऋतवः ' च ' इदम् ' पुरोवर्ति ' अन्नाद्यम् ' अद्यमन्नम् ' पचन्ति ' उपभोगयोग्यं कुर्वन्ति । ऋतूनां सर्वोत्पत्तिमन्निमित्तकारणत्वात्, अतो मरुतामृतूनां च सम्बन्धादपि ऋतुपात्राभ्याम् ' मरुत्वतीयान् ' गृह्णीयादित्यर्थः ॥ १२ ॥

क्रमेण ग्रहाणां ग्रहणसादनमन्त्रानाह—अथाऽतो गृह्णात्येवेन्द्र मरुत्व[2] इत्यादि । तत्र प्रथममरुत्वतीयग्रहणमन्त्रस्यायमर्थः—हे ' इन्द्र मरुत्वः ' । मरुतोऽस्य सन्ति इति मरुत्वान् तस्य सम्बुद्धौ " मतुवसो रु सम्बुद्धौ छन्दसि " ( पा. सू. ८ । ३ । १ ) इति रुत्वम् । ' इह ' यज्ञे ' सोमं ' ' पाहि ' पिब । " बहुलं छन्दसि " ( पा. सू. २ । ४ । ७६ ) इति शपो लुकि पिबादेशाभावे पिबते रूपम् । कथं पाहीति—शर्यातिर्मानवः, तस्यापत्यं शार्यातः, तस्मिन् ' यथा ' ' सुतस्य ' अभिषुतस्य सोमस्यांशम् ' अपिबः ' पीतवानसि । किञ्च

---

१—मरुत्वतीयग्रहग्रहणे त्रयो मन्त्राः संहितायां पठ्यन्ते । इह त्वेक एव ।

२—प्रागुक्थ्यान्मरुत्वतीयमृतुपात्रेणेन्द्र मरुत्व इति । का. श्रौ. सू. । १० । १२ ।

मरुत्वन्तं वृषभम् ।(म्वा)व्वावृधानमकवारिं दिव्युᳬं शासमिन्द्रम् । व्विश्वासाहमवसे नूतनायोग्रुᳬं सहोदामिह तुᳬं हुवेम । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वतऽएष ते योनिरिन्द्राय त्वा मरुत्वते । उपयामगृहीतोऽसि मरुतां त्वौजसऽइति तृतीयं ग्रहं गृह्णाति ॥ १४ ॥

( त्यु ) अथ माहेन्द्रं ग्रहं गृह्णाति । पाप्मना वाऽएतदिन्द्रः सुᳬंसृष्टोऽभूद्यद्विशा मरुद्भिः स यथा व्विजयस्य कामाय व्विशा समाने पात्रेऽश्नीयादेवं तद्यदस्माऽएतं मरुद्भिः समानं ग्रहमगृह्णन् ॥ १५ ॥

"मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम् । विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते, एष ते योनिरिन्द्राय त्वा मरुत्वते । उपयामगृहीतोऽसि मरुतां त्वौजसे"–(वा.सं.७।३९) इति तृतीयं ग्रहं गृह्णाति १४

माहेन्द्रग्रहः ।

अथ माहेन्द्रं ग्रहं गृह्णाति । पाप्मना वाऽएतदिन्द्रः संसृष्टोऽभूद्–यद् विशा मरुद्भिः । स यथा विजयस्य कामाय विशा समाने पात्रेऽश्नीयाद्–एवं तद्–यदस्माऽएतं मरुद्भिः समानं ग्रहमगृह्णन् १५

हे शूर ! 'तव' 'प्रणीती' प्रणीत्या, तृतीयैकवचनस्य ईकारादेशः । त्वत्कर्तृकेन प्रणयनेन 'सुयज्ञाः' कल्याणयज्ञाः 'कवयः' क्रान्तदर्शनाः । 'शर्मन्' शरणे गृहे यज्ञगृहे 'तव' 'आविवासन्ति' त्वां विवासन्ति । विवासतिः परिचर्यायाम् ( निघं० ३ । ५ । १० ) । हे ग्रह ! उपयामेन गृहीतोऽसि 'इन्द्राय' मरुत्वते त्वां गृह्णामीति शेषः । खरप्रदेशस्तव 'योनिः' स्थानमतोऽत्र त्वाम् 'इन्द्राय' 'मरुत्वते' सादयामीति सादनमन्त्रस्यार्थः ॥ १३ ॥

मरुत्वन्तमित्येष द्वितीयमरुत्वतीयग्रहणस्य मन्त्रस्तस्यायमर्थः–'मरुत्वन्तम्' मरुद्भिः सहितम् 'वृषभम्' वर्षितारम्, श्रेष्ठं वा 'वावृधानम्' वर्द्धमानञ्च 'अकवारिम्' अकुत्सितारातिम्, यस्य शत्रवोऽप्यकुत्सिताः, 'दिव्यम्' दिविभवम्, 'शासम्' शासितारम्, 'विश्वासाहम्' सहतिरभिभवार्थः । स्वधर्मच्युतस्य सर्वस्याभिभवितारम्, 'उग्रम्' उद्गूर्णवज्रम् 'सहोदाम्' बलस्य दातारम्, यमित्थंभूतमिन्द्रमाहुः 'तम्' इन्द्रम् 'नूतनाय' नवीनभूताय 'अवसे' अवसानायस्थित्यै 'इह' यज्ञगृहे, 'हुवेम' आह्वयामः । उपयामगृहीतोऽसीत्यादि व्याख्यातम् ।

उपयामेत्यादिना मन्त्रेण तृतीयं मरुत्वतीयं गृह्णीयात् । हे ग्रह ! उपयामेन दारुपात्रेण 'गृहीतोऽसि' त्वां मरुतामोजसे गृह्णामीति मन्त्रार्थः ॥ १४ ॥

मरुत्वतीयग्रहानन्तरं माहेन्द्रं ग्रहं विधत्ते–अथ माहेन्द्रमित्यादि । विहितं माहेन्द्रग्रहं पापनिरसनहेतुत्वेन प्रशंसति–पाप्मना वा एतदित्यादि । 'मरुद्भिः' 'विशा' मरुद्देवतारूपया विशा 'संसृष्ट' इति; एतेनेन्द्रः 'पाप्मना' पापेन 'संसृष्टोऽभूत्' । यतः 'अस्मै' इन्द्राय 'मरुद्भिः समानम्' साधारणमेतम् 'ग्रहम्' 'अगृह्णन्' इति यत्; 'तद्' एवंप्रकारो भवति । 'यथा' विजयकामार्थं 'विशा' सह

१–चविना मरुत्वतीयग्रहणं मरुत्वन्तमिति । का. श्रौ. सू. १० । ७० । २–ऋतुपात्रेण मरुत्वतीयग्रहणमुपयामगृहीतोऽसि मरुतां त्वौजस इति । का.श्रौ.सू.१० । ६६ ।

( हंस्तं ) तं देवाः । सर्व्वस्मिन्विजितेऽभयेऽनाष्ट्रे यथेषीकां मुञ्जाद्विवृहे-देवᳫँ सर्व्वस्मात्पाप्मनो व्यवृहन्यन्माहेन्द्रं ग्रहमगृह्णंस्तथोऽएवैष ऽएत-द्यथेषीका विमुञ्जा स्यादेवᳫँ सर्व्वस्मात्पाप्मनो निर्मुच्यते यन्माहेन्द्रं ग्रहं गृह्णाति ॥ १६ ॥

यद्वेव माहेन्द्रं ग्रहं गृह्णाति । ( ती ) इन्द्रो वाऽएष पुरा वृत्रस्य वधादथ वृत्रᳪं हत्वा यथा महाराजो विजिग्यानऽएवं महेन्द्रोऽभवत्तस्मान्माहेन्द्रं ग्रहं गृह्णाति महान्तमु चैवैनमेतत्खलु करोति वृत्रस्य वधाय तस्मादेव माहेन्द्रं ग्रहं गृह्णाति शुक्रपात्रेण गृह्णात्येष वै शुक्रो य एष तपत्येष उऽएव महांस्तस्माच्छुक्रपात्रेण गृह्णाति ॥ १७ ॥

( त्य ) अथातो गृह्णात्येव । महाँ॥ऽइन्द्रो नृवदाचर्षणिप्राऽउत द्विबर्हा अमिनः सहोभिः । अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ।

---

तं देवाः सर्वस्मिन्विजितेऽभयेऽनाष्ट्रे यथेषीकां मुञ्जाद्विवृहेद्–एवं सर्वस्मात्पाप्मनो व्यवृहन्–यन्माहेन्द्रं ग्रहमगृह्णन् । तथोऽएवैष एतद्–यथेषीका विमुञ्जा स्याद्–एवं सर्वस्मात्पाप्मनो निर्मुच्यते–यन्माहेन्द्रं ग्रहं गृह्णाति ॥ १६ ॥

यद्वेव माहेन्द्रं ग्रहं गृह्णाति । इन्द्रो वाऽएष पुरा वृत्रस्य वधात् । अथ वृत्रं हत्वा यथा महाराजो विजिग्यानः–एवं महेन्द्रोऽभवत् । तस्मान्माहेन्द्रं ग्रहं गृह्णाति । महान्तमु चैवैनमेतत्खलु करोति–'वृत्रस्य वधाय तस्मादेव माहेन्द्रं ग्रहं गृह्णाति । शुक्रपात्रेण गृह्णाति । एष वै शुक्रो–य एष तपति । एष उ एव महान् । तस्माच्छुक्रपात्रेण गृह्णाति ॥ १७ ॥

अथातो गृह्णात्येव–" महाँ॥इन्द्रो नृवदाचर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।

---

'समाने' 'पात्रे' भोजनम् । तस्मात्पात्र संसृष्टोऽभूदिति ॥ ते 'देवाः' ' सर्वस्मिन्विजितेऽभयेऽनाष्ट्रे ' सति ' तम् ' इन्द्रम् 'मुञ्जाद्' 'यथेषीकां' तद्गताग्रम् 'विवृहेद्' उद्धरेद् । 'एवम्' माहेन्द्रग्रहग्रहणेन 'सर्वस्मात्पाप्मनो व्यवृहन्' । तस्मात्तथैव ' एषः ' यजमानो मुञ्जादुद्धृतेषीकेव माहेन्द्रग्रहणेन सर्वस्मात्पापान्मुच्यत इत्यर्थः ॥ १९ ॥ १६॥

पुनरपि तमेव माहेन्द्रग्रहं यजमानस्य महत्त्वहेतुत्वेन प्रशंसति–यद्वेव माहेन्द्रमित्यादि । यथा महाराज इति । लोके ' विजिग्यानः ' विजितवान् राजा ' यथा महाराजः ' भवति । ' एवम् ' ' इन्द्रः ' वृत्रं हत्वा ' महेन्द्रोऽभवत् ' ' तस्मात् ' माहेन्द्रग्रहणेन ' वृत्रस्य ' पापरूपस्य वधार्थम् ' एनम् ' यजमानम् ' महान्तम् ' ' एव ' करोति । विहितं ग्रहणमनूद्य तत्र शुक्रपात्रं विधत्ते–शुक्रपात्रेणेत्यादि । एष वा इति । शुक्रस्य सर्वात्मकत्वेन महत्त्वात्तत्पात्रेण माहेन्द्रग्रहस्य ग्रहणं युक्तमित्यर्थः ॥ १७ ॥

ग्रहणमनूद्य मन्त्रं विधत्ते–अथाऽतो गृह्णात्येव महान् इन्द्र इत्यादि । ' महान् ' महत्त्वगुणविशिष्टः । ' नृवत् ' मनुष्यवत् । ' आचर्षणिप्राः ' चर्षणयो मनुष्या आगत्य तानीप्सितफलप्रदानेन पूरयतीत्याचर्ष-

---

१–माहेन्द्रग्रहग्रहणे मन्त्रद्वयं संहितायां पठ्यते । इह त्वेक एव । २–अनिधानात्कृत्वा माहेंद्रं गृह्णाति वैश्वदेववन्महा२ इंद्र इति । वैश्वदेववदित्यनेन शुक्रपात्रेण द्रोणकलशादन्वारब्धे वेत्यतिदेशः । इत्यत्र कर्कः । ( का. श्रौ. सू. १० । ७४ ) ।

उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वेति सादयति महेन्द्राय ह्येनं गृह्णाति ॥ १८ ॥

( त्यु ) अथोपाकृत्यैतां व्वाचं व्वदति । ( त्यु ) अभिषोतारोऽभिषुणुतौलूखलानुद्वादयताग्नीदाशिरं व्विनय सौम्यस्य व्वित्तादिति ते वै तृतीयसवनायैवाभिषोतारोऽभिषुण्वन्ति तृतीयसवनायौलूखलानुद्वादयन्ति तृतीयसवनायाग्नीदाशिरं व्विनयति तृतीयसवनाय सौम्यं चरुꣳश्रपयत्येते वै शुक्रवती रसवती सवने यत्प्रातःसवनं च माध्यन्दिनं च सवनमथैतन्निर्धीतशुक्रं यत्तृतीयसवनं तदेवैतस्मान्माध्यन्दिनात्सवनान्निर्मिमीते तथो हास्यैतच्छुक्रवद्रसवत्तृतीयसवनं भवति तस्मादेतामत्र व्वाचं व्वदति ॥ १९ ॥

इति द्वितीयप्रपाठके सप्तमं ब्राह्मणम् ॥ ४-२-७ ॥ ( ३. ३. )
द्वितीयः प्रपाठकश्च समाप्तः ॥ २ ॥

---

अस्मद्र्यग् वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् । उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा "–( वा० सं० ७ । ३९ ) इति । सादयति महेन्द्राय ह्येनं गृह्णाति ॥ १८ ॥

अथोपाकृत्यैतां वाचं वदति–अभिषोतारोऽभिषुणुत, औलूखलानुद्वादयत, अग्नीदाशिरं विनय, सौम्यस्य वित्तादिति । ते वै तृतीयसवनायैवाभिषोतारोऽभिषुण्वन्ति । तृतीयसवनायौलूखलानुद्वादयन्ति । तृतीयसवनायाग्नीदाशिरं विनयति । तृतीयसवनाय सौम्यं चरुं श्रपयति । एते वै शुक्रवती रसवती सवने–यत्प्रातःसवनं च, माध्यन्दिनं च सवनम् । अथैतन्निर्धीतशुक्रं–यत्तृतीयसवनम् ।

---

णिप्राः । यथा राजामात्यादिर्मनुष्यः सेवकान्फलप्रदानेन पूरयति तद्वत् । ' उत ' किञ्च ' द्विबर्हाः ' द्वयोरपि स्थानयोर्मध्यमस्थाने उत्तमे च बर्हाः बृहत्परिवृढः अथवा द्वयोः प्रकृतिविकृतिरूपयोर्बर्हो वृद्धिर्यस्यासौ ' द्विबर्हाः ' ' सहोभिः ' बलैः ' अमिनः ' अमितोऽपरिमितबल इत्यर्थः । अथ वा शत्रुसम्बन्धिभिर्बलैः । ' अमिनः ' अहिंसितः । 'अस्मद्र्यक्' अस्मदभिमुखतया गन्ता । ' महानिन्द्रः ' ' वावृधे ' वर्द्धताम् । किमर्थम् ' वीर्याय ' वीरकर्मणे । किञ्च अस्मदीयैः ' कर्तृभिः ' स्तूयमानः ' उरुः ' विस्तारेण 'पृथुः' प्राणेन ' सुकृतः ' शोभनकृद् ' भूत् ' ( पा. सू. ६ । ४ । ७९ ) भूयात् । उपयामेत्यादि व्याख्यातम् ॥ १८ ॥

माहेन्द्रग्रहे पृष्ठस्तोत्रोपाकरणानन्तरमध्वर्योः प्रैषरूपां वाचमुत्पादयति–अथोपाकृत्येत्यादि । ' उपाकृत्य ' " उपावर्तध्वम् " इत्यनेन मन्त्रेण पृष्ठस्तोत्रमुपाकृत्येत्यर्थः । अत एव कात्यायनः–" पृष्ठमुपाकृत्य प्रेष्यत्यभिषो-

---

१–अयं प्रैषमन्त्रः संहितायां नास्ति । २–शुक्रं पूतभृत्यासिच्य पृष्ठमुपाकृत्य प्रेष्यत्यभिषोतारोऽभिषुणुतौलूखलानुद्वादयताग्नीदाशिरं व्विनय सौम्यस्य व्वित्तादिति । का. श्रौ. सू. १० । ७५ ।

# अथ तृतीयप्रपाठके प्रथमं ब्राह्मणम्
# तृतीयाध्याये च चतुर्थं ब्राह्मणम्।

घ्नन्ति वाऽएतद्यज्ञम्। यदेनं तन्वते यन्न्वेव राजानमभिषुण्वन्ति तत्तं घ्नन्ति यत्पशुꣳ संज्ञपयन्ति विशासति तत्तं घ्नन्त्युलूखलमुसलाभ्यां दृषदुपलाभ्याꣳ हविर्यज्ञं घ्नन्ति ॥ १ ॥

स एष यज्ञो हतो न ददक्षे। तं देवा दक्षिणाभिरदक्षयंस्तद्यदेनं

तदेवैतस्मान्माध्यन्दिनात्सवनान्निर्मिमीते। तथो हास्यैतच्छुक्रवद्रसवत्तृतीयसवनं भवति। तस्मादेतामत्र वाचं वदति ॥ १९ ॥

## दक्षिणादानम्।

घ्नन्ति वाऽएतद्यज्ञम्—यदेनं तन्वते। यन्न्वेव राजानमभिषुण्वन्ति—तत् तं घ्नन्ति, यत्पशुं संज्ञपयन्ति, विशासति—तत् तं घ्नन्ति, उलूखलमुसलाभ्यां दृषदुपलाभ्यां हविर्यज्ञं घ्नन्ति ॥ १ ॥

स एष यज्ञो हतो न ददक्षे। तं देवा दक्षिणाभिरदक्षयन्। तद् यदेनं दक्षिणाभिरदक्षयंस्तस्माद्

तारोऽभिषुणुत "–( का. श्रौ सू. १० । ७९ ) इति। माध्यन्दिनसवनमध्ये प्रयुक्तत्वादस्य प्रैषस्य तदर्थता स्यात्। अतस्तृतीयसवनार्थोऽयं प्रैष इति व्याचष्टे–ते वै तृतीयसवनायैवेत्यादि। 'उद्धखलानुद्वादयन्ति' इत्यनेनैवावहननकालीनोलूखलमुसलोद्वादनस्याभिधानात्सवनीयपुरोडाशसम्पादनं लक्ष्यते। 'आशिरम्' विनयति' ऋजीषीकृते सोमेऽवनेतुमाशिरं संस्करोति। "आशिरम्" इति उपवसथदिवसस्य सायङ्काले यजमानस्य व्रतदुहो गोः पयो दुग्ध्वा दधि क्रियते तदुच्यते। माध्यन्दिनसवने तृतीयसवनार्थाभिषवादिसम्पादनार्थस्य प्रैषस्य प्रयोजनमाह–एते वै शुक्रवती इत्यादि। 'रसवती' इति, 'शुक्रवती' इत्यस्यैव व्याख्यानम्। 'निर्धीतशुक्रम्' निष्पीतरसम्, पक्षिरूपा गायत्री तृतीयसवनार्थं सोमं मुखेनाहरन्त्यपिबदिति प्रसिद्धम्। तेन तृतीयसवनं नीरसम्। एतच्च तैत्तिरीयके श्रूयते–" पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकं यन्मुखेन समगृह्णात्तदधयत् तस्माद्वे सवने शुक्रवती प्रातःसवनं च माध्यन्दिनं च तस्मात्तृतीयसवन ऋजीषमभिषुण्वन्ति धीतमिव हि मन्यन्त आशिरमवनयति सशुक्रत्वाय "–( तै० सं० ६ । १ । ६ । ४, ९ ) इति। तदेवैतस्मादिति। 'तत्' तेनैवाभिषवादिसम्पादनेनैव 'तस्मात्' शुक्रवतो रसवतो 'माध्यन्दिनंसवनात्' 'तृतीयसवनम्' 'निर्मिमीते' उत्पादयति। सवनोत्पादकस्य सोमाभिषवादेरत्र सम्पादनादित्यर्थः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये
चतुर्थकाण्डे तृतीयाध्याये तृतीयं ब्राह्मणम् ( ४–३–३ ) ॥

शुक्रामन्थ्यादिग्रहणप्रसङ्गाद्द्वितीयतृतीयमरुत्वतीयमाहेन्द्रग्रहाणां ग्रहणमभिधाय तत्र शुक्रामन्थिग्रहयागानन्तरं कर्तव्यं दक्षिणादानादिकं विधीयते, तत्रादावुपयोगमभिदधानः प्रसङ्गाद्दक्षिणापदनिर्वचनं च प्रदर्शयन् दक्षिणादानं विधत्ते–घ्नन्ति वा एतद्यज्ञमित्यादिना। 'एनम्' यज्ञं 'तन्वते' विस्तारयन्तीति यत्, एतेन 'यज्ञं घ्नन्ति' 'वै' कथं विस्तारेण हननमित्याह–यन्न्वेवेति। 'पशुं संज्ञपयन्ति' मारयन्तीति यत्, तत् 'विशासति' छन्दन्ति। अतस्तदपि हननम् 'उद्धखलमुसलाभ्यां दृषदुपलाभ्याम्' वा हननपेषणयोः सम्पादनात् 'हवि-

दक्षिणाभिरुदक्षयंस्तस्माद्दक्षिणा नाम तद्यदेवात्र यज्ञस्य हतस्य व्यथते तदेवास्यैतद्दक्षिणाभिर्दक्षयत्यथ समृद्धऽएव यज्ञो भवति तस्माद्दक्षिणा ददाति॥२॥
तद्वै षड्द्वादशेत्येव हविर्यज्ञे ददाति । न ह त्वेवाशतदक्षिणः सौम्योऽध्वरः स्यादेष वै प्रत्यक्षं यज्ञो यत्प्रजापतिः पुरुषो वै प्रजापतेर्नेदिष्ठꣳ सोऽयꣳ शतायुः शततेजाः शतवीर्यस्तꣳ शतेनैव दक्षयति नाशतेन तस्मान्नाशतदक्षिणः सौम्योऽध्वरः स्यान्नो हैवाशतदक्षिणेन यजमानस्यर्त्विक्स्यान्नेदस्याक्षिभूरसानि यमिमे हनिष्यन्त्येव न दक्षयिष्यन्तीति ॥ ३ ॥

---

दक्षिणा नाम । तद् यदेवात्र यज्ञस्य हतस्य व्यथते—तदेवास्यैतद्दक्षिणाभिर्दक्षयति—अथ समृद्ध एव यज्ञो भवति । तस्माद्दक्षिणा ददाति ॥ २ ॥

तद्वै षड् द्वादशेत्येव हविर्यज्ञे ददति । न ह त्वेवाशतदक्षिणः सौम्योऽध्वरः स्यात् । एष वै प्रत्यक्षं यज्ञो—यत्प्रजापतिः । पुरुषो वै प्रजापतेर्नेदिष्ठम् । सोऽयं शतायुः शततेजाः शतवीर्यः । तं शतेनैव दक्षयति—नाशतेन । तस्मान्नाशतदक्षिणः सौम्योऽध्वरः स्यात् । नो हैवाशतदक्षिणेन यजमानस्यर्त्विक्स्यात् । नेदस्याक्षिभूरसानि यमिमे हनिष्यन्त्येव—न दक्षयिष्यन्तीति ॥ ३ ॥

---

यज्ञम्' अपहन्ति । तस्मात् 'स' 'एषः' 'यज्ञः' हतत्वात् 'न ददक्षे' न समृद्धोऽभूदिति 'देवा दक्षिणाभिरदक्षयन्'। अतो दक्षणसाधनत्वाद् 'दक्षिणा' इति नामधेयम् । "द्रुदक्षिभ्यामिनन्"—(उणा. सू. २।५०।)[1] इत्यौणादिक इनन्प्रत्ययः । ततः 'अत्र' 'हतस्य' 'यज्ञस्य' 'यद्' अङ्गम् 'व्यथते' पीडां प्राप्नोति 'तत्' 'दक्षिणाभिर्दक्षयति' समर्धयति । तथा च 'यज्ञः' 'एव' 'समृद्धो भवति' । 'तस्माद्' यज्ञस्य समृद्धयं दक्षिणां दद्यादित्यर्थः ॥ १ ॥ २ ॥

प्रसङ्गाद्धविर्यज्ञे हविर्यज्ञदक्षिणाक्लृप्तिं दर्शयन् प्रकृते सोमयागे दक्षिणाक्लृप्तिमाह—तद्वा इत्यादिना । न ह त्वेवेति । 'सौम्योऽध्वरः' 'अशतदक्षिणः' 'न' 'एव' 'स्यात्' । किन्तु शतदक्षिण इत्यर्थः । तत्र शतमिति गवां शतं विवक्ष्यते "गवां शतं द्वादशं वा" (का. श्रौ. सू. १०। ३९)—इति कात्यायनवचनात् । "गवां सङ्ख्या भवति"—इत्यापस्तम्बवचनाच्च ।

शतदक्षिणत्वेन यज्ञस्य समृद्धिर्भवतीत्यत्रोपपत्तिमाह—एष वै प्रत्यक्षमित्यादि । 'प्रजापतेर्नेदिष्ठम्' इति नेदिष्ठं यथा भवति तथा वर्तते । तत एवोत्पन्नत्वादित्यर्थः । 'शततेजाः, 'शतवीर्यः' इति आयुरनुसारेण तेजोवीर्ययोरपि शतत्वं द्रष्टव्यम् ।

उक्तसङ्ख्याया न्यूनत्वेनार्त्विज्यं न कुर्यादित्याह—नो हैवेत्यादि । 'अशतदक्षिणेन' यज्ञेन हेतुना 'यजमानस्य' 'न' 'ऋत्विक्' 'स्यात्' । आर्त्विज्यं कुर्वतोऽयमाशयः—' इमे ' यजमानसम्बन्धिनः पुरुषाः 'यं' यज्ञम् 'हनिष्यन्त्येव' हतं च तं न समर्द्धयन्ति । 'अस्य' 'यज्ञस्य अक्षिभूः' अक्षिगतो द्वेष्यो नैव भवानीति । अभिषवादिसम्पादनाद्धतस्य यज्ञस्य शतसङ्ख्याभिर्दक्षिणाभिः समृद्धिर्भवतीत्युक्तम्, तथा च सति शतदक्षिणाभावेऽसमृद्धो यज्ञो भवतीति तत्रार्त्विज्यं कुर्वतो यज्ञवैकल्येन बाधा स्यात् । तस्माच्छतदक्षिण एव ऋत्विक् स्यादिति भावः ॥ ३ ॥

---

१—"वाऽति क्रामति" इति सूत्र शेषः ।

द्वया वै देवा देवाः । ( ८ ) अहैव देवाऽअथ ये ब्राह्मणाः शुश्रुवाᳬसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा विभक्तऽएव यज्ञऽआहुतयऽएव देवानां दक्षिणा मनुष्यदेवानां ब्राह्मणानाᳬ शुश्रुवुषामनूचानानामाहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणाञ्छुश्रुवुषोऽनूचानांस्तऽएनमुभये देवाः प्रीताः स्वर्गे लोकमभिवहन्ति ॥ ४ ॥

ता वाऽएताः । ( ८ ) ऋत्विजामेव दक्षिणा ऽअन्यं वाऽएतऽएतस्यात्मानᳬ संस्कुर्वन्त्येतं यज्ञमृङ्मयं यजुर्मयᳬ साममयमाहुतिमयᳬ सोऽस्यामुष्मिँल्लोकऽआत्मा भवति तद्ये माऽजीजनन्तेति तस्मादृत्विग्भ्य एव दक्षिणा दद्यान्नानृत्विग्भ्यः ॥ ५ ॥

(ग्भ्योऽथ)अथ प्रतिपरेत्य गार्हपत्यम् । (न्दा)दाक्षिणानि जुहोति स दशाहोमीये ᳪवासास हिरण्यं प्रबुध्यावधाय जुहोति देवलोके मेऽप्यसदिति वै

द्वया वै देवाः । देवाऽअहैव देवाः, अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानाः—ते मनुष्यदेवाः । तेषां द्वेधा विभक्त एव यज्ञः । आहुतय एव देवानाम्, दक्षिणा मनुष्यदेवानां ब्राह्मणानां शुश्रुवुषामनूचानानाम् । आहुतिभिरेव देवान्प्रीणाति, दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणाञ्छुश्रुवुषोऽनूचानान् । तऽएनमुभये देवाः प्रीताः स्वर्गं लोकमभिवहन्ति ॥ ४ ॥

ता वाऽएता ऋत्विजामेव दक्षिणाः । अन्यं वाऽएतऽएतस्यात्मानं संस्कुर्वन्ति—एतं यज्ञमृङ्मयं यजुर्मयं साममयमाहुतिमयम् । सोऽस्यामुष्मिंल्लोकऽआत्मा भवति । तद् ये माऽजीजनन्तेति—तस्मादृत्विग्भ्य एव दक्षिणा दद्यात्, नानृत्विग्भ्यः ॥ ५ ॥

अथ प्रतिपरेत्य गार्हपत्यं दाक्षिणानि जुहोति । स दशाहोमीये वाससि हिरण्यं प्रबध्यावधाय

विहितदक्षिणां प्रकारान्तरेण प्रशंसति—द्वया वै देवा इत्यादिना । 'देवाः' 'द्वया वै' द्विविधाः प्रसिद्धाः । "प्रथमचरमतया०"—इत्यादिना ( पा. सू. १ । १ । ३३ ) जसि सर्वनामसंज्ञाया विकल्पेन विधानात्तदभावपक्षे रूपम् । द्वैविध्यमेव प्रदर्श्यते—अहैव देवा इति । 'देवाः' 'अहैव' स्वत एव स्वर्गे विद्यमाना ये देवास्ते एकविधा देवाः । 'अथ ये ब्राह्मणाः' कीदृशाः 'अनूचानाः' साङ्गे वेदे अधीतिनः । "उपेयिवाननाश्वाननूचानश्च" ( पा. सू. ३ । २ । १०९ ) इति अनूचानशब्दो निपातितः । 'शुश्रुवांसः' श्रवणवन्तो ज्ञानवन्तः । "क्वसुश्च"—( पा. सू. ३ । २ । १०७ ) इति क्वसुः । 'ते मनुष्यदेवाः' इति द्विविधा देवा इत्यर्थः । 'तेषां द्वेधा विभक्तः' इत्यादिकं तु निगदव्याख्यातम् ॥ ४ ॥

उक्ताया दक्षिणाया ऋत्विक्सम्बन्धं सहेतुकं विधत्ते—ता वा इत्यादि । अन्यं वा इति । यत ऋत्विजः 'एतस्य' यजमानस्य 'अन्यम्' 'आत्मानम्' दृश्यमानशरीरव्यतिरिक्तं शरीरं 'संस्कुर्वन्ति' । एतं यज्ञमृङ्मयमिति । तद्ये मेति । 'तत्' तस्माद्यज्ञरूपशरीरान्तरोत्पादनाद्यजमान इमे ऋत्विजो माम् 'अजीजनन्त' इति' मन्यते । 'तस्मादृत्विग्भ्य एव' 'दद्यात्' तद्व्यतिरिक्तेभ्यो न दद्यादित्यर्थः ॥ ५ ॥

दाक्षिणहोमं विधत्ते—अथेत्यादि । दक्षिणां दित्सुना कर्तव्यानि 'दाक्षिणानि' । होमे विशेषमाह—स दशा-

१—इडां भक्षयित्वा शालाद्वार्ये दाक्षिणहोमः व्वासःप्रबद्ध २ हिरण्य २ हवन्यामवधाय चतुर्गृहीतमुदु त्यमिति का. श्रौ. सू. १०।२९।

युजते यो युजते सोऽस्यैष युज्ञो देवलोकमेवाभिप्रैति तुदनूची दक्षिणा यां दुदाति सैति दक्षिणामन्वारभ्य युजमानः ॥ ६ ॥

(श्र) चुतस्रो वै दुक्षिणाः । (०) हिरण्यं गौर्वासोऽश्वो न वै तद्व-कल्पते यदुश्वस्य पादमवदध्याद्यद्वा गोः पादमवदध्यात्तुस्माद्दशाहोमीये व्वाससि हिरण्यं प्रबुध्यावधाय जुहोति ॥ ७ ॥

सौरीभ्यामृग्भ्यां जुहोति । तुमसा वाऽअसौ लोकोऽन्तुर्हितः स एतेन ज्योतिषा तुमोऽपहुत्य स्वर्गं लोकमुपसंक्रामति तुस्मात्सौरीभ्यामृग्भ्यां जुहोति ॥ ८ ॥

स जुहोति । उदु त्यं जातवेदसं देवं व्वहन्ति केतवः ॥ दृशे विश्वाय सूर्यं स्वाहेत्येतया गायत्र्या गायत्री वाऽइयं पृथिवी सेयं प्रतिष्ठा तुदस्या-मेवैतत्प्रतिष्ठायां प्रतितिष्ठति ॥ ९ ॥

---

जुहोति । देवलोके मेऽप्यसदिति वै यजते—यो यजते । सोऽस्यैष यज्ञो देवलोकमेवाभिप्रैति । तत् अनूची दक्षिणा । यां ददाति सैति । दक्षिणामन्वारभ्य यजमानः ॥ ६ ॥

चतस्रो वै दक्षिणाः—हिरण्यम्, गौः, वासः, अश्वः । न वै तदवकल्पते यदश्वस्य पादमवदध्याद्, यद्वा गोः पादमवदध्यात् । तस्माद्दशाहोमीये वाससि हिरण्यं प्रबध्यावधाय जुहोति ॥ ७ ॥

सौरीभ्यामृग्भ्यां जुहोति । तमसा वाऽअसौ लोकोऽन्तर्हितः । स एतेन ज्योतिषा तमोऽपहत्य स्वर्गं लोकमुपसंक्रामति । तस्मात्सौरीभ्यामृग्भ्यां जुहोति ॥ ८ ॥

स जुहोति—"उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यं स्वाहा"—( वा. सं. ७ । ४१ ) इत्येतया गायत्र्या । गायत्री वाऽइयं पृथिवी । सेयं प्रतिष्ठा । तदस्यामेव प्रतिष्ठायां प्रतितिष्ठति ॥ ९ ॥

---

होमीय इति । वाससि हिरण्यबन्धनस्य कारणमाह—देवलोक इत्यादि । तदनूची दक्षिणेति । तं यज्ञमनु अञ्चति गच्छतीति 'अनूची' तादृशी भवति । तस्माद् 'याम्' दक्षिणाम् 'ददाति' 'सा' स्वर्गं प्राप्नोति । 'दक्षिणामन्वारभ्य' अवलम्ब्य 'यजमानः' अपि स्वर्गं प्राप्नोति ॥ ६ ॥

'यज्ञे हिरण्यादयः' 'चतस्रः' 'दक्षिणाः' दातव्या हि । तत्र यदि 'अश्वस्य' 'गोः' वा पादे 'हिरण्यम्' 'अवदध्यात्' तदा तदसम्बन्धात्स्वर्गं प्राप्तुं न शक्नोति । वाससि तु प्रबद्धं सहैव गन्तुं शक्नोति । 'तस्माद्' 'हिरण्यम्' स्वर्गगमनार्थम् 'वाससि' 'प्रबध्य' जुहुयात् ॥ ७ ॥

विहिते गार्हपत्याधिकरणे होमे मन्त्रौ विधत्ते—सौरीभ्यामिति । "सूर्यतिष्य०"—( पा. सू. ६ । ४ । १४९ ) इत्यादिना यकारलोपः । 'तमसा वै' इत्यादिनोक्तयोर्मन्त्रयोः सूर्यदेवत्यत्वे हेतुरुपन्यस्यते ॥ ८ ॥

विहितयोर्मन्त्रयोः प्रथमं दर्शयति—स जुहोति । उदु त्यं जातवेदसमिति ( का. श्रौ. सू. । १० । २९ ) । उत्तरत्र एतन्मन्त्रगतस्य गायत्रीछन्दसः प्रयोजनं दर्शयितुम् 'एतया गायत्र्या' इति वर्णितम् । मन्त्रस्यायमर्थः—'केतवः' रश्मयः 'त्यम्' तम्, त्यच्छब्दस्यैतद्रूपम् । 'जातवेदसम्' जातं वेत्ति, वेदयति वा जातवेदास्तं

( त्य ) अथ द्वितीयां जुहोति । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य व्वरुणस्याग्नेः ॥ आप्रा द्यावापृथिवीऽअन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च स्वाहेत्येतया त्रिष्टुभा लोकमेवैतयोपप्रैति ॥ १० ॥

( त्य ) अथाग्नीध्रे । द्वे वैकां वा जुहोति तद्यदग्नावाग्नीध्रे द्वे वैकां वा जुहोत्यग्निर्वै पशूनामीष्टे तऽएनमभितः परिणिविशन्ते तमेतयाऽऽहुत्या प्रीणाति सोऽस्मै प्रीतोऽनुमन्यते तेनानुमतान्ददाति ॥ ११ ॥

---

अथ द्वितीयां जुहोति—" चित्रं देवानामुदगादनीकं । चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवीऽअन्तरिक्षं । सूर्य आत्मा जगतस्तस्थुषश्च स्वाहा"—(वा. सं. ७।४२). इत्येतया त्रिष्टुभा लोकमेवैतयोपप्रैति ॥ १० ॥

अथाग्नीध्रे द्वे वैकां वा जुहोति । तद् यदग्नावाग्नीध्रे द्वे वैकां वा जुहोति । अग्निर्वै पशूनामीष्टे । तऽएनमभितः परिणिविशन्ते । तमेतयाऽऽहुत्या प्रीणाति । सोऽस्मै प्रीतोऽनुमन्यते । तेनानुमतान् ददाति ॥ ११ ॥

---

सर्वज्ञम् ' देवम् ' दानादिगुणयुक्तम् ' सूर्यम् ' ' विश्वाय ' विश्वस्य जगतः ' दृशे ' दर्शनाय समस्तस्य लोकस्य दर्शनादिव्यवहारसिद्ध्यर्थम् ' उद्—वहन्ति ' ऊर्ध्वदेशं प्रापयन्ति । उक्तमन्त्रगतस्य गायत्रीछन्दसः प्रयोजनं दर्शयति—**गायत्री वा** इत्यादि । गायत्र्या अग्निना सहोत्पत्तिराम्नाता—"स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दः" (तै. सं. ७।१।१) इति। अग्निश्च पृथिव्यभिमानिनी देवता, अतस्तत्सम्बन्धाद्गायत्र्याः पृथिवीत्वम् । अत एव श्रूयते—"गायत्री वै पृथिवी " इति ॥ ९ ॥

द्वितीयाहुतेर्मन्त्रं दर्शयति—**अथ द्वितीयां जुहोति चित्रं देवानामित्यादि** । अत्रापि पूर्ववत्प्रयोजनाभिधित्सया ' एतया त्रिष्टुभा ' इत्युक्तम् । ' चित्रम् ' चयनीयं पूजनीयम् ' देवानाम् ' ' अनीकम् ' संघातरूपं मण्डलम् ' उदगात् ' । उदगादिति "छन्दसि लुङ्लङ्लिटः" (पा. सू. ३ । ४ । ६) इति लुङ् । "गातिस्था"—( पा. सू. २ । ४ । ७७ ) इत्यादिना सिचो लुक् । कीदृशं मण्डलम् ' मित्रस्य वरुणस्याग्नेः ' चक्षुःस्थानीयम् । उपलक्षणं चैतत् । सर्वेषां देवानां चक्षूरूपम् । किञ्चैतन्मण्डलान्तर्गतः ' सूर्यः ' कीदृशः ' जगतः ' जङ्गमस्य ' तस्थुषः ' स्थावरस्य च ' आत्मा ' । ' द्यावापृथिवी ' । द्यावापृथिव्यौ । " वा च्छन्दसि "—( पा. सू. ६ । १ । १०६ ) इति पूर्वसवर्णदीर्घः । ' अन्तरिक्षम् ' च 'आप्राः' आपूरयति । पुरुषव्यत्ययः ( पा. सू. ३ । १ । ८५ ) । अदादित्वाच्छपो लुक् ( पा. सू. २ ।४। ७२ ) । मन्त्रगतस्य त्रिष्टुप्छन्दसः प्रयोजनं दर्शयति—**लोकमेवेति** । ' एतया त्रिष्टुभा ' ' लोकम् ' ऊर्ध्वलोकमभिलक्ष्य प्रगच्छति । त्रिष्टुप्छन्दसोर्ध्वलोकसम्बन्धः क्वचिदाम्नायते—" त्रिष्टुभमन्तारिक्षम् " इति ॥ १० ॥

विधत्ते—**अथाग्नीध्र** इत्यादि । आग्नीध्रमग्नीधो गृहम् । " अग्नीधः शरणे रण् भं च इति—" ( पा. सू. ४ । ३ । १२० । वा. २ ) इति रण् प्रत्ययः । तत्रत्ये अग्नौ 'द्वे वा एकां वा' आहुतिं जुहुयात् । विहितमर्थमनूद्य तत्र कारणमाह—**तद्यदग्नावित्यादि** । **अग्निर्वै पशूनामीष्ट** इति । अग्निरिति रुद्रः । एतच्च तैत्तिरीयके श्रूयते—" देवासुराः संयत्ता आसन् ते देवा विजयमुपयन्तोऽग्नौ वामं वसु संन्यदधतेदमु नो भविष्यति यदि नो

---

१—चित्रं देवानामिति द्वितीयाम् । का. श्रौ. सू. १० । ३० । २—"आश्चर्यं यथा तथोदगात् । उदयन्नेव स्वतेजसा नैशं तमो हन्ति, अन्येषां ज्योतींष्यादत्त इत्यार्थम् " इति महीधरः ।

स जुहोति ।( त्य ) अग्ने नय सुपथा राये॒ऽअस्मान्विश्वानि देव व्वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं व्विधेम स्वाहे-त्यथ यद्यश्वं युक्तं वाऽयुक्तं वा दास्यन्त्स्यादथ द्वितीयां जुहुयाद्यद्यु न नाद्रियेत ॥ १२ ॥

स जुहोति । ( त्य ) अयं नोऽअग्निर्वरिवस्कृणोत्वयं मृधः पुर ऽएतु प्रभिन्दन् ॥ अयं व्वाजाञ्जयतु व्वाजसातावयꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहेति व्वाजसा ह्यश्वः ॥ १३ ॥

स जुहोति—" अग्ने नय सुपथा रायेऽअस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहा "—( वा. सं. ७ । ४३ ) इति । अथ यद्यश्वं युक्तं वाऽयुक्तं वा दास्यन्त्स्यात्—अथ द्वितीयां जुहुयाद्—यद्यु न नाद्रियेत॥१२॥

स जुहोति—" अयं नोऽअग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं वाजाञ्जयतु वाजसातावयं शत्रूञ्जयतु जर्हृषाणः स्वाहा "—( वा. सं. ७ । ४४ ) इति । वाजसा ह्यश्वः ॥ १३ ॥

ऽेष्यन्तीति । तदग्निर्न्यकामयत तेनापक्रामत्तद्देवा विजित्यावरुरुत्समाना अन्वायन् तदस्य सहसाऽदित्सन्त सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वम्" (तै.सं.१।५।१) इति । रुद्रश्च पशूनामधिपतिः । "रुद्रः पशूनामधिपतिः"—( तै.सं. ६।२।४) इति श्रुतेः। तस्मादग्निः पशूनामिति "अधीगर्थदयेशां कर्मणि" (पा. सू. २।३।५२) इति षष्ठी । 'ते' पशवः 'एनम्' स्वामिनमग्निम् ' अभितः ' ' परिणिविशन्ते ' परिवेष्टन्ते । " नेर्विशः " ( पा. सू. १।३।१७ ) इति आत्मनेपदम् । परं च ' एतयाऽऽहुत्या ' प्रीणितोऽग्निः स्वकीयान् पशून् ' अस्मै ' यजमानायानुजानाति । पश्चात्तदनुज्ञातानेव ' ददाति ' ॥ ११ ॥

विहितं होममनूद्य मन्त्रं विधत्ते—स जुहोत्यग्ने नयेत्यादि[1] । हे ' अग्ने ! ' ' विश्वानि ' ' वयुनानि ' ज्ञानानि ' विद्वान् ' त्वम् ' अस्मान् ' ' राये ' धनाय ' सुपथा ' शोभनेन मार्गेण । " न पूजनात् "—( पा. सू. ५ । ४ । ६९ ) इति समासान्तो निषिध्यते । ' नय ' प्रापय । किंच ' जुहुराणम् ' कुटिलम् ' एनः ' पापम् ' अस्मत् ' अस्मत्तः ' युयोधि ' पृथक् कुरु । " वा छन्दसि "—( पा. सू. ३ । ४ । ८८ ) इति सिबादेशस्य हेरपित्त्वं विकल्पितम् । तथा च पित्त्वपक्षे अङित्त्वाद् " अङितश्च "—( पा. सू. ६ । ४ । १०३ ) इति धिरादेशः । वयं च ' ते ' ' भूयिष्ठाम् ' नमउक्तिम् ' नमस्कारम् ' विधेम ' कुर्याम । ' विध विधाने ' ( धा. पा. तु. प. ३४ ) इति । ' स्वाहा ' इदं हविः स्वाहुतमस्तु।

द्वितीयाहुतेर्नैमित्तिकत्वमाह—अथ यद्यश्वमित्यादि । ' युक्तम् ' रथे विनियुक्तम् ' अयुक्तम् ' अविनियुक्तम् ॥ १२ ॥

द्वितीयाहुतेः कर्तव्यपक्षे मन्त्रमाह स जुहोत्ययं नो अग्निरित्यादि[2] । आग्नीध्रीयः ' अग्निः ' ' नः ' अस्माकम् ' वरिवः ' धनम् ' कृणोतु ' सम्पादयतु । " कृवि हिंसाकरणयोः "—(धा. पा. भ्वा. प. ९४ ) " धिन्विकृण्व्योर च "(पा. सू. ३।१।८०)इति उप्रत्ययः, अकारश्चान्तादेशः। तस्य स्थानिवद्भावाल्लघूपधगुणो न भवति ।

१—आग्नीध्रीयेऽग्ने नयेति । का. श्रौ. सू. १० । ३१ । २—अयन्न इत्यपरामश्वं चेद्युक्तं दद्यादयुक्तं वा । का. श्रौ. सू. १०।३२।

( श्रो॰ऽथ ) अथ हिरण्यमादाय शालामभ्यैति । दक्षिणेन वेदिं दक्षिणा उपतिष्ठन्ते सोऽग्रेण शालां तिष्ठन्नभिमन्त्रयते रूपेण वो रूपमभ्यागामिति न ह वाऽअग्रे पशवो दानाय चक्षमिरे तेऽपनिधाय स्वानि रूपाणि शरीरैः प्रत्युपातिष्ठन्त तानेतद्देवाः स्वैरेव रूपैर्यज्ञस्यार्धादुपायंस्ते स्वानि रूपाणि जानाना अभ्युवायंस्ते रातमनसोऽलं दानायाभवंस्तथोऽएवैनानेष एतत्स्वैरेव रूपैर्यज्ञस्यार्धादुपैति ते स्वानि रूपाणि जानानाऽ अभ्युवायन्ति ते रातमनसोऽलं दानाय भवन्ति ॥ १४ ॥

---

अथ हिरण्यमादाय शालामभ्यैति—दक्षिणेन वेदिम्—दक्षिणा उपतिष्ठन्ते । सोऽग्रेण शालां तिष्ठन्नभिमन्त्रयते—" रूपेण वो रूपमभ्यागाम् "—( वा. सं. ७ । ४५ ) इति । न ह वा अग्रे पशवो दानाय चक्षमिरे । तेऽपनिधाय स्वानि रूपाणि शरीरैः प्रत्युपातिष्ठन्त । तानेतद्देवाः स्वैरेव रूपैर्यज्ञस्यार्धादुपायन् । ते स्वानि रूपाणि जानाना अभ्यवायन् । ते रातमनसोऽलं दानायाभवन् । तथोऽएवैनानेष एतत्स्वैरेव रूपैर्यज्ञस्यार्धादुपैति । ते स्वानि रूपाणि जानाना अभ्यवायान्ति । ते रातमनसोऽलं दानाय भवन्ति ॥ १४ ॥

---

न केवलमयं धनमेव करोतु किन्तु ' मृधः ' संग्रामान् ' प्रभिन्दन् ' पुरस्ताद् ' एतु ' गच्छतु । किंच ' अयम् ' ' वाजसातौ ' वाजोऽन्नं ( निघं० २ । ७ । २ ) सोऽस्मिन् सायते सम्भज्यत इति वाजसातिः संग्रामस्तस्मिन्, ' वाजान् ' अन्नानि ' जयतु ' स्वाधीनं करोतु ' । ' जर्हृषाणः ' अतिशयेन हृष्यन् ' शत्रूंश्च जयतु ' । मन्त्रे वाजशब्दप्रयोगस्य तात्पर्यमाह—वाजसा ह्यश्व इति । 'अश्वः' वाजमन्नं सनोति सम्भजतीति ' वाजसाः ' " जनसनखनक्रमगमो विट् "—( पा. सू. ३ । २ । ६७ ) इति विट्प्रत्ययः । " विड्वनोरनुनासिकस्यात् "—( पा.सू. ६।४।४१ ) इति आत्वम् । अस्य जयसिद्धिसाधकत्वादन्नसम्पादकत्वम् । अनेनैवाभिप्रायेण साध्यसाधनभेदाविवक्षयाऽश्वस्यान्नरूपत्वं क्वचिदाम्नायते—"अश्वो वै बृहद्वयः"( तै.शा.३।९।९) इति । वय इत्यन्ननामधेयम् ( निघं. २।७।७) यतोऽश्वोऽस्य वाजसाः तस्मात्तद्दानाङ्गभूतस्य साधने मन्त्रे वाजशब्दप्रयोग इत्यर्थः ॥ १३ ॥

विधत्ते—अथ हिरण्यमादायेत्यादि । दक्षिणेन वेदिमिति । " एनपा द्वितीया " ( पा. सू. २ । ३ । ३१ ) इति द्वितीया । दक्षिणा इति । दक्षिणार्था गावः । सोऽग्रेणेति । शालाया अग्रभागे तिष्ठन् " रूपेण वः " इत्यादिना मन्त्रेण दक्षिणार्था गाः ' अभिमन्त्रयते ' इत्यर्थः ॥

मन्त्रस्य प्रथममागं व्याचष्टे—न ह वा इति । ' अग्रे ' पूर्वम् ' पशवो दानाय ' ' न ' समर्था बभूवुः किल यतः ' ते ' पशवः ' स्वानि रूपाणि ' सामर्थ्यानि ' अपनिधाय' शरीरमात्रेणैवोपस्थिताः; ' एतत् ' एतेन रूपेण व इत्यादि मन्त्रभागस्योच्चारणेन ' देवाः ' ' तान् ' दामसमर्थान्पशून् ' स्वैरेव रूपैः ' सहिताः ' यज्ञस्यार्द्धात् ' मध्यात् ' उपायन् ' यज्ञमध्यं माध्यन्दिनसवनमाश्रित्य प्राप्नुवन्नित्यर्थः । अर्द्धादिति कर्मणि ल्यब्लोपे पञ्चमी ( पा. सू. १ । ४ । ३१ वा. १ ) । ततश्चैते ' स्वानि ' सामर्थ्यानि ' जानानाः ' अभिमुखमागताः पश्चात् स्वसामर्थ्योपेतत्वात् ' रातमनसः ' सन्तो दानाय समर्था बभूवुः । एतन्मन्त्रभागोच्चारणेन तथैव भवंतीत्यर्थः ॥ १४ ॥

---

१–सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन्नभिमंत्रयते दक्षिणा बहिर्वेदि तिष्ठतीर्दक्षिणतो रूपेण व इति । का०श्रौ०सू० १०।२।५

तुथो वो विश्ववेदा विभजत्विति । ब्रह्म वै तुथस्तदेना ब्रह्मणा विभजति ब्रह्म वै दक्षिणीयं चादक्षिणीयं च वेद तुथो हास्यैता दक्षिणीयायैव दत्ता भवन्ति नादक्षिणीयाय ॥ १५ ॥

( यर्तु ) ऋतस्य पथा प्रेतेति । यो वै देवानां पथैति स ऽऋतस्य पथैति चन्द्रदक्षिणा इति तदेतेन ज्योतिषा यन्ति ॥ १६ ॥

( न्त्यु ) अथ सदोऽभ्यैति । वि स्वः पश्य व्यन्तरिक्षमिति वि त्वया दक्षिणया लोकं ख्येषमित्येवैतदाह ॥ १७ ॥

---

" तुथो वो विश्ववेदा विभजतु "–( वा०सं० ७ । ४५ ) इति । ब्रह्म वै तुथः । तद् एना ब्रह्मणा विभजति । ब्रह्म वै दक्षिणीयं चादक्षिणीयं च वेद । तथो हास्यैता दक्षिणीयायैव दत्ता भवन्ति, नादक्षिणीयाय ॥ १५ ॥

" ऋतस्य पथा प्रेत "–( वा० सं० ७ । ४५ ) इति । यो वै देवानां पथैति–स ऋतस्य पथैति । " चन्द्रदक्षिणाः "–( वा. सं. ७ । ४५ ) इति । तदेतेन ज्योतिषा यन्ति ॥ १६ ॥

अथ सदोऽभ्यैति–" वि स्वः पश्य व्यन्तरिक्षम् "–( वा० सं० ७ । ४५ ) इति । वि त्वया दक्षिणया लोकं ख्येषमित्येवैतदाह ॥ १७ ॥

---

द्वितीयं भागं व्याचष्टे– तुथो व इत्यादि । तुथ इति साक्षात् परब्रह्म ' दक्षिणीयम् ' दक्षिणार्हम् ' अदक्षिणीयम् ' दक्षिणानर्हम् ' च ' जानाति " कडङ्करदक्षिणाच्छ च "– ( पा. सू. ५ । १ । ६९ )इति । अर्हार्थे छप्रत्ययः । अतः ' तुथो ' ' विभजतु ' इत्युक्तेऽनेनैवादिभागः कृतो भवतीति । प्रमाददक्षिणीयाय दत्तापि दक्षिणीयायैव दत्ता भवतीति भावः ॥ १५ ॥

तृतीयं भागं व्याचष्टे–ऋतस्येत्यादि । देवानां मार्गेण गच्छतेत्यनेनाभिप्रायेण ' ऋतस्य ' यज्ञस्य ' पथा ' प्रगच्छतेत्युक्तम् । यज्ञमार्गस्य देवसम्बन्धादित्यर्थः ।

चतुर्थं भागं व्याचष्टे–चन्द्रदक्षिणा इति । चन्द्रं हिरण्यमध्वर्युहस्तगतं तद् दक्षिणा समर्धकं यासां तास्तथोक्ताः । अनेन चन्द्ररूपेण ' ज्योतिषा ' सदैव गच्छेयुः । हे दक्षिणार्था गावः ' रूपेण ' सामर्थ्येन पूर्वं भवतीभिरग्निहितेन सह वो ' रूपम् ' स्वरूपम् ' अभ्यागाम् ' आभिमुख्येन प्राप्तोऽस्मि । " गातिस्था"– ( पा. सू. २ । ४ । ७७ ) इत्यादिना सिचो लुक् । ' वो विश्ववेदाः ' सर्वज्ञः' तुथः ' ब्रह्म विभजतु । यूयं च चन्द्रदक्षिणाः सत्यः यज्ञसम्बन्धिना मार्गेण गच्छतेति कृत्स्नमन्त्रस्यार्थः ॥ १६ ॥

समन्त्रकं सदोगमनं विधाय मन्त्रस्य तात्पर्यमाह–अथेत्यादि । वि स्वः इति । हे सदः ! त्वदीयया ' दक्षिणया स्वर्लोकमन्तरिक्षलोकं च ' वि ' ' ख्येषम् ' समीक्षिषीयेत्येवमर्थम् ' एतत् ' मन्त्रवाक्यम् ' आह ' अस्ति च दक्षिणायाः सदसश्च सम्बन्धः सदस्यासीनेभ्य ऋत्विग्भ्यो दक्षिणाया दातव्यत्वात् । मन्त्रे ' पश्य ' इति पुरुषव्यत्ययः–( पा. सू. ३ । १ । ८५ ) पश्यामीत्यर्थः । एवं च ' वि ख्येषम् ' इति व्याख्यानमुपपद्यते ॥ १७ ॥

---

१–सदो गच्छति ।व्वि स्वरिति । का. श्रौ. सू. १० । ४१ ।

( ह्राथ ) अथ सदः प्रेक्षते । यतस्व सदस्यैरिति मा त्वा सदस्याऽ अतिरिक्षतेत्येवैतदाह ॥ १८ ॥

( ह्राथ ) अथ हिरण्यमादायाग्नीध्रमभ्यैति । ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमिति यो वै ज्ञातो ज्ञातकुलीनः स पितृमान्पैतृमत्यो या वै ज्ञातायापि कतिपयीर्दक्षिणा ददाति ताभिर्महज्जयत्यृषिमार्षेयमिति यो वै ज्ञातोऽनूचानः स ऋषिरार्षेयः सुधातुदक्षिणमिति स हि सुधातुदक्षिणः ॥ १९ ॥

( णोऽथै ) अथैवमुपसद्य । (ध्रा) अग्नीधे हिरण्यं ददात्यस्मद्राता देवत्रा

अथ सदः प्रेक्षते–"यतस्व सदस्यैः"–( वा० सं० ७ । ४५) इति । मा त्वा सदस्या अतिरिक्षतेत्येवैतदाह ॥ १८ ॥

अथ हिरण्यमादायाग्नीध्रमभ्यैति–" ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यम् "–( वा० सं० ७ । ४६ ) इति । यो वै ज्ञातो ज्ञातकुलीनः स पितृमान् पैतृमत्यः । या वै ज्ञातायापि कतिपयीर्दक्षिणा ददाति; ताभिर्महज्जयति । " ऋषिमार्षेयम् "–(वा० सं० ७ । ४६ ) इति । यो वै ज्ञातोऽनूचानः स ऋषिरार्षेयः । " सुधातुदक्षिणम् "–( वा० सं० ७ । ४६ ) इति । स हि सुधातुदक्षिणः ॥ १९ ॥

अथैवमुपसद्याग्नीधे ( १ ) हिरण्यं ददाति–" अस्मद्राता देवत्रा गच्छत "–( वा.

विधत्ते–अथेत्यादि । हे ' सदः ' ! त्वम् ' सदस्यैः ' सहितमेव यज्ञकार्ये प्रयतस्वेति मन्त्रस्यार्थः । मन्त्रस्य, सदसः सर्वदा सदस्यैः सह सम्बन्धोऽभिप्रेत इति व्याचष्टे–मा त्वेत्यादि । तथा च तैत्तिरीयके–" यतस्व सदस्यैरित्याह मित्रत्वाय "–( तै. सं. ६।६।१।४ )–इति । अतिरिक्षतेति । " रिचिर् विरेचने " ( धा. पा. रु. उ. ४ ) इत्यस्माल्लुङि च्लेर्व्यत्ययेन ( पा. सू. ३ । १ । ८५ ) क्सादेशे रूपम् ॥ १८ ॥

सहिरण्यमाग्नीध्रं प्रति गमनं विधत्ते–अथ हिरण्यमित्यादि । दातव्यम् ' हिरण्यम् ' स्वीकृत्य ' ब्राह्मणम् ' 'अद्य'–इत्यादिना मन्त्रेण 'आग्नीध्रम्' अभिगच्छेत् । मन्त्रे पितृमत्पैतृमत्यशब्दयोस्तात्पर्यमाह–यो वै ज्ञात इत्यादि । ' पितृमन्तं पैतृमत्यम् ' इत्येताभ्यां शब्दाभ्याम् 'ज्ञातः' ' ज्ञातकुलीनः ' च विवक्षितः । ज्ञातः प्रसिद्धः । तत्रायमभिप्रायः–' पितृमान् ' इति प्रशंसायां मतुप् इति प्रशस्तपितृमान्, प्रशस्तपितृमत्त्वेन च प्रसिद्धिर्लभ्यते । ' पैतृमत्यः ' इति पितृमति कुले भवः । " भवे छन्दसि "–( पा. सू. ४ । ४ । ११० ) इति यत् । कुलस्य ज्ञातत्वं प्रशस्तपुरुषसम्बन्धनिबन्धनम् । एवं च प्रशस्तपितृयुक्ते कुले जात इत्यनेन प्रशस्तकुलोत्पत्तिर्लभ्यते । तादृशाय ' ज्ञाताय ' ' याः ' ' कतिपयीः ' ' अपि ' 'दक्षिणाः ददाति ताभिर्महत्' फलम् ' जयति ' स्वाधीनीकरोति । तस्मादनेनाभिप्रायेण पितृमन्तं पैतृमत्यमिति शब्दप्रयोग इत्यर्थः । ऋष्यार्षेयशब्दयोरर्थमाह–यो वा इति । ' अनूचानः ' साङ्गे प्रवचनेऽधीती । ' आर्षेयः ' " इतश्चानिञः "–( पा. सू. ४ । १ । १२२ ) इति ढक्प्रत्ययः । स हीति । प्रकृतत्वात् ' स ' ज्ञातः ' अनूचानः ' ' सुधातुदक्षिणः ' सुधातुर्हिरण्यं तद् दक्षिणा यस्य स तथोक्तः । प्रसिद्धाय खलु हिरण्यं दीयते ॥ १९ ॥

उपसदनानन्तरमग्नीधे समन्त्रकं हिरण्यदानं विधत्ते–अथैवमित्यादि । मन्त्रार्थस्तु हिरण्यरूपा दक्षिणाः

१–प्रेक्षते यतस्व सदस्यैरिति सदस्यान् । का. श्रौ. सू. १० । ४२ । २–ब्राह्मणमद्येत्याग्नीध्रगमनम् । का. श्रौ. सू. १० । ४३ । ३–उपविश्य हिरण्यमस्मै ददात्यस्मद्राता इति का.श्रौ. सू. १० । ४४ ।

गच्छतेति यां वै रातमनाऽअविचिकित्सन्दक्षिणां ददाति तया महज्जयति
देवत्रा गच्छतेति देवलोके मेऽप्यसदिति वै यजते यो यजते तद्देवलोकऽ-
एवैनमेतदपित्विनं करोति प्रदातारमाविशतेति मामाविशतेत्येवैतदाह तथो
हास्मादेताः पराच्यो न प्रणश्यन्ति तद्यदग्नीधे प्रथमाय दक्षिणां ददा-
त्यतो हि विश्वे देवा अमृतत्वमपाजयंस्तस्मादग्नीधे प्रथमाय दक्षिणां
ददाति ॥ २० ॥

( त्यु ) अथैवमेवोपसद्य । ( द्या ) आत्रेयाय हिरण्यं ददाति यत्र वा-
ऽअदः प्रातरनुवाकमन्वाहुस्तद्ध स्मैतत्पुरा शꣳसन्त्यत्रिर्वाऽऋषीणाꣳ

---

सं. ७ । ४६ । ) इति । यां वै रातमना अविचिकित्सन्दक्षिणां ददाति, तया महज्जयति । देवत्रा गच्छत इति । देवलोके मेऽप्यसदिति वै यजते–यो यजते तद्देवलोकऽएवैनमेतदपित्विनं करोति । " प्रदातारमाविशत "–( वा. सं. ७ । ४६ । ) इति । मामाविशतेत्येवैतदाह तथो हास्मादेताः पराच्यो न प्रणश्यन्ति । तद् यदग्नीधे प्रथमाय दक्षिणां ददाति । अतो हि विश्वे-देवा अमृतत्वमपाजयन् । तस्मादग्नीधे प्रथमाय दक्षिणां ददाति ॥ २० ॥

अथैवमेवोपसद्य आत्रेयाय ( २ ) । हिरण्यं ददाति । यत्र वाऽअदः प्रातरनुवाकमन्वाहुः–तद्ध स्मैतत् पुरा शंसन्ति । अत्रिर्वाऽऋषीणां होतास । अथैतत्सदोऽसुरतमसमभिपुप्लुवे । तऽऋषयोऽत्रि-

---

' अस्मद्राताः ' अस्माभिर्दत्ताः ' देवत्रा ' " देवमनुष्य "–( पा. सू. ५ । ४ । ५६ ) इत्यादिना द्वितीयार्थे त्राप्रत्ययः । देवान् गच्छतेत्यर्थः । किञ्च ' प्रदातारम् ' मां च ' आविशत ' प्रविशत । बहुवचनं पूजार्थम् । मन्त्रपदानामभिप्रायमाह–**यां वा** इत्यादि । ' रातमनाः ' दानमनाः ' अविचिकित्सन् ' सन्देहमकुर्वन् ' याम् ' ' दक्षिणां ददाति ' तादृश्या ' तया ' दक्षिणया ' महत् ' फलम् ' जयति ' तस्मादस्मद्राता इति मन्त्रम् आह–यजमानो न केवलमस्मिँल्लोक एव भवत्विति यजते, किन्तु स्वर्गेऽपि । तस्माद्देवत्रा गच्छतेत्युक्तम् । एवञ्च ' एतत् ' हिरण्यम् ' देवलोक एव ' ' अपित्विनम् ' गमनयुक्तं कृतवान्भवति । अपित्विनमिति लिङ्गव्यत्ययः ( पा. सू. ३ । १ । ८५ ) । प्रदातारमिति । यद्येतन्न प्रयुज्येत, तदा ' अस्माद् ' यजमानाद् ' एताः ' दक्षिणाः पराच्य एव सत्यः प्रणश्येयुः । ' प्रदातारमाविशतेति ' प्रयुङ्क्ते ' मामा विशत ' इत्युक्तत्वात् तथा न प्रणश्येयुरित्यर्थः ।

दक्षिणादाने प्राप्तमाग्नीध्रस्य प्राथमिकत्वमनूद्य तत्र कारणमुपन्यस्यति–तद्यदित्यादिना । **अतो** हीति । ' अतः ' आग्नीध्रात् सकाशाद् ' देवाः ' ' अमृतत्वम् ' अविनश्वरत्वं प्राप्नुवन्निति प्रसिद्धम् । देवानां यज्ञे अग्निरेवाग्नीध्रः–अत एव "अग्नय आग्नीध्रङ्कुर्वते" (शत. ४।३।४।२४) । इत्युत्तरत्र वक्ष्यते "अग्निनैव साधनेन देवा असुरानभिभूय निर्बाधा अभवन् । "अग्निमेव वरूथङ्कृत्वाऽसुरानभ्यभवन्" (तै. सं. ६।२।२)–इत्यादिश्रुतेः । ' तस्माद् ' आग्नीध्रस्याग्न्यात्मकत्वात्, ततो देवा अमृतत्वमापुरिति प्रसिद्धमित्यर्थः ॥ २० ॥

आग्नीध्राय हिरण्यं दत्त्वा अथात्रेयाय हिरण्यं दद्यादिति विधत्ते–**अथैवमेवे**त्यादि । ' एवमेव ' अनेनैव

होताऽऽस्रा्थैतत्सदोऽसुरतमसमभिपुप्लुवे तऽऋषयोऽत्रिमब्रुवन्नेहि प्रत्यङ्ङिदं तमोऽपजहीति सऽएतत्तमोऽपाहन्नयं वै ज्योतिर्य इदं तमोऽपावधीदिति तस्माऽएतज्ज्योतिर्हिरण्यं दक्षिणामनयञ्ज्योतिर्हि हिरण्यं तद्वै स तत्तेजसा वीर्येणऽर्षिस्तमोऽपजघानाथैष एतेनैवैतज्ज्योतिषा तमोऽपहन्ति तस्मादात्रेयाय हिरण्यं ददाति ॥ २१ ॥

( त्यु ) अथ ब्रह्मणे । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायत्यथोद्गात्रेऽथ होत्रेऽथाध्वर्युभ्याँ हविर्धानऽआसीनाभ्यामथ पुनरेत्य प्रस्तोत्रेऽथ मैत्रावरुणायाथ ब्राह्मणाच्छँसिनेऽथ पोत्रेऽथ नेष्ट्रेऽथाच्छावाकायाथाग्नीत्रेऽथ ग्रावस्तुतेऽथ सुब्रह्मण्यायै प्रतिहर्त्र उत्तमाय ददाति प्रतिहर्ता वाऽएष सोऽस्माऽएतदन्ततः प्रतिहरति तथो हास्मादेताः पुराच्यो न प्रणश्यन्ति ॥ २२ ॥

---

मब्रुवन्–एहि प्रत्यङ्ङिदं तमोऽपजहीति । स एतत्तमोऽपाहन् । अयं वै ज्योतिर्य इदं तमोऽपावधीदिति । तस्माऽएतज्ज्योतिर्हिरण्यं दक्षिणामनयन् । ज्योतिर्हि हिरण्यम् । तद्वै स तत्तेजसा वीर्येणऽर्षिस्तमोऽपजघान । अथैष एतेनैवैतज्ज्योतिषा तमोऽपहन्ति । तस्मादात्रेयाय हिरण्यं ददाति ॥ २१ ॥

अथ ब्रह्मणे ( ३ ) । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति । अथोद्गात्रे (४)। अथ होत्रे ( ५ )। अथाध्वर्युभ्यां ( ६–७ ) । हविर्धान आसीनाभ्याम् । अथ पुनरेत्य प्रस्तोत्रे ( ८ ) । अथ मैत्रावरुणाय ( ९ ) । अथ ब्राह्मणाच्छंसिने ( १० )। अथ पोत्रे ( ११ )। अथ नेष्ट्रे ( १२ ) । अथा-

---

प्रकारेण येन प्रकारेणोपसद्याग्नीध्राय हिरण्यं दत्तं तेनैव प्रकारेणोपसद्यात्रेयाय हिरण्यं दद्यात् । "ब्राह्मणमद्य" इत्यादिना मन्त्रेणोपसद्य दद्यादित्यर्थः । अत एव कात्यायनः–"आत्रेयायाग्नीध्रवत्" ( का. श्रौ. सू. १०।४९ ) इत्यादि । आत्रेयाय हिरण्यदाने हेतुमाह–यत्र वा अद इत्यादिना । पुरा शंसन्तीति । पूर्वस्मिन्प्रदेशे आहवनीयस्य समीपे 'शंसन्ति' । सोऽथैतदिति । अत्रिः स्वयं पूर्वभागे शंसन् 'एतत्सदोऽसुरतमसम्' असुररूपं तमः । अमो लुगभावश्छान्दसः । तम् 'अभिपुप्लुवे' 'प्लुङ् गतौ' ( धा. पा. भ्वा. आ. ९८२ ) अन्तर्भावितण्यर्थः । अभ्यप्लावयत् । पूर्वभागे शंसतः स्थितत्वात् तत्र प्राप्तुमशक्ता असुराः पश्चात्सदः प्राप्नुवन्नित्यर्थः । तद्वै स तदिति । 'तत्' तदा हिरण्यदानानन्तरकाले 'तत्तेजसा' तस्य हिरण्यस्य तेजसा स्वकार्येण पश्चात् 'तमोऽपजघान' स्पष्टार्थमन्यत् ॥ २१ ॥

आत्रेयहिरण्यदानानन्तरं ब्रह्मादिभ्यः क्रमेण दानं विधत्ते–अथ ब्रह्मण इत्यादिना । यज्ञसंरक्षकत्वेन ब्रह्मणः प्राधान्यसूचनाद्दाने प्राथमिकत्वमुचितमिति प्रदर्शितम् । अथ पुनरेत्येति । पुनरपि सदो गत्वेत्यर्थः । 'प्रति-

---

१– सदसः पुरस्तादुपविष्टाय क आत्रेयं क आत्रेयमिति निरुक्तत्रासकृच्छेपमहालेयमवालेयमकौद्रेयमशौभ्रेयमवामरथ्यमगोपवनमिति । ऋत्विग्भ्यो दक्षिणां ददाति । ऋत्विग्ग्रहणं चमसाध्वर्युव्युदासार्थम् । तेषामन्त्विक्त्वात् इति तत्रकर्कः का. श्रौ. सू. १० । ४५–४६ सूत्रशेषः । २–ब्रह्मोद्गातृहोतृभ्यः । अध्वर्युभ्यां च । हविर्द्धान उपविष्टाभ्यां ददाति का. श्रौ. सू. १० । ५०–५२ । ३–प्रत्येत्य प्रस्तोतृप्रशास्तृब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकाग्नेतृग्रावस्तुत्सुब्रह्मण्येभ्यः । प्रसृप्तेभ्यश्चान्यत् । कण्वकश्यपयाचमानवर्जम् । ज्ञातये चाश्रोत्रियाय । न रजतं दद्याद्बर्हिषि पुराऽस्य संवत्सराद्गृहे रुदंतीति श्रुतेः । पत्नीं च ददाति । सर्वेभ्यो दत्वा प्रतिहर्त्रे पश्चात् । का. श्रौ. सू. १० । ५७–६३ ।

( न्त्यु )अथाहेन्द्राय मरुत्वतेऽनुब्रूहीति । यत्र वै प्रजापतिरग्रे ददौ तद्धेन्द्र ईक्षांचक्रे सर्वं वाऽअयमिदं दास्यति नास्मभ्यं किंचन परिशेक्ष्यतीति स एतं वज्रमुदयच्छदिन्द्राय मरुत्वतेऽनुब्रूहीत्युदानाय ततो नाददात्स एषोऽप्येतर्हि तथैव वज्र उद्यम्यतऽइन्द्राय मरुत्वतेऽनुब्रूहीत्युदानाय ततो न ददाति ॥ २३ ॥

चतस्रो वै दक्षिणाः । ( ० ) हिरण्यमायुरेवैतेनात्मनस्त्रायतऽआयुर्हि हिरण्यं तदग्नयऽआग्नीध्रं कुर्वतेऽददात्तस्मादप्येतर्ह्याग्नीधे हिरण्यं दीयते२४

च्छावाकाय ( १३ ) । अथोन्नेत्रे ( १४ ) । अथ ग्रावस्तुते ( १५ ) । अथ सुब्रह्मण्यायै प्रतिहर्त्रे ( १६ ) उत्तमाय ददाति । प्रतिहर्ता वाऽएषः । सोऽस्माऽएतदन्ततः प्रतिहरति । तथो हास्मादेताः पराच्यो न प्रणश्यन्ति ॥ २२ ॥

अथाह—इन्द्राय मरुत्वतेऽनुब्रूहीति । यत्र वै प्रजापतिरग्रे ददौ । तद्धेन्द्र ईक्षाञ्चक्रे—सर्वं वाऽअयमिदं दास्यति, नास्मभ्यं किंचन परिशेक्ष्यतीति । स एतं वज्रमुदयच्छत्—'इन्द्राय मरुत्वतेऽनुब्रूहि' इत्यदानाय । ततो नाददात् । स एषोऽथैतर्हि तथैव वज्र उद्यम्यते—'इन्द्राय मरुत्वतेऽनुब्रूहि' इत्यदानाय । ततो न ददाति ॥ २३ ॥

चतस्रो वै दक्षिणाः । हिरण्यम्, आयुरेवैतेनात्मनस्त्रायते । आयुर्हि हिरण्यम् । तदग्नयेऽआग्नीध्रं कुर्वतेऽददात् । तस्मादप्येतर्ह्याग्नीधे हिरण्यं दीयते ॥ २४ ॥

हर्त्रे ' ' उत्तमाय ' अन्तिमाय ' ददाति ' ' एषः ' ' प्रतिहर्ता ' समाप्तिरूपस्य प्रतिहारभागस्य कर्ता खलु, अतः ' सोऽस्मै ' यजमानाय ' अन्ततः ' दक्षिणाः समापयति । ' तथा ' च सति ' एताः ' दक्षिणाः पराग्भूता एव न प्रणश्येयुः । अन्यथा समाप्त्यभावात् 'पराच्यः' सत्यः प्रणश्येयुरिति भावः । "न ह त्वेवाशतदक्षिणः सौम्योऽध्वरः स्यात्" ( श.प. ४।३।४।३) इति । प्रकृतसोमयागे शतसङ्ख्याका गावो दक्षिणा विहितास्ताः प्रविभज्योक्तक्रमेण ब्रह्मादिभ्यो दद्यात् । विभागप्रकारस्तु कात्यायनेन दर्शितः—" यथारम्भं द्वादश द्वादशाद्येभ्यः षट्षट् द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः "—इति[1] । आपस्तम्बेनाप्येवमेवोक्तम्—" यावदध्वर्यवे ददाति तस्यार्द्धं प्रतिप्रस्थात्रे तृतीयं नेष्ट्रे चतुर्थमुन्नेत्रे " । एतेनेतरेषां दानमुक्तमिति ॥ २२ ॥

दक्षिणादानानन्तरं मरुत्वद्ग्रहस्यानुवाक्यासम्प्रैषं विधत्ते—अथाहेत्यादि[2] । उक्तसम्प्रैषोच्चारणानन्तरं न दद्यादिति विधातुमाख्यायिकामाह—यत्र वा इत्यादि[3] । पुरा खलु ' यत्र ' यस्मिन् काले ' प्रजापतिः ' स्वसम्बन्धिनि यज्ञे दक्षिणाः ' ददौ ' तदा प्रजापतिपुत्रः ' इन्द्रः ' विचारयामास—' अयम् ' मम 'इदम्' ' सर्वम् ' अपि धनम् ' दास्यति ' तदा ' अस्मभ्यम् ' तु किमवशेक्ष्यतीति । एवं विचार्याप्रदानाय ' इन्द्राय मरुत्वते ऽनुब्रूहि ' 'इति' एतद्वाक्यरूपं ('वज्रं') चक्षुः 'उदयच्छत्' । पश्चात् 'सः' प्रजापतिः नो 'अददात्' । विधत्ते—तथैवेति । 'तथैव' इदानीमपि 'अदानाय' 'इन्द्राय' इत्यादिवाक्यरूपः 'वज्र उद्यम्यते' । तस्मान्न दद्यादित्यर्थः ॥ २३ ॥

विहितशतदक्षिणातिरिक्तानां चतुर्णां द्रव्याणां प्रयोजनाभिधानपूर्वकमृत्विग्विशेषेषु दानमाह-चतस्रो वै

१–षट्षट् द्वितीयेभ्यश्चतस्रस्तृतीयेभ्यस्तिस्र इतरेभ्यः–इति क. का० श्रौ० सू० पु. पा. । २–इंद्राय मरुत्वतेऽनुवाचयति । का. श्रौ. सू. १० । ६४ । ३–अदानमतः का. श्रौ. सू. १० । ६५ ।

(तै॒ऽथ) अ॒थ गौः । प्रा॒णमे॒वैत॒याऽऽत्म॒नस्त्रा॒यते प्रा॒णो हि गौ॒रन्न॑ᳪं हि गौ॒रन्न॑ᳪं हि प्रा॒णस्तां॑ रु॒द्राय॒ होत्रेऽददात् ॥ २५ ॥

( दु ) अ॒थ वा॒सः । ( स्त्वु ) त्व॒चमे॒वैते॒नात्म॒नस्त्रा॒यते त्व॒ग्घि वा॒सस्त॒द्बृह॒स्पत॑यऽउद्गा॒यतेऽददात् ॥ २६ ॥

( दु ) अ॒था॒श्वः । ( श्वो ) व॒ज्रो वाऽअ॒श्वो व॒ज्रमे॒वैत॒त्पु॒रो गां॑ कुरुते य॒मलो॒के मे॒ऽप्यस॒दिति॒ वै य॒जते॒ यो य॒जते॒ तद्य॑मलो॒कऽए॒वैन॒मेत॒दपि॑त्विनं करोति॒ तं य॒माय॑ ब्र॒ह्मणेऽददात् ॥ २७ ॥

(त्स)स हिर॑ण्यं॒ प्रत्ये॑ति । (त्य) अ॒ग्नये॑ त्वा म॒ह्यं॒ वरु॑णो ददा॒त्वित्य॒ग्नये

---

अथ गौः । प्राणमेवैतयाऽऽत्मनस्त्रायते । प्राणो हि गौः । अन्नं हि गौः । अन्नं हि प्राणः तां रुद्राय होत्रेऽददात् ॥ २५ ॥

अथ वासः । त्वचमेवैतेनात्मनस्त्रायते । त्वग्घि वासः । तद् बृहस्पतयऽउद्गायतेऽददात् ॥ २६ ॥

अथाश्वः । वज्रो वाऽअश्वः । वज्रमेवैतत् पुरोगां कुरुते । यमलोके मेऽप्यसदिति वै यजते—यो यजते । तद् यमलोकऽएवैनमेतदपित्विनं करोति । तं यमाय ब्रह्मणेऽददात् ॥ २७ ॥

स हिरण्यं प्रत्येति—" अग्नये त्वा मह्यं वरुणो ददातु "—( वा० सं० ७ । ४७ ) इति ।

---

दक्षिणा इत्यादिना । यज्ञे उक्तशतदक्षिणातिरिक्ताः 'दक्षिणाः' 'चतस्रः' हि । तत्र 'हिरण्यम्' प्रथमा दक्षिणा " आयुर्हि हिरण्यम् "( शत. ४ । ३ । ४ । २४ )—इत्यादिश्रुतेः ' हिरण्यमायुः "—इति प्रसिद्धम् । अत एतेन यजमानः स्वात्मन आयुरेव रक्षति । ' तत् ' च हिरण्यं प्रजापतिः ' आग्नीध्रम् ' अग्नीधः कर्म ' कुर्वते ' अग्नये ' अददात् ' । ' तस्माद् ' एतस्मिन् कालेऽपि ' अग्नीधे हिरण्यं दीयते ' ॥ २४ ॥

अथ गौरित्यादिकं तु स्पष्टार्थम् । तामिति । 'ताम्' गाम् प्रजापतिर्होतृभूताय ' रुद्राय ' ' अददात् ' तस्माद् होत्रे गां दद्यादित्यर्थः । एवमुत्तरत्रापि विधिवाक्यमध्याहार्यम् ॥ २५ ॥

त्वग्घि वास इति । ' हि ' शब्दः प्रसिद्धिद्योतकः । तृतीयकाण्डे दीक्षाप्रकरणे " अथ वासः परिधत्ते " ( श. प. ३ । १ । २ । १३–१६ ) इत्युपक्रम्याम्नातम् । " तस्मिन्नेतामस्मिंस्त्वचमदधुः, वास एव । तस्मान्नान्यः पुरुषाद्वासो बिभर्ति "—इति ॥ २६ ॥

" वज्रो वा आपः " इत्यपां वज्रत्वं श्रूयते । अश्वश्चाद्भ्यः सम्भूतः "अप्सुयोनिर्वा अश्वः" ( तै. सं. ५।३। १२ )इति श्रुतेः । तस्मात् कारणभूतानामपां वज्रत्वात्कार्यभूतः 'अश्वः' अपि 'वज्रः' इत्यर्थः । 'पुरोगां कुरुते' यमलोकबाधपरिहारत्वेन पुरोगामिनं कुरुते ॥ २७ ॥

क्रमेण विहितानां हिरण्यादीनां चतुर्णां प्रतिग्रहमन्त्रान्दर्शयति—स हिरण्यं प्रत्येत्यग्नये त्वेत्यादि ।

---

१–वासोहिरण्ये ददाति । का. श्रौ. सू. १० । ३३ । २–अग्नये त्वेति हिरण्यं प्रतिगृह्णीतः । रुद्राय त्वेति गां बृहस्पतये त्वेति वासो यमाय त्वेत्यश्वम् । का. श्रौ. सू. १० । ५३ । ५४ ।

ह्येतद्वरुणोऽददात्सोऽमृतत्वमशीयायुर्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रऽइति ॥ २८ ॥

( त्यु ) अथ गां प्रत्येति । रुद्राय त्वा मह्यं व्वरुणो ददात्विति रुद्राय ह्येतां व्वरुणोऽददात्सोऽमृतत्वमशीय प्राणो दात्रऽएधि व्वयो मह्यं प्रतिग्रहीत्र इति ॥ २९ ॥

( त्यु ) अथ व्वासः प्रत्येति । बृहस्पतये त्वा मह्यं व्वरुणो ददात्विति बृहस्पतये ह्येतद्वरुणोऽददात्सोऽमृतत्वमशीय त्वग्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रऽइति ॥ ३० ॥

( त्य ) अथाश्वं प्रत्येति । यमाय त्वा मह्यं व्वरुणो ददात्विति यमाय ह्येतं व्वरुणोऽददात्सोऽमृतत्वमशीय हयो दात्रऽएधि व्वयो मह्यं प्रतिग्रहीत्रऽइति ॥ ३१ ॥

---

अग्नये ह्येतद्वरुणोऽददात् । " सोऽमृतत्वमशीयायुर्दात्र ऽएधि मयो मह्यं प्रतिग्रहीत्रे "–( वा० सं० ७ । ४७ ) इति ॥ २८ ॥

अथ गां प्रत्येति–" रुद्राय त्वा मह्यं वरुणो ददातु "–( वा० सं० ७ । ४७ ) इति । रुद्राय ह्येतां वरुणोऽददात् । " सोऽमृतत्वमशीय प्राणो दात्रऽएधि वयो मह्यं प्रतिग्रहीत्रे "–( वा० सं० ७ । ४७ ) इति ॥ २९ ॥

अथ वासः प्रत्येति–" बृहस्पतये त्वा मह्यं वरुणो ददातु "–( वा० सं० ७ । ४७ ) इति । बृहस्पतये ह्येतद्वरुणोऽददात् । " सोऽमृतत्वमशीय त्वग्दात्रऽएधि मयो मह्यं प्रतिग्रहीत्रे "–( वा० सं० ७ । ४७ ) इति ॥ ३० ॥

अथाश्वं प्रत्येति–" यमाय त्वा मह्यं वरुणो ददातु "–( वा० सं० ७ । ४७ ) इति । यमाय ह्येतं वरुणोऽददात् । " सोऽमृतत्वमशीय हयो दात्रऽएधि वयो मह्यं प्रतिग्रहीत्रे "–( वा० सं० ७ । ४७ ) इति ॥ ३१ ॥

---

' प्रत्येति ' प्रतिगृह्णीयात् । ' अग्नये ह्येतद्वरुणोऽददात् ' इति ब्राह्मणवाक्यम् । अनेन च मन्त्रगतस्याग्निपदस्य प्रयोगे उपपत्तिरभिधीयते । सर्वमपि वृणोति व्याप्नोतीति ' वरुणः ' प्रजापतिः । वृणोतेः ( धा. पा. स्वा. उ. ८ ) नित्यौणादिकः ( उ. सू. ३ । ९३ ) उनन्प्रत्ययः । ' स ' च ' अग्नये ' ' एतद् ' हिरण्यम् ' अददात् ' इति प्रसिद्धम् । अनन्तरमेव " आयुर्हि हिरण्यं तदग्नये आग्नीध्रङ्कुर्वतेऽददात् " ( श. प. ४ । ३ । ४ । २४ ) इत्युक्तत्वात् तस्मान्मन्त्रे अग्निपदप्रयोगः । एवमुत्तरत्रापि मन्त्रमध्यगतानां ब्राह्मणवाक्यानां मन्त्रेषु तत्तद्देवतापदप्रयोगोपपत्तिप्रतिपादनार्थत्वमवगन्तव्यम् । मन्त्रस्यायमर्थः–हे हिरण्य ! अग्निरूपाय ' मह्यम ' ' वरुणः ' प्रजापतिरूपस्त्वां ' ददातु ' । ' सः ' अहं त्वां प्रतिगृह्णन् 'अमृतत्वम्' अविनश्वरताम ' अशीय ' प्राप्नुयाम् । आशिषि लिङ्प्रत्ययः ( पा. सू. ३ । ३ । १७३ ) । किञ्च त्वम् ' दात्रे ' यजमानाय ' आयुः ' ' एधि ' भव । अस्तेः ( धा. पा. अ. प. ५९ ) लोटि मध्यमपुरुषैक-

(त्य)अथ यदन्यद्ददाति । कामेनैव तद्ददातीदं मेऽप्यमुत्रासदिति तत्प्रत्येति कोऽदात्कस्माऽअदात्कामोऽदात्कामायादात् ॥ कामो दाता कामः प्रतिग्रहीता कामैतत्तऽइति तद्देवताया ऽअतिदिशति ॥ ३२ ॥

तदाहुः । ( नु ) न देवतायाऽअतिदिशेदिदं वै यां देवताꣳ समिन्द्धे सा दीप्यमाना श्वःश्वः श्रेयसी भवतीदं वै यस्मिन्नग्नावभ्यादधति स दीप्यमान

अथ यदन्यद्ददाति–कामेनैव तद्ददाति–इदं मेऽप्यमुत्रासदिति । तत्प्रत्येति–" कोऽदात्कस्मा-अदात्कामोऽदात्कामायादात् । कामो दाता कामः प्रतिग्रहीता कामैतत्ते "–( वा० सं० ७ । ४८ ) इति । तद्देवताया ऽअतिदिशति ॥ ३२ ॥

तदाहुः–न देवतायाऽअतिदिशेत् । इदं वै यां देवतां समिन्द्धे । सा दीप्यमाना श्वःश्वः श्रेयसी भवति । इदं वै यस्मिन्नग्नावभ्यादधति–स दीप्यमान एव श्वःश्वः श्रेयान्भवति । श्वःश्वो ह वै श्रेया-

वचने " ध्वसोरेद्धावभ्यासलोपश्च " ( पा० सू० ६ । ४ । ११९ ) इत्येत्वम् । " असिद्धवदत्राभात् " ( पा० सू० ६ । ४ । २२ ) इत्यसिद्धवद्भावाद् "हुझल्भ्यो हेर्धिः" ( पा० सू० ६ । ४ । १०१ ) इति । धित्वम् । ' प्रतिग्रहीत्रे ' ' मह्यम् ' च ' मयः ' सुखं भव । ' मयः ' इति सुखनामधेयम् ( निघं० ३ । ६ । ७ ) । श्रूयते च तैत्तिरीयके–" मयो मह्यमस्तु प्रतिग्रहीत्र इत्याह । यद्वै शिवं तन्मयः " (तै. शा. २ । २।९)इति । एवमेवोपरितना अपि मन्त्रा व्याख्येयाः ॥ २८–३१ ॥

हिरण्यादिदानानंतरं यत्किंचिन्मन्थादिदानं विधत्ते–अथेत्यादि । 'अथ' उक्तदक्षिणादानानन्तरम् अन्यद्वस्तु यदि दद्यात् तदा कामेनैव यथैवामुष्मिँल्लोके स्वर्गेऽप्यस्त्विति दद्यात् । न पुनरिज्यायामपि पूर्वोक्तदक्षिणाद्रव्यवदवश्यं दातव्यमित्यर्थः । इच्छया दत्तस्य वस्तुनः प्रतिग्रहमन्त्रमाह–तत्प्रत्येति कोऽदादिति[1] । मन्त्रस्तु प्रश्नोत्तररूपमर्थमाह । तत्र 'कोऽदात्, कस्मा अदात्' इत्यनेन प्रश्नोऽभिधीयते । 'कामोऽदात्' इत्यादिनोत्तरम् । दाता च स्वर्गादिफलं प्रेच्छन् ददाति, प्रतिग्रहीता च भोगेच्छया प्रतिगृह्णातीति सर्वस्यापि ' काम ' एव कर्तेत्युच्यते । कामैतत्त इति । हे काम ! यतः सर्वस्यापि त्वमेव कर्त्ता; तस्मादेतत् प्रतिगृहीतं वस्तु 'ते' त्वदीयमेव; न पुनरस्मदीयमित्यर्थः ।

प्रतिग्रहणमन्त्रेषु तत्तद्देवतावाचकशब्दोच्चारणस्य प्रयोजनमाह–तद्देवताया अतिदिशतीति । ' तत् ' तेन मन्त्रेषु देवतावाचकशब्दोच्चारणेन ' देवतायै ' देवतार्थम् ' अतिदिशति ' स्वकीयं प्रतिग्रहीतृत्वमारोपयति । देवतामेव प्रतिग्रहस्य कर्त्रीं करोति । प्रतिग्रहीतुरात्मनः प्रतिग्रहीतृत्वे दोषम्, देवतारूपेण प्रतिग्रहीतृत्वे गुणं च तैत्तिरीयकश्रुतिराह–"देवा वै वरुणमयाजयन् । स यस्यै यस्यै देवतायै दक्षिणामनयत् । तामव्लीनात् । तेऽब्रुवन् । व्यावृत्य प्रतिगृह्णाम । तथानो दक्षिणा न व्लेष्यतीति । ते व्यावृत्य प्रत्यगृह्णन् । ततो वै तान् दक्षिणानाव्लीनात् । य एवं विद्वान् व्यावृत्य दक्षिणां प्रतिगृह्णाति । नैनं दक्षिणाव्लीनाति "( तै. शा. २।२।९ ) इति । तस्माद्देवतायै प्रतिग्रहीतृत्वे निर्दिष्टे स्वात्मनो न कश्चिद्दोषो भवतीत्यर्थः ॥ ३२ ॥

अत्रैव केषांचिन्मतमाह–तदाहुरित्यादि । ' तत् ' तस्मिन्प्रतिग्रहे केचिदाहुः । किमिति ?

१–कोऽदादित्यन्यत् । इच्छतो मंत्रवचनम् । का. श्रौ. सू. । १० । ५५ । ५६ ।

ऽएव श्वःश्वः श्रेयान्भवति श्वःश्वो ह वै श्रेयान्भवति य एवं विद्वान्प्रतिगृह्णाति तद्यथा समिद्धे जुहुयादेवमेतां जुहोति यामधीयते ददाति तस्मादधीयन्नातिदिशेत् ॥ ३३ ॥

इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ४-३-१ ॥ ( ३ । ४ ) ॥

त्रया वै देवाः । ( ० ) वसवो रुद्रा ऽआदित्यास्तेषां विभक्तानि सवनानि वसूनामेव प्रातःसवनꣳ रुद्राणां माध्यन्दिनꣳ सवनमादित्यानां तृतीयसवनं तद्वाऽअमिश्रमेव वसूनां प्रातःसवनममिश्रꣳ रुद्राणां माध्यन्दिनꣳ सवनं मिश्रमादित्यानां तृतीयसवनम् ॥ १ ॥

---

भवति-य एवं विद्वान्प्रतिगृह्णाति । तद् यथा समिद्धे जुहुयाद्-एवमेतां जुहोति । यामधीयते ददाति । तस्मादधीयन्नातिदिशेत् ॥ ३३ ॥

अथ तृतीयसवनग्रहाः ।

आदित्यग्रहः ।

त्रया वै देवाः-वसवो, रुद्रा, आदित्याः । तेषां विभक्तानि सवनानि । वसूनामेव प्रातःसवनम् । रुद्राणाम्माध्यन्दिनं सवनम् । आदित्यानां तृतीयसवनम् । तद्वाऽअमिश्रमेव वसूनां प्रातःसवनम् । अमिश्रं रुद्राणां माध्यन्दिनं सवनम् । मिश्रमादित्यानां तृतीयसवनम् ॥ १ ॥

---

' देवतायै ' ' मा, अतिदिशेत् ' किन्तु स्वयमेव प्रतिगृह्णीयादिति । तथा वदतां च तेषामयमाशयः-' इदम् ' इदानीं च ' यां देवताम् ' हविःप्रदानात् ' समिन्द्धे ' दीपयति, ' सा दीप्यमाना ' सत्युत्तरोत्तरं श्रेयस्करी ' भवति ' । सामान्येनैव तदुक्तम् । ' इदं वै यस्मिन्नग्नौ ' इत्यादिना विशेषविषयः प्रदर्श्यते । ' य एवं विद्वान् ' प्रतिग्रहीता स्वयमेव ' प्रतिगृह्णीयात् ' तदुत्तरोत्तरम् ' श्रेयान् ' एव ' भवति ' । ' अधीयते ' अधीयानाय । व्यत्ययेन परस्मैपदम् ( पा. सू. ३ । १ । ८९ ) । ' याम् ' दक्षिणाम् ' ददाति ' सा ' समिद्धे ' अग्नौ प्रक्षिप्तं हविरिव भवति । तस्मादधीयानो देवतायै नातिदिशेत् । अयमर्थः-दाता यस्मै ददाति तस्मै देवतारूपायैव ददामीति ददाति । तथा च सति तस्य साद्गुण्यसम्भवादुत्तरोत्तरं श्रेय एव भवति । तस्माद्दातुः साद्गुण्यसम्पादनेन श्रेयोनिमित्तं देवताया अतिदिश्यन् न प्रतिगृह्णीयात् । किन्तु स्वयमेव प्रतिगृह्णामीत्येवोच्चार्य गृह्णीयादित्यर्थः ॥ ३३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥ ४-३-४ ॥

दक्षिणादानानन्तरं मरुत्वतीयमाहेन्द्रोक्थ्यग्रहाणां यागे कृते माध्यन्दिनं सवनं सन्तिष्ठते । ततस्तृतीयसवनस्योपक्रमे आदित्यग्रहयागः क्रियते । तमेतमादित्यग्रहयागं तृतीयसवनादौ विधातुं प्रस्तौति-**त्रया वै देवा** इत्यादिना । वसूनामेवेति । ' प्रातःसवनम् ' गायत्रीछन्दस्कम् । गायत्रीपादश्चाष्टाक्षरः सा चाक्षरगताष्टत्वसंख्या वसुष्वपि विद्यते । " अष्टौ वसवः " इति वसूनामप्यष्टत्वात् । अतः संख्याद्वारा गायत्रीसम्बन्धाद्

 


(न्ते) ते हादित्या ऊचुः । (य॒) यथेदममिश्रं वसूनां प्रातःसवनममिश्रꣳ रुद्राणां माध्यन्दिनꣳ सवनमेवं न इमं पुरा मिश्राद्ग्रहं जुहुथेति तथेति देवा अब्रुवंस्ते सꣳस्थितऽएव माध्यन्दिने सवने पुरा तृतीयसवनादेतमजुहवुः स एषोऽप्येतर्हि तथैव ग्रहो हूयते सꣳस्थितऽएव माध्यन्दिने सवने पुरा तृतीयसवनात् ॥ २ ॥

(ते) ते हादित्या ऊचुः । (नै) नेव वाऽइतरस्मिन्त्सवने स्मो नेवेतरस्मिन्यद्वै नो रक्षाꣳसि न हिꣳस्युरिति ॥ ३ ॥

ते ह द्विदेवत्यानूचुः । (चू) रक्षोभ्यो वै बिभीमो हन्त युष्मान्प्रविशामेति ॥ ४ ॥

ते ह द्विदेवत्या ऊचुः । किमस्माकं ततः स्यादित्यस्माभिरनुवषट्कृता भविष्यथेत्यु हादित्या ऽऊचुस्तथेति ते द्विदेवत्यान्प्राविशन् ॥ ५ ॥

---

ते हादित्या ऊचुः—यथेदममिश्रं वसूनां प्रातःसवनम्, अमिश्रं रुद्राणां माध्यन्दिनं सवनम्, एवं न इमं पुरा मिश्राद्ग्रहं जुहुथेति । तथेति देवा अब्रुवन् । ते संस्थितऽएव माध्यन्दिने सवने पुरा तृतीयसवनादेतमजुहवुः । स एषोऽप्येतर्हि तथैव ग्रहो हूयते—संस्थितऽएव माध्यन्दिने सवने पुरा तृतीयसवनात् ॥ २ ॥

ते हादित्या ऊचुः—नेव वाऽइतरस्मिन्त्सवने स्मो, नेवेतरस्मिन् । यद्वै नो रक्षांसि न हिंस्युरिति ॥ ३ ॥

ते ह द्विदेवत्यानूचुः—रक्षोभ्यो वै बिभीमो, हन्त युष्मान्प्रविशामेति ॥ ४ ॥

ते ह द्विदेवत्या ऊचुः—किमस्माकं ततः स्यादिति । अस्माभिरनुवषट्कृता भविष्यथ—इत्यु हादित्या ऊचुः । तथेति ते द्विदेवत्यान् प्राविशन् ॥ ५ ॥

---

गायत्रं प्रातःसवनं वसूनामेव विभक्तम् । एवमुत्तरयोरपि सवनयोः क्रमेण त्रैष्टुभजागतत्वादुक्तप्रकारेण 'रुद्राणां माध्यन्दिनं सवनम्, आदित्यानां तृतीयसवनम्' इत्यवगन्तव्यम् । तद्वा अमिश्रमिति । प्रातःसवनं केवलं गायत्रमतश्छन्दोऽन्तरसम्बन्धविरहादमिश्रम् । माध्यन्दिनं सवनं छन्दोऽन्तरसम्बन्धसहितमपि केवलमिन्द्रदेवत्यमिति तदप्यमिश्रम् । माध्यन्दिनं सवनं केवलमिन्द्रदेवत्यमिति क्वचिच्छ्रूयते । "प्रातःसुतमपिबो हर्यश्व माध्यन्दिनं सवनं केवलं ते"—इति । तृतीयसवनं तु छन्दोऽन्तरसङ्गतत्वान्नानादेवत्यत्वाच्च मिश्रमित्येवं द्रष्टव्यम् । पुरा मिश्रादिति । 'मिश्रात्' तृतीयसवनात् पूर्वमित्यर्थः । विधत्ते—स एषोऽपीत्यादि । 'संस्थित एव' इत्येवकारेण माध्यन्दिनसवनसमाप्त्यनन्तरमविलम्ब्याभिधीयते । नन्वादित्यग्रहस्तृतयीसवनस्योपक्रमरूपः, तत्कथम् ? पुरा तृतीयसवनमादित्यात् । नादित्यग्रहस्य प्राक् तृतीयसवनाद्विभेदेन निर्देशः । एवं तर्ह्यनेनैव "पुरा तृतीयसवनात्"—इति वचनेनादित्यग्रहस्तृतीयसवनाद्बहिर्भूत इत्यवगम्यते । अत एव कात्यायनः—"माध्यन्दिनसवनसमाप्तौ प्रसूतीनं भवति" इत्युक्त्वाऽऽदित्यग्रहं विधाय तत्समाप्तौ प्रसूतान्तं भवति "अत्र

(न्त्स) स यत्र प्रातःसवने । द्विदेवत्यैः प्रचरति तत्प्रतिप्रस्थाताऽऽदित्यपात्रेण द्रोणकलशात्प्रतिनिगृह्णीतऽउपयामगृहीतोऽसीत्येतावताध्वर्युरेवाश्रावयत्यध्वर्योरनु होमं जुहोति प्रतिप्रस्थाताऽऽदित्येभ्यस्त्वेति सꣳस्रवमवनयत्येतावतैवमेव सर्वेषु ॥ ६ ॥

तद्यत्प्रतिप्रस्थाता प्रतिनिगृह्णीते । द्विदेवत्यान्वै प्राविशन्नस्माभिरनुवषट्कृता भविष्यथेत्यु हादित्या ऊचुर्यां वाऽअमूं द्वितीयामाहुतिं जुहोति स्विष्टकृते वै तां जुहोति स्विष्टकृतो वाऽएतेऽनुवषट्क्रियन्ते तथो हास्यैतेऽनुवषट्कृताऽ इष्टस्विष्टकृतो भवन्त्युत्तरार्द्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्द्धे जुहोति ॥ ७ ॥

---

स यत्र प्रातःसवने द्विदेवत्यैः प्रचरति—तद् प्रतिप्रस्थाताऽऽदित्यपात्रेण द्रोणकलशात्प्रतिनिगृह्णीते । “ उपयामगृहीतोऽसि ”—( वा० सं० ८ । १ ) इति । एतावताऽध्वर्युरेवाश्रावयति । अध्वर्योरनु होमं जुहोति प्रतिप्रस्थाता । “ आदित्येभ्यस्त्वा ”—( वा० सं० ८ । १ ) इति । संस्रवमवनयत्येतावता । एवमेव सर्वेषु ॥ ६ ॥

तद् यत्प्रतिप्रस्थाता प्रतिनिगृह्णीते । द्विदेवत्यान्वै प्राविशन् । अस्माभिरनुवषट्कृता भविष्यथ—इत्यु हादित्या ऊचुः । यां वा अमूं द्वितीयामाहुतिं जुहोति—स्विष्टकृते वै तां जुहोति । स्विष्टकृतो वा एतेऽनुवषट्क्रियन्ते । तथो हास्यैतेऽनुवषट्कृता इष्टस्विष्टकृतो भवन्ति । उत्तरार्द्धे जुहोति । एषा ह्येतस्य देवस्य दिक् । तस्मादुत्तरार्द्धे जुहोति ॥ ७ ॥

---

सर्पणम् ”—इति सर्पणमभिधाय “ आदित्यग्रहस्य प्राक् तृतीयसवनश्रुतेः ”—( का. श्रौ. सू. १० । ९८ ) । इति सूत्रयामास ।

प्रकृतादित्यग्रहोपयोगिनीमाख्यायिकामाह—ते हादित्या ऊचुरित्यादिना । यद्वा इति । येनोपायेन मा ‘ रक्षांसि न हिंस्युः ’ इति विचार्य्येत्यर्थः । ‘ वै ’ शब्दः स्मरणे ॥ १—५ ॥

अस्माभिरनुवषट्कृता भविष्यथ इति प्रतिश्रुतं द्विदेवत्यानामनुवषट्कारं दर्शयितुं द्विदेवत्ययागकाले तदुपयुक्तं प्रयोगमाह—स यत्रेत्यादि । ‘ सः ’ अध्वर्युः प्रातःसवने यदा ‘ द्विदेवत्यैः प्रचरति ’ । तदा ‘ प्रतिप्रस्थाता ’ ‘ आदित्यपात्रेण ’ ‘ द्रोणकलशात् प्रतिनिगृह्णीते ’ द्विदेवत्यग्रहस्य द्वितीयत्वेन गृह्णीते । तत्र “उपयामगृहीतोऽसि”—इति एतावन्मन्त्रः । अध्वर्युरेवाश्रावयेत् । न पुनः प्रतिप्रस्थाता । अध्वर्युणा कृतं होममनुलक्ष्य जुहुयात् । आदित्यस्थाल्यामासिञ्चति । “ आदित्येभ्यस्त्वा ”—इति ‘ सर्वेषु ’ ऐन्द्रवायवमैत्रावरुणाश्विनेषु ‘ एवमेव ’ उक्तप्रकारेणैव प्रतिनिग्रहणादिकं कुर्यादित्यर्थः ॥ ६ ॥

प्रतिप्रस्थातृकृतया द्वितीयाहुत्या द्विदेवत्यानामनुवषट्कारसिद्धिमाह—यां वा अमूमिति । ‘ याम् ’ ‘ अमूम् ’

---

१—द्विदेवत्यैश्चरति । व्वायव इंद्रवायुभ्यामनुवाचयति प्रतिप्रस्थाताऽऽदित्यपात्रेण द्रोणकलशादुपयामगृहीतोऽसीति गृहीत्वा-गृहीत्वा द्विदेवत्याननुजुहोत्युत्तरार्द्धे । का. श्रौ. सू. ९ । २०० । २०१ ।

२—शेष २ शेषमादित्यस्थाल्यामासिंचत्यादित्येभ्यस्त्वेति । का. श्रौ. सू. ९ । २०६ ।

युद्देव प्रतिप्रस्थाता प्रतिनिगृह्णीते। द्विदेवत्यान्वै प्राविशन्त्स यानेव प्राविशंस्तेभ्य एवैतन्निर्मिमीतेऽथापि दधाति रक्षोभ्यो ह्यबिभयुर्व्विष्णऽउरुगायैष ते सोमस्तᳶ रक्षस्व मा त्वा दभन्निति यज्ञो वै व्विष्णुस्तद्यज्ञायैवैतत्परिददाति गुप्त्याऽअथाह सᳶस्थितऽएव माध्यन्दिने सवने पुरा तृतीयसवनादेहि यजमानेति ॥ ८ ॥

ते संप्रपद्यन्ते । ( न्तेऽध्व ) अध्वर्युश्च यजमानश्चाग्नीध्रश्च प्रतिप्रस्थाता चोन्नेताऽथ योऽन्यः परिचरो भवत्युभे द्वारेऽअपिदधति रक्षोभ्यो ह्यबिभयुरथाध्वर्युरादित्यस्थालीं चादित्यपात्रं चादत्ते स उपर्युपरि पूतभृतं व्विगृह्णाति नेद्यवश्चोतदिति ॥ ९ ॥

---

यद्वेव प्रतिप्रस्थाता प्रतिनिगृह्णीते । द्विदेवत्यान्वै प्राविशन् । स यानेव प्राविशन्–तेभ्य एवैतन्निर्मिमीते । अथापिदधाति रक्षोभ्यो ह्यबिभयुः । " विष्णऽउरुगायैष ते सोमस्तं रक्षस्व मा त्वा दभन् "–( वा. सं. ८ । १ ) इति । यज्ञो वै विष्णुः । तद् यज्ञायैवैतत् परिददाति गुप्त्यै । अथाह–संस्थिते एव माध्यन्दिने सवने पुरा तृतीयसवनाद् एहि यजमान इति ॥ ८ ॥

ते सम्प्रपद्यन्ते–अध्वर्युश्च, यजमानश्च, आग्नीध्रश्च, प्रतिप्रस्थाता च, उन्नेता । अथ योऽन्यः परिचरो भवति । उभे द्वारेऽअपिदधाति । रक्षोभ्यो ह्यबिभयुः । अथाध्वर्युरादित्यस्थालीं चादित्यपात्रं चादत्ते । स उपर्युपरि पूतभृतं विगृह्णाति–नेद्यवश्चोतदिति ॥ ९ ॥

---

' द्वितीयामाहुतिं जुहोति ' स्विष्टकृदर्थं हि तां करोति । यतः ' एते ' सर्वेऽपि ग्रहाः ' स्विष्टकृतः ' अर्थेऽनुवषट्क्रियन्ते । सोमस्याग्रे " वीही वौषट् " इत्यनेन क्रियमाणो होमोऽनुवषट्कारः । ' तथो ह ' तथैवेतरग्रहवद् 'अस्य' यज्ञस्य सम्बन्धिनः 'एते' द्विदेवत्या अपि प्रतिप्रस्थातृकृतयाऽऽहुत्याऽनुवषट्कृताः । अत एव ' स्विष्टकृतो भवन्ति ' । उक्तहोमस्योत्तरार्द्धं देशं विधत्ते–उत्तरार्द्धे जुहोतीत्यादि । एषा हीति । ' एतस्य देवस्य ' स्विष्टकृतोऽग्नेः सम्बन्धिनी ' एषा ' उत्तरा ' दिक् ' । अग्निरिति । रुद्रस्य तूत्तरा दिगिति श्रुतिषु प्रसिद्धम् । " एषा वै रुद्रस्य दिक् " ( तै. सं. ५।४।३ ) इत्यादिश्रुतेः ॥ ७ ॥

विहितं प्रतिनिग्रहणं द्विदेवत्यसंसृष्टादित्योत्पादकत्वेन च प्रशंसति–यद्वेवेति । द्विदेवत्यग्रहयागानन्तरमादित्यपात्रेणादित्यस्थाल्याच्छादनं समन्त्रकं विधत्ते–अथेत्यादि । अत्र कात्यायनः–" समासिच्य तेनापिदधाति विष्ण उरुगाय "–( का.श्रौ.सू. ९।२०७ ) इति । तेनेति । प्रकृतत्वादादित्यपात्रेण स्थालीमपिदध्यादित्युदाहृतसूत्रस्यार्थः । रक्षोभ्यो हीति । पिधानस्य प्रयोजनाभिधानम् । हे ' विष्णो ! ' यज्ञ ' उरुगाय ' विस्तीर्णव्याप्ते ! ' एषः ' सोमः तव सम्बन्धी, अतः त्वं ' रक्षस्व ' गोपाय ' त्वा ' त्वां रक्षांसि ' मा दभन् ' मा हिंसिषुः इति मन्त्रस्यार्थः । ' यज्ञो वै विष्णुः ' इत्यदिना मन्त्रोच्चारणस्य प्रयोजनमभिधीयते । द्विदेवत्यग्रहशेषैरादित्यग्रहो गृह्यते; अतः " ते हादित्या ऊचुः "–( श. प. ४ । ३ । ५ । २ ) इत्यादिना । ' अथापिदधाति यज्ञायैवैतत् परिददाति गुप्त्यै ' इत्यन्तेन तच्छेषप्राप्तिप्रचारः प्रदर्शितः ।

( त्यु ) अथ गृह्णाति । कुदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ॥ उपो- पेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यतऽआदित्येभ्यस्त्वेति ॥ १० ॥

तं वै नोपयामेन गृह्णीयात् । ( द्रु ) अग्रे ह्येवैष ऽउपयामेन गृहीतो भवत्यजामितायै जामि ह कुर्याद्यदेनमत्राप्युपयामेन गृह्णीयात् ॥ ११ ॥

---

अथ गृह्णाति–" कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते, आदित्येभ्यस्त्वा "-( वा. सं. ८ । २ ) इति ॥ १० ॥

तं वै नोपयामेन गृह्णीयात् । अग्रे ह्येवैष उपयामेन गृहीतो भवति--अजामितायै । जामि ह कुर्याद् । यदेनमत्राप्युपयामेन गृह्णीयात् ॥ ११ ॥

---

अथ विहिते काले ग्रहस्य ग्रहणात् प्राक्कर्तव्यमनुष्ठानविशेषं विधत्ते–अथाह संस्थित एवेत्यादिना । योऽन्यः परिचरो भवतीति । ' यः ' च ' अन्यः ' जनः परिचरवर्ती ' भवति ' अत्र परिचर इत्यनेन पत्नी विवक्ष्यते, सा हि हविर्द्धानं प्रपद्यते । तथा च कात्यायनः–" हविर्द्धानं प्रविशन्ति अध्वर्युयजमानप्रतिप्रस्थात्रग्नीदुन्नेतारः । पत्नी चापरेण "–( का. श्रौ. सू. १० । ८८, ८९ ) इति । स उपर्युपरीति । ' पूतभृतमुपर्युपरि ' पूतभृतः समीप उपरिप्रदेशे । " उपर्यध्यधसः सामीप्ये "–( पा. सू. ८ ।१।७ ) इति द्विर्भावः । "धिगुपर्यादिषु त्रिषु । द्वितीयाऽऽम्रेडितान्तेषु" ( पा. सू. १ । ४।४८ वा. २ ) इति द्वितीया । तच्च नैव भूमौ सोमबिन्दुः क्षरत्वित्यभिप्रायेण गृह्णीयादित्यर्थः ॥ ८ ॥ ९ ॥

समन्त्रकग्रहणं विधत्ते–अथ गृह्णाति कदा चनेत्यादि । हे इन्द्र ! ' कदा चन ' कदाचिदपि ' स्तरीः ' हिंसको न भवसि । अथवा स्तरीराच्छादकः स तु विस्तृतं वितत्य धनानामाच्छादको न वितरसि । किंतु ' दाशुषे ' हविर्दत्तवते यजमानाय फलदानार्थम् 'सश्चसि' गच्छसि । 'उप' शब्दः पादपूरणे । " प्रसमुपोदः पादपूरणे"( पा. सू. ८।१।६ ) इति द्विर्वचनम् । ' इत् ' इत्यवधारणम् । ' नु ' शब्दः क्षिप्रवचनः । हे मघवन् ! ' इन्नु ' क्षिप्रमेव ' देवस्य ' ' ते ' तव ' दानम् ' देयं हविः ' भूय इन्नु ' पुनरेव ' पृच्यते ' सम्बध्यते । यजमानेन हविर्दीयत इत्यर्थः । हे सोमग्रह ! ' उपयामेन ' गृहीतोऽसि त्वाम् ' आदित्येभ्यः ' गृह्णामीति शेषः ॥ १० ॥

अत्र इन्द्रनामभिरादित्य एव स्तूयते मन्त्रान्ते " उपयामगृहीतोऽसि "–इत्यस्य निषेधं सकारणमाह–तं वै नोपयामेनेत्यादि । अग्रे हीति । द्विदेवत्यानां यागकाले प्रतिप्रस्थाता उपयामगृहीतोऽसि गृहीतः खलु । तस्मात्तस्यैतन्मन्त्रशेषत्वादत्र तन्न प्रयोक्तव्यम् । अत एव तत्र उपयामगृहीतोऽसीत्येतावत्युक्तम् । स्पष्टमन्यत् ॥ ११ ॥

---

१–अपिहितद्वार आदित्यं पात्रमादाय स स्रवं श्चोपरि पूतभृतस्तत आदित्यग्रहं गृह्णाति सस्रवेभ्यः कदा चनेति । का. श्रौ. सू. १० । ९० ।

( हु ) अथापगृह्य पुनरानयति । कदा चन प्रयुच्छस्युभे निपासि जन्मनी ॥ तुरीयादित्य सवनं त इन्द्रियमातस्थावमृतं दिव्यादित्येभ्यस्त्वेति ॥ १२ ॥

( त्यु ) अथ दधि गृह्णाति । ( त्या ) आदित्यानां वै तृतीयसवनमादित्यान्वाऽअनु पशवस्तत्पशुष्वेवैतत्पयो दधाति तदिदं पशुषु पयो हितं मध्यत ऽइव गृह्णीयादित्याहुर्मध्यतऽइव हीदं पशूनां पय इति पश्चादिव त्वेव गृह्णीयात्पश्चादिव हीदं पशूनां पयः ॥ १३ ॥

---

अथापगृह्य पुनरानयति–" कदा चन प्रयुच्छस्युभे निपासि जन्मनी । तुरीयादित्य सवनं तऽइन्द्रियमातस्थावमृतं दिव्यादित्येभ्यस्त्वा "–( वा. सं. ८।३ ) इति ॥ १२ ॥

दधिग्रहः ।

अथ दधि गृह्णाति । आदित्यानां वै तृतीयसवनम्, आदित्यान्वाऽअनु पशवः । तत् पशुष्वेवैतत्पयो दधाति । तदिदं पशुषु पयो हितम् । मध्यत इव गृह्णीयादित्याहुः । मध्यत इव हीदं पशूनां पय इति । पश्चादिव त्वेव गृह्णीयात् । पश्चादिव हीदं पशूनां पयः ॥ १३ ॥

---

उक्तमन्त्रविशिष्टग्रहणानन्तरं पात्रमपगृह्य पुनरपि च समन्त्रकं ग्रहणं विधत्ते–अथापगृह्येत्यादि[1] । अत्र आदित्यग्रह एवामन्त्र्यते । हे ग्रह ! ' कदा चन ' कदाचिदपि ' प्रयुच्छसि ' न प्रमाद्यसि । ' युच्छ प्रमादे ' ( धा. पा. भ्वा. प. २१४ ) इति धातुः । प्रशब्दोऽत्र धात्वर्थनिवृत्तिवचनः । यथास्मरणमिति यागनिष्पादनरूपं स्वकार्यं प्रति न कदाचिदपि प्रमादं गच्छसीत्यर्थः । तदेवावधानं दर्शयितुमाह–उभे निपासि जन्मनी इति । यजमानस्य वर्तमानभविष्यल्लक्षणे ' उभे ' ' जन्मनी ' ' निपासि ' नियमेन पाहि[2] । अधुना आदित्यमेव चतुर्थसवनत्वेन रूपयन्नामन्त्रयते–हे आदित्यग्रह ! " दित्यदित्या–" ( पा. सू. ४।१।८९ )–इत्यादिना देवतार्थे ण्यप्रत्ययः । ' तुरीय ' चतुर्थसवनात्मक, स एकोऽप्येतर्हि तथैव ग्रहो हूयते । संस्थित एव माध्यन्दिने सवने पुरा तृतीयसवनात्पूर्वकालस्य विहितत्वादादित्यग्रहस्य चतुर्थसवनात्मकत्वम् । ' ते ' तव सम्बन्धि चतुर्थसवनम् ' इन्द्रियम् ' इन्द्रस्य प्रीतिकरम् ' दिवि ' द्युलोके ' अमृतम् ' नास्मिन् मृतमस्तीत्यमृतम्, अमरणहेतुः ' आतस्थौ ' आस्थितम् । हे सोम ! ' त्वाम् ' ' आदित्येभ्यः ' गृह्णामि ॥ १२ ॥

गृहीते सोमरसे दधिग्रहणं सार्थवादं विधत्ते[3]–अथ दधि गृह्णातीति । आदित्यान्वाऽअनु पशवः इति । ' अनु '–शब्दोऽत्र "हीने" ( पा. सू. १ । ४ । ८६ ) इति हीनार्थे कर्मप्रवचनीयत्वात् " कर्मप्रवचनीययुक्ते द्वितीया " ( पा. सू. १ । ४ । ८३ ) इति द्वितीया । अत्रादित्यानां वृष्टिप्रदानद्वारा पशूपकारित्वात् प्राधान्यम्, पशूनामुपकार्यत्वाद्धीनत्वम् । अनेनैवाभिप्रायेण तैत्तिरीयके पश्वादित्यानामभेदः श्रूयते–" पशवो वा एते यदादित्यः "–( तै० सं० ६ । ५ । ६ । ४ ) इति ॥

---

१–अपगृह्य पुनः कदा चनेति का. श्रौ. सू. १०।९१ कर्कभाष्यम् । २–महीधरस्तु 'नितरां पालयसि ' इति वर्तमानानुसारिणीं क्रियामाह । ३–दध्ना श्रीणात्येनं पश्चिमेऽन्ते मध्ये वा यज्ञो देवानामिति । का. श्रौ. सू. १० । ९२ ।

( यो ) युद्धेव दुधि गृह्णाति । हुतोच्छिष्टा वाऽएते सᳫँस्रवा भवन्ति नालमाहुत्यै तानेवैतत्पुनराप्याययति तथाऽलमाहुत्यै भवन्ति तस्माद्दधि गृह्णाति ॥ १४ ॥

स गृह्णाति । यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादᳫँहोश्चिद्या वरिवोवित्तराऽसदादित्येभ्यस्त्वेति ॥ १५ ॥

---

यद्वेव दधि गृह्णाति । हुतोच्छिष्टा वाऽएते संस्रवा भवन्ति–नालमाहुत्यै । तानेवैतत्पुनराप्याययति । तथाऽलमाहुत्यै भवन्ति । तस्माद्दधि गृह्णाति ॥ १४ ॥

स गृह्णाति–" यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तराऽसद् । आदित्येभ्यस्त्वा "–( वा० सं० ८।४ ) इति ॥ १५ ॥

---

दधिग्रहणस्य स्थानविषये केषाञ्चिन्मतमुपन्यस्य स्वमतमेव निगमयति–मध्यत इवेत्यादि । ' इव '–शब्दो वाक्यालङ्कारे । मध्यस्थाने । " सार्वविभक्तिकस्तसिः "–( पा.सू. ५।४।४४। वा. १ ) इति सप्तम्यर्थे तसिः " कदा चन " इत्यादिमन्त्रद्वयसाध्ये द्वे ग्रहणे, तयोर्मध्ये दधि ' गृह्णीयात् ' । एवं च पशूनां मध्यभागे पयसोऽवस्थानान्मध्य एव पयो निहितं भवतीति केचिच्छाखिन आहुः । एतच्च तैत्तिरीयकशाखामतम् । तत्र–" दध्ना मध्यतः श्रीणात्यूर्जमेव पशूनां मध्यतो दधाति "–( तै० सं० ६।५।६।४ ) इत्याम्नातत्वात् । नैतदादरणीयम् । किन्तु प्रग्रहणादनन्तरमेव ' गृह्णीयात् ' । यतः ' पशूनां पयः ' पश्चाद्भाग एवावतिष्ठत इत्यर्थः । अत्र पयसो मध्यभागावस्थानमात्रमभिप्रेत्य शाखान्तरीयैर्मध्यतो ग्रहणमभिहितम् । पशूनां मध्यशरीरे पयो नावतिष्ठते, किंतु शरीरस्य पश्चाद्भागेऽवतिष्ठते । अतः पश्चादेव ग्रहणं युक्तमित्येतद्ब्राह्मणस्याभिप्रायः ॥ १३ ॥

दधिग्रहणमादित्यग्रहस्य सम्पूर्णताहेतुत्वेन प्रशंसति–यद्वेव दधि गृह्णातीत्यादि । ' एते ' आदित्यग्रहार्थाः सोमाः हुतोच्छिष्टत्वात् संस्रावणीयाः प्रतिपत्त्यर्हाः सन्त आहुत्यर्थं ' न ' पर्याप्ताः ' भवन्ति ' । एत इति बहुवचनं द्विदेवत्यग्रहगतसोमापेक्षम् । तस्मात् ' तानेव ' सोमानेतेन दधिग्रहणेन समर्द्धयति । समर्द्धिताः 'आहुत्यै' पर्याप्ताः ' भवन्ति ' इति ' दधि गृह्णीयात् ' इत्यर्थः ॥ १४ ॥

विहिते दधिग्रहणे मन्त्रं विनियुङ्क्ते–स गृह्णाति यज्ञो देवानामित्यादि ( का. श्रौ. सू. १०।९१ ) । योऽस्मदीयो ' यज्ञो ' ' देवानाम् ' आदित्यानाम् ' सुम्नम् ' सुखं ( निघं० ३।६।१६ ) सम्पादयितुम् ' प्रत्येति ' प्राप्नोति । यज्ञे हविःप्रदानेन देवानां तृप्तिसम्पादनसुखमुत्पद्यते । तस्माद् हे ' आदित्यासः ' आदित्याः ! " आज्जसेरसुक् "–( पा० सू० ७।१।५० ) इति असुगागमः । ' मृडयन्तः ' अस्मान्सुखयन्तो ' भवता ' सांहितो दीर्घः । किंच ' वः ' युष्माकम् ' सुमतिः ' शोभना भक्तानुग्रहपरा मतिः सा ' अर्वाची ' अर्वागञ्चनशीला अस्मदभिमुखी ' आ ' ' ववृत्यात् ' आवर्तताम् । पुनरपि मतिर्विशेष्यते

तमुपाᳬंशुसवनेन मेक्षयति । विवस्वान्वाऽएषऽआदित्यो निदानेन यदुपाᳬंशुसवनऽआदित्यग्रहो वाऽएष भवति तदेनᳬं स्वऽएव भागे प्रीणाति ॥ १६ ॥

तं नु दशाभिर्नु पवित्रेणोपस्पृशति । ( त्ये ) एते वै शुक्रवती रसवती सवने यत्प्रातःसवनं च माध्यन्दिनं च सवनमथैतन्निर्धीतशुक्रं यत्तृतीयसवनᳬं स यन्नु दशाभिर्नु पवित्रेणोपस्पृशति तेनो हास्यैतच्छुक्रवद्रसवत्तृतीयसवनं भवति तस्मान्नु दशाभिर्नु पवित्रेणोपस्पृशति ॥ १७ ॥

---

तमुपांशुसवनेन मेक्षयति । विवस्वान्वाऽएष आदित्यो निदानेन, यदुपांशुसवनः । आदित्यग्रहो वा एष भवति । तदेनं स्वऽएव भागे प्रीणाति ॥ १६ ॥

तं न दशाभिर्न पवित्रेणोपस्पृशति । एते वै शुक्रवती रसवती सवने—यत्प्रातःसवनं च माध्यंदिनं च सवनम् । अथैतन्निर्धीतशुक्रं तृतीयसवनम् । स यन्न दशाभिर्न पवित्रेणोपस्पृशति—तेनो हास्यैतच्छुक्रवद्रसवत्तृतीयसवनं भवति । तस्मान्न दशाभिर्न पवित्रेणोपस्पृशति ॥ १७ ॥

---

' अंहोश्चिया वरिवोवित्तराऽसत् ' । या सुमतिः ' अंहोश्चित् ' " अहि गतौ " ( धा. पा. भ्वा. आ. ६३६ ) इत्यस्मादौणादिक उत्प्रत्ययः । सर्वे गत्यर्था ज्ञानार्था भवन्तीति ' अंहु ' शब्दो विद्वांसमाचष्टे, स चात्र यजमानः । चिदिति निपातोऽपिशब्दार्थे । विदुषो यजमानस्यापि ' वरिवोवित्तरा ' वरिवो धनम् ( निघं०—२ । १० । ९ ) तद् विन्दति वेदयति लम्भयतीति वरिवोवित् । अतिशयेन वरिवोविद् वरिवोवित्तरा, तादृशी ' असत् ' स्यात् । आ सुमतिः अस्मदभिमुखी सत्यावर्त्ततामिति संबन्धः । हे दधि ! आदित्येभ्यस्त्वां गृह्णामीति शेषः ॥ १९ ॥

आदित्यग्रहस्योपांशुसवनाख्येन ग्राव्णाऽऽलोडनं विधत्ते—तमुपांशुसवनेन मेक्षयतीति । 'मेक्षयति' आलोडयेत् । विवस्वान्वा इति । ' उपांशुसवनः ' इति यत् ' एषः ' ' निदानेन ' कारणात्मना ' विवस्वान् ' नामकः ' आदित्यः ' एव । अत एव तैत्तरीयकश्रुतिः—" एष वै विवस्वानादित्यो यदुपांशुसवनः "—( तै० सं० ६ । ६ । ६ । ९ ) इति । अतस्तेनादित्यग्रहस्यालोडने स्वकीये भाग आदित्यमेव प्रीणितवान् भवतीत्यर्थः ॥ १६ ॥

ग्रहान्तरसाधारण्येन ग्रहणानन्तरं प्राप्तं दशापवित्रेण परिमार्जनं निषेधति—तं न दशाभिरिति । 'दशाभिः' स्वाञ्चलैः ' पवित्रेण ' पावनार्थेन वस्त्रेण ' तम् ' आदित्यग्रहम् ' नोपस्पृशति' न परिमृज्यात् । उक्तपरिमार्जननिषेधस्य प्रयोजनमाह—एते वै शुक्रवती इति । प्रातर्माध्यन्दिनसवनयोः रसवत्त्वेन तृतीयसवनस्य नीरसत्वे हेतुरस्यैवाध्यायस्य तृतीयब्राह्मणे प्रदर्शितः ( श. प. ४ । ३ । ३ । १९ ) अतो दशापवित्रेण परिमार्जनस्याकरणे तृतीयसवनस्य रसवत्त्वं भवतीति दशाभिः पवित्रेण च न परिमृज्यात् ॥ १७ ॥

---

१–उपाᳬंशुसवनेन मिश्रयति विवस्वन्नादित्येति । का. श्रौ. सू. । १० । ९२ ।

स मेक्षयति । विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्वेत्यथोन्नेत्रऽउपाᳪं᳭शुसवनं प्रयच्छत्यथाहोन्नेतारमासृज ग्राव्ण इति तानाधवनीये वा सृजति चमसे वा ॥ १८ ॥

राजानमुन्नीय । ( या ) आदित्यानां वै तृतीयसवनमादित्यान्वाऽअनु ग्रावाणस्तदेनान्त्स्वऽएव भागे प्रीणात्यपोर्णुवन्ति द्वारे ॥ १९ ॥

( रेऽअ ) अथापिधायोपनिष्क्रामति । रक्षोभ्यो ह्यबिभयुरथाहादित्येभ्योऽनुब्रूहीत्यत्र संपश्येद्यदि कामयेताश्राव्य त्वेव संपश्येदादित्येभ्यः

---

स मेक्षयति–" विवस्वन्नादित्यैष ते सोमपीथः, तस्मिन्मत्स्व "–( वा. सं. ८ । ५ ) इति । अथोन्नेत्रऽउपांशुसवनं प्रयच्छति । अथाहोन्नेतारम्–आसृज ग्राव्णा इति । तानाधवनीये वा सृजति चमसे वा ॥ १८ ॥

राजानमुन्नीय । आदित्यानां वै तृतीयसवनम्, आदित्यान्वाऽअनु ग्रावाणः । तदेनान्त्स्वऽएव भागे प्रीणाति । अपोर्णुवन्ति द्वारे ॥ १९ ॥

अथापिधायोपनिष्क्रामति । रक्षोभ्यो ह्यबिभयुः । अथाह–आदिभ्योऽनुब्रूहि इत्यत्र संपश्येत्–यदि कामयेत आश्राव्य त्वेव संपश्येत् । आदित्येभ्यः प्रेष्य, प्रियेभ्यः प्रियधामभ्यः प्रितव्रतेभ्यो

---

उपांशुसवनेन ग्रहस्य यन्मेक्षणं विहितं तदनूद्य तत्र मन्त्रं विनियुङ्क्ते–स मेक्षयति विवस्वन्निति।"विवस्वान्वा एषऽ आदित्यो निदानेन यदुपांशुसवनः"(अस्मिन्नेव ब्राह्मणे १६कं.)इति उपांशुसवनस्यादित्यत्वविधानादादित्यात्मक उपांशुसवनः सम्बोध्यते । हे विवस्वन्नामक आदित्यात्मक उपांशुसवन ! ' ते ' तव ' एषः ' ' सोमपीथः ' सोमपानम् । अतः 'तस्मिन् ' सोमपाने ' मत्स्व ' तृप्तिं प्राप्नुहि । "मद तृप्तियोगे" (धा. पा. चुं. आ. १७२) अस्माल्लोण्मध्यमपुरुषैकवचने " बहुलं छन्दसि " ( पा. सू. २ । ४ । ७६ ) इति विकरणस्य लुकि सति हि मत्स्वेतिं भवति ।

ग्रहणानन्तरं कर्तव्यमाह–अथेत्यादिना । ग्राव्ण इति । अभिषवार्थान् पाषाणान् । राजानमुन्नीयेति । सोममापूर्य ' चमसे वा ' ' विसृजति ' निदध्यादिति सम्बन्धः । तथा हि कात्यायनः–" चमसे वा सोमवति[3] " इति । " आदित्यानां वा " इत्यादिना ग्राव्णां निधानस्य प्रयोजनमाख्यायते–आदित्यान्वा अनुग्रावाण इति । अत्रापि अनुः " हीने " ( पा. सू. १ । ४ । ८६ ) इति कर्मप्रवचनीयः; तेन ' आदित्यान् ' इति " कर्मप्रवचनीययुक्ते द्वितीया " ( पा. सू. २ । ३ । ८ ) इति द्वितीया । आदित्यानामत्र ग्रावाभिमानिदेवतात्वाम्नानात्तेषां प्राधान्यम् । ग्राव्णां च हीनत्वमनेनानुशब्देन द्योत्यते । अपोर्णुवन्तीति । उभे ' द्वारे ' अपिदधाति इति हविर्धानस्य द्वारयोरपिधानं विहितम् । तदिदानीमपनयेयुरित्यर्थः ॥१८॥१९॥

द्वारपिधानापनयनानन्तरं निष्क्रमणादिकं विधत्ते–अथेत्यादि[4]। अपिधाय ग्रहं स्वकीयेन–पाणिनाऽऽदित्य-

---

१–' श्रदस्मै नरो वचसे ' दधातनेइत्यादिरेको मन्त्र इहाधिकः संहितायाम् । २–उपांशुसवनमुन्नेत्रे प्रयच्छत्यासृज ग्राव्ण इति चाह । का. श्रौ. सू. १० । ९३ । ३–आधवनीये चमसे वा सोमवति ग्राव्णोऽवधाय स्थाने निदधाति । का. श्रौ.सू.१०।९४। ४–अपावृतद्वारे निष्क्रामतो ग्रहमपिधाय पाणिना स्थाल्या वा । का. श्रौ. सू. । १० । ९५ ।

प्रेष्य प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य इति व्वषट्कृते जुहोति नानुवषट्करोति नेत्पशूनग्नौ प्रवृणजानीति प्रयच्छति प्रतिप्रस्थात्रे सꣳस्रवौ ॥ २० ॥

( वावु ) अथ पुनः प्रपद्य । ( द्या ) आग्रयणमादत्तऽउदीचीनदशं पवित्रं

---

महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य इति । वषट्कृते जुहोति । नानुवषट्करोति—नेत् पशूनग्नौ प्रवृणजानीति । प्रयच्छति प्रतिप्रस्थात्रे संस्रवौ ॥ २० ॥

अथ पुनः प्रपद्याग्रयणमादत्ते । उदीचीनदशं पवित्रं वितन्वन्ति । प्रस्कन्दयत्यध्वर्युः आग्रयणस्य संप्रगृह्णाति प्रतिप्रस्थाता । संस्रवावानयत्युन्नेता चमसेन वोदञ्चनेन वा ॥ २१ ॥

---

स्थाल्या वा आच्छाद्य हविर्द्धानान्निष्क्रामेत् । अत एव कात्यायनः—"ग्रहमपिधाय पाणिना स्थाल्या वा" ( का. श्रौ. सू. १०।९९ ) इति। रक्षोभ्यो हीति । 'हि' यस्मात्कारणादादित्याः 'रक्षोभ्यः' 'अबिभयुः' भीता बभूवुः । "भिजभ्यस्तविदिभ्यश्च" ( पा. सू. ३ । ४ । १०९ ) इति झेर्जुस् । तस्मात्तदीयस्य ग्रहस्यापिधानं युक्तमिति भावः । आश्राव्य त्वेवेति । यदि ग्रहं द्रष्टुमिच्छेत्तर्हि आश्रावणानन्तरमेव सम्पश्येत् न पुनः पूर्वोक्तानुवचनानन्तरमित्यर्थः । सम्पश्येदित्यत्र "समो गम्यृच्छि" इत्यादिके सूत्रे 'दृशिभ्यश्चेति वक्तव्यम्' ( पा. सू० १ । ३ । २९ वा० १ ) इत्यनेनात्मनेपदं न भवति, तत्राकर्मकादित्यधिकारात् । अनेनोपरि होमकाले ग्रहो नावेक्षणीय इति दर्शितम्। अत एवापस्तम्बः "अन्यत्रे(न्ने)क्षमाण आदित्यं जुहोति"-इति आ० स्तं० श्रौ० सू० ) अध्वर्योः प्रैषमुत्पाद्य कालविशिष्टं होमं विधत्ते—आदित्येभ्यः प्रेष्येत्यादि[1]। आदित्येभ्यः' इत्यादिकं प्रैषमुच्चार्य होत्रा वषट्कारे 'कृते' ग्रहमग्नौ जुहुयात् । प्रैषस्यायमर्थः—'प्रियेभ्यः' प्रीतिकरेभ्यः । "इगुपधज्ञाप्रीकिरः कः" ( पा० सू० ३ । १ । १३५ ) 'धाम' स्थानं तच्च प्रियं धाम येषां ते प्रियधामानस्तेभ्यः 'प्रियव्रतेभ्यः' व्रतमिति कर्म्मनामधेयम् । प्रियं कर्म यज्ञरूपं येषां तेभ्यः । 'महस्वसरस्य पतिभ्यः' स्वसरमित्यहर्विधीयते । ( निघ० १ । ९ । ९ ) महसां विशिष्टं स्वसरं महःस्वसरम् तस्य पतिभ्यः अहर्पतिभ्यः 'उरोः' विस्तीर्णस्य 'अन्तरिक्षस्य' 'अध्यक्षेभ्यः' साक्षिभ्यः । तत्रैव सर्वदा वर्तमानत्वात् । एवंविधेभ्य आदित्येभ्यो हविर्दातुं मैत्रावरुणयाज्यापाठार्थं होतारं प्रेरयेदित्यर्थः ।

ग्रहान्तरसाधारण्येन प्राप्तमनुवषट्कारं निषेधति—नानुवषट्करोतीति । नेत्पशूनिति । अनुवषट्कारो हि स्विष्टकृदग्न्यर्थं क्रियते । "स्विष्टकृतो वा एतेऽनुवषट्क्रियन्ते" इत्युक्तत्वात् । तथा च सत्यनुवषट्कारे कृते "पशवो वा एते यदादित्यः" ( तै. सं. का. ६।५।६ ) इति आदित्यग्रहस्य पश्वात्मकत्वात् पशव एवाग्नौ परित्यक्ताः स्युः । तस्मान्नैव 'पशूनग्नौ' 'प्रवृणजानि' परित्यजानीति च नानुवषट्कुर्यादिति ।

यथावत् प्रतिप्रस्थात्रे विशेषप्रदानमाह—प्रयच्छति प्रतिप्रस्थात्रे संस्रवाविति । आदित्यपात्रस्थालीगतसोमशेषापेक्षया 'संस्रवौ' इति द्विवचनम् ॥ २० ॥

आदित्यग्रहयागानन्तरं हविर्द्धानगमनपूर्वकमाग्रयणस्य ग्रहणप्रकारं विधत्ते—अथ पुनः प्रपद्येत्यादि । उदी-

---

१—अन्वारब्ध आदित्येभ्योऽनुब्रूहीत्याह प्रैषानुवाचनयोरन्यतरस्मिन्नाह प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरंतरिक्षस्याध्यक्षेभ्य इति । का० श्रौ० सू०१०।९६। २—हुत्वा प्रतिप्रस्थात्रे प्रयच्छति शेषौ । का० श्रौ० सू०।१०।९७।

वितन्वन्ति प्रस्कन्दयत्यध्वर्युराग्रयणस्य संप्रगृह्णाति प्रतिप्रस्थाता सᳪं स्रवावानयत्युन्नेता चमसेन वोदञ्चनेन वा ॥ २१ ॥

तं चतसृणां धाराणामाग्रयणं गृह्णाति । ( त्या ) आदित्यानां वै तृतीयसवनमादित्यान्वाऽअनु गावस्तस्मादिदं गवां चतुर्धा विहितं पयस्तस्माच्चतसृणां धाराणामाग्रयणं गृह्णाति ॥ २२ ॥

तद्यत्प्रतिप्रस्थाता सᳪंस्रवौ सम्प्रगृह्णाति । (त्या) आदित्यग्रहो वाऽएष

---

तं चतसृणां धाराणामाग्रयणं गृह्णाति । आदित्यानां वै तृतीयसवनम्, आदित्यान्वाऽअनु गावः । तस्मादिदं गवां चतुर्धा विहितं पयः । तस्माच्चतसृणां धाराणामाग्रयणं गृह्णाति ॥ २२ ॥

तद् यत्प्रतिप्रस्थाता संस्रवौ सम्प्रगृह्णाति । आदित्यग्रहो वा एष भवति । न वाऽआदित्यग्रह-

---

चौनदशमिति । तृतीयसवनार्थाभिषवानन्तरं पूतभृत उपरि उदङ्मुखाञ्चलम् ' पवित्रम् ' पवनार्थं 'वितन्वन्ति ' विस्तारयन्ति उद्गातारः । तस्मिन्पवित्रे ' अध्वर्युः ' 'आग्रयणस्य' इति कर्मणि षष्ठी ( पा. सू. २।३।६० ) । ' प्रस्कन्दयति ' आसिञ्चेत् । तदा ' प्रतिप्रस्थाता ' अपि पवित्रे आदित्यपात्रस्थालीगतौ संस्रवौ 'संप्रगृह्णाति ' ' सम् ' इत्येकीभावे । सह सिञ्चेत् । ' उन्नेता ' वाऽऽधवनीयाद् 'उदञ्चनेन' 'चमसेन ' वितत आग्रयणं गृह्णातीति । आपस्तम्बस्तु आग्रयणस्य ग्रहणे किञ्चित्प्रकारान्तरमाह—" ग्रहकाल आग्रयणमेव चतसृभ्यो धाराभ्य आग्रयणाद्धुत्सिच्य द्वितीयां धारां करोति । आदित्यस्थाल्यास्तृतीयाम् । आदित्यग्रहसम्पाताच्चतुर्थीम् " (आप. श्रौ. सू. ) इति । यद्यप्यत्रादित्यग्रहयागानन्तरं तृतीयसवनार्थमभिषवमभिधाय पश्चादाग्रयणस्य ग्रहणमभिधातव्यम्, तथापि माध्यन्दिनसवने माहेन्द्रग्रहस्य स्तोत्रोपाकरणानन्तरमेवाभिषवो विहितः—" अथोपाकृत्यैतां वाचं वदत्यभिषोतारोऽभिषुणुत " इत्युपक्रम्य; " ते वै तृतीयसवनायैवाभिषोतारोऽभिषुण्वन्ति " इति । तस्मादत्राभिषवानन्तरकर्तव्यमाग्रयणग्रहणमेवाभिहितम् । अत एव कात्यायनोऽप्यत्राभिषवं नाभिदधौ किंतु तत्रैवाभिदधौ । तत्रेदं सूत्रम्—" पृष्ठमुपाकृत्य प्रेष्यत्यभिषोतारोऽभिषुणुत " इत्युपक्रम्य " ऋजीषमिश्रमंशुमभिषुण्वन्ति यथा कथा चानुदकम्, आधवनीये करोति, त्रिपर्यायान्वाऽभिषवोपदेशात्, मानाभिमर्शनवर्ज्जं कृतत्वात्, पूतभृति पावनं शुक्राभावात् "—( का. श्रौ. सू. १० । ७६—८० ) इति । सारसं वस्तु (?) शाखान्तरानुसारेणादित्यग्रहयागानन्तरमेव महाभिषवमभ्यधात् । तद्वदादित्यपात्रमायतने सादयित्वा शुक्रमुपांशुपावनौ यश्चोपांशुपात्रेंऽशुस्तानृजीषे विसृज्य प्रातःसवनवन्महाभिषवः ऋजीषं त्वेताभिषुण्वन्तीति ॥ २१ ॥

धाराचतुष्टयाद्ग्रहणं प्रशंसति—आदित्यानां वै तृतीयसवनमित्यादि । " सङ्ख्याद्वारा जगतीसम्बन्धित्वाज्जागतं तृतीयसवनम् " आदित्यानां विभक्त सवनम् "—इति अस्यैव ब्राह्मणस्यादौ व्याख्यातम् । गावश्च वृष्टिप्रदानेनादित्यानुपजीव्य वर्तन्ते । तस्मादादित्यसम्बन्धितृतीयसवनगतस्याग्रयणस्य चतसृभ्यो धाराभ्यो गृहीतत्वादिदानीमादित्यसम्बन्धिनीनां गवां पयश्चतुर्धा विहितं दृश्यते । चतुर्भिः स्तनमुखैः पयस उद्गमात् । अतश्चतसृभ्यो ग्रहणं प्रशस्तमित्यर्थः ॥ २२ ॥

आग्रयणस्य ग्रहणे प्रतिप्रस्थातृकृतं संस्रवासेचनमादित्यग्रहस्यानुवषट्कारलाभहेतुत्वेन प्रशंसति—तद्यत्प्रति-

भवति न वाऽआदित्यग्रहस्यानुवषट्करोत्येतस्माद्वै सावित्रं ग्रहं ग्रहीष्यन्भवति तदस्य सावित्रेणैवानुवषट्कृतो भवति ॥ २३ ॥

यद्वेव प्रतिप्रस्थाता सᳫंस्रवौ सम्प्रगृह्णाति । पुरा वाऽएभ्य एतन्मिश्राद्ग्रहमहौषुः पुरा तृतीयसवनात्तृतीयसवनाय वाऽएष ग्रहो गृह्यते तदादित्यास्तृतीयसवनमपियन्ति तथा न बहिर्धा यज्ञाद्भवन्ति तस्मात्प्रतिप्रस्थाता सᳫंस्रवौ सम्प्रगृह्णाति ॥ २४ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ४-३-२ ॥ [ ३-९ ]

---

स्यानुवषट्करोति । एतस्माद्वै सावित्रं ग्रहं ग्रहीष्यन्भवति । तद् अस्य सावित्रेणैवानुवषट्कृतो भवति ॥ २३ ॥

यद्वेव प्रतिप्रस्थाता संस्रवौ सम्प्रगृह्णाति । पुरा वाऽएभ्य एतन्मिश्राद्ग्रहमहौषुः—पुरा तृतीयसवनात् । तृतीयसवनाय वाऽएष ग्रहो गृह्यते । तद् आदित्यास्तृतीयसवनमपियन्ति । तथा न बहिर्धा यज्ञाद्भवन्ति । तस्मात्प्रतिप्रस्थाता संस्रवौ सम्प्रगृह्णाति ॥ २४ ॥

---

प्रस्थातेत्यादि । ' एषः ' संस्रवरूपः सोमः ' आदित्यग्रहः ' खलु' तच्छेषत्वात् ' आदित्यग्रहस्य ' तु ' अनुवषट्करोति ' इति तस्य निषिद्धत्वात् । अत आग्रयणे तच्छेषावनयने सत्येतत्सावित्रग्रहस्य ग्रहीष्यमाणत्वात् , सावित्रस्य चानुवषट्कारसम्भवात्तेनैवायमादित्यग्रहः ' अनुवषट्कृतो भवति ' ॥ २३ ॥

प्रकारान्तरेणापि तदेव प्रशंसति—यद्वेव प्रतिप्रस्थातेत्यादि । पुरा ' तृतीयसवनाद् ' इत्यादित्यस्य व्याख्यानम् । ' एष ग्रहः ' इति, आदित्यग्रह इत्यर्थः । स्पष्टमन्यत् ॥ २४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ( ४—३—९ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥ १ ॥

धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥२॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे तृतीयोऽध्यायः समाप्तः ॥४—३॥

# चतुर्थाध्याये प्रथमं ब्राह्मणम् ।

मनो ह वाऽअस्य सविता । तस्मात्सावित्रं गृह्णाति प्राणो ह वाऽअस्य सविता तमेवास्मिन्नेतत्पुरस्तात्प्राणं दधाति यदुपाᳪशुं गृह्णाति तमेवास्मिन्नेतत्पश्चात्प्राणं दधाति यत्सावित्रं गृह्णाति ताविमाऽउभयतः प्राणौ हितौ यश्चायमुपरिष्टाद्यश्चाधस्तात् ॥ १ ॥

( इ ) ऋतवो वै संवत्सरो यज्ञः । ( स्ते ) तेऽदः प्रातःसवने प्रत्यक्षमवकल्प्यन्ते यदृतुग्रहान्गृह्णात्यथैतत्परोऽक्षं माध्यन्दिने सवनेऽवकल्प्यन्ते यदृतुपात्राभ्यां मरुत्वतीयान्गृह्णाति न वाऽअत्रर्तुभ्यऽइति कं चन ग्रहं गृह्णन्ति नर्तुपात्राभ्यां कश्चन ग्रहो गृह्यते ॥ २ ॥

---

## सावित्रग्रहः ।

मनो ह वाऽअस्य सविता । तस्मात्सावित्रं गृह्णाति । प्राणो ह वाऽअस्य सविता—तमेवास्मिन्नेतत्पुरस्तात्प्राणं दधाति—यदुपांशुं गृह्णाति । तमेवास्मिन्नेतत्पश्चात्प्राणं दधाति—यत् सावित्रं गृह्णाति । ताविमाऽउभयतः प्राणौ हितौ—यश्चायमुपरिष्टात्, यश्चाधस्तात् ॥ १ ॥

ऋतवो वै संवत्सरो यज्ञः । तेऽदः प्रातःसवने प्रत्यक्षमवकल्प्यन्ते—यदृतुग्रहान्गृह्णाति । अथैतत्परोऽक्षं माध्यन्दिने सवनेऽवकल्प्यन्ते—यदृतुपात्राभ्यां मरुत्वतीयान्गृह्णाति । न वाऽअत्रऽर्तुभ्य इति कश्चन ग्रहं गृह्णन्ति । नऽर्तुपात्राभ्यां कश्चन ग्रहो गृह्यते ॥ २ ॥

---

## हरिस्वामिभाष्यम् * ।

मनो ह वा अस्येति । सप्तभिरेताभिः कण्डिकाभिः सावित्रग्रह उच्यते । 'मनः' इत्यत्राध्यवसायात्मिका बुद्धिः परिगृह्यते । सा हि क्रियासु प्रसौतीति 'सविता' अनध्यवसिते प्राणवृत्त्यभावात् प्राणानुरूपं मनः 'सविता' । तदन्तत्वात्सावित्रो ग्रहः 'अस्य' यज्ञपुरुषस्य मन एवेति चावश्यं भावनीयम् । अत आह—यस्मान्मनसाऽवश्यभाव्यं चमसं सावित्रमित्युत्पत्तिवाक्यम् । प्राणो ह वा अस्येति । दर्शनानन्तरं 'प्राणः' अपि वृत्त्यङ्गत्वात्प्रसौतीति सोऽपि 'सविता' । रविमण्डलमपि वायुनैवोह्यमानं जगतः स्वकर्मप्रवृत्तिषु हेतुर्वायुना भवतीति वायुरपि सवितेत्यभिप्रायः । तमेवास्मिन्नेतदिति । उपांशुमिति । अस्य च विपर्य्ययेणानुवचनम् । पुरस्तादिति । मुखतः । पश्चादिति । जवनतः । ताविमौ वायू प्राणौ इत्युक्तम् । नैष दोषः । यो मेहनकर्मा पश्चात्प्राणः स ध्रुवः, यस्त्ववागगतिमात्ररूपः स सविता भविष्यतीति ॥ १ ॥

ऋतवो वा इति । दर्शनानन्तरं कण्डिकाद्वयेनाह । 'ऋतवः' 'संबत्सरः' अवयवेभ्योऽवयविनोऽस्यव्यतिरेकाभावात् संवत्सरश्च यज्ञपूर्वपरिमाणात्मकत्वाद्यज्ञः । संवत्सररूपो यज्ञः प्रतिसवनं दर्शनीयोऽवयवशून्य-

---

*—उपलब्धेषु सर्वेष्वपि पुस्तकेषु शतपथब्राह्मणीयचतुर्थकाण्डस्यैतदन्तमेव सायणभाष्यं दृश्यते । एतदारभ्य काण्डसमाप्तिपर्यन्तं हरिस्वामिकृतं भाष्यमेव सर्वत्र विद्यते । अतस्तदेव संगृह्यते । काण्डस्यावशिष्टं सायणीयं भाष्यं लुप्तकल्पतामुपगतमिति मंतव्यम्, तदन्वेषणे च यावच्छक्यं प्रयतनीयं प्राच्यवैदिकवाङ्मयसंशोधकैः ॥ इति ॥

( त८ ) एष वै सविता य एष तपति । ( त्ये ) एष उऽएव सर्व्वऽऋतु-वस्तद्दृतवः संव्वत्सरस्तृतीयसवने प्रत्यक्षमवकल्प्यन्ते तस्मात्सावित्रं गृह्णाति ॥ ३ ॥

तं वाऽउपाᳫँशुपात्रेण गृह्णाति । मनो ह वाऽअस्य सविता प्राण उपाᳫँ-शुस्तस्मादुपाᳫँशुपात्रेण गृह्णात्यन्तर्यामपात्रेण वा समानᳫँ ह्येतद्यदु-पाᳫँश्वन्तर्यामौ प्राणोदानौ हि ॥ ४ ॥ ( अर्धप्रपाठकः ) ॥

( ह्या ) आग्रयणाद् गृह्णाति । मनो ह वाऽअस्य सविताऽऽत्माऽऽग्रयण ऽआत्मन्न्येवैतन्मनो दधाति प्राणो ह वाऽअस्य सविताऽऽत्माऽऽग्रयण ऽआत्मन्न्येवैतत्प्राणं दधाति ॥ ५ ॥

( त्य ) अथातो गृह्णात्येव । व्वाममद्य सवितर्व्वाममु श्वो दिवेदिवे व्वाम-मस्मभ्यᳫँ सावीः ॥ व्वामस्य हि क्षयस्य देव भूरेरया धिया व्वाम-भाजः स्याम ॥ उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधा असि चनो मयि धेहि ॥ जिन्व यज्ञं जिन्व यज्ञपतिं भगायेति ॥ ६ ॥

---

एष वै सविता य एष तपति । एष उऽएव सर्वऽऋतवः । तद् ऋतवः संवत्सरस्तृतीयसवने प्रत्यक्षमवकल्प्यन्ते । तस्मात्सावित्रं गृह्णाति ॥ ३ ॥

तं वाऽउपांशुपात्रेण गृह्णाति । मनो ह वाऽअस्य सविता, प्राण उपांशुः । तस्मादुपांशुपात्रेण गृह्णाति, अन्तर्यामपात्रेण वा । समानं ह्येतद्--यदुपांश्वन्तर्यामौ--प्राणोदानौ हि ॥ ४ ॥

आग्रयणाद् गृह्णाति । मनो ह वाऽअस्य सविता । आत्माऽऽग्रयणः । आत्मन्न्येवैतन्मनो दधाति । प्राणो ह वाऽअस्य सविता, आत्माऽऽग्रयणः । आत्मन्न्येवैतत्प्राणं दधाति ॥ ५ ॥

अथातो गृह्णात्येव--" वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः । वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम । उपयामगृहीतोऽसि

---

स्यानुपपत्तेः । अवयवानाञ्च यज्ञावयवत्वात् । स च सवनयोर्द्वयोर्दर्शितः । ऋतुग्रहैः ' ऋतुपात्राभ्यां वा ' अत्रापि सावित्रेण दर्शित इति समस्तार्थः । एष उ एव सर्वे ऋतव इति । मेषादिक्षेत्रविशेषत्वादेष एव सत्तारूपाण्य-भिव्यनक्तीत्यभिप्रायः ॥ २ ॥ ३ ॥

तं वा उपांशुपात्रेणेति । मनो ह वा अस्येति । यस्मात् ' मनः ' सावित्रः, ' प्राण उपांशुः ' प्राणमन-सोश्चात्यन्तमव्यभिचारः ' तस्मात् ' मनसः प्राणेनाविनाभावो यत् ' उपांशुपात्रेण ' वहतीत्यभिप्रायः । यदपि प्राणः सविता, तदापि पूर्वापरयोः प्राणयोः सातत्ये ' उपांशुपात्रेण ' गृह्णातीति द्रष्टव्यम् ॥ ४ ॥

आग्रयणात् इत्यतः प्रसन्नास्तिस्रः ॥ ५--७ ॥

---

१--भक्षयित्वेडामुपांश्वंतर्यामपात्रयोरन्यतरेण सावित्रग्रहणं वाममद्येति काले पात्नीवतमितरेण । का० श्रौ० सू० १० । ११४ ।

२--प्रसन्नाः--स्पष्टार्थाः--इत्यर्थः ।

तुं गृहीत्वा नु सादयति । मुनो ह वाऽअस्य सविता तुस्मादिदमुसन्नं मुनः प्राणो ह वाऽअस्य सविता तुस्मादयमुसन्नः प्राणः सुंचरत्यथाह देवाय सवित्रेऽनुब्रूहीत्याश्राव्याह देवाय सवित्रे प्रेष्येति व्वषट्कृते जुहोति नानुवुषट्करोति मुनो ह वाऽअस्य सविता नेन्मनोऽग्नौ प्रवृणुजानीति प्राणो ह वाऽअस्य सविता नेत्प्राणमग्नौ प्रवृणुजानीति ॥ ७ ॥

(त्यु) अुथाभक्षितेन पात्रेण । व्वैश्वदेवं ग्रुहं गृह्णाति तद्यदुभक्षितेन पात्रेण व्वैश्वदेवं ग्रहं गृह्णाति न वै सावित्रस्यानुवषट्करोत्येतुस्माद्वै व्वैश्वदेवं ग्रहं ग्रहीष्युन्भवति तुदस्य व्वैश्वदेवेनैवानुवषट्कृतो भवति ॥ ८ ॥

यद्वेव व्वैश्वदेवं ग्रहं गृह्णाति । मुनो ह वाऽअस्य सविता सुर्व्वमिदं व्विश्वे देवा इदमेवैतत्सुर्वं मुनसः कृतानुकरमुनुवर्त्म करोति तुदिदᳯं सुर्व्वं मुनसः कृतानुकरमुनुवर्त्म ॥ ९ ॥

---

सावित्रोऽसि चनोधाश्चनोधा असि चनो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिं भगाय ''–(वा. सं. ८ । ६, ७) इति ॥ ६ ॥

तं गृहीत्वा न सादयति । मनो ह वाऽअस्य सविता । तस्मादिदमसन्नं मनः । प्राणो ह वाऽअस्य सविता । तस्मादयमसन्नः प्राणः सञ्चरति । अथाह–" देवाय सवित्रे "–अनुब्रूहि–इति । आश्राव्याह–देवाय सवित्रे प्रेष्येति । वषट्कृते जुहोति । नानुवषट् करोति । मनो ह वाऽअस्य सविता–नेन्मनोऽग्नौ प्रवृणजानीति । प्राणो ह वाऽअस्य सविता–नेत्प्राणमग्नौ प्रवृणजानीति ॥ ७ ॥

### वैश्वदेवग्रहः ।

अथाभक्षितेन पात्रेण वैश्वदेवं ग्रहं गृह्णाति । तद् यदभक्षितेन पात्रेण वैश्वदेवं ग्रहं गृह्णाति । न वै सावित्रस्यानुवषट्करोति । एतस्माद्वै वैश्वदेवं ग्रहं ग्रहीष्यन्भवति । तदस्य वैश्वदेवेनैवानुवषट्कृतो भवति ॥ ८ ॥

यद्वेव वैश्वदेवं ग्रहं गृह्णाति । मनो ह वाऽअस्य सविता । सर्वमिदं विश्वेदेवाः । इदमेवैतत्सर्वं मनसः कृतानुकरमनुवर्त्मं करोति । तदिदं सर्वं मनसः कृतानुकरमनुवर्त्म ॥ ९ ॥

---

अथाभक्षितेनेति । सप्तभिरेताभिर्महावैश्वदेवग्रह उच्यते, यस्यार्भवःपवमानस्तोत्रम्, एवं वैश्वदेवं च शस्त्रं भविष्यति । तास्वेताः प्रसन्नाः । एतदुच्यते–' सामतः ' सोमास्तु ' यस्माद् वैश्वदेवं तृतीयसवनम् ' विश्वे

---

१–इह ' देवाय त्वा सवित्रे ' इति संहितायां पाठः ।

यद्देव वैश्वदेवं ग्रहं गृह्णाति । प्राणो ह वाऽअस्य सविता सर्वमिदं विश्वे देवाऽअस्मिन्नेवैतत्सर्व्वस्मिन्प्राणोदानौ दधाति ताविमावस्मिन्त्सर्व्वस्मिन्प्राणोदानौ हि तौ॥ १० ॥

यद्देव वैश्वदेवं ग्रहं गृह्णाति । वैश्वदेवं वै तृतीयसवनं तदुच्यतऽएव सामतो यस्माद्वैश्वदेवं तृतीयसवनमुच्यतऽऋक्तोऽथैतदेव यजुष्टः पुरश्चरणतो यदेतं महावैश्वदेवं गृह्णाति ॥ ११ ॥

तं वै पूतभृतो गृह्णाति । वैश्वदेवो वै पूतभृदेतो हि देवेभ्यऽउन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यस्तस्माद्वैश्वदेवः पूतभृत् ॥ १२ ॥

(त्तं) तं वाऽअपुरोरुक्कं गृह्णाति । विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति सर्व्वं वै विश्वे देवा यदृचो यद्यजूᳬषि यत्सामानि स यदेवैनं विश्वेभ्यो देवेभ्यो गृह्णाति तेनो हास्यैष पुरोरुङ्मान्भवति तस्मादपुरोरुक्कं गृह्णाति ॥ १३ ॥

---

यद्देव वैश्वदेवं ग्रहं गृह्णाति । प्राणो ह वाऽअस्य सविता । सर्वमिदं विश्वे देवाः । अस्मिन्नेवैतत् सर्वस्मिन् प्राणोदानौ दधाति । ताविमावस्मिन्त्सर्वस्मिन् प्राणोदानौ हि तौ ॥ १० ॥

यद्देव वैश्वदेवं ग्रहं गृह्णाति । वैश्वदेवं वै तृतीयसवनम् । तदुच्यतऽएव सामतः । यस्माद्वैश्वदेवं तृतीयसवनम्—उच्यत ऋक्तः । अथैतदेव यजुष्टः पुरश्चरणतो—यदेतं महावैश्वदेवं गृह्णाति ॥ ११ ॥

तं वै पूतभृतो गृह्णाति । वैश्वदेवो वै पूतभृत् । अतो हि देवेभ्य उन्नयन्ति, अतो मनुष्येभ्यः, अतः पितृभ्यः—तस्माद्वैश्वदेवः पूतभृत् ॥ १२ ॥

तं वाऽअपुरोरुकं गृह्णाति । विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति । सर्वं वै विश्वे देवाः—यद् ऋचो यद्यजूंषि यत् सामानि । स यदेवैनं विश्वेभ्यो देवेभ्यो गृह्णाति—तेनो हास्यैष पुरोरुङ्मान्भवति । तस्मादपुरोरुकं गृह्णाति ॥ १३ ॥

---

हि देवाः स्तूयन्ते, एवमुच्यन्ते । स ' ऋक्तः ' विश्वे हि देवाः शस्यन्ते । अथैतेनैव कारणेन ' यजुष्टः ' यजुःषु पुरश्चरन्ति, प्रचरन्ति, प्रथमतरमस्य सामभ्यश्चरन्त्येभिरिति पुरश्चरणं यजूंषि, तत्राप्येतेन कारणेन ' वैश्वदेवं ' ' तृतीयसवनम् ' पर्यस्यत् । ' एतं महावैश्वदेवं ग्रहं गृह्णाति ' 'अतो' देवेभ्य उन्नयन्ति । चमसानां पूतभृत उन्नयनं दर्शयत्यनादिष्टानाञ्च । अतो मनुष्येभ्य इति । भक्षितानां पुनर्भक्षणार्थमेवायं पूतभृतो दर्शयति । अतः पितृभ्य इति । त एवाप्यायितानां शंसिताश्चमसाः पितृदेवत्या भवन्ति । ततश्च तदाप्यायनं पितृभ्योऽप्युन्नयन्ति ' पूतभृत ' इति दर्शयति । सर्वं वै विश्वे देवा इति । विश्वेषामेव देवानामृगादीनि शब्दमयानि शरीराणि, ततश्च विश्वेभ्यो देवेभ्यो गृह्यमाणस्तदन्तर्गतया पुरोरुचा युक्त एव भवति । अतः पितृभ्य इत्युक्ते किं तत्र पुरोरुचेत्यर्थः (?) ॥ ८—१३ ॥

---

१—अभक्षितेन महावैश्वदेवग्रहणमुपयामगृहीतोऽसि सुशर्म्मासीति । का. श्रौ. सू. १० । ११६ ।

( त्य ) अथातो गृह्णात्येव । ( वो ) उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठान इति प्राणो वै सुशर्मा सुप्रतिष्ठानो बृहदुक्षाय नम इति प्रजापतिर्वै बृहदुक्षः प्रजापतये नम इत्येवैतदाह विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यऽइति सादयति विश्वेभ्यो ह्येनं देवेभ्यो गृह्णात्यथेत्य प्राङुपविशति ॥ १४ ॥

स यत्रैताᳬं होता शᳬंसति । (त्ये) एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विᳬंशती च । तिसृभिश्च वहसे त्रिᳬंशता च नियुद्भिर्वायविह ता विमुञ्चेति तदेतस्यां वायव्यायामृचि पात्राणि विमुच्यन्ते वायुप्रणेत्रा वै पशवः प्राणो वै वायुः प्राणेन हि पशवश्चरन्ति ॥ १५ ॥

---

अथातो गृह्णात्येव–"उपयामगृहीतोऽसि, सुशर्मासि सुप्रतिष्ठानः"–(वा० सं० ८।८) इति । प्राणो वै सुशर्मा सुप्रतिष्ठानः । "बृहदुक्षाय नमः"–( वा० सं० ८ । ८ ) इति । प्रजापतिर्वै बृहदुक्षः । प्रजापतये नम इत्येवैतदाह । "विश्वेभ्यस्त्वा देवेभ्यः एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः"–( वा० सं० ८ । ८ ) इति सादयति । विश्वेभ्यो ह्येनं देवेभ्यो गृह्णाति । अथेत्य प्राङुपविशति ॥ १४ ॥

स यत्रैतां होता शंसति–"एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विंशती च । तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वायविह ता विमुञ्च"–(वा. सं. २७ । ३३ )

---

प्राणो वै सुशर्मेति । स एष ग्रहः । प्राणस्यान्नमिति कृत्वा प्राण इति उच्यते । स एव 'सुशर्मा' । 'सु' शोभनं प्रतिष्ठानं विश्वेदेवा अस्येति सुप्रतिष्ठानः । प्रजापतिर्वै बृहदुक्ष इति । बृहच्चासावुक्षा च । प्रजानां सेक्तेति 'प्रजापतिः' बृहदुक्षाः । एतदन्नं हि प्रजानां भवति न चेत्तथैत उक्षाण इत्यभिप्रायः । "प्रजापतये नमः" इति । यद्विश्वेषां देवानां मतं तदविरोधात्मकाय प्रजापतये भवत्येवान्नमित्यभिप्रायः । 'प्राङुपविशति' । वैश्वदेवशस्त्रप्रतिगरम् ॥ १४ ॥

स यत्रैतामिति । एताभिश्चतसृभिर्द्विदैवत्यपात्राणां विमोक्षा उच्यन्ते । 'यत्र' काले 'एताम्' वक्ष्यमाणात्मकया च दशभिश्चेत्येवं 'होता' 'शꣳसति' तस्मिन्नेव काले 'एतस्याम्' वायुदेवत्यायाम् 'ऋचि'

---

१–एकया च दशभिश्चेति ऋक् वैश्वदेवशस्त्रे पठ्यते । तत्राश्वलायनानां पाठस्त्वेवम्–एकया च दशभिश्च स्वभूते । द्वाभ्यामिष्टये विंशत्या चों ३ । तिसृभिश्च वहसे त्रिंशता च । नियुद्भिर्वायविहामुंचों ३इति । शांखायनानां पाठश्चैवम्–एकया च दशभिश्च स्वभूते । द्वाभ्यामिष्टये विंशती चों ३ । तिसृभिश्च वहसे त्रिंशता च । नियुद्भिर्वायविह ता विमुंचों ३ इति । माध्यंदिनसंहितायां २७–३३ शतपथोक्तानुपूर्वीक एव मंत्रः । अत्र–स यत्रैता १ होता शंसति । एकया चेत्युपक्रमे होतुरुपादानात् शांखायनाग्वेदिक्या ऋच एव पाठाच्च योगीश्वरमहर्षिणा याज्ञवल्क्येन स्पष्टं निर्णीतम् । वाजसनेयिभिः शांखायनमेव हौत्रमादर्तव्यमिति नाश्वलायनीयमिति । तत्तद्वचः पाठाभावादेवावगम्यते । होतुरिति पदेनैव नायं माध्यंदिनसंहितोक्तो मन्त्र इतीयमपि शंका निरस्यते ।

स ह देवेभ्यः पशुभिरपचक्राम । तं देवाः प्रातःसवनेऽन्वमन्त्रयन्त स नोपाववर्त तं माध्यन्दिने सवनेऽन्वमन्त्रयन्त स ह नैवोपाववर्त तं तृतीयसवनेऽन्वमन्त्रयन्त ॥ १६ ॥

स होपावर्त्स्यन्नुवाच । यद्वऽउपावर्तेय किं मे ततः स्यादिति त्वयैवैतानि पात्राणि युज्येरंस्त्वया विमुच्येरन्निति तदेनेनैतत्पात्राणि युज्यन्ते यदैन्द्रवायवाग्रान्प्रातःसवने गृह्णात्यथैनेनैतत्पात्राणि विमुच्यन्ते यदाह नियुद्भिर्वायविह ता विमुञ्चेति पशवो वै नियुतस्तत्पशुभिरेवैतत्पात्राणि विमुच्यन्ते ॥ १७ ॥

---

इति । तदेतस्यां वायव्यायामृचि पात्राणि विमुच्यन्ते । वायुप्रणेत्रा वै पशवः । प्राणो वै वायुः । प्राणेन हि पशवश्चरन्ति ॥ १५ ॥

स ह देवेभ्यः पशुभिरपचक्राम । तं देवाः प्रातःसवनेऽन्वमन्त्रयन्त । स नोपाववर्त । तं माध्यन्दिने सवनेऽन्वमन्त्रयन्त । स ह नैवोपाववर्त । तं तृतीयसवनेऽन्वमन्त्रयन्त ॥ १६ ॥

स होपावर्त्स्यन्नुवाच—यद्व उपावर्तेय—किं मे ततः स्यादिति । त्वयैवैतानि पात्राणि युज्येरन्, त्वया विमुच्येरन्—इति । तद् एनेनैतत्पात्राणि युज्यन्ते, यदैन्द्रवायवाग्रान्प्रातःसवनं गृह्णाति । अथैनेनैतत्पात्राणि विमुच्यन्ते—यदाह नियुद्भिर्वायविह ता विमुञ्चेति । पशवो वै नियुतः । तत् पशुभिरेवैतत्पात्राणि विमुच्यन्ते ॥ १७ ॥

---

शस्यमानायामिति शेषः । "यस्य च भावेन भावलक्षणम्"—( पा. सू. २ । ३ । ३७ ) इत्यत्र सप्तमी । 'पात्राणि' शाखान्तराद् द्विदेवत्यपात्राणि 'विमुच्यन्ते' कथं ? प्रक्षाल्य खरे निधीयन्ते । एष हि तेषां विमोकः शाखान्तरादेवाववोद्धव्यः । यागोऽपि हि तेषां शाखान्तरीय एव ।' प्रातःसवने भक्षितानां कुतो दक्षिणस्य वर्त्मनि निधाने अध्वर्योश्च प्रतिगरे व्यापृतत्वात् प्रतिप्रस्थात्रा विमुच्यन्ते । किं पुनः कारणं वायव्यायामृचि विमुच्यन्त इत्यत आह—वायुप्रणेत्रा वा इति । वायुः प्रणेता नायको येषां ते 'वायुप्रणेत्राः' 'पशवः' कथम् ? प्राणो ह्याध्यात्मं वायुः तेन हेतुना 'पशवः' गच्छन्ति । यदि हि प्राणो न स्यादरण्येष्वेवार्ता इमाः प्रजाः शयीरन् ॥ १५ ॥

ततः किं—यदि वायुः पशूनां नेतेत्यत आह—स ह देवेभ्य इति । 'स' वायुः 'देवेभ्यः' अपक्रान्तः पशुभिर्वन्यैः सह तृतीयसवने देवैरेतेन भागेनानीतः ॥ १६ ॥

त्वया वै सहितानि द्विदेवत्यपात्राणि विमुच्यन्ते । 'यदाह' होता 'नियुद्भिः वायो ! इह ता विमुञ्च' इति । एतेन वायुः शस्यत इत्यभिप्रायः । 'पशवो वै नियुतः' इति पशूनामप्येष संविभागो भवति वेत्यर्थः ॥ १७ ॥

स युत्प्रातःसवनुऽउपावत्स्र्यत् । ( द्वा ) गायत्रं वै प्रातःसवनं ब्रह्म गायत्री ब्राह्मणेषु ह पशवोऽभविष्यन्नुथ यन्माध्यन्दिने सुवनऽउपावत्स्र्यदैन्द्रं वै माध्यन्दिनꣳ सुवनं क्षत्रमिन्द्रः क्षत्रियेषु ह पशवोऽभविष्यन्नुथ युत्तृतीयसवनु उपावर्तत व्वैश्वदेवं वै तृतीयसवनꣳ सुर्व्वमिदं व्विश्वे देवास्तुस्मादिमे सर्व्वत्रैव पशवः ॥ १८ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥४।३।३॥ ( ४. १. )

सौम्येन चरुणा प्रचरति । सोमो वै देवानाꣳ हविरुथैतत्सोमायैव हविष्क्रियते तथाऽतः सोमोऽनन्तर्हितो भवति चरुर्भवति चरुर्व्वै देवानामन्नमोदनो हि चरुरोदनो हि प्रत्यक्षमन्नं तुस्माच्चरुर्भवति ॥ १ ॥

तेन नु प्रातःसवने प्रचरति । न माध्यन्दिने सुवनऽएते वै देवानां निष्केवल्ये सुवने युत्प्रातःसवनं च माध्यन्दिनं च सुवनं पितृदेवत्यो वै सोमः ॥ २ ॥

---

स यत्प्रातःसवनऽउपावत्स्र्यत् । गायत्रं वै प्रातःसवनम् । ब्रह्म गायत्री । ब्राह्मणेषु ह पशवोऽभविष्यन् । अथ यन्माध्यन्दिने सवनऽउपावत्स्र्यद्–ऐन्द्रं वै माध्यन्दिनं सवनम्, क्षत्रमिन्द्रः, क्षत्रियेषु ह पशवोऽभविष्यन् । अथ यत्तृतीयसवनऽउपावर्तत । वैश्वदेवं वै तृतीयसवनम्, सर्वमिदं विश्वे देवाः, तस्मादिमे सर्वत्रैव पशवः ॥ १८ ॥

सौम्यश्चरुः ।

सौम्येन चरुणा प्रचरति । सोमो वै देवानां हविः । अथैतत्सोमायैव हविष्क्रियते । तथाऽतः सोमोऽनन्तर्हितो भवति । चरुर्भवति । चरुर्वै देवानामन्नम् । ओदनो हि चरुः । ओदनो हि प्रत्यक्षमन्नम् । तस्माच्चरुर्भवति ॥ १ ॥

तेन न प्रातःसवने प्रचरति, न माध्यन्दिने सवने । एते वै देवानां निष्केवल्ये सवने–यत्प्रातःसवनञ्च, माध्यन्दिनञ्च सवनम् । पितृदेवत्यो वै सोमः ॥ २ ॥

---

यत्प्रातरिति । प्रसन्ना ॥ १८ ॥

इति आचार्यहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे चतुर्थाऽध्याये प्रथमं ब्राह्मणम् ॥ ( ४-४-१ )

सौम्येनेति । एताभिः षड्भिः कण्डिकाभिः 'सौम्येन चरुणा' चर्वणमुच्यते । ओदनो हि प्रत्यक्षमन्नमिति । चर्वणीयो ह्योदन इत्यभिप्रायः ॥ १ ॥

'पितृदेवत्यः' पितरो देवता अस्येति पितृदेवत्यः । "देवतान्तात्तादर्थ्ये यत्" ( पा. सू. ५ । ४ । २४ ) । पितृप्रधानः सोम इत्यर्थः । पितॄणां ज्योतिरन्नम् ॥ २ ॥

स युत्प्रातःसवने वा प्रचुरेत् । ( न्मा ) माध्यन्दिने वा सुवने समुदᳫँ ह कुर्याद्देवेभ्यश्च पितृभ्यश्च तेन तृतीयसवने प्रचरति वैश्वदेवं वै तृतीयसवनं तुथा हासमदं करोति नानुवाक्यामन्वाह सकृदु ह्येव पराञ्चः पितरस्तस्मान्नानुवाक्यामन्वाह ॥ ३ ॥

( ह्रा ) अथ चतुर्गृहीतमाज्यं गृहीत्वा । ( त्वाश्रा ) आश्राव्याह घृतस्य यजेति वषट्कृते जुहोति तद्या ऽअतः प्राच्य ऽआहुतयो हुता भवन्ति ताभ्य ऽएवैतदन्तर्दधाति तथा हासमदं करोति ॥ ४ ॥ ( शतम् २६०० )

स आज्यस्योपस्तीर्य । द्विश्चरोरवद्यत्यथोपरिष्टादाज्यस्याभिघारयत्याश्राव्याह सौम्यस्य यजेति वषट्कृते जुहोति ॥ ५ ॥

( त्य ) अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । ( त्वाश्रा ) आश्राव्याह घृतस्य यजेति वषट्कृते जुहोति तद्या ऽअत ऽऊर्ध्वा ऽआहुतीर्होष्यन्भवति ताभ्य ऽएवैतदन्तर्दधाति तथा हासमदं करोति स यदि कामयेतोभयतः परियजेद्यद्यु कामयेतान्यतरतः परियजेत् ॥ ६ ॥

---

स यत्प्रातःसवने वा प्रचरेत्, माध्यन्दिने वा सवने—समदं ह कुर्यात् देवेभ्यश्च, पितृभ्यश्च । तेन तृतीयसवने प्रचरति । वैश्वदेवं वै तृतीयसवनम् । तथा हासमदं करोति । नानुवाक्यामन्वाह । सकृदु ह्येव पराञ्चः पितरः । तस्मान्नानुवाक्यामन्वाह ॥ ३ ॥

अथ चतुर्गृहीतमाज्यं गृहीत्वा, आश्राव्याह—घृतस्य यजेति । वषट्कृते जुहोति । तद् या अतः प्राच्य आहुतयो हुता भवन्ति—ताभ्य एवैतदन्तर्दधाति, तथा हासमदं करोति ॥ ४ ॥

स आज्यस्योपस्तीर्य द्विश्चरोरवद्यति । अथोपरिष्टादाज्यस्याभिघारयति । आश्राव्याह—सौम्यस्य यजेति । वषट्कृते जुहोति ॥ ५ ॥

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा आश्राव्याह—घृतस्य यजेति । वषट्कृते जुहोति । तद् या अत

---

'समदं' विरोधं कुर्यात् । देवानां पितॄणां षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ वा. १ ) । नानुवाक्यामन्वाहेति । अनुवाद एव । यावदुक्तत्वात् ॥ ३ ॥

अथ चतुर्गृहीतमित्यत्राप्याज्ये यावदुक्तमेव आश्रावणादिषु पुनर्वचनात् ॥ ४ ॥

स आज्यस्योपस्तीर्येति । उपस्तरणादीनां प्रकृतित एव प्राप्तत्वात् पुनर्वचनाद्यावदुत्तमः । ततश्च स्विष्टकृदिडाद्यकृत्वैवायं चरुरुद्गात्रे हर्तव्यः[2] । शाखान्तरात् ॥ ५ ॥

'परियजेत्' सौम्यमाज्यभागं न परिगृह्णीयादित्यर्थः ॥ ६ ॥

---

१—आपात्रप्रक्षालनात् कृत्वा सौम्येन चरति । आज्येनोभयतः परियजति । अन्यतरतो वा । घृतस्य यजेत्याह घृतशब्द उपांशु । सौम्यस्य यजेति सौम्येन चरन् । यावदुक्त ऽसौम्यस्य पुनर्ग्रहणात् । का. श्रौ. सू. १०।१२१–१२६ । २—आज्यमासिच्योद्गात्रे सौम्यं प्रयच्छति चतुर्गृहीतं प्रचरण्या धिष्ण्येषु जुहोति यथान्युप्तं प्रभावयञ्छालाकान् प्रदीप्य प्रदीप्य विभूरसीति प्रतिमंत्रम् । का. श्रौ. सू. १० । १२७ ।

(ड) अथ प्रचरणीति स्रुग्भवति । तस्यां चतुर्गृहीतमाज्यं गृहीत्वाऽध्वर्युः शालाकैर्धिष्ण्यान्व्याघारयति तद्यच्छालाकैर्धिष्ण्यान्व्याघारयति यदेवैनानदो देवा ऽअब्रुवंस्तृतीयसवने वो घृत्याऽऽहुतिः प्राप्स्यति न सौम्याऽपहृतो हि युष्मत्सोमपीथस्तेन सोमाहुतिं नार्हथेति सैनानेषा तृतीयसवनऽएव घृत्याऽऽहुतिः प्राप्नोति न सौम्या यच्छालाकैर्धिष्ण्यान्व्याघारयति तानेतैरेव यजुर्भिर्यथोपकीर्णं यथापूर्व्वं व्याघारयति मार्जालीयऽएवोत्तमम् ॥ ७ ॥

तद्धैके । ( क१ ) आग्नीध्रीये पुनराघारयन्त्युदग्नऽइदं कर्मानुसंतिष्ठाताऽइति तदु तथा न कुर्यान्मार्जालीयऽएवोत्तमम् ॥ ८ ॥

---

ऊर्ध्वा आहुतीर्होष्यन्भवति–ताभ्य एवैतदन्तर्दधाति । तथा हासमदं करोति । स यदि कामयेत–उभयतः परियजेत् । यद्यु कामयेत–अन्यतरतः परियजेत् ॥ ६ ॥

पात्नीवतग्रहः ।

अथ प्रचरणीति स्रुग्भवति । तस्यां चतुर्गृहीतमाज्यं गृहीत्वाऽध्वर्युः शालाकैर्धिष्ण्यान्व्याघारयति । तद् यच्छालाकैर्धिष्ण्यान्व्याघारयति । यदेवैनानदो देवा अब्रुवन्–तृतीयसवने वो घृत्याऽऽहुतिः प्राप्स्यति । न सौम्याऽपहृतो हि युष्मत्सोमपीथः । तेन सोमाहुतिं नार्हथ इति सैनानेषा तृतीयसवनऽएव घृत्याऽऽहुतिः प्राप्नोति, न सौम्या । यच्छालाकैर्धिष्ण्यान्व्याघारयति–तानेतैरेव यजुर्भिर्यथोपकीर्णं यथापूर्वं व्याघारयति । मार्जालीयऽएवोत्तमम् ॥ ७ ॥

तद्धैके आग्नीध्रीये पुनराघारयन्ति–उदग्नऽइदं कर्मानुसन्तिष्ठाताऽइति । तदु तथा न कुर्यात् । मार्जालीयऽएवोत्तमम् ॥ ८ ॥

---

अथ प्रचरणीति । द्वाभ्यामेताभ्यां धिष्ण्यानां व्याघारणमुच्यते । 'शालाकैः' शलाकावयवैः । " प्रदीप्य–धिष्ण्यानिति " शाखान्तरात् । धिष्ण्यानाग्नीध्रीयादीन् विभज्य तदेवैकमजं तेनाभिघारयति । अभिजुहोति । घृतमयी 'घृत्या' । सोममयी 'सौम्या' । तानेतैरेवेति । "विभूरसि प्रवाहणः" इत्यादिभिर्यथोक्तमन्त्रवर्णैरिति । यो धिष्ण्यो येन यजुषोपकीर्णस्तं तेनाभिघारयेदित्यर्थः । यथापूर्वमिति । यः पूर्वमुपकीर्णस्तं पूर्वमेवाभिघारयेत् । यो द्वितीयस्तं द्वितीयमित्यादि क्रमवचनम् । मार्जालीय एवोत्तममित्यनुदेश्यानामाहवनीयादीनां निवृत्त्यर्थम् ॥ ७ ॥ ८ ॥

---

१–आग्नीध्रीये पुनः पश्चादिच्छन् । अत्र कर्कः–जुहोति तच्च तूष्णीं, काण्वशाखापाठादिति । तथा चात्र काण्वश्रुतिपाठः तदाहुस्तूष्णीमुत्तममाग्नीध्र आघारयेदिति । उदग्नः कर्मानुसंतिष्ठाता इति । तदुपरांगे वाऽऽभिघारयेदिति । का०श्रौ०सू०१०। १२८ ।

( मथ्ँ ) स यत्राध्वर्युः । शालाकैर्धिष्ण्यान्व्याघारयति तत्प्रतिप्रस्थाता पात्नीवतं ग्रहं गृह्णाति यज्ञाद्वै प्रजाः प्रजायन्ते यज्ञात्प्रजायमाना मिथुनात्प्रजायन्ते मिथुनात्प्रजायमाना ऽअन्ततो यज्ञस्य प्रजायन्ते तदेना ऽएतदन्ततो यज्ञस्य मिथुनात्प्रजननात्प्रजनयति तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते तस्मात्पात्नीवतं गृह्णाति ॥ ९ ॥

तं वाऽउपाथ्ँशुपात्रेण गृह्णाति । यदि सावित्रमुपाथ्ँशुपात्रेण गृह्णीयादन्तर्यामपात्रेणैतं यदि सावित्रमन्तर्यामपात्रेण गृह्णीयादुपाथ्ँशुपात्रेणैतथ्ँ समानथ्ँ ह्येतद्यदुपाथ्ँश्वन्तर्यामौ प्राणो हि यो वै प्राणः स ऽउदानो वृषा वै प्राणो योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥ १० ॥

तं वाऽअपुरोरुक्कं गृह्णाति । वीर्यं वै पुरोरुङ्नेत्स्त्रीषु वीर्यं दधानीति तस्मादपुरोरुक्कं गृह्णाति ॥ ११ ॥

( त्य ) अथातो गृह्णात्येव । ( वो ) उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम तऽइति ब्रह्म वै बृहस्पतिर्ब्रह्मप्रसूतस्य देव सोम तऽइत्येवैतदाह-

---

स यत्राध्वर्युः । शालाकैर्धिष्ण्यान्व्याघारयति । तत् प्रतिप्रस्थाता पात्नीवतं ग्रहं गृह्णाति । यज्ञाद्वै प्रजाः प्रजायन्ते, यज्ञात्प्रजायमाना मिथुनात्प्रजायन्ते, मिथुनात्प्रजायमाना अन्ततो यज्ञस्य प्रजायन्ते । तदेना एतदन्ततो यज्ञस्य मिथुनात्प्रजननात्प्रजनयति । तस्मान्मिथुनात्प्रजननादन्ततो यज्ञस्येमाः प्रजाः प्रजायन्ते । तस्मात्पात्नीवतं गृह्णाति ॥ ९ ॥

तं वाऽउपांशुपात्रेण गृह्णाति–यदि सावित्रमुपांशुपात्रेण गृह्णीयात्–अन्तर्यामपात्रेणैतम् । यदि सावित्रमन्तर्यामपात्रेण गृह्णीयाद्–उपांशुपात्रेणैतम् । समानं ह्येतत्–यदुपांश्वन्तर्यामौ । प्राणो हि । यो वै प्राणः स उदानः । वृषा वै प्राणः, योषा पत्नी । मिथुनमेवैतत्प्रजननं क्रियते ॥ १० ॥

तं वाऽअपुरोरुक्कं गृह्णाति । 'वीर्यं वै पुरोरुग्–नेत् स्त्रीषु वीर्यं दधानीति । तस्मादपुरोरुक्कं गृह्णाति ॥ ११ ॥

अथातो गृह्णात्येव–"उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम ते"–( वा०

---

अतः परं पात्नीवतमुच्यते–प्रागन्त्याभ्यां कण्डिकाभ्याम् । न सम्प्रति साक्षात् पत्नीभ्यो गृह्णाति इति । कथं तर्हि परोक्षवृत्त्या सोम उच्यते । हे सोम! तव 'पत्नीवतः' सतो 'ग्रहान्' अहम् 'ऋध्यासम्' । कथं च सोमः पत्नीवान् भवति । यदि पत्न्यस्तस्य देवता भवन्ति । एवं परोक्षं पत्नीभ्यो गृह्णाति तद्देवान्तरवद्विस्पष्टम् ॥ ९–११ ॥

उपयामगृहीतोऽसीति । पत्नीभ्यः–इत्येवम् । नेत्स्त्रीषु वीर्यमिति । देवपत्नीषु किल देवैस्तुल्या सुकृता-

---

१–उपयामगृहीतोसि बृहस्पतिसुतस्येति प्रतिप्रस्थाता पात्नीवतं गृह्णाति । का. श्रौ. सू. १० । १२९ ।

न्दोरिन्द्रियावत इति वीर्यवतऽ इत्येवैतदाह यदाहेन्दोरिन्द्रियावत इति पत्नीवतो ग्रहाँ२॥ ऽऋध्यासमिति न संप्रति पत्नीभ्यो गृह्णाति नेत्स्त्रीषु वीर्यं दधानीति तस्मान्न सम्प्रति पत्नीभ्यो गृह्णाति ॥ १२ ॥

( त्य ) अथ यः प्रचरण्याᳫँ सᳫँस्रवः परिशिष्टो भवति । तेनैनᳫँ श्रीणाति समर्धयति वाऽअन्यान्ग्रहाञ्छ्रीणन्नथैतं व्यर्धयति वज्रो वाऽआज्यमेतेन वै देवा वज्रेणाज्येनाघ्नन्नेव पत्नीर्निराक्ष्णुवंस्ता हता निरष्टा नात्मनश्चनैशत न दायस्य चनैशत तथोऽएवैष ऽएतेन वज्रेणाज्येन हन्त्येव पत्नीर्निरक्ष्णोति ता हता निरष्टा नात्मनश्चनेशते न दायस्य चनेशते ॥ १३ ॥

---

सं० ८ । ९ ) इति । ब्रह्म वै बृहस्पतिः । ब्रह्मप्रसूतस्य देव सोम त इत्येवैतदाह । "इन्दोरिन्द्रियावतः"-(वा०सं०८।९) इति । वीर्यवत इत्येवैतदाह–यदाह–इन्दोरिन्द्रियावत इति । "पत्नीवतो ग्रहां २॥ ऋध्यासम्"–( वा० सं० ८ । ९ ) इति । न सम्प्रति पत्नीभ्यो गृह्णाति–नेत्स्त्रीषु वीर्यं दधानीति । तस्मान्न सम्प्रति पत्नीभ्यो गृह्णाति ॥ १२ ॥

अथ यः प्रचरण्यां संस्रवः परिशिष्टो भवति–तेनैनं श्रीणाति । समर्धयति वाऽअन्यान्ग्रहाञ्छ्रीणन् । अथैतं व्यर्धयति । वज्रो वाऽआज्यम् । एतेन वै देवा वज्रेणाज्येनाघ्नन्नेव पत्नीर्निराक्ष्णुवन् । ता हता निरष्टा नात्मनश्चनैशत, न दायस्य चनैशत । तथोऽएवैष एतेन वज्रेणाज्येन हन्त्येव पत्नीर्निरक्ष्णोति । ता हता निरष्टा नात्मनश्चनेशते, न दायस्य चनेशते ॥ १३ ॥

---

स्तदनुकरणान्मानुष्योऽपि स्त्रियो वीर्यवत्यः पुंसि तुल्याः कृताः स्युः । तच्चायुक्तं व्यवहारस्यानवक्लृप्तेरित्यभिप्रायः ॥ १२ ॥

अथ यः प्रचरणीशेषेणैव पात्नीवतं 'श्रीणाति' अध्वर्युरेव । 'एतेन' 'चाज्येन' 'देवाः' 'पत्नीं' हतवन्तः ताडितवन्तः । ताडयित्वा च 'निराक्ष्णुवन्' ऐश्वर्यान्निर्भक्तवन्तः । "अक्षु व्याप्तौ"–( धा. पा. भ्वा. आ. ८७ ) इत्येष भौवादिकस्तस्य व्यत्ययेन श्नुविकरणः । पत्न्यः 'हताः' वाग्वज्रेण ताडिताः । 'निरष्टाः' ऐश्वर्याद्बहिर्भूताः सत्यः आत्मनोऽपि स्वशरीरस्यापि न ईशितवत्यः । तथा चाहुः–"न स्त्री स्वातन्त्र्यमर्हति"–इति । 'न दायस्य चन' दायस्य अपि पित्र्यस्य धनस्य ईशते; स्त्रीधनं वा षड्विधं दायस्तस्यापि नैवेशत इति । तदनुकारेणायमध्वर्युस्तथैव करोति । स्त्रियश्चाद्यापि तथैव नेशते ॥ १३ ॥

---

१–प्रचरणीशेषेण श्रीणात्येनमहं परस्तादिति । का. श्रौ. सू. १० । १३० ।

स श्रीणाति ।(त्य) अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताऽभूत् । अहᳬ सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यदिति स यदहमहमिति श्रीणाति पुᳬस्त्वेवैतद्वीर्यं दधाति ॥ १४ ॥

( त्य ) अथाहाग्नीत्पात्नीवतस्य यजेति वृषा वाऽअग्नीद्योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते स जुहोत्यग्ना ३ऽइ पत्नीवन्निति वृषा वा अग्निर्योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥ १५ ॥

सजूर्देवेन त्वष्ट्रेति । त्वष्टा वै सिक्तᳬ रेतो विकरोति तदेषऽएवैतत्सिक्तᳬ रेतो विकरोति सोमं पिब स्वाहेत्युत्तरार्द्धे जुहोति या इतरा आहुतयस्ते देवाऽअथैताः पत्न्यऽएवमिव हि मिथुनं क्लृप्तमुत्तरतो हि स्त्री पुमाᳬसमुपशेतऽआहरत्यध्वर्युरग्नीधे भक्षᳬ सऽआहाध्वर्यऽउप माऽऽह्वयस्वेति तं नु प्रत्युपह्वयेत को हि हतस्य निरष्टस्य प्रत्युपहवस्तं वै प्रत्येवोपह्वयेत जुह्वत्यस्याग्नौ व्युषट्कुर्वन्ति तस्मात्प्रत्येवोपह्वयेत ॥ १६ ॥

---

स श्रीणाति—" अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताऽभूत् । अहं सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यद् "—( वा० सं० ८ । ९ ) इति । स यदहमहमिति श्रीणाति—पुंस्त्वेवैतद्वीर्यं दधाति ॥ १४ ॥

अथाह—अग्नीत् । पात्नीवतस्य यजेति । वृषा वाऽअग्नीद्, योषा पत्नी, मिथुनमेवैतत्प्रजननं क्रियते । स जुहोति—" अग्ना ३ऽइ पत्नीवन् "—( वा० सं० ८ । १० ) इति । वृषा वाऽअग्निः, योषा पत्नी । मिथुनमेवैतत्प्रजननं क्रियते ॥ १५ ॥

" सजूर्देवेन त्वष्ट्रा "—( वा० सं० ८ । १० ) इति । त्वष्टा वै सिक्तं रेतो विकरोति । तदेष

---

पुᳬस्त्वेवैतद्वीर्यं दधातीति । अध्वर्युः किल पुमांसं वा तमुच्चारयन् पुंस्त्वसामान्यात् सर्वेष्वेवं सर्वं दधाति येन स्वतन्त्राः पुमांसः सर्वस्येशते ॥ १४ ॥

अथाहाग्नीदिति[१] । प्रतिप्रस्थातुर्हस्तादादायाध्वर्युराग्नीध्रमाह । " अग्नीत् पात्नीवतस्य यजेति " आश्रावणमप्यत्र द्रष्टव्यमेव । प्रैषाङ्गत्वात् । पुरोनुवाचनप्रभृति स्तुतशस्त्रं, तेनापि प्रैषस्याङ्गं ग्रहः ' अग्नीत् पात्नीवतस्य यजेति ' ॥ १५ ॥

' या इतरा ' उपांश्वाज्या ' आहुतयः ' ' ते देवाः ' देवान्तत्वाद्देवास्तद्वन्तः । ' अथैताः पत्न्यः ' पत्नीदेवत्यत्वात् पात्नीवतस्येति । पत्नीनां चोत्तरतः स्थानमतस्तदन्तर्गताया अप्याहुतेरुत्तरत एव स्थानं युक्तमित्यभिप्रायः[२] । आहरत्यध्वर्युरिति । प्रतिप्रस्थातृशङ्कानिवृत्त्यर्थमध्वर्युग्रहणम् । ' को हि हतस्य ' इत्यनादर-

---

१—अग्नीत्पात्नीवतस्य यजेत्याह । का.श्रौ.सू. १०।१३।१। २—अग्ना ३इ पत्नीवन्नित्युत्तरार्द्धे जुहोति । का०श्रौ०सू० १०।१३।२।

(त्वा) अथ सम्प्रेष्यति (त्यु) अग्नीन्नेष्टरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा संख्यापयोन्नेतर्होतुश्चमसमनून्नय सोमं माऽतिरीरिच इति यद्यग्निष्टोमः स्यात् ॥ १७ ॥

(य) यद्युक्थ्यः स्यात् । (त्सो) सोमं प्रभावयेति ब्रूयात्स विश्वदेवैतत्पात्रमग्नीन्नेष्टुरुपस्थमासीदत्यग्निर्वाऽएष निदानेन यदाग्नीध्रो योषा नेष्टा वृषा वाऽअग्नीद्योषा नेष्टा मिथुनमेवैतत्प्रजननं क्रियतऽउदानयति नेष्टा पत्नीं तामुद्गात्रा संख्यापयति प्रजापतिर्वृषाऽसि रेतोधा रेतो मयि धेहीति प्रजापतिर्वाऽउद्गाता योषा पत्नी मिथुनमेवैतत्प्रजननं क्रियते ॥ १८ ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ४ । ३ । ४ ॥ (४. २.)

---

एवैतत् सिक्तं रेतो विकरोति । "सोमं पिब स्वाहा"–(वा० सं० ८ । १०) इति । उत्तरार्द्धे जुहोति । या इतरा आहुतयस्ते देवाः, अथैताः पत्न्यः । एवमिव हि मिथुनं क्लृप्तम् । उत्तरतो हि स्त्री पुमांसमुपशेते । आहरत्यध्वर्युरग्नीधे भक्षम् । स आह–अध्वर्यऽउप माऽऽह्वयस्वेति । तं न प्रत्युपह्वयेत । को हि हतस्य निरष्टस्य प्रत्युपहवः । तं वै प्रत्येवोपह्वयेत जुह्वत्यस्याग्नौ वषट् कुर्वन्ति । तस्मात्प्रत्येवोपह्वयेत ॥ १६ ॥

अथ सम्प्रेष्यति–अग्नीन्नेष्टुरुपस्थमासीद, नेष्टः पत्नीमुदानय । उद्गात्रा सङ्ख्यापय, उन्नेतर्होतुश्चमसमनून्नय, सोमं माऽतिरीरिच इति । यद्यग्निष्टोमः स्यात् ॥ १७ ॥

यद्युक्थ्यः स्यात्–सोमं प्रभावयेति ब्रूयात् । स विश्वदेवैतत्पात्रमग्नीन्नेष्टुरुपस्थमासीदति । अग्निर्वाऽएष निदानेन–यदाग्नीध्रः, योषा नेष्टा, वृषा वाऽअग्नीद् । योषा नेष्टा । मिथुनमेवैतत्प्रजननं

---

प्रकाशनार्थम् । प्रतिवचनमपि न देयम् । एवं हि पत्न्यः सुतरामवीर्याः कृता भवन्तीत्यभिप्रायः । तत्र प्रत्युपह्वयेत 'उपह्वय' इत्येवमनुजानीतेत्यर्थः । किं कारणं यस्माज्जुहोति । अस्यैकदेशे 'अग्नौ वषट्कुर्वन्ति' न वैतदनादरणीये प्रयुज्येत । तस्मात् उपह्वयेतैव ॥ १६ ॥

अथ सम्प्रेष्यतीति । सङ्ख्यायाः प्रदेशा 'उन्नेतर्होतुश्चमसमनु सर्वांश्चमसानुनून्नय सोमं माऽतिरीरिचः' सर्वमेव पूतभृतः 'सोमम्' उन्नयन्ति । होमप्रदानमित्यभिप्रायः । 'यद्यग्निष्टोमः स्यात्' अग्निष्टोमसंस्थाक्रतुः स्यादित्यर्थः ॥ १७ ॥

एते च तेऽग्निष्टोमचमसा येषु द्वादशं स्तोत्रं यज्ञायज्ञियमाग्निमारुतं च शस्त्रं शस्यते । यद्युक्थ्यः स्यादिति[२] ।

---

१–प्रेष्यति चाग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा संख्यापयोन्नेतर्होतुश्चमसमनून्नय सोमं माऽतिरीरिच इति । का. श्रौ. सू. १० । १३३ । २–प्रभावयेत्युक्थ्यादिषु । आग्नीध्रे भक्षणं व्वषट्कारोपाह्वानाभ्याम् । सपात्र आसीदति नेष्टुरुपस्थम् । अत्र वा भक्षणं पात्रहरणसामर्थ्यात् । अग्नीत्प्रक्षाल्य पात्रं खरे करोति । पात्रं पात्नीवतसंबन्धीति कर्कः । का० श्रौ० सू० १० । १३४–१३८ ।

पशवो वै देवानां छन्दाᳬसि । तद्यथेदं पशवो युक्ता मनुष्येभ्यो वहन्त्येवं छन्दाᳬसि युक्तानि देवेभ्यो यज्ञं वहन्ति तद्यत्र च्छन्दाᳬसि देवान्त्समतर्पयन्नथ च्छन्दाᳬसि देवाः समतर्पयंस्तदतस्तत्प्रागभूद्यच्छन्दाᳬसि युक्तानि देवेभ्यो यज्ञमवाक्षुर्यदेनान्त्समतीतृपन् ॥ १ ॥

( न्रु ) अथ हारियोजनं गृह्णाति । च्छन्दाᳬसि वै हारियोजनश्छन्दाᳬस्येवैतत्संतर्पयति तस्माद्धारियोजनं गृह्णाति ॥ २ ॥

---

क्रियते । उदानयति नेष्टा पत्नीम् । तामुद्गात्रा सङ्ख्यापयति । " प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहि[१] "–( वा० सं० ८ । १० ) इति । प्रजापतिर्वाऽउद्गाता, योषा पत्नी । मिथुनमेवैतत्प्रजननं क्रियते ॥ १८ ॥

## हारियोजनग्रहः ।

पशवो वै देवानां छन्दांसि । तद् यथेदं पशवो युक्ता मनुष्येभ्यो वहन्ति । एवं छन्दांसि युक्तानि देवेभ्यो यज्ञं वहन्ति । तद् यत्र छन्दांसि देवान् समतर्पयन्–अथ छन्दांसि देवाः समतर्पयन् । तदतस्तत्प्रागभूद् यच्छन्दांसि युक्तानि देवेभ्यो यज्ञमवाक्षुः–यदेनान्त्समतीतृपन् ॥ १ ॥

अथ हारियोजनं गृह्णाति । छन्दांसि वै हारियोजनः । छन्दांस्येवैतत् संतर्पयति । तस्माद्धारियोजनं गृह्णाति ॥ २ ॥

---

उक्थ्यग्रहणमुत्तराणां संस्थानां लक्षणार्थम् । उक्थ्यादिषु संस्थासु ' सोमं प्रभावय ' प्रभूतं कुरु । यथोत्तराण्यपि प्रदानानि सिध्यन्तीत्यर्थः । सोऽग्नीदेतत् पात्नीवतपात्रं हस्ते धारयन्नेव नेष्टुरुत्सङ्गमध्यास्ते । ' योषा नेष्टा ' स हि ' पत्नी ' भवति वाचयति च ॥ १८ ॥

इति आचार्यहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे चतुर्थाऽध्याये द्वितीयं ब्राह्मणम् ॥ ४–४–२ ॥

पशवो वा इति । हारियोजनग्रहब्राह्मणमेतत्–उत्तमाः सप्त कण्डिका वर्जयित्वा । तद्यत्र च्छन्दांसीति । यत्र काले अग्निष्टोमसंस्थे तूक्थ्यादिसंस्थे वा क्रतौ समाप्ते सति छन्दांसि देवान् स्तोत्रशस्त्रैः सन्तर्पितवन्ति ' अथ ' अनन्तरं कृतोपकाराणि च्छन्दांसि देवाः सन्तर्पितवन्तः–इतीतिहासः । तमधुना यज्ञमुपसंहरति–तदिति । अतः हारियोजनात् प्राक् स्रोतसि च्छन्दोभिर्देवास्तर्पिताः ॥ १ ॥

अथ हारियोजनमिति । ' अथ ' यथासंकलितसंज्ञे यज्ञे छन्दोऽभिरूढे देवेषु तर्पितेषु, पात्रुकेऽपि वाऽनुयाजादौ स्रुग्विमोकान्ते कृते, अनन्तरं हारियोजनं गृह्णाति । हरिवतो योजनो हारियोजनो देवता अस्य हारियोजनो ग्रहः । ' छन्दांᳬसि वै हारियोजनः ' छान्दसमिति कृत्वा ॥ २ ॥

---

१–इह धेहीत्यनन्तरं संहितायां–' प्रजापतेस्ते वृष्णो रेतोधसो रेतोधामशीय ' इत्यधिको भागः पठ्यते ।
२–विमुच्य स्रुचौ द्रोणकलशे हारियोजनग्रहणमुपयामगृहीतोऽसि हरिरसीति । का. श्रौ. सू. १० । १५४ ॥

तं वाऽअ॒ति॒रि॒क्तं गृ॑ह्णाति । य॒दा हि॒ शंयो॒रा॒हा॒थै॒नं गृ॑ह्णा॒तीदं॑ वै दे॒वा-ऽअ॒थ च्छ॒न्दाᳪं॑स्यति॒रि॒क्तान्य॒थ म॒नु॒ष्या॒ऽअ॒थ प॒श॒वो॒ऽति॒रि॒क्तास्त॒स्मा-द॒ति॒रि॒क्तं गृ॑ह्णाति ॥ ३ ॥

द्रो॒ण॒क॒ल॒शे गृ॑ह्णाति । वृ॒त्रो वै सोम॒ऽआ॒सी॒त्तं य॒त्र दे॒वा अ॒घ्नं॒स्त॒स्य मू॒र्धो॒द्व॒व॒र्त स॒ द्रो॒ण॒क॒ल॒शो॒ऽभ॒व॒त्त॒स्मिन्या॒वा॒न्वा या॒वा॒न्वा र॒सः स॒म॒स्र॒व-द॒ति॒रि॒क्तो वै स॒ऽआ॒सी॒द॒ति॒रि॒क्त॒ऽए॒ष ग्र॒ह॒स्त॒द॒ति॒रि॒क्त॒ऽए॒वै॒त॒द॒ति॒रि॒क्तं द॒धा॒ति त॒स्मा॒द्द्रो॒ण॒क॒ल॒शे गृ॑ह्णाति ॥ ४ ॥

तं वा॒ऽअ॒पु॒रो॒रु॒क्कं गृ॑ह्णाति । छ॒न्दो॒भ्यो॒ ह्ये॒नं गृ॑ह्णाति स य॒दे॒वै॒नं च्छ॒न्दो-भ्यो गृ॑ह्णाति ते॒नो हा॒स्यै॒ष पु॒रो॒रु॒ङ्मा॒न्भ॒व॒ति त॒स्मा॒द॒पु॒रो॒रु॒क्कं गृ॑ह्णाति ॥५॥

(त्य) अ॒था॒तो गृ॑ह्णा॒त्ये॒व । ( वो ) उ॒प॒या॒म॒गृ॒ही॒तो॒ऽसि ह॒रि॒र॒सि हा॒रि-यो॒ज॒नो ह॒रि॒भ्यां त्वे॒त्यृ॒क्सा॒मे वै ह॒री॒ऽऋ॒क्सा॒मा॒भ्याᳪं॑ ह्ये॒नं गृ॑ह्णाति ॥ ६ ॥

---

तं वाऽअतिरिक्तं गृह्णाति । यदा हि शंयोराह–अथैनं गृह्णाति । इदं वै देवाः–अथ छन्दांस्यतिरिक्तानि । अथ मनुष्याः–अथ पशवोऽतिरिक्ताः । तस्मादतिरिक्तं गृह्णाति ॥ ३ ॥

द्रोणकलशे गृह्णाति । वृत्रो वै सोम आसीत् । तं यत्र देवा अघ्नन् । तस्य मूर्धोद्ववर्त । स द्रोणकलशोऽभवत् । तस्मिन् यावान्वा–यावान्वा रसः समस्रवत्–अतिरिक्तो वै स आसीत् । अतिरिक्त एष ग्रहः । तद् अतिरिक्तऽएवैतदतिरिक्तं दधाति । तस्माद् द्रोणकलशे गृह्णाति ॥ ४ ॥

तं वाऽअपुरोरुक्कं गृह्णाति । छन्दोभ्यो ह्येनं गृह्णाति । स यदेवैनं छन्दोभ्यो गृह्णाति–तेनो हास्यैष पुरोरुङ्मान्भवति । तस्मादपुरोरुक्कं गृह्णाति ॥ ५ ॥

अथातो गृह्णात्येव–" उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यां त्वा "–( वा. सं. ८ । ११ ) इति । ऋक्सामे वै हरी । ऋक्सामाभ्यां ह्येनं गृह्णाति ॥ ६ ॥

---

तं वा इति । देवदेवत्येभ्यो ग्रहेभ्यो देवयज्ञाद्वाऽतिरिक्तं गृह्णाति । कथम् ? यदा हि शंयोराह होता । अथोत्तरकालं क्रतौ विमुच्य तं गृह्णाति तदा च देवानां यज्ञः सम्पन्नः, समाप्तो भवतीत्यभिप्रायः । किं पुनः कारणं यज्ञ एतदतिरिक्तं गृह्णाति यस्मादस्याधिदैवाधिभूते अतिरिक्ते । एतदाह–इदं वै देवा इति । सन्तीति शेषः । ' अथ च्छन्दांसि ' तेषामतिरिक्तानि । पशव उपकारकाणि उपकार्यास्तु देवाः । अथशब्दोऽत्र विशेषणार्थः । एवं तावदधिदैवतमतिरिक्ता दर्शिताः । अधिभूतमित्याह–अथ मनुष्या इति । ' अथ मनुष्याः ' देवानामन्तराः सन्ति । तेषाम् ' अथ पशवोऽतिरिक्ताः ' तदुपकारकत्वात् ॥ ३ ॥

द्रोणकलश इति । ऊर्ध्वच्छिन्नस्तस्य मूर्धोर्ध्वमुद्वतो गतः उद्ववर्त तस्मिन् ' यावान्वा यावान्वा ' चेति पदद्वयं विभक्तमल्पार्थे वर्त्तते । यथा यद्वा तद्वा भुक्तं तथा जीर्णे जितमिति तस्मिन् द्रोणे यो रसः ' समस्रवत् ' इत्यर्थः । ' अतिरिक्तो वै ' रसः ' स आसीत् ' अधः स्पृष्टः । शरीरे यः तं देवाः पात्रे विगृह्णाना यत्र तेनातिरिक्तो यो द्रोणकलशे गृह्णाति तदतिरिक्तेनास्मिन् कलशेऽतिरिक्तमिमं ग्रहं दधाति ॥ ४ ॥ ५ ॥

अथात इति । ऋक्सामे वै हरी इति । छन्दआत्मके इत्यभिप्रायः ॥ ६ ॥

( त्यु ) अथ धानाऽआवपति । हर्यौर्धाना स्थ सहसोमाऽइन्द्रायेति तद्य- देवात्र मितं च च्छन्दोऽमितं च तदेवैतत्सर्वं भक्षयति ॥ ७ ॥

तस्योन्नेताऽऽश्रावयति । (त्यु) अतिरिक्तो वाऽउन्नेता न ह्येषोऽन्यस्याश्रा यवयत्यतिरिक्त एष ग्रहस्तस्मादतिरिक्तऽएवैतदतिरिक्तं दधाति तस्मादुन्ने ताऽऽश्रावयति ॥ ८ ॥

मूर्धन्नभिनिधायाश्रावयति । मूर्धा ह्यस्यैषोऽथाह धानासोमेभ्योऽनुब्रूही- त्याश्राव्याह धानासोमान्प्रस्थितान्प्रेष्येति वषट्कृते जुहोत्यनुवषट्कृते- ऽथ धाना विलिप्सन्ते भक्षाय ॥ ९ ॥

तद्धैके । होत्रे द्रोणकलशं प्रतिपराहरन्ति वषट्कर्तुर्भक्ष इति वदन्तस्तदु तथा न कुर्याद्यथाचमसं वाऽअन्ये भक्षाऽअथैषोऽतिरिक्तस्तस्मादेत- स्मिन्त्सर्वेषामेव भक्षस्तस्माद्धाना विलिप्सन्ते भक्षाय ॥ १० ॥

---

अथ धाना आवपति—"हर्योर्धाना स्थ सहसोमा इन्द्राय"—( वा. सं. ८ । ११ ) इति । तद् यदेवात्र मितं च छन्दः, अमितं च—तदेवैतत् सर्वं भक्षयति ॥ ७ ॥

तस्योन्नेताऽऽश्रावयति । अतिरिक्तो वाऽउन्नेता—न ह्येषोऽन्यस्याश्रावयति । अतिरिक्त एष ग्रहः । तस्मादतिरिक्तऽएवैतदतिरिक्तं दधाति । तस्मादुन्नेताऽऽश्रावयति ॥ ८ ॥

मूर्धन्नभिनिधायाश्रावयति । मूर्धा ह्यस्यैषः । अथाह—धानासोमेभ्योऽनुब्रूहीति । आश्राव्याह— धानासोमान्प्रस्थितान् प्रेष्येति । वषट्कृते जुहोति—अनुवषट्कृते । अथ धाना विलिप्सन्ते भक्षाय ९

तद्धैके—होत्रे द्रोणकलशं प्रतिपराहरन्ति—वषट्कर्तुर्भक्ष इति वदन्तः। तदु तथा न कुर्याद् । यथा-

---

अथ धाना इति[1] । यदेता 'धाना आवपति' तदेव 'अत्र' यज्ञे 'मितं' नियताक्षरपादं ऋङ्नाम- लक्षणम् । यद्वाऽनियताक्षरपादं यजुः 'तदेवैतत् सर्वं छन्दः' । सोमं धानावन्तं भक्षयति न ह्यावपेत । सोमः पीतो भवत्यस्मिन् छन्दसा शक्तोऽतितर्पयितुमित्यभिप्रायः ॥ ७ ॥

तस्योन्नेतेति[2] । आश्रावणद्वारेणानुवाचनादौ होमान्ते सर्वत्रैवोन्नेतानाम विधीयते । ततश्चासौ तत्रानु- वाचयेत्, जुहुयात् । भक्षः केवलं निवर्तते । किं कारणं ? यस्मादनुवाचनादिकमेव प्रतियज्ञे उपावर्त्तते । तथा च चरकाणां ग्रहणमप्युन्नेतुरेवाम्नातम् । धानासहिताः सोमाः 'अनुवषट्कृते' जुहोतीति वर्त्तते । 'अथ' होमानन्तरम् । धानाविभागे लब्धुमिच्छन्ति । लिप्सया तत्पूर्वकमादानं लक्ष्यते । विभज्य गृह्णन्तीत्यर्थः कथम् ? 'एतस्मिन् सर्वेषामेव भक्षः' इति वाक्यशेषादेव । भक्ष इति वाक्यशेषात् सर्वे ऋत्विग्यजमाना भक्षन्ति ॥ ८ ॥ ९ ॥

तद्धैके होत्र इति । यथाचमसम्, यो यस्य चमसस्तस्य तस्मिंश्चमसे इत्येतस्मिन्नर्थे 'यथाचम-

---

१--धानाश्चावपति हर्योर्धाना इति । का० श्रौ०सू० १०।१५५। २—उन्नेताऽनुवाचयति मूर्द्धनि कृत्वा धानासोमेभ्योऽनुब्रूहीति । आश्राव्याह धानासोमान् प्रस्थितान् प्रेष्येति । भक्ष्रं हरेदिच्छन् । उत्तरवेदौ वा निधाय विलाभम् । का श्रौ. सू. १०।१५६-१५९

ता नु दुद्भिः खादेयुः। पशुवो वाऽएते नेत्पशूॅन्प्रम्रदे करवामहाऽइति प्राणैरेव भक्षयन्ति युस्तेऽअश्वसुनिर्भक्षो यो गोसुनिरिति पशुवो ह्येते तुस्मा-दाह युस्तेऽअश्वसुनिर्भक्षो यो गोसुनिरिति तुस्य तऽइष्टयजुष स्तुतस्तो-मस्येतीष्टानि हि युजूंॅषि भुवन्ति स्तुता स्तोमाः शस्तोक्थस्येति शस्तानि ह्युक्थानि भुवन्त्युपहूतस्योपहूतो भक्षयामीत्युपहूतस्य ह्येतदुपहूतो भक्षयति ॥ ११ ॥

---

चमसं वाऽअन्ये भक्षाः—अथैषोऽतिरिक्तस्तस्माद् । एतस्मिन्त्सर्वेषामेव भक्षः । तस्माद्धानाः विलिप्सन्ते भक्षाय ॥ १० ॥

ता न दद्भिः खादेयुः । पशवो वाऽएते—नेत् पशूॅन्प्रम्रदे करवामहाऽइति । प्राणैरेव भक्षयन्ति । "यस्तेऽअश्वसनिर्भक्षो यो गोसनिः"—( वा. सं. ८ । १२ ) इति । पशवो ह्येते । तस्मा-दाह—यस्ते अश्वसनिर्भक्षो यो गोसनिरिति । "तस्य तऽइष्टयजुष स्तुतस्तोमस्य"—( वा. सं. ८।१२ ) इति । इष्टानि हि यजूंषि भवन्ति, स्तुताः स्तोमाः । "शस्तोक्थस्य"—( वा.सं. ८।१२) इति । शस्तानि ह्युक्थानि भवन्ति । "उपहूतस्योपहूतो भक्षयामि"—( वा. सं. ८ । १२ ) इति । उपहूतस्य ह्येतदुपहूतो भक्षयति ॥ ११ ॥

---

सम् ' इत्येतत् पदं वर्त्तते । 'अन्ये भक्षाः' चमसानुभक्षितानां सर्वे चमसा भवन्ति । अनुचमसानामपि वषट्-कारादिना निमित्तेन भवन्ति । ' अथ ' इति विशेषणार्थः । तस्मिंस्तु हारियोजनानां सर्वेषामेव ऋत्विग्यज-मानानां भक्षः । ततश्चात्र होताऽन्ये च तुल्या एवेति न होत्रे द्रोणकलशो नेयः, किन्तूत्तरवेदाविव धानाः सर्वेभ्यो लिप्समानेभ्यो देयाः ॥ १० ॥

ता न दद्भिरिति । ' दद्भिः ' दन्तैः । " पद्दन्नोमास्हृत् "—( पा. सू. ६ । १ । ६३ ) इति छन्दसि दन्तस्य दद्भावः । ' पशवो वा एते ' धानाः पशूनां छन्दसामन्नमिति कृत्वा । ' नेत्पशून्प्रम्रदे ' प्रक-र्षेण मृद्यन्ते बध्यन्तेऽस्मिन्निति ' प्रम्रदः ' आघातस्थानम् । धानारूपाः किल पशवो दन्तान्तर एवाघात-स्थाने क्रियेरन् यदि दन्तैर्धाना भक्षयेरन् । ' प्राणैरेव ' नासिक्यैरेव जिघ्रन्तो ' भक्षयन्ति ' । अवघ्राण-मेव भक्षणमित्यर्थः । ' पशवो ह्येते ' गोश्वाः । छन्दोरूपाः पशवः सम्भक्ता अनेन भक्षणेनेत्यभिप्रायः । ' इष्टानि हि यजूंषि भवन्ति ' तस्मिन् सोमे यानि यजूंषि गृह्यन्त इत्यभिप्रायः । ' स्तुताः स्तोमाः ' स्तोमाः स्तोत्राणि । ' शस्तानि उक्थानि ' । उक्थयुक्तानीति ॥ ११ ॥

---

१—इह संहितायां ' देवकृतस्य ' इत्यादयः षण्मन्त्राः शाकलाः पठ्यन्ते । त इह ब्राह्मणे न सन्ति ।

२—यस्ते अश्वसनिरिति प्राणभक्षं भक्षयित्वोत्तरवेदौ निवपन्ति । शाकलाधानं देवकृतस्येति प्रतिमन्त्रम् । का. श्रौ. सू. १० । १६० । १६१ । शाखांतरोपदेशाच्छाकलाधानमिति पितृभूतिः ।

ता नाग्नौ प्रकिरेयुः । (नैं) नेदुच्छिष्टमग्नौ जुहवामेत्युत्तरवेदावेव निवपन्ति तथा न बहिर्धा यज्ञाद्भवन्ति ॥ १२ ॥

(न्त्यु) अथ पूर्णपात्रान्त्समवमृशन्ति । यानेकेऽप्सुषोमाऽइत्याचक्षते यथा वै युक्तो व्वहेदेवमेते यऽआर्त्विज्यं कुर्व्वन्त्युत वै युक्तः क्षणुते वा वि वा लिशते शान्तिरापो भेषजं तद्यदेवात्र क्षण्वते वा वि वा लिशन्ते शान्तिरापस्तदद्भिः शान्त्या शमयन्ते तदद्भिः संदधते तस्मात्पूर्णपात्रान्त्समवमृशन्ति ॥ १३ ॥

---

ता नाग्नौ प्रकिरेयुः–नेदुच्छिष्टमग्नौ जुहवामेति । उत्तरवेदावेव निवपन्ति । तथा न बहिर्धा यज्ञाद्भवन्ति ॥ १२ ॥

अथ पूर्णपात्रान्त्समवमृशन्ति–यानेकेऽप्सुषोमा इत्याचक्षते । यथा वै युक्तो वहेद्–एवमेते यऽआर्त्विज्यं कुर्वन्ति । उत वै युक्तः क्षणुते वा, वि वा लिशते । शान्तिरापः । भेषजं तद् । यदेवात्र क्षण्वते वा, वि वा लिशन्ते । शान्तिरापः । तदद्भिः शान्त्या शमयन्ते । तदद्भिः संदधते । तस्मात्पूर्णपात्रान्त्समवमृशन्ति ॥ १३ ॥

---

ता नाग्नाविति प्रसन्ना ॥ १२ ॥

अथ पूर्णपात्रानिति । पूर्णान् पात्रान् अपाम् । कुत एतत् ? शान्तिरापो भेषजमिति वाक्यशेषात् । 'समवमृशन्ति' सर्वे ऋत्विजः । कुत एतत् ? 'य आर्त्विज्यं कुर्वन्ति' इति वाक्यशेषात् । यजमानश्च युक्तत्वात् । कीदृशान् पूर्णपात्रान् 'यानेके' शाखिनः 'अप्सुषोमाः' अबात्मकाः सोमा इत्येवम् 'आचक्षते' । सुशब्द उपजनः । के पुनरप्सुषोमाः ? हरितकुशवन्तः पूर्णपात्राः सोमचमसास्तांश्च शाखान्तरादेव यथास्वं चमसिनोऽवमृशन्ति । एवमपि नानृत्विजः सर्वे चमसमवमृशन्ति । यथा वै युक्तो गौरश्वो वा वहेदेवमेते पुरुषं वहन्ति य आर्त्विज्यं कुर्वन्ति । तुल्यन्यायत्वाद्यजमानश्च करोतीति द्रष्टव्यम् । 'युक्तः' 'उत' अपि च 'क्षिणुते' "क्षिणु हिंसायाम्"–( धा. पा. त. उ. ४ ) हिनस्ति विनाशयति । 'विलिशते वा' "लिश अल्पीभावे"–( धा. पा. दि. आ. ७३ ) विपूर्वो विश्लेषणे वर्त्तते । विश्लेषयतीति । यद्यन्तर्युक्तः क्षिणुते वा विलिशते वा तस्यापगमनं भेषजं च प्रसिद्धम् । तद्वदत्रापि यदयज्ञियं नाम किञ्चिदुक्त्वा 'क्षिण्वते' हिंसन्ति 'लिशन्ते' वा विश्लेषयन्ति तद् 'अद्भिः' अवमृश्यमानाभिः शान्त्या शमनीभिः प्रसिद्धाभिः शमयन्ते सन्दधते च ॥ १३ ॥

---

१–अपरेण चात्वालं यथास्वं चमसान् पूर्णपात्रानवमृशंति हरितकुशानवधाय सं व्वर्चसेति । का. श्रौ. सू. १०–१६२ ।
२–इह सर्वत्र भाष्ये क्षिणुधातोः प्रयोगे स्वरसो लभ्यते । श्रुतौ तु क्षणुते इति पाठो दृश्यते ॥

ते समवमृशन्ति । सं व्वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो व्विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमिति यद्विवृढं तत्संदधते ॥ १४ ॥

( तेऽथ ) अथ मुखान्युपस्पृशन्ते । द्वयं तद्यस्मान्मुखान्युपस्पृशन्तेऽमृतं वाऽआपोऽमृतेनैवैतत्सꣳस्पृशन्तऽएतदु चैवैतत्कर्मात्मन्कुर्वते तस्मान्मुखान्युपस्पृशन्ते ॥ १५ ॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ४-३-५ ॥ ( ४-३ ) ॥

तानि वाऽएतानि । नव समिष्टयजूꣳषि जुहोति तद्यन्नव समिष्टयजूꣳषि जुहोति नव वाऽअमूर्बहिष्पवमाने स्तोत्रिया भवन्ति सैषोभयतो न्यूना व्विराट् प्रजननायै तस्माद्वाऽउभयतो न्यूनात्प्रजननात्प्रजापतिः प्रजाः ससृजऽइतश्चोर्ध्वाऽइतश्चावाचीस्तथोऽएवैष एतस्मादुभयत एव न्यूनात्प्रजननात्प्रजाः सृजतऽइतश्चोर्ध्वाऽइतश्चावाचीः ॥ १ ॥

---

ते समवमृशन्ति–" सं वर्चसा पयसा सन्तनूभिरगन्महि मनसा सं शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् "–( वा० सं० ८ । १६ ) इति । यद्विवृढं तत् सन्दधते ॥ १४ ॥

अथ मुखान्युपस्पृशन्ते । द्वयं तद्–यस्मान्मुखान्युपस्पृशन्ते । अमृतं वाऽआपः । अमृतेनैवैतत्संस्पृशन्ते । एतदु चैवैतत्कर्मात्मन्न कुर्वते । तस्मान्मुखान्युपस्पृशन्ते ॥ १५ ॥

समिष्टयजुः ।

तानि वाऽएतानि नव समिष्टयजूंषि जुहोति । तद् यन्नव समिष्टयजूंषि जुहोति । नव वाऽअमूर्बहिष्पवमाने स्तोत्रिया भवन्ति । सैषोभयतो न्यूना विराट् प्रजननाय । एतस्माद्वाऽउभयतो न्यूनात्

---

ते समवमृशन्तीति । हविर्यज्ञे ( श. प. १ । ७ । ४ । ६ ) ते व्याख्याते ॥ १४ ॥

' एतदु चैवैतत् कर्मात्मन्कुर्वते ' इत्येतत्त्वत्र न युज्यते । न ह्यृत्विग्भिः कर्मात्मनि कर्त्तव्यम् । नैष दोषः । " यां वै कां च यज्ञ "–इत्येवं यजमानात्मन्येव ते कुर्वते इति विज्ञायते । बहुभिस्तु तद्विलिष्टमिति वै बह्वः ' संदधते ' अयं वा यजमानः करोतीति ॥ १५ ॥

इति आचार्यहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे
चतुर्थोऽध्याये तृतीयं ब्राह्मणम् ॥ ( ४–४–३ ) ॥

तानि वा इति । समिष्टयजुर्ब्राह्मणमेतत् । समिष्टयजूंषि जुहोति–इत्यत्रापूर्व एव समिष्टयजुर्धर्मका नव होमा १ज्योतिष्टोमाङ्गभूता विधीयन्ते । न पशौ प्राप्तस्यैव समिष्टयजुषः संख्यामात्रम् । किं कारणम् ? पशौ समिष्टयजुषः

---

१–मुखान्यालभंते दधिक्राव्ण इत्याग्नीध्रे दधिभक्षणम् । पत्नीसंयाजाः पशुवत् । का. श्रौ. सू. १० । १६३ । १६४ ।

( हिं ) हिङ्कारः स्तोत्रियाणां दशमः । स्वाहाकारऽएतेषां तथो हास्यैषा न्यूना विराड्दशंदशिनी भवति ॥ २ ॥

( त्यु ) अथ यस्मात्समिष्टयजूꣳषि नाम । या वाऽएतेन यज्ञेन देवता ह्वयति याभ्यऽएष यज्ञस्तायते सर्वा वै तत्ताः समिष्टा भवन्ति तद्यत्तासु सर्वासु समिष्टास्वथैतानि जुहोति तस्मात्समिष्टयजूꣳषि नाम ॥ ३ ॥

---

प्रजननात्प्रजापतिः प्रजाः ससृजे–इतश्चोर्ध्वाः, इतश्चावाचीः । तथोऽएवैष एतस्मादुभयत एव न्यूनात्प्रजननात् प्रजाः सृजते–इतश्चोर्ध्वाः, इतश्चावाचीः ॥ १ ॥

हिङ्कारः स्तोत्रियाणां दशमः स्वाहाकार एतेषाम् । तथो हास्यैषा न्यूना विराड् दशंदशिनी भवति॥ २॥

अथ यस्मात्समिष्टयजूंषि नाम । या वाऽएतेन यज्ञेन देवता ह्वयति, याभ्य एष यज्ञस्तायते–सर्वा वै तत्ताः समिष्टा भवन्ति । तद् यत् तासु सर्वासु समिष्टास्वथैतानि जुहोति–तस्मात्समिष्टयजूंषि नाम ॥ ३ ॥

---

प्राप्तेरभावात् । कथं वाऽग्नीषोमीये हि तस्य तत्प्रकृतितः प्राप्नुवतस्तस्य समिष्टयजूꣳषि आहुतान्यासुरित्यवलुप्ततद्विकारत्वात् सवनीयेनेव प्राप्नोति । कुतस्तस्य सङ्ख्या विधास्यते । तेन होमान्तराण्येवैतानि । समिष्टयजुः-शब्दप्रयोगात् । तत् क्रमेण, तेनैव द्रव्येण क्रियन्ते । मन्त्रान्तरैश्च प्रत्यक्षाम्नातैश्च विशेषः । तथा च स्तोत्रियाभिस्तुल्यवत् प्रसङ्गादुपपत्स्यते । समिष्टयजुःशब्दस्य चापूर्ववन्निर्वचनम् । तदपि चैतेन ज्योतिष्टोमयज्ञेन देवता ह्वयत इति ज्योतिष्टोमसमत्वमेव पशुयज्ञस्त्वेकस्या एव देवताया अग्नये तायते येनैतद्वचनमनुपपन्नं स्यात् । तथा च ' अथ यस्मात् समिष्टयजूंषि जुहोतीति ' कर्मविधानं यत् क्रियते । " यद्यस्य भवति तस्य हि ददातीति " च सोमयागे । एतेनाप्यायनार्थतामेवाह । एवमुत्तरोऽपि, वाक्यशेषात् । मन्त्राश्च दर्शनीयाः । तथा च–" उभयानि जुहोत्यध्वरस्य चाग्नेश्च " इत्यध्वरस्य सम्बन्धमेवाह । तस्माद्विशिष्टविधिरेषः । एवं च सवनीयविकारेषु बहिस्तन्त्रेषु[1] वचनादृते समिष्टयजुषैव न भवति । निरूढे तु प्रत्यक्षशिष्टमन्त्राणि समिष्टयजूंषि । विकारेष्वपि तान्यपि दर्शितानि च । तदाहुः–नैतस्य पशोः समिष्टयजूंषि जुहुयादिति सौत्रामण्यामपि च त्रीण्येव समिष्टयजूंषि बोधायनेन पठितानि । ततश्च तत्रापि त्रीण्येव होतव्यानि । ननु च सवनीयपुरोडाशानामनुपनीतं समिष्टयजुः, सूत्रसङ्ख्या नवमात्रं कस्मान्न विधीयते ? उच्यते–समिष्टयजुस्तत्पुरोडाशानां नैव प्राप्नोति, प्राप्नुवद्वा पुरोडाशप्रचारकाले एव प्राप्नोति न पाशुकानुषङ्गेण । न चोत्कर्षेणैतदुत्कर्षति । प्रासङ्गिकं च नोत्कर्षेदसम्बन्धानीति न्यायात् । अथापि पौरोडाशिकं समिष्टयजुस्तत्पुरोडाशानामपि नव सङ्ख्या विधीयते । तथापि न कश्चित् कर्मणि विशेषः । तस्माद्विशिष्टो होमान्तरविधिरेवायं युक्तः । इतश्चोर्ध्वा इति । त्रिःपवमानात्मकान्मुखादूर्ध्वाः ससृजे । ' इतश्चावाचीः ' समिष्टयजुर्नवात्मकादवाचः प्राणात् ॥ १ ॥

हिङ्कारः स्तोत्रियाणामिति । हिङ्कार–स्वाहाकाराभ्यां सह त्रिर्णवेयमुभयतो विराड् भवति ।' दशंदशिनी' दशदशपरिमाणमस्येत्येतस्मिन्नर्थे दशदशशब्दादिनिप्रत्ययः । पूर्वपदस्य च नुमागमः । अथ यस्मान्निर्वचनकण्डिकैषा । समिष्टेषु देवेषु इज्यन्ते समिष्टयजूंषि ॥ २ ॥ ३ ॥

---

१–बहिःसत्रेषु इति पाठान्तरम् ।

( सु ) अथ यस्मात्समिष्टयजूꣳषि जुहोति । रिरिचानऽइव वाऽएत-दीजानस्यात्मा भवति यद्ध्यस्य भवति तस्य हि ददाति तमेवात-स्त्रिभिः पुनराप्याययति ॥ ४ ॥

( त्यु ) अथ यान्युत्तराणि त्रीणि जुहोति । या वाऽएतेन यज्ञेन देवता ह्वयति याभ्य एष यज्ञस्तायतऽउप हैव ताऽआसते यावन्न समिष्टयजूꣳषि जुह्वतीमानि नु नो जुह्वत्विति ताऽएवैतद्यथायथं व्यवसृजति यत्रयत्रासां चरणं तदनु ॥ ५ ॥

( न्वु ) अथ यान्युत्तमानि त्रीणि जुहोति । यज्ञं वाऽएतदजीजनत यदेनम-तत तं जनयित्वा यत्रास्य प्रतिष्ठा तत्प्रतिष्ठापयति तस्मात्समिष्टयजूꣳषि जुहोति ॥ ६ ॥

स जुहोति । समिन्द्र णो मनसा नेषि गोभिरिति मनसेति तन्मनसा रिरि-चानमाप्याययति गोभिरिति तद्गोभी रिरिचानमाप्याययति सꣳ सू-रिभिर्मघवन्त्सꣳ स्वस्त्या । सं ब्रह्मणा देवकृतं यदस्तीति ब्रह्मणेति तद् ब्रह्मणा रिरिचानमाप्याययति सं देवानाꣳ सुमतौ यज्ञियानाꣳ स्वाहा ॥७॥

---

अथ यस्मात्समिष्टयजूंषि जुहोति । रिरिचानऽइव वाऽएतदीजानस्यात्मा भवति । यद्ध्यस्य भवति–तस्य हि ददाति । तमेवातस्त्रिभिः पुनराप्याययति ॥ ४ ॥

अथ यान्युत्तराणि त्रीणि जुहोति । या वाऽएतेन यज्ञेन देवता ह्वयति, याभ्य एष यज्ञस्तायते–उप हैव ता आसते–यावन्न समिष्टयजूंषि जुह्वति; इमानि नु नो जुह्वत्विति । ता एवैतद् यथायथं व्यवसृजति–यत्रयत्रासां चरणम्–तदनु ॥ ५ ॥

अथ यान्युत्तमानि त्रीणि जुहोति । यज्ञं वाऽएतदजीजनत–यदेनमतत । तं जनयित्वा, यत्रास्य प्रतिष्ठा–तत् प्रतिष्ठापयति । तस्मात्समिष्टयजूंषि जुहोति ॥ ६ ॥

स जुहोति–(१) "समिन्द्र णो मनसा नेषि गोभिः"–(वा. सं. ८।१५) इति । मनसेति । तन्मनसा रिरिचानमाप्याययति । गोभिरिति । तद्गोभी रिरिचानमाप्याययति । "सं सूरिभिर्मघ-वन्त्सं स्वस्त्या । सं ब्रह्मणा देवकृतं यदस्ति"–( वा. सं. ८ । १५ ) इति । ब्रह्मणेति । तद्ब्रह्मणा रिरिचानमाप्याययति । "सं देवानां सुमतौ यज्ञियानां स्वाहा"–( वा. सं. ८ । १५ ) इति ॥ ७ ॥

---

अथ यस्मादिति । 'अथ' अत्र प्रथमानि यजमानस्याप्यायनार्थानीत्येतदुच्यते ॥ ४ ॥

अथ यान्युत्तराणीति । अथात्र यानि मध्यमानि त्रीणि देवताविसर्गार्थानीत्याह ॥ ५ ॥

अथ यानीति । अत्रोत्तमस्य त्रिकस्य यज्ञप्रतिष्ठापनार्थतामाह ॥ ६ ॥

स जुहोतीति[१] । अत आरभ्य मन्त्राणां वक्ष्यमाणानां यथोक्तं प्रयोजनं सामर्थ्यं त्रिकाणां दर्शयति ।

---

१–समिन्द्र ण इति नव समिष्टयजूꣳषि जुहोति प्रतिमंत्रम् । का० श्रौ० सू० १०–१६५।

सं व्वर्चसा । पयसा सं तनूभिरिति व्वर्चसेति तद्वर्चसा रिरिचानमाप्याययति पयसेति रसो वै पयस्तत्पयसा रिरिचानमाप्याययत्यगन्महि मनसा सर्ठ० शिवेन । त्वष्टा सुदत्रो व्विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टमिति यद्विवृढं तत्संदधाति ॥ ८ ॥

धाता रातिः । सवितेदं जुषन्तां प्रजापतिर्निधिपा देवोऽअग्निः । त्वष्टा व्विष्णुः प्रजया सर्ठ०रराणा यजमानाय द्रविणं दधात स्वाहेति तद्देव रिरिचानं पुनराप्याययति यदाह यजमानाय द्रविणं दधात स्वाहेति ॥ ९ ॥

सुगावो देवाः । सदना अकर्म यऽआजग्मेदर्ठ० सवनं जुषाणा इति सुगानि वो देवाः सदनान्यकर्म यऽआगन्तेदर्ठ० सवनं जुषाणा इत्येवैतदाह भरमाणा व्वहमाना हवीर्ठ०षीति तद्देवता व्व्यवसृजति भरमाणा अह ते यन्तु येऽवाहना व्वहमाना उ ते यन्तु ये व्वाहनवन्तऽइत्येवैतदाह तस्मादाह भरमाणा व्वहमाना हवीर्ठ०ष्यस्मे धत्त व्वसवो व्वसूनि स्वाहा ॥ १० ॥

याँ२॥ आवहः । (५) उशतो देव देवांस्तान्प्रेरय स्वेऽअग्ने सधस्थऽइत्यग्निं वाऽआहामून्देवानावहामून्देवानावहेति तमेवैतदाह यान्देवानावाक्षी-

( २ ) "सं वर्चसा पयसा सं तनूभिः"–( वा० सं० ८।१६ ) इति । वर्चसेति । तद् वर्चसा रिरिचानमाप्याययति । पयसेति । रसो वै पयः । तत् पयसा रिरिचानमाप्याययति । "अगन्महि मनसा सं शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम्"–( वा० सं० ८।१६ ) इति । यद् विवृढं तत् सन्दधाति ॥ ८ ॥

(३) " धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपा देवोऽअग्निः । त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधात स्वाहा "–( वा० सं० ८ । १७ ) इति । तद्देव रिरिचानं पुनराप्याययति । यदाह–यजमानाय द्रविणं दधात स्वाहेति ॥ ९ ॥

( ४ ) " सुगा वो देवाः सदना अकर्म यऽआजग्मेदं सवनं जुषाणाः "–( वा० सं० ८।१८ ) इति । सुगानि वो देवाः सदनान्यकर्म–यऽआगन्तेदं सवनं जुषाणा इत्येवैतदाह । "भरमाणा वहमाना हवींषि "–( वा० सं० ८ । १८ ) इति । तद् देवता व्यवसृजति । भरमाणा अह ते यन्तु–येऽवाहनाः । वहमाना उ ते यन्तु–ये वाहनवन्तः इत्येवैतदाह । तस्मादाह–भरमाणा वहमाना हवींषि । " अस्मे धत्त वसवो वसूनि स्वाहा "–( वा० सं० ८ । १८ ) ॥ १० ॥

( ५ ) "यान् २॥ऽआवह उशतो देव देवांस्तान् प्रेरय स्वे अग्ने सधस्थे" ( वा० सं०

व्यवसृजति विमुञ्चतीत्यर्थः । ' भरमाणा ' एव ' ते ' ' देवा ' यन्तु ' ' ये अवाहना वहमानाः ' स्कन्धे धारयन्त इत्यर्थः । ' वहमानाः ' तु रथादीनां ते । ' यन्तु ' सवाहनाः ॥ ७–१४ ॥

इति आचार्यहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे चतुर्थेऽध्याये चतुर्थं ब्राह्मणं समाप्तम् ॥४–४–४॥

स्तान्गमय यत्रयत्रैषां चरणं तदन्विति जक्षिवाᳬंसः पपिवाᳬंसश्च विश्व इति जक्षिवाᳬंसो हि पशुं पुरोडाशं भवन्ति पपिवाᳬंस इति पपिवाᳬंसो हि सोमᳬं राजानं भवन्ति तस्मादाह जक्षिवाᳬंसः पपिवाᳬंसश्च विश्वेऽसुं घर्मᳬं स्वरातिष्ठतानु स्वाहेति तद्वेव देवता व्यवसृजति ॥ ११ ॥

व्वयᳬं हि त्वा । प्रयति यज्ञेऽअस्मिन्नग्ने होतारमवृणीमहीह । ऋधगयाऽ ऋधगुताशमिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान्स्वाहेत्यग्निमेवैतया विमुञ्चत्यग्निं व्यवसृजति ॥ १२ ॥

देवा गातुविद इति । गातुविदो हि देवा गातुं वित्त्वेति यज्ञं वित्त्वेत्येवैतदाह गातुमितेति तदेतेन यथायथं व्यवसृजति मनसस्पतऽइमं देव यज्ञᳬं स्वाहा व्वाते धा इत्ययं वै यज्ञो योऽयं पवते तदिमं यज्ञᳬं सम्भृत्यैतस्मिन्यज्ञे प्रतिष्ठापयति यज्ञेन यज्ञᳬं संदधाति तस्मादाह स्वाहा व्वाते धा इति ॥ १३ ॥

यज्ञ यज्ञं गच्छ । यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहेति तत्प्रतिष्ठितमेवैतद्यज्ञᳬं सन्तᳬं स्वायां योनौ प्रतिष्ठापयत्येष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्व्ववीरस्तं जुषस्व स्वाहेति तत्प्रतिष्ठितमेवैतद्यज्ञᳬं सन्तᳬं सहसूक्तवाकᳬं सर्व्ववीरं यजमानेऽन्ततः प्रतिष्ठापयति ॥ १४ ॥

इति तृतीयप्रपाठके षष्ठं ब्राह्मणम् ॥४–३–६॥ ( ४-४ ) ॥

---

८ । १९ )–इति । अग्निं वाऽआह–अमून् देवानावह अमून्देवानावहेति । तमेवैतदाह–यान्देवानावाक्षीस्तान्–गमय, यत्रयत्रैषां चरणं तदन्विति । " जक्षिवांसः पपिवांसश्च विश्वे "–( वा० सं० ८ । १९ ) इति । जक्षिवांसो हि पशुं पुरोडाशं भवन्ति । पपिवांस इति; पपिवांसो हि सोमं राजानं भवन्ति । तस्मादाह–जक्षिवांसः पपिवांसश्च विश्वे । " असुं घर्मं स्वरातिष्ठतानु स्वाहा " ( वा. सं. ८ । १९ ) इति । तद्वेव देवता व्यवसृजति ॥ ११ ॥

( ६ ) " वयं हि त्वा प्रयति यज्ञेऽअस्मिन्नग्ने होतारमवृणीमहीह । ऋधगया ऋधगुताशमिष्ठाः प्रजानन्यज्ञमुपयाहि विद्वान्त्स्वाहा "–( वा० सं० ८ । २० ) इति । अग्निमेवैतया विमुञ्चति । अग्निं व्यवसृजति ॥ १२ ॥

( ७ ) " देवा गातुविदः "–( वा० सं० ८ । २१ ) इति । गातुविदो हि देवाः । " गातुं वित्वा "–( वा. सं. ८ । २१ ) इति । यज्ञं वित्वेत्येवैतदाह । " गातुमित "–(वा. सं. ८ । २१) इति । तदेतेन यथायथं व्यवसृजति । " मनसस्पतऽइमं देव यज्ञं स्वाहा वाते धाः "–( वा. सं. ८ । २१ ) इति । अयं वै यज्ञो योऽयं पवते । तद् इमं यज्ञं सम्भृत्यैतस्मिन्यज्ञे प्रतिष्ठापयति । यज्ञेन यज्ञं सन्दधाति । तस्मादाह–स्वाहा वाते धा इति ॥ १३ ॥

( ८ ) " यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा "–(वा. सं. ८ । २२)

# अथ चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ।
# चतुर्थाध्याये च पञ्चमं ब्राह्मणम् ।



स वाऽअवभृथमभ्युवैति । तद्यदवभृथमभ्यवैति यो वाऽअस्य रसोऽभूदाहुतिभ्यो वाऽअस्य तमजीजनदथैतच्छरीरं तस्मिन्न रसोऽस्ति तन्न परास्यंस्तदपोऽभ्यवहरन्ति रसो वाऽआपस्तदस्मिन्नेतᳬं रसं दधाति तदेनमेतेन रसेन संगमयति तदेनमतो जनयति सऽएनं जातऽएव संजनयति तद्यदपोऽभ्यवहरन्ति तस्मादवभृथः ॥ १ ॥

---

इति । तत् प्रतिष्ठितमेवैतद्यज्ञं सन्तं स्वायां योनौ प्रतिष्ठापयति । (९) "एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहा"-(वा० सं० ८। २२) इति। तत् प्रतिष्ठितमेवैतद्यज्ञं सन्तं सहसूक्तवाकं सर्ववीरं यजमानेऽन्ततः प्रतिष्ठापयति ॥ १४ ॥

### अवभृथस्नानम् ।

स वाऽअवभृथमभ्यवैति । तद् यदवभृथमभ्यवैति । यो वा अस्य रसोऽभूद्-आहुतिभ्यो ऽवा अस्य तमजीजनद् । अथैतच्छरीरं-तस्मिन्न रसोऽस्ति-तन्न परास्यन् । तदपोऽभ्यवहरन्ति । रसो वाऽआपः । तदस्मिन्नेतं रसं दधाति । तदेनमेतेन रसेन संगमयति । तदेनमतो जनयति । स एनं जात एव सञ्जनयति । तद् यदपोऽभ्यवहरन्ति-तस्मादवभृथः ॥ १ ॥

---

स वा इति । अवभृथब्राह्मणमेतत् । अवभृथस्नानाद्वारुणपुरोडाशयागस्योत्पत्तिः । "अथ वारुण एककपालः पुरोडाशो भवति" इत्यत्रावभृथकण्डिकायामवभृथशब्दनिवचनमुच्यते । अवभृथार्थं चाप्स्ववतरणम्। तत्र च ऋजीषस्याभ्यवहरणम् एतद्द्वयं वक्ष्यमाणविशेषनिर्वचनार्थमत्रोपन्यस्यते स वा इति।स वै अवभृथं कर्तुमिति शेषः।'अभ्यवैति' अवतरति । "स यः स्यन्दमानानां स्थावरो ह्रदः स्यात्" इति वचनाद्ध्रदादयो वक्ष्यमाणाः । 'यो वै अस्य' सोमस्य 'रसः' 'अभूत्' तमस्य सोमस्याहुत्यर्थं जनितवानयमध्वर्युरभिषवादिभिः । अथ सम्प्रति एतच्छरीरम्-ऋजीषं वर्त्तते स्म । 'तस्मिन् नरसोऽस्ति' तथाऽपि 'तत्' देवाः 'न पराऽस्यन्' न बहिः क्षिप्तवन्तोऽद्भिः प्रयोजनं भवेदिति कृत्वाऽधुनापि तदर्जीषम् 'अपोऽभ्यवहरन्ति' अध्वर्यवः सहकार्यपेक्षं बहुवचनम् । किमर्थं तदपोऽभ्यवहरन्त्यत आह-रसो वा आप इति । 'रसः' 'वै' 'आपः' 'तदस्मिन्' शरीरे 'एतं रसम्' उदकं 'दधाति' 'तत्' च 'एनं' सोमम् 'एतेन रसेन' 'सङ्गमयति' यजमानः । तच्च

---

१-अस्मिन्नेव ब्राह्मणे १५ कण्डिकायाम् ।

( थ्रो॰ऽथ ) अ॒थ स॒मिष्टयजू॑ꣳषि जुहोति । स॒मिष्टयजू॑ꣳषि ह्ये॒वान्तो य॒ज्ञस्य स॒ हु॒त्वैव स॒मिष्टयजू॑ꣳषि य॒देत॒मभि॒तो भ॒वति ते॒न चा॒त्वाल॒मुपस॒मा य॒न्ति स॒ कृष्णविषाणां च मेखलां च चा॒त्वाले प्रा॒स्यति ॥ २ ॥

मा॒ऽहिर्भूर्मा पृ॒दाकु॒रिति । ( त्य ) असौ वा॒ऽऋजीषस्य स्वगाकारो य॒देन-दपो॒ऽभ्यवह॒रन्त्यथैष॒ऽए॒वैत॒स्य स्वगाकारो र॒ज्जुरिव हि स॒र्पाः कू॒पा॒ऽइव हि स॒र्पाणा॒मायत॒नान्यस्ति वै म॒नुष्याणां च स॒र्पाणां च वि॒भ्रातृव्यमिव ने॒त्त-द॒तः सम्भ॒वदिति त॒स्मादाह॒ मा॒ऽहिर्भूर्मा पृ॒दाकु॒रिति ॥ ३ ॥

---

अथ समिष्टयजूंषि जुहोति। समिष्टयजूंषि ह्येवान्तो यज्ञस्य । स हुत्वैव समिष्टयजूंषि, यदेतमभितो भवति–तेन चात्वालमुपसमायन्ति । स कृष्णविषाणां च मेखलां च चात्वाले प्रास्यति ॥ २ ॥

" माहिर्भूर्मा पृदाकुः "–( वा० सं० ८ । २३ ) इति । असौ वाऽऋजीषस्य स्वगाकारो यदेनदपोऽभ्यवहरन्ति । अथैष एवैतस्य स्वगाकारः । रज्जुरिव हि सर्पाः । कूपा इव हि सर्पाणामायतनानि । अस्ति वै मनुष्याणां च सर्पाणां च विभ्रातृव्यमिव। नेत्तदतः संभवदिति । तस्मादाह–माऽहिर्भूर्मा पृदाकुरिति ॥ ३ ॥

---

एनं सोमवत् ततोऽध्वर्योऽनुनयति । स च सोमो जातः सन्नेनं यजमानं ' जनयति ' । असृजत तेनात्मना एनं तस्मिन्नवभृथयागे यस्मादपोऽभ्यवहरन्ति तस्मात् यागोऽवभृथः । अवपूर्वात् हरतेस्थन् प्रत्ययः, हकारस्य भकार इत्येतस्मिन्निर्वचनं दर्शयति ॥ १ ॥

अथ समिष्टयजूंषीति " अथ समिष्टयजूंषि जुहोति " इति क्रमार्थं पुनर्वचनमाह–' स हुत्वैव समिष्टयजूंषि '–बर्हिर्होममकृत्वेत्यर्थः । यत्किञ्चिदेव तं सोममभित उपकरणं भवति चमसादि तेन सह चात्वालमुपसंयोगिन उपगच्छन्ति । ' स कृष्णविषाणां च मेखलां च चात्वाले ' प्रक्षिपति ॥ २ ॥

माऽहिर्भूर्मेति । ' स्वगाकारः ' स्वस्थाननयनम् ' ऋजीषस्याप्स्वभ्यवहरणम् । ' अथ ' ' एतस्य ' । कृष्णविषाणा मेखला एतयोरेव स्वस्थानोपनयः । यद्वा चात्वालोपनयः प्रासनम् । रज्जुर्हि सर्पाणां रूपं, कृष्णविषाणा इत्येतदपि द्रष्टव्यम् । ततः किम् ? कूपाश्च सर्पाणाम् ' आयतनानि ' । तेन कृष्णविषाणामेखलयोरपि सर्परूपयोः कूपा एवायतनानि । चात्वालप्रासनार्थवादः ' अस्ति वै मनुष्याणां च ' इति । मन्त्रार्थवादः । अन्योन्यभ्रातृव्यभावो ' विभ्रातृव्यम् ' । तदस्ति मनुष्याणां च सर्पाणां च । ततश्च सर्परूपा रज्जुर्यदि स्थाने क्रियते तेन च मे " माऽहिर्भूः ' इत्येवमहिभावः प्रतिषिध्येत । ततो यज्ञेन संबध्येत । तेषु सम्बन्धिषु च विभ्रातृव्यं सम्भवेत् । तच्चायुक्तम् । तन्न सम्भवेदित्येवमर्थं ' माऽहिर्भूः ' इत्याह ॥ ३ ॥

---

१–आसंयौदुंबर्यां चात्वाल॰ द्रवति सोमलिप्तं च । कृष्णविषाणामेखले चात्वाले प्रास्यति माऽहिर्भूरिति । प्रतिप्रस्थाता च पत्नीयोक्त्रे तूष्णीम् । का. श्रौ. सू. १६७–१६८ ।

( त्यु ) अथ व्वाचयति । ( त्यु ) उरुᳪं हि राजा व्वरुणश्चकार सूर्याय पन्थामन्वेतवाऽउऽइति यथाऽयमुरुरुभयोऽनाष्ट्रः सूर्याय पन्थाऽएवं मेऽयमुरुरुभयोऽनाष्ट्रः पन्थाऽअस्त्वित्येवैतदाह ॥ ४ ॥

( ह्रा ) अपदे पादा प्रतिधातवेऽकरिति । यदि ह वाऽअप्यपाद्भवत्यलमेव प्रतिक्रमणाय भवत्युतापवक्ता हृदयाविधश्चिदिति तदेनᳪं सर्व्वस्माद्वृद्यादेनसः पाप्मनः प्रमुञ्चति ॥ ५ ॥

( त्यु ) अथाह साम गायेति । साम ब्रूहीति वा गायेति त्वेव ब्रूयाद्गायन्ति हि साम तद्यत्साम गायति नेदिदं बहिर्धा यज्ञाच्छरीरं नाष्ट्रा रक्षाᳪंसि हिनसन्निति साम हि नाष्ट्राणाᳪं रक्षसामपहन्ता ॥ ६ ॥

( न्ताऽऽग्ने ) आग्नेय्यां गायति । ( त्य ) अग्निर्हि रक्षसामपहन्ताऽतिच्छन्दसि गायत्येषा वै सर्व्वाणि च्छन्दाᳪंसि यदतिच्छन्दास्तस्मादतिच्छन्दसि गायति ॥ ७ ॥

---

अथ वाचयति—" उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवाउ "—( वा० सं० ८ । २३ ) इति । यथाऽयमुरुरुभयोऽनाष्ट्रः सूर्याय पन्थाः—एवं मेऽयमुरुरुभयोऽनाष्ट्रः पन्था अस्त्वित्येवैतदाह ॥ ४ ॥

" अपदे पादा प्रतिधातवेऽकः "—( वा० सं० ८ । २३ ) इति । यदि ह वाऽअप्यपाद्भवति—अलमेव प्रतिक्रमणाय भवति । " उतापवक्ता हृदयाविधश्चित् "—( वा० सं० ८ । २३ ) इति । तदेनं सर्वस्माद्वृद्यादेनसः पाप्मनः प्रमुञ्चति ॥ ५ ॥

अथाह—' साम गाय ' इति । 'साम ब्रूहि' इति वा । गायेति त्वेव ब्रूयात् । गायन्ति हि साम । तद् यत्साम गायति—नेदिदं बहिर्धा यज्ञाच्छरीरं नाष्ट्रा रक्षांसि हिनसन्निति । साम हि नाष्ट्राणां रक्षसामपहन्ता ॥ ६ ॥

आग्नेय्यां गायति । अग्निर्हि रक्षसामपहन्ता । अतिच्छन्दसि गायति एषा वै सर्वाणि च्छन्दांसि—यदतिच्छन्दाः । तस्मादतिच्छन्दसि गायति ॥ ७ ॥

---

अथ वाचयतीति । " यथाऽयमुरुः " इति मन्त्रव्याहारं दर्शयति ॥ ४ ॥

अपदे पादा इति । यदि ह वा अप्यपादिति । मन्त्रवचनात् यद्यप्यपादको यजमानस्तथाऽप्यलं गमनाय भवति यथा, एवम् । वरुणकृतस्तु तस्य स गुणः मन्त्रवचनेनैव । यजमानोऽध्वर्युर्वाचं यच्छति । कथम् ? अत्र हीदमुच्यते । योऽप्ययुक्तवक्ताऽनृतवादी हृदयं दुर्वचनैर्जनानां विध्यति पिशुनस्तस्यापि पादप्रतिधान एव योग्यं वरुणः पन्थानं करोत्विति । तव हृद्ये सर्वस्मिन्नेनसि अनपनीतेऽस्य पथः प्रतिक्रमणे योऽलं पापकारी स्यात् तेनेदृशं पन्थानं वरुणः करोत्विति वचनेनैव सा मुञ्चतीत्युपपन्नम् ॥ ५ ॥

अथाह साम गायेति । इदं शरीरमृजीषं बहिर्द्धा यज्ञादेव यजमानात् ॥ ६ ॥

आग्नेय्यां गायतीति । प्रसन्नास्तिस्रः ॥ ७–९ ॥

---

१–उरु६हीति व्वाचयति यजमानम् । साम प्रेष्यति गाय ब्रू ३ हीति वा । का० श्रौ० सू० १० । १६१ । १७० ।

स गायति । (त्य) अग्निष्टपति प्रतिदहत्यहावोऽहावऽइति तन्नाष्ट्रा एवैतद्रक्षाᳬंस्यतोऽपहन्ति ॥ ८ ॥

तऽउदञ्चो निष्क्रामन्ति । जघनेन चात्वालमग्रेणाग्नीध्रᳬं स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति ॥ ९ ॥

स यः स्यन्दमानानाᳬं स्थावरो ह्रदः स्यात् । (च) तमुपोऽभ्युवेयादेता वाऽ अपां व्वरुणगृहीता याः स्यन्दमानानां न स्यन्दन्ते व्वरुण्यो वाऽअवभृथो निर्व्वरुणतायै यद्यु ता न व्विन्देदपि या एव काश्चापोऽभ्युवेयात् ॥ १० ॥

( च ) तमुपोऽवक्रमयन्वाचयति । नमो व्वरुणायाभिष्ठितो व्वरुणस्य पाश इति तदेनᳬं सर्व्वस्माद्वरुणपाशात्सर्व्वस्माद्वरुण्यात्प्रमुञ्चति ॥ ११ ॥

---

स गायति–" अग्निष्टपति प्रतिदहत्यहावोऽहावः "–( साम संहिता ) इति । तन्नाष्ट्रा एवैतद्रक्षांस्यतोऽपहन्ति ॥ ८ ॥

तऽउदञ्चो निष्क्रामन्ति–जघनेन चात्वालम्–अग्रेणाग्नीध्रम् । स यस्यां ततो दिश्यापो भवन्ति–तद् यन्ति ॥ ९ ॥

स यः स्यन्दमानानां स्थावरो ह्रदः स्यात्–तमपोऽभ्यवेयाद् । एता वाऽअपां वरुणगृहीताः–याः स्यन्दमानानां न स्यन्दन्ते । वरुण्यो वाऽअवभृथः । निर्वरुणतायै । यद्यु ता न विन्देद्–अपि या एव काश्चापोऽभ्यवेयात् ॥ १० ॥

तमपोऽवक्रमयन्वाचयति–" नमो वरुणायाभिष्ठितो वरुणस्य पाशः "–( वा. सं. ८ । २३ ) इति । तदेनं सर्वस्माद्वरुणपाशात्, सर्वस्माद्वरुण्यात्प्रमुञ्चति ॥ ११ ॥

---

स यः स्यन्दमानानामिति । यत्तूक्तमवभृथं कर्तुमपोऽभ्यवैतीति, तत्रायं विशेष उच्यते । वरुणगृहीताः, गमनप्रतिघातात् । 'वरुण्यो वा अवभृथः' वरुणार्हः । स वरुणाकारैर्देवतात्वेनाविकरणं भविष्यतीति । तथा च सति यजमानो निर्मुक्तवरुणो भविष्यति । ह्रदात्मकोऽपि वरुण एतावता विवक्ष्यत इत्यभिप्रायः ॥ १० ॥

तमपोऽवक्रमयन्निति । तदेनं सर्वस्मादिति[2] । 'अभिष्ठितः' अवभृथः, स 'वरुणस्य पाशो' नालं बन्धनायेत्यभिप्रायः । होतुरपि चानेनैव मन्त्रेणाप्स्ववतरणमाम्नातम् । ततश्च सोऽप्यप्स्वेवावतीर्णो हौत्रं करोति । तस्य च पुरस्तादन्यैश्चरितव्यम् । तेन सामर्थ्यादितरे दूरतरमवतीर्णाश्चरन्तीति गम्यते । तत्र चासम्भवाद् वेदिर्निवर्त्तते । तदभावाच्च बर्हिः । ततश्च सामर्थ्याच्च हस्तगृहीताया एव स्थाल्या अवदाय इह वरणीयम् । जुह्वैव केवलया प्रचरेद्, अपि वा सद्वितीयया, न तिस्रोऽपि स्रुचः प्रयोज्या इति वक्ष्यामः ॥ ११ ॥

---

१–व्यध्वोदकांतयोश्च । सर्व्वे निधनमुपयंति । आहुतमादायावभृथं गच्छंति स्यंदमानाना २ स्थावराः । तदभावेऽन्याः । का. श्रौ. सू. १०।१७१–१७४ । २–नमो व्वरुणायेति व्वाचयत्यपोऽवक्रमयन् । का. श्रौ. सू. १० । १७५ ।

(त्यु) अथ चतुर्गृहीतमाज्यं गृहीत्वा । समिधं प्रास्याभिजुहोत्यग्नेरनीक-मपऽआविवेशापान्नपात्प्रतिरक्षन्नसुर्यम् । दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत्स्वाहेति ॥ १२ ॥

(त्य) अग्निर्ह वै देवाः । (०) यावद्वा यावद्वाऽप्सु प्रवेशयाञ्चक्रुर्नेदतो नाष्ट्रा रक्षांस्युपोत्तिष्ठानित्यग्निर्हि रक्षसामपहन्ता तमेतया च समिधैतया चाहुत्या समिन्द्धे समिद्धे देवेभ्यो जुहवानीति ॥ १३ ॥

(त्य) अथापरं चतुर्गृहीतमाज्यं गृहीत्वा । (त्वाऽऽश्रा) आश्राव्याह समिधो यजेति सोऽपबर्हिषश्चतुरः प्रयाजान्यजति प्रजा वै बर्हिर्वरुण्यो वाऽअव-भृथोनेत्प्रजा वरुणो गृह्णादिति तस्मादपबर्हिषश्चतुरः प्रयाजान्यजति ॥१४॥

---

अथ चतुर्गृहीतमाज्यं गृहीत्वा समिधं प्रास्य, अभिजुहोति–" अग्नेरनीकमप आविवेशापां नपात्प्रतिरक्षन्नसुर्यम् । दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत्स्वाहा "–( वा० सं० ८ । २४ ) इति ॥ १२ ॥

अग्निर्ह वै देवा यावद्वा यावद्वाऽप्सु प्रवेशयाञ्चक्रुः । नेदतो नाष्ट्रा रक्षांस्युपोत्तिष्ठानिति । अग्निर्हि रक्षसामपहन्ता । तमेतया च समिधैतया चाहुत्या समिन्द्धे–समिद्धे देवेभ्यो जुहवानीति ॥ १३ ॥

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा आश्राव्याह–समिधो यजेति । सोऽपबर्हिषश्चतुरः प्रयाजान्य-जति । प्रजा वै बर्हिः । वरुण्यो वाऽअवभृथो–नेत्प्रजा वरुणो गृह्णादिति । तस्मादपबर्हिषश्चतुरः प्रयाजान्यजति ॥ १४ ॥

---

अथ चतुर्गृहीतमिति[1]। अवतरणानन्तरमेवाज्यग्रहणम् । तदत्र पूर्वसंस्कृतमेवाज्यस्थालीस्थमानीतं दर्शयति । स्रुवं स्रुचं च परार्थमेव संस्कृतमपवृतं, प्रायश्चित्ताशङ्कया ह्य (न) पवृतमेव तदादत्ते कर्मापवर्गाहुत्यर्थं च । अन्येऽव-भृथार्थं पृथगाज्यादि संस्कार्यं द्वार्य एवेच्छन्ति । समिधं प्रास्य तामेवैतेन चतुर्गृहीतेनापि जुहोति कुतः ? एतया-ऽप्स्वग्निर्देवैः प्रवेशितः । ' तमेतया च समिधैतया चाहुत्या समिन्धे '–इति मन्त्रवाक्यशेषाभ्याम् उत्तरा अपि च प्रयाजाद्या आहुतयस्तत्रैव चापां प्रदेशे होतव्याः " समिद्धे देवेभ्यो जुहवानि " इति वाक्यशेषाद् । अत एव वाक्यशेषान्नात्रैध्मोऽस्ति, न सामिधेन्य इति गम्यते। समिधश्च आभ्यामेव समिदाहुतिभ्यां सिद्धत्वात् ॥ १२॥ १३॥

अथापरमिति[2] । आहुतेरनन्तरमेव चतुर्गृहीतकरणादन्तराले न किञ्चित् करणीयमिति दर्शयति। एकस्य चतु-र्गृहीतस्य वचनादौपभृतस्याभावं दर्शयति । आश्रावणवचनात्संमार्गहोतृवरणादि निवर्त्तते । सोऽपबर्हिष इति । बर्हिर्वर्जितानां विधिर्न बर्हिषः प्रतिषेधः । प्रतिषेधाभावात् । ततश्चतुःप्रयाजं न पुनः श्रवणादयमवभृथो गम्यते ॥ १४ ॥

---

१–प्रास्य समिधं चतुर्गृहीतेनाभिजुहोत्यग्नेरनीकमिति । का. श्रौ. सू. १० । १७६ ।
२–अपरेण प्रयाजान् बर्हिर्वर्जम् । अप्सु जुहोति । एककपालेनावदायं चरति । का. श्रौ. सू. १० । १७७–१७९ ।

( त्यु ) अथ व्वारुणऽएककपालः पुरोडाशो भवति । यो वाऽअस्य रसोऽभूदाहुतिभ्यो वाऽअस्य तमजीजनदथैतच्छरीरं तस्मिन्न रसोऽस्ति रसो वै पुरोडाशस्तदस्मिन्नेतꣳ रसं दधाति तदेनमेतेन रसेन संगमयति तदेनमतो जनयति सऽएनं जातऽएव संजनयति तस्माद्वारुणऽएककपालः पुरडाशो भवति ॥ १९ ॥

स आज्यस्योपस्तीर्य । पुरोडाशस्यावद्यन्नाह व्वरुणायानुब्रूहीत्यत्र हैकऽऋजीषस्य द्विरवद्यन्ति तदु तथा न कुर्याच्छरीरं वाऽएतद्भवति नालमाहुत्यै द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदानेऽआश्राव्याह व्वरुणं यजेति व्वषट्कृते जुहोति ॥ १६ ॥

---

अथ वारुण एककपालः पुरोडाशो भवति । यो वाऽअस्य रसोऽभूत् । आहुतिभ्यो वाऽअस्य तमजीजनत् । अथैतच्छरीरम् तस्मिन्न रसोऽस्ति । रसो वै पुरोडाशः । तद् अस्मिन्नेतं रसं दधाति । तदेनमेतेन रसेन सङ्गमयति । तदेनमतो जनयति । स एनं जात एव सञ्जनयति । तस्माद्वारुण एककपालः पुरोडाशो भवति ॥ १९ ॥

स आज्यस्योपस्तीर्य पुरोडाशस्यावद्यन्नाह–' वरुणायानुब्रूहि ' इति । अत्र हैके ऋजीषस्य द्विरवद्यन्ति । तदु तथा न कुर्यात् । शरीरं वाऽएतद्भवति नालमाहुत्यै । द्विरवद्यति । सकृदभिघारयति । प्रत्यनक्त्यवदाने । आश्राव्याह–' वरुणं यज ' इति । वषट् कृते जुहोति ॥ १६ ॥

---

अथ वारुण इति । अवभृथेष्टेरुत्पत्तिवचनमेतत् । यद्यपि च प्रयाजादीनां पुनः श्रवणादपूर्वैषा इष्टिस्तथापि धर्मवानयं पुरोडाशः । कथम् ? वारुण एककपाल इत्येतावतैव यागोत्पत्तौ सिद्धायां पुरोडाश इति यथाप्राप्तं पुरोडाशस्य पुनःश्रवणं विज्ञायते । ततश्च यद्यपि द्रव्यत्वात्पुरोडाशः केवलेनापूर्वमावं करोति,तथापि प्रयाजादिपुनःश्रवणेनापूर्वः। क्रियमाणे कर्मणि स कस्माच्छक्नोति रक्षितुम् । प्रकृतौ हि धर्मैरेव पुरोडाशे निष्पादिते निष्पन्नस्यैवेदं श्रवणं यथा पर्यग्निकृतामुत्सृजन्तीति कृताः पूर्वाऽवस्थान्तर्गताऽपूर्वधर्मा इति न पयग्निकरणेन तेपि प्रत्याख्यायन्ते, पर एव धर्मा निरस्यन्ते, तद्वदत्रापि द्रष्टव्यम् । एतेन गृहमेधीयोपसद्द्रव्येष्वपि धर्मलाभो वाच्यः । योऽस्य सोमस्य रसोऽभूत् तं यागार्थं जनितवान् नैतदृजीषं नीरसं वर्त्तते । ' रसो वै पुरोडाशः ' यथोक्तम् " पुरुषं ह वै देवा अग्रे पशुमालेभिरे–" इति । तदस्मिन् ऋजीषे एतं रसं दधाति । पूर्वतरमप्सु पुरोडाशो हूयते । यत्पुनः पश्चादृजीषं, तेन ऋजीष एव रसो निहितो भवति–इत्यभिप्रायः ॥

अत्रापि च " अथ वारुण " इति प्रयाजानन्तर्यादाज्यभागाभावो गम्यते ॥ १९ ॥

स आज्यस्योपस्तीर्येति । प्रयोगात्पुनः श्रवणेनापूर्वकृतत्वादुपस्तरणादि निवर्त्तमानं प्रतिश्रूयते । ध्रुवायास्स्वभावात्स्थाल्या एवोपस्तरणाभिघारणौ द्रष्टव्यौ । प्रकृतावदानप्रतिप्रसवाज्यमध्यपूर्णत्वाभ्यां पुरोडाशस्य द्विरवदेयमिति गम्यते ॥ १६ ॥

( त्य ) अथाज्यस्योपस्तीर्य । पुरोडाशमवद्धदाहाग्नीवरुणाभ्यामनुब्रूहीति तत्स्विष्टकृते स यत्राग्नयऽइत्याह नेदग्निं वरुणो गृह्णादिति स यद्यमुत्रऽर्जीषस्य द्विरवद्येदथात्र सकृद्यद्यु न नाद्रियेताथोपरिष्टाद्द्विराज्यस्याभिघारयत्याश्राव्याहाग्नीवरुणौ यजेति वषट्कृते जुहोति ॥ १७ ॥

ता वाऽएताः । षडाहुतयो भवन्ति षड्वाऽऋतवः संवत्सरस्य संवत्सरो वरुणस्तस्मात्षडाहुतयो भवन्ति ॥ १८ ॥

( न्त्ये ) एतदादित्यानामयनम् । ( मा ) आदित्यानीमानि यजूंषीति वा आहुः स यावदस्य वशः स्यादेवमेव चिकीर्षेद्यद्युऽएनमितरथा यजमानः कर्तवै ब्रूयादितरथो तर्हि कुर्यादेतानेव चतुरः प्रयाजाननुपबर्हिषो यजेद्द्वावाज्यभागौ वरुणमग्नीवरुणौ द्वावनुयाजावुपबर्हिषौ तद्दश दशाक्षरा वै विराड्विराड्वै यज्ञस्तद्विराजमेवैतद्यज्ञमभिसम्पादयति ॥ १९ ॥

---

अथाज्यस्योपस्तीर्य पुरोडाशमवद्धदाह–'अग्नीवरुणाभ्यामनुब्रूहि' इति । तत्स्विष्टकृते । स यत्राग्नयऽइत्याह–नेदग्निं वरुणो गृह्णादिति । स यद्यमुत्रऽर्जीषस्य द्विरवद्येद्–अथात्र सकृत् । यद्यु न नाद्रियेत । अथोपरिष्टाद्द्विराज्यस्याभिघारयति । आश्राव्याह–'अग्नीवरुणौ यज' इति । वषट्कृते जुहोति ॥ १७ ॥

ता वाऽएताः षडाहुतयो भवन्ति । षड्वा ऋतवः संवत्सरस्य । संवत्सरो वरुणः । तस्मात्षडाहुतयो भवन्ति ॥ १८ ॥

एतदादित्यानामयनम् । आदित्यानीमानि यजूंषीति वा आहुः । स यावदस्य वशः स्याद्–एवमेव चिकीर्षेत् । यद्युऽएनमितरथा यजमानः कर्तवै ब्रूयाद्–इतरथो तर्हि कुर्याद् । एतानेव चतुरः प्रयाजा-

---

अथाज्यस्येति । अत्र मान्त्रिकवर्णिकोऽग्नीवरुणयागविधिर्द्रष्टव्यः । स च यागः–"तत् स्विष्टकृते" इति वचनात् स्विष्टकृत्कालो वर्तते । अत एव च केचिदत्राग्नीवरुणाभ्यां स्विष्टकृद्भ्यामिति स्विष्टकृच्छब्दं प्रयुञ्जते । तदयुक्तम्, देवतान्तरप्रसङ्गात् । यथाश्रुतदेवताक एव यागः कामं स्विष्टकृतः कार्य्यो न तु मन्त्र एवाम्नातोऽन्यथा करणीयः ॥ १७ ॥

ता वाऽएता इति । 'एताः' इति प्रयाजाः द्वे च पुरोडाशाहुती । अर्थवादार्थं पुनर्वचनम् । संख्यार्थमित्यन्ये । त्रिदोषानुपरिसंख्येति नानुपन्यसामहे । संवत्सरो वरुणः । तेन हीदं सर्वं वृतं तस्मै विधेया काचिदवस्थेत्यभिप्रायः ॥ १८ ॥

एतदादित्यानामिति । द्वयाः किलैताः प्रजा बभूवुः आदित्याश्चाङ्गिरसश्च । तत्रावभृथकर्म एवादित्याना-

---

१–ऋजीषस्येच्छन्नवद्येदग्नीवरुणाभ्यां सर्वहुतः शेषम् । ऋजीषस्य सकृत्पूर्वं चेत् । का. श्रौ. सू. १० । १८०–१८१ ॥

२–वश एतत् कुर्यात् । यजमानोक्तावाज्यभागौ बर्हिर्वर्जं चानुयाजौ । अन्यतरत् कृत्वा समुद्रे त इत्यृजीषकुम्भं प्लावयति । का. श्रौ. सू. १० । १८२–१८४ ।

( त्ये ) एतदङ्गिरसामयनम् । ( मु ) अतोऽन्यतरुत्कृत्वा यस्मिन्कुम्भऽऋजीषं भवति तं प्रप्लावयति समुद्रे ते हृदयमप्स्वन्तरित्यापो वै समुद्रो रसो वाऽआपस्तदस्मिन्नेतद्रसं दधाति तदेनमेतेन रसेन संगमयति तदेनमतो जनयति स एनं जात एव संजनयति सं त्वा विशन्त्वोषधीरुताप इति तदस्मिन्नुभयꣳ रसं दधाति यश्चौषधिषु यश्चाप्सु यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहेति तद्यदेव यज्ञस्य साधु तदेवास्मिन्नेतद्दधाति ॥ २० ॥

---

नपबर्हिषो यजेत् । द्वावाज्यभागौ, वरुणमग्नीवरुणौ, द्वावनुयाजावपबर्हिषौ—तद् दश । दशाक्षरा वै विराट् । विराड् वै यज्ञः । तद्विराजमेवैतद्यज्ञमभिसम्पादयति ॥ १९ ॥

एतदङ्गिरसामयनम् । अतोऽन्यतरत्कृत्वा यस्मिन्कुम्भऽऋजीषं भवति तं प्रप्लावयति—"समुद्रे ते हृदयमप्स्वन्तः"—(वा० सं० ८ । २९ ) इति । आपो वै समुद्रः । रसो वाऽआपः । तदस्मिन्नेतं रसं दधाति । तदेनमेतेन रसेन सङ्गमयति । तदेनमतो जनयति । स एनं जात एव सञ्जनयति । "सन्त्वा विशन्त्वोषधीरुतापः"—( वा० सं० ८ । २९ ) इति । तदस्मिन्नुभयं रसं दधाति—यश्चौषधिषु, यश्चाप्सु । "यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत् स्वाहा"—( वा० सं० ८ । २९ ) इति । तद् यदेव यज्ञस्य साधु तदेवास्मिन्नेतद्दधाति ॥ २० ॥

---

मयनम् । पुरोडाशाहुतिरङ्गिरसामयनं बभूव । आदित्या ईदृशेनावभृथेन सर्वदा यजतां तादृशं प्रयुक्तवन्तः । ततश्च वाजसनेयी अध्वर्युरेवमेवावभृथं कर्तुमिच्छेत् । यावदस्य अवभृथ एवेच्छा कारणम् । यस्मात् 'आदित्याभिः' आदित्यस्य ऋषेरार्षमिमानि वाजसनेयकाख्यानि यजूंषि । एवं विशिष्टवेदविदश्चाहुः । तस्मादेवैर्यजुर्भिः प्रचरेत् । वाजसनेयी आदित्यानामेव मार्गमन्वियात्—नाङ्गिरसाम् । अङ्गिरसां मार्गो लघुकर्मा विद्याप्रधानः । षडाहुतिकं च यथोक्तं लघ्वित्यभिप्रायः । यदि पुनः 'एनम्' अध्वर्युमितरथाऽङ्गिरसामयनं 'कर्तवै' कर्तव्यम्—इति 'यजमानो ब्रूयात्' तत 'इतरथा' पूर्वोक्तादन्यथा कुर्यात् । कथम् ? 'एतानेव' पूर्वोक्तधर्मकानेकेनैव गुरुगृहीतेन चतुरः प्रयाजानपबर्हिषो यजेत् । ततो द्वावाज्यभागौ—तौ च विशेषानभिधानात्प्रकृताविव ध्रुवया एवावदाय कार्यौ । तदर्थं ध्रुवाऽत्र प्रयोक्तव्या । उपस्तरणाभिधारणार्थं च वरुणं च यजेदिति वर्तते । तेनोक्तेनैव पुरोडाशावदानेनाग्नीवरुणौ यजेत् । उक्तेनैव पुरोडाशेन शेषेण द्वावनुयाजौ प्रकृतिवदौपभृतेन ॥ १९ ॥

एतदङ्गिरसामिति । 'एतद्' गुरुतरमयनम् 'अङ्गिरसाम्' अङ्गिरसः पुत्रपौत्राणां मनुष्यादीनाम् ।

---

१—षडाहुतिकोऽवभृथयागः लघुतरः । आदित्यानामयनं दशाहुतिको गुरुतरः । अंगिरसामयन ञ्वाजसनेयिनां षडाहुतिक एव । दशाहुतिकस्तु यजमानस्येच्छया । न स्वेच्छया । अंगिरसां लघुकर्माचरणशीलत्वेऽपि यजमानस्येच्छया दशाहुतिकः पक्षः । अंगिरसामपि लघुकर्माचरणशीलत्वेन यजमानेच्छया दशाहुतिकस्य व्यवस्थापनेन च षडाहुतिक एव पक्ष इति निष्कृष्यते भाष्यस्वरसादिति ।

अंगिरसामुत्पत्तिः—अत्रैवाग्रे । ४ । ५ । १ । ८ । कण्डिकायां यथा—तद्देवा रेतः सिक्तं प्राजनयन् । ततोऽङ्गाराः समभवन् । अंगारेभ्योऽङ्गिरसः । तदन्वन्ये पशवः । इति । अत्र हरिस्वामिनः । यत्र काले प्रजापतिना स्वस्यां दुहितरि रेतः सिक्तं देवाः प्राजनयन् तस्मिन् काले रेतसः प्रजन्यमानात् अंगाराः संभूताः । तेभ्यश्चांगिरस इति । अंगारेभ्योंऽगिराः । तस्मादंगिरस इति । अनेन क्रमेण द्रष्टव्यम् । एषामंगिरसामुत्पत्तिरत्र नोपयुज्यते इति कृत्वा अंगिरसामयनमित्यादौ योजनीया इति ।

( त्यु ) अथानुसृज्योपतिष्ठते । देवीराप एष वो गर्भ इत्यपाᳬं ह्येष गर्भस्तᳬं सुप्रीतᳬं सुभृतं बिभृतेति तदेनमद्भ्यः परिददाति गुप्त्यै देव सोमैष ते लोक इत्यापो ह्येतस्य लोकस्तस्मिञ्छं च वक्ष्व परि च वक्ष्वेति तस्मिन्नः शं चैधि सर्वाभ्यश्च नऽआर्तिभ्यो गोपायेत्येवैतदाह ॥ २१ ॥

( ह्य ) अथोपमारयति । ( त्यु ) अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतमित्यव ह्येतद्देवैर्देवकृतमेनोऽयासीत्सोमेन राज्ञाऽव मर्त्यैर्मर्त्यकृतमित्यव ह्येतन्मर्त्यैर्मर्त्यकृतमेनोऽयासीत्पशुना पुरोडाशेन पुरुराव्णो देव रिषस्पाहीति सर्वाभ्यो माऽऽर्तिभ्यो गोपायेत्येवैतदाह ॥ २२ ॥

अथानुसृज्योपतिष्ठते–" देवीराप एष वो गर्भः "–( वा० सं० ८ । २६ ) इति । अपां ह्येष गर्भः । "तं सुप्रीतं सुभृतं बिभृत"–( वा. सं. ८ । २६ ) इति । तद् एनमद्भ्यः परिददाति गुप्त्यै । " देव सोमैष ते लोकः"–( वा० सं० ८ । २६ ) इति । आपो ह्येतस्य लोकः । " तस्मिञ्छं च वक्ष्व परि च वक्ष्व "–( वा० सं० । ८ । २६ ) इति । तस्मिन्नः शं चैधि सर्वाभ्यश्च न आर्तिभ्यो गोपायेत्येवैतदाह ॥ २१ ॥

अथोपमारयति–" अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतम् "–( वा० सं० ८ । २७ ) इति । अव ह्येतद्देवैर्देवकृतमेनोऽयासीत्सोमेन राज्ञा अव मर्त्यैर्मर्त्यकृतम्–इति । अव ह्येतन्मर्त्यैर्मर्त्यकृतमेनोऽयासीत्पशुना पुरोडाशेन । " पुरुराव्णो देव रिषस्पाहि "–( वा० सं० ८ । २७ ) इति । सर्वाभ्यो माऽऽर्तिभ्यो गोपायेत्येवैतदाह ॥ २२ ॥

अत्रापि च संस्कृतैरेवाज्यपुरोडाशमात्रैरयोगत्वाच्चतुर्गृहीतं हुत्वा त्रीणि चतुर्गृहीतानि गृहीत्वा तिष्ठन्त एवाङ्गप्रधानसाधारण्येनाग्निसंस्कारानप्सु कुर्वन्तो हस्तधृतैरेवाज्यहविर्भिश्चरेयुः । तत्रापि चेध्मसामिधेनीहोत्रार्षेयवरणानि च न कुर्युः, शाखान्तरे तदभावस्येष्टत्वात् । अत्रापि " तमेतया वाऽऽहुत्या समिन्धयति "–इतीध्मसामिधेन्यर्थस्यान्यथासिद्धिदर्शनात् । एतदङ्गिरसामयनमिति साहचर्यवचनम् । यदाऽऽज्यभागौ तदाऽनुयाजावप्यवश्यं यथा स्याताम् । मा भूत्पृथगाज्यभागयोर्विकल्पः, पृथगनुयाजयोः । अतोऽन्यतरं कृत्वेतरेषां धारानुयाजादीनां पदार्थानामभावं दर्शयति । ततश्च न किंचिदतः परमैष्टिकं करणीयम् । " यस्मिन् कुम्भ ऋजीषम् "–इत्यादि प्रसन्नमाऽध्यायसमाप्तेः । प्रत्येत्य सवनीयशेषं समापयेत् ॥ २०–२३ ॥

१–देवीराप इति विसृज्योपतिष्ठते । अवभृथेति मज्जयति । ऋजीषकुंभमिति कर्कः । कृष्णाजिनांतं च मा मैंद्रयं ज्यैष्ठय श्रैष्ठ्यं व्यौषीरिति । चशब्दान्मज्जयतीत्यर्थः । पुत्रायैनत्प्रदाय वरुणप्रघासवत्स्नानप्रभृत्यासमिदाधानात् । सोमलिप्तं प्रास्यति । अदानं पूर्व्वयोः । वाससोरित्यर्थः । वरुणप्रघासवदित्यतिदेशापवादोऽयम् । उद्वयमित्युन्नेत्रोन्नीता आमहीयां जपंतो गच्छन्त्यपाम सोममसृता अभूमागन्म ज्योतिरविदाम देवान् । किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य । अस्मिन्नवसरे व्रतग्रहणं भवति । उन्मुक्तदाक्षत्वात् । ततो बर्हिर्होमादि । इति कर्कः । शालाद्वार्यमपरेणास्ते यजमानः कृष्णाजिनमंके कृत्वा स्रुवाहुतिं जुहोति–मैन्द्र्य ज्यैष्ठ्य श्रैष्ठ्यमभिर्दधातु स्वाहा । का. श्रौ. सू. १० । १८५–१९२ ।

( ह्रा ) अ॒थाभ्यवे॒त्य स्ना॒तः । (तो॒ऽ) अ॒न्योऽन्यु॒स्य पृ॒ष्ठे प्र॒धावतस्ता॒वन्ये व्वा॒ससी परिधा॒योदे॒तः स य॒था॒ऽहिस्त्व॒चो निर्मु॒च्ये॒तै॒वᳪं॑ स॒र्व्व॒स्मात्पा॒प्मु॒नो नि॒र्मु॒च्यते त॒स्मिन्न त॒वच्च॒नै॒नो भवति य॒ावत्कु॒मा॒रेऽद॒ति स य॒नै॒व॒ निष्क्रा-मन्ति ते॒न पु॒नर॒ायन्ति पु॒न॒रे॒त्याह॒व॒नी॒ये स॒मि॒धमभ्या॒दधाति दे॒वा॒नाᳪं॑ समि॒-द॒सी॒ति य॒जमा॒नमे॒वै॒तया स॒मिन्द्धे दे॒वा॒नाᳪं॑ हि स॒मिद्धि॒मनु॒ य॒जमा॒नः समि॒ध्यु॒ते ॥ २३ ॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ४-४-१ ॥ [ ४-५ ] ॥

---

अथाभ्यवेत्य स्नातोऽन्योऽन्यस्य पृष्ठे प्रधावतः। तावन्ये वाससी परिधायोदेतः। स यथाऽहिस्त्वचो निर्मुच्येत-एवं सर्वस्मात्पाप्मनो निर्मुच्यते; तस्मिन्न तावच्चनैनो भवति-यावत्कुमारेऽदति। स येनैव निष्क्रामन्ति-तेन पुनरायन्ति। पुनरेत्याहवनीये समिधमभ्यादधाति-"देवानां समिदसि"-(वा० सं० ८। २७) इति। यजमानमेवैतया समिन्द्धे। देवानां हि समिद्धिमनु यजमानः समिध्यते॥२३॥

---

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥ ४-४-५ ॥

इति चतुर्थोऽध्यायः ॥ ४-४ ॥

---

१-तूष्णीमेत्याभ्यवेत्य मज्जयत्यवभृथेति। वरुणप्रघासे तूष्णीमेत्येति सामगानप्रतिषेधः। अभ्यवेत्य च तूष्णीमिति अपोऽवक्रमणवाचनप्रतिषेधः। अवभृथेति निष्काशस्थालीमज्जनम्। जायापती स्नातोऽमज्जंतौ। अन्योऽन्यस्य पृष्ठे धावतः। धाव गतिशुध्योरिति धातुः। प्रक्षालयत इत्यर्थः। अन्ये वाससी परिदधाते। जायापती। पूर्व्वे दद्यादधिकृतेभ्यो यस्मा इच्छेत्। यथेतमेत्याहवनीये समिदाधानं देवानाᳪं समिदसीति। यथेतमिति तूष्णीमेवेत्यर्थः। तेनामहीयामंत्रजपप्रतिषेधो वरुणप्रघासे। पत्नी च गार्हपत्ये तूष्णीम्। का. श्रौ. सू.। ५। १४०-१४६।

# पञ्चमाध्याये प्रथमं ब्राह्मणम् ।

आदित्येन चरुणोदयनीयेन प्रचरति । तद्यदादित्यश्चरुर्भवति यदेवैना-मदो देवाऽअब्रुवंस्तवैव प्रायणीयस्तवोदयनीयऽइति तमेवास्याऽएतदुभयत्र भागं करोति ॥ १ ॥

स यदमुत्र राजानं क्रेष्यन्नुपप्रैष्यन्यजते । तस्मात्तत्प्रायणीयं नामाथ यद-त्रावभृथादुदेत्य यजते तस्मादेतदुदयनीयं नाम तद्वाऽएतत्समानमेव हवि-रदित्याऽएव प्रायणीयमदित्याऽउदयनीयमियं ह्येवादितिः ॥ २ ॥

स वै पथ्यामेवाग्रे स्वस्तिं यजति । तद्देवाऽअप्रज्ञायमाने वाचैव प्रत्य-पद्यन्त वाचा हि मुग्धं प्रज्ञायतेऽथात्र प्रज्ञाते यथापूर्वं करोति ॥ ३ ॥

सोऽग्निमेव प्रथमं यजति । (त्य) अथ सोममथ सवितारमथ पथ्याᳪं

---

उदयनीयेष्टिः ।

आदित्येन चरुणोदयनीयेन प्रचरति । तद् यदादित्यश्चरुर्भवति—यदेवैनामदो देवा अब्रुवन्—तवैव प्रायणीयः, तवोदयनीय इति । तमेवास्याऽएतदुभयत्र भागं करोति ॥ १ ॥

स यदमुत्र राजानं क्रेष्यन्नुपप्रैष्यन्यजते—तस्मात्प्रायणीयं नाम । अथ यदत्रावभृथादुदेत्य यजते—तस्मादेतदुदयनीयं नाम । तद्वाऽएतत् समानमेव हविः—अदित्याऽएव प्रायणीयम्—अदित्याऽउदयनीयम् । इयं ह्येवादितिः ॥ २ ॥

स वै पथ्यामेवाग्रे स्वस्तिं यजति । तद्देवा अप्रज्ञायमाने वाचैव प्रत्यपद्यन्त । वाचा हि मुग्धं प्रज्ञायते । अथात्र प्रज्ञाते यथापूर्वं करोति ॥ ३ ॥

सोऽग्निमेव प्रथमं यजति, अथ सोमम्, अथ सवितारम्, अथ पथ्यां स्वस्तिम्, अथादितिम् ।

---

आदित्येनेति । उदयनीयब्राह्मणमेतत् । आदित्यश्चरुः । तत्र—' आदित्येन ' इत्युत्पत्तिवाक्यम् । यदेवैनामद इति । प्रायणीयायां य इतिहासस्तस्येहातिदेशः ॥ १ ॥

स यदमुत्रेति । द्वयोरप्यर्थवचनम्—तद्वा एतत्समानमेव हविरिति । समानधर्मकं समानम् । यदेव प्रायणीये क्रियेत, तदुदयनीये क्रियेतेत्यस्यायमनुवादः । इयं ह्येवादितिरिति । यदि किल पृथिव्यां भागः कल्पितस्ततोऽदितेः किमापतितमित्यत आह—इयं ह्येवादितिरिति ॥ २ ॥

स वै पथ्यामिति । प्रायणीये ' पथ्यामेवाग्रे स्वस्तिं यजति ' तदिह मुग्धो यज्ञोऽप्रज्ञात एव । यज्ञे सति यथापूर्वं करोति या प्रथमा देवता तां प्रथमां यजेति या द्वितीया तां द्वितीयामित्यादि ॥ ३ ॥

तत् कथमित्यत आह—सोऽग्निमेवेति । अग्निः प्राच्यां दिशि, सा च प्रथमा ततः प्रदक्षिणं गण्यमाने

---

१–कृष्णाजिनं निधायोदयनीया प्रायणीयावत् । का० श्रौ० सू० १० । १९३ ।
२–पथ्या स्वस्तिश्चतुर्थी । शालामुखीये उदयनीया चरंतीति न शाखांतराच्छालाद्वार्ये कर्तव्येति कर्कः । का. श्रौ. सू. १० । १९४ ।

स्वस्तिमथादितिं व्वाग्वै पथ्या स्वस्तिरियमदितिरस्यामेव तद्देवा व्वाचं प्रत्यष्ठापयन्त्सेयं व्वागस्यां प्रतिष्ठिता व्वदति ॥ ४ ॥

( त्य ) अथ मैत्रावरुणीं व्वशामनुबन्ध्यामालभते । सऽएषोऽन्य एव यज्ञस्तायते पशुबन्धऽएव समिष्टयजूꣳषि ह्येवान्तो यज्ञस्य ॥ ५ ॥

तद्यन्मैत्रावरुणी व्वशा भवति । यद्वाऽईजानस्य स्विष्टं भवति मित्रोऽस्य तद्गृह्णाति यद्वस्य दुरिष्टं भवति व्वरुणोऽस्य तद्गृह्णाति ॥ ६ ॥

---

वाग्वै पथ्या स्वस्तिः इयमदितिः । अस्यामेव तद् देवा वाचं प्रत्यष्ठापयन् । सेयं वागस्यां प्रतिष्ठिता वदति ॥ ४ ॥

## अनुबन्ध्यायागः ।

अथ मैत्रावरुणीं वशामनुबन्ध्यामालभते । स एषोऽन्य एव यज्ञस्तायते–पशुबन्ध एव समिष्टयजूंषि ह्येवान्तो यज्ञस्य ॥ ५ ॥

तद् यन्मैत्रावरुणी वशा भवति । यद्वाऽईजानस्य स्विष्टं भवति–मित्रोऽस्य तद् गृह्णाति । यद्वस्य दुरिष्टं भवति–वरुणोऽस्य तद् गृह्णाति ॥ ६ ॥

---

पथ्यास्वस्तिरुत्तरतः सा चतुर्थी भवतीत्यभिप्रायः । सेयं वागस्यां प्रतिष्ठितेति । देवतादयोऽपि यद्वदन्ति तदुपस्तम्भिकां पृथिवीमेवाश्रित्येत्यभिप्रायः ॥ ४ ॥

अथ मैत्रावरुणीमिति । पञ्चभिः कण्डिकाभिर्मैत्रावरुणी वशोच्यते । 'मैत्रावरुणीम्' मित्रावरुणदेवत्यां 'वशां' वत्सरिक्तां बन्ध्यां ( ऋ. २ । ७ । ९ । सा. भा. ) यज्ञे समाप्ते पश्चाद् 'अनुबन्ध्याम्' तृतीया-मालभते स्पृतीति यागविधिः संपृष्यन् यज्ञ एव पूर्वस्मात् सवनसावने सवनीयसम्बन्धात् रूपादयम् । 'अन्य एव' भिन्नमतः सवनीयादित्यर्थः । पशुबन्ध एव सवनीयरहितः । अथ सवनीयपुरोडाशावर्त्तगतः एवं कस्मान्न भवतीत्याह–समिष्टयजूंषि ह्येवान्तो यज्ञस्य । तस्मिन् समाप्ते यदा गच्छति पृथक् न भवतीत्यभिप्रायः ॥५॥

तन्मैत्रावरुणीयत्वे यत् कारणं तद्वक्ष्यते-'यद्' अस्य 'ईजानस्य' इष्टवतः 'स्विष्टं' सम्यगविगुणं 'भवति' 'तन्मित्रः' तावत् अस्य' एतद् 'गृह्णाति' अवितथाप्तिफलदानाय प्रवर्त्तमानः प्रतिबध्नाति, मन्यमानः ॥ ६ ॥

---

१–पात्रप्रोक्षणाद्याज्यासादनात्सवनीयवत्परिव्ययणादि मैत्रावरुणी व्वशाऽनूबंध्या । अत्र कर्कः । पात्रप्रोक्षणं शालाद्वार्ये श्रपणनियमव्युदासार्थम् । सवनीये हि पात्रासादनविधानेन शालाद्वार्ये श्रपणनियमो ज्ञापितः । तद्वदत्रापि मा भूदिति पात्रप्रोक्षणादीत्युक्तम् । सा च सवनीयवदिति परिव्ययणं यदुक्तं भवति । सकृत्प्रोक्षितमिध्ममाग्नीध्र उत्पवनं एकवृत्स्तरणमिति । परिव्ययणस्य पश्वंगत्वेन विधानात्तदपवर्गे चापवर्ग्यमाशंक्य परिव्ययणादीत्युक्तम् । इति । स्वर्व्वगूहनादि वा कृतत्वात् । अत्र कर्कः । स्वर्वगूहनादि वा कर्तव्यं । न परिव्ययणादीति । कुत एतत् । कृतत्वात्परिव्ययणसंस्कारस्य । यूपसंस्कारो ह्ययम् । स च यूपः सर्वपश्वर्थः । संस्कारोऽपि तद्वदेवेति । अत एव स्वर्वगूहनादि इत्युत्तरपदप्रधानो बहुव्रीहिः । स्वर्वगूहनं यस्यादौ तदादि । तच्चोपाकरणम् । एवं सति । उपाकरणमंथनयोरत्र नियम इति । का० श्रौ० सू० १० । १९५–१९६ ॥

तदाहुः । क्केजानोऽभूदिति तद्यदेवास्यात्र मित्रः स्विष्टं गृह्णाति तदेवास्माऽएतया प्रीतः प्रत्यवसृजति यदु चास्य वरुणो दुरिष्टं गृह्णाति तच्चैवास्माऽएतया प्रीतः स्विष्टं करोति तदु चास्मै प्रत्यवसृजति सोऽस्यैष स्वऽएव यज्ञो भवति स्वꣳ सुकृतम् ॥ ७ ॥

( न्त ) तद्यन्मैत्रावरुणी वशा भवति । यत्र वै देवा रेतः सिक्तं प्राजनयंस्तदाग्निमारुतमित्युक्थं तस्मिंस्तद्व्याख्यायते यथा तद्देवा रेतः सिक्तं प्राजनयंस्ततोऽङ्गाराः समभवन्नङ्गारेभ्योऽङ्गिरसस्तदन्वन्ये पशवः ॥ ८ ॥

( वोऽथ ) अथ यदासाः पाꣳसवः पर्यशिष्यन्त । ततो गर्दभः समभवत्तस्माद्यत्र पाꣳसुलं भवति गर्दभस्थानमिव बतेत्याहुरथ यदा न कश्चन रसः पर्यशिष्यत ततऽएषा मैत्रावरुणी वशा समभवत्तस्मादेषा न प्रजायते रसाद्धि रेतः सम्भवति रेतसः पशवस्तद्यदन्ततः समभवत्तस्मादन्तं यज्ञ-

---

तदाहुः—क्केजानोऽभूदिति । तद् यदेवास्यात्र मित्रः स्विष्टं गृह्णाति—तदेवास्माऽएतया प्रीतः प्रत्यवसृजति, यदु चास्य वरुणो दुरिष्टं गृह्णाति—तच्चैवास्माऽएतया प्रीतः स्विष्टं करोति । तदु चास्मै प्रत्यवसृजति । सोऽस्यैष स्व एव यज्ञो भवति, स्वं सुकृतम् ॥ ७ ॥

तद् यन्मैत्रावरुणी वशा भवति । यत्र वै देवा रेतः सिक्तं प्राजनयन्—तदाग्निमारुतमित्युक्थम् । तस्मिंस्तद्व्याख्यायते—यथा तद्देवा रेतः प्राजनयन्, ततोऽङ्गाराः समभवन्, अङ्गारेभ्योऽङ्गिरसः, तदन्वन्ये पशवः ॥ ८ ॥

अथ यदासाः पांसवः पर्यशिष्यन्त—ततो गर्दभः समभवत् । तस्माद्यत्र पांसुलं भवति—गर्दभस्थानमिव बतेत्याहुः । अथ यदा न कश्चन रसः पर्यशिष्यत—तत एषा मैत्रावरुणी वशा समभ-

---

तदाहुरिति । के तत्र चोदका आहुः—स इदानीमिष्टवान् क अन्तरिदुत्पुरुषयोः स्विष्टदुरिष्टयोः द्युफलं सौविष्टत इति प्रस्तुतं ( ? ) तत्तद्दिवसपतिवचनम् ॥ ७ ॥

तथा ' मैत्रावरुणी वशा ' वक्तव्यान्तर्वर्त्तित्वस्य चेत् कण्डिकाद्वयेन कारणमुच्यते—' यत्र ' काले प्रजापतिना स्वस्यां दुहितरि ' रेतः सिक्तम् ' ' देवाः ' ' प्राजनयन् ' । तस्मिन् काले रेतसः प्रजन्यमानादङ्गाराः सम्भूतास्तेभ्यश्चाङ्गिरस इत्यङ्गारेभ्योऽङ्गिरास्तस्माद् ' अङ्गिरसः ' इत्यनेन क्रमेण द्रष्टव्यम् । एषामङ्गिरसामुत्पत्तिरत्र नोपयुज्यत इति कृत्वाऽङ्गिरसामयनमित्यादौ योजनीया । तदन्वन्ये पशव इति । एषां च पशूनामुत्पत्तिः पश्चन्तरेषु ' अन्ये ' वत्सा गर्दभादयः ' पशवः ' तेषामङ्गिरसोऽनुसमभवंस्ततस्तमपि प्रजापतिप्रभावान्महात्मानोऽग्नीषोमीयादय इति ॥ ८ ॥

अथ यादिति । यस्मिन् काले ' आसाः ' भस्माः ' पांसवः ' परिशिष्टास्तदा ' ततः ' तेभ्यः पांसुभ्यो ' गर्दभः ' सम्भूत इति प्रासङ्गिकं गर्दभस्य ब्राह्मणम् । तस्मादेव ' यत्र ' तत्स्थानं ' पांसुलं भवति ' ।

स्यानुवर्त्तते तस्माद्वाऽएषाऽत्र मैत्रावरुणी व्वशाऽवक्लृप्ततमा भवति यदि व्वशां न व्विन्देदप्युक्षवश एव स्यात् ॥ ९ ॥

(८) अथेतरं व्विश्वे देवाऽअमरीमृश्यन्त । ततो व्वैश्वदेवी समभवदथ बार्हस्पत्या सोऽन्तोऽन्तो हि बृहस्पतिः ॥ १० ॥

स यः सहस्रं वा भूयो वा दद्यात् । ( स ) सऽएनाः सर्व्वा आलभेत सर्व्वं वै तस्याप्तं भवति सर्व्वं जितं यः सहस्रं वा भूयो वा ददाति सर्व्वमेताऽएवमेव यथापूर्व्वं मैत्रावरुणीमेवाग्रेऽथ व्वैश्वदेवीमथ बार्हस्पत्यम् ॥ ११ ॥

---

वत् । तस्मादेषा न प्रजायते । रसाद्धि रेतः सम्भवति । रेतसः पशवः । तद् यदन्ततः समभवत्—तस्मादन्तं यज्ञस्यानुवर्त्तते । तस्माद्वाऽएषाऽत्र मैत्रावरुणी वशाऽवक्लृप्ततमा भवति । यदि वशां न विन्देदप्युक्षवश एव स्यात् ॥ ९ ॥

अथेतरं विश्वेदेवा अमरीमृश्यन्त । ततो वैश्वदेवी समभवत् । अथ बार्हस्पत्या । सोऽन्तः । अन्तो हि बृहस्पतिः ॥ १० ॥

स यः सहस्रं वा भूयो वा दद्यात्—स एनाः सर्वा आलभेत । सर्वं वै तस्याप्तं भवति, सर्वं जितम्—यः सहस्रं वा भूयो वा ददाति । सर्वमेताः । एवमेव यथापूर्वं मैत्रावरुणीमेवाग्रे, अथ वैश्वदेवीम्, अथ बार्हस्पत्यम् ॥ ११ ॥

---

पांसवो विद्यन्ते यस्मिन्निति पांसुमदित्यध्याहारः । तद्गर्दभस्थानमिवेत्याहुः । 'इव बत' इत्यनुकम्पायां निपातः । यस्य तत्स्थानं सोऽनुकम्प्यते । 'अथ यदा न' कश्चिदपि रससारो रेतसः परिशिष्टस्तदा 'ततः' 'एषा' वशा सम्भूता सा च 'मैत्रावरुणी' यस्माच्च क्षीणे रसे सूता तस्मादेषा 'न प्रजायते' । कथम् ? 'रसाद्धि रेतः' 'सम्भवति' । 'रेतसः' च 'पशवः' गर्भे न रसोऽस्या अस्तीत्यभिप्रायः । 'तद्यदन्ततः' तदन्त्यत्वे कारणम् 'अवक्लृप्ततमा' ( ? ) उक्तम् । वशायाः स्वातिशयेनावक्लृप्तये दितुं वशां न लभते । अपि उक्षवशः । उक्षा सेचनसमर्थौ बलीवर्दौ वशाश्चेत्युक्षवश इत्यनुवादे वा । स उक्षवशो मैत्रावरुणः स्यात्तत्साहचर्याद्वशापि गौरेवेति गम्यते ॥ ९ ॥

अथेतरमिति । 'अथ' मैत्रावरुण्यां वशायां भस्मपांसुभ्यो यदितरदवशिष्टं तद्विश्वेदेवा अत्यर्थं पाणिभिः पिष्टवन्तस्तदा वैश्वदेवी वशा संभूता । यैव ततः संभूता सैव विश्वेदेवत्यवद्वैश्वदेवी 'अभवत्' । 'ततो' ऽप्यनन्तरं 'बार्हस्पत्या' सापि तथैव साप्यसंभूततयैवेति गण्यते । मैत्रावरुणीभ्यां मृश्यमाने भस्मनि जाता मित्रावरुणासम्बन्धस्यावचनादप्यस्य सन्निधानात् । सोन्तः पशूनाम् । ततो रेतस उत्पन्नः । 'अन्तो हि बृहस्पतिः' ब्राह्मणानां प्रकृष्टतमत्वात् ॥ १० ॥

स यः सहस्रमिति । विकृतौ कस्यां विधौ सहस्रादि 'दद्यात्' । प्रकृतावपि वा प्रतिहर्तुरपच्छेदे सर्वस्व-

---

१—वशाभाव उक्षा । उभयाभावे पयस्या । आसाद्यैतामाज्यभागप्रभृतीडांतामेके । एके आदितो ब्राह्मणतर्पणांताम् । विकल्प एवायमिति कर्कः । का. श्रौ. सू. १० । १९७–१९९ ।

( मु ) अथो ये दीर्घसत्त्रमासीरन् । (न्त्सं) संव्वत्सरं वा भूयो वा तऽएनाः सर्व्वा आलभेरन्त्सर्व्वं वै तेषामाप्तं भवति सर्व्वं जितं ये दीर्घसत्त्रमासते संव्वत्सरं वा भूयो वा सर्व्वमेता एवमेव यथापूर्वम् ॥ १२ ॥

( मु ) अथोदवसानीययेष्ट्या यजते । सऽआग्नेयं पञ्चकपालं पुरोडाशं निर्व्वपति तस्य पञ्चपदाः पङ्क्तयो याज्यानुवाक्या भवन्ति यातयामेव वाऽएतदीजानस्य यज्ञो भवति सोऽस्मात्पराङिव भवत्यग्निर्वै सर्व्वे यज्ञा अग्नौ हि सर्व्वान्यज्ञांस्तन्वते ये च पाकयज्ञा ये चेतरे तद्यज्ञमेवैतत्पुनरारभते तथाऽस्यायातयामा यज्ञो भवति तथोऽअस्मान्न पराङ्भवति ॥ १३ ॥

तद्यत्पञ्चकपालः पुरोडाशो भवति । पञ्चपदाः पङ्क्तयो याज्यानुवाक्याः पाङ्क्तो वै यज्ञस्तद्यज्ञमेवैतत्पुनरारभते तथाऽस्यायातयामा यज्ञो भवति तथोऽअस्मान्न पराङ्भवति ॥ १४ ॥

---

अथो ये दीर्घसत्रमासीरन् । सवंत्सरं वा भूयो वा । त एनाः सर्वा आलभेरन् । सर्वं वै तेषामाप्तं भवति, सर्वं जितम्—ये दीर्घसत्रमासते—सवंत्सरं वा भूयो वा, सर्वमेता एवमेव यथापूर्वम् ॥ १२ ॥

## उदवसानीयेष्टिः ।

अथोदवसानीययेष्ट्या यजते । स आग्नेयं पञ्चकपालं पुरोडाशं निर्वपति । तस्य पञ्चपदाः पङ्क्तयो याज्यानुवाक्या भवन्ति । यातयामेव वाऽएतदीजानस्य यज्ञो भवति । सोऽस्मात्पराङिव भवति । अग्निर्वै सर्वे यज्ञाः । अग्नौ हि सर्वान्यज्ञांस्तन्वते—ये च पाकयज्ञाः, ये चेतरे । तद् यज्ञमेवैतत्पुनरारभते—तथाऽस्यायातयामा यज्ञो भवति—तथोऽअस्मान्न पराङ् भवति ॥ १३ ॥

तद् यत्पञ्चकपालः पुरोडाशो भवति । पञ्चपदाः पङ्क्तयो याज्यानुवाक्याः । पाङ्क्तो वै यज्ञः । तद्यज्ञमेवैतत्पुनरारभते—तथाऽस्यायातयामा यज्ञो भवति—तथोऽअस्मान्न पराङ् भवति ॥ १४ ॥

---

मददत् । कदाचित्सहस्रं दद्यात् । सर्वसंख्याव्याप्तिरित्यागमिकम् । सर्वमेता इति व्यानसंभूता इति देवता सर्वमैत्रावरुणान्तु तस्यान्त्यस्यैकदेशः । एवमेवेत्युत्पत्तिक्रमेणेत्यर्थः ॥ ११ ॥

अथो य इति । प्रसन्ना ॥ १२ ॥

अथोदवसानीययेति[1] । एतानि तिसृभिस्तिसृभिः ' उदवसानीयेष्टिः ' ज्योतिष्टोमाङ्गभूतैवोच्यते । अथोच्यते । आहुतिरत्रोदवसानीयस्थाने विधीयते वैकल्पिकीति । तथो इति । तथा चेत्यर्थः ॥ १३—१९ ॥

---

१—उदवसानीयाऽग्नेयः पंचकपालः समारूढनिर्मथिते । अत्र कर्कः । समारोपश्च प्राजहिते कर्तव्यः । गार्हपत्यो हि स इति । का० श्रौ० सू० १० । २०० ॥ हिरण्यं दक्षिणाऽनड्वान्वा । वेति विकल्प इति कर्कः । का० श्रौ० सू० १० । २०१ ॥

तस्य हिरण्यं दक्षिणा । ( णा ऽऽग्ने ) आग्नेयो वाऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणाऽनड्वान्वा स हि वहेनाग्नेयोऽग्निदग्धमिव ह्यस्य वहं भवति ॥ १९ ॥

( त्यु ) अथो चतुर्गृहीतमेवाज्यं गृहीत्वा । वैष्णव्यऽर्चा जुहोत्युरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहेति यज्ञो वै विष्णुस्तद्यज्ञमेवैतत्पुनरारभते तथाऽस्यायातयामा यज्ञो भवति तथोऽअस्मान्न पराङ्भवति तन्नो यच्छक्नुयात्तद्दद्यान्नादक्षिणꣳ हविः स्यादिति ह्याहुरथ यदेवैषोदवसानीयेष्टिः संतिष्ठतेऽथ सायमाहुतिं जुहोति कालऽएव प्रातराहुतिम् ॥ १६ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ ४–४–२ । ( ९. १ ) ॥

---

तस्य हिरण्यं दक्षिणा । आग्नेयो वाऽएष यज्ञो भवति । अग्ने रेतो हिरण्यम् । तस्माद्धिरण्यं दक्षिणा । अनड्वान्वा । स हि वहेनाग्नेयः । अग्निदग्धमिव ह्यस्य वहं भवति ॥ १९ ॥

अथो चतुर्गृहीतमेवाज्यं गृहीत्वा वैष्णव्यर्चा जुहोति–" उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा "–( वा. सं. ५ । ३८ ) इति । यज्ञो वै विष्णुः । तद् यज्ञमेवैतत्पुनरारभते–तथाऽस्यायातयामा यज्ञो भवति–तथोऽअस्मान्न पराङ् भवति । तन्नो यच्छक्नुयात्–तद्दद्यात् । नादक्षिणं हविः स्यादिति ह्याहुः । अथ यदेवैषोदवसानीयेष्टिः सन्तिष्ठते–अथ सायमाहुतिं जुहोति । कालऽएव प्रातराहुतिम् ॥ १६ ॥

---

कुत एतत् चतुर्गृहीतमेवं नाग्नेयपञ्चकपालमित्यवधारणान्नयज्ञमेवैतदिति च तुल्यार्थत्ववचनात् ' यदेवैषा सन्तिष्ठते, अथ सायमाहुतिं जुहोति ' इत्येतावदत्र; तत्र ' उदवसायनीयेष्टिः' इत्येतत्प्रदर्शनार्थम् । नित्यायाः सायमाहुतेरनित्येष्टिकालेन संयोगस्य विरोधात् कार्यस्य लक्षणमात्रेष्टः कालः स च एक एव ततस्तत्-श्चाहुतिपक्षे नाहुतेरनन्तरं सायमाहुतिं जुहोतीति सिद्धम् । नित्याया एव सायमाहुतेरपकर्षवचनमेतत् । ज्योतिष्टोम-गतया विधानं कुत एतत् । काल एव प्रातराहुतिरिति वाक्यशेषात्सायमाहुतौ ह्यपकृष्टायां प्रातराहुतेरप्यप-कर्षशङ्कायां युक्तम् । अवधारणे काल एव प्रातराहुतिमिति । यदि तु सायमाहुतिः सोमाङ्गत्वेन विहिता स्यात्ततः सायमाहुतिरपि काल एव क्रियते । अथ नित्या तत्र केवलायाः प्रातराहुतेः काल एव । वचनं नोपपद्यते । अथोच्यते काल इत्येतदपि प्रातराहुतेः सोमाङ्गत्वेन निमित्तं न प्राप्तत्वादीक्षितस्याप्यग्निहोत्रं निषिद्धम् । दीक्षा चावभृथ एवोक्ता । वाक्यशेषात् । ततश्च नित्यत्वादत एव काले प्रातराहुतिः प्राप्तेत्यनुवाद एवायं विज्ञायते । तत्प्रसङ्गाद्दातिग्राह्या साहस्रीग्रहव्यूहानि ( १ ) च ॥ १६ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ( ४–५– १ ) ॥

---

१–पशुवद्वाऽऽहुतिः । चतुर्गृहीतेनैवेत्यर्थः । तदन्ते सायमाहुतिः । सोमाङ्गत्व सान्निधिविरोधाभ्यां । नित्या वा प्रातराहुतिश्रुतेः । नित्याक्रियाऽतः । अत्र कर्कः । अतः परं नित्यानां क्रिया । न प्रागतः । उन्मुक्तदीक्षत्वेऽपि भवभृथादूर्ध्वमिति । का. श्रौ. सू. १० । २०२–२०६ ॥

व्वशामालभन्ते । तामालभ्य सञ्ज्ञपयन्ति सञ्ज्ञप्याह व्वपामुत्खिदेत्यु-
त्खिद्य व्वपामनुमर्शं गर्भमेष्टवै ब्रूयात्स यदि न व्विन्दन्ति किमाद्रियेरन्यद्यु
व्विन्दन्ति तत्र प्रायश्चित्तिः क्रियते ॥ १ ॥

न वै तदवकल्पते। यदेकां मन्यमाना एकयैवैतया चरेयुर्यद्द्वे मन्यमाना
द्वाभ्यामिव चरेयुः स्थालीं चैवोष्णीषं चोपकल्पयितवै ब्रूयात् ॥ २ ॥

---

## अनुबन्ध्याप्रायश्चित्तम् ।

वशामालभन्ते । तामालभ्य संज्ञपयन्ति । संज्ञप्याह–वपामुत्खिदेति । उत्खिद्य वपामनुमर्शं गर्भमेष्टवै ब्रूयात् । स यदि न विन्दन्ति–किमाद्रियेरन् । यद्यु विन्दन्ति–तत्र प्रायश्चित्तिः क्रियते॥ १॥

न वै तदवकल्पते–यदेकां मन्यमाना एकयैवैतया चरेयुः । यद्द्वे मन्यमाना द्वाभ्यामिव चरेयुः–स्थालीं चैवोष्णीषं चोपकल्पयितवै ब्रूयात् ॥ २ ॥

---

वशामालभन्ते इति । अनुबन्ध्याशेषप्रायश्चित्तब्राह्मणमेतत् । तत् सम्बन्धार्थमनुद्रवति वशामालभन्ते । तां वपाश्रपणीभ्यां प्रतिप्रस्थाताऽन्वारभत इत्यादिना ‘ आलभ्य ’ तत् समर्थाचरणेनैव संज्ञपयन्ति । ततोऽध्वर्युः संज्ञप्य तत्समर्थाचरणेन शमितारमाह–वपामुत्खिदेति । तत एतेनैव प्रेषणेन तामुत्खिद्याध्वर्युः शमितारम् ‘ अनुमर्शम् ’ अवमृश्यावमृशति प्रदेशं ‘ गर्भमेष्टवै ’ “कर्त्तरि कृत्–”(३।४।६७) इत्यर्थे तवै । एवं ब्रूयात् । तं यदा तन्न लभन्ते ततो न किञ्चिदपि प्रायश्चित्तविशुद्धये क्रियते ॥ १ ॥

कस्तत्र दोष इति चेदत आह–न वै तदिति । यदि तावदेकैवेयं वशा चोदिता किं ततो गर्भेणेति ‘ मन्यमाना ’ एकयैवानया ‘ चरेयुः ’ ततो गर्भस्य यागार्थस्य हिंसा कृता स्यात्तेनैतन्नावकल्पते । अथ त्वेकस्यामपि चोदितायां कथमप्येते द्वे आयाति तेनालब्धत्वात् पृथगेव वस्तुभ्यामिव ‘ द्वाभ्याम् ’ अपि चराम इति मन्यमानाः चरेयुः तदप्ययुक्तम् ।

---

१–अनूबंध्यायै व्वपामुत्खिद्यानुमर्शं गर्भमेष्टवै ब्रूयात् । अनेन च शमिता प्रेष्यते । ततश्चाध्वर्युः प्रैषदाने । इति कर्कः । दर्शने स्थालीं चैवोष्णीषं चोपकल्पयितवै ब्रूयात् । अयं च शमितुः प्रति प्रैषः । तदर्थोऽध्वर्योरेव । इति कर्कः । व्वपांतेऽनपेक्षमध्वर्युः प्रेष्यति निरूहैतं गर्भमिति व्विरुज्य श्रोणी प्रत्यंचं निरूहितवै ब्रूयात् । अत्र कर्कः । प्रैषद्वयं चैतत् । उभयत्र हि क्रियापदमाम्नातम् । प्रेष्येति च ब्रू ३हीति च । तत्रेतिकरणपरिच्छिन्न एकः प्रैषः । शेषो द्वितीयः । प्रयोजनं मध्ये व्विरामः । इति । निरूह्यमाणमभिमंत्रयत एजतु दशमास्य इति पशुवदवदानं गर्भस्य । कण्ठं वाऽवकृत्य स्थाल्यां मेधश्चावगम् । अत्र कर्कः । मेधपक्षे च स्थाल्या अमंत्रकं प्रोक्षणम्, जुहोतित्वादिति । अवदानसहितमभिश्रित्योष्णीषवेष्टितं गर्भं पार्श्वतो निदधात्यनभिघारितमवदानवद्धृत्वा दक्षिणतो मेधं निदधाति । अत्र कर्कः । अनभिघारितमेधम् अंतरा यूपाग्नी हृत्वा दक्षिणतोऽगानां । स्थापयेदिति । प्रतिप्रस्थाता वशावदानकाले प्रचरण्यामेत्रमवद्यति । अत्र कर्कः । प्रचरण्याश्च मंत्ररहिता जुहूवत्संस्कारक्रिया । मेधस्य चोपस्तीर्य द्विरवदानं प्रत्युपस्तारश्चेति । अवदानान्यनुजुहोति यस्यै त इति । वशावदानान्यनुमेधं जुहोति यस्यै त इत्यनेन मंत्रेणेति कर्कः । अंगान्यहुता यस्य यस्या इति यथालिंगम् । यल्लिंगो गर्भ इति कर्कः । अविज्ञाते पुंवत् । अविज्ञाते गर्भे पुंवत्प्रयोग इति कर्कः । स्विष्टकृद्वनस्पत्यंतरे प्रत्येत्य प्रतिप्रस्थाता प्रचरण्या ऽ सर्वं मेधमवद्यति । स्विष्टकृतमनुजुहोति पुरुदस्म इति । स्विष्टकृदंत उष्णीषवेष्टितस्य व्वृक्षासंजनं वाऽप्स्ववहरणं वाऽऽखूत्करोपकिरणं वा । अनुव्याहारभयं त्वेतेषु । समिष्टयजुरंते शामित्र एव जुहुयात्तिष्ठन् मरुत इत्यस्वाहाकृत्य मही द्यौरित्यंगारैरभ्यूहति । गर्भमित्यर्थः । का. श्रौ. सू. । २५ । २२८–२४२ ।

( ३ ) अ॒थ व॒पया॑ चरन्ति । य॒थै॒व त॒स्यै च॒र॒णं व॒पया॑ च॒रि॒त्वाऽध्व॒र्यु॒श्च य॒जमा॑नश्च पु॒नरे॑तः स॒ आ॒हाध्व॒र्यु॒र्नि॒रू॒हैतं ग॒र्भमि॒ति त॒ꣳ ह॒ नोद॒रतो॑ नि॒रू॒हेदार्ताया॒ वै॒ मृताया॑ उ॒दरतो॒ नि॒रू॒हन्ति य॒दा वै ग॒र्भः स॒मृद्धो॒ भ॒वति॒ प्र॒ज॒न॒नेन॒ वै स त॒र्हि प्र॒त्यङ्ङै॒ति त॒म॒पि वि॒रु॒ज्य श्रो॒णी प्र॒त्य॒ञ्चं नि॒रू॒हि॒तवै॒ ब्रू॒या॒त् ॥ ३ ॥

( ४ ) तं निरू॒ह्यमा॑णम॒भिम॑न्त्रयते । ए॒ज॒तु द॒श॒मा॑स्यो ग॒र्भो ज॒रा॒युणा॑ स॒हेति॒ स य॒दा॒हैज॒त्विति॒ प्राण॒मे॒वास्मि॒न्नेत॒द्दधा॑ति द॒श॒मा॑स्य॒ इति॒ य॒दा वै ग॒र्भः स॒मृद्धो॒ भ॒व॒त्य॒थ द॒श॒मा॑स्य॒स्त॒मे॒तद॒प्य॒द॒श॒मा॑स्य॒ꣳ स॒न्तं ब्र॒ह्म॒णैव य॒जुषा॑ द॒श॒मा॑स्यं करोति ॥ ४ ॥

ज॒रा॒युणा॑ स॒हेति॑ । त॒द्य॒था द॒श॒मा॑स्यो ज॒रा॒युणा॑ स॒हेया॒दे॒व॒मे॒त॒दा॒ह य॒थाऽयं

---

अथ वपया चरन्ति–यथैव तस्यै चरणम् । वपया चरित्वाऽध्वर्युश्च यजमानश्च पुनरेतः । स आह–अध्वर्युर्निरूहैतं गर्भम्–इति । तं ह नोदरतो निरूहेद् । आर्ताया वै मृताया उदरतो निरूहन्ति । यदा वै गर्भः समृद्धो भवति–प्रजननेन वै स तर्हि प्रत्यङ्ङैति । तमपि विरुज्य श्रोणी प्रत्यञ्चं निरूहितवै ब्रूयात् ॥ ३ ॥

तं निरूह्यमाणमभिमन्त्रयते–"एजतु दशमास्यो गर्भो जरायुणा सह"–(वा. सं. ८।२८) इति । स यदाह–एजत्विति । प्राणमेवास्मिन्नेतद्दधाति । दशमास्य इति । यदा वै गर्भः समृद्धो भवति–अथ दशमास्यः । तमेतदप्यदशमास्यं सन्तं ब्रह्मणैव यजुषा दशमास्यं करोति ॥ ४ ॥

जरायुणा सहेति । तद्यथा दशमास्यो जरायुणा सहेयाद्–एवमेतदाह । "यथाऽयं वायुरेजति

---

अचोदितत्वात्तदवस्थ एव यज्ञार्थे हिंसादोषः । तस्याः 'स्थालीं चैव' मेधश्रपणार्थे 'उष्णीषं' च गर्भवेष्टनार्थम् 'उपकल्पयितवै' उपकल्पयतेति यजमानपुरुषः 'ब्रूयात्' ॥ २ ॥

अथ वपयेति । 'पुनरेतः' अध्वर्युर्वपोत्खेदनार्थं पूर्वमेव । ततो यजमानोऽपि तृणाधिष्ठानार्थं तदभिप्रायं पुनर्वचनम् । 'स आहाध्वर्युर्निरूहैतं गर्भम् इति' शमितारमाह–'तं' गर्भान्तरप्रदेशेन 'निरूहेत्' । "ऊह वितर्के"–(धा. पा. भ्वा. प. ८८४) निःपूर्वो निष्कर्षणे वर्तते । निष्कर्षेत किं कारणम् । 'आर्त्तायाः' हि 'मृतायाः' गोविकर्त्तारः 'उदरतो' निष्कर्षन्ति । तच्चात्रामङ्गलमयुक्तम् । बहिर्हविषो जीवद्वचनात् । यदा तु 'समृद्धो' निष्पन्नगर्भो 'भवति' तदा 'प्रजननेन' तत् प्राङ् गच्छति । नोदरेण तिर्यक् । अयं च समृद्ध इष्यते । ततश्चैवमपि ब्रूयात् । 'विरुज्य' विपाद्य 'श्रोणी' 'प्रत्यञ्चं' समृद्धमभवत् 'निरूहितवै' इति । अथ कस्मादपिशब्द इदमपि ब्रूयात् ॥ ३ ॥

तं निरूह्यमाणमिति । आभ्यां द्वाभ्यां कण्डिकाभ्यामभिमन्त्रणमन्त्रो व्याख्यायते । सप्तभिर्मेदसा शोणितेन चरणमुच्यते । यत्र यत्पाशुकाङ्क्षीतिनं तदङ्गतकर्मणः क्रमसिद्ध्यर्थम् । ततः परैः षड्भिर्भस्य प्रतिपत्तिरुच्यते ४–१८

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥ ४ । ५ । २ ॥

वायुरेजति यथा समुद्र एजतीति प्राणमेवास्मिन्नेतद्दधात्येवायं दशमास्यो ऽअस्रज्जरायुणा सहेति तद्यथा दशमास्यो जरायुणा सह स्रᳬंसेतैव-मेतदाह ॥ ५ ॥

तदाहुः । कथमेतं गर्भं कुर्यादित्यङ्गादङ्गाद्धैवास्यावद्येयुर्यथैवेतरेषामव-दानानामवदानं तदु तथा न कुर्यादुत ह्येषोऽविकृताङ्गो भवत्यधस्तादेव ग्रीवा अपिकृत्यैतस्याᳬं स्थाल्यामेतं मेधᳬं श्चोतयेयुः सर्व्वेभ्यो वा-ऽअस्यैषोऽङ्गेभ्यो मेध श्चोतति तदस्य सर्व्वेषामेवाङ्गानामवत्तं भवत्यव-द्यन्ति वशायाऽअवदानानि यथैव तेषामवदानम् ॥ ६ ॥

तानि पशुश्रपणे श्रपयन्ति । तदेवैतं मेधᳬं श्रपयन्त्युष्णीषेणावेष्ट्य गर्भं पार्श्वतः पशुश्रपणस्योपनिदधाति यदा शृतो भवत्यथ समुद्यावदानान्ये-वाभिजुहोति नैतं मेधमुद्वासयन्ति पशुं तदेवैतं मेधमुद्वासयन्ति ॥ ७ ॥

तं जघनेन चात्वालमन्तरेण यूपं चाग्निं च हरन्ति । दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यत्यथ स्रुचोरुपस्तृणीतेऽथ मनोतायै हविषोऽनुवाच आहा-वद्यन्ति वशाया अवदानानां यथैव तेषामवदानम् ॥ ८ ॥

---

यथा समुद्र एजति "–( वा. सं. ८ । २८ ) इति । प्राणमेवास्मिन्नेतद्दधाति । " एवायं दशमास्योऽअस्रज्जरायुणा सह "–( वा. सं. ८ । २८ ) इति । तद्यथा दशमास्यो जरायुणा सह स्रंसेत–एवमेतदाह ॥ ५ ॥

तदाहुः–कथमेतं गर्भं कुर्यादिति । अङ्गादङ्गाद्धैवास्यावद्येयुः–यथैवेतरेषामवदानानामवदानम् । तदु तथा न कुर्यात् । उत ह्येषोऽविकृताङ्गो भवति । अधस्तादेव ग्रीवा अपिकृत्यैतस्यां स्थाल्यामेतं मेधं श्चोतयेयुः । सर्वेभ्यो वाऽअस्यैषोऽङ्गेभ्यो मेध श्चोतति । तदस्य सर्वेषामेवाङ्गानामवत्तं भवति । अवद्यन्ति वशाया अवदानानि–यथैव तेषामवदानम् ॥ ६ ॥

तानि पशुश्रपणे श्रपयन्ति । तदेवैतं मेधं श्रपयन्ति । उष्णीषेणावेष्ट्य गर्भं पार्श्वतः पशुश्रपणस्योप-निदधाति । यदा शृतो भवति । अथ समुद्यावदानान्येवाभिजुहोति । नैतं मेधमुद्वासयन्ति । पशुं तदेवैतं मेधमुद्वासयन्ति ॥ ७ ॥

तं जघनेन चात्वालमन्तरेण यूपं चाग्निं च हरन्ति । दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यति । अथ स्रुचोरुपस्तृणीते । अथ मनोतायै हविषोऽनुवाच आह । अवद्यन्ति वशाया अवदानानाम्–यथैव तेषामवदानम् ॥ ८ ॥

( मु ) अथ प्रचरणीति स्रुग्भवति । तस्यां प्रतिप्रस्थाता मेधायोपस्तृणीते द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदानेऽअथानुवाच आहाश्राव्याह प्रेष्येति व्वषट्कृतेऽध्वर्युर्जुहोत्यध्वर्योरनु होमं जुहोति प्रतिप्रस्थाता ॥ ९ ॥

यस्यै ते यज्ञियो गर्भ इति । ( त्यु ) अयज्ञिया वै गर्भास्तमेतद्ब्रह्मणैव यजुषा यज्ञियं करोति यस्यै योनिर्हिरण्ययीत्यदो वाऽएतस्यै योनिं विच्छिन्दन्ति यददो निष्कर्षन्त्यमृतमायुर्हिरण्यं तामेवास्याऽएतदमृतां योनिं करोत्यङ्गान्यह्रुता यस्य तं मात्रा समजीगमꣳ स्वाहेति यदि पुमान्त्स्याद्यद्यु स्त्री स्यादङ्गान्यह्रुता यस्यै तां मात्रा समजीगमꣳ स्वाहेति यद्युऽअविज्ञातो गर्भो भवति पुꣳस्कृत्यैव जुहुयात्पुमाꣳसो हि गर्भा अङ्गान्यह्रुता यस्य तं मात्रा समजीगमꣳ स्वाहेत्यदो वाऽएतं मात्रा विष्वञ्चं कुर्व्वन्ति यददो निष्कर्षन्ति तमेतद्ब्रह्मणैव यजुषा समर्ध्य मध्यतो यज्ञस्य पुनर्मात्रा सङ्गमयति ॥ १० ॥

(त्यु) अथाध्वर्युर्व्वनस्पतिना चरति । व्वनस्पतिनाऽध्वर्युश्चरित्वा यान्युपभृत्यवदानानि भवन्ति तानि समानयमानऽआहाग्नये स्विष्टकृतेऽनुब्रूहीत्यत्याक्रामति प्रतिप्रस्थाता स एतꣳ सर्व्वमेव मेधं गृहीतेऽथोपरिष्टाद्धि-

---

अथ प्रचरणीति स्रुग्भवति । तस्यां प्रतिप्रस्थाता मेधायोपस्तृणीते द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदाने । अथानुवाच आह । आश्राव्याह–'प्रेष्य' इति । वषट्कृतेऽध्वर्युर्जुहोति । अध्वर्योरनु होमं जुहोति प्रतिप्रस्थाता ॥ ९ ॥

" यस्यै ते यज्ञियो गर्भः "–( वा. सं. ८ । २९ ) इति । अयज्ञिया वै गर्भाः । तमेतद्ब्रह्मणैव यजुषा यज्ञियं करोति । " यस्यै योनिर्हिरण्ययी "–( वा. सं. ८ । २९ ) इति । अदो वाऽएतस्यै योनिं विच्छिन्दन्ति । यददो निष्कर्षन्ति–अमृतमायुर्हिरण्यम् । तामेवास्या एतदमृतां योनिं करोति । " अङ्गान्यह्रुता यस्य तं मात्रा समजीगमं स्वाहा "–( वा. सं. ८ । २९ ) इति, यदि पुमान्त्स्यात् । यद्यु स्त्री स्यात्–अङ्गान्यह्रुता यस्यै तां मात्रा समजीगमं स्वाहेति । यद्युऽअविज्ञातो गर्भो भवति, पुंस्कृत्यैव जुहुयात् । पुमांसो हि गर्भाः । अङ्गान्यह्रुता यस्य तं मात्रा समजीगमं स्वाहा–इति । अदो वाऽएतं मात्रा विष्वञ्चं कुर्वन्ति–यददो निष्कर्षन्ति । तमेतद्ब्रह्मणैव यजुषा समर्ध्य मध्यतो यज्ञस्य पुनर्मात्रा सङ्गमयति ॥ १० ॥

अथाध्वर्युर्वनस्पतिना चरति । वनस्पतिनाऽध्वर्युश्चरित्वा यान्युपभृत्यवदानानि भवन्ति–तानि समानयमान आह–'अग्नये स्विष्टकृतेऽनुब्रूहि' इति । अत्याक्रामति प्रतिप्रस्थाता । स एतं सर्वमेव मेधं

राज्यस्याभिघारयत्याश्राव्याह प्रेष्येति वषट्कृतेऽध्वर्युर्जुहोत्यध्वर्योरनु होमं जुहोति प्रतिप्रस्थाता ॥ ११ ॥

पुरुदस्मो विषुरूपऽइन्दुरिति । बहुदानऽइति हैतद्यदाह पुरुदस्म इति विषुरूप इति विषुरूपाऽइव हि गर्भाऽइन्दुरन्तर्महिमानमानञ्ज धीरऽइत्यन्तर्ह्येष मातर्यक्तो भवत्येकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनानु प्रथन्ताᳩँ स्वाहेति प्रथयत्येवैनामेतत्सुभूयो ह जयत्यष्टापद्येष्ट्वा यदु चानष्टापद्या ॥ १२ ॥

तदाहुः । क्वैतं गर्भं कुर्यादिति वृक्षऽएवैनमुद्दध्युरन्तरिक्षायतना वै गर्भा अन्तरिक्षमिवैतद्यद्वृक्षस्तदेनᳩँ स्वऽएवायतने प्रतिष्ठापयति तदु वाऽआहुर्य एनं तत्रानुव्याहरेद्वृक्षऽएनं मृतमुद्वास्यन्तीति तथा हैव स्यात्॥ १३॥

( द ) अप एवैनमभ्यवहरेयुः । ( ग ) आपो वाऽअस्य सर्वस्य प्रतिष्ठा तदेनमप्स्वेव प्रतिष्ठापयति तदु वाऽआहुर्यऽएनं तत्रानुव्याहरेदप्स्वेव मरिष्यतीति तथा हैव स्यात् ॥ १४ ॥

( दा ) आखूत्करऽएवैनमुपकिरेयुः । (रि) इयं वाऽअस्य सर्वस्य प्रतिष्ठा तदेनमस्यामेव प्रतिष्ठापयति तदु वाऽआहुर्य एनं तत्रानुव्याहरेत्क्षिप्रेऽस्मै मृताय श्मशानं करिष्यन्तीति तथा हैव स्यात् ॥ १५ ॥

---

गृह्णीते। अथोपरिष्टाद् द्विराज्यस्याभिघारयति। आश्राव्याह–' प्रेष्य ' इति। वषट्कृतेऽध्वर्युर्जुहोति। अध्वर्योरनु होमं जुहोति प्रतिप्रस्थाता ॥ ११ ॥

" पुरुदस्मो विषुरूप इन्दुः "–( वा. सं. ८ । ३० ) इति । बहुदाना इति हैतद्–यदाह–पुरुदस्म इति । विषुरूप इति । विषुरूपा इव हि गर्भाः। " इन्दुरन्तर्महिमानमानञ्ज धीरः "–( वा. सं. ८ । ३० ) इति । अन्तर्ह्येष मातर्यक्तो भवति । " एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनानु प्रथन्तां स्वाहा "–( वा. सं. ८ । ३० ) इति । प्रथयत्येवैनामेतत्। सुभूयो ह जयति–अष्टापद्येष्ट्वा, यदु चानष्टापद्या ॥ १२ ॥

तदाहुः–क्वैतं गर्भं कुर्यादिति। वृक्षऽएवैनमुद्दध्युः। अन्तरिक्षायतना वै गर्भाः। अन्तरिक्षमिवैतद् यद्वृक्षः। तदेनं स्वऽएवायतने प्रतिष्ठापयति। तदु वाऽआहुः–य एनं तत्रानुव्याहरेद्–वृक्षऽएनं मृतमुद्वास्यन्तीति। तथा हैव स्यात् ॥ १३ ॥

अप एवैनमभ्यवहरेयुः। आपो वाऽअस्य सर्वस्य प्रतिष्ठा। तदेनमप्स्वेव प्रतिष्ठापयति। तदु वाऽआहुः–य एनं तत्रानुव्याहरेद्–अप्स्वेव मरिष्यतीति। तथा हैव स्यात् ॥ १४ ॥

आखूत्करऽएवैनमुपकिरेयुः। इयं वाऽअस्य सर्वस्य प्रतिष्ठा। तदेनमस्यामेव प्रतिष्ठापयति। तदु वाऽआहुः–य एनं तत्रानुव्याहरेत्–क्षिप्रेऽस्मै मृताय श्मशानं करिष्यन्तीति। तथा हैव स्यात्॥१५॥

(त्प)पशुश्रपणऽएवैनं मरुद्भ्यो जुहुयात् । (द) अहुतादो वै देवानां मरुतो विडहुतमिवैतद्यदशृतो गर्भऽआहवनीयाद्वाऽएष आहुतो भवति पशुश्रपणस्तथा ह नु बहिर्धा यज्ञाद्भवति नु प्रत्यक्षमिवाहवनीये देवानां वै मरुतस्तदेनं मरुत्स्वेव प्रतिष्ठापयति ॥ १६ ॥

स हुत्वैव समिष्टयजूꣳषि । प्रथमावशान्तेष्वङ्गारेष्वेतꣳ सोष्णीषं गर्भमादत्ते तं प्राङ्तिष्ठञ्जुहोति मारुत्यऽर्चा मरुतो यस्य हि क्षये पाथा दिवो विमहसः ॥ स सुगोपातमो जन इति न स्वाहाकरोत्यहुतादो वै देवानां मरुतो विडहुतमिवैतद्यदस्वाहाकृतं देवानां वै मरुतस्तदेनं मरुत्स्वेव प्रतिष्ठापयति ॥ १७ ॥

( त्य ) अथाङ्गारैरभिसमूहति । मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिरिति ॥ १८ ॥ ( शतम् २७०० )

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ ४–४–३ ॥ ( ९–२ )

---

पशुश्रपणऽएवैनं मरुद्भ्यो जुहुयात् । अहुतादो वै देवानां मरुतो विट् । अहुतमिवैतद्—यदशृतो गर्भः । आहवनीयाद्वाऽएष आहुतो भवति । पशुश्रपणः । तथा ह न बहिर्धा यज्ञाद्भवति । न प्रत्यक्षमिव आहवनीये । देवानां वै मरुतः । तदेनं मरुत्स्वेव प्रतिष्ठापयति ॥ १६ ॥

स हुत्वैव समिष्टयजूंषि, प्रथमावशान्तेष्वङ्गारेष्वेतं सोष्णीषं गर्भमादत्ते । तं प्राङ्तिष्ठञ्जुहोति—मारुत्यऽर्चा । " मरुतो यस्य हि क्षये पाथा दिवो विमहसः ॥ स सुगोपातमो जनः "—( वा. सं. ८ । ३१ ) इति । न स्वाहा करोति । अहुतादो वै देवानां मरुतो विट् । अहुतमिवैतद्—यदस्वाहाकृतम् । देवानां वै मरुतः । तदेनं मरुत्स्वेव प्रतिष्ठापयति ॥ १७ ॥

अथाङ्गारैरभिसमूहति—" मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः "—( वा. सं. ८ । ३२ । ) इति ॥ १८ ॥

इत्यग्निष्टोमः ।

---

१—एष प्रथमः सोमः । सर्वविकाराणामयं प्रथमः सोम इति कर्कः । का. श्रौ. सू. १० । २०७ ।

इन्द्रो ह वै षोडशी । तं नु सक्कदिन्द्रं भूतान्यत्यरिच्यन्त प्रजा वै भूतानि ता हैनेन सहग्भुवमिवासुः ॥ १ ॥

( ग्रि ) इन्द्रो ह वाऽईक्षांचक्रे । कथं न्वहमिदꣳ सर्वमतितिष्ठेयमर्वागेव मदिदꣳ सर्वꣳ स्यादिति सऽएतं ग्रहमपश्यत्तमगृह्णीत स इदꣳसर्वमेवात्यतिष्ठदर्वागेवास्मादिदꣳ सर्वमभवत्सर्वꣳ ह वाऽइदमतितिष्ठत्यर्वागेवास्मादिदꣳ सर्वं भवति यस्यैवं विदुषऽएतं ग्रहं गृह्णन्ति॥२॥

---

अथ षोडशी ग्रहः ।

इन्द्रो ह वै षोडशी तं नु सक्कदिन्द्रं भूतान्यत्यरिच्यन्त । प्रजा वै भूतानि । ता हैनेन सहग्भवमिवासुः ॥ १ ॥

इन्द्रो ह वाऽईक्षाश्चक्रे ' कथं न्वहमिदं सर्वमतितिष्ठेयम् । अर्वागेव मदिदं सर्वं स्याद् ' इति । स एतं ग्रहमपश्यत् । तमगृह्णीत । स इदं सर्वमेवात्यतिष्ठत्, अर्वागेवास्मादिदं सर्वमभवत् । सर्वं ह वाऽइदमतितिष्ठति, अर्वागेवास्मादिदं सर्वं भवति यस्यैवं विदुष एतं ग्रहं गृह्णन्ति ॥ २ ॥

---

इन्द्रो ह वै षोडशीति । ' षोडशी ' नाम ग्रहोऽत्र ज्योतिष्टोमो ग्रह एव काम्यो विधीयते तदर्थमितिहासोपन्यासः । ' इन्द्रः ' देवराजः षोडशावयववशाकर्षणश्चक्षुः षोडशः सोऽस्यास्तीति ' षोडशी ' तच्छन्दः श्रूयत इत्यध्याहारः । योऽयं षोडशीन्द्रः । ( प्रसिद्धानसक्कन्नित्यमेव प्रसिद्धः । ) प्राक् ' भूतानि ' तान्येवेच्छाकामाय ' अत्यरिच्यन्त ' । ज्ञानैश्वर्यप्रभावैः । ' प्रजा वै भूतानि ' देवराजव्यतिरिक्ताः ' प्रजाः ' ' भूतानि ' 'ताः' च प्रजा 'एनेन' इन्द्रेण ' सद्दग्भवम् ' ' आसुः ' सदृश्यो भूत्वा भूत्वा आसुः स्थिताः । इन्द्र अग्निष्टोमाभ्यां ईजे ताऽअपि ताभ्यामीजिरे एवेत्यभिप्रायः ॥ १ ॥

अथैवं सति—इन्द्रो ह वा इति । स एतं ग्रहमिति । यद्यपि पूर्वं नोपन्यस्तो ग्रहस्तथाप्यातिष्ठेत्यनया पुरोरुचा क्रमादुपस्थितायाः प्रत्यक्षवन्निर्दिश्यते वक्ष्यमाणम् । स इद ५ सर्वमेवात्यतिष्ठदिति । यदस्मादिन्द्रात् कर्मविद्याभावनाभिर्निकृष्टं तत् सर्वमतिक्रम्य अतिष्ठत् । सर्व ५ ह वा इदमिति । 'तिष्ठति' इति फलवचनम् । ननु च तं वै प्रातःसवने गृह्णीयादिति प्रातःसवनान्तर्गतोऽयं क्रमाज्ज्योतिष्टोमेन ग्रहीष्यते । ततश्च परार्थे फलश्रुतिरर्थवादः स्यात् यथाऽतिग्राह्येषु प्रवर्ग्ये च । नैतदेवं, तथा हि सति क्रत्वर्थोऽयं नित्यः स्यात्तत्र ' यद्यग्निष्टोमः स्यात् । यद्युक्थ्यः स्यात् । यदि षोडशी स्यात् ' इत्यनित्यता । दर्शनानि विहस्येरन् शाखान्तरवत्स्फुट एव स्यात्कामनिर्देशः । षोडशिना वीर्यकामः स्तुवीत । अतिग्राह्यास्तु नित्याः पृष्ठ्ये विश्वजिति च । प्रवर्ग्योऽपि नित्य एव चानेन कचित्प्रथमप्रयोगाद्यौ निरस्त इति विशेषः ॥ २ ॥

---

१-षड्डुत्तरेऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोतिरात्रोऽप्तोर्यामः । संस्थाविकारा इमे । न क्रतुविकाराः । तत्रोक्थ्यषोडश्यतिरात्राणामाग्निष्टोमविकारत्वम् । अत्याग्निष्टोमस्यापि अग्निष्टोमशब्दनात् अग्निष्टोमविकारत्वम् । वाजपेयस्य षोडशिविकारत्वम् । अप्तोर्यामस्यातिरात्रविकारत्वम् । इति कर्कः । का. श्रौ. सू. । १० । २०९ ।

तस्मादेतदृषिणाभ्यनूक्तम् । न ते महित्वमनुभूदध द्यौर्यदन्यया स्फिग्या क्षामवस्थाऽइति न ह वाऽअस्यासौ द्यौरन्यतराञ्चन स्फिगीमनुबभूव तथेदꣳसर्व्वमेवात्यतिष्ठदर्व्वागेवास्मादिदꣳ सर्व्वमभवत्सर्वꣳ ह वाऽइदमतितिष्ठत्यर्व्वागेवास्मादिदꣳ सर्व्वं भवति यस्यैवं विदुषऽएतं ग्रहं गृह्णन्ति ॥३॥

तं वै हरिवत्यऽर्चा गृह्णाति । हरिवतीषु स्तुवते हरिवतीरनुशꣳसति व्वीर्यं वै हर इन्द्रोऽसुराणाꣳ सपत्नानाꣳ समवृङ्क्त तथोऽएवैष एतद्वीर्यꣳ हरः सपत्नानाꣳ संवृङ्क्ते तस्माद्धरिवत्यऽर्चा गृह्णाति हरिवतीषु स्तुवते हरिवतीरनुशꣳसति ॥ ४ ॥

तं वाऽअनुष्टुभा गृह्णाति । गायत्रं वै प्रातःसवनं त्रैष्टुभं माध्यन्दिनꣳ

---

तस्मादेतदृषिणाभ्यनूक्तम्—" न ते महित्वमनुभूदध द्यौर्यदन्यया स्फिग्या क्षामवस्थाः " इति । न ह वाऽअस्यासौ द्यौरन्यतराश्चन स्फिगीमनुबभूव । तथेदं सर्वमेवात्यतिष्ठत्, अर्वागेवास्मादिदं सर्वमभवत् । सर्वं ह वा इदमतितिष्ठति । अर्वागेवास्मादिदं सर्वं भवति—यस्यैवं विदुष एतं ग्रहं गृह्णन्ति ॥ ३ ॥

तं वै हरिवत्यऽर्चा गृह्णाति । हरिवतीषु स्तुवते, हरिवतीरनुशंसति । वीर्यं वै हर इन्द्रोऽसुराणां सपत्नानां समवृङ्क्त । तथो एवैष एतद्वीर्यं हरः सपत्नानां संवृङ्क्ते । तस्माद्धरिवत्यऽर्चा गृह्णाति[1] । हरिवतीषु स्तुवते, हरिवतीरनुशंसति ॥ ४ ॥

तं वाऽअनुष्टुभा गृह्णाति । गायत्रं वै प्रातःसवनम्—त्रैष्टुभं माध्यन्दिनं सवनं जागतं तृतीयसवनम् । अथातिरिक्तानुष्टुब् अत्येवैनमेतद्रेचयति । तस्मादनुष्टुभा गृह्णाति ॥ ५ ॥

---

तस्मादेतदृषिणेति । ( मैत्रेणैतदिन्द्रस्यातिष्ठातृत्वम् ' अभ्यनूक्तम् ' ' न ते महित्वम् ' इह उच्यते—हे भगवन्निन्द्र ! विजानतः बहूनि जातानि मरुदादीन्यस्येति विजानतः । तव महित्वं नानुभवति ' द्यौः ' ' अध ' अतः कारणात् चन ' यत् ' यस्मात् कारणात् महाबलतया बलमिवात्मानमाचरितव्या एतव्या बलवत्तरा ? अहन्नहि परिशयानमर्त्या जायमानं नु विधातव्या । " न ते महित्वमनुभूदध द्यौर्यदन्यया स्फिग्या क्षामवस्थाः " इति नैव यस्यैकमपि सव्यां दक्षिणां वा स्फिगामन्तमनुभूता " । "अनुर्लक्षणे"–( पा. सू. १ । ४ । ८४ । ) इति कर्मप्रवचनीयः । ) यस्मिन्नुपदेशस्य निष्पन्नस्य का स्फिगी तमपि प्रदेशमुन्नतया द्यौर्न प्राप्तेत्यर्थः ॥ ३ ॥

तथा तेन प्रकारेणेदं सर्वमिन्द्रोऽत्यतिष्ठत् । यथा द्यौरादर्श्यपि न जातेति मन्त्रेणेतिहासं द्रढयति । तेनायं फलविधिः । तं वै हरिवत्येति । ' वीर्यं वै हरः ' ज्योतिः । तत्र ' इन्द्रोऽसुराणाम् ' स्वभूतं संवृक्तवानाच्छिन्नवान् वृतवानित्यर्थः । ( ततश्च हाराद्धृतवानिति हरिरिन्द्रः ) ' तथो एव ' ततश्च हरिशब्दं हर्तृवाचिनं प्रयुञ्जानो हर्त्तैव वीर्यस्य भवतीति ॥ ४ ॥

तं वा इति । प्रसन्ना ॥ ५ ॥ ६ ॥

---

१–प्रातःसवनेऽतिग्राह्यान् गृहीत्वा षोडशिनं खादिरेण चतुःस्रक्तिनातिष्ठ युक्ष्वाहीति वा । अतिग्राह्यस्य बहुत्वाभावात् बहुवचनमुच्चारणार्थम् । अतिग्राह्यषोडशिनोः पौर्वापर्यं शाखांतरादिति कर्कः । आतिष्ठवृत्रहन् ८ । ३३ युक्ष्वाहिकेशिना ८।३४ इति मंत्रविकल्पः । इंद्रमिद्धरीइति ८ । ३५ । तृतीयमंत्रविकल्पस्तु आग्रयणाद्वेंद्रमिद्धरी इति गृहीत्वोति कठसूत्रोक्तेरिति महीधरः।का. श्रौ. सू.१२ । ९५।

सुवनं जागतं तृतीयसवनमथातिरिक्तानुष्टुबत्येवैनमेतद्रेचयति तस्मादनुष्टुभा गृह्णाति ॥ ५ ॥

तं वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयो वाऽइमे लोकास्तदिमानेव लोकांस्तिसृभिः स्रक्तिभिराप्नोत्यत्येवैनं चतुर्थ्या स्रक्त्या रेचयति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥ ६ ॥ [ अर्धप्रपाठकः ] ॥

तं वै प्रातःसवने गृह्णीयात् । ( दा ) आग्रयणं गृहीत्वा स प्रातःसवने गृहीत ऐतस्मात्कालादुपशेते तदेनꣳ सर्वाणि सवनान्यतिरेचयति ॥ ७ ॥

माध्यन्दिने वैनꣳ सवने गृह्णीयात् । ( दा ) आग्रयणं गृहीत्वा सोऽएषा मीमाꣳसैव प्रातःसवनऽएवैनं गृह्णीयादाग्रयणं गृहीत्वा स प्रातःसवने गृहीत ऐतस्मात्कालादुपशेते ॥ ८ ॥

( तेऽथा ) अथातो गृह्णात्येव । ( वा ) आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिनऽएष ते योनिरिन्द्राय त्वा षोडशिनऽइति ॥ ९ ॥

---

तं वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयो वाऽइमे लोकाः । तद् इमानेव लोकाँस्तिसृभिः स्रक्तिभिराप्नोति । अत्येवैनं चतुर्थ्या स्रक्त्या रेचयति । तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥ ६ ॥

तं वै प्रातःसवने गृह्णीयात्—आग्रयणं गृहीत्वा स प्रातःसवने गृहीत ऐतस्मात्कालादुपशेते । तदेनं सर्वाणि सवनान्यतिरेचयति ॥ ७ ॥

माध्यन्दिने वैनं सवने गृह्णीयात् आग्रयणं गृहीत्वा सो एषा मीमांसैव प्रातःसवन एवैनं गृह्णीयादाग्रयणं गृहीत्वा स प्रातःसवने गृहीत ऐतस्मात्कालादुपशेते ॥ ८ ॥

अथातो गृह्णात्येव " आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिने एष ते योनिरिन्द्राय त्वा षोडशिने "–( वा. सं. ८ । ३३ । ) इति ॥ ९ ॥

---

तं वै प्रातःसवन इति । ऐतस्मात् कालादिति । तृतीयसवनप्रान्तात् कुत एतत् " तदेनꣳ सर्वाणि सवनान्यतिरेचयति " इति वाक्यशेषात् । तथापि " तं वै पुरास्तमयादुपाकरोति "–इति वचनादस्तमितं यावदुपशेते ॥ ७ ॥

माध्यन्दिने वैनमिति । प्रसन्नास्तिस्रः ॥ ८–९–१० ॥

---

१–माध्यंदिने वाऽऽग्रयणादुत्तरः । उत्तरः षोडशी गृह्यत इत्यर्थः । धाराग्रहांते वाऽतिग्राह्यान् । पूतभृतो वोपाकरिष्यन् पृष्ठ्यम् । अत्र कर्कः । षोडशिनं गृह्णाति पृष्ठ्यमुपाकरिष्यन्नतिग्राह्यान् गृह्णातीति योगविभागः । एवं चातिग्राह्याणां कालत्रयम् । षोडशिग्रहस्य तु चत्वारः कालाः । अंतराग्रयणोक्थ्यौ तृतीयसवने काण्वपाठाच्चतुर्थः काल इति । तथाच काण्वीया श्रुतिः । अथो अप्याहुः । तृतीयसवन एवैनं गृह्णीयादिति । आग्रयणमेव गृहीत्वाथैतमथोक्थ्यमिति । का० श्रौ० सू० १२ । ९६–९८ ।

( त्य ) अनुया वा । युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिनऽएषु ते योनिरिन्द्राय त्वा षोडशिनऽइति ॥ १० ॥

(त्य) अथेत्य स्तोत्रमुपाकरोति । सोमोऽत्यरेच्युपावर्तध्वमित्युत्येवैनमेतुद्रेचयति तं वै पुरास्तमयादुपाकरोत्युस्तमितेऽनुशꣳसति तदेनेनाऽहोरात्रे संदधाति तस्मात्पुरास्तमयादुपाकरोत्युस्तमितेऽनुशꣳसति ११

इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् ॥ ४-४-४ ॥ ( ९. ३. )

---

अनया वा "युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर । उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन ऽएष ते योनिरिन्द्राय त्वा षोडशिने "-( वा. सं. ८ । ३४ ) इति ॥ १० ॥

अथेत्य स्तोत्रमुपाकरोति । सोमोऽत्यरेच्युपावर्तध्वमिति । अत्येवैनमेतद्रेचयति । तं वै पुरास्तमयादुपाकरोति, अस्तमितेऽनुशंसति । तदेनेनाहोरात्रे सन्दधाति । तस्मात्पुरास्तमयादुपाकरोति, अस्तमितेऽनुशंसति ॥ ११ ॥

---

अथेत्य स्तोत्रमुपाकरोतीति । न ग्रहणानन्तरम् " तं वै प्रातःसवने गृह्णाति "-इति " तं वै पुरास्तमयादुपाकरोति " इति च कालभेदात्तस्मादेतदेव द्रष्टव्यम् । यावत्तार्तीयसवनाभ्याम् उक्थविग्रहाभ्यां प्रतिप्रस्थात्रा चरिते हविर्द्धानमध्वर्युर्गत्वा यस्मान्न जात इति षोडशिनमुपस्थाय तृणहिरण्यैरुपस्पृश्योपास्तमयमागत्य ( ? ) स्तोत्रं षोडशिनस्तृणहिरण्यैरुपाकरोति । कथं ? हे उद्गातारोऽतिरेचितः सोमोऽस्माभिः षोडश्यनुहोमे चमसार्थमत उपावर्त्तध्वं यूयं स्तोत्रायेति । एवं ब्रुवन्नेतं षोडशिनमतिरेचयति । एवं सवनानि षोडश्यनुकारेण च यजमानं तं वै पुरास्तमयादिति ग्रहार्थत्वात् स्तोत्रस्य स्तोत्र उपाक्रियमाणे ग्रह एवोपाक्रियत इत्येतदङ्गीकृत्य तं षोडशिनं ग्रहं स्तोत्रात्मकं पुरास्तमयादुपाकरोत्यस्तमिते तु तमेवानुशंसति शस्त्रात्मना तथा च क्रियमाणं तेन षोडशिनाहोरात्रे सन्दधातीत्याह ॥ ११ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे
पञ्चमाऽध्याये तृतीयं ब्राह्मणम् ॥ ४-५-३ ॥

---

१-उक्थ्यांते षोडशिचरणमुपस्थायैनं यस्मान्न जात इति चमसानुन्नीय । अत्र प्रयोगक्रमः । उक्थ्यप्रचारांते षोडशिग्रहप्रचारः । ततः प्रथमं चमसोन्नयनम् । ततो यस्मान्न जात इति षोडशिग्रहोपस्थानम् । इति कर्कः । का. श्रौ. सू. १२ । ११३ ।

२-तृणहिरण्यैः स्तोत्रोपाकरणमुपास्तमय॰ सोमोऽत्यरेच्युपावर्तध्वमिति कृष्णेऽश्व उपतिष्ठति । इंद्रं जुषो ३ स्वः प्रवहा । प्र । इति षोडशिस्तोत्रम् । का. श्रौ. सू. १२ । ११४ ।

३-आश्वलायनानां विहृतषोडशीशस्त्रम् । हिं भूर्भुवः स्वरोम् । अध्वर्योशोशोंसावो ३ मिन्द्रजुषस्व प्रवहायाहीत्यादि उपशस्य विष्टपमित्यन्तम् । षोडशीयागो द्विविधः । विहृतो अविहृतश्च । यत्र गौरीवीतं साम पठ्यते स विहृतः । यत्र निन॰ साम पठ्यते स अविहृतः । इति । षोडशीयागे षोडश शस्त्राणि १६ सौमिकानि द्वादश १२ त्रीणि उक्थ्यशस्त्राणि ३ । चतुर्थं षोडशिशस्त्रं च १-१६ ।

४-इंद्रस्य सम्राडिति भक्षणम् का. श्रौ. सू. १२-११५ । इति षोडशी परिसमाप्तः ।

सर्वे ह वै देवाः । ( ऽ ) अग्रे सदृशा आसुः सर्वे पुण्यास्तेषाᳬं सर्वेषाᳬं सदृशानाᳬं सर्वेषां पुण्यानां त्रयोऽकामयन्तातिष्ठावानः स्यामेत्यग्निरिन्द्रः सूर्यः ॥ १ ॥

( स्ते ) तेऽर्चन्तः श्राम्यन्तश्चेरुः । ( स्तु ) तऽएतानतिग्राह्यान्ददृशुस्तानत्यगृह्णत तद्यदेनानत्यगृह्णत तस्मादतिग्राह्या नाम तेऽतिष्ठावानोऽभवन्यथैतऽएतदतिष्ठेवातिष्ठेव ह वै भवति यस्यैवं विदुषऽएतान्ग्रहान् गृह्णन्ति ॥ २ ॥

नो ह वाऽइदमग्रेऽग्नौ वर्च आस । यदिदमस्मिन्वर्चः सोऽकामयतेदं मयि वर्चः स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतद्वर्चऽआस ॥ ३ ॥

---

सर्वे ह वै देवा अग्रे सदृशा आसुः–सर्वे पुण्याः । तेषां सर्वेषां सदृशानां सर्वेषां पुण्यानां त्रयोऽकामयन्त ' अतिष्ठावानः स्याम ' इति–अग्निः इन्द्रः सूर्यः ॥ १ ॥

तेऽर्चन्तः श्राम्यन्तश्चेरुः । तऽएतानतिग्राह्यान्ददृशुः । तानत्यगृह्णत । तद्यत् एनान् अत्यगृह्णत । तस्मादतिग्राह्या नाम । तेऽतिष्ठावानोऽभवन् । यथैतऽएतदतिष्ठेव । अतिष्ठेव ह वै भवति । यस्यैवं विदुष एतान्ग्रहान्गृह्णन्ति ॥ २ ॥

नो ह वाऽइदमग्रेऽग्नौ वर्च आस–यदिदमस्मिन्वर्चः सोऽकामयत । इदं मयि वर्चः स्यादिति । स एतं ग्रहमपश्यत् तमगृह्णीत । ततोऽस्मिन्नेतद्वर्च आस ॥ ३ ॥

---

सर्वे ह वै देवा इति । एतेनातिग्राह्या नाम ग्रहाः पृष्ठ्ये षडहे विश्वजिति च विधीयन्ते । ' अतिष्ठावानः ' अतिपूर्वात् ष्ठाधातोः " आतो मनिन्क्वनिब्वनिपश्च "–(पा. सू. ३ । २ । ७४ ) इति वनिप् । अत्यन्यान्देवांस्तिष्ठन्तीत्यतिष्ठावानः ' तान् ' ग्रहानतिरिक्तान् गृह्णन्तो देवाश्च ' अतिष्ठावानोऽभवन् ' कथं ' यथा ' ' एते ' अग्न्यादय ( एव सर्वं लोकप्रसिद्धम् ) ' अतिष्ठेव ' तिष्ठतेर्मनिनि "आतश्चोपसर्गे "–(पा. सू. ३।३।१०६। ) इति अतिष्ठानमतिष्ठाश्चेति वा एषामस्तीत्यतिष्ठावन्त इति प्राप्ते लुप् मतुपः । इवेति वाक्यपूरणोऽतिष्ठावान् एव भवति । ' यस्यैवं विदुष एतान् ग्रहान् गृह्णन्ति ' । क्रतुफलमेवार्थं चादाय कीर्त्यते " तान्वै पृष्ठ्ये षडहे गृह्णीयादिति " क्रत्वर्थत्वात् । तत्रैव क्रतुमात्रे तदेव विदुषः फलं भवति नान्यस्यात एवेति वचनात् ॥ १ ॥ २ ॥

नो ह वा इति । त्रिभिरेताभिरग्न्यादय ऋषय एषां ग्रहाणां यथासङ्ख्यं तं वै त्रिभिः ' वर्चो ' वीर्य

---

१–पृष्ठ्यः षडहः प्रथमोऽग्निष्टोमश्चतुर्थः षोडश्युक्थ्या इतरे । का. श्रौ. सू. १२–४७ । २–तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वेऽग्ने पवस्वोत्तिष्ठन्नुदश्रमित्यन्वहमेवैकम् । उत्तरे वा । उत्तरे त्र्यहे वेति पक्षांतरम् । उभयोर्वा उभयोस्त्र्यहयोर्वा ग्रहणमिति च पक्षांतरम् । एवंच पक्षत्रयं विकल्पेन इति कर्कमतम् । संप्रदाये तु पक्षद्वयम् पूर्वे वा त्र्यहे उभयोर्वेति । का. श्रौ. सू. १२ । ४८–५० ।

नो ह वाऽइदमग्रऽइन्द्रऽओज आस । यदिदमस्मिन्नोजः सोऽकामयतेदं मय्योजः स्यादिति स एतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतदोज आस ॥ ४ ॥

नो ह वाऽइदमग्रे सूर्ये भ्राज ऽआस । यदिदमस्मिन्भ्राजः सोऽकामयतेदं मयि भ्राजः स्यादिति स ऽएतं ग्रहमपश्यत्तमगृह्णीत ततोऽस्मिन्नेतद्भ्राज ऽआसैतानि ह वै तेजाᳬंस्येतानि वीर्याण्यात्मन्धत्ते यस्यैवं विदुष ऽएतान्ग्रहान्गृह्णन्ति ॥ ५ ॥

तान्वै प्रातःसवने गृह्णीयात् । ( दा ) आग्रयणं गृहीत्वात्मा वाऽआग्रयणो बहु वाऽइदमात्मन ऽएकैकमतिरिक्तं क्लोम हृदयं त्वद्यत्त्वत् ॥ ६ ॥

( न्मा ) माध्यन्दिने वैनान्त्सवने गृह्णीयात् । ( दु ) उक्थ्यं गृहीत्वोपाकरिष्यन्वा पूतभृतोऽयᳬं ह वाऽअस्यैषोऽनिरुक्त ऽआत्मा यदुक्थ्यः सोऽएषा मीमाᳬंसैव प्रातःसवनऽएवैनान्गृह्णीयादाग्रयणं गृहीत्वा ॥ ७ ॥

ते माहेन्द्रस्यैवानु होमᳬं हूयन्ते । ( न्तऽ ) एष वाऽइन्द्रस्य निष्केवल्यो

---

नो ह वाऽइदमग्रऽइन्द्रऽओज आस—यदिदमस्मिन्नोजः । सोऽकामयत । इदं मय्योजः स्यादिति । स एतं ग्रहमपश्यत् । तमगृह्णीत ततोऽस्मिन्नेतदोज आस ॥ ४ ॥

नो ह वाऽइदमग्रे सूर्ये भ्राज आस—यदिदमस्मिन्भ्राजः । सोऽकामयत । इदं मयि भ्राजः स्यादिति । स एतं ग्रहमपश्यत् । तमगृह्णीत । ततोऽस्मिन्नेतद्भ्राज आस । एतानि ह वै तेजांसि । एतानि वीर्याण्यात्मन्धत्ते—यस्यैवं विदुषः एतान्ग्रहान्गृह्णन्ति ॥ ५ ॥

तान्वै प्रातःसवने गृह्णीयादाग्रयणं गृहीत्वा । आत्मा वाऽआग्रयणः । बहु वाऽइदमात्मन एकैकमतिरिक्तं क्लोम, हृदयं त्वत् यत्त्वत् ॥ ६ ॥

माध्यन्दिने वैनान्त्सवने गृह्णीयात् । उक्थ्यं गृहीत्वा उपाकरिष्यन्वा पूतभृतः । अयं ह वाऽअस्यैषोऽनिरुक्त आत्मा—यदुक्थ्यः सोऽएषा मीमांसैव । प्रातःसवनऽएवैनान्गृह्णीयादाग्रयणं गृहीत्वा ॥ ७ ॥

ते माहेन्द्रस्यैवानु होमं हूयन्ते । एष वाऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रः । अप्यस्यैतन्नि-

---

भ्राजः ' इत्येतद्दर्शनं क्रियते । तेजांसि दीप्तयः वीर्याणि वीरयन्ति विक्रमन्ते कार्यं साधयन्ते तैरिति ॥ ३-५ ॥

तान्वै प्रातःसवन इति । ' आत्मा ' शरीरस्येव ' बहु ' अतिरिक्तमस्ति । किं किं ' क्लोम ' शोणिताधारम् ' हृदयं त्वत् ' त्वच्छब्दश्चशब्दार्थे । क्लोमवद्धृदयं च ' यत् त्वत् ' अन्यत् यकृत्प्लीहादि तदात्मनोऽतिरिक्तम् । यस्मादेकैकमतिरिक्तं लक्षयत्येकैकं पृथगवस्थितमेवेत्यर्थः । ततः किं यद्यात्मनो बह्वतिरिक्तमस्ति । एतेऽप्यतिग्राह्याः अतिरिक्ताः तेनैतैरतिरिक्तस्थान एवात्मनोऽन्तरे भवितव्यमित्यभिप्रायः ॥ ६ ॥

माध्यन्दिन इति । ' उपाकरिष्यन्वा ' पृष्ठ्यं क्रुत एतत् । ते माहेन्द्रस्येवानुहोमं हूयन्त इति[१] ।

---

१—माहेन्द्रमनुहोमः । अतिग्राह्याणामिति शेषः । का० श्रौ० सू० १२ । ५१ ।

ग्रहो युन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यथ्ँ शस्त्र-मिन्द्रो वै यजमानो यजमानस्य वाऽएते कामाय गृह्यन्ते तस्मान्माहेन्द्र-स्यैवानु होमथ्ँ हूयन्ते ॥ ८ ॥

( न्तेऽथा ) अथातो गृह्णात्येव । ( वा ) अग्ने पवस्व स्वपा ऽअस्मे वर्चः सुवीर्यम् ॥ दधद्रयिं मयि पोषम् ॥ उपयामगृहीतोऽस्यग्नये त्वा वर्चसऽ-एष ते योनिरग्नये त्वा वर्चसे ॥ ९ ॥

( सऽ ) उत्तिष्ठन्नोजसा । सह पीत्वी शिप्रेऽअवेपयः ॥ सोममिन्द्र चमू सुतम् ॥ उपयामगृहीतोऽसीन्द्राय त्वौजसऽएष ते योनिरिन्द्राय त्वौजसे ॥ १० ॥

( सेऽदृ ) अदृश्रमस्य केतवः । ( वो ) विरश्मयो जनाँ२ ॥ अनु ॥ भ्राजन्तो अग्नयो यथा ॥ उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजायेति ॥ ११ ॥

---

ष्केवल्यमेव स्तोत्रम्, निष्केवल्यं शस्त्रम् । इन्द्रो वै यजमानः । यजमानस्य वाऽएते कामाय गृह्यन्ते । तस्मान्माहेन्द्रस्यैवानुहोमं हूयन्ते ॥ ८ ॥

अथातो गृह्णात्येव । " अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधद्रयिं मयि पोषम् । उपयामगृहीतोऽस्यग्नये त्वा वर्चसऽएष ते योनिरग्नये त्वा वर्चसे "–( वा० सं० ८ । ३८ ) इति ॥ ९ ॥

" उत्तिष्ठन्नोजसा सह पीत्वी शिप्रेऽअवेपयः । सोममिन्द्र चमू सुतम् । उपयामगृहीतोऽसीन्द्राय त्वौजसऽएष ते योनिरिन्द्राय त्वौजसे "–( वा० सं० ८ । ३९ ) इति ॥ १० ॥

" अदृश्रमस्य केतवः विरश्मयो जनां २॥ अनु । भ्राजन्तो अग्नयो यथा । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजाय "–( वा० सं० ८ । ४० ) इति ॥ ११ ॥

---

माहेन्द्रसंनिबन्धात्तांश्च ग्रहान् " पूतभृतो गृह्णीयात् " किं पुनः कारणम् उक्थ्यं गृहीत्वा गृह्णीयात् ' अयꣳह वा अस्यैष ' यज्ञस्य ' अनिरुक्त आत्मा यदुक्थ्यः ' ततः किंतेनापि ( तदतिरिक्तमादित्यं बन्धमेवेत्यभिप्रायः ) ॥ प्रातःसवन एवैनानिति । ( यद्यपि नासासह प्रत्यासत्तिमात्रमस्ति । तथापि शरीरस्यायं क्लोमादिभिः सत्यत्वेन नाभेरित्यभिप्रायः ) ॥ ७ ॥ ८ ॥

अथात इति । ' अग्ने पवस्व ' इत्यादीनां तु मन्त्र एवार्थलिङ्गक्रमाभ्यामेव तु ग्रहणसादनेष्वपि नियोज्यः ॥ ९–११ ॥

तेषां भक्षः । (क्षोऽग्ने) अग्ने व्वर्चस्विन्वर्चस्वांस्त्वं देवेष्वसि व्वर्चस्वानहं मनुष्येषु भूयासमिन्द्रौजिष्ठौजिष्ठस्त्वं देवेष्वस्योजिष्ठोऽहं मनुष्येषु भूयासम्॥ सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि भ्राजिष्ठोऽहं मनुष्येषु भूयासमित्येतानि ह वै भ्राजाᳬस्येतानि व्वीर्याण्यात्मन्धत्ते यस्यैवं विदुष ऽएतान्ग्रहान्गृह्णन्ति ॥ १२ ॥

तान्वै पृष्ठ्ये षडहे गृह्णीयात् । ( तॄ ) पूर्व्वे त्र्यहऽआग्नेयमेव प्रथमेऽहन्नैन्द्रं द्वितीये सौर्य्यं तृतीयऽएवमेवान्वहम् ॥ १३ ॥

तानु हैकऽउत्तरे त्र्यहे गृह्णन्ति । तदु तथा न कुर्यात्पूर्व्वऽएवैनांस्त्र्यहे गृह्णीयाद्यद्युत्तरे त्र्यहे ग्रहीष्यन्त्स्यात्पूर्व्वऽएवैनांस्त्र्यहे गृहीत्वाथोत्तरे त्र्यहे गृह्णीयादेवमेव यथापूर्व्वं व्विश्वजिति सर्व्वपृष्ठऽएकाहऽएव गृह्यन्ते ॥ १४॥

इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ ४–४–५ ॥ ( ९. ४. ) ॥

---

तेषां भक्षः । " अग्ने वर्चस्विन्वर्चस्वांस्त्वं देवेष्वसि, वर्चस्वानहं मनुष्येषु भूयासम् । इन्द्रौजिष्ठौजिष्ठस्त्वं देवेष्वसि, ओजिष्ठोहं मनुष्येषु भूयासम् । सूर्य भ्राजिष्ठ भ्राजिष्ठस्त्वं देवेष्वसि, भ्राजिष्ठोऽहं मनुष्येषु भूयासम् "–( वा. सं. ८ । ३८–४० ) इति । एतानि ह वै भ्राजांसि । एतानि वीर्याण्यात्मन्धत्ते । यस्यैवं विदुष एतान्ग्रहान्गृह्णन्ति ॥ १२ ॥

तान्वै पृष्ठ्ये षडहे गृह्णीयात् । पूर्वे त्र्यहे–आग्नेयमेव प्रथमेऽहन् । ऐन्द्रं द्वितीये । सौर्यं तृतीये–एवमेवान्वहम् ॥ १३ ॥

तानु हैकऽउत्तरे त्र्यहे गृह्णन्ति । तदु तथा न कुर्यात् । पूर्वऽएवैनांस्त्र्यहे गृह्णीयाद् । यद्युत्तरे त्र्यहे ग्रहीष्यन्त्स्यात्–पूर्वऽएवैनांस्त्र्यहे गृहीत्वा–अथोत्तरे त्र्यहे गृह्णीयात् । एवमेव यथापूर्वं विश्वजिति–सर्वपृष्ठऽएकाहऽएव गृह्यन्ते ॥ १४ ॥ इति पृष्ठ्यः षडहः । विश्वजिदेकाहो वा ॥

---

तेषां भक्ष इति । अत्रापि लिङ्गक्रमाभ्यामेव विनियोगः । यजमानस्यैव च भक्षो मन्त्रवर्णात् ' आत्मन्धत्ते ' इति च वाक्यशेषात् ॥ १२ ॥

तान्वै पृष्ठ्य इति । प्रथमे माहेन्द्रस्तोत्रं तत्साधनत्वाद्रथन्तरादीनि सामानि पृष्ठानि तत्सम्बन्धादहानि षट् पृष्ठानि तेषां समूहः पृष्ठ्यः षडहः । " तस्य समूहः " ( पा. सू. ४ । २ । ३७ । ) इति प्रकृत्य यत्प्रकरणे–पृष्ठ्यादिभ्य उपसङ्ख्यानमाह–इति । प्रातःसवनसम्बन्धादन्यदारभ्य यावत्प्रकृतिकमिदं कर्मविशेषसम्बन्धवचनम् । तानु हैक इति । यद्युत्तरे त्र्यहे ग्रहीष्यन्स्यादुत्तरे त्र्यहे गृह्णातीत्यतो वचनात्ततः पूर्वे गृहीत्वैव गृह्णीयात् । विश्वजिति नाम्ना सर्वपृष्ठशब्दोऽत्र पृष्ठसाधनै रथन्तरादिषु सामसु वर्तते । सर्वाणि पृष्ठसाधनानि रथन्तरादीनि यस्य सन्ति स सर्वपृष्ठस्तस्मिन्नेकाह एवैते गृह्यन्त इति विनियोगान्तरम् ॥१३॥१४॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥ ४–५–४ ॥

---

१–अग्ने वर्चस्विन्निन्द्रौजिष्ठ सूर्य भ्राजिष्ठेति भक्षणं यजमानैः । का० श्रौ० सू० १२ । ५२ ।

एष वै प्रजापतिः । (र्य्ं) य्ं एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाताऽ एतम्वेवाप्येतर्ह्यनु प्रजायन्ते ॥ १ ॥

(न्तऽउ) उपाᳬंशुपात्रमेवान्वजाः प्रजायन्ते । तद्वै तत्पुनर्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते ॥ २ ॥

( न्तेऽन्त ) अन्तर्यामपात्रमेवान्ववयः प्रजायन्ते तद्वै तत्पुनर्यज्ञे प्रयुज्यते तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते ॥ ३ ॥

( न्तुऽथ ) अथ यदेतयोरुभयोः । सह सतोरुपाᳬंशुं पूर्वं जुहोति तस्माद्व सह सतोऽजाविकस्योभयस्यैवाजाः पूर्वा यन्त्यनूच्योऽवयः॥४॥

( युऽथ ) अथ यदुपाᳬंशुᳬं हुत्वा । (त्वो) ऊर्ध्वमुन्मार्ष्टि तस्मादिमा ऽअजाऽअराडीतरा आक्रममाणाऽइव यन्ति ॥ ५ ॥

( न्त्यु) अथ यदन्तर्यामᳬं हुत्वा । (त्वा) अवाञ्चमवमार्ष्टि तस्मादिमाऽ-अवयोऽवाचीनशीर्ष्ण्यः खनन्त्य इव यन्त्येता वै प्रजापतेः प्रत्यक्ष-

---

एष वै प्रजापतिर्य एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाताः । एतम्वेवाप्येतर्ह्यनु प्रजायन्ते॥ १

उपांशुपात्रमेवान्वजाः प्रजायन्ते । तद्वै तत् पुनर्यज्ञे प्रयुज्यते । तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते ॥ २ ॥

अन्तर्यामपात्रमेवान्ववयः प्रजायन्ते । तद्वै तत् पुनर्यज्ञे प्रयुज्यते । तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते ॥ ३ ॥

अथ यदेतयोरुभयोः । सह सतोरुपांशुं पूर्वं जुहोति–तस्माद्व सह सतोऽजाविकस्योभयस्यैवाजाः पूर्वा यन्ति–अनूच्योऽवयः ॥ ४ ॥

अथ यदुपांशुं हुत्वा ऊर्ध्वमुन्मार्ष्टि–तस्मादिमा अजा अराडीतरा आक्रममाणा इव यन्ति ॥ ५ ॥

अथ यदन्तर्यामं हुत्वाऽवाञ्चमवमार्ष्टि–तस्मादिमा अवयोऽवाचीनशीर्ष्ण्यः खनन्त्य इव यन्ति ।

---

एष वै प्रजापतिरिति । यज्ञात्मकस्य प्रजापतेरुपांशुपात्रादिभ्यः प्रदेशेभ्योऽजावयः 'प्रजायन्ते' तेषां च पात्राणां पुनःपुनः प्रयोगात्ता अपि प्रजाः पुनःपुनः प्रजायन्ते यदा यदाऽन्ते प्राजापत्यात्मकात् स लेशो यदन्ततो हारिश्रोजनस्तदैताः 'प्रजाः' पालयितुम् अभिजिघ्रति । उपांशुपात्रासादनेनैव सर्वाः प्रजाः प्रजायन्त इत्येतदर्शनं ब्राह्मणेन क्रियते । ( प्रायमेव वातः प्रभृति ) अजा अराडीतरा अतिशयेन शीघ्रमुच्चैर्गच्छन्त्यराडीतराः । कथमरमिति निपातः शैघ्र्यवचनस्तस्य च्छान्दसो मकारलोपः । आ इत्युपसर्गऽउपार्थे उच्चैस्त्वम् । "डीङ् विहायस गतौ "–( धा. पा. भ्वा. आ. ९९३ ) तस्मात् क्विप् । अरमाडयन्ते शीघ्रमुच्चैर्गच्छन्ते इत्यराडयः । अवयोऽपि च शीघ्रमुच्चैश्च डयन्ते । अतिशयेन त्वजा अराडीतराः अरशब्दाद् आडीशब्दस्तदग्रे प्रसिद्धे तरप् । अराडीतरा इति शीघ्रप्रकृष्टोदग्रतायां प्रयुज्यते ॥ १–५ ॥

'अवाचीनशीर्ष्ण्यः' इत्येतस्य चोदग्रताया एव विपर्ययः । अवाचीनशीर्ष्ण्यः चाधोगतशिरस्का 'एता वै

तमां यु॒दजावु॒यस्तु॒स्मादे॒तास्त्रिः संव्वत्सु॒रस्य व्विजा॒यमाना द्वौ त्रीनिति जनयन्ति ॥ ६ ॥

शु॒क्रपात्रमेवानु मनु॒ष्याः प्र॒जायन्ते। तद्वै तत्पु॒नर्य्यज्ञे प्र॒युज्यते तु॒स्मादि॒माः प्रजाः पुनरभ्यावुर्त्तं प्र॒जायन्तऽएष वै शु॒क्रो य॒ एष तु॒पत्येषु॒ऽउऽएवेन्द्रः पुरु॒षो वै पशूना॒मैन्द्रस्तु॒स्मात्पशूना॒मीष्टे ॥ ७ ॥

(ष्टऽ) ऋतुपात्रमेवान्वेकश॒फं प्र॒जायते। तद्वै तत्पु॒नर्य्यज्ञे प्र॒युज्यते तु॒स्मादि॒माः प्रजाः पु॒नरभ्यावुर्त्तं प्र॒जायन्तऽइतीव वाऽऋतुपात्रमितीवैकशफस्य शि॒र आग्रयणपात्रमुक्थ्यपात्रमादित्यपात्रमेतान्येवानु गावः प्र॒जायन्ते ता॒नि वै ता॒नि पु॒नर्य्यज्ञे प्र॒युज्यन्ते तु॒स्मादि॒माः प्रजाः पु॒नरभ्यावुर्त्तं प्र॒जायन्ते ॥ ८ ॥

( न्तेऽथ ) अ॒थ यु॒दजाः। कनि॒ष्ठानि पा॒त्राण्यनु प्र॒जायन्ते तु॒स्मादे॒तास्त्रिः संव्वत्सु॒रस्य व्विजा॒यमाना द्वौ त्रीनिति जनु॒यन्त्यः कुनिष्ठाः कुनिष्ठानि हि पा॒त्राण्यनु प्र॒जायन्ते ॥ ९ ॥

---

एता वै प्रजापतेः प्रत्यक्षतमां–यदजावयः । तस्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ, त्रीन्, इति जनयन्ति ॥ ६ ॥

शुक्रपात्रमेवानु मनुष्याः प्रजायन्ते । तद्वै तत् पुनर्यज्ञे प्रयुज्यते–तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते । एष वै शुक्रो–य एष तपति । एवऽउऽएवेन्द्रः । पुरुषो वै पशूनामैन्द्रः । तस्मात्पशूनामीष्टे ॥ ७ ॥

ऋतुपात्रमेवान्वेकशफं प्रजायते । तद्वै तत् पुनर्यज्ञे प्रयुज्यते । तस्मादिमाः प्रजाः पुनरभ्यावर्त्तं प्रजायन्ते । इतीव वाऽऋतुपात्रम् । इति वैकशफस्य शिरः । आग्रयणपात्रम्, उक्थ्यपात्रम्, आदित्यपात्रम्–एतान्येवानु गावः प्रजायन्ते । तानि वै तानि पुनर्यज्ञे प्रयुज्यन्ते । तस्मादिमाः प्रजाः पुनरभ्यावर्तं प्रजायन्ते ॥ ८ ॥

अथ यदजाः कनिष्ठानि पात्राण्यनु प्रजायन्ते–तस्मादेतास्त्रिः सम्वत्सरस्य विजायमाना द्वौ, त्रीन् इति जनयन्त्यः कनिष्ठाः कनिष्ठानि हि पात्राण्यनु प्रजायन्ते ॥ ९ ॥

---

प्रजापतेः प्रत्यक्षतमां ' प्रत्यक्षत्वेन सन्निकर्षो लक्ष्यते । बहुप्रजत्वेन प्रजापतेः सन्निकृष्टतमाः प्राण्यन्तरेभ्यः । एष वै शुक्र इति । ( मार्जनान्यनुकारेणाजादीनामुदग्रतादिकारेण धर्म्मो दर्शित एवमत्रापीति । ) तत्त्वं नाम शुक्रधर्मः पुरुषाणां दृश्यते । एकशफमन्वितर इति ' ऋतुपात्रम् ' ' इत्येकशफस्य ' ' शिर ' इत्यभिहितया दीर्घं त्रिकोणं प्रउग इव दर्शयति । एतानीति विचाररूपस्य प्रदर्शनमेतत् ॥ ६–८ ॥

अथ यदजा इति । कनिष्ठानामनेकत्वादुपांशुपात्रस्य बहुवचनमुपपन्नम् । प्रयोगान्तर्गतोपांशुपात्रान्तराभि-

( न्तेऽथ ) अथ यद्गावः । ( वो ) भूयिष्ठानि पात्राण्यनु प्रजायन्ते तस्मा-
देताः सकृत्संवत्सरस्य विजायमानाऽएकैकं जनयन्त्यो भूयिष्ठा भूयिष्ठानि
हि पात्राण्यनु प्रजायन्ते ॥ १० ॥

( न्तेऽथ ) अथ द्रोणकलशे । ( शेऽन्त ) अन्ततो हारियोजनं ग्रहं गृह्णाति
प्रजापतिर्वै द्रोणकलशः स इमाः प्रजा उपावर्तते ता अवति ता अभिजि-
घ्रत्येतद्वाऽएना अवति यदेनाः प्रजनयति ॥ ११ ॥

पञ्च ह त्वेव तानि पात्राणि । यानीमाः प्रजा अनु प्रजायन्ते समानमुपाꣳ
श्वन्तर्यामयोः शुक्रपात्रमृतुपात्रमाग्रयणपात्रमुक्थ्यपात्रं पञ्च वाऽऋतवः
संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञो यद्यु षडेवऽर्तवः संवत्स-
रस्येत्यादित्यपात्रमेवैतेषाꣳ षष्ठम् ॥ १२ ॥

( मे ) एकꣳ ह त्वेव तत्पात्रम् । यदिमाः प्रजा अनु प्रजायन्तऽउपा-

---

अथ यद्गावो भूयिष्ठानि पात्राण्यनु प्रजायन्ते । तस्मादेताः सकृत्सम्वत्सरस्य विजायमाना एकैकं जनयन्त्यो भूयिष्ठाः । भूयिष्ठानि हि पात्राण्यनु प्रजायन्ते ॥ १० ॥

अथ द्रोणकलशेऽन्ततो हारियोजनं ग्रहं गृह्णाति । प्रजापतिर्वै द्रोणकलशः स इमाः प्रजा उपावर्त्तते । ता अवति । ता अभिजिघ्रति । एतद्वाऽएना अवति–यदेनाः प्रजनयति ॥ ११ ॥

पञ्च ह त्वेव तानि पात्राणि–यानीमाः प्रजा अनु प्रजायन्ते–समानमुपांश्वन्तर्यामयोः शुक्रपात्रम्, ऋतुपात्रम्, आग्रयणपात्रम्, उक्थ्यपात्रम् । पञ्च वाऽऋतवः सम्वत्सरस्य । सम्वत्सरः प्रजापतिः । प्रजापतिर्यज्ञः । यद्यु षडेवऽर्तवः सम्वत्सरस्य–इत्यादित्यपात्रमेवैतेषां षष्ठम् ॥ १२ ॥

एकं ह त्वेव तत् पात्रम्–यदिमाः प्रजा अनु प्रजायन्ते–उपांशुपात्रमेव । प्राणो ह्युपांशुः, प्राणो हि प्रजापतिः । प्रजापतिं ह्येवेदं सर्वमनु ॥ १३ ॥

---

प्रायं तु द्रष्टव्यम् । तथापि तु आग्रयणोक्थ्यादित्यपात्रेभ्यः स्तोकान्येव भवन्ति तान्यपि हि प्रयोगभेदे प्रत्येकं बहूनि भवन्ति ॥ ९ ॥

'भूयिष्ठानि' इति बहुतमानि ( स्वयाभवान्तानि ) प्रयोगभेदापेक्षया तु बहुतमानि । 'प्रजापतिर्वै द्रोणकलश' इतराणि पात्राण्यपेक्ष्यत्वात् सर्वोपकारित्वाच्च 'स इमाः प्रजा' इतरपात्रे भवा 'उपावर्त्तते' ततः प्रयुज्यमान उपावृत्तश्चापि (ते धत्तेव) 'अवत्यभिजिघ्रति' कथं पुनः 'अवति' रक्षतीत्यत आह–'प्रजनयति' ॥ १० ॥ ११ ॥

'समानमुपांश्वन्तर्यामयोः' पात्रं तयोरेव समानत्वान्न तयोश्च समानत्वमध्यात्मं वायोर्वृत्तिभेदाङ्गीकरणादवत्येव पुनः 'यश्च' पुनः प्रयोगित्वात् प्रजानामनुरूपाणि चैतान्येव तेनैव चानुरूपता लक्ष्यते तेभ्य एव प्रदेशेभ्यः प्रजायन्ते नान्यत इत्यभिप्रायः ॥

पाँ शुपात्रमेव प्राणो ह्युपाँ शुः प्राणो हि प्रजापतिः प्रजापतिँ ह्येवेदँ सर्वमनु ॥ १३ ॥

इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ॥ ४।४।६ ॥ (५.५.)

एष वै प्रजापतिः । (यः) स एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते स आश्विनं ग्रहं गृहीत्वावकाशानवकाशयति ॥ १ ॥

स उपाँ शुमेव प्रथममवकाशयति । प्राणाय मे वर्चोदा वर्चसे पवस्वेत्यथोपाँ शुसवनं व्यानाय मे वर्चोदा वर्चसे पवस्वेत्यथान्तर्यामुमुदानाय मे वर्चोदा वर्चसे पवस्वेत्यथैन्द्रवायवं वाचे मे वर्चोदा वर्चसे

---

अथावकाशमन्त्राः ।

एष वै प्रजापतिर्य एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाताः । एतम्वेवाप्येतर्ह्यनु प्रजायन्ते । स आश्विनं ग्रहं गृहीत्वावकाशानवकाशयति ॥ १ ॥

स उपांशुमेव प्रथममवकाशयति– " प्राणाय मे वर्चोदा वर्चसे पवस्व "–(वा.सं.७।२७) इति । अथोपांशुसवनम्– " व्यानाय मे वर्चोदा वर्चसे पवस्व "–(वा. सं. ७। २७) इति।

---

'आदित्यपात्रमेवैतेषाम्' इति तदपि ह्यनुहोमेषु प्रयुक्तं सत् पुनरादित्यग्रहे प्रयुज्यत इत्यभिप्रायः । प्रजापतिं ह्येवेदमिति ।(यद्यपि [२]लुर्यवस्थानीयाच्छुक्रादिपर्वण. प्रजापतेस्तथापि प्राणानुगृहीत एवेत्यभिप्रायः)॥ १२॥ १३॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे पञ्चमेऽध्याये पञ्चमं ब्राह्मणम् ॥ (४–५–५) ॥

एष वै प्रजापतिरिति । अध्वर्युग्रहानवकाशाय्यजमानस्तु सप्राणं कृत्स्नं यज्ञं जनयित्वा येन कुरुते । " प्राणाय म "–इत्यादिभिर्मन्त्रैरात्मानमेव प्रजापतिं करोत्ययं मन्त्रसमस्तार्थः। सोऽध्वर्युराश्विनं ग्रहं गृहीत्वाऽवकाशा उपांश्वादयस्तान् ' अवकाशयति ' अवेक्षयति । यजमानोऽवेक्षते अध्वर्युस्तमवेक्षयति । ' प्राणाय म ' इत्युपांशुमवेक्षस्वेत्येवमुत्तरानपि । तन्त्रकारस्तु मन्त्रानवकाशाननुवाचयतीति व्याजहार ॥ १ ॥

स उपांशुमिति । प्रसन्ना ॥ २ ॥

---

१–इमे पात्रावकाशमन्त्राः, द्रोणकलशावेक्षणमन्त्रः, आशीर्मन्त्रश्च–संहितायामग्निष्टोमाधिकार एव ध्रुवग्रहग्रहणानन्तरं कर्तव्यतयाऽऽम्नाताः । न त्विह ते मन्त्रा दृश्यन्ते ।

२–' यद्यपिर्यवस्थानीयाच्छुक्रादिपर्वणः '–इत्यादिः पाठश्चेत्–सुबोधः स्यादिति भाति ।

३–महानवेक्षयति यथागृहीतमवकाशान्वाचयति प्राणाय म इति प्रतिमंत्रम् । उपांशुसवनं द्वितीयम् । उपांशुसवनस्याग्रहणादिदं सूत्रम् । आश्विनं षष्ठं शुक्रामंथिनो युगपत् पूतभृदाधवनीयौ च विश्वाभ्यो मा इति । पूतभृदाधवनीयावपि चशब्दाद् युगपत् इति कर्कः । का. श्रौ. सू. ९ । १६६–१६८ ।

पवस्वेत्युथ मैत्रावरुणं क्रुतूदक्षाभ्यां मे व्वर्चोदा व्वुर्चसे पवस्वेत्युथाश्विनथ्ँ श्रोत्राय मे व्वर्चोदा व्वुर्चसे पवस्वेत्युथ शुक्रामन्थिनौ चक्षुर्भ्यां मे व्वर्चोदसौ व्वुर्चसे पवेथामिति ॥ २ ॥

( त्यु )अुथाग्रयणम् । ( मा ) आत्मुने मे व्वर्चोदा व्वुर्चसे पवस्वेत्युथोक्थ्यमोजसे मे व्वर्चोदा व्वुर्चसे पवस्वेत्युथ ध्रुवमायुषे मे व्वर्चोदा व्वुर्चसे पवस्वेत्युथाम्भृणौ व्विश्वाभ्यो मे प्रजाभ्यो व्वर्चोदसौ व्वुर्चसे पवेथामिति व्वैश्वदेवौ वाऽअम्भृणावुतो हि देवेभ्य उन्नयन्त्युतो मनुष्येभ्योऽतः पितृभ्यस्तुस्माद्वैश्वदेवावम्भृणौ ॥ ३ ॥

( णावु ) अुथ द्रोणकलशम् । कोऽसि कतमोऽसीति प्रजापतिर्वै कः कस्यासि को नामासीति प्रजापतिर्वै को नाम यस्य ते नामामन्महीति मनुते ह्यस्य नाम यं त्वा सोमेनातीतृपामेति तर्पयति ह्येनथ्ँ सोमेन

---

अथान्तर्यामम्–" उदानाय मे वर्चोदा वर्चसे पवस्व "–( वा. सं. ७ । २७ । ) इति । अथैन्द्रवायवम्–" वाचे मे वर्चोदा वर्चसे पवस्व "–( वा. सं. ७ । २७ ) इति । अथ मैत्रावरुणम्–" क्रतूदक्षाभ्यां मे वर्चोदा वर्चसे पवस्व "–( वा. सं. ७ । २७ । ) इति । अथाश्विनम्–" श्रोत्राय मे वर्चोदा वर्चसे पवस्व "–( वा. सं. ७ । २७ ) इति । अथ शुक्रामन्थिनौ–" चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथाम् "–( वा. सं. ७।२७ ) इति॥२॥

अथाग्रयणम्–" आत्मने मे वर्चोदा वर्चसे पवस्व "–( वा. सं. ७ । २८ ) इति । अथोक्थ्यम्–" ओजसे मे वर्चोदा वर्चसे पवस्व "–( वा. सं. ७ । २८ ) इति । अथ ध्रुवम्–" आयुषे मे वर्चोदा वर्चसे पवस्व "–( वा. सं. ७ । २८ ) इति । अथाम्भृणौ–" विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथाम् "–( वा. सं. ७ । २८ ) इति । वैश्वदेवौ वाऽअम्भृणौ अतो हि देवेभ्य उन्नयन्ति, अतो मनुष्येभ्यः, अतः पितृभ्यः । तस्माद्वैश्वदेवावम्भृणौ ॥ ३ ॥

अथ द्रोणकलशम् । " कोऽसि कतमोऽसि "–( वा. सं. ७ । २९ ) इति । प्रजापतिर्वै कः । " कस्यासि को नामासि "–( वा. सं. ७ । २९ ) इति । प्रजापतिर्वै को नाम ।

---

अथाग्रयणमिति । अवकाशावरतीर्यादिरुक्तीरथाम्भृणौ पूतभृदाधवनीयावत आभ्यां पूतभृदाधवनीयाभ्यां देवेभ्य उन्नयन्ति सोमयागार्थमत एव मनुष्येभ्यः पितृभ्यश्च नाराशंस एतदभिप्रायमेतत् ॥ ३ ॥

अथ द्रोणकलशमिति । ' मनुते ह्यस्य नाम ' क इत्येतत् । ' स आश्विनं ग्रहं गृहीत्वा ' समर्याचरणेन

---

१–' एवाभिप्रायमेतत् '–इ० पा० ।२–कोऽसीति द्रोणकलशम् । भूर्भुवः स्वरिति जपति–यजमानः । का.श्रौ.सू. ९।१६९।१७०।

स आश्विनं ग्रहं गृहीत्वान्वङ्गमाशिषमाशास्ते तर्पयति सुप्रजाः प्रजाभिः स्यामिति तत्प्रजामाशास्ते सुवीरो वीरैरिति तद्वीरानाशास्ते सुपोषः पोषैरिति तत्पुष्टिमाशास्ते ॥ ४ ॥

तान्वै न सर्व्वमिवावकाशयेत् । ( यो ) यो न्वेव ज्ञातस्तमवकाशयेद्यो वास्य प्रियः स्याद्यो वानूचानोऽनूक्तेनैनान्प्राप्नुयात्स आश्विनं ग्रहं गृहीत्वा कृत्स्नं यज्ञं जनयति तं कृत्स्नं यज्ञं जनयित्वा तमात्मन्धत्ते तमात्मन्कुरुते ॥ ५ ॥

इति चतुर्थप्रपाठके सप्तमं ब्राह्मणम् ॥ ४-४-७ ॥ ( ५. ६. )

---

" यस्य ते नामामन्महि "-( वा. सं. ७ । २९ ) इति । मनुते ह्यस्य नाम । " यं त्वा सोमेनातीतृपाम "-( वा. सं. ७ । २९ ) इति । तर्पयति ह्येनं सोमेन । स आश्विनं ग्रहं गृहीत्वान्वङ्गमाशिषमाशास्ते-" सुप्रजाः प्रजाभिः स्याम् "-( वा. सं. ७ । २९ ) इति । तत् प्रजामाशास्ते । " सुवीरो वीरैः "-( वा. सं. ७।२९ ) इति । तद् वीरानाशास्ते । " सुपोषः पोषैः "-( वा. सं. ७ । २९ ) इति । तत् पुष्टिमाशास्ते ॥ ४ ॥

तान्वै न सर्वमिवावकाशयेत् । यो न्वेव ज्ञातः-तमवकाशयेत्, यो वास्य प्रियः स्याद्, यो वानूचानोऽनूक्तेनैनान्प्राप्नुयात् । स आश्विनं ग्रहं गृहीत्वा कृत्स्नं यज्ञं जनयति । तं कृत्स्नं यज्ञं जनयित्वा तमात्मन्धत्ते, तमात्मन्कुरुते ॥ ५ ॥ इति पात्रावकाशमन्त्राः ।

---

यजमानः । ' अन्वङ्गम् ' प्राणतां प्राणादीनां पश्चात् । अङ्गेषु कल्पितेषु स लब्धात्मकः सन् ' आशिषमाशास्ते ' भूर्भुवः स्वरिति । यक्षितव्यं लिङ्गक्रमाभ्यामेव विनियोगस्य सिद्धे तत् सत्येनैवैतद्वावऽ समर्द्धयतीति ब्राह्मणस्य च प्रदेशान्तरेऽभावात् ॥ ४ ॥

तान्वै न सर्वमिति । उपांश्वादिभिः सम्बन्धादवकाशान् सर्वप्रयोगविषयं प्राप्ते ज्ञातादिप्रयोग एव व्यवस्थाप्यते तत्रोपन्यासः । तानवकाशान्न सर्वं यजमानमज्ञातादिकमप्यवकाशयेत् । किंचिदेवावकाशयेदित्यर्थः । एतस्मादेव वचनात् सर्वशब्दादनवकाश्योऽपि ( यजत दर्शयतीतरथा ) अनवकाश्योऽकृत्स्नकारित्वादनधिकृत एव, स्यायो न्वेव ज्ञातः शुच्याभिजनतया यो वास्याध्वर्योः ' प्रियः ' प्रियोऽतिशयेन ' यो वानूचानो ' वेदार्थानुवचनसमर्थोऽनूक्तेनानुवचनेन विद्ययैव ' एनान् ' उपांश्वादिरूपान् प्राणान् प्राप्नुयात् ।

यथा ह ते वेहैते विद्याविन एवेति तमेव गुणं यजमानमवकाशयन् नान्यमन्यस्त्वनवकाशित एव यजमान आश्विनग्रहं गृहीत्वा कृत्स्नं यज्ञं जनयति तदा हि प्राणैर्ग्रहैर्योजितो भवतीत्यभिप्रायः ॥ ५ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे पञ्चमेऽध्याये षष्ठं ब्राह्मणम् ॥ ४-५-६ ॥

---

१-ज्ञातप्रियानूचानानवकाशयेद् । का. श्रौ. सू. ९ । १७१ ।

ता वाऽएताः । ( श्च ) चतुस्त्रिꣳ शद्व्याहृतयो भवन्ति प्रायश्चित्तयो नामैष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते ॥ १ ॥

( न्तेऽष्टौ ) अष्टौ वसवः । ( ऽ ) एकादश रुद्रा द्वादशादित्या इमेऽएव द्यावापृथिवी त्रयस्त्रिꣳश्यौ त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳशस्तदेनं प्रजापतिं करोत्येतद्वाऽअस्त्येतद्ध्यमृतं यद्ध्यमृतं तद्ध्यस्त्येतदु तद्यन्मर्त्यꣳ स एष प्रजापतिः सर्वं वै प्रजापतिस्तदेनं प्रजापतिं करोति तस्मादेताश्चतुस्त्रिꣳशद्व्याहृतयो भवन्ति प्रायश्चित्तयो नाम ॥ २ ॥

---

अथ प्रायश्चित्तम् ।

ता वाऽएताश्चतुस्त्रिंशद्व्याहृतयो भवन्ति—प्रायश्चित्तयो नाम । एष वै प्रजापतिः—य एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाताः । एतम्वेवाप्येतर्ह्यनु प्रजायन्ते ॥ १ ॥

अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः । इमेऽएव द्यावापृथिवी त्रयस्त्रिंश्यौ । त्रयस्त्रिंशद्वै देवाः, प्रजापतिश्चतुस्त्रिंशः । तदेनं प्रजापतिं करोति । एतद्वाऽअस्ति, एतद्ध्यमृतम् । यद्ध्यमृतं

---

ता वा एता इति । ज्योतिष्टोमस्येदमखिलमारब्धं तत्र च मन्त्रपाठानुरोधेनातिग्राह्या विकृता अपि सत्र उक्ताः । तदनन्तरं मन्त्रानुरोधेन विषुवा ग्रहः महाव्रतीयो विवदास्यः । सत्रोत्थानं सोमप्रायश्चित्तानीत्येष ब्राह्मणक्रमः प्राप्नोति तत्र मन्त्रक्रममनादृत्यातिपर्यनुयोज्यत्वाच्च ज्योतिष्टोम एव पात्रविधोक्तावकाशवचनं चाधुनाऽपि ज्योतिष्टोम एव प्रायश्चित्तान्युच्यन्ते । तदर्थमुपक्रमते । ' ता वै एताः ' मन्त्रसमाम्नाये " परमेष्ठ्यभिधीत " इत्यत्र " परमेष्ठिने स्वाहेति जुहुयात् " इत्यादि ब्राह्मणसहिते सिद्धाश्चतुस्त्रिंशद्व्याहृतयो भवन्ति । विभक्तिव्यवच्छिन्नाः परस्परं व्याह्रियन्ते पठ्यन्त इति व्याहृतयः परमेष्ठिने स्वाहेत्यादयः प्रायश्चित्तय इत्येवंनामिका यादृशमेव प्राप्तं नाशात् कर्म तादृशमेव प्रायश्चित्तम् उत्तरकालमपीत्येवं चेत्येते सञ्ज्ञायन्ते । आभिर्भैषज्यात्मिकाभिरिति प्रायश्चित्तस्य एतद्भैषज्यात्मकः प्रजापतिः ॥ १ ॥

अष्टौ वसव इति । ( देविको याज्ञिकफलभूतः । ) ' वसवः ' अग्न्यादय आरण्यके वक्ष्यन्ते । ' रुद्रा ' आदित्या एकादश प्राणा आदित्या द्वादशमासारते अनुगृह्यन्ते द्यावापृथिव्योस्त्रिंशद्देवाः प्रजापतिसामान्यरूपास्त्रयस्त्रिंशद्वचनात् । तेनात्रेतिहाससिद्धा वस्वादयो देवगणाः ( प्रातःसवनादिनाजादि पृथिव्यादिस्थाना ) ग्रहीतव्याः । शेषस्य देवजातस्य द्यावापृथिवीभ्यां परिग्रहात्तेन त्रयस्त्रिंशद्देवाः प्रजापतिसामान्यरूपास्त्रयस्त्रिंश एव सः अवि- (देवैश्चतुस्त्रिंशकाजः प्रजापतिः।) ततः किं यद् ' एताश्चतुस्त्रिंशद् व्याहृतयो भवन्ति [१] " । तदेनं यज्ञमविकलमिवाधि-

---

१—परमेष्ठ्यादींश्च चतुस्त्रिंशतं जुहोति । इदं घर्मस्य मृन्मयपात्रभेदे प्रायश्चित्तं । चकारेग । यश्चतेचिदभिश्रिषः पुराजत्रुभ्य आतृदः । सधाता संधिं मघवापुरूवसुरिष्कर्ता विहुतं पुनरिति च घर्म्यामिति पूर्वसूत्रोक्तेन मंत्रेण मृन्मयघर्म्यभिन्नपात्राभिमर्शनमपि प्रायश्चित्तं । का. श्रौ. सू. २५ । १३७ । पृषदाज्यस्कंदने चैके । परमेष्ठ्यादिचतुस्त्रिंशद्व्याहृतिहोमः । एकीयग्रहणाद्विकल्पः । का. श्रौ. सू. २५ । १४२ । अद्रिभेदने मारुतेन ब्रह्मसाम्ना स्तुवीरन् । मरुल्लिंगास्वृक्षु गीयमानं ब्रह्मसाम । माध्यंदिने ब्राह्मणाच्छंसिविग्रहस्तोत्रमिदं । चतुस्त्रिꣳशद्धोमश्च । अद्रिभेदने भवतीत्यर्थः । का. श्रौ. सू. २५ । २९८ । २९९ ।

ता हैके । यज्ञं तुन्व इत्याचक्षते यज्ञस्य ह त्वेवैतानि पर्वाणि स ऽएष यज्ञस्तायमान ऽएता ऽ एव देवता भवन्नेति ॥ ३ ॥

सा यदि घर्मदुघा ह्वलेत् । ( द ) अन्यामुपसंक्रामेयुः स यस्यामेवैनां वेलायां पुरा पिन्वयन्ति तद्धैवैनामुदीची ᳫं स्थापयेदग्रेण वा शालां प्राचीम् ॥ ४ ॥

---

तद्ध्यंस्ति । एतदु तद्यन्मर्त्यम् । स एष प्रजापतिः । सर्वं वै प्रजापतिः । तदेनं प्रजापतिं करोति । तस्मादेताश्चतुस्त्रिंशद्व्याहृतयो भवन्ति–प्रायश्चित्तयो नाम ॥ २ ॥

ता हैके यज्ञं तन्व इत्याचक्षते । यज्ञस्य ह त्वेवैतानि पर्वाणि । स एष यज्ञस्तायमान एता एव देवता भवन्नेति ॥ ३ ॥

सा यदि घर्मदुघा ह्वलेत्–अन्यामुपसंक्रामेयुः । स यस्यामेवैनां वेलायां पुरा पिन्वयन्ति–तद्धैवैनामुदीचीं स्थापयेत्, अग्रेण वा शालां प्राचीम् ॥ ४ ॥

---

देविकं प्रजापतिं करोति तदनुकारेण च यजमानमेतद्वा अस्तीति पुनः सदात्मकतया वस्वादीनां यज्ञस्य व्याहृतीभावं प्रजापतित्वमापादयेदिति । एतद्धै व्याहृतियज्ञं वस्वादिरूपकमस्ति किमपि यदेतन्न तदन्यदित्यर्थः । कथम् ? ' एतद्ध्यमृतम् ' अविनाश्यमूर्तमित्यर्थः । कथं वस्वादयस्तावत् प्राणपिण्डात्मकाः सङ्घातरूपास्तेषामात्मरूपं तावन्निरूपवारमेवामृतप्राणपिण्डापेक्षयामृताः । ( पिण्ड एव चतुर्मर्त्या एवं यज्ञोऽपि देवतामृता हविर्मर्त्यं व्याहृतिष्वपि देवता परमेष्ठ्यादिका अमृताः । स्वाहाकारप्रदानं हविर्मर्त्यं पश्वमृतागसमङ्गीकृत्याह–)एतद्ध्यमृतमिति । ततः किमित्यत आह–यद्यमृतमस्ति न हि तत् कदाचिदपि नास्तीत्येवं तद्रूपं प्रतिपद्यते, तस्मान्नैत्या अमृतास्ति सच्छब्दपर्याया इत्यभिप्रायः । एतदु तद्यन्मर्त्यमिति । तस्यैव व्याहृतियज्ञावस्थादे (?) सद्गुणांशेन यथोक्तेनासद्रूपतामाह–यन्मर्त्यमिति । प्रसिद्धं लोके स्थूलं विनाशि तदप्येतद्देवतारूपं समाप्तम् ॥ २ ॥

( तत्त्वयज्ञस्य ते इतस्तस्मात्तच्च एव ता भिन्ना एव ता भिन्ना एव ता भिन्ना एव यज्ञस्यानैकस्यास्तत्वएते चेष ) प्रजा एव इत्येकेषां मतम् । यज्ञस्य ह त्वेवेति । देवतारूपाण्येव प्रत्येकं तानि समस्तानि । यज्ञस्तु तत्र व्यासज्यवल्लोक एव परमेष्ठ्यादीनि च पर्वाणीत्यर्थः । एता एव देवता इति । परमेष्ठ्यादिक अभिध्याता विरूपो यज्ञो भवन्नेति ॥ ३ ॥

ननु च व्याहृतिकालो यज्ञ इत्येवं पूर्वमुपन्यस्तमधुना तु दैवताफलं दर्शयति । व्याहृतिग्रहणेन व्याहृतिसम्बद्धा देवता होमद्रव्यं कर्त्तेत्यादि सर्वमाक्षिप्तम् । यथैव यज्ञस्यात्तस्योत्तरकालं मन्त्रादिकाङ्क्षं चिकित्सनीयम्, एवं भिषज्यमप्यन्तकर्म आभिकोसिकमेव कदाचित्कथंचिद् व्यवह्रियते । कदाचिद् व्याहृतिभिः कदाचिद्धोऽनया कदाचिद् व्याहृतिभिश्चतुस्त्रिंशतिमाज्याहुतीति । सा यदि घर्मप्रवर्ग्यार्थं पयो दुग्धे या धेनुः सा घर्मदुघा " दुहः कब्घश्च "–( पा० सू० ३ । २ । ७० । ) इति हकारस्य घकारः । ' ह्वलेद् ' विनश्येद्व्याध्यादिना न वा गृह्णीता तथापि सा घर्मधुग्भवेदित्युच्यते । ततोऽन्यां घर्मदुघामुपसंक्रामेयुः । अथ नान्या घर्मधुग्यतरतत्कथं तामुपगच्छेयुः । यस्यामेव वेलायां तस्मिन्नेव प्रदेशे गार्हपत्यस्य दक्षिणतो होतुः सन्दर्शने पुरा ( अविनष्टा पूर्वापित्वं यन्निति सेवनार्था बहुदुग्धमालदुहमाम्नात्वन्ती ? ) प्रयुञ्जते दोहयन्ति तद्वा तच्छब्दात् सप्तम्या लुक् तस्यामेकविधवेलायामेनामन्यां गामुदीचीं तथावस्थिते किं कुर्यादित्यत आह–॥ ४ ॥

---

१–घर्मधुग्घ्वाले चादोहे च । ह्वाले मरणे सतीत्यर्थः । का. श्रौ. सू. । २५ । १३८

तद्येऽएतेऽअभितः । पुच्छकाण्डᳫं शिखण्डास्थेऽनुच्छ्याते तयोर्यद्दक्षिणं तस्मिन्नेताश्चतुस्त्रिᳫं शतमाज्याहुतीर्जुहोत्येतावान्वै सर्व्वो यज्ञो यावत्य एताश्चतुस्त्रिᳫंशद्व्याहृतयो भवन्ति तदस्यां कृत्स्नमेव सर्व्वं यज्ञं दधात्येषा ह्यतो घर्मं पिन्वतऽएषो तत्र प्रायश्चित्तिः क्रियते ॥ ९ ॥

( तेऽथ ) अथ यद्यज्ञस्य ह्वलेत् ( त्त ) तत्समन्वीक्ष्य जुहुयाद्दीक्षोपसत्स्वाहवनीये प्रसुतऽआग्नीध्रे वि वाऽएतद्यज्ञस्य पर्व्व स्त्रᳫंसते यद्ध्वलति सा यैव तर्हि तत्र देवता भवति तयैवैतद्भिषज्यति तया संदधाति ॥ ६ ॥

---

तद् येऽएतेऽअभितः पुच्छकाण्डं शिखण्डास्थेऽअनुच्छयाते—तयोर्यद्दक्षिणं-तस्मिन्नेताश्चतुस्त्रिंशतमाज्याहुतीर्जुहोति । एतावान्वै सर्वो यज्ञे—यावत्य एताश्चतुस्त्रिंशद्व्याहृतयो भवन्ति । तदस्यां कृत्स्नमेव सर्वं यज्ञं दधाति । एषा ह्यतो घर्मं पिन्वते एषो तत्र प्रायश्चित्तिः क्रियते ॥ ९ ॥

अथ यद्यज्ञस्य ह्वलेत्—तत् समन्वीक्ष्य जुहुयात्—दीक्षोपसत्सु, आहवनीये प्रसुतऽआग्नीध्रे । विवाऽएतद्यज्ञस्य पर्व स्त्रंसते—यद्ध्वलति । सा यैव तर्हि तत्र देवता भवति—तयैवैतद्भिषज्यति—तया सन्दधाति ॥ ६ ॥

---

तद्येऽएते इति । तस्या ये एते पुच्छेकाण्डस्य पार्श्वतः उच्चैः स्थिते शिखण्डेइवास्थिनी शिखण्डास्थे । अस्थिशब्दस्य " छन्दस्यपि दृश्यते "–( पा० सू० ७ । १ । ७६ ) इत्यनङि कृते " अनसन्तान्नपुंसकाच्छन्दसि "–( पा० सू० ५ । ४ । १०३ ) इति समासान्तः । तयोरस्थि यद्दक्षिणं तस्मिन्नेताः परमेष्ठ्यादिरेवोपसंहारात् । ततश्चैवं विज्ञायते । तस्मिन्नेता इति । एताः व्याहृतिनामकाः आहुतीर्जुहोति' इति । 'एतावान्वै सर्वो यज्ञः' इत्यभिधीयते । 'एवं चतुस्त्रिंशदवस्थाविशेषा य इमे एतेच परमेष्ठ्यादिकालका इत्यभिप्रायः । तदस्यामिति । (परमेष्ठ्यादयस्तत् कथं चाहुतिस्तत्रैवावतिष्ठते इत्यभिप्रायः ।) कृत्स्नमिति । कल्प्यते सर्वमित्यग्निष्टोमादिभेदभिन्नं किमर्थं पुनरस्यां ' यज्ञं ' ' दधाति ' इत्यत आह–' एषा ' ह्यभिनवा धेनुरन्तर्धृतं ' घर्मं ' प्रवर्ग्यसाधनं पयः 'पिन्वते' दुग्धे तच्च यज्ञस्य शिरः शिरसः सकलस्य क्षीसारो यदि वा अस्याः सकलोपयोगो भवतीति । ततोऽस्याः सुत्यायांघृतधर्मप्रादुर्भावो युज्यते नान्यथेति शेषेणेव ' तत्र प्रायश्चित्तिः ' ' क्रियते ' यदि धर्मदुघा ह्वलेदित्युपसंहारः ॥ ९ ॥

अथ यदिति । अन्यदपि क्वचित् सोमस्य विनश्येत् तत् तत्सम्यगनुदृश्य या देवता तस्यै परमेष्ठ्यादिकायै एकामाज्याहुतिं हुत्वा ब्रह्मा सकृद्गृहीतां जुहुयात् । 'दीक्षोपसत्सु ' च वर्त्तमानासु ' आहवनीयस्य ' शालाद्वार्यवद् 'जुहुयात्' । प्रसुते तु सुत्यायां यदि ह्वले कृत आग्नीध्रीये जुहुयात् । (आज्याहुत्योरभिधानाच्छालायामनुपक्रान्त एव क्रान्तौ गृह एवाहवनीये होतव्यतायै वैतद् भिषज्याहुत्यां तृप्तये इत्यभिप्रायः।)अथ यास्ता उक्ताहुतय इति ।

---

१–वदीच्या दोहत्यनेऽन्यस्याः । अन्यस्या गोर्व्यवस्थितताया इत्यर्थः । शालाया वा पुरस्तात्प्राच्याः । शालाया वा पुरस्तादवस्थितायाः इत्यन्यस्या गोरवस्थानेविकल्पः । पुच्छकांडाद्दक्षिणेऽस्थनि हुत्वा दोहयेत् । तामेव गां दोहयेदित्यर्थः । का. श्रौ. सू. २५ । १३९–१४१ ।

(त्यु) अथ यदि स्कन्देत् । (त्तु) तदद्भिरुपनिनयेदद्भिर्वाऽइदꣳ सर्व्वमाप्तꣳ सर्व्वस्यैवाप्त्यै व्वैष्णववारुण्यर्चा यद्वाऽइदं किंचार्छति व्वरुण एवेदꣳ सर्व्वमार्पयति ययोरोजसा स्कभिता रजाꣳसि व्वीर्य्येभिर्व्वीरतमा शविष्ठा ॥ या पत्येतेऽअप्रतीता सहोभिर्व्विष्णूऽअगन्वरुणापूर्व्वहूताविति यज्ञो वै व्विष्णुस्तस्यैतदार्छति व्वरुणो वाऽआर्पयिता तद्यस्याश्चैवैतद्देवताया आर्छति यो च देवतार्पयति ताभ्यामेवैतदुभाभ्यां भिषज्यत्युभाभ्याꣳ संदधाति ॥ ७ ॥

अथ यदि स्कन्देत्–तदद्भिरुपनिनयेत् । अद्भिर्वाऽइदं सर्वमाप्तम् । सर्वस्यैवाप्त्यै । वैष्णववारुण्यर्चा । यद्वाऽइदं किं चार्च्छति–वरुण एवेदं सर्वमार्पयति । " ययोरोजसा स्कभिता रजांसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येतेऽअप्रतीता सहोभिः, विष्णूऽअगन्वरुणा पूर्वहूतौ "–( वा. सं. ८ । ५९ ) इति । यज्ञो वै विष्णुः । तस्यैतदार्च्छति । वरुणो वाऽआर्पयिता तद् यस्याश्चैवैतद्देवतायाऽआर्छति, यो च देवतार्पयति–ताभ्यामेवैतदुभाभ्यां भिषज्यति, उभाभ्यां सन्दधाति ॥ ७ ॥

चतुर्गृहीतमित्यादयः प्रायश्चित्तयस्ताभिः सह किमासां भिषज्यतीति कार्यसाम्याद्विकल्पः । आहोस्वित् समुच्चयः ? भिन्नाङ्गवर्त्तित्वात् समुच्चयः। सत्यपि भैषज्ये सामान्ये ऋग्वेदाद्यंशस्ताभिर्भिषज्यति । ( यागाद्यंशभाव्याभाव्यशस्त्याभिस्ततश्चावर्त्तेरकार्ये नानात्वात्समुच्चयः । ) तद्यथैकस्मिन्नेव कार्ये वातपित्तादिभेषजानामभिन्नदेशानामप्यवान्तरकार्यभेदानामवधयो न विकल्प एवमिहापि द्रष्टव्यम् । तथा च दर्शयत्युभयं ह्येतत् कर्मा[illegible] चेति तत्रैव तत्रापि सन्धाने च क्षुद्रात्रभयं ह्येतत् कर्म ऋग्वेदादिकं चेत्येवं सति यत्र विशेषतो नादिष्टं प्रायश्चित्तं तत्र कालाहुतिं हुत्वा वेदाहुतिं ब्रह्मा हुजुयात् । आदिष्टे तु प्रायश्चित्ते कालाहुतयस्तस्य च पात्रक्रमेण क्रिया एवमष्टावपि कालाहुतिं जप्त्वा यथोक्तां प्रायश्चित्तिं कुर्यात् ॥ ६ ॥

अथ यदीति । यज्ञस्येति वर्त्तते येन सम्बन्धी सोमोऽभिषुतः ' स्कन्देत् ' तत एव सोम इति न तावदाद्यादिपतन एतत्प्रायश्चित्तं पतितेऽपि तस्मिन्यज्ञस्य वैगुण्याभावात्तथैष्टिकश्च यदा स्कन्देत्तत्रापि प्राकृतस्यैव प्रायश्चित्तस्य भावात् । अनभिषुते सोमे स्कन्ने पुनर्गृहीतुं शक्यत्वाद्गृहीते च तस्मिन् वैगुण्याभावादभिषुतस्तु यः स्कन्दति तत्रावश्यं कियांश्चिदंशः प्रत्याहरणीयो भवति तन्न्यूनः सोमो भवतीति वैगुण्यात्तत्रैव युक्तं प्रायश्चित्तेन । यदि सोमस्य रसः किञ्चित्स्कन्देत्तदद्भिरुपसिञ्चेत । वैष्णवी चासौ वारुणीत्येतया वैष्णववारुण्या [ क्रयाय द्वै । इदं किञ्चिल्लोके चार्छति । " ऋगतौ "–( धा. पा. १६ । प. ) इत्येष आङ्पूर्वो विनाशे वर्त्तते । तस्य च ऋच्छादेशः । यत् किञ्चिन्नश्यति सर्वमिदं वरुण एव ' अर्पयति ' विनाशयति, तस्यैवर्त्तेर्णिचि पुगागमः " " ययोरोजसेति " एतया ऋचा यत्र वा ' देवता ' ' अर्पयति ' यस्माच्च विमृशति ' ताभ्यामुभाभ्यां । ' भिषज्यति ' तस्य कृत्स्नस्य ताभ्यामनुदेशादित्यभिप्रायः ॥ ७ ॥

१–ययोरोजसेवोदके नोपसिंचेत् । सोम एवस्कन्नहविर्यज्ञियप्रायश्चित्तमिदमिति कर्कः । स्कन्नसोमप्रायश्चित्तमिदमिति देवयाज्ञिकाः । ययोर्व्वैष्णववारुणी त्रिष्टुबिति कात्यायनसर्वानुक्रमः । का. श्रौ. सू. २५ । २८ ।

( त्यु ) अथोऽअभ्येव मृशेत् । ( द्दे ) देवान्दिवमगन्यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन्यज्ञस्ततो मा द्रविणमष्टु पितॄन्पृथिवीमगन्यज्ञस्ततो मा द्रविणमष्टु यं कुं च लोकमगन्यज्ञस्ततो मे भद्रमभूदित्यैवैतदाह ॥ ८ ॥

तद्ध स्मैतदारुणिराह । किं स यजेत यो यज्ञस्य व्यृद्धचा पापीयान्मन्येत यज्ञस्य वाऽअहं व्यृद्धचा श्रेयान्भवामीत्येतद्ध स्म स तदभ्याह यदेता आशिष ऽउपगच्छति ॥ ९ ॥

इति चतुर्थप्रपाठकेऽष्टमं ब्राह्मणम् ॥ ८ ॥ ९. ७. ॥

---

अथोऽअभ्येव मृशेत्—" देवान्दिवमगन्यज्ञः ततो मा द्रविणमष्टु, मनुष्यानन्तरिक्षमगन्यज्ञः ततो मा द्रविणमष्टु, पितॄन्पृथिवीमगन्यज्ञः ततो मा द्रविणमष्टु-यं कं च लोकमगन्यज्ञः । ततो मे भद्रमभूत् " ( वा. सं. ८ । ६० ) इत्येवैतदाह ॥ ८ ॥

तद्ध स्मैतदारुणिराह—किं स यजेत-यो यज्ञस्य व्यृद्धचा पापीयान्मन्येत । यज्ञस्य वाऽअहं व्यृद्धचा श्रेयान्भवामीत्येतद्ध स्म स तदभ्याह—यदेता आशिष उपगच्छति ॥ ९ ॥

इति प्रायश्चित्तम् ।

---

अथो अभ्येव मृशेदिति । देवैस्कन्नं सोमं नाद्भिरुपनिनयेत् । कालाहुतिभिश्चैतत्समुच्चीयते । भिन्नांशवर्तित्वादध्वर्युश्चेदं कुर्यात् । समाख्यानात् । कालाहुतिमात्रब्राह्मणश्रवणात् ॥ ८ ॥

तद्ध स्मैतदिति । या एता आशिषस्ततो मा द्रविणमष्ट्वित्यादयः । एवं तु स्कन्दनविशेषात्स ( नभ्यननं सर्वस्माद्गृह्यते न लिङ्गक्रमात् ) प्राप्तं यज्ञस्य दोह इत्यस्य वाचनं दर्शयति पूर्वासु कालाहुतिषु ॥ ९ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे पञ्चमेऽध्याये सप्तमं ब्राह्मणम् ॥ ४—७ ॥

---

१—' यं कञ्च ' इत्यादिभागो मन्त्रतयैवाम्नातः संहितायाम् । इह तु सोंऽशः फलितार्थकथनमात्रं प्रतीयते । अत्र संहितायाम्—' चतुस्त्रिंशत्तन्तवः '—इति, ' यज्ञस्य दोहः '—इति, ' आपवस्व '—इत्येवं त्रयः प्रायश्चित्तार्था होममन्त्रा अन्येऽप्युक्तास्त इह ब्राह्मणे न दृश्यन्ते ।

२—देवान् दिवमगन्निति सोमे । सोमे स्कन्नहविर्यज्ञियप्रायश्चित्तमिदमिति कर्कः । का. श्रौ. सू. २५ । २७ ।

३—सोमेज्योपपाते चैकैकांयथाकाल २ हुत्वा यज्ञस्यदोह इति व्वाचयति । अत्र कर्कः । सोमेज्यायामुपपातः सोमेज्योपपात इति समास इति । तेन न सोमयागोपपातः । इति फलितं । चतुस्त्रिंशद्धोमोऽध्वर्युकर्तृकः । एकैकहोममेवांगीकृत्य कालाहुतिहोमस्तु ब्रह्मकर्तृक इति कर्कः । आग्नीध्रीये सुत्यासु । सुत्यासु वर्तमानासु कालाहुतिराग्नीध्रीये इत्यर्थः । का. श्रौ. सू. २५। १४३ । १४४ ।

तद्यत्रैतत्त्रिरात्रे सहस्रं ददाति । तदेषा साहस्री क्रियते स प्रथमेऽहंस्त्रीणि च शतानि नयति त्रयस्त्रिꣳशतं चैवमेव द्वितीयेऽहंस्त्रीणि चैव शतानि नयति त्रयस्त्रिꣳशतं चैवमेव तृतीयेऽहंस्त्रीणि चैव शतानि नयति त्रयस्त्रिꣳशतं चाथैषा साहस्र्यतिरिच्यते ॥ १ ॥

सा वै त्रिरूपा स्यादित्याहुः । ( १ ) एतद्ध्यस्यै रूपतममिवेति रोहिणी ह त्वेवोपध्वस्ता स्यादेतद्धैवास्यै रूपतममिव ॥ २ ॥

सा स्यादप्रवीता । वाग्वाऽएषा निदानेन यत्साहस्र्ययातयाम्नी वाऽइयं वागयातयाम्न्यप्रवीता तस्मादप्रवीता स्यात् ॥ ३ ॥

---

### गर्गत्रिरात्रमहीनम् ।

तद् यत्रैतत्त्रिरात्रे सहस्रं ददाति–तदेषा साहस्री क्रियते । स प्रथमेऽहं स्त्रीणि च शतानि नयति, त्रयस्त्रिंशतं च । एवमेव द्वितीयेऽहं स्त्रीणि चैव शतानि नयति, त्रयस्त्रिंशतं च । एवमेव तृतीयेऽहं स्त्रीणि चैव शतानि नयति त्रयस्त्रिंशतं च । अथैषा साहस्र्यतिरिच्यते ॥ १ ॥

सा वै त्रिरूपा स्यादित्याहुः । एतद्ध्यस्यै रूपतममिवेति । रोहिणी ह त्वेवोपध्वस्ता स्यात् । एतद्धैवास्यै रूपतममिव ॥ २ ॥

सा स्यादप्रवीता । वाग्वाऽएषा निदानेन–यत्साहस्री अयातयाम्नी वाऽइयं वाग्, अयातयाम्नी अप्रवीता । तस्मादप्रवीता स्यात् ॥ ३ ॥

---

तद्यत्रैतदिति । साहस्रीब्राह्मणमेतत् । संवत्सरसत्रविषयो वैषुवतो ग्रह इति । मन्त्रक्रमादुपस्थितमप्युत्सार्याहीने गता 'साहस्री' तावदुच्यते । यत्र यस्मिँश्च त्रिरात्रे तिस्रो रात्रयः समाहृतास्त्रिरात्रः । रात्र्या चाहोरात्रं लक्ष्यते, तेनाप्यहोरात्रपरिमितं सोमयागस्ततश्च यत्र त्रिरात्रे सोमयागस्तत्र सञ्ज्ञाते गार्गाख्ये सहस्रं दक्षिणां ददाति तत्तत्रैषा वक्ष्यमाणा त्रिरूपादिका गौः साहस्री सहस्रस्य पूरणीत्येतस्मिन्नर्थे वक्ष्यमाणं द्रष्टव्यम् । सहस्राहवासा क्रियते इति वक्ष्यमाण सम्बन्धार्थ उपन्यासः । कथं नाम स यदेतत् प्रथमेऽहनि इत्याद्येतद्गर्गत्रिरात्रविषयं विज्ञाय ततः स प्रथमेऽहनीत्यसममर्थानुवाद एव । स एव समविभक्ताः प्रत्यहं ददातीत्यसद्धर्मस्य सर्वाहीनविषयत्वात् । ' अथैषा साहस्र्यतिरिच्यते ' विभक्तुमशक्यत्वात् ॥ १ ॥

सा वै त्रिरूपेति । ' त्रिरूपा ' त्रिवर्णा ' रोहिणी ' रक्ता ' उपध्वस्ता ' वर्णान्तरेणाहता ' रूपतमम् ' रूपान्तरेभ्यः प्रकृष्टं रूपम् ॥ २ ॥

सा स्यादप्रवीतेति । वृषेणानुपगता । वाग्वा एवेति । वागेव देवता अस्या अधिदैवतमित्यर्थः । 'अयातयाम्नी ' अनुपक्षीणवीर्या वाक् ससारा स्वकार्यादपि हारिणा ' अप्रवीता ' असंस्कृतवीर्यत्वात् ॥ ३ ॥

---

१–सहस्रदक्षिणे त्रिरात्रे प्रतिविभज्य नयन् रोहिणीमुपध्वस्तामप्रवीतामतिरेचयति त्रिरूपां वा । का. श्रौ. सू. । १३ । ७४ ।

( त्तां ) तां प्रथमेऽहन्नयेत् । ( द्वा ) वाग्वाऽएषा निदानेन यत्साहस्री तस्या एतत्सहस्रं वाचः प्रजातं पूर्वा हैषैति पश्चादेनां प्रजातमन्वेत्युत्तमे वैनामहन्नयेत्पूर्वमहास्यै प्रजातमेति पश्चादेषान्वेति सोऽएषा मीमांसैवोत्तमऽएवैनामहन्नयेत्पूर्वमहास्यै प्रजातमेवैति पश्चादेषान्वेति ॥ ४ ॥

तामुत्तरेण हविर्धाने । दक्षिणेनाग्नीध्रं द्रोणकलशमवघ्रापयति यज्ञो वै द्रोणकलशो यज्ञमेवैनामेतद्दर्शयति ॥ ५ ॥

( त्या ) आजिघ्र कलशम् । ( म्म ) मह्या त्वा विशन्त्विन्दव इति रिरिचान इव वाऽएष भवति यः सहस्रं ददाति तमेवैतद्रिरिचानं पुनराप्याययति यदाहाजिघ्र कलशं मह्या त्वा विशन्त्विन्दव ऽइति ॥ ६ ॥

पुनरूर्जा निवर्तस्वेति । तद्वेव रिरिचानं पुनराप्याययति यदाह पुनरूर्जा निवर्तस्वेति ॥ ७ ॥

---

तां प्रथमेऽहन्नयेत् । वाग्वाऽएषा निदानेन—यत्साहस्री । तस्या एतत्सहस्रं वाचः प्रजातम् । पूर्वा हैषैति । पश्चादेनां प्रजातमन्वेति । उत्तमे वैनामहन्नयेत्, पूर्वमहास्यै प्रजातमेति, पश्चादेषान्वेति । सोऽएषा मीमांसैव । उत्तमऽएवैनामहन्नयेत् । पूर्वमहास्यै प्रजातमेवैति, पश्चादेषान्वेति ॥ ४ ॥

तामुत्तरेण हविर्धाने दक्षिणेनाग्नीध्रं द्रोणकलशवमघ्रापयति । यज्ञो वै द्रोणकलशः । यज्ञमेवैनामेतद्दर्शयति ॥ ५ ॥

" आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः "–( वा. सं. ८ । ४२ ) इति । रिरिचान इव वाऽएष भवति–यः सहस्रं ददाति । तमेवैतद्रिरिचानं पुनराप्याययति–यदाह–आजिघ्र कलशं मह्या त्वा विशन्त्विन्दव इति ॥ ६ ॥

" पुनरूर्जा निवर्तस्व "–( वा. सं. ८ । ४२ ) इति । तद्वेव रिरिचानं पुनराप्याययति–यदाह–पुनरूर्जा निवर्तस्वेति ॥ ७ ॥

---

तां प्रथमेऽहन्निति । पूर्वा हैषैतीति । ( गवामेष नाव इत्यभिधाय पूर्वमाह एषा इत्येवमपि । ) एनां स्त्रीणामग्रतो धावन्तो वत्सा इत्याशयः । उत्तमे वैनामिति । ये पुष्टा वत्सास्ते अग्रतो भवन्ति ( तेहमुक्तमिति । एतस्मादेव वाक्यशेषात् प्रथमे इति यजमानो नान्यः प्रथमो न धातव्याः । ) उत्तमे त्वनुनीयमानाः पश्चादिति गम्यते ॥ ४ ॥

तामुत्तरेणेति । अन्तरा शालासदसि नीत्वा ' द्रोणकलशम् ' एव ' अवघ्रापयति ' ' यज्ञो वै द्रोणकलशः ' वृत्रस्य शिरसो धारणात् सोमाधारश्चेति । यज्ञ एवैनामिति । यज्ञो यजमानस्तं सहस्रेण रिरिचानमनया सहस्रस्य पात्रभूतया रिच्यमानमप्यानयतीत्यभिप्रायः ॥ ५ ॥

आजिघ्रेति । प्रसन्नाश्वतस्रः ॥ ६–९ ॥

---

१–आद्येऽहन् प्रथमां नयेदंत्येवा पश्चात् । आद्येऽहनिपक्षे प्रथमां अंत्येऽवाऽह्नि पश्चान्नयेदिति । का. श्रौ. सू. १३ । ७५ ।

२–हविर्द्धानाग्नीध्रांतरे द्रोणकलशमेनामाघ्रापयत्याजिघ्रेति । का. श्रौ. सू. । १३ । ७६ ।

सा नः सहस्रं धुक्ष्वेति । तत्सहस्रेण रिरिचानं पुनराप्याययति यदाह सा नः सहस्रं धुक्ष्वेति ॥ ८ ॥

( त्यु ) उरुधारा पयस्वती पुनर्माविशताद्रयिरिति । तद्वेव रिरिचानं पुनराप्याययति यदाह पुनर्माविशताद्रयिरिति ॥ ९ ॥

( त्यु ) अथ दक्षिणे कर्णऽआजपति । ( त्री ) इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिति सरस्वति महि विश्रुति ॥ एता तेऽअघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतादिति व्वोचेरिति वैतानि ह वाऽअस्यै देवत्रा नामानि सा यानि ते देवत्रा नामानि तैर्मा देवेभ्यः सुकृतं ब्रूतादित्येवैतदाह ॥ १० ॥

तामवार्जन्ति । सा यद्यपुरुषाभिवीता प्राचीयात्तत्रविद्यादरात्सीदयं यजमानः कल्याणं लोकमजैषीदिति यद्युदीचीयाच्छ्रेयानस्मिँल्लोके यजमानो भविष्यतीति विद्याद्यदि प्रतीचीयादिभ्यतिलिवल इव धान्यतिलिवलो भविष्यतीति विद्याद्यदि दक्षिणेयात्क्षिप्रेऽस्माल्लोकाद्यजमानः प्रैष्यतीतिविद्यादेतानि विज्ञानानि ॥ ११ ॥

---

" सा नः सहस्रं धुक्ष्व "–( वा. सं. ८।४२ ) इति । तत्सहस्रेण रिरिचानं पुनराप्याययति–यदाह–सानः सहस्रं धुक्ष्वेति ॥ ८ ॥

" उरुधारा पयस्वती पुनर्माविशताद्रयिः "–( वा. सं. ८।४२ ) इति । तद्वेव रिरिचानं पुनराप्याययति–यदाह–पुनर्मा विशताद्रयीरिति ॥ ९ ॥

अथ दक्षिणे कर्णऽआजपति–" इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतेऽदिति सरस्वति महि विश्रुति । एता तेऽअघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतात् "–( वा. सं. ८।४३ ) इति । वोचेरिति वा । एतानि ह वाऽअस्यै देवत्रा नामानि । सा यानि ते देवत्रा नामानि तैर्मा देवेभ्यः सुकृतं ब्रूतादित्येवैतदाह ॥ १० ॥

तामवार्जन्ति । सा यद्यपुरुषाभिवीता प्राचीयात्–तत्र विद्यात्–अरात्सीदयं यजमानः, कल्याणं लोकमजैषीदिति । यद्युदीचीयात्–श्रेयानस्मिँल्लोके यजमानो भविष्यतीति विद्यात् । यदि प्रतीची-

---

अथ दक्षिण' इति । ' वोचेरित्येतत्तथाभूता ब्रूयाद् ' ब्रूताद् ' इत्यस्य स्थाने ' वोचेरिति ' ब्रूयात् । ' एतानि ह वै अस्यै ' गोर्देवत्रा देवेषु नामानि ॥ १० ॥

तामवार्जन्तीति । तामवार्जितां साहस्रीमवघ्राय निरुक्तां सतीम् ' अवार्जन्ति '. अवसृजन्ति विमुञ्चन्ति साऽवसृष्टासती ' पुरुषेणाभिवीता ' अभिगमिता, अजेर्गत्यर्थस्य ( वीर्यस्य ) वी आदेशः । यदि ' प्राचीयात् '

---

१–इडे रंत इति दक्षिणेऽस्याः कर्णे यजमानो जपति । रोहिणीसंस्कारोऽयमिति कर्कः । व्वोचेरितिवाऽन्ते । ब्रूतादित्यस्यस्थाने " व्वोचे " रिति वा ब्रूयादित्यर्थः का, श्रौ. सू. । १३ । ७७ । ७८ ।

तद्या ऽएतास्तिस्रस्तिस्रस्त्रिꣳशत्यधि भवन्ति । तास्वेतामुपसमाकुर्वन्ति वि वाऽएतां विराजं वृहन्ति यां व्याकुर्वन्ति विच्छिन्नोऽएषा विराड्या विवृढा दशाक्षरा वै विराट्तत्कृत्स्नां विराजꣳ संदधाति ताꣳ होत्रे दद्याद्धोता हि साहस्रस्तस्मात्ताꣳ होत्रे दद्यात् ॥ १२ ॥

( द्वौ ) द्वौ वोन्नेतारौ कुर्वीत तयोर्यतरो नाश्रावयेत्तस्माऽएनां दद्याद्व्यृद्धो वाऽएष उन्नेता य ऋत्विक्सन्नाश्रावयति व्यृद्धोऽएषां विराड्या विवृढा तद्यद्व्यृद्धऽएवैतद्व्यृद्धं दधाति ॥ १३ ॥

---

यात्—इभ्यतिल्विल इव, धान्यतिल्विलो भविष्यतीति विद्यात् । यदि दक्षिणेयात्—क्षिप्रेऽस्माल्लोकाद्यजमानः प्रैष्यतीति विद्यात् । एतानि विज्ञानानि ॥ ११ ॥

तद् या एतास्तिस्रस्तिस्रस्त्रिंशत्याधिभवन्ति—तास्वेतामुपसमाकुर्वन्ति । वि वाऽएतां विराजं वृहन्ति—यां व्याकुर्वन्ति । विच्छिन्नोऽएषा विराट्—या विवृढा । दशाक्षरा वै विराट् । तत् कृत्स्नां विराजं सन्दधाति । तां होत्रे दद्यात् । होता हि साहस्रः । तस्मात्तां होत्रे दद्यात् ॥ १२ ॥

द्वौ वोन्नेतारौ कुर्वीत । तयोर्यतरो नाश्रावयेत्—तस्मा एनां दद्यात् । व्यृद्धो वाऽएष उन्नेता—य ऋत्विक्सन्नाश्रावयति । व्यृद्धोऽएषा विराट् या विवृढा । तद् व्यृद्धऽएवैतद्व्यृद्धं दधाति ॥ १३ ॥

---

गच्छेत् 'तत्र' निमित्ते 'विद्यादरात्सीत्' "ऋधु वृद्धौ"—( धा. पा. स्वा. प. २९ ) । इति धातो रूपम् । सिद्धकर्मा 'यजमानः' 'कल्याणम्' शोभनं स्वर्गं 'लोकं' जितवान् 'अयम्' यदि च 'प्रतीचि' 'इयात्' तत 'इभ्यतिल्विलो भविष्यतीति' 'विद्यात्' । "विल संवरणे"—( धा. पा. तु. ६७ ) तिल इव शाखाभिः पुष्पफलेन वर्धते तिल्विलं छान्दसोऽकारलोपः । इभा हस्तिनः इभेभ्यो हिता इभ्याः हस्तिपका इभ्यः तिल्विलो वृत इति ( इभ्यतिल्विलवामभ्यहस्तिभ्यां भवतीति तत्प्रदानार्था एव इभ्याः । ) हस्तिनो भवन्तीत्यर्थः । इवशब्दः समुच्चये । धान्यावृत इव धान्यावृतश्चेत्यर्थः ।

तद्या एता इति । अथैतां विसृष्टां सतीं किं कुर्वन्तीत्यत आह—'या एताः' प्रतिदिवसं 'तिस्रस्तिस्रो गावस्त्रिंशतिरधिका अपि 'भवन्ति' "यस्मादधिकं यस्य चेश्वरवचनं—तत्र सप्तमी" (पा. सू. २।३।९ ) 'तासु' 'एतासु' पूर्वनीतासु एतां साहस्रीमुपनीय स एकादशभिः कुर्वन्नेकादशतं कुर्वन्तीत्यर्थः । 'विवृहन्ति' "वृहू उद्यमे"—( धा. पा. तु. प. ६६ ) । विविधं हि वैतां 'विराजं' 'यां' पृथक् आनयन्ति । 'विच्छिन्ना उ एषा' 'विराड्' दक्षिणात्मिका 'या' 'विवृढा' विभज्योद्यम्य नीता ततस्तस्मादुद्यताभवत् समं सृजति 'विराजं संदधाति' । दशाक्षरा हि विराट् विराड्यज्ञो भुवनात्मा च [ सर्वा न्यामिस्वावदसङ्केप्रसु ] संहित एवानया तु 'कृत्स्नां' 'संदधाति' इत्याशयः । होता दक्षिणां नयतीति । नयतेर्दाने प्रयुक्तत्वात् । 'तां होत्रे दद्यात्' इति वदतो दाने दर्शनात् । तास्वेतामुपसमाकुर्वन्तीति च पूर्वनीतायाः संसर्गवचनात् यदि तु संसृज्यैव ताभिर्नवभिः साहस्रं नीयते ततः कथं सा विराड्विवृढा व्याकृतार्थाः स्यात्तस्मादर्पण एवायं नियमो न्यूना दशतोपनायदिति ।

---

१—सर्व्वतो नवसु दशमीं कृत्वा होत्रे दद्यात् । उन्नेतारौ वा कृत्वा नाश्रावयते । दशदशाभेदेन दक्षिणा दद्यात् । का. श्रौ. सू. १३ । ७९-८१ ।

तदाहुः । ( नु ) न सहस्रेऽधि किं चन दद्यात्सहस्रेण ह्येव सर्वान्कामानाप्नोतीति तदु होवाचासुरिः काममेव दद्यात्सहस्रेणाह सर्वान्कामानाप्नोति कामेनोऽअस्येतरद्दत्तं भवतीति ॥ १४ ॥

( त्यु ) अथ यदि रथं वा युक्तं दास्यन्त्स्यात् । ( द्यु ) यद्वा वशायै वा वपायाᳬं हुतायां दद्यादुदवसानीयायां वेष्टौ ॥ १९ ॥

स वै दक्षिणा नयन् । ( नु ) अन्यूना दशतो नयेद्यस्माऽएकां दास्यन्त्स्याद्दशभ्यस्तेभ्यो दशतमुपावर्तयेद्यस्मै द्वे दास्यन्त्स्यात्पञ्चभ्यस्तेभ्यो

---

तदाहुः—न सहस्रेऽधि किंचन दद्यात् सहस्रेण ह्येव सर्वान्कामानाप्नोतीति । तदुहोवाचासुरिः—काममेव दद्यात् । सहस्रेणाह सर्वान्कामानाप्नोति । कामेनोऽअस्येतरद्दत्तं भवतीति ॥ १४ ॥

अथ यदि रथं वा युक्तं दास्यन्त्स्यात्, यद्वा वशायै वा, वपायां हुतायां दद्यात्, उदवसानीयायां वेष्टौ ॥ १९ ॥

स वै दक्षिणा नयन्, अन्यूना दशतो नयेत्। यस्माऽएकां दास्यन्त्स्याद् दशभ्यस्तेभ्यो दशतमुपा-

---

नयनो नयनं तु त्रयस्त्रिंशता सहितानां त्रयाणां शतानां सहितानामेवेति द्रष्टव्यम् । तत्र तु प्रकृतशतविभागानुसारेण मुख्यस्यैकैकस्य चतस्रश्चतस्रो दशतोऽर्पणीयाः प्रपद्यन्ते । होतुस्तिस्रो दशतः सप्त च त्रिभागोनगावः प्राप्नुवन्ति । तस्य हि साहस्र्या सहिते एकादशकार्यमिष्यते । ततश्च तृतीयिनामिहास्यैषो सदर्पणीया प्राप्नोति । अर्धिनां तु द्वे द्वे दशतावन्येन एवं ( प्राप्नुतायादीचैवैका तृतीयिनां सत्रिभागा त्रयोदशैकादशश्लोको कसा प्राप्नुवन्ति ) तत्तद्दशतमर्पयित्वा पुनस्त्रयाणामेकादशतमर्पयेत्, चतुर्होत्रा सह पूर्णामर्पयेदित्येवं प्राकृतविभागेनार्पणे प्रसज्यमाने आह—यस्मा एकामेकादशते आह—होता हि साहस्रं सत्युक्थे बृहतीनां सहस्रमर्हतीति साहस्रः य ऋत्विक् सन्नित्युन्नेता सन्नित्यर्थः । स ऋत्विक्छब्द उन्नेतुर्लक्षणार्थः । इतरथा तु बहव एव ऋत्विजो नाश्रावयन्ति तेषामपि बृहती स्यात् । ' तदाहुर्न सहस्रे ' दीयमानेऽधिकमश्वादिकं प्रतिषिध्यते तेन विनैव क्रतुफलं सिद्धयतीत्येतद्दर्शयतिं ' सहस्रेण ह्येव काममेव ' ददाति विविधसामर्थ्याद्विशेषः । तदाह—सत्यं तावत् सहस्रेणैव ' सर्वान्कामानाप्नोति ' ' कामेन ' एव इच्छयाऽस्य यजमानस्येतरद्दत्तं भवति ( तं च निष्फले दाने इव युक्ता तत्र भूमेच्छया ' इतरद्दत्तं भवति ' सफलमभूदत एवं सिद्धे नान्य एवेत्यभिप्रायः ) ॥ १४ ॥

अथेति । ' अथ यदि ' तत्राधिकारार्थं वा युक्तं यद्वान्यत्किञ्चिद्यदि ' दास्यन्स्यात् ' ततो वशायै वपायां ' दद्यादुदवसानीयायां वेष्टौ ' '। सूत्रकारेणात्र " साहस्रीमेव तद्ददाती " त्युक्तम् । तच्छ्रुत्यन्तरतो ज्ञेयम्॥ १९॥

स वै दक्षिणेति । स वै यजमानकाल इत्यर्थः । नयनेन दानं लक्ष्यते किं कारणम् । त्रीणि च शतानि नयति त्रयस्त्रिंशमेवेति ।(त्रयस्त्रिंशानामन्यूनाभिर्दशभिर्नेतुमशक्यत्वात् । तस्मादाग्नीध्रे दक्षिणा इयं भाष्ये व्याख्या-

---

१—अनूबंध्यवपाहोमांते दद्यादेनाम् । एनां दशमीमिति सूत्रशेषः । उदवसानीयायां वा । अन्यदिच्छन् । का. श्रौ.सू. १३।८२-८४

दशुतमुपावर्तयेद्यस्मै तिस्रो दास्यन्त्स्यात्रिभ्यस्तेभ्यो दशुतमुपावर्तयेद्यस्मै पञ्च दास्यन्त्स्याद्द्वाभ्यां ताभ्यां दशुतमुपावर्तयेदेवमाशतात्तथो हास्यैषाऽन्यूना विराडमुष्मिँल्लोके कामदुघा भवति ॥ १६ ॥

इति चतुर्थप्रपाठके नवमं ब्राह्मणम् ॥ ९ ॥ ( ९.८. ) ॥

चतुर्थः प्रपाठकः ॥ कण्डिकासंख्या ॥ १२९ ॥

---

वर्तयेत् । यस्मै द्वे दास्यन्त्स्यात्–पञ्चभ्यस्तेभ्यो दशतमुपावर्तयेत् । यस्मै तिस्रो दास्यन्त्स्यात्–त्रिभ्यस्तेभ्यो दशतमुपावर्तयेत् । यस्मै पञ्च दास्यन्त्स्याद्–द्वाभ्यां ताभ्यां दशतमुपावर्तयेत् । एवमाशतात् । तथो हास्यैषाऽन्यूना विराडमुष्मिँल्लोके कामदुघा भवति ॥ १६ ॥

इति गर्गत्रिरात्रम् ।

---

पूर्वं कर्तव्या । ) ' यस्मा एकाम् ' इत्यादि । तत्रैतावानेवार्थो विधेयो दशभ्यो मुख्यादिभ्यो ' दशतमुपावर्तयेत् ' अर्पयेत् पुनः पञ्चभ्यस्तेभ्यो मुख्येभ्य एकादशतमुपावर्तयेदित्येतदपि प्राप्नोति तथाप्यर्थविरोधान्न भवति । पञ्चदशतमित्येतदेव भवति पञ्चभ्य एकेभ्यो द्विभ्य एकादशायनसामर्थ्यात् । ततस्त्रिभ्य उपावर्तयेत्प्रशास्त्रे प्रस्तोतृभ्यां तिस्रस्तिस्र उद्गात्रे चतस्र इत्येवं ततो द्वाभ्यां दशतमुपावर्तयेत् होत्रध्वर्युभ्यां यतो ' यस्मै ' वमाशतात् दशभ्यः पञ्चदशभ्यो दशतमुपावर्तयेदिति प्राप्नोति तथाप्यविरोधात् त्रिभ्य एव दशतमुपावर्तयेत् कथं नु. नवमदशमाभ्यामिति तिस्रस्तिस्रो होत्रे च तिस्रः पुनः पाकादिभ्य स्तिस्र इति तिस्रोऽध्वर्यवे चतस्रः पुनरपि या दिशां तिस्रस्तिस्रो नेष्ट्रे चतस्र इत्येवं चार्पितासु तास्वन्ते प्रतिग्रहमन्त्रः सकृदेव हि प्राक्तेन क्रमेण ब्रूयुः । यास्तु तास्त्रयस्त्रिंशत्तासां तिस्रो होत्र उन्नेत्रे वा स्थापयित्वा दशकमोक्तसंख्यादिभ्यो वा चतुष्कत्वो ग्रावस्तुद्वय एवोन्नेतारं तत्रोन्नेयात्तेषां मध्यात् दशरात्रे साहस्र्या सह दास्यते । यदि तून्नेत्रे दास्यते तेन उत्तमेऽहन्प्रथमं शतं ददद्युन्नेत्रे द्वे एव दद्यात् ( नोष्टुतं पञ्चमं ) द्वितीयं तु शतं दद्याद्ग्रावस्तुते नेष्ट्रे च पञ्चमं दद्यादुन्नेतारमन्तरा । यदेव तृतीये पुनः शते दीयमाने नेष्ट्रे दद्याच्चतस्रो ग्रावस्तुते नयेदेवोन्नेतारमन्तरेण तत्रोऽनेन सादयित्रे उन्नेत्रे तामयैकादशतं दद्यादित्येषा कर्मयोजना । अत्र च यस्मादित्येकामित्येकसंप्रदानं यच्छब्देनोद्दिश्यते ' तेभ्य ' इति बहुवचनात् तेन परामृशति तच्च विरुद्धमिति सामर्थ्याद्यस्मै एकामेकां दास्यन्स्यादित्यभ्यासो द्रष्टव्यः । एवमुत्तरत्रापि द्रष्टव्यम् । एवमपि च प्रसिद्धे तेन संप्रदानस्योपलक्षणमुपपद्येत । न चैका देया कस्मैचिदित्येतदस्यापि प्रसिद्धं कथं तेन पुरुषा उपलक्ष्यन्ते ? सत्यमेतत् किन्तु उपलक्षणान्यत्वानुपपत्त्यैवैकादशतो विधिर्योऽत्र द्रष्टव्यः । एकामेकामेकस्मै दद्यात्तेभ्यश्च तामेकैकां दद्यात् तेभ्यस्तामेवं दशतं कृत्वा दद्यात् । येन पृथक् पृथगेव यस्मै द्वे दास्यन्स्यादित्यादि योज्यम् । अथवा दशभ्यो दशतं दित्सन्नर्थादेव तेभ्य एकैकां दास्यन् भवतीत्यनुवादो वाऽयम् । एवं यस्मै पंचेत्यादि । ननु पञ्चभ्यो दशतं दित्सन्संस्तन्नियोगतो द्वे द्वे दास्यन् भवति । कदाचिद्विषडेकस्मै दद्यादथ शतस्य वा एकैकामेवमपि पञ्चभ्य एव दशको दत्तो भवति; नैतदेवं समं स्यादश्रुतत्वादिति दशतो न्यायेन समो

विभागः प्राप्नोति । तस्माद्दशभ्यो दशतं दद्यात्ततः पञ्चभ्यश्चतसृभ्यस्ततो द्वाभ्यां पुनश्चैवं यथासंभवमाशतादित्येतावदेवात्र विधीयते¹ । ( यस्मात्तत्प्रैषतुमित्यनुवादः ) तथा क्रियमाणस्य यजमानस्यैष दशात्मिका विराड् वर्तते शतानि नव दशन्यूनानि तेषामेकैकस्मिन् दशतस्ता ' अन्यूना ' त्विराडधियज्ञमुपात्ताऽमुष्मिंल्लोके तादृश्येव ' कामदुधा भवति । ( विराज्यो एह्येव सर्वे एत्र दोहो न्यजते ( ? ) कामा इत्यभिप्रायः ) ॥ १६ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे पञ्चमेऽध्याये
अष्टमं ब्राह्मणम् ॥ ( ४ । ५ । ८ ) ॥

---

१–अथ गर्गत्रिरात्रादौ सहस्रदक्षिणाके यज्ञे गोसाहस्री दक्षिणाविभागः ॥ दशदशाभेदेन दक्षिणा दद्यात् । अनूबंध्यवपा होमांते दद्यादेनां । ८२ । उदवसानीयायां वा । ८३ । अन्यदिच्छन् । ८४ । गर्गत्रिरात्रादेः सहस्रदक्षिणाकस्य यज्ञस्य त्र्यहसाध्यत्वेन विभज्यदानमन्वहमुक्तं । तत्र प्रतिदिनं त्रयस्त्रिंशदधिकशतत्रयं गवां दातव्यं भवति । तत्र च दशदश गाः संख्याय षोडशर्त्विग्भ्यो दातव्याः । तत्रचायं क्रमः। १ प्रथमत एकं दशकं गृहीत्वा ब्रह्मो १ द्गातृ २ होत्र ३ ध्वर्यु ४ ब्राह्मणाच्छंसि ५ प्रस्तोतृ ६ मैत्रावरुण ७ प्रतिप्रस्थातृ ८ पोतृ ९ प्रतिहर्तृभ्यो १० दशभ्यः ऋत्विग्भ्यः एकैकां गां दद्यात् । इति प्रथमं दशकं । १० । २ द्वितीयं दशकं प्रथमदशकवद्देयं । ३ तृतीयं दशकं द्वे द्वे गावौ इति पंचधा गवां विभागः ब्राह्मणाच्छंसि १ प्रस्तोतृ २ मैत्रावरुण ३ प्रतिप्रस्थातृ ४ पोतृभ्यः ५ पंचभ्यः द्वे द्वे दद्यात् । ४ चतुर्थं दशकं तृतीयदशकवत् पंचधा विभागः पंचभ्यो दानंच । पंचानां दाने क्रमः । ब्राह्मणाच्छंसि १ प्रस्तोतृ २ मैत्रावरुण ३ प्रतिप्रस्थातृ ४ प्रतिहर्तृभ्यः ५ ( इति पंचभ्यो ) द्वे द्वे दद्यात् । ५ पंचमं दशकं चतस्रः ४ तिस्रः ३ तिस्रः ३ इति वैषम्येण विभागः । अच्छावाकाय चतस्रः४अग्नीधे तिस्रः ३ । सुब्रह्मण्याय तिस्रः ३ । इति त्रिभ्यो दानं । ६ षष्ठं दशकं पंचमदशकवत् वैषम्येण विभागः । ४ । ३ । ३ । इति । नेष्ट्रे चतस्रः४ । ग्रावस्तुते तिस्रः ३ । उन्नेत्रे तिस्रः ३ । इति त्रिभ्यो दानं । ७ सप्तमं दशकं द्वेधा विभागः । २ पंच ५ । पंचेति । ब्रह्मणे पंच ५ उद्गात्रे पंच ५ । इति द्वाभ्यां दानं । ८ अष्टमं दशकं सप्तमदशकवत् पंच पंचेति द्वेधा विभागः । ब्रह्मणे ५ उद्गात्रे ५ इति द्वाभ्यां दानं । ९ नवमं दशकं द्वेधा 'विभागः । २ । होत्रे पंच ५ । अध्वर्यवे पंच ५ । इति द्वाभ्यां दानं । १० दशमं दशकं नवमदशकवत् द्वेधा विभागः २ होत्रे ५ अध्वर्यवे ५ इति द्वाभ्यां दानं । एवमेकगोशतीविभागः । १०० । एवमेव द्वितीयगोशती १०० । तृतीयगोशतीच । १०० । एवं त्रिशती । ३०० । १ अथ त्रयस्त्रिंशदुर्वरिताः । ३३ । तत्रैकं दशकं । १० । प्रथमदशकवत् ब्रह्मादिप्रतिहर्त्रंतेभ्यो दशर्त्विग्भ्य एकैकां दद्यात् । २ द्वितीयं दशकं प्रथमदशकवत् ब्रह्मादिप्रतिहर्त्रंतेभ्यो दशर्त्विग्भ्य एकैकां दद्यात् । ३ तृतीयं दशकं । द्वे द्वे इति पंचधा विभागः । ५ । ब्राह्मणाच्छंसि १ प्रस्तोतृ २ मैत्रावरुण ३ प्रतिप्रस्थातृ ४ प्रतिहर्तृभ्यः ५इति पंचभ्यो द्वे द्वे दद्यात् । तिस्रस्तिस्रः परिशिष्यंते ता अत्र न देयाः । इति प्रथमाहः । अथ द्वितीयेऽहनि । एवमेव शतत्रयीदानं । त्रयस्त्रिंशन्मध्ये तु । १ प्रथमं दशकं पंचधा विभज्य । ब्राह्मणाच्छंसि १ प्रस्तोतृ २ मैत्रावरुण ३ प्रतिप्रस्थातृ ४प्रतिहर्तृभ्यो ५ द्वे द्वे दद्यात् । २ द्वितियं दशकं चतस्रः ४ तिस्रः ३ तिस्रः ३ । इति वैषम्येण त्रेधा विभागः । नेष्ट्रे चतस्रः ४ । ग्रावस्तुते तिस्रः ३ । उन्नेत्रे तिस्रः ३ । इति त्रिभ्यो दानं । तृतियं दशकं पंचधा विभज्य ब्राह्मणाच्छंसि १ प्रस्तोतृ २ मैत्रावरुण ३ प्रतिप्रस्थातृ ४ प्रतिहर्तृभ्यो द्वे द्वे दद्यात् । तृतीयेऽहनि । शतत्रयीदानं पूर्ववत् । त्रयस्त्रिंशन्मध्ये तु । १ प्रथमं दशकं पंच ५ पंचेति द्वेधा विभागः । २ । ब्रह्मणे पंच ५ उद्गात्रे ५ इति द्वाभ्यां दानं । २ द्वितियं दशकं प्रथमदशकवत् द्वेधा विभागः । ब्रह्मोद्गातृभ्यां द्वाभ्यां च दानं । ३ तृतीयं दशकं पंच ५ पंचेति द्वेधा विभज्य । अध्वर्यवे पंच दत्वा पुनस्तस्मा एव पंच दद्यात् । इति एकस्मै १ दानं । ततः सर्वेषां यास्तिस्रस्तिस्रोऽवशिष्टाः । ताः सर्वा आदाय । तासु नवसु संपन्नासु । इमां साहस्रीं दशमीं कृत्वा । तद्दशकं । अनूबंध्यवपाहोमांते । उदवसनीयायामिष्टौ वा होत्रे दद्यात् । अथवा पक्षांतरम् । अस्मिन्पक्षे द्वावुन्नेतारौ वृत्वा । तयोर्मध्ये य आश्रावणं न करोति तस्मै एतद्दशकं अनूबंध्यवपाहोमांते उदवसानीयायां वा दद्यादिति पक्षांतरं । अस्मिन्नवे पक्षे प्रथमेऽह्नि ५ शतत्रयीदानांते त्रयस्त्रिंशत्सु ये द्वे गावौ होतुर्भागो भवतः । ते उन्नेत्रे दद्यात् । न होत्रे । द्वितीयेऽहनि २ त्रयस्त्रिंशत्सु यास्तिस्रः उन्नेतुर्भागा भवंति । ता होत्रे दद्यात् । नोन्नेत्रे । तृतीयेऽहनि त्रयस्त्रिंशत्सु यास्तिस्र उन्नेतुर्भागा भवंति । ताः प्रतिशतकं होत्रे देयाः । इति गोसाहस्रीदक्षिणाविभागः । तथाऽत्र देवयाज्ञिकः–दशभ्यो दशकौ दत्वा चतुर्भ्योऽष्टौ च पंचकान् ॥ द्विकेन पूरयेत् षड्भ्यः षड्भ्यो द्विकमिति स्थितिरिति । १ । यदत्र श्लोके क्रमांतरं तच्छ्रुतिविरोधान्नादर्तव्यं । दानं तु श्रुत्यनुरोधेनैव कर्तव्यं । श्रुत्युक्तः क्रमस्तु प्रथममेकैकस्याः १ ततो द्वयोर्द्वयोः २ ततस्तिसृणां तिसृणां ३ ततः पंचानां पंचानामिति । ५ इति श्रुत्युक्तः क्रमः । श्लोकोक्तः क्रमस्तु एकैकदानानंतरं पंचभ्यो दानमभिहितमिति श्लोकोक्तः क्रमः । का. श्रौ. सू. । १३ । ८१ ।

तद्यत्रैतद्द्वादशाहेन व्यूढच्छन्दसा यजते । तद्ग्रहान्व्यूहति व्यूहतऽउद्गाता च होता च च्छन्दाᳬसि स ऽएष प्रज्ञात ऽएव पूर्वस्त्र्यहो भवति समूढच्छन्दास्तदैन्द्रवायवाग्रान्गृह्णाति ॥ १ ॥

( त्यु ) अथ चतुर्थेऽहन्व्यूहति । ग्रहान्व्यूहन्ति च्छन्दाᳬसि तदाग्रयणाग्रान्गृह्णाति प्राजापत्यं वाऽएतच्चतुर्थमहर्भवत्यात्मा वाऽआग्रयण आत्मा वै प्रजापतिस्तस्मादाग्रयणाग्रान्गृह्णाति ॥ २ ॥

## व्यूढद्वादशाहः ।

तद् यत्रैतद् द्वादशाहेन व्यूढच्छन्दसा यजते—तद्ग्रहान्व्यूहति । व्यूहत उद्गाता च होता च छन्दांसि । स एष प्रज्ञात एव पूर्वस्त्र्यहो भवति समूढच्छन्दाः । तदैन्द्रवायवाग्रान्गृह्णाति ॥ १ ॥

अथ चतुर्थेऽहन्व्यूहति । ग्रहान् व्यूहन्ति छन्दांसि । तदाग्रयणाग्रान्गृह्णाति । प्राजापत्यं वाऽएतच्चतुर्थमहर्भवति । आत्मा वाऽआग्रयणः । आत्मा वै प्रजापतिः । तस्मादाग्रयणाग्रान्गृह्णाति ॥ २ ॥

तद्यत्रैतद्द्वादशाहेनेति ' व्यूढच्छन्दसा ' दशरात्रस्य चतुर्थनवमयोरह्नोर्द्वारा ग्रहाणामाग्रयणः पूर्वं ग्रहीतव्यः । षष्ठसप्तमयोस्तु शुक्रस्तावद्धारणीयो ' यावत् पूर्वे ग्रहा गृहीतास्ततः परिमृज्य सादनीयाः । आग्रयणस्तु हिंकृत्य सादनीयः । वैराजा व्यूढच्छन्दांस्यपि दशरात्रे ग्रहा व्यूहनीया इत्येतदत्र ब्राह्मणे विधीयते । ' एतत् ' इति श्रुत्यन्तरप्रसिद्धम् । द्वादशाहेन यजनं प्रत्यक्षवदुत्तरविवक्षया परामृशति । तत्तत्र ग्रहानेवाध्वर्युर्वक्ष्यमाणं व्यूहति । आग्रयणादीनामप्यस्य स्थानं भवति होतोद्गातारौ अपि तत्र च्छन्दांसि व्यूहन्तौ अन्योन्यस्य स्थानं नयतः स एवार्थज्ञानप्रसिद्ध एवाधिकृतं पूर्वं प्रथमस्त्र्यहः ' प्रज्ञातः ' त्रिको भवति । कीदृशा समूढं ( कुंदरहोतृण्णावत् ) तत्राध्वर्युरप्यैन्द्रवायवानेवाधिकृतान् गृहान् गृह्णातीत्युत्तरविवक्षयाऽनुवादः । अनुवादत्वादेव बादरोत्रिरहस्त्र्यह इति गम्यते । होतुरुद्गातॄणां द्विदशरात्रं चतुर्थादहोरात्र्याख्यो द्वादशाहस्य ॥ १ ॥

अथ चतुर्थ इति ' चतुर्थे ' अहनि इह सत्रस्य ' व्यूहति ' ग्रहानध्वर्युः । तै " धारयन्त एवे " ति

१· अहीने व्यूढच्छंदसि दशरात्रस्य चतुर्थनवमयो रन्होराग्रयणग्रहणं प्रथमः । द्वादशाहो द्विधा । व्यूढच्छंदाः १ समूढच्छंदाश्चे २ ति । स्वस्वस्थानविपरीतत्वेन ऊढानि स्थानांतरे प्रक्षिप्तानि छंदांसि यस्मिन् द्वादशाहे सोऽयं व्यूढच्छंदाः । इति सायणः।४।४।५। ऐं० ब्रा० ) यथोदाहरणं । ज्योतिष्टोमे प्रातःसवने गायत्रीछंदः । माध्यंदिने त्रिष्टुप्छंदः । तृतीयसवने च जगतीछंदः । तत्र माध्यंदिनसवनीयत्रिष्टुप्स्थाने प्रातःसवनिका गायत्री पठ्यते । तार्तीयसवनजगतीस्थाने माध्यंदिनसवनिका त्रिष्टुप् पठ्यते । प्रातःसवनिकागायत्रीस्थाने तार्तीयसवनिका जगती पठ्यते । इदमेव छंदसां व्यूहनं । तदेतद्व्यूहनं होतुरुद्गातुश्च विहितं सूत्रे । व्यूढच्छन्दसीत्युक्तेः । समूढच्छन्दसि नैतच्च्छन्दोव्यूहनं । साम्येन ऊहा यत्र स समूढः । वैषम्येनोहा यत्र स व्यूढः । द्वादशाहे द्वादशस्वपि अहःसु ग्रहाग्रता विहिता । तत्र ग्रहाग्रता नाम अनेकेषु ग्रहेषु गृह्यमाणेषु प्रथमं यस्य ग्रहस्य ग्रहणं सा तद्ग्रहाग्रता । यथा अस्मिन्नेव ब्राह्मणे त्रयोदश्यां कंडिकायामुक्ता । प्रातःसवने ऐंद्रवायवाग्राः । माध्यंदिने शुक्राग्राः । तृतीये आग्रयणाग्राः । इमे ग्रहाग्रतोहाः साम्येन यस्मिन् स समूढः । इमे ग्रहाग्रतोहाः व्यूढछंदस्यपि भवंति । अव्यूढो वा ( १२ । १३५ ) इति वक्ष्यमाणसूत्रात् । तत्र द्वादशाहस्याहीनस्य व्यूढछंदसो दशरात्रस्यायं क्रमः । चतुर्थनवमयोरन्होराग्रयणाग्राः । षष्ठसप्तमयोः शुक्राग्राः । पंचमनवमयोरैंद्रवायवाग्राः । तृतीयं नवमं चाहः प्रज्ञातमिति शब्देनोच्यते । तथाच सूत्रं । शुक्रस्य षष्ठसप्तमयोरिति । ( १२ । १३२ ) असादनमापूर्व्वेषां ग्रहणात् । पूर्वेषां ग्रहणादर्वाक् शुक्रस्याग्रयणस्य च स्वस्वस्थाने नासादनं किंतु उभयोः परिमार्जनप्रभृति कृत्वा प्राकृते काले आसादनं कर्तव्यं तदप्यासादनं यस्य हिंकारो विहितः । तस्य हिंकृत्यासादनं । इतरस्य तु अहिंकृत्यैवासादनं । तथाच सूत्रं । परिमार्जनप्रभृतिकाले हिंकृत्य सादनमिति । का. श्रौ. सू. १२ । १३१–१३४ ।

तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान्गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनꣳ हिङ्कृत्य सादयत्यथैतत्प्रज्ञातमेव पञ्चममहर्भवति तदैन्द्रवायवाग्रान्गृह्णाति ॥ ३ ॥

( त्य ) अथ षष्ठेऽहन्व्यूहति । ग्रहान्व्यूहन्ति च्छन्दाꣳसि तच्छुक्राग्रान्गृह्णात्यैन्द्रं वाऽएतत्षष्ठमहर्भवत्येष वै शुक्रो य एष तपत्येष ऽउऽएवेन्द्रस्तस्माच्छुक्राग्रान्गृह्णाति ॥ ४ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त ऽएवोपासतेऽथ ग्रहान्गृह्णात्यथ यदा ग्रहान्गृह्णात्यथ यत्रैवैतस्य कालस्तदेनꣳ सादयति ॥ ५ ॥

---

तं गृहीत्वा न सादयति । प्राणा वै ग्रहाः । नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान् यत्सादयेत् । तं धारयन्त एवोपासते, अथ ग्रहान्गृह्णाति अथ यदा ग्रहान्गृह्णाति, अथ यत्रैवैतस्य कालः—तदेनं हिंकृत्य सादयति । अथैतत् प्रज्ञातमेव पञ्चममहर्भवति । तदैन्द्रवायवाग्रान्गृह्णाति ॥ ३ ॥

अथ षष्ठेऽहन्व्यूहति ग्रहान्, व्यूहन्ति छन्दांसि तच्छुक्राग्रान्गृह्णाति । ऐन्द्रं वाऽएतत्षष्ठमहर्भवति । एष वै शुक्रः य एष तपति । एष उऽएवेन्द्रः । तस्माच्छुक्राग्रान्गृह्णाति ॥ ४ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहाः । नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान् यत्सादयेत् । तं धारयन्त एवोपासते, अथ ग्रहान्गृह्णाति । अथ यदा ग्रहान्गृह्णाति, अथ यत्रैवैतस्य कालः—तदेनं सादयति ॥ ५ ॥

---

प्रयोगान्तरं धारयदभिप्रायं बहुवचनमेक एवात्र धारणात् । अथ यदाग्रहानिति येन तस्मादाग्रयणात्पूर्वं चैन्द्रवायवादयः ॥ २ ॥ ३ ॥

अथ षष्ठ इति । प्रसन्नो ब्राह्मण एष प्रायेण बार्हतः । बृहत्या आयतनं बृहतीति छन्दांस्यनुसंपद्यन्ते । एवं जागतमपि द्रष्टव्यम् । अङ्गानि वै ग्रहा इति सत्यं प्राणा ग्रहा एव प्राणाः स्वायतनानि नयनगोलकादीनि हित्वाऽन्यत्रैव वर्तन्ते तथापि तु यानि तान्यङ्गानि नयनगोलकादीनि तान्यपि प्राणायतनत्वात् ग्रहा एव तानि च पुरुषविधानि अन्यस्यान्यं निक्षिप्य शेषेषु व्याक्षिप्यमाणेषु प्राणानपि व्यत्यस्यात् तस्मादस्य यमध्यात्मिकानां ग्रहाणां व्यत्यास इत्यधियाज्ञिकानामपि युक्तावत्रैव ग्रहानिति पुनर्वचनं । किन्तु तत्राध्वर्योरित्येतद्दर्शनोपक्रमार्थं, किन्तु तत्राध्वर्योरिति । यद्यध्वर्युर्ग्रहान्व्यूहतीतरौ च च्छन्दांसि व्यूहतः । ततः कथं यज्ञस्य क्षत्रमाभ्यामसंस्कृतं भवति । ( सामो मूर्त्तिस्त्रिरपि भवतीयमपीति प्रश्न एतद्वाऽध्वर्युरिति प्रतिवचनम् ) ॥ ४ ॥

( त्यु ) अथ सप्तमेऽहन्व्यूहति । ग्रहान्व्यूहन्ति च्छन्दाᳬसि तच्छुक्राग्रा-न्गृह्णाति बार्हतं वाऽएतत्सप्तममहर्भवत्येष वै शुक्रो य एष तपत्येष उऽएव बृहंस्तस्माच्छुक्राग्रान्गृह्णाति ॥ ६ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्तऽएवोपासतेऽथ ग्रहान्गृह्णात्यथ यदा ग्रहान्गृह्णा-त्यथ यत्रैवैतस्य कालस्तदेनᳬ सादयत्यथैतत्प्रज्ञातमेवाष्टममहर्भवति तदैन्द्रवायवाग्रान्गृह्णाति ॥ ७ ॥

( त्यु ) अथ नवमेऽहन्व्यूहति । ग्रहान्व्यूहन्ति च्छन्दाᳬसि तदाग्रयणा-ग्रान्गृह्णाति जागतं वाऽएतन्नवममहर्भवत्यात्मा वाऽआग्रयणः सर्व्वं वाऽइदमात्मा जगत्तस्मादाग्रयणाग्रान्गृह्णाति ॥ ८ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यत्सादयेत्तं धारयन्त एवोपासते ऽथ ग्रहान्गृह्णात्यथ यदा ग्रहान्गृ-ह्णात्यथ यत्रैवैतस्य कालस्तदेनᳬ हिङ्कृत्य सादयति ॥ ९ ॥

तदाहुः । ( नु ) न व्यूहेद्ग्रहान्प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोह-येद्ध प्राणान्यद्व्यूहेत्तस्मान्न व्यूहेत् ॥ १० ॥

( न्तु ) तदु व्यूहेदेव ( वाऽ ) अङ्गानि वै ग्रहाः कामं वाऽइमान्यङ्गानि व्यत्यासᳬशेते तस्मादु व्यूहेदेव ॥ ११ ॥

---

अथ सप्तमेऽहन्व्यूहति ग्रहान् व्यूहन्ति छन्दांसि तच्छुक्राग्रान्गृह्णाति । बार्हतं वाऽएतत्सप्तममह-र्भवति । एष वै शुक्रो य एष तपति । एष उऽएव बृहन् । तस्माच्छुक्राग्रान्गृह्णाति ॥ ६ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहाः । नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान् यत्सा-दयेत् । तं धारयन्त एवोपासते, अथ ग्रहान्गृह्णाति । अथ यदा ग्रहान्गृह्णाति, अथ यत्रैवैतस्य कालः—तदेनं सादयति । अथैतत्प्रज्ञातमेवाष्टममहर्भवति । तदैन्द्रवायवाग्रान्गृह्णाति ॥ ७ ॥

अथ नवमेऽहन् व्यूहति ग्रहान्, व्यूहन्ति छन्दांसि । तदाग्रयणाग्रान्गृह्णाति । जागतं वाऽएतन्न-वममहर्भवति । आत्मा वा आग्रयणः, सर्वं वाऽइदमात्मा जगत् । तस्मादाग्रयणाग्रान्गृह्णाति ॥ ८ ॥

तं गृहीत्वा न सादयति । प्राणा वै ग्रहाः । नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान्—यत्सा-दयेत् । तं धारयन्त एवोपासते, अथ ग्रहान्गृह्णाति अथ यदा ग्रहान् गृह्णाति, अथ यत्रैवैतस्य कालः—तदेनं हिंकृत्य सादयति ॥ ९ ॥

तदाहुः—न व्यूहेद्ग्रहान् । प्राणा वै ग्रहाः । नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान्—यद्व्यू-हेत् । तस्मान्न व्यूहेत् ॥ १० ॥

तदु व्यूहेदेव । अङ्गानि वै ग्रहाः । कामं वाऽइमान्यङ्गानि व्यत्यासं शेते । तस्मादु व्यूहेदेव ११

तदु नैव व्यूहेत् । (त्प्रा) प्राणा वै ग्रहा नेत्प्राणान्मोहयानीति मोहयेद्ध प्राणान्यद्व्यूहेत्तस्मान्न व्यूहेत् ॥ १२ ॥

(त्किं) किं नु तत्राध्वर्योः । (र्यु) यदुद्गाता च होता च च्छन्दाᳬसि व्यूहत एतद्वाऽअध्वर्युर्व्यूहति ग्रहान्यदैन्द्रवायवाग्रान्प्रातःसवने गृह्णाति शुक्राग्रान्माध्यन्दिने सवनऽआग्रयणाग्रांस्तृतीयसवने ॥ १३ ॥

इति पञ्चम प्रपाठके प्रथमं ब्राह्मणम् ॥ १ ॥ (९. ९. ॥)

यदि सोममपहरेयुः । (र्वि) विधावतेच्छतेति ब्रूयात्स यदि विन्दन्ति किमाद्रियेरन्यद्यु नु विन्दन्ति तत्र प्रायश्चित्तिः क्रियते ॥ १ ॥

द्वयानि वै फाल्गुनानि । लोहितपुष्पाणि चारुणपुष्पाणि च स यान्यरुण-

---

तदु नैव व्यूहेत् । प्राणा वै ग्रहाः नेत्प्राणान्मोहयानीति । मोहयेद्ध प्राणान्—यद्व्यूहेत् । तस्मान्न व्यूहेत् ॥ १२ ॥

किं नु तत्राध्वर्योः—यदुद्गाता च होता च छन्दांसि व्यूहतः । एतद्वाऽअध्वर्युर्व्यूहति ग्रहान्—यदैन्द्रवायवाग्रान्प्रातः सवने गृह्णाति, शुक्राग्रान्माध्यन्दिने सवने, आग्रयणाग्रान् तृतीयसवने ॥ १३ ॥

यदि सोममपहरेयुः विधावतेच्छतेति ब्रूयात् । स यदि विन्दन्ति किमाद्रियेरन् । यद्यु न विन्दन्ति—तत्र प्रायश्चित्तिः क्रियते ॥ १ ॥

द्वयानि वै फाल्गुनानि—लोहितपुष्पाणि चारुणपुष्पाणि च । स यान्यरुणपुष्पाणि फाल्गुनानि

---

इति श्री हरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे पञ्चमेऽध्याये बार्हतं नाम नवमं ब्राह्मणम् ॥ (४ । ९ । ९) ॥

यदि सोममिति । अत्र ब्राह्मणे सोमापहारे तत्प्रतिनिधिनियमो गम्यते । कलशभेदसोमातिरेकयोश्च प्रायश्चित्तमुच्यते । ( यद्यप्यपहारयुक्तस्वराः सोममतिद्रष्टव्यम् ) । स्वीकृतस्य प्रयोगापहारोपपत्तेरक्रीतस्तु सोमविक्रयिणो यदि ह्रियते तेन यजमानस्याभिध्यानादिति विपत्तिनिमित्तां तु कालाहुतिं हुत्वाऽयं क्रेतव्यः 'यदि विन्दन्ति' तमेवोपहृतं न सोमान्तरमपि कुतस्तस्यालाभे प्रायश्चित्तानुपपत्तेः ॥ १ ॥

द्वयानि वा इति 'द्वयानि, द्विभागानि ' फाल्गुनानि ' अर्जुनाख्यानि । कथम् द्विभागानि लोहितपुष्पाणि

---

१—सोमापहरणे विधावतेच्छथेति ब्रूयात् । अध्वर्युः । बहुविषयत्वात्प्रेषणस्येति कर्कः । शत्रुणा सोमापहरणे कृते यजमानः पुरुषान् प्रेष्येत् । त्वरया गच्छत, अन्वेषयत, इति प्रैषद्वयार्थः । अदर्शनेऽरुणपुष्पाण्यर्जुनान्यभिषुणुयात् । अर्जुनशब्दस्तृणवाचकः । शष्पं बालतृणं घासो यवसं तृणमर्जुनमित्यभिधानात् । श्रुतप्रतिनिधिरयं । ततश्च सोमशब्देनोपलक्षणं, इति कर्कः । श्येनहृतं पूतिकानादारानरुणदूर्वाहरितकुशान् पूर्वालाभे पूर्वालाभ उत्तरान् । खदिरादेर्बहुकालीनवृक्षस्य ये वल्लीरूपा अंकुरा उत्पद्यंते ते श्येनहृतमित्युच्यंते । पूतीकाः रोहिततृणं । आदार इतिपूतिकानां नामांतरं । एकां गां दत्वा समाप्य पुनर्यज्ञः । अपहृतसोमद्रव्ये यज्ञे गोशतस्थाने एका गौर्दक्षिणेत्यर्थः । अत्रच गोः संख्यासंबंधः । ततश्च हिरण्यादीनामनिवृत्तिः, इति कर्कः । अवभृथांते वा श्रुतिसामर्थ्यात् । उदयनीयाद्यकृत्वैव अवभृथांत एव वा पुनर्यज्ञो भवतीत्यर्थः । का. श्रौ. सू. २५ । ३००–३०४ ।

१९५०

पुष्पाणि फाल्गुनानि तान्यभिषुणुयादेष वै सोमस्य न्यङ्गो यदरुणपुष्पाणि फाल्गुनानि तस्मादरुणपुष्पाण्यभिषुणुयात् ॥ २ ॥

( ग्र ) यद्यरुणपुष्पाणि न विन्देयुः । श्येनहृतमभिषुणुयाद्यत्र वै गायत्री सोममच्छापतत्तस्या ऽआहरन्त्यै सोमस्यांशुरपतत्तच्छयेनहृतमभवत्तस्माच्छयेनहृतमभिषुणुयात् ॥ ३ ॥

( ग्र ) यदि श्येनहृतं न विन्देयुः । ( र ) आदारानभिषुणुयाद्यत्र वै यज्ञस्य शिरोऽच्छिद्यत तस्य यो रसो व्यप्रुष्यत्तत आदाराः समभवंस्तस्मादादारानभिषुणुयात् ॥ ४ ॥

( ग्र ) यद्यादारान्न विन्देयुः । ( र ) अरुणदूर्वा अभिषुणुयादेष वै सोमस्य न्यङ्गो यदरुणदूर्वास्तस्मादरुणदूर्वा ऽअभिषुणुयात् ॥ ५ ॥

( ग्र ) यद्यरुणदूर्वा न विन्देयुः । ( र ) अपि यानेव कांश्च हरितान्कुशानभिषुणुयात्तत्राप्येकामेव गां दद्यादथावभृथादेवोदेत्य पुनर्दीक्षेत पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिरिति नु सोमापहृतानाम् ॥ ६ ॥

---

तान्यभिषुणुयात् । एष वै सोमस्य न्यङ्गो यदरुणपुष्पाणि फाल्गुनानि । तस्मादरुणपुष्पाण्यभिषुणुयात् ॥ २ ॥

यद्यरुणपुष्पाणि न विन्देयुः श्येनहृतमभिषुणुयात्, यत्र वै गायत्री सोममच्छापतत् । तस्याऽआहरन्त्यै सोमस्यांशुरपतत्, तच्छ्येनहृतमभवत् । तस्माच्छ्येहृतमभिषुणुयात् ॥ ३ ॥

यदि श्येनहृतं न विन्देयुः–आदारानभिषुणुयात् । यत्र वै यज्ञस्य शिरोऽच्छिद्यत–तस्य यो रसो व्यप्रुष्यत्–तत आदाराः समभवन् । तस्मादादारानभिषुणुयात् ॥ ४ ॥

यद्यादारान्न विन्देयुः–अरुणदूर्वा अभिषुणुयात् । एष वै सोमस्य न्यङ्गो–यदरुणदूर्वाः । तस्मादरुणदूर्वा अभिषुणुयात् ॥ ५ ॥

यद्यरुणदूर्वा न विन्देयुः–अपि यानेव कांश्च हरितान्कुशानभिषुणुयात् । तत्राप्येकामेव गां दद्यात् । अथावभृथादेवोदेत्य पुनर्दीक्षेत । पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिः–इति नु सोमापहृतानाम् ॥ ६ ॥

---

वारुणं गौरं गौरपुष्पाणि च तत्रैवं सति यान्यरुणपुष्पाण्यर्जुनतृणानि तान्यभिषुणुयात् । सोमोपहृते यागे ( द्रव्यमसंस्काराभिषवसस्वत्वद्वारेण ) यागसाधनत्वमेव तेषामुच्यते । 'एष वै सोमस्य न्यङ्गः' ( निकृष्टो यो वत्वा सोमः । अव्या न व्यथते तस्मिन्निति न्यङ्गः ) सोमः अरुणपुष्पेष्वर्जुनेषु श्येनेष्ववस्थित इत्यर्थः ॥ २ ॥

यद्यरुणपुष्पाणीति । श्येनहृतं वृक्षेण सोमेन कामवृक्षसंबन्धं ज्ञायते ॥ ३ ॥

यदि श्येनहृतमिति । 'आदाराः' प्रसिद्धानि मध्यदेशतृणानीति अरुणा ( गोयो वा ) दूर्वाङ्कुशदर्भा हरितान् शुष्कानपि यानेव कांश्चिदपि तथान्यप्रकरणानामवस्थानियमः । (प्रस्वः प्रस्तरम) एकां गां दद्यादिति च संबन्धे

( मु ) अथ कलशदिराम् । यदि कलशो दीर्यैतानुलिप्सध्वमिति ब्रूयात्स यद्यनुलभेरन्प्रसृतमात्रं वाऽञ्जलिमात्रं वा तदन्यैरेकधनैरभ्युन्नीय यथाप्रभावं प्रचरेयुर्यद्यु नानुलभेरन्नाग्रयणस्यैव प्रस्कन्द्यान्यैरेकधनैरभ्युन्नीय यथाप्रभावं प्रचरेयुः स यद्यनीतासु दक्षिणासु कलशो दीर्यैत तत्राप्येकामेव गां दद्यादथावभृथादेवोदेत्य पुनर्दीक्षेत पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिरिति नु कलशदिराम् ॥ ७ ॥

---

अथ कलशदिराम् । यदि कलशो दीर्यैत—अनुलिप्सध्वमिति ब्रूयात् । स यद्यनुलभेरन्—प्रसृतमात्रं वाऽञ्जलिमात्रं वा—तदन्यैरेकधनैरभ्युन्नीय—यथाप्रभावं प्रचरेयुः । यद्यु नानुलभेरन्—आग्रयणस्यैव प्रस्कन्द्य, अन्यैरेकधनैरभ्युन्नीय यथाप्रभावं प्रचरेयुः । स यद्यनीतासु दक्षिणासु कलशो दीर्यैत—तत्राप्येकामेव गां दद्यात् । अथावभृथादेवोदेत्य पुनर्दीक्षेत पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिः—इति नु कलशदिराम् ॥ ७ ॥

---

सति गामित्यनुवाद एकैव संख्यायाः शतसंख्यामात्राधिकारिण्याः स्वयमेव गोविषयतोपपत्तेः स्वतन्त्रां गामेकां दद्याद्धिरण्यादि यथाप्राप्तमित्येतदापद्येत । ( एवं शब्दस्वनिस्वानुवाहेन एवाथवा कृते ( द ) प्रसङ्गादेकशब्दाच्च परोसौ स तन्निवृत्तिमेव द्योतयति ) । विपक्षत्वात्तद्द्रव्यान्तरे निवृत्तिस्तेन देयमेवात्र हिरण्यादीति गम्यते । अवभृथादेवेत्युदयनीयामप्यकृत्वेत्यर्थः । पुनर्दीक्षेत पुनर्यज्ञायेत्यभिप्रायः । कुत एतत् । अत्र ह्येतावदेव विधीयते पुनः कुर्यादिति । कुर्याद्यत् कृत्वा यादृशेनैव पुनर्यजेत तथा चाह—पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिरिति । ततश्च तस्मिन्नेव देवयजने तिष्ठेत शालासदोहविर्द्धानविहारे पुनःशब्दात् सर्वत्रापि दीक्षां कुर्यात् । तत्र च पुनर्यज्ञवचनादेव तद्वद्ददाति यत् पूर्वस्मिन्कृतप्रयोगे दास्यन्स्यादिति सोमापहृतानामिति वाक्योपसंहारः । सोमोऽपहृतो येषां यजमानानां ते सोमापहृताः । "वाऽऽहिताग्न्यादिषु" । ( पा. सू. २।२ ३७ ) इति निष्ठायाः परनिपात. । तेषामेतत् कर्म भवति । अथ यद्यपहृते सोममेवान्यं विन्देयुस्ततः कथं न तमभिषुणुयुस्तत्रास्य विशेषोपहृते प्रतिनिधिता स्यात् । चरकाणां तु सोमे लब्धे सोमोपहर्त्रे किंचिद्दत्त्वा सोम एवाभिषोतव्य इति वचनम्॥४—६॥

अथ कलशादिरामिति । 'कलशो' द्रोणकलशः तत्रैव नित्यं कलशशब्दस्य प्रयोगाद् "आजिघ्र कलशे" त्यादौ 'कलशदिराम्' ( इति दारुनिथयदादि ) "कलशो दीर्णो येषां कर्तॄणां ते कलशदिरस्तेषां कर्म वक्ष्यते इति शेषः 'अनुलिप्सध्वम्' अनुलब्धुमिच्छतेत्यर्थः । अन्यैरिति ( पूर्वसवनांता यज्ञे योत्तरसवनार्थं ) ये

---

१—कलशभेदने वषट्कारनिधनं ब्रह्म साम । द्रोणकलशभेद एवेदं प्रायश्चित्तम् । वसतीवर्यैकधनादिकलशभेदे तु अभिमर्शनादि । अनुलिप्सध्वमिति प्रेष्यति । अध्वर्युरिति शेषः । प्रतिप्रस्थात्रादीन् प्रति । कलशभेदने सति स्कन्नं सोमं ग्रहीतुमिच्छतेति प्रैषार्थः । यदनुलभेरंस्तदेकधनैरभ्युन्नीय प्रभावयंतः प्रचरेयुः । अभ्युन्नीय बहुलं कृत्वा प्रभावयंतः द्रोणकलशसंबंधि कर्म कुर्वंतः प्रचरेयुः द्रोणकलशसंबंधि सर्वं सोमकर्म तेन सोमेन कुर्युरित्यर्थः ।.आग्रयणाद्वाऽनुपलभमानेषु पूर्ववत् । अनुपलभमाने सोमे आग्रयणादादाय एकधनैरभ्युन्नीय पूर्ववत् प्रचरेयुरीति सूत्रार्थः । आनीतासु चेद्दक्षिणासु भेदनं पूर्ववद्दत्वा तथैव यज्ञः । आनीतासु परं अदत्तासु । भेदनं द्रोणकलशभेदनं चेत् पूर्ववद्दत्वेति एकस्या गोर्दानं तथैव यज्ञः अवभृथानंतरमेव पुनर्यज्ञः आदित आरभ्य आदीप्य प्रवेशनांत इति सूत्रार्थः । का० श्रौ० सू० २५ । ३०५--३०९ ।

( मु ) अथ सोमातिरिक्तानाम् । यद्यग्निष्टोममतिरिच्येत पूतभृत एवोक्थ्यं गृह्णीयाद्यद्युक्थ्यमतिरिच्येत षोडशिनमुपेयुर्यदि षोडशिनमतिरिच्येत रात्रिमुपेयुर्यदि रात्रिमतिरिच्येताहरुपेयुर्नेत्त्वेवातीरेकोऽस्ति ॥ ८ ॥ इति पञ्चमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ४ । ५ । २ ॥ (५-१० ) ॥

इति चतुर्थकाण्डे पञ्चमोऽध्यायः ॥ ( ४ । ५ ) ॥

---

अथ सोमातिरिक्तानाम् । यद्यग्निष्टोममतिरिच्येत—पूतभृत एवोक्थ्यं गृह्णीयात् । यद्युक्थ्यमतिरिच्येत—षोडशिनमुपेयुः । यदि षोडशिनमतिरिच्येत—रात्रिमुपेयुः । यदि रात्रिमतिरिच्येत—अहरुपेयुः । नेत्त्वेवातीरेकोऽस्ति ॥ ८ ॥

---

स्थापितास्तेभ्यो ' यथाप्रमावं ' प्रमावनं प्रमाव आप्यायनमित्यर्थः । यथा यथा प्रमावस्तथा तथा इत्येतस्मिन्नर्थे समासः । तावतैव सोमेन यथा सर्वेषु प्रमावनं भवति तथा प्रचरेयुः । आग्रयणस्यैकदेशमिति शेषः । प्रस्कन्द्य " स्कन्दिर् गतिशोषणयोः "—( धा. पा. भ्वा. प. १००४ ) । प्रपात्येत्यर्थः । ' यद्यनीतासु ' इत्यनुवादमात्रम् । एकामेवेत्यस्यानेकनिवृत्तिपरत्वात्;(नीतायेव तानेकनिवृत्तेः सत्तवत्)। अथावभृथादित्येतद्यथाप्रमावं प्रचरेयुरित्येतेन संबध्यते । ततश्च नीतास्वपि दक्षिणासु कलशे दीर्णे पुनर्यज्ञः स्यादेव; एवमिहापरेष्वपि द्रष्टव्यम् ॥ ७ ॥

अथ सोमातिरिक्तानामिति । सोमोऽतिरिक्तो येषां ते सोमातिरिक्तास्तेषां कर्म प्रवक्ष्यत इति शेषः । यदि तावदग्निष्टोमसंस्थः प्रक्रान्तः सोमोऽतिरिच्यते न सर्वस्तोत्रोपयुक्तः स्यादित्यर्थः । तत्रोक्थ्यं तदुपयोगाय गृह्णीयात् । तत्रापि विगृह्यमाणे दशचमसा हूयन्ते तेन सर्वः सोमान्वयः उपयोक्ष्यत इत्यभिप्रायः । तत्र चोक्थ्यस्यान्तःपवित्राद्ग्रहणं प्राप्तमत आह-' पूतभृत एवोक्थ्यं गृह्णीयात् ' नान्तःपवित्रादिति । अत्र चोक्थ्यग्रहणचोदनायैव विग्रहाणां स्तोत्रशस्त्रं चमसोन्नयनहोमादि चोदितमित्यभिप्रायः । यदि तु उक्थ्यसंस्थं क्रतुमारब्धं सोमोऽतिरिच्यत्येव ततः षोडशिनं ग्रहमुपगच्छेयुः । तस्यापि हि चमसेष्वतिरिक्तः सोम उपयोक्ष्यते । यदि षोडशिनं क्रतुमारब्धं सोमोऽतिरिच्येत ततोऽतिरात्रमुपगच्छेयुः । रात्रिरिति श्रुत्यन्तर-

---

१–प्रातःसवनाच्चेत्सोमोऽतिरिच्येत तमुन्नीयोपाकरणमस्ति सोमो अयमिति । उक्थ्यग्रहोन्नयनानंतरं चमसेष्वपि पूर्णेषु सोमः पूतभृत्येवावशिष्येत चेत् तमतिरिक्तं सोमं विभागेन दशसु चमसेषून्नीय तृणाभ्यां होतृचमसमुपस्पृश्य अस्ति सोमो अयमिति मंत्रेण स्तोत्रोपाकारणं कुर्यादिति सूत्रार्थः । मरुत्वतीषु गायत्रेण स्तुवीरन् । मरुत्वतीषु मरुल्लिंगास्वृक्षु गायत्रेण साम्ना स्तुवीरन्नुद्गातार इति सूत्रार्थः । ऐंद्रावैष्णव२ होता श२सति । ऐंद्रावैष्णवं शस्त्रं यस्मात्स्तोमादतिरिच्येत स एव कार्यः सर्वत्र । यस्मात्त्रिवृत्पंचदशसप्तदशैकविंशादेः स्तोमात् सोमो अतिरिच्येत स एव स्तोम प्रायश्चित्तार्थे स्तोत्रेऽपि कार्यः । सर्वत्र त्रिष्वपि सवनेषु । इति सूत्रार्थः । माध्यंदिनाच्चेत्पूर्ववदुपाकरणम् । माध्यंदिनसवने अंतिमोक्थ्यचमसोन्नयनानंतरं पूतभृत्सोमातिरेके होमादि दशसु चमसेष्वित्यादिप्रातःसवनवत् कुर्यादिति सूत्रार्थः । बण्महां२असीति बृहतीष्वादित्यवतीषु गौरीवीतेन स्तुवीरन् । गौरीवीतं साम । पूर्ववद्धोता । ऐंद्रावैष्णव२शस्त्रं शंसतित्यर्थः । तृतीयसवनाच्चेद्विष्णोः शिपिविष्टवतीषु गौरीवीतेन । तृतीयसवने अंतिमचमसोन्नयनानंतरं पूतभृति सोमातिरेके तमतिरिक्तं सोमं दशसु चमसेषु विसृज्य अस्ति सोमो अयमिति स्तोत्रोपाकरणं तत उद्गातारः शिपिविष्टविष्णुलिंगासु ऋक्षु गौरीवीतेन स्तुवीरन्निति सूत्रार्थः । एतत्कृत्वोक्थ्यं वा गृह्णीयात् । एतत् प्रायश्चित्तं कृत्वा पूतभृति सोमातिरेके पूतभृत एव उक्थ्यस्थाल्यामुक्थ्यं गृहीत्वा आसाद्य ततो विगृह्णीयाद्वा । इति सूत्रार्थः । उक्थ्याच्चेत्षोडशी कार्यः । उक्थ्यसंस्था चेत् तृतीयसवने सोमोऽतिरिच्येत तदा सोमस्योपयोगाय षोडशी कार्य उक्थ्यसंस्थः प्रारब्धोऽपि निमित्त-

# अथ षष्ठाध्याये प्रथमं ब्राह्मणम् ।

प्रजापतिर्व्वाऽएष यदꣳशुः । सोऽस्यैष आत्मैवात्मा ह्ययं प्रजापतिस्तदस्यैतमात्मानं कुर्व्वन्ति यत्रैतं गृह्णन्ति तस्मिन्नेतान्प्राणान्दधाति यथायथैते प्राणा ग्रहा व्याख्यायन्ते स ह सर्व्वतनूरेव यजमानोऽमुष्मिँल्लोके सम्भवति ॥ १ ॥

---

**अंशुग्रहः ।**

प्रजापतिर्वाऽएष यदंशुः सोऽस्यैष आत्मैव । आत्मा ह्ययं प्रजापतिः । तदस्यैतमात्मानं कुर्वन्ति—यत्रैतं गृह्णन्ति । तस्मिन्नेतान्प्राणान्दधाति । यथा—यथैते प्राणा ग्रहा व्याख्यायन्ते । स ह सर्वतनूरेव यजमानोऽमुष्मिंल्लोके सम्भवति ॥ १ ॥

---

प्रसिद्धानि द्वादशप्रदानानि रात्र्यां पूर्वं तानि गृह्यन्ते तेषां चैकं दशभिर्दशभिश्चमसैस्तथैव च [ ग्रहोद्यांतिरोह्वीय ] चमसप्रदानंसन्धिस्तोत्रमाश्विनं शस्त्रमेनामीदृशीं रात्रिमुपेयुः । यदि तु रात्रिप्रक्रान्त्या सोमोऽतिरिच्येत ततोऽहरूपेषु स्तब्धपूर्वस्मादेवोक्थ्याद्यनुक्रमणादप्तोर्यामात्मकमहरिति गम्यते ततश्च तिरोह्वीयेभ्य ऊर्ध्वं रात्रिपर्याय उत्तमः कार्यः । ( स तु भृष्ट च स्वमास ) प्रायणीये नेत्त्वेव अतीरेकोऽस्तीति सामान्यवचनमेतदुक्तं भवति न क्वचिदपि सोमस्यातिरेकः स्वीकार्यः सर्वस्यातिरिक्तप्रदानविधेर्वृद्ध्या वा श्रुत्यन्तरोक्तेन चोपायेन प्रदेयत्वमिति । ते च श्रुत्यन्तरोक्ताः प्रदानोपायाः प्रातःसवनत्वात्सोमोऽतिरिच्येतेत्युपक्रम्य दर्शिताः सर्वेषु सोमापहारादिषु परमेष्ठ्यादिहोमोऽप्यस्ति कलशभेदने स्कन्नप्रायश्चित्तमित्यपरोविशेषः ॥ ८ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यान्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे पञ्चमेऽध्याये दशमं ब्राह्मणम् ॥ (४-५-१०) इति पञ्चमोऽध्यायः समाप्तः ॥ (४-५) ॥

प्रजापतिर्वा इति । अंशुब्राह्मणमेतत् । प्रजापतिरभिमानी अंशवोऽधिदैवम् । अयं ह्यपो भिधाय प्रागित्येताभ्योऽतिरिक्तस्तूष्णीमुपचर्यते, द्वादशदक्षिणश्चेत्युपपद्यते ' प्रजापतिः ' ' अंशुः ' इति च सोमसम्बन्धाद् ग्रहस्य

---

—वशात् षोडशीसंस्थः कार्यः । इति सूत्रार्थः । षोडशिनश्चेदतिरात्रः । षोडशीसंस्थाकक्रतोः तृतीयसवने सोमातिरेके षोडशीसंस्थः प्रारब्धोऽपि अतिरात्रसंस्थः कार्य इति सूत्रार्थः । अतिरात्राच्चेद्बृहत् । अतिरात्रसंस्था चेत् आश्विनार्थं चमसेषून्नीतेषु पूतभृति सोमातिरेके तदुपयोगाय शिपिविष्टविष्णुलिंगास्वृक्षु बृहत्साम कुर्वीरन्नुद्गातार इति सूत्रार्थः । महाव्रतमेके यथोक्तम् । अतिरात्रातिरिक्ते सोमे महाव्रतं साम । यथोक्तं प्रदेशांतरे । यथा गवामयने उक्तं तथाऽत्र कुर्वंत्येके । इति सूत्रार्थः । अप्तोर्यामो वेति पक्षांतरम् । अतिरात्रे सोमातिरेके अतिरात्रसंस्थः प्रारब्धोऽपि अप्तोर्यामसंस्थाकः कार्यः । अंत्याच्चेत्तस्यैवावृत्तिर्मातिरेकोऽस्तीति श्रुतेः । अप्तोर्यामे सोमातिरेके तस्याप्तोर्यामस्यैवावृत्तिः कार्या । नह्यप्तोर्यामात्परं संस्थांतरमस्ति अतिरिक्तसोमोपयोगाय । इति सूत्रार्थः । पूर्व्वात्सवनादतिरिक्तस्योत्तरे संपावनमेके । सर्वेषु सवनेषु सोमातिरेके पक्षांतरमिदम् । तं निकामयमानोऽभ्यतिरिच्यत इति श्रुतेः । एके आचार्याः पूर्वसवनातिरिक्तसोमं उत्तरे सोमे संपातयंति प्रक्षिपंति कुत एतत् श्रुतेः । इति सूत्रद्वयार्थः । तृतीयसवनाच्चेद्धारियोजनेऽवनीयहोमः अस्मिन् पक्षांतर एव तृतीयसवने । अस्मृताव्नृजीषिभ्रस्याप्स्ववहरणम् । सोमातिरेके उत्तरस्य सवनस्याभावात् कथं क्रियतामितीतिकर्तव्यताकांक्षायां द्रोणकलशस्थं सोमं हारियोजनमध्ये अवनीय प्रक्षिप्य जुहुयात् । हारियोजनमध्ये प्रक्षेपस्यास्मृतौ अतिरिक्तं सोमं ऋजीषमध्ये प्रक्षिप्य अवभृथमज्जनसमये अप्सु अवहरणं प्रक्षेपणं विदधीत इति सूत्रार्थः । इति सौत्राणि सोमातिरेकप्रायश्चित्तानि । का० श्रौ० सू० २५ । ३१०–३२८ ।

१—इह संहितायां 'उपयामगृहीतोऽसीत्यादयोऽदाभ्यग्रहग्रहणमन्त्राः, श्रेणीनां त्वेत्यादयो जलचालनमन्त्राः, उशिकूत्वं देवेत्यादयः सोमे अंशुक्षेपमन्त्राश्चाम्नायन्ते । त इह ब्राह्मणे न सन्ति ।

तदारम्भणवत् । ( ह्य ) यत्रैतं गृह्णन्त्यथैतदनारम्भणमिव यत्रैतं न गृह्णन्ति तस्माद्वाऽअᳯंशुं गृह्णाति ॥ २ ॥

तं वाऽऔदुम्बरेण पात्रेण गृह्णाति । प्रजापतिर्वा ऽएष प्राजापत्य ऽउदुम्बरस्तस्मादौदुम्बरेण पात्रेण गृह्णाति ॥ ३ ॥

---

तद् आरम्भणवद्—यत्रैतं गृह्णन्ति । अथैतदनारम्भणमिव—यत्रैतं न गृह्णन्ति । तस्माद्वाऽअंशुं गृह्णाति ॥ २ ॥

तं वाऽऔदुम्बरेण पात्रेण गृह्णाति । प्रजापतिर्वाऽएषः । प्राजापत्य उदुम्बरः । तस्मादौदुम्बरेण पात्रेण गृह्णाति ॥ ३ ॥

---

नामधेयम् साधकोंऽशुरिति सौऽस्यैष आत्मैवेत्यध्यात्मआत्मा ह्ययं प्रजापतिरिति यत्प्रजापतिः लिङ्गं तत्सर्वेषामेव प्राणिनामन्यो लिङ्गात्मकः यदपि प्रजापतेः शरीरं वैराजं तदपि साधारणं शरीरिणाम् आत्मा सर्वप्राणिनामित्यभिप्रायः । ननु चात्मा ह वाऽस्याग्रयण आत्मा शरीरमित्युक्तं नैष न दोषः । स हि स्थूलोऽयं च निरुक्तो लिङ्गानां भविष्यति एवमपि ध्रुवो निरुक्त आत्मेत्युक्तमेवमपि तद्विशिष्टं लिङ्गमिदं सामान्यमिति दोषः । तत्तस्मिन्नुतावस्थेयं यजमानस्यैवमात्मानं महान्तं कुर्वन्ति ऋत्विजो यत्र चैतं गृह्णन्त्यंशुमस्मिंश्च अंश्वात्मके आत्मनि 'एतान्' ग्रहात्मकान् 'प्राणान्' दधात्यध्वर्युः । कथं ? 'यथायथा एते' उपांश्वादयो ग्रहाः प्राणोदानवागादिरूपेण व्याख्यायन्ते । अथ तथा कृते आत्मनि क्रियमाणस्य यजमानस्यान्येभ्यो यजमानेभ्यः प्रविष्टं भवतीत्यत आह—स हेति । यत्स य उपांशुक्रतौ गृह्यतेंऽशुः 'सर्वतनूः' सर्वं जगत्तनूरस्येति सर्वतनूः सर्वात्मक इत्यर्थः ॥ १ ॥

स यजमानोऽमुष्मिल्लोके सम्भवति तदारम्भः अस्यायं वाऽपरो विशेषः 'यत्र' कर्मणि 'एतम्' अंशुं गृह्णन्ति इत्येतत् 'आरम्भणवत्' आरभ्यते कार्यमनेनेत्यारम्भणम् उपादानं तदेवंभूतं संपृक्तं लिङ्गं संयुक्तं तद्यत्र विद्यते तदारम्भणवत् । एतदुक्तं भवति योंऽशुमता क्रतुना यजेत तस्मै तदुपादानमारम्भतेऽयमेव भवति । यस्तु प्राकृतेन क्रतुना यजते स परक्रीतोपादानेन परिमितकार्यमाप्नोति तत्तदाहैवैतत्कर्मणा प्रज्ञातादौ । 'यत्रैतं न गृह्णन्ति' इति ॥ २ ॥

तं वा औदुम्बरेणेति । प्रजापतिरयमित्येतस्मिन्नर्थे "प्राजापत्यः" तद्धितो ण्यप्रत्ययः । 'उदुम्बरः' 'तस्मात्' सर्वस्मादात्मनः फलनिष्पत्तेः ॥ ३ ॥

---

१–अपो निधायाश्वदाभ्यग्रहणमौदुंबरेण चतुःस्रक्तिना । अ॰शोस्तूष्णीं॰ सर्वत्र । अनुच्छ्वसंश्चेच्छन् । अग्र्यादानाद्य॰ शुनिवपनोपमार्जनसकृत्प्रहरणग्रहणहोमान् हिरण्यं चोपजिघ्रति । का. श्रौ. सू. १२ । ९९–१०२ ।

तं वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयो वाऽइमे लोकास्तदिमानेव लोकांस्तिसृभिराप्नोति प्रजापतिर्वाऽअतीमाँल्लोकांश्चतुर्थस्तत्प्रजापतिमेव चतुर्थ्याऽऽप्नोति तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥ ४ ॥

स वै तूष्णीमेव ग्रावाणमादत्ते । तूष्णीमꣳशून्निवपति तूष्णीमप ऽउपसृजति तूष्णीमुद्यत्य सकृदभिषुणोति तूष्णीमेनमनवानञ्जुहोति तदेनं प्रजापतिं करोति ॥ ५ ॥

( त्यु ) अथास्याꣳ हिरण्यं बद्धं भवति । तदुपजिघ्रति स यदेवात्र क्षणुते वा वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते ॥ ६ ॥

तदु होवाच राम औपतस्विनिः । काममेव प्राण्यात्काममुदन्याद्यद्वै तूष्णीं जुहोति तदेवैनं प्रजापतिं करोतीति ॥ ७ ॥

( त्यु ) अथास्याꣳ हिरण्यं बद्धं भवति । तदुपजिघ्रति स यदेवात्र क्षणुते वा वि वा लिशतेऽमृतमायुर्हिरण्यं तदमृतमायुरात्मन्धत्ते ॥ ८ ॥

---

तं वै चतुःस्रक्तिना पात्रेण गृह्णाति । त्रयो वाऽइमे लोकाः । तदिमानेव लोकांस्तिसृभिराप्नोति । प्रजापतिर्वाऽअतीमांल्लोकांश्चतुर्थः । तत् प्रजापतिमेव चतुर्थ्याऽऽप्नोति । तस्माच्चतुःस्रक्तिना पात्रेण गृह्णाति ॥ ४ ॥

स वै तूष्णीमेव ग्रावाणमादत्ते । तूष्णीमंशून्निवपति । तूष्णीमप उपसृजति । तूष्णीमुद्यत्य, सकृदभिषुणोति । तूष्णीमेनमनवानञ्जुहोति । तदेनं प्रजापतिं करोति ॥ ५ ॥

अथास्यां हिरण्यं बद्धं भवति । तदुपजिघ्रति । स यदेवात्र क्षणुते वा, वि वा लिशते—अमृतमायुर्हिरण्यं, तदमृतमायुरात्मन् धत्ते ॥ ६ ॥

तदु होवाच राम औपतस्विनिः—काममेव प्राण्यात्, काममुदन्यात् । यद्वै तूष्णीं जुहोति; तदेवैनं प्रजापतिं करोतीति ॥ ७ ॥

अथास्यां हिरण्यं बद्धं भवति । तदुपजिघ्रति । स यदेवात्र क्षणुते वा, वि वा लिशते । अमृतमायुर्हिरण्यम् । तदमृतमायुरात्मन्धत्ते ॥ ८ ॥

---

तं वै चतुःस्रक्तिनेति । प्रसन्नप्रायमतः परम् । 'स यदेवात्र क्षणुते वा' ( ह्यनौधवात्मद्विलिङ्गाद्विशेषयति । तद्विरः ) पूर्वब्राह्मणे तत्समर्थयति ॥ ४ ॥ ५ ॥ ६ ॥

उपतस्विनस्यापत्यम् 'औपतस्विनिः' ॥ ७ ॥

अथास्यां हिरण्यमिति । पुनरवघ्राणवचनमुच्छ्वासवचनपक्षस्यानिवृत्त्यर्थम् । ( पूर्वत्राप्यनुच्छ्वासवचनपक्षेऽप्यनिवृत्त्यर्थं पूर्वत्राप्यनुच्छ्वासकृतं दोषं समानार्थकार्यमिव हिरण्यस्यावघ्राणमित्यर्थः )॥ ८ ॥

तदु होवाच बुडिल आश्वतराश्विः । ( रु ) उद्यत्यैव गृह्णीयान्नाभिषुणुयादभिषुण्वन्ति वाऽअन्याभ्यो देवताभ्यस्तदन्यथा ततः करोति यथो चाऽन्याभ्यो देवताभ्योऽथ यदुद्यच्छति तदेवास्याभिषुतं भवतीति ॥ ९॥

तदु होवाच याज्ञवल्क्यः । (ल्क्योऽभ्ये) अभ्येवषुणुयान्न सोम इन्द्रमसुतो ममाद नाब्रह्माणो मघवानꣳ सुतास इत्यृषिणाभ्युऽनूक्तं न वाऽअन्यस्यै कस्यै चनु देवतायै सकृदभिषुणोति तदन्यथा ततः करोति यथो चान्याभ्यो देवताभ्यस्तस्मादभ्येवषुणुयादिति ॥ १० ॥

तस्य द्वादश प्रथमगर्भाः । पष्ठौह्यो दक्षिणा द्वादश वै मासाः संव्वत्सरस्य संव्वत्सरः प्रजापतिः प्रजापतिरꣳशुस्तदेनं प्रजापतिं करोति॥ ११॥
( शतम् ॥ २८०० ॥ )

---

तदु होवाच बुडिल आश्वतराश्विः–उद्यत्यैव गृह्णीयाद्, नाभिषुणुयात् । अभिषुण्वन्ति वाऽअन्याभ्यो देवताभ्यः । तदन्यथा ततः करोति । यथो चान्याभ्यो देवताभ्यः । अथ यदुद्यच्छति–तदेवास्याभिषुतं भवतीति ॥ ९ ॥

तदु होवाच याज्ञवल्क्यः–अभ्येव षुणुयात् । " न सोम इन्द्रमसुतो ममाद, नाब्रह्माणो मघवानं सुतासः " इति ऋषिणाऽभ्यनूक्तम् । न वा अन्यस्यै कस्यै चन देवतायै सकृदभिषुणोति । तद् अन्यथा ततः करोति । यथो चान्याभ्यो देवताभ्यः । तस्मादभ्येव षुणुयादिति ॥ १० ॥

तस्य द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा । द्वादश वै मासाः सम्वत्सरस्य । सम्वत्सरः प्रजापतिः। प्रजापतिरंशुः । तदेनं प्रजापतिं करोति ॥ ११ ॥

---

' बुडिलो ' नाम ब्रह्मवादी अश्वतरोऽश्वोऽस्यास्तीत्यश्वतराश्वः । अश्वतराश्वस्यापत्यम् ' आश्वतराश्विः ' स उवाच–'उद्यत्य' उद्यम्यैव ग्रावाणमधिषवणस्थानामंशूनामुपरि ततोऽशव उत्सृष्टा आपोंऽशुं गृहीत्वा गृह्णीयात् । प्राक्प्रांशूनतिहन्यात् । किं कारणम् । ' अभिषुण्वन्ति ' सोममन्याभ्यो ग्रहदेवताभ्यः प्रजापतेरेकादशीभूताभ्यां न यथा प्रजापतेः सामान्यात्मकस्य, ततश्च यदुद्यम्यानभिषुत्य गृह्णाति तद्यथा ' अन्याभ्यो देवताभ्यो वै ' तथा करोति ततः । अथ ' यदुद्यच्छतीति ' ( तत्प्रातरभिएधाभिषुत्याग्नौ ) जुहोति तं हुत्वा यज्ञमग्नावेव योनौ रेतोंभूतं सिञ्चतीति ( वाधा दभिषवेण ) सर्वत्र भाव्यमित्यभिप्रायः ॥ ९ ॥

तदु होवाचेति । याज्ञवल्क्यस्तु ' अभिषुणुयादेव ' ( संछत्वौघत्यै गृह्णीयादिति ) किं कारणम् । मन्त्रेणानभिषुतस्य सोमस्य देवतर्पणत्वप्रतिषेधात् " न सोम इन्द्रमि " ति मन्त्रः । अस्यार्थः–उत्तरस्मिन्नर्द्धे तच्छब्दः श्रूयते । पूर्वस्मिन् यच्छब्दोऽध्याहार्यः । यमिन्द्रं मघवानमभिषुतः सोमो न मादयति न चाभिषुतः अपि सोमः अब्रह्माणः [ प्रत्यक्र् कल्पयन्ति तस्मै इन्द्राय त्वां स्तुतिं जनयेऽहम् कीदृशमुक्थ्यं यज्ञे योषित् यदुक्थ्यं क्रियमाणं

---

१–उद्यम्य वा प्रहरणम् । का. श्रौ. सू. १२ । १०३ ।

तासां द्वादश गर्भाः । ( स्ता ) ताश्चतुर्विᳬशतिश्चतुर्विᳬशतिर्वै संव्वत्सरस्यार्धमासाः संव्वत्सरः प्रजापतिः प्रजापतिरᳬशुस्तदेनं प्रजापतिं करोति ॥ १२ ॥

तद्ध ह कौकूस्तः । ( श्रु ) चतुर्विᳬशतिमेवैताः प्रथमगर्भाः पष्ठौहीर्दक्षिणा ददावृषभं पञ्चविᳬशᳬ हिरण्यमेतद्ध ह स ददौ ॥ १३ ॥

स वाऽएष न सर्व्वस्यैव ग्रहीतव्यः ।(ऽ) आत्मा ह्यस्यैष यो न्वेव ज्ञातस्तस्य ग्रहीतव्यो यो वाऽस्य प्रियः स्याद्यो वाऽनूचानोऽनूक्तेनैनं प्राप्नुयात् ॥

( त्स ) सहस्रे ग्रहीतव्यः । सर्व्वं वै सहस्रᳬ सर्व्वमेष सर्व्ववेदसे ग्रहीतव्यः सर्व्वं वै सर्व्ववेदसᳬ सर्व्वमेष विश्वजिति सर्व्वपृष्ठे ग्रहीतव्यः सर्व्वं वै विश्वजित्सर्व्वपृष्ठः सर्व्वमेष वाजपेये राजसूये ग्रहीतव्यः सर्व्वᳬ हि तत्सत्रे ग्रहीतव्यः सर्व्वं वै सत्रᳬ सर्व्वमेष एतानि ग्रहणानि ॥ १५ ॥

इति पञ्चमप्रपाठके तृतीयं ब्राह्मणम् ॥ ४-५-३ ॥ ( ६-१ ) ॥

---

तासां द्वादश गर्भाः । ताश्चतुर्विंशतिः । चतुर्विंशतिर्वै संवत्सरस्यार्धमासाः । सम्वत्सरः प्रजापतिः। प्रजापतिरंशुः । तदेनं प्रजापतिं करोति ॥ १२ ॥

तद्ध ह कौकूस्तः—चतुर्विंशतिमेवैताः प्रथमगर्भाः पष्ठौहीर्दक्षिणा ददौ, ऋषभं पञ्चविंशम् । हिरण्यम्, एतद्ध ह स ददौ ॥ १३ ॥

स वाऽएष न सर्वस्यैव ग्रहीतव्यः । आत्मा ह्यस्यैषः । यो न्वेव ज्ञातः—तस्य ग्रहीतव्यः । यो वाऽस्य प्रियः स्याद्, यो वाऽनूचानः । अनूक्तेनैनं प्राप्नुयात् ॥ १४ ॥

सहस्रे ग्रहीतव्यः । सर्वं वै सहस्रम् । सर्वमेषः । सर्ववेदसे ग्रहीतव्यः । सर्वं वै सर्ववेदसम् । सर्वमेषः। विश्वजिति सर्वपृष्ठे ग्रहीतव्यः । सर्वं वै विश्वजित्सर्वपृष्ठः । सर्वमेषः । वाजपेये राजसूये ग्रहीतव्यः । सर्वं हि तत् सत्रे ग्रहीतव्यः । सर्वं वै सत्रम् । सर्वमेषः । एतानि ग्रहणानि ॥ १५ ॥

---

स इन्द्रो जुषति सेवते किमर्थं तादृशं जनयति यथा स तृज्जन्यमानं नवीयो नवतरं शस्त्रं ' शृणवत् ' शृणुयात् तन्मनुष्य इवास्माकं स्वभूतमुक्तं तस्मादुक्थ्यं जनयेयं जुषेयं तृतीयं शृणवद्यथा न इति शेषः । ततः स्वयं नाभिष्ठुलो तमेव प्रजापतिरित्यभिप्रायः । ] यथा चान्याभ्यो देवताभ्यइति कुर्वत अप्राजापत्योऽशुरिति दर्शयति—न सर्वग्रहस्य ग्रहीतव्योंऽशुरित्युपपत्त्या समात्रा ज्ञानादिप्रयोगेष्वेवाविधानात् । यो वाऽनूचानोऽभिजितः शुद्धस्य प्रयोगे ग्रहीतव्य इत्यत आह—सहस्रे इति । सहस्रेण सहस्रदक्षिणः क्रतुर्लभ्यते सहस्रदक्षिणे क्रतौ ग्रहीतव्य

---

१—सत्र १ सहस्र २ सर्व्ववेदस ३ वाजपेय ४ राजसूय ५ विश्वजि ६ त्सर्व्वपृष्ठेषु ७ ग्रहणमवकाश्यश्चेत् । अवकाश्य इति यजमान विशेषणम् । अवकाश्यः ज्ञातः प्रियोऽनूचानश्च । का. श्रौ. सू. १२ । १०४ । २—द्वादश वत्सतर्यो गर्भिण्यो दक्षिणाऽसत्रे । का. श्रौ. सू. १२ । १०५ ।

एतं वाऽएते गच्छन्ति । षड्भिर्मासैरेष एष तपति ये संवत्सरमासते तदुच्यतऽएव सामतो यथैतस्य रूपं क्रियतऽउच्यतऽऋक्तोऽथैतदेव यजुष्टः पुरश्चरणतो यदेतं गृह्णन्त्येतेनोऽएवैनं गच्छन्ति ॥ १ ॥

( न्त्य ) अथातो गृह्णात्येव । ( वो ) उदु त्यं जातवेदसं देवं वहन्ति केतवः ॥ दृशे विश्वाय सूर्यम् ॥ उपयामगृहीतोऽसि सूर्याय त्वा भ्राजायैष ते योनिः सूर्याय त्वा भ्राजायेति ॥ २ ॥

इति पञ्चमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ४-५-४ ॥ ( ६. २. ) ॥

अथातः पश्वयनस्यैव । पश्वेकादशिन्यैवेयात्स ऽआग्नेयं प्रथमं पशुमालभतेऽथ वारुणमथ पुनराग्नेयमेवमेवैतया पश्वेकादशिन्येयात् ॥ १ ॥

---

विषुवदहः ।

एतं वाऽएते गच्छन्ति षड्भिर्मासैः य एष तपति, ये सम्वत्सरमासते । तदुच्यतऽएव सामतो–यथैतस्य रूपं क्रियते उच्यतऽऋक्तः, अथैतदेव यजुष्टः पुरश्चरणतो–यदेतं गृह्णन्ति । एतेनोऽएवैनं गच्छन्ति ॥ १ ॥

अथातो गृह्णात्येव–" उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ उपयामगृहीतोऽसि सूर्याय त्वा भ्राजाय, एष ते योनिः सूर्याय त्वा भ्राजाय "–( वा. सं. ८ । ४१ ) इति ॥ २ ॥

अथातः पश्वयनस्यैव । पश्वेकादशिन्यैवेयात् । स आग्नेयं प्रथमं पशुमालभते, अथ वारुणम्, अथ पुनराग्नेयम्–एवमेवैतया पश्वेकादशिन्येयात् ॥ १ ॥

---

एव । सर्वस्वदक्षिणे च क्रतौ विश्वजिदादिक्रतावेव च । एतानि ग्रहणानीत्युपसंहारः । ततश्च तेषु क्रतुषु ज्ञानादीनां ग्राह्येत्यन्येषामिति ॥ १०–१९ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे षष्ठेऽध्याये प्रथमं ब्राह्मणम् ॥ (४-६-१) ॥

एतं वा इति । सौमिकानां क्रतूनामखिलमेतद्वर्तते इत्यत्रैव गवामयनिके विषुवत्येष ग्रहो विकुर्यात् । विषुवत्येषग्राह्यं विधीयते प्रसन्नाभ्यामेव कण्डिकाभ्याम् ॥ १ ॥ २ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे षष्ठेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ४-६-२ ) ॥

अथातो गवामयन एव सवनीयविकल्पास्त्रयो दृश्यन्ते । अथात इति । ' अथातः ' ' पश्वयनस्य ' विधानमिति शेषः । पशूनामयनं पश्वयनं प्रतिकर्म समेत्यनेनेत्ययनं मार्गः कल्पः । तत्र तावत्प्रथमं कल्पमाह–

( दु ) अथोऽअप्यैन्द्राग्नमेवाहरहः पशुमालभेत । ( ता ) अग्निर्वै सर्व्वा देवता अग्नौ हि सर्व्वाभ्यो देवताभ्यो जुह्वतीन्द्रो वै यज्ञस्य देवता तत्सर्व्वाश्चैवैतद्देवता नापराध्नोति यो च यज्ञस्य देवता तां नापराध्नोति ॥ २ ॥

( त्य ) अथातः स्तोमायनस्यैव । ( वा ) आग्नेयमग्निष्टोमऽआलभेत तद्धि सलोम यदाग्नेयमग्निष्टोमऽआलभेत यद्युक्थ्यः स्यादैन्द्राग्नं द्वितीयमालभेतैन्द्राग्नानि ह्युक्थानि यदि षोडशी स्यादैन्द्रं तृतीयमालभेतेन्द्रो हि षोडशी यद्यतिरात्रः स्यात्सारस्वतं चतुर्थमालभेत व्वाग्वै सरस्वती योषा वै व्वाग्योषा रात्रिस्तद्यथायथं यज्ञक्रतून्व्यावर्तयत्येतानि त्रीण्ययनानि तेषां यतमत्कामयेत तेनेयाद्द्वाऽउपालम्भ्यौ पशू सौर्य्यं द्वितीयं पशुमालभते व्वैषुवतेऽहन्प्राजापत्यं महाव्रते ॥ ३ ॥

इति पञ्चमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ४-५-५ ॥ ( ६. ३. ) ॥

---

अथोऽअप्यैन्द्राग्नमेवाहरहः पशुमालभेत । अग्निर्वै सर्वा देवताः । अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति । इन्द्रो वै यज्ञस्य देवता । तत् सर्वाश्चैवैतद्देवता नापराध्नोति–यो च यज्ञस्य देवता–तां नापराध्नोति ॥ २ ॥

अथातः स्तोमायनस्यैव आग्नेयमग्निष्टोमऽआलभेत । तद्धि सलोम–यदाग्नेयमग्निष्टोमऽआलभेत । यद्युक्थ्यः स्याद्–ऐन्द्राग्नं द्वितीयमालभेत । ऐन्द्राग्नानि ह्युक्थ्यानि । यदि षोडशी स्यात्–ऐन्द्रं

---

'पश्वेकादशिन्या' आग्नेयः, सारस्वतः, सौम्य इत्यादिकया 'इयात्'–गवामयनं स्यात् । एवशब्दो नियमानुवादः । प्रतिदिवसमेव ह्येकादशिनी समस्ता स्तोमयज्ञेन तेन सह विकल्प्यमाना प्राप्ता सर्वेष्वहस्सु नियम्यते पश्वेकादशिन्या एव सर्वत्रैव यागान्तराले कल्पान्तरमाश्रयेदित्यर्थः । न पुनः सकल एव गवामयने कल्पान्तराभावमयं ( थेत इति । ) कल्पान्तरयोरपि वक्ष्यमाणत्वात्, स·आग्नेयमिति पूर्ववाक्यात् प्रत्यहं समस्ता एकादशिनी प्राप्स्यतीत्यनेन विह्यिते स आग्नेयं पशुं प्रथममालभते प्रथममित्यालम्भविशेषणम् । प्रथमेऽहन्याग्नेयमालभत इत्यर्थः । य उत्तरेष्वप्यहःसु सारस्वतीष्वालभ्य उत्तरापेक्षया प्रथमेऽहनि प्रथममालभते । कुत एतत् । उत्तरग्रहापेक्षमेतत् प्राथम्यं पुनरेकस्मिन्नेवाहनि पश्वन्तरापेक्षं स्यात् ॥ १ ॥

अथो अप्यैन्द्राग्नमेवाहरहः इत्युत्तराह्वां श्रवणात् एकस्मिन्नहनि वचनमनर्थकमेव स्यात् । अथ पुनराग्नेयमिति वाऽऽवृत्तिरेकस्मिन्प्राप्ते विधीयते ततस्तस्माद्विहारवाक्यमेवैतत् । ततश्चाथ सारस्वतमथ पौष्णमथ सौम्यमित्येवं

---

१–यथोच्छ्रितं सवनीयाना ११ लभत एकतृणेनोपाकृत्याग्नेय १ सारस्वत २ सौम्य ३ पौष्ण ४ बार्हस्पत्य ५ वैश्वदे ६ वैंद्र ७ मारुतैं ८ द्राग्न ९ सावित्र १० वारुणान् ११ । एकयूपे पश्वेकादशिन्यामाग्नेयं नियुज्य तस्मिंस्तस्मिन्नितरानुदीचः । एकयूपे यदा-पश्वेकादशिनी भवति तदा एवं नियोजनं कर्तव्यं इति सूत्रार्थः । आग्नेयः प्रथमो गच्छत्यन्वारब्धोऽनुपूर्व्या इतरे । प्रतिप्रस्थात्रान्वारब्ध आग्नेयः । इतरे सारस्वतादयः अनन्वारब्धाः । आनुपूर्व्याः क्रमेणानुगामिनः । संज्ञपनार्थं पशुनयनक्रमोऽयम् । स्तोमायने तु युगपद्गमनम् । दक्षिणं च निघ्नंत्येनमुत्तरमुत्तरमितरान् । पशुसंज्ञपने क्रमोऽयम् । एनमाग्नेयम् । का. श्रौ. सू. ८ । २२९–२३२ ।

अथातो महाव्रतीयस्यैव । प्रजापतेर्ह वै प्रजाः ससृजानस्य पर्व्वाणि विसस्रꣳसुः स विस्रस्तैः पर्व्वभिर्न शशाक सꣳहातुं ततो देवाऽअर्चन्तः श्राम्यन्तश्चेरुस्तऽएतं महाव्रतीयं ददृशुस्तमस्माऽअगृह्णंस्तेनास्य पर्व्वाणि समदधुः ॥ १ ॥

स सꣳहितैः पर्व्वभिः । ( रि ) इदमन्नाद्यमभ्युत्तस्थौ यदिदं प्रजापतेरन्नाद्यं यद्वै मनुष्याणामशनं तद्देवानां व्रतं महद्वाऽइदं व्रतमभूद्येनायꣳ समहास्तेति तस्मान्महाव्रतीयो नाम ॥ २ ॥

---

तृतीयमालभेत । इन्द्रो हि षोडशी । यद्यतिरात्रः स्यात्—सारस्वतं चतुर्थमालभेत । वाग्वै सरस्वती । योषा वै वाक्, योषा रात्रिः । तद् यथायथं यज्ञक्रतून्व्यावर्तयति । एतानि त्रीण्ययनानि । तेषां यतमत्कामयेत—तेनेयात् । द्वाऽउपालम्भ्यौ पशू । सौर्यं द्वितीयं पशुमालभते वैषुवतेऽहन्, प्राजापत्यं महाव्रते ॥ ३ ॥

अथातो महाव्रतीयस्यैव । प्रजापतेर्ह वै प्रजाः ससृजानस्य पर्वाणि विसस्रंसुः । स विस्रस्तैः पर्वभिर्न शशाक संहातुम् । ततो देवा अर्चन्तः श्राम्यन्तश्चेरुः । त एतं महाव्रतीयं ददृशुः । तमस्माऽअगृह्णन् । तेनास्य पर्वाणि समदधुः ॥ १ ॥

स संहितैः पर्वभिः इदमन्नाद्यमभ्युत्तस्थौ—यदिदं प्रजापतेरन्नाद्यम् । यद्वै मनुष्याणामशनम्—तद्देवानां व्रतम् । महद्वाऽइदं व्रतमभूद् येनायं समहास्तेति । तस्मान्महाव्रतीयो नाम ॥ २ ॥

---

एतया विहृतया पश्वेकादशिन्या गच्छेद्यावदृतुसत्रस्येति । अथो अप्येताभ्यां कण्डिकाभ्यामपरौ कल्पावुच्येते । ( उपचया या ) स्वस्मिन्सवनीये सत्यालभ्यन्त इत्युपालभ्यन्ते वैषुवतेऽहन्निति यद्वयोः संवत्सरार्द्धयोर्वसन्तशरदोश्चान्तरालं स विषुवानेवं याग उच्यते आत्मा विषुवानित्यादौ महाव्रतमुपान्त्यमहर्गवामयनस्यं ॥ २॥३ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे षष्ठेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ४–६–३ ) ॥

अथात इति महाव्रतीयस्य ब्राह्मणमेतत् । महच्च तद्व्रतं चेति महाव्रतम् उपान्त्यं गवामयनेऽहस्तत्र भवो महाव्रतीयः " गहादिभ्यश्च " ( पा. सू. ४ । २ । १३८ ) इति च्छप्रत्ययः । 'ससृजानस्य' सृष्टवतः पर्वाणि विस्रस्तानि 'स विस्रस्तैः' 'पर्वभिर्न' शक्तवान् 'संहातुं' " ओहाङ्गतौ "—( धा. पा. जु. आ. ७ ) संगृहीतपर्वभिः 'त एतं' महाव्रतीयमेव नाम्ना ग्रहं दृष्टवन्तः । कुत एतत् । ग्रहमित्युत्तरत्र 'तमस्मै अगृह्णन्

---

१–आग्नेयोऽग्निष्टोमे सवनीयः पशुः । ऐंद्राग्नश्चोक्थ्ये द्वितीयः । ऐंद्रो वृष्णिः षोडशिनि तृतीयः । सरस्वत्यै चतुर्थोऽतिरात्रे मेषी वा । एतत् स्तोमायनं । का, श्रौ, सू. ९ । १७३–१७५ । २–ऐंद्राग्नः सवनीयोऽन्वहम् । द्वादशस्वहःसु इमानि त्रीणि पक्षांतराणि । स्तोमायनं वा । एकादशिना वा विहृताः । द्वादश आद्यः । एकादशिना विहृता इति तृतीयपक्षे इमानि पक्षांतराणि । सर्व्वसमासोवा । ऐंद्राग्नो वा । यावच्छेषमुत्तरेषु । उत्तरेषु अहर्गणेषु । का. श्रौ. सू. । १२ । १२४–१२९ । ३–अग्निष्टोमो विषुवान् । प्रातरनुवाकः संधिवेलायामुदितं यथोक्तं वा । सौर्य उपालंभ्यः । उदुत्यमिति ग्रहग्रहणमतिग्राह्यवद्भक्षवर्जम् । का. श्रौ. सू. १३ । २२–२५ । षष्ठे मासे त्रयोऽभिप्लवाः गो आयुषी दशरात्रो महाव्रतमग्निष्टोमः । का. श्रौ. सू. १३ । २९ ।

( मै ) एवं वाऽएते भवन्ति । ये संव्वत्सरमासते यथैव तत्प्रजापतिः प्रजाः ससृजानऽ आसीत्स यथैव तत्प्रजापतिः संव्वत्सरेऽन्नाद्यमभ्युदतिष्ठदेवमेवैतऽएतत्संव्वत्सरेऽन्नाद्यमभ्युत्तिष्ठन्ति येषामेवं विदुषामेतं ग्रहं गृह्णन्ति ॥ ३ ॥

तं वाऽइन्द्रायैव विमृधे गृह्णीयात् । ( त्स ) सर्व्वा वै तेषां मृधो हता भवन्ति सर्व्वं जितं ये संव्वत्सरमासते तस्माद्विमृधे वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ॥ योऽअस्माँ२॥ऽअभिदासत्यधरं गमया तमः ॥ उपयामगृहीतोऽसीन्द्राय त्वा विमृधऽएष ते योनिरिन्द्राय त्वा विमृधऽइति ॥ ४ ॥

( त्यु ) अथो विश्वकर्मणे । विश्वं वै तेषां कर्म कृतꣳ सर्व्वं जितं भवति ये संवत्सरमासते तस्माद्विश्वकर्मणे वाचस्पतिं विश्वकर्माणमूतये

---

एवं वाऽएते भवन्ति—ये सम्वत्सरमासते । यथैव तत्प्रजापतिः प्रजाः ससृजान आसीत्—स यथैव तत्प्रजापतिः सम्वत्सरेऽन्नाद्यमभ्युदतिष्ठद्—एवमेवैतऽएतत्सम्वत्सरेऽन्नाद्यमभ्युत्तिष्ठन्ति—येषामेवं विदुषामेतं ग्रहं गृह्णन्ति ॥ ३ ॥

तं वाऽइन्द्रायैव विमृधे गृह्णीयात् । सर्वा वै तेषां मृधो हता भवन्ति, सर्वं जितम्—ये सम्वत्सरमासते । तस्माद्विमृधे " वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । योऽअस्माँ २॥ ऽअभिदासति, अधरं गमया तमः । उपयामगृहीतोऽसीन्द्राय त्वा विमृधे; एष ते योनिरिन्द्राय त्वा विमृधे "—( वा. सं. ८ । ४४ ) इति ॥ ४ ॥

अथो विश्वकर्मणे । विश्वं वै तेषां कर्म कृतं, सर्वं जितं भवति—ये सम्वत्सरमासते । तस्माद्विश्वकर्मणे—" वाचस्पतिं विश्वकर्माणमूतये मनोजुवं वाजेऽअद्या हुवेम । स नो विश्वानि

---

इत्यादिग्रहणवचनादिना चरतः प्रजापतेः प्राणस्यान्नार्थमिदमिति[2] चतुर्थ्यन्ते शब्दे अस्मै अन्नाद्यायाभ्युत्तस्थावित्यर्थः । यद्वै मनुष्याणामिति व्रतशब्दस्यान्नवाचित्वं व्याख्यातं ' महद्वा इदं प्रजापतेः ' व्रतमन्नं जातं ' येन ' अन्नेन ' अयं ' ' समहास्त ' संगतः स्वान्नैरित्येव यस्मादनिरुक्तं तस्मान्महाव्रतं नामेति वक्तव्ये ' महाव्रतीयो नाम ' इति ब्रुवन् स्वार्थिकमेव छप्रत्ययं दर्शयति एतत्समानि वचनानि प्रदर्शनार्थम् ॥ १ ॥ २ ॥

एवं वा एत इति । प्रसन्नो ब्राह्मणशेषः ॥ ३—६ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे षष्ठेऽध्याये महाव्रतीयं नाम चतुर्थं ब्राह्मणम् ॥ ( ४-६-४ ) ॥

---

१—ग्रहं गृह्णाति वि न इंद्र वाचस्पतिं विश्वकर्मन्निति वा । उप मा यंतुमज्जयस्सनीडा उप मा जुक्षरुप मा मनीषा प्रियामहं तम्वं पश्यमानो मयि रमो देवानां तेजसे ब्रह्मवर्चसायेति भक्षणं यजमानैः । गृहीतस्य विधिरयम् । का० श्रौ० सू० १३।३१।३२।

२—गवामयनस्य नवममहः; महाव्रतं । प्राजापत्य उपालंभ्यः । का. श्रौ, सू, १३ । ३० ।

मनोजुवं व्वाजेऽअद्या हुवेम ॥ स नो व्विश्वानि हवनानि जोषद्विश्वशम्भूरवसे साधुकर्मा ॥ उपयामगृहीतोऽसीन्द्राय त्वा व्विश्वकर्मणऽएष ते योनिरिन्द्राय त्वा व्विश्वकर्मण इति ॥ ५ ॥

यद्युऽऐन्द्रीं व्वैश्वकर्मणीं व्विद्यात् । ( त्त ) तयैव गृह्णीयाद्विश्वकर्मन्हविषा व्वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् ॥ तस्मै व्विशः समनमन्त पूर्व्वीरयमुग्रो व्विहव्यो यथासत् ॥ उपयामगृहीतोऽसीन्द्राय त्वा व्विश्वकर्मणऽएष ते योनिरिन्द्राय त्वा व्विश्वकर्मणऽइति ॥ ६ ॥

इति पञ्चमप्रपाठके षष्ठं ब्राह्मणम् ॥ ४–५–६ ॥ ( ६. ४. ) ॥

एष वै ग्रहः । (हो) य एष तपति येनेमाः सर्व्वाः प्रजा गृहीतास्तस्मादाहुर्ग्रहान्गृह्णीम इति चरन्ति ग्रहगृहीताः सन्त इति ॥ १ ॥

व्वागेव ग्रहः । ( हो ) व्वाचा हीदꣳ सर्व्वं गृहीतं किमु तद्यद्वाग्ग्रहः ॥ २ ॥

---

हवनानि जोषद्; विश्वशम्भूरवसे साधुकर्मा । उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मणे; एष ते योनिरिन्द्राय त्वा विश्वकर्मणे--( वा. सं. ८ । ४५ ) इति ॥ ५ ॥

यद्यु ऐन्द्रीं वैश्वकर्मणीं विद्यात् तयैव गृह्णीयात् । " विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् । तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथासत् । उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मणे; एष ते योनिरिन्द्राय त्वा विश्वकर्मणे "–( वा. सं. ८ । ४६ ) इति ॥ ६ ॥

## ग्रहोपासनाब्राह्मणम् ।

एष वै ग्रहो य एष तपति, येनेमाः सर्वाः प्रजा गृहीताः । तस्मादाहुः–ग्रहान्गृह्णीम इति । चरन्ति ग्रहगृहीताः सन्त इति ॥ १ ॥

वागेव ग्रहः । वाचा हीदं सर्वं गृहीतम् । किमु तद्–यद्वाग्ग्रहः ॥ २ ॥

---

एष वै ग्रह इति । [ सूर्यात्मकस्य व्याधिविं (?) कस्य ] ग्रहस्याभिचारिकस्यैवमुपस्थानमत्राभिधीयते । ग्रहाधिकारात्प्रसङ्गाचाध्यात्मिकाधिभौतिका ग्रहाः प्रदर्श्यन्ते । ग्रहशब्दस्य निर्वचनान्तरमुच्यते । तत्रोपस्थेयं तावद्ग्रहमाह–एष वै ग्रह इति । येनेमाः सर्वाः प्रजा गृहीता इति सौरेण तेजसा सर्वे एव देहा अधिष्ठिताः । यथोक्तं तस्येमाः सर्वाः प्रजा रश्मिभिः प्राणेष्वभिहिता " तस्य हैतस्य हृदये पादावतिहतौ तदेषा सविता " विभक्तिभ्यः प्रजाभ्यो विभजतीति वा । येनेति कर्तरि तृतीया ततश्च गृह्णातीति ग्रह इति कर्तरि एव कारके "ग्रहवृदनिश्चिगमश्च" इति ( पा. सू. ३-३-५८ ) अपूप्रत्ययं दर्शयति–यस्माचैष आदित्यो ग्रहः 'स्तस्मादाहुः' ब्रह्मविदो ' ग्रहान् गृह्णीम इति ' एवं मन्यमाना ऋत्विजः ' चरन्ति ग्रहेणादित्येन गृहीताः ' सन्तः ' इत्यादि स्वस्वावकाशे " स उद्यन्तं चादित्यमुपतिष्ठते " एतत्पठितव्यं व्यवहर्तृभिस्तद्वत्सार्यस्यैवादित्यस्य ग्रहस्य ग्रह एव-

(ह्वो) नामैव ग्रहः । (ह्वो) नाम्ना हीदँ सर्व्वं गृहीतं किमु तद्यन्नाम ग्रहो बहूनां वै नामानि विद्माथ नस्तेन ते न गृहीता भवन्ति ॥ ३ ॥

(न्त्यु) अन्नमेव ग्रहः । (ह्वोऽन्ने) अन्नेन हीदँ सर्व्वं गृहीतं तस्माद्यावन्तो नोऽशनमश्नन्ति ते नः सर्व्वे गृहीता भवन्त्येषैव स्थितिः ॥ ४ ॥

स य एष सोमग्रहः । (ह्वोऽन्नं) अन्नं वाऽएष स यस्यै देवतायाऽएतं ग्रहं गृह्णाति साऽस्मै देवतैतेन ग्रहेण गृहीता तं कामँ समर्धयति यत्काम्या

---

नामैव ग्रहः। नाम्ना हीदं सर्वं गृहीतम् । किमु तद् यन्नाम ग्रहः । बहूनां वै नामानि विद्माथ नस्तेन ते न गृहीता भवन्ति ॥ ३ ॥

अन्नमेव ग्रहः । अन्नेन हीदं सर्वं गृहीतम् । तस्माद् यावन्तो नोऽशनमश्नन्ति ते नः सर्वे गृहीता भवन्ति । एषैव स्थितिः ॥ ४ ॥

स य एष सोमग्रहः । अन्नं वाऽएष स यस्यै देवतायाऽएतं ग्रहं गृह्णाति साऽस्मै देवतैतेन ग्रहेण गृहीता तं कामं समर्धयति–यत्काम्या गृह्णाति । स उद्यन्तं वाऽऽदित्यमुपतिष्ठते, अस्तं यन्तं वा–

---

परमागलामायान्यग्रहानुपन्यस्य निराकरोति वागेवेति। आध्यात्मिकया 'वाचा हि' इति करणे तृतीया । वाचा स यथाऽऽदित्यरूपे व्यावहारिकम् इदं सर्वं व्यवहारजातं परिगृहीतं व्यवहर्तृभिर्न हि यद्येन यद्भाषितं तदतिक्रमितुमर्हति किमु तद्यद्वाक् इति दूषणं किंशब्दे द्रष्टव्यम् । यदेतद्वाग्ग्रह इत्येतत्किमिति मिथ्यैतदित्यर्थः । कथं तत्रेदं द्रष्टव्यम् । नहि वचने सर्वे गृह्यन्तेऽतिक्रमस्य निदर्शनात्ततश्चान्यदेवता तत्र भूयादिति नियामकं न वाङ्मात्रमिति ॥ १ ॥ २ ॥

नामैव ग्रह इति । 'नाम्ना' करणभूतेन व्यवहर्तृभिरिदं सर्वं नामजातं परिगृहीतं बुद्ध्या चानीय इत्यभिप्रायः । 'किमु तद्यत् वाङ्नाम' इति पूर्वपक्षः । 'बहूनां वै' अर्थानामिन्द्रादीनां मघवानिन्द्र इत्यादीनि 'विद्म' जानीम "विदो लटो वा"–(पा. सू. ३ । ४ । ८३) इति मसो मादेशः । अथ तथापि 'नः' अस्माकं 'ते' इन्द्रादयो 'न' 'तेन' नाम्ना 'गृहीता' बद्धा इव वशवर्त्तिनो भवन्ति। वशवर्तित्वं च ग्रहणं न स्मरणमात्रमित्यभिप्रायः ॥ ३ ॥

'अन्नमेव' 'अन्नेन हि' करणभूतेन दातृभिः 'इदं' 'सर्वं' सर्वजातीयकं वशीकृतम् । यस्मात् 'यावन्तः' प्राणिनोऽस्माकमन्नम् 'अश्नन्ति' 'ते' अस्माकं 'सर्वे' 'गृहीता' वश्या 'भवन्ति' इति 'एषैव' अत्र 'स्थितिः' ॥ ४ ॥

स य एष इति । अत्र ग्रहणमाधिभौतिकमाधियज्ञिके सोमग्रहमुपसंहरति । ततश्चोपस्थानदाद् ग्रहणेनायं

---

१–यावान् बह्वशनस्तावान्मनुष्योऽन्नग्रहगृहीतो भवति । तत्र ऋत्विक् यजमानो वा ज्योतिष्टोमादिक्रतुषु बह्वशनेन तदार्त्याऽऽर्तश्चेत् । तदा यस्मिन्ग्रहे स आर्तो भवति । स ग्रहो यद्देवत्यः । सा देवता तदार्तिग्रहस्य । तां देवतां एष वै ग्रह इत्येवं विधयोपासनयोपासीत । उपस्थानमपि कुर्यात् । तदुपस्थानं 'उद्यंतं अस्तं यंतं वा आदित्यं ग्रहोऽस्यमुमनयाऽऽर्त्या गृहाणासावदो मां प्रापत्' इति (५) मंत्रेणोपतिष्ठेत । एवंविधं काम्यमुक्तमत्र ब्राह्मणे । इदं काम्यमाभिचारिकमप्युक्तमत्र । यं द्विष्यादसावस्मै कामो समर्द्धीति वेत्यनेन । अदःशब्दस्थाने शत्रुनामादेशः । सूत्रानुपनिबद्धमिदम् ।

गृह्णाति स उद्यन्तं वाऽऽदित्यमुपतिष्ठतेऽस्तं यन्तं वा ग्रहोऽस्यमुमनयार्त्या गृहाणासावदो मा प्रापदिति यं द्विष्यादसावस्मै कामो मा समर्धीति वा न हैवास्मै स कामः समृध्यते यस्माऽएवमुपतिष्ठते ॥ ९ ॥

इति पञ्चमप्रपाठके सप्तमं ब्राह्मणम् ॥ ४–९–७ ॥ ( ६–५ ) ॥

देवा ह वै यज्ञं तन्वानाः । (स्ते) तेऽसुररक्षसेभ्य आसङ्गाद्बिभयांचक्रुस्ते होचुः को नो दक्षिणत आसिष्यतेऽथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरिष्याम इति ॥ १ ॥

ते होचुः । (यं) य एव नो वीर्यवत्तमः स दक्षिणत आस्तामथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरिष्याम इति ॥ २ ॥

ते होचुः । ( रि ) इन्द्रो वै नो वीर्यवत्तम ऽइन्द्रो दक्षिणतऽआस्तामथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरिष्याम इति ॥ ३ ॥

---

" ग्रहोऽसि अमुमनयार्त्या गृहाण असावदो मा प्रापत् " इति । यं द्विष्यात् असावस्मै कामो मा समर्धीति वा । न हैवास्मै स कामः समृध्यते--यस्माऽएवमुपतिष्ठते ॥ ९ ॥

**यज्ञोपचारः।**

देवा ह वै यज्ञं तन्वानास्तेऽसुररक्षसेभ्य आसङ्गाद्बिभयाञ्चक्रुः । ते होचुः—को नो दक्षिणत आसिष्यते, अथाभयेऽनाष्ट्रेऽउत्तरतो यज्ञमुपचरिष्याम इति ॥ १ ॥

ते होचुः—य एव नो वीर्यवत्तमः स दक्षिणत आस्ताम्, अथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरिष्याम इति ॥ २ ॥

ते होचुः—इन्द्रो वै नो वीर्यवत्तमः । इन्द्रो दक्षिणत आस्ताम्, अथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरिष्याम इति ॥ ३ ॥

---

साधारणो वादो द्रष्टव्यः । उपासनकमुक्त्वा तदुपस्थानमाह—स उद्यन्तं वेति । हविर्यज्ञादिदं विदुषः इत्यन्नग्रहणमाधिदैविकम् । आधियज्ञियं सोममुपसंहरति । उपस्थानमत्र च ग्रहोऽस्यमुमनयार्त्या गृहाणेत्येतया । ( उत् ऊर्ध्वं शेषद्वयमुपनयेभ्यः सविकल्पः।)अमुमनयेत्यभिवरणीयपात्र्यां ग्राहयित्वा ततः कर्मविघात आह—'अमुम्'इति इष्टनिर्देशः । ' अनया ' इति ज्वराद्यार्तिविशेषनिर्देशः । ' असौ ' इति द्वेष्यस्य च निर्देशः । एवं ' अदः ' इति यद्द्वेष्यः कामयते तन्निर्देशः । ' असौ ' (स्वदि स्वत्ता अहो ग्रामादीयन्ते तन्मा प्रापत् । ) ' यं द्विष्यात् ' तस्यैव नामादिशेत्; अथवा ' असौ कामो ' ग्रहादिकः ' अस्मै ' खदिरवर्मे ' मा समार्धि ' इत्येवं ब्रूयात् ॥ ९ ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे षष्ठेऽध्याये ग्रहोपासनं नाम पञ्चमं ब्राह्मणम् ॥ ( ४–६–९ ) ॥

देवा ह वा इति । ब्रह्मिष्ठो ब्रह्मा दक्षिणत आसीत स च प्रस्तोत्रा मन्त्रजपं जपित्वाऽनुजानीयादित्येतावद्ब्रह्मत्वमत्रोच्यते तत्प्रसङ्गाच्च ब्राह्मणाच्छंसिनो वरणम्। मैत्रावरुणजपश्च।प्रसन्नप्रायाश्चैताश्चतस्रः कण्डिकाः॥ १–४॥

ते हेन्द्रमूचुः । (स्त्वं) त्वंवै नो व्वीर्यवत्तमोऽसि त्वं दक्षिणत आस्वाथा-भयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरिष्याम इति ॥ ४ ॥

स होवाच । किं मे ततः स्यादिति ब्राह्मणाच्छꣳस्या ते ब्रह्मसाम तऽइति तस्माद्ब्राह्मणाच्छꣳसिनं प्रवृणीतऽइन्द्रो ब्रह्मा ब्राह्मणादिती-न्द्रस्य ह्येषा स इन्द्रो दक्षिणत ऽआस्ताथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपा चरंस्तस्माद्य एव व्वीर्यवत्तमः स्यात्स दक्षिणत ऽआसीताथाभये ऽनाष्ट्र-ऽउत्तरतो यज्ञमुपचरेयुर्यो वै ब्राह्मणानामनूचानतमः सऽ एषां व्वीर्यव-त्तमोऽथ यदिदं य एव कश्च ब्रह्मा भवति कविंत्तूष्णीमास्तऽइति तस्माद्य

---

ते हेन्द्रमूचुः–त्वं वै नो वीर्यवत्तमोऽसि । त्वं दक्षिणत आस्व । अथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपच-रिष्याम इति ॥ ४ ॥

स होवाच–किं मे ततः स्यादिति । ब्राह्मणाच्छंस्या ते ब्रह्मसाम तऽइति । तस्माद्ब्राह्मणाच्छं-सिनं प्रवृणीते । इन्द्रो ब्रह्मा ब्राह्मणादिति इन्द्रस्य ह्येषा । स इन्द्रो दक्षिणत आस्त, अथा-भयेऽनाष्ट्रऽउत्तरतो यज्ञमुपाचरन् । तस्माद्य एव वीर्यवत्तमः स्यात् स दक्षिणत आसीत । अथाभयेऽनाष्ट्र-ऽउत्तरतो यज्ञमुपचरेयुः । यो वै ब्राह्मणानामनूचानतमः स एषां वीर्यवत्तमः । अथ यदिदं य एव कश्च

---

स होवाचेति । इन्द्रो दक्षिणतः स्थाप्यमानो देवानुवाच ' किं ' मम फलं ' ततः स्यादिति ' देवास्तु तमिन्द्रमूचुर्ब्राह्मणाच्छंस्यानाम होत्रा प्रथमो ब्रह्मपुरुषः सो ( ? ) ततः प्रत्यात्मिका यावत्किंचित्सा करिष्यति शस्त्रं वा आज्यं वा तत्सर्वं तव भविष्यतीत्यर्थः । न केवलं सा किं तर्हि ' ब्रह्मसाम ' अपरं तव भविष्यति माध्यन्दिने सवने ब्रह्मणाच्छंसिनः शस्त्रं स्तोत्रं तद्ब्रह्मसाम तदपि तव एवं देवा ऊचुस्तस्मादवृत्वाऽप्यध्वर्युर्ऋतु-ग्रहयाज्यर्थमन्यासु होत्रासु व्रियमाणासु इममपि ब्राह्मणाच्छंसिनं प्रवृतमेव स तवैव रूपं यत्ते वृणीते इन्द्रो ब्रह्मेत्यनेन मन्त्रेण इन्द्रस्य ह्येषा स्वभूता ब्राह्मणाच्छंस्या ( दौवैव व दंत त्वादिति ) ब्रह्मा इन्द्र इति सामानाधि-करण्ये क्रतुः । अत्र च ब्राह्मणाच्छंस्येति प्रकृते तस्माद्ब्राह्मणाच्छंसिनमिति प्रयोगाद् ब्राह्मणाच्छंस्येव ब्राह्मणाच्छं-स्याशब्देनोच्यत इति अनुमन्त्रस्यार्थं दर्शयामः । ' इन्द्रो ' देवराजः ब्रह्मास्तीति शेषः । कुत एतत् प्रवृणीत इति वचनाद्वरणं हि साम्ना कर्मणि प्रवर्तते । तत्वाध्येषणा या शिष्यस्यैव भवति स एव शेषः कथं पुनरिन्द्रो (?)

---

१.–होतृनामग्रहणांतं कृत्वेतरांश्चाश्राव्याश्राव्य प्रवृणीते यथालिंगम् । होतुरनभिहितमपि इंद्रं होत्रात् इति वरिष्ठम् । इति कर्कः । अश्विनाऽध्वर्यू आध्वर्यवात् । अत्र चाध्वर्योर्द्वितीयः प्रतिप्रस्थाता । वरणं च नेष्टा करोतीति कर्कः । मित्रावरुणौ प्रशास्तारौ प्राशास्त्रात् । अत्र द्वितीयोऽच्छावाकः । इति कर्कः । इंद्रो ब्रह्मा ब्राह्मणादिति ब्राह्मणाच्छꣳसिनम् । ब्रह्मणो वरणमपीति कर्कः । ब्राह्मणाच्छंसिनो ब्राह्मणाच्छंस्या इति नामांतरं । ब्राह्मणाच्छंसी अनुब्रह्मा ऋत्विगुच्यते । उपब्रह्मेत्यर्थः । अस्मादुपब्रह्मवरणलिंगा-दन्यत्रापि क्रियमाणं उपर्त्विजां वरणं वैधमिति बोद्धव्यम् । मरुतः पोत्रात् । ग्रावो नेष्ट्रात् । अग्निराग्नीध्रात् । अग्निर्हि दैवीनामिति यजमानम् । वृणीते । का. श्रौ. सू. ९ । १७६–१८० ।

एव व्वीर्यवत्तमः स्यात्स दक्षिणत ऽआसीताथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरेयुस्तस्माद्ब्राह्मणा दक्षिणत ऽआसतेऽथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरन्ति ॥ ९ ॥

---

ब्रह्मा भवति—कुवित्तूष्णीमास्तऽइति । तस्माद्य एव वीर्यवत्तमः स्यात् । स दक्षिणत आसीत अथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरेयुः । तस्माद्ब्राह्मणा दक्षिणत आसते, अथाभयेऽनाष्ट्रऽउत्तरतो यज्ञमुपचरन्ति ॥ ९ ॥

---

साम्नादिष्वित्यत आह--ब्राह्मणात् कर्मणो हेतोः ब्रह्मा ऋत्विक् कतमः ब्राह्मणस्तस्माद्धेतोः ब्राह्मणमधितद्ब्रह्मत्वं कुर्वन्निन्द्रो ब्रह्मास्त्वित्यर्थः । द्वे च सतीन्द्रोऽत्र व्रियमाणो ब्रह्मा न भवति कथं स ऋत्विक् (१) नैष दोषः । नैवानुऋत्विग्वरणेनायं मानुषः स्यात्प्रयोगादावेव वृतत्वात् । एवमपि ब्रह्मणो वरणं मन्त्रेण क्रियते न वा ब्राह्मणाच्छंसिनः नैष दोषः । ब्राह्मणाच्छंस्येवानुब्रह्मेति ब्रह्मपुरुषत्वात् । ततश्चायमर्थः । इन्द्रो ब्राह्मणाच्छंसि कर्म करोति । कथं पुनरवसीयते मन्त्रार्थ इति । पूर्वोत्तरेषु मन्त्रेष्वीदृशानामेवार्थानां दर्शनात् । अश्विनौ अध्वर्यूतौ आध्वर्यवाद्धेतोर्मित्रावरुणौ प्रशास्तारौ तौ ( १ ) प्रशस्तौ कर्मणा एवमेव इन्द्रो ब्राह्मणाच्छंसीयादिति वक्तव्ये लक्षणयाऽयमर्थः सेत्स्यतीति तथोक्तं तथोत्तरेषु मरुतः पोतारः सन्तु पोत्रात्पवमानाद्ग्नावः स्त्रियो देवपत्न्यः । तद्वान्नेष्ट्रानयनात्पत्नीनां सोऽग्निराग्नीध्रोऽस्तु आग्नीध्रात्कर्मण इति । अथ कस्मादेवं न भवति य एष ब्रह्मा एष इन्द्रोऽस्त्विति न तदेवं न ह्येवं सति वरणं कृतं स्यादपि च मित्रावरुणौ प्रशास्तारावित्येतन्न संभवति । न हि द्वौ प्रशास्तारौ मित्रावरुणात्मकौ स्यातां, तस्माद्यथोक्त एव मन्त्रार्थः । ननु ब्रह्मणः कर्म ब्रह्मत्वं स्याद्ब्रह्मत्वम् इति विशेषविधानात् । नैतदेवं मन्त्रान्तरवशात्तावदयं मन्त्रार्थो विशिष्टस्ततश्च (एतद्वसन) इन्द्रादिष्वपि ब्रह्मशब्दः पठितव्यः । ( उच्यते इह तावद्धि तुल्यं तत्पुरुषस्य वा शंसनमुचितमयं नु होतारौ न तत्पुरुषः ) तथापि ब्राह्मणात्कर्मणा होता शंसतीति ब्राह्मणाच्छंसी । पञ्चम्या अलुग्द्रष्टव्यः । ब्रह्मणा किल त्रिभिरपि देवकर्मकर्तव्यं तत्स एतैः पुरुषै कारयित्वा वैदिकं ब्राह्मणाच्छंसिना अग्नीधा यज्ञार्थमच्छावाकपोत्रा सामादिकं ततश्च यस्माद्ब्रह्मणः कर्म कर्तव्यं तस्माच्छंसीति ब्राह्मणाच्छंसतीति एवमेव ब्रह्मत्वं स्यात्—" कृत्यल्युटो बहुलम् "—( पा.सू. ३।३।११३ ) । इति कर्तरि ण्यप्रत्ययः । ' इन्द्रो दक्षिणत आस्ते '—" आस उपवेशने "—( धा. पा.अ.आ ११) उपविष्टः । ' अथ यदिदम् ' इति प्रसिद्धानुवादो निंदार्थे यदि वा लोके दृश्यते यः कश्चिदवीर्यवत्तमोऽपि ब्रह्मा भवति तत्र किं प्रवृत्तिकारणं आह—' कुवित् ' बहुप्रायः ' तूष्णीं ' ब्रह्मा ' आस्ते ' तूष्णीमिति न होत्रुद्गातृवद्वाचानैव करोति ( मन्यसे इति एवमध्वर्युवदतीव परिसतीत्यभिप्रायः । ) एवं ब्रह्मा प्रायस्तूष्णीमास्ते । ( ततोऽहमपि सव्यामि तूष्णीमासीति त्रायेति मन्यमानो ) यः कश्चिदपि ब्रह्मा भवति । तत्र युक्तमवीर्यवत्त्वमेव अवीर्यत्वस्य गोपायितुमशक्यत्वात्तस्माद्वीर्यवत्तम एव ब्रह्मा स्यादिति वक्तव्ये ब्रह्मणो दक्षिणावस्थानमुपसंहरति । ' तस्माद्ब्राह्मण ' इत्यन्येऽपि ब्राह्मणा अवृता एतामेव दिशमधितिष्ठेयुरिति दर्शयति ॥ ९ ॥

---

१—उत्तरतउपचारो यज्ञः । २—दक्षिणतो ब्रह्मयजमानयोरासने । का. श्रौ. सू. १ । २०२ । २०१ ।

स यत्राह । ब्रह्मन्त्स्तोष्यामः प्रशास्तरिति तद्ब्रह्मा जपत्येतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिं तेन मामव । स्तुत सवितुः प्रसवऽइति सोऽसावेव बन्धुरेतेन न्वेव भूयिष्ठाऽइवोपचरन्ति ॥६॥

(न्त्य)अनेन त्वेवोपचरेत् । (हे) देव सवितरेतद्बृहस्पते प्रेति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता बृहस्पते प्रेति ब्बृहस्पतिर्वै देवानां ब्रह्मा तद्यऽएव देवानां ब्रह्मा तस्माऽएवैतत्प्राह तस्मादाह ब्बृहस्पते प्रेति ॥७॥

( त्यु ) अथ मैत्रावरुणो जपति । प्रसूतं देवेन सवित्रा जुष्टं मित्रावरुणाभ्यामिति तत्सवितारं प्रसवायोपधावति स हि देवानां प्रसविता जुष्टं मित्रावरुणाभ्यामिति मित्रावरुणौ वै मैत्रावरुणस्य देवते तद्येऽएव मैत्रावरुणस्य देवते ताभ्यामेवैतत्प्राह तस्मादाह जुष्टं मित्रावरुणाभ्यामिति ॥८॥

इति पंचमप्रपाठकेऽष्टमं ब्राह्मणम् ॥ ४—५—८ ॥ ( ६.६. ) ॥

---

स यत्राह—ब्रह्मन् स्तोष्यामः प्रशास्तरिति । तद् ब्रह्मा जपति । " एतं ते देव सवितर्यज्ञं प्राहुः, बृहस्पतये ब्रह्मणे । तेन यज्ञमव, तेन यज्ञपतिम्, तेन मामव ( वा. सं. २ । १२ ) । स्तुत सवितुः प्रसवे " इति । सोऽसावेव बन्धुः । एतेन न्वेव भूयिष्ठा—इवोपचरन्ति ॥ ६ ॥

अनेन त्वेवोपचरेत् । " देव सवितरेतद्बृहस्पते प्र "—इति । तत् सवितारं प्रसवायोपधावति । स हि देवानां प्रसविता । बृहस्पते प्रेति । बृहस्पतिर्वै देवानां ब्रह्मा । तद् य एव देवानां ब्रह्मा—तस्माऽएवैतत्प्राह—तस्मादाह—बृहस्पते प्रेति ॥ ७ ॥

अथ मैत्रावरुणो जपति । " प्रसूतंदेवेन सवित्रा जुष्टं मित्रावरुणाभ्याम् "—इति । तत् सवितारं प्रसवायोपधावति । स हि देवानां प्रसविता । " जुष्टं मित्रावरुणाभ्याम् " इति । मित्रावरुणौ वै मैत्रावरुणस्य देवते । तद् येऽएव मैत्रावरुणस्य देवते—ताभ्यामेवैतत्प्राह—तस्मादाह—जुष्टं मित्रावरुणाभ्यामिति ॥ ८ ॥

---

स यत्राहेति । प्रसन्ना । बृहस्पते प्रसूतेति शेषः ॥ ६—८ ॥

इति श्रीहरिस्वामिनाः । कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे षष्ठेऽध्याये षष्ठं ब्राह्मणम् ॥ ( ४-६-६ ) ॥

---

१—ॐ प्रसूतं देवेन सवित्राजुष्टम्मित्रावरुणाभ्यामिति मैत्रावरुणस्य जपो विहितः । अयमाश्वलायनीये शांखायनीयेच न दृश्यते । तथाप्यत्रासौ निष्कर्षः । मैत्रावरुणो वाजसनेयी चेत् तदा तेन आदौ " प्रसूतं देवेनेतिजप्त्वा अनंतरं आयुष्मत्यऋच इति प्रसवेइत्यंतमितिजपादि शांखायनीयमनुष्ठेयम् । का० श्रौ० सू० । १९—२१ ।

२—प्रस्तोत्रामंत्रित एतं ते देवसवितः स्तुतसवितुः प्रसव इत्युक्त्वा प्रसौति । देवसवितरेतत् बृहस्पते इति वा । रश्मिना सत्यायेति वा प्रतिमंत्रं । संहितायां पंचदशेऽध्याये रश्मिनां सत्यायेति एकोनत्रिंशत् २९ स्तोमभागमंत्राः ज्योतिष्टोमे द्वादश स्तोत्राणि तत्राद्यैर्द्वादशभिर्मंत्रैः प्रतिमंत्रं प्रतिस्तोत्रं रश्मिना सत्यायेत्यादिकं क्रमेणैकैकं मंत्रमुक्त्वा स्तुतसवितुरित्यनेन सर्वत्रानुजानीयात् । इति सूत्रार्थः । प्रस्तोत्रामंत्रणं तु ब्रह्मन् स्तोष्यामः प्रशास्तः । इति ।

त्रयी वै विद्या । ( ह्यर्चौ ) ऋचो यजूꣳषि सामानीयमेवऽर्चौऽस्याꣳ ह्यर्चति योऽर्चति स वागेवऽर्चौ वाचा ह्यऽर्चति योऽर्चति सोऽन्तरिक्षमेव यजूꣳषि द्यौः सामानि सैषा त्रयी विद्या सौम्येऽध्वरे प्रयुज्यते ॥१॥

( तऽ ) इममेव लोकमृचा जयति । ( त्य ) अन्तरिक्षं यजुषा दिवमेव साम्ना तस्माद्यस्यैका विद्यानूक्ता स्यादन्वेवापीतरयोर्निर्मितं विवक्षेतेममेव लोकमृचा जयत्यन्तरिक्षं यजुषा दिवमेव साम्ना ॥ २ ॥

---

## पुरश्चरणोपनिषत् ।

त्रयी वै विद्या–ऋचो, यजूंषि, सामानि । इयमेवऽर्चः । अस्यां ह्यर्चति–योऽर्चति–सः । वागेवऽर्चः । वाचा ह्यर्चति–योऽर्चति–सः अन्तरिक्षमेव यजूंषि । द्यौः सामानि सैषा त्रयी विद्या सौम्येऽध्वरे प्रयुज्यते ॥ १ ॥

इममेव लोकमृचा जयति, अन्तरिक्षं यजुषा, दिवमेव साम्ना । तस्माद्यस्यैका विद्यानूक्तास्याद्–अन्वेवापीतरयोर्निर्मितं विवक्षेत। इममेव लोकमृचा जयति, अन्तरिक्षं यजुषा, दिवमेव साम्ना ॥ २ ॥

---

त्रयी वै विद्येति । अत्र सदोहविर्द्धाने अद्वारेण प्रेक्षमाणं ब्रूयात् प्रेक्षित्वोत्प्रेक्षते एष क्रत्वर्थो ज्योतिष्टोमे विधिः उपांशुर्यजुर्भिः सरस्वती इत्येष सर्वकर्मसु एतस्यैवावृतं मत्वाऽऽवर्तते इति ज्योतिष्टोमे एतद्विधीयते यदुद्दिश्य प्रवृत्तमिदं ब्राह्मणम् । अनुषङ्गात्त्रय्यां विद्यायां वह्नेरदर्शनं करिष्यति । यत्त्वत्र न कृतं तदग्निरहस्येषु करिष्यते । 'त्रयी' त्र्यवयवा 'विद्या' "विद ज्ञाने"–( धा. पा. अ. प. ९४ ) विद्ययाऽनया विद्यत इति विद्या । क पुनस्तस्याः त्रयोऽवयवा ऋगादयः ते च विद्याशब्दाद्वेदयंते मन्त्रात्मका एव ऋगादय इत्येवर्चो इत्यृचामपि लोकं एवञ्च सामानि चेन्द्र इत्यधिदेवमुपरिष्टाद्वक्ष्यति । इदम् 'अस्यां ह्यर्चति' इत्यर्चनकारणत्वात् 'इयम्' ऋच एव इति कूवरं त्वन्याभिरित्यृच इत्यृकूशब्दे पृथिव्यां शब्दस्य व्युत्पत्तिं दर्शयति–पृथिव्यां तु कारणत्वस्यानुपपत्तेरधिकरणत्वं दर्शितम् । योऽर्चेति सोऽस्यामर्चतीति संबन्धः । ( वाणग सर्व इध्यात्मकत्रिद्वियातिस्कामनः ) साहचर्यात् शब्दात्मिकायामस्यां ह्यर्चतीति पृथिवीत्वेन स्तूयते । न च तस्यार्थोऽयं योगोऽस्ति, तत्तस्मात् कारणयोः साधर्म्यप्रदर्शनमेव द्रष्टव्यम् । तथाहि लोकेषु सृज्यमानेषु ऋग्वेदात्सूक्ष्मत्वान्मनःपृथिवीसंसर्जनात्ताद्दग्वेदीसूक्ष्मान्मनःपृथिवीसंसर्जनात्पुनः पिण्डेषु सृज्यमानेषु पृथिव्या समुच्चिता तदग्रे ऋग्वेदं पिण्डात्मकं ससर्ज । एवं वाचाऽपि स कार्यकारणभावो दर्शनीयः । स च स्थूल एव दृश्यते ऋग्वेदसाध्यं हि कर्म कर्त्तव्यमिति तद्वागिन्द्रियं प्रयुंक्ते न चर्ग्वेदसाधनानि कर्माणि क्रियन्त इति । एष एव प्रपञ्चो यजुर्वेदसामवेदयोरपि यथायोगं दर्शनीयः । अन्तरिक्षमन्तरिक्षलोकं स यजुर्वेद उक्तार्थत्वात्तश्चाग्निमुक्तकारणधर्मत्वात् एवं याजुषाद्यध्यात्ममुत्तरत्र वक्ष्यते–सोमं ( तू वा ) गन्धर्वश्च सामानि वेति को वा सामवेदः तत्कार्यत्वात्साधर्म्यान्निरुक्तत्वं च सैषा त्रय्यधिविद्या 'सौम्ये' सोमसाधके यज्ञे प्रयुज्यते नाग्निहोत्रादावेकेन द्वाभ्यां तस्य निष्पत्तिरित्यभिप्रायः ॥ १ ॥

अथ किं तया प्रयुक्तया भवतीत्याह–इममेवेति । 'इममेव लोकम्' इति । ज्योतिष्टोम एवावयुत्यनुवादः । 'तस्माद्यस्यैका विद्या' इति यस्माज्ज्योतिष्टोमोऽवगतः स ऋगादीनां पृथिव्यादिजयकारणत्वं तस्माद्

---

१–दशमकाण्डे । २–नियतपादाक्षरावसानोऽवयवः ऋगित्युच्यते । अनियतपादाक्षरावसानोऽवयवो यजुरित्युच्यते प्रगीतसाध्या ऋगेव सामेत्युच्यते ।

तद्वाऽएतत् । (त्स) सहस्रं व्वाचः प्रजातं द्वेऽइन्द्रस्तृतीये तृतीयं व्विष्णु-ऋचश्च सामानि चेन्द्रो यजूꣳषि व्विष्णुस्तस्मात्सदस्यृक्सामाभ्यां कुर्व्वन्त्यैन्द्रꣳ हि सदः ॥ ३ ॥ ( अर्धप्रपाठकः ) ॥

( द्वोऽथै ) अथैतं व्विष्णुं यज्ञम् । ( मे ) एतैर्यजुर्भिः पुरऽइवैव बिभ्रति तस्मात्पुरश्चरणं नाम ॥ ४ ॥

व्वागेवऽर्चश्च सामानि च । मन एव यजूꣳषि सा यत्रेयं व्वागासीत्स-

तद्वाऽएतत् सहस्रं वाचः प्रजातम् । द्वेऽइन्द्रस्तृतीये, तृतीयं विष्णुः ऋचश्च सामानि च इन्द्रः यजूंषि विष्णुः । तस्मात्सदसि ऋक्सामाभ्यां कुर्वन्ति ऐन्द्रं हि सदः ॥ ३ ॥

अथैतं विष्णुं यज्ञमेतैर्यजुर्भिः पुर इवैव बिभ्रति । तस्मात्पुरश्चरणं नाम ॥ ४ ॥

वागेवऽर्चश्च सामानि च, मन एव यजूंषि । सा यत्रेयं वागासीत्-सर्वमेव तत्राक्रियत, सर्वं

हिरपि स्तोमादनूक्तेनैव ( लोकाक्षि गीर्धौनीषा ) एका विद्या देवानूक्ता स्याद् ग्रन्थतोऽर्थतश्च स्वयं गृहीत्वा पश्चाच्छिष्येभ्य उक्ता सा इत्यध्याहारः । इतरयोरपि विद्ययो र्निर्मितं बहुशाखासंघातात्मकान् वेदान् ( त्रिशत्यतमः (१) शाखात्मनापि तमिष्ट्यादितम् ) अन्यतमां शाखामित्यर्थः । अनुविवक्षेतैवानुवक्तुमिच्छेत् ततश्चाचार्य्यादधीयते । ( एवेपिदै शक्तिश्च सन्नित्येतदुक्तं भवति ) स्मरन्ति च " वेदानधीत्य वेदौ वेति " इतरयोरपि निर्मितमिति । ( नापि शब्दपूर्वस्यापि विद्ययो नासौ निर्मिता वैका शाखेयमित्यर्थः ) अनुशाखाऽनूक्तास्यादेतदिति नियम्यते—इममेव लोकमिति ॥ २ ॥

इतरस्यानुवचनविधेः एवमानुषंगिकमनुवचनं विधाय प्रयोगमेवाह—तद्वा एतदिति । तदेतत्त्रयीविद्यात्मकं सहस्रं बहुतमं वाच आध्यात्मिकायाः प्रजातं वागिन्द्रियाणामग्न्यादीनामभिव्यक्तिः । अधियज्ञियाश्च शब्दमात्रात्मिकाया ऋगादेः ' प्रजातं ' विशेषविकासाधिदैवत्यामुपचर्य वाचा गायत्र्याविति च्छदांसि 'प्रजातं' । तस्यास्य सहस्रस्य वाचः प्रजातं ' द्वे ' ' तृतीये ' द्वौत्रिभागाविन्द्र एकं ' तृतीयं ' विष्णुरित्यधिदेवम् इन्द्राविष्ण्वोरेतौ शब्द ( प्रयोगा ) शेषावित्यर्थः । ' ऋचश्च सामानि चेन्द्र ' इति विभागात्तावद्वचनं तस्मात्सदसीति यस्माद्दृष्टो नैव इन्द्रस्तस्मात्ताभ्यां सदसि स्तोत्रादि कुर्वन्ति च ' ऐन्द्रं हि ' इन्द्रस्य स्वभूतं सदः स्वायतने युक्तं स्तोत्रमित्यभिप्रायः । वेदसिद्धस्यैव चायं सदसिकरणस्यानुवादो वक्ष्यमाणमिथुनोपोद्घातार्थः ॥ ३ ॥

अथैतं विष्णुमिति । अथशब्दो विशेषणार्थः । एतत्तद्धोतोद्गातारः सदस्यृक्सामाभ्यां कुर्वन्त्यध्वर्यवस्तु ' एतं ' प्रत्यक्षं सोमशरीरं ' विष्णुं ' ' यज्ञम् ' ' एतैः ' वेदार्थवत् क्रिया प्रत्यासन्नैः ' यजुर्भिः ' ' पुरः ' सदसः पूर्वस्यां दिशि हविर्द्धाने वितन्वन्ति विपुनंति संस्कारैर्यस्मादेवमृक्सामाभ्यां सदसः पुरस्ताद्यजुर्भिश्चरति ' तस्मात् ' यत् ' पुरश्चरणम ' इत्येव प्रसिद्धानि यजूंष्याधियज्ञिकदेशनिमित्तत्वं पुराणत्वं कालनिमित्तमपि वक्ष्यति । तद्वा एतत् मनोऽध्वर्युरित्यध्यात्मिकं च नो ह्यनभिगतमिति विष्णुं यज्ञं यजुर्भिर्हि वर्द्धते बिभ्रातीत्ययमनुवाद एव वक्ष्यमाणस्य मिथुनक्रमस्योपन्यासार्थः ॥ ४ ॥

वागेवर्चश्चेति । ' वाक् ' आध्यात्मिकीन्द्रियात्मिकाधिदैविकी सुपर्णात्मिकास्ता ऋचः सामानि च । कथं

१–मनु अ० ३ श्लो० २ ।

र्वमेव तत्राक्रियत सुर्वं प्राज्ञायताथ यत्र मन आसीन्नैव तत्र किंचनाक्रियत न प्राज्ञायत नो हि मनसा ध्यायतः कश्चनाजानाति ॥ ५ ॥

ते देवा वाचमब्रुवन् । ( न्प्रा ) प्राची प्रेहीदं प्रज्ञपयेति सा होवाच किं मे ततः स्यादिति यत्किंचावषट्कृतं स्वाहाकारेण यज्ञे हूयते तत इति तस्माद्यत्किंचावषट्कृतं स्वाहाकारेण यज्ञे हूयते तद्वाचः सा प्राची प्रैत्सैतत्प्राज्ञपयदितीदं कुरुतेतीदं कुरुतेति ॥ ६ ॥

---

प्राज्ञायत । अथ यत्र मन आसीत्-नैव तत्र किंचनाक्रियत, न प्राज्ञायत । नो हि मनसा ध्यायतः कश्चनाजानाति ॥ ५ ॥

ते देवा वाचमब्रुवन्-प्राची प्रेहि; इदं प्रज्ञपयेति । सा होवाच-किं मे ततः स्यादिति । यत्किंचावषट्कृतं स्वाहाकारेण यज्ञे हूयते-ततऽइति । तस्माद्यत्किंचावषट्कृतं स्वाहाकारेण यज्ञे हूयते-तद् वाचः । सा प्राची प्रैत् । सैतत्प्राज्ञपयत्-इतीदं कुरुत, इतीदं कुरुतेति ॥ ६ ॥

---

शब्दात्मकानि तानि तावदृक्सामानीति विस्पष्टमेव; देवता त्वभिमानिनी मन्त्रे ऋक्साम्नामिन्द्रियत्वसमुत्थापनं तेषामपि चैतदपि तद्ग्रहणेन गृह्यन्ते मनश्च यजूंषीति मनः करणं तत्र आसीत् सर्वमेव तत्राधिक्रियते यज्ञाय तत्राधिदैविक्येन्द्रियात्मिकया वाचाऽधिष्ठितशब्दात्मिकया इन्द्रियात्मिकया वाचेरितमृगादीत्यभिप्रायः । अथ यत्र हविर्द्धाने न किंचिदप्याक्रियत न प्राज्ञायत तत्र किं कारणं ' नोहि मनसा ध्यायतः ' कस्यचित्कदाचिदपि चिकीर्षितं जानाति न चाज्ञातं क्रियते इत्यभिप्रायः । ततः किं मनसस्तावद्बहिः प्रकाशकधर्मस्तदात्मनामपि यजुषां विष्णोश्च स एव धर्मस्तेन तत्र हविर्द्धाने न किञ्चित्प्रज्ञायते ॥ ५ ॥

ते देवा इति । 'वाचं ' विग्रहवतीं ' देवा अब्रुवन् ' तस्याम् उक्तायामिन्द्रियात्मिका प्रोक्तैव च भवत्यनयाऽन्यत्वादेकस्या एव ह्येते संव्यवहारार्थां अवस्थाभेदाः 'स्वाहाकारेण ' इति । योऽयं स्वाहाकार एष वाचा निरुक्तत्वादुद्भूतो यथाह-" तं स्वा महिमाम्युवाद जुहुधीति स प्रजापतिर्विदांचकार स्वो वै मा महिमाहेति स स्वाहेत्येवाजुहोदिति " तेन स्वाहाकारप्रदाने हविस्त इत्युक्तवन्तः । तस्माद्यत्किंचिदिहास्य यज्ञस्य उपसंहारः स्यात् । ननु च स्वाहाकारप्रदानेषु मान्त्रवर्णिक्य एव देवताः सन्त्यग्नये स्वाहेत्यादयः । तानि कथं वाचो भविष्यन्त्येवं यत्र नास्ति विस्पष्टाऽन्या देवानां तद्वाचो भविष्यन्ति नैतदेवम्; एवं हि सति यत्किञ्चिदिति वीप्सार्थं वचनं विहन्येत एवं तर्ह्यन्यासु देवतासु सतीषु ( आवावाचोमिमं निजमिति ) इदमुच्यते । ननु च सर्वे एव यज्ञ (इन्द्रस्यैन्द्रस्वाक्वत्तत्र)स्वाहाकारप्रदानेषु को विशेष इत्यत्रोच्यते । स्वाहाकारप्रदानेषु(वागस्याभिमानीत्येव )सा वा देवता प्राची सदसः (स्वात्मातनाश्च) हविर्धानं प्रैत् प्राप्ता शास्त्रशास्त्रकारेभ्योऽध्वर्यु प्राची इन्द्रंगत्वा च सा एतत्कर्म प्रज्ञपितवती कथमध्वर्युः प्रतिप्रस्थातृवत् प्रैषानुवचनोपाकरणे प्रज्ञापिता भवतीति एवमिदं कर्म कुतः हविः ( एतविमसपरं ) कुरुतेति ॥ ६ ॥

तुस्माद्उ कुर्व्वन्त्येवऽर्चा हविर्धाने । प्रातरनुवाकमुन्वाह सामिधेनीरु-न्वाह ग्राव्णोऽभिष्टौत्येव ᳪ हि सयुजावुभवताम् ॥ ७ ॥

तुस्माद्उ कुर्व्वन्त्येव सुदसि । युजुषौदुम्बरीमुच्छ्रयन्ति सुदः सुंमिन्वन्ति धिष्ण्यानुपकिरन्त्येव ᳪ हि सयुजावुभवताम् ॥ ८ ॥

तद्वाऽएतत्सुदः पुरिश्रयन्ति । ( न्त्ये ) एतुस्मै मिथुनाय तिरऽइवेदं मिथुनं चर्याताऽइति व्यृद्धं वाऽएतुन्मिथुनं युदन्यः पुश्यति तुस्माद्यद्यपि जायापती मिथुनं चुरन्तौ पुश्यन्ति व्येव द्रवत आगऽ एवु कुर्व्वाते तुस्मा-द्द्वारेण सुदः प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा इति युथा ह मिथुनं चर्य्यमाणं पुश्येदेवं तत्कामं द्वारेण देवकृत ᳪ हि द्वारम् ॥ ९ ॥

---

तस्माद्उ कुर्वन्त्येवऽर्चा हविर्धाने । प्रातरनुवाकमन्वाह । सामिधेनीरन्वाह । ग्राव्णोऽभिष्टौति । एवं हि सयुजावभवताम् ॥ ७ ॥

तस्माद्उ कुर्वन्त्येव सदसि । यजुषौदुम्बरीमुच्छ्रयन्ति । सदः संमिन्वन्ति । धिष्ण्यानुपकिरन्ति । एवं हि सयुजावभवताम् ॥ ८ ॥

तद्वाऽएतत्सदः परिश्रयन्ति—एतस्मै मिथुनाय । तिर इवेदं मिथुनं चर्याताऽ इति । व्यृद्धं वा-ऽएतन्मिथुनम्—यदन्यः पश्यति । तस्माद्यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति—व्येव द्रवतः, आग एव कुर्वाते । तस्माद्द्वारेण सदः प्रेक्षमाणं ब्रूयाद्—मा प्रेक्षथा इति । यथा ह मिथुनं चर्यमाणं पश्येद्—एवं तत् । कामं द्वारेण । देवकृतं हि द्वारम् ॥ ९ ॥

---

अभिषोतारोऽभिषुण्वते अग्नयेऽनुब्रूहि उपावर्तध्वमित्यादि । हविःस्थानेऽपि दर्शयति—तस्माद्युक्तवते वर्त्तेत तस्माद्युक्त्वा वाग्वेदेन वागात्मकेन च कुर्वन्त्येवर्चा ( कालकर्मप्रातरनुवाकानुवचनादि हविर्द्धानमनो यजुष्ट्वात्मके एषां तोजि विष्णुं च सयुजौ एकस्यामनुवचनादि ) यां यां सह प्रयुज्येत इन्द्रः करणत्वेन विष्णुरधिकरणत्वेनेति सयुजौ चर्याते तस्मादुक्ता अत्राप्यृक्सामसद आत्मिकाया वाचो मनो यज्ञः स्वभावस्यावयज्ञस्य च मिथुनं गम्यत एवेति नोक्तम् ॥ ७ ॥ ८ ॥

तद्वा एतदिति एतस्मै मिथुनायेति । यदेतद् गम्यते वाच ऋक्सामात्मिकायाः सदसश्च यजुरात्मकस्य तिरोहितम् 'इदं मिथुनं' चर्याते इत्येतत्प्रार्थयमानाः 'परिश्रयन्ति' "प्रार्थनायां लिङ्" इत्यर्थे लेट् । व्यृद्धमपुष्कलं परिसमाप्त्यमतो वायोऽति निःफलं ऋव्याह—) तदेतन्मिथुनं यदन्यस्ताभ्यां पश्यति यस्मादर्थेन तस्माद्यद्यपि दम्पती अचिरमिथुनं चरन्तौ केचिदन्ये पश्यन्ति तथापि तौ जायापती विशेषत एव न ज्ञायेते (स्ववाचो स्मायं (?) कर्मणो ददते न दृश्यमानो म (?) दृश्यमानो म (?) दृश्यमानेन लभ्यते वा स्यादेष इत्य-भिप्रायः । ) 'आगः' अपराध एव कुर्वाते दंपती द्रष्टुः किमित्येष दुरात्मा आवां मिथुनं चरन्तौ पश्यतीति । यस्माच्चैव दृश्यमानं मिथुनं हन्यते तस्मान्मिथुनव्यृद्धिपरिहाराय द्वारेण प्रेक्षमाणं ब्रूयात् । मा प्रेक्षथा इति । मा

(मे) एवमेवैतद्धविर्धानं परिश्रयन्ति । (न्त्ये) एतस्मै मिथुनाय तिरऽइवेदं मिथुनं चर्यातोऽइति व्यृद्धं वाऽएतन्मिथुनं यदन्यः पश्यति तस्माद्यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति व्येव द्रवत आगऽ एव कुर्वाते तस्मादुद्वारेण हविर्धानं प्रेक्षमाणं ब्रूयान्मा प्रेक्षथाऽइति यथा ह मिथुनं चर्यमाणं पश्येदेवं तत्कामं द्वारेण देवकृत ᳪं हि द्वारम् ॥ १० ॥

तद्वाऽएतद्वृषा साम । योषामृच ᳪं सदस्यध्येति तस्मान्मिथुनादिन्द्रो जातस्तेजसो वै तत्तेजो जातं यदृचश्च साम्नश्चेन्द्रऽ इन्द्रऽ इति ह्येतमाचक्षते यऽएष तपति ॥ ११ ॥

(त्यु) अथैतद्वृषा सोमः (मो) योषाऽ अपो हविर्धानेऽध्येति तस्मान्मिथुनाच्चन्द्रमा जातोऽन्नाद्वै तदन्नं जातं यदद्भ्यश्च सोमाच्च चन्द्रमाश्चन्द्रमा

---

एवमेवैतद्धविर्धानं परिश्रयन्ति—एतस्मै मिथुनाय । तिर—इवेदं मिथुनं चर्यातोऽइति । व्यृद्धं वाऽएतन्मिथुनम्—यदन्यः पश्यति । तस्माद्यद्यपि जायापती मिथुनं चरन्तौ पश्यन्ति—व्येव द्रवतः, आग एव कुर्वाते । तस्मादद्वारेण हविर्धानं प्रेक्षमाणं ब्रूयाद्—मा प्रेक्षथा इति । यथा ह मिथुनं चर्यमाणं पश्येद्—एवं तत् । कामं द्वारेण । देवकृतं हि द्वारम् ॥ १० ॥

तद्वाऽएतद्वृषा साम योषामृचं सदस्यध्येति । तस्मान्मिथुनादिन्द्रो जातः । तेजसो वै तत्तेजो जातम्—यदृचश्च साम्नश्च इन्द्रः । इन्द्र इति ह्येतमाचक्षते—य एष तपति ॥ ११ ॥

अथैतद् वृषा सोमः, योषा अपो हविर्धानेऽध्येति । तस्मान्मिथुनाच्चन्द्रमा जातः । अन्नाद्वै तदन्नं जातम्—यदद्भ्यश्च सोमाच्च चन्द्रमाः । चन्द्रमा ह्येतस्यान्नम्—य एष तपति । तद्यजमानं

---

प्रेक्षथा इति मान्त्रवर्णिकदृष्टप्रतिषेधः स तस्य पुरुषार्थस्तथा चाग एव द्रष्टुः न कुर्वतेति दर्शितम् । यथाह—मिथुनमिति लौकिकमिथुनदर्शनोपमानं (द्रष्टु इयाये स्वे दोषदर्शनसमुत्थं दर्शयति—) काममिच्छया द्वारेण सदस-उत्तरतः प्रेक्षतेऽत्र न दोषः । किं कारणं देवैरिह दर्शनार्थमेव द्वारं कृतम् । यदि च तेनापि दृश्यमाने दोषः स्यात्ततो न तद्देवैरुपायः करिष्यत इति दर्शनोपायव्यवस्थयापि च दोषोऽवतिष्ठते । यथा तदेव मिथुनं लोके चानुमानिकं तमपि लज्जयन्ति किं तर्हि प्रत्यक्षमेव ॥ ९ ॥

एवमेवैतदिति । पूर्वमेषा व्याख्याता ॥ १० ॥

तद्वा एतदिति । सत्येवं पूर्वस्मिन्वाङ्मनसयोर्मिथुने इमामपरामृक्सामयोर्वाक्प्राणयोश्च मिथुनसंपदं दर्शयति 'तेजसस्तेजो जातम्' इत्येतस्य सिद्धार्थः । तेजस इति प्रकाशस्वभावकत्वादृक्सामे तेज इति अस्य नु तेजस्त्वं सूर्यो वा ॥ ११ ॥

अथैतद्वृषेति । इदमपि सत्येव यज्ञस्य वाचश्च मिथुने यजुर्वैदिकमेवोत्तरं मिथुनमपां सोमस्य च संपर्कस्त-

ह्येतस्यान्नं य एष तपति तद्यजमानं चैवैतज्जनयत्यन्नाद्यं चास्मै जनयत्यृचश्च साम्नश्च यजमानं जनयत्यद्भ्यश्च सोमाच्चास्माऽअन्नाद्यम् ॥ १२ ॥

यजुषा ह वै देवाः । ( ऽ ) अग्रे यज्ञं तेनिरेऽथर्चाथ साम्ना तदिदमप्येतर्हि यजुषैवाग्रे यज्ञं तन्वतेऽथऽर्चाथ साम्ना यजो ह वै नामैतद्यद्यजुरिति ॥ १३ ॥

यत्र वै देवाः ( ऽ ) इमा विद्याः कामान्दुदुहे तद्ध यजुर्विद्यैव भूयिष्ठान्कामान्दुदुहे सा निर्धीततमेवास सा नेतरे विद्ये प्रत्यास नान्तरिक्षलोकऽ इतरौ लोकौ प्रत्यास ॥ १४ ॥

---

चैवैतज्जनयति—अन्नाद्यं चास्मै जनयति । ऋचश्च साम्नश्च यजमानं जनयति, अद्भ्यश्च सोमाच्चास्माऽअन्नाद्यम् ॥ १२ ॥

यजुषा ह वै देवा अग्रे यज्ञं तेनिरे—अथऽर्चा, अथ साम्ना । तदिदमप्येतर्हि यजुषैवाग्रे यज्ञं तन्वते—अथऽर्चा, अथ साम्ना । यजो ह वै नामैतद्—यद्यजुरिति ॥ १३ ॥

यत्र वै देवा इमा विद्याः कामान्दुदुहे—तद्ध यजुर्विद्यैव भूयिष्ठान्कामान्दुदुहे । सा निर्धीततमेवास । सा नेतरे विद्ये प्रत्यास । नान्तरिक्षलोक इतरौ लोकौ प्रत्यास ॥ १४ ॥

---

स्माच्च चन्द्रमा जात इति दर्शनानुपहतस्य मिथुनस्य कार्यप्रदर्शनम् । 'अन्नाद्वै तदन्नम्' इत्यप्सोमत्वादन्नं चन्द्रमा अप्यन्नं चेत्यभिप्रायः । तथा यजमानमिति इतिहासस्य यज्ञ उपसंहारः । यजमानमत्तारं जनयत्यृचश्च साम्नश्चाध्वर्युर्मा प्रेक्षथा इति वचनं मिथुनं रक्षम् ( ? ) एवमेव हविर्द्धानेऽन्नाद्यं मिथुनमेव रक्षं ( ? ) जनयित्वा च मा प्रेक्षथा इत्येष विधिः समाप्तः ॥ १२ ॥

यजुषा हेति । एताभिरष्टाभिः कण्डिकाभिः यजुर्वेदसाध्यकर्मण उपांशुचरणं नाम धर्मो विधीयते । तत्रैवैका तावदुपपत्तिर्यथाध्यात्मार्थमिन्द्रियाणां पुरश्चरणं बहिः प्रकाशमेव यजुर्वेदीयोत्तरयोः पुरश्चरणमध्वर्युश्च स्तोत्रशस्त्रकारिणां ततश्च तेन बहिः प्रकाशधर्मकेण स(तेवेद्युक्तं)मवितुमिति तस्या उपपत्तेरुत्तरत्र वक्ष्यमाणाया उपोद्घातार्थमिदं यजुर्वेदस्य कालतः पुरश्चरणत्वमत्र प्रदर्श्यते इति । यजेर्द्धातोः करणसाधनप्रत्ययोऽत्र युक्त इत्येतद्दर्शयति । ततश्च इज्यतेऽनेनेति यज इत्येवं प्राप्ते यजुरिति निरूढः । ननु च यद्यत्र प्राप्तिर्विभाव्यते ततो यजुश्शिष्टयागेनैतानि रूपाणि प्राप्नुवन्ति न यजत इति नैष दोषः । न व्याकरणकृतप्राप्तमेतद्वचनं कथं तर्हि यज इत्येव धातुः तिरोहितो दृष्टः प्रयोगश्चात्र कर्तरि कारके चायं प्रत्ययः ( अहो वर इत्यादौ यागः । इष्टिरित्यत्र धातुरेव तिरोधीयत इत्यभिप्रायः ) ॥ १३ ॥

यत्र वै देवा इति । एताभिः पञ्चभिः कण्डिकाभिरुपांशुत्वे कारणमाह—' निर्धीततमेवास सा नेतरे '—यजुर्विद्यैषामुपांशुचरणेनाप्यत इति ' यत्र ' काले ' देवाः इमा विद्याः ' विग्रहवतीरिमान् ' कामान् ' भोगान् दुदुहे ततस्तत्र काले यजुर्विद्यैव बहुतमान् ' कामान् ' दुग्धवती सुता । ततश्च सा निःसारत्वात् ' इतरे

ते देवाऽअकामयन्त । कथं न्वियं विद्येतरे विद्ये प्रतिस्यात्कथमन्तरिक्षलोक इतरौ लोकौ प्रतिस्यादिति ॥ १९ ॥

ते होचुः । ( रु ) उपाᳬंश्वेव यजुर्भिश्चराम ततऽएषा विद्येतरे विद्ये प्रतिभविष्यति ततोऽन्तरिक्षलोक इतरौ लोकौ प्रतिभविष्यतीति ॥ १६ ॥

तैरुपाᳬंश्वचरन् । ( न्ना ) आप्याययन्नेवैनानि तत्तत एषा विद्येतरे विद्ये प्रत्यासीत्ततोऽन्तरिक्षलोक इतरौ लोकौ प्रत्यासीत्तस्माद्यजूᳬंषि निरुक्तानि सन्त्यनिरुक्तानि तस्मादयमन्तरिक्षलोको निरुक्तः सन्ननिरुक्तः ॥ १७ ॥

स य उपाᳬंशु यजुर्भिश्चरति । ( त्या ) आप्याययत्येवैनानि स तान्येन-

---

ते देवा अकामयन्त—कथं न्वियं विद्येतरे विद्ये प्रतिस्यात्, कथमन्तरिक्षलोक इतरौ लोकौ प्रतिस्यादिति ॥ १९ ॥

ते होचुः—उपांश्वेव यजुर्भिश्चराम—तत एषा विद्येतरे विद्ये प्रतिभविष्यतिं, ततोऽन्तरिक्षलोक इतरौ लोकौ प्रतिभविष्यतीति ॥ १६ ॥

तैरुपांश्वचरन्—आप्याययन्नेवैनानि तत् । तत एषा विद्येतरे विद्ये प्रत्यासीत्, ततोऽन्तरिक्षलोक इतरौ लोकौ प्रत्यासीत् । तस्माद्यजूंषि निरुक्तानि सन्त्यनिरुक्तानि । तस्मादयमन्तरिक्षलोको निरुक्तः सन्ननिरुक्तः ॥ १७ ॥

स य उपांशु यजुर्भिश्चरति—आप्याययत्येवैनानि सः तान्येनमापीनान्याप्याययन्ति । अथ य उच्चैश्चरति—रूक्षयत्येवैनानि सः । तान्येनं रूक्षाणि रूक्षयन्ति ॥ १८ ॥

---

विद्ये प्रति ' न बभूव । प्रति प्रतिनिधौ कर्मप्रवचनीयः तद्युक्ते द्वितीया ( पा. सू. २।३।८ ) सानु प्रतिनिधे रिति निधे ( ? ) इतिहासेन च यस्मादिति पंचमी सा एव प्रयोगात् । न गम्येति गम्यते । ततश्च इतरे विद्ये प्रतीतरयोर्विद्ययोः प्रतिनिधिसदृशी समाना बभूवेत्यर्थः । तदनुकारित्वादन्तरिक्षलोकेऽपि यजुर्वेदभक्तिरिति । यो लोकयोः समानो बभूव ॥ १४ ॥

ते देवा इति । प्रसन्ना ॥ १९ ॥

ते होचुरिति । 'यजुर्भिः' यजुर्वेदेनेत्यर्थः । अवयवैरवयविन उपलक्षणैर्यजुर्विद्यायामिवैताभ्य.मपि आप्यानस्यापेक्षत्वादेषा विद्येत्यभिगमनम् ॥ १६ ॥

तैरुपांश्विति । ' आप्याययन् ' इत्यल्पायासोऽप्युपांशु प्रयुज्यमानं संवर्द्धितं वर्द्धितवन्तः । यस्मादेव देवाः ' तस्मात् ' एतानि ' यजूंषि ' निरुक्तानि ' अर्थतः ' सन्त्यनिरुक्तानि ' प्रयोगतोऽन्येषामश्रवणीयानि प्रयुज्यन्ते । तदनुकारेण वायुरन्तरिक्षलोकान्तरितानि विमानचरैर्देवैः प्रयोगादिषु कीर्तितत्वान्निरुक्तान्यपि विस्पष्टपृथिवीचन्द्रार्कतारकादीव न दृश्यत इत्यर्थः ॥ १७ ॥

स य उपांश्विति । अर्थवादेनायं विधिः ' यजुर्भिः ' यजुर्वेदावयवैरित्यर्थः । यजुर्भिर्विद्योपक्रमाद्वेदो लक्ष्यते ।

मापीनान्याप्याययन्त्यथ यऽउच्चैश्चरति रूक्षयत्येवैनानि स तान्येनꣳ रूक्षाणि रूक्षयन्ति ॥ १८ ॥

वागेवऽर्चश्च सामानि च । मन एव यजूꣳषि स यऽऋचा च साम्ना च चरन्ति वाक्ते भवन्त्यथ ये यजुषा चरन्ति मनस्ते भवन्ति तस्मान्नानभिप्रेषितमध्वर्युणा किं चन क्रियते यदैवाध्वर्युराहानुब्रूहि यजेत्यथैव ते कुर्वन्ति यऽऋचा कुर्वन्ति यदैवाध्वर्युराह सोमः पवतऽउपावर्तध्वमित्यथैव ते कुर्वन्ति ये साम्ना कुर्वन्ति नो ह्यनभिगतं मनसा वाग्वदति ॥ १९ ॥

---

वागेवऽर्चश्च सामानि च, मन एव यजूंषि । स यऽऋचा च साम्ना च चरन्ति--वाक्ते भवन्ति । अथ ये यजुषा चरन्ति--मनस्ते भवन्ति । तस्मान्नानभिप्रेषितमध्वर्युणा किं चन क्रियते । यदैवाध्वर्युराह--' अनुब्रूहि ' ' यज ' इति । अथैव ते कुर्वन्ति यऽऋचा कुर्वन्ति । यदैवाध्वर्युराह--सोमः पवतऽउपावर्तध्वमिति । अथैव ते कुर्वन्ति--ये साम्ना कुर्वन्ति । नो ह्यनभिगतं मनसा वाग्वदति ॥ १९ ॥

---

वेदो हि यजुर्मंत्रः । कुत एतत् । अङ्गानिवेदाश्चत्वार इति प्रकृत्य विद्याह्येताश्चतुर्दशेति वचनात् । तेनापि यजुर्वेदेनेह स्वावयवैः पुनर्मन्त्रात्तां लक्ष्यन्ते किं कारणं सकलयज्ञे कारणत्वेन विधानादुपांशुयजुश्चरतीत्यत्र च यजुश्चरणे उपांशुत्वस्य श्रवणात् । ननु च जयसाधकतममिदमित्यत्र सकलस्य वेदस्य सामर्थ्यात्कारणत्वं नैतद्विपर्ययस्तुपांशुत्वं किं न ज्ञायते ? किं लक्षणया पुनरवयवाख्या श्रीयन्त इत्युच्यते । "यजुषा ह वै देवा अग्रे यज्ञं तेनिरे" [त्रयोदशकण्डिकायां]इत्यत्र यज्ञकरणभूतानि यजूंषि प्रकृतानि न जयसाधनानि तेनोपक्रमवशात्पुरश्चरणोपसंहारः।शाखावयवैरेवैतदुपांशुत्वं विधीयते,ततश्च यजुर्वेदविद्यायास्तद्गतानामृचामपि सिद्धमुपांशुत्वं प्रयोगकाले । नन्वेवं सति सोमाध्वरेणोपक्रम्य तासां सौम्येऽध्वर एवैदुपांशुत्वं प्राप्नोति । ननु कर्मान्तराणि तदेवं यदि हि यजुर्वेदरूपा(?)सौम्येऽध्वरे परिसमाप्तं स्यात्। तत्तत्रोपक्रमवशात्तावन्मात्र एवावतिष्ठते । अथ तु यजुर्विद्या सर्वकर्मसु वर्तते । ततश्च यजुर्विद्याऽवयवत्वात् सर्वकर्ममन्त्रेष्वेवोपांशुत्वस्यावतारो यत्र सौम्याध्वरोपक्रमादिति । तत्रोच्यते--त्रय्या विशिष्ट उपक्रमोऽसौ वर इत्ययमुत्प्रेक्षणप्रतिषेधे विश्वोपयोगी तत्रैवाचक्षाणो (नात्राप्युत्थानो) ऽवयऽवान्तरेभ्यः शक्नोति उपांशुत्वं निवर्तयितुम् । तस्मादुपपन्नं सर्वकर्मसु यजुषामुपांशुत्वधर्मस्तथाच तदेतद्यजुरुपांश्वनिरुक्तमिति प्रकृत्योपांशु यजुषां हविर्निर्वपति सर्वधर्मतामेव ( दनामिष्यप्नोते ) " स्फायी ओप्यायी वृद्धौ "--( धा. पा. भ्वा. आ. ४८९।४९० ) । " प्यायः पी "--( पा. सू. ६ । १ । २८ ) निष्ठायां तकारस्य नत्वम् ( पा. सू. ८ । २ । ४९ ) । आपीनानि वृद्धानीत्यर्थः ॥ १८ ॥

वागेवर्चश्चेति अत्र यजुषां ( तत्वारिणावसमनसस्त ( ? ) मुच्यते ) उपांशुचरणोपपत्तिस्तु ( द्वये ) यजुषा चरन्ति इति बहुवचनात् सर्व एवाध्वर्युपुरुषा आग्नीध्रश्चोपांशु चरन्तीति गम्यते ॥ १९ ॥

---

१--" अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ " इति स्मृतिः ।

तद्वाऽएतन्मनोऽध्वर्युः । पुरऽइवैव चरति तस्मात्पुरश्चरणं नाम पुरऽइव ह वै श्रिया यशसा भवति य एवमेतद्वेद ॥ २० ॥

तद्वाऽएतदेव पुरश्चरणम् । यऽ एष तपति स ऽएतस्यैवावृता चरेद्ग्रहं गृहीत्वैतस्यैवावृतमन्वावर्तेत प्रतिगीर्यैतस्यैवावृतमन्वावर्तेत ग्रहꣳ हुत्वै-तस्यैवावृतमन्वावर्तेत स हैष भर्ता स यो हैवं विद्वानेतस्यावृता शक्नोति चरितुꣳ शक्नोति हैव भार्यान्भर्तुम् ॥ २१ ॥

इति पञ्चम प्रपाठके नवमं ब्राह्मणम् ॥ ४–५–९ ॥ (६.७.) ॥

या वै दीक्षा सा निषत्। (त्त)तत्सत्रं तस्मादेनानासतऽइत्याहुरथ यत्ततो यज्ञं तन्वते तद्यन्ति तन्नयति यो नेता भवति स तस्मादेनान्यन्तीत्याहुः ॥१॥

---

तद्वाऽएतन्मनोऽध्वर्युः पुर–इवैव चरति । तस्मात्पुरश्चरणं नाम । पुर–इव ह वै श्रिया यशसा भवति–य एवमेतद्वेद ॥ २० ॥

तद्वाऽएतदेव पुरश्चरणम्–य एष तपति । स एतस्यैवावृता चरेत् । ग्रहं गृहीत्वैतस्यैवावृतमन्वा-वर्तेत । प्रतिगीर्यैतस्यैवावृतमन्वावर्तेत । ग्रहं हुत्वैतस्यैवावृतमन्वावर्तेत । स हैष भर्ता । स यो हैवं विद्वानेतस्यावृता शक्नोति चरितुं–शक्नोति हैव भार्यान्भर्त्तुम् ॥ २१ ॥

### सत्रोत्थानम् ।

या वै दीक्षा सा निषत्, तत् सत्रम् । तस्मादेनान्–आसतऽइत्याहुः । अथ यत्ततो यज्ञं तन्वते–तद्यन्ति, तन्नयति–यो नेता भवति सः । तस्मादेनान्यन्तीत्याहुः ॥ १ ॥

---

तद्वा एतदिति । अत्राध्वर्युः पुरश्चरणनिमित्तमित्युच्यते उत्तरविवक्षया ॥ २० ॥

तद्वा एतदेवेति । अवैदिकस्य पुरश्चरणस्य 'आवृता' अध्वर्युश्चरेद् ग्रहग्रहणादेतस्येत्युच्यते, सस्तोत्रशस्त्रे चाग्रहेष्वेव तदावर्त्तनं द्रष्टव्यं, पुरश्चरणसंबन्धविधानात् । तत्र स्व (१) नरापेक्षया पुरश्चरणस्योत्पत्तेः 'स यो हैवं विद्वान्' इति शक्तिमात्रेऽध्वर्योः फलम् ॥ २१ ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ माध्यन्दिनशतपथब्राह्मणभाष्ये चतुर्थकाण्डे षष्ठेऽध्याये सप्तमं ब्राह्मणम् ॥ ४–६–७ ॥

या वै दीक्षेति । सत्रधर्मा वैशेषिका अत्र ब्राह्मणे उच्यन्ते । सत्राणां च प्रथमा प्रवृत्तिः ( आग्नेयवौदमो ) द्वादशाहतश्च सत्राणामावृतौ वा निरुक्तत्वादिति सत्रात्मको द्वादशाहो विज्ञायते; तस्मादेवोत्तरेषु एतेषु एते विशेषधर्मा लभ्यन्त इति तदर्थमप्याम्नायन्ते । तत्र द्वाभ्यां कण्डिकाभ्यां सत्रादीञ्छन्दांस्याचष्टे सत्राधिकाराश्च प्रायेणैव हि सत्र एतैः शब्दैः सर्ववेदेषु व्यवहारः सत्रमासते उपयन्ति गवादीनामयनं तत्रोदतिष्ठत्तत्सत्रोत्थान-मिति । नवैतेऽतीव वक्ष्यमाणप्रसिद्धत्वेन तान्याचष्टे । तत्र चैतद्द्व्यधिकृतं भविष्यति चैवाव्याख्याता

(यां) या ह दीक्षा सा निषत्। (त्त) तत्सत्रं तदयनं तत्सत्रायणमथ यत्ततो यज्ञस्योदृचं गत्वोत्तिष्ठन्ति तदुत्थानं तस्मादेनानुदस्थुरित्याहुरिति नु पुरस्ताद्वदनम् ॥ २ ॥

(मु) अथ दीक्षिष्यमाणाः समवस्यन्ति । ते यद्यग्निं चेष्यमाणा भवन्त्य-रणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं यजन्तऽएतेन प्राजाप-त्येन पशुना ॥ ३ ॥

---

या ह दीक्षा—सा निषत्, तत्सत्रम्, तदयनम्, तत्सत्रायणम् । अथ यत्ततो यज्ञस्योदृचं गत्वो त्तिष्ठन्ति—तदुत्थानम् । तस्मादेनानुदस्थुरित्याहुः—इति नु पुरस्ताद्वदनम् ॥ २ ॥

अथ दीक्षिष्यमाणाः समवस्यन्ति । ते यद्यग्निं चेष्यमाणा भवन्ति—अरणिष्वेवाग्नीन्त्समारोह्योप-समायन्ति—यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति । मथित्वोपसमाधायोद्धृत्याहवनीयं यजन्ते—एतेन प्राजापत्येन पशुना ॥ ३ ॥

---

इति तावत्पर्यन्तं यावानाह—' या वै दीक्षा सा निषात् ' इति वाक्याश्रयणीया यो अविवक्षिते वेदे सर्वैकैव दीक्षाऽत्राभिहिता सा दीक्षा निषत्"षद्लृ विशरणगत्यवसादनेषु"(धा.पा.तु.प.१४६)निपूर्वः ( त्रोदामर्थयादीनि धत्ते ) निवर्त्तते 'निषद्' अवसादः । अथासनमेव केवलमिदमिति नियमवचनान्न कस्यचित् कर्मण उत्सर्पणम् इत्य-भिप्रायः । या सा निषत्तत्त्रमिति प्रदर्शनमिदमेव भेदनिदर्शनमपि द्रष्टव्यम् । यथैव हि निषदनं निषत् एवं सदनम-वसादनमिति । यस्माच्च निषसदनमवसादनमासीत् ' तत् ' दीक्षात्मकं ' सत्रं ' ' तस्माद् ' एतस्माद् ' एनान् ' सत्रिणो दीक्षितान्मन्त्रशासन ' इत्याहुः ' ( वै देवा दाश्वतद्विदसति धात्वन्तरं पर्यायतया दर्शितम् ) । ' अथ यत्ततः ' ऊर्ध्वं प्रायणीयादि ' यज्ञं तन्वते ' यज्ञस्य समाप्तिं तदेव ' नयति ' ' यो नेता ' च ' भवति ' ' स ' गृहपतिं नयतीति वा सत्रिणः अस्माद्यज्ञायतनं दर्शिता उपयन्ति ॥ १ ॥

दीक्षाशब्दस्य प्रायणीयाद्यशेषवचनव्रतानुष्ठानत्वेन नेतव्यतया पुनः सत्रादीनां सकलप्रयोगवचनं दर्शयति—या ह दीक्षेति । दीक्षया इदानी सर्व एव प्रयोगो लक्ष्यते । अवियुक्तदीक्षैः क्रियमाणत्वात्सर्व एव प्रयोगो दीक्षेत्यभिप्राः । अत एव च लौकिकेभ्यः कर्मभ्यः व्यावृत्तानां कर्मगामिनां मन्यते सदनमिदं च निषदनं ' निषद् ' तदेव च सदनं ' सत्रं ' तदेव यज्ञस्योत्सर्पणमित्यभिप्रायेण ' अयनं ' गमनं तदेव 'सत्रायणं' सत्रं च तदयनं चेति सत्रायणं युगपत् कामनयाऽनया विवक्षयेत्यभिप्रायः । ' अथ यत् ' तत् यत्रह्यभयं व्यास्तं प्राय-उपतिष्ठन्ति कर्मान्तरं देशान्तरवद्यन्ति एवं ते तदुत्थानं यस्माच्चैवं ' तस्मादेनान् ' मन्त्रपरिसमाप्तेः समासतः ' उदस्थुः ' उत्थिताः सत्राद् ' इति ' एवम् ' आहुः ' वेदविदः । ( यदि सत्राय दीक्षितानां प्रसीयेताथ सोः (१) स्युछिष्टप्रदित्वादिव (१) एवमाद्ययनैं शतैतत्तत्र शब्दनिरूपणं द्रष्टव्यम् । ) इतिनु एतावदेव वैतद्वैशेषिक-सत्रकर्मसिद्धेः पुरस्तादुपन्यासायैव ' वदनं ' व्याख्यानमुपसंहारः ॥ २ ॥

अथ दीक्षितेष्वारम्य वैशेषिककर्मविधिः समवस्यन्ति एकस्मिन्देशे तूपकरणानि विमुञ्चन्ति ततश्च सामर्थ्या-

तस्य शिरो निदधाति । तेषां यदि तदहर्दीक्षा न समैत्यरणिष्वेवाग्नीन्त्स-
मारोह्य यथायथं विपरेत्य जुह्वति ॥ ४ ॥

( त्यु ) अथ यदहरेषां दीक्षा समैति । ( त्य ) अरणिष्वेवाग्नीन्त्समा-
रोह्योपसमायन्ति यत्र दीक्षिष्यमाणा भवन्ति गृहपतिरेव प्रथमो मन्थते
मध्यं प्रति शालायाऽ अथेतरेषामर्धा दक्षिणत ऽउपविशन्त्यर्धाऽ उत्तरतो
मथित्वोपसमाधायैकैकमेवोल्मुकमादायोपसमायन्ति गृहपतेर्गार्हपत्यं गृह-
पतेरेव गार्हपत्यादुद्धृत्याहवनीयं दीक्षन्ते तेषाꣳ समान ऽआहवनीयो भवति
नाना गार्हपत्या दीक्षोपसत्सु ॥ ५ ॥

---

तस्य शिरो निदधाति । तेषां यदि तदहर्दीक्षा न समैति—अरणिष्वेवाग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति ॥ ४ ॥

अथ यदहरेषां दीक्षा समैति—अरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति—यत्र दीक्षिष्यमाणा भवन्ति । गृहपतिरेव प्रथमो मन्थते—मध्यं प्रति शालायाः । अथेतरेषामर्धा दक्षिणत उपविशन्ति,

---

दग्न्यादीन्संसृज्य यजन्त इत्येतावदेवैतमभिसमवेक्षमाणानामतःपरमाब्राह्मणपरिसमाप्ति अपि साधारणं कल्पत्रय-माह—अथेति । प्राजापत्यस्य नियमविकल्पविशेषनिबन्धनाद्वा विशेषो मंथने । प्रत्येकं गृहपतेर्दक्षिणोत्तरा कुत एतत् । एतस्मिन्नेव चाज्ये दीक्षाकालस्य नियमस्य वचनादविरोधः । 'उपसमाधाय' पृथक् पृथग्गार्ह-पत्याहवनीयं सर्वेभ्य एकैकमङ्गारं गृहपतेराहवनीये प्रास्येयुरेवमाहवनीयमुद्धृत्य । कुत एवं शाखान्तराद् गार्हपत्ये एव प्रासनस्येह श्रवणात् । 'यजन्त एतेन प्राजापत्येन पशुना'—इति प्राजापत्यनियमार्थं वचनम् ॥ ३ ॥

तस्य शिरो निदधतीति । अनुवाद एव ॥ ४ ॥

अथ यदहारिति । यदहरिति सप्तम्या लुक् द्रष्टव्यः । यस्मिन्नहनीत्यर्थः । 'समैति' संपद्यतेऽस्मिन्नित्य-ध्याहारः । 'यत्र' देशे 'दीक्षिष्यमाणा भवन्ति' तत्रेति शेषः । 'गृहपतिरेव प्रथमः' इति क्रमो

---

१—अथ द्वादशाहधर्माः । अग्निं चेष्यमाणाः समारोह्य गृहपतिर्मध्यं मंथत्यर्द्धश इतरे दक्षिणोत्तराः । गृहपत्याहवनीयेऽगारप्रासनम् । तत्र प्राजापत्यः पशुः । आज्येन पत्नीसंयाजा गृहपतिवर्जम् । तदहर्दीक्षा अनेन सूत्रेण दीक्षायाः प्राजापत्यपशोश्चैककालतोच्यते । तत्र दीक्षाकाले प्राजापत्यः कर्तव्यः । न पशुकाले दीक्षा । इति सूत्रार्थः । अशक्तौ नियतक्रिया समारूढनिर्मथितेषु सर्वत्र । पशुदीक्षयोरेककालता अशक्तौ स्वकाले पशुं कृत्वा समारोपननिर्मंथनपूर्विकाऽनियतानां क्रियाः । सर्वत्रग्रहणाच्च त्रिष्वपि मंथनपक्षेषु । इति कार्कः सूत्रार्थः । अर्थाद्दिनांतरे दीक्षा । दीक्षाकाल उदवश्शायां पूर्ववन्मंथनम् । अनेन दीक्षाकाले मंथनं बोध्यते । तत्रायं मंथनकालस्यैकः पक्षः । गार्हपत्ये प्रासनमत्र । अस्मिन्नेव पक्षे । आहवनीयस्ततः । अस्मिन्नेव पक्षे । तुल्यन्यायाद्दक्षिणाग्निरप्युच्छ्रियते इति कर्कः । तत्र दीक्षा । का० श्रौ० सू० । १२ । १६–२५ ।

अथ मंथने द्वितीयः पक्षः । गृहपतिं वा पर्युपविश्य मंथन्ते । गृहपतिः प्रथमः प्रथमः सर्वत्र । सर्वत्र सर्वमंथनपक्षेषु । जातं जातं गृहपतिर्गार्हपत्ये प्रास्यत्युभयत्र । पर्युपवेशनपक्षे पशौ दीक्षायाञ्चोभयत्र ग्रहणादिति कर्कः । का० श्रौ० सू० १२।३२–३४ ।

अथ मंथने तृतीयः पक्षः । अरण्योर्वाहुर्गृहपतेर्य इतोऽग्निर्जनिष्यते स नः सह यदनेन यज्ञेन जेष्यामोऽनेन पशुबंधेन तन्नः सह सह नः साधुकृत्या नानापापकृत्या य एव पापं करवत्तस्यैव तदित्युक्त्वा गृहपतिः समारोहयते स्वौ प्रथमम् । यथास्वं वेतरे । इति मंथने तृतीयः पक्षः । का० श्रौ० सू० १२ । ३६ । ३७ ।

( त्स्वु ) अ॒थ य॒दह॑रेषां क्र॒यो भ॑वति । त॒दह॒र्गा॑र्हपत्यां चि॒तिमु॒पद॑धात्य॒थेत॒रेभ्य॑ऽ उपवस॒थे धि॒ष्ण्या॒न्वैस॑र्जिनानां॒ काले॒ प्रा॒च्यः॒ पत्न्य॑ऽ उपसमु॒यन्ति प्र॒जह॑त्येतानु॒परा॑नग्नी॒न्हुत॑ऽए॒व व्वैस॑र्जिने ॥ ६ ॥

रा॒जानं॑ प्र॒णय॑ति । ( त्यु ) उ॒द्यत॑ ए॒वैष॒ ऽआग्नी॒ध्रीयो॑ऽग्निर्भ॑वत्य॒थैत॑ऽ ए॒कैक॑मोवोल्मु॒कमा॑दाय य॒थाधि॒ष्ण्यं॑ व्विप॒राय॑न्ति तैरे॒व ते॒षामु॒ल्मुकैः॑ प्रघ्न॒न्तीति॑ ह स्मा॒ह या॒ज्ञव॑ल्क्यो ये त॒था कु॒र्व्वन्ती॒त्येत॒न्न्वे॑कम॒यन॑म् ॥ ७ ॥

---

अर्धा उत्तरतः । मथित्वोपसमाधायैकैकमेवोल्मुकमादायोपसमायन्ति-गृहपतेर्गार्हपत्यम् । गृहपतेरेव गार्हपत्यादुद्धृत्याहवनीयं दीक्षन्ते । तेषां समान आहवनीयो भवति, नाना गार्हपत्या-दीक्षोपसत्सु ॥ ५ ॥

अथ यदहरेषां क्रयो भवति-तदहर्गार्हपत्यां चितिमुपदधाति । अथेतरेभ्य उपवसथे धिष्ण्यान् । वैसर्जिनानां काले प्राच्यः पत्न्य उपसमायन्ति । प्रजहत्येतानपरानग्नीन् हुतऽएव वैसर्जिने ॥ ६ ॥

राजानं प्रणयति । उद्यत एवैष आग्नीध्रीयोऽग्निर्भवति । तऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं विपरायन्ति । तैरेव तेषामुल्मुकैः प्रघ्नन्तीति ह स्माह-याज्ञवल्क्यः-ये तथा कुर्वन्तीति । एतन्न्वेकमयनम् ॥ ७ ॥

---

'मध्यं प्रति' अतिदेश उभयविशिष्टमन्थनं विधीयते । 'अथेतरेषामर्धा दक्षिणतः' इति यथाक्रमं प्रत्यासत्तिः । ब्रह्मगृहपतेरनन्तरो दक्षिण इति । उद्गातोत्तरतो ब्रह्मणो दक्षिणतो होतोद्गातुरुत्तरतोऽध्वर्युरेवमपि द्रष्टव्यम ॥ ५ ॥

अथ यदिति । गार्हपत्यां गृहपतिना संयुक्तामिति । गृहपतिर्गार्हपत्यस्य 'चितिं' क्रयणीयेऽहनि चिनोति इतरेभ्यस्त्वितरदीक्षितगार्हपत्येभ्यः 'उपवसथे' चिनोति । तान् स्वधिष्ण्यरूपानिष्टकानेकविंशतिम् इष्टकानि 'वैसर्जिनानां काले' प्राप्ते 'प्राच्यः पत्न्यो' यथास्वधिष्ण्यं संतत एव युगपदुपागच्छन्ति । 'प्रजहति' च प्रमुञ्चन्ति च एतानपरान्पश्चिमान्निर्मथ्यानग्नीन्प्रजहतीत्येतच्च नाग्नीनामुपगमनमुच्यते, किं तर्हि प्रतिगमाशंका निवर्त्यते नैवमाशङ्कनीयं वचनात् । प्राप्यागत्य पुनस्तानेव पराग्नीकृतेषु वैसर्जिनेषु व्रजन्तीति हुत एव वैसर्जिने द्वितीये राजानं प्रणयतीत्यनुवाद एवोत्तरवचनार्थः ॥ ६ ॥

राजानं प्रणयतीति । 'उद्यत एव' आक्षिप्त एव 'एष' 'आग्नीध्रीयो भवति' यावच्छालाया न निष्क्राम्यात् । तावदेवैतदितरे सत्रिणः साधारण्याच्छालाद्वार्याद् 'एकैकमुल्मुकमादाय' पृथक् पृथक् पराङ्मुखा गच्छन्तीति । एकोऽग्निविकल्पः । एवं यज्ञं याज्ञवल्क्यमतेन विन्दति । तैरेवेति । यैरुल्मुकैर्गृहपतयोऽनुगच्छन्ति दीक्षाकाले तैरेवोल्मुकैस्तेषां सत्रिणां पुत्रादीन् प्रकर्षेण घ्नन्ति तथा कुर्वन्तीत्येतद्याज्ञवल्क्यवचन एवैकमित्युपसंहारः ॥ ७ ॥

---

१—उपवसथप्रभृति प्रागग्नीषोमप्रणयनादुपशमय्य चिनोत्येनान् शालाद्वार्याद्दक्षिणोत्तरान् धिष्ण्यवत्। श्रुतेः । वा यथोक्तं गृहपतेः । आग्नीध्रीये उद्यतेंऽगारमेकैकं हरंति प्रतिचिति शालाद्वार्यात् । का. श्रौ. सू. १२ । २६-२९ ।

११६०

( मु ) अथेदं द्वितीयम् । ( म ) अरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं यजन्तऽएतेन प्राजापत्येन पशुना ॥ ८ ॥

तस्य शिरो निदधाति । तेषां यदि तदहर्दीक्षा न समैत्यरणिष्वेवाग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति ॥ ९ ॥

( त्यु ) अथ यदहरेषां दीक्षा समैति । ( त्य ) अरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति यत्र दीक्षिष्यमाणा भवन्ति गृहपतिरेव प्रथमो मन्थतेऽथेतरे पर्युपविश्य मन्थन्ते ते जातं जातमेवानुप्रहरन्ति गृहपतेर्गार्हपत्ये गृहपतेरेव गार्हपत्यादुद्धृत्याहवनीयं दीक्षन्ते तेषाᳬं समान आहवनीयो भवति समानो गार्हपत्यो दीक्षोपसत्सु ॥ १० ॥

( त्स्वु ) अथ यदहरेषां क्रयो भवति । तदहर्गार्हपत्यां चितिमुपदधात्यथेतरेभ्य ऽउपवसथे धिष्ण्यान्वैसर्जिनानां काले प्राच्यः पत्न्य ऽउपसमायन्ति प्रजहत्येतमपरमग्निᳫं हुतऽएव वैसर्जिने ॥ ११ ॥

राजानं प्रणयति । ( त्यु ) उद्यत ऽएवैष ऽआग्नीध्रीयोऽग्निर्भवत्यथैतऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं विपरायन्ति समदमु हैव ते कुर्वन्ति

---

अथेदं द्वितीयम् अरणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति—यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति । मथित्वोपसमाधायोद्धृत्याहवनीयं यजन्ते—एतेन प्राजापत्येन पशुना ॥ ८ ॥

तस्य शिरो निदधाति । तेषां यदि तदहर्दीक्षा न समैति—अरणिष्वेवाग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति ॥ ९ ॥

अथ यदहरेषां दीक्षा समैति- अराणिष्वेवाग्नीन्त्समारोह्योपसमायन्ति—यत्र दीक्षिष्यमाणा भवन्ति। गृहपतिरेव प्रथमो मन्थते—अथेतरे पर्युपविश्य मन्थन्ते । ते जातं जातमेवानुप्रहरन्ति—गृहपतेर्गार्हपत्ये गृहपतेरेव गार्हपत्यादुद्धृत्याहवनीयं दीक्षन्ते । तेषां समान आहवनीयो भवति, समानो गार्हपत्यो—दीक्षोपसत्सु ॥ १० ॥

अथ यदहरेषां क्रयो भवति—तदहर्गार्हपत्यां चितिमुपदधाति । अथेतरेभ्य उपवसथे धिष्ण्यान् । वैसर्जिनानां काले प्राच्यः पत्न्य उपसमायन्ति । प्रजहत्येतमपरमग्निम् हुतऽएव वैसर्जिने ॥ ११ ॥

राजानं प्रणयति उद्यत एवैष आग्नीध्रीयोऽग्निर्भवति। अथैतऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं

---

अथेदमिति । प्रसन्नाश्वतस्रः ॥ ८–११ ॥

राजानं प्रणयतीति । समदमिति । यत्र जातमग्निं गृहपतेर्गार्हपत्ये प्रास्यन्ति तत्समदं संमरणं विरोध-

समृद्धैनान्विन्दत्यर्तुका ह भवन्त्यपि ह तमर्धꣳ समृद्विन्दति यस्मिन्नर्धे यजन्ते ये तथा कुर्वन्त्येतद्द्वितीयमयनम् ॥ १२ ॥

( म ) अथेदं तृतीयम् । गृहपतेरेवारण्योः संवदन्ते य इतोऽग्निर्जनिष्यते स नः सह यदनेन यज्ञेन जेष्यामोऽनेन पशुबन्धेन तन्नः सह सह नः साधुकृत्या यऽएव पापं करवत्तस्यैव तदित्येवमुक्त्वा गृहपतिरेव प्रथमः समारोहयतेऽथेतरेभ्यः समारोहयति स्वयं वैव समारोहयन्ते तऽआयन्ति यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं यजन्तऽएतेन प्राजापत्येन पशुना ॥ १३ ॥

तस्य शिरो निदधति । तेषां यदि तदहर्दीक्षा न समैत्यरणिष्वेवाग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति ॥ १४ ॥

( त्य ) अथ यदहरेषां दीक्षा समैति । गृहपतेरेवारण्योः संवदन्ते य इतोऽग्निर्जनिष्यते स नः सह यदनेन यज्ञेन जेष्यामोऽनेन सत्रेण तन्नः सह सह नः साधुकृत्या य एव पापं करवत्तस्यैव तदित्येवमुक्त्वा गृहपति-

---

विपरायन्ति । समदमु हैव ते कुर्वन्ति । समद्धैनान्विन्दति । अर्तुका ह भवन्ति । अपि ह तमर्धं समद्विन्दति—यस्मिन्नर्धे यजन्ते—ये तथा कुर्वन्ति एतद्द्वितीयमयनम् ॥ १२ ॥

अथेदं तृतीयम्—गृहपतेरेवारण्योः सम्वदन्ते—'य इतोऽग्निर्जनिष्यते—स नः सह, यदनेन यज्ञेन जेष्यामः—अनेन पशुबन्धेन—तन्नः सह, सह नः साधुकृत्या य एव पापं करवत्—तस्यैव तत्—इत्येवमुक्त्वा गृहपतिरेव प्रथमः समारोहयते। अथेतरेभ्यः समारोहयति। स्वयं वैव समारोहयन्ते। तऽआयन्ति—यत्र प्राजापत्येन पशुना यक्ष्यमाणा भवन्ति । मथित्वोपसमाधायोद्धृत्याहवनीयं यजन्ते—एतेन प्राजापत्येन पशुना ॥ १३ ॥

तस्य शिरो निदधति । तेषां यदि तदहर्दीक्षा न समैति—अरणिष्वेवाग्नीन्त्समारोह्य यथायथं विपरेत्य जुह्वति ॥ १४ ॥

अथ यदहरेषां दीक्षा समैति—गृहपतेरेवारण्योः संवदन्ते—'य इतोऽग्निर्जनिष्यते—स नः सह, यदनेन यज्ञेन जेष्यामः—अनेन सत्रेण; तन्नः सह, सह नः साधुकृत्या य एव पापं करवत्—तस्यैव

---

मग्नीनां कुर्वन्ति । तदनुकारेण वैनान् सत्रिणो विरोधः प्राप्नोति अंतकस्तस्य स्पर्द्धनशीलाः परस्परं भवन्ति ये तथा कुर्वन्ति तस्य कल्पस्यापवादः । न केवलं सत्रिणः 'समद्विन्दति' यस्मिन्नर्द्धे जनपदे तमपि जनपदविरोधं प्राप्नोति ॥ १२ ॥

अथेदं तृतीयमिति । प्रसन्नाश्वतस्रः । 'गृहपतिरेव' प्रथमः स्वमग्निं समारोहयति स्वयोररण्योरथेतरेभ्यः स्वयोरेव समारोहयति अनेन साधारण्यार्थेन यासु अरणिष्वेव दीक्षासमारोपणं वक्ष्यते । राजानं प्रकृत-

रेव प्रथमः समारोहयतेऽथेतरेभ्यः समारोहयति स्वयं वैव समारोहयन्ते तऽआयन्ति यत्र दीक्षिष्यमाणा भवन्ति मथित्वोपसमाधायोद्धृत्याहवनीयं दीक्षन्ते तेषाᳪ समान आहवनीयो भवति समानो गार्हपत्यो दीक्षोपसत्सु ॥ १५ ॥

( तस्य ) अथ यदहरेषां क्रयो भवति । तदहर्गार्हपत्यां चितिमुपदधात्यथेतरेभ्य ऽउपवसथे धिष्ण्यान्वैसर्जिनानां काले प्राच्यः पत्न्य ऽउपसमायन्ति प्रजहत्येतमपरमग्निᳪ हुतऽएव वैसर्जिने ॥ १६ ॥

राजानं प्रणयति । [त्यु] उद्यतऽ एवैष ऽ आग्नीध्रीयोऽग्निर्भवत्यथैतऽएकैकमेवोल्मुकमादाय यथाधिष्ण्यं विपरायन्ति तत्तत्कृतं नानाकृतं यन्नानाधिष्ण्या भवन्ति वरीयानाकाशोऽसत्परिचरणायेत्यथ यन्नानापुरोडाशा भूयो हविरुच्छिष्टमसत्समाप्त्याऽइति ॥ १७ ॥

---

तत्–इत्येवमुक्त्वा गृहपतिरेव प्रथमः समारोहयते । अथेतरेभ्यः समारोहयति । स्वयं वैव समारोहयन्ते । तऽआयन्ति–यत्र दीक्षिष्यमाणा भवन्ति । मथित्वोपसमाधायोद्धृत्याहवनीयं दीक्षन्ते । तेषां समान आहवनीयो भवति, समानो गार्हपत्यो–दीक्षोपसत्सु ॥ १५ ॥

अथ यदहरेषां क्रयो भवति–तदहर्गार्हपत्यां चितिमुपदधाति । अथेतरेभ्य उपवसथे धिष्ण्यान् । वैसर्जिनानां काले प्राच्यः पत्न्य उपसमायन्ति । प्रजहत्येतमपरमग्निम् । हुतएव वैसर्जिने ॥ १६ ॥

राजानं प्रणयति । उद्यत एवैष आग्नीध्रीयोऽग्निर्भवति । अथैतएकैकमेवोल्मुकमादाय यथाधिष्ण्यं विपरायन्ति । तत्तत्कृतं–नानाकृतम्–यन्नानाधिष्ण्या भवन्ति । वरीयानाकाशोऽसत्परिचरणायेति । अथ यन्नानापुरोडाशा भूयो हविरुच्छिष्टमसत्समाप्त्याऽइति ॥ १७ ॥

---

मिति तच्छब्दो वाक्योपन्यासे । यदेतयोररण्योः समुपजाताग्नीनां साधारण्यं कृतमस्मिन्कल्पे तत्कृतमेव नाशयितव्यम् । गृहपतेररणिभ्यां जातोऽग्निः संवादमात्रेण साधारणो भवतीति न तत्कृतमित्युल्मुकप्रेष्यानसगप्राप्तिदोषमेवं दर्शयति–दोषे हि सति साधारण्यं कृतं स्यादित्यभिप्रायः । नन्वेवं सति धिष्ण्यपुरोडाशैरपि साधारणैरेव भवितव्यम्, भेदे कारणाभावादित्याशङ्कित आह । यत्र नाना पृथग्धिष्ण्या भवन्ति तत्रैव तत्प्रयोजनं कथं नाम वरीयान् । उत्तरः–शालायामाकाशोऽवकाशः स्यादिति किं तेनावकाशेनेति चेदत आह–परिचरणाय कस्यचिद्दीक्षितस्यातुरस्याह–तथाहि वक्ष्यति नानाधिष्ण्या एव स्युर्यदि दीक्षितस्यैतत् प्रेत्य पार्श्वतोऽग्निहोत्रं जुहुदित्यर्थोऽभिप्रायः । अथ यत्र पुरोडाशा इति त्रिष्वपि पूर्वेषु विभिरयं प्रास्तत्वात् पुरोडाशा इति सवनीयानाह । भूयो बहुतरं हविर्देवानामुच्छिष्टमुपभुक्तादासमाप्तेः समाप्त्यर्थं तद्वन्मत्तो(?) तद्वयश्नन्तो दीक्षिता जीवन्तः समापयन्तीतरथा महान्तमन्नराशिमल्पेनाशनेन समापयेयुरिति भवन्ति विशेषादन्य आहारो नास्ति दीक्षितस्येति दर्शयति ॥ १३–१७ ॥

---

१–प्रत्यग्नि सवनीयपुरोडाशा “ भूयो हविरुच्छिष्टमसत्समाप्त्या इति ” श्रुतेः । का. श्रौ. सू. १२ । ३० ।

( त्यु ) अथ येन सत्त्रेण देवाः । क्षिप्रऽएव पाप्मानमपाघ्नतेमां जितिमजयन्यैषामियं जितिस्तदुतऽ उद्यतऽएकगृहपतिका वै देवाऽएकपुरोडाशाऽ एकधिष्ण्याः क्षिप्रऽएव पाप्मानमपाघ्नत क्षिप्रे प्राजायन्त तथोऽएवैतऽएकगृहपतिका एकपुरोडाशा एकधिष्ण्याः क्षिप्रऽएव पाप्मानमपघ्नते क्षिप्रे प्रजायन्ते ॥ १८ ॥

(न्तेऽथा) अथादः पूर्वस्मिन्नुदीचीनवꣳशा शाला भवति । तन्मानुषꣳ समान आहवनीयो भवति नाना गार्हपत्यास्तद्विकृष्टं गृहपतेरेव गार्हपत्ये जाघन्या पत्नीः संयाजयन्त्याज्येनेतरे प्रतियजन्तऽआसते तद्विकृष्टम् ॥ १९ ॥

( म ) अथात्र प्राचीनवꣳशा शाला भवति । तद्देवत्रा समानऽ आहवनीयो भवति समानो गार्हपत्यः समानऽ आग्नीध्रीयस्तदेतत्सत्त्रꣳसमृद्धं

---

अथ येन सत्रेण देवाः क्षिप्रऽएव पाप्मानमपाघ्नत । इमं जितिमजयन्—यैषामियं जितिः । तदुत उद्यते । एकगृहपतिका वै देवा एकपुरोडाशा एकधिष्ण्याः क्षिप्रऽएव पाप्मानमपाघ्नत, क्षिप्रे प्राजायन्त । तथोऽएवैतऽएकगृहपतिका एकपुरोडाशा एकधिष्ण्याः क्षिप्रऽएव पाप्मानमपघ्नते क्षिप्रे प्रजायन्ते ॥ १८ ॥

अथादः पूर्वस्मिन्नुदीचीनवंशा शाला भवति—तन्मानुषम् । समान आहवनीयो भवति, नाना गार्हपत्याः—तद्विकृष्टम् । गृहपतेरेव गार्हपत्ये जाघन्या पत्नीः संयाजयन्ति, आज्येन । इतरे प्रतियजन्त आसते, तद्विकृष्टम् ॥ १९ ॥

अथात्र प्राचीनवंशा शाला भवति—तद्देवत्रा । समान आहवनीयो भवति, समानो गार्हपत्यः,

---

अथ येन सत्रेणेति । शाला गार्हपत्यपुरोडाशपत्नीसंयाजा एकाहवत्कार्या इत्येतदेतेन कण्डिकात्रयेणोच्यते 'येन सत्रेण' यादृशेनेत्यर्थः । एकगृहपतिका इति श्रुत्यन्तरे बहवोऽपि गृहपतयो दृश्यन्ते । "सप्तदशावराश्चतुर्विंशतिपरमाः सत्रमासीरन्" इत्यत्र हि ये सप्तदशभ्योऽधिकास्ते गृहपतयो भवन्ति तन्निवृत्त्यर्थमेकगृहपतिकवचनम् । कथं नामास्मिन्पक्षे एक एव गृहपतिः स्यादित्येकपुरोडाश इत्येकशब्दः समानार्थे नानात्वप्रतिपक्षे आहवनीय इति निन्दार्थमपि प्रवृत्तमिदमेव वचनमुदीचीनवंशत्वे द्रष्टव्यम् । समान आहवनीय इत्येतत्तु प्राप्तमेव निन्दार्थमनूद्यते । विकृष्टं विधिमन्यथा कृष्टफलं सालक्षण्येन गार्हपत्याहवनीययोर्भवतीत्यभिप्रायः । गृहपतेरेवेत्येतदप्यत एव वचनादवसीयते । इतरे दीक्षिता आज्येन प्रतियजन्तः प्रत्यात्मसाधारण्यान्यजन्त आसते सत्रमेवं नयन्तीत्यर्थः । तद्विकृष्टम् अपि पापिष्ववशेषात् किंचित्साधारणं किञ्चिन्नेति तस्माच्च विशेषात् ॥ १८ ॥ १९ ॥

अथात्रेति । प्राचीनवंशेत्येकगृहपतित्वमादित्सन्नियोगेन नियमविधिः । 'समानो गार्हपत्यः' इत्ययं च 'समान आहवनीयः' 'समान आग्नीध्रीयश्च' इत्यनुवाद एवाविकृष्टत्वप्रदर्शनार्थः । 'यथैकाहः समृद्धमिति'

यथैकाहः समृद्धऽ एवं तस्य न ह्वलाऽस्ति तस्यैषैव समान्यावृद्यदन्यद्धिष्ण्येभ्यः ॥ २० ॥

इति पञ्चमप्रपाठके दशमं ब्राह्मणम् ॥ ४-५-१० ॥ (६ ॥ ८)

देवा ह वै सत्रमासत । श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति तेभ्यऽ एतदन्नाद्यमभिजितमपाचिक्रमिषत्पशवो वाऽअन्नं पशवो हैवैभ्यस्तदपाचिक्रमिषन्यद्वै न इमे श्रान्ता न हिꣳस्युः कथमिव स्विन्नः सक्ष्यन्तऽइति ॥१॥

तऽएते गार्हपत्ये द्वेऽआहुतीऽअजुहवुः । ( गृ ) गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तदेनान्गृहेष्वेव न्ययच्छंस्तथैभ्य एतदन्नाद्यमभिजितं नापाक्रामत् ॥ २ ॥

( त्त ) तथोऽएवेमे सत्रमासते । ये सत्रमासते श्रियं गच्छेम यशः स्यामान्नादाः स्यामेति तेभ्यऽएतदन्नाद्यमभिजितमपचिक्रमिषति पशवो वाऽअन्नं

---

समान आग्नीध्रीयः । तदेतत्सत्रं समृद्धम् । यथैकाहः समृद्धः—एवम् । तस्य न ह्वलाऽस्ति । तस्यैषैव समान्यावृत्—यदन्यद्धिष्ण्येभ्यः ॥ २० ॥

देवा ह वै सत्रमासत—श्रियं गच्छेम, यशः स्याम, अन्नादाः स्यामेति । तेभ्य एतदन्नाद्यमभिजितमपाचिक्रमिषत् । पशवो वाऽ अन्नम् । पशवो हैवैभ्यस्तदपाचिक्रमिषन् । यद्वै न इमे श्रान्ता न हिंस्युः—कथमिव स्विन्नः सक्ष्यन्तऽइति ॥ १ ॥

तऽएते गार्हपत्ये द्वेऽआहुतीऽअजुहवुः । गृहा वै गार्हपत्यः, गृहा वै प्रतिष्ठा । तद् एनान्गृहेष्वेव न्ययच्छन् । तथैभ्य एतदन्नाद्यमभिजितं नापाक्रामत् ॥ २ ॥

तथोऽएवेमे सत्रमासते ये सत्रमासते—श्रियं गच्छेम, यशः स्याम अन्नादाः स्यामेति । तेभ्य

---

च्छन्दः ' तस्य ' सत्रस्य ' एषैव ' तुल्या आवृत्क्रिया । या तृतीयमन्थनमुपक्रम्याथेदं तृतीयमित्यादिका; सा किं सर्वैवानेन पक्षेण तुल्या अत आह—यदन्यद्धिष्ण्येभ्य इति । धिष्ण्यविषयाया आवृतः अन्या या आवृत्संवादादिका सा समानी या धिष्ण्येष्वथ चयनं पुरोडाशनिष्पादनेन पत्नीसंयाजादिका सा समानी-इत्यनुवाद एवायम् ॥ २० ॥

इति श्रीहरिस्वामिनः कृतौ माध्यन्दिनीयशतपथब्राह्मणभाष्ये चतुर्थकाण्डे षष्ठेऽध्यायेऽष्टमं ब्राह्मणम् ॥ ( ४-६-८ ) ॥

देवा ह वा इति । सत्रात्मकस्य द्वादशाहस्य यो मध्ये दशरात्रस्तस्य दशमेऽहनि सत्रोत्थानकालोऽधिकोऽनेन ब्राह्मणेन विधीयते; तदर्थमाद्याभिश्चतसृभिः कण्डिकाभिरितिहासप्रक्रमेणाहुतिद्वयोत्पत्तिः क्रियते । ततो द्वाभ्यां पुरुषार्थासने नियमस्तत आब्राह्मणसमाप्तेः सत्रोत्थानप्रकल्पनम् । एतदिति प्रत्यक्षं स्थूलं दर्शयति । 'अभिजितं'

पशुवो हैवैभ्यस्तुदुपचिक्रमिषन्ति यद्वै न इमे श्रान्ता नु हिꣳस्युः कथमिव स्विन्नः सक्ष्यन्तऽइति ॥ ३ ॥

तुऽएते गार्हपत्ये द्वेऽआहुती जुह्वति । गृहा वै गार्हपत्यो गृहा वै प्रतिष्ठा तुदेनान्गृहेष्वेव नियच्छन्ति तुथैभ्यऽ एतुदन्नाद्यमभिजितं नापक्रामति ॥४॥

तुथोऽएवैतुस्मात् । ( दे ) एतुदन्नाद्यमुपाहृतमुपचिक्रमिषति यद्वै माऽयं नु हिꣳस्यात्कथमिव स्विन्मा सक्ष्यतऽइति ॥ ५ ॥

तुस्य परुस्तादेवाग्रेऽल्पशुऽइव प्राश्नाति । तुदेनदुपनिमदति तुद्वेद न वै तथाऽभूद्यथाऽमꣳसि न वै माऽहिꣳसीदिति तुदेनमुपावश्रयते सु ह प्रियु ऽएवान्नस्यान्नादो भवति यु ऽएवुं विद्वानेतुस्य व्रतुꣳ शक्नोति चुरितुम्॥६॥

---

एतदन्नाद्यमभिजितमपचिक्रमिषति । पशवो वाऽअन्नम् । पशवो हैवैभ्यस्तदपचिक्रमिषन्ति । यद्वै न इमे श्रान्ता न हिंस्युः, कथमिव स्विन्नः सक्ष्यन्तऽइति ॥ ३ ॥

तऽएते गार्हपत्ये द्वेऽआहुती जुह्वति । गृहा वै गार्हपत्यः, गृहा वै प्रतिष्ठा । तद् एनान्गृहेष्वेव नियच्छन्ति । तथैभ्य एतदन्नाद्यमभिजितं नापक्रामति ॥ ४ ॥

तथोऽएवैतस्मादेतदन्नाद्यमुपाहृतमपचिक्रमिषति । यद्वै माऽयं न हिंस्यात्, कथमिव स्विन्मा सक्ष्यतऽइति ॥ ५ ॥

तस्य परस्तादेवाग्रेऽल्पश ऽइव प्राश्नाति । तदेनदुपनिमदति–तद्वेद । न वै तथाऽभूद्–यथाऽमंसि । न वै माऽहिंसीदिति । तदेनमुपावश्रयते । स ह प्रिय एवान्नस्यान्नादो भवति य एवं विद्वानेतस्य व्रतं शक्नोति चरितुम् ॥ ६ ॥

---

कर्मभिरुपात्तं वशीकृतम् ‘ अपाचिक्रमिषत् ’ अपक्रमितुमैच्छत् इति । ‘ यद्वै न ’ ( इति तूपनमोशंकोपक्रमण-कारणे ) ‘ स्वित् ’ इति वितर्के । नो जानीमः केन प्रकारेणास्मानेव देवाः ‘ सक्ष्यन्ते ’ “ षच सेवायां ” ( धा. पा. भ्वा. आ. १६३ ) कथं ? सेविष्यन्ते कथं करिष्यन्तीत्यर्थः ॥ १–३ ॥

तथोऽएवेति । तस्माद्वोक्ष्यमाणमेतदन्नाद्यं भाजन उपाहृतमपचिक्रमिषति ॥ ४ ॥ ५ ॥

तस्येति । ‘ तस्य एतस्यान्नस्य भाजन उपाहृतस्य । ‘परस्तात्’ परमागात्प्रथमं प्राणाहुतीः ‘ अल्पशः अल्प-मल्पं ‘ प्राश्नाति ’ ‘तत्’ तेनाल्पशः प्राशनेन ‘ एनद् ’ अन्नम् ‘ उपनिमदति ’ उपहर्षयति । ‘ तत् ’ हर्षमाणं ‘वेद’ जानाति । ‘यथाऽमंसि’ “मन ज्ञाने” ( धा.पा.दि.आ. ७० ) यथाऽहं ज्ञातवान् बभूव कथं न वै माहिं सीदिति नैष भोक्ताऽल्पशः परस्तात् प्रथमं ( शंखेनय इति ) ईषदन्नमेव भोक्तारमुपगम्याल्पतया श्रूयते स च प्रिय एव भवत्यत्रा [ दोम ] एवं विद्वानेतस्येदं यथोक्तं परस्तादग्रेऽल्पशः प्राशनं ‘ व्रतं शक्नोति चरितुम् ’ ॥ ६ ॥

तद्वाऽएतत् । ( ह ) दशमेऽहन्त्सत्रोत्थानं क्रियते तेषामेकैकऽएव वाचंयम आस्ते वाचमाप्याययंस्तयाऽऽपीनयाऽयातयाम्न्योत्तरमहस्तन्वतेऽथेतरे विसृज्यन्ते समिद्धारा वा स्वाध्यायं वा तत्राप्यश्नन्ति ॥ ७ ॥

तेऽपराह्णऽउपसमेत्य । ( त्या ) अप उपस्पृश्य पत्नीशालँ सम्प्रपद्यन्ते तेषु समन्वारब्धेष्वेतेऽआहुती जुहोतीह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहेति पशूनेवैतदाह पशूनेवैतदात्मन्नियच्छन्ते ॥ ८ ॥

( न्तेऽथ ) अथ द्वितीयां जुहोति । ( त्यु ) उपसृजन्धरुणं मात्रऽइत्यग्निमेवैतत्पृथिव्याऽउपसृजन्नाह धरुणो मातरं धयन्नित्यग्निमेवै तत्पृथिवीं

---

तद्वाऽएतद् दशमेऽहन्त्सत्रोत्थानं क्रियते । तेषामेकैक एव वाचंयम आस्ते-वाचमाप्याययन् । तयाऽऽपीनयाऽयातयाम्न्योत्तरमहस्तन्वते । अथेतरे विसृज्यन्ते । समिद्धारा वा स्वाध्यायं वा । तत्राप्यश्नन्ति ७॥

तेऽपराह्ण उपसमेत्य, अप उपस्पृश्य, पत्नीशालं सम्प्रपद्यन्ते । तेषु समन्वारब्धेष्वेतेऽआहुती जुहोति । "इह रतिरिह रमध्वमिह धृतिरिह स्वधृतिः स्वाहा"-( वा. सं. ८ । ५१ ) इति । पशूनेवैतदाह-पशूनेवैतदात्मन्नियच्छन्ते ॥ ८ ॥

अथ द्वितीयां जुहोति-"उपसृजन्धरुणं मात्रे"-( वा. सं. ८ । ५१ ) इति । अग्निमेवै-

---

तद्वाऽएतदिति । दशमेऽहनि दशरात्रस्य ( क्षतन्नधा ? ) "तयाऽऽपीनयाऽयातयाम्न्याऽतिरात्रं तन्वते" इति ज्योतिष्टोमातिरात्रस्योदयनीयस्य दर्शनात् । अहन्नित्यहःकर्मात्मकं सत्रोत्थानस्याङ्गत्वेनोपात्तम् । कुत एतत्कर्मणा सत्रमासत इति प्रकृतत्वात् 'उत्तरमहस्तन्वत' इति तायमाने श्रवणात्सत्रोत्थानमिति क्रियत इत्युपेक्षितं वक्ष्यते-"तेऽपराह्ण उपसमेत्येति[२]"। इतरे तु तद्व्यतिरिक्ता दीक्षिताः 'विसृज्यन्ते' पृथक् पृथक् गच्छन्ति । किमर्थं 'समिद्धारा वा' समिधं हर्तुमानेतुं समिद्धारा "भाववचनाश्च" (पा. सू. ३।३।११) इति क्रिया क्रियार्थेयं यत्र 'स्वाध्यायं वा' कर्त्तुमिति शेषः । ते च विगमाः सन्तः समं यन्तीति संबन्धः । तत्रापि गताः सन्तो ये कुतश्चिदासादयन्ति तद् 'अश्नन्ति' ते वै सृष्टा अहविरुच्छिष्टमपीति प्रासङ्गिको विधिः ॥ ७ ॥

तेऽपराह्ण इति । पत्न्याः शाला 'पत्नीशालम्' "विभाषा सेनासुराच्छायाशालानिशानाम्-" ( पा. सू. २ । ४ । २५ ) इति नपुंसकत्वम् । 'तेषु' सत्रेषु अध्वर्युणा 'समन्वारब्धेषु' इति कर्तरि निष्ठा 'पशूनेवैतद्' अध्वर्युराह । 'इह' सत्रेषु 'रतिः' वः 'इह रमध्वम्' इत्यादि 'नियच्छन्ते' सर्वे सत्रिणः अनपक्रमिणः पशून्कुर्वन्ति ॥ ८ ॥

अथ द्वितीयामिति[३] । अग्निमेवैतत्सवनीयं मातृभूतायाः पृथिव्याः पानायेति शेषः । पृथिव्याः पानायोप-

---

१-सत्रात्मकस्य द्वादशाहस्य मध्ये यो दशरात्रः तस्य दशमेऽहनि सत्रोत्थानं कर्म तद्धर्मा विधीयंते ।

२-दशमेऽपराह्णेऽप उपस्पृश्य शालाप्रवेशनम् । शालाद्वार्येऽन्वारब्धेष्विह रतिरिति जुहोति । का. श्रौ. सू. १२ । ७४ । ७५ ।

३-अपरामुपसृजन्निति । उत्तरेण परिक्रम्यापरेण हविर्द्धानं प्रविश्य । का. श्रौ. सू. । १२ । ७६ । ७७ ।

धयन्तमाह रायस्पोषमस्मासु दीधरत्स्वाहेति पशवो वै रायस्पोषः पशूनु- वैतदात्मन्नियच्छन्ते ॥ ९ ॥

ते प्राञ्चऽउपनिष्क्रामन्ति । ते पश्चात्प्राञ्चो हविर्धाने सम्प्रपद्यन्ते पुरस्ताद्वै प्रत्यञ्चस्तऽँस्यमानाऽअथैवऽँ सत्रोत्थाने ॥ १० ॥

तऽउत्तरस्य हविर्धानस्य । जघन्यायां कूबर्याऽँ सामाभिगायन्ति सत्रस्य ऋद्धिरिति राद्धिमेवैतदभ्युत्तिष्ठन्त्युत्तरवेदेर्वोत्तरायाऽँ श्रोणावितरं तु कृततरम् ॥ ११ ॥

यद्युत्तरस्य हविर्धानस्य । जघन्यायां कूबर्यामगन्म ज्योतिरमृताऽअभूमेति ज्योतिर्वाऽएते भवन्त्यमृता भवन्ति ये सत्रमासते दिवं पृथिव्याऽअध्यारुहामेति दिवं वाऽएते पृथिव्याऽअध्यारोहन्ति ये सत्रमासतेऽविदाम

---

तत्पृथिव्याऽउपसृजन्नाह । "धरुणो मातरं धयन्" ( वा. सं. ८।५१)-इति । अग्निमेवैतत्पृथिवीं धयन्तमाह । "रायस्पोषमस्मासु दीधरत्स्वाहा"-( वा. सं. ८। ५१ ) इति । पशवो वै रायस्पोषः । पशूनेवैतदात्मन्नियच्छन्ते ॥ ९ ॥

ते प्राञ्च उपनिष्क्रामन्ति । ते पश्चात्प्राञ्चो हविर्धाने सम्प्रपद्यन्ते । पुरस्ताद्वै प्रत्यञ्चस्तंस्यमानाः। अथैवं सत्रोत्थाने ॥ १० ॥

तऽउत्तरस्य हविर्धानस्य जघन्यायां कूबर्यां सामाभिगायन्ति । "सत्रस्य ऋद्धिः"-इति । राद्धिमेवैतदभ्युत्तिष्ठन्ति । उत्तरवेदेर्वोत्तरायां श्रोणौ । इतरं तु कृततरम् ॥ ११ ॥

यद्युत्तरस्य हविर्धानस्य जघन्यायां कूबर्याम् । "अगन्म ज्योतिरमृता अभूम"-इति । ज्योतिर्वाऽएते भवन्ति । अमृता भवन्ति ये सत्रमासते । "दिवं पृथिव्या अध्यारुहाम"-इति ।

---

सृजन्नाह । किमाह 'रायस्पोषमस्मासुदीधरत्' धारयतु त एवं वाऽध्वर्य्यौ कुर्वन्ति । सत्रिणः पशून्पश्चिमेन द्वारेण हविर्द्धानं प्रवेशयन्तीत्यर्थः । किं कारणं पुरस्तात्पूर्वस्या दिशः 'प्रत्यञ्चस्तंस्यमानाः' करिष्यमाणाः सोमनिधानार्थं प्रपद्यन्ते । 'अथ' शब्दो विशेषार्थः । 'अथैवं' विपरीतं 'सत्रोत्थाने' प्रपद्यन्ते प्रक्रमसमाप्त्यर्थे लक्षणयेत्यभिप्रायः ॥ ९ ॥ १० ॥

त उत्तरस्येति । कूबरी नाम ईषाविधारिणी विष्कंभिका सा चाग्रतः पृष्ठतश्च भवतीति विशिनष्टि—जघन्यायां कूबर्यामिति[1] तस्यां च बहूनामारोहणस्यासंभवात्तामालम्ब्य गायन्तीत्यर्थः । "सत्रस्य ऋद्धिः" इत्येतस्मिन्मन्त्रे सामभिगायन्तीति वचनात्सर्वे । 'इतरं' तु कर्म 'कृततरम्' अतिशयेन पूर्वैः वादिभिः कृतं कृततरं कर्म ॥ ११ ॥

यद्युत्तरस्य हविर्धानस्येति । कूबर्यां गतमेतत्कृतिमेतस्मादुत्तर हविर्धानात् । "अगन्म ज्योतिरि"त्यादि मन्त्रः

---

१-उत्तरस्य हविर्द्धानस्यापरकूबरीमालम्ब्य सत्रस्यर्द्धिं गायंति सत्रस्य ऋद्धिरिति । उत्तरवेदिश्रोण्यां वोत्तरस्याम् । का. श्रौ. सू. १२।७।७८।

देवानिति विन्दन्ति हि देवान्त्स्वर्ज्योतिरिति त्रिर्निधनमुपावयन्ति स्वर्ह्येते ज्योतिर्ह्येते भवन्ति तद्यदेवैतस्य साम्नो रूपं तदेवैते भवन्ति ये सत्रमासते ॥ १२ ॥

ते दक्षिणस्य हविर्धानस्या(स्या)धोऽधोऽक्षꣳ सर्पन्ति स यथाऽहिस्त्वचो निर्मुच्येतैवꣳ सर्वस्मात्पाप्मनो निर्मुच्यन्तेऽतिच्छन्दसा सर्पन्त्येषा वै सर्वाणि च्छन्दाꣳसि यदतिच्छन्दास्तथैनान्पाप्मा नान्वत्येति तस्मादति-च्छन्दसा सर्पन्ति ॥ १३ ॥

ते सर्पन्ति । युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तंतमिद्धतं वज्रेण तंतमिद्धतम् । दूरे चत्ताय च्छन्त्सद्गहनं यदिनक्षत् । अस्माकꣳ शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वत इति ॥ १४ ॥

ते प्राञ्चऽ उपनिष्क्रामन्ति । ते पुरस्तात्प्रत्यञ्चः सदः सम्प्रपद्यन्ते पश्चाद्वै प्राञ्चस्तꣳस्यमानाऽ अथैवꣳ सत्रोत्थाने ॥ १५ ॥

---

दिवं वाऽएते पृथिव्या अध्यारोहन्ति—ये सत्रमासते । "अविदाम देवान्" इति । विन्दन्ति हि देवान् "स्वर्ज्योतिः"—(वा. सं. ८।५२) इति । त्रिर्निधनमुपावयन्ति । स्वर्ह्येते, ज्योतिर्ह्येते भवन्ति । तद् यदेवैतस्य साम्नो रूपम्—तदेवैते भवन्ति—ये सत्रमासते ॥ १२ ॥

ते दक्षिणस्य हविर्धानस्याधोऽधोऽक्षं सर्पन्ति । स यथाऽहिस्त्वचो निर्मुच्येत । एवं सर्वस्मात्पाप्मनो निर्मुच्यन्ते । अतिच्छन्दसा सर्पन्ति । एषा वै सर्वाणि छन्दांसि यदतिच्छन्दाः । तथैना न्पाप्मा नान्वत्येति । तस्मादतिच्छन्दसा सर्पन्ति ॥ १३ ॥

ते सर्पन्ति—" युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादपतंतमिद्धतम्, वज्रेण तंतमिद्धतम् । दूरे चत्ताय च्छन्त्सद्गहनं यदिनक्षत् । अस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः "—( वा. सं. ८ । ५३ )—इति ॥ १४ ॥

ते प्राञ्च उपनिष्क्रामन्ति । ते पुरस्तात्प्रत्यञ्चः सदः सम्प्रपद्यन्ते । पश्चाद्वै प्राञ्चस्तंस्यमानाः । अथैवं सत्रोत्थाने ॥ १५ ॥

---

शेषं व्याख्यातम् । (यज्ज्योतिरित्येतत्साम्नो विधानमेव सा न त्वष्टूत ?) उपगच्छंति वाङ्मनसाभ्यां कुर्वन्ती त्यर्थः । 'अथ' शब्दोऽवसानद्योतकः ' यदेवैतस्य साम्नो रूपं ' मान्त्रवर्णिकं तद्धि ज्योतिरमृतमित्यादि 'तदेवैते भवंति' तद्वन्तो भवन्ति ' ये सत्रमासते ' ॥ १२ ॥

ते दक्षिणस्येति[1] । प्रसन्नास्तिस्रः ॥ १३–१५ ॥

---

१-युवं तमिति दक्षिणस्याधोऽक्षं प्राञ्चो निष्क्रामंति । का. श्रौ. सू. । १२ । ७९ ।

ते यथाधिष्ण्यमेवोपविशन्ति । देवेभ्यो ह वै वाचो रसोऽभिजितोऽपचिक्रमिषांचकार स ऽइमामेव पराङ्त्यसिसृप्सदियं वै वाक्तस्या ऽएष रसो यदोषधयो यद्वनस्पतयस्तमेतेन साम्नाऽऽप्नुवन्त्स ऽ एनानाप्तोऽभ्यावर्तत तस्मादस्यामूर्ध्वा ओषधयो जायन्तऽऊर्ध्वा वनस्पतयस्तथोऽएवैतेभ्यऽएतद्वाचो रसोऽभिजितोऽपचिक्रमिषति स ऽइमामेव पराङ्तिसिसृप्सतीयं वै वाक्तस्या ऽएष रसो यदोषधयो यद्वनस्पतयस्तमेतेन साम्नाऽऽप्नुवन्ति स ऽएनानाप्तोऽभ्यावर्तते तस्मादस्यामूर्ध्वा ओषधयो जायन्तऽऊर्ध्वा वनस्पतयः ॥ १६ ॥

---

ते यथाधिष्ण्यमेवोपविशन्ति । देवेभ्यो ह वै वाचो रसोऽभिजितोऽपचिक्रमिषाञ्चकार । स इमामेव पराङत्यसिसृप्सत् । इयं वै वाक्–तस्या एष रसो–यदोषधयः, यद्वनस्पतयः । तमेतेन साम्नाऽऽप्नुवन् । स एनानाप्तोऽभ्यावर्तत । तस्मादस्यामूर्ध्वा ओषधयो जायन्ते, ऊर्ध्वा वनस्पतयः । तथोऽएवैतेभ्य एतद्वाचो रसोऽभिजितोऽपचिक्रमिषति । स इमामेव पराङतिसिसृप्सति । इयं वै वाक्–तस्या एष रसो–यदोषधयः, यद्वनस्पतयः । तमेतेन साम्नाऽऽप्नुवन्ति । स एनानाप्तोऽभ्यावर्तते । तस्मादस्यामूर्ध्वा ओषधयो जायन्ते, ऊर्ध्वा वनस्पतयः ॥ १६ ॥

---

ते यथाधिष्ण्यमिति । 'यथाधिष्ण्यं' यद्यस्य धिष्ण्यमेतस्मिन्नित्येतस्मिन्नर्थे यथाधिष्ण्यमित्येतत्पदं वर्तते । यथाधिष्ण्यमुपविष्टेष्वध्वर्युर्ग्रहं गृह्णाति प्राजापत्यं वायुं पृथिव्या पात्रेण तूष्णीं सादयित्वा च स्तोत्रमुपाकरोति । तत्रोद्गातारो याम्येन साम्ना स्तुवत इत्येतावति श्रुत्यन्तरात्सिद्धे केनाथ तत्साम्ना स्तुवत इत्यादि इत्यपेक्षिते देवेभ्यो वै वाक् इत्याह देवेभ्यो हेति । (देवेभ्योऽदशरंते) 'वाचः' वागिन्द्रियस्य संबन्धी रसोऽपि (तयीत्तमुत्थ) अभिजितः स्तोत्रशस्त्राणां सततप्रयोगादभिक्षयितः यथा कुपितो व्याधिर्जित इत्युच्यते 'अपचिक्रमिषाञ्चकार' अपक्रमितुमियेष । इमामेव भूमिम् अत्यसिसृप्सत् अतिसर्पितुमतिक्रमितुमैच्छत् । 'पराङ्' मुखः पातालं प्रतीत्यर्थः । किन्तु पुनः कारणमत्यसिसृप्सदत आह–'इयं' 'वाक्' कथं वागिन्द्रियस्य मुखमायतनं तच्चपार्थिवं ततश्चैव पराङ् मुखशरीरा वागियमेव पृथिवी एतावांस्तु विशेषो मुखात्मतायामस्ति; ताल्वाद्यभिघाताद्वर्षात्मकः शब्दोऽभिव्यज्यते । इतरदध्वर्युरात्मन इति तस्या एव रस इति 'तस्या' आधिदैविक्याः पृथिव्यात्मिकाया वाचः 'एष रसः' सारः ओषध्यादिः स च तस्मादाध्यात्मिकाद्रसादशितपीतसमुत्थादभितस्तत्कारणत्वात् । ततश्च तस्मिन्वागाध्यात्मिकी शरीरादपचिक्रमिषति तस्मादभिन्नोऽयमिति पार्थिवो रसः पृथिवीमतिसिसृप्सतीत्युपपन्नम् । 'सृप्लृ गतौ'–( धा. पा. तु.प. १००८) ( वस्तुतुकारित्वा यातमेतेन सान्मुनि(?) तं रसशरीरेभ्यः पृथिव्या दग्धापचिक्रमिषंति ) तमेतेन याम्येन साम्ना मानसग्रहस्तोत्राङ्गभूतेनापूर्वकर्मणा वशीकृतवन्तः स च वशीकृतः सत्रे तान्देवानभिमुख आवृतः शरीरमपि सरसं जातं पृथिव्योषध्यादिमती जातेत्यर्थः । तस्मादित्यभ्यावृत्तिप्रदर्शनं तथो एवैतेभ्य इति पूर्ववद्व्याख्येयम् ॥ १६ ॥

---

१–सदः प्रविश्य पूर्वेण स्वासनेषूपविशंति । ग्रहं गृह्णाति प्राजापत्यं वायुं पृथिव्या पात्रेण । ग्रहणप्रदानस्तोत्रोपाकरणहोमभक्षाहरणभक्षणानि मनसा । का० श्रौ० सू० । १२ । ८० । ८१ ॥

सर्पराज्ञ्या ऋक्षु स्तुवते । (त॒ऽ) इयं वै पृथिवी सर्पराज्ञी तुदनुयैवैतत्सुर्व-मापुवन्ति स्वयम्प्रस्तुतमुनुपगीतं युथा नान्युऽउपशृणुयादति ह रेचयेद्यु-दन्युः प्रस्तुयादतिरेचयेद्युदन्यु ऽउपगायेदतिरेचयेद्युदन्यु उपशृणुयात्तुस्मा-त्स्वयम्प्रस्तुतमुनुपगीतम् ॥ १७ ॥

चुतुर्होतृन्होता व्याचष्टे । ( ष्ट ऽ ) एतदेवैतत्स्तुतमनुशꣳसति युदि होता नु विद्याद्गृहुपतिर्व्याचक्षीत होतुस्त्वेवु व्याख्यानम् ॥ १८ ॥

( यु ) अथाध्वर्योः प्रतिगरः । ( रो ऽ ) अरात्सुरिमे युजमाना भद्रमेभ्यो युजमानेभ्योऽभूदिति कल्याणमेवैतन्मानुष्यै व्वाचो व्वदति ॥ १९ ॥

---

सर्पराज्ञ्या ऋक्षु स्तुवते । इयं वै पृथिवी सर्पराज्ञी, तदनयैवैतत्सर्वमाप्नुवन्ति । स्वयम्प्रस्तुत-मनुपगीतम् । यथा नान्य उपशृणुयात् । अति ह रेचयेद्—यदन्यः प्रस्तुयात् । अतिरेचयेद्—यदन्य उपगायेत् । अतिरेचयेद्—यदन्य उपशृणुयात् । तस्मात्स्वयं प्रस्तुतमनुपगीतम् ॥ १७ ॥

चतुर्होतृन्होता व्याचष्टे । एतदेवैतत् स्तुतमनुशंसति । यदि होता न विद्याद्—गृहपतिर्व्याच-क्षीत । होतुस्त्वेव व्याख्यानम् ॥ १८ ॥

अथाध्वर्योः प्रतिगरः । अरात्सुरिमे यजमानाः—भद्रमेभ्योऽभूदिति । कल्याणमेवैतन्मानुष्यै वाचो वदति ॥ १९ ॥

---

सर्पराज्ञ्या ऋक्ष्विति । सर्पराज्ञी कद्रूः पृथिव्या अभिमानिनी तस्या आर्ष्यः ऋचः "आयं गौः पृश्निर-क्रमीत्" ( वा. सं. ३।६–८ ) इत्यादयः । तासु 'स्तुवते' स्वयं प्रस्तुतं यथाऽन्येषु स्तोत्रेषु प्रस्तोता प्रस्तौ-त्युद्गातोद्गायति प्रतिहर्ता प्रतिहरति तथाऽत्र । कथं तर्हि स्वयमेव प्रस्तुत्य सर्वमाप्नुवन्त्यनुपगीतं यथा अत्र उकारहोकाराभ्याम् उपगायंति नैव मन्त्रं गीयमानमन्यः समीपस्थोऽपि श्रृणुयात्। श्रृणुयाच्चेत् दुर्योगः स्यादित्यर्थः। किं कारणमतिरेचयेदात्मानं न साम्नस्तस्यैकादशं पुरुषान्तरे कुर्यात् । आत्मनि कृत्वा न कुर्यात् । यद् 'अन्यः प्रस्तुयात्' उपगायेत 'उपश्रृणुयाद्' वा ततश्च तदनुकारेणैतत् सर्वमेकेन सत्रिणा न प्रस्तुयादित्यभिप्रायः ॥१७॥

चतुर्होतृनिति । चतुर्होतृनपि मन्त्रसम्बन्धित्वात्पृथिवी होता द्यौरध्वर्युरित्यादयश्चत्वारो होतारस्तान् होता स्तोत्रान्ते 'व्याचष्टे' विभक्त्यर्थान् दर्शयति ॥ १८ ॥

अथाध्वर्योरिति[2] । 'कल्याणं' प्रशस्तम् 'एतन्मानुष्यै' मानुष्या 'वाचः' हता ध्वस्ता इत्येवमादि-त्वं कल्याणत्वे ॥ १९ ॥

---

१—चतुर्होतृव्याख्यानꣳ होतुः । गृहपतिरजानति । का० श्रौ० सू० । १२ । ८१ । ८२ ।
२—प्रतिगृणात्यरात्सुरिमे यजमाना भद्रमेभ्यो यजमानेभ्योऽभूदिति । का. श्रौ. सू. १२ । ८३ ।

(त्यु) अथ व्वाकोवाक्ये ब्रह्मोद्यं व्वदन्ति । सुर्व्वं वै तेषामाप्तं भवति सुर्व्वं जितं ये सत्रमासतेऽचारिषुर्य्यजुर्भिस्तत्तान्यापंस्तदवारुत्सताशꣳसिषुर्ऋग्भि-स्तत्ताऽआपंस्तदवारुत्सतास्तोषत सामभिस्तत्तान्यापंस्तदवारुत्सताथै-षामेतदेवानाप्तमनवरुद्धं भवति यद्वाकोवाक्यं ब्राह्मणं तदेवैतेनाप्नुवन्ति तदवरुन्धते ॥ २० ॥

( तऽऔ ) औदुम्बरीमुपसꣳसृप्य व्वाचं यच्छन्ति । व्विदुहन्ति वाऽएते यज्ञं निर्धयन्ति ये व्वाचा यज्ञं तन्वते व्वाग्घि यज्ञस्तामेषां पुरैकैक ऽएव

---

अथ वाकोवाक्ये ब्रह्मोद्यं वदन्ति । सर्वं वै तेषामाप्तं भवति, सर्वं जितम्—ये सत्रमासते । अचारिषुर्यजुर्भिः—तत्तान्यापन्, तदवारुत्सत । आशंसिषुर्ऋग्भिः—तत्ता आपन्; तदवारुत्सत । अस्तोषत सामभिः—तत्तान्यापन्; तदवारुत्सत । अथैषामेतदेवानाप्तमनवरुद्धं भवति—यद्वाकोवाक्यं ब्राह्मणम् । तदेवैतेनाप्नुवन्ति, तदवरुन्धते ॥ २० ॥

औदुम्बरीमुपसंसृप्य वाचं यच्छन्ति । विदुहन्ति वाऽएते यज्ञम्, निर्धयन्ति । ये वाचा यज्ञं तन्वते ।

---

अथ वाकोवाक्य इति । उच्यते इति वाकः पूर्वपक्षवचनं यथा "अ ब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति" ( श. प. ब्रा. १४ । ६ । १० । २ ) उच्यत इति । वाक्यम् उत्तरपक्षवचनं यथा "एकपाद्वा एतत्सम्राड्" ( श. प. ब्रा. १४ । ६ । १० । २ ) इति । वाकाश्च वाक्यानि चेति वाकवाक्यानीति प्राप्ते विभक्तेरलुक् द्रष्टव्यः । वाकोवाक्यानि वाकोवाक्यानां समूहो वाकोवाक्यं पूर्वोत्तरपक्षवचनसंघातो जनक याज्ञवल्क्यसंवादादिस्तस्मिन् 'वाकोवाक्ये' विषयभूते 'ब्रह्मोद्यं' 'वदन्ति' सर्वे परस्परं यजमाना ब्रह्मणो ब्राह्मणज्ञातीयस्य द्रष्टव्यम् । ब्रह्मोद्यं किञ्चिद्ब्राह्मणानां वेदितव्यं ज्ञाते प्रकर्षविचिख्यापयिषया प्रश्नो विषये प्रश्नप्रतिवचनसंघातस्तावद्ब्रह्मोद्यप्रभृतिवाकोवाक्यं ब्राह्मणः कविर्मन्त्रिणः कश्चित्पृच्छत्यर्थं ग्रन्थं वा अन्ये तु प्रतिक्रियन्त इत्यर्थः । 'सर्वं वै' मन्त्रजातं 'तेषामाप्तं भवति' इत्यभिप्रायः । 'सर्वं जितं' प्रयोगेण वशीकृतं कथं यजुर्भिस्तावद् 'अचारिषुः' चरितवन्तः । 'तत्' तेनैव चरणेन 'तानि' यजूंषि 'आपन्' आपन्नाः । तेनैव वचनानि 'अवारुत्सत' अवरुद्धवन्तो वशीकृतवन्तः । एवम् 'अस्तोषत' स्तुतवन्तः 'सामभिः' 'आशंसिषुः' शस्तवन्तः शस्त्रेष्वृचः । 'अथैषाम्' 'अथ' शब्दो विशेषणार्थः । एतच्च तेषां सत्रिणाम् 'अनाप्तं' भवति । यद्वाकोवाक्यमुक्तिप्रत्युक्तिका ब्राह्मणं "जनको ह वैदेह आसांचक्रे" ( श. प. ब्रा. १४—६—१०—१ ) " इत्यादि तदेवैतेन ब्रह्मोद्येनाप्नुवन्ति तद्धि प्रश्नप्रतिवचनाभ्यां पाठ्यमानं व्याख्यानं च प्रयुक्तमेव भवतीत्यभिप्रायः ॥ २० ॥

'औदुम्बरीं' स्थूणामुपसङ्गम्य वागिन्द्रियं यच्छन्ति अस्तमिते गृहीत्वौदुंबरीं व्वाचं यच्छंति ।

---

१—ब्रह्मोद्यं व्वदति । प्रजापतेरगुणाख्यानम् । अप्रतिभायां वा तद्वादः । आश्वमेधिकं वा नामधेयात् । का. श्रौ. सू. १२।८४–८७।

वाचंयम आस्ते वाचमाप्याययंस्तयाऽऽपीनयाऽयातयाम्न्योत्तरमहस्तन्वतेऽथात्र सर्वैव वागाप्ता भवत्यपवृक्ता ताᳪं सर्वऽएव वाचंयमा वाचमाप्याययन्ति तयाऽऽपीनयाऽयातयाम्न्याऽतिरात्रं तन्वते ॥ २१ ॥

( तऽ ) औदुम्बरीमन्वारभ्यासते । ( तेऽन्नं ) अन्नं वाऽऊर्गुदुम्बर ऊर्जैवैतद्वाचमाप्याययन्ति ॥ २२ ॥

तेऽस्तमेति प्राञ्च ऽउपनिष्क्रामन्ति । ते जघनेनाहवनीयमासतेऽग्रेण हविर्धाने तान्वाचंयमानेव वाचंयमः प्रतिप्रस्थाता वसतीवरीभिरभिपरिहरति ते यत्कामा ऽआसीरंस्तेन वाचं विसृजेरन्कामैहं स्म वै पुरऽर्षयः सत्रमासतेऽसौ नः कामः स नः समृध्यतामिति यद्यऽअनेककामाः स्युर्लोककामा वा प्रजाकामा वा पशुकामा वा ॥ २३ ॥

---

वाग्धि यज्ञः । तामेषां पुरैकैक एव वाचंयम आस्ते—वाचमाप्याययन् । तयाऽऽपीनयाऽयातयाम्न्योत्तरमहस्तन्वते । अथात्र सर्वैव वागाप्ता भवति । अपवृक्ता । तां सर्वऽएव वाचंयमा वाचमाप्याययन्ति । तयाऽऽपीनयाऽयातयाम्न्याऽतिरात्रं तन्वते ॥ २१ ॥

औदुम्बरीमन्वारभ्यासते । अन्नं वा ऊर्गुदुम्बरः । ऊर्जैवैतद्वाचमाप्याययन्ति ॥ २२ ॥

तेऽस्तमेति प्राञ्च उपनिष्क्रामन्ति । ते जघनेनाहवनीयमासते—अग्रेण हविर्धाने । तान्वाचंयमानेव वाचंयमः प्रतिप्रस्थाता वसतीवरीभिरभिपरिहराति । ते यत्कामा आसीरन्—तेन वाचं विसृजेरन् ।

---

( का. श्रौ. सू. १२।८८ ) व्यापारादुपरमयन्ति । किं कारणं 'विदुहन्ति' बहुप्रकारं क्षारयन्तो यज्ञं वागिन्द्रियेण तदभिव्यक्तया ' वाचा ' शब्देन यज्ञं विस्तारयन्ति कथं पुनर्वाचा यज्ञं तन्वानाश्च यज्ञं दुहन्तीत्यन्तवाचमेव [स्तृतृणा ?] एकैकस्य एव सत्री 'पुरा' पूर्वेष्वहःसु वाचम् आप्याययन् तावतैव अनया उत्तरमहस्तन्वते । 'अथात्र' दशमेऽहन्ययं विशेषः । 'सर्वैव ' वागिन्द्रियात्मिका अभि ' वाक् ' [ य? ] शब्दात्मिका ' आप्ता ' भवति । वाकोवाक्यं ब्रह्मोद्यस्य सर्वे युगपदवहिता इत्यभिप्रायः । स चाप्रकृता समाप्ता नालं पुनः प्रयोगायतनेनैव 'तां' सर्व एव सत्रिणो ' वाचमाध्याययन्ति ' ' तया ' वाचा ' आपीनयाऽतिरात्रं तन्वते ' महत्तरत्वात् ॥ २१ ॥

औदुम्बरीमिति । प्रसन्ना ॥ २२ ॥

तेऽस्तमेतीति । सदसो निष्क्रम्योत्तरवेदिमुपविशति । तत्रैव चोपविष्टान् ' प्रतिप्रस्थाता वसतीवरीभिः परिहरति ' व्याप्नोति । अद्भिरभिहृताश्च संतः ' ते ' ' यत्कामाः ' यः काम एषां यत्कामाः सत्रम् ' आसीरन् '

---

१–अस्तमिते निष्क्रम्यापरेणोत्तरवेदिमासते । प्रतिप्रस्थाता वसतीवरीःपरिहरति । वाग्विसर्जनं सत्रकामेन पृथक्कामेषु भूर्भुव इति । का० श्रौ० सू० १२ । ८८-९१ ॥

( वाऽनु ) अनेनैव व्वाचं व्विसृजेरन् । (न्भू) भूर्भुवः स्वरिति तत्सत्येनैवैतद्वाचᳬ समर्धयन्ति तया समृद्धयाऽऽशिष ऽआशास्ते सुप्रजाः प्रजाभिः स्यामेति तत्प्रजामाशासते सुवीरा व्वीरैरिति तद्वीरानाशासते सुपोषाः पोषैरिति तत्पुष्टिमाशासते ॥ २४ ॥

( तेऽथ ) अथ गृहपतिः सुब्रह्मण्यामाह्वयति । यं वा गृहपतिर्ब्रूयात्पृथगु हैवैके सुब्रह्मण्यामाह्वयन्ति गृहपतिस्त्वेव सुब्रह्मण्यामाह्वयेद्यं वा गृहपतिर्ब्रूयात्तस्मिन्त्समुपहवमिष्ट्वा समिधोऽभ्यादधति ॥ २५ ॥

इति पञ्चमप्रपाठके एकादशं ब्राह्मणम् ॥ ४-५-११ ॥ [ ६. ९ ]

पञ्चमः प्रपाठकः ॥ षष्ठोऽध्यायः ॥ अस्मिन्काण्डे कण्डिकासंख्या ॥ ६४८ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे ग्रहनामकं चतुर्थं काण्डं समाप्तम् ॥ ४ ॥

---

कामैर्ह स्म वै पुरऽर्षयः सत्रमासते—असौ नः कामः—स नः समृध्यतामिति । यद्युऽअनेककामाः स्युः, लोककामा वा, प्रजाकामा वा, पशुकामा वा ॥ २३ ॥

अनेनैव वाचं विसृजेरन्—" भूर्भुवः स्वः "—इति । तत् सत्येनैवैतद्वाचं समर्धयन्ति । तया समृद्धयाऽशिष आशास्ते । " सुप्रजाः प्रजाभिः स्याम "—इति । तत् प्रजामाशासते । " सुवीरा वीरैः "—इति । तद्वीरानाशासते । " सुपोषाः पोषैः "—( वा० सं० २ । ९३ ) इति । तत् पुष्टिमाशासते ॥ २४ ॥

अथ गृहपतिः सुब्रह्मण्यामाह्वयति, यं वा गृहपतिर्ब्रूयात् । पृथगु हैवैके सुब्रह्मण्यामाह्वयन्ति । गृहपतिस्त्वेव सुब्रह्मण्यामाह्वयेत् । यं वा गृहपतिर्ब्रूयात् । तस्मिन्त्समुपहवमिष्ट्वा समिधोऽभ्यादधाति ॥ २५ ॥

इति सत्रोत्थानम् ॥

---

' तेन ' एव कामेन युक्तां तत्कामाभिवादिनीं ' वाचं ' ' विसृजेरन् ' । कथम् ' असौ ' यागः ' कामः ' ' स नः ' ' समृध्यतामिति ' एवं किं कारणं ' कामैर्ह स्म वै पुरा ' यज्ञैः ह स्म ' ऋषयः सत्रमासते ' न नित्यकर्म निष्कामादधुनापि कामेन तेन वाचं विसृजेरन्यदितु नानाकामाः स्युः सत्रिणः ॥ २३ ॥

अनेनेति । तदाः 'अनेनैव' प्रमाणेन 'भूर्भुवः स्वरिति' मन्त्रेण ' वाचं विसृजेरन् ' यागादिना कामेन ॥ २४ ॥

एतच्च ब्रुवन्नानाकामानामप्यस्तिं सत्रमिति दर्शयति । अथेति अतोऽनेवं वाचि विसृष्टायां गृहपतिः ' सुब्रह्मण्या-

माह्वयति[1]" यथा 'गृहपतिर्ब्रूयात्' त्वमाह्वयेति 'सुब्रह्मण्याम्' आह्वयेत् यश्च तामाह्वयति। 'तस्मिन्' अधीतेन ( धारं वा ) 'समुपहवं' अनुज्ञाम् 'इष्ट्वा' "इषु इच्छायाम्"–( धा. पा. तु. प. ७१ ) तत्पूर्वं प्राक् लक्ष्यते 'सुब्रह्मण्यामाह्वयस्वेत्यैवमुक्त्वा ? एकैकेन ततः 'समिधोऽभ्यादधति' आहवनीये ॥ २९ ॥

इत्याचार्यहरिस्वामिनः कृतौ शतपथब्राह्मणभाष्ये चतुर्थकाण्डे षष्ठेऽध्याये नवमं ब्राह्मणम् ॥४–६–९॥

इति पञ्चमः प्रपाठकः समाप्तः ॥ ५ ॥

नागस्वामिसुतोऽवन्त्यां पाराशर्यो वसन् हरिः। श्रुत्यर्थं दर्शयामास शक्तितः पौष्करीयकः ॥
श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः। धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम् ॥

इति श्रीमदाचार्यहरिस्वामिनः कृतौ शतपथब्राह्मणभाष्ये चतुर्थकाण्डे
षष्ठोऽध्यायः समाप्तः ॥ ६ ॥

भूभर्त्रा विक्रमार्केण क्लृप्तां कनकवेदिकाम्। दानायाध्यास्य कृतवान् श्रुत्यर्थविवृतिं हरिः ॥ १ ॥

इति श्रीसर्वविद्यानिधानकवीन्द्राचार्यसरस्वतीनां हरिस्वामिनां शुक्लयजुर्वेदीये माध्यन्दिन-
शतपथब्राह्मणभाष्ये ग्रहनामकं चतुर्थं काण्डं समाप्तम् ॥ ४ ॥

---

१–सुब्रह्मण्याह्वानं गृहपतिर्यं वाऽऽह। सुब्रह्मण्य उपमाह्वयस्वेत्युक्त्वा समिदाधानम्। अप उपस्पर्शनाद्येतत्सत्रोत्थानम्। इति सत्रोत्थानम्। तद्धर्माः। का० श्रौ० सू० १२। ९३–९५॥



११९५

ॐ

श्रीमद्वाजसनेयिमाध्यन्दिन-

# शतपथब्राह्मणम् ।

सायणभाष्यसमेतम् ।

तत्र

## पञ्चमं काण्डम् ५ ।

गङ्गाविष्णु श्रीकृष्णदास,

मालिक-" लक्ष्मीवेङ्कटेश्वर " स्टीम्-प्रेस,

कल्याण-बंबई.

संवत् १९९६, शके १८६१.

1939.

॥ श्रीः ॥

# सवनामकपञ्चमकाण्डे प्रथमः प्रपाठकः ।

## प्रथमोऽध्यायः प्रारभ्यते ।

### तत्र प्रथमं ब्राह्मणम् ।

देवाश्च वा ऽअसुराश्च । ( श्चो ) उभये प्राजापत्याः पस्पृधिरे ततोऽसुरा
ऽअतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्ते-
ऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य हैतन्मुखं यदतिमानः १
( न्नोऽथ ) अथ देवाः । ( ऽ ) अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजा-
पतिरात्मानं प्रददौ यज्ञो हैषामास यज्ञो हि देवानामन्नम् ॥ २ ॥

---

### अथ वाजपेययज्ञः ।

देवाश्च वाऽअसुराश्चोभये प्राजापत्याः पस्पृधिरे । ततोऽसुरा अतिमानेनैव—' कस्मिन्नु वयं जुहुयामेति'—स्वेष्वेवास्येषु जुह्वतश्चेरुः । तेऽतिमानेनैव पराबभूवुः । तस्मान्नातिमन्येत । पराभवस्य हैतन्मुखं—यदतिमानः ॥ १ ॥

अथ देवा अन्योऽन्यस्मिन्नेव जुह्वतश्चेरुः । तेभ्यः प्रजापतिरात्मानं प्रददौ । यज्ञो हैषामास । यज्ञो हि देवानामन्नम् ॥ २ ॥

---

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
काश्चित् संस्थाः समुदितास्तुर्येऽग्निष्टोमपूर्विकाः । काण्डे तु पञ्चमे वाजपेयः प्रस्तूयते ततः ॥ ३ ॥
राजसूयः सम्प्रपन्नो मंत्राम्नानक्रमेण तु । प्रकृतावुपदिष्टत्वादङ्गजातस्य नो वचः ॥ ४ ॥
वैशेषिकास्तु वक्ष्यन्ते यज्ञद्वयगता गुणाः । व्याख्यायते तन्निपुणं ब्राह्मणं तद्विधायकम् ॥ ५ ॥

तत्र वाजपेयं विधातुं प्रस्तौति—देवाश्च वा असुराश्चेति । 'प्राजापत्याः' प्रजापतिना सृष्टाः 'उभये' द्विविधाः ' देवाश्च असुराश्च ' ' पस्पृधिरे' स्पर्द्धाञ्चक्रुः । 'ततोऽसुराः' स्वतोऽन्यः प्रबलो नास्तीति ' अतिमानेन ' अभिमानेन भूयिष्ठेन दर्पेण ' कस्मिन्नु ' खलु होमाधिकरणे 'वयं' ' जुहुयाम' होमं कुर्याम ' इति ' धिक्कृत्य स्वकीयेषु आस्येषु होमं चक्रुः । ' ते ' असुराः अत्यन्तगर्वेण पराजिताः । ' तस्मात् ' अद्यापि कश्चिदपि नातिमानं कुर्यात् ' अतिमानः ' अभिमानः ' यत् ' तत् 'पराभवस्य ' प्रापकमिति ॥ १ ॥

देवानां तद्विपर्ययं दर्शयति—अथ देवा इति । ' देवाः ' खलु ' अन्योऽन्यस्मिन् ' जुहुवुः, इन्द्रः अग्नौ अग्निः इन्द्रे इत्यादिक्रमेणेत्यर्थः । 'तेभ्यः' देवेभ्यः, अन्योऽस्मिन् देवतात्वेन होमकरणात् प्रीतः ' प्रजापतिः '

ते होचुः । कस्य न ऽइदं भविष्यतीति ते मम ममेत्येव न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचुराजिमेवास्मिन्नजामहै स यो न उज्जेष्यति तस्य न इदं भविष्यतीति तथेति तस्मिन्नाजिमाजन्त ॥ ३ ॥

स बृहस्पतिः । सवितारमेव प्रसवायोपाधावत्सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत ऽइदमुज्जयानीति तदस्मै सविता प्रसविता प्रासुवत्तत्सवितृप्रसूत ऽउदजयत्स इदꣳ सर्वमभवत्स इदꣳ सर्वमुदजयत्प्रजापतिꣳ ह्युदजयत्सर्वमु ह्येवेदं प्रजापतिस्तेनेष्ट्वैतामेवोर्ध्वां दिशमुदक्रामत्तस्माद्यश्च वेद यश्च नैषोर्ध्वा बृहस्पतेर्दिगित्येवाहुः ॥ ४ ॥

---

ते होचुः कस्य न इदं भविष्यतीति । ते—मम ममेत्येव न सम्पादयाञ्चक्रुः । ते हासम्पाद्योचुः—आजिमेवास्मिन्नजामहै, स यो न उज्जेष्यति—तस्य न इदं भविष्यतीति । तथेति । तस्मिन्नाजिमाजन्त ॥ ३ ॥

स बृहस्पतिः सवितारमेव प्रसवायोपाधावत् । सविता वै देवानां प्रसविता । इदं मे प्रसुव, त्वत्प्रसूत इदमुज्जयानीति । तद् अस्मै सविता प्रसविता प्रासुवत् । तत्सवितृप्रसूत उदजयत् । स इदं सर्वमभवत् । स इदं सर्वमुदजयत् । प्रजापतिं ह्युदजयत् । सर्वमु ह्येवेदं प्रजापतिः । तेनेष्ट्वैतामेवोर्ध्वां दिशमुदक्रामत् । तस्माद् यश्च वेद, यश्च न, एषोर्ध्वा बृहस्पतेर्दिगित्येवाहुः ॥ ४ ॥

---

'आत्मानं' शरीरं दत्तवान् । यज्ञो हैषामिति । 'हि' यस्मात् ' देवानामन्नं यज्ञः ' अतोऽत्रान्योऽन्यस्मिन् हविःप्रदानेनान्नसम्भवात् प्रजापतिशरीरं यज्ञ एव तेषामासीदित्यर्थः । यज्ञशब्देन वाजपेय उच्यते, प्रकरणबलात्, तथा च तैत्तिरीयके—"एष वाव यज्ञो यद् वाजपेयः" ( तै०ब्रा० १।३।२।९ ) इति ॥ २ ॥

तत्र वाजपेये सर्वदेवानां पुरस्ताद् वाजपेयस्यानुष्ठानेन बृहस्पतेरेव श्रैष्ठ्यं वक्तुमाजिधावनं दर्शयति—ते होचुरिति । 'ते' देवाः आगच्छन्तं यज्ञं दृष्ट्वा 'नः' अस्माकं मध्ये ' इदम् ' इति सामान्येन निर्देशः । अयं वाजपेयः यज्ञः ' कस्य भविष्यति ? ' 'इति' ' ऊचुः ' । ततः ' ते ' सर्वेऽपि ममैवायं यज्ञो ममैवायं यज्ञ इति विवदमानाः ' न सम्पादयाञ्चक्रुः ' अस्यैवायं यज्ञ इति न निश्चितवन्तः । 'ते' देवाः ' अस्मिन् ' विषये ' आजिम् अजामहे ' गच्छाम इति समयञ्चक्रुः । 'नः' अस्माकं मध्ये आजिधावनेन 'यः' कश्चित् 'उज्जेष्यति' ' तस्य ' अयं यज्ञो भवत्विति सर्वैरङ्गीकृत्य ' तस्मिन् ' वाजपेयविषये विजयार्थम् ' आजिम् ' आजन्त ' अधावन् । " अज गतिक्षेपणयोः" ( धा.पा. भ्वा. प.२३० )" आजिर्नाम धावनप्रदेशस्यावधिर्भूमिविशेषः (श.प.२।४।३।४) ॥३॥

उत्तरत्र वाजपेयस्य सकलकर्मप्रारम्भे सावित्रहोमो विधास्यते । तदर्थं बृहस्पतेरपि प्रथमं सवितृविषयमुपधावनं दर्शयति—स बृहस्पतिरित्यादिना । तत्राजिं प्रधावन् ' बृहस्पतिः ' ' सवितारमेव ' ' प्रसवाय ' अनुज्ञानाय ' उपाधावत् ' । इतरदेववद् धावनप्रदेशमेव न लक्षीकृत्य गत इत्येवकारार्थः । सवितुरुपधावने कारणमाह—सविता वा इति । ' प्रसविता ' अनुज्ञाता । इदं म इति बृहस्पतेः प्रार्थनावाक्यस्यायमर्थः—हे सवितः ! मह्यम

---

१-देव सवितरिति जुहोति यजत्यादिषु । का. श्रौ. सू. १४।११ ।

( स्त ) तद्ये ह स्म पुरा वाजपेयेन यजन्ते । ( न्तऽ ) एताᳪँ ह स्मै-वोर्ध्वां दिशमुत्क्रामन्ति तत ऽऔपाविनैव जानश्रुतेयेन प्रत्यवरूढं ततो-ऽर्वाचीनं प्रत्यवरोहन्ति ॥ ५ ॥

---

तद् ये ह स्म पुरा वाजपेयेन यजन्ते—एतां ह स्मैवोर्ध्वां दिशमुत्क्रामन्ति । तत औपाविनैव जान-श्रुतेयेन प्रत्यवरूढम्, ततोऽर्वाचीनं प्रत्यवरोहन्ति ॥ ५ ॥

---

' इदं ' वक्ष्यमाणं कार्यं ' प्रसुव ' अनुजानीहि । "षू प्रेरणे " (धा. पा. तु. प. १२७)—इति धातुः । 'त्वत्प्र-सूतः ' त्वयाऽनुज्ञातः 'इदम्' उज्जयानि साधयामि । सर्वदेवेभ्यः पुरस्तात् तेनानुज्ञातः ' उदजयत् ' । यत उद-जयत् ततः 'स' 'इदं' परिदृश्यमानं 'सर्वं' जगत् ' अभवत् '। सर्वोजयेन प्रजापतिमेव जितवान् भवति । अनेन वाजपेयस्य सर्वजगदात्मकप्रजापतिरूपप्राप्तिः फलमित्युक्तं भवति । तेनेष्ट्वेति । तेन वाजपेयेन ' इष्ट्वा ' बृहस्पतिः 'ऊर्ध्वां दिशमुदक्रामत्' । यत एवं 'तस्मात्' 'यः'पुमान् एतामाख्यायिकां बृहस्पतिरिष्ट्वोर्ध्वां दिशं प्राप्तवानित्येवं रूपां ' वेद " यो ' वा ' न ' वेत्ति, ते सर्वेऽपि ' ऊर्ध्वा दिक् बृहस्पतेः ' स्वभूता ' इति ' ' आहुः ' तथा च तैत्तिरीयके समाम्नातम्—" ऊर्ध्वादिशां हेमन्तशिशिरावृतूनां बृहस्पतिर्देवता " ( तै० सं ४ । ३ । ३ । २ ) इति ॥ ४ ॥

वाजपेययाजिनस्तदानीमेवोत्क्रमणम्, भूलोके यावदत्यन्तभोगाभिलाषस्तावदिहावस्थानम्; तत्र जानश्रुतेयो यज्ञमित्युभयमुपपादयति—तद्ये ह स्मेति । यद्वा उत्तरत्र यूपारोहणं " वो रोहाव " ( तै० ब्रा० १ । ३ । ७ । २ ) ( तै० सं० १ । ७ । ९ । १ ) इति मन्त्रलिङ्गात् स्वर्गारोहणप्रतिनिधित्वेन वक्ष्यते' । ' ततः ' स्वर्गरूपाद् यूपादवरोहणं जानश्रुतेयेनैव पूर्वं कृतमित्यर्थः । प्रत्यवरोहश्च लिङ्गादनुमीयत इत्याह—तद् ये हेति । अथ वाजपेययाजिनः " अग्नेष्ट्वा साम्राज्येनाभिषिञ्चामि " (तै० सं० १ । ७ । १० । ३ । ) इत्याद्यैर्मन्त्रलिङ्गैरग्न्यादिसाम्राज्येऽभिषिक्तत्वाद् देववदेव-सोऽपि मनुष्यं प्रति गजादिवाहनान्न प्रत्यवरोहेदिति प्रत्य-वरोहप्रतिषेधो विहितस्तैत्तिरीयके—" तस्माद् वाजपेययाजी न कञ्चन प्रत्यवरोहति " इति ( तै०ब्रा० १ । ३ । ९ । २ ) न च प्रत्यवरोहणं विहितम् । आपस्तम्बेन तु तन्निषेधस्तदुपायश्च दर्शितः—"यावज्जीवं न कञ्चन प्रत्य-वरोहेत् बृहस्पतिसवेन वा प्रत्यवरोहणीयेन यजेत " इति । तस्मादुभयत्रानुग्राहकमिदं ब्राह्मणमित्याह—तद् ये ह स्मेति । अक्षरार्थस्तु—'तत्' तस्माद् बृहस्पतिनाऽनुष्ठितत्वाद् ये 'पुरा' पूर्वं 'वाजपेयेन यजन्ते, ' ते सर्वे ऊर्ध्वं गच्छन्ति, ' ततः ' ऊर्ध्वदिशः सकाशात् ' जानश्रुतेयेन ' जानश्रुतेः पुत्रेण ' औपाविना ' तन्नाम्ना ' एव ' एकेन राजर्षिणा ' प्रत्यवरूढं ' प्रत्यवरोहः कृतः । भावे निष्ठा । " इतश्चानिञः ( पा० सू० ४।१।१२२ ) " इति जनश्रुतेर्ढक् प्रत्ययः । ' ततः ' आरभ्य इदानीमनुष्ठातारोऽपि ' अर्वाचीनम् ' अवाङ्मुखं ' प्रत्यवरोहन्ति ' इति ॥ ५ ॥

---

१—स रोक्ष्यन् जायामामंत्रयते जायऽएहि स्वो रोहावेति रोहावेत्याहेत्यादि । श० प० ५ । २ । १ । १० ।

तेनेन्द्रोऽयजत । स इदꣳ सर्व्वमभवत्स इदꣳ सर्व्वमुदजयत्प्रजापतिꣳ ह्युदजयत्सर्व्वमु ह्येवेदं प्रजापतिस्तेनेन्द्रैतामेवोर्ध्वां दिशमुदक्रामत् ॥६॥

( शतम् २९०० )

तद्ये ह स्म पुरा व्वाजपेयेन यजन्ते । ( न्तऽ ) एताꣳ ह स्मैवोर्ध्वां दिशमुत्क्रामन्ति तत ऽऔपाविनैव जानश्रुतेयेन प्रत्यवरूढं ततोऽर्व्वाचीनं प्रत्यवरोहन्ति ॥ ७ ॥

स यो व्वाजपेयेन यजते । स इदꣳ सर्व्वं भवति स इदꣳ सर्व्वमुज्जयति प्रजापतिꣳ ह्युज्जयति सर्व्वमु ह्येवेदं प्रजापतिः ॥ ८ ॥

(स्तु) तदाहुः । (र्नु) न व्वाजपेयेन यजेत सर्व्वं वाऽएष ऽइदमुज्जयति यो व्वाजपेयेन यजते प्रजापतिꣳ ह्युज्जयति सर्व्वमु ह्येवेदं प्रजापतिः स ऽइह न किञ्चन परिशिनष्टि तस्येश्वरः प्रजा पापीयसी भवितोरिति ॥ ९ ॥

---

तेनेन्द्रोऽयजत । स इदं सर्वमभवत् । स इदं सर्वमुदजयत् । प्रजापतिं ह्युदजयत् । सर्वमु ह्येवेदं प्रजापतिः । तेनेन्द्रैतामेवोर्ध्वां दिशमुदक्रामत् ॥ ६ ॥

तद् ये ह स्म पुरा वाजपेयेन यजन्ते एतां ह स्मैवोर्ध्वां दिशमुत्क्रामन्ति । तत् औपाविनैव जानश्रुतेयेन प्रत्यवरूढम्, ततोऽर्वाचीनं प्रत्यवरोहन्ति ॥ ७ ॥

स यो वाजपेयेन यजते । स इदं सर्वं भवति । स इदं सर्वमुज्जयति । प्रजापतिं ह्युज्जयति । सर्वमु ह्येवेदं प्रजापतिः ॥ ८ ॥

तदाहुः—न वाजपेयेन यजेत । सर्वं वाऽएष इदमुज्जयति—यो वाजपेयेन यजते । प्रजापतिं ह्युज्ज-

---

एवं वाजपेये ब्राह्मणस्याधिकारविधिमुक्तुं बृहस्पतिवृत्तान्तं प्रदर्श्य क्षत्रियस्यापि तं समर्थयितुमिन्द्रवृत्तान्तं दर्शयति—तेनेन्द्रोऽयजतेति । निगदव्याख्यातोऽर्थः । अस्मिन् पर्यायेऽपि 'तद्ये ह स्म'—इति वाक्यसन्दर्भः पूर्ववद् व्याख्येयः ॥ ६ ॥ ७ ॥

इत्थमाख्यायिकया वाजपेये ब्राह्मणराजन्यावधिकारिणौ प्रदर्श्य, इदानीं तं वाजपेयं विधत्ते—स यो वाजपेयेन यजत इत्यादिना ॥ ८ ॥

सर्वजयेन विराडात्मकप्रजापतिजयस्यानुचितत्वात् तत्साधनभूतो वाजपेयो न कर्त्तव्य इति पूर्वपक्षमुद्भावयति—तदाहुर्न वाजपेयेनेत्यादि । इह न किञ्चनेति । सर्वात्मकप्रजापतिजयेन 'इह' लोके 'न किञ्चन'

---

१—वाजपेयः शरद्यवैश्यस्य । का. श्रौ. सू, १४ । १ । २—उभयतः शुक्लपक्षौ बृहस्पतिसवेन यजते । ज्योतिष्टोमेन वा । द्वादश वा । पुरस्तादयुक्षु ज्योतिष्टोमः पार्ष्ठिकानीतरेषु । प्रतिलोमं पार्ष्ठिकान्युपरि । सर्वाभिष्टोमैर्वा राजसूयसोमैः । प्रतिलोममुपरि । इमे परियज्ञाः । का. श्रौ. सू. १४ । २–८ । ३—अनिष्टिनो वाजपेयेन । का० श्रौ० सू० १५ । २ ।

तुद्ु वै युजेतैव । युऽएवुमेतं युज्ञं क्लृप्तं विदुर्ऋक्तो युजुष्टः सामतो ये प्रजुज्ञयस्तुऽएनं याजयेयुरेषा ह त्वेवैतस्य युज्ञस्य सुमृद्धिर्युदेनं विद्वाᳬसो याजुयन्ति तुस्माद्ु युजेतैव ॥ १० ॥

स वा ऽएष ब्राह्मणस्यैवु युज्ञः । ( ज्ञो ) युदेनेन बृहुस्पतिरुयजत ब्रह्म हि बृहुस्पतिर्ब्रह्म हि ब्राह्मणोऽथो राजुन्यस्य युदेनेनेन्द्रोऽयजत क्षत्रᳬ हीन्द्रः क्षत्रᳬ राजुन्यः ॥ ११ ॥

( न्यो ) राज्ञ एवु राजसूयम् । ( ᳬ ) राजा वै राजसूयेनेष्ट्वा भवति न वै ब्राह्मणो राज्यायालमुवरं वै राजसूयं परं वाजपेयम् ॥ १२ ॥

---

यति, सर्वमु ह्येवेदं प्रजापतिः । स इह न किञ्चन परिशिनष्टि । तस्येश्वरः प्रजा पापीयसी भवितोरिति ॥ ९ ॥

तद्ु वै यजेतैव । यऽ एवमेतं यज्ञं क्लृप्तं विदुः—ऋक्तो यजुष्टः सामतः, ये प्रजज्ञयः तऽ एनं याजयेयुः । एषा ह त्वेवैतस्य यज्ञस्य समृद्धिः—यदेनं विद्वांसो याजयन्ति । तस्माद्ु यजेतैव ॥ १० ॥

स वाऽ एष ब्राह्मणस्यैव यज्ञः—यदेनेन बृहस्पतिरयजत । ब्रह्म हि बृहस्पतिः । ब्रह्म हि ब्राह्मणः । अथो राजन्यस्य—यदेनेनेन्द्रोऽयजत । क्षत्रं हीन्द्रः । क्षत्रं राजन्यः ॥ ११ ॥

राज्ञ एव राजसूयम् । राजा वै राजसूयेनेष्ट्वा भवति । न वै ब्राह्मणो राज्यायालम् । अवरं वै राजसूयम्, परं वाजपेयम् ॥ १२ ॥

---

परिशिष्टम्; तस्मात् 'तस्य' यजमानस्य 'प्रजा' 'पापीयसी' अतिशयेन दारिद्र्यवती 'भवितोः' भवितुम् 'ईश्वरः' समर्था, 'इति' अतो हेतोः वाजपेयो न कर्त्तव्य इति ॥ ९ ॥

तन्निषेधमधिकारिविशेषनिरूपणेन परिहरति—तद्ु वै यजेतैवेति । सर्वथा वाजपेययागः कर्त्तव्य इत्यवधारणार्थः । तत्र विदुष एव यष्टृत्वं विदुषामेव याजयितृत्वमित्युभयमेवोपपादयति—य एवमिति । 'यः' पुमान् 'एतं' वाजपेयं यज्ञम्, ऋगादिवेदत्रयेण 'क्लृप्तं' सेतिकर्त्तव्यत्वेन विहित इति 'विद्यात्' जानीयात्, 'ये' च 'प्रजज्ञयः' प्रज्ञातवन्तः साङ्गोपाङ्गं कर्म ज्ञातवन्त ऋत्विजः, 'ते' 'एनम्' अन्वादिष्टं विद्वांसं यष्टारं 'याजयेयुः' । अतः साधारणैर्वाजपेययागो न कर्त्तव्य इत्यभिप्रायेण "न वाजपेयेन यजेत"—इत्युक्तम् । एषा ह त्वेवैतस्येति । क्रियाकुशलानामृत्विजां याजयितृत्वमेव यज्ञसमृद्धिः; अङ्गवैकल्याभावेन यज्ञसम्पूर्त्तेः सम्भवात् ॥ १० ॥

तत्र वाजपेये अधिकारिविधिमुन्नयति—स वा एष ब्राह्मणस्येति । यतो बृहस्पतिनाऽनुष्ठितः, यतो देवानां मध्ये बृहस्पतिः ब्राह्मणजात्यभिमानी, ब्राह्मणबृहस्पत्योर्ब्रह्मसम्बन्धाद् ऐकरूप्यम्; 'ब्रह्म अधीते वेद वा ब्राह्मणः'—इति व्युत्पत्तेः । इन्द्रेणाप्ययमनुष्ठितः, यतो देवानां मध्ये इन्द्रः क्षत्रियजात्यभिमानी । इन्द्रराजन्ययोः क्षत्रसम्बन्धादैकरूप्यम् । क्षत्रं नाम बलम्, तत्सद्भावात् उभयोः । अतो मनुष्येष्वपि ब्राह्मणराजन्ययोरेवाधिकारो न तु वैश्यस्य । अत एव कात्यायनेनोक्तम्—"वाजपेयः शरद्यवैश्यस्य"—( का. श्रौ. सू. १४ । १ ) इति ॥११॥

वाजपेयस्य साम्राज्यं फलमिति वक्तुं प्रसङ्गात् राजसूयस्याधिकारिभेदेन फलभेदेन वा अवरत्वं दर्शयति—राज्ञ

( १३ ) राजा वै राजसूयेनेष्ट्वा भवति । सम्राड्वाजपेयेनावरꣳ हि राज्यं परꣳ साम्राज्यं कामयेत वै राजा सम्राड् भवितुमवरꣳ हि राज्यं परꣳ साम्राज्यं न सम्राट्कामयेत राजा भवितुमवरꣳ हि राज्यं परꣳ साम्राज्यम् ॥ १३ ॥

( १४ ) स यो वाजपेयेनेष्ट्वा सम्राड्भवति । स इदꣳ सर्वꣳ संवृङ्क्ते स कर्मणः कर्मणः पुरस्तादेताꣳ सावित्रीमाहुतिं जुहोति देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति ॥ १४ ॥

---

राजा वै राजसूयेनेष्ट्वा भवति सम्राड्वाजपेयेन । अवरं हि राज्यम्, परं साम्राज्यम् । कामयेत वै राजा सम्राड्भवितुम् । अवरं हि राज्यम्, परं साम्राज्यम् । न सम्राट् कामयेत राजा भवितुम् । अवरं हि राज्यम्, परं साम्राज्यम् ॥ १३ ॥

स यो वाजपेयेनेष्ट्वा सम्राड्भवति । स इदं सर्वं संवृङ्क्ते । स कर्मणः कर्मणः पुरस्तादेतां सावित्रीमाहुतिं जुहोति—"देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय"—( वा० सं० ९ । १ ) इति ॥ १४ ॥

---

एव राजसूयमित्यादिना । एवकारोऽन्ययोगव्यवच्छेदार्थः । राजशब्देन क्षत्रियं उच्यते, न तु राज्ययोगाद्राजेति व्युत्पत्त्या ब्राह्मणादिर्विवक्ष्यते । अवरं वा इति । राजसूयाख्यं कर्म 'अवरं' निकृष्टम्; कतिपयदेशाधिपतित्वलक्षणराज्यफलमात्रसाधनत्वात् । वाजपेयाख्यं कर्मैव 'परम्' उत्कृष्टम्; सर्वदेशाधिपतित्वरूपसाम्राज्यफलसाधनत्वात् । राज्यात् साम्राज्यस्याधिक्यमाह—कामयेत वै राजेति ॥ १२ ॥ १३ ॥

अथ वाजपेयस्य साम्राज्यफलं दर्शयति—स यो वाजपेयेनेति । 'स' सम्राट् वाजपेययाजी 'इदं' परिदृश्यमानं 'सर्वं' जगत् 'संवृङ्क्ते' संवर्जयति, वशीकरोतीत्यर्थः । एवं साम्राज्यफलं वाजपेयं विधाय तत्र कर्मादौ सावित्रहोमं विधत्ते—स कर्मणः कर्मणइति । कर्मणः कर्मण इति वीप्सया सर्वकर्मादौ कर्त्तव्यत्वमभिधीयते । येषां कर्मणामादौ सावित्रहोमः कर्त्तव्यः,तानि कर्माणि कात्यायनेन सङ्गृहीतानि—"देवसवितारिति जुहोति यजत्यादिषु, सकृद् दीक्षारम्भे कर्मैकत्वात्, क्रयणवेद्यारम्भणप्रवर्ग्योत्सादनाग्निप्रणयनहविर्द्धानाग्नीषोमाणां सदआग्नीध्रधिष्ण्यनिवपनवसतीवरीग्रहणपरिहरणेषु च कर्मान्तरत्वात्" इति ॥ ( का० श्रौ०सू० १४–११–१३ ) तत्र मंत्रं विधत्ते—देव सवितारिति । तस्य मन्त्रस्यायमर्थः; हे 'सवितः देव' प्रेरक अन्तर्यामिन् 'यज्ञं' वाजपेयं 'प्रसुव' प्रवर्तय, 'यज्ञपतिं' यजमानं 'भगाय' अनुष्ठानरूपायैश्वर्याय 'दिव्यः' दिवि भवः यो 'गन्धर्वः' सवितुरनुग्रहात् 'केतपूः' केतान् पुनाति, प्राणिनां विज्ञानानि शोधयन् भवति, सः 'नः' अस्माकं 'केतं' वाजपेयविज्ञानं 'पुनातु' शोधयतु । वाचस्पतिः प्रजापतिश्च सवित्राऽनुज्ञातः 'नः' अस्मदीयं 'वाजं' हवीरूपमन्नम् अत्र अस्मिन्नहनि 'स्वदतु' स्वदयतु ॥ १४ ॥

---

१–राज्ञो राजसूयः । का० श्रौ० सू० । १५ । १ ।

तद्यथैवादो बृहस्पतिः । सवितारं प्रसवायोपाधावत्सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत ऽइदमुज्जयानीति तदस्मै सविता प्रसविता प्रासुवत्तत्सवितृप्रसूत उदजयदेवमेवैष ऽएतत्सवितारमेव प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत ऽइदमुज्जयानीति तदस्मै सविता प्रसविता प्रसौति तत्सवितृप्रसूत ऽउज्जयति ॥ १५ ॥

तस्मादाह । देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्व्वः केतपूः केतं नः पुनातु व्वाचस्पतिर्व्वाजं नः स्वदतु स्वाहेति प्रजापतिर्व्वै व्वाचस्पतिरन्नं व्वाजः प्रजापतिर्न ऽइदमद्यान्नꣳ स्वदत्वित्येवैतदाह स ऽएतामेवाहुतिं जुहोत्या श्वः सुत्याया ऽएतद्ध्यस्यैतत्कर्मारब्धं भवति प्रसन्न ऽएतं यज्ञं भवति ॥ १६ ॥

इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥ ५-१-१ ॥ ( १. १. ) ॥

---

तद् यथैवादो बृहस्पतिः सवितारं प्रसवायोपाधावत् । सविता वै देवानां प्रसविता । इदं मे प्रसुव, त्वत्प्रसूत इदमुज्जयानीति । तदस्मै सविता प्रसविता प्रासुवत् । तत् सवितृप्रसूत उदजयत् । एवमेवैष एतत् सवितारमेव प्रसवायोपधावति । सविता वै देवानां प्रसविता । इदं मे प्रसुव । त्वत्प्रसूत इदमुज्जयानीति । तदस्मै सविता प्रसविता प्रसौति । तस्मात्सवितृप्रसूत उज्जयति ॥ १५ ॥

तस्मादाह—"देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्वः । केतपूः केतं नः पुनातु, वाचस्पतिर्वाजं नः स्वदतु स्वाहा" ( वा० सं० ९।१ ) इति । प्रजापतिर्वै वाचस्पतिः । अन्नं वाजः । प्रजापतिर्न इदमद्यान्नं स्वदत्वित्येवैतदाह । स एतामेवाहुतिं जुहोति । आ श्वः सुत्यायाः । एतद्ध्यस्यैतत्कर्मारब्धं भवति । प्रसन्न एतं यज्ञं भवति ॥ १६ ॥

---

सवितुरुपधावनं बृहस्पतिसम्बन्धेन स्तौति—तद्यथैवाद इति । 'अदः' अस्मिन् विप्रकृष्टे पूर्वस्मिन् काले यथा 'बृहस्पतिः सवितारम्' 'उपाधावत्', ततः तस्मै सविता चानुज्ञां ददौ, एवम् 'एषः' इदानीमनुष्ठाताऽपि तमेव 'उपधावति', तस्मै च 'प्रसविता' प्रेरयिता सविता प्रसौति, अनुजानातीत्यर्थः ॥ १५ ॥

तस्मादाहेति । सावित्रहोमस्य संकुचद्वृत्तितां दर्शयति—आ श्वः सुत्याया इति । आङ् मर्यादायाम् । 'श्वः सुत्यायाः' सुत्यादिनात् पूर्वम्, नोत्तरत्रेत्यर्थः । अत एव कात्यायनः—" प्राक् सुत्यायाः " इति ॥ ( का० श्रौ० सू० १४ । १३ । ) ॥ १६ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥ ( ५-१-१ ) ॥

अꣳशुं गृह्णाति । सर्वत्वायैव तस्माद्वा ऽअꣳशुं गृह्णात्यथैतान्प्रज्ञाता-नेवाग्निष्टोमिकान्ग्रहान्गृह्णात्याग्रयणात् ॥ १ ॥

( द ) अथ पृष्ठ्यान्गृह्णाति । तद्यदेवैतैर्देवा ऽउदजयंस्तदेवैष ऽएतैरु-ज्जयति ॥ २ ॥

( त्यु ) अथ षोडशिनं गृह्णाति । तद्यदेवैतेनेन्द्र ऽउदजयत्तदेवैष एते-नोज्जयति ॥ ३ ॥

( त्यु ) अथैतान्पञ्च वाजपेयग्रहान्गृह्णाति । ध्रुवसदं त्वा नृषदं मनःसद-मुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतम-मिति सादयत्येषां वै लोकानामयमेव ध्रुव ऽइयं पृथिवीमयमेवैतेन लोकमुज्जयति ॥ ४ ॥

---

अंशुं गृह्णाति सर्वत्वायैव । तस्माद्वाऽअंशुं गृह्णाति । अथैतान् प्रज्ञातानेवाग्निष्टोमिकान् ग्रहान् गृह्णात्याग्रयणात् ॥ १ ॥

अथ पृष्ठ्यान् गृह्णाति । तद् यदेवैतैर्देवा उदजयन्, तदेवैष एतैरुज्जयति ॥ २ ॥

अथ षोडशिनं गृह्णाति । तद्यदेवैतेनेन्द्र उदजयत्, तदेवैष एतेनोज्जयति ॥ ३ ॥

अथैतान् पञ्च वाजपेयग्रहान्गृह्णाति–" ध्रुवसदं त्वा नृषदं मनःसदम्, उपयामगृही-

---

एवं विहिते वाजपेये ग्रहविशेषा द्वितीयब्राह्मणेऽभिधीयन्ते, प्राकृतास्त्वतिदिश्यन्ते, तत्र तावदंशुग्रहं विधत्ते– अंशुं गृह्णातीति । ' अंशुं ' सोमग्रहं सोमद्रव्येण गृह्णीयात् । ' सर्वत्वाय ' स्वविरहप्रयुक्तन्यूनतादोषपरिहारेण यज्ञस्य समृद्ध्यै इत्यर्थः । अंश्वदाभ्ययोरप्राकृतत्वेन चोदकादप्राप्तयोरिह विधानं युक्तम् । अत एवापस्तम्बः– भ्रातृव्यवतादाऽभ्यो ग्रहीतव्यो बुभूषतांशुस्तौ न सर्वत्र ग्रहीतव्यौ वाजपेये राजसूये सत्रे सर्ववेदसे" ( आ० श्रौ० सू० १२।८।१२।१३। ) इति । अथ प्रकृतिगतानुपांश्वन्तर्यामादीनतिदिशति–अथैतानिति । ' प्रज्ञातान् ' प्रसिद्धान् ' आग्निष्टोमिकान् ' अग्निष्टोमे विहितान् ' ग्रहान् ' ' आ आग्रयणात् ' आग्रयणपर्यन्तान्, गृह्णीयात् । उपांश्वन्तर्यामौ, ऐन्द्रवायवमैत्रावरुणाश्विनान्, शुक्रामन्थिनौ, आग्रयणञ्च गृह्णीयादित्यर्थः ॥ १ ॥

अथातिग्राह्यान् विधत्ते–अथ पृष्ठ्यानिति । 'पृष्ठ्यान्' अतिग्राह्यान् । ते हि पृष्ठस्तोत्रसम्बन्धात् पृष्ठ्या इत्यर्थः । पृष्ठ्यषडहे प्रतिदिवसमेकैकस्य, विश्वजिति सर्वपृष्ठे चैकाहे ग्रहणात् एतेषां पृष्ठ्यसंज्ञा । तथा च चतुर्थकाण्डे समाम्नातम्–"अग्नीन्द्रसूर्या अतिग्राह्यान् ददृशुः"–इत्यारभ्य, " तान् वै पृष्ठ्ये षडहे गृह्णीयात्, पूर्वे त्र्यह आग्नेयमेव प्रथमेऽहन्नैन्द्रं द्वितीये सौर्यं तृतीय एवमेवान्वहम् "–इति, तथा " विश्वजिति सर्वपृष्ठ एकाह एव गृह्यन्ते"–इति च ( श.प. ४।९।४।२–१३ ) तेषां प्रकृतिगता त्रित्वसङ्ख्यैव शाखान्तरवत्; सङ्ख्यान्तरानुपदेशात् । अत्र कात्यायनः–"प्रातस्सवनेऽतिग्राह्यान् गृहीत्वा षोडशिनम्" ( का.श्रौ.सू. १४।२६ ) २॥३

ग्रहान्तराणि विधत्ते–अथैतान् पञ्चेति । सूत्रितं हि–"पञ्च चैन्द्रान्, ध्रुवसदमिति प्रतिमन्त्रं" ( का.श्रौ.सू.

( त्य ) अप्सुषदं त्वा । घृतसदं व्योमसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्येषां वै लोकानामयमेव व्योमेदमन्तरिक्षमन्तरिक्षलोकमेवैतेनोज्जयति ॥ ५ ॥

पृथिविसदं त्वा । ( त्वाऽन्त ) अन्तरिक्षसदं दिविसदं देवसदं नाकसदमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्येष वै देवसन्नाकसदेष ऽएव देवलोको देवलोकमेवैतेनोज्जयति ॥ ६ ॥

---

तोऽसि, इन्द्राय त्वा जुष्टं गृह्णामि, एष ते योनिः, इन्द्राय त्वा जुष्टतमम्"–(वा.सं.९।२) इति सादयति । एषां वै लोकानामयमेव ध्रुवः–इयं पृथिवी इममेवैतेन लोकमुज्जयति ॥ ४ ॥

"अप्सुषदं त्वा घृतसदं व्योमसदम्, उपयामगृहीतोऽसि, इन्द्राय त्वा जुष्टं गृह्णामि, एष ते योनिरिन्द्राय त्वा जुष्टतमम्"–(वा. सं. ९।२ ) इति सादयति एषां वै लोकानामयमेव व्योम–इदमन्तरिक्षलोकमेवैतेनोज्जयति ॥ ५ ॥

"पृथिविसदं त्वाऽन्तरिक्षसदं दिविसदं देवसदं नाकसदम्, उपयामगृहीतोऽसि, इन्द्राय त्वा जुष्टं गृह्णामि, एष ते योनिरिन्द्राय त्वा जुष्टतमम्"–( वा. सं. ९ । २ ) इति सादयति । एष वै देवसन्नाकसत् । एष एव देवलोकः । देवलोकमेवैतेनोज्जयति ॥ ६ ॥

---

-१४।२६।२७ ) अथैतान् तेषां पञ्चानां ग्रहाणामपि पञ्च मन्त्रान् विधत्ते–ध्रुवसदं त्वेत्यादिना । तत्र, प्रथमग्रहमन्त्रस्यायमर्थः–' ध्रुवसदं ' ध्रुवे स्थिरे भूलोके सीदन्तम्, 'नृषदं' नृषु नेतृषु सीदन्तम्, ' मनस्सदं ' मनसि वर्त्तमानं 'त्वा' त्वां ग्रहम् 'इन्द्राय' 'जुष्टम्' अभिरुचितं 'गृह्णामि' त्वं तु ' उपयामगृहीतोऽसि ' पृथिव्यात्मकेन पात्रेण गृहीतोऽसि; "इयं वा उपयामः"–( श.प. ४।१।२।७ ) इति श्रुतेः । अत्र भिन्नक्रमः, यत उपयामगृहीतोऽसि अतस्त्वां गृह्णामीति । 'ते' तव एष खरप्रदेशो 'योनिः' स्थानम्, तस्मात् ' इन्द्राय ' ' जुष्टतमम् ' अतिप्रियतमं त्वामिह सादयामीति । " एष ते योनिः "–इति मन्त्रान्त्यमागत्य विनियोगमाह–सादयतीति । मन्त्रगतं ध्रुवपदं व्याचष्टे–एषां वा इति । 'एषां लोकानां' भूम्यादीनाम् 'अयं' परिदृश्यमानो लोको ' ध्रुवः ' । इदंशब्दस्यार्थमाह–इयं वै पृथिवीति ॥ ४ ॥

अप्सुदषमिति । द्वितीयग्रहमन्त्रस्यायमर्थः; अप्सु सीदतीत्यप्सुषत् तम्, घृते सीदन्तम्, ' व्योम्नि ' अन्तरिक्षे सीदन्तम् । उपयामगृहीतोऽसीत्यादि पूर्वेण समानार्थ इति नेह विव्रियते । व्योमसदिति पदस्य तात्पर्यमाह–इदमेव व्योमेति । विशेषेण ओम् अवनं व्याप्तिर्यस्य तद्व्योम । तदेव ' अन्तरिक्षम् ' तदेतद्द्वितीयग्रहणेन जितवान् भवतीत्यर्थः ॥ ५ ॥

पृथिविसदमिति । तृतीयमन्त्रस्यायमर्थः-पृथिव्यादिषु लोकेषु सीदन्तमत एव देवसदम् । लोकत्रयाभिमानिषु अग्निवायुसूर्येषु, अन्येष्विन्द्रादिषु च आसीदन्तम् । ' नाकसदम्' न विद्यते अकं दुःखं यस्मिन्निति नाकः स्वर्गो-

---

१–'तद्विपरीतग्रहणेन'–इ. क. पु. पा. ।

( त्य ) अपाᳬं रसमुद्वयसᳬं सूर्ये सन्तᳬं समाहितम् । अपाᳬं रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्येष वाऽअपाᳬं रसो योऽयं पवते स एष सूर्ये समाहितः सूर्यात्पवत एतमेवैतेन रसमुज्जयति ॥ ७ ॥

ग्रहा ऊर्जाहुतयः । ( यो ) व्यन्तो विप्राय मतिम् । तेषां विशिप्रियाणां वोऽहमिषमूर्जᳬं समग्रभमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतममिति सादयत्यूर्ग्वै रसो रसमेवैतेनोज्जयति ॥ ८ ॥

---

( ७ ) "अपां रसमुद्वयसं सूर्ये सन्तं समाहितम् । अपां रसस्य यो रसः, तं वो गृह्णाम्युत्तमम्–उपयामगृहीतोऽसि, इन्द्राय त्वा जुष्टं गृह्णामि, एष ते योनिः, इन्द्राय त्वा जुष्टतमम् "–( वा. सं. ९ । ३ ) इति सादयति । एष वाऽअपां रसो योऽयं पवते । स एष सूर्ये समाहितः । सूर्यात् पवते । एतमेवैतेन रसमुज्जयति ॥ ७ ॥

"ग्रहा ऊर्जाहुतयो व्यन्तो विप्राय मतिम् । तेषां विशिप्रियाणां वोऽहमिषमूर्जं समग्रभम्–उपयामगृहीतोऽसि । इन्द्राय त्वा जुष्टं गृह्णामि, एष ते योनिः, इन्द्राय त्वा जुष्टतमम्"–( वा. सं. ८ । ४ ) इति सादयति । ऊर्ग्वै रसः । रसमेवैतेनोज्जयति ॥ ८ ॥

---

देवलोकः । अत एव स्वर्गपदस्य सुखवाचकत्वमन्यत्रोक्तम्–"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम् " इति । तत्र नाकसत्पदं व्याचष्टे–एष एव देवलोक इति ॥ ६ ॥

अपां रसमिति । चतुर्थग्रहमन्त्रस्यायमर्थः–' अपां ' ' रसं ' सारभूतम्; उदकस्यैव सोमरसत्वेन परिणतत्वात् । ' उद्वयसम् ' उद्गच्छन्तम् । " वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु " ( धा. पा. अ. प. ३८ ) इत्यस्मादसुनि रूपम् । यद्वा, वय इत्यन्ननाम, ( निघं. २ । ७ । ७ ) उद्गतमन्नं जीवनं वा यस्मिन् । सोमरसोऽन्नभूतो जीवनहेतुश्च; " अपाम सोमममृता अभूम "–( ऋ. सं. ८ । ४८ । ३ ) इत्युक्तत्वात् । ' सूर्ये ' ' सन्तं ' विद्यमानं ' समाहितं ' तत्रैव सम्यगाहितम्; रसस्योदकादिरूपस्य आदित्ये एवावस्थानात् । ' अपां ' ' रसस्य ' सारभूतस्य वल्लीरूपेण परिणतस्य सोमस्य ' यो रसः ' दशापवित्रात्पवमानः, तम् आपः ! ' वः ' युष्माकं सम्बन्धिनम् ' उत्तमम् ' उत्कृष्टं स्वरसं ' गृह्णामि ' । उपयामेत्यादि । व्याख्यातम् । मन्त्रं व्याचष्टे–एष वा अपामिति । ' योऽयं पवते ' दशापवित्रात् स्रवति, ' सः ' अपां रसः । एष सूर्ये इति । ' एषः ' खलु सोमरसः उदकात्मना पूर्वं ' सूर्ये ' ' समाहितः ' सम्यगवस्थितः, इदानीं ' सूर्यात् ' सूर्यात्मकाद् दशापवित्रात् ' पवते ' स्रवति ॥ ७ ॥

ग्रहा ऊर्जाहुतय इति । पञ्चमग्रहमन्त्रस्यायमर्थः–हे ग्रहाः ! गृह्यन्त इति ' ग्रहाः ' सोमाः । ' ऊर्जाहुतयः ' ऊर्जमन्नं सवनीयं पुरोडाशमभिलक्ष्य हूयमानाः; यद्वा, अन्नाहुतिभूता यूयम् । ' विप्राय ' मेधाविने, स्वापेक्षितफलपरिपूरकाय वा यजमानाय । ' मतिं ' विवक्षितां बुद्धिं ' व्यन्तः ' पश्यन्तोऽनुजानन्तो भवतेति शेषः ।

तान्वाऽएतान् । (न्पु) पुञ्च व्वाजपेयग्रहान्गृह्णाति प्रजापतिं वाऽएष उज्जयति य्यो व्वाजपेयेन य्यजते संव्वत्सरो वै प्रजापतिः पुञ्च वाऽऋतवः संव्वत्सरस्य तत्प्रजापतिमुज्जयति तस्मात्पुञ्च व्वाजपेयग्रहान्गृह्णाति ॥ ९ ॥

(त्यु) अथ सप्तदश सोमग्रहान्गृह्णाति । सप्तदश सुराग्रहान्प्रजापतेर्व्वाऽएतेऽअन्धसी यत्सोमश्च सुरा च ततः सत्यꣳश्री र्ज्योतिः सोमोऽनृतं पाप्मा तमः सुरैतेऽएवैतदुभे ऽअन्धसीऽउज्जयति सुर्व्वं वा ऽएष इदमुज्जयति य्यो व्वाजपेयेन य्यजते प्रजापतिꣳ ह्युज्जयति सुर्व्वमु ह्येवेदं प्रजापतिः ॥ १० ॥

---

तान्वाऽएतान् पञ्च वाजपेयग्रहान्गृह्णाति । प्रजापतिं वाऽएष उज्जयति—यो वाजपेयेन यजते । सम्वत्सरो वै प्रजापतिः । पञ्च वाऽऋतवः सम्वत्सरस्य । तत् प्रजापतिमुज्जयति । तस्मात्पञ्च वाजपेयग्रहान्गृह्णाति ॥ ९ ॥

अथ सप्तदश सोमग्रहान् गृह्णाति । सप्तदश सुराग्रहान् । प्रजापतेर्वाऽएतेऽअन्धसी—यत् सोमश्च सुरा च । ततः सत्यं श्रीः—ज्योतिः—सोमः । अनृतं पाप्मा । तमः—सुरा । एतेऽएवैतदुभेऽअन्धसीऽउज्जयति । सर्वं वाऽएष इदमुज्जयति—यो वाजपेयेन यजते । प्रजापतिं ह्युज्जयति । सर्वमु ह्येवेदं प्रजापतिः ॥ १० ॥

---

' विशिप्रियाणां ' " शिप्रे हनू नासिके वा "—( निरुक्त ६ । ४ । १ ) इति हि यास्कवचनम्; इह हि हनू गृह्येते, तत्र भवं कर्म शिप्रियम्, विगतं शिप्रियं येषां ते । अत्र हनुव्यापाराभावात् शोभनाभिषवसंस्कृता इत्यर्थः । यद्वा, विविधानि शिप्रियाणि हनुस्थानीयानि पात्राग्राणि, तत्पर्यन्तं, तेषां ' वः ' युष्माकं सम्बन्धिनम् ' इषम् ' अन्नम् ' ऊर्जम् ' बलप्रदं सोमरसं ' समग्रभम ' "ह्रग्रहोर्भः "( पा. सू. ३ । १ । ३४ ) समग्रहम्, सङ्गृह्णामि । शिष्टं पूर्ववत् । ऊर्क्—शब्दसूचितमर्थमाह—ऊर्ग् वै रस इति ॥ ८ ॥

ग्रहाणां पञ्चसङ्ख्यां प्रशंसति—तान्वा एतानिति । वाजपेययागस्य स्वरूपावाप्तिसाधनत्वात् प्रजापतेश्च संवत्सरात्मतया पञ्चर्तुरूपत्वात् ग्रहाणां पञ्चसङ्ख्या युक्तेत्यर्थः ॥ ९ ॥

ग्रहांतराणि सद्रव्याणि विधत्ते—अथ सप्तदशेति । गृह्यन्त इति ग्रहाः सोमाः, सोमाश्च ते ग्रहाश्चेति विग्रहः, सोमस्य वा ग्रहाः । उभयेषां ग्रहाणां द्रव्यद्वयमनूद्य प्रशंसति—प्रजापतेर्वा इति । 'अन्धसी' अन्ने इत्यर्थः । सत्यं श्रीः ज्योतिः सोमः ' सत्य—श्री—ज्योतिरात्मकत्वं सोमस्य, इतरस्यास्तु 'अनृतं पाप्मा तमः'—अनृतपापतमोरूपत्वम् । पाप्मेति दारिद्र्यम् ॥ १० ॥

---

१—ध्रुवसदमिति प्रतिमंत्रमतिग्राह्यवद्धोमः । का० श्रौ० सू० १४ । २७ । २—सप्तदशापरान् । सोमग्रहान् गृह्णातीति सूत्रशेषः । नेष्टा च तावतः सौरान् । चकारात् गृह्णाति । का० श्रौ० सू० १४ । २८ । २९ ।

स यत्सप्तदश । सोमग्रहान्गृह्णाति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावतैवास्यैतत्सत्यꣳ श्रियं ज्योतिरुज्जयति ॥ ११ ॥

( त्यु ) अथ यत्सप्तदश । सुराग्रहान्गृह्णाति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञः स यावानेव यज्ञो यावत्यस्य मात्रा तावतैवास्यैतदनृतं पाप्मानं तमऽउज्जयति ॥ १२ ॥

तेऽउभये चतुस्त्रिꣳशद्ग्रहाः सम्पद्यन्ते । त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳशस्तत्प्रजापतिमुज्जयति ॥ १३ ॥

( त्यु ) अथ यत्र राजानं क्रीणाति । तद्दक्षिणतः प्रतिवेशतः केशवात्पुरुषात्सीसेन परिस्रुतं क्रीणाति न वाऽएष स्त्री न पुमान्यत्केशवः पुरुषो

---

स यत् सप्तदश सोमग्रहान् गृह्णाति । सप्तदशो वै प्रजापतिः । प्रजापतिर्यज्ञः । स यावानेव यज्ञो यावत्यस्य मात्रा—तावतैवास्यैतत्सत्यं श्रियं ज्योतिरुज्जयति ॥ ११ ॥

अथ यत् सप्तदश सुराग्रहान् गृह्णाति । सप्तदशो वै प्रजापतिः । प्रजापतिर्यज्ञः । स यावानेव यज्ञो यावत्यस्य मात्रा—तावतैवास्यैतदनृतं पाप्मानं तम उज्जयति ॥ १२ ॥

तेऽउभये चतुस्त्रिंशद्ग्रहाः सम्पद्यन्ते । त्रयस्त्रिंशद्वै देवाः, प्रजापतिश्चतुस्त्रिंशः । तत् प्रजापतिमुज्जयति ॥ १३ ॥

अथ यत्र राजानं क्रीणाति—तद्दक्षिणतः प्रतिवेशतः केशवात्पुरुषात् सीसेन परिस्रुतं क्रीणाति । न वाऽएष स्त्री, न पुमान् यत्केशवः पुरुषः । यदह पुमान्—तेन न स्त्री । यद्व केशवः—तेनो न

---

उक्तग्रहसङ्ख्यां प्राजापत्यात्मकत्वेन स्तौति—स यत्सप्तदशेति । प्रजापतेः सप्तदशत्वम् "आश्रावय" इत्यादि सप्तदशाक्षरमन्त्रात्मकत्वादित्यवगन्तव्यम् स एव यज्ञः, आश्रावयेत्यादिमन्त्राभावे यज्ञस्यासिद्धेः । श्रूयते च "प्रजापतिर्वै यज्ञः—" इति । अतः 'स यज्ञः' 'यावान्' यत्परिमाणः, कियत्सङ्ख्याकावयव इत्यर्थः । 'यावती' 'मात्रा' परिमितिः, 'तावतैव' सप्तदशसोमग्रहवता यज्ञेन 'अस्यैतत्' अस्य यज्ञात्मकस्य प्रजापतेः सत्यादिकं यष्टा अर्जितवान् भवतीति ॥ ११ ॥

अथ यत्सप्तदशेति । यथा सोमग्रहवाक्यं योजितम्, एवमेव सुराग्रहवाक्यं योज्यम्; एतावांस्तु विशेषः—तत्र सत्यादेरुज्जयप्राप्तिः, अत्रानृतादेर्निरासाजय इति ॥ १२ ॥

द्विविधग्रहाणां सङ्ख्यां मिलित्वा स्तौति—त उभये चतुस्त्रिंशदिति । अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रवषट्काराविति 'त्रयस्त्रिंशद्' देवताः, 'प्रजापतिः' तु 'चतुस्त्रिंशः' इति ॥ १३ ॥

प्राक्तनं सोमक्रयणविधिमनूद्य परिस्रुत्क्रयणं विधत्ते—अथ यत्रेति । 'यत्र' प्रदेशे 'राजानं' सोमलता—

---

१—"आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदश प्रजापतिः" इति ( तै० सं० १ । ६ । ११ । १ )

२—"अनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञस्तत्प्रजापतिमेवैतद्यज्ञम्" इति । श० प० ब्रा० १।१।१। १३/कण्डिकायां द्रष्टव्यम् ।

यद्वह पुमांस्तेन न स्त्री यदु केशवस्तेन न पुमान्नैतदयो न हिरण्यं यत्सीसं नैष सोमो न सुरा यत्परिस्रुत्तस्मात्केशवात्पुरुषात्सीसेन परिस्रुतं क्रीणाति १४

( त्यु ) अथ पूर्व्वेद्युः । ( द्वौ ) द्वौ खरौ कुर्व्वन्ति पुरोऽक्षमेवान्यं पश्चादक्षमन्यं नेत्सोमग्रहांश्च सुराग्रहांश्च सह सादयामेति तस्मात्पूर्व्वेद्युर्द्वौ खरौ कुर्व्वन्ति पुरोऽक्षमेवान्यं पश्चादक्षमन्यम् ॥ १९ ॥

---

पुमान् । नैतदयो, न हिरण्यम्—यत्सीसम् । नैष सोमो, न सुरा यत्परिस्रुत् । तस्मात् केशवात्पुरुषात्सीसेन परिस्रुतं क्रीणाति ॥ १४ ॥

अथ पूर्वेद्युर्द्वौ खरौ कुर्वन्ति—पुरोऽक्षमेवान्यम्, पश्चादक्षमन्यम् । नेत्सोमग्रहांश्च सुराग्रहांश्च सह सादयामेति । तस्मात् पूर्वेद्युर्द्वौ खरौ कुर्वन्ति—पुरोऽक्षमेवान्यम्, पश्चादक्षमन्यम् ॥ १९ ॥

---

मित्यर्थः, क्रीणीयात्, तस्य दक्षिणे प्रतिवेशे स्थाने 'केशवात्' केशा अस्य सन्तीति स तथोक्तः । "केशाद्वोऽन्यतरस्याम्" (पा० सू० ५ । २ । १०९) इति वप्रत्ययः । तस्मात् 'पुरुषात्' सीसद्रव्येण 'परिस्रुतं' क्रीणीयात् । लोके हि सुरा तत्साधनभूतैः परिपक्वद्रव्यैः क्रियते, अत्र तु सुरासाधनाय पर्याप्तपरिपाकैः शष्पैर्निष्पन्नो रसः परिस्रुदित्युच्यते । कात्यायनेन तस्यास्तत्साधनद्रव्याणां वा क्रयणं विकल्पेनोक्तम्—"सोमात्क्रीयमाणात् सहितं दक्षिणतः सीसेन परिस्रुतः क्रयणं केशवात्तद्रव्याणां वा" (का० श्रौ० सू० १४ । १४ । १९) इति । तैत्तिरीये तु द्रव्यक्रय एवोक्तः—"सीसेन क्लीबाच्छष्पाणि क्रीणाति" (तै० ब्रा० १ । ८ । ५ । ३) इति । न वा एष स्त्री इत्यादिकस्यायमर्थः । सीस—केशव—परिस्रुताम् अन्तरालवर्तित्वं साम्यम् । 'यत्' यतः, परिस्रुत् क्रेता 'पुमान्' पुँल्लक्षणवान् श्मश्रुयुक्त इत्यर्थः 'तेन' कारणेन 'स्त्री न भवति' यस्मात् 'केशवः' केशयुक्तः, 'तेन' केशबाहुल्यवत्त्वेन 'पुमान्' च 'न' भवति; केशबाहुल्यं तु स्त्रीलक्षणम्; अतः केशवत्क्लीवः पुरुषः स्त्रिया अधिकः पुरुषात् न्यूनः, सीसमप्ययसोऽधिकं, हिरण्यात्तु न्यूनम् । परिस्रुच सा दत्ता सुरा न भवतीति ततोऽधिका, सोमवत्पूतत्वाभावात् ततो न्यूना । तस्माद् यथोक्तमेव कर्त्तव्यमिति स्थितम् ॥ १४ ॥

अथ द्वितीयमेव ग्रहाणां ग्रहासादनं मा भूदिति प्रदेशविशेषं विधत्ते—अथ पूर्वेद्युर्द्वौखराविति । 'पुरोऽक्षम्' शकटस्याधस्तात् अक्षस्य पुरोभागे एकम्, 'पश्चादक्षम्' अक्षस्य पश्चाद्भागेऽपरम्, इति 'द्वौ खरौ' 'पूर्वेद्युः' पूर्वदिवसे कुर्युः "खरं कृत्वा नाराशंसस्थानेऽपरम्" (का० श्रौ० सू० १६ । १८ ।) तत्र कारणमाह—नेत्सोमग्रहानिति । नेत्सादयामेति । सहसादनमयुक्तमित्यभिप्रायेण पृथक्—सादनार्थं खरद्वयं कर्त्तव्यमित्यर्थः । 'नेत्' इति परिभये (निरु० १ । ३ । ६) ॥ १९ ॥

(मु) अथ यत्र पूर्वया द्वारा । वसतीवरीः प्रपादयन्ति तदपरया द्वारा नेष्टा परिस्रुतं प्रपादयति दक्षिणतः पात्राण्यभ्यवहरन्ति पुरोऽक्षमेव प्रत्यङ्ङासीनोऽध्वर्युः सोमग्रहान्गृह्णाति पश्चादक्षं प्राङ्ङासीनो नेष्टा सुराग्रहान्त्सोमग्रहमेवाध्वर्युर्गृह्णाति सुराग्रहं नेष्टा सोमग्रहमेवाध्वर्युर्गृह्णाति सुराग्रहं नेष्टैवमेवैनान्व्यत्यासं गृह्णीतः ॥ १६ ॥

(तो) न प्रत्यञ्चमक्षमध्वर्युः । सोमग्रहमतिहरति न प्राञ्चमक्षं नेष्टा सुराग्रहं नेज्ज्योतिश्च तमश्च सꣳसृजावेति ॥ १७ ॥

(त्यु) उपर्युपर्येवाक्षमध्वर्युः । सोमग्रहं धारयत्यधोऽधोऽक्षं नेष्टा सुरा-

---

अथ यत्र पूर्वया द्वारा वसतीवरीः प्रपादयन्ति–तदपरया द्वारा नेष्टा परिस्रुतं प्रपादयति । दक्षिणतः ॥पात्राण्यभ्यवहरन्ति । पुरोऽक्षमेव प्रत्यङ्ङासीनोऽध्वर्युः सोमग्रहान्गृह्णाति । पश्चादक्षं प्राङ्ङासीनो नेष्टा सुराग्रहान् । सोमग्रहमेवाध्वर्युर्गृह्णाति, सुराग्रहं नेष्टा । सोमग्रहमेवाध्वर्युर्गृह्णाति, सुराग्रहं नेष्टा । एवमेवैनान् व्यत्यासं गृह्णीतः ॥ १६ ॥

न प्रत्यञ्चमक्षमध्वर्युः सोमग्रहमतिहरति, न प्राञ्चमक्षं नेष्टा सुराग्रहम् । नेज्ज्योतिश्च तमश्च संसृजावेति ॥ १७ ॥

उपर्युपर्येवाक्षमध्वर्युः सोमग्रहं धारयति, अधोऽधोऽक्षं नेष्टा सुराग्रहम् । " सम्पृचौ स्थः,

---

वसतीवरीणां हविर्द्धानप्रपादनमनूद्य परिस्रुत्प्रपादने कश्चिद्विशेषं विधत्ते–अथ यत्रेति । 'अपरया' पश्चिमया 'द्वारा' 'नेष्टा' नाम ऋत्विक्, अध्वर्युवर्गे तृतीयः 'प्रपादयति' प्रवेशयेदित्यर्थः । दक्षिणत इति । हविर्द्धानस्य दक्षिणतो द्वारं कृत्वा तेन सोमग्रहपात्राणि सुराग्रहपात्राणि च प्रवेशयतीत्यर्थः । सूत्रितं हि– " दक्षिणतः सन्धिं करोति, यूपवेष्टनं सप्तदशभिर्वस्त्रैर्युद्ग्रन्थनं वा परिव्ययणकाले, सन्धिना पात्राण्याहृत्य "– ( का. श्रौ. सू. १४ । १९–२९ ) इति । वर्गद्वयग्रहणे ऋत्विजोर्नियमं दर्शयति–पुरोऽक्षमित्यादिना । विभागेन धारणायां व्यत्यासं विधत्ते–सोमग्रहमेवाध्वर्युरिति । 'व्यत्यासम्' व्यत्यस्य व्यत्यस्येत्यर्थः । अध्वर्युणा प्रथमे सोमग्रहे गृहीते सति, नेष्टा प्रथमं सुराग्रहं गृह्णीयात्; " व्यत्यासं ग्रहणम् " ( का. श्रौ. सू. १४।३० ) ।ततो द्वितीये द्वितीयमिति सोऽयं व्यत्यासः ॥ १६ ॥

ग्रहाणामन्यप्रदेशप्रापणं निषेधति–न प्रत्यञ्चमक्षमिति । 'प्रत्यञ्चमक्षम' अक्षस्य पश्चाद्भागं 'प्रति' 'सोमग्रहम्' 'अध्वर्युः' 'न अतिहरति' नातिहरेत् नातिक्रामयेत् । एवं च 'नेष्टा' अपि 'सुराग्रहं' 'प्राञ्चमक्षम्' शकटाक्षस्य पुरोदेशं नातिहरेत् । उभयत्र कारणमाह–नेज्ज्योतिरिति । यदि ग्रहाणामन्योन्यदेशातिक्रमणं स्यात्, तर्हि तेजस्तिमिरयोः संसर्गः स्यात्, स मा भूदिति व्यतिहरणनिषेधः । सोमस्य ज्योतीरूपत्वं सुरायास्तु तमोरूपत्वं च प्रागावेदितम् । " अक्षानतिक्रमणं ग्रहाणाम् " । ( का. श्रौ. सू. १४।३१)॥१७॥

उभयग्रहधारणे कश्चिद् विशेषं विधत्ते–उपर्युपर्येवाक्षमध्वर्युरिति । अक्षस्य सन्निकृष्टोपरिभाग एव सोम-

ग्रह॒ᳪ॑ सम्पृचौ॑ स्थः सं मा॑ भ॒द्रेण॑ पृङ्क्त॒मिति॒ नेत्पा॒पमि॒ति॑ ब्रवा॒वेति॒ तौ
पुन॒र्विह॑रतो॒ विपृचौ॒ स्थो वि मा पा॒प्मना॑ पृङ्क्त॒मिति॒ तद्यथे॒षीकां॑ मु॒ञ्जाद्वि॒
वृहे॑दे॒वमे॑नᳪ॑ सर्व्व॑स्मात्पा॒प्मनो॒ विवृ॑हत॒स्तस्मि॑न्न॒ ताव॒च्चनैनो॑ भवति॒
याव॑त्तृ॒णस्या॒ग्रं तौ सा॑दयतः ॥ १८ ॥

( तो ऽ स्था ) अ॒थाध्व॒र्युः । ( हिं ) हिर॑ण्यपात्रेण मधु॒ग्रहं॑ गृह्णाति॒ तं म॒ध्ये
सो॑मग्रहा॒णाᳪ॑ सा॒दय॑त्यथो॒क्थ्यं गृ॑ह्णा॒त्यथ॒ ध्रुव॑मथै॒तान्त्सो॑मग्र॒हानु॑त्त॒मे
स्तो॒त्रऽऋ॒त्विजां॑ चम॒सेषु॒ व्यव॑नीय जुह्वति॒ तान्भ॑क्ष॒यन्त्यथ॒ मा॒ध्यन्दि॑ने
सव॑ने मधुग्रहस्य॒ च सु॒राग्र॒हाणां॑ चोद्यतं तस्या॒तः ॥ १९ ॥

इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥ ९-१-२ ॥ ( १.२. ) ॥

---

सं मा भद्रेण पृङ्क्तम् "–इति । नेत्पापमिति ब्रवावेति । तौ पुनर्विहरतः । " विपृचौ स्थः, वि मा पाप्मना पृङ्क्तम् "–( वा. सं. ९ । ४ ) इति । तद्यथेषीकां मुञ्जाद्विवृहेदेवमेनं सर्वस्मात्पाप्मनो विवृहतः । तस्मिन्न तावच्चनैनो भवति–यावत्तृणस्याग्रम् । तौ सादयतः ॥ १८ ॥

अथाध्वर्युर्हिरण्यपात्रेण मधुग्रहं गृह्णाति । तं मध्ये सोमग्रहाणां सादयति । अथोक्थ्यं

---

ग्रहस्य, सन्निकृष्टाधःप्रदेश एव सुराग्रहस्य । " उपर्यध्यधसः सामीप्ये "–( पा. सू. ८ । १ । ७ ) इति द्विर्वचनम् । धारणमन्त्रं विधत्ते–सम्पृचौ स्थ इति । तस्यार्थः;–वर्गद्वयमध्ये एकैकस्योक्तप्रदेशे धारणात् उभयोर्द्वित्वेन मन्त्रे ' सम्पृचौ '–इति, ' पृङ्क्तम् '–इति च द्विवचनमुक्तम् । हे सोमसुराग्रहौ ! ' सम्पृचौ ' संस्पृष्टौ ' स्थः ' यतो युवां सम्पृक्तावभवतम्, अतो ' मा ' माम् अपि ' भद्रेण ' प्रजादिना " प्रजा वै भद्रम्, पशवो भद्रम् "– ( तै. ब्रा. १ । ३ । ४ । ६ ) इति श्रुतेः । ' पृङ्क्तं ' संयोजयतमिति । कात्यायनस्तु शाखान्तरानुसारेण धारणाहरणमन्त्रयोः प्रतीकं बहुवचनत्वेनोदाजहार–" अक्षानतिक्रमणं ग्रहाणाम्, उपर्युपर्यक्षमध्वर्युर्धारयत्यधोऽक्षो नेष्टा सम्पृचाविति, विपृचावित्याहरतः "–( का. श्रौ. सू. १४।३१–३३ ) इति । प्रयोजनकथनमुखेन मन्त्रस्य तात्पर्यमाह–नेत्पापमिति ब्रवावेति । यद्युभयोर्ग्रहयोर्धारणसमये सम्पर्कवाचकमन्त्रे ' भद्रेण पृङ्क्तमिति ' यत् प्रार्थनम्, तत् सुराग्रहं पापमित्येवं नैव ब्रवावेत्यभिप्रायेणेत्यर्थः । अक्षप्रदेशात् तयोः स्वस्वप्रदेशेऽवस्थापनं समन्त्रकं विधत्ते–तौ पुनर्विहरत इति । हे ग्रहौ ! ' विपृचौ ' वियुक्तौ ' स्थः ' । यत एवम्, अतो ममापि प्रार्थनां वियोजयतमिति । मन्त्रस्योत्तरभागं व्याचष्टे–तद्यथेषीकामिति । यथा ' मुञ्जात् ' मुञ्जतृणात् ' इषीकाम् ' मध्यवर्त्तितृणं ' विवृहेत् ' पृथक् कुर्यात्, ' एवम् ' ' एनं ' यजमानं ' सर्वस्मात् ' ' पाप्मनः ' पापात् ' विवृहतः ' द्वौ ग्रहौ वाऽध्वर्युनेष्टारौ । एतदेवाह–तस्मिन्न तावच्चनेति । ' चन '–शब्दोऽप्यर्थे । ( अम. को. ३ । ४ । ३ । ) असाकल्ये तु चिच्चनेति । यावत् तृणाग्रं तावन्मात्रं स्वल्पमपि ' एनः ' पापं ' तस्मिन् ' ' न ' भवति ॥ १८ ॥

अथ मधुग्रहग्रहणं विधत्ते–अथाध्वर्युरिति । तस्य सादनप्रदेशं विधत्ते–तं मध्य इति । अत्र कात्यायनः–

---

१–सुरारूपम् ' इति क. पा. ।

आग्नेयमग्निष्टोमऽआलभते । (तेऽग्नि ) अग्निर्व्वा ऽअग्निष्टोमोऽग्निष्टोम-मेवैतेनोज्जयत्यैन्द्राग्नमुक्थेभ्य ऽआलभत ऽऐन्द्राग्नानि वा ऽउक्थान्युक्था-न्येवैतेनोज्जयत्यैन्द्रᳬं षोडशिन ऽआलभत ऽइन्द्रो वै षोडशी षोडशिन-मेवैतेनोज्जयति ॥ १ ॥

गृह्णाति । अथ ध्रुवम् । अथैतान्त्सोमग्रहान् उत्तमे स्तोत्रऽऋत्विजां चमसेषु व्यवनीय जुह्वति । तान्भक्षयन्ति । अथ माध्यन्दिने सवने मधुग्रहस्य च सुराग्रहाणां चोद्यते । तस्यातः ॥ १९ ॥

आग्नेयमग्निष्टोमऽआलभते । अग्निर्वाऽअग्निष्टोमः । अग्निष्टोममेवैतेनोज्जयति । ऐन्द्राग्नमुक्थेभ्य आलभते । ऐन्द्राग्नानि वाऽउक्थानि उक्थान्येवैतेनोज्जयति । ऐन्द्रं षोडशिनऽआलभते । इन्द्रो वै षोडशी । षोडशिनमेवैतेनोज्जयति ॥ १ ॥

" हिरण्मयेन मधुग्रहं गृहीत्वा खरमध्ये सादयति "–( का. श्रौ. सू. १४ । ३४ ) इति । अथ प्राकृता-वुक्थ्यध्रुवग्रहौ दर्शयति–अथोक्थ्यमित्यादि।सूत्रकृता अनयोश्चोदकादेव ग्रहणं सिद्धमिति सूत्रितम्–"उक्थ्यादि" (का. श्रौ. सू. १४।३४) पृथग्ग्रहणप्रसङ्गाद्द्विविधग्रहाणां होमकालं भक्षणं च विधत्ते–अथैतान्त्सोमग्रहानिति । 'एतान्' प्रातस्सवने गृहीतान् 'सोमग्रहान्' 'उत्तमे स्तोत्रे' तृतीयसवने बृहत्स्तोत्रे वाजपेयसंस्थापननिमित्ते स्तुते सति ' ऋत्विजां चमसेषु ' ' व्यवनीय ' व्यवनयनं कृत्वा जुहुयुर्भक्षयेयुश्च । तत्प्रसङ्गात् सुराग्रहाणां मधुग्रहस्य च माध्यन्दिनसवनमध्ये विनियोगो भविष्यतीत्याह–अथ माध्यन्दिन इति। 'उद्यते'–इति, "वद व्यक्तायां वाचि"– (धा. पा. भ्वा. प. १०३४)कर्मणि यकि सम्प्रसारणम् । एतेषां होमास्तावत् तद्विनियोगप्रकारोऽपि "अथाध्व-र्युश्च यजमानश्च पूर्वया द्वारा मधुग्रहमादाय निष्क्रामतः"–इत्यारभ्य," अथ नेष्टाऽपरया द्वारा सुराग्रहमादाय निष्क्रामति "–इत्यादिना अस्मिन्नेवाध्याये वक्ष्यत इत्यर्थः ( श. प. ५।१।५।२८ ) । तस्यात इति । ' अतः ' सोमग्रहहोमभक्षणप्रतिपादनानन्तरं ' तस्य ' आम्नातस्य सुराग्रहविनियोगप्रतिपादकवाक्यस्य पाठानु-सन्धानं कार्यमित्यर्थः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ५-१-२ ) ॥

तृतीये पशुतन्त्रमभिधीयते । तत्र तावद्वाजपेयस्याग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थालक्षणसद्भावेन सर्वक्रत्ववरोध-कत्वमस्तीति वैदिकप्रसिद्धिः[1] तत्तत्क्रतुसाधारणपशुसद्भावे सत्युपपद्यते, नान्यथा । तथा च तैत्तिरीयकम्–"ब्रह्म-वादिनो वदन्ति, नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्रः, अथ कस्माद् वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति, पशुभिरिति ब्रूयात्"–( तै. ब्रा. १।३।४।१ ) इति । यज्ञशब्देन यजतिचोदिता वषट्कारप्रदाना अङ्ग-प्रधानभूता यागा अभिधीयन्ते । तत्समूहरूप एकफलसाधनायापूर्ववान् कर्मविशेषः क्रतुरित्यर्थः । अतस्तान-ग्निष्टोमादिगतानाग्नेयादिसवनीयपशून् विधत्ते–आग्नेयमग्निष्टोम इति । तत्राग्निष्टोमस्य द्वादशस्तोत्रशस्त्राणि; उक्थ्यस्य उक्थत्रयेण पञ्चदश; षोडशिनः षोडशिस्तोत्रेण सह षोडश; वाजपेयस्य बृहत्स्तोत्रेण सह सप्तदश, अति-

१–' वैदिकत्वप्रसिद्धिः ' इति क. पा. ।

सारस्वतुꣳ सप्तदशाय स्तोत्रायालभते । तुदेतदुनतिरात्रे सति रात्रे रूपं क्रियते प्रजापतिं वाऽएष उज्जयति यो व्वाजपेयेन यजते संव्वत्सरो वै प्रजापतिस्तदेतेन सारस्वतेन रात्रिमुज्जयति तस्मादेतदनतिरात्रे सति रात्रे रूपं क्रियते ॥ २ ॥

( तेऽथ ) अथ मरुद्भ्य उज्जेषेभ्यः । (भ्यो) व्वशां पृश्निमालभतऽइयं वै व्वशा पृश्निर्यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं व्वशा

---

सारस्वतं सप्तदशाय स्तोत्रायालभते । तदेतदनतिरात्रे सति रात्रे रूपं क्रियते । प्रजापतिं वाऽएषः उज्जयति—यो वाजपेयेन यजते । सम्वत्सरो वै प्रजापतिः । तदेतेन सारस्वतेन रात्रिमुज्जयति । तस्मादेतदनतिरात्रे सति रात्रे रूपं क्रियते ॥ २ ॥

अथ मरुद्भ्य उज्जेषेभ्यो वशां पृश्निमालभते । इयं वै वशा पृश्निः—यदिदमस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितम् । तेनेयं वशा पृश्निः । अन्नं वाऽएष उज्जयति—यो वाजपेयेन यजते । अन्नपेयं ह वै

---

रात्रपर्यायत्रयेण सह षोडशिपक्षे एकोनत्रिंशत्, अन्यदा अष्टाविंशतिः पशूनाम् । तत्तत्क्रतुसाधारण्यं द्योतयितुमग्निष्टोमादिपदाभिधानम् । अग्निः स्तूयते अस्मिन्निति अग्निष्टोमो नाम साम, तस्मिन् विषयभूते 'आग्नेयमालभते' । एतेन पशुना अस्मिन् वाजपेये अग्निष्टोमसंस्थं क्रतुमेवानुष्ठितवान् भवतीत्यर्थः । एवमुत्तरत्रापि योज्यम् । 'उक्थेभ्यः' तृतीयसवने स्तूयमानेभ्योऽन्येभ्यस्त्रिभ्य उक्थस्तोत्रेभ्यः इन्द्रादिदेवताकः पशुरालम्भनीयः । 'षोडशिने' षोडशिस्तोत्राय 'ऐन्द्रं' पशुम् आलभेत ॥ १ ॥

सारस्वतमिति । 'सप्तदशाय' सप्तदशसङ्ख्यापूरकाय बृहत्स्तोत्राय 'सारस्वतं' सरस्वतीदेवत्यं पशुमालभेत । नन्वन्तिममिदं बृहत्स्तोत्रं वाजपेयस्यासाधारणं लिङ्गम्; श्रूयते हि—" मारुत्या बृहतः स्तोत्रम् "—( तै. ब्रा. १।३।४।२ ) इति । कथं वाजपेयं अतिरात्रान्तर्भाव इत्याशङ्क्य, अनेन सारस्वतालम्भनेनातिरात्रस्यान्तर्भावं दर्शयति—तदेतदिति । 'अनतिरात्रे, सति' प्रस्तुते वाजपेये यज्ञे अतिरात्रान्तर्भावविधुरे 'तदेतत्' सारस्वतालम्भनं 'रात्रेः' रात्रिपर्यायस्येत्यर्थः । 'रूपं क्रियते' अतिरात्रस्यासाधारणं रूपं क्रियते तेन तदन्तर्भावोऽपि सिद्ध इत्यर्थः । एतेषामाग्नेयादीनामग्निष्टोमादिसंस्थाचतुष्टयसारूप्यं सूत्रे दर्शितम्—" आग्नेयोऽग्निष्टोमे सवनीयः पशुः, ऐन्द्राग्नश्चोक्थे द्वितीयः, ऐन्द्री पृश्निः षोडशिनि तृतीयः, सरस्वत्यै चतुर्थोऽतिरात्रे मेषी वा, सारस्वती मेष्यतिरात्रे चतुर्थी " (का.श्रौ.सू.९।१७३–१७४।) इति । नन्वतिरात्रान्तर्भावाय रात्रिसामान्यपि कस्मान्न प्रयोज्यानीत्यत आह—प्रजापतिं वा एष इति । प्रजापतेस्तु संवत्सरात्मकता सङ्ख्यासाम्यात्; 'द्वादश मासाः पञ्चर्तवः' इति संवत्सरस्य सप्तदशत्वम्, प्रजापतेरप्याश्रावयेत्यादिसप्तदशाक्षरमन्त्रात्मकत्वात् । अतः सप्तदशेनैव बृहत्स्तोत्रेण सप्तदशात्मकप्रजापतेरुज्जितिः सिद्धेति प्रयोजनाभावाद्रात्रिसामानि न प्रयोज्यानि । तस्मादुक्तविध एवातिरात्रान्तर्भावः साधीयानित्याह—तदेतेन सारस्वतेनेति ॥ २ ॥

अथास्य यज्ञस्यासाधारणपशुं विधत्ते—अथ मरुद्भ्य इति । उज्जेषगुणकेभ्यो मरुद्भ्यो देवेभ्यः 'पृश्निं'

पृश्निरन्नं वाऽएष उज्जयति यो व्वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्य-द्वाजपेयं व्विशो वै मरुतोऽन्नं वै व्विश ऽउज्जेषेभ्य ऽइत्युज्जित्याऽएव दुर्व्वेदेऽउज्जेषवत्यौ याज्यानुवाक्ये यद्युज्जेषवत्यौ न व्विन्देदपि येऽएव के च मारुत्यौ स्यातां दुर्व्वेदो ऽएव व्वशा पृश्निर्यदि व्वशां पृश्निं न व्विन्दे-दपि यैव का च व्वशा स्यात् ॥ ३ ॥

(तु) तस्या आवृत् । (द्य) यत्र होता माहेन्द्रं ग्रहमनुशꣳसति तदस्यै व्वपया प्रचरेयुरेष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैत-न्निष्केवल्यमेव स्तोत्रं निष्केवल्यꣳ शस्त्रमिन्द्रो वै यजमानस्तन्मध्यत ऽएवैतद्यजमाने व्वीर्यं दधाति तस्मादस्या ऽअत्र व्वपया प्रचरेयुः ॥ ४ ॥

---

नामैतद्–यद्वाजपेयम् । विशो वै मरुतः । अन्नं वै विशः । उज्जेषेभ्य इत्युज्जित्याऽएव दुर्वेदे उज्जेष-वत्यौ याज्यानुवाक्ये । यद्युज्जेषवत्यौ न विन्देद्–अपि येऽएव के च मारुत्यौ स्याताम् । दुर्वेदोऽएव वशा पृश्निः । यदि वशां पृश्निं न विन्देद् । अपि यैव का च वशा स्यात् ॥ ३ ॥

तस्या आवृत् । यत्र होता माहेन्द्रं ग्रहमनुशंसति–तदस्यै वपया प्रचरेयुः । एष वाऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रः । अप्यस्यैतन्निष्केवल्यमेव स्तोत्रम्, निष्केवल्यं शस्त्रम् । इन्द्रो वै यजमानः । तन्मध्यत एवैतद्यजमाने वीर्यं दधाति । तस्मादस्या अत्र वपया प्रचरेयुः ॥ ४ ॥

---

नानावर्णां 'वशां' वन्ध्याम् आलभेत । उक्तं पशुं भूम्यात्मत्वेन स्तौति–इयं वै वशेति । 'इयं' भूमिः, वशा पृश्निः' । भूमेः पृश्नित्वमुपपादयति–' यदिदम् ' ' अस्यां ' भूमौ ' मूलि ' मूलवत् स्थावरम्, ' अमूलं ' पश्वादिकम्, एवमुभयम् ' अन्नाद्यं ' आद्यम् अदनीयम् अन्नं ' प्रतिष्ठितम् ' ' तेन ' अस्याः पृश्नित्वम् । अस्य पशोर्मरुद्देवतात्वं प्रशंसति–अन्नं वा एष इति । ' वाजपेयम् ' इति यत्, तत् ' अन्नपेयम् ' । वाजशब्दोऽन्न-वाची । अन्नम् अन्नविकारभूतं सुराद्रव्यं पीयते अत्रेति हि व्युत्पत्तिः । ' मरुतः ' खलु ' विशः ' प्रजाः; " मरुतो वै देवानां विशः " ( तै. सं. २ । २ । ५ । ७ ) इति श्रुतेः । कथमेतावता मरुतामन्नरूपत्वम् ? तत्राह–अन्नं वै विश इति । 'अन्नं' ' वै ' खलु ' विशः ' प्रजाः; अन्नोपजीवनात् तच्छब्देन व्यपदिश्यन्ते । तेषामुज्जेषविशेषणस्य प्रयोजनमाह–उज्जेषेभ्य इति । तत्र वशावपाहोमे उज्जेषपदवत्यौ याज्यापुरोऽनुवाक्ये विधत्ते–दुर्वेदे उज्जेषवत्याविति । ' दुर्वेदे ' लब्धुमशक्ये, अतस्ते एव सम्पाद्ये इत्यर्थः । तयोरसुलभत्वं मत्वा स्वयमेव श्रुतिः पक्षान्तरमाह–यद्युज्जेषवत्यावित्यादि । ' मारुत्यौ ' मरुद्देवत्ये भवे वा । पशोरपि पृश्निवर्णास्या-लाभे पक्षान्तरं दर्शयति–दुर्वेदो एवेत्यादिना । ' दुर्वेदो ' लब्धुमशक्यः ' उ ' खलु इति निपातेन सह प्रयोगः । अत एव कात्यायनः–" वशां पृश्निं मरुद्भ्य उज्जेषेभ्यस्तदभावे पृश्निम् " ( का० श्रौ० सू० १४ । ३५–३६ ) इति ॥ ३ ॥

मारुतीवपाप्रचरणं प्राकृतानामाग्नेयैन्द्राग्नप्रभृतीनां वपाप्रचरणेन सह विधास्यते । तत्र तावदेकेषां मत-मुपन्यस्यति–तस्या आवृद् यत्र होतेति । ' तस्याः' मारुत्या वशायाः ' आवृत् ' तन्त्रम्, वक्ष्यत इति शेषः ।

( ई ) द्वेधाऽवदानानि श्रपयन्ति । ततोऽर्द्धानां जुह्वामुपस्तीर्य द्विर्द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदानान्यथोपभृति सकृत्सकृदवद्यति द्विरभिघारयति न प्रत्यनक्त्यवदानानि तद्यदर्द्धानां द्विर्द्विरवद्यति तथैषा कृत्स्ना भवत्यथ यदेतैः प्रचरति तेन दैवीं विशमुज्जयत्यथार्द्धानि मानुष्यै विश ऽउपहरति तेनो मानुषीं विशमुज्जयति ॥ ५ ॥

---

द्वेधाऽवदानानि श्रपयन्ति । ततोऽर्द्धानां जुह्वामुपस्तीर्य द्विर्द्विरवद्यति, सकृदभिघारयति।प्रत्यनक्त्यवदानानि । अथोपभृति सकृत्सकृदवद्यति । द्विरभिघारयति । न प्रत्यनक्त्यवदानानि । तद्यदर्द्धानां द्विर्द्विरवद्यति–तथैषा कृत्स्ना भवति । अथ यदेतैः प्रचरति–तेन दैवीं विशमुज्जयति । अथार्द्धानि मानुष्यै विशऽउपहरति तेनो मानुषीं विशमुज्जयति ॥ ५ ॥

---

यत्र होता माहेन्द्रं ग्रहम् 'अनुशंसति' अनुशंसितवान् भवतीति भूतार्थपरत्वेन व्याख्येयम्; " माहेन्द्रान्ते वशावपाचरणम्"–( का. श्रौ.सू. १४।४० ) इति कात्यायनेन सूत्रितत्वात् । ' तत्' तदा 'अस्यै' अस्या मारुत्याः 'वपया' 'प्रचरेयुः' । प्रचरणं माहेन्द्र इति यत् ' एष वै इन्द्रस्य ' असाधारणो 'ग्रहः'; ग्रहणमन्त्रे केवलेन्द्रस्यैव देवतात्वेन प्रतिपादनात् । निःशेषेण केवलमिन्द्रस्यायमिति 'निष्केवल्यो ग्रहः' । माध्यन्दिने सवने हि माहेन्द्रग्रहग्रहणम्; तच्च सवनमिन्द्रस्येति नियतम् । श्रूयते हि " प्रातः सुतमपिबो हर्यश्व माध्यन्दिनं सवनं केवलं ते"–(ऋ. सं. ४।३।१७ ) न केवलं माहेन्द्रग्रह एव निष्केवल्यः, अपि तु तद्ग्रहणानन्तरं प्रयोज्ये स्तुतशस्त्रे अपि केवलेन्द्रदेवताकत्वात् इन्द्रस्यासाधारणमित्यत आह–अप्यस्यैतन्निष्केवल्यमेवेति । अस्तु ग्रहादीनां केवलेन्द्रदेवताकत्वं तेन प्रकृते किमायातमित्यत आह–इन्द्रो वै यजमान इति । यस्माद्यागलक्षणेन परमैश्वर्येण योगाद् 'यजमानः' इन्द्ररूपः । ' वैशब्दःशाखान्तरीयां प्रसिद्धिं द्योतयति; " एष खलु वा एतर्हीन्द्रो यो यजते"–( तै. सं. ६।१।११।१ )इति तैत्तिरीयके श्रवणात् । 'अतः ' इन्द्रयजमानयोस्तादात्म्यान्माध्यन्दिनसवनवर्तिमाहेन्द्रग्रहान्ते वपाचरणेन यज्ञमध्ये एव ' यजमाने ' ' वीर्यं ' निहितवान् भवतीत्यर्थः ॥ ४ ॥

पश्ववदानानामप्येकधैव श्रवणं सिद्धान्तयितुं द्वैविध्यं पूर्वपक्षयति–द्वेधाऽवदानानि श्रपयन्तीति । कात्यायनस्तु उक्तं वपाप्रचरणमवदानानां द्वेधा श्रपणं च विकल्पेन सूत्रयामास–" माहेन्द्रान्ते वशावपाचरणम्, अवदानैश्च द्वैधं श्रुतेः "–( का. श्रौ. सू. १४ । ४० । ४१ ) इति । " यथान्यायं वोमयोः, वशायाश्च, ऐकध्यञ्च श्रपणम् " ( का. श्रौ. सू. ११ । ४६।४७ ) इति च । ब्राह्मणे तु " तदु तथा न कुर्यात् "–इत्येकं निषिध्य, अन्यत् सिद्धान्तितम् । कथमनयोर्विकल्पः सिध्यतीति चेत् , सत्यम् मतान्तरनिषेधस्तु प्रसक्तिपूर्वको भवितुमर्हति, प्रसक्तिस्तु शाखान्तरीयेति तन्मतानुसारेण सूत्रकृता विकल्पः कृत इत्यविरोधः। हृदयं जिह्वा वक्षो यकृद्-वृक्कौ सव्यो दोरुभे पार्श्वे दक्षिणा श्रोणिः गुदतृतीयमिति दैवतानि; दक्षिणो दोः सव्या श्रोणिः गुदतृतीयमिति सौविष्टकृतानीति । एतानि सर्वाण्यवदानानि द्विधा पृथक् श्रपयन्ति पक्वानि कुर्युः । दैवतानां हृदयादीनां सौविष्टकृतानां त्र्यङ्गाणां च पृथक् श्रपणमित्यर्थः । हविषामवदानप्रकारमाह–ततोऽर्द्धानामिति । अथ जुहूवामाज्येनोपस्तरणं कृत्वा ' अर्द्धानां ' प्रधानहविषां हृदयादीनां मध्ये एकैकस्माद् 'द्विर्द्विः' अवद्येत् । एवमेकादशावदानान्यवदाय पुनराज्येनैकवारमभिघारणं कुर्यात् । एवमुपस्तरणद्विरवदानपुनरभिघारणैर्हविषां चतुरवत्तत्वं

तुद्दु तुथा नु कुर्यात् । (द्ध्वु) ह्वलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य ऽएवं करोति तुस्माद्यत्रैवेतरेषां पशूनां वपाभिः प्रचरन्ति तुदेवैतुस्यै वपया प्रचरेयुरेकधाऽवदानानि श्रपयन्ति नु मानुष्यै विश ऽउपहरन्ति ॥ ६ ॥

(न्त्यु) अुथ सप्तदश प्राजापत्यान्पशूनालभते । ते वै सर्वे तूपरा भवन्ति

---

तद्दु तथा न कुर्यात् । ह्वलति वाऽएष—यो यज्ञपथादेति । एति वाऽएष यज्ञपथाद्—य एवं करोति । तस्माद्यत्रैवेतरेषां पशूनां वपाभिः प्रचरति—तदेवैतस्यै वपया प्रचरेयुः । एकधाऽवदानानि श्रपयन्ति । न मानुष्यै विशऽउपहरन्ति ॥ ६ ॥

अथ सप्तदश प्राजापत्यान् पशूनालभते । ते वै सर्वे तूपरा भवन्ति, सर्वे श्यामाः, सर्वे मुष्कराः ।

---

सम्पादितम् । अनन्तरं स्विष्टकृदर्थान्यवदानानि घृतेन प्रत्यञ्ज्यात् । अथोपभृतीति । वाक्यं स्पष्टार्थम् । अत्र उपस्तरणावदाने सकृत् सकृद् द्विरभिघारणमिति चतुरवदानसम्पत्तिः । अत्र स्थितानि[1] अवत्तशेषाणि न प्रत्यञ्ज्यात्; उत्तरत्र विनियोगाभावात् । एतेषां द्विरवदानं प्रशंसति—तद्यदर्द्धानामिति । अर्द्धानां हृदयादीनां प्रत्येकं देवतार्थं स्विष्टकृदर्थं च द्विरवद्यतीति 'यत्' तेन द्विरवदानेन 'एषा' वशा 'कृत्स्ना' सम्पूर्णा भवति यथेतरः पशुस्तथेत्यर्थः । अथैतेषां प्रचरणं स्तौति—यदेतैरिति । दैवीं विशमिति । अवदानानां देवतोद्देशेनाग्नौ प्रक्षिप्तत्वात् तेन प्रचरणेन 'दैवीं' देवसम्बन्धिनीं 'विशम्' प्रजाम् 'उज्जयति । एवमर्द्धानां हविषां विनियोगमभिधाय, अर्द्धान्तरस्यापि दर्शयति—अथार्द्धानीति । यागार्थार्द्धहविषः पृथक् पक्वानि अङ्गानि मानुष्यै ' मनुष्यसम्बन्धिन्यै ' विशे ' प्रजायै ' उपहरति ' ददाति ' तेन ' दानेन ' मानुषीं ' प्रजां जितवान् भवतीति । अत एव सूत्रितम्—" पूर्वेभ्यो देवतास्विष्टकृद्भ्यामवद्यत्युत्तराणि विशे ददाति "—( का. श्रौ. सू. १४ । ४२ ) इति । अत्र पूर्वोत्तरशब्दौ कर्कोपाध्यायेनैवं व्याख्यातौ—" पूर्वाणि हृदयादीनि, उत्तराणि त्र्यङ्गानि "—इति ॥ ९ ॥

तदिदं[2] माहेन्द्रान्ते वपावरणं हविषां द्विधा श्रपणं च दूषयति—तद्दु तथा न कुर्यादिति । करणे प्रत्यवायं दर्शयति—ह्वलति वा एष इति । 'यो' यज्ञमार्गादेः सकाशाद् ' एति' प्रच्युतो भवति, सः ' ह्वलति ' विभ्रष्टो भवतीत्यर्थः । कस्य यज्ञपथाद् भ्रंशनम्, तमाह—एति वा एष इति । ' एवम् ' उक्तरीत्या ' वपया ' प्रातस्सवनकर्त्तव्यं वपाहोमं माहेन्द्रान्ते श्रपणञ्च करोति, स यज्ञमार्गात् प्रच्युतो भवेत्, अतस्तथा न कुर्यादिति सम्बन्धः ॥ अथ प्राकृतपशुवपाप्रचरणकाले मारुती-वपा-प्रचरणं हविषामैकध्येन श्रपणञ्च विधत्ते[3]—तस्माद् यत्रैवेत्यादिना । अस्मिन् पक्षे त्र्यङ्गेभ्यः स्विष्टकृद्यागावदानमिति पृथक् पक्वस्य हविषोभावाम्मानुष्यै विशे अवदानमिति शेषः ॥ ६ ॥

पशून्[4]न्तराणि विधत्ते—अथ सप्तदशेति । ' प्राजापत्यान् ' प्रजापतिदेवताकान् सप्तदशसङ्ख्याकान् पशून्

---

१—' पात्रस्थितानि ' इति क० पा० । २—' तदिदमादिकं माहेन्द्रान्ते ' इति क० पा० । ३—यथाम्नायं वोभयोः । वशावाश्च । ऐकध्यं च श्रपणम् । का० श्रौ० सू० १४ । ४५-४७ । ४—' द्विपश्वन्तराणि विधत्ते ' इति क० पा० ।

सर्व्वे श्यामाः सर्व्वे मुष्कराः प्रजापतिं वाऽएष उज्जयति यो व्वाजपेयेन यजतेऽन्नं वै प्रजापतिः पशुर्व्वा ऽअन्नं तत्प्रजापतिमुज्जयति सोमो वै प्रजापतिः पशुर्व्वै प्रत्यक्षꣳ सोमस्तत्प्रत्यक्षं प्रजापतिमुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥ ७ ॥

ते वै सर्वे तूपरा भवन्ति । पुरुषो वै प्रजापतेर्नेदिष्ठꣳ सोऽयं तूपरोऽविषाणस्तूपरो वा ऽअविषाणः प्रजापतिः प्राजापत्या ऽएते तस्मात्सर्वे तूपरा भवन्ति ॥ ८ ॥

सर्व्वे श्यामाः । ( ० ) द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं प्रजापतिः प्राजापत्या ऽएते तस्मात्सर्वे श्यामा भवन्ति ॥ ९ ॥

---

प्रजापतिं वाऽएष उज्जयति—यो वाजपेयेन यजते । अन्नं वै प्रजापतिः । पशुर्वाऽअन्नम् । तत् प्रजापतिमुज्जयति । सोमो वै प्रजापतिः । पशुर्वै प्रत्यक्षं सोमः । तत् प्रत्यक्षं प्रजापतिमुज्जयति । सप्तदश भवन्ति । सप्तदशो वै प्रजापतिः । तत् प्रजापतिमुज्जयति ॥ ७ ॥

ते वै सर्वे तूपरा भवन्ति । पुरुषो वै प्रजापतेर्नेदिष्ठम् । सोऽयं तूपरो विषाणः । तूपरो वाऽअविषाणः प्रजापतिः । प्राजापत्या एते । तस्मात् सर्वे तूपरा भवन्ति ॥ ८ ॥

सर्वे श्यामाः । द्वे वै श्यामस्य रूपे—शुक्लं चैव लोम, कृष्णं च । द्वन्द्वं वै मिथुनं प्रजननम् । प्रजननं प्रजापतिः । प्राजापत्या एते । तस्मात् सर्वे श्यामा भवन्ति ॥ ९ ॥

---

आलभेत । अत्र देवतासङ्ख्यालक्षणद्वयविशिष्टपशुविधिः । तेषु पशुषु गुणत्रयं विधत्ते—ते वै सर्वे तूपरा इति । 'तूपराः' अविषाणा इत्यर्थः । 'श्यामाः' शुक्लकृष्णवर्णाः, 'मुष्कराः' मुष्को येषामस्तीति । "ऊषसुषिमुष्कमधो रः" ( पा. सू. ५ । २ । १०७ ) इति मत्वर्थीयो रप्रत्ययः । मुष्कवृद्धिः सर्वाङ्गवृद्धिमन्तरेण न घटते इति सर्वे पुष्टाङ्गा भवेयुरित्यर्थः ॥ पशुतन्त्ररूपेण प्रत्यक्षसोमात्मना च स्तुवंस्तदात्मकप्रजापतिप्राप्तिं प्रतिपादयति—प्रजापतिर्वा इत्यादिना । सोमवत्पशोरपि सवनत्रयव्यापित्वात्ताच्छब्द्यम्, अत्र देवतार्थपारोक्ष्याभावात्प्रत्यक्षत्वम् ॥ ७ ॥

पशुगतां सङ्ख्यामुपजीव्य प्रशंसति—ते वै सर्वे तूपरा इति । अस्यायमर्थः;—यस्मात् 'पुरुषः' 'प्रजापतेः' 'नेदिष्ठम्' अन्तिकतमं वस्तु, वस्तुमत्सृष्टेः प्रथमभावित्वात्; 'सः' 'अयं' पुरुषः 'तूपरः' । तूपरशब्दार्थं स्वयमेव दर्शयति—अविषाण इति । पुरुषत्वादविषाणः, ततः प्रजापतिदेवत्यानां पशूनां तूपरत्वगुणेन भाव्यमिति ॥ ८ ॥

श्यामत्वमनूद्य व्याचष्टे—सर्वे श्यामा इति । शुक्लकृष्णवर्णद्वयात्मकं श्यामत्वमित्यर्थः । द्वित्वमालम्ब्य प्रशंसति—द्वन्द्वं वा इति । 'प्रजापतिः प्रजननम्' सर्वोत्पादकत्वात् ॥ ९ ॥

सर्वे मुष्कराः । प्रजननं वै मुष्करः प्रजननं प्रजापतिः प्राजापत्या ऽएते
तस्मात्सर्वे मुष्करा भवन्ति । दुर्वेदा एवꣳ समृद्धाः पशवो यद्येवꣳ समृद्धा-
न्न विन्देदपि कतिपयाऽएवैवꣳ समृद्धाः स्युः सर्वमु ह्येवेदं प्रजापतिः १०
(स्त) तद्धैके । वाचऽउत्तममालभन्ते यदि वै प्रजापतेः परमस्ति
वागेव तदेतद्वाचमुज्जयाम इति वदन्तस्तदु तथा न कुर्यात्सर्वं वाऽइदं
प्रजापतिर्यदिमे लोका यदिदं किं च सा यदेवैषु लोकेषु वाग्वदति तद्वाच-
मुज्जयति तस्मादु तन्नाद्रियेत ॥ ११ ॥
तेषामावृत् । (द्य) यत्र मैत्रावरुणो वामदेव्यमनुशꣳसति तदेषां

सर्वे मुष्कराः । प्रजननं वै मुष्करः । प्रजननं प्रजापतिः । प्राजापत्या एते । तस्मात् सर्वे मुष्करा भवन्ति । दुर्वेदा एवं समृद्धाः पशवः । यद्येवं समृद्धान् न विन्देदपि कतिपया एव । एवं समृद्धाः स्युः । सर्वमु ह्येवेदं प्रजापतिः ॥ १० ॥

तद्धैके वाचऽउत्तममालभन्ते । यदि वै प्रजापतेः परमस्ति—वागेव । तदेतद्वाचमुज्जयाम इति वदन्तः । तदु तथा न कुर्यात् । सर्वं वाऽइदं प्रजापतिः—यदिमे लोकाः, यदिदं किञ्च । सा यदेवैषु लोकेषु वाग्वदति—तद्वाचमुज्जयति । तस्मादु तन्नाद्रियेत ॥ ११ ॥

तेषामावृत् । यत्र मैत्रावरुणो वामदेव्यमनुशंसति—तदेषां वपाभिः प्रचरेयुः । प्रजननं वै वामदेव्यम् । प्रजननं प्रजापतिः । प्राजापत्या एते । तस्मादेषामत्र वपाभिः प्रचरेयुः ॥ १२ ॥

सर्वे मुष्करा इति, वाक्यं निगदव्याख्यातम् । उक्तत्रिविधगुणानां पशूनामसुलभत्वप्रतिपादनपूर्वकं पक्षान्तरमाह—दुर्वेदा इति । उक्तगुणानां पशूनामसम्भवे कतिपया एव पशवो गुणत्रयवन्तो भवेयुः । अत्र सूत्रम्—"प्राजापत्यांश्च सप्तदश श्याम-तूपरान् बस्तांस्तद्गुणाभावे सर्वेषामेकदेशोऽपि"—( का. श्रौ. सू. १४।३७।३८) इति । यद्येवं तर्हि कतिपयपशूनां वर्णान्तरयुक्तत्वेऽपि कर्मणोऽङ्गवैकल्यं परिहरति—सर्वमु हीति । प्रजापतेः सर्वात्मकत्वाद् वर्णान्तरयुक्तत्वं पशूनां प्राजापत्यत्वं न विरुध्यत इत्यर्थः ॥ १० ॥

अत्र केचित् सप्तदशप्राजापत्यपशूनामन्ते वाग्देवत्यं पशुम्, तत्र चोपपत्तिं वदन्ति; तेषां पक्षं निरसितुमनुवदति—तद्धैके वाच इति । "वाच उत्तममेके" (का श्रौ. सू. १४।४।३९) । 'एके' शाखान्तरीयाः 'वाचे' वाग्देवतायै 'उत्तमम्' अन्ते कर्त्तव्यत्वाच्चरममित्यर्थः, तम् 'आलभन्ते' । न हि 'प्रजापतेः' 'परम्' उत्कृष्टं पूर्वभावि किञ्चिदपि 'अस्ति', यदर्थं पशुरालभ्यते; यद्यस्ति, 'वागेव' अस्ति तस्या अव्यक्तशब्दब्रह्मत्वेन पूर्वमवस्थानादिति भावः । ताम् 'उज्जयामः' साधयामः 'इति' बुद्ध्या वाग्देवत्यः पशुरालम्भनीय इति । तद् दूषयति—तदु तथेति । सर्वं वा इदमिति । अस्यायमर्थः;—प्रजापते सर्वात्मकत्वेन लोकात्मकत्वम्; तत्रत्यचराचरसर्वभूतात्मकत्वञ्चास्त्येव; अतो लोकेषूद्यमाना वाक् अपिप्रजापति रूपैवेति तदर्थं वाग्देवत्यपश्वालम्भनं नादरणीयमिति ॥ ११ ॥

उक्तानां प्राजापत्यपशूनां वपाप्रचरणस्य हविर्यागस्य च प्राकृतपशुवपाहविर्भिः सह होमकालं विधास्यति ।

१—'प्रजापतिपदावासैवाच्यपि प्राप्तत्वात् ?' इति क. पाठः । 'प्रजापतिवदाराध्यै वाचापि ?' इत्यपि क्वचित्पाठः । एतच्च पाठद्वयमपि न समीचीनं प्रतिभाति ।

वपाभिः प्रचरेयुः प्रजननं वै वामदेव्यं प्रजननं प्रजापतिः प्राजापत्या ऽएते तस्मादेषामत्र वपाभिः प्रचरेयुः ॥ १२ ॥

( उ ) अथेष्टा ऽअनुयाजा भवन्ति । ( न्त्यु ) अव्यूढे स्रुचावथैषाᳪं हविर्भिः प्रचरन्ति सोऽन्तोऽन्तो वै प्रजापतिस्तदन्तत ऽएवैतत्प्रजापतिमुज्जयत्यथ यत्पुरा प्रचरेद्यथा यमध्वानमेष्यन्स्यात्तं गत्वा स क्व ततः स्यादेवं तत्तस्मादेषामत्र हविर्भिः प्रचरन्ति ॥ १३ ॥

तदु तथा न कुर्यात् । ( ह्ल ) ह्वलति वाऽएष यो यज्ञपथादेत्येति वाऽएष यज्ञपथाद्य एवं करोति तस्माद्यत्रैवेतरेषां पशूनां वपाभिः प्रचरन्ति तदेवैतेषां वपाभिः प्रचरेयुर्यत्रैवेतरेषां पशूनाᳪं हविर्भिः प्रचरन्ति तदेवैतेषाᳪं

---

अथेष्टा अनुयाजा भवन्ति । अव्यूढे स्रुचौ । अथैषां हविर्भिः प्रचरन्ति । सोऽन्तः । अन्तो वै प्रजापतिः । तदन्तत एवैतत् प्रजापतिमुज्जयति । अथ यत् पुरा प्रचरेद् यथा यमध्वानमेष्यन्त्स्यात् । तं गत्वा—स क्व ततः स्याद् । एवं तत् । तस्मादेषामत्र हविर्भिः प्रचरन्ति ॥ १३ ॥

तद्धु तथा न कुर्यात् । ह्वलति वाऽएष—यो यज्ञपथादेति । एति वाऽएष यज्ञपथाद् य एवं करोति । तस्माद्यत्रैवेतरेषां पशूनां वपाभिः प्रचरन्ति तदेवैतेषां वपाभिः प्रचरेयुः । यत्रैवेतरेषां पशूनां हविर्भिः

---

तत्र तावत् पूर्वपक्षमाह—तेषामावृद्यन्नेति । 'मैत्रावरुणः' नामर्त्विक् माध्यन्दिने सवने "वामदेव्यं" साम 'अनुशंसति' अनुशंसितवान् भवतीति भूतार्थपरतया व्याख्येयम् । अत एव कात्यायनः—"वामदेव्यग्रहान्त प्राजापत्यानाम्"—( का. श्रौ. सू. १४।४३ ) इति । अनुष्ठानमिति शेषः । तदा एषां सप्तदशानां वपायागः कर्त्तव्य इत्यर्थः ॥ १२ ॥

अथेष्टा इति । तृतीयसवने अनुयाजयागानन्तरं जुहूपभृतोर्व्यूहनादर्वागेषां प्राजापत्यानां हविर्यागः कर्त्तव्यः अत्र कात्यायनः "स्रुग्व्यूहनात्प्राग्घविषा" ( का० श्रौ० सू० १४ । ४४ ) इति । तं कालं प्रशंसति—सोऽन्त इति । 'सः' एव कालः 'अन्तः' सवनीये कर्त्तव्यानां यागानामवधिः । प्रजापतेः सर्वोत्तमत्वादन्तत्वम् । तस्मादन्तरूपे तस्मिन् काले क्रियमाणेन हविर्होमेन 'प्रजापतिमेव' उज्जितवान् भवतीत्यर्थः । अथ यत् पुरेति । अस्यार्थः—'यत्' यदि उक्तकालात् 'पुरा' प्राक्तन एव काले वपाहविर्भिः प्रचरेत्, तर्हि व्यर्थमेव । प्रजापतिप्राप्तेरुत्तरकर्मकलापकरणमयुक्तमितीममर्थं प्रदर्शयितुं दृष्टान्तः—यथा यामिति । 'यथा' लोके पुरुषो यं मार्गं गमिष्यन् भवेत्, 'तं' लक्ष्यं देशं प्राप्य 'क्व' कुत्र गच्छति, लक्ष्यप्राप्तेः सिद्धत्वात् । 'एवम्' एतत्काले होमकरणफलरूपप्रजापतिप्राप्तेः सिद्धत्वात्, उपरितनकर्मानुष्ठानं निष्फलं स्यात् । तस्मादनुयाजान्ते स्रुग्व्यूहनात् प्राक् पशुहविर्होम इति केषाञ्चिन्मतम् ॥ १३ ॥

तद्दूषयन् सिद्धान्तयति—तद्धु तथेति । अत्र सूत्रम्—"यथान्यायं वोभयोः" ( का० श्रौ० सू० १४।४५ ) इति । 'उभयोः' वपाहविर्यागयोः यथान्यायं प्रकृतिवत् कर्त्तव्यमित्यर्थः । एतेषां पशूनामिति । तद्धितश्रुत्या

हविषा प्रचरेयुरेकाऽनुवाक्या भवत्येका याज्यैकदेवत्या हि प्रजापतय ऽइत्युपाᳪंशूक्त्वा च्छागानाᳪं हविषोऽनुब्रूहीति प्रजापतयऽइत्येवोपाᳪंशूक्त्वा च्छागानाᳪं हविः प्रस्थितं प्रेष्येति व्वषट्कृते जुहोति ॥ १४ ॥

इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् ॥ ९-१-३ ॥ ( १. ३. )

तं वै माध्यन्दिने सवनेऽभिषिञ्चति । माध्यन्दिने सवन ऽआजिं धावन्त्येष वै प्रजापतिर्य्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता ऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते तन्मध्यत ऽएवैतत्प्रजापतिमुज्जयति ॥ १ ॥

---

प्रचरन्ति । तदेवैतेषां हविषा प्रचरेयुः । एकानुवाक्या भवति । एका याज्या । एकदेवत्या हि प्रजापतयः—इत्युपांशूक्त्वा छागानां हविषोऽनुब्रूहीति । प्रजापतय इत्येवोपांशूक्त्वा छागानां हविः प्रस्थितं प्रेष्येति वषट्कृते जुहोति ॥ १४ ॥

तं वै माध्यन्दिने सवनेऽभिषिञ्चति । माध्यन्दिने सवनऽआजिं धावन्ति । एष वै प्रजापतिः—यः एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाताः । एतम्वेवाप्येतर्ह्यनु प्रजायन्ते । तन्मध्यत एवैतत् प्रजापतिमुज्जयति ॥ १ ॥

---

पृथक् पृथग्देवतासम्बन्धप्रतिपादकेन सप्तदशयागात्मकत्वात् प्रतियागं याज्यापुरोऽनुवाक्याभेदमाशङ्क्य देवतैक्यात् सह प्रदानमिति मन्वानो याज्यापुरोऽनुवाक्ययोरैक्यमाह—एकानुवाक्येति । यत एते पशवः प्रजापत्येकदेवत्यास्तस्माद् याज्यानुवाक्ययोरैक्यमित्यर्थः । अनुवाक्यापाठात् प्रागध्वर्युणा कर्त्तव्येऽनुवचनप्रैषे विशेषं विधत्ते—प्रजापतय इति । देवतावाचकं पदमुपांशूक्त्वा छागानामित्यादिकमुच्चैर्ब्रूयादित्यर्थः । हे मैत्रावरुण ! 'प्रजापतये देवतायै ' 'छागानां ' पशूनां ' हविषः ' अवदीयमानस्य अर्थाय ' अनुब्रूहीति ' अनुवचनं कुर्विति तस्यार्थः ॥

आश्रावणान्तरकर्त्तव्ये प्रैषेऽपि विशेषं विधत्ते—प्रजापतय इति । अत्रापि मैत्रावरुणः सम्बोध्यः । अथ होतुः कर्त्तव्यं दर्शयति—वषट्कृत इति । होत्रा याज्यान्ते वषट्कारे कृते सति ' जुहोति अध्वर्युरिति शेषः ॥ १४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे प्रथमाऽध्याये तृतीयं ब्राह्मणम् ॥ ( ९-१-३ ) ॥

अथ माध्यन्दिने सवने कर्त्तव्ये प्रयोगोऽभिधीयते—तत्र, यजमानाभिषेकमाजिधावनं च प्राधान्येन विधत्ते—तं वै माध्यन्दिन इति । अभिषेकाजिधावनयोः स्वरूपमुत्तरत्र विशदीभविष्यति । एष वा इति । ' य एष यज्ञः ' सवनत्रयात्मना ' तायते ' विस्तार्यते, ' एषः ' एव खलु सः ' प्रजापतिः ', ' यस्मात् ' ' इमाः प्रजाः ' मनुष्याद्या उत्पन्नाः । ' एतर्हि ' इदानीम् ' अपि ' ' एतम्वेव ' यज्ञात्मकं प्रजापतिम् ' अनु ' लक्ष्य, प्रजा उत्पद्यन्ते । ' तत् ' तेन माध्यन्दिने सवने अभिषेकेण आजिधावनेन च यज्ञमध्ये एव तं ' प्रजापतिं ' जितवान् भवतीति ॥ १ ॥

( त्यु ) अगृहीते माहेन्द्रे । ( न्द्रुऽ ) एष वाऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यꣳ शस्त्रमिन्द्रो वै यजमानस्तदेनꣳ स्वऽएवायतने ऽभिषिञ्चति तस्मादगृहीते माहेन्द्रे ॥ २ ॥

( न्द्रेऽथ ) अथ रथमुपावहरति । ( तीन्द्र ) इन्द्रस्य वज्रोऽसीति वज्रो वै रथ ऽइन्द्रो वै यजमानस्तस्मादाहेन्द्रस्य वज्रोऽसीति वाजसा इति वाजसा हि रथस्त्वयाऽयं वाजꣳ सेदित्यन्नं वै वाजस्त्वयाऽयमन्नमुज्जयत्वित्येवैतदाह ॥ ३ ॥

---

अगृहीते माहेन्द्रे । एष वाऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रः । अप्यस्यैतन्निष्केवल्यमेव स्तोत्रम्, निष्केवल्यं शस्त्रम् । इन्द्रो वै यजमानः । तदेनं स्वऽएवायतनेऽभिषिञ्चति । तस्मादगृहीते माहेन्द्रे ॥ २ ॥

अथ रथमुपावहरति—"इन्द्रस्य वज्रोऽसि"—इति । वज्रो वै रथः । इन्द्रो वै यजमानः तस्मादाह—इन्द्रस्य वज्रोऽसीति । "वाजसा"—इति । वाजसा हि रथः । "त्वयाऽयं वाजꣳ सेत्"—अन्नं वै वाजः । त्वयाऽयमन्नमुज्जयत्वित्येवैतदाह ॥ ३ ॥

---

तत्र कालं विधत्ते—अगृहीत इति । महेन्द्रदेवत्ये ग्रहे 'अगृहीते' माहेन्द्रग्रहात् पूर्वमित्यर्थः । अत्र सूत्रम्—"मरुत्वतीयान्त इन्द्रस्य वज्र इति रथावहरणम्"—( का. श्रौ. सू. १४ । ९७ ) इति । "एष वा इन्द्रस्य निष्केवल्यः"—( श. प. ५ । १ । ३ । ४ । मा. ) इत्यादिकं वाक्यं पूर्ववद् व्याख्येयम् । स्व एवायतन इति । यजमानस्येन्द्रतादात्म्यादिन्द्रस्य यदसाधारणं माहेन्द्रग्रहादिलक्षणं स्थानम्, तद् यजमानस्यापि स्वकीयं भवतीति स्व-शब्दस्याभिप्रायः ॥ २ ॥

पूर्वं रथवाहने काष्ठविशेषे स्थापितम्, आजिधावनाय सज्जीकर्त्तुं तस्य रथस्य तस्मात् काष्ठादवहरणं समन्त्रकं विधत्ते—अथ रथमिति । 'उपावहरति' ऊर्ध्वप्रदेशादवतारयेत् । मन्त्रस्यायमर्थः;—हे रथ ! त्वम् 'इन्द्रस्य; वज्रोऽसि' । वज्र एव हि स्फ्यरथयूपभेदेन त्रिधा विभक्तः; "इन्द्रो वृत्राय वज्रं प्राहरत्, स त्रेधा व्यभवत् स्फ्यस्तृतीयं, रथस्तृतीयं, यूपस्तृतीयम्"—( तै. सं. ५ । २ । ६ । १. २. ) इति श्रुतेः । 'वाजसाः' वाजमन्नं सनोति ददातीति वाजसाः, अन्नदाता च भवसि । अतः 'अयं' यजमानः 'त्वया' वज्रभूतेन 'वाजम्' 'अन्नं' 'सेत्' सिनोतेः सेधतेर्वा रूपम्, सिनुयात् बध्नीयात्, साधयतु वेति । तं मन्त्रं भागशोऽनूद्य व्याचष्टे-वज्रो वा इति । 'वै'—शब्दः सर्वतः प्रसिद्धिद्योतनार्थः । श्रुतिस्तूदाहृता । मन्त्रव्याख्यानेनैव गतार्थमन्यत् ॥ ३ ॥

---

१—विमुच्य सयंतृकः रथवाहणे करोत्यनस्तत्कर्म शालाया दक्षिणतः । का. श्रौ. सू. १५ । १७९ । २—'भेदात्'—इ. क्र. पा. ।

तं धूर्गृहीतमन्तर्व्वेद्यभ्युववर्तयति । व्वाजस्य नु प्रसवे मातरं महीमित्यन्नं वै व्वाजोऽन्नस्य नु प्रसवे मातरं महीमित्येवैतदाहादितिं नाम व्वचसा करामह ऽइतीयं वै पृथिव्यदितिस्तस्मादाहादितिं नाम व्वचसा करामह ऽइति यस्यामिदं व्विश्वं भुवनमाविवेशेत्यस्याᳬं हीदᳬं सर्वं भुवनमाविष्टं तस्यां नो देवः सविता धर्म साविषदिति तस्यां नो देवः सविता यजमानᳬं सुवतामित्येवैतदाह ॥ ४ ॥

( ह्रा ) अथाश्वानद्भिरभ्युक्षति । स्नपनायाभ्यवनीयमानान्त्स्नपितान्वोदानीतानद्भ्यो ह वाऽअग्रेऽश्वः सम्बभूव सोऽद्भ्यः सम्भवन्न सर्व्वः समभवदसर्व्वो हि वै समभवत्तस्मान्न सर्वैः पद्भिः प्रतितिष्ठत्येकैकमेव पादमुदच्य तिष्ठति तद्यदेवास्यात्राप्स्वहीयत तेनैवैनमेतत्समर्द्धयति कृत्स्नं

---

तं धूर्गृहीतमन्तर्वेद्यभ्यववर्तयति—"वाजस्य नु प्रसवे मातरं महीम्"-इति । अन्नं वै वाजः । अन्नस्य नु प्रसवे मातरं महीम्–इत्येवैतदाह । "अदितिं नाम वचसा करामहे"–इति । इयं वै पृथिव्यदितिः । तस्मादाह–आदितिं नाम वचसा करामहऽइति । "यस्यामिदं विश्वं भुवनमाविवेश"–इति । अस्यां हीदं सर्वं भुवनमाविष्टम् । "तस्यां नो देवः सविता धर्म साविषत्"–( वा० सं० ९ । ५ ) इति । तस्यां नो देवः सविता यजमानं सुवतामित्येवैतदाह ॥ ४ ॥

अथाश्वानद्भिरभ्युक्षति–स्नपनायाभ्यवनीयमानान्, स्नपितान् वोदानीतान् । अद्भ्यो ह वाऽअग्रेऽश्वः सम्बभूव । सोऽद्भ्यः समभवन्न सर्वः समभवत् । असर्वो हि वै समभवत् । तस्मान्न सर्वैः पद्भिः

---

धूर्गृहीतस्य रथस्य वेदिमध्येऽभ्यावर्त्तनं समन्त्रकं विधत्ते–तं धूर्गृहीतमिति । धूरिति अश्वबन्धनस्थानं युगम्; 'अन्तर्वेदि' सौमिकवेदिमध्ये प्रादक्षिण्येनानयेदित्यर्थः । अत्र सूत्रम्–"दक्षिणेन चात्वालमावर्त्तयति वाजस्येति"–( का. श्रौ. सू. १४ । ९८ ) इति । "धूर्गृहीतमिति" मन्त्रस्यार्थः;–'वाजस्य' अन्नस्य 'प्रसवे' प्रेरणे अनुज्ञानविषये 'करामहे'–करवामहै इति सम्बन्धः । 'मातरम्' अन्नस्य निर्मात्रीं, 'महीं' वेदिरूपां पृथिवीम्; 'अदितिं नाम' अखण्डनीयामेव 'वचसा' वेदवाक्येन मन्त्रेण 'करामहे' अन्नप्रदात्रीं करवामहै 'इति' । 'यस्यां' पृथिव्याम् 'इदं विश्वं भुवनं' सर्वं भूतजातम् 'आविवेश' 'आविष्टम्' 'तस्यां' पृथिव्यामेव 'सविता' प्रसविता 'देवः' 'नः' अस्माकं 'धर्म' धरणमनुष्ठानं 'साविषत्' अनुजानातु । मन्त्रप्रतिपाद्यमनूद्य व्याचष्टे–अन्नं वै वाज इति । व्याख्यातम् ( श. प. ५ । १ । ३ । ३ । मा. ) ॥ ४ ॥

अथाश्वानां प्रोक्षणं तत्कालञ्च विधत्ते–अथाश्वानिति । 'स्नपनाय' प्रक्षालनाय जलाशयम् 'अभि' लक्ष्य 'नीयमानान्' 'स्नपितान्' 'कृतस्नानान्' 'उदानीतान्' आगतान् वा प्रोक्षेत् । स्नपनार्थं गम-

करोति तस्मादश्वानद्भिरभ्युक्षति स्नपनायाभ्यवनीयमानान्त्स्नपितान्वोदानीतान् ॥ ५ ॥

( न्सो ) सोऽभ्युक्षति । ( त्यु ) अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवत वाजिन ऽइत्यनेनापि देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान्वाजसास्तेनायं वाजꣳ सेदित्यन्नं वै वाजस्तेनायमन्नमुज्जयत्वित्येवैतदाह ॥ ६ ॥

( ह्रा ) अथ रथं युनक्ति । स दक्षिणायुग्यमेवाग्रे युनक्ति सव्यायुग्यं वाऽग्रे मानुषेऽथैवं देवत्रा ॥ ७ ॥

---

प्रातितिष्ठति । एकैकमेव पादमुदच्य तिष्ठति । तद्यदेवास्यात्राप्स्वहीयत-तेनैवैनमेतत्समर्द्धयाति । कृत्स्नं करोति । तस्मादश्वानद्भिरभ्युक्षति स्नपनायाभ्यवनीयमानान्, स्नापितान् वोदानीतान् ॥ ५ ॥

सोऽभ्युक्षाति--"अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशास्तिष्वश्वा भवत वाजिनः" इति । अनेनापि-" देवीरापो यो व ऊर्मिः प्रतूर्तिः ककुन्मान् वाजसाः, तेनायं वाजं सेत्-" ( वा. सं. ९ । ६ ) इति । अन्नं वै वाजः तेनायमन्नमुज्जयतु--इत्येवैतदाह ॥ ६ ॥

अथ रथं युनक्ति । स दक्षिणायुग्यमेवाग्रे युनक्ति । सव्यायुग्यं वाऽग्रे मानुषे । अथैवं देवत्रा ॥ ७ ॥

---

काले तदुत्तरकाले वा प्रोक्षणमित्यर्थः ( का. श्रौ. सू. १४ । ५९ ) । अद्भिः क्रियमाणं प्रोक्षणं प्रशंसति-अद्भ्यो ह वा इति । अद्भयोऽश्वोत्पत्तिः प्रसिद्धा "अप्सुयोनिर्वा अश्वः"-( श. प. १३ । २ । २ । १९ ) इति श्रुतेः । यस्मादप्सु प्रतिष्ठितोऽश्वः, तस्मादिदानीं भूमावश्वो न सर्वैः पादैरवतिष्ठते । तदेवाह-एकैकमिति । 'उदच्य' उद्यम्येत्यर्थः । तद्यदेवेति ।[1] 'तत्' तत्र आसु कारणभूतासु 'अप्सु' यदेवाङ्गम् 'अहीयत हीनमवशिष्टमभूत, 'तेन' अङ्गेन 'एनम्' अश्वम् 'एतत्' एतेन प्रोक्षणेन कृत्स्नं सर्वपादयुक्तं 'करोति' कृतवान् भवतीत्यर्थः ॥ ५ ॥

प्रोक्षणविधिमनूद्य मन्त्रद्वयं विधत्ते-सोऽभ्युक्षतीति । तत्र "अप्स्वन्तर्"-इति मन्त्रेण, "देवीरापः"-इत्यनेनापि प्रोक्षणं कुर्यात् । 'अपि' शब्दः समुच्चयवाची । मन्त्रद्वयेन कुर्यात् । अत्र सूत्रम्-"अश्वान् प्रोक्षत्यपोऽवसा नीयमानान् स्नातान् वाऽऽगतानप्स्वन्तरिति, देवीराप इति वा, समुच्चयो वा"-(का. श्रौ. सू. १४ । ५९-६० ) इति । मन्त्रयोरयमर्थः;-'अप्सु' मध्ये 'अमृतम्' अपमृत्युनिवारकं रोगनिवारकं च वीर्यं वर्त्तते, हे 'वाजिनः ।' अन्नवन्तः 'अश्वाः' 'अपां' सम्बन्धिषु 'प्रशस्तिषु' अमृतत्वेन भेषजत्व सदृशीष्वन्यास्वपि गुणवत्वप्रशंसासु प्रशस्तप्रदेशेषु वा यूयं सम्बद्धा भवतेति । 'देवीः' द्योतमानाः, हे 'आपः!' 'वः' युष्माकं 'यः' 'ऊर्मिः' जलसङ्घः 'प्रतूर्त्तिः' प्रतरणशीलः, निमज्जनेन प्रसक्तस्योपद्रवस्य प्रकर्षेण हिंसकः, 'ककुन्मान्' ककुच्छब्देन वृषभस्कन्धे उन्नतप्रदेश उच्यते, तत्समानैरुदकनिचयैस्तद्वान्, 'वाजसाः' अन्नस्य संसक्तः, य एवंविधः तेन 'अयम्' अश्वः प्रोक्षितः सन् 'वाजम्' अन्नं 'सेत्' सिनुयात्, साधयतुवेति । तत्र द्वितीयमन्त्रगतं 'वाजं सेत्'-इति पदं व्याचष्टे-अन्नं वा इति ॥ ६ ॥

अथाश्वेन रथयोजनं विधत्ते--अथ रथमिति । तत्र, 'अग्रे' प्रथमं 'दक्षिणा' दक्षिणतः 'युग्यं' युगस्य वोढारम्[2]

---

१-'तद्यदेवेत्यादि' इति क० पुस्तके विशेषः । २-दक्षिणं युनक्ति वातो वेति । । का. श्रौ. सू. १४ । ६१ ।

स युनक्ति । वातो वा मनो वेति न वै वातात्किञ्चनाशीयोऽस्ति न मनसः किञ्चनाशीयोऽस्ति तस्मादाह वातो वा मनो वेति गन्धर्वाः सप्तविंशतिः ॥ ते ऽअग्रेऽश्वमयुञ्जन्निति गन्धर्वा ह वा ऽअग्रेऽश्वं युयुजुस्तद्येऽग्रे ऽश्वमयुजंस्ते त्वा युञ्जन्त्वित्येवैतदाह तेऽअस्मिञ्जवमादधुरिति तद्येऽस्मिञ्जवमादधुस्ते त्वयि जवमादधत्वित्येवैतदाह ॥ ८ ॥

( हा ) अथ सव्यायुग्यं युनक्ति । वातरंहा भव वाजिन्युज्यमान ऽइति वातजवो भव वाजिन्युज्यमान ऽइत्येवैतदाहेन्द्रस्येव दक्षिणः श्रियैधीति यथेन्द्रस्य दक्षिणः श्रियैवं यजमानस्य श्रियैधीत्येवैतदाह

---

स युनक्ति–"वातो वा मनो वा"–इति । न वै वातात् किञ्चनाशीयोऽस्ति । न मनसः किञ्चनाशीयोऽस्ति । तस्मादाह–"वातो वा मनो वा" इति । "गन्धर्वाः सप्तविंशतिः । तेऽग्रेऽश्वमयुञ्जन्" इति । गन्धर्वा ह वा अग्रेऽश्वं युयुजुः । तद्येऽग्रेऽश्वमयुजन् ते त्वा युञ्जन्तु इत्येवैतदाह । "ते अस्मिन् जवमादधुः"–( वा० सं० ९ । ७ ) इति । तद् येऽस्मिन् जवमादधुः ते त्वयि जवमादधतु इत्येवैतदाह ॥ ८ ॥

अथ सव्यायुग्यं युनक्ति–" वातरंहा भव वाजिन् युज्यमानः "–इति । वातजवो भव वाजिन् युज्यमानः–इत्येवैतदाह । "इन्द्रस्येव दक्षिणः श्रियैधि "–इति । यथेन्द्रस्य दक्षिणः श्रिया–एवं यजमानस्य श्रियैधि–इत्येवैतदाह । " युञ्जन्तु त्वा मरुतो विश्ववेदसः "–इति ।

---

अश्वं युञ्ज्यात् । सव्या युग्यमिति । अस्यायमर्थः–लोके ' मानुषे ' मनुष्यसम्बन्धिनि कर्मणि ' सव्या युग्यं ' सव्यभागयोजनीयमेवाश्वं प्रथमं युञ्जन्ति । दीर्घश्छान्दसः । ( पा. सू. ६।३।१३७ ) । अत्र तु दक्षिणस्य प्रथमं योजनम्, ' एवं देवत्रा ' देवयोग्यमेव कर्म कृतवान् भवतीति । 'देवत्रा' देवशब्दाद् देयार्थे सप्तम्यर्थे वा त्राप्रत्ययः ॥ ७ ॥

योजनमनूद्य मन्त्रं विधत्ते–स युनक्ति वातोवेति । 'वा' शब्दः समुच्चयार्थः । वायुश्च मनश्च सप्तविंशति सङ्ख्याकाः ' गन्धर्वाः' नक्षत्राणीत्यर्थः । ' ते ' सर्वे ' अग्रे ' असमत्तः पुरा रथे ' अश्वं ' योजितवन्तः । ' ते ' पुनः 'अस्मिन् ' अश्वे जवं वेगम् ' आदधुः ' स्थापितवन्तः । लोडर्थे लिट् । अस्मिन्नश्वे त्वयि जवमादधत्विति व्याचष्टे–न वै वातादिति । ' वाताद्' वायोः 'मनसः' च ' आशीयः ' आशुतरं किञ्चिदपि वस्तु अतिवेगवत् ' न अस्ति ' । उत्तरवाक्यं स्पष्टम् ॥ ८ ॥

अथ सव्यस्याश्वस्य रथे योजनं समन्त्रकं विधत्ते–अथ सव्यायुग्यमिति । 'सव्यायुग्यं' सव्ये भागे योजनीयम् । अच्–प्रत्ययश्छान्दसो द्रष्टव्यः । हे 'वाजिन् !' अश्व ! युज्यमानस्त्वं ' वातरंहाः ' वायुवेगो 'भव' ।

---

१–' अत्र च ' इति क. । २–' प्रथमयोजनेन ' इति क. पा. । ३–उत्तरं वातर२हा इति । का. श्रौ. सू. १४ । ६२ ।

युञ्जन्तु त्वा मरुतो विश्ववेदस इति युञ्जन्तु त्वा देवा इत्येवैतदाहा ते त्वष्टा पत्सु जवं दधात्विति नात्र तिरोहितमिवास्त्यथ दक्षिणाप्रष्टिं युनक्ति सव्याप्रष्टिं वा ऽअग्रे मानुषेऽथैवं देवत्रा ॥ ९ ॥

स युनक्ति । जवो यस्ते वाजिन्निहितो गुहा यः श्येने परीत्तोऽअचरच्च वात ऽइति जवो यस्ते वाजिन्नप्यन्यत्रापनिहितस्तेन नऽइमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह तेन नो वाजिन्बलवान्बलेन वाजजिच्च भव समने च पारयिष्णुरित्यन्नं वै वाजोऽन्नजिच्च न ऽएध्यस्मिंश्च नो यज्ञे देवसमनऽइमं यज्ञं प्रजापतिमुज्जयेत्येवैतदाह ॥ १० ॥

---

युञ्जन्तु त्वा देवा इत्येवैतदाह । "आ ते त्वष्टा पत्सु जवं दधातु"–( वा० सं० ९ । ८ ) इति नात्र तिरोहितमिवास्ति । अथ दक्षिणाप्रष्टिं युनक्ति । सव्याप्रष्टिं वाऽअग्रे मानुषे । अथैवं देवत्रा ॥९॥

स युनक्ति–" जवो यस्ते वाजिन् निहितो गुहा, यः श्येने परीत्तो अचरच्च वाते "– इति । जवो यस्ते वाजिन्नप्यन्यत्रापनिहितः तेन न इमं यज्ञं प्रजापतिमुज्जय–इत्येवैतदाह । " तेन नो वाजिन् बलवान् बलेन वाजजिच्च भव, समने च पारयिष्णुः "–( वा० सं० ९ । ९ ) इति । अन्नं वै वाजः, अन्नजिच्च न एधि । अस्मिंश्च नो यज्ञे देवसमनऽइमं यज्ञं प्रजापतिमुज्जय–इत्येवैतदाह ॥ १० ॥

---

' इन्द्रस्य ' अश्वः ' इव ' ' दक्षिणः ' प्रवृद्धः पुष्टाङ्गः त्वं ' श्रिया ' शोभया युक्तः ' एधि ' भव यद्वा, श्री-शब्दात् परस्य सोर्यादेशः । ' यथेन्द्रस्य ' अश्वस्य श्रीर्भवति, ' एवं यजमानस्य ' श्रीर्भव । 'विश्ववेदसः' सर्वज्ञाः ' मरुतो ' देवाः ' त्वा ' त्वाम् अश्वं ' युञ्जन्तु ' । ' त्वष्टा ' ' ते ' तव रथे युक्तस्य ' पत्सु ' पादेषु ' जवं ' वेगं ' दधातु ' ' इति ' । नात्र तिरोहितमिति । मन्त्रगतचतुर्थपादे अनवबुद्धोऽर्थो नास्तीत्यर्थः ।

तृतीयस्याश्वस्य योजनं विधत्ते–अथ दक्षिणेति । प्रष्टिर्नाम पादत्रयोपेतो भोजनपात्रादेराधारः, तद्वत् ( ऋ० सं० १ । २९ । ६ ) ( ऋ० सं० १ । १०० । १७ ) (अथ. सं. १० । ४ । ९ । ८) अश्वैस्त्रिभिर्युक्तं रथं कुर्यात्[1] । अत्र पूर्वमश्वद्वयस्य युक्तत्वात् तृतीयस्य प्रष्टित्वमुक्तम् । अत एवापस्तम्बः–" प्रष्टिवाहितं रथं युनक्ति " इति । तृतीयेनाश्वेन रथं युञ्ज्यादित्यर्थः । तं 'दक्षिणा' दक्षिणतः प्रथमं युञ्ज्यात् । सव्याप्रष्टिमित्यादि, पूर्ववद् व्याख्येयम् ॥ ९ ॥

योजनमनूद्य मन्त्रं विधत्ते–स युनक्ति जवो य इति । हे 'वाजिन्'! ' ते ' तव हृदये 'यः' जवः ' वेगः ' गुहा ' गुहायां गूढप्रदेशे ' निहितः ' स्थापितः, ' श्येने ' पक्षिणि च यो जवः ' परीत्तः ' व्यवस्थितः, यो वेगो ' वाते ' वायौ 'अचरत्' तिष्ठति । हे 'वाजिन्!' तेन बलेन बलवान् त्वं 'नः' अस्माकं बलेन 'वाज-

---

१–' भोजनपात्रादिकाधारः ' इति क. । ' भोजनपात्रादिवाधारः ' इति च क० । ' प्रष्टिः ' ' तिवई ' ' आडनी ' इति । महाराष्ट्रेषु ख्यातः । ' तिपाई ' इति प्राच्येषु ख्यातः । २–दक्षिणा प्रष्टिं जवो यस्त इति । का० श्रौ० सू० १४ । ६३ ।

ते वा ऽएत ऽएव त्रयो युक्ता भवन्ति । त्रिवृद्धि देवानां तद्धि देवत्राऽधिप्रष्टियुग एव चतुर्थोऽन्वेति मानुषो हि स तं यत्र दास्यन्भवति तच्चतुर्थमुपयुज्य ददाति तस्मादपीतरस्मिन्यज्ञ ऽएत ऽएव त्रयो युक्ता भवन्ति त्रिवृद्धि देवानां तद्धि देवत्राऽधिप्रष्टियुग एव चतुर्थोऽन्वेति मानुषो हि स तं यत्र दास्यन्भवति तच्चतुर्थमुपयुज्य ददाति ॥ ११ ॥

(त्यु) अथ बार्हस्पत्यं चरुं नैवारꣳ सप्तदशशरावं निर्वपति । ( त्यु ) अन्नं वा ऽएष उज्जयति यो वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तदेवास्मा ऽएतत्करोति ॥ १२ ॥

---

ते वाऽएतऽएव त्रयो युक्ता भवन्ति । त्रिवृद्धि देवानाम् । तद्धि देवत्रा । अधिप्रष्टियुग एव चतुर्थोऽन्वेति । मानुषो हि सः । तं यत्र दास्यन् भवति–तच्चतुर्थमुपयुज्य ददाति । तस्मादपीतरस्मिन्–यज्ञऽएतऽएव त्रयो युक्ता भवन्ति । त्रिवृद्धि देवानाम् । तद्धि देवत्रा । अधिप्रष्टियुग एव चतुर्थोऽन्वेति । मानुषो हि सः । तं यत्र दास्यन् भवति–तच्चतुर्थमुपयुज्य ददाति ॥ ११ ॥

अथ बार्हस्पत्यं चरुं नैवारं सप्तदशशरावं निर्वपति । अन्नं वाऽ एष उज्जयति–यो वाजपेयेन यजते । अन्नपेयं ह वै नामैतद्–यद्वाजपेयम् । तद्यदेवैतदन्नमुदजैषीत्–तदेवास्माऽएतत् करोति ॥ १२ ॥

---

जित् भव ' अन्नस्य जेता दाता भव । ' समने ' यज्ञरूपे सङ्ग्रामे ' पारयिष्णुः ' पारयिता पारगमनशीलश्च भवेति ॥ तमिमं मन्त्रं व्याचष्टे–जवो यस्त इति । अप्यन्यत्रापनिहित इति । ' अन्यत्र ' गुहाशयेत्याद्युपलक्ष्यते, प्रदेशान्तरे ' अपनिहितः ' निक्षिप्तः । पूर्वार्द्धस्य तात्पर्यमाह–तेन न इति । यज्ञप्रजापत्योस्तादात्म्यं युक्तम् । 'समने पारयिष्णुः'–इत्यस्याभिप्रायमाह–अस्मिंश्चनो यज्ञ इति । ' देवसमने ' समनमिति सङ्ग्रामनाम ( निघ० २ । १७ । १६ ) । देवसमाज लक्षणेऽस्मिन् यज्ञे । गतार्थमन्यत् ॥ १० ॥

उक्तानामश्वानां त्रित्वसङ्ख्यामनूद्य प्रशंसति–ते वा एत इति । त्रिवृत्त्वं त्रिरावृत्तिः । दैवे कर्मणि प्रोक्षणादौ प्रसिद्धेति ' हि '–शब्दस्यार्थः । चतुर्थस्याश्वस्यानुगमनं विधत्ते–अधिप्रष्टीति । तृतीयस्याश्वस्य युगप्रदेशे । ' अधिः ' सप्तम्यर्थानुवादी । मन्त्रेण युक्तः सन्नेवानुगच्छेत् । यस्मात् स चतुर्थो ' मानुषः ' मनुष्यसम्बन्धी मानुषे हि कर्मणि चतुर्णां वाहानां योजनं दृष्टम् । अत्र मानुषरूपव्युदासाय तस्यायोजनमिति । अत्र सूत्रम्–" अयुक्तश्चतुर्थोऽनुगच्छति "–( का. श्रौ. सू. १४ । ६४ ) इति ॥ यदैष चतुर्युक्तो रथोऽध्वर्यवे दीयते, तस्मिन् प्रदानसमये चतुर्थस्य रथे योजनं दर्शयति–तं यत्र दास्यन्निति । तदुक्तं सूत्रे–"चतुर्थं युक्त्वाऽध्वर्यवे ददाति "–( का. श्रौ. सू. १४ । ९० ) इति । उक्तमर्थमन्यत्राप्यतिदिशति–तस्मादपीति । ' इतरस्मिन् ' राजसूयादावित्यर्थः । शिष्टं गतार्थम् ॥ ११ ॥

विधत्ते–अथ बार्हस्पत्यमिति । अत्र द्रव्यदेवताविशिष्टचरुविधिः । सप्तदशशरावमिति । सप्तदशशराव-

(त्यु) अथ युद्बार्हस्पत्यो भवति। बृहस्पतिर्ह्येतमग्रऽउदजयत्तस्माद्बार्हस्पत्यो भवति ॥ १३ ॥

(त्यु) अथ युन्नैवारो भवति। ब्रह्म वै बृहस्पतिरेते वै ब्रह्मणा पच्यन्ते युन्नीवारास्तस्मान्नैवारो भवति सप्तदशशरावो भवति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥ १४ ॥

तमश्वानवघ्रापयति। वाजिन इति वाजिनो ह्यश्वास्तस्मादाह वाजिन इति वाजजित इत्यन्नं वै वाजोऽन्नजित ऽइत्येवैतदाह वाजꣳ सरिष्यन्तऽइत्याजिꣳ हि सरिष्यन्तो भवन्ति बृहस्पतेर्भागमवजिघ्रतेति बृहस्पतेर्ह्येष भागो भवति तस्मादाह बृहस्पतेर्भागमवजिघ्रतेति तद्यदश्वानवघ्रापयतीमुज्जयानीति तस्माद्वाऽश्वानवघ्रापयति ॥ १५ ॥

इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् ॥ ५–१–४ ॥ (१. ४)

---

अथ यद्बार्हस्पत्यो भवति। बृहस्पतिर्ह्येतमग्र उदजयत्—तस्माद्बार्हस्पत्यो भवति ॥ १३ ॥

अथ यन्नैवारो भवति। ब्रह्म वै बृहस्पतिः। एते वै ब्रह्मणा पच्यन्ते यन्नीवाराः। तस्मान्नैवारो भवति। सप्तदशशरावो भवति। सप्तदशो वै प्रजापतिः। तत् प्रजापतिमुज्जयति ॥ १४ ॥

तमश्वानवघ्रापयति—"वाजिनः"—इति। वाजिनो ह्यश्वाः। तस्मादाह—वाजिन इति। "वाजजितः"—इति। अन्नं वै वाजः। अन्नजित—इत्येवैतदाह। "वाजं सरिष्यन्तः"—इति। आजिं हि सरिष्यन्तो भवन्ति। "बृहस्पतेर्भागमवजिघ्रत"—(वा. सं. ९।९) इति। बृहस्पतेर्ह्येष

---

परिमितम्। मुष्टिप्रतिनिधित्वेन शरावस्य तत्सङ्ख्यायाश्च पृथग्विधानात् प्रकृतिगतमुष्टितत्संख्यानिवृत्तिः। तथा च कात्यायनः—"माध्यन्दिनीयैः सह नैवारचरुर्बार्हस्पत्यः सप्तदशशरावः, संख्यामुष्टिनिवृत्तिः"—(का. श्रौ. सू. १४।४९) इति। चरुविधिं प्रशंसति—अन्नं वा एष इति। तद्यदेवेत्यादि। तत्र वाजपेये 'यत्' 'एतत्' अन्नम् 'उदजैषीत्', पुरा बृहस्पतिरनेन क्रतुना यदेतत्फलभूतमन्नं साधितवान्, 'तदेव' अन्नम् 'अस्मै' बृहस्पतये 'एतत्' एतेन चरुणा 'करोति' ॥ १२ ॥

देवताशरावसंख्याविधित्रयमनूद्य प्रशंसति—अथ यादित्यादिना। पुरा बृहस्पतिः 'एतं' चरुं साधितवान्, अतोऽस्य चरोर्बृहस्पतिर्देवतेति युक्तम् ॥ १३ ॥

अथ यन्नैवार इति। 'नीवारा' इति यत्, 'एते' 'ब्रह्मणा' एव 'पच्यन्ते' न तु कृष्टक्षेत्रोत्पशाल्यादिवत्, अतः कालवशात् पक्वा नीवारा ब्रह्मरूपस्य बृहस्पतेर्योग्या इत्यर्थः ॥ १४ ॥

विधत्ते—तमश्वानवघ्रापयतीति। 'तं' चरुम् 'अश्वान्' रथे युक्तान् अवघ्रापयेत्। "घ्रा गन्धोपा-

---

१—बार्हस्पत्यमेनानाघ्रापयति वाजिन इति। का. श्रौ. सू. १४।६५

तद्यदाजिं धावन्ति । ( न्ती ) इममेवैतेन लोकमुज्जयत्यथ यद्ब्रह्मा रथचक्रे साम गायति नाभिदघ्न ऽउद्धिते ऽन्तरिक्षलोकमेवैतेनोज्जयत्यथ यद्यूपꣳ रोहति देवलोकमेवैतेनोज्जयति तस्माद्वा ऽएतत्त्रयं क्रियते ॥ १ ॥

स ब्रह्मा रथचक्रमधिरोहति । नाभिदघ्न ऽउद्धितं देवस्याहꣳ सवितुः सवे सत्यसवसो बृहस्पतेरुत्तमं नाकꣳ रुहेयमिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः ॥ २ ॥

---

भागो भवति । तस्मादाह बृहस्पतेर्भागमवजिघ्रतेति । तद् यदश्वानवघ्रापयति–इममुज्जयानीति । तस्माद्वाऽअश्वानवघ्रापयति ॥ १९ ॥

तद् यदाजिं धावन्ति–इममेवैतेन लोकमुज्जयति ! अथ यद् ब्रह्मा रथचक्रे साम गायति–नाभिदघ्नऽउद्धिते–अन्तरिक्षलोकमेवैतेनोज्जयति । अथ यद् यूपं रोहति–देवलोकमेवैतेनोज्जयति । तस्माद्वाऽएतत्त्रयं क्रियते ॥ १ ॥

स ब्रह्मा रथचक्रमाधिरोहति–नाभिदघ्नऽउद्धितम्–"देवस्याहं सवितुः सवे सत्यसवसो बृहस्पतेरुत्तमं नाकं रुहेयम्"–इति। यदि ब्राह्मणो यजते। ब्रह्म हि बृहस्पतिः। ब्रह्म हि ब्राह्मणः॥२॥

---

दाने" ( धा० पा० भ्वा० प० ९२६ )। तस्य मन्त्रमाह–वाजिन इति। हे 'वाजिनः!' अश्वाः! 'वाजजितः' अन्नस्य जेतारः, 'वाजः' अन्नम् अन्नसाधनमाजिं प्रति सरिष्यन्तो यूयम्, 'बृहस्पतेर्भागम्' 'अवजिघ्रत' अवाङ्मुखा गन्धोपादानं कुरुतेति तस्यार्थः । तद्व्याचष्टे–वाजिनो ह्यश्वा इति । आजिं हि सरिष्यन्त इति। साध्यभूतान्नवाची वाजशब्दः उपचारात् तत्साधने आजौ वर्त्तत इत्यर्थः । अवघ्रापणस्य प्रयोजनमाह–तद्यदश्वानिति। इमं यज्ञं साधयामीति बुद्ध्या 'अश्वान्' अवघ्रापयेत् ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे प्रथमाध्याये चतुर्थं ब्राह्मणम् ॥ ५–१–४ ॥

विहितमाजिधावनमनूद्य प्रशंसति–तद्यदिति । आजिधावनेन भूलोकं जितवान् भवतीत्यर्थः । अथ सामगानं यूपारोहणं च सार्थवादं विधत्ते–अथ यद् ब्रह्मेत्यादि । 'ब्रह्मा' नामर्त्विक् 'नाभिदघ्ने' नाभिमात्रे 'उद्धिते' उन्नते 'रथचक्रे' स्थित्वा 'साम' गायेत् । 'एतेन' भूम्यूर्ध्वप्रदेशयोर्मध्यदेशे गीयमानेन साम्ना 'अन्तरिक्षलोकं' जितवान् भवति । चक्रादुन्नतस्य सप्तदशारत्निपरिमितस्य यूपस्यारोहणेन तृतीयलोकमेव स्वाधीनं कृतवान् भवतीत्यर्थः ॥ १ ॥

ब्रह्मणो रथचक्रे गानं विहितम्, तदारोहणमन्तरेण न सम्भवतीति तदिदानीं विधत्ते–स ब्रह्मेति । तत्र वाजपेये द्वावधिकारिणौ, ब्राह्मणो राजन्यश्चेति; तत्र यजमानभेदेन मन्त्रभेदं विवक्षुः प्रथमं ब्राह्मणपक्षे मन्त्रं पठति–देवस्याहमिति । 'सत्यसवसः' सत्याभ्यनुज्ञानस्य 'सवितुः' सर्वेषां प्रसवितुर्देवस्य 'सवे' प्रसवे

---

१–देवस्याहमिति ब्रह्मा रथचक्रमारोहत्युत्करे नाभिमात्रे स्थाणौ स्थितम्। का० श्रौ० सू० १४।५।७।

( णोऽथ ) अथ युदि राजुन्यो युजते । देवुस्याहुᳬँ सवितुः सवे सत्यसवस ऽइन्द्रस्योत्तमं नाकᳪँ रुहेयमिति क्षत्रᳪँ हीन्द्रः क्षत्रᳬँ राजुन्यः ॥ ३॥

( त्रिः ) त्रिः सामाभिगायति । त्रिरभिगीयावरोहति देवुस्याहुᳬँ सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकमरुहमिति युदि ब्राह्मणो युजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः ॥ ४ ॥

(णोऽथ) अथ युदि राजुन्यो युजते । देवुस्याहुᳬँ सवितुः सवे सत्यप्रसवसऽइन्द्रस्योत्तमं नाकमरुहमिति क्षत्रᳪँ हीन्द्रः क्षत्रᳬँ राजुन्यः ॥ ५ ॥

---

अथ यदि राजन्यो यजते-" देवस्याहं सवितुः सवे सत्यसवस इन्द्रस्योत्तमं नाकं रुहेयम्"-इति । क्षत्रं हीन्द्रः । क्षत्रं राजन्यः ॥ ३ ॥

त्रिः सामाभिगायति । त्रिरभिगीयावरोहति-" देवस्याहं सवितुः सवे सत्यप्रसवसो बृहस्पतेरुत्तमं नाकमरुहम् "-इति । यदि ब्राह्मणो यजते । ब्रह्म हि बृहस्पतिः । ब्रह्म हि ब्राह्मणः ॥ ४ ॥

अथ यदि राजन्यो यजते-" देवस्याहं सवितुः सवे सत्यप्रसवस इन्द्रस्योत्तमं नाकमरुहम् "-( वा० सं० ९ । १० ) इति । क्षत्रं हीन्द्रः । क्षत्रं राजन्यः ॥ ५ ॥

---

अनुज्ञायां वर्त्तमानो हि ' बृहस्पतेः ' सम्बन्धिनः ' उत्तमम् ' उत्कृष्टं ' नाकं ' स्वर्गं ' रुहेयम् ' आरोहणं करवै । रुहेराशीर्लिङि, ' लिङ्याशिष्यङ् '-( पा. सू. ३ । १ । ८६ ) इत्यङ् । ब्रह्म हीति । देवानां मध्ये बृहस्पतिर्ब्राह्मणजातिः ॥ २ ॥

राजन्यपक्षेऽपि मन्त्रं पठति-अथ यदीति बृहस्पतेरित्यस्य स्थाने इन्द्रस्येति विशेषः । अर्थस्तु पूर्ववत् । क्षत्रं हीन्द्र इति । देवानां मध्ये इन्द्रः क्षत्रियजातिः ॥ ३ ॥

विहितस्य ब्रह्मकर्त्तृकस्य सामगानस्य त्रित्वसङ्ख्यां विधत्ते-त्रिः सामेति । ' त्रिः ' त्रिवारमित्यर्थः । "[1] देवस्य वयम् "-इति, " रुहेम "-इति च बहुवचनान्तः शाखान्तरीयो मन्त्रः । तथैव कात्यायनोऽपि सूत्रयामास-" देवस्य वयमिति, ब्रह्मा रथचक्रमारोहति " ( का. श्रौ. सू. १४ । ६७ ) इति । अत्र " अरुहम् "-इति, " रुहेयम् "-इति चं एकवचनान्तत्वेन संहितायामाम्नानात्तमनुसृत्यैव ब्राह्मणे विहितमित्यविरोधः ॥

प्रसङ्गाद्ब्रह्मणो रथावरोहणं विधत्ते-त्रिः सामाभिगायतीति । त्रिरभिगीयावरोहतीति । प्रयोगक्रमस्तु

---

१-देवस्य वयमित्यादि विहितमित्यविरोध इत्यंतं भाष्यं वाजसनेयिभिस्तदितरैरपि न विश्वसनीयम् । भगवतः कात्यायनमहर्षेः संहितां शतपथब्राह्मणं चानुसृत्यैव सूत्ररचनाशैलीशीलतया तादृगेव देवस्याहमिति ब्रह्मा रथचक्रमारोहतीति एकवचनांतसूत्रक्लृप्तिसत्त्वेऽपि तत्सूत्रस्य पितृभूतिकर्कप्रभृतिभाष्यकर्ता तथैव व्याख्यानसत्तायामपि केवलं स्वशाखीयमंत्रगतं बहुवचनमादृत्य परशाखीयार्षसूत्रस्य स्वकपोलकल्पनेनाक्षरसंधिं प्रेक्ष्य अन्यथाकरणं भाष्यकृतामतिसाहसम् ॥ तथैवाग्रे ब्रह्माऽवरोहति देवस्याहमिति इत्येवं वदता स्वयमेव कात्यायनस्य " देवस्याहमिति " एकवचनांतपाठघटितं सूत्रकरणं स्वीकृतमेव । अन्यत्र स्वयं देवस्य वयमिति बहुवचनांतं सूत्रयित्वा कातीयमेतत्सूत्रमिति च परस्परमसंबद्धं प्रलपन् सायनाचार्यस्तूद्भ्रांत एवेत्यलं दिक्प्रदर्शनेनेति ॥

( न्युँऽथ ) अथ सप्तदश दुन्दुभीननुवेद्यन्तᳪ सम्मिन्वन्ति । प्रतीच आग्नीध्रात्प्रजापतिं वाऽएष उज्जयति यो वाजपेयेन यजते व्वाग्वै प्रजापतिरेषा वै परमा व्वाग्या सप्तदशानां दुन्दुभीनां परमामेवैतद्वाचं परमं प्रजापतिमुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥ ६ ॥

( त्यु ) अथैतेषां दुन्दुभीनाम् । ( मे ) एकं यजुषाऽऽहन्ति तत्सर्वे यजुषाऽऽहता भवन्ति ॥ ७ ॥

---

अथ सप्तदश दुन्दुभीननुवेद्यन्तं सम्मिन्वन्ति प्रतीच आग्नीध्रात् । प्रजापतिं वाऽएष उज्जयति यो वाजपेयेन यजते । वाग्वै प्रजापतिः । एषा वै परमा वाग्-या सप्तदशानां दुन्दुभीनाम् । परमामेवैतद्वाचं परमं प्रजापतिमुज्जयति । सप्तदश भवन्ति । सप्तदशो वै प्रजापतिः । तत् प्रजापतिमुज्जयति ॥ ६ ॥

अथैतेषां दुन्दुभीनामेकं यजुषाऽऽहन्ति । तत् सर्वे यजुषाऽऽहता भवन्ति ॥ ७ ॥

---

सूत्रे दर्शितः–" ब्रह्मा त्रिः साम गायति, दुन्दुभीन् वादयति, एष स्य इति प्रत्यृचं जुहोति "–( का. श्रौ. सू. १४ । ७८-८० ) इत्युपक्रम्य "प्रदक्षिणं कृत्वाऽऽयन्ति, आगतेषु ब्रह्मावरोहति देवस्याहमिति[२] " ( का. श्रौ. सू. १४ । ८४, ८५ ) इति । अत्रापि पूर्ववद् यजमानभेदेनावरोहणं मन्त्रभेदं च दर्शयति–देवस्याहमिति । अरुहमिति, रुहेर्लुङि " कृ-मृ दृ-रुहिभ्यः "–इति ( पा. सू. ३ । १। ५९ ) च्लेरङादेशः ॥ ४ ॥ ५ ॥

विधत्ते–अथ सप्तदशेति । सप्तदशसङ्ख्याकान् ' दुन्दुभीन् ' ' अनुवेद्यन्तं ' वेदिसमीपे ' प्रतीचः आग्नीध्रात् आग्नीध्रीयपश्चिमप्रदेशे स्थितान् ' सम्मिन्वन्ति ' वादयितुमाबध्नन्तीत्यर्थः । अत्र सूत्रम्–" सप्तदश दुन्दुभीनासजत्यनुवेदि पश्चादाग्नीध्रात् "–( का. श्रौ. सू. १४ । ६९ । ) इति । " एषा वै इत्यादिकस्यायमर्थः; दुन्दुभीनां नादस्य महत्त्वात् परमवाक्त्वम्; अतो वाग्रूपप्रजापत्युज्जयहेतुदुन्दुभिवाद इत्यर्थः । गतमन्यत् ॥ ६ ॥

विधत्ते–अथैतेषामिति । सप्तदशानां दुन्दुभीनां मध्ये एकं दुन्दुभिम् "बृहस्पते वाजम्" इति वक्ष्यमाणेन मन्त्रेण समाहन्यात् । इतरान् षोडश दुन्दुभीन् तूष्णीं वादयेत् । एकस्य समन्त्रकाहननेन सर्वेऽपि दुन्दुभयश्छत्रिन्यायेन समन्त्रकमेवाहताः ताडिता वादिताः स्युरित्यर्थः । अत्र सूत्रम्–बृहस्पते वाजमित्येकं दुन्दुभिमाहन्ति; तूष्णीमितरान् " ( का. श्रौ. सू. १४ । ७० ) इति ॥ ७ ॥

---

१–अनुमंत्रयते वा ( इत्यप्यनुसंधेयम् ) का. श्रौ. सू. १४ । ८१ ।

२–उत्तरेण च तृचेन । सुन्वन् जयति । शाखां प्रदक्षिणं कृत्वा यंति । आगतेषु ब्रह्माऽवरोहति । देवस्याहमिति । का. श्रौ. सू. । १४ । ८२–८५ ।

स आहन्ति बृहस्पते व्वाजं जय बृहस्पतये व्वाचं व्वदत बृहस्पतिं व्वाजं जापयतेति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः ॥ ८ ॥

( णोऽथ ) अथ यदि राजन्यो यजते । ( तऽ ) इन्द्र व्वाजं जयेन्द्राय व्वाचं व्वदतेन्द्रं व्वाजं जापयतेति क्षत्रᳫँ हीन्द्रः क्षत्रᳫँ राजन्यः ॥ ९ ॥

( न्योऽथै ) अथैतेष्वाजिसृत्सु रथेषु । पुनरासृतेष्वेतेषां दुन्दुभीनामेकं यजुषोपावहरति तत्सर्व्वे यजुषोपावहृता भवन्ति ॥ १० ॥

स उपावहरति । ( त्ये ) एषा वः सा सत्या संव्वागभूद्यया बृहस्पतिं व्वाजमजीजपताजीजपत बृहस्पतिं व्वाजं व्वनस्पतयो व्विमुच्यध्वमिति यदि ब्राह्मणो यजते ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणः ॥ ११ ॥

---

स आहन्ति–"बृहस्पते वाजं जय, बृहस्पतये वाचं वदत, बृहस्पतिं वाजं जापयत"–इति । यदि ब्राह्मणो यजते । ब्रह्म हि बृहस्पतिः । ब्रह्म हि ब्राह्मणः ॥ ८ ॥

अथ यदि राजन्यो यजते–"इन्द्र वाजं जय, इन्द्राय वाचं वदत, इन्द्रं वाजं जापयत" ( वा. सं. ९।११ ) इति । क्षत्रं हीन्द्रः । क्षत्रं राजन्यः ॥ ९ ॥

अथैतेष्वाजिसृत्सु रथेषु पुनरासृतेष्वेतेषां दुन्दुभीनामेकं यजुषोपावहराति । तत् सर्वे यजुषोपावहृता भवन्ति ॥ १० ॥

स उपावहरति–"एषा वः सा सत्या संवागभूत् । यया बृहस्पतिं वाजमजीजपत, अजीजपत बृहस्पतिं वाजं वनस्पतयो विमुच्यध्वम्"–इति । यदि ब्राह्मणो यजते । ब्रह्म हि बृहस्पतिः । ब्रह्म हि ब्राह्मणः ॥ ११ ॥

---

हननविधिमनूद्य मन्त्रं विधत्ते–स आहन्तीति । हे 'बृहस्पते !' 'वाजम्' अन्नं 'जय'। हे दुन्दुभयः ! 'बृहस्पतये' बृहस्पतेरर्थाय 'वाचं' सत्यभूतां यूयं 'वदत'। 'बृहस्पतिम्' 'वाजम्' अन्नं 'जापयत' अन्नविषयं जयं प्रापयत । बृहस्पतिः स्वयमेव वाजं जयति, तं जापयत । जयतेर्ण्यन्तस्य "क्रीङ्जीनां णौ" (पा. सू. ६।१।४८) इत्यात्वे कृते पुगागमः ॥ ८ ॥

राजन्यमन्त्रभेदं दर्शयति–अथ यदीति ! बृहस्पतिस्थाने इन्द्रपदं प्रक्षेपणीयम् । अन्यत् समानम् ॥ ९ ॥

विधत्ते–अथैतेष्विति । 'रथेषु' 'आजिसृत्सु' लक्ष्यस्थानं प्रति सृतवत्सु गतवत्सु 'पुनरासृतेषु' पुनरागतेषु सत्सु 'एतेषां' सर्वेषां 'दुन्दुभीनां' मध्ये 'एकं' प्राग् 'यजुषा' मन्त्रेण 'उपावहरति' अवरोहयेत्; अन्येषां तु तूष्णीमित्यर्थः ॥ १० ॥

उपावहरतीति । अवरोहणमन्त्रस्यायमर्थः;–हे दुन्दुभयः 'वः' युष्माकं सम्बन्धिनी 'सा सत्या' 'संवाक्' समुदिता वाक् 'अभूत्', 'यया' वाचा 'बृहस्पतिं' 'वाजम्' 'अजीजपत' अन्नविषयं जयं प्रापयत । एतस्यैव पुनर्वचनमजीजपतेति वाक्यम् । हे 'वनस्पतयः !' कार्ये कारणशब्दः, वानस्पत्या दुन्दुभयः 'विमुच्यध्वम्' विमुक्ता भवतेति ॥ ११ ॥

---

१–एषा ह व इति मन्त्राहतमवहरते । तूष्णीमितरान् । का. श्रौ. सू. १४ । ८६ । ८७ ।

( णो॑ऽथ ) अथ॒ यदि॑ राज॒न्यो य॒जते । (त॒ऽ) ए॒षा वः॒ सा स॒त्या सं॒वाग॑भूद्यये॒न्द्रं वाज॑मजीजपताजीजप॒तेन्द्रं वाजं॒ वन॑स्पतयो॒ विमु॑च्यध्व॒मिति॑ क्ष॒त्रꣳ᳖ ह्री॒न्द्रः क्ष॒त्रꣳ᳖ राज॒न्यः ॥ १२ ॥

( न्यो॑ऽथ ) अथ॒ वेद्य॑न्ता॒त् । (द्रा) राज॒न्य॑ऽउद॒ङ्सप्त॒दश॒ प्र॒व्या॒धान्प्र॒विध्य॑ति॒ याव॒न्वाऽए॒कः प्र॒व्या॒धस्ता॒वाँ॑स्ति॒र्य॒ङ्प्र॒जाप॑ति॒रथ॒ याव॒त्सप्त॒दश॒ प्र॒व्या॒धास्ता॒वा॒नन्व॒ङ्प्र॒जाप॑तिः ॥ १३ ॥

( स्त ) तद्यद्रा॑ज॒न्यः प्र॒विध्य॑ति । ( त्ये ) ए॒ष वै प्र॒जाप॑तेः प्र॒त्यक्ष॑तमां॒ यद्रा॑ज॒न्यस्तस्मा॒दे॑कः स॒न्बहू॒नामी॑ष्टे॒ यद्वे॒व च॒तुर॑क्षरः प्र॒जाप॑तिश्च॒तुर॑क्षरो॒ राज॒न्यस्तस्मा॒द्राज॒न्यः प्र॒विध्या॑ति॒ सप्त॒दश॒ प्र॒व्या॒धान्प्र॒विध्य॑ति॒ सप्त॒दशो॒ वै प्र॒जाप॑ति॒स्तत्प्र॒जाप॑तिमु॒ज्जय॑ति ॥ १४ ॥

---

अथ यदि राजन्यो यजते—"एषा वः सा सत्या संवागभूत्, ययेन्द्रं वाजमजीजपताजीजपत इन्द्रं वाजं वनस्पतयो विमुच्यध्वम्"—( वा. सं. ९ । १२ ) इति । क्षत्रं हीन्द्रः । क्षत्रं राजन्यः ॥ १२ ॥

अथ वेद्यन्ताद्राजन्य उदङ् सप्तदश प्रव्याधान् प्रविध्यति । यावान्वाऽएकः प्रव्याधः तावांस्तिर्यङ् प्रजापतिः । अथ यावत् सप्तदश प्रव्याधाः तावानन्वङ् प्रजापतिः ॥ १३ ॥

तद्यद्राजन्यः प्रविध्यति । एष वै प्रजापतेः प्रत्यक्षतमां—यद्राजन्यः । तस्मादेकः सन् बहूनामीष्टे । यद्वेव चतुरक्षरः प्रजापतिः, चतुरक्षरो राजन्यः । तस्माद्राजन्यः प्रविध्यति । सप्तदश प्रव्याधान् प्रविध्यति । सप्तदशो वै प्रजापतिः । तत् प्रजापतिमुज्जयति ॥ १४ ॥

---

अथेति । अत्रापि पूर्ववन्मन्त्रभेदो " यदि राजन्यः " इत्यादिना प्रदर्शितः ॥ १२ ॥

दुन्दुभ्युपावहरणसमनन्तरकर्त्तव्यं क्षत्रियस्य विधत्ते—अथ वेद्यन्तादिति । ' प्रव्याधान् ' प्रकर्षेण बलाधिक्येन विमुक्तो बाणो यावति देशे लक्ष्यं विध्यति, तावानेकः प्रव्याधः । तथाविधान् सप्तदशसङ्ख्याकान् ' वेद्यन्तात् ' आरभ्य उदङ्मुखः उदगपवर्गान् ' प्रविध्यति ' । तमिमं प्रशंसति—यावान् वा एक इति । ' प्रजापतिः ' एकप्रव्याधपरिमाणेन ' तिर्यङ् ' स्थौल्येन विस्तारवान् वर्त्तते, सप्तदशप्रव्याधपरिमाणेन ' अन्वङ् ' आयामवान् वर्त्तते । अतः सप्तदशप्रव्याधकरणं प्रजापतिशरीरपरिमितत्वात् प्रशस्तमित्यर्थः ॥ १३ ॥

एषामिषुप्रव्याधानां राजन्यकरणीयत्वे कारणमाह—तद्यद्राजन्य इति । ' एष राजन्यः ' खलु ' प्रजापतेः ' ' प्रत्यक्षतमां ' प्रत्यक्षतमं रूपम्; ' तस्मात् ' प्रजापतेः प्रत्यक्षरूपत्वात् ' एकः ' अपि ' सन् ' ' राजन्यः '

---

१-क्षत्रियः सप्तदशेषु प्रव्याधानस्यति तीर्थादुदीचः । ( का. श्रौ. सू. १४ । ७१ । )

( त्यु ) अथ यं युजुषा युनक्ति । तं युजमानऽआतिष्ठति देवुस्याहꣳ सवितुः सवे सत्युप्रसवसो बृहस्पतेर्व्वाजजितो व्वाजं जेषमिति ॥ १९ ॥

तद्यथैवादो बृहस्पतिः । सवितारं प्रसवायोपाधावत्सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत ऽइदमुज्जयानीति तदस्मै सविता प्रसविता प्रासुवत्तत्सवितृप्रसूत ऽउदजयदेवमेवैषऽएतत्सवितारमेव प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूतऽइदमुज्जयानीति तदस्मै सविता प्रसविता प्रसौति तत्सवितृप्रसूत ऽउज्जयति ॥ १६ ॥

( त्यु ) अथ युद्यध्वर्योः । ( र ) अन्तेवासी वा ब्रह्मचारी वैतद्युजुरधीयात्सोऽन्वास्थाय व्वाचयति व्वाजिन इति व्वाजिनो ह्युश्वास्तुस्मादाह

---

अथ यं यजुषा युनक्ति—तं यजमान आतिष्ठति—" देवस्याहं सवितुः सवे सत्यप्रसवसा बृहस्पतेर्वाजजितो वाजं जेषम् "—इति ॥ १९ ॥

तद्यथैवादो बृहस्पतिः सवितारं प्रसवायोपाधावत् । सविता वै देवानां प्रसविता । इदं मे प्रसुव, त्वत्प्रसूत इदमुज्जयानीति । तदस्मै सविता प्रसविता प्रासुवत् । तत्सवितृप्रसूत उदजयत् । एवमेवैष एतत्सवितारमेव प्रसवायोपधावति । सविता वै देवानां प्रसविता । इदं मे प्रसुव, त्वत्प्रसूत इदमुज्जयानीति । तदस्मै सविता प्रसविता प्रसौति । तत्सवितृप्रसूत उज्जयति ॥ १६ ॥

अथ यद्यध्वर्योरन्तेवासी वा, ब्रह्मचारी वा—एतद्यजुरधीयात् । सोऽन्वास्थाय वाचयति—

---

' बहूनां ' प्रजानाम् ' ईष्टे ' ईश्वरो भवति । ' प्रजापतिः ' अपि ' चतुरक्षरः, ' ' राजन्यः ' अपि ' नियः '—इत्यक्षरविश्लेषात् ' चतुरक्षरः ' । ' तस्मात् ' प्रजापत्यात्मकत्वाद् राजन्यकर्तृक इषुप्रव्याधः करणीयः । प्रव्याधानां सप्तदशत्वं प्रजापत्यात्मना स्तौति—सप्तदशेति । सप्तदशप्रव्याधकरणमुदीरितरीत्या प्रजापतिशरीरसम्पादनम् । तदन्ते या औदुम्बरी शाखा स्थापिता, तस्यामवस्थितेन यजमानेनाजिधावनं कुर्वता प्राप्तत्वात् कृत्स्नं प्रजापतिशरीरमेव प्राप्तं भवतीत्यर्थः ॥ १४ ॥

अश्वैर्युक्तस्य रथस्य यजमानकर्तृकं समन्त्रकमारोहणं विधत्ते—अथ यमिति । उक्त सप्तदशप्रव्याधान्तपथाजिधावनं कर्तुम् ' आतिष्ठति ' आरोहेदित्यर्थः । अत्र सूत्रम्—" देवस्याहमिति यजुर्युक्तमारोहति यजमानः "—( का. श्रौ. सू. १४ । ७३ ) इति । आरोहणमन्त्रस्यायमर्थः;—' सत्यसवसः ' यथार्थप्रसवस्य ' सवितुर्देवस्य ' ' सवे ' अभ्यनुज्ञायां वर्तमानः ' अहम् ' ' वाजजितः ' अन्नस्य जेतुः ' बृहस्पतेः ' सम्बन्धि ' वाजम् ' अन्नम् ' जेषम् ' जीयासमिति । सवितुरनुज्ञयैव प्रवर्त्तने वाजोजयो भवतीत्यर्थः ॥ १९ ॥

इममर्थं बृहस्पतिदृष्टान्तेन द्रढयति—तद्यथैवाद इत्यादिना । ' अदः ' अमुष्मिन् विप्रकृष्टे काले, आजिधावनकाले ' बृहस्पतिः ' ' सवितारम् ' अनुससार । एवमेवैष इत्यादिना दार्ष्टान्तिके योजयति ॥ १६ ॥

विधत्ते—अथ यदीति । ' अथ ' यजमानस्य रथारोहणानन्तरम्, 'अध्वर्योः' शिष्यो वा, अन्यो 'ब्रह्मचारी'

वाजिन इति वाजजित इत्यन्नं वै वाजोऽन्नजित इत्येवैतदाहाध्वन स्कभ्नुवन्त इत्यध्वनो हि स्कभ्नुवन्तो धावन्ति योजना मिमाना इति योजनशो हि मिमाना अध्वानं धावन्ति काष्ठां गच्छतेति यथैनानन्तरा नाष्ट्रा रक्षाꣳसि न हिꣳस्युरेवमेतदाह धावन्त्याजिमाघ्नन्ति दुन्दुभीनभि साम गायति ॥ १७ ॥

( त्र ) अथैताभ्यां जगतीभ्याम् । ( ञ ) जुहोति वाऽनु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान एव बन्धुः ॥ १८ ॥

---

"वाजिनः"—इति । वाजिनो ह्यश्वाः । तस्मादाह—वाजिन इति । "वाजजितः" इति । अन्नं वै वाजः । अन्नजित इत्येवैतदाह । "अध्वनः स्कभ्नुवन्तः" इति । अध्वनो हि स्कभ्नुवन्तो धावन्ति । "योजना मिमानाः" इति । योजनशो हि मिमाना अध्वानं धावन्ति । "काष्ठां गच्छत" ( वा. सं. ९।१३ ) इति । यथैनानन्तरा नाष्ट्रा रक्षांसि न हिंस्युः । एवमेतदाह । धावन्त्याजिम् । आघ्नन्ति दुन्दुभीन् । अभि साम गायति ॥ १७ ॥

अथैताभ्यां जगतीभ्यां जुहोति वा, अनु वा मन्त्रयते । यदि जुहोति, यद्यनुमन्त्रयते—समान एव बन्धुः ॥ १८ ॥

---

वा 'एतद्' वक्ष्यमाणं मन्त्रम् 'अधीयात्' स्मरेत्; 'सः' तमेव रथम् 'अन्वास्थाय' तूष्णीमारुह्य "वाजिनः" इति मन्त्रं 'वाचयति', यजमानमिति शेषः । अत्र सूत्रम्—"अध्वर्योश्च तूष्णीं ब्रह्मचार्यन्तेवासी वा वाचनाय" ( का. श्रौ. सू. १४।७४ ) इति, "वाजिन इति वाचयति" ( का. श्रौ. सू. १४।७७) इति । 'हे वाजिनः !' अश्वाः ! 'वाजजितः' अन्नस्य जेतारः 'अध्वनः' मार्गान् 'स्कभ्नुवन्तः' । "स्कभि स्तभि प्रतिबन्धे" सौत्रोधातुः ( पा. सू. ३।१।८२ ) । स्कम्भनं नाम वेगेनाक्रमणम्, मार्गान् पृष्ठतः कृत्वा पुरोगमनम् । तत् कुर्वन्तः, क्षोभयन्तो वा 'योजना' योजनानि 'मिमानाः' । "माङ् माने" (धा.पा.जु.आ. ६ ) शीघ्रगत्या परिच्छिन्दन्तः शीघ्रगामिनः, 'काष्ठाम्' आजिधावनस्यावधिभूताम् । "आज्यन्तोऽपि काष्ठोच्यते" ( निरु. २ । ५ । १ ) इति हि यास्कः । सप्तदशप्रव्याधान्ते निर्मितामौदुम्बरीं शाखां लक्ष्यभूतस्वर्गात्मिकाम्; "स्वर्गो वै लोकः काष्ठा" ( तै. ब्रा. १।३।६।१ ) इति श्रुतेः । वेगेन गच्छतेति ॥

तमिमं व्याचष्टे—वाजिनोऽश्वा इति । योजनशो हीति । लोके 'हि' अध्वगाः 'योजनशः' एकैकं योजनं 'मिमानाः' परिच्छिन्दन्तो महान्तम् 'अध्वानम्' 'धावन्ति' गच्छन्ति, एवमश्वा अपीति । यथैनानिति । अस्यायमर्थः; 'अन्तरा' आजिधावनमध्ये 'नाष्ट्रा' नाशकानि 'रक्षांसि' 'एनान्' अश्वान् 'यथा' 'न हिंस्युः', तथा लक्ष्यस्थानं गच्छतेति । विहितानामाजिधावनदुन्दुभ्याहननब्रह्मकर्तृकसामगानानां प्रयोगकालं विवक्ते—धावन्त्याजिमिति । अत्र सूत्रम्—"अन्तेवासी वा वाचनाय" ( का. श्रौ. सू. १४।७४) इत्येतस्मादनन्तरम् "आजिं शीघ्रं यन्ति, वाजिन इति वाचयति, ब्रह्मा त्रिः साम गायति, दुन्दुभीन् वादयन्ति" इति ( का. श्रौ. सू. १४ । ७६-७९ ) ॥ १७ ॥

विवक्ते—अथैताभ्यामिति । 'एताभ्यां' वक्ष्यमाणाभ्यां मन्त्राभ्यां हवनमनुमन्त्रणं वा विकल्पेन कर्त-

स जुहोति । ( त्ये ) एष स्यु व्वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो-ऽअपिकक्षु ऽआसुनि ॥ क्रतुं दधिक्रा अनु सँसुनिष्यदत्पथामङ्का-ऋँस्युन्वापनीफणत्स्वाहा ॥ १९ ॥

( हो ) उतु स्म । ( स्मा ) अस्य द्रवतस्तुरण्यतुः पर्णं न वेरुनु-वाति प्रगर्द्धिनः ॥ श्येनुस्येव ध्रजतोऽअङ्कसं परिदधिक्राव्णः सुहोर्जा तुरित्रतः स्वाहेति ॥ २० ॥

---

स जुहोति-" एष स्य वाजी क्षिपणिं तुरण्यति; ग्रीवायां बद्धोऽअपिकक्षऽआसनि, क्रतुं दधिक्रा अनु संसनिष्यदत् पथामङ्कास्यन्वापनीफणत् स्वाहा "-( वा० सं० ९। १४ ) ॥ १९ ॥

"उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनुवाति प्रगर्द्धिनः । श्येनस्येव ध्रजतोऽअङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः स्वाहा "-( वा० सं० ९।१५ ) इति ॥ २० ॥

---

व्यम् । उभयत्रार्थवादवाक्यशेषः समान इत्याह-यदि जुहोतीति । 'बन्धुः' बध्यतेऽनेन स्तुतिरिति बन्धुर्वाक्यशेषः, स तु समानः । " एतानेवैतदश्वान् धावत उपवाजयति, एतेषु वीर्यं दधाति "-इति वाक्यशेषो वक्ष्यते । ' एतत् ' एतेन हवनेन अनुमन्त्रणेन वा ' धावतः ' शीघ्रगामिनः तान् ' अश्वान् ' ' उपवाजयति ' अत्यन्त-वेगयुक्तान् करोति, एतेष्वश्वेषु ' वीर्यं ' सामर्थ्यं निहितवान् भवतीत्यर्थः । अतो वेगसाधनत्वाद् हवनमनुमन्त्रणं वा कर्त्तव्यमित्यर्थः ॥ १८ ॥

हवनमनूद्य मन्त्रद्वयं विधत्ते-स जुहोत्येष स्य इति । ' एषः ' ' स्यः ' सः ' वाजी ' वेजनवान् अश्वः ' ग्रीवायाम् ' ' अपि ' ' कक्षे ' कक्षमूले ' आसनि ' आस्ये तदुचितरज्जुविशेषैः ' बद्धः ' ' क्षिपणिं ' कशां ' तुरण्यति ' त्वरयति । ' दधिक्राः ' धारकान् मार्गावरोधकान् पाषाणादीन् अपि अतिक्रामन् अश्वः ' क्रतुं ' क्रतुसादिनोऽभिप्रायम् ' अनुसंसनिष्यदत् ' सम्यगनुसन्दधानः ' पथां ' मार्गाणाम् ' अङ्कांसि ' लक्षणानि कुटिलानि निम्नोन्नतानि च 'अन्वापनीफणत्' अनुक्रमेण ऋजुत्वं समत्वं वाऽऽपादयन्, तुरण्यतीति पूर्वत्र सम्बन्धः ' स्वाहा '-इति होमलिङ्गं वषट्कारनिवृत्त्यर्थम् ॥ १९ ॥

उत स्मेति । द्वितीयमन्त्रस्यायमर्थः-' उत स्म ' अपि च ' अस्य ' यजमानस्य रथे नियुक्तस्य ' द्रवतः ' गच्छतः ' तुरण्यतः ' तूर्णमध्वानमश्नुवानस्य ' प्रगर्द्धिनः ' अवधिं प्राप्तुमभिकाङ्क्षतोऽश्वस्य ' अङ्कसं ' शृङ्गारचिह्नं वस्त्रचामरादिकं ' परि ' सर्वस्मिन्नपि देहे वर्त्तमानम् अनुगच्छति । तत्र दृष्टान्तः ' वेः ' पक्षिणः 'पर्णं न' वातोद्गतं पत्रम् इव । यथा त्वरया गच्छतः पक्षिणः पक्ष उत्क्षिप्तो गच्छन् नावलोक्यते, तथेत्यर्थः । शीघ्रधावने श्येनो दृष्टान्त्यते-'ध्रजतः' परिधावतः 'श्येनस्य इव ' 'दधिक्राव्णः' धारकपर्वताद्यति-क्रामिणोऽश्वस्य 'ऊर्जा' बलेन 'सह' 'तरित्रतः'भृशं तरतोऽश्वस्येति योज्यः । 'स्वाहा'-इति पूर्ववत् ॥ २० ॥

---

१-एष स्य इति प्रत्यृचं जुहोति । अनुमंत्रयते वा । का० श्रौ० सू० १४ । ८० । ८१ । २-शृङ्गारचिह्नं इति क. पा. ।

( त्य ) अथोत्तरेण त्रिचेन । जुहोति वाऽनु वा मन्त्रयते द्वयं तद्यस्माज्जुहोति वाऽनु वा मन्त्रयते यदि जुहोति यद्यनुमन्त्रयते समान ऽएव बन्धुरेतानेवैतदश्वान्धावत ऽउपवाजयत्येतेषु वीर्यं दधाति तिस्रो वा ऽइमाः पृथिव्य इयमहैका द्वे ऽअस्याः परे ता ऽएवैतदुज्जयति ॥ २१ ॥

सोऽनुमन्त्रयते । शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः । जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः॥२२॥

---

अथोत्तरेण त्रिचेन जुहोति वाऽनुवा मन्त्रयते द्वयं तद्यस्माज्जुहोति वा अनु वा मन्त्रयते । यदि जुहोति, यद्यनुमन्त्रयते–समान एव बन्धुः । एतानेवैतदश्वान्धावत उपवाजयति । एतेषु वीर्यं दधाति । तिस्रो वाऽइमाः पृथिव्यः–इयमहैका । द्वे ऽअस्याः परे । ता एवैतदुज्जयति ॥ २१ ॥

सोऽनुमन्त्रयते–"शं नो भवन्तु वाजिनो हवेषु । देवताता, मितद्रवः, स्वर्काः । जम्भयन्तोऽहिं वृकं रक्षांसि, सनेम्यस्मद्, युयवन्नमीवाः"–( वा. सं. ९।१६ ) ॥ २२ ॥

---

कर्त्तव्यान्तरं विधत्ते–अथोत्तरेणेति । वक्ष्यमाणेन तृचेन हवनमनुमन्त्रणं वा कुर्यात् । द्वयं तदिति । अस्यायमर्थः–'जुहोत्यनुमन्त्रयते वा' इति यत्, तद् द्वयं सत्यानृतात्मकत्वेन द्विप्रकारमिति, "द्वयं वा इदं न तृतीयमस्ति, सत्यञ्चैवानृतञ्च"–( श. प. १।१।१।४ ) इति श्रुतेः । हवनानुमन्त्रणयोरुभयत्रार्थवादवाक्यशेषः समान इत्याह-यदि जुहोतीति । 'बन्धुः' वाक्यशेषः समानः; जागतमन्त्रकरणयोस्तृचकरणयोश्च हवनानुमन्त्रणयोः स्तावकवाक्यशेषः समान इत्यर्थः । कः पुनरसावित्याह–एतानेवैतदिति । हवनानुमन्त्रणार्थवादवाक्यशेषः "तिस्रो वा इमाः" इत्यादिकं तृचेन त्रित्वसंख्यार्थवादब्राह्मणम् । 'पृथिव्यस्तिस्रः', "त्रयो वा इमे त्रिवृतो लोकाः"–इति एकैकस्य त्र्यात्मकत्वश्रुतेः । तत्र 'इयं' परिदृश्यमाना भूमिः 'एका' 'अस्याः' भूमेः 'परे' उपरि दृश्यमाने 'द्वे' पृथिव्यौ; 'ताः' तिस्रो भूमीः तृचकरणेन होमेनानुमन्त्रणेन वा उज्जितवान् भवति ॥ २१ ॥

तत्रानुमन्त्रणमनूद्य मन्त्रत्रयं पठति–सोऽनुमन्त्रयत इति । अन्यदन्यस्योपलक्षकम्; अत्रानुमन्त्रणानुवादत्वात्, मन्त्रान्ते हवनं वा कार्यम्; वचनबलादित्यवगन्तव्यम् । तत्र, प्रथममन्त्रस्यायमर्थः;–'वाजिनः' अश्वाः 'हवेषु' यज्ञेषु, संग्रामेषु वा 'नः' अस्माकं 'शं भवन्तु' सुखप्रापका भवन्तु । 'देवताता' देवयोग्याः । यद्वा, देवास्तन्यन्ते विस्तार्यन्ते यत्र सा देवतातिर्यज्ञः, तस्मिन् । 'हवेषु' आह्वानेषु शं भवन्त्विति योजना । 'मितद्रवः' मितमल्पं द्रवन्ति गच्छन्तीति मितद्रवः, 'स्वर्काः' शीघ्रधावनेन सु अर्चनीयाः 'अहिं' 'वृकं' 'रक्षांसि' सर्पवत् आरण्यकश्ववत् बाधकान् राक्षसान् 'जम्भयन्तः' जम्भन्तः, वर्णव्यत्ययः, क्षोभयन्तः । 'सनेमि'–इति पुराणनाम, ( निघं. ३ । २९ । ४ ) इह 'तु' क्षिप्रवचनम् । शीघ्रम् 'अमीवान्' रोगाः 'अस्मत्' अस्मत्तः 'युयवन्' वियोजितवन्त इत्यर्थः ॥ २२ ॥

---

१–अनुमंत्रयते वा । उत्तरेण च तृचेन । का० श्रौ० सू० १४।८।१।८२।

( वास्तु ) ते नोऽअर्वन्तः । ( न्तो ) हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः ॥ सहस्रसा मेधसाता सनिष्यवो महो ये धनꣳ समिथेषु जभ्रिरे ॥ २३ ॥

वाजे वाजेऽवत । वाजिनो नो धनेषु विप्रा ऽअमृता ऽऋतज्ञाः ॥ अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैरिति ॥ २४ ॥

( त्यु ) अथ बार्हस्पत्येन चरुणा प्रत्युपतिष्ठते । तमुपस्पृशत्यन्नं वा ऽएष ऽउज्जयति यो वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं गत्वा सꣳस्पृशते तदात्मन्कुरुते॥२५

---

" ते नोऽअर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनो मितद्रवः । सहस्रसा, मेधसाता सनिष्यवो महो ये धनं समिथेषु जभ्रिरे "–( वा. सं. ९ । १७ ) ॥ २३ ॥

" वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा, अमृता, ऋतज्ञाः । अस्य मध्वः पिबत, मादयध्वम्, तृप्ता यात पथिभिर्देवयानैः "–( वा. सं. ९ । १८ ) इति ॥ २४ ॥

अथ बार्हस्पत्येन चरुणा प्रत्युपतिष्ठते । तमुपस्पृशति । अन्नं वाऽएष उज्जयति–यो वाजपेयेन यजते । अन्नपेयं ह वै नामैतद्–यद्वाजपेयम् । तद् यदेवैतदन्नमुदजैषीत्–तेनैवैतदेतां गतिं गत्वा संस्पृशते तदात्मन् कुरुते ॥ २५ ॥

---

ते नो अर्वन्त इति । द्वितीयमन्त्रस्यायमर्थः;–' ते ' ' अर्वन्तः ' गतिकुशला अश्वाः, ' हवनश्रुतः ' अस्मदाह्वानश्रोतारो ' वाजिनः ' अन्नवन्तोऽश्वाः सर्वेऽपि ' नः ' अस्माकं ' हवम् ' आह्वानम् अस्मद्वचनं ' शृण्वन्तु ' । ' मितद्रवः ' पूर्ववत् । ' सहस्रसाः ' महतोऽन्नस्य सनितारो दातारः । ' मेधसाता ' यज्ञे । सुप आकारः ( पा. सू. ७ । १ । ३९ ) । ' सनिष्यवः ' सनिं द्रव्यदानम् अस्माकमिच्छन्तः । ईदृशाः ' ये ' अश्वाः ' समिथेषु ' संग्रामेषु ' महः ' महतः शत्रोः ' धनम् ' । मह इति धनविशेषणं वा, महद्धनं ' जभ्रिरे ' आहृतवन्तः । शृण्वन्त्विति पूर्वेणान्वयः ॥ २३ ॥

वाजे वाजेऽवतेति । तृतीयमन्त्रस्यायमर्थः;- हे ' वाजिनः ' ! अश्वाः ! ' वाजे–वाजे ' तत्तदन्ननिमित्तं धननिमित्तं च ' नः ' अस्मान् ' अवत ' । ' विप्राः ' मेधाविनः ' अमृताः ' अमरणधर्माणः ' ऋतज्ञाः ' ऋतं सत्यं गन्तव्यदेशं जानन्तः । तादृगश्वाभिमानिनो हे देवाः ! ' अस्य मध्वः पिबत ' इदं धावनात् पूर्वं पश्चाच्चावघ्रायमाणं मधुसमानं नैवारचरुलक्षणं पिबत । पीत्वा च ' मादयध्वम् ' हृष्टा भवत । ततः ' तृप्ताः ' सन्तो ' देवयानैः पथिभिः ' देवाधिष्ठितैर्मार्गैः अश्वैमिराजिं प्रति ' यात ' इति ॥ २४ ॥

विधत्ते–अथ बार्हस्पत्येनेति[1] ' प्रत्युपतिष्ठते ' आजिधावनं कृत्वा तीर्थदेशं प्रत्यागच्छतोऽश्वान् प्रति

---

१–अवरुह्य नैवारमालभते तीर्थे स्थितमा मा वाजस्येति । का. श्रौ. सू. १४ । ८८ ।

स ऽउपस्पृशति । ( त्या ) आ मा व्वाजस्य प्रसवो जगम्यादित्यन्नं वै व्वाज आ माऽन्नस्य प्रसवो जगम्यादित्येवैतदाहेमे द्यावापृथिवी विश्वरूपेऽइति द्यावापृथिवी हि प्रजापतिरा मा गन्तां पितरा मातरा चेति मातेव च हि पितेव च प्रजापतिरा मा सोमोऽअमृतत्वेन गम्यादिति सोमो हि प्रजापतिः ॥ २६ ॥

( स्त ) तमश्वानवघ्रापयति । व्वाजिन इति व्वाजिनो ह्यश्वास्तस्मादाह व्वाजिन इति व्वाजजित ऽइत्यन्नं वै व्वाजोऽन्नजित ऽइत्येवैतदाह व्वाजꣳ ससृवाꣳस ऽइति सरिष्यन्त ऽइति वा ऽअग्रऽआह सरिष्यन्त ऽइव हि तर्हि भवन्त्यथात्र ससृवाꣳस इति ससृवाꣳस इव ह्यत्र भवन्ति

---

स उपस्पृशति-"आ मा वाजस्य प्रसवो जगम्यात्"- इति । अन्नं वै वाजः । आ माऽन्नस्य प्रसवो जगम्याद्-इत्येवैतदाह । "इमे द्यावापृथिवी विश्वरूपे"–इति । द्यावापृथिवी हि प्रजापतिः । "आ मा गन्तां पितरा मातरा च"–इति । मातेव च हि, पितेव च प्रजापतिः । "आ मा सोमोऽअमृतत्वेन गम्यात्"–इति। सोमो हि प्रजापतिः ॥ २६ ॥

तमश्वानवघ्रापयति–"वाजिनः"–इति । वाजिनो ह्यश्वाः । तस्मादाह वाजिन इति । "वाजजितः"–इति। अन्नं वै वाजः। अन्नजित इत्येवैतदाह । "वाजं सस्रुवांसः"–इति ।

---

नैवारचरुणा सह गच्छेदित्यर्थः । तस्य चरोः स्पर्शनं विधत्ते–तमुपेति । तत् प्रशंसति–अन्नं वेत्यादिना । 'एतां गतिम्' आजिधावनलक्षणं गत्वा चरूपस्पर्शनेन एतदाजिधावनोजितमन्नमेवात्मनि निहितवान् भवतीत्यर्थः॥ २९॥

उपस्पर्शनमनूद्य मन्त्रं विधत्ते–स उपेति । मन्त्रस्यायमर्थः–'वाजस्य' अन्नस्य 'प्रसवः' अभ्यनुज्ञा उत्पत्तिर्वा 'मा' मां प्रति 'आजगम्यात्' आगच्छतु । 'विश्वरूपे' नानारूपे 'इमे' 'द्यावापृथिवी' द्यावापृथिव्यौ प्राजापत्यात्मिके, तत्स्रष्टत्वात् 'आगन्ताम्' आगच्छताम् । 'पितरा मातरा च' "छन्दसि"–इत्यानङ् ( पा. सू. ६ । ३ । ३३ । ) निपात्यते । अस्मदीयः पिता माता च मां प्रत्यागतम्; चिरं जीवित्वा आगच्छताम् । यद्वा, द्यावापृथिव्योः पितेति मातेति च परोक्षनाम्ना निर्देशः । तत्र पितृरूपा द्यौः; मातृरूपा पृथिवीति; "द्यौर्वा पिता पृथिवी माता"–इति (ऋ. सं. १ । १९ । ६ । ) । 'सोमः' च 'अमृतत्वेन मां प्रति 'आगम्यात्' आगच्छतु; "अपाम सोममृता अभूम" ( ऋ. सं. ८ । ४८ । ३ )–इति ह्यन्यत्र श्रुतम् । मन्त्रं प्रतिपाद्यमनूद्य द्यावापृथिव्यादिके प्रजापत्यात्मना स्तौति–आ मा वाजस्येति ॥ २६ ॥

विधत्ते–तमश्वानिति 'तम्' उपस्थापितं चरुम् 'अश्वान्' अवघ्रापयेत् तन्मन्त्रस्यायमर्थः–हे 'वाजिनः !' अश्वाः ! 'वाजजितः' वाजस्यान्नस्य जेतारः, वाजमन्नं जेतुमिति शेषः । 'सस्रुवांसः' आजि-

---

१–यजुर्युक्तानाघ्रापयति वाजिन इति । का. श्रौ. सू. १४–८९ ।

तस्मादाह सस्वाꣳस इति बृहस्पतेर्भागमवजिघ्रतेति बृहस्पतेर्ह्येष भागो भवति तस्मादाह बृहस्पतेर्भागमवजिघ्रतेति निमृजानाऽइति तद्यजमाने वीर्यं दधाति तद्यदश्वानवघ्रापयतीममुज्जयानीति वा ऽग्रे ऽवघ्रापयत्यथात्रेममुदजैषमिति तस्माद्वा ऽअश्वानवघ्रापयति ॥ २७ ॥

( त्य ) अथैतेषामाजिसृताꣳ रथानाम् । ( से ) एकस्मिन्वैश्यो वा राजन्यो वोपास्थितो भवति स वेदेरुत्तरायाꣳ श्रोणाऽउपविशत्यथाध्वर्युश्च यजमानश्च पूर्वया द्वारा मधुग्रहमादाय निष्क्रामतस्तं वैश्यस्य वा राजन्यस्य वा पाणावाधत्तोऽथ नेष्टाऽपरया द्वारा सुराग्रहानादाय निष्क्रामति स जघनेन शालां पर्येत्यैकं वैश्यस्य वा राजन्यस्य वा पाणावादधदा-

---

सरिष्यन्त–इति वा–अग्रऽआह । सरिष्यन्त इव हि तर्हि भवन्ति–अथात्र सस्वांस इति । सस्वांस इव ह्यत्र भवन्ति–तस्मादाह–सस्वांस इति । "बृहस्पतेर्भागमवजिघ्रत" इति । बृहस्पतेर्ह्येष भागो भवति–तस्मादाह–बृहस्पतेर्भागमवजिघ्रतेति । "निमृजानाः"–( वा. सं. ९।१९ ) इति । तद्यजमाने वीर्यं दधाति । तद्–यदश्वानवघ्रापयति–इममुज्जयानीति वाऽग्रेऽवघ्रापयति–अथात्रेममुदजैषमिति । तस्माद्वाऽश्वानवघ्रापयति ॥ २७ ॥

अथैतेषामाजिसृतां रथानामेकस्मिन् वैश्यो वा, राजन्यो वा उपास्थितो भवति । स वेदेरुत्तरायां श्रोणाऽउपविशति । अथाध्वर्युश्च यजमानश्च पूर्वया द्वारा मधुग्रहमादाय निष्क्रामतः ।

---

सरणं कृतवन्तः सन्तो 'बृहस्पतेः' सम्बन्धिनं 'भागम्' अन्नशेषम् 'अवजिघ्रत' अवघ्राणं कुरुत । 'निमृजानाः' चरुलेपनिमार्जनं कुर्वाणाः 'इति' । मन्त्रं पदशोऽनूद्य व्याचष्टे–वाजिनो हीति । सस्वांस इति भूतार्थविहितक्वस्वन्तत्वेन प्रयोगस्याभिप्रायमाह–सरिष्यन्त इति । पूर्वमाजिधावनप्राक्काले चरोरश्वैरवघ्रापणं विहितम्, तन्मन्त्रे 'वाजं सरिष्यन्तः'–इति तु स्यत्रन्तत्वेन प्रयुक्तम्; आजिधावनस्य करिष्यमाणत्वात्, अत्र त्वस्य कृतत्वात् तदन्ते विधीयमाने चर्वाघ्रापणमन्त्रे सस्वांस इति भूतार्थवाचकत्वेन प्रयोगो युक्त इत्यभिप्रायः । निमृजाना इत्यस्य तात्पर्यमाह–तद्यजमान इति । अन्नरसनिमार्जनस्य वीर्यहेतुत्वात् 'तत्' तेन 'निमृजाना इति'–पदेन 'यजमाने' 'वीर्यं' स्थापितवान् भवति ॥ आजिधावनस्यादौ तदन्ते च विहितस्य चर्वाघ्रापणस्य प्रयोजनभेदं दर्शयति––तद्यदश्वानिति । 'अग्रे' पूर्वं वाजोज्जित्यर्थम्, अत्र तूज्जितस्य वाजस्य स्वाधीनकरणार्थम्; अतः पूर्वमिमं वाजमुज्जयानीति, अत्रेमं वाजमुदजैषमित्याशीर्विदर्थवाचि भूतार्थवाचि च पदं युक्तमित्यर्थः ॥ २७ ॥

सुराग्रहाणां मधुग्रहस्य च विनियोगप्रकारो माध्यन्दिने सवने वक्ष्यत इति द्वितीयब्राह्मणान्ते–( श. प.–५।१।२।१९. भा. ) प्रतिज्ञातम्, तमिदानीमवसरप्राप्तं दर्शयितुमाह–अथैतेषामिति । 'आजिसृताम्' आजि प्रति सरिष्यतां रथानां यजमानरथव्यतिरिक्तानामेकस्मिन् रथे वैश्यराजन्ययोरन्यतरः सुराग्रहान् प्रतिग्रहीतुमासीनो

ह्यानेनं तऽइमं निष्क्रीणामीति सत्यं वै श्रीर्ज्योतिः सोमोऽनृतं पाप्मा तमः सुरा सत्यमेवैतच्छ्रियं ज्योतिर्यजमाने दधात्यनृतेन पाप्मना तमसा वैश्यं विध्यति तैः स यं भोगं कामयते तं कुरुतेऽथैतᳪं स हिरण्यपात्रमेव मधुग्रहं ब्रह्मणे ददाति तं ब्रह्मणे ददद‌मृतमायुरात्मन्धत्तेऽमृतᳪं ह्यायुर्हिरण्यं तेन स यं भोगं कामयते तं कुरुते ॥ २८ ॥

इति प्रथमप्रपाठके पञ्चमं ब्राह्मणम् ॥ ९–१–५ ॥ ( १.५ ) ॥

इति प्रथमोऽध्यायः ॥ ९ । १ ॥

---

तं वैश्यस्य वा राजन्यस्य वा पाणावाधत्तः । अथ नेष्टाऽपरया द्वारा सुराग्रहानादाय निष्क्रामति । स जघनेन शालां पर्येत्य एकं वैश्यस्य वा राजन्यस्य वा पाणावादधदाह–अनेन तऽइमं निष्क्रीणामीति । सत्यं वै श्रीर्ज्योतिः–सोमः अनृतं, पाप्मा तमः–सुरा । सत्यमेवैतच्छ्रियं ज्योतिर्यजमाने दधाति । अनृतेन पाप्मना तमसा वैश्यं विध्यति । तैः स यं भोगं कामयते– तं कुरुते । अथैतं स हिरण्यपात्रमेव मधुग्रहं ब्रह्मणे ददाति । तं ब्रह्मणे ददद‌मृतमायुरात्मन् धत्ते । अमृतं ह्यायुर्हिरण्यम् । तेन स यं भोगं कामयते–तं कुरुते ॥ २८ ॥

---

भवति । अत्र कात्यायनो यजुर्युक्तरथारोहणमध्वर्युशिष्यस्य यजमानवाचनार्थमुक्त्वा सूत्रयामास–" इतरेषामेकस्मिन् राजन्यो वैश्यो वा सौरप्रतिग्रहायाजिं शीघ्रं यन्ति "–( का. श्रौ. सू. १४ । ७९ । ७१ ) इति । स वेदेरिति । अस्यायमर्थः;–' सः ' वैश्यराजन्ययोरन्यतरो रथादवरुह्योत्तरस्यां ' श्रोणौ ' उपविशेत् । 'अथ' अनन्तरम् अध्वर्युयजमानौ 'पूर्वया द्वारा' हविर्द्धानस्य पूर्वद्वारेण ' मधुग्रहम् ' आदाय, निष्क्रम्य, वैश्यराजन्ययोरन्यतरस्य हस्ते निदध्याताम् । ' नेष्टा ' अपि हविर्द्धानस्य पश्चिमद्वारेण ' सुराग्रहान् आदाय निष्क्रम्य ' शालां जघनेन ' पत्नीशालायाः पश्चिमप्रदेशादागत्योत्तरस्यां वेदिश्रोणावुपविश्य उक्तयोरन्यतरस्य पाणावेकं सुराग्रहं प्रयच्छन् " अनेन त इमं निष्क्रीणामि[1] "–इति वाक्यं पठेत् । ' अनेन ' सुराग्रहेण ' ते ' तव सम्बन्धिनम 'इमं' मधुग्रहं 'निष्क्रीणामि' स्वाधीनं करोमीति तस्यार्थः ॥

तमिमं निष्क्रयं प्रशंसति–सत्यं वै श्रीरिति । सोमस्य सत्यात्मकत्वम्, इतरस्य अनृताद्यात्मकत्वं च प्रागेव व्याख्यातम् ( श.प.९।२।२।१० । मा० ) । सुराग्रहप्रतिग्रहीतारं ' वैश्यं ' ' विध्यति ' बाधते । अनेन राजन्यं च विध्यतीत्यर्थो लक्ष्यः वैश्यराजन्ययोरन्यतरस्य हस्ते प्रदानस्योक्तत्वात् ॥

प्रतिगृहीतानां तु सुराग्रहाणामैच्छिकव्यवहारं दर्शयति–तैः स यं भोगमिति । क्रीतस्य मधुग्रहस्य दानं विधत्ते–अथैतमिति । एतं मधुग्रहं हिरण्यपात्रसहितं ब्रह्मणे दद्यात् । आपस्तम्बेन सौवर्णपात्रपरिमाणमुक्तम्– " ब्रह्मणे ददाति हि मधुस्थालञ्च सौवर्णं शतमानस्य कृतम्[3] "–( का. श्रौ. सू. १८।५।५ ) इति ।

---

१–नेष्टा च सौरान्पश्चिमेन निर्हृत्य शालामपरेण ह्रत्वैकं सौरप्रतिग्रहाय प्रयच्छन्नाहानेन त इमं निष्क्रीणामीति । का. श्रौ. सू. १४ । ९३ । २–ब्रह्मणे मधुग्रहं ददाति सपात्रम् । का. श्रौ. सू. १४।७० ॥ ३–' कृष्णलम् ' इ, क, ।

तद्दानं प्रशंसति—तं ब्रह्मण इति । 'तं' मधुग्रहं 'ब्रह्मणे' 'ददत्' प्रयच्छन् । हेतौ शतृप्रत्ययः । हिरण्यदानेन 'अमृतम्' अमरणशीलम् ' आयुः ' 'आत्मन्' आत्मनि निहितवान् भवतीति । ब्रह्मप्रतिगृहीतस्य मधुग्रहस्यैच्छिकं व्यवहारं दर्शयति—स यं भोगमिति । " ब्रह्मणे मधुग्रहं ददाति सपात्रम् । तं स यथेष्टं कुरुते "—( का. श्रौ. सू. १४।९४।९९ ) इति हि कात्यायनेन सूत्रितमिति ॥ २८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे प्रथमाऽध्याये पञ्चमं ब्राह्मणम् ॥ ( ५.१-५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमचमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृगः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे प्रथमाध्यायः समाप्तः ॥ ५-१ ॥



# अथ पञ्चमकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ।

अथ स्रुवं चाज्यविलापनीं चादाय (या) आहवनीयमभ्यैति स ऽएता द्वादशाप्तीर्जुहोति वा वाचयति वा यदि जुहोति यदि वाचयति समान ऽएव बन्धुः ॥ १ ॥

स जुहोति । (त्या) आपये स्वाहा स्वापये स्वाहाऽपिजाय स्वाहा क्रतवे स्वाहा वसवे स्वाहाऽहर्पतये स्वाहाऽह्ने मुग्धाय स्वाहा मुग्धाय वैनꣳशिनाय स्वाहा विनꣳशिन ऽआन्त्यायनाय स्वाहाऽऽन्त्याय भौवनाय स्वाहा भुवनस्य पतये स्वाहाऽधिपतये स्वाहेत्येता द्वादशाप्तीर्जुहोति द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यैवास्याप्तिर्या सम्पत्तामेवैतदुज्जयति तामात्मन्कुरुते ॥ २ ॥

---

अथ स्रुवं चाज्यविलापनीं चादायाहवनीयमभ्यैति । स एता द्वादशाप्तीर्जुहोति वा वाचयति वा। यदि जुहोति, यदि वाचयति समान एव बन्धुः ॥ १ ॥

स जुहोति–"आपये स्वाहा, स्वापये स्वाहा, अपिजाय स्वाहा, क्रतवे स्वाहा, वसवे स्वाहा, अहर्पतये स्वाहा, अह्ने मुग्धाय स्वाहा, मुग्धाय वैनꣳशिनाय स्वाहा, विनꣳशिनऽआन्त्यायनाय स्वाहा, आन्त्याय भौवनाय स्वाहा, भुवनस्य पतये स्वाहा, अधिपतये स्वाहा"–(वा० सं० ९।२०) इति । एता द्वादशाप्तीर्जुहोति । द्वादश वै मासाः सम्वत्सरस्य, संवत्सरः प्रजापतिः । प्रजापतिर्यज्ञः । तद् यैवास्याप्तिः, या सम्पत्–तामेवैतदुजयति–तामात्मन् कुरुते ॥ २ ॥

---

यस्य निः श्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ द्वितीयाध्यायस्य प्रथमब्राह्मणे यूपारोहणमुच्यते; तत्र प्रथममाप्तिहोमं विधित्सुराह–अथ स्रुवमिति । आज्यं विलाप्यतेऽस्यामित्याज्यविलापनी स्थाली; स्रुववचनं जुह्वूपभृन्निवृत्त्यर्थम्, अत्र सूत्रम् "द्वादश स्रुवाहुतीर्जुहोत्यापये स्वाहेति प्रतिमन्त्रं, वाचयति वा" (का. श्रौ. सू. १४–९६) इति । होमं विधत्ते–स एता द्वादशेति । द्वादशसंख्याका आप्तिसाधनत्वादाप्त्याख्या आज्याहुतीर्जुहुयात्, "आपये स्वाहा" इत्याप्तिलिङ्गसमवायात् प्राणभृत उपदधातीतिवत् आप्त्यनाप्तिसमुदाये आप्तिशब्दः । विकल्पेन यजमानवाचनं विधत्ते–वाचयति वेति । आप्ती र्जुहुयाद् यजमानं वा वाचयेदित्यर्थः । अत्रोभयत्रार्थवादवाक्यशेषः समान इत्याह–यदि जुहोतीति । 'बन्धुः' वाक्यशेषः, "द्वादश वै मासाः"–इत्यादिना वक्ष्यते ॥ १ ॥

होममनूद्य द्वादश मन्त्रान् विधत्ते–स जुहोत्यापये स्वाहेति । संवत्सरस्य यज्ञात्मकप्रजापतेरेतानि नामानि। आप्नोतीत्यापिः तस्मै 'स्वाहा' सुहुतमस्तु । 'स्वापये' शोभनमाप्नुवते देवाय । 'अपिजाय' अप्सु जाताय ।

( तेऽथ ) अथ षट्क्लृप्तीः । ( जुं ) जुहोति वा व्वाचयति वा यदि जुहोति यदि व्वाचयति समान एव बन्धुः ॥ ३ ॥

स व्वाचयति । (त्या) आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताᳬँ श्रोत्रं यज्ञेन कल्पतां पृष्ठं यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पतामित्येताः षट्क्लृप्तीर्व्वाचयति षड्वाऽऋतवः संव्वत्सरस्य संव्वत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यैवास्य क्लृप्तिर्या सम्पत्तामेवैतदुज्जयति तामात्मन्कुरुते ॥ ४ ॥

---

अथ षट् क्लृप्तीर्जुहोति वा वाचयति वा । यदि जुहोति यदि वाचयति–समान एव बन्धुः॥ ३॥
स वाचयति–" आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम्, चक्षुर्यज्ञेन कल्पताम्, श्रोत्रं यज्ञेन कल्पताम्, पृष्ठं यज्ञेन कल्पताम्, यज्ञो यज्ञेन कल्पताम् "–इति । एताः षट् क्लृप्तीर्वाचयति । षड्वाऽऋतवः सम्वत्सरस्य । सम्वत्सरः प्रजापतिः । प्रजापतिर्यज्ञः । तद् यैवास्य क्लृप्तिः, या सम्पत्–तामेवैतदुज्जयति । तामात्मन् कुरुते ॥ ४ ॥

---

' क्रतवे ' संकल्पाय, यज्ञाय वा । ' वसवे ' वासकाय । अह्नां पतिः अहर्पतिः संवत्सरः, तस्मै । " मुह वैचित्त्ये" ( धा. पा. दि. प. ९२ ) अपकर्त्तुमजानते 'अह्ने' दिवसाय 'अह्ने मुग्धाय' इत्येकं नाम । एवमुत्तरत्रापि विशेषणयुक्तमेकैकं नाम । ' वैनंशिनाय ' विनाशयुक्तेषु हितकारित्वेन वसतीति वैनंशिनः, विनंशिनः पुत्रो वा वैनंशिनः तस्मै । एवमुत्तरत्राप्यपत्यार्थे प्रत्यय इति वेदितव्यम् । ' विनंशिने ' शत्रुविनाशकाय । अन्त्ये अयने भवः आन्त्यायनः, अन्त्याख्यस्य पुत्राय वा, तस्मै । 'आन्त्याय' अन्ते भवाय । ' भौवनाय' ( तै. सं. १ । ७ । ९ । ६ ॥ ४ । ७ । ११ । २ ॥ ५ । ४ । ९ । १९ ) भुवनस्यापत्याय । ' भुवनस्य पतये ' इत्येकं नाम, भुवनस्य पतिः प्रजापतिः, "प्राजापतिर्वै भुवस्यपतिः" (तै. ब्रा. १ । ३ । ७ ऋ. सं ४।५३।२) इति हि तैत्तिरीयकम् । तथा ' अधिपतये ' इति, अधिपतिः प्रजापत्यात्मको वाजपेययज्ञः । अत्र स्वाहान्त एकैको मन्त्र इत्यर्थः ॥

आहुतिगतां द्वादशसंख्यां प्रशंसति–द्वादश वै मासा इति । अयं वाक्यशेषो होमवाचनयोरुभयोरपि समानः । तद्यैवास्याप्तिरिति । ' अस्य ' संवत्सरस्य प्रजापत्यात्मकस्य यज्ञस्य ' या ' ' आप्तिः ' सर्वात्मकत्वेन व्यापनशक्तिः, 'या' ' सम्पत् ' संवत्सरसमृद्धिः, सर्वात्मकता, तामेतामुभयीमेतेनाप्तिहोमेन जितवान् भवति । जित्वा च ' ताम् ' ' आत्मन् ' आत्मनि स्वस्मिन् कृतवान् भवति ॥ २ ॥

विधत्ते–अथ षट् क्लृप्तीरिति[1] । 'क्लृप्तीः' क्लृपिधातुनिष्पन्नशब्दयुक्तमन्त्रकरणिका आहुतीर्जुहुयात् । मन्त्राणां वाचनं कार्यमिति वा ॥ ३ ॥

वाचनमनूद्य मन्त्रान् विधत्ते–स वाचयतीति । अत्र वाचनविवक्षया मन्त्रान्ते स्वाहाशब्दो न प्रयुक्तः;

---

१ षड्वोत्तराः । क्लृप्तीरित्यर्थः । का० श्रौ० सू० १४ । ९६ । इत्यत्र कर्कः ।

( तेऽष्टा ) अष्टाश्रिर्यूपो भवति । ( त्य ) अष्टाक्षरा वै गायत्री गायत्र-मग्नेश्छन्दो देवलोकमेवैतेनोज्जयति सप्तदशभिर्वासोभिर्यूपो व्वेष्टितो वा व्विग्रथितो वा भवति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥ ५ ॥

गौधूमं चषालं भवति । पुरुषो वै प्रजापतेर्नेदिष्ठᳪ सोऽयमत्वगेते वै पुरुषस्यौषधीनां नेदिष्ठतमां यद्गोधूमास्तेषां न त्वगस्ति मनुष्यलोकमे-वैतेनोज्जयति ॥ ६ ॥

---

अष्टाश्रिर्यूपो भवति । अष्टाक्षरा वै गायत्री । गायत्रमग्नेश्छन्दः । देवलोकमेवैतेनोज्जयति । सप्तदशभिर्वासोभिर्यूपो वेष्टितो वा विग्रथितो वा भवति । सप्तदशो वै प्रजापतिः । तत्प्रजापति-मुज्जयति ॥ ५ ॥

गौधूमं चषालं भवति । पुरुषो वै प्रजापतेर्नेदिष्ठम् । सोऽयमत्वक् । एते वै पुरुषस्यौषधीनां नेदि-ष्ठतमां—यद्गोधूमाः । तेषां न त्वगस्ति । मनुष्यलोकमेवैतेनोज्जयति ॥ ६ ॥

---

वचनबलाद्धवनं वा कार्यम्, तदा स्वाहाशब्दः प्रयोक्तव्यः । मन्त्रार्थस्तु—' आयुः ' मदीयं, ' यज्ञेन ' वाजपे-याख्येन ' कल्पतां ' समर्थं भवतु ' पृष्ठं ' रथन्तरादि; यद्वा पृष्ठं वंशवदायुःप्राणादेराधारभूतो मध्यदेहः । ' यज्ञः ' विष्णुः । अन्यत् स्पष्टम् । तामिमां षट्संख्यां प्रशंसति—षड् वा ऋतव इति । हवनवाचनयोरयं वाक्यशेषः समान इत्यर्थः । तथैवास्य क्लृप्तिरित्यादि, पूर्ववद् योज्यम् ॥ ४ ॥

क्लृप्तिवाचनमन्त्रतदर्थाभिज्ञस्य यजमानस्य यूपारोहणं विवक्षुरादौ स्वर्गत्वेन निरूपयिष्यमाणस्य यूपस्य प्राकृतं गुणमनुवदति अष्टाश्रिर्यूप इति । अश्रिगतामष्टसंख्यां प्रशंसति—अष्टाक्षरेति । यतः ' अग्नेश्छन्दो गायत्रम् ' ततस्तद्रूपत्वाद् देवलोकजयहेतुरष्टाश्रिर्यूप इत्यर्थः । यूपस्य वेष्टनं विधत्ते—सप्तदशभिरिति । ' वेष्टितः ' यथा यूपो न दृश्यते, तथा छादनं ' वा ' कार्यम्; ' विग्रथितः ' यूपस्यैकत्र प्रदेशे वाससां ग्रन्थनं ' वा ' कार्यम् । वासोगतां संख्यां प्रजापत्यात्मना स्तौति—सप्तदशेति ॥ ५ ॥

चषालनामकस्य यूपशकलस्य दारुमयत्वापवादाय विधत्ते-गौधूममिति । गोधूमपिष्टमयं चषालं कुर्यादि-त्यर्थः । पुरुषो वा इत्यादि । अस्यायमर्थः—' पुरुषो ' नु ' प्रजापतेः ' ' नेदिष्ठम् ' अन्तिकतमं वस्तु; पुरुषसृष्टेः प्रथमभावित्वात् । 'सोऽयम् अत्वक्' अश्वत्थादि वृक्ष इव बाह्यत्वग्रहितः 'ओषधीनां' मध्ये एते 'गोधूमा' अपि ' पुरुषस्य ' सन्निहिततमं वस्तु बलकारित्वात् । तेषां तु त्वगभावः प्रसिद्धः । अतो गोधूमचषालकरणेन ' मनुष्यलोकमेव ' जितवान् भवतीति ॥ ६ ॥

---

१—यूपवेष्टनं सप्तदशभिर्वस्त्रैर्व्युद्ग्रथनं वा परिव्ययणकाले । का. श्रौ. सू. १४ । २० । २—चक्रकीर्णसमाप्तो गौधूमचषालः । का. श्रौ. सू. १४ । २२ ।

गर्त्तन्वान्यूपोऽतीक्ष्णाग्रो भवति । पितृदेवत्यो वै गर्त्तः पितृलोकमेवैतेनोज्जयति सप्तदशारत्निर्भवति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥७॥ ( त्यु ) अथ नेष्टा पत्नीमुदानेष्यन् । ( न्को ) कौशं वासः परिधापयति कौशं वा चण्डातकमन्तरं दीक्षितवसनाज्जघनार्द्धो वा ऽएष यज्ञस्य यत्पत्नी तामेतत्प्राचीं यज्ञं प्रसादयिष्यन्भवत्यस्ति वै पत्न्याऽअमेध्यं यदवाचीनं नाभेर्मेध्या वै दर्भास्तद्यदेवास्या ऽअमेध्यं तदेवास्याऽएतद्दर्भैर्मेध्यं कृत्वाऽथैनां प्राचीं यज्ञं प्रसादयति तस्मान्नेष्टा पत्नीमुदानेष्यन्कौशं वासः परिधापयति कौशं वा चण्डातकमन्तरं दीक्षितवसनात् ॥ ८ ॥

---

गर्तन्वान् यूपोऽतीक्ष्णाग्रो भवति । पितृदेवत्यो वै गर्तः । पितृलोकमेवैतेनोज्जयति । सप्तदशारत्निर्भवति । सप्तदशो वै प्रजापतिः । तत्प्रजापतिमुज्जयति ॥ ७ ॥

अथ नेष्टा पत्नीमुदानेष्यन् कौशं वासः परिधापयति । कौशं वा चण्डातकमन्तरं दीक्षितवसनात् । जघनार्द्धो वाऽएष यज्ञस्य यत्पत्नी । तामेतत्प्राचीं यज्ञं प्रसादयिष्यन् भवति । अस्ति वै पत्न्या अमेध्यं–यदवाचीनं नाभेः । मेध्या वै दर्भाः । तद्यदेवास्या अमेध्यं–तदेवास्या एतद् दर्भैर्मेध्यं कृत्वाऽथैनां प्राचीं यज्ञं प्रसादयति । तस्मान्नेष्टा पत्नीमुदानेष्यन् कौशं वासः परिधापयति । कौशं वा चण्डातकमन्तरं दीक्षितवसनात् ॥ ८ ॥

---

तस्मिन् यूपे गुणविशेषं विधत्ते–गर्त्तन्वानिति । गर्त्तवान्, यूपस्याग्रे निम्नप्रदेशः । गर्तन्वान् "अनो नुट्"–( पा. सू. ८ । २ । १६ ) इति अन्नन्तात्परस्य मतुपो नुडागमो विहितः, व्यत्ययेनाकारान्तादपि भवति । 'अतीक्ष्णाग्रः' अतनूकृताग्रः, स्थूलाग्रप्रदेशो भवेत् । गर्त्तं पितृलोकात्मना प्रशंसति–पितृदेवत्य इति । "पितॄणां सदनमसि"–( तै. सं. ६ । ३ । ४ । २ । ) इत्यादिमन्त्रवर्णाद्यूपावटस्य पितृदेवतास्थानत्वं प्रतीयते । अत एव तैत्तिरीयके यूपस्य सर्वदेवतामयत्वकथनप्रस्तावे–"पितॄणां निखातं मनुष्याणामूर्ध्वं निखातात्"–( तै. सं. ६ । ३ । ४ । ६ ) इति गर्त्तावच्छिन्नस्य यूपभागस्य पितृदेवत्यत्वम् । ईदृशी प्रसिद्धिरत्र 'वै' शब्देन द्योत्यते । आरोहणीययूपस्य चोदकप्राप्तं प्रमाणमपवदितुं परिमाणान्तरं विधत्ते–सप्तदशेति । चतुर्विंशत्यङ्गुलपरिमितोऽरत्निः; सप्तदशसंख्याका अरत्नयः प्रमाणं यस्य यूपस्येति विग्रहः ॥ ७ ॥

विधत्ते–अथ नेष्टेति । 'उदानेष्यन्' शालातो निर्गमयिष्यन् 'कौशं' दर्भमयं 'वासः' पत्नीं परिधापयेत् । अत्र आपस्तम्बः–"क्षत्रस्य योनिरसीति दर्भमयं पत्नीम्"–( आ. श्रौ. सू. १८ । ५ । ७ ) ( तै. सं. १ । ७ । ९ । १ ) इति । श्रुतिश्च भवति–"दर्भमयं परिधापयति"–( तै. ब्रा. १।३।७। १ ) इति यद्वा क्रिमिकोशविकारभूतं वासः 'कौशम्' तेन परीत आच्छादयेत् । यद्वा, 'कौशम्' कुशमयं, चण्डातकम् अर्द्धोरुकं परिधापयेत् । एवमेव हि चण्डातकपदं कर्कोपाध्यायेन व्याख्यातम्–"चण्डातकं चलनैक-

---

१–नेष्टा पत्नमिानेष्यन् कौशं वासः परिधापयति चंडातकं दद्दरं वा । का० श्रौ० सू० १४।९।७ २–'चलनमुच्यते' इति क.पा.।

(दु) अथ निश्रयणीं निश्रयति । स दक्षिणत ऽउदङ्ङ्रोहेदुत्तरतो वा दक्षिणा दक्षिणतस्त्वेवोदङ्ङ्रोहेत्तथा ह्युदग्भवति ॥ ९ ॥

स रोक्ष्यञ्जायामामन्त्रयते । जायऽएहि स्वो रोहावेति रोहावेत्याह जाया तद्यज्जायामामन्त्रयतेऽर्द्धो ह वा ऽएष ऽआत्मनो यज्जाया तस्माद्यावज्जायां न विन्दते नैव तावत्प्रजायतेऽसर्व्वो हि तावद्भवत्यथ यदैव जायां विन्दतेऽथ प्रजायते तर्हि हि सर्व्वो भवति सर्व्वऽएतां गतिं गच्छानीति तस्माज्जायामामन्त्रयते ॥ १० ॥

---

अथ निश्रयणीं निश्रयति । स दक्षिणत उदङ्ङ्रोहेत्, उत्तरतो वा दक्षिणा । दक्षिणतस्त्वेवोदङ्ङ्रोहेत् । तथा ह्युदग् भवति ॥ ९ ॥

स रोक्ष्यन् जायामामन्त्रयते–'जायऽएहि स्वो रोहाव' इति । रोहावेत्याह–जाया । तद् यज्जायामामन्त्रयते । अर्द्धो ह वाऽएष आत्मनो यज्जाया । तस्माद्यावज्जायां न विन्दते–नैव तावत्

---

मुच्यते । एवं ह्यभियुक्तोपदेशः–"अर्द्धोरुकं विलासिन्या वासश्चण्डातकं स्मृतम्"–इति । नृत्तोपयिकत्वेनाच्छादनीयमूरुकञ्चुकमर्द्धोरुकं वासः" इति वसनस्य प्रदेशं विधत्ते–अन्तरमिति । दीक्षाकाले यद्वस्त्रं परिहितम् तस्माद् वहिःप्रदेशे इत्यर्थः । अन्तरशब्दो बहिर्योगे वर्त्तते ॥

दर्भैरेव वासः कर्त्तव्यमिति अत्रोपपत्तिं दर्शयति–जघनार्द्धे इत्यादिना । पूर्वदेशस्याहवनीयसाध्यत्वाद्, यज्ञः प्राच्यां दिश्यवस्थितः, तस्य यज्ञस्य पश्चिमभागे पत्नीशालायामवस्थानात् पत्नी यज्ञस्य जघनार्द्ध इति निरूप्यते । तां पत्नीम् एतर्हि 'प्राचीं प्राङ्मुखां पूर्वदिगवस्थितं यज्ञं प्रापयिष्यन् भवति । तदुपायत्वेन दर्भमयवासःपरिधापनस्य मेध्यत्वापादकत्वमाह–अस्ति वा इति । पत्नीसम्बन्धिनाभेर्यदवाचीनमङ्गम्, तद् 'अमेध्यम्' अपवित्रम्, तत्प्रदेशे मेध्यदर्भमयवासःपरिधापनेन तदङ्गं परिशुद्धं 'कृत्वा' 'एनां' 'प्राचीं' 'यज्ञं' प्रापितवान् भवति । दर्भाणां मेध्यत्वम् "पवित्रं "वै दर्भाः पुनात्येवैनम्"–(तै. ब्रा. १ । ३ । ७ । १) इति श्रुत्यन्तरादवगम्यते । तस्मान्नेष्टेत्यादि । प्रतिज्ञातार्थनिगमनम् ॥ ८ ॥

विधत्ते–अथ निश्रयणीमिति[2] । 'निश्रयणीम्' निश्रेणी यूपारोहणार्थं सोपानसदृशः काष्ठनिर्मितपदार्थः 'निश्रयति' यूपे निदध्यात् । तथा साधनेन यजमानस्य यूपारोहणे कञ्चिद् विशेषं विधत्ते–स दक्षिणत इति । दक्षिणप्रदेशादुदङ्मुखो यूपमारोहेत्, उदक्प्रदेशाद् दक्षिणमुखो वा आरोहेदिति विकल्पः । तत्रैकं पक्षं सिद्धान्तयति–दक्षिणत इति । 'तु' शब्दः पक्षान्तरव्यावृत्त्यर्थः । तथा हि एवं कृते सति 'उदग्भवति' कर्मण उदगपवर्गता सिद्ध्यति, तस्मादयमेव पक्षः श्रेयान् ॥ ९ ॥

रोहणकाले जायाऽऽमन्त्रणं विधत्ते–स रोक्ष्यन्निति । रोहणं करिष्यन् हे 'जाये !' 'एहि' आगच्छ, 'स्वः'

---

१–अंतरं दीक्षितवसनात् । का० श्रौ० सू० १४ । ९८ । २–यद्यपि भाष्यपुस्तकेषु सर्वत्र 'निश्रेणीम्' इत्येव पदं दृश्यते तथापि मूलानुरोधेन का. श्रौ. सूत्रानुरोधेन च निश्रयणीम्' इत्येव भवितव्यम् । निश्रयणीं यूप उच्छ्रयत्युत्तरां वां । का. श्रौ. सू. १४ । ९९ ।

स रोहति । प्रजापतेः प्रजाऽअभूमेति प्रजापतेर्ह्येष प्रजा भवति यो व्वाजपेयेन यजते ॥ ११ ॥

( तेऽथ ) अथ गोधूमानुपस्पृशति । स्वर्देवाऽअगन्मेति स्वर्ह्येष गच्छति यो व्वाजपेयेन यजते ॥ १२ ॥

तद्यद्गोधूमानुपस्पृशति । (त्यु) अन्नं वै गोधूमा ऽअन्नं वा ऽएष उज्जयति यो वाजपेयेन यजतेऽन्नपेयᳪं ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं गत्वा सᳪंस्पृशते तदात्मन्कुरुते तस्माद्गोधूमानुपस्पृशति ॥ १३ ॥

---

प्रजायते । असर्वो हि तावद्भवति । अथ यदैव जायां विन्दते अथ प्रजायते । तर्हि हि सर्वो भवति । सर्व एतां गतिं गच्छानीति । तस्माज्जायामामन्त्रयते ॥ १० ॥

स रोहति-" प्रजापतेः प्रजा अमूम "-इति । प्रजापतेर्ह्येष प्रजा भवति-यो वाजपेयेन यजते ॥ ११ ॥

अथ गोधूमानुपस्पृशति-" स्वर्देवा अगन्म " इति । स्वर्ह्येष गच्छति-यो वाजपेयेन यजते ॥ १२ ॥

तद् यद्गोधूमानुपस्पृशति । अन्नं वै गोधूमाः । अन्नं वाऽएष उज्जयति-यो वाजपेयेन यजते । अन्नपेयं ह वै नामैतद्-यद्वाजपेयम् । तद् यदेवैतदन्नमुदजैषीत्-तेनैवैतां गतिं गत्वा संस्पृशते-तदात्मन् कुरुते । तस्माद्गोधूमानुपस्पृशति ॥ १३ ॥

---

स्वर्गं ' रोहाव ' आरोहणं करवावेति । जायायाः प्रत्युक्तिं दर्शयति- रोहावेत्याह जायेति । अथान्वयव्यतिरेकाभ्यां जायासहितस्य संपूर्णावयवत्वं प्रतिपादयन्नत्र जायाऽऽमन्त्रणं विधत्ते-तद्यदिति । प्रथमपर्याये असर्व इति परिच्छेदः, असम्पूर्ण इत्यर्थः । ' ह ' यस्माद् यजमानस्य ' अर्द्धः एषः यत् जाया आत्मनः, ' तदभावे प्रजोत्पत्त्यभावः, यदा जायासाहित्यं तदा प्रजोत्पादनक्षमत्वम् । तथा च ' सर्वः ' सम्पूर्णावयवोऽस्त्वित्याह-एतां गतिमिति । ' एतां ' यूपारोहणलक्षणां ' गतिं ' ' गच्छानि ' प्राप्नवानीत्यभिप्रायेण जायाऽऽमन्त्रणं कार्यमिति ॥ १० ॥

एतद्यूपारोहणमनूद्य मन्त्रं विधत्ते-स रोहतीति । प्रजापतेः ' प्रजाः ' अपत्यभूताः 'अभूम' इति ॥ ११ ॥

गोधूममयचषालस्पर्शनं समन्त्रकं विधत्ते-अथ गोधूमानिति । वयं 'देवाः' सन्तः ' स्वः ' स्वर्गम् 'अगन्म' गतवन्त इति मन्त्रस्यार्थः ॥ १२ ॥

तद् यद् गोधूमानित्यादि । गोधूमस्पर्शनेन वाजपेयजिन्मन्त्रं स्वाधीनं कृतवान् भवतीति तात्पर्यार्थः ॥ १३ ॥

---

१-आरोक्ष्यन् जायामामन्त्रयते जाय एहि स्वो रोहावेति । रोहावेति प्रत्याह । प्रजापतेरित्यारोहतः । का० श्रौ० सू० १४।१०० ।

२-स्वरिति गोधूममालभते । का० श्रौ० सू० । १४ । १०१ ।

( त्यु ) अथ शीर्ष्णा यूपमत्युज्जिहीते । ( तेऽमृ ) अमृता ऽअभूमेति देवलोकमेवैतेनोज्जयति ॥ १४ ॥ ( शतम् २००० )

( त्यु ) अथ दिशोऽनुवीक्षमाणो जपति । ( त्य ) अस्मे वोऽअस्त्विन्द्रियमस्मे नृम्णमुत क्रतुरस्मे वर्चाꣳसि सन्तु व इति सर्व्वं वा ऽएषऽइदमुज्जयति यो वाजपेयेन यजते प्रजापतिꣳ ह्युज्जयति सर्व्वमु ह्येवेदं प्रजापतिः सोऽस्य सर्व्वस्य यश ऽइन्द्रियं वीर्यꣳ संवृज्य तदात्मन्धत्ते तदात्मन्कुरुते तस्माद्दिशोऽनुवीक्षमाणो जपति ॥ १५ ॥

( त्यु ) अथैनमूषपुटैरनूदस्यन्ति । पशवो वाऽऊषा अन्नं वै पशवोऽन्नं वाऽएषऽउज्जयति यो वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं

---

अथ शीर्ष्णा यूपमत्युज्जिहीते—"अमृता अभूम"—( वा० सं० ९। २१ ) इति । देवलोकमेवैतेनोज्जयति ॥ १४ ॥

अथ दिशोऽनुवीक्षमाणो जपति—"अस्मे वोऽअस्त्विन्द्रियमस्मे नृम्णमुत क्रतुः" "अस्मे वर्चांसि सन्तु वः"—इति । सर्वं वाऽएष इदमुज्जयति—यो वाजपेयेन यजते । प्रजापतिं ह्युज्जयति । सर्वमुह्येवेदं प्रजापतिः । सोऽस्य सर्वस्य यशः—इन्द्रियं वीर्यं संवृज्य तदात्मन् धत्ते—तदात्मन् कुरुते । तस्माद् दिशोऽनुवीक्षमाणो जपति ॥ १५ ॥

अथैनमूषपुटैरनूदस्यन्ति । पशवो वाऽऊषाः । अन्नं वै पशवः । अन्नं वाऽएष उज्जयति—यो वाजपे-

---

विधत्ते—अथ शीर्ष्णेति । 'शीर्ष्णा' शिरसा 'यूपम्' 'अत्युज्जिहीते' अतिक्रम्योद्गमयति । यूपं शिरसा स्पृशन् तमतिक्रम्य स्वशिर उन्नमयेदित्यर्थः । 'अमृताः' अमरणधर्माणः 'अभूम' सम्भूता इति उद्गमनमन्त्रस्यार्थः । 'एतेन' यूपाग्रात् स्वशिरस उन्नमनाद् यूपस्यातिक्रान्तत्वाद् देवलोकजयः ॥ १४ ॥

विधत्ते—अथ दिश इति । यूपे तिष्ठन्नेव यजमानः सर्वा दिशोऽनुक्रमेण पश्येद् "अस्मे"—इति मन्त्रं जपन् । तन्मन्त्रस्यायमर्थः;—हे दिशः ! 'वः' युष्मत्सम्बन्धि 'इन्द्रियं' वीर्यम् 'अस्मे' अस्मासु 'अस्तु' तथा 'नृम्णं' युष्मत्सम्बन्धि धनम् 'अस्मे' अस्मासु 'अस्तु' 'उत' अपि च 'क्रतुः' सङ्कल्पः, तत्पूर्वको यज्ञोऽपि 'अस्मे' अस्तु ; 'वः वर्चांसि' युष्मत्सम्बन्धीनि तेजांसि 'अस्मे' अस्मासु 'सन्तु' इति । इन्द्रियादीनामाशासनं युक्तमित्याह-सर्वं वा इत्यादि । प्रजापतेः सर्वात्मकत्वाद् वाजपेयेन च प्रजापतिप्राप्तित्वाद् 'अस्य सर्वस्य' जगतो यशआदिकं 'संवृज्य' विभज्याधाय स्वात्मनि धारयति, अनन्तरं स्वात्मनि कुरुते, आत्मसात् कृतवान् भवतीत्यर्थः ॥ १५ ॥

अत्र कात्यायनः—"सप्तदशाश्वत्थपत्रोपनद्धानूषपुटानुदस्यस्यस्मे विशः प्रतिगृह्णात्येनान्" (का. श्रौ. सू. १४। १०४।१०९) इति यदसूत्रयत्, तत् क्रमेण विधत्ते—अथैनमिति । 'ऊषपुटैः' ऊषाः क्षेत्रपांशवः तानश्वत्थपत्रैः

---

१–शिरसा यूपमुज्जिहीतेऽमृता इति । का० श्रौ० सू० १४।१०२॥ २–अस्मे व इति दिशो वीक्षते । का०श्रौ०सू० १४।१०३॥

तद्यदेवैतदन्नमुदजैषीत्तेनैवैतदेतां गतिं गत्वा सꣳस्पृशते तदात्मन्कुरुते तस्मादेनमूषपुटैरनूदस्यन्ति ॥ १६ ॥

( न्त्या ) आश्वत्थेषु पलाशेषूपनद्धा भवन्ति । स यदेवादोऽश्वत्थे तिष्ठत इन्द्रो मरुत ऽउपामन्त्रयत तस्मादाश्वत्थेषु पलाशेषूपनद्धा भवन्ति व्विशोऽनूदस्यन्ति व्विशो वै मरुतोऽन्नं व्विशस्तस्माद्विशोऽनूदस्यन्ति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥ १७ ॥

( त्यु ) अथेमामुपावेक्षमाणो जपति । नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्या ऽइति बृहस्पतेर्ह वाऽअभिषिषिचानात्पृथिवी बिभयाञ्चकार महद्वाऽअयमभूद्योऽभ्युषेचि यद्वै माऽयं नावदृणीयादिति बृहस्पतिर्ह पृथिव्यै

---

येन यजते । अन्नपेयं ह वै नामैतद्—यद्वाजपेयम् । तद्यदेवैतदन्नमुदजैषीत्—तेनैवैतदेतां गतिं गत्वा संस्पृशते—तदात्मन् कुरुते । तस्मादेनमूषपुटैरनूदस्यन्ति ॥ १६ ॥

आश्वत्थेषु पलाशेषूपनद्धा भवन्ति । स यदेवादोऽश्वत्थे तिष्ठत इन्द्रो मरुत उपामन्त्रयत । तस्मादाश्वत्थेषु पलाशेषूपनद्धा भवन्ति । विशोऽनूदस्यन्ति । विशो वै मरुतः । अन्नं विशः । तस्माद्विशोऽनूदस्यन्ति । सप्तदश भवन्ति । सप्तदशो वै प्रजापतिः । तत्प्रजापतिमुज्जयति ॥ १७ ॥

अथेमामुपावेक्षमाणो जपति—" नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्यै "—इति । बृहस्पतेर्ह वाऽअभिषिषिचानात्पृथिवी बिभयाञ्चकार—' महद्वाऽअयमभूद्—योऽभ्यषेचि, यद्वै माऽयं नावदृणी-

---

पुटीकृत्य तैः पुटैः यूपेऽवस्थितं यजमानमभिलक्ष्य 'उदस्यन्ति' ऊर्द्ध्वान् प्रतिदिशं प्रक्षिपेयुरित्यर्थः । अत एव आपस्तम्बः—"तमाश्वत्थैरासपुटैरूषपुटैरुमयैर्वा विशः प्रतिदिशमर्पयन्ति "—( आ. श्रौ. सू. १८ । ५ । ११ ) इति । " पशवो वा ऊषाः "—इत्यादिकस्यायमर्थः, ऊषाणां यज्ञद्वारा पशुसाधनत्वात् ताच्छब्द्यम् । पशूनाञ्च अन्नत्वं क्षीरादिसाधनत्वेन प्रसिद्धम् । अतः पशुद्वारा ऊषाणामन्नत्वादूषपुटहननेन यजमानेऽन्नमेव निहितवान् भवतीति ॥ १६ ॥

विधत्ते—आश्वत्थेष्विति । अश्वत्थपलाशेषूपनद्धान् सन्नद्धान् कुर्यात् । आश्वत्थैरेव करणे कारणमाह—स यदेवेति । 'अमुष्मिन्' 'अदः' विप्रकृष्टे काले, 'अश्वत्थे' अवस्थितान् 'मरुतः' 'इन्द्रः' आह्वयत । एवमयमश्वत्थो देवविशां मरुतामाश्रयभूतः अतस्तदीयेषु पत्रेषु अन्नसंस्तुतानामूषाणामुपनिबन्धनं प्रशस्तमित्यर्थः । ऊषपुटेषु क्षेपणकर्तॄन् विधत्ते-विश इति । 'विशः' वैश्या अर्पयेयुः । मरुतां विट्त्वमिन्द्रस्य प्रजात्वात्; अतो मनुष्यविशामपि तत्साजात्येन तदात्मकत्वम् । तेषां वैश्यानामन्नत्वं कृषीवलत्वात् । ऊषपुटानां संख्यां विधत्ते—सप्तदशेति ॥ १७ ॥

तत्रैव यजमानस्य भूम्यवेक्षणं समन्त्रकं विधत्ते—अथेमामिति । ' मात्रे ' सर्वस्य निर्मातृत्वान्मातृभूतायै

---

१-नमो मात्र इति भूमिमवेक्षते । का. श्रौ. सू. १४ । १०६ ।

१३४९

८३

बिभयाञ्चकार यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयमकुरुत न हि माता पुत्रᳫं हिनस्ति न पुत्रो मातरम् ॥ १८ ॥

बृहस्पतिसवो वाऽएष यद्वाजपेयम् । पृथिव्यु हैतस्माद्बिभेति महद्वाऽअयमभूद्योऽभ्यषेचि यद्वै माऽयं नावदृणीयादित्येष उ हास्यै बिभेति यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रᳫं हिनस्ति न पुत्रो मातरम् ॥ १९ ॥

( मु ) अथ हिरण्यमभ्यवरोहति । ( त्य ) अमृतमायुर्हिरण्यं तदमृतऽआयुषि प्रतितिष्ठति ॥ २० ॥

---

याद् ' इति । बृहस्पतिर्ह पृथिव्यै बिभयाञ्चकार–' यद्वै मेयं नावधून्वीत ' इति । तदनयैवैतन्मित्रधेयमकुरुत । नहि माता पुत्रं हिनस्ति, न पुत्रो मातरम् ॥ १८ ॥

बृहस्पतिसवो–वाऽएष यद्वाजपेयम् । पृथिव्यु हैतस्माद्बिभेति । महद्वाऽअयमभूद्–योऽभ्यषेचि, ' यद्वै माऽयं नावदृणीयात् ' इति । एष उ हास्यै बिभेति–' यद्वै मेयं नावधून्वीत ' इति । तदनयैवैतन्मित्रधेयं कुरुते । न हि माता पुत्रं हिनस्ति, न पुत्रो मातरम् ॥ १९ ॥

अथ हिरण्यमभ्यवरोहति । अमृतमायुर्हिरण्यम् । तदमृतऽआयुषि प्रतितिष्ठति ॥ २० ॥

---

' पृथिव्यैः ' नमः ' इति आदरार्थो मन्त्रवाक्याभ्यासः । मन्त्रगतमातृशब्दस्य जननीवाचकत्वं विवक्षितमिति वदन् भूम्यवेक्षणं बृहस्पतिदृष्टान्तमुखेन प्रशंसति–बृहस्पतेरिति । पूर्वं वाजपेययज्ञे बृहस्पतेरभिषिक्ताद् भूमिर्बिभेति स्म । भयकारणमाह–योऽभ्यषेचीति । यद् ' अयम् ' अभिषिक्तः पुरुषो ' महदभूत् ' इत्यन्वयः । ' यद् ' यस्मात् अभिषेकेण महत्त्वगुणवान् ' अयं ' बृहस्पतिः ' मा ' मां भूमिम् ' न अवदृणीयात् ' नावदारयेत् ' इति; ' अतो हेतोः ' मित्रधेयमकुरुत '–इति उत्तरवाक्यशेषसम्बन्धः । तथा ' बृहस्पतिः ' अपि भूम्याः सकाशाद् बिभेति स्म; ' यद् ' यस्मात् ' इयं ' भूमिः ' मा ' माम् अभिषिक्तं ' नावधून्वीत ' न विचालयेत् ' इति ' । ' तत् ' तस्मात् कारणात् ' अनया ' पृथिव्या सह ' एव ' ' एतत् ' निरीक्षणरूपं ' मित्रधेयं ' मैत्रीम् ' अकुरुत ' भूमिरपि सख्यमकरोदित्यर्थः उपक्रमोपसंहाराभ्यामवगम्यते,–उपक्रमे तावदुभयोरपि भीतिरुक्ता, अवदारणपरिहाराय मित्रधेयकरणमिति चोक्तम्; उपसंहारेऽपि ' न पुत्रो मातरम् ' इति मातुः पुत्रकर्तृकोपद्रवस्य निषेधात् ॥ १८ ॥

इदानीमनुष्ठानेऽपि भूम्यवेक्षणं मित्रत्वप्रयोजनमित्याह–बृहस्पतिसवो वा इति । वाजपेयमिति । यदेष बृहस्पतिसवः बृहस्पतेरभिषेको यस्मिन्निति स तथोक्तः । शिष्टं पूर्वपर्यायवद् व्याख्येयम् ॥ १९ ॥

विधत्ते–अथ हिरण्यमिति । ' हिरण्यम् ' ' अभि '–लक्ष्य यूपादवरोहेत्; यतः ' हिरण्यम् ' मरणरहितामायुरात्मकम्, तत्रावरोहणेन तथाविधे ' आयुषि ' एव प्रतिष्ठितो भवतीत्यर्थः ॥ २० ॥

(त्यु) अथाजर्षभस्याजिनमुपस्तृणाति। तदुपरिष्टाद्रुक्मं निदधाति तमभ्यु॰ वरोहतीमां वैव ॥ २१ ॥

( वाथा ) अथास्मा ऽआसन्दीमाहरन्ति । ( न्त्यु ) उपरिसद्यं वा ऽएष जयति यो जयत्यन्तरिक्षसद्यं तदेनमुपर्यासीनमधस्तादिमाः प्रजा उपासते तस्मादस्मा ऽआसन्दीमाहरन्ति ॥ २२ ॥

( न्त्यौ ) औदुम्बरी भवति । ( त्यु ) अन्नं वा ऽऊर्गुदुम्बर ऊर्जोऽन्नाद्य- स्यावरुद्ध्यै तस्मादौदुम्बरी भवति तामग्रेण हविर्धाने जघनेनाहवनीयं निदधाति ॥ २३ ॥

---

अथाजर्षभस्याजिनमुपस्तृणाति । तदुपरिष्टाद्रुक्मं निदधाति । तमभ्यवरोहतीमां वैव ॥ २१ ॥

अथास्माऽआसन्दीमाहरन्ति । उपरिसद्यं वाऽएष जयति--यो जयत्यन्तरिक्षसद्यम् । तदेनमु- पर्यासीनमधस्तादिमाः प्रजा उपासते । तस्मादस्माऽआसन्दीमाहरन्ति ॥ २२ ॥

औदुम्बरी भवति । अन्नं वाऽऊर्गुदुम्बरः । ऊर्जोऽन्नाद्यस्यावरुद्ध्यै । तस्मादौदुम्बरी भवति । तामग्रेण हविर्धाने, जघनेनाहवनीयं निदधाति ॥ २३ ॥

---

हिरण्यनिधानार्थं बस्ताजिनास्तरणं विधत्ते—अथाजेति । तत्रास्यास्तीर्णाजचर्मणः ' उपरिष्टात् ' ' रुक्मं ' निदध्यात् । हिरण्ये अवरोहणं वैकल्पिकमित्याह—इमां वैवेति । रुक्मे वाऽवरोहेदिति । अत एव कात्यायनः— " स रुक्मे बस्तचर्मण्यवरोहति, भूमौ वा "-- । ( का. श्रौ. सू. १४ । १०६ ) इति ॥ २१ ॥

विधत्ते-अथास्मा इति । ' अस्मै ' यूपादवरोहाय । आसन्दीलक्षणमुक्तं कात्यायनेन—" औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीभूतामाहरन्ति "—( का. श्रौ. सू. ७ । २४८ ) इति । ' उपरिसद्यम् '—इत्यस्यायमर्थः— वाजपेयेन यागेन ' उपरिसद्यम् ' उपरिसदनम् ' जयति ' भद्रपीठादेरुपर्यवस्थानं प्राप्नोति । एतदुपपादना- याह—यो जयतीति । ' यः ' यूपारोहणेन ' अन्तरिक्षसद्यम् ' आकाशे उपवेशनं ' जयति ' ' एषः ' इति पूर्वेण सम्बन्धः ॥ २२ ॥

औदुम्बरीति । उदुम्बरनिर्मिता आसन्दी ( श. प. ब्रा. ६ । ७ । १ । १२–१९ ) । अन्नं वा ऊर्गिति । यदेतत् ' ऊर्ग् ' बलकरम् ' अन्नम् ' तदात्मकः ' उदुम्बरः ' वृक्षः, तज्जन्यत्वात् । श्रूयते हि--" देवा वा ऊर्जं-व्यभजन्त, तत उदुम्बर उदतिष्ठत् "—इति । तामग्रेणेति । अस्यार्थः—' हविर्धाने '—इति द्वितीयाद्वि- वचनान्तं पदम्, ते ' अग्रेण ' तयोरग्रप्रदेशम् ' आहवनीयं जघनेन ' सोमाहुत्यधिकरणाग्नेः पश्चिमप्रदेशे ' ताम् ' आसन्दीं निदध्यात् । अत्र सूत्रम्—" उत्तरवेदिमपरेणौदुम्बरीमासन्दीं बस्तचर्मणाऽऽस्तृणातीयं रोहति "— ( का. श्रौ. सू. १४ । १०७ ) इति ॥ २३ ॥

---

१—" चतुर्भिः पादैरुपेता खट्वाकारा "– इति तै. सं. ७ । ५ । ८ । १७ । सा. भाष्ये द्रष्टव्यम् ।

( त्यु ) अथाजर्षभस्याजिनमास्तृणाति । प्रजापतिर्वा ऽएष यदजर्षभ ऽएता वै प्रजापतेः प्रत्यक्षतमां यदजास्तस्मादेतास्त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्ति तत्प्रजापतिमेवैतत्करोति तस्मादजर्षभस्याजिनमास्तृणाति ॥ २४ ॥

स आस्तृणाति । ( ती ) इयं ते राडिति राज्यमेवास्मिन्नेतद्दधात्यथैनमासादयति यन्ताऽसि यमन इति यन्तारमेवैनमेतद्यमनमासां प्रजानां करोति ध्रुवोऽसि धरुणऽ इति ध्रुवमेवैनमेतद्धरुणमस्मिँल्लोके करोति कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वेति साधवे त्वेत्येवैतदाह ॥ २५ ॥

इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् ॥ ५-१-६ ॥ ( २.१. )

इति प्रथम प्रपाठकः समाप्तः ॥ ५ । १ ॥

---

अथाजर्षभस्याजिनमास्तृणाति । प्रजापतिर्वाऽएष यदजर्षभः । एता वै प्रजापतेः प्रत्यक्षतमाम् यदजाः । तस्मादेतास्त्रिः सम्वत्सरस्य विजायमाना द्वौ, त्रीनिति जनयन्ति । तत् प्रजापतिमेवैतत् करोति । तस्मादजर्षभस्याजिनमास्तृणाति ॥ २४ ॥

स आस्तृणाति–"इयं ते राट्"–इति ।राज्यमेवास्मिन्नेतद्दधाति। अथैनमासादयति–"यन्ताऽसि यमनः" इति। यन्तारमेवैनमेतद्यमनमासां प्रजानां करोति। "ध्रुवोऽसि धरुणः"–इति। ध्रुवमेवैनमेतद्धरुणमस्मिँल्लोके करोति। "कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा"–( वा. सं. ९ । २२ ) इति। साधवे त्वेत्येवैतदाह ॥ २५ ॥

---

आसन्द्यामजाजिनेनाच्छादनं विधत्ते–अथाजर्षभस्याजिनमिति । बस्तप्रजापत्योर्बहुप्रजोत्पादकत्वादैकरूप्यं समर्थयते–एता वा इत्यादि । 'एताः अजाः' 'प्रजापतेः' 'प्रत्यक्षतमाम्' अतिशयेन प्रत्यक्षं रूपम्, यस्मादेवं 'तस्मात्' संवत्सरमध्ये 'त्रिः' त्रिवारं 'द्वौ त्रीन्' वा पुत्रान् 'विजायमानाः' सुवाना भवन्ति ॥ २४ ॥

आस्तरणमनूद्य मन्त्रं विधत्ते–स आस्तृणातीति। हे अभिषिच्यमानवाजपेययाजिन्! 'ते' तव 'इयम्' आसन्दी 'राट्' राज्यसाधनम्, पीठादेरुपरिसदनमेव राज्यमित्यर्थः । तस्याभिप्रायमाह–राज्यमिति । यदेतेनास्तरणेन यजमाने राज्यं निहितवान् भवति ॥

विधत्ते–अथैनमिति[1] । 'एनं' यजमानम् अस्यामासन्द्याम् उपवेशयेत् । तन्मन्त्रस्यायमर्थः;–हे यजमान! 'यन्ता' सर्वस्य नियन्ता 'असि', 'यमनः' 'प्रजानां' नियमिता असि, 'ध्रुवः' स्थिरः 'असि', 'धरुणः' धारकः असि । 'कृष्यै' कर्षणाय 'त्वा' 'त्वाम्, उपवेशयामीति शेषः । एवमुत्तरत्रापि योज्यम् । 'क्षेमाय' लब्धवस्तुपरिपालनाय । 'रय्यै' धनाय, 'पोषाय' इति ॥

---

१–यन्त्वेतमस्यामुपवेशयति यंताऽसीति का० श्रौ० सू० १४ । १०८ ।

# अथ द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ।
# द्वितीयाध्याये द्वितीयं ब्राह्मणम् ।



बार्हस्पत्येन चरुणा प्रचरति । तस्यानिष्टऽएव स्विष्टकृद्भवत्यथास्माऽअन्नꣳ सम्भरत्यन्नं वाऽएषऽउज्जयति यो वाजपेयेन यजतेऽन्नपेयꣳ ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्नमुदजैषीत्तदेवास्माऽएतत्सम्भरति ॥ १ ॥

( त्यौ ) औदुम्बरे पात्रे । ( त्रेऽन्नं ) अन्नं वा ऽऊर्गुदुम्बरऽऊर्जोऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरे पात्रे सोऽप एव प्रथमाः सम्भरत्यथ पयोऽथ यथोपस्मारमन्नानि ॥ २ ॥

---

बार्हस्पत्येन चरुणा प्रचरति । तस्यानिष्ट एव स्विष्टकृद्भवति । अथास्माऽअन्नं सम्भरति । अन्नं वाऽएष उज्जयति—यो वाजपेयेन यजते । अन्नपेयं ह वै नामैतद्—यद्वाजपेयम् । तद्यदेवैतदन्नमुदजैषीत्—तदेवास्माऽएतत् सम्भरति ॥ १ ॥

औदुम्बरे पात्रे । अन्नं वाऽऊर्गुदुम्बरः । ऊर्जोऽन्नाद्यस्यावरुद्ध्यै । तस्मादौदुम्बरे पात्रे । सोऽप एव प्रथमाः सम्भरति, अथ पयः, अथ यथोपस्मारमन्नानि ॥ २ ॥

---

मन्त्रं व्याचष्टे--यन्तारमिति । ध्रुवमेवैनमिति । 'अस्मिन् लोके' 'ध्रुवं' सन्तम् 'एव' 'एनं' यजमानम् 'एतत्' एतेन मन्त्रभागेन 'धरुणं' धारकं 'करोति' । कृष्यादिपदानामर्थं सङ्कलय्याह--साधवे त्वेति । श्रेयसे त्वामुपवेशयामीति । अनेन कृष्यादिश्रेयांसि, अन्यान्यपि संगृहीतानि भवन्तीत्यर्थः ॥ २९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे
द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥ ( ५-२-१ ) ॥

इति पञ्चमकाण्डे प्रथमः प्रपाठकः समाप्तः ॥ ५-१ ॥

अथ नैवारचरुप्रचारं विधत्ते—बार्हस्पत्येनेति । प्रधाननैवाराहुतेरनन्तरं कर्त्तव्यं वाजप्रसवीयहोमं विधातुं कालं विधत्ते—तस्यानिष्ट एवेति । 'तस्य' नैवारस्य स्विष्टकृत् 'अनिष्टः' अनिष्टकृद् 'भवति' प्रधानयागादूर्ध्वं स्विष्टकृतः प्रागित्यर्थः । होमार्थमन्नसम्भरणं विधत्ते—अथास्मा इति । 'अस्मै' यजमानाय अभिषेकार्थम् 'अन्नं सम्भरेत्' ॥ १ ॥

अन्नसम्भरणार्थं पात्रविशेषं विधत्ते—औदुम्बरेमिति । तत्र प्रथममपां सम्भरणं विधत्ते—सोऽप एवेति । प्रथमम् 'अपः' जलानि सम्भरेत् । 'अथ पयः' क्षीरं तदनन्तरम् 'यथोपस्मारम्' उपस्मृतिमनतिक्रम्य

---

१-नैवारेण प्रचरति । का. श्रौ. सू. १४।१०।१२-प्राक् । स्विष्टकृत औदुंबरे पात्रेऽप आसिच्य पयश्च । का. श्रौ. सू. १४।१० ।

तद्धैके । सप्तदशान्नानि सम्भरन्ति सप्तदशः प्रजापतिरिति व्वदन्तस्तदु तथा न कुर्यात्प्रजापतेर्न्वेव सर्व्वमन्नमनवरुद्धं क ऽ उ तस्मै मनुष्यो यः सर्व्वमन्नमवरुन्धीत तस्मादु सर्व्वमेवान्नं यथोपस्मारꣳ सम्भरन्नेकमन्नं न सम्भरेत् ॥ ३ ॥

स यन्न सम्भरति । तस्योद्ब्रुवीत तस्य नाश्नीयाद्यावज्जीवं तथा नान्तमेति तथा ज्योग्जीवति स ऽएतस्य सर्वस्यान्नाद्यस्य सम्भृतस्य स्रुवेणोपघातं वाजप्रसवीयानि जुहोति तद्याभ्य ऽएवैतद्देवताभ्यो जुहोति ता ऽअस्मै प्रसुवन्ति ताभिः प्रसूत ऽउज्जयति तस्माद्वाजप्रसवीयानि जुहोति ॥ ४ ॥

---

तद्धैके सप्तदशान्नानि सम्भरन्ति । सप्तदशः प्रजापतिरिति वदन्तः । तदु तथा न कुर्यात् । प्रजापतेर्न्वेव सर्वमन्नमवरुद्धम् । क उ तस्मै मनुष्यो—यः सर्वमन्नमवरुन्धीत । तस्मादु सर्वमेवान्नं यथोपस्मारं सम्भरन्नेकमन्नं न सम्भरेत् ॥ ३ ॥

स यन्न सम्भरति—तस्योद्ब्रुवीत । तस्य नाश्नीयाद् यावज्जीवम् । तथा नान्तमेति । तथा ज्योग्जीवति स एतस्य सर्वस्यान्नाद्यस्य सम्भृतस्य स्रुवेणोपघातं वाजप्रसवीयानि जुहोति । तद् याभ्य

---

'अन्नानि' सम्भरेत्, यानि तदा स्मृतिपथमवतरन्ति तानीत्यर्थः । तत्र ग्राम्यारण्यभेदेन चतुर्दशान्नान्यापस्तम्बेन 'सूत्रितानि, तान्यपि यथोपस्मारपदेन ग्राह्याणि—"तिलमाषा व्रीहियवाः प्रियङ्ग्वणवो गोधूमा वेणुश्यामाक-नीवाराः जर्त्तिलाश्च गवेधुका अरण्यजा मर्कटका विज्ञेया गार्मुतसप्तमाः कुलत्थसप्तमा वा"—( का. श्रौ. सू. १७ । ११ । ३ ) इति । बुद्धिस्थानि यानि वा, तानि सम्भरेत् ॥ २ ॥

'यथोपस्मारमन्नानि संबिभृयात्'—इत्यत्र सङ्ख्याया अनुक्तेः यावन्ति स्मर्यमाणानि तावन्ति सम्भरेदित्यर्थो भवति, तत्र सङ्ख्याविशेषं पूर्वपक्षयति—तद्धैक इति । 'सप्तदश' सप्तदश—संख्याकानि 'अन्नानि' सम्भरन्ति ।' तत्रोपपत्तिमाह—सप्तदशः प्रजापतिरितीति । प्रजापतेः सप्तदशत्वं प्रागुक्तम् ( श.प.९।१।२११।) भाष्ये । तन्मतं निराचष्टे—"तदु तथेति । प्रजापतेः—इति । अस्यायमर्थः,—पूर्वं प्रजापतेरपि सकलमन्नं न वशीकृतम्, इदानीं 'तस्मै' प्रजापत्यर्थं 'मनुष्यः' 'कः' समर्थः ? सर्वान्नावरोधने; तस्माद् यावत्स्मृति सम्भर्त्तव्यानीति । बुद्धिस्थानामपि सर्वेषां सम्भरणे प्राप्ते एकस्य निषेधति—'एकमन्नमिति ॥ ३ ॥

असम्भ्रियमाणान्नविषयं कञ्चिद् विशेषं विधत्ते—स यदिति । 'यत्' अन्नं 'न' सम्भरेत्, 'तस्य'

---

१—सप्तदशान्नान्यावंपाति । यावत्स्मृति वा । का. श्रौ. सू. १४ । ११०—११२ । सप्तदशान्नानि तु व्रीहयः १ यवाः २ मसूराः ३ गोधूमाः ४ मुद्गाः ५ माषाः ६ तिलाः ७ चणकाः ८ अणवः ९ प्रियंगवः १० कोद्रवाः ११ मकुष्ठकाः १२ कलायाः १३ कुलित्थाः १४ मठाः १५ सर्षपाः १६ अतस्यः १७ इति मुकुटः । पा. सू. ५ । २ । ४ । अत्र पातंजलमहाभाष्ये सप्तदशं धान्यं शणाः १७ इत्युक्तम् । सप्तदशसु ग्राम्यारण्ययोर्भेदः; दशग्राम्याणि अत्रैवाग्रे चतुर्दशे कांडे श्रीमंथकर्मणि प्रतिपादितानि । दश ग्राम्याणि धान्यानि भवंति । व्रीहियवास्तिलमाषा अणुप्रियंगवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्चेति । शेषान्यारण्यानि ।

२—एकवर्जम् । का श्रौ. सू. १४ । ११३ ।

स जुहोति । वाजस्येमं प्रसवः सुषुवेऽग्रे सोमꣳ राजानमोषधीष्वप्सु ॥
ता ऽअस्मभ्यं मधुमतीर्भवन्तु व्वयꣳ राष्ट्रे जागृयाम पुरोहिताः स्वाहा ॥ ५॥

व्वाजस्येमाम्।(म्प्र)प्रसवः शिश्रिये दिवमिमा च व्विश्वा भुवनानि सम्म्राट्॥
अदित्सन्तं दापयति प्रजानन्त्स नो रयिꣳ सर्व्ववीरं नियच्छतु स्वाहा ॥६॥

---

एवैतद् देवताभ्यो जुहोति । ताऽअस्मै प्रसुवन्ति । ताभि प्रसूत उज्जयति । तस्माद्वाजप्रसवीयानि जुहोति ॥ ४ ॥

स जुहोति–" वाजस्येमं प्रसवः सुषुवेऽग्रे सोमं राजानमोषधीष्वप्सु । ता अस्मभ्यं मधुमतीर्भवन्तु । वयं राष्ट्रे जागृयाम पुरोहिताः स्वाहा" । ( १ ) ( वा. सं. ९ । २३) ॥५॥

"वाजस्येमां प्रसवः शिश्रिये दिवम्, इमा च विश्वा भुवनानि सम्म्राट्।अदित्सन्तं दापयति प्रजानन् स नो रयिं सर्ववीरं नियच्छतु स्वाहा "।(२) ( वा. सं.९।२४ ) ॥६॥

---

'उद्बुवीत ' न सम्भृतमित्युच्चैः तन्नाम ब्रूयात् यथा असंम्भृतस्य अन्नस्य यावज्जीवनमभोजनेन ' अन्तं ' विनाशं ' न एति, ' ' ज्योक्' चिरकालं ' जीवति । ' भोक्तव्यस्य सर्वस्य भोगे सति विनाशो भवति, अतस्तदेकमवशिष्य भुञ्जीतेति तात्पर्यम् ॥ विधत्ते–स एतस्येति । मिलितस्य ' एतस्य ' ' सर्वस्य ' अन्नस्य एकदेशं ' स्रुवेण ' ' उपघातम् ' उपहत्योपहत्य गृहीत्वा ' वाजप्रसवीयानि जुहोति ' वाजप्रसवशब्दयुक्तमन्त्रकरणकहोमान् कुर्यादित्यर्थः । तद्याभ्य इति । मान्त्रवर्णिकीभ्यो ' याभ्यः ' अष्टादिदेवताभ्यो हूयते तदैव । ' ताः ' ' अस्मै ' यजमानाय एतद्यागफलभूतमन्नमवरोद्धुं ' प्रसुवन्ति ' अनुजानन्ति, ताभिरनुज्ञातः पश्चात् स्वाधीनं करोतीत्यर्थः ॥ ४ ॥

होममनूद्य मन्त्रान् विधत्ते–स जुहोति वाजस्येममिति । सर्वत्र ' स्वाहा '–शब्दो हवनलिङ्गम् । प्रथमस्यायमर्थः–' अग्रे ' पूर्वं ' वाजस्य ' अन्नस्य ' प्रसवः ' उत्पादकः परमेश्वरः ' ओषधीषु ' ' अप्सु ' च सारभूतम् ' इमं सोमं सोमवल्लीरूपं राजानं ' ' सुषुवे ' उत्पादयामास, 'ताः' ओषधय आपश्च 'अस्मभ्यम्' अस्मदर्थं ' मधुमतीः ' माधुर्योपेता भवन्तु । ' वयम् ' अपि अस्मिन् ' राष्ट्रे ' ' पुरोहिताः ' यागानुष्ठानादौ पुरोगामिनो ' जागृयाम ' जागरूका भूयास्मेति ॥ ५ ॥

अथ द्वितीयः;–वाजस्येमामिति । ' वाजस्य प्रसवः ' ईश्वरः ' इमां ' भूमिं ' दिवम् ' इमानि चान्यानि सर्वाणि ' भुवनानि ' ' शिश्रिये ' आश्रितवान् । स च ' सम्राट् ' सर्वेषां भुवनानां भूत्वा ' अदित्सन्तं ' दातुमनिच्छन्तं भोग्यं ' प्रजानन् ' ' दापयति ' धनम् । ततः सः ' ' नः ' अस्मभ्यं ' सर्ववीरं ' पुत्रादियुक्तं 'रयिं' धनं ' नियच्छतु ' ददातु ॥ ६ ॥

---

१–अभोजनं तस्योच्छ्वासात् । का. श्रौ. सू. १४ । ११४ । २–स्रुवेण सम्भृज्जुहोति वाजस्येममिति प्रतिमंत्रम् । का. श्रौ. सू. १४ । ११५ ।

वाजस्य नु । प्रसव आबभूवेमा च विश्वा भुवनानि सर्व्वतः ॥
सनेमि राजा परियाति विद्वान्प्रजां पुष्टिं वर्द्धयमानोऽअस्मे स्वाहा ॥ ७ ॥

सोमꣳ राजानम् । (मु) अवसेऽग्निमन्वारभामहे । आदित्यान्विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिꣳ स्वाहा ॥ ८ ॥

(हाऽर्य) अर्यमणं बृहस्पतिम् । (मि) इन्द्रं दानाय चोदय । वाचं विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनꣳ स्वाहा ॥ ९ ॥

(हाऽग्ने) अग्नेऽअच्छा । वदेह नः प्रति नः सुमना भव । प्र नो यच्छ सहस्रजित्त्वꣳ हि धनदा असि स्वाहा ॥ १० ॥

---

"वाजस्य नु प्रसव आबभूव, इमा च विश्वा भुवनानि सर्वतः । सनेमि राजा परियाति विद्वान् प्रजां पुष्टिं वर्द्धयमानोऽअस्मे स्वाहा" (३) (वा० सं० ९।२५) ॥ ७ ॥

"सोमं राजानमवसेऽग्निमन्वारभामहे । आदित्यान्, विष्णुम्, सूर्यम्, ब्रह्माणं च बृहस्पतिम्, स्वाहा" (४) (वा. सं. ९।२६) ॥ ८ ॥

"अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय । वाचं विष्णुं सरस्वतीं सवितारं च वाजिनं स्वाहा" (५) (वा. सं. ९।२७) ॥ ९ ॥

"अग्नेऽ अच्छा वदेह नः प्रति नः सुमना भव । प्र नो यच्छ सहस्रजित; त्वं हि धनदा असि स्वाहा" (६) (वा. सं. ९।२८) ॥ १० ॥

---

अथ तृतीयः;–वाजस्य न्विति । 'वाजस्य प्रसवः' 'नु' खलु 'इमा' इमानि 'विश्वा' सर्वाणि 'भुवनानि' सर्वतः 'आबभूव' व्याप्नोत् । 'सनेमि'–इति पुराणवचनम् (निरु० ३।२८।४) इति । 'सः' चिरन्तनो 'राजा' 'परियाति' सर्वतः सञ्चरति । 'विद्वान्' अनुष्ठीयमानं कर्म प्रजानन् । 'अस्मे' अस्मदर्थं 'प्रजां' 'पुष्टिं' च 'वर्द्धयमानः' परियातीति सम्बन्धः ॥ ७ ॥

अथ चतुर्थः;–सोममिति । वयं सोमादीन् देवान् 'अवसे' रक्षणाय तर्पणाय वा 'अन्वारभामहे' ते सर्वे अनुगृह्णन्त्विति वाक्यशेषः ॥ ८ ॥

अथ पञ्चमः;–अर्यमणमिति । हे वाजस्य प्रसव त्वमर्यमादीन् 'दानाय चोदय' अस्मभ्यं धनदानार्थं प्रेरय । वाक्सरस्वत्योरीषद्भेदो द्रष्टव्यः ॥ ९ ॥

अथ षष्ठः;–अग्ने अच्छेति । हे 'अग्ने !' 'इह' अस्मिन् कर्मणि 'नः' अस्माकम् 'अच्छ' आभिमुख्येन 'वद' हित कथय । 'नः' अस्मान् प्रति 'सुमनाः' करुणार्द्रचित्तो भव । हे सहस्रजित् ! सहस्रस्य धनस्य जेतः 'हि' हेतौ । यतः 'त्वं' स्वभावतो 'धनदा असि' अतः 'नः' अस्मभ्यं 'प्रयच्छ' धनमिति शेष ॥ १० ॥

प्र नः। (नो) यच्छत्वर्यमा प्र पूषा प्रबृहस्पतिः। प्र वाग्देवी ददातु नः स्वाहेति ॥ ११ ॥

(त्यु) अथैनं परिशिष्टेनाभिषिञ्चति। (त्य) अन्नाद्येनैवैनमेतदभिषिञ्चत्यन्नाद्यमेवास्मिन्नेतद्दधाति तस्मादेनं परिशिष्टेनाभिषिञ्चति ॥ १२ ॥

सोऽभिषिञ्चति। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिति देवहस्तैरेवैनमेतदभिषिञ्चति सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामीति वाग्वै सरस्वती तदेनं वाच ऽएव यन्तुर्यन्त्रिये दधाति १३

तदु हैकऽआहुः। (विंु) विश्वेषां त्वा देवानां यन्तुर्यन्त्रिये दधामीति सर्व्वं वै विश्वे देवास्तदेनꣳ सर्व्वस्यैव यन्तुर्यन्त्रिये दधाति तदु तथा न ब्रूयात्सरस्वत्यै त्वा वाचो यन्तुर्यन्त्रिये दधामीत्येव ब्रूयाद्वाग्वै सरस्वती

---

"प्र नो यच्छत्वर्यमा, प्र पूषा, प्र बृहस्पतिः। प्र वाग्देवी ददातु नः स्वाहा"–(७) (वा. सं. ९। २९) इति ॥ ११ ॥

अथैनं परिशिष्टेनाभिषिञ्चति। अन्नाद्येनैवैनमेतदभिषिञ्चति। अन्नाद्यमेवास्मिन्नेतद्दधाति। तस्मादेनं परिशिष्टेनाभिषिञ्चति ॥ १२ ॥

सोऽभिषिञ्चति–"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्"–इति। देवहस्तैरेवैनमेतदभिषिञ्चति। "सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि"–इति। वाग्वै सरस्वती। तदेनं वाच एव यन्तुर्यन्त्रिये दधाति ॥ १३ ॥

तदु हैकऽआहुः–विश्वेषां त्वा देवानां यन्तुर्यन्त्रिये दधामि–इति। सर्वं वै विश्वे देवाः। तदेनं सर्वस्यैव यन्तुर्यन्त्रिये दधाति। तदु तथा न ब्रूयात्। सरस्वत्यै त्वा वाचो यन्तुर्यन्त्रिये दधामि–

---

अथ सप्तमः;–प्र न इति। अर्यमादयो 'नः' अस्मभ्यं धनं प्रयच्छन्तु। पूषादिदेवतान्तरवाचकपदेऽपि क्रियापदस्यानुषङ्गं द्योतयितुं पृथक् पृथक् प्रोपसर्गप्रयोगः, 'प्र' 'ददातु' प्रकर्षेण प्रयच्छत्विति ॥ ११ ॥

हुतशेषस्यान्नस्य विनियोगं दर्शयति–अथैनमिति। अथ 'एनं' सुन्वन्तं यजमानं 'परिशिष्टेन' अन्नेन अभिषिञ्चेत् हुतशेषाभिषेकेण यजमाने अन्नमेव निहितवान् भवेति ॥ १२ ॥

अभिषेकमनूद्य मन्त्रं विधत्ते–स इति। देवस्य त्वेति। व्याख्यातः। 'सरस्वत्यै' षष्ठ्यर्थे चतुर्थी (पा.सू. २। ३। ६२ वा.) सरस्वत्याः 'वाचः' 'यन्तुः' अन्तर्यामिणश्च 'यन्त्रिये' नियमे अभ्यनुज्ञायां 'निदधामि' इति ॥ १३ ॥

अत्र तु 'सरस्वत्यै वाचः' इत्यस्य स्थाने 'सरस्वत्यै त्वा वाचः' इति युष्मच्छब्दं प्रक्षिप्य प्रयोक्तव्यमिति विधातुं पूर्वपक्षं सोपपत्तिकमुद्भावयति–तदु हैक इति। केचिच्छाखिनः 'आहुः' किमिति। 'सरस्वत्यै

---

१–शेषेणाभिषिंचति यजमानं देवस्य त्वेति। का० श्रौ० सू० १४।११६।

तुदेनं वाच ऽएव यन्तुर्यन्त्रिये दधाति बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चा- म्यसाविति नाम गृह्णाति तद्बृहस्पतेरेवैनमेतत्सायुज्यꣳ सलोकतां गमयति ॥ १४ ॥

( त्यु ) अथाह । सम्राडयमसौ सम्राडयमसाविति निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयत्ययं महावीर्यो योऽभ्यषेचीत्ययं युष्माकैकोऽभूत्तं गोपा- यतेत्येवैतदाह त्रिष्कृत्व ऽआह त्रिवृद्धि यज्ञः ॥ १५ ॥

( ज्ञोऽथो ) अथोज्जितीः । (जुं) जुहोति वा वाचयति वा यदि जुहोति यदि वाचयति समान ऽएव बन्धुः ॥ १६ ॥

---

इत्येव ब्रूयात् । वाग्वै सरस्वती। तदेनं वाच एव यन्तुर्यन्त्रिये दधाति । "बृहस्पतेष्ट्वा साम्राज्ये- नाभिषिञ्चाम्यसौ "–( वा. सं ९।३० ) इति । नाम गृह्णाति । तद् बृहस्पतेरेवैनमेतत्–सायुज्यं सलोकतां गमयति ॥ १४ ॥

अथाह–' सम्राडयमसौ, सम्राडयमसौ ' इति । निवेदितमेवैनमेतत्सन्तं देवेभ्यो निवेदयति । ' अयं महावीर्यो योऽभ्यषेचि ' इति । अयं युष्माकैकोऽभूत्–तं गोपायतेत्येवैतदाह । त्रिष्कृत्व आह त्रिवृद्धि यज्ञः ॥ १५ ॥

अथोज्जितीर्जुहोति वा वाचयति वा । यदि जुहोति, यदि वाचयति–समान एव बन्धुः ॥ १६॥

---

वाचः ' इत्यस्य स्थाने ' विश्वेषां त्वा देवानाम् ' इति प्रक्षिप्य ' यन्तुः ' इत्यादि पूर्ववद्वक्तव्यमिति स्वमतं दर्शयितुमुक्तम् । परमतं निराकरोति । तदु तथेति । अत एव कात्यायनः–"सरस्वत्यै वाचः स्थाने विश्वेषां त्वा देवानां, सरस्वत्यै त्वेति वा " ( का. श्रौ. सू. १४ । ११७ । ११८ । ) इति । ' बृहस्पतेः ' इत्यादिः पूर्वोक्तमन्त्रशेषः । मन्त्रान्ते असावित्यस्य स्थाने यजमानस्य नाम सम्बुद्ध्यन्तं गृह्णीयात् ॥ १४ ॥

आवेदनं विधत्ते–अथाह सम्राडिति । अत्रापि असावित्यस्य स्थाने प्रथमान्तं यजमाननाम ग्रहीतव्यम् । एतन्नामाऽयमभिषिक्तः सम्राट् महावीर्यो जात इति वदेत् । आवेदनवाक्यावृत्तेरभिप्रायमाह–निवेदितमिति । एवं नामग्रहोक्त्या प्रथमं मनुष्येभ्यो ' निवेदितमेव सन्तम् ' ' एनम् ' तदेतेन द्वितीयेन सम्राडयमसावित्यनेन ' देवेभ्यः ' ' निवेदयति ' ज्ञापयति । किमिति । ' यः ' यजमानः ' अभ्यषेचि ' ' अयं महावीर्यः ' सम्पन्न इति । वाक्यस्य पर्यवसितमर्थमाह–अयं युष्माकेति । ' अयम् ' अभिषिक्तो यजमानः युष्माकं मध्ये 'एकः' ' अभूत् ' देवत्वं प्राप्तवानित्यर्थः, हे देवा । तं गोपायतेति । अत्र सूत्रम्–" सम्राडयमसावित्याह नामग्राहं त्रिस्त्रिः " ( का. श्रौ. सू १४ । ११९ ) इति ॥ तदेतत् त्रित्वं विधत्ते–त्रिष्कृत्व इति । यज्ञस्य त्रिवृत्त्वं सवनत्रयात्मकत्वात् ॥ १५ ॥

विधत्ते–अथोज्जितीरिति । उज्जयलिङ्गयुक्तमन्त्रकरणिका आहुतय उज्जितयः, ता जुहुयात् । यजमानस्य तन्मन्त्रेण वाचनं वा कार्यमित्यर्थः । ' बन्धुः ' हवनवाचनस्तावकार्थवादवाक्यशेषः, आम्नास्यमानः समान इत्यर्थः ॥ १६ ॥

---

१–अग्निरेकाक्षरेणेत्युवाकं द्वादशवत् कृत्वा नैवारस्विष्टकृदिडं करोति माहेन्द्रादि च । का० श्रौ० सू० १४ । १२० ।

स वाचयति । ( त्य ) अग्निरेकाक्षरेण प्राणमुदजयत्तमुज्जेषं प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत्तमुज्जेषमिति तद्यदेवैताभिरेता देवता ऽउदजयंस्तदेवैषु ऽएताभिरुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत्प्रजापतिमुज्जयति ॥ १७ ॥

( त्य ) अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाहुती ऽएतत्कर्म क्रियत ऽएष वै प्रजापतिर्य्यऽएष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता ऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते तन्मध्यत ऽएवैतत्प्रजापतिमुज्जयति तस्मादन्तरेणाहुती ऽएतत्कर्म क्रियत ऽआश्राव्याहाग्निꣳ स्विष्टकृतं यजेति वषट्कृते जुहोति ॥ १८ ॥

---

स वाचयति–" अग्निरेकाक्षरेण प्राणमुदजयत्–तमुज्जेषम् प्रजापतिः सप्तदशाक्षरेण सप्तदशं स्तोममुदजयत्–तमुज्जेषम् "–( वा० सं० ९ । ३१–३४ ) इति । तद्यदेवैताभिरेता देवता उदजयन्–तदेवैष एताभिरुज्जयति । सप्तदश भवन्ति । सप्तदशो वै प्रजापतिः । तत् प्रजापतिमुज्जयति ॥ १७ ॥

अथाह–' अग्नये स्विष्टकृतेऽनुब्रूहि ' इति । तद्यदन्तरेणाहुती ऽएतत् कर्म क्रियते । एष वै प्रजापतिः–य एष यज्ञस्तायते। यस्मादिमाः प्रजाः प्रजाताः–एतम्वेवाप्येतर्ह्यनुप्रजायन्ते । तन्मध्यत एवैतत् प्रजापतिमुज्जयति । तस्मादन्तरेणाहुतीऽएतत् कर्म क्रियते । आश्राव्याह–'अग्निं स्विष्टकृतं यज'–इति । वषट्कृते जुहोति ॥ १८ ॥

---

वाचनमनूद्य मन्त्रान् विधत्ते–स वाचयतीति । संहितायाम् " अग्निरेकाक्षरेण "–इत्यनुवाके सप्तदश मन्त्राः पठिताः; अत्र अग्निरेकाक्षरेणेति प्रजापतिः सप्तदशाक्षरेणेत्याद्यन्तयोर्ग्रहणेन सप्तदश मन्त्राः सर्वेऽपि गृह्यन्त इत्यभिप्रायः । तेषां संग्रहेणायमर्थः; ओश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः स एष सप्तदशः प्रजापतिः "- इति ( तै. सं. १।६।११।२।३ ) ( श. प. ब्रा. १। ५।२।१६।१७ ) । सप्तदशाक्षराणि विद्यन्ते । तत्राग्न्यादिसप्तदश देवाः एकाक्षरप्रभृत्येकैकाक्षरवृद्धियुक्तैः प्राणमनुष्यादीन् जितवन्तः । तानग्न्यादिभिर्जितान् प्राणनरादीनहमिदानीम् 'उज्जेषम्' उज्जीयासम् । अश्विदेवतादिभिर्मन्त्राक्षरसंख्यानुसारेण द्विपान्मनुष्यत्रिलोकादेर्जयो विज्ञेयः । त्रिवृत्स्तोमगतानामृचां नवसंख्योपेतत्वान्नवाक्षरेण तज्जयो द्रष्टव्यः । त्रयोदशस्तोमादावपि तिसृणां स्तोत्रियाणामृचामावृत्तिविशेषेण तत्संख्या द्रष्टव्या । इममेवं तात्पर्यार्थं प्रतिपादयति–तद्यदेवैताभिरिति । ' एताभिः ' उज्जितिभिः । तेषां मन्त्राणां सप्तदशसंख्यामनूद्य प्राजापत्यात्मना स्तौति–सप्तदशेति ॥ १७ ॥

नैवारहविषः प्रधानस्विष्टकृतोर्मध्येऽनुष्ठेयं कर्मजातमुपदर्श्य चोदकप्राप्तं स्विष्टकृद्यागादिकमनुसन्धत्ते–अथाहेत्यादि । " अग्नये स्विष्टकृतेऽनुब्रूहि "–' इति ' अध्वर्युर्वदेत् । ' ' अनुब्रूहि ' अनुवाक्यां पठेत्यर्थः ।

(त्य) अथेडामादधाति । (त्यु) उपहूतायामिडायामप ऽउपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तꣳ स्तोत्राय प्रमीवति स ऽउपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥ १९ ॥

तद्धैके । (क ऽ) एतत्कृत्वाऽथैतत्कुर्वन्ति तदु तथा न कुर्यादात्मा वै स्तोत्रं प्रजा शस्त्रमेतस्माद्ध स यजमानं प्रणाशयति स जिह्मऽएति स ह्वलति तस्मादेतदेव कृत्वाऽथैतत्कुर्यात् ॥ २० ॥

---

अथेडामादधाति । उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति । माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति । तं स्तोत्राय प्रमीवति । स उपावरोहति । सोऽन्ते स्तोत्रस्य भवति; अन्ते शस्त्रस्य ॥ १९ ॥

तद्धैके एतत्कृत्वाऽथैतत्कुर्वन्ति । तदु तथा न कुर्यात् । आत्मा वै स्तोत्रम्, प्रजा शस्त्रम् । एतस्माद्ध स यजमानं प्रणाशयति । स जिह्म एति । स ह्वलति । तस्मादेतदेव कृत्वाऽथैतत् कुर्यात् ॥ २० ॥

---

अत्र सम्बोध्यो होता । तयदन्तरेणेत्यस्यायमर्थः—नैवारहविः स्विष्टकृद्यागाद्वयोर्मध्ये क्रियमाणेन अन्नसम्भरणवाजप्रसवीयहोमादिना यज्ञरूपं प्रजापतिं जितवान् भवतीति । अनुवचनानन्तरमाश्रावणादिकं प्रकृतिवत् स्विष्टकृतः कार्यमित्यनुक्तमति–आश्राव्येति । 'वषट्कृते' होत्रा याज्यान्ते वषट्कारे प्रयुक्ते सति 'जुहोति' सौविष्टकृतं हविः ॥ १८ ॥

अथ स्विष्टकृदनन्तरमावीनि कर्माण्याह—अथेडामिति । माहेन्द्रग्रहणानन्तरं तदीयं पृष्ठं 'स्तोत्रम्' 'उपाकरोति' आरम्भयेदित्यर्थः । 'तम्' आसन्द्यामधिष्ठितमभिषिक्तं यजमानं 'स्तोत्राय' 'प्रमीवति' ज्ञापयेत्, आह्वयेदित्यर्थः । अत्र सूत्रम्—"अवरुह्य गच्छति स्तोत्राय प्रहितः" इति ( का. श्रौ. सू. १४।१२१ ) । 'सः' सुन्वन् 'उपावरोहति' आसन्द्याः सकाशात् 'सः' एवं स्तोत्रशस्त्रयोः 'अन्ते' समीपे स्थितो भवेत् ॥ १९ ॥

अत्र केचिदुज्जितिवाचनानन्तरं माहेन्द्रग्रहणं स्तोत्रशस्त्रे च कृत्वा स्विष्टकृदादिकं यजमानस्य पश्चादवरोहणमिच्छन्ति तद् दूषयितुमनुवदति—तद्धैके इति । 'एतत्' माहेन्द्रग्रहणादि होमान्तं तत् कर्म कृत्वा 'अथ' अनन्तरम् 'एतत्' उक्तं स्विष्टकृदिडोपह्वानान्तं कर्म कुर्वन्ति । अत एव सूत्रकृता शाखान्तरीयं पक्षमङ्गीकृत्योक्तम् "उज्जितिभ्यो वोत्तरो माहेन्द्रः"–( का. श्रौ. सू. १४।१२२ । ) इति ॥

तद्दूषयति—तदु तथेति । यद्यासन्द्यामासीन एव यजमाने सत्येव आत्मप्रजारूपे स्तोत्रशस्त्रे कुर्यात्, तर्हि 'यजमानम्' आत्मप्रजहीनं कुर्यात्; असान्निध्यकरणेनेत्यर्थः । 'जिह्मः' कुटिलो गच्छति 'ह्वलति' यज्ञपथाद् भ्रश्यति ॥ २० ॥

---

१–माहेन्द्रग्रहानन्तरम् । इति क. पा. ।

(द) अथेडामादधाति । (त्यु) उपहूतायामिडायामप ऽउपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तꣳ स्तोत्राय प्रमीवति स ऽ उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥ २१ ॥

इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् ॥ (५.२.१) (२-२) ॥

पूर्णाहुतिं जुहोति । सर्व्वं वै पूर्णꣳ सर्व्वं परिगृह्य सूया ऽइति तस्यां वरं ददाति सर्व्वं वै वरः सर्व्वं परिगृह्य सूया ऽइति स यदि कामयेत जुहुयादेतां यद्यु कामयेतापि नाद्रियेत ॥ १ ॥

---

अथेडामादधाति । उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति । माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति । तं स्तोत्राय प्रमीवति । स उपावरोहति । सोऽन्ते स्तोत्रस्य भवति, अन्ते शस्त्रस्य ॥ २१ ॥

इति वाजपेययज्ञाधिकारः ।

अथ राजसूययज्ञः ।

पूर्णाहुतिं जुहोति । सर्वं वै पूर्णम् । सर्वं परिगृह्य सूयाऽइति । तस्यां वरं ददाति । सर्वं वै वरः । सर्वं परिगृह्य सूयाऽइति । स यदि कामयेत-जुहुयादेताम् । यद्यु कामयेत -अपि नाद्रियेत ॥ १ ॥

---

अथ उक्त एव पक्षः श्रेयानिति दर्शयितुं पुनः पठति-अथेडामित्यादि । पूर्ववद् ॥ २१ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे द्वितीयाऽध्याये द्वितीयं ब्राह्मणम् ॥ (५-२-२) ॥

ब्राह्मणक्षत्रियोभयकर्तृकसंस्थारूपो वाजपेय उक्तः, अथैकतरकर्तृको विकृतिभूतो राजसूयो विधास्यते । तत्र अकृतवाजपेयस्य राजन्यस्यैव राजसूयेऽधिकारः, न तु तेनेष्टवतः; राजफलादपि साम्राज्यफलस्यातिशयितत्वेन उत्तमफलसाधनयागानन्तरमवरफलहेतुकतुकरणस्यायुक्तत्वात् । अत एव कात्यायनः--" राज्ञो राजसूयोऽनिष्टिनो वाजपेयेन "-(का. श्रौ. सू. १५ । १ । १ । ) इति । इष्टि-पशु-सोम-दर्वीहोमैः शतप्रधानो राजसूयः । तत्र " श्वोभूतेऽनुमत्यै पुरोडाशमष्टाकपालम् "-इत्यादिना विहिताः इष्टयः, " अथ ऐन्द्रीं विचित्रगर्भामदित्या आलभते "-इत्यादिना विहिताः पशवः, पवित्राभिषेचनीय-दशपेय-केशवपनीय-व्युष्टि-द्विरात्र-क्षत्रधृतिसंज्ञकाः सप्त सोमयागाः पञ्चवातीयादयो दर्वीहोमाः । तत्र पवित्रनामके प्रथमसोमयागे प्रकृतिसमानत्वेन वक्तव्याभावात् तं परित्यज्य तदवसाने कर्तव्यं पूर्णाहुतिप्रभृति वैशेषिकमुत्तरतन्त्रमभिधीयते (तै. सं. १ । ८ । १९) ॥ पूर्णाहुतेः कालं कात्यायनः सूत्रयामास-" पवित्रश्चतुर्दीक्षः, सहस्रदक्षिणः, माघीपक्षयजनीये दीक्षा, तदन्ते पूर्णाहुतिर्गृहेष्विच्छतः " ( का. श्रौ. सू. १५ ।

---

१-इष्टिसोमपशवो मिश्रतंत्राः कालभेदात् । का. श्रौ. सू. १५ । ३ ।

( त्राथ ) अथ श्वोभूते । ( तेऽनु ) अनुमत्यै हविरष्टाकपालं पुरोडाशं निर्व्वपति स ये जघनेन शम्यां पिष्यमाणानामवशीयन्ते पिष्टानि वा तण्डुला वा तान्त्स्रुवे सार्द्धँ संव्वपत्यन्वाहार्यपचनादुल्मुकमाददते तेन दक्षिणा यन्ति स यत्र स्वकृतं व्विरिणं व्विन्दति श्वभ्रप्रदरं वा ॥ २ ॥

तदग्निँ समाधाय जुहोति । ( त्ये ) एष ते निर्ऋते भागस्तं जुषस्व

( १ ) अथ श्वोभूतेऽनुमत्यै हविरष्टाकपालं पुरोडाशं निर्वपति । स ये जघनेन शम्यां पिष्यमाणानामवशीयन्ते–पिष्टानि वा तण्डुला वा—तान् स्रुवे सार्द्धं संवपति । अन्वाहार्यपचनादुल्मुकमाददते । तेन दक्षिणा यन्ति । स यत्र स्वकृतं वेरिणं विन्दति, श्वभ्रप्रदरं वा ॥ २ ॥

तदग्निं समाधाय जुहोति–" एष ते निर्ऋते भागस्तं जुषस्व स्वाहा "–( वा. सं. ९।३५ )

---

४–७ ) इति । तद्विधत्ते–पूर्णेति । आज्यपूर्णया जुह्वा हूयत इति पूर्णाहुतिः । सा अनाम्नातमन्त्रत्वात् प्राजापत्या " यत् तूष्णीं तत् प्राजापत्यम् "–( श. प. ६ । २ । २ । २० ) इति श्रुतेः । तां जुहुयादित्यर्थः । पूर्णाहुतिकरणस्य कामनाधीनत्वं विवृणोति–सर्वमिति । पूर्णपदेन सर्वमुच्यते । ' सर्वं ' जगत् ' परिगृह्य ' स्वाधीनं कृत्वा, पश्चाद्राजसूयानुष्ठानेन ' सूयै ' अभिषिक्तो भूयासम् ' इति ' अभिप्रायेण पूर्णाहुतिं कुर्यादित्यर्थः ॥ तस्यां दक्षिणां विधत्ते–तस्यामिति । ' तस्यो ' हुतायामित्यर्थः । पूर्णाहुतेरितराङ्गवद् अवश्य कर्त्तव्यत्वे प्राप्ते कामनानुसारेणैव करणीयत्वमाह–स यदि कामयेतेति । पूर्णाहुतिकरणेच्छायां सत्यां तदनुष्ठानं विपर्यये तद्विपर्यय इत्यर्थः ॥ १ ॥

आरम्भणीयस्थानीयात् पवित्राख्यादग्निष्टोमादह्नः परस्मिन्नहनि कर्त्तव्यं विधत्ते–अथ श्वोभूत इति । सूत्रकृता पवित्रादनन्तरमुक्तम्–" श्वः प्रभृत्यन्वहं पञ्चोत्तराणि हवीँष्यष्टाकपालोऽनुमत्यै "–( का. श्रौ. सू. १५ । ८ । ९ ) इति[2] । यागानुष्ठानस्याधारत्वेनानुज्ञाकरणात् अनुमतिः पृथिवी; ' इयं वा अनुमतिः '–इति ह्याम्नास्यते । तस्यै अष्टसु कपालेषु संस्कृतं पुरोडाशात्मकं हविर्निर्वपेत् ॥ अत्रोत्तरं तन्त्रं सूत्रे संगृहीतम्–" शम्यायाः पश्चात् हविष्यमन्नं स्रुवे कृत्वा दक्षिणाग्न्युल्मुकमादाय दक्षिणा गत्वा स्वयं प्रदीर्णे इरिणे वाऽग्नौ जुहोत्येष ते निर्ऋत इति, अनपेक्षमेत्यानुमतस्य संवपनादि करोति, वासो देयम् "–( का. श्रौ. सू. १५ । १०-१२ ) इति । तत्सर्वं क्रमेण विधत्ते–स ये जघनेनेत्यादिना, " श्वोभूत आग्नावैष्णवम् "–इत्यतः प्राक्तनेन । ' शम्यां जघनेन ' "एनपा द्वितीया" ( पा. सू. २।३ । ३१ ) इति द्वितीया । पश्चिमायां दिशि दृषदमभ्याधातुमधःस्थापितायाः शम्यायाः पश्चाद् ' ये ' तण्डुलपिष्टलेशा ' अवशीयन्ते ' अधः पतन्ति, 'तान्' स्रुवेण सोऽध्वर्युः 'सार्द्धं' सह संवपेत् ॥ उल्मुकेन सार्द्धं दक्षिणदिग्गमनं विधत्ते–अन्वाहार्येति । तस्योल्मुकस्य स्थापनाय देशविशेषं विधत्ते–स यत्रेति । ' इरिणम् ' ऊषरक्षेत्रम्, तच्च ' स्वकृतं ' स्वतः सिद्धम्, न तु यतः कुतश्चिदानीयोषाः प्रक्षिप्ताः; तस्मिन् ' श्वभ्रप्रदरे ' गर्ताकारेण विदीर्णप्रदेशे ' वा ' ॥ २ ॥

उल्मुकाग्निमाधाय, स्रुवपूरितेन द्रव्येण जुहुयात् । तत्र मन्त्रं विधत्ते–एष त इति । ' निर्ऋति ' पापदेवते !

---

१–वरदक्षिणा । का. श्रौ. सू. १५।७ २–पञ्चोत्तराणीत्युत्तरम्, " हवीं॰ षि " इति विशेषः ॥

स्वाहेतीयं वै निर्ऋतिः सा यं पाप्मना गृह्णाति तं निर्ऋत्या गृह्णाति तद्य-देवास्या ऽअत्र नैर्ऋतुꣳ रूपं तदेवैतच्छमयति तथो हैनꣳ सूयमानं निर्ऋ-तिर्न गृह्णात्यथ यत्स्वकृते वेरिणे जुहोति श्वभ्रप्रदरे वैतदु ह्यस्यै निर्ऋति-गृहीतम् ॥ ३ ॥

( म ) अथाप्रतीक्षं पुनरायन्ति । ( न्त्य ) अथानुमत्या ऽअष्टाकपालेन पुरोडाशेन प्रचरतीयं वा अनुमतिः स यस्तत्कर्म शक्नोति कर्तुं यच्चि-कीर्षतीयꣳ हास्मै तदनुमन्यते तदिमामेवैतत्प्रीणात्यनया ऽनुमत्या ऽनुमतः सूयाऽइति ॥ ४ ॥

---

इति । इयं वै निर्ऋतिः । सा यं पाप्मना गृह्णाति-तं निर्ऋत्या गृह्णाति । तद्यदेवास्या अत्र नैर्ऋतं रूपम्-तदेवैतच्छमयति । तथो हैनं सूयमानं निर्ऋतिर्न गृह्णाति । अथ यत् स्वकृते वेरिणे जुहोति, श्वभ्रप्रदरे वा-एतदु ह्यस्यै निर्ऋतिगृहीतम् ॥ ३ ॥

अथाप्रतीक्षं पुनरायन्ति । अथानुमत्याऽअष्टाकपालेन पुरोडाशेन प्रचरति । इयं वा अनुमतिः । स यस्तत्कर्म शक्नोति कर्तुम्-यच्चिकीर्षति-इयं हास्मै तदनुमन्यते । तदिमामेवैतत् प्रीणाति । अनयाऽनुमत्याऽनुमतः सूयाऽइति ॥ ४ ॥

---

'एषः' तण्डुलपिष्टशेषः 'ते' तव 'भागः' 'तं' भागं 'जुषस्व' सेवस्व । 'स्वाहा'-शब्दो हवनलिङ्गम् 'इति' ॥ भूमिर्द्विविधा; शालिगोधूमादिसर्वसस्याढ्या, तदयोग्या च । तत्र आद्यभूमिरूपा अनुमतिः, द्वितीयभूमिरूपा निर्ऋतिः; ( तै. सं. १ । ८ । १ । १ ) सैवानिष्टकारिणी पापदेवता,-तथा भूमिः पापिष्ठं जनं पीडयितुं गृह्णाति । 'तत्' तथा सति 'अस्याः' भूमेः 'अत्र' अस्मिन् राजसूयानुष्ठानदेशे 'नैर्ऋतं रूपम्' एतेन होमेन शमितवान् भवतीति । "तथो हैनम्"-इत्यादिना नैर्ऋतहोमस्य प्रयोजनकथनम् । एतदु ह्यस्या इति । 'एतत्' एव इरिणप्रदरात्मकं स्थानम् 'अस्यै' अस्याः भूमेः सम्बन्धि 'निर्ऋतिगृहीतम्' निर्ऋत्या पापदेवतया आश्रयत्वेन स्वीकृतम्; अतस्तत्र नैर्ऋतहोमानुष्ठानं युक्तमिति ॥ ३ ॥

पुनरागमनं विधत्ते-अथाप्रतीक्षमिति । 'अप्रतीक्षं' यत्र निर्ऋत्यै होमः कृतः; तं प्रदेशम् अनभीक्षमाणा एव पुनर्गच्छेयुः । अथानुमतस्य हविषः प्रचारं विधत्ते-अथानुमत्या इति । प्रचरन्तीति । आनुमतहविषः संवपनादिकं कुर्युरित्यर्थः । तथैवाम्नातमुदाहृतम्-इयं वा अनुमतिरिति । भूमिरूपा अनुमतिः; तत्र यत् कर्म करोति यत् कर्तुमिच्छति, तत् सर्वं भूम्यात्मिका अनुमतिर्देवता अनुजानाति; तया 'अनुमत्या' अनुज्ञातः 'सूये' राजसूयाख्यं कर्म करवाणि, इत्यनेनाभिप्रायेणानुमतहविर्निर्वापः । 'तत्' तेन हविषा भूमिमेव प्रीणितवान् भवति ॥ ४ ॥

(त्यु) अथ यदष्टाकपालो भवति । (त्य) अष्टाक्षरा वै गायत्री गायत्री वा ऽइयं पृथिव्यथ यत्समानस्य हविष ऽउभयत्र जुहोत्येषा ह्येवैतदुभयं तस्य वासो दक्षिणा यद्वै सवासाऽअरण्यं नोदाशꣳसते निधाय वै तद्वासोऽतिमुच्यते तथो हैनꣳ सूयमानमासङ्गो न विन्दति ॥ ९ ॥

(त्यु) अथ श्वोभूते । (त॒) आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति तेन यथेष्ट्यैवं यजते तद्यदेवादः प्रज्ञातमाग्नावैष्णवं दीक्षणीयꣳ हविस्तदेवैतदग्निर्वै सर्वा देवताऽअग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वत्यग्निर्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यस्तत्सर्वाश्चैवैतद्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य सूयाऽइति तस्मादाग्नावैष्णवऽएकादशकपालः पुरोडाशो भवति तस्य हिरण्यं दक्षिणाऽऽग्नेयो वा ऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं यो वै विष्णुः स यज्ञोऽग्निरु वै यज्ञऽएव तदु तदाग्नेयमेव तस्माद्धिरण्यं दक्षिणा ॥ १० ॥

---

अथ यदष्टाकपालो भवति । अष्टाक्षरा वै गायत्री । गायत्री वाऽइयं पृथिवी । अथ यत् समानस्य हविष उभयत्र जुहोति । एषा ह्येवैतदुभयम् । तस्य वासो दक्षिणा । यद्वै सवासा अरण्यं नोदाशंसते–निधाय वै तद्वासोऽतिमुच्यते । तथो हैनं सूयमानमासङ्गो न विन्दति ॥ ९ ॥

(२) अथ श्वोभूतऽआग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति । तेन यथेष्ट्या–एवं यजते । तद्यदेवादः प्रज्ञातमाग्नावैष्णवं दीक्षणीयं हविः–तदेवैतत् । अग्निर्वै सर्वा देवताः । अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति । अग्निर्वै यज्ञस्यावरार्ध्यो–विष्णुः परार्ध्यः । तत् सर्वाश्चैवैतद्देवताः परिगृह्य, सर्वं

---

हविःश्रपणसाधनकपालगतामष्टसंख्यां गायत्रीद्वारा पृथिवीयोग्यत्वेन प्रशंसति–अथ यदष्टेति । अथ यत् समानस्येति । अस्यार्थः,–'समानस्य' एकमेव हविः 'उभयत्र' अनुमत्यै निर्ऋत्यै च हूयते; उभयोरपि पृथिव्यात्मकत्वादिति । तस्य दक्षिणां विधत्ते–तस्य वास इति । तत् प्रशंसति–यद्वै सवासा इति । यथा लोके पुरुषो वस्त्रसहितः सन्नरण्यगमनं चौरादिभयात् न कामयते; तद् वस्त्रं भयरहिते स्थाने 'निधाय' चेद्गच्छति तदा 'अतिमुच्यते' भयाद् विमुक्तो भवति; तद्वद् वासोदानेन 'सूयमानम्' 'एनं' यजमानम् 'आसङ्गः' भयं 'न' प्राप्नोति ॥ ९ ॥

तदनन्तरदिवसेऽनुष्ठेयं कर्म विधत्ते–अथ श्वोभूत इति । अग्निर्विष्णुश्चोभौ देवता यस्य हविषः; तं निर्वपेत् । तेन यथेष्ट्येति । प्रकृतीष्टिवदेवेष्टिः कार्या । तेन अनुमतीष्टिवत् तन्मध्ये वैकृतं तन्त्रं किञ्चिदपि न विद्यत इति

---

१–अष्टाकपालोऽनुमत्यै । का० श्रौ० सू० १५।१।२–'प्राकृतीष्टिवदेवेष्टिः' इति क. । 'प्रकृतीष्टिवदेवेष्टिः' इति क०पु०पा० ।

( णाऽथ ) श्रुथ श्वोभूते । (तेऽग्नी) अग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति तेन यथेष्ट्यैवं यजतऽएतेन व्वाऽइन्द्रो व्वृत्रमहन्नेतेनोऽएव व्यजयत याऽस्येयं व्विजितिस्तां तथो ऽएवैष ऽएतेन पाप्मानं द्विषन्तं भ्रातृव्यथँ हन्ति तथो ऽएव व्विजयते व्विजितेऽभयेऽनाष्ट्रे सूया इति तस्मादग्नीषोमीय ऽएकादशकपालः पुरोडाशो भवति तस्योत्सृष्टो गौर्दक्षिणो-

च यज्ञं परिगृह्य, सूयाऽइति । तस्मादाग्नावैष्णवः एकादशकपालः पुरोडाशो भवति । तस्य हिरण्यं दक्षिणा । आग्नेयो वाऽएष यज्ञो भवति । अग्ने रेतो हिरण्यम् । यो वै विष्णुः स यज्ञः । अग्निरु वै यज्ञ एव । तदु तदाग्नेयमेव । तस्माद्धिरण्यं दक्षिणा ॥ ६ ॥

(३)अथ श्वोभूतेऽग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति । तेन यथेष्ट्या-एवं यजते । एतेन वाऽइन्द्रो वृत्रमहन् । एतेनोऽएव व्यजयत-याऽस्येयं विजितिस्ताम् । तथो एवैष एतेन पाप्मानं

भावः । तद्वयदेवेति । 'अदः' अमुष्मिन् विप्रकृष्टे सोमप्रकरणे 'प्रज्ञातं' 'दीक्षणीयं' दीक्षायां निरुप्तम् 'आग्नावैष्णवं हविः' 'तदेव' इदानीं निरूप्यमाणं हविरिति तत्तादात्म्येन प्रशंसा । हविषो देवतासम्बन्धं प्रशंसति—अग्निर्वा इति । अग्नेः सर्वदेवतात्मकत्वं प्रतिपादयति—अग्नौ हीति । अग्नौ हि सर्वा देवता हूयन्ते, अतः सर्वदेवतार्थं हविर्होमाधिकरणत्वादग्निः सर्वदेवतात्मकः । सः 'अग्निः' 'यज्ञस्य' 'अवरार्द्धः' आदौ स्थितः 'विष्णुः परार्द्धः' यज्ञस्य चरमभागेऽवस्थितः । तथा हि प्रकृतिभूतस्याग्निष्टोमस्य आदौ दीक्षणीयायाम् आग्नावैष्णवे हविषि अग्नेः प्रथमं देवतात्वेन सम्बन्धः, अवसाने चोदवसानीयेष्टिस्थाने विष्णुदेवताका पूर्णाहुतिर्हूयते । यद्वा आज्यशस्त्रे प्रथमे "भूरग्निर्ज्योतिः"-( ऐ. ब्रा. २।५।९ ) इति अग्नेः प्राथम्यम्, चरमशस्त्रे चाग्निमारुते "विष्णोर्नुकम्"-( ऋ. सं. १।१५४।१ ) इति श्रवणाद् विष्णोश्चरमत्वम् । एतदेवाभिप्रेत्यैतरेयकम्-"अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः"-( ऐ. ब्रा. १।१।१। ) इति । तत् सर्वा इत्यादि । तस्मात् तन्मध्यवर्त्तिनीः वक्ष्यमाणाः 'सर्वाश्च' सोमदेवता अग्निसाध्यं विश्वात्मकं सर्वं यज्ञम् 'एतेन' आग्नावैष्णवेन हविषा 'परिगृह्य' परिवेष्ट्य स्वाधीनं कृत्वा 'सूयै' राजसूयाख्यं कर्म करवाणि 'इति' हेतोर्यस्मादेवं तस्मादित्यन्वयः ॥

दक्षिणां विधत्ते—तस्य हिरण्यमिति । आग्नेयो वा इति । अस्यायमर्थः;—यज्ञोऽग्निदेवत्यः खलु, तमन्तरेण यज्ञनिष्पत्तेरसंभवात् । 'हिरण्यम् अग्नेः रेतः' विष्णोर्यज्ञात्मकत्वं श्रुतिप्रसिद्धं ( श. प. ३ । १ । ३ । १ ) विश्वात्मकस्य यज्ञस्य चाग्निसाध्यत्वात् तद्रूपत्वम्; तस्मात् परम्परया 'तदु' तद् विष्णुदेवत्यमपि कर्म, 'तदाग्नेयम्' अग्निदेवत्यमेव जातम् । तस्मादाग्नावैष्णवस्य हविषः 'आग्नेयं हिरण्यं' दक्षिणाऽङ्गत्वेन भवितुं युक्तमिति ॥ ६ ॥

तस्मात् परेद्युरनुष्ठेयं कर्म विधत्ते—अथ श्वोभूत इति । 'तेन' अग्नीषोमीयेण हविषा यजेत । यथेष्ट्येति । सर्वेष्टीनां पौर्णमासेष्टिः प्रकृतिभूता; तद्वदत्रापि तदीयमङ्गजातं कुर्यादित्यर्थः । एतेन वा इत्यादि । 'एतेन'

१-हिरण्यमाग्नावैष्णवे । का० श्रौ० सू० १५।१।१ ।

त्सुर्जं वा ऽअमुं चन्द्रमसं घ्नन्ति पौर्णमासेनाह घ्नन्त्यामावास्येनोत्सृजन्ति तुस्मादुत्सृष्टो गौर्दक्षिणा ॥ ७ ॥

( णाऽथ ) अथ श्वोभूते । ( तऽ ) ऐन्द्राग्नं द्वादशकपालं पुरोडाशं निर्व्वपति तेन यथेष्ट्यैवं यजते यत्र वाऽइन्द्रो व्वृत्रमहंस्तदस्य भीतस्येन्द्रियं व्वीर्य्यमपचक्राम सऽ एतेन हविषेन्द्रियं व्वीर्यं पुनरात्मन्नधत्त तथो ऽएवैष ऽएतेन हविषेन्द्रियं व्वीर्य्यमात्मन्धत्ते तेजो वाऽअग्निरिन्द्रियं व्वीर्य्यमिन्द्र ऽउभे व्वीर्ये परिगृह्य सूयाऽइति तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति तस्यर्षभोऽनड्वान्दक्षिणा स हि व्वहेनाग्नेय ऽआण्डाभ्यामैन्द्रस्तस्मादृषभोऽनड्वान्दक्षिणा ॥ ८ ॥

---

द्विषन्तं भ्रातृव्यं हन्ति । तथोऽएव विजयते । विजितेऽभयेऽनाष्ट्रे सूया इति । तस्मादग्नीषोमीय एकादशकपालः पुरोडाशो भवति । तस्योत्सृष्टो गौर्दक्षिणा । उत्सर्जं वाऽअमुं चन्द्रमसं घ्नन्ति । पौर्णमासेनाह घ्नन्ति । आमावास्येनोत्सृजन्ति । तस्मादुत्सृष्टो गौर्दक्षिणा ॥ ७ ॥

(४) अथ श्वोभूतऽऐन्द्राग्नं द्वादशकपालं पुरोडाशं निर्वपति । तेन यथेष्टचा—एवं यजते । यत्र वाऽइन्द्रो वृत्रमहन्—तस्य भीतस्येन्द्रियं वीर्यमपचक्राम । स एतेन हविषेन्द्रियं वीर्यं पुनरात्मन्नधत्त । तथो एवैष एतेन हविषेन्द्रियं वीर्यमात्मन्धत्ते । तेजो वाऽअग्निरिन्द्रियं वीर्यम् । इन्द्र उभे वीर्ये परिगृह्य सूयाऽइति । तस्मादैन्द्राग्नो द्वादशकपालः पुरोडाशो भवति । तस्यर्षभोऽनड्वान् दक्षिणा । स हि वहेनाग्नेयः, आण्डाभ्यामैन्द्रः । तस्मादृषभोऽनड्वान् दक्षिणा ॥ ८ ॥

---

हविषा वृत्रं हत्वा विजितवतः ‘ अस्य ’ इन्द्रस्य ‘ इयं ’ परिदृश्यमाना ‘ या ’ ‘ विजितिः ’ अस्ति, ‘ ताम् ’ ‘ इन्द्रो व्यजयत ’ इति सम्बन्धः । ‘ तथा ’ ‘ एषः ’ अपि अनुष्ठाता ‘ एतेन ’ हविषा सर्वान् शत्रून् जयति ॥

तस्य दक्षिणां विधत्ते—उत्सृष्टो गौरिति[1] । कियन्तं कालं शकटवहनादौ विनियोज्य पश्चात् य उत्सृज्यते, स ‘ उत्सृष्टः ’ । तां दक्षिणां प्रशंसति—उत्सर्जमिति । ‘ अमुम् ’ अन्तरिक्षे दृश्यमानं ‘ चन्द्रमसम् ’ उत्सृज्योत्सृज्य ‘ घ्नन्ति ’ । तदेव विवृणोति—पौर्णमासेनेति । पौर्णमासीमारभ्य खलु देवाः ‘ घ्नन्ति ’ ‘ प्रतिदिवसमेकैककलापचार[2] एव तस्य हननमित्यर्थः । अमावास्याकालमारभ्य ‘उत्सृजन्ति’ प्रतिदिवसं तस्यैकैककलावृद्धेः । ‘ तस्मात् ’ अस्य हविषः सोमदेवतासम्बन्धादेव तादृशो गौर्दक्षिणात्वेन युक्त इत्यर्थः ॥ ७ ॥

तदनन्तरदिवसकर्त्तव्यमिष्ट्यन्तरं विधत्ते—अथ श्वोभूत इति । पुरा वृत्रहननाद्भीत इन्द्रोऽपक्रान्तं स्वकीयं वीर्यम् ‘ एतेन हविषा ’ ‘ पुनः ’ आत्मन्यधारयत्; एवम् ‘ एषः ’ अपि अनुष्ठाता ‘ एतेन ’ हविषा । यदिदं तेजः, स एवाग्निः; यदिदम् ‘ इन्द्रियम् ’ इन्द्रस्यासाधारणं सत्त्वं, स एवेन्द्रः; धर्मधर्मिणोरभेदोपचारात् तादा-

---

१—पुनरुत्सृष्टो गौरग्नीषोमीये । का० श्रौ० सू० १५ । १४ । २—‘ कलापकार ’ इति क० पा० ।

( णाऽथा ) अथाग्रयणेष्ट्या यजते। सर्वान्वाऽएष यज्ञक्रतूनवरुन्धे सर्वा ऽइष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वाऽएषेष्टिर्यदाग्रयणेष्टि-रनया मेऽपीष्टमसदनयापि सूयाऽइति तस्मादाग्रयणेष्ट्या यजतऽओष-धीर्वाऽएष सूयमानोऽभिसूयते तदोषधीरेवैतदनमीवाऽअकिल्बिषाः कुरुतेऽनमीवाऽअकिल्बिषाऽओषधीरभिसूयाऽइति तस्य गौर्दक्षिणा॥९॥
( णाऽथ ) अथ चातुर्मास्यैर्यजते। सर्वान्वाऽएष यज्ञक्रतूनवरुन्धे सर्वा

---

( ९ ) अथाग्रयणेष्ट्या यजते। सर्वान्वाऽएष यज्ञक्रतूनवरुन्धे, सर्वा इष्टीः अपि दर्विहोमान्—यो राजसूयेन यजते। देवसृष्टो वाऽएषेष्टिः—यदाग्रयणेष्टिः। अनया मेऽपीष्टमसत्। अनयाऽपि सूयाऽइति। तस्मादाग्रयणेष्ट्या यजते। ओषधीर्वाऽएष सूयमानोऽभिसूयते। तदोषधीरेवैतदनमीवा अकिल्बिषाः कुरुते। अनमीवा अकिल्बिषा ओषधीरभिसूयाऽइति। तस्य गौर्दक्षिणा॥ ९॥

( १० ) अथ चातुर्मास्यैर्यजते। सर्वान्वाऽएष यज्ञक्रतूनवरुन्धे, सर्वा इष्टीः अपिदर्विहोमान्—यो

---

स्यम्। ते 'उभे' तेजोबललक्षणे 'वीर्ये' 'परिगृह्य' 'सूयै' 'इति' अभिप्रायेण ऐन्द्राग्नहविःप्रचारः कर्त्तव्यः॥ दक्षिणां विधत्ते—तस्यर्षभ इति। ऐन्द्राग्नस्य हविषो दक्षिणात्वेन विहितस्य साण्डस्यानडुहो देवताद्वययोग्यतां दर्शयति—स हि वहेनेति। वहं नाम युगवहनदेशः, ककुत्प्रदेशः। तस्य दग्धप्रदेशवत् कृष्ण-वर्णत्वादाग्नेयत्वम् 'आण्डाभ्याम् ऐन्द्रः' सेचनसमर्थत्वादिति॥ ८॥

तदनन्तरकर्त्तव्यमिष्ट्यन्तरं विधत्ते—अथाग्रयणेष्ट्येति। सा चाग्रयणेष्टिः द्वितीयकाण्डे विहिता (श. प. २। ४। ३।) तस्या अत्र राजसूयाङ्गत्वेन प्रयोगः। सर्वान् वा इत्यादि। इष्टि-पशु-सोम-दर्वीहोमात्मकत्वाद्राजसूयस्य, तदनुष्ठानेन यज्ञक्रत्विष्ट्यादयः सर्वेऽनुष्ठिता भवन्ति। आग्रयणेष्टिरपि देवसृष्टत्वेन प्रशस्तत्वादत्रावरोद्धव्या। अतः 'अनया' आग्रयणेष्ट्या 'अपि' 'मे' मम 'इष्टम् असत्' यागः कृतो भवतु। 'अनयाऽपि' इष्ट्या 'सूयै' अभिषिक्तो भूयासम्' इति' अनेनाभिप्रायेण आग्रयणेष्टिः कार्येत्यर्थः॥

तस्या इष्टेः प्रयोजनमाह—ओषधीर्वा इति। 'एषः सूयमानः' यजमानः 'ओषधीः' परिपक्वा व्रीहि-यवाद्याः 'अभि'—लक्ष्य 'सूयते' अभिषिच्यते। 'तत्' तथा सति 'अनया' आग्रयणेष्ट्या ता एव 'ओषधीः' 'अनमीवाः' रोगरहिताः आरोग्यकारिणीः, 'अकिल्बिषाः' पापरहिताश्च 'कुरुते'। आग्र-यणेष्टेर्नवान्नभोजनार्हत्वात्, तदकरणे भोक्तॄणां रोगः पापं च स्यात्, इह तु तदनुष्ठाने तादृग्दोषरहिताः ओषधी-रभिलक्ष्य राजसूयाख्यं कर्म करवाणीति यष्टुराशयः॥ दक्षिणां विधत्ते—तस्य गौरिति "गौराग्रयणे"। ( का. श्रौ. सू. १५। १६ ) 'तस्य' आग्रयणस्य॥ ९॥

अथ चातुर्मास्यानि विधत्ते—अथ चातुर्मास्यैरिति। तेषां कालः सूत्रितः उक्तहविःपञ्चकादनन्तरम्—

---

१-अनड्वान् सांड ऐन्द्राग्ने। का० श्रौ० सू० १५। १५।

इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वाऽएष यज्ञक्रतुर्यच्चातुर्मास्यान्येभिर्मेऽपीष्टमसदेभिरपि सूयाऽइति तस्माच्चातुर्मास्यैर्यजते ॥ १० ॥

इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ५ । २ । २ ॥ ( २-३ ) ॥

वैश्वदेवेन यजते । वैश्वदेवेन वै प्रजापतिर्भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा सूया ऽइति तथो ऽएवैष ऽएतद्वैश्वदेवेनैव भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा सूया ऽइति ॥ १ ॥

(त्यु) अथ वरुणप्रघासैर्यजते । वरुणप्रघासैर्वै प्रजापतिः प्रजा वरुण-

---

राजसूयेन यजते । देवसृष्टो वाऽएष यज्ञक्रतुः–यच्चातुर्मास्यानि । एभिर्मेऽपीष्टमसत् । एभिरपि सूयाऽ इति । तस्माच्चातुर्मास्यैर्यजते ॥ १० ॥

चातुर्मास्यादियागाः ।

( १ ) वैश्वदेवेन यजते । वैश्वदेवेन वै प्रजापतिर्भूमानं प्रजाः ससृजे । भूमानं प्रजाः सृष्ट्वा सूयाऽ इति । तथोऽएवैष एतद्वैश्वदेवेनैव भूमानं प्रजाः सृजते । भूमानं प्रजाः सृष्ट्वा सूयाऽ इति ॥ १ ॥

( २ ) अथ वरुणप्रघासैर्यजते । वरुणप्रघासैर्वै प्रजापतिः प्रजा वरुणपाशात्प्रामुञ्चत् । ता

---

" चातुर्मास्यप्रयोगः फाल्गुन्याम् " ( का. श्रौ. सू. १५ । १७ ) इति । सर्वान्वा इत्यादि । सर्वक्रत्विष्टि-दर्वीहोमावरोधरूपराजसूयमध्ये चातुर्मास्याख्यो यज्ञक्रतुरप्यवरोद्धव्य इत्यनेनाभिप्रायेण तदनुष्ठानम् । अन्यत् पूर्ववद् योज्यम् ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे द्वितीयाऽध्याये तृतीयं ब्राह्मणम् ॥ ( ५-२-३ ) ॥

एवं चातुर्मास्यानि सामान्येन विधाय वैश्वदेवाख्यं प्रथमं पर्व विधत्ते–वैश्वदेवेनेति । वैश्वदेवमित्याग्नेयादि-हविरष्टकरूपप्रथमपर्वणो नामधेयम् । अत्र वैश्वदेवादीनां चतुर्णां पर्वणामपेक्षितान्यङ्गानि मासाग्निहोत्रन्यायेन नामातिदेशादतिदेष्टव्यानि । तदुपदेशस्तु द्वितीयकाण्डे पञ्चमेऽध्याये समाम्नातः–" वैश्वदेवेन वै प्रजापतिः " इति । ( श. प. २।५।२।१ ) अत्र वैश्वदेवशब्देन शाखान्तरीया प्रसिद्धिर्द्योत्यते । तथा च तैत्तिरीयके– "वैश्वदेवेन वै प्रजापतिः प्रजा असृजत "–( तै. ब्रा. १ । ६ । २ । १ ) इति । ' भूमानं ' 'प्रजा' इति । भूयसीः प्रजा इत्यर्थः तथो एवैष इति । यथा पुरा प्रजापतिः वैश्वदेवयागेन भूयसीः प्रजाः सृष्टवान्, एवमयं यजमानोऽपि तेन यागेन तथाविधाः ' प्रजाः ' ' सृजते ' सृजति । ताः ' सृष्टाः ' प्रजाः अभिलक्ष्य ' सूयै ' सवं यज्ञं करवाणीति ॥ १ ॥

द्वितीयं पर्व विधत्ते–अथ वरुणेति । 'अथ' वैश्वदेवानन्तरं चतुर्षु मासेषु व्यतीतेषु 'वरुणप्रघासैः' यजेत ।

पाशात्प्रामुञ्चत्ता अस्यानमीवा ऽअकिल्बिषाः प्रजाः प्राजायन्तानमीवा ऽअकिल्बिषाः प्रजा अभि सूया ऽइति तथो एवैष ऽएतद्वरुणप्रघासैरेव प्रजा वरुणपाशात्प्रमुञ्चति ता ऽअस्यानमीवा ऽअकिल्बिषाः प्रजाः प्रजायन्तेऽनमीवा ऽअकिल्बिषाः प्रजा ऽअभि सूयाऽइति ॥ २ ॥

( त्यु ) अथ साकमेधैर्यजते । साकमेधैर्वै देवा वृत्रमघ्नंस्तैर्वेव व्यजयन्त येयमेषां विजितिस्तां तथो ऽएवैष ऽएतैः पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो ऽएव विजयते विजितेऽभयेऽनाष्ट्रे सूयाऽइति ॥ ३ ॥

( त्यु ) अथ शुनासीर्येण यजते । ( तऽ ) उभौ रसौ परिगृह्य सूया ऽइत्यथ पञ्चवातीयꣳ स पञ्चधाऽऽहवनीयं व्युह्य स्रुवेणोपघातं जुहोति ॥ ४ ॥

---

अस्यानमीवा अकिल्बिषाः प्रजाः प्राजायन्त । अनमीवा अकिल्बिषाः प्रजा अभि सूयाऽइति । तथो एवैष एतद्वरुणप्रघासैरेव प्रजा वरुणपाशात् प्रमुञ्चति । ता अस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्ते । अनमीवा अकिल्बिषाः प्रजा अभि सूयाऽइति ॥ २ ॥

( ३ ) अथ साकमेधैर्यजते । साकमेधैर्वै देवा वृत्रमघ्नन् । तैर्वेव व्यजयन्त–येयमेषां विजितिस्ताम् । तथोऽएवैष एतैः पाप्मानं द्विषन्तं भ्रातृव्यं हन्ति । तथोऽएव विजयते । विजितेऽभयेऽनाष्ट्रे सूयाऽइति ॥ ३ ॥

( ४ ) अथ शुनासीर्येण यजते । उभौ रसौ परिगृह्य सूयाऽइति । अथ पञ्चवातीयम् । स पञ्चधाऽऽहवनीयं व्युह्य स्रुवेणोपघातं जुहोति ॥ ४ ॥

---

तान् वरुणपाशमोचनसाधनत्वेन प्रशंसति–वरुणप्रघासैर्वा इति । ता अस्येति । वरुणप्रघासयागेन पाशविमोचनस्य कृतत्वात् ' अस्य ' प्रजापतेः 'ताः' वैश्वदेवेन सृष्टाः ' प्रजाः ' रोगपापरहिताः सत्यः पुत्रपौत्रादिरूपेण प्रजायन्ते । गतमन्यत् । दार्ष्टान्तिके योजयति· तथो एवैष इति । ता अस्येति । ' अस्य ' यजमानस्येत्यर्थः ॥ २ ॥

तृतीयं पर्व विधत्ते–अथ साकमेधैरिति । ' अथ ' वरुणप्रघासानुष्ठानानन्तरं चतुर्षु मासेषु साकमेधाख्या यागाः कार्याः । तान् पापरूपशत्रुजयसाधनत्वेन सदृष्टान्तं प्रशंसति–साकमेधैर्वा इति । ' वृत्रं ' वृत्रासुरम् ' अघ्नन् ' हतवन्तः । ' एषां ' देवानां ' येयं विजितिः ' इदानीं दृश्यते ' तां ' तैरेव ' साकमेधैः ' व्यजयन्त ' प्राप्नुवन् । तथो एवेत्यादि, सिद्धम् ॥ ३ ॥

अथ चतुर्थं पर्व विधत्ते–अथ शुनासीर्येणेति । शुनो वायुः, सीर आदित्यः, तद्देवत्यं हविः शुनासीरीयम्; तद्योगात् चतुर्थं पर्व शुनासीर्यमित्युच्यते । उभौ रसाविति । शुनासीरयो रसरूपत्वं हि द्वितीये काण्डे

---

१-पौर्णमासेन कृष्णपक्षानित्यामावास्येन शुक्लानाशुनासीरीयात् । का. श्रौ. सू. १५ । १८ ।

स पूर्वार्ध्ये जुहोति । (त्य) अग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहेत्यथ दक्षिणार्ध्ये जुहोति यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहेत्यथ पश्चार्ध्ये जुहोति विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहेत्यथोत्तरार्ध्ये जुहोति मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्यऽउत्तरासद्भ्यः स्वाहेत्यथ मध्ये जुहोति सोमनेत्रेभ्यो देवेभ्यऽ उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहेति ५

(त्य) अथ सार्द्धँ समुह्य जुहोति । ये देवाऽ अग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा ये देवा यमनेत्रा दक्षिणासदस्तेभ्यः स्वाहा ये देवा विश्व-

---

स पूर्वार्ध्ये जुहोति–" अग्निनेत्रेभ्यो देवेभ्यः पुरःसद्भ्यः स्वाहा "–इति । अथ दक्षिणार्ध्ये जुहोति–" यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहा "–इति । अथ पश्चार्ध्ये जुहोति–" विश्वेदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहा "–इति । अथोत्तरार्ध्ये जुहोति–" मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरासद्भ्यः स्वाहा "–इति । अथ मध्ये जुहोति–" सोमनेत्रेभ्यो देवेभ्यः उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहा "–(वा० सं० ९ । ३५ ) इति ॥ ५ ॥

अथ सार्द्धं समुह्य जुहोति–" ये देवा अग्निनेत्राः पुरस्सदस्तेभ्यः स्वाहा " ( १ ) " ये देवा यमनेत्रा दक्षिणासदस्तेभ्यः स्वाहा "(२) "ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः

---

स्पष्टमुक्तम्–" अथ यस्माच्छुनासीर्येण यजेत या वै देवानाᳩ श्रीरासीत् साकमेधैरीजानानां विजिग्यानानां तच्छुनमथ यः संवत्सरस्य प्रजितस्य रस आसीत्तत् सीरᳩ सा या चैव देवानाᳩ श्रीरासीत् साकमेधैरीजानानां विजिग्यानानां, य उ च संवत्सरस्य प्रजितस्य रस आसीत् तमेवैतदुभयं परिगृह्यात्मन् कुरुते–" इति (श. प. २।६।३।२) शुनासीरीयप्रयोगकालः सूत्रितः–" पवित्रदीक्षास्थाने शुनासीरीयम् "–का. श्रौ. सू. १९।१९।) इति । पवित्राख्यस्य सोमयागस्य संवत्सरे यस्यां तिथौ दीक्षा कृता, तस्यां फाल्गुनशुक्लप्रतिपदि चतुर्थं पर्व कार्यम् । अर्थात् पवित्रशुनासीर्ययोर्मध्ये वैश्वदेवादीनि त्रीणि पर्वाणि क्रमेण चतुर्षु मासेषु कार्याणीत्युक्तं भवति॥

पञ्चवातीयहोमं विधत्ते–( तै. सं. १ । ८ । ७ । ) अथ पञ्चेति । ' पञ्चवातीयम् ' इति कर्मनामधेयम् । ' आहवनीयम् ' अग्निं ' पञ्चधा ' ' व्युह्य ' प्रतिदिशं मध्ये च पृथक् कृत्वेत्यर्थः । आज्यस्थाल्याः ' स्रुवेण ' ' उपघातम् ' उपहत्योपहत्य गृहीत्वा ' जुहोति ' ॥ ४ ॥

तत्र पूर्वादिक्रमेण पञ्चस्वग्निषु समन्त्रकं हवनं विधत्ते–स पूर्वार्द्ध्य इत्यादिना पूर्वार्द्धे भवः ' पूर्वार्द्ध्यः ' अग्निः । अग्निनेत्रेभ्य इत्यादि । अग्निः ' नेत्रं ' नयनस्येष्टप्राप्तेः साधनं येषां तेभ्यः 'पुरस्सद्भ्यः' पूर्वस्यां दिशि सीदन्तीति तथोक्ताः, तेभ्यः ' देवेभ्यः ' ' स्वाहा ' सुहुतमस्तु । एवमुत्तरत्रापि योज्यम् । ' दुवस्वद्भ्यः ' दुव इत्यन्ननाम; ( निरु. १० । २ । ७ ) । हविर्लक्षणान्नयुक्तेभ्यः ॥ ५ ॥

इत्थं पञ्चभिर्मन्त्रैः कृतेष्वग्निषु हुत्वा पुनस्तानग्नीनेकीकृत्य तैरेव मन्त्रैर्हवनं विधत्ते–अथ सार्द्धमिति ।

---

१–पंचवातीयमाहवनीयं प्रतिदिशं व्युह्य मध्ये च स्रुवेणाग्निषु जुहोत्यग्निनेत्रेभ्य इति प्रतिमंत्रमुत्तराः समस्य ये देवा इति प्रतिमंत्रम् । का. श्रौ. सू. १५ । १९ । २० ।

देवनेत्राः पश्चात्सदस्तेभ्य स्वाहा ये देवा मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा ये देवाः सोमनेत्राऽउपरिसदो दुवस्वन्तस्तेभ्यः स्वाहेति तद्यदेवं जुहोति ॥ ६ ॥

यत्र वै देवाः । साकमेधैर्व्यजयन्त येयमेषां विजितिस्तां तद्धोचुरुत्पिबन्ते वा ऽइमानि दिक्षु नाष्ट्रा रक्षाꣳसि हन्तैभ्यो वज्रं प्रहरामेति वज्रो वा ऽआज्यं त ऽएतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षाꣳस्यवाघ्नꣳस्ते व्यजयन्त येयमेषां विजितिस्तां तथोऽएवैष एतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षाꣳस्यवहन्ति तथो ऽएव विजयते विजितेऽभयेऽनाष्ट्रे सूया ऽइति ॥ ७ ॥

( ५ ) अथ यदेताऽ अपराः पञ्चाहुतीर्जुहोति । क्षण्वन्ति वा ऽएतदग्नेर्विवृहन्ति यत्पञ्चधाऽऽहवनीयं व्यूहन्ति तद्देवास्यैतेन सन्दधाति तस्मादेता ऽअपराः पञ्चाहुतीर्जुहोति ॥ ८ ॥

---

स्वाहा " ( ३ ) " ये देवा मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा " ( ४ ) " ये देवाः सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहा " ( ५ )–( वा० सं० ९ । ३६ ) इति। तद्यदेवं जुहोति ॥ ६ ॥

यत्र वै देवाः साकमेधैर्व्यजयन्त–येयमेषां विजितिस्ताम् । तद्धोचुः–उत्पिबन्ते वाऽइमानि दिक्षु नाष्ट्रा रक्षांसि, हन्तैभ्यो वज्रं प्रहरामेति । वज्रो वाऽआज्यम् । तऽएतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षांस्यवाघ्नन् । ते व्यजयन्त–येयमेषां विजितिस्ताम् । तथोऽएवैष एतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षांस्यवहन्ति । तथोऽएव विजयते । विजितेऽभयेऽनाष्ट्रे सूयाऽइति ॥ ७ ॥

अथ यदेता अपराः पञ्चाहुतीर्जुहोति । क्षण्वन्ति वाऽएतदग्नेर्विवृहन्ति–यत् पञ्चधाऽऽहवनीयं व्यूहन्ति । तदेवास्यैतेन सन्दधाति । तस्मादेता अपराः पञ्चाहुतीर्जुहोति ॥ ८ ॥

---

पञ्चाप्यग्नीन् ' सार्द्धं ' ' समुह्य ' समस्य जुहुयात् । तानेव मन्त्रान् पुनः पठति–ये देवा इति । अर्थस्तु पूर्ववत् ॥ ६ ॥

पञ्चवातीयहोमस्य द्रव्यं विधातुमाह–यत्र वै देवा इति । तद्धोचुरिति । ' तत् ' तत्र विजितप्रदेशे देवाः ' ऊचुः ' उक्तवन्तः किम् । ' इमानि ' ' नाष्ट्रा ' नाशकारीणि ' रक्षांसि ' ' दिक्षु ' ' उत्पिबन्ते ' उत्कटं पिबन्ति, प्राणिनो भक्षयन्ति । ' हन्त ' इति हर्षे । ' एभ्यः ' रक्षोभ्यः ' वज्रं प्रहराम इति ' विचार्य, आज्यरूपेण वज्रेण तान् राक्षसान् एव अघ्नन् । श्रूयते हि आज्यस्य वज्रत्वम् । " घृतं वै देवा वज्रं कृत्वा "–( तै. सं. ६ । २ । २ । ४ ) इति । " तथो एवैष" इत्यादिना इदानीमनुष्ठातुरपि तथाविधफलप्राप्तिदर्शनम् ॥ ७ ॥

आग्नीनां समासेन कृतमाहुतिपञ्चकं प्रशंसति–अथ यदेता इति । पूर्वमाहवनीयस्य पञ्चधा व्यूहनेन तमग्नि

तस्य प्रष्टिवाहनोऽश्वरथो दक्षिणा । त्रयोऽश्वा द्वौ सव्यष्टृसारथी ते पञ्च प्राणा यो वै प्राणः स वातस्तद्यदेतस्य कर्मणऽएषा दक्षिणा तस्मात्पञ्चवातीयं नाम ॥ ९ ॥

स हैतेनापि भिषज्येत् । ( द ) अयं वै प्राणो योऽयं पवते यो वै प्राणः सऽआयुः सोऽयमेकऽइवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टो दशधा विहितो दश वाऽएता ऽआहुतीर्जुहोति तदस्मिन्दश प्राणान्कृत्स्नमेव सर्व्वमायुर्दधाति स यदिहापि गतासुरिव भवत्या हैवैनेन हरति ॥ १० ॥

---

तस्य प्रष्टिवाहनोऽश्वरथो दक्षिणा । त्रयोऽश्वाः । द्वौ सव्यष्टृसारथी । ते पञ्च प्राणाः । यो वै प्राणः स वातः । तद् यदेतस्य कर्मण एषा दक्षिणा—तस्मात् पञ्चवातीयं नाम ॥ ९ ॥

स हैतेनापि भिषज्येत् । अयं वै प्राणो—योऽयं पवते । यो वै प्राणः—स आयुः । सोऽयमेक इवैव पवते । सोऽयं पुरुषेऽन्तः प्रविष्टो दशधा विहितः । दश वाऽएता आहुतीर्जुहोति । तदस्मिन् दश प्राणान् कृत्स्नमेव सर्वमायुर्दधाति । स यदिहापि गतासुरिव भवति—आ हैवैनेन हरति ॥ १० ॥

---

' क्षण्वन्ति ' हिंसन्ति । "क्षणु हिंसायाम्" ( धा. पा. रु. प. ३ ) इति धातुः । तथा तस्य 'अग्नेः' अवयवान् 'विवृहन्ति' विश्लेषयन्ति । "वृहु उद्यमने" (धा. पा. तु. प. १६) इति धातुः । तमनेन पुनःसमस्य पञ्चाहुतिकरणेन संहितवान् भवतीति ॥ ८ ॥

तस्य होमस्य त्रियुक्तमश्वरथं दक्षिणात्वेन विधत्ते—तस्य प्रष्टिवाहन इति । सव्य इति । रथस्य सव्यभागे तिष्ठन्नेकः, सारथिश्चैक इति द्वौ । अश्वगतां त्रित्वसंख्यां सारथिगतां द्वित्वसंख्याञ्च मिलित्वा पञ्चप्राणात्मना प्रशंसति—ते पञ्चेति । प्राणवातयोरेकत्वात् पञ्चवातीयहोमस्य सङ्ख्याद्वारा प्राणात्मकस्य रथो दक्षिणात्वेन युज्यते । ' तस्मात् ' कर्मणोऽपि पञ्च वाताः प्राणा अस्मिन् सन्तीति ' पञ्चवातीयं ' ' नाम ' सम्पन्नम् ॥ ९ ॥

आरोग्यकामस्यापीमं होमं विधत्ते—स हैतेनापीति । ' एतेन ' होमेन ' भिषज्येत् ' चिकित्सेत् । " भिषज् चिकित्सायाम् " ( धा. पा. कं. प. २३ ) इति धातुः । अत एव सूत्रितम्—"व्याधितस्याप्येवम्" ( का. श्रौ. सू. १९ । २२ ) इति । प्राणस्यायुष्ट्वं शरीरधारकत्वात् । ' सः ' प्राणरूपेण ' एकः ' अपि पुरुषशरीरेऽनुप्रविष्टः सन् वृत्तिभेदात् दशसु चक्षुःश्रोत्रादिद्वारेषु सञ्चरन् ' दशधा विहितः ' भवति । अत उक्तदशाहुतिकरणात् 'दश प्राणान्' व्याधिते ' पुरुषे ' ' कृत्स्नं ' ' सर्वमायुः ' वि—'दधाति' । 'यः' तु 'गतासुः इव भवति ' तम् ' अपि ' अनेन होमेन आहरति एव पुनर्जीवयत्येवेत्यर्थः ॥ १० ॥

---

१-त्रियुक्तोऽश्वरथो दक्षिणा । का० श्रौ० सू० १५ । २१ ।

( त्यु ) अथेन्द्रतुरीयम् । ( मा ) आग्नेयोऽष्टाकपालः पुरोडाशो भवति वारुणो यवमयश्चरू रौद्रो गावेधुकश्चरुरनडुह्यै वहलाया ऽऐन्द्रं दधि तेनेन्द्रतुरीयेण यजत ऽइन्द्राग्नी ड हैवैतत्समूदाते ऽउतिपबन्ते वा ऽइमानि दिक्षु नाष्ट्रा रक्षाᳫँसि हन्तैभ्यो वज्रं प्रहरावेति ॥ ११ ॥

स हाग्निरुवाच । त्रयो मम भागाः सन्त्वेकस्तवेति तथेति तावेतेन हविषा दिक्षु नाष्ट्रा रक्षाᳫँस्यपाहतां तौ व्यजयेतां यैनयोरियं विजितिस्तां तथो ऽएवैषु ऽएतेन हविषा दिक्षु नाष्ट्रा रक्षाᳫँस्यपहन्ति तथो ऽएव विजयते विजितेऽभयेऽनाष्ट्रे सूयाऽइति ॥ १२ ॥

स यु एषु ऽआग्नेयोऽष्टाकपालः पुरोडाशो भवति सोऽग्नेरेको भागोऽथ युद्वारुणो यवमयश्चरुर्भवति यो वै वरुणः सोऽग्निः सोऽग्नेर्द्वितीयो भागोऽथ युद्रौद्रो गावेधुकश्चरुर्भवति यो वै रुद्रः सोऽग्निः सोऽग्नेस्तृतीयो भागोऽथ

अथेन्द्रतुरीयम् । आग्नेयोऽष्टाकपालः पुरोडाशो भवति, वारुणो यवमयश्चरुः, रौद्रो गावेधुकश्चरुः, अनडुह्यै वहलाया ऐन्द्रं दधि । तेनेन्द्रतुरीयेण यजते । इन्द्राग्नीऽउ हैवैतत् समूदाते—उतिपबन्ते वाऽइमानि दिक्षु नाष्ट्रा रक्षांसि, हन्तैभ्यो वज्रं प्रहरावेति ॥ ११ ॥

स हाग्निरुवाच—त्रयो मम भागाः सन्तु । एकस्तवेति । तथेति । तावेतेन हविषा दिक्षु नाष्ट्रा रक्षांस्यपाहताम् । तौ व्यजयेताम्—यैनयोरियं विजितिस्ताम् । तथोऽएवैष एतेन हविषा दिक्षु नाष्ट्रा रक्षांस्यपहन्ति । तथोऽएव विजयते । विजितेऽभयेऽनाष्ट्रे सूयाऽइति ॥ १२ ॥

स य एष आग्नेयोऽष्टाकपालः पुरोडाशो भवति । सोऽग्नेरेको भागः । अथ यद्वारुणो यवमयश्चरुर्भवति । यो वै वरुणः सोऽग्निः । सोऽग्नेर्द्वितीयो भागः । अथ यद्रौद्रो गावेधुकश्चरुर्भवति । यो

यागांतरं विधत्ते—अथेन्द्रेति । 'अथ' पञ्चवातीयहोमानन्तरम्, इन्द्रस्तुरीयश्चतुर्थहविर्देवता यस्मिन् कर्मणि, तत् 'इन्द्रतुरीयम्' कर्म वक्ष्यत इत्यर्थः ( तै. सं. १ । ८ । ७ ) तस्य हविश्चतुष्टयं विधत्ते—आग्नेय इत्यादि । गवेधुका. आरण्यगोधूमाः । 'वहलायै' वहं नाम ककुत्प्रदेशः, तद्वत्यै 'अनडुह्यै' षष्ठ्यर्थे चतुर्थी (पा.सू.२।३।६२वा.) तस्याः । 'दधि' 'ऐन्द्रम्' इन्द्रदेवत्यं कुर्यात् । अथ विधत्ते—तेनेन्द्रतुरीयेणेति ॥

यागस्येन्द्रतुरीयत्वमाख्यायिकया दर्शयति—इन्द्राग्नी उ हैवैतदिति । 'समूदाते' सम्वादं कृतवन्तौ ॥ ११ ॥

स हाग्निरित्यादिना अग्नेस्त्रयो भागाः इन्द्रस्य तुरीय एको भाग इति यागस्यार्थात् इन्द्रतुरीयमिति नाम निरुक्तम् । स्पष्टमन्यत् ॥ १२ ॥

अग्नेर्भागत्रयं क्रमेण प्रतिपादयति—स य एष आग्नेय इति । यो वै वरुण इत्यादि । वरुणो रुद्रश्चोभाव-

१-इन्द्रतुरीयम् । का० श्रौ० सू० १५ । २३ । २-आग्नेयः । का० श्रौ० सू० १५ । २४ । ३-आग्नेयः । वारुणो यवमयश्चरुः । अन्यत्रापि । रौद्रश्च गावेधुकः । का. श्रौ. सू. १५ । २४-२८ ।

यद्गावेधुको भवति व्वास्तव्यो वा ऽएष देवो व्वास्तव्या गवेधुकास्तस्मा-द्गावेधुको भवत्यथ यदनडुह्यै व्वहलाया ऽऐन्द्रं दधि भवति स ऽ इन्द्रस्य चतुर्थो भागो यद्वै चतुर्थं तत्तुरीयं तस्मादिन्द्रतुरीयं नाम तस्यैषैवानडुही व्वहला दक्षिणा सा हि व्वहेनाग्नेय्यग्निदग्धमिव ह्यस्यै व्वहं भवत्यथ यत्स्त्री सती व्वहत्यधर्मेण तदस्यै व्वारुणꣳ रूपमथ यद्गौस्तेन रौद्र्यथ यदस्या ऽऐन्द्रं दधि तेनैन्द्र्येषा हि वा ऽएतत्सर्व्वं व्यश्नुते तस्मादेषैवान-डुही व्वहला दक्षिणा ॥ १३ ॥

( णाऽथा ) अथापामार्गहोमं जुहोति । ( त्य ) अपामार्गैर्व्वै देवा दिक्षु नाष्ट्रा रक्षाꣳस्यपामृजत ते व्यजयन्त येयमेषां व्विजितिस्तां तथोऽएवैष ऽएतदपामार्गैरेव दिक्षु नाष्ट्रा रक्षाꣳस्यपमृष्टे तथोऽएव व्विजयते व्विजि-तेऽभयेऽनाष्ट्रे सूयाऽइति ॥ १४ ॥

---

वै रुद्रः सोऽग्निः। सोऽग्नेस्तृतीयो भागः। अथ यद्गावेधुको भवति । वास्तव्यो वाऽएष देवः। वास्तव्या गवेधुकाः । तस्माद्गावेधुको भवति । अथ यदनडुह्यै वहलायाऽऐन्द्रं दधि भवति—स इन्द्रस्य चतुर्थो भागः । यद्वै चतुर्थं तत्तुरीयम् । तस्मादिन्द्रतुरीयं नाम । तस्यैषैवानडुही वहला दक्षिणा । सा हि वहेनाग्नेयी । अग्निदग्धमिव ह्यस्यै वहं भवति । अथ यत् स्त्री सती वहति—अधर्मेण । तदस्यै वारुणं रूपम् ।-अथ यद्गौः, तेन रौद्री । अथ यदस्याऽऐन्द्रं दधि, तेनैन्द्री । एषा हि वाऽएतत्सर्वं व्यश्नुते । तस्मादेषैवानडुही वहला दक्षिणा ॥ १३ ॥

अथापामार्गहोमं जुहोति । अपामार्गैर्वै देवा दिक्षु नाष्ट्रा रक्षांस्यपामृजत । ते व्यजयन्त—येय-

---

प्यग्निरेव । तथा च तैत्तिरीयके—" ते देवा अग्निमब्रुवन् " इति—प्रस्तुत्य " स त्रेधाऽऽत्मानं व्यकुरुताग्निं तृतीयं रुद्रं तृतीयं वरुणं तृतीयम् "— ( तै. ब्रा. १ । ७ । १ )इति । वास्तव्य इति । रुद्रः खलु वास्तुभवः । ग्रामाद्बाह्यो यज्ञभूमिश्मशानादिर्वास्तुः । गवेधुका अपि ' वास्तुभवाः ' । अतो गावेधुकहविषो रुद्रदैवत्यत्वं युक्तमिति । अथ यदनडुह्या इत्यादि । उक्तार्थम् ॥ तस्य दक्षिणां विधत्ते—तस्यैषैवेति । दक्षिणारूपाया अनडुह्या अग्निवरुणरुद्रेन्द्रदेवतानामौचित्यं दर्शयति—सा हि वहेनेति । युगवहनप्रदेशे कृष्णवर्णत्वात् अग्नेः सम्बन्धिनी; स्त्रीत्वे सत्यपि, ' अधर्मेण ' स्त्रिया अयोग्येनानोवहनेन वारुणी; वरुणो हि स्वपाशैः सर्वान् बध्नाति । गवां रुद्रदेवत्यत्वात् ' तेन रौद्री ' । एतदीयस्य दध्न ऐन्द्रत्वात् ' तेन ' ' ऐन्द्री ' इन्द्रदेवताका । एतादृशी ' अनडुही ' एतस्येन्द्रतुरीयकर्मणो दक्षिणात्वेन संयुज्यत इत्यर्थः ( तै. सं. १ । ८ । ७ । १ ) ॥ १३ ॥

विधत्ते—अथापामार्गेति[२] । तं राज्ञो विजितिसाधनत्वेन प्रशंसति—अपामार्गैर्वै देवा इति । 'अपामृजत' अपमार्जनं कृतवन्तः । अपमृष्ट इति । इदानीं मनुष्योऽप्यपमार्जनं करोति ॥ १४ ॥

---

१—वहिनी दध्यैन्द्रम् । का । श्रौ । सू. १५ । २८ । २—अपामार्गहोमः । का. श्रौ. सू. १५ । २९ ॥

स पालाशे वा स्रुवे वैकङ्कते वा । (वाऽपा) अपामार्गतण्डुलानादत्तेऽन्वाहार्यपचनादुल्मुकमाददते तेन प्राञ्चो वोदञ्चो वा यन्ति तदग्निᳯ समाधाय जुहोति ॥ १५ ॥

स ऽउल्मुकमादत्ते । (त्तेऽग्ने) अग्ने सहस्व पृतना इति युधो वै पृतना युधः सहस्वेत्येवैतदाहाभिमातीरपास्येति सपत्नो वाऽअभिमातिः सपत्नमपजहीत्येवैतदाह दुष्टरस्तरन्नरातीरिति दुस्तरो ह्येष रक्षोभिर्नाष्ट्राभिस्तरन्नरातीरिति सर्वᳯ ह्येष पाप्मानं तरति तस्मादाह तरन्नरातीरिति वर्चो धा यज्ञवाहसीति साधु यजमाने दधदित्येवैतदाह ॥ १६ ॥

---

मेषां विजितिस्ताम् । तथोऽएवैष एतदपामार्गैरेव दिक्षु नाष्ट्रा रक्षांस्यपमृष्टे । तथोऽएव विजयते । विजितेऽभये नाष्ट्रे स्याऽइति ॥ १४ ॥

स पालाशे वा स्रुवे, वैकङ्कते वा, अपामार्गतण्डुलानादत्ते । अन्वाहार्यपचनादुल्मुकमाददते । तेन प्राञ्चो वोदञ्चो वा यन्ति । तदग्निं समाधाय जुहोति ॥ १५ ॥

स उल्मुकमादत्ते–" अग्ने सहस्व पृतनाः "–इति । युधो वै पृतनाः । युधः सहस्वेत्येवैतदाह । " अभिमातीरपास्य "–इति । सपत्नो वाऽअभिमातिः । सपत्नमपजहीत्येवैतदाह । " दुष्टरस्तरन्नरातीः "–इति । दुस्तरो ह्येष रक्षोभिर्नाष्ट्राभिः । " तरन्नरातीः "–इति । सर्वं ह्येष पाप्मानं तरति । तस्मादाह–तरन्नरातीरिति । " वर्चो धा यज्ञवाहसि "–( वा. सं. ९।३७ ) इति । साधु यजमाने दधद्–इत्येवैतदाह ॥ १६ ॥

---

तस्यानुष्ठानं सविशेषमाह–स पालाशे वेति । पलाशवैकङ्कतयोरन्यतरवृक्षनिर्मिते ' स्रुवे ' अपामार्गतण्डुलानादाय अन्वाहार्यपचनाग्नेरुल्मुकञ्चादाय प्राङ्मुखा उदङ्मुखा वा 'यन्ति' तत्राग्निं प्रतिष्ठाप्य होमः कर्त्तव्यः॥१५॥

उल्मुकादानमनूद्य मन्त्रं विधत्ते–स उल्मुकमिति[2] । हे ' अग्ने ! ' ' पृतनाः ' संग्रामान् 'सहस्व ' 'अभिमातीः ' अभिमन्यमानान् सपत्नान् 'अपास्य' अपक्षिप " असु क्षेपणे " ( धा. पा. दि. प. १०२ ) एवमनिष्टनिवृत्तिमुक्त्वेष्टप्राप्तिं प्रार्थयते–' दुष्टरः ' अन्यैस्तरितुमशक्यः स्वयम् ' अरातीः ' शत्रून् ' तरन् ' ' यज्ञवाहसि ' यजमाने ' वर्चः ' अन्नम् 'धाः' धारयसि इति । मन्त्रं प्रतिपादमनूद्य व्याचष्टे–अग्ने सहस्वेति । वर्चः–पदस्य श्रेयःपरत्वमाह–साधु यजमान इति । ' दधत् ' धारयन्नित्यर्थः ॥ १६ ॥

---

१–स्रुवे पालाशे वैकंकते वाऽपामार्गतंडुलान् कृत्वा । त्र्यंबकवद्दिग्गमी । प्राची वा । का. श्रौ. सू. १५ । ३०–३२ । २–अग्ने सहस्वेत्युल्मुकादानम् । का० श्रौ० सू० १५ । ३३ ।

तदग्निꣳ समाधाय जुहोति । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपाꣳशोर्वीर्येण जुहोमीति यज्ञमुखं वा ऽउपाꣳशुर्यज्ञमुखेनैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति हतꣳ रक्षः स्वाहेति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ १७ ॥

स यदि पालाशः स्रुवो भवति । ब्रह्म वै पलाशो ब्रह्मणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति यद्यु वैकङ्कतो वज्रो वै विकङ्कतो वज्रेणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति रक्षसां त्वा वधायेति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ १८ ॥

स यदि प्राङिꣳत्वा जुहोति । प्राञ्चꣳ स्रुवमस्यति यद्युदङ्ङित्वा जुहोत्युदञ्चꣳ स्रुवमस्यत्यवधिष्म रक्ष ऽइति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ १९ ॥

---

तदग्निं समाधाय जुहोति–"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामुपांशोर्वीर्येण जुहोमि"–इति । यज्ञमुखं वाऽउपांशुः । यज्ञमुखेनैवैतन्नाष्ट्रा रक्षांसि हन्ति । "हतं रक्षः स्वाहा"–इति । तन्नाष्ट्रा रक्षांसि हन्ति ॥ १७ ॥

स यदि पालाशः स्रुवो भवति । ब्रह्म वै पलाशः । ब्रह्मणैवैतन्नाष्ट्रा रक्षांसि हन्ति । यद्यु वैकङ्कतः । वज्रो वै विकङ्कतः । वज्रेणैवैतन्नाष्ट्रा रक्षांसि हन्ति । "रक्षसां त्वा वधाय"- इति । तन्नाष्ट्रा रक्षांसि हन्ति ॥ १८ ॥

स यदि प्राङित्वा जुहोति–प्राञ्चं स्रुवमस्यति । यद्युदङ्ङित्वा जुहोति–उदञ्चं स्रुवमस्यति । "अवधिष्म रक्षः" इति । तन्नाष्ट्रा रक्षांसि हन्ति ॥ १९ ॥

---

हवनमनूद्य मन्त्रं विधत्ते–तदग्निमिति । देवस्य त्वेति । व्याख्यातम् । उपांशोरिति । 'उपांशुः' नाम '-यज्ञमुखं' प्रथमो ग्रहः, तस्य 'वीर्येण' 'जुहोमि' । तेन हवनेन 'रक्षः' हतं निहतं नष्टं भवतु । 'स्वाहा' इदं हविः सुहुतमस्तु इति ॥ १७ ॥

पालाशवैकङ्कतयोरेकतरस्य हवनोपयुक्तस्य स्रुवस्य क्षेपणं सार्थवादं विधत्ते–स यदि पालाश इति । क्षेपणमन्त्रं पठति–रक्षसामिति । हे स्रुव ! 'रक्षसां वधाय' 'त्वा' त्वाम्, अस्यामीति शेषः ॥ १८ ॥

क्षेपणे दिग्विशेषमाह–स यदीति । 'यदि' अध्वर्युः 'प्राङ्' प्राङ्मुखः पूर्वस्यां दिशि गत्वा जुहुयात्, तर्हि 'स्रुवं' 'प्राञ्चं' प्राग्दिक्सम्बद्धम् 'अस्यति' क्षिपति । उदङ्ङित्वादावप्येवं योज्यम् । हवनप्रदेशात् तन्निवर्त्तनं विधित्सुरादौ तन्मन्त्रं पठित्वा व्याचष्टे–अवधिष्मेति । अनेनापामार्गहोमेन 'रक्षः' 'अवधिष्म' वयं हतवन्तः । भूते लुङ् ॥ १९ ॥

---

१–देवस्य त्वेति जुहोति । का० श्रौ० सू० १५ । ३४ । २–रक्षसां त्वेति स्रुवमस्यति तां दिशं यस्यां जुहोत्यवधिष्म रक्ष इत्यावर्तयनपेक्षम् । का. श्रौ. सू. १५ । ३५ ।

(न्त्य) अथाप्रतीक्षं पुनरायन्ति । स हैतेनापि प्रतिसरं कुर्व्वीत स यस्यां ततो दिशि भवति तत्प्रतीत्य जुहोति प्रतीचीनफलो वा ऽअपामार्गः स यो हास्मै तत्र किञ्चित्करोति तमेवैतत्प्रत्यग्धूर्व्वति तस्य नामादिशेदव- धिष्मामुमसौ हत इति तन्नाष्ट्रा रक्षाᳬंसि हन्ति ॥ २० ॥

इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् ॥ ५–२–३ ॥ (२. ४.)

आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्व्वपति । (त्यै) ऐन्द्रा- वैष्णवं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन त्रिषंयुक्तेन यजते पुरुषानेतद्देवा ऽउपायंस्तथो ऽएवैष ऽएतत्पुरुषानेवोपैति ॥ १ ॥

---

अथाप्रतीक्षं पुनरायन्ति । स हैतेनापि प्रतिसरं कुर्वीत । स यस्यां ततो दिशि भवति–तत्प्रतीत्य जुहोति । प्रतीचीनफलो वाऽअपामार्गः । स यो हास्मै तत्र किञ्चित्करोति–तमेवैतत् प्रत्यग्धूर्वति । तस्य नामादिशेत् । "अवधिष्मामुम् असौ हतः"–(वा० सं० ९ । ३८) इति । तन्नाष्ट्रा रक्षांसि हन्ति ॥ २० ॥

त्रिषंयुक्तादियागाः ।

आग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति, ऐन्द्रावैष्णवं चरुं वैष्णवं त्रिकपालं वा

---

एतन्मन्त्रकरणकं पुनरागमनं विधत्ते–अथाप्रतीक्षमिति (का. श्रौ. सू. १९ । ३९) । 'अथ' 'अप्रतीक्षं' तं प्रदेशं प्रतिनिवृत्य, अनवेक्ष्येत्यर्थः । अभिवर्द्धमानस्यापि स्वोपद्रवपरिहारायेमं होमं विधत्ते–स हैतेनापीति । 'एतेन' अपामार्गहोमेन 'अपि' न केवलं पञ्चवातीयहोमेन, एतेनापि 'प्रतिसरं' स्वरक्षा- मभिचार्यमाणः कुर्यात् । हवने कश्चिद्विशेषं विधत्ते–स यस्यामिति । अभिचारको यस्यां 'दिशि' भवेत्, तां दिशं 'प्रतीत्य' गत्वा जुहुयात्–प्रतीचीनफल इति । अपामार्गमञ्जर्यो यतः प्रतीचीनफलाः स्वात्मानं प्रतिगतैरवाङ्मुखैः फलैर्युक्ताः अतो योऽभिचारकः 'अस्मै' यजमानाय किञ्चित् पीडादिकं कुर्यात् । 'तमेव' एतेनापामार्गहोमेन प्रतिमुखं 'धूर्वति' हिनस्ति, तत्कृतोऽभिचारः तमेव प्रतिनिवृत्य हिनस्तीत्यर्थः । निवर्त्तन- मन्त्रेण शत्रुनामादेशनं विधत्ते–तस्य नामेति । अवधिष्मामुमिति । 'अमुम्' 'असौ' इति पदयोः स्थाने अभिचारकनामधेयं द्वितीयान्तत्वेन प्रथमान्तत्वेन चादिशेदित्यर्थः ॥ अत्र सूत्रम्–" देवस्य त्वेति जुहोति; रक्षसां त्वेति स्रुवमस्यति तां दिशं यस्यां जुहोत्यवधिष्म रक्ष इत्यायन्त्यनपेक्षम् "–(का. श्रौ. सू. १९ । ३४ । ३९) इति । " अभिचर्यमाणोऽपि तां दिशं गत्वाऽभिचरतो नामादिशेत् "–इति कर्कोक्तिः ॥२०॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे द्वितीयाऽध्याये चतुर्थं ब्राह्मणम् ॥ (५-२-४) ॥

अथ त्रिषंयुक्तेष्टित्रयं विधित्सुः प्रथमं त्रिषंयुक्तमनुक्रामति–आग्नावैष्णवमिति । तद् विधत्ते–तेन

स यदाग्नावैष्णवः । ( ऽ ) एकादशकपालः पुरोडाशो भवत्यग्निर्वै दाता व्वैष्णवाः पुरुषास्तदस्माऽअग्निर्दाता पुरुषान्ददाति ॥ २ ॥

( त्यु ) अथ यदैन्द्राव्वैष्णवः । (श्व) चरुर्भवतीन्द्रो वै यजमानो व्वैष्णवाः पुरुषाः स यानेवास्मा ऽअग्निर्दाता पुरुषान्ददाति तैरेवैतत्सᳬस्पृशते तानात्मन्कुरुते ॥ ३ ॥

(तुऽथा) अथ यद्वैष्णवः । (त्रि) त्रिकपालो वा पुरोडाशो भवति चरुर्व्वा यानेवास्माऽअग्निर्दाता पुरुषान्ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति यद्वै पुरुषवान्कर्म चिकीर्षति शक्नोति वै तत्कर्तुं तत्पुरुषानेवैतदुपैति पुरुषवान्त्सूयाऽइति तस्य व्वामनो गौर्दक्षिणा स हि व्वैष्णवो यद्वामनः ॥ ४ ॥

---

पुरोडाशं, चरुं वा । तेन त्रिषंयुक्तेन यजते । पुरुषानेतद्देवा उपायन् । तथोऽएवैषऽएतत् पुरुषानेवोपैति ॥ १ ॥

स यदाग्नावैष्णवऽएकादशकपालः पुरोडाशो भवति–अग्निर्वै दाता, वैष्णवाः पुरुषाः–तदस्माऽअग्निर्दाता पुरुषान् ददाति ॥ २ ॥

अथ यदैन्द्रावैष्णवश्चरुर्भवति–इन्द्रो वै यजमानो, वैष्णवाः पुरुषाः–स यानेवास्माऽअग्निर्दाता पुरुषान् ददाति । तैरेवैतत्संस्पृशते । तानात्मन् कुरुते ॥ ३ ॥

अथ यद्वैष्णवस्त्रिकपालो वा पुरोडाशो भवति, चरुर्वा–यानेवास्माऽअग्निर्दाता पुरुषान् ददाति–तेष्वेवैतदन्ततः प्रतितिष्ठति । यद्वै पुरुषवान्कर्म चिकीर्षति–शक्नोति वै तत् कर्तुम् । तत् पुरुषानेवैतदुपैति । पुरुषवान् सूयाऽइति । तस्य वामनो गौर्दक्षिणा । स हि वैष्णवो–यद्वामनः ( १ ) ॥ ४ ॥

---

त्रिषंयुक्तेनेति । त्रिभिर्हविर्भिः संयुक्तं कर्म त्रिषंयुक्तं तेन यजेत । पुरुषप्राप्तिहेतुतामाह–पुरुषानेवैतदिति । यतो देवा एतेन त्रिषंयुक्तेन सहायभूतान् कर्मकरान् पुरुषान् प्राप्तवन्तः, तथा यजमानोऽपि तथाविधान् पुरुषान् अनेन यागेन प्राप्नोतीत्यर्थः ॥ १ ॥

त्रीणि हवींषि विभज्य स्तौति–स यदाग्नावैष्णव इति । वैष्णवाः पुरुषा इति । विष्णोरवतारस्वीकारेण मनुष्यसम्बन्धात् मनुष्याः सर्वे ' वैष्णवाः ' विष्ण्वधिष्ठिता इत्यर्थः । ' तत् ' तथा सति ' अस्मै ' यजमानाय आग्नावैष्णवयागेन ' दाता अग्निः ' विष्ण्वात्मकान् ' पुरुषान् ' ' ददाति ' इत्यर्थः ॥ २ ॥

प्रयोजनमाह–अथ यदैन्द्रावैष्णव इति । ( तै. सं. १ । ८ । ८ । १ । तै. ब्रा. १ । ७ । २ ) ॥ ३ ॥

अथ यद् वैष्णव इति । तेष्वेवैतदन्तत इति । ' अन्ततः ' अवसाने केवलवैष्णवयागेन ' तेषु ' अग्निदत्तेषु स्वसम्बद्धेषु विष्ण्वात्मकेष्वेव पुरुषेषु प्रतिष्ठितो भवति । अथ पुरुषप्राप्तेः फलमाह–यद्वै पुरुषवानिति । यतः पुरुषसहायवानेव ' कर्म ' कर्तुमिच्छति ' तत् कर्तुं ' ' शक्नोति ' च; अतः ' तत् ' तेन प्रथमेन त्रिषं-

---

१–त्रिषंयुक्तेषु । का० श्रौ० सू० १५ । ३६ ।

( नो॒ऽथा ) अथा॒परे॑ण त्रिषं॒युक्ते॑न यजते । स आ॑ग्नापौ॒ष्णमेका॑दशकपालं पुरोडा॒शं निर्व्वपत्यैन्द्रापौ॒ष्णं च॒रुं पौ॒ष्णं च॒रुं तेन॑ त्रिषं॒युक्ते॑न यजते प॒शूने॒व त॒द्दे॒वाऽउ॒पाय॑स्त॒थोऽए॒वैषु ए॒तत्प॒शूने॒वोपै॑ति ॥ ९ ॥

स य॒दाग्नापौ॒ष्णः । ( ऽ ) ए॒का॑दशकपालः पुरोडा॒शो भ॑वत्य॒ग्निर्वै दा॒ता पौ॒ष्णाः प॒शव॑स्त॒दस्मा॑ऽअ॒ग्निरे॒व दा॒ता प॒शून्द॑दाति ॥ ६ ॥

( त्यु ) अ॒थ य॒दैन्द्रापौ॒ष्णः । ( श्च ) च॒रुर्भव॒तीन्द्रो॒ वै य॒जमा॑नः पौ॒ष्णाः प॒शवः॒ स या॒नेवा॒स्माऽअ॒ग्निर्दा॒ता प॒शून्द॑दाति तैरे॒वैत॒त्स॑ᳩस्पृशते ता॒ना॒त्मन्कुरुते ॥ ७ ॥

( ते॒ऽथ ) अ॒थ य॒त्पौ॒ष्णः । ( श्च ) च॒रुर्भ॑वति या॒नेवा॒स्माऽअ॒ग्निर्दा॒ता प॒शून्द॑दाति ते॒ष्वे॒वैत॒दन्ततः प्रतितिष्ठति य॒द्वै प॒शुमान्कर्म चि॒कीर्षति

---

अथापरेण त्रिषंयुक्तेन यजते । स आग्नापौष्णमेकादशकपालं पुरोडाशं निर्वपति, ऐन्द्रापौष्णं चरुम्, पौष्णं चरुम् । तेन त्रिषंयुक्तेन यजते । पशूनेव तद्देवा उपायन् । तथोऽएवैष एतत् पशूनेवोपैति ॥ ९ ॥

स यदाग्नापौष्णऽएकादशकपालः पुरोडाशो भवति–अग्निर्वै दाता, पौष्णाः पशवः–तदस्माऽ-अग्निरेव दाता पशून् ददाति ॥ ६ ॥

अथ यदैन्द्रापौष्णश्चरुर्भवति–इन्द्रो वै यजमानः; पौष्णाः पशवः–स यानेवास्माऽअग्निर्दाता पशून् ददाति–तैरेवैतत् संस्पृशते । तानात्मन् कुरुते ॥ ७ ॥

अथ यत् पौष्णश्चरुर्भवति–यानेवास्माऽअग्निर्दाता पशून् ददाति–तेष्वेवैतदन्ततः प्रतितिष्ठति । यद्वै पशुमान् कर्म चिकीर्षति–शक्नोति वै तत् कर्तुम् । तत् पशूनेवैतदुपैति । पशुमान्त्स्याऽइति ।

---

युक्तेन 'पुरुषानेव' प्राप्नोति । तस्य दक्षिणां विधाय स्तौति–तस्य वामन इति । 'वामनः' ह्रस्वाङ्गः । यतो वामनो विष्णुसम्बन्धी, अतो वैष्णवयागे दक्षिणात्वेन भवितुं युज्यत इत्यर्थः ॥ ४ ॥

द्वितीयं त्रिहविष्कं विधत्ते–अथापरेणेति । अस्य त्रिषंयुक्तस्य पशुप्राप्तिहेतुतामाह–पशूनेवेति । पूर्ववद् योज्यम् । अत्र विष्णुस्थाने पूषैव विशेषः ॥ ९ ॥

स यदाग्नापौष्ण इति । पौष्णाः पशव इति । पूषा हि पशूनामुत्पादकः अतस्ते पौष्णाः । श्रूयते हि– "पूषा पशूनां प्रजनयिता" ( तै. ब्रा. १ । ७ । २ । १ ) इति ॥ ६ ॥

अथ यदैन्द्रापौष्ण इति ॥ ७ ॥

अथ यत्पौष्ण इति । अथैतस्य दक्षिणां विधत्ते–तस्य श्याम इति । श्यामो गौरिति[२] । 'यत्' स

---

१–आग्नावैष्णव ऐंद्रावैष्णवो वैष्णवो वामनो दक्षिणा । कां. श्रौ. सू. १५ । ३७ । २–लिंग्रहणे गौः सर्वत्र । का० श्रौ० सू० । १५ । ३८ ।

शक्नोति वै तत्कर्त्तुं तत्पशूनेवैतदुपैति पशुमान्त्स्यामीति तस्य श्यामो गौर्दक्षिणा स हि पौष्णो यच्छ्यामो द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं वै पूषा पशवो हि पूषा पशवो हि प्रजननं मिथुनमेवैतत्प्रजननं क्रियते तस्माच्छ्यामो गौर्दक्षिणा ॥ ८ ॥

( णाऽथा ) अथापरेण त्रिषंयुक्तेन यजते । सोऽग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपत्यैन्द्रासौम्यं चरुँ सौम्यं चरुं तेन त्रिषंयुक्तेन यजते व्वर्चऽएव तद्देवा ऽउपायंस्तथोऽएवैष ऽएतद्वर्चऽएवोपैति ॥ ९ ॥

स यदग्नीषोमीयः । ( ऽ ) एकादशकपालः पुरोडाशो भवत्यग्निर्व्वै दाता व्वर्चः सोमस्तदस्माऽअग्निरेव दाता व्वर्चो ददाति ॥ १० ॥

---

तस्य श्यामो गौर्दक्षिणा । स हि पौष्णो यच्छ्यामः । द्वे वै श्यामस्य रूपे–शुक्लं चैव लोम, कृष्णं च । द्वन्द्वं वै मिथुनं प्रजननम् । प्रजननं वै पूषा । पशवो हि पूषा । पशवो हि प्रजननम् । मिथुनमेवैतत् प्रजननं क्रियते । तस्माच्छ्यामो गौर्दक्षिणा (२) ॥ ८ ॥

अथापरेण त्रिषंयुक्तेन यजते । सोऽग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति, ऐन्द्रासौम्यं चरुम्, सौम्यं चरुम् । तेन त्रिषंयुक्तेन यजते । वर्च एव तद्देवा उपायन् । तथोऽएवैष एतद्वर्च एवोपैति ॥ ९ ॥

स यदग्नीषोमीयऽएकादशकपालः पुरोडाशो भवति–अग्निर्वै दाता, वर्चः सोमः । तदस्माऽअग्निरेव दाता वर्चो ददाति ॥ १० ॥

---

हि 'पौष्णः' पूषदेवताकः । तदेवोपपादयति–द्वे वा इति । श्यामवर्णस्य शुक्लकृष्णात्मकद्विरूपयोगाद् द्वित्वसंख्याद्वारा पूषरूपतामाह–द्वन्द्वं वा इति । लोके हि स्त्रीपुरुषात्मकं 'द्वन्द्वं' 'मिथुनं' परस्परं संसृष्टं तत् 'प्रजननं' प्रजोत्पत्तिकारणम्; पूष्णोऽपि तदेव स्वरूपमिति तत्सृष्टाः पशवोऽपि पूषैव । यतः पूषात्मकाः 'पशवः' तेऽपि 'प्रजननं' प्रजोत्पत्ति निमित्तम्; अतः शुक्लकृष्णात्मकस्य श्यामस्य गोर्दानेन पशूत्पत्तिनिमित्तं मिथुनमेव संपादितं भवतीत्यर्थः । अतः पशुफलके यागे दक्षिणात्वेन युज्यत इत्यर्थः ॥ ८ ॥

तृतीयं त्रिषंयुक्तं विधत्ते–अथापरेणेति । तस्य वर्चस्साधनतामाह–वर्च्च एवैतदिति । 'वर्चः' ब्राह्मं तेजः । अत्र विष्णुस्थाने सोमो विशेषः ॥ ९ ॥

स यदग्नीषोमीय इति । वर्च्चः सोम इति । सोमस्य यागद्वारा ब्रह्मवर्चसनिमित्तत्वात् तादात्म्यव्यपदेशः । अन्यत्पूर्ववद्योज्यम् ॥ १० ॥ ११ ॥

---

१–आग्नापौष्ण ऐन्द्रापौष्णः पौष्णः श्यामो दक्षिणा । का० श्रौ० सू० १५ । ३९ ।

( त्यु ) अथ युदैन्द्रासौम्युः । ( श्च ) चरुर्भवतीन्द्रो वै युजमानो व्वुर्चः सोमः स युदेवास्माऽअग्निर्दाता व्वुर्चों दुदाति तेनैवैतत्सुᳬँस्पृशते तुदात्मन्कुरुते ॥ ११ ॥

( तुऽथ ) अथ युत्सौम्युः । ( श्च ) चरुर्भवति युदेवास्मा ऽअग्निर्दाता व्वुर्चों दुदाति तुस्मिन्नेवैतुदन्ततः प्रतितिष्ठति यद्वै व्वर्चस्वी कुर्म चिकीर्षति शक्नोति वै तत्कुर्त्तु तद्वर्च ऽएवैतदुपैति व्वर्चस्वी सूयाऽइति नो ह्यवर्चसो व्याप्त्या चनार्थोऽस्ति तुस्य बभ्रुगौर्दक्षिणा स हि सौम्यो युद्बभ्रुः ॥ १२ ॥

( र ) अथ श्वोभूते । व्वैश्वानरं द्वादशकपालं पुरोडाशं निर्व्वपति व्वारुणं यवमुयं चरुं ताभ्यामनूचीनाहं व्वेष्टिभ्यां युजते समानबर्हिर्भ्यां वा ॥ १३ ॥

---

अथ यदैन्द्रासौम्यश्चरुर्भवति । इन्द्रो वै यजमानः। वर्चः सोमः। स यदेवास्माऽअग्निर्दाता वर्चो ददाति; तेनैवैतत् संस्पृशते । तदात्मन् कुरुते ॥ ११ ॥

अथ यत् सौम्यश्चरुर्भवति–यदेवास्माऽअग्निर्दाता वर्चो ददाति तस्मिन्नेवैतदन्ततः प्रतितिष्ठति । यद्वै वर्चस्वी कर्म चिकीर्षति–शक्नोति वै तत्कर्तुम्। तद्वर्च एवैतदुपैति । वर्चस्वी सूयाऽइति । नो ह्यवर्चसो व्याप्त्या चनार्थोऽस्ति । तस्य बभ्रुगौर्दक्षिणा । स हि सौम्यो यद् बभ्रुः ( ३ ) ॥ १२ ॥

अथ श्वोभूते वैश्वानरं द्वादशकपालं पुरोडाशं निर्वपति। वारुणं यवमयं चरुम्। ताभ्यामनूचीनाहं वेष्टिभ्यां यजते समानबर्हिर्भ्यां वा ॥ १३ ॥

---

अथ यत्सौम्य इति। नो ह्यवर्चस इति। 'अवर्चसः' अतेजस्कस्य यद्यपि व्याप्तिः सर्वपदार्थव्यापनशक्तिरस्ति ' चन '–शब्दोऽप्यर्थे, तथापि तया 'व्याप्त्या' अपि 'न'खलु 'अर्थः' प्रयोजनं विद्यते इति। तस्य दक्षिणां विधत्ते–बभ्रुर्गौरिति । ' स हि सौम्यः ' इति ' बभ्रुः ' भवत्येव; " एतद्वै सोमस्य रूपम्"–( तै. सं. २।१।३।४ ) इति श्रवणात् ॥ १२ ॥

अथानन्तरदिवसकर्त्तव्यं द्विहविष्कं यागं विधत्ते–अथ श्वोभूत इति । अनूचीनाहमिति । अनूचीने पूर्वापरीभूते अहनी ' अनूचीनाहं' क्रियाविशेषणमेतत् । वैश्वानरेष्ट्या पूर्वस्मिन् दिने यजेत, वारुण्या अपरस्मिन् दिने; एवं भिन्नतन्त्रेणैतौ यागौ कार्यौ । एकस्मिन्नेवाहनि वा समानतन्त्राभ्यां यष्टव्यमित्याह–समानबर्हिर्भ्यामिति । बर्हिरुपलक्षितं कृत्स्नं तन्त्रं समानं साधारणं ययोः ते समानबर्हिषी । अत्र सूत्रम्–"श्वो वैश्वानरो द्वादशकपालो वारुणश्चैकतन्त्रे, श्वो वैकः"–( का. श्रौ. सू. १९ । ४३।४४ ) इति ॥ १३ ॥

---

१–अग्नीषोमीय ऐंद्रासौम्यः सौम्यो बभ्रुर्दक्षिणा । का. श्रौ. सू. । १५ । ४० ।

स युद्वैश्वानरो भुवति । संव्वत्सरो वै व्वैश्वानुरः संव्वत्सुरः प्रजापतिः प्रजापतिरेव तुद्भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा सूयाऽइति तुथोऽएवैषु ऽएतुद्भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा सूयाऽइति ॥ १४ ॥

( त्यु ) अुथ यद्द्वादशकपालो भुवति । द्वादश वै मासाः संव्वत्सरुस्य संव्वत्सरो व्वैश्वानरस्तुस्माद्द्वादशकपालो भवति ॥ १५ ॥

( त्यु ) अुथ युद्वारुणो यवमयश्चरुर्भुवति । तत्सुर्व्वस्माद्देवैतुद्वरुणपाशात्सुर्व्वस्माद्वरुण्यात्प्रजाः प्रमुञ्चति ता ऽअस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्तेऽनमीवा ऽअकिल्बिषाः प्रजा ऽअभि सूया ऽइति ॥ १६ ॥

( त्यृ ) ऋषभो व्वैश्वानरुस्य दुक्षिणा । संव्वत्सरो वै व्वैश्वानरुः संव्वत्सरुः प्रजापतिर्ऋषभो वै पशूनां प्रजापतिस्तुस्मादृषभो व्वैश्वानरुस्य दुक्षिणा

---

स यद् वैश्वानरो भवति । सम्वत्सरो वै वैश्वानरः । सम्वत्सरः प्रजापतिः । प्रजापतिरेव तद् भूमानं प्रजाः ससृजे । भूमानं प्रजाः सृष्ट्वा सूयाऽइति । तथो एवैष एतद्भूमानं प्रजाः सृजते । भूमानं प्रजाः सृष्ट्वा सूया इति ॥ १४ ॥

अथ यद् द्वादशकपालो भवति । द्वादश वै मासाः सम्वत्सरस्य । सम्वत्सरो वैश्वानरः । तस्माद् द्वादशकपालो भवति ॥ १५ ॥

अथ यद्वारुणो यवमयश्चरुर्भवति । तत् सर्वस्मादेवैतद् वरुणपाशात्, सर्वस्माद् वरुण्यात् प्रजाः प्रमुञ्चति । ता अस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्ते । अनमीवा अकिल्बिषाः प्रजा अभि सूयाऽइति ॥ १६ ॥

ऋषभो वैश्वानरस्य दक्षिणा । सम्वत्सरो वै वैश्वानरः, सम्वत्सरः प्रजापतिः । ऋषभो वै पशूनां प्रजापतिः । तस्मादृषभो वैश्वानरस्य दक्षिणा । कृष्णं वासो वारुणस्य । तद्धि वारुणं—यत्—

---

प्रथमस्य हविषो वैश्वानरदेवताकत्वं प्रशंसति—स यद् वैश्वानर इति । अग्नेः संवत्सरात्मकत्वमुख्याग्नेः संवत्सरणादिति षष्ठे काण्डे समाम्नास्यते ( श. प. ६ । ९ । १ । १२ ) । भूमानं प्रजा इति । भूयसीः प्रजा इत्यर्थः ॥ १४ ॥

कपालसंख्यां प्रशंसति—अथ यद्द्वादशकपाल इति । वैश्वानराग्नेः संवत्सरात्मकत्वात् तस्य मासद्वादशकरूपत्वात् तदीयस्य हविषः कपालेषु द्वादशसंख्या युज्यत इत्यर्थः ॥ १५ ॥

द्वितीयं हविः प्रशंसति—अथ यद् वारुण इति । तत्सर्वस्मादिति । 'तत्' तत्र 'एतत्' एतेन वारुणयागेन सर्वस्मादेव 'वरुणपाशात्,' तथा 'वरुण्यात्' वरुणपाशकृतात् सर्वस्माद् दुःखात् प्रजाः 'प्रमुञ्चति' ॥ १६ ॥

अनयोर्हविषोः क्रमेण दक्षिणामभिधाय प्रशंसति—ऋषभो, वैश्वानरस्य दक्षिणेति । ऋषभो वै पशू-

कृष्णं व्वासो व्वारुणस्य तद्धि व्वारुणं यत्कृष्णं यदि कृष्णं न विन्देदुपि यदेव किञ्च व्वासः स्याद्ग्रन्थिभिर्हि व्वासो वारुणं व्वरुण्यो हि ग्रन्थिः १७॥

इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ५-२-४ ॥ ( २. ५. ) ॥

इति द्वितीयोऽध्यायः ॥ ५ । २ ॥

---

कृष्णम् । यदि कृष्णं न विन्देद्—अपि यदेव किञ्च वासः स्यात् । ग्रन्थिभिर्हि वासो वारुणम् । वरुण्यो हि ग्रन्थिः ( ४ ) ॥ १७ ॥

---

नामिति । यतो वैश्वानरः परम्परया ' प्रजापतिः ' वृषभोऽपि पशूनां पतित्वात् प्रजापतिः, अतो वैश्वानर-देवताकयागस्य दक्षिणात्वेन युज्यत इत्यर्थः । तद्धि वारुणमिति । रात्र्यभिमानिदेवता वरुणः रात्रिश्च कृष्णवर्णा, अतो लोकेऽपि यत् कृष्णं तद् वारुणमित्युच्यते । कृष्णवस्त्रालाभे वर्णान्तरयुतं ' वासः ' देयमित्युक्तम् । तस्यो-पाध्यन्तरेण वरुणसम्बन्धित्वमुपपादयति—ग्रन्थिभिर्हीति । ग्रन्थिर्नाम पाशः, पाशो हि वरुणस्येति तद्योग्य-त्वम् । अयं दक्षिणाभेद इष्ट्योर्भिन्नतन्त्रत्वेन वेदितव्यः । समानतन्त्रत्वे हि एकेनैव द्रव्येण परिक्रीता ऋत्विजः कृत्स्नं प्रयोगजातं कुर्वन्तीतीतरवैयर्थ्यम् । तदुक्तम् कर्कोपाध्यायेन—" तन्त्रभेदे चैतद् भवति, ऐकतन्त्र्ये तु चोदक-परिप्राप्तोऽन्वाहार्य इति ॥ १७ ॥ ४ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मण-भाष्ये पञ्चमकाण्डे द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥ ( ५-२-५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे द्वितीयाध्यायः समाप्तः॥५-२॥

---

१—ऋषभः पूर्वस्य दक्षिणा कृष्णं वास उत्तरस्याभावेऽकृष्णम् । का० श्रौ० सू० १५ । ४५ ॥ २—का० श्रौ० सू० १५ । ४५। इत्यत्र भाष्ये ।

# अथ पञ्चमकाण्डे तृतीयाध्याये प्रथमं ब्राह्मणम् ।

अरण्योरग्नी समारोह्य । सेनान्यो गृहान्परेत्याग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपत्यग्निर्वै देवतानामनीकꣳ सेनाया वै सेनानीरनीकं तस्मादग्नयेऽनीकवतऽएतद्वाऽअस्यैकꣳ रत्नं यत्सेनानीस्तस्माऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य हिरण्यं दक्षिणाऽऽग्नेयो वाऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा ॥ १ ॥

---

### रत्नयागाः ।

अरण्योरग्नी समारोह्य, सेनान्यो गृहान्परेत्य, अग्नयेऽनीकवतेऽष्टाकपालं पुरोडाशं निर्वपति । अग्निर्वै देवतानामनीकम् । सेनाया वै सेनानीरनीकम् । तस्मादग्नयेऽनीकवते । एतद्वाऽअस्यैकं रत्नं यत् सेनानीः । तस्माऽएवैतेन सूयते । तं स्वमनपक्रमिणं कुरुते । तस्य हिरण्यं दक्षिणा । आग्नेयो वाऽएष भवति । अग्ने रेतो हिरण्यम् । तस्माद्धिरण्यं दक्षिणा ॥ १ ॥

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

तृतीयाध्याये प्रथमब्राह्मणे द्वादशरत्नहवींष्यनुदिनं क्रमेण कर्त्तव्यान्युच्यन्ते । अत्र कात्यायनो नैर्ऋतरत्नहविषां द्वादशहवींषीति सूत्रितवान्—" द्वादशोत्तराणि रत्नहवींषि, प्रतिगृहमेकैकं श्वः श्वः, समारूढेऽग्नौ निर्मथितेऽग्नयेऽनीकवते "—( का. श्रौ. सू. १९ । ४६—४८ ) इत्यादि । तत्र प्रथमं हविर्विधत्ते—अरण्योरग्नी इति । अग्नी गार्हपत्याहवनीयौ ' अरण्योः ' पृथक् पृथक् ' समारोह्य ' समारोप्य प्रतिदिवसं तत्तद्गृहं गत्वा तत्र तत्र निर्मथ्य यष्टव्यमिति सर्वेष्टिसाधारणमिदम् ॥

' सेनान्यः ' सेनापतेः ' गृहान् ' ' परेत्य ' प्रथमं गत्वा ' अनीकवते ' अनीकवद्गुणकाय ' अग्नये ' अष्टाकपालेन पुरोडाशेन प्रचरेत् । सेनानीगृहेऽनीकवद्गुणकाग्निदेवत्यहविरनुष्ठाने कारणमाह—अग्निर्वा इति । देवानाम् ' अनीकं ' मुखम् ' अग्निः ' ' सेनायाः ' ' अनीकं ' मुखं ' सेनानीः ' अस्य । रत्नहविष्ट्वमुपपादयितुमाह—एतद्वा इति । ' सेनानीः ' इति । यदस्ति ' एतत् ' ' वै ' खलु ' अस्य ' राज्ञो यजमानस्य ' एकं ' ' रत्नं ' रत्नवत् प्रशस्तं गवेषणीयं वस्तु । ' एतेन ' तस्य गृहेऽनुष्ठितेनाग्नेययागेन ' तस्मै ' सेनान्ये ' सूयते ' तेनानुज्ञायत इत्यर्थः । तद्गृहगमनेन ' तं ' सेनान्यं ' स्वम् ' आत्मीयम् ' अनपक्रमिणम् ' अनतिलंघिनं कृतवान् भवतीति । एवमुत्तरत्रापि व्याख्येयम् ( तै. सं. १ । ८ । ९ । १ ) ।

दक्षिणां विधत्ते—तस्य हिरण्यमिति[1] । ' तस्य ' अग्निदेवताकस्य यागस्य अग्निरेतोरूपं ' हिरण्यं ' दक्षिणा-

---

१—यथासंख्यं दक्षिणा हिरण्यः शितिपृष्ठर्षभो धेनुरश्वः पृषच्छ्येतोऽनड्वान्यमावभावेऽनुपूर्वजो श्यामस्त्रिदक्षिणो रौद्रः शितिबाहुशितिबाल्योरन्यतरः । का० श्रौ० सू० १५ । ६० ।

( णाऽथ ) अथ श्वोभूते । पुरोहितस्य गृहान्परेत्य बार्हस्पत्यं चरुं निर्व्वपति बृहस्पतिर्वै देवानां पुरोहित एष वा ऽएतस्य पुरोहितो भवति तस्माद्बार्हस्पत्यो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यत्पुरोहितस्तस्माऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य शितिपृष्ठो गौर्दक्षिणैषा वाऽऊर्ध्वा बृहस्पतेर्दिक्तदेषऽउपरिष्टादर्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा ॥ २ ॥

( णाऽथ ) अथ श्वोभूते । सूयमानस्य गृहऽऐन्द्रमेकादशकपालं पुरोडाशं निर्व्वपति क्षत्रं वा ऽइन्द्रः क्षत्रꣳ सूयमानस्तस्मादैन्द्रो भवति तस्यऽर्षभो दक्षिणा स ह्यैन्द्रो यदृषभः ॥ ३ ॥

---

अथ श्वोभूते पुरोहितस्य गृहान्परेत्य, बार्हस्पत्यं चरुं निर्वपति । बृहस्पतिर्वै देवानां पुरोहितः । एष वाऽएतस्य पुरोहितो भवति । तस्माद्बार्हस्पत्यो भवति । एतद्वाऽअस्यैकं रत्नम्—यत्पुरोहितः । तस्माऽएवैतेन सूयते । तं स्वमनपक्रमिणं कुरुते । तस्य शितिपृष्ठो गौर्दक्षिणा । एषा वाऽऊर्ध्वा बृहस्पतेर्दिक् । तदेष उपरिष्टादर्यम्णः पन्थाः । तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा ॥ २ ॥

अथ श्वोभूते सूयमानस्य गृहऽऐन्द्रमेकादशकपालं पुरोडाशं निर्वपति । क्षत्रं वाऽइन्द्रः । क्षत्रं सूयमानः । तस्मादैन्द्रो भवति । तस्यऽर्षभो दक्षिणा । स ह्यैन्द्रो—यदृषभः ॥ ३ ॥

---

त्वेन युक्तमित्यर्थः । हिरण्यस्याग्निरेतस्त्वमाम्नायते—" आपो वरुणस्य पत्नय आसन्, ता अग्निरभ्यध्यायत्, ताः समभवत्, तस्य रेतः परापतत्, तद्धिरण्यमभवत् "—( तै. ब्रा. १ । १ । ३ । ८ । तै. सं. ५ । ५ । ४ । १ १ ) इति ॥ १ ॥

द्वितीयदिवसेऽनुष्ठेयं रत्नहविर्विधत्ते—अथ श्वोभूत इति । पुरोहितस्य गृहे बार्हस्पत्यचरुप्रचारे उपपत्तिमाह—बृहस्पतिर्वै देवानामिति । बृहस्पतेर्देवपुरोहितत्वात् तद्देवत्यो यागः पुरोहितगृहे कर्तुमुचित इत्यर्थः । एतद्वा इत्यादि गतम् । दक्षिणां विधत्ते—तस्य शितिपृष्ठ इति । श्वेतपृष्ठः । तत्प्रशंसति—ऊर्ध्वेति 'ऊर्ध्वा दिक्' बृहस्पतिदेवताका तस्या उपरिभागे 'अर्यम्णः' सूर्यस्य 'एषः' परिदृश्यमानः 'पन्थाः' मार्गः । स च किरणसम्बन्धात् श्वेतः । अतो बृहस्पतियागदक्षिणाभूतस्य गोः श्वेतपृष्ठत्वं युक्तम् ॥ २ ॥

तृतीयदिवसे कर्त्तव्यं यागं विधत्ते—अथ श्वोभूत इति । सूयमानस्येति । सुन्वतो यजमानस्यैव 'गृहे' । अत एवास्मिन् पर्याये " एतद्वा अस्यैकं रत्नम् "—इत्यादि वाक्यानुपन्यासः । सूयमानपदं यजमानवाचकमित्यभिप्रेत्य सूत्रकृता यजमानपदमेवोक्तम्—" ऐन्द्रो यजमानस्य "—( का. श्रौ. सू. १५ । ५० ) इति । क्षत्रं वा इत्यादि । इन्द्रयजमानयोरेकजात्यभिसम्बन्धाद् यजमानस्य गृहे ऐन्द्रस्य हविषो निर्वापो युक्तः ॥

---

१–बार्हस्पत्यश्चरुः पुरोहितस्य । का० श्रौ० सू० १५ । ४९ । २–का. श्रौ. सू. १५ । ६० इत्यत्रभाष्ये ।

( भोऽथ ) अथ श्वोभूते । महिष्यै गृहान्परेत्य । ( तया ) आदित्युं चरुं निर्व्वपतीयं वै पृथिव्युदितिः सेयं देवानां पत्न्येषा वा ऽएतुस्य पत्नी भवति तुस्मादादित्यो भवत्येतद्वा ऽअस्यैकथ्ँ रत्नं यन्महिषी तुस्याऽएवैतेन सूयते ताथ्ँ स्वामनपक्रमिणीं कुरुते तुस्यै धेनुर्दक्षिणा धेनुरिव वाऽइयं मनुष्येभ्यः सर्वान्कामान्दुहे माता धेनुर्मातेव वाऽइयं मनुष्यान्बिभर्ति तुस्माद्धेनुर्दक्षिणा ॥ ४ ॥

( णाऽथ ) अथ श्वोभूते । सूतस्य गृहान्परेत्य व्वारुणं यवमयं चरुं निर्व्वपति सवो वै सूतः सवो वै देवानां व्वरुणस्तस्माद्वारुणो भवत्येतद्वाऽअस्यैकथ्ँ रत्नं यत्सूतस्तस्माऽएवैतेन सूयते तथ्ँ स्वमनपक्रमिणं कुरुते तस्याश्वो दक्षिणा स हि व्वारुणो यदश्वः ॥ ५ ॥

---

अथ श्वोभूते महिष्यै गृहान् परेत्य, आदित्यं चरुं निर्वपति । इयं वै पृथिव्यदितिः । सेयं देवानां पत्नी । एषा वाऽएतस्य पत्नी भवति । तस्मादादित्यो भवति । एतद्वाऽअस्यैकं रत्नं यन्महिषी । तस्माऽएवैतेन सूयते । तां स्वामनपक्रमिणीं कुरुते । तस्यै धेनुर्दक्षिणा । धेनुरिव वाऽइयं मनुष्येभ्यः सर्वान् कामान् दुहे । माता धेनुर्मातेव वाऽइयं मनुष्यान् बिभर्ति । तस्माद्धेनुर्दक्षिणा ॥ ४ ॥

अथ श्वोभूते सूतस्य गृहान्परेत्य, वारुणं यवमयं चरुं निर्वपति । सवो वै सूतः । सवो वै देवानां

---

दक्षिणां विधत्ते–तस्यर्षभ इति (का. श्रौ. सू. १५।६० । ) । स ह्यैन्द्र इति । "आण्डाभ्यामैन्द्रः"–( श. प. ५ । २ । ३ । ८ ) इति प्राग्आम्नातत्वात् तद्वत ऋषभस्यैन्द्रत्वं प्रसिद्धमिति ' हि ' शब्दस्यार्थः॥ ३॥

चतुर्थदिवसकर्त्तव्यामिष्टिं विधत्ते–अथ श्वोभूत इति । महिष्या इति । कृताभिषेकस्य राज्ञो मुख्या स्त्री महिषी; तस्या गृहे । षष्ठ्यर्थे चतुर्थी ( पा. सू. २ । ३ । ६२ वा. ) । इयं वै पृथिवीति । देवानां हविस्सम्पादनद्वारा भोग्यत्वात् पृथिव्यात्मिकाया अदितेर्देवपत्नीत्वम् । तस्मादिति । यस्माददितेर्देवपत्नीत्वम् 'तस्मात्' तद्देवत्यहविषः पत्नीगृहे निर्वापो युक्त इत्यर्थः ॥

दक्षिणां विधत्ते–तस्यै धेनुरिति ( का. श्रौ. सू. १५ । ६० ) । ' तस्यै ' अदित्यै तद्देवत्यस्य यागस्येत्यर्थः । धेनुरिव वा इति । यथा ' धेनुः ' क्षीरादिरूपान् सर्वान् कामान् दोग्धि, एवम् ' इयं ' पृथिव्यात्मिका अदितिः ' मनुषेभ्यः ' सर्वान् ' कामान् ' ' दुहे ' दुग्धे । दुहेः " लोपस्त आत्मनेपदेषु " ( पा. सू. ७ । १ । ४१ ) इति तलोपः । ' धेनुः ' हि ' माता ' प्रत्यग्रप्रसूतत्वात्, तथा ' इयं ' भूमिरपि ' मातेव ' ' मनुष्यान् ' ' बिभर्ति ' पोषयति । ' तस्मात् ' उदीरितरीत्या अदितेर्द्धेनोः, तत्सम्बन्धादादित्यचरोः धेनुर्दक्षिणात्वेन युज्यते ( तै. सं. १।८।९।१ ) ॥ ४ ॥

पञ्चमदिवसे कर्त्तव्यामिष्टिं विधत्ते–अथ श्वोभूत इति ॥ ५ ॥

---

१–अदित्यै महिष्याः । । का० श्रौ० सू० १५ । ५१ । २–वारुणः सूतस्य । का० श्रौ० सू० १५।५२ ।

(इवोऽथ) अथ श्वोभूते । ग्रामण्यो गृहान्परेत्य मारुतꣳ सप्तकपालं पुरोडाशं निर्व्वपति विशो वै मरुतो वैश्यो वै ग्रामणीस्तस्मान्मारुतो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यद्ग्रामणीस्तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य पृषन्गौर्दक्षिणा भूमा वा ऽएतद्रूपाणां यत्पृषतो गोर्विशो वै मरुतो भूमो वै विट्तस्मात्पृषन्गौर्दक्षिणा ॥ ६ ॥

(णाऽथ) अथ श्वोभूते । क्षत्तुर्गृहान्परेत्य सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशं निर्व्वपति सविता वै देवानां प्रसविता प्रसविता वै क्षत्ता तस्मात्सावित्रो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यत्क्षत्ता तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य श्येतोऽनड्वान्दक्षिणैष वै

---

वरुणः । तस्माद् वारुणो भवति । एतद्वाऽअस्यैकं रत्नं-यत् सूतः । तस्माऽएवैतेन सूयते । तं स्वमनपक्रमिणं कुरुते । तस्याश्वो दक्षिणा । स हि वारुणो--यदश्वः ॥ ५ ॥

अथ श्वोभूते ग्रामण्यो गृहान् परेत्य, मारुतं सप्तकपालं पुरोडाशं निर्वपति । विशो वै मरुतः । वैश्यो वै ग्रामणीः । तस्मान्मारुतो भवति । एतद्वाऽअस्यैकं रत्नं-यद् ग्रामणीः । तस्माऽएवैतेन सूयते । तं स्वमनपक्रमिणं कुरुते । तस्य पृषन् गौर्दक्षिणा । भूमा वाऽएतद्रूपाणां-यत्पृषतो गोः । विशो वै मरुतः । भूमो वै विट् । तस्मात् पृषन् गौर्दक्षिणा ॥ ६ ॥

अथ श्वोभूते क्षत्तुर्गृहान् परेत्य, सावित्रं द्वादशकपालं वा अष्टाकपालं वा पुरोडाशं निर्वपति । सविता वै देवानां प्रसविता । प्रसविता वै क्षत्ता । तस्मात्सावित्रो भवति । एतद्वा अस्यैकं रत्नं-

---

षष्ठदिवसे कर्त्तव्यामिष्टिं विधत्ते-अथ श्वोभूते इति । 'ग्रामण्यः' ग्रामं नयतीति ग्रामणीः, वैश्यानां महत्तरः तस्य 'गृहान्' । मरुतां सप्तगणात्मकत्वात् तद्देवत्यहविषः सप्तसु कपालेषु श्रपणं युक्तमित्याह-सप्तकपालमिति । ग्रामणीगृहे मारुतकरणमुभयोर्वैश्यत्वनिबन्धनकृतमित्याह-विशो वा इति । 'विशः' प्रजाः देवानामिति शेषः ॥

मारुतस्य दक्षिणां विधत्ते-तस्य पृषन्निति । ( का. श्रौ. सू. १९ । ९० ) । 'पृषन्' बिन्दुमान् श्वेतरक्तकृष्णबिन्दुयुत इत्यर्थः । पृषत्त्वं प्रशंसति-भूमा वा इति । 'पृषतः'-इति षष्ठ्यन्तं गोविशेषणम् । पृषतो गोर्यदस्ति एतद् रूपाणां भूमा इति पदयोजना । तादृशे गवि नानाविधवर्णानां सद्भावाद्रूपबाहुल्यमित्यर्थः । भूमानमेवावलम्ब्य विचित्रवर्णस्य गोर्मारुतहविर्योग्यतामाह-विशो वा इति । भूमो वा इति । भूमा उ इति । भूमरूपैव खलु वैश्यजातिः ॥ ६ ॥

सप्तमदिवसकर्त्तव्यामिष्टिं विधत्ते-अथ श्वोभूते इति । क्षत्तुर्गृहानिति । क्षत्ता नाम यष्टिहस्तोऽन्तः-

---

१-मारुतो ग्रामण्यः । का. श्रौ. सू. १५ । ५३ । २-सावित्रः क्षत्तुः । का० श्रौ० सू० १५ । ५४ ।

सविता वा ऽएष तपत्येति वा ऽएष ऽएत्यनड्वान्युक्तस्तद्यच्छ्वेतो भवति श्वेत इव ह्येष उद्यंश्चास्तं च यन्भवति तस्माच्छ्वेतोऽनड्वान्दक्षिणा ॥७॥

( णाऽथ ) अथ श्वोभूते । सङ्ग्रहीतुर्गृहान्परेत्याश्विनं द्विकपालं पुरोडाशं निर्वपति सयोनी वा ऽअश्विनौ सयोनी सव्यष्टृसारथी समानꣳ हि रथमधितिष्ठतस्तस्मादश्विनो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यत्संग्रहीता तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य यमौ गावौ दक्षिणा तौ हि सयोनी यद्यमौ यदि यमौ न विन्देदप्यनूचीनगर्भावेव गावौ दक्षिणा स्यातां ता ऽउ ह्यपि समानयोनी ॥ ८ ॥

---

यत्क्षत्ता । तस्माऽएवैतेन सूयते । तं स्वमनपक्रमिणं कुरुते । तस्य श्येतोऽनड्वान् दक्षिणा । एष वै सविता—य एष तपति । एति वाऽएषः । एत्यनड्वान् युक्तः । तद् यच्छ्वेतो भवति । श्येत इव ह्येष उद्यंश्चास्तं च यन् भवति । तस्माच्छ्वेतोऽनड्वान् दक्षिणा ॥ ७ ॥

अथ श्वोभूते सङ्ग्रहीतुर्गृहान्परेत्याश्विनं द्विकपालं पुरोडाशं निर्वपति । सयोनी वाऽअश्विनौ, सयोनी सव्यष्टृसारथी । समानं हि रथमधितिष्ठतः । तस्मादाश्विनो भवति । एतद्वाऽअस्यैकं रत्नम् । यत् सङ्ग्रहीता । तस्माऽएवैतेन सूयते । तं स्वमनपक्रमिणं कुरुते । तस्य यमौ गावौ दक्षिणा ।

---

पुराध्यक्षः, सर्वेषां नियन्ता, प्रतिहारापरपर्यायः । 'सावित्रं' सवितृदेवत्यम् । क्षत्तुः सवितुश्च प्रसवितृत्वं साधारणो धर्म इत्याह—सविता वै देवानामिति ॥

दक्षिणां विधत्ते—तस्य श्येत इति । 'श्येतः' शुक्लवर्णः 'अनड्वान्' ( तै. सं. १ । ८ । ९ । १, २ ) । श्वेतस्यानडुहः सवितृसम्बन्धमाह—एष वा इति । 'यः' 'एषः' सूर्यः 'तपति' 'एषः' 'वै' खलु 'सविता' स च सूर्यः 'एति' प्रकर्षप्रकाशादिना जगन्निर्वाहं कुर्वन् सर्वदा सञ्चरति; 'अनड्वान्' अपि शकटरथवहनादौ 'युक्तः' सन् सर्वत्र गच्छति, अतो गन्तृत्वमुभयोः सम्बन्धहेतुः साधारणो धर्मः श्वेतत्वमनूद्य स्तौति—तद्यच्छ्वेत इति । 'एषः' सूर्यात्मकः सविता 'उद्यन्' उदयन् 'अस्तं' यन् च उदयास्तकालेषु 'श्येतः' शुक्लवर्णः 'इव हि' भवति ॥ ७ ॥

अष्टमदिवसकर्तव्यामिष्टिं विधत्ते—अथ श्वोभूत इति । संग्रहीतुर्गृहानिति ( तै. सं. १।८।९।२ ) संग्रहीता नाम रथयोजयिता । 'आश्विनम्' अश्विदेवत्यम् । संग्रहीतृगृहे आश्विनहविषो निर्वापे कारणमाह—सयोनी इति । 'हि' यस्मात् 'सव्यष्टृसारथी' सव्यष्टृपदेन संग्रहीतोच्यते, स च सारथिश्च 'सयोनी' समानस्थानौ, एवम्, 'अश्विनौ' अपि 'सयोनी' सहोत्पन्नौ । तौ द्विविधौ 'समानम्' एकं 'रथम्' 'अधितिष्ठतः'; "युवं कवीष्ठः पर्यश्विना रथम्" ( ऋ. सं. १० । ४० । ६ ) इति श्रवणात् ॥

---

१—आश्विनः संग्रहीतुः । का. श्रौ. सू. १५।५५ ।

( नी॑ऽअ ) अथ श्वो॒भू॒ते । भागदुघस्य गृहान्परेत्य पौष्णं चरुं निर्वपति पूषा वै देवानां भागदुघऽएष वा ऽएतस्य भागदुघो भवति तस्मात्पौष्णो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यद्भागदुघस्तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य श्यामो गौर्दक्षिणा तस्यासावेव बन्धुर्योऽसौ त्रिषंयुक्तेषु ॥ ९ ॥

( ष्वु ) अथ श्वोभूते । ( तेऽक्षा ) अक्षावापस्य च गृहेभ्यो गोविकर्त्तस्य च गवेधुकाः सम्भृत्य सूयमानस्य गृहे रौद्रं गावेधुकं चरुं निर्वपति ते

तौ हि सयोनी—यद्यमौ । यदि यमौ न विन्देद्—अप्यनूचीनगर्भावेव गावौ दक्षिणा स्याताम् । ताऽउ ह्यपि समानयोनी ॥ ८ ॥

अथ श्वोभूते भागदुघस्य गृहान् परेत्य, पौष्णं चरुं निर्वपति । पूषा वै देवानां भागदुघः । एष वाऽएतस्य भागदुघो भवति । तस्मात् पौष्णो भवति । एतद्वाऽअस्यैकं रत्नं—यद्भागदुघः। तस्माऽएवैतेन सूयते । तं स्वमनपक्रमिणं कुरुते । तस्य श्यामो गौर्दक्षिणा । तस्यासावेव बन्धुः—योऽसौ त्रिषंयुक्तेषु ॥ ९ ॥

अथ श्वोभूतेऽक्षावापस्य च गृहेभ्यो, गोविकर्त्तस्य च गवेधुकाः सम्भृत्य, सूयमानस्य गृहे रौद्रं गावेधुकं चरुं निर्वपति । ते वाऽएते द्वे सती रत्नेऽएकं करोति—सम्पदः कामाय । तद्यदेतेन

आश्विनस्य हविषो योग्यदक्षिणां विधत्ते—तस्य यमाविति ( का. श्रौ. सू. १९।६० )। यमौ सहैवैकस्यामातुर्गर्भादुत्पन्नौ । यमयोरश्विसाम्यमाह—तौ हि सयोनी इति । यमयोरलामे पक्षान्तरमाह—यदि यमाविति । ( का. श्रौ. सू. १९।६० ) । ‘ अनूचीनगर्भौ ’ अनुक्रमेण पौर्वापर्येण जातगर्भौ । तयोरपि समानयोनित्वं दर्शयति—ता उ हीति । यौ क्रमेणोत्पन्नौ ‘ तौ उ अपि हि ’ ‘ समानयोनी ’ मध्ये गर्भान्तरेणाव्यवहितत्वात् ॥ ८ ॥

नवमदिवसकर्त्तव्यामिष्टिं विधत्ते—अथ श्वोभूत इति । भागदुघस्य गृहानिति[1] । यो राज्ञः प्राप्यं षष्ठं भागं प्रजाभ्यो गृहीत्वा राज्ञे दोग्धि प्रयच्छति, स भागदुघः । पूषा वा इति । ‘ पूषा ’ नाम मार्गसंरक्षको देवः, ‘देवानां’‘भागदुघः’ भागं दोग्धि; स हि यजमानदत्तानि हवींषि मार्गे रक्षोभ्यः संरक्ष्य तान् देवान् गमयतीत्यर्थः॥

पौष्णचरुयागे श्यामवर्णं गां दक्षिणां विधत्ते—तस्य श्याम इति ( का. श्रौ. सू. १९।६० ) ( तै. सं. १।८।९।१० ) । श्यामत्वस्तावकमतिदिशति—तस्यासाविति । ‘बन्धुः’ वाक्यशेषः । कः पुनरसाविति तमाह—योऽसौ त्रिषंयुक्तेष्विति । त्रिषंयुक्तानि उक्तानि; तत्र द्वितीये, पौष्णचरोर्दक्षिणात्वेन विहितस्य गोः श्यामत्वस्तावकः “स हि पौष्णो यच्छयामो द्वे वै श्यामस्य रूपे ” ( श. प. ५।२।५।८ ) इत्यादिः यो वाक्यशेषः सोऽत्रापि समान इत्यर्थः ॥ ९ ॥

यजमानगृहे कर्त्तव्यं दशमं रत्नहविर्विधत्ते—अथ श्वोभूत इति[2] ( तै. सं. १ । ८ । ९ । २ )। अक्षावापो

१—पौष्णो भागदुघस्य । का.श्रौ.सू.१५।५६। २—रौद्रो यजमानस्याक्षावापगोविकर्तगृहेभ्यो गवेधुकानाम् । का० श्रौ०सू०१५।५७

वाऽएते द्वे सती यजते ऽएकं करोति सम्पदः कामाय तद्यदेतेन यजते यां वाऽइमाᳬं सभायां घ्नन्ति रुद्रो हैतामभिमन्यतेऽग्निर्वै रुद्रोऽधिदेवनं वा अग्निस्तस्यैते ऽअङ्गारा यदक्षास्तमेवैतेन प्रीणाति तस्य ह वा ऽएषाऽनुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वैतदेवं वेदैतद्वा ऽअस्यैकᳬं रत्नं यदक्षावापश्च गोविकर्त्तश्च ताभ्यामेवैतेन सूयते तौ स्वावनपक्रमिणौ कुरुते तस्य द्विरूपो गौर्दक्षिणा शितिबाहुर्वा शितिबालो वाऽसिर्नखरो बालदाम्नाऽक्षावपनं प्रबद्धमेतद्ध हि तयोर्भवति ॥ १० ॥

---

यजते–यां वाऽइमां सभायां घ्नन्ति–रुद्रो हैतामभिमन्यते । अग्निर्वै रुद्रः । अधिदेवनं वाऽअग्निः । तस्यैतेऽअङ्गाराः–यदक्षाः । तमेवैतेन प्रीणाति । तस्य ह वाऽएषाऽनुमता गृहेषु हन्यते–यो वा राजसूयेन यजते, यो वैतदेवं वेद । एतद्वाऽअस्यैकं रत्नं–यदक्षावापश्च, गोविकर्तश्च । ताभ्यामेवैतेन सूयते । तौ स्वावनपक्रमिणौ कुरुते । तस्य द्विरूपो गौर्दक्षिणा । शितिबाहुर्वा, शितिबालो वा । असिर्नखरः, बालदाम्नाऽक्षावपनं प्रबद्धम् । एतद्ध हि तयोर्भवति ॥ १० ॥

---

नाम अक्षाणां क्षेप्ता, अक्षगोप्ता वा द्यूतकारः; गोविकर्त्तः मृगयासहायभूतो गोर्हिंसको व्याधः; तयोरुभयोर्गृहेभ्यो 'गवेधुकाः' आरण्यगोधूमान् 'सम्भृत्य' तैः रुद्रदेवत्यं चरुं 'सूयमानस्य' यजमानस्य 'गृहे' निर्वपेत् । उभयोर्गृहेभ्यो गवेधुकानां युगपत् सम्भरणं प्रशंसति–ते वा एते इति । अक्षावाप गोविकर्त्तरूपयोर्द्वयोः सतोरनयोरेकत्र करणं सम्पद्धेतुरित्यर्थः । 'सम्पदः कामाय' समृद्ध्यभिलाषसिद्ध्यर्थमित्यर्थः । अक्षावापगोविकर्त्तसम्भृतैरेवारण्यगोधूमैः रौद्रश्चरुः कर्त्तव्य इत्यत्रोपपत्तिमाह–यां वा इमामिति । 'सभायां' सभास्थले द्यूतस्थाने 'याम् इमाम्' पणत्वेन कृतां गां 'घ्नन्ति' कितवाः । अत एव चतुर्थाध्याये आम्नास्यते–"एतेष्वक्षेष्वाह गां दीव्यध्वमिति"–( श. प. ४ । ४ । २३ ) इति । तत्र सूत्रम्–"गामस्यानीय घ्नन्ति"–( का. श्रौ. सू. १९ । २०३ ) इति । तत्र ताम् 'एतां' 'रुद्रः' 'अभिमन्यते' क्रूरकर्मत्वात् । स तस्य रुद्रः परम्परया अधिदेवनात्मक इत्याह–अग्निर्वा इति । अग्निरेव खलु रोदनाद्रुद्रनामा सम्पन्नः । अत एव तैत्तिरीयके अग्निं प्रस्तुत्याम्नातम्–"सोऽरोदीद् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्"–( तै. सं. १ । ५ । १ । १ ) इति । स च 'अग्निः' 'अधिदेवनं' द्यूताधिकरणं स्थानम्, अधिदेवनात्मकस्याग्नेः अक्षावापाङ्गाराः 'तमेव' अधिदेवनात्मकं रुद्रम् 'एतेन' अक्षावापगृहसम्भृतगवेधुकनिष्पन्नहविषा 'प्रीणाति' तर्पयति । तस्य ह वा इत्यादि । 'यो राजसूयेन यजते' 'यो वा' 'एतत्' एतं राजसूयप्रयोगं 'वेद,' 'तस्य गृहेषु' 'अनुमता' अध्वर्युप्रभृतिभिरनुज्ञाता सती 'गौः हन्यते' गोविकर्त्तेन हिंस्यते, अतो गोविकर्त्तगृहादानीतगवेधुका हननाभिमानिनो रुद्रस्य हविष्ट्वे योग्या इत्यर्थः ॥

तस्य रौद्रहविषो दक्षिणां विधत्ते–तस्य द्विरूप इति ( का. श्रौ. सू. १९ । ६० ) । 'शितिबाहुः' श्वेतबाहुः 'वा' भवेत्, 'शितिबालः' श्वेतबालो 'वा' बाहौ बाले वा श्वेतत्वम्, सर्वाङ्गे 'कृष्णवर्ण इति द्विरूपत्वम् । दक्षिणान्तरं विधत्ते–असिरिति । 'नखरो' निःकोषः 'असिः' कृपाणः । 'बालदाम्ना'

( त्यु ) अथ श्वोभूते । पालागलस्य गृहान्परेत्य चतुर्गृहीतमाज्यं गृहीत्वाऽध्वनऽआज्यं जुहोति जुषाणोऽध्वाऽऽज्यस्य वेतु स्वाहेति प्रहेयो वै पालागलोऽध्वानं वै प्रहित ऽएति तस्मादध्वन आज्यं जुहोत्येतद्वाऽअस्यैकꣳ रत्नं यत्पालागलस्तस्माऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य दक्षिणाऽप्युक्षणवेष्टितं धनुश्चर्ममया बाणवन्तो लोहित ऽउष्णीष ऽएतद्ध हि तस्य भवति ॥ ११ ॥

---

अथ श्वोभूते पालागलस्य गृहान्परेत्य, चतुर्गृहीतमाज्यं गृहीत्वाऽध्वन आज्यं जुहोति-"जुषाणोऽध्वाऽऽज्यस्य वेतु स्वाहा "-इति। प्रहेयो वै पालागलः अध्वानं वै प्रहित एति। तस्मादध्वन आज्यं जुहोति। एतद्वाऽअस्यैकं रत्नं-यत् पालागलः। तस्माऽएवैतेन सूयते । तं

---

रोमस्रजा 'प्रबद्धम्' 'अक्षावपनं' पात्रम्; अक्षा उप्यन्ते अस्मिन्निति 'अक्षावपनम्' अक्षस्यानावपनं पात्रम्। एवं गौः, असिः, अक्षावपनमिति त्रीण्यपि समुच्चित्य दक्षिणेत्यर्थः। तथैव कात्यायनः-"त्रिदक्षिणो रौद्रः, शितिबाहुशितिबालयोरन्यतरः, असिर्नखरो, बालदामबद्धमक्षावपनम्"-( का. श्रौ. सू. १९ । ६०-६२ ) इति। किमर्थं नखरास्यक्षपात्रद्वयं दक्षिणात्वेनोच्यते इति तत्राह-एतद्ध हीति। 'तयोः' अक्षावापगोविकर्त्तयोः तद्द्वयं स्वं 'भवति' एकैकस्यैकैकमस्ति; अतोऽत्र तदुभयसम्बन्धात्तद्द्वयं दक्षिणात्वेन प्रयुज्यत इत्यर्थः॥ १० ॥

दूतगृहे कर्त्तव्यमाज्यहोमरूपमेकादशं रत्नहविर्विधत्ते-अथेति। पालागलो नाम दूतः। तथैव कात्यायनः पालागलास्थाने दूतशब्दं प्रयुक्तवान्-" चतुर्गृहीतं जुषाणोऽध्वाऽऽज्यस्य वेत्विति दूतस्य "( का.श्रौ.सू. १९ । ९८ । )-इति। आपस्तबेन तु दूतविशेषपरत्वेन व्याख्यातः-" अध्वने स्वाहेति पालागलस्य गृहे जुहोत्यनृतं दूतं ब्रुवते " ( आ. श्रौ. सू. १८ । १० । २९ ) इति। 'पालागलम्' अनृतवादिनं दूतमिति ब्रुवते आचार्या इत्यर्थः। अध्वदेवत्यश्चतुर्गृहीताज्यहोम एवैकादशं हविरित्यर्थः।

मन्त्रस्यार्थः-'आज्यं जुषाणः' आज्यभागं सेवमानः 'अध्वा' देवता 'अज्यस्य वेतु' आज्यं पिबतु। 'स्वाहा' सुहुतमस्तु 'इति'। दूतगृहेऽध्वदेवस्य होमस्य उपपत्तिमाह-प्रहेय इति। 'पालागलः' दूतः 'प्रहेयः' राज्ञा प्रेष्यः, प्रस्थापनीयः। प्रेष्यत्वमेवाह-अध्वानमिति। प्रहितः प्रेषितः प्रस्थापितः सन् अध्वानं गच्छति, अतोऽध्वसम्बन्धात् तद्गृहे होमः कार्य इत्यर्थः॥

तस्य होमस्य दक्षिणां विधत्ते-तस्य दक्षिणेति। 'उक्षणवेष्टितम्' उक्षणशब्देन स्नाय्वभिधीयते, उक्षविकारैः स्नायुभिः 'वेष्टितं' स्यूतं 'धनुः' 'चर्ममयाः बाणवन्तः' इषुधयः, 'लोहितः' लोहितवर्णः 'उष्णीषः' शिरोवेष्टनम् एतत् सर्वं दक्षिणेत्याह-एतद्ध हीति। एतावदेव हि 'तस्य' दूतस्य स्वं भवति॥ ११ ॥

---

१-उत्तरस्याप्युक्षणवेष्टितं धनुः। चर्मतूण्यः सेषुकाः। लोहित उष्णीषः। का. श्रौ. सू. १५। ६३-६५।

तानि वा ऽएतानि । ( न्ये ) एकादश रत्नानि सम्पादयत्येकादशाक्षरा वै त्रिष्टुब्वीर्यं त्रिष्टुब्वीर्यमेवैतद्रत्नान्यभिसम्पादयाति तद्यद्रत्निनाᳬं हविर्भिर्यजतऽएतेषां वै राजा भवति तेभ्यऽ एवैतेन सूयते तान्त्स्वाननपक्रमिणः कुरुते ॥ १२ ॥

( तेऽथ ) अथ श्वोभूते । परिवृत्त्यै गृहान्परेत्य नैर्ऋतं चरुं निर्वपति या वा अपुत्रा पत्नी सा परिवृत्ती स कृष्णानां व्रीहीणां नखैर्निर्भिद्य तण्डुलान्नैर्ऋतं चरुᳬं श्रपयति स जुहोत्येष ते निर्ऋते भागस्तं जुषस्व स्वाहेति या वा ऽअपुत्रा पत्नी सा निर्ऋतिगृहीता तद्यदेवास्याऽअत्र नैर्ऋतᳬं रूपं तदेवैतच्छमयति तथो हैनᳬं सूयमानं निर्ऋतिर्न गृह्णाति तस्य दक्षिणा कृष्णा गौः परिमूर्णी पर्यारिणी सा ह्यपि निर्ऋतिगृहीता तामाह मा मेऽद्येशायां व्वात्सीदिति तत्पाप्मानमपादत्ते ॥ १३ ॥

इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ५ । २ । ५ ॥ ( ३–१ ) ॥

---

स्वमनपक्रामिणं कुरुते । तस्य दक्षिणा—अप्युक्षणवेष्टितं धनुः, चर्ममया बाणवन्तो, लोहितऽउष्णीषः । एतद्ध हि तस्य भवतिं ॥ ११ ॥

तानि वाऽएतान्येकादश रत्नानि सम्पादयति । एकादशाक्षरा वै त्रिष्टुप्, वीर्यं त्रिष्टुप्, वीर्यमेवैतद्रत्नान्यभिसम्पादयाति । तद्यद्रत्निनां हाविर्भिर्यजते । एतेषां वै राजा भवति । तेभ्य एवैतेन सूयते । तान् स्वाननपक्रमिणः कुरुते ॥ १२ ॥

अथ श्वोभूते परिवृत्त्यै गृहान्परेत्य, नैर्ऋतं चरुं निर्वपति । या वाऽअपुत्रा पत्नी—सा परिवृत्ती । स कृष्णानां व्रीहीणां नखैर्निर्भिद्य; तण्डुलान्नैर्ऋतं चरुं श्रपयति । स जुहोति—" एष ते निर्ऋते भागः, तं जुषस्व स्वाहा "—( वा० सं० ९ । ३५ ) इति । या वाऽअपुत्रा पत्नी—सा निर्ऋतिगृहीता । तद् यदेवास्याऽअत्र नैर्ऋतं रूपम्—तदेवैतच्छमयाति । तथो हैनं सूयमानं

---

एतेषां रत्नहविषामेकादशसंख्यां प्रशंसति—तानि वा एतानीति । संख्यासाम्यात् त्रिष्टुप्त्वम् । त्रिष्टुभो वीर्यत्वमिन्द्रेण सहोत्पत्तेरित्यवगन्तव्यम् । ' एतत् ' एतेन रत्नहविरनुष्ठानेन यजमाने वीर्यमेव सम्पादितवान् भवति । प्रकारान्तरेण तदेव प्रशंसति—तद्यदिति । यथोक्तसेनानीपुरोहितमहिष्यादयो रत्निनः; तदभिमानिदेवतानां प्रियायैतानि हवींषि; अतस्तद्गृहेष्वेव कर्त्ता गत्वा निर्वपेत् । एतैः ' रत्निनां ' हविर्भिर्योगेन सेनानीप्रभृतीनां रत्नानां स्वयं ' राजा ' भवेत् । तेभ्यः तत्सङ्ग्रहार्थम् ' एतेन ' रत्नहविरनुष्ठानेन 'सूयते' प्रेर्यते॥१२॥

परिवृत्तीगृहे कर्त्तव्यं नैर्ऋतहविर्विधत्ते—अथ श्वोभूत इति । ' परिवृत्ती ' शब्दस्यार्थमाह—या वा इति । ' अपुत्रा ' राजपत्नी केवलं भोगार्था परिवृत्ती । हविषो द्रव्यं विदधच्चोदकप्राप्तमवघातं निषेधति—स कृष्णा-

उपरिष्टाद्रत्नानाᳪ सौमारौद्रेण यजते। स श्वेतायै श्वेतवत्सायै पयसि शृतो भवति तद्यदुपरिष्टाद्रत्नानाᳪ सौमारौद्रेण यजते ॥ १ ॥

---

निर्ऋतिर्न गृह्णाति। तस्य दक्षिणा-कृष्णा गौः परिमूर्णी पर्यारिणी। सा ह्यपि निर्ऋतिगृहीता। तामाह-"मा मेऽद्येशायां वात्सीत्"-इति। तत् पाप्मानमपादत्ते ॥ १३ ॥

अथोपरियागाः।

उपरिष्टाद्रत्नानां सौमारौद्रेण यजते। स श्वेतायै श्वेतवत्सायै पयसि शृतो भवति। तद् यदुपरिष्टाद्रत्नानां सौमारौद्रेण यजते ॥ १ ॥

---

नामिति। नखैर्निर्भिन्नानां कृष्णव्रीहीणां तण्डुलैः नैर्ऋतं चरुं 'श्रपयति' निर्वपेत्। हवनं समन्त्रकं विधत्ते-स जुहोतीति। जुहोतिचोदितत्वात् स्वाहाकारप्रदानत्वाच्चायं होमो दर्वीहोमः। कात्यायनेन तु पक्षान्तरं सूत्रितम्-"दर्वीहोम एष" ते निर्ऋत इति जुहोति वषट्कृते वा"-(का. श्रौ. सू. १९। ९९) इति। परिवृत्तीगृहे नैर्ऋतचर्वनुष्ठानस्योपपत्तिमाह-या वा इति। अपुत्रा स्त्री 'निर्ऋतिगृहीता' पाप्मना गृहीता भवति। अतः 'अस्या नैर्ऋतं रूपं' 'अत्र' गृहेऽनुष्ठितेन नैर्ऋतचरुहोमेन शमितवान् भवति ॥

तस्य दक्षिणां विधत्ते-तस्य दक्षिणा कृष्णा गौरिति। 'परिमूर्णी'। "मूर्च्छा मोहसमुच्छ्राययोः"-(धा. पा. भ्वा. प. २१२) इति अस्मात् क्तिनि "राल्लोपः"-(पा. सू. ६। ४। २१) इति च्छस्य लोपे, निष्ठानत्वे च कृते रूपम्। परिमूढा अक्षमा। 'पर्यारिणी' परित आर्त्तिमती व्याधिगृहीता केनचिदङ्गेन अपहता वा 'कृष्णा गौः दक्षिणा'। अत्र सूत्रम्-"कृष्णा परिमूर्ण्यपहतोत्तमस्य"-(का. श्रौ. सू. १९। ६६) इति ॥

तैत्तिरीयके तु परिवृत्तीगृहकर्त्तव्यनैर्ऋतचरोः कृष्णा भग्नशृङ्गा गौर्दक्षिणात्वेन श्रुता-"नैर्ऋतं चरुं परिवृत्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणा"-(तै. सं. १। ८। ९। १) इति। 'कूटा' भग्नशृङ्गा इति हि व्याख्यातम्। दक्षिणाभूताया गोर्नैर्ऋतचरुयोग्यतामाह-सा ह्यपीति। जीर्णा निवृत्तप्रसवा गौः निर्ऋतिगृहीता भवति ॥

इष्ट्यन्ते किञ्चित् कर्त्तव्यं विधत्ते-तामाहेति। 'तां' परिवृत्तीम् 'आह' वदेत्। वाक्यस्यायमर्थः-'अद्य' इदानीम् इतः परं 'मे' मम 'ईशायां' स्वाम्ये 'मा वात्सीत्' मद्भोग्या मा भूरित्यर्थः। वचनं स्तौति-तादिति। निर्ऋतिगृहीतां परिवृत्ती प्रति एतेन वचनेन 'पाप्मानम् एव' 'अपादत्ते' अपसारितवान् भवतीति ॥ १३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे तृतीयाऽध्याये प्रथमं ब्राह्मणम् ॥ (५-३-१) ॥

अथ सौमारौद्रयागं विधत्ते-उपरिष्टाद्रत्नानामिति-(तै. सं. १। ८। ९। २)। रत्नहविषामुपरि

---

१-नैर्ऋतः परिवृत्त्यै कृष्णव्रीहीणां नखनिर्भिन्नानाम् इति अस्य सूत्रस्यादिमो भागः। २-परिवृत्तीं चाह मा मेऽद्येशायां वात्सीदीति। का. श्रौ. सू. १५। ६७। ३-सौमारौद्रोऽन्तश्वरः शुक्लापयसि शुक्लवत्सायाः। का० श्रौ० सू० १५। ६८।

स्वर्भानुर्ह वा ऽआसुरः । सूर्यं तमसा विव्याध स तमसा विद्धो न व्यरोचत तस्य सोमारुद्रावेवैतत्तमोऽपाहताᳫँ स एषो ऽपहतपाप्मा तपति तथो ऽएवैष ऽ एतत्तमः प्रविशत्येतं वा तमः प्रविशति यदयज्ञियान्यज्ञेन प्रसजत्ययज्ञियान्वा ऽएतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत्तस्य सोमारुद्रावेवैतत्तमोऽपहतः सोऽपहतपाप्मैव दीक्षते तद्यच्छ्वेतायै श्वेतवत्सायै पयसि शृतो भवति कृष्णं वै तमस्तत्तमोऽपहन्ति तस्यैषैव श्वेता श्वेतवत्सा दक्षिणा ॥ २ ॥

---

स्वर्भानुर्ह वाऽआसुरः सूर्यं तमसा विव्याध । स तमसा विद्धो न व्यरोचत । तस्य सोमारुद्रावेवैतत्तमोऽपाहताम् । स एषोऽपहतपाप्मा तपति । तथोऽएवैष एतत्तमः प्रविशति, एतं वा तमः प्रविशति यदयज्ञियान् यज्ञेन प्रसजति । अयज्ञियान्वाऽएतद्यज्ञेन प्रसजति शूद्रांस्त्वत्, यांस्त्वत् । तस्य सोमारुद्रावेवैतत्तमोऽपहतः । सोऽपहतपाप्मैव दीक्षते । तद् यच्छ्वेतायै श्वेतवत्सायै पयसि शृतो भवति । कृष्णं वै तमः । तत् तमोऽपहन्ति । तस्यैषैव श्वेता श्वेतवत्सा दक्षिणा ॥ २ ॥

---

स्वगृहे सौमारौद्रयागः कर्त्तव्यः । स च कः १ 'श्वेतवत्सायै श्वेतायै' । उभयत्र षष्ठ्यर्थे चतुर्थी । ( पा. सू. २ । ३ । ६२ । वा. ) शुक्लवत्सायाः शुक्लाया गोः 'पयसि' 'शृतः' पक्वो 'भवति' ॥ १ ॥

रत्नहविर्म्योऽनन्तरं विहितं सौमारौद्रयागमनूद्याख्यायिकया प्रशंसति—स्वर्भानुर्हेति । 'आसुरः' असुरपुत्रः 'स्वर्भानुः' 'सूर्यम्' 'तमसा' 'विव्याध' आच्छादितवान् । 'सः' सूर्यः तेन 'तमसा' 'विद्धः' आच्छादितः । 'न व्यरोचत' नातिप्रकाशवान् जातः । 'तस्य' 'तत् तमः' 'सोमारुद्रौ एव' 'अपाहताम्' अपहतवन्तौ । तत आरभ्य सूर्यो निवृत्ततमस्कः सन् 'तपति' नभसि दीप्यते । इदानीं तदनुष्ठातुरपि तमसाऽऽच्छादनमाह—तथो एवैष इति । 'अयज्ञियान्' अयज्ञार्हान् सेनान्यादीन् 'यज्ञेन' 'प्रसजति' प्रसक्तान् तत्तद्यागानुष्ठानेन सम्बद्धान् करोतीति 'यत्' 'एतत्' एतेन 'एषः' अनुष्ठाता राजन्यः 'तथा उ' तथैव सूर्यवदेव 'तमः प्रविशति' । तमः वा कर्तृ 'एतं' सुन्वन्तं 'प्रविशति' । सेनान्यादीनामयज्ञियत्वं प्रसिद्धमित्याह—अयज्ञियान् वा इति । तामेव प्रसिद्धिं दर्शयति—शूद्रानिति । 'त्वत्'—इति एकपर्यायः । एकदा 'शूद्रान्' सेनान्यादीन्, 'त्वत्' एकदा 'यान्' कांश्चन गोविकर्तादीन् हीनजातीनपि 'यज्ञेन' 'प्रसजति' । तेन अयज्ञियसम्बन्धेन तमः प्रविशतीति अतः 'तस्य' यष्टुः तथाविधं तमः 'सोमारुद्रौ एव' एतत् एतेन चरुणा प्रीणितौ 'अपहतः' विनाशयतः । ततः पापलेशासंस्पृष्टः सन् 'दीक्षते' दीक्षार्हो भवतीत्यर्थः । श्वेतापयसि श्रपणं प्रशंसति—तद्यदिति । 'तद्' 'यत्' यदि, 'तमो' नाम 'कृष्णं' श्वेतवत्सायाः श्वेतायाः शुक्लवर्णे 'पयसि' श्रपणेन कृष्णरूपं तमः अपसारितवान् भवतीत्यर्थः ॥

यस्याः पयसि चरुः पक्वः तामेव दक्षिणात्वेन विधत्ते—तस्यैषैवेति[1] ॥ २ ॥

---

१—सैव दक्षिणा । का. श्रौ. सू. १५ । ६९ ।

स हैतेनापि यजेत । योऽलं यशसे सन्नयशो भवति यो वाऽअनूचानः सोऽलं यशसे सन्नयशो भवति यो न यशो भवति स तमसा वै स तत्प्रावृतो भवति तस्य सोमारुद्रावेवैतत्तमोऽपहतः सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति ॥ ३ ॥

( त्यु ) अथ मैत्राबार्हस्पत्यं चरुं निर्व्वपति । ह्वलति वा ऽएष यो यज्ञपथादेत्येति वाऽएष यज्ञपथाद्यदयज्ञियान्यज्ञेन प्रसजत्ययज्ञियान्वाऽएतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वन्मित्राबृहस्पती वै यज्ञपथो ब्रह्म हि मित्रो ब्रह्म हि यज्ञो ब्रह्म हि बृहस्पतिर्ब्रह्म हि यज्ञस्तत्पुनर्यज्ञपथमपिपद्यते सोऽपि पद्यैव यज्ञपथं दीक्षते तस्मान्मैत्राबार्हस्पत्यं चरुं निर्व्वपति ॥ ४ ॥

---

स हैतेन—अपि यजेत—योऽलं यशसे सन्नयशो भवति । यो वाऽअनूचानः सोऽलं यशसे सन्नयशो भवति । यो न यशो भवति—स तमसा वै स तत् प्रावृतो भवति । तस्य सोमारुद्रावेवैतत्तमोऽपहतः। सोऽपहतपाप्मा ज्योतिरेव श्रिया यशसा भवति ( १ )॥ ३ ॥

अथ मैत्राबार्हस्पत्यं चरुं निर्वपति । ह्वलतिं वाऽएषः-यो यज्ञपथादेति । एति वाऽएष यज्ञपथाद् यदयज्ञियान्यज्ञेन प्रसजति । अयज्ञियान्वाऽएतद्यज्ञेन प्रसजति—शूद्रांस्त्वद्, यांस्त्वत् । मित्राबृहस्पती वै यज्ञपथः । ब्रह्म हि मित्रो, ब्रह्म हि यज्ञः । ब्रह्म हि बृहस्पतिः, ब्रह्म हि यज्ञः । तत्पुनर्यज्ञपथमपिपद्यते । सोऽपिपद्यैव यज्ञपथं दीक्षते । तस्मान्मैत्राबार्हस्पत्यं चरुं निर्वपति ॥ ४ ॥

---

प्रसङ्गात्फलान्तरायास्य होमस्य बाह्यप्रयोगं दर्शयति—स हैतेनापीति । 'अपिः' भिन्नक्रमः । 'सोऽपि' 'एतेन' सौमारौद्रेण चरुणा 'यजेत' । स इत्युक्तं क इत्याह—'यः' यज्ञियः पुरुषः 'यशसे' यशसां प्राप्तये 'अलं सन्' समर्थो योग्यो भवन्नपि 'अयशः' कीर्तिरहितः 'भवति' । यच्छब्दार्थं विशिनष्टि—यो वा अनूचान इति । साङ्गवेदाध्यायी 'अनूचानः' 'सः' 'यशसे' 'अलं' योग्यो भवन्नपि 'अयशः' यशोरहितो 'भवति' 'यः' तु यशोरहितः, 'सः' 'तमसा' 'प्रावृतः,' 'तस्य' 'एतत्' एतेन हविषा 'सोमारुद्रौ एव' कीर्त्यभावरूपं 'तमः' 'अपहतः' तं कीर्तिमन्तं कुरुतः इत्यर्थः । 'सः' यजमानः अयशोरूपतमसा वियुक्तः सन्, ज्योतिरात्मको भूत्वा 'श्रिया' सम्पदा 'यशसा' चोपलक्षितो भवति ॥ ३ ॥

विधत्ते—अथ मैत्रेति । 'मैत्राबार्हस्पत्यं' मित्राबृहस्पतिदेवत्यं 'चरुं' 'निर्वपेत्' । देवतासम्बन्धं प्रशंसति—ह्वलति वा इति । अयज्ञियानां सेनान्यादीनां यज्ञे प्रसञ्जनमेव यज्ञपथादपगमनमित्यर्थः । मित्राबृहस्पत्योर्यज्ञपथात्मकत्वं निर्वक्ति—ब्रह्म हि मित्र इति । 'ब्रह्म' वेदः, तदेव हि 'यज्ञः' तत्साध्यत्वाद् । यज्ञ एव पन्थाः यज्ञपथमिति समासं विवक्षित्वा, तयोः परम्परया यज्ञरूपत्वोक्तिः । तत् पुनर्यज्ञेति । 'तत्' तस्माद् यज्ञात्मकमित्राबृहस्पतिदेवत्ययागानुष्ठानात् पुनर्यज्ञपथं प्राप्य 'दीक्षते' दीक्षां कर्तुमर्हतीत्यर्थः ॥ ४ ॥

---

१—अनूचानोऽप्ययशा यजेत । का. श्रौ. सू. १५ । ७० । २—मित्राबार्हस्पत्यश्चरुः । का. श्रौ. सू. १५ । ७२ ॥

तस्यावृत् । (या) या स्वयम्प्रशीर्णाऽऽश्वत्थी शाखा प्राची वोदीची वा भवति तस्यै मैत्रं पात्रं करोति वरुण्या वा ऽएषा या परशुवृक्णाऽथैषा मैत्री या स्वयम्प्रशीर्णा तस्मात्स्वयम्प्रशीर्णायै शाखायै मैत्रं पात्रं करोति५॥

(त्य) अथातच्य दधि । विनाट ऽआसिच्य रथं युक्त्वाऽऽबध्य देदीयितवा ऽआह तद्यत्स्वयमुदितं नवनीतं तदाज्यं भवति वरुण्यं वा ऽएतद्यन्मथितमथैतन्मैत्रं यत्स्वयमुदितं तस्मात्स्वयमुदितमाज्यं भवति६॥

तस्यावृत् । या स्वयम्प्रशीर्णाऽऽश्वत्थी शाखा प्राची वोदीची वा भवति । तस्यै मैत्रं पात्रं करोति । वरुण्या वाऽएषा—या परशुवृक्णा । अथैषा मैत्री—या स्वयम्प्रशीर्णा । तस्मात् स्वयम्प्रशीर्णायै शाखायै मैत्रं पात्रं करोति ॥ ५ ॥

अथातच्य दधि, विनाटऽआसिच्य, रथं युक्त्वा, आबध्य, देदीयितवाऽआह । तद् यत् स्वयमुदितं नवनीतम्—तदाज्यं भवति । वरुण्यं वाऽएतद्—यन्मथितम् । अथैतन्मैत्रम्—यत् स्वयमुदितम् । तस्मात् स्वयमुदितमाज्यं भवति ॥ ६ ॥

तस्य चरोरनुष्ठानप्रकारं वक्तुं प्रतिजानीते—तस्यावृदिति । 'तस्य' मैत्राबार्हस्पत्ययागस्य 'आवृत्' क्रिया, अनुष्ठानप्रकारो वक्ष्यत इति शेषः । 'स्वयम्प्रशीर्णा' स्वयमेव भग्ना, 'प्राची' प्रागायता, 'उदीची' उदगायता 'वा' या 'आश्वत्थी' अश्वत्थस्य 'शाखा' 'भवति' तस्याः शाखायाः 'मैत्रं' मित्रसम्बन्धिचरुपाकार्थं 'पात्रं' कुर्यात् । स्वयम्भग्नाया मैत्रत्वं व्यतिरेकपूर्वकमुपपादयति—वरुण्या वा एषेति । 'या' शाखा 'परशुवृक्णा' छिन्ना व्रश्चनेन, सा हिंसितत्वाद् 'वरुण्या' वरुणदेवत्या; स्वयम्भग्नपत्रा तु मित्रार्हा, हिंसाविरहात्; सर्वसुहृत्त्वान्मित्रदेवस्य परशुच्छिन्नशाखानिर्मितं पात्रमयोग्यमित्यर्थः ॥ ५ ॥

मैत्रचर्वर्थमाज्यकरणं विधत्ते—अथातच्येति । पयोविशेषस्तैत्तिरीयके श्रुतः—"श्वेतायै श्वेतवत्सायै दुग्धे स्वयंमूर्त्ते" (तै. सं. १ । ८ । ९ । २)—इति । तादृशं पयः 'आतच्य' आतञ्चनद्रव्येण 'दधि' कृत्वा 'विनाटे' चर्ममये पात्रे दृतौ 'आसिच्य,' 'रथं' 'युक्त्वा' अश्वैः संयोज्य, आबध्य' दधिपूर्णं विनाटं रथे सम्बध्य, 'देदीयितवै' रथधावनाय 'आह' नियुञ्जीत । दीतेर्वा गतिकर्मणो यङ्लुगन्तात् कृत्यार्थे तवै प्रत्ययः । तत्र रथधावनेन दध्नो यत् स्वयमुदितम् मथनमन्तरेण निष्पन्नं, नवनीतं तदेव स्वयमेव विलीनं सद् आज्यं भवति । आज्यकरणप्रकारस्त्वापस्तम्बेन विशद उक्तः—"श्वेतां श्वेतवत्सामामस्त्ये दृतौ दुहन्ति, तत् स्वयंमूर्त्ते संयोगेन परिवहन्ति, तत् स्वयं मथितमातपे विषजन्ति, तत् स्वयं विलीनमाज्यं भवति"—( आ. श्रौ. सू. १८ । ११ । ३–६ ) इति । स्वयमुदिताज्यस्य मित्रयोग्यत्वं व्यतिरेकमुखेन दर्शयति—वरुण्यमिति । यन्मन्थननिष्पन्नमाज्यं तद् 'वरुण्यम्' उपद्रवकारिणो वरुणस्य योग्यम्, न तु सर्वसुहृदो मित्रस्य । यत्तु उदीरितरूपं स्वयमुदितं तन्मन्थनरूपस्य हिंसनस्य विरहान्मैत्रम् ॥ ६ ॥

१—बार्हस्पत्यमधिश्रित्याश्वत्थी या स्वयं भग्ना प्राच्युदीची वा शाखा तत्पात्रेणापिदधाति । का. श्रौ. सू. १५ । ७३ ।

द्वेधा तण्डुलान्कुर्व्वन्ति । स येऽणीयाꣳसः परिभिन्नास्ते बार्हस्पत्या ऽअथ ये स्थवीयाꣳसोऽपरिभिन्नास्ते मैत्रा न वै मित्रः कंचन हिनस्ति न मित्रं कश्चन हिनस्ति नैनं कुशो न कुण्टको विभिनत्ति नास्य व्रणश्चनास्ति सर्व्वस्य ह्येव मित्रो मित्रम् ॥ ७ ॥

( मु ) अथ बार्हस्पत्यं चरुमधिश्रयति । तं मैत्रेण पात्रेणापिदधाति तदाज्यमानयति तत्तण्डुलानावपति स ऽएष ऊष्मणैव श्रप्यते वरुण्यो वा ऽएष योऽग्निना शृतोऽथैष मैत्रो य ऊष्मणा शृतस्तस्मादूष्मणा शृतो भवति तयोरुभयोरवद्यन्नाह मित्राबृहस्पतिभ्यामनुब्रूहीत्याश्राव्याह मित्राबृहस्पती यजेति वषट्कृते जुहोति ॥ ८ ॥

इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् ॥ ५–२–६ ॥ ( ३. २. ) ॥

---

द्वेधा तण्डुलान् कुर्वन्ति । स येऽणीयांसः परिभिन्नास्ते बार्हस्पत्याः । अथ ये स्थवीयांसोऽपरिभिन्नास्ते मैत्राः । न वै मित्रः कञ्चन हिनस्ति, न मित्रं कश्चन हिनस्ति । नैनं कुशो न कण्टको विभिनत्ति । नास्य व्रणश्चनास्ति । सर्वस्य ह्येव मित्रो मित्रम् ॥ ७ ॥

अथ बार्हस्पत्यं चरुमधिश्रयति । तं मैत्रेण पात्रेणापिदधाति । तदाज्यमानयति । तत् तण्डुलानावपति । स एष ऊष्मणैव श्रप्यते । वरुण्यो वाऽएषः—योऽग्निना शृतः। अथैष मैत्रः। य ऊष्मणा शृतः ।

---

देवताद्वयस्य पृथक् चरोः श्रपणं विधित्सुः तण्डुलानां द्वेधाकरणं विधत्ते—द्वेधेति । ' ये ' ' अणीयांसः ' अणुतराः ' परिभिन्नाः ' छिन्नाग्रास्तण्डुलाः, ' ते ' बृहस्पतिदेवत्याः कर्त्तव्याः ' ये ' ' स्थवीयांसः ' स्थूलतराः ' अपरिभिन्नाः ' अच्छिन्नाग्राः अचूर्णीकृताः, ' ते ' मित्रदेवत्याः कर्त्तव्याः । मैत्राणामभिन्नत्वं प्रशंसति—न वै मित्र इति । ' मित्रो ' देवः ' कश्चन ' प्राणिनं ' न हिनस्ति; ' ' मित्रम् ' अपि ' न कश्चन ' कोऽपि ' हिनस्ति ' ' एनं ' मित्रं ' कुशः ' दर्भो वा ' कण्टकः ' वा ' न भिनत्ति ' न विध्यति; अत एव तस्य ' व्रणः ' अपि ' नास्ति ' । सर्वस्य मित्रत्वादिति हेतुमाह—सर्वस्य ह्येवेति । पुँल्लिङ्गो मित्रशब्दो देवतावाची, नपुंसकलिङ्गस्तु सुहृद्वचनः ॥ ७ ॥

श्रपणप्रकारं विधत्ते- अथ बार्हस्पत्यमिति । ' बार्हस्पत्यं चरुम् ' अधिश्रित्य, अग्निमध्ये स्थाल्यामधिश्रितायां बृहस्पत्यर्थांस्तण्डुलानोप्य, 'तं' चरुम् अश्वत्थशाखानिर्मितेन ' मैत्रेण पात्रेण ' अपि—दध्यात् । ' तत् '

---

१–विनाटाद्रथपर्यूढां नवनीत ꣳस्वयं जातमाज्यमासिच्य पात्रे तस्मिन् स्थविष्ठांस्तंडुलान्मित्रायावपति । ऊष्मणा शृतो भवति । अणिष्ठानितरस्मिन् । का. श्रौ. सू. १५ । ७४–७६ । २–बार्हस्पत्यमधिश्रित्याश्वत्थी या स्वयं भग्ना प्राच्युदीची वा शाखा तत्पात्रेणापिदधाति । का. श्रौः सू. ७ । ७३ ।

स वै दीक्षते । स॒ऽ उपवसुथेऽग्नीषोमीयं पशुमालभते तुस्य व॒पया प्रचर्य्याग्नीषोमीयमेकादशकपालं पुरोडाशं निर्व्वपति तद॒नु दे॒वस्वाꣳ ह॒वीꣳषि नि॒रुप्यन्ते ॥ १ ॥

तस्मादूष्मणा श्रृतो भवति । तयोरुभयोरवद्यन्नाह—" मित्राबृहस्पतिभ्यामनुब्रूहि " इति । आश्राव्याह—मित्राबृहस्पती यज इति वषट्कृते जुहोति ( २ ) ॥ ८ ॥

## दीक्षणीययागाः ।

स वै दीक्षते । स उपवसथेऽग्नीषोमीयं पशुमालभते । तस्य वपया प्रचर्याग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति । तदनु देवस्वां हवींषि निरुप्यन्ते ॥ १ ॥

तस्मिन् पात्रे स्वयमुत्पन्नम् ' आज्यम् ' 'आनयति' आसिञ्चेत् । ' तत् ' तत्र स्थविष्ठान् अपरिभिन्नान् मैत्रान् ' तण्डुलान् ' आवपेत् । ' स एषः ' मैत्रश्चरुः ' ऊष्मणैव ' ' श्रप्यते ' पच्यते ' अग्निना ' ' शृतः ' पक्वो 'वरुण्यः', दाहप्रयुक्तहिंसासम्बन्धात् ' वरुण्यः ' वरुणार्हो, न मित्रार्हः । ' ऊष्मणा शृतः' तु ' मैत्रः ' मित्रदेवत्यो युक्तः, दोषविरहात् ॥

एवं पृथक् श्रपणमभिधाय देवताप्रदाने साहित्यं विधत्ते—तयोरुभयोरिति । 'तयोरुभयोः' चर्वोर्दधिपयसोर्दर्शिकयोरिव एकैकस्माद् द्विर्द्विरवद्यन् जुह्वां सहावदानं कुर्वन् "मित्राबृहस्पतिभ्यामनुब्रूहि"—'इति' एवं संयुज्य अनुवाक्याप्रैषं ब्रूयात्; एवं ' यजेति' याज्याप्रैषेऽपि ' वषट्कृते ' सहैव प्रक्षेपः ॥ ८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥ (५-३-२) ॥

एवं पवित्राख्यात् प्रथमसोमयागादनन्तरभावीनि आनुमतादीनि इष्टिदर्वीहोमात्मकानि संवत्सरपर्यन्तमनुष्ठेयानि कर्म्माण्यनुक्रान्तानि (श. प. ५ । २ । ३ । २) । अथ द्वितीयस्याभिषेचनीयाख्यस्य सोमयागस्य प्रयोगोऽभिधास्यते; तत्राभिषेचनीयस्य चोदकप्राप्तां दीक्षामाह—स वै दीक्षत इति । तत्कालः सूत्रे दर्शितः—" फाल्गुनीपक्षयजनीयेऽभिषेचनीयाय दीक्षते " ( का. श्रौ. सू. १५ । ८० ) इति ॥

देवस्वां हवींषि विधित्सुस्तेषामग्नीषोमीयपशुपुरोडाशानन्तरभावित्वं वक्तुमाह—स उपवसथ इति । ' उपवसथः ' सुत्यादिवसात् पूर्वमहः, अग्नीषोमीयं पशुपुरोडाशं निरुप्य, तदनु देवस्वां हवींषि निर्वपेत् । सुवन्त्यनुजानन्तीति सुवः, देवाश्च ते सुवश्चेति देवसुवः, तेषां 'देवस्वाम्'; "ओः सुपि " ( पा. सू. ४ । ४ । ८३ ) इति यणादेशः । प्रसवितृत्वं चैषामाम्नायते—"देवसुवामेतानि हवींषि भवन्ति, एतावन्तो वै देवानां सवाः, त एवास्मै सवान् प्रयच्छन्ति, त एनं सुवन्ते " ( तै. ब्रा १।७।४ ) इति ॥ १ ॥

१—ऊष्मणा श्रृतो भवति । का. श्रौ. सू. १५ । ७५ । २—अग्नीषोमीयस्य पशुपुरोडाशमनु देवसूहवींषि निर्वपति यजप्रैषाणि का. श्रौ. सू. १५ । ८४ ।

सवित्रे सत्यप्रसवाय । द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशं निर्व्वपति प्लाशुकानां व्रीहीणाᳬँ सविता वै देवानां प्रसविता सवितृप्रसूतः सूयाऽइत्यथ यत्प्लाशुकानां व्रीहीणां क्षिप्रे मा प्रसुवानिति ॥ २ ॥

( त्यु ) अथाग्नये गृहपतये । ( येऽष्टा ) अष्टाकपालं पुरोडाशं निर्व्वपत्याशूनाᳬँ श्रीर्व्वै गार्हपतं यावतो यावतऽईष्टे तदेनमग्निरेव गृहपतिर्गार्हपतमभि परिणयत्यथ यदाशूनां क्षिप्रे मा परिणयानिति ॥ ३ ॥

( त्यु ) अथ सोमाय वनस्पतये । श्यामाकं चरुं निर्व्वपति तदेनᳬँ

---

सवित्रे सत्यप्रसवाय द्वादशकपालं वाऽष्टाकपालं पुरोडाशं निर्वपति—प्लाशुकानां व्रीहीणाम् । सविता वै देवानां प्रसविता । सवितृप्रसूतः सूयाऽइति । अथ यत् प्लाशुकानां व्रीहीणां—क्षिप्रे मा प्रसुवानिति ॥ २ ॥

अथाग्नये गृहपतयेऽष्टाकपालं पुरोडाशं निर्वपति—आशूनाम् । श्रीर्वै गार्हपतम् । यावतो—यावत ईष्टे—तदेनमग्निरेव गृहपतिर्गार्हपतमभिपरिणयति । अथ यदाशूनां—क्षिप्रे मा परिणयानिति ॥ ३ ॥

अथ सोमाय वनस्पतये श्यामाकं चरुं निर्वपति । तदेनं सोम एव वनस्पतिरोषधिभ्यः

---

तत्र प्रथमं सावित्रं हविर्विधत्ते—सवित्रे सत्यप्रसवायेति ( तै० सं. १ । ८ । १० । १ ) । 'सत्यप्रसवाय' क्षमोग्राभ्यनुज्ञाय 'सवित्रे' 'प्लाशुकानाम्' प्रकर्षेण आशु शीघ्रं पच्यमानानां पुनःप्ररूढानां व्रीहीणाम् । रेफस्य छान्दसो लत्वनिर्देशः । सवितृदेवतासम्बन्धं प्रशंसति—सवितेति । 'सूये' सवं करवाणि । प्राशुकव्रीहिसाध्यत्वं प्रशंसति—अथ यदिति । 'क्षिप्रे' क्षिप्रकाले 'मा' मां 'प्रसुवान्' सवितृदेवत्याः प्राशुका व्रीहयः; प्रसुवन्तु प्रेरयन्त्विति प्राशुकत्वम् । प्रसुवानिति, प्रपूर्वात् सुवतेर्लेटयडागमे सेरिकारलोपे कृते रूपम् ॥ २ ॥

द्वितीयं हविर्विधत्ते—अथाग्नय इति । 'गृहपतये' गृहपतित्वगुणकाय 'अग्नये' 'आशूनां' व्रीहीणां 'पुरोडाशं' निर्वपेत् । आशूनामिति । प्लाशुकाः पुनः प्ररूढा व्रीहय इत्युक्तम्, ततोऽप्यधिककाले पक्षत्रये पच्यमानाः षष्टिका व्रीहय आशवः । तेषामाशुत्वं च त्रिचतुरमासनियतपरिपाकव्रीह्यपेक्षम् । गृहपतिपदं प्रशंसति—श्रीर्वा इति । 'श्रीः' खलु 'गार्हपतं' गृहपतित्वमेव; तस्माद् यजमानो 'यावतः' धनस्य 'ईष्टे' ईश्वरो भवति । 'तद्' 'गार्हपतं' गृहपतिसम्बन्धि सर्वं वस्तुजातम् 'अभि' 'एनं' यजमानं गृहपतिगुणकोऽग्निः 'परिणयान्' 'परिणयति' प्रापयति । व्रीहीणामाशुत्वं प्रशंसति—अथ यदिति । 'क्षिप्रे' क्षिप्रं 'मा' मां परिणयेयुः । 'इति' अतो हेतोराशुभिरेव हविः कर्त्तव्यमित्यर्थः ॥ ३ ॥

तृतीयं हविर्विधत्ते—अथ सोमायेति । 'वनस्पतये' वनानामोषधीनां पतिः वनस्पतिः । पारस्करादित्वात्

---

१—प्लाशुकानां२ सवित्रे सत्यप्रसवाय । का श्रौ. सू. १५ । ८५ । २—'प्लाशुकाः पुनः प्ररूढा व्रीहयः' इति कर्कोक्तिः । ३—आशूनामग्नये गृहपतये । का. श्रौ. सू. १५ । ८६ । ४—श्यामाकः सोमाय वनस्पतये । का० श्रौ० सू० । १५ । ८८ ॥

सोम ऽएव वनस्पतिरोषधिभ्यः सुवत्यथ यच्छ्यामाको भवत्येते वै सोमस्यौषधीनां प्रत्यक्षतमां यच्छ्यामाकास्तस्माच्छ्यामाको भवति ॥ ४ ॥

( त्यु ) अथ बृहस्पतये वाचे । नैवारं चरुं निर्वपति तदेनं बृहस्पतिरेव वाचे सुवत्यथ यन्नैवारो भवति ब्रह्म वै बृहस्पतिरेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति ॥ ५ ॥

( त्य ) अथेन्द्राय ज्येष्ठाय । हायनानां चरुं निर्वपति तदेनमिन्द्र ऽएव ज्येष्ठो ज्यैष्ठ्यमभि परिणयत्यथ यद्धायनानां भवत्यतिष्ठा वा ऽएता ओषधयो यद्धायना ऽअतिष्ठो वा ऽइन्द्रस्तस्माद्धायनानां भवति ॥ ६ ॥

---

सुवति । अथ यच्छ्यामाको भवति । एते वै सोमस्यौषधीनां प्रत्यक्षतमाम्—यच्छ्यामाकाः । तस्माच्छ्यामाको भवति ॥ ४ ॥

अथ बृहस्पतये वाचे नैवारं चरुं निर्वपति । तदेनं बृहस्पतिरेव वाचे सुवति । अथ यन्नैवारो भवति । ब्रह्म वै बृहस्पतिः । एते वै ब्रह्मणा पच्यन्ते—यन्नीवाराः । तस्मान्नैवारो भवति ॥ ५ ॥

अथेन्द्राय ज्येष्ठाय हायनानां चरुं निर्वपति । तदेनमिन्द्र एव ज्येष्ठो ज्यैष्ठ्यमभिपरिणयति । अथ यद्धायनानां भवति । अतिष्ठा वाऽएता ओषधयो—यद्धायनाः । अतिष्ठो वाऽइन्द्रः । तस्माद्धायनानां भवति ॥ ६ ॥

---

सुद् । तस्मै 'सोमाय' श्यामाकप्रकृतिकं 'चरुं' निर्वपेत् । देवतासम्बन्धं प्रशंसति—तदेनमिति । श्यामाकानां सोमार्हत्वमुपपादयति—अथ यच्छ्यामाका इति । 'श्यामाका इति यत्' 'एते' खलु 'ओषधीनां' मध्ये 'सोमस्य' 'प्रत्यक्षतमाम्' अतिशयेन प्रत्यक्षं रूपमित्यर्थः ॥ ४ ॥

चतुर्थं हविर्विधत्ते—अथ बृहस्पतय इति[1] । 'वाचे' वाग्रूपाय । तत् तेन नैवारचरुणा प्रीतो 'बृहस्पतिरेव' 'एनं' यजमानं 'वाचे' 'सुवति' अनुजानाति । "अथ यन्नैवारो भवति"—इत्यादिकं वाजपेये व्याख्यातम् ( श. प. ५ । १ । ४ । १४ । ) ॥ ५ ॥

पञ्चमं हविर्विधत्ते—अथेन्द्रायेति[2] । ज्येष्ठत्वगुणकायेन्द्राय 'हायनानां' संवत्सरपक्वानां रक्तशालीनां 'चरुं' निर्वपेत् । संवत्सरपक्वानां ज्येष्ठगुणकेन्द्रयोग्यत्वमुपपादयति—अथ यद्धायनानामिति । 'हायनाः' संवत्सरपक्वा व्रीहय इति ( पा. सू. ३ । १ । १४८ ) ॥ 'यत्' 'एताः' 'अतिष्ठाः' अतीत्य तिष्ठन्त्यः 'ओषधयः' चिरकालेन पाकात् 'इन्द्रः' अपि 'अतिष्ठः' सर्वानतिक्रम्य स्थितः ॥ ६ ॥

---

१—नैवारो बृहस्पतये वाचे का. श्रौ. सू. १५ । ८ । २—हायनानामिन्द्राय ज्येष्ठाय । का० श्रौ० सू० १५ । ९ ।

( त्यु ) अथ रुद्राय पशुपतये । रौद्रं गावेधुकं चरुं निर्वपति तदेनꣳ रुद्र एव पशुपतिः पशुभ्यः सुवत्यथ यद्गावेधुको भवति वास्तव्यो वा ऽएष देवो वास्तव्या गवेधुकास्तस्माद्गावेधुको भवति ॥ ७ ॥

( त्यु ) अथ मित्राय सत्याय । नाम्बानां चरुं निर्वपति तदेनं मित्र ऽएव सत्यो ब्रह्मणे सुवत्यथ यन्नाम्बानां भवति वरुण्या वा ऽएता ऽ ओषधयो याः कृष्टे जायन्ते ऽथैते मैत्रा यन्नाम्बास्तस्मान्नाम्बानां भवति ॥ ८ ॥

( त्यु ) अथ वरुणाय धर्मपतये । वारुणं यवमयं चरुं निर्वपति तदेनं वरुण ऽ एव धर्मपतिर्धर्मस्य पतिं करोति परमता वै सा यो धर्मस्य पतिरसद्यो हि परमतां गच्छति तꣳ हि धर्म ऽउपयन्ति तस्माद्वरुणाय धर्मपतये ॥ ९ ॥

---

अथ रुद्राय पशुपतये रौद्रं गावेधुकं चरुं निर्वपति । तदेनं रुद्र एव पशुपतिः पशुभ्यः सुवति । अथ यद्गावेधुको भवति । वास्तव्यो वाऽएष देवः । वास्तव्या गवेधुकाः । तस्माद्गावेधुको भवति ॥ ७ ॥

अथ मित्राय सत्याय नाम्बानां चरुं निर्वपति । तदेनं मित्र एव सत्यो ब्रह्मणे सुवति । अथ यन्नाम्बानां भवति । वरुण्या वाऽएता ओषधयो याः कृष्टे जायन्ते अथैते मैत्राः—यन्नाम्बाः । तस्मान्नाम्बानां भवति ॥ ८ ॥

अथ वरुणाय धर्मपतये वारुणं यवमयं चरुं निर्वपति । तदेनं वरुण एव धर्मपतिर्धर्मस्य पतिं

---

षष्ठं हविर्विधत्ते—अथ रुद्रायेति[1] । 'पशुपतये' पशुपतिगुणकाय 'रुद्राय' । रौद्रमिति तद्धितेन विहित एव रुद्रसम्बन्धः, पुनः 'पशुपतये'-इति विशेषसम्बन्धाय 'रुद्राय'—इति चतुर्थी उक्ता । पशुपतिपदं प्रशंसति—तदेनमिति । 'तत्' तेन हविषा एनं सुन्वन्तं 'पशुपतिः' 'रुद्र एव' 'पशुभ्यः' तदर्थं 'सुवति' 'प्रेरयति, पशुमन्तं करोतीत्यर्थः । 'वास्तव्यः'—इत्यादि पूर्ववद् व्याख्येयम् ॥ ७ ॥

सप्तमं हविर्विधत्ते—अथ मित्रायेति[2] । 'सत्याय' सत्यगुणकाय 'मित्राय' 'नाम्बानां' नाम्बा नाम अकृष्टपच्याः स्वयञ्जाता व्रीहयः । नाम्बानां मित्रयोग्यत्वमुपपादयति—अथ यन्नाम्बानामिति । कृष्टक्षेत्रोत्पन्नाः 'ओषधयः' 'वरुण्याः' कर्षणादिलक्षणहिंसासम्बन्धाद्वरुणार्हाः, अकृष्टपच्यास्तु तद्विरहात् 'मैत्राः' ॥ ८ ॥

अष्टमं हविर्विधत्ते—अथ वरुणायेति[3] । 'धर्मपतये' धर्मपतिगुणकाय 'वरुणाय' 'यवमयं' 'चरुं' निर्वपेत् । रौद्रमितिवद् वारुणमिति व्याख्येयम् । 'तत्' तेन 'एनं' यजमानं तादृशो 'वरुणः' 'धर्मस्य

---

१—रुद्राय पशुपतये । प्रागुक्त एव गावेधुकश्चरुरिति सूत्रार्थः का. श्रौ. सू. । १५ । ११ । २-नांबो मित्राय सत्याय । का. श्रौ. सू. १५ । १२ । ३—वरुणाय धर्मपतय इति । का श्रौ. सू. १५ । १३ ।

( ये॒ऽथा ) अ॒थाग्नी॒षोमी॒येन॑ पुरो॒डाशे॑न प्र॒चरति । तस्या॑निष्ट॒ऽए॒व स्वि॑ष्ट॒कृद्भ॑व॒त्यथै॒तैर्ह॒विर्भि॑: प्र॒चरति य॒दे॒तैर्ह॒विर्भि॑: प्र॒चर॑ति ॥ १० ॥

( त्यु ) अ॒थै॒नं द॑क्षि॒णे बा॒हाव॒भिप॒द्य जप॑ति । सवि॒ता त्वा॑ स॒वाना॑ᳫ्ँ सुवता॒म॒ग्निर्गृ॒हप॑तीना॒ᳫ्ँ सोमो॒ व्वन॒स्पती॑नाम् ॥ बृ॒हस्प॒ति॑र्वा॒चऽइन्द्रो॒ ज्यैष्ठ्या॑य रु॒द्रः प॒शुभ्यो॑ मि॒त्रः स॒त्यो व्वरु॑णो ध॒र्मप॑तीनाम् ॥ ११ ॥

( नाम् । इ ) इ॒मं दे॑वाः । ( ऽ ) अस॒प॒त्नᳫ्ँ सु॑वध्व॒मिती॒मं दे॑वा अभ्रा॒तृ॒व्यᳫ्ँ सु॑वध्व॒मित्ये॒वैत॒दाह॒ म॒ह॒ते क्ष॒त्राय॑ म॒ह॒ते ज्यैष्ठ्या॒येति॒ ना॒त्र तिरो॒-

---

करोति । परमता वै सा—यो धर्मस्य पतिरसत् । यो हि परमतां गच्छति—तं हि धर्मऽउपयन्ति । तस्माद्वरुणाय धर्मपतये ॥ ९ ॥

अथाग्नीषोमीयेन पुरोडाशेन प्रचरति । तस्यानिष्ट एव स्विष्टकृद्भवति । अथैतैर्हविर्भिः प्रचरति । यदेतैर्हविर्भिः प्रचरति ॥ १० ॥

अथैनं दक्षिणे बाहावभिपद्य जपति—"सविता त्वा सवानां सुवताम्, अग्निर्गृहपतीनाम्, सोमो वनस्पतीनाम् । बृहस्पतिर्वाचे, इन्द्रो ज्यैष्ठ्याय, रुद्रः पशुभ्यः, मित्रः सत्यो, वरुणो धर्मपतीनाम्"—( वा. सं. ९ । ३९ ) ॥ ११ ॥

"इमं देवाः असपत्नं सुवध्वम्"—इति । इमं देवा अभ्रातृव्यं सुवध्वमित्येवैतदाह । "महते क्षत्राय, महते ज्यैष्ठ्याय"—इति, नात्र तिरोहितमिवास्ति । "महते जानराज्याय"—इति । महते

---

पतिं ' कुर्यात् । धर्मपतित्वं प्रशंसति—परमतेति । ' यः ' पुमान् ' धर्म्मस्य पतिः ' ' असद् ' भवेत्, ' स वै ' ' परमता ' परमत्वम् । तदेव विवृणोति—यो हीति । ' तं ' परमं ' धर्म्मे उपयन्ति ' प्राप्नुवन्ति ॥ ९ ॥

एतेषां निरुप्तानां हविषां प्रचरणकालं विधत्ते—अथाग्नीषोमीयेणेति । चोदकप्राप्तेन अग्नीषोमीयपशुपुरोडाशेन प्रचर्य तदीयस्विष्टकृतः प्राक् एतैर्हविर्भिर्यजेतेत्यर्थः ॥ १० ॥

विधत्ते—अथैनमिति । ' अथ ' देवस्वां हविर्यागानन्तरं स्विष्टकृतः पूर्वम् ' एनं ' यजमानं ' दक्षिणे बाहौ ' ' अभिपद्य ' गृहीत्वा ' जपति, ' अध्वर्युरिति शेषः । सूत्रम्—" उत्तमेन चरित्वा सविता त्वेत्याह यजमानबाहुं दक्षिणं गृहीत्वा "—( का. श्रौ. सू. १९ । ९४ ) इति । मन्त्रस्यार्थः—हे यजमान ! ' त्वा ' त्वां ' सविता ' ' सवानां ' प्रसवानां स्वामित्वेन ' सुवताम् ' अनुजानातु । तथा ' अग्निः ' अन्येषां ' गृहपतीनाम् ' ईश्वरम् अनुजानातु । ' त्वाम् '—इत्यनुषङ्गः । एवमुत्तरत्रापि त्वां सुवतामिति योज्यम् । ' वाचे, ' ' ज्यैष्ठ्याय ' इत्यादौ तादर्थ्ये चतुर्थी । ' मित्रः सत्यः '—इत्यत्र सत्यशब्दाच्चतुर्थ्यर्थे सुः सत्यायेत्यर्थः । ( पा. सू. ७ । १ । ३९ ) ॥ ११ ॥

परोक्षवदुक्त्वा, अथ प्रत्यक्षवदाह—इमं देवा इति । हे ' देवाः ! ' सवित्रादयः ' इमं ' यजमानम् ' असपत्नं ' शत्रुरहितं ' सुवध्वम् ' अनुजानीत । तथा ' महते क्षत्त्राय ' अतिप्रभूताय क्षत्रियकुलाय, ' महते

हितमिवास्ति महते जानराज्यायेति महते जनानाᳪं राज्यायेत्येवैतदाहे-
न्द्रस्येन्द्रियायेति वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेतीममुमुष्य पुत्र-
ममुष्यै पुत्रमिति तद्यदेवास्य जन्मऽतत एवैतदाहास्यै विशऽइति यस्यै
विशो राजा भवत्येष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाᳪं राजेति
तदस्माऽइदᳪं सर्वमाद्यं करोति ब्राह्मणमेवापोद्धरति तस्माद्ब्राह्मणो-
ऽनाद्यः सोमराजा हि भवति ॥ १२ ॥

---

जनानां राज्यायेत्येवैतदाह । "इन्द्रस्येन्द्रियाय"–इति । वीर्यायेत्येवैतदाह–यदाहेन्द्रस्येन्द्रियायेति । " इमममुष्य पुत्रम्, अमुष्यै पुत्रम्"–इति । तद् यदेवास्य जन्म–तत एवैतदाह । " अस्यै विशे "–इति । यस्यै विशो राजा भवति । " एष वोऽमी राजा, सोमोऽस्माकं ब्राह्मणानां राजा "–( वा० सं० ९ । ४० ) इति । तदस्माऽइदं सर्वमाद्यं करोति । ब्राह्मणमेवापोद्धरति । तस्माद्ब्राह्मणोऽनाद्यः । सोमराजा हि भवति ॥ १२ ॥

---

ज्यैष्ठ्याय ' ज्येष्ठत्वाय अप्रतिहतनियमसामर्थ्यायेत्यर्थः । ' महते जानराज्याय ' जनसम्बन्धि यद्राज्यं तत्र सागरपर्यन्तभूमिविषयत्वात्, महत्सार्वभौमत्वाय । ' इन्द्रस्य ' सम्बन्धिने ' इन्द्रियाय ' वीर्याय ' इमम् ' एतन्नामानं यजमानम्, ' अमुष्य ' पितुः ' पुत्रम्, ' ' अमुष्यै ' अमुष्या मातुः ' पुत्रम्, ' सुवध्वमित्यनुषङ्गः । ' अस्यै ' अस्याः ' विशः ' प्रजायाः ' राजा, ' एष यजमान इत्यर्थः । प्रजा अपि सम्बोध्याः–एष इति । ' अमी '–इति सम्बोधनप्रथमाबहुवचनान्तम् । अदःशब्दस्थाने जनपदनाम सम्बोधनप्रथमाबहुवचनान्तं गृह्णीयादित्यर्थः । तत एवामी इत्यस्य स्थाने भरतपदं प्रक्षिप्य पठितं बौधायनेन–" अथैनं रत्निभ्य आवेदयति, एष वो भरता राजा "–इति । आपस्तम्बेन तु राजविशेषेण जनपदनामग्रहणमुक्तम्–"अथैनं रत्निभ्य आवेदयति, एष वो भरता राजेत्येष वः कुरवो राजेति कौरव्यमेष वः पञ्चाला राजेति पाञ्चालमेष वः कुरुपाञ्चाला राजेति वा कुरुपञ्चालमेष वो जनता राजेत्यन्यान् राज्ञः " ( आ. श्रौ. सू. १८ । १२ । ७ )–इति । कात्यायनेन त्विदं सर्वं संगृह्योक्तम्–" यस्याश्च जाते राजा भवति देशस्यानवस्थितत्वात् "– (का. श्रौ. सू. १९। ९६ । ९७ )इति । हे प्रजाः ! ' वः ' युष्माकम् एष राजा, एनं स्वामिनं यथेरितं सेवध्वमित्यर्थः । ' ब्राह्मणानामस्माकं ' सोमः ' एव ' राजा ' न तु क्षत्रिय इत्यर्थः ॥

मन्त्रं भागशोऽनूद्य व्याचष्टे–इमं देवा इति । भ्रातृव्यः शत्रुः । " व्यन् सपत्ने " ( पा. सू. ४ । १ । १४९ )–इति । व्यन् प्रत्ययः । शेषं सुगमम् । यजमानस्य तन्मातापित्रोश्च नामग्रहणस्थानं दर्शयति–इममुमुष्येति । इममित्यस्यानन्तरं यजमानस्य नाम; ' अमुष्य ' ' अमुष्याः ' इत्येतयोः स्थाने तस्य मातापित्रोर्नामेत्यर्थः । अत एव सूत्रम्–" नामास्य गृह्णाति मन्त्रे यथास्थानं, मातापित्रोश्च " ( का. श्रौ. १९ । ९४, ९९ ) इति । मन्त्रभागस्य तात्पर्यमाह–तदस्मा इति । ' तत् ' तेन, एष वो राजेति स्वामित्वप्रतिपादनेन ' अस्मै ' राज्ञे ' इदं ' दृश्यमानं ' सर्वं ' जगद् ब्राह्मणव्यतिरिक्तम् ' आद्यं ' भोग्यं करोति । सोमोऽस्माकमिति मन्त्रभागस्य तात्पर्यमाह–ब्राह्मणमेवेति । यतः सोमोऽस्माकं ब्राह्मणानां राजेति ब्राह्मणजातिः सोमस्वामित्वेन पृथक्कृता, तस्माद्ब्राह्मणः क्षत्रियेण नाद्यः । ' हि ' यस्माद् ' ब्राह्मणः ' ' सोमराजा ' सोमो राजा यस्येति बहुव्रीहिः, अत एव " राजाहस्सखिभ्यः "–( पा. सू. ५ । ४ । ९१ ) इति टच् समासान्तो न कृतः ।

( त्ये ) एता ह वै देवताः सवस्येशते । तस्माद्देवस्वो नाम तदेनमेता ऽएव देवताः सुवते ताभिः सूत श्वः सूयते ॥ १३ ॥

ता वै द्विनाम्न्यो भवन्ति । द्वन्द्वं वै वीर्यं वीर्यवत्यः सुवान्ता ऽइति तस्माद्द्विनाम्न्यो भवन्ति ॥ १४ ॥

( न्त्यु ) अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाहुती ऽएतत्कर्म क्रियत ऽएष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता ऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत ऽएवैतस्य प्रजापतेर्दधाति मध्यतः सुवति तस्मादन्तरेणाहुती ऽएतत्कर्म क्रियत ऽआश्राव्याहाग्नये स्विष्टकृते प्रेष्येति वषट्कृते जुहोति ॥ १५ ॥

इति द्वितीयप्रपाठके सप्तमं ब्राह्मणम् ॥ ५–२–७ ॥ ( ३. ३. ) ॥

इति द्वितीयप्रपाठकः समाप्तः ॥ ५ । २ ॥

---

एता ह वै देवाः सवस्येशते । तस्माद्देवस्वो नाम । तदेनमेता एव देवताः सुवते । ताभिः सूतः श्वः सूयते ॥ १३ ॥

ता वै द्विनाम्न्यो भवन्ति । द्वन्द्वं वै वीर्यम् । वीर्यवत्यः सुवान्ताऽइति । तस्माद्द्विनाम्न्यो भवन्ति ॥ १४ ॥

अथाह–अग्नये स्विष्टकृतेऽनुब्रूहि इति । तद् यदन्तरेणाहुतीऽएतत्कर्म क्रियते । एष वै प्रजापतिः–

---

यस्मान्मन्त्रेणाध्वर्युः स्वकीयं राजानं विभज्य निर्दिष्टवान्, तस्माल्लोकेऽपि ब्राह्मणा अग्निष्टोमादियागेषु सोममेव राजशब्दोदितं "सोम राजन्नेश्ववरोह मा मेः"–इत्यादिभिर्मन्त्रैरुपचरन्ति ( तै. सं. १।३।१३।१) ॥ १२ ॥

उक्तहविरष्टकस्य देवतानां सम्भूय नाम निर्वक्ति–एता ह वा इति । तदेनमिति । यस्माद् 'एताः' देवताः 'सवस्य' ईशयित्र्यः, 'तत्' तस्मात् 'एताः देवताः' देवसूनामिकं सवितृप्रसूतम्, 'एनं' सुन्वन्तं हविः 'सुवते' अनुजानन्ति; 'ताभिः' देवताभिः 'सूतः' अनुज्ञातः सन् 'श्वः' सुत्यादिवसे 'सूयते' अनुज्ञायते; देवसूहविःप्रचारस्य अग्नीषोमीयदिवसकर्त्तव्यत्वात् 'श्वः' इत्यनेन सुत्यादिनं विवक्ष्यत इत्यभिप्रायः ॥ १३ ॥

उक्तानां देवतानामेकैकस्य 'सवित्रे सत्यप्रसवाय'–इत्यादिविशेषणविशेष्यात्मकं नामद्वयं तद्द्वंद्वात्मना प्रशंसति–ता वै द्विनाम्न्य इति । 'सुवान्तै'–इति पञ्चमलकारान्तं पदम् । "लेटोऽडाटौ"–( पा. सू. ३ । ४ । ९४ ) इत्याडागमः, "एत ऐ"–इत्यैकारादेशश्च ( पा. सू. ३ । ४ । ९३ ) ॥ १४ ॥

अग्नीषोमीयपशुपुरोडाशप्रधानाहुतेरनन्तरं कर्तव्यं विधाय प्रकृतं स्विष्टकृद्यागमनुवदति–अथाहेति । प्रधानस्विष्टकृदाहुत्योर्मध्ये देवसूहविःप्रचारेण यज्ञरूपप्रजापतिमध्ये एव यजमानं निहितवान् भवतीत्यर्थः ॥ १५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे तृतीयाध्याये तृतीयं ब्राह्मणम् ॥ ५–३–३ ॥

इति पञ्चमकाण्डे द्वितीयः प्रपाठकः । ( ५–२ )

# अथ पञ्चमकाण्डे तृतीयप्रपाठके प्रथमं ब्राह्मणम् ।
# तृतीयाध्याये चतुर्थं ब्राह्मणम् ।

स वाऽअपः सम्भरति । तद्यदपः सम्भरति वीर्यं वाऽआपो वीर्यमेवैत-
द्रसमपाᳪ सम्भरति ॥ १ ॥

(त्यौ) औदुम्बरे पात्रे । (त्रेऽन्नं) अन्नं वाऽऊर्गुदुम्बरऽ ऊर्जोऽन्नाद्यस्याव-
रुद्ध्यै तस्मादौदुम्बरे पात्रे ॥ २ ॥

स सारस्वतीरेव प्रथमा गृह्णाति । (त्य) अपो देवा मधुमतीरगृभ्णन्नि-
त्यपो देवा रसवतीरगृह्णन्नित्येवैतदाहोर्जस्वती राजस्वश्चिताना ऽइति रस-

---

य एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाताः । एतम्वेवाप्येतर्ह्यनुप्रजायन्ते । तद् एनं मध्यत एवैतस्य प्रजापतेर्दधाति । मध्यतः सुवति । तस्मादन्तरेणाहुतीऽएतत्कर्म क्रियते । आश्राव्याहा-अग्नये स्विष्टकृते प्रेष्येति । वषट्कृते जुहोति ॥ १९ ॥

## अभिषेचनीयानामपां सम्भरणम् ।

स वा ऽअपः सम्भरति । तद्यदपः सम्भराति । वीर्यं वाऽआपः । वीर्यमेवैतद्रसमपां सम्भरति॥ १॥
औदुम्बरे पात्रे । अन्नं वाऽऊर्गुदुम्बरः । ऊर्जोऽन्नाद्यस्यावरुध्यै । तस्मादौदुम्बरे पात्रे ॥ २॥
स सारस्वतीरेव प्रथमा गृह्णाति। "अपो देवा मधुमतीरगृभ्णन्"—इति । अपो देवा रसवतीरगृह्णन्नित्येवैतदाह। "ऊर्जस्वती राजस्वश्चितानाः" इति। रसवतीरित्येवैतदाह-यदाहोर्जस्वतीरिति।

---

चतुर्थब्राह्मणे यजमानाभिषेकार्थं सप्तदशसङ्ख्याकानामपां सम्भरणमुच्यते । कात्यायनः अत्र कञ्चिद्विशेषं सूत्रयामास—" इडान्तेऽपो गृह्णाति, यूपमुत्तरेण नैमित्तिकीरसम्भवाद्, गत्वेतराः, पृथक् पात्रेष्वौदुम्बरेषु " (का. श्रौ.सू. १९।१०१–१०३) इति आतपवर्ष्याद्यान्युदकानि यूपस्योत्तरप्रदेशे निधाय गृह्णीयात् । इतराः सम्भविनीरपस्तु तत्र तत्र गत्वा गृह्णीयात् । तदिदमप्सम्भरणं विधत्ते—स वा अप इति । उदकसम्भरणं वीर्यात्मना प्रशंसति—तद्यदिति । अपां वीर्यरूपं रसमेव सम्भृतवान् भवतीत्यर्थः ॥ १ ॥

सम्भरणस्य पात्रविशेषं विधत्ते—औदुम्बर इति । 'पात्रे'—इति जात्येकवचनम् । सर्वाणि सप्तदश पात्राणि औदुम्बराणि भवेयुः । तथा च सूत्रमुदाहृतम् । औदुम्बरत्वमन्नावरोधकत्वेन प्रशंसति—अन्नं वा इति ॥ २ ॥

जलसम्भरणे क्रमं विधत्ते—स सारस्वतीरेवेति । सरस्वत्यां नद्यां भवाः अपः प्रथमं गृह्णीयात् ।

---

१–गत्वेतराः पृथक्पात्रेष्वौदुंबरेषु सारस्वतीः । ३ । अवगाह्यावगाढात्पशोः पुरुषाद्वा पूर्वापरा ऊर्मीः । ४।स्यंदमानाः । ५। प्रतिलोमाः । ६ । अपयतीः । ७ । नदीपतिᳪसूयाः । ८ । काष्ठं वोच्छ्रितोढम् । ९ । निवेष्येन । १० । स्यंदमानानाᳪस्थावराः प्रत्यातापे । ११। अंतरिक्षात्प्रतिगृह्या आतपवर्ष्याः । १२ । सरस्याः कूप्याः प्रष्वा मधुगौल्ल्याः पयोघृतम् । १३ । सरस्वतीर्गृह्णात्यपो देवा इति ॥ ११४। का. श्रौ. सू. १५ । १०३–११४ ।



८८

वतीरित्येवैतदाह यदाह्नोर्जस्वतीरिति राजस्वश्चितानाऽइति याः प्रज्ञाता राजस्व इत्येवैतदाह याभिर्मित्रावरुणावभ्युषिञ्चन्नित्येताभिर्हि मित्रावरुणावभ्युषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीरित्येताभिर्हीन्द्रं नाष्ट्रा रक्षाᳪंस्यत्यनयंस्ताभिरभिषिञ्चति वाग्वै सरस्वती वाचैवैनमेतदभिषिञ्चत्येता वाऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ ३ ॥

( त्यु ) अथाध्वर्युः । ( श्च ) चतुर्गृहीतमाज्यं गृहीत्वाऽपोऽभ्युवैति तद्याऽऊर्मी व्युर्दतः पशौ वा पुरुषे वाऽभ्युवेते तौ गृह्णाति ॥ ४ ॥

---

राजस्वश्चितानाऽइति । याः प्रज्ञाता राजस्व इत्येवैतदाह । " याभिर्मित्रावरुणावभ्यषिञ्चन्"–इति । एताभिर्हि मित्रावरुणावभ्यषिञ्चन् । " याभिरिन्द्रमनयन्नत्यरातीः "–( वा. सं. १० । १ ) इति । एताभिर्हीन्द्रं नाष्ट्रा रक्षांस्यत्यनयन् । ताभिरभिषिञ्चति । वाग्वै सरस्वतीवाचैवैनमेतदभिषिञ्चति । एता वाऽएका आपः । ता एवैतत्सम्भरति ॥ ३ ॥

( २ ) अथाध्वर्युश्चतुर्गृहीतमाज्यं गृहीत्वाऽपोऽभ्यवैति । तद्याऽऊर्मी व्यर्दतः । पशौ वा, पुरुषे वाऽभ्यवेते–तौ गृह्णाति ॥ ४ ॥

---

एव–शब्दोऽन्ययोगव्यवच्छेदार्थः । तत्र मन्त्रं विधत्ते–अपो देवा इति । ' मधुमतीः ' मधुररसवतीः, ' ऊर्जस्वतीः ' विशिष्टान्नरसवतीः ' राजस्वः ' राजानं सुवते, जनयन्ति, अनुजानन्तीति राजस्वः;ताः ' चितानाः ' देवतात्वेन चेतयमानाः, ' अपः ' उदकानि ' देवाः ' ' अगृभ्णन् ' मकारच्छान्दसः । ता अपो विशिनष्टि–' याभिः ' अद्भिः 'मित्रावरुणौ' अभ्यषिञ्चन् देवाः, 'याभिः' च ' इन्द्रम् ' । ' अरातीः ' अदानशीलाः शत्रुसेनाः ' अत्यनयन् ' अतिक्रम्य नीतवन्त इति ॥

मन्त्रं प्रतिपादमनूद्यव्याचष्टे–अपो देवा इति । चितानाः इत्यस्य व्याख्यानम्–'प्रज्ञाताः'–इति । शेषं निगदसिद्धम् । एतासामभिषेकार्थत्वं प्रशंसति–ताभिरभिषिञ्चतीति । यस्या अपो गृह्यन्ते, तां सरस्वतीं नदीं वागात्मना प्रशंसति–वाग्वै सरस्वतीति । सारस्वतीभिरद्भिरभिषेककरणेन वाचैवाभिषेकं कृतवान् भवतीत्यर्थः । एता वा एका इति । सारस्वत्यः ' आपः ' ' एकाः ' एकमुदकम् । एवं सारस्वतीरपो गृहीत्वा षोडशापो गृह्णीयात् ॥

तत्र विशेषं दर्शयामास कात्यायनः–" सारस्वतीर्गृह्णात्यपो देवा इति, जुहोत्युत्तरासु चतुर्गृहीतानि वृष्ण उर्म्यादिभिः स्वाहाकारान्तैः पूर्वैः पूर्वैः प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति "–इति ( का. श्रौ. सू. १५।१४।१५) । उत्तरासु षोडशसु चतुर्गृहीतेनाज्येन पूर्वं स्वाहान्तैर्मन्त्रैर्हुत्वा हुत्वा उत्तरैरुत्तरैस्तास्ता अपो गृह्णीयादित्यर्थः ॥३॥

तदिदानीं क्रमेण विधास्यते–तत्र प्रथममूर्मिद्वयग्रहणं विधत्ते–अथाध्वर्युरिति[1] । चतुर्गृहीताज्येन सह ' आपः ' वक्ष्यमाणाः षोडश ' अभि '–लक्ष्य ' अवैति ' गच्छतीति सर्वशेषः । ' तत् ' तत्र नद्यां पशु-

---

१–अवगाह्यावगाह्यपशोः पुरुषाद्वा पूर्वापरा ऊर्म्मीः । का. श्रौ. सू. १५ । १०४ ।

स यः प्राङ्ङुदर्दति । तं गृह्णाति वृष्णऽऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृष्णऽऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहीति ॥ ५ ॥

(त्यु)अथ यः प्रत्यङ्ङुदर्दति। तं गृह्णाति वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहीति ताभिरभिषिञ्चति वीर्यं वाऽएतदपामुदर्दति पशौ वा पुरुषे वाऽभ्यवेते वीर्येणैवैनमेतदभिषिञ्चत्येता वाऽएका ऽआपस्ताऽएवैतत्सम्भरति ॥ ६ ॥

( त्यु ) अथ स्यन्दमाना गृह्णाति । अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा-

---

स यः प्राङ्ङुदर्दति–तं गृह्णाति–" वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा, वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्रममुष्मै देहि"–इति ॥ ५ ॥

अथ यः प्रत्यङ्ङुदर्दति–तं गृह्णाति–" वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा, वृषसेनोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि "–( वा. सं. १०। २ ) इति । ताभिरभिषिञ्चति । वीर्यं वाऽएतदपामुदर्दति । पशौ वा पुरुषे वाऽभ्यवेते । वीर्येणैवैनमेतदभिषिञ्चति । एता वाऽएका आपः । ता एवैतत्सम्भरति ॥ ६ ॥

( ३ ) अथ स्यन्दमाना गृह्णाति–" अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, अर्थेत स्थ

---

पुरुषयोरन्यतरस्मिन् ' अभ्यवेते ' अवगाढे सति ' यौ ऊर्मी ' ' व्यर्दतः ' विविधं पूर्वापरीभावेन गच्छतः ' तौ गृह्णीयात् ' ॥ ४ ॥

तत्रोर्मिद्वयस्यानियमेन समस्य वा ग्रहणे प्राप्ते क्रमं विधत्ते–स यः प्राङिति । ' यः ' ऊर्मिः ' प्राङ् ' प्राङ्मुखः ' उदर्दति ' उद्गच्छेत्, ' तं ' गृह्णीयात् ॥

तत्र हवनमन्त्रं ग्रहणमन्त्रं च विधत्ते–वृष्ण ऊर्मिरिति । स्वाहान्तो हवनमन्त्रः, द्वितीयो ग्रहणमन्त्र इति विभागः । अर्थस्तु हे ऊर्मे ' वृष्णः ' वर्षितुः सेक्तुर्वा सम्बन्धी ' ऊर्मिः ' भवसि । ' राष्ट्रदाः ' त्वं तु स्वभावत एव राष्ट्रं जनपदं ददातीति राष्ट्रदाः । अतो ' राष्ट्रं ' ' मे ' मह्यं ' देहि ' । ' स्वाहा '–इति होमार्थः । द्वितीयोऽप्येवं व्याख्येयः । तत्र ' अमुष्मै '–इति विशेषः । एतन्नामकाय यजमानाय मह्यं देहीति तस्यार्थः । एवमुपरितना अपि मन्त्रा व्याख्येयाः ॥ ५ ॥

द्वितीयस्योर्मेर्ग्रहणं विधत्ते–अथ यः प्रत्यङ्ङिति । वृषसेन इति । ' वृषसेनः ' " वृषु सेचने, " ( धा. पा. भ्वा. प. २०९ ) सेनो नाम संहतिः; वर्षणशीलजलसङ्घो भवसि । शिष्टं पूर्ववत् ॥

ऊर्मिद्वयं जलवीर्यात्मना प्रशंसति–वीर्यं वा, इति । उभयोरप्यूर्म्योरेकत्वेन परिगणनमाह–एता वा एका आप इति ॥ ६ ॥

प्रवहन्तीनामपां ग्रहणं विधत्ते–अथ स्यन्दमाना इति[1]। ' स्यन्दमानाः ' प्रवहन्तीरपो गृह्णीयात् ॥

---

१–स्यंदमानाः। का. श्रौ. सू. १५।१०५।

ऽथैत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति व्वीर्येण वाऽएताः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किंचन प्रतिधारयते व्वीर्येणैवैनमेतदभिषिञ्चत्येता वाऽएकाऽ आपस्ताऽएवैतत्सम्भरति ॥ ७ ॥

(त्यु) अथ याः स्यन्दमानानां प्रतीपᳪं स्यन्दन्ते । ता गृह्णात्योजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति व्वीर्येण वाऽएताः स्यन्दमानानां प्रतीपᳪं स्यन्दन्ते व्वीर्येणैवैनमेतदभिषिञ्चत्येता वाऽएकाऽ आपस्ताऽ एवैतत्सम्भरति॥८॥

( त्यु ) अथापयतीर्गृह्णाति । ( त्या ) आपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहाऽपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभि-

---

राष्ट्रदा राष्ट्रममुष्मै दत्त-" इति । ताभिरभिषिञ्चति । वीर्येण वाऽएताः स्यन्दन्ते । तस्मादेनाः स्यन्दमाना न किंचन प्रतिधारयते । वीर्येणैवैनमेतदभिषिञ्चति । एता वाऽएका आपः । ता एवैतत्सम्भरति ॥ ७ ॥

( ४ ) अथ याः स्यन्दमानानां प्रतीपं स्यन्दन्ते-ता गृह्णाति-"ओजस्वतीं स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, ओजस्वती स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त "-इति । ताभिरभिषिञ्चति । वीर्येण वाऽएताः स्यन्दमानानां प्रतीपं स्यन्दन्ते । वीर्येणैवैनमेतदभिषिञ्चति । एता वाऽएका आपः । ता एवैतत्सम्भरति ॥ ८ ॥

(५) अथापयतीर्गृह्णाति-"आपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा"आपः परिवाहिणी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त "--इति । ताभिरभिषिञ्चति । एतस्यै वाऽएषाऽपाच्छिद्यै-

---

तन्मन्त्रस्याप्ययमर्थः-हे आपः ! 'अर्थेतः' अर्थः प्रयोजनं गच्छन्तीति तादृश्यः 'स्थ' भवथ । अत्र 'दत्त' इति विशेषः । प्रवहन्तीनामपां वीर्यात्मकत्वमाह-वीर्येणेति । यत आपो वीर्येणैव 'स्यन्दन्ते', 'तस्मात्' 'स्यन्दमानाः' 'एनाः' अपः 'किञ्चन' वस्त्वपि 'प्रति' मुखं 'न धारयते' न धृतम्भवति । यद्वा, प्रवहन्तीरपो न कश्चिदपि धारयितुं शक्नोतीत्यर्थः ॥ ७ ॥

प्रतिलोमं[1] प्रवहन्तीनामपां ग्रहणं विधत्ते-अथ याः स्यन्दमानानामिति ! 'स्यन्दमानानाम्' अपां मध्ये 'प्रतीपं' प्रतिकूलं 'स्यन्दन्ते' 'ताः' गृह्णीयात् । 'ओजस्वतीः' बलवत्यः 'स्थ' । वीर्येणेत्यादि पूर्ववद् व्याख्येयम् ॥ ८ ॥

नद्याः सकाशाद् अपच्छिद्य गच्छन्तीनामपां ग्रहणं विधत्ते-अथापयतीरिति । 'अपयतीः' नदीप्रवाहं परित्यज्य पृथक् प्रवाहरूपेण याः स्यन्दन्ते अपयत्यः, ता गृह्णीयात्[2] । हे 'आपः ।' आप्नुवन्ति सर्वमि-

---

१-प्रतिलोमाः । का० श्रौ० सू० १५ । १०६ । २-अपयतीः । का. श्रौ. सू. १५ । १०७ ।

षिञ्चत्येतस्यै वाऽएषाऽपच्छिद्यैषैव पुनर्भवत्युपि ह वाऽअस्यान्यराष्ट्रीयो राष्ट्रे भवत्युप्यन्यराष्ट्रीयमवहरते तथाऽस्मिन्भूमानं दधाति भूम्नैवैनमेतदभिषिञ्चत्येता वाऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ ९ ॥

( त्यु ) अथ नदीपतिं गृह्णाति । ( त्य ) अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देहीति ताभिरभिषिञ्चत्यपां वा ऽएष पतिर्यन्नदीपतिर्व्विशामेवैनमेतत्पतिं करोत्येता वा ऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ १० ॥

( त्यु ) अथ निवेष्यं गृह्णाति । ( त्य ) अपां गर्भोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहाऽपां गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देहीति ताभिरभिषिञ्चति गर्भं

---

षैव पुनर्भवति । अपि ह वाऽअस्यान्यराष्ट्रीयो राष्ट्रे भवति । अप्यन्यराष्ट्रीयमवहरते । तथाऽस्मिन्भूमानं दधाति । भूम्नैवैनमेतदभिषिञ्चति । एता वाऽएका अपः । ता एवैतत् सम्भरति ॥ ९ ॥

( ६ ) अथ नदीपतिं गृह्णाति—"अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा, अपां पतिरसि राष्ट्रदा राष्ट्रममुष्मै देहि"—इति । ताभिरभिषिञ्चति । अपां वाऽएष पतिः—यन्नदीपतिः । विशामेवैनमेतत्पतिं करोति । एता वाऽएका आपः; ता एवैतत्सम्भरति ॥ १० ॥

( ७ ) अथ निवेष्यं गृह्णाति—"अपां गर्भोऽसि राष्ट्रादा राष्ट्रं मे देहि स्वाहा, अपां

---

त्यापः, 'परिवाहिणीः' परितः सर्वतो वाहो यासां ताः । यद्वा, 'परिवाहिणीः' परित्यज्य पृथग् वहन्त्यः स्थ । तत्र स्वाहान्तो हवनमन्त्रः, उत्तरो ग्रहणमन्त्र इति प्रागुक्तम् । एवमुत्तरत्राप्यवगन्तव्यम् ॥

परिवाहिणीभिरभिषेकं प्रशंसति—एतस्यै वा इति । 'एषा' परिवाहिणी नदी, 'एतस्याः' महानद्याः सकाशाद् 'अपच्छिद्य' पृथक्कृत्य परिवहति, ततः 'एषैव पुनर्भवति' संसृष्टा परिणदी पुनरेषैव महानदी भवतीत्यर्थः, यस्मादपच्छिन्ना नदी पुनस्तां महानदीं प्राप्नोति । तस्मादस्यैताभिरद्भिरभिषिक्तस्यान्यराष्ट्रीयः पुरुषः 'राष्ट्रे' स्वराष्ट्रे भवति, अन्यराष्ट्रीयम् 'अवहरते' वशयति । यथा महानदी परिणदीसंसर्गेण भूयसी जाता, 'तथा' तस्मिन् राजनि अन्यराष्ट्रीयसमवधानेन 'भूमानं' भूयस्त्वं 'दधाति' ॥ ९ ॥

अथ समुद्रोदकग्रहणं विधत्ते—अथ नदीपतिं गृह्णातीति । नदीपतिसमुद्रस्थितानामपामविशेषेण ग्रहणे प्राप्ते सूद्यानामुच्छलन्तीनामपां ग्रहणं कर्त्तव्यमिति विशेषः; "नदीपतेः सूद्याः"—इति श्रुत्यन्तरात्[२] । सुष्ठु उद्यन्ति ऊर्ध्वं यान्तीति सूद्याः, ता गृह्णीयादित्यर्थः । 'अपाम्' उदकानां पतिः पालकः ॥ १० ॥

अथावर्त्तोदकग्रहणं विधत्ते—अथ निवेष्यमिति[३] । निवेष्यते आवर्त्यतेऽस्मिन् तृणादिकमिति 'निवेष्यः'

---

१—नदीपतिः[२] सूद्याः । १५।१०८ । २—काष्ठं वोच्छ्रितोढम् १५।१०९ । ३—निवेष्येन । का० श्रौ० सू० १५ । ११० ॥

वाऽएतदाप ऽउपनिवेष्टन्ते विशामेवैनमेतद्गर्भं करोत्येता वा ऽएका ऽआपस्ताऽएवैतत्सम्भरति ॥ ११ ॥

( त्यु ) अथ यः स्यन्दमानानाᳪं स्थावरो ह्रदो भवति । प्रत्यातापे ता गृह्णाति सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति वर्चसैवैनमेतदभिषिञ्चति सूर्यत्वचसमेवैनमेतत्करोति वरुण्या वा ऽएताऽआपो भवन्ति याः स्यन्दमानानां न स्यन्दन्ते वरुणसवो वाऽएष यद्राजसूयं तस्मादेताभिरभिषिञ्चत्येता वा ऽएकाऽआपस्ता ऽएवैतत्सम्भरति ॥ १२ ॥

( त्यु ) अथ याऽआतपति वर्षन्ति । ता गृह्णाति सूर्यवर्चस स्थ राष्ट्रदा

---

गर्भोऽसि राष्ट्रदा राष्ट्रममुष्मै देहि "–( वा० सं० १० । ३ ) इति। ताभिरभिषिञ्चति । गर्भं वाऽएतदाप उपनिवेष्टन्ते । विशामेवैनमेतद्गर्भं करोति । एता वाऽएका आपः। ता एवैतत्सम्भरति ॥ ११ ॥

( ८ ) अथ यः स्यन्दमानानां स्थावरो ह्रदो भवति प्रत्यातापे–ता गृह्णाति–" सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, सूर्यत्वचस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त "–इति। ताभिरभिषिञ्चति । वर्चसैवैनमेतदभिषिञ्चति । सूर्यत्वचसमेवैनमेतत्करोति। वरुण्या वाऽएता आपो भवन्ति–याः स्यन्दमानानां न स्यन्दन्ते । वरुणसवो वाऽएष–यद्राजसूयम् । तस्मादेताभिरभिषिञ्चति । एता वाऽएका आपः । ता एवैतत्सम्भरति ॥ १२ ॥

( ९ ) अथ या आतपति वर्षन्ति–ता गृह्णाति–" सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त

---

आवर्त्तः । तत्रत्यमुदकं गृह्णीयात् । 'अपाम्' उदकानां 'गर्भः' अपत्यं भवति । " गर्भं वा एतद् "–इत्यादिष्वयमर्थः ॥ ११ ॥

अथ यः स्यन्दमानानामिति । हे 'आपः' ! 'सूर्यत्वचसः' सूर्यस्य त्वक् दीप्तिर्यासां ताः; यद्वा, सूर्यस्य त्वक् शरीरं प्रतिबिम्बरूपेण यासु तिष्ठति ताः; तथाविधाः 'स्थः' । वर्चसैवेति । 'वर्चसा' दीप्त्या अभिषिक्तवान् भवति । 'सूर्यत्वचसं' सूर्यसमानतेजस्कं कृतवान् भवति ॥

वरुण्या इति । स्थावरा आपो वरुणदेवत्या इत्यर्थः । वरुणसव इति । 'राजसूयम्'–इति यत् 'एषः वरुणसवः' वरुणाभिषेकः; वरुणोऽभिषिच्यते यस्मिन्निति सः । अतो वरुणदेवत्याभिः ह्याभिरद्भिरभिषेकः कर्त्तव्यः ॥ १२ ॥

अथातपवर्ष्याग्रहणं विधत्ते–अथ या आतपतीति । सूर्ये आतपति सति या वर्षन्ति, स्यन्दन्ते, ता गृह्णी-

---

१–स्यंदमानानाᳪं स्थावराः प्रत्यातापे । का० श्रौ० सू० । १५ । १११ । २–अंतरिक्षात्प्रतिगृह्या आतपवर्ष्याः । का० श्रौ० सू० । १५ । ११२ ।

राष्ट्रं मे दत्त स्वाहा सूर्य्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति व्वर्चसैवैनमेतदभिषिञ्चति सूर्य्यवर्चसमेवैनमेतत्करोति मेध्या वाऽएताऽआपो भवन्ति याऽआतपति व्वर्षन्त्यप्राप्ता ह्रीमां भवन्त्यथैना गृह्णाति मेध्यमेवैनमेतत्करोत्येता वाऽएका ऽआपस्ताऽएवैतत्सम्भरति ॥ १३ ॥

( त्यु ) अथ व्वैशन्तीर्गृह्णाति मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति व्विशमेवास्माऽएतत्स्थावरामनपक्रमिणीं करोत्येता वाऽएका आपस्ताऽएवैतत्सम्भरति ॥ १४ ॥

( त्यु ) अथ कूप्या गृह्णाति । व्व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा

---

स्वाहा, सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त "–इति । ताभिरभिषिञ्चति । वर्चसैवैनमेतदभिषिञ्चति । सूर्यवर्चसमेवैनमेतत्करोति । मेध्या वाऽएता आपो भवन्ति–या आतपति वर्षन्ति । अप्राप्ता ह्रीमां भवन्ति । अथैना गृह्णाति । मेध्यमेवैनमेतत्करोति । एता वाऽएका आपः । ता एवैतत्सम्भरति ॥ १३ ॥

( १० ) अथ वैशन्तीर्गृह्णाति–" मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, मान्दा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त"–इति । ताभिरभिषिञ्चति विशमेवास्माऽएतत् स्थावरामनपक्रमिणीं करोति । एता वाऽएका आपः । ता एवैतत्सम्भरति ॥ १४ ॥

( ११ ) अथ कूप्या गृह्णाति–" व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, व्रजक्षित

---

यात् । " सूर्यवर्चस इत्यातपति वर्ष्याणाम् "–इति हि आपस्तम्बः ( आ. श्रौ. सू. १८ । १३ । १० ) । ' सूर्यवर्चसः ' सूर्यदीप्तियुक्ताः । शिष्टं पूर्ववत् । मेध्या वा इति । सूर्यतेजसा युक्तत्वात् आतपवर्ष्याः शुद्धा इत्यर्थः । तासां ग्रहणे कश्चिद् विशेषं विधत्ते–अप्राप्ता हीति । ' इमां ' भूमिम् ' अप्राप्ताः भवन्ति', भूमौ न पतिता भवन्ति; ' अथ ' तदानीमेव ' एनाः ' अपः गृह्णीयात् ॥ १३ ॥

अथ सरस्यानामपां ग्रहणं विधत्ते–अथ वैशन्तीरिति । वेशन्तोऽल्पसरः, तत्र भवा अपो गृह्णीयात्[1] । हे आपः ! ' मान्दाः स्थ ' प्रवाहाभावात् मन्दस्वभावाः स्थ । यद्वा, मन्दते रूपम् । भूतानि यत्र मन्दन्त इति मान्दाः । विशमेवेति । मान्दाभिः अद्भिरभिषेकेण ' अस्मै ' ' विशं ' प्रजां ' स्थावरां ' स्थिराम् अनपक्रमिणीं स्वाधीनां कृतवान् भवतीत्यर्थः ॥ १४ ॥

कूप्यानामपां ग्रहणं विधत्ते–अथ कूप्या इति । कूपे भवाः कूप्याः । व्रजक्षितः स्थेति । ' व्रजः'–इति

---

१–सरस्याः कूप्याः । का० श्रौ० सू० १५ । ११३ ।

व्व्रजक्षित स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति तद्या इमां पुरेणापस्ताऽएवैतत्सम्भरत्यपामु चैव सर्वत्वाय तस्मादेताभिरभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥ १९ ॥

( त्यु ) अथ प्रुष्वा गृह्णाति । व्वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चत्यन्नाद्येनैवैनमेतदभिषिञ्चत्यन्नाद्यमेवास्मिन्नेतद्दधातीदं वाऽअसावादित्य उद्यन्नेव यथाऽयमग्निर्निर्दहेदेवमोषधीरन्नाद्यं निर्दहति तदेता आपोऽभ्यवयत्यः शमयन्ति न ह वाऽइहान्नाद्यं परिशिष्येत यदेताऽआपो नाभ्यवेयुरन्नाद्येनैवैनमेतदभिषिञ्चत्येता वाऽएकाऽआपस्ताऽएवैतत्सम्भरति ॥ १६ ॥

---

स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त "–इति । ताभिरभिषिञ्चति । तद् या इमां परेणापस्ताः–एवैतत्संभरति । अपामु चैव सर्वत्वाय । तस्मादेताभिरभिषिञ्चति । एता वाऽएका आपः । ता एवैतत्सम्भरति ॥ १९ ॥

(१२) अथ प्रुष्वा गृह्णाति–"वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, वाशा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त"–इति । ताभिरभिषिञ्चति । अन्नाद्येनैवैनमेतदभिषिञ्चति । अन्नाद्यमेवास्मिन्नेतद्दधाति । इदं वाऽअसावादित्य उद्यन्नेव–यथाऽयमग्निर्निर्दहेद् एवमोषधीरन्नाद्यं निर्दहति । तदेता आपोऽभ्यवयत्यः शमयन्ति। न ह वाऽइहान्नाद्यं परिशिष्येत । यदेता आपो नाभ्यवेयुः । अन्नाद्येनैवैनमेतदभिषिञ्चति । एता वा एका आपः ता एवैतत्सम्भरति ॥ १६ ॥

---

मेघनामसु पठितः, ( निघं. १ । १० । ११ ) इह तद्रूधारणसामान्यात् कूपोऽभिधीयते व्रजे कूपे क्षितः निवसन्त्यः । " क्षि निवासगत्योः "–( धा. पा. तु. प. १२६ ) क्विप् । कूपस्थाः स्थ । तद्या इमामिति । ' इमां ' भूमिं ' परेण ' भूमेरधस्ताद् विप्रकृष्टे देशे कूपे स्थिताः अपः गृह्णीयात् । किमर्थं भूमिस्थितानामपां ग्रहणम् ? तत्राह–अपामु चेति । ' अपां सर्वत्वाय ' सर्वेषामुदकानां समष्ट्या इत्यर्थः ॥ १९ ॥

अथ नीहारोदकानां ग्रहणं विधत्ते–अथ प्रुष्वा इति[1] ' प्रुष्वाः ' नीहाराः हे आपः ' वाशाः स्थ ' । " वश कान्तौ" ( धा. पा. अ. प. ७० ) सर्वैः काम्यमाना भवथ । यद्वा, वश्याः स्थ नीहारो हि नदीप्रवाहवन्मनुष्यादिगतिं न प्रतिबध्नाति, अतो वश्यत्वम् । प्रुष्वाणामन्नाद्यात्मकत्वमुपपादयति–इदं वा असाविति । ' उद्यन् ' 'असौ' अन्तरिक्षे दृश्यमानः ' आदित्यः' ' इदम् ' ओषधिरूपम् ' अन्नाद्यं ' निर्दहति । अन्नं च तदाद्यमदनीयं चेत्यन्नाद्यम् । तत्र दृष्टान्तः–यथाऽयमग्निर्निर्दहेदेवामित्यादि । 'तत्' तदा सस्यानामातपजातम्लानिसमये नीहारगताः ' आपः ' 'अभ्यवयत्यः' । सव्यतिरेकं दर्शयति–न ह वेत्यादिना । तस्मादोषधिवर्द्धनहेतुभूताभिः प्रुष्वाभिरद्भिः अभिषेकेण यजमाने अन्नाद्यमेव निहितवान् भवतीत्यर्थः ॥ १६ ॥

---

१–प्रुष्वाः । का. श्रौ सू. १५ । ११२ ।

( त्यु ) अथ मधु गृह्णाति । शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा[1] शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चत्यपां चैवैनमेतदोषधीनां च रसेनाभिषिञ्चत्येता वाऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥१७॥

( त्यु ) अथ गोर्विजायमानाया ऽउल्व्या गृह्णाति। शक्करी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्करी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वाऽएका ऽआपस्ता ऽएवैतत्सुम्भरति॥१८॥

( त्यु ) अथ पयो गृह्णाति । जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वाऽएका ऽआपस्ता ऽएवैतत्सुम्भरति ॥ १९ ॥

---

( १३ ) अथ मधु गृह्णाति । "शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, शविष्ठा स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त "–इति । ताभिरभिषिञ्चति । अपां चैवैनमेतदोषधीनां च रसेनाभिषिञ्चति । एता वाऽएका आपः । ता एवैतत्सम्भरति ॥ १७ ॥

( १४ ) अथ गोर्विजायमानाया उल्व्या गृह्णाति–" शक्वरी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, शक्वरी स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त "–इति । ताभिरभिषिञ्चति । एता वाऽएका आपः । ता एवैतत्सम्भराति ॥ १८ ॥

( १५ ) अथ पयो गृह्णाति–" जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त "–इति । ताभिरभिषिञ्चति । पशुभिरेवैनमेतदभिषिञ्चति । एता वाऽ एका आपः । ता एवैतत्सम्भरति ॥ १९ ॥

---

अथ मधुनो ग्रहणं विधत्ते–अथ माध्विति । हे ' मधु ! ' द्रवरूपा आपः ' शविष्ठाः ' बलवत्तमाः ' स्थ ' अपाञ्चैवेति । ' एतत् ' एताभिः मधुद्रवरूपाभिरद्भिः अभिषेकेण ' अपां च ओषधीनाञ्च ' ' रसेन ' अभिषिक्तवान् भवति; मधुनो द्रवात्मकत्वादित्यर्थः ॥ १७ ॥

अथ गोरुल्व्यानां ग्रहणं विधत्ते- अथ गोरिति । ' विजायमानायाः ' प्रसूयमानायाः ' गोः " उल्व्याः " उल्वे गर्भवेष्टने भवाः अपः गृह्णीयात् । हे आपः ! ' शक्वरीः ' गर्भरक्षणे शक्ताः समर्था भवथ ।

पशुभिरिति । पशुसम्बन्धिनीभिरेताभिरद्भिः अभिषेकेण ' पशुभिः एवं ' ' एनं सुन्वन्तमभिषिक्तवान् भवतीत्यर्थः ॥ १८ ॥

अथ पयसां ग्रहणं विधत्ते–अथ पय इतिं । हे क्षीरात्मिका आपः ! ' जनभृतः स्थ " जनान् बिभ्रतीति जनभृतः; क्षीरेण हि प्राणिजातं पुष्यते ॥ १९ ॥

---

१–मधु गोरुल्व्याः । का. श्रौ. सू. १५ । ११३ । २–पयो घृतम् । का. श्रौ. सू. १५ । ११३ ।

.१३१३

(त्यु) अथ घृतं गृह्णाति । विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशूनामेवैनमेतद्रसेनाभिषिञ्चत्येता वाऽएका ऽआपस्ताऽ एवैतत्सम्भरति ॥ २० ॥

(त्यु) अथ मरीचीः । (२) अञ्जलिना संगृह्यापिसृजत्यापः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेत्येता वाऽआपः स्वराजो यन्मरीचयस्ता यत्स्यन्दन्तऽइवान्योऽन्यस्याऽ एवैतच्छ्रियाऽ अतिष्ठमानाऽउत्तराधरा ऽइव भवन्त्यो यन्ति स्वाराज्यमेवास्मिन्नेतद्दधात्येता वाऽएका ऽआपस्ता ऽएवैतत्सम्भरति ॥ २१ ॥

---

( १६ ) अथ घृतं गृह्णाति-" विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा, विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त "-इति । ताभिरभिषिञ्चति । पशूनामेवैनमेतद्रसेनाभिषिञ्चति । एता वाऽएका आपः ता एवैतत्सम्भरति ॥ २० ॥

( १७ ) अथ मरीचीरञ्जलिना सङ्गृह्यापिसृजति-" आपः स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्त "-इति । एता वाऽआपः स्वराजो-यन्मरीचयः । ता यत्स्यन्दन्तऽइवान्योऽन्यस्या एवैतच्छ्रियाऽतिष्ठमाना उत्तराधरा इव भवन्त्यो यन्ति-स्वाराज्यमेवास्मिन्नेतद्दधाति । एता वा एका आपः । ता एवैतत्सम्भरति ॥ २१ ॥

---

अथ घृतस्य ग्रहणं विधत्ते—अथ घृतमिति । 'विश्वभृतः स्थ' हे घृतद्रवरूपाः आपः ! विश्वपोषिका भवथ । पशूनामिति । घृतस्य पशुरसत्वं क्षीरादिद्वारा प्रसिद्धम् ॥ २० ॥

एतदेव सारस्वतवर्जं चतुर्गृहीताज्येन पूर्वं हुत्वा-हुत्वा पञ्चदशानामपां ग्रहणं विहितम्, अथान्तिमस्य जलस्य ग्रहणं सविशेषं विधत्ते—अथ मरीचीरिति । ' मरीचीः ' ' अञ्जलिना ' पात्रेण ' सङ्गृह्य ' गृहीत्वा ' अपिसृजति ' । सर्वासु गृहीतासु अप्सु संसृजेदित्यर्थः । अत्र सूत्रम्—" आपः स्वराज इति मरीचीर्गृहीत्वाऽञ्जलिना सर्वासु संसृजति "—( का. श्रौ. सू. १९ । ११६ । ) इति हे मरीचिरूपा आपः ! ' स्वराजः स्थ ' स्वयमेव राजमाना भवथ । अत्र होमाभावात् स्वाहान्तः पूर्वो मन्त्रो न पठितः । कथं मरीचीनामप्त्वेन परिगणनमिति तदुपपादयति—एता वा आप इति । ' मरीचयः ' इति ' यत्, ' ' एताः ' ' स्वराजः ' स्वयमेव दीप्यमानाः ' आपः ' । ता यत् स्यन्दन्त इति । ' यत् ' यस्मात् ' ताः ' मरीचयः ' स्यन्दन्त इव ' प्रवहन्तीव । ' इव '—शब्दः उपमार्थे साक्षात् प्रवहणाभावात् । यथा जलसङ्घा उपर्युपरिभावेन वर्त्तन्ते, तद्वदेता मरीचयः ' अन्योऽन्यस्याः ' मरीचेः ' श्रियै ' शोभायै ' अतिष्ठमानाः ' स्थातुमसहिष्णवः ' उत्तराधरा इव भवन्त्यः ' ' यन्ति ' गच्छन्ति । अतो जलसाम्यादप्त्वेन परिगणनमित्यर्थः । मरीचीनां ग्रहणं स्वाराज्यहेतुत्वेन प्रशंसति—स्वाराज्यमिति । यतो ' मरीचयः ' स्वराज आपः ॥ २१ ॥

ता व्वाऽएताः । सप्तुदशापः सुम्भरति सप्तदशो वै प्रजापतिः प्रजापतिर्य्यज्ञ-स्तुस्मात्सप्तुदशापः सुम्भरति ॥ २२ ॥

षोडश ताऽआपो य्याऽअभिजुहोति । षोडशाहुतीर्जुहोति ता द्वात्रिᳩं शद्द्वयीषु न जुहोति सारस्वतीषु च मरीचिषु च ताश्चतुस्त्रिᳩंशत्त्रयस्त्रिᳩं शद्वै देवाः प्रजापतिश्चतुस्त्रिᳩं शस्तदेनं प्रजापतिं करोति ॥ २३ ॥

( त्यु ) अथ युद्धुत्वा हुत्वा गृह्णाति । व्वज्रो वा ऽआज्यं व्वज्रेणैवैतदाज्येन स्पृत्वा स्पृत्वा स्वीकृत्य गृह्णाति ॥ २४ ॥

( त्यु ) अथ युत्सारस्वतीषु न जुहोति । व्वाग्वै सरस्वती व्वज्रऽआज्यं नेद्वज्रेणाज्येन व्वाचᳩं हिनसानीति तस्मात्सारस्वतीषु न जुहोति ॥ २५ ॥

---

ता वाऽएताः सप्तदशापः सम्भरति । सप्तदशो वै प्रजापतिः । प्रजापतिर्यज्ञः । तस्मात्सप्तदशापः सम्भरति ॥ २२ ॥

षोडश ता आपो–या अभिजुहोति । षोडशाहुतीर्जुहोति । ता द्वात्रिंशत् । द्वयीषु न जुहोति–सारस्वतीषु च मरीचिषु च । ताश्चतुस्त्रिंशत् । त्रयस्त्रिंशद्वै देवाः, प्रजापतिश्चतुस्त्रिंशः। तदेनं प्रजापतिं करोति ॥ २३ ॥

अथ यद्धुत्वा-हुत्वा गृह्णाति । वज्रो वाऽआज्यम् । वज्रेणैवैतदाज्येन स्पृत्वा स्पृत्वा स्वीकृत्य गृह्णाति ॥ २४ ॥

अथ यत्–सारस्वतीषु न जुहोति । वाग्वै सरस्वती । वज्र आज्यम् । नेद्वज्रेणाज्येन वाचं हिनसानीति । तस्मात् सारस्वतीषु न जुहोति ॥ २५ ॥

---

सम्भृतानामपां सप्तदशसङ्ख्यां प्रजापत्यात्मना स्तौति–ता वा एताः सप्तदशेति । प्रजापतेः सप्तदशत्वं प्रागुक्तम् ( श. प. ५ । १ । २ । ११ । भाष्ये ) ॥ २२ ॥

अथोक्तानां सारस्वतीप्रभृतिमरीच्यन्तानामपामाहुतीनां च सङ्ख्यां समस्य प्रजापत्यात्मना प्रशंसति–षोडश ता आप इति । ' याः ' ' आपः' अभिलक्ष्य जुहोति, ' ताः ' 'षोडश' ऊर्मिद्वयस्य विवेके षोडशसङ्ख्याकाः भवन्ति; आहुतयोऽपि षोडश; आहुतिभिः रहिताः सारस्वत्यो मरीचय इति द्वय्यः; ताः सम्भूय चतुस्त्रिंशत् सम्पद्यते । अत्र चतुस्त्रिंशत्सम्पत्त्या चतुस्त्रिंशद्देवतात्मकं प्रजापतिमेव कृतवान् भवतीति तत्करणं प्रशस्तमित्यर्थः ॥ २३ ॥

होमपूर्वकं ग्रहणं प्रशंसति–अथ यद्धुत्वा हुत्वेति । आज्यस्य वज्रात्मकत्वश्रुतिः प्रागुदाहृता ( श. प. १।५।३।४। ) वज्ररूपेण ' आज्येन ' ' स्पृत्वा-स्पृत्वा' हिंसित्वा हिंसित्वा, ततः ' स्वीकृत्य ' स्वाधीनं कृत्वा गृह्णानो भवेत् । यथा लोके राजादिः प्रबलं शत्रुप्रभृतिं जनं प्रथमं बाधित्वा पश्चात् स्वाधीनं करोति, तद्वदित्यर्थः ॥ २४ ॥

सारस्वतीषु मरीचिषु च होमाभावे कारणमाह–अथ यदिति । सरस्वत्या वाक्त्वात् वाचो वज्रेण हिंसा मा भूदिति न होतव्यम् ॥ २५ ॥

( त्यु ) अथ यन्मुरीचिषु नु जुहोति । नेदुनद्धेवैतामाहुतिं जुहवानीति तुस्मान्मुरीचिषु नु जुहोति ॥ २६ ॥

ताः सार्धमौदुम्बरे पात्रे समुवनयति । मुधुमतीर्मुधुमतीभिः पृच्यन्ता- मिति रुसवती रुसवतीभिः पृच्यन्तामित्युेवैतुदाह मुहि क्षत्रं क्षत्रियाय व्वन्वाना इति तुत्परो॒ऽक्षं क्षत्रं युजमानायाशिषमाशास्ते यदाह मुहि क्षत्रं क्षत्रियाय व्वन्वाना इति ॥ २७ ॥

ता ऽअुग्रेणु मैत्रावरुणस्य धिष्ण्यꣳ सादयति । ( त्यु ) अुनाधृष्टाः सीदत सहौजस ऽइत्यनाधृष्टाः सीदत रुक्षोभिरित्युेवैतुदाह सहौजस इति सुवीर्या ऽइत्युेवैतुदाह मुहि क्षत्रं क्षत्रियाय दुधतीरिति तुत्प्रत्युक्षं क्षत्रं युजमानाया- शिषमाशास्ते यदाह मुहि क्षत्रं क्षत्रियाय दुधतीरिति ॥ २८ ॥

इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् ॥ ५ । ३ । १ ॥ ( ३ । ४ )

---

अथ यन्मरीचिषु न जुहोति । नेदनद्धेवैतामाहुतिं जुहवानीति । तस्मान्मरीचिषु न जुहोति ॥ २६ ॥
ताः सार्धमौदुम्बरे पात्रे समवनयति—" मधुमतीर्मधुमतीभिः पृच्यन्ताम् " इति । रसवती रसवतीभिः पृच्यन्तामित्येवैतदाह । " महि क्षत्रं क्षत्रियाय वन्वानाः "—इति । तत् परोऽक्षं क्षत्रं यजमानायाशिषमाशास्ते यदाह—माहि क्षत्रं क्षत्रियाय वन्वाना इति ॥ २७ ॥
ता अग्रेण मैत्रावरुणस्य धिष्ण्यं सादयति—" अनाधृष्टाः सीदत सहौजसः "—इति ।

---

अथ यन्मरीचिष्विति । मरीचिष्वपि ' अनद्धा ' अस्थाने तासां होमाधिकरणत्वासम्भवान्न होतव्यमित्यर्थः । ' नेत् ' इति निपातः परिभये ( निरु. १।३।९ ) ' जुहवानि ' इत्यनेन सम्बध्यते ॥ २६ ॥

विधत्ते—ताः सार्द्धमिति । ' ताः ' विहिताः, पृथक् पृथक् पात्रे गृहीताः आपः ' सार्द्धं ' सम्भूय एकस्मिन् ' पात्रे ' ' समवनयति ' आसिञ्चेदित्यर्थः । ' मधुमतीः ' मधुररसवत्यः आपः ' मधुमतीभिः अद्भिः ' पृच्यन्ताम् ' । "पृची सम्पर्के" ( धा. पा. रु.आ. ११ ) सम्पृच्यन्ताम् । ता विशिनष्टि—' महि ' महत् ' क्षत्रं बलं क्षत्रियकुलं वा ' क्षत्रियाय ' यजमानाय ' वन्वानाः ' दातुं याचमानाः कामयमाना इति । मन्त्रमनूद्य व्याचष्टे—मधुमतीरित्यादि । ' महि क्षत्रं क्षत्रियाय वन्वानाः ' इति यदाह, 'तत्' तेन ' यजमानाय' ' परोक्षं ' ' क्षत्रम् ' आशासनमाशासितवान् भवतीति योजना । ' क्षत्रियाय ' इति तात्स्थ्याभिधानाद् 'वन्वानाः' इति याचनाभिधानाद्वा, आशिषः परोक्षत्वमित्यर्थः ॥ २७ ॥

संसृष्टानामपां मैत्रावरुणधिष्ण्यस्य पुरोदेशे सादनं समन्त्रकं विधत्ते—ता अग्रेणेति[२] । हे आपः !

---

१-औदुम्बरे पात्रे समासिच्यत्येता मधुमतीरिति । का० श्रौ० सू० १५ । १।१७ ।
२-मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधात्यनाधृष्टाः सीदतेति । का० श्रौ० सू० १५ । १।१८ ।

तं वै माध्यन्दिने सवनेऽभिषिञ्चति । ( त्ये ) एष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः सुवति ॥ १ ॥

( त्य ) अगृहीते माहेन्द्रे । (न्द्र) एष वा इन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रोऽप्यस्यैतन्निष्केवल्यमेव स्तोत्रं निष्केवल्यᳫँ शस्त्रमिन्द्रो वै यजमानस्तदेनᳫँ स्वऽएवायतनेऽभिषिञ्चति तस्मादगृहीते माहेन्द्रे ॥ २ ॥

---

अनाधृष्टाः सीदत रक्षोभिरित्येवैतदाह । सहौजस इति—सवीर्या इत्येवैतदाह । "महि क्षत्रं क्षत्रियाय दधतीः "—( वा. सं. १० । ४ ) इति । तत् प्रत्यक्षं क्षत्रं यजमानायाशिषमाशास्ते—यदाह—महि क्षत्रं क्षत्रियाय दधतीरिति ॥ २८ ॥

## अथ अभिषेकः ।

तं वै माध्यन्दिने सवनेऽभिषिञ्चति । एष वै प्रजापतिः—य एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाताः । एतम्वेवाप्येतर्ह्यनु प्रजायन्ते। तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति, मध्यतः सुवति ॥१॥

अगृहीते माहेन्द्रे । एष वाऽइन्द्रस्य निष्केवल्यो ग्रहः—यन्माहेन्द्रः । अप्यस्यैतन्निष्केवल्यमेव स्तोत्रम्—निष्केवल्यं शस्त्रम् । इन्द्रो वै यजमानः । तदेनं स्वऽएवायतनेऽभिषिञ्चति । तस्मादगृहीते माहेन्द्रे ॥ २ ॥

---

'अनाधृष्टाः' रक्षोभिरबाधिताः, 'सहौजसः' ओजसा बलेन सहिताः, सवीर्याः 'सीदत' उपविशत । 'महि' महत्, 'क्षत्रं' बलं क्षत्रियत्वं वा, 'क्षत्रियाय' 'दधतीः' दधत्यः, धारयन्त्यः, प्रयच्छन्त्य इति । मन्त्रं व्याचष्टे—अनाधृष्टा इति ।

'दधतीः' इति प्रदानस्य साक्षादुक्तेः प्रत्यक्षत्वमाशिषः, 'सीदत'—इति मध्यमपुरुषप्रयोगाद्वेति वेदितव्यम् ॥ २८ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे तृतीयाऽध्याये चतुर्थं ब्राह्मणम् ॥ ( ५—३—४ ) ॥

पञ्चमे ब्राह्मणे यजमानाभिषेकः, तत्रत्या धर्माश्च विधीयन्ते । तत्र यजमानाभिषेकं सकालं विधत्ते—तं वै माध्यन्दिन इति । माध्यन्दिनसवने क्रियमाणमभिषेकं प्रशंसति—एष वै प्रजापतिरिति । माध्यन्दिनसवने क्रियमाणेनाभिषेकेण 'एनं' यजमानं 'मध्यतः एव' यज्ञरूपप्रजापतिमध्ये एव निहितवान् भवति । 'मध्यतः' मध्ये 'सुवति' प्रेरयति, अध्वर्युरित्यर्थः ॥ १ ॥

कालविशेषं विधत्ते—अगृहीत ( का. श्रौ. सू. १५ । १२२ ) इति । 'माहेन्द्रे' ग्रहे 'अग्रहीते' सोमरसेनापूर्णे, मरुत्वतीयान्ते इत्यर्थः । माहेन्द्रग्रहणात् पूर्वं यजमानाभिषेकं स्वायतननिधानरूपेण प्रशंसति—एष वा इन्द्रस्येति । इदं प्रथमाध्याये व्याकृतम् ( श. प. ५ । १ । ३ । ४ भा. ) ॥ २ ॥

( न्द्रेऽग्रे ) अ॒ग्रेण मैत्रावरुणस्य धि॒ष्ण्यम् । ( ५ँ ) शार्दूलचर्मोपस्तृ॒णाति सो॒मस्य त्वि॒षिरसी॒ति य॒त्र वै सो॒मऽ इ॒न्द्रमत्यु॒पवत स यत्त॒तः शार्दू॒लः सम॒भवत्तेन सो॒मस्य त्वि॒षिस्त॒स्मादा॑ह सो॒मस्य त्वि॒षिरसी॒ति त॒वेव मे त्वि॒षिर्भू॒यादि॒ति शार्दूलत्विषि॒मे॒वास्मिन्नेतद्दधाति त॒स्मादा॑ह त॒वेव मे त्वि॒षिर्भू॒यादि॒ति ॥ ३ ॥

( त्यु ) अ॒थ पार्था॒नि जु॒होति । पृ॒थी ह॒ वै॒ वैन्यो॒ मनु॒ष्याणां॒ प्र॒थमोऽभि॒षि॒षिचे॒ सोऽका॒मयत स॒र्व्वमन्ना॒द्यम॒वरु॒न्धीये॒ति त॒स्मा ऽएता॒न्यजु॒हवुः स॒ऽ इ॒दꣳ स॒र्वमन्ना॒द्यम॒वरुरु॒धेऽपि ह स्मा॒स्मा ऽआरण्या॒न्पशू॒नभि॒ह्वयन्त्यसा॒वेहि॒

अग्रेण मैत्रावरुणस्य धिष्ण्यं शार्दूलचर्मोपस्तृणाति-" सोमस्य त्विषिरसि "-इति । यत्र वै सोम इन्द्रमत्यपवत-स यत्ततः शार्दूलः समभवत्-तेन सोमस्य त्विषिः। तस्मादाह-सोमस्य त्विषिरसीति । " तवेव मे त्विषिर्भूयात् "-इति । शार्दूलत्विषिमेवास्मिन्नेतद्दधाति । तस्मादाह--तवेव मे त्विषिर्भूयादिति ॥ ३ ॥

अथ पार्थानि जुहोति । पृथी ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे। सोऽकामयत--सर्वमन्नाद्य-

अत्र यदुक्तं कात्यायनेन--"मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति अनाधृष्टाः सीदतेति, पात्राणि च तूष्णीं पालाशौदुम्बरनैयग्रोधवटाश्वत्थान्यभिषेकाय "-( का. श्रौ. सू. १९।११८ ) इति । " मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्मास्तृणाति सोमस्य त्विषिरिति, अपरेऽन्ते सीसं निदधाति, पार्थानामग्नये स्वाहेति षड् जुहोति प्रतिमन्त्रम् "-इति च । ( का. श्रौ. सू. १९ । १२२-१२४ ) ॥

तदिदं क्रमेण विचित्सुर्व्याघ्रचर्मास्तरणं समन्त्रकं विधत्ते-अग्रेणेति । मैत्रावरुणधिष्ण्यस्य पूर्वभागे व्याघ्रचर्मास्तृणीयात् । हे चर्मन् ! ' सोमस्य ' ' त्विषिः ' दीप्तिः ' असि ' । ' तवेव ' यथा तव दीप्तिरस्ति, तथा ' मे ' मम ' त्विषिः ' दीप्तिः ' भूयात् ' अस्त्विति ।

शार्दूलस्य सोमत्विषित्वमाख्यायिकामुखेनोपपादयति-यत्र वै सोम इति । पूर्वमिन्द्रेण पीयमानः, सोमः तम् ' अत्यपवत ' शरीरादधो निरगच्छत् । स सोमो यदा अत्यपवत, ततः सोऽतिपवितः सोमः शार्दूलः सम्भूतवान् । ' तस्मात् ' शार्दूलस्य सोमकार्यत्वात्-तदीयत्वचः सोमत्विषित्वम् । " तवेव मे "-इति मन्त्रभागस्य तात्पर्यमाह-तवेव म इति । ' एतत् ' एतेन मन्त्रभागकृतेन ' अस्मिन् ' यजमाने शार्दूलदीप्तिमेव निहितवान् भवति ॥ ३ ॥

अथाभिषेकस्य पुरस्तात् पश्चाच्च क्रियमाणान् पार्थहोमान् विधत्ते-अथ पार्थानीति । ' पार्थानि ' पृथिनाऽनुष्ठितानि । एतेषां पृथिसम्बन्धं दर्शयति-पृथी हेति । ' वैन्यः ' वेनो नाम राजा, तस्य पुत्रः ' पृथी नाम,

१-अत्र मूले-' पृथी ह वै वैन्यः '-इति पाठमनुलक्ष्य भाष्यकारेण ' पृथी हेति ' इति प्रतीकमुपात्तम् । अयं पुराणप्रसिद्धवैन्यपृथुराजवाचको हि ' पृथिन् ' शब्दः ' पृथि ' शब्दो वा भवितुमर्हति । यतस्तद्वाचकयोः ' पृथिन्,-पृथि ' शब्दयोर्वेदमन्त्रेषु प्रयोगो दृश्यते । तत्र ' इ ' कारन्त ' पृथि ' शब्दस्य-"ग्राभिर्व्यश्वमुत पृथिमावतम्" ( ऋ. १।११२।१५ ) इत्यत्र " पृथिमेतत्संज्ञं राजर्षिम् "

राजा त्वा पक्ष्यतऽइति तथेदᳪं सर्व्वमन्नाद्यमवरुरुधे सर्वᳪं ह वाऽअन्ना-द्यमवरुन्द्धे यस्यैवं विदुष ऽएतानि हूयन्ते ॥ ४ ॥

तानि वै द्वादश भवन्ति । द्वादश वै मासाः संव्वत्सरस्य तस्माद्द्वा-दश भवन्ति ॥ ५ ॥

षट्पुरस्तादभिषेकस्य जुहोति षडुपरिष्टात्तदेनं मध्यत ऽएवैतस्य प्रजा-पतेर्दधाति मध्यतः सुवति ॥ ६ ॥

स यानि पुरस्तादभिषेकस्य जुहोति । बृहस्पतिस्तेषामुत्तमो भवत्यथ

---

मवरुन्धीयेति तस्माऽएतान्यजुहवुः । स इदं सर्वमन्नाद्यमवरुरुधे । अपि ह स्मास्माऽआरण्यान्पशून-भिह्वयन्ति—असावेहि राजा त्वा पक्ष्यतऽइति । तथेदं सर्वमन्नाद्यमवरुरुधे । सर्वं ह वाऽअन्नाद्यमव-रुन्द्धे—यस्यैवं विदुष एतानि हूयन्ते ॥ ४ ॥

तानि वै द्वादश भवन्ति । द्वादश वै मासाः सम्वत्सरस्य । तस्माद् द्वादश भवन्ति ॥ ५ ॥

षट् पुरस्तादभिषेकस्य जुहोति । षडुपरिष्टात् । तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति, मध्यतः सुवाति ॥ ६ ॥

स यानि पुरस्तादभिषेकस्य जुहोति—बृहस्पतिस्तेषामुत्तमो भवति । अथ यान्युपरिष्टादभिषेकस्य

---

' मनुष्याणां ' मध्ये ' प्रथमः ' अभिषिक्तः । ' सर्वम् अन्नाद्यम् ' ' अवरुन्धीय ' स्वाधीनं कुर्याम् ' इति ' कामयमानाय ' तस्मै ' पृथये ' एतानि ' पार्थानि 'अजुहवुः' अध्वयवः । ततः ' सः ' राजा ' इदं सर्वमन्ना-द्यम् ' ' अवरुरुधे ' स्वाधीनं कृतवान् । सर्वान्नावरोधकत्वं दर्शयति—अपि ह स्मेति । 'अपि' खलु ' अस्मै ' यजमानाय, तदर्थम्, ' आरण्यान् ' अरण्ये भवान् ' पशून् ' ' अभिह्वयन्ति ' । किम् ? इति । असाविति । तत्तन्मृगनाम्नः सम्बुद्धयन्तस्य सामान्यनिर्देशः । हे पशो ! ' एहि ' आगच्छ, अयं ' राजा ' ' त्वा ' त्वां ' पक्ष्यते ' भोक्तुं पक्वं करिष्यति ' इति ' । सोऽपि पशुः तद्वचः श्रुत्वा तत्समीपं स्वयमेवागच्छति । ' तथा ' सति ग्राम्यारण्यभक्षणस्य सर्वस्यावश्यावरोधः । विदुषोऽयतनस्यापि अनुष्ठातुस्तत्फलमाह—सर्वं ह वा इति ॥४॥

एतेषां सङ्ख्यां विधत्ते—तानि वै द्वादशेति । उक्तां सङ्ख्यां संवत्सरात्मना प्रशंसति—द्वादशेति ॥ ५ ॥

एतेषां हवनकालं विधत्ते- षडिति । द्वादशानां पदार्थानां मध्ये पूर्वषट्कस्यान्ते " बृहस्पतये स्वाहा "—इति

---

–इति भाष्यम् , किंच–" पृथी यद्वा वैन्यः सादनेषु " ( ऋ. ८ । ९ । १० । ) इत्यत्र " वेनस्य पुत्रः पृथ्येतत्संज्ञो राजर्षिः" इति च भाष्यम् । एवं चैतन्मन्त्रद्वयप्रयोगात्–' पृथिन् ,–पृथि ' शब्दौ वेदे वैन्यवाचकौ सिद्धौ । तथा च स्वरपाठकाराः–" पृथुरिति प्राप्ते छान्दसो वर्णव्यत्ययः " इति स्पष्टमेव वदन्ति । एवं विमर्शे क्रियमाणेऽत्र भाष्ये–" पृथी हेति " इति, ' पृथी नाम ' इति प्रयो-गस्तु–इन्नन्त ' पृथिन् ' शब्दाभिप्रायेण; अग्रे ' पृथये ' इति चतुर्थ्यन्तपदप्रयोग इकारान्त ' पृथि ' शब्दाभिप्रायेण स्यादिति सुचिरं विचिन्त्य यथालब्ध एव पाठो भाष्ये संरक्षितोऽस्तीति समवधेयं सुधीभिः । ' पृथुर्ह वै ' इति मूलपाठस्तु लेखक-प्रमादात् ।

यान्युपरिष्टादभिषेकस्य जुहोतीन्द्रस्तेषां प्रथमो भवति ब्रह्म वै बृहस्पतिरिन्द्रियं वीर्यमिन्द्र ऽएताभ्यामेवैनमेतद्वीर्याभ्यामुभयतः परिबृꣳहति ॥ ७ ॥

स जुहोति । यानि पुरस्तादभिषेकस्य जुहोत्यग्नये स्वाहेति तेजो वा ऽअग्निस्तेजसैवैनमेतदभिषिञ्चति सोमाय स्वाहेति क्षत्रं वै सोमः क्षत्रेणैवेनमेतदभिषिञ्चति सवित्रे स्वाहेति सविता वै देवानां प्रसविता सवितृप्रसूत ऽएवैनमेतदभिषिञ्चति सरस्वत्यै स्वाहेति वाग्वै सरस्वती वाचैवैनमेतदभिषिञ्चति पूष्णे स्वाहेति पशवो वै पूषा पशुभिरेवैनमेतदभिषिञ्चति बृहस्पतये स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैनमेतदभिषिञ्चत्येतानि पुरस्तादभिषेकस्य जुहोति तान्येतान्यग्निनामानीत्याचक्षते ॥ ८ ॥

( तेऽथ ) अथ जुहोति । यान्युपरिष्टादभिषेकस्य जुहोतीन्द्राय स्वाहेति वीर्यं वा ऽइन्द्रो वीर्येणैवैनमेतदभिषिञ्चति घोषाय स्वाहेति वीर्यं वै घोषो

---

जुहोति–इन्द्रस्तेषां प्रथमो भवति । ब्रह्म वै बृहस्पतिः । इन्द्रियं वीर्यम् । इन्द्र एताभ्यामेवैनमेतद्वीर्याभ्यामुभयतः परिबृंहति ॥ ७ ॥

स जुहोति यानि । पुरस्तादभिषेकस्य जुहोति–" अग्नये स्वाहा "–इति । तेजो वाऽअग्निः । तेजसैवैनमेतदभिषिञ्चति । " सोमाय स्वाहा "–इति । क्षत्रं वै सोमः । क्षत्रेणैवैनमेतदभिषिञ्चति । " सवित्रे स्वाहा "–इति । सविता वै देवानां प्रसविता । सवितृप्रसूत एवैनमेतदभिषिञ्चति । " सरस्वत्यै स्वाहा "–इति । वाग्वै सरस्वती । वाचैवैनमेतदभिषिञ्चति । " पूष्णे स्वाहा "–इति । पशवो वै पूषा । पशुभिरेवैनमेतदभिषिञ्चति । " बृहस्पतये स्वाहा "–इति । ब्रह्म वै बृहस्पतिः । ब्रह्मणैवैनमेतदभिषिञ्चति । एतानि पुरस्तादभिषेकस्य जुहोति । तान्येतान्यग्निनामानीत्याचक्षते ॥ ८ ॥

अथ जुहोति–यान्युपरिष्टादभिषेकस्य जुहोति–" इन्द्राय स्वाहा "–इति । वीर्यं वाऽइन्द्रः । वीर्येणैवैनमेतदभिषिञ्चति । "श्लोकाय स्वाहा"–इति । वीर्यं वै श्लोकः । वीर्येणैवैनमेतदभिषिञ्चति ।

---

पठ्यते, उत्तरषट्कस्यादौ " इन्द्राय स्वाहा "–इति । तयोरुभयोर्मध्ये अभिषेकेण यजमानं ब्रह्मक्षत्रवीर्याभ्याम् उभयतः संवर्द्धितवान् भवतीत्यर्थः ॥ ६ ॥ ७ ॥

अभिषेकस्य पुरस्तात् कर्त्तव्यं होममनूद्य मन्त्रान् विधत्ते–स जुहोतीति । " अग्नये स्वाहा "–इत्यादयो मन्त्राः । तत्रैकैकमनूद्य स्तौति–तेजो वा अग्निरित्यादिना । अर्थवादवाक्येषु स्पष्टोऽर्थः । सोमादिपदानां देवतान्तरवाचकत्वं व्युदस्यति–तान्येतान्यग्निनामानीति । ' तानि ' पूर्वाणि पार्थानि ' अग्निनामान्याचक्षते ', ब्रह्मवादिन इति शेषः; अग्नेः सर्वदेवतात्मकत्वादिति भावः ॥ ८॥

अभिषेकस्योपरिकर्त्तव्यं होममन्त्रमनूद्य मन्त्रान् सार्थवादं विधत्ते–अथ जुहोतीति । " इन्द्राय स्वाहा "

व्वीर्य्येणैवैनमेतदभिषिञ्चति श्लोकाय स्वाहेति व्वीर्यं वै श्लोको व्वीर्य्येणैवैनमेतदभिषिञ्चत्यꣳशाय स्वाहेति व्वीर्यं वाऽअꣳशो व्वीर्य्येणैवैनमेतदभिषिञ्चति भगाय स्वाहेति व्वीर्यं वै भगो व्वीर्य्येणैवैनमेतदभिषिञ्चत्यर्यम्णे स्वाहेति तदेनमस्य सर्व्वस्यार्यमणं करोत्येतान्युपरिष्टादभिषेकस्य जुहोति तान्येतान्यादित्यनामानीत्याचक्षते ॥ ९ ॥

( तेऽग्रे ) अग्रेण मैत्रावरुणस्य धिष्ण्यम् । (म) अभिषेचनीयानि पात्राणि भवन्ति यत्रैता ऽआपोऽभिषेचनीया भवन्ति ॥ १० ॥

पालाशं भवति । तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणैवैनमेतदभिषिञ्चति ॥ ११ ॥

---

"अंशाय स्वाहा"–इति । वीर्यं वाऽअंशः । वीर्येणैवैनमेतदभिषिञ्चति । "भगाय स्वाहा"–इति । वीर्यं वै भगः । वीर्येणैवैनमेतदभिषिञ्चति । " अर्यम्णे स्वाहा"–(वा.सं.१०।९) इति । तदेनमस्य सर्वस्यार्यमणं करोति । एतान्युपरिष्टादभिषेकस्य जुहोति । तान्येतान्यादित्यनामानीत्याचक्षते ॥९॥

अग्रेण मैत्रावरुणस्य धिष्ण्यमभिषेचनीयानि पात्राणि भवन्ति–यत्रैता आपोऽभिषेचनीयानि भवन्ति ॥ १० ॥

पालाशं भवति । तेन ब्राह्मणोऽभिषिञ्चति । ब्रह्म वै पलाशः । ब्रह्मणैवैनमेतदभिषिञ्चति ॥११॥

---

इत्यादयो मन्त्राः । अत्रेन्द्रादयः पञ्च देवता अपि वीर्यात्मना स्तुताः । तदेनमस्य सर्वस्येति । अर्यमदेवत्यहोमेन 'एनं' यजमानं 'सर्वस्य' 'अर्यमणं' नियन्तारमधिपतिं कृतवान् भवतीत्यर्थः । इन्द्रादिषड्देवतावाचकानां पदानां देवतानानात्ववाचकत्वं व्युदस्यति–आदित्यनामानीति । इन्द्रादयः शब्दा आदित्यस्यैव मूर्तिभेदेनावस्थितस्य नामानि । पूर्वमग्निवाचकैर्नामभिर्होमेन भूलोके यजमानं निहितवान् भवति, अन्तत आदित्यवाचकैर्नामभिर्होमेन स्वर्गलोकेऽवस्थापितवान् भवतीत्युभयार्थवादवाक्यतात्पर्यार्थः ॥ ९ ॥

अभिषेचनीयानां पात्राणामासादनप्रदेशं विधत्ते–अग्रेणेति । सूत्रन्तु पूर्वमुदाहृतम् । अभिषेचनीयशब्दं निर्वक्ति–यत्रेति । यत् तेषु 'एताः' विहिताः सप्तदश 'आपः' 'अभिषेचनीयाः' अभिषेक्तव्याः आसिच्यमानाः 'भवन्ति' तानि अभिषेचनीयानीति ॥ १० ॥

तानि पात्राणि अभिषेक्तृविशेषसहितानि क्रमेण विधत्ते–पालाशमिति । 'पालाशम्' पलाशशाखानिर्मितमेकं पात्रम् । 'तेन' पात्रेण 'ब्राह्मणः' यजमानमभिषिञ्चेत् । पालाशेनैव ब्राह्मणकर्तृकयजमानाभिषेककरणे कारणमाह–ब्रह्म वा इति । 'पलाशः' 'ब्रह्म वै' वृक्षेषु ब्राह्मणजातिः ॥ ११ ॥

---

१–पात्राणि च तूष्णीं पालाशौदुम्बरनैयग्रोधपादाश्वत्थान्यभिषेकाय । का. श्रौ. सू. १५।११८।

(त्यौ) औदुम्बरं भवति । तेन स्वोऽभिषिश्चत्यन्नं वाऽऊर्ग्युदुम्बरऽऊर्ग्वै स्वं यावद्वै पुरुषस्य स्वं भवति नैव तावदशनायति तेनोक्स्वं तस्मादौदुम्बरेण स्वोऽभिषिश्चति ॥ १२ ॥

नैयग्रोधपादं भवति । तेन मित्र्यो राजन्योऽभिषिश्चति पद्भिर्वै न्यग्रोधः प्रतिष्ठितो मित्रेण वै राजन्यः प्रतिष्ठितस्तस्मान्नैयग्रोधपादेन मित्र्यो राजन्योऽभिषिश्चति ॥ १३ ॥

( त्या ) आश्वत्थं भवति । तेन वैश्योऽभिषिश्चति स यद्देवादोऽश्वत्थे तिष्ठत ऽइन्द्रो मरुतऽउपामन्त्रयत तस्मादाश्वत्थेन वैश्योऽभिषिश्चत्येतान्यभिषेचनीयानि पात्राणि भवन्ति ॥ १४ ॥

( न्त्यु ) अथ पवित्रे करोति । पवित्रे स्थो वैष्णव्याविति सोऽसावेव

---

औदुम्बरं भवति । तेन स्वोऽभिषिश्चति । अन्नं वाऽऊर्ग्युदुम्बरः । ऊर्ग्वै स्वम् । यावद्वै पुरुषस्य स्वं भवति–नैव तावदशनायति । तेनोर्क् स्वम् । तस्मादौदुम्बरेण स्वोऽभिषिश्चति ॥ १२ ॥

नैयग्रोधपादं भवति । तेन मित्र्यो राजन्योऽभिषिश्चति । पद्भिर्वै न्यग्रोधः प्रतिष्ठितः । मित्रेण वै राजन्यः प्रतिष्ठितः । तस्मान्नैयग्रोधपादेन मित्र्यो राजन्योऽभिषिश्चति ॥ १३ ॥

आश्वत्थं भवति । तेन वैश्योऽभिषिश्चति । स यद्देवादोऽश्वत्थे तिष्ठत इन्द्रो मरुत उपामन्त्रयत । तस्मादाश्वत्थेन वैश्योऽऽभिषिश्चति । एतान्यभिषेचनीयानि पात्राणि भवन्ति ॥ १४ ॥

अथ पवित्रे करोति । "पवित्रे स्थो वैष्णव्यौ"–इति । सोऽसावेव बन्धुः[1] तयोर्हिरण्यं प्रवयति ।

---

औदुम्बरमिति । 'औदुम्बरम्' उदुम्बरनिर्मितं पात्रं द्वितीयम् । 'तेन' पात्रेण 'स्वः' ज्ञातिः भ्राता अभिषेकं कुर्यात् । तत्रोपपत्तिं दर्शयति–अन्नं वा इति । उदुम्बरस्यान्नसाधनत्वात् तदुक्तम् । अन्नमेव पुरुषस्य 'स्वं' धनं यतः, अतोऽस्य 'पुरुषस्य यावत् स्वं भवति' 'तावत्' 'न एव अशनायति' क्षुधितो न भवतीत्यर्थः; धनस्य विद्यमानत्वात् । अतोऽन्नस्य स्वत्वादन्नसाधनेनौदुम्बरपात्रेण 'स्वः' ज्ञातिर्भ्राता एवाभिषिश्चेत् ॥ १२ ॥

नैयग्रोधपादमिति । तृतीयं 'नैयग्रोधपादम्' । न्यग्रोधो नाम वटः, तस्य पादः शाखावरोहः, तेन निर्मितं नैयग्रोधपादम् । 'तेन' 'मित्र्यः' सखिकर्म्मणि साधुः सखा 'राजन्यः' अभिषिश्चेत् । तत्र हेतुमाह–पद्भिरिति । न्यग्रोधस्य पादैरेव प्रतिष्ठा दृश्यते; राजापि हितोपदेशकैराप्तैः सखिभिः प्रतिष्ठितो भवति, नान्यथा; अतस्तेन पात्रेण 'मित्रकर्तृकमभिषेककरणं युक्तमित्यर्थः ॥ १३ ॥

आश्वत्थमिति । चतुर्थम् 'आश्वत्थम्' अश्वत्थनिर्मितम्, तेन 'वैश्यः' अभिषिश्चेत् । अश्वत्थस्य वैश्यसम्बन्धं दर्शयति–स यद्देवेति । व्याख्यातम् । विड्रूपाणां मरुतामश्वत्थेऽवस्थानाद्वैश्यस्य तत्सम्बन्धः ॥ १४

अथ पवित्रकरणं विधत्ते–अथ पवित्रे इति । 'हे पवित्रे !' 'वैष्णव्यौ' विष्णुर्यज्ञः, तत्सम्बन्धिन्यौ

---

१–पवित्रे कृत्वा । का० श्रौ० सू० १५ । १२५ ।

बुन्धुस्तुयोर्हिरण्यं प्रुवयति तुाभ्यामेता ऽअभिषेचनीया ऽअप ऽउुत्पुनाति तद्यद्धिरण्यं प्रवुयत्यमृतमायुर्हिरण्यं तुदास्वमृतमायुर्दधाति तस्माद्धिरण्यं प्रुवयति ॥ १९ ॥

स ऽउुत्पुनाति । सवितुर्व्वः प्रसव ऽउुत्पुनाम्युच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिुभिर्‌िति सोऽसुावेव बुन्धुरुनिभृष्टमसि व्वाचो बुन्धुस्तपोजा ऽइत्युनाधृष्टा स्थ रुक्षोभिर्‌ित्येवैतुदाह यदाह्वानिभृष्टमसुीति व्वाचो बुन्धुर्‌िति युावद्वै प्राणेष्वुापो भुवन्ति तुावद्वाचुा व्वदति तुस्मादाह व्वाचो बुन्धुर्‌िति ॥ १६ ॥

---

ताभ्यामेता अभिषेचनीया अप उत्पुनाति । तद्यद्धिरण्यं प्रवयति । अमृतमायुर्हिरण्यम् । तदास्वमृतमायुर्दधाति । तस्माद्धिरण्यं प्रवयति ॥ १९ ॥

स उत्पुनाति—“ सवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ” इति । सोऽसावेव बन्धुः । “ अनिभृष्टमसि वाचो बन्धुस्तपोजाः ”—इति । अनाधृष्टा स्थ रक्षोभिरित्येवैतदाह—यदाह अनिभृष्टमसीति । वाचो बन्धुरिति । यावद्वै प्राणेष्वापो भवन्ति—तावद्वाचा वदति । तस्मादाह वाचो बन्धुरिति ॥ १६ ॥

---

दर्भनाड्यौ ‘ स्थः ’ भवथः , इति मन्त्रस्यार्थः । दर्भनाड्योर्विष्णुसम्बन्धप्रतिपादकमर्थवादवाक्यमतिदिशति— सोऽसावेव बन्धुरिति । ‘ बन्धुः ’ वाक्यशेषः । ‘ असौ ’ विप्रकृष्टः । प्रथमकाण्डे पवित्रकरणसमये समाम्नातः ( श. प. १ । १ । ३ । १ ) । तत्र ह्येवमाम्नातम्—“ पवित्रे स्थो वैष्णव्याविति, यज्ञो वै विष्णुर्यज्ञिये स्थ इत्येवैतदाह ” इत्यादिना ॥

तयोर्दर्भयोर्हिरण्यग्रथनं विधत्ते— तयोरिति[1]। दर्भयोस्तयोरिति सप्तमी । तत्र ‘ हिरण्यं ’ ‘ प्रवयति ’ । “ वेञ् तन्तुसन्ताने ” ( धा. पा. भ्वा. प. १०३१ ) संग्रथ्नीयादित्यर्थः विधत्ते—ताभ्यामिति । तच्छब्देन हिरण्यप्रोते पवित्रे लक्ष्येते, ‘ ताभ्याम् ’ ‘एताः ’ उक्ताः ‘ अपः उत्पुनीयात् ’। हिरण्यग्रथनमनूद्य प्रशंसति— तद्यद्धिरण्यमिति । अमृतमिति । ‘ आसु ’ अप्स्वित्यर्थः ॥ १९ ॥

उत्पवनमनूद्य मन्त्रं विधत्ते—स उत्पुनातीति[2] । “ सवितुर्वः ” इति मन्त्रस्य पूर्वभागो व्याख्यातः । हे उदक ! ‘अनिभृष्टम् ’, “भ्रस्ज पाके” ( धा. पा. तु. प. ४ ) यवादिवद् वह्निसंयोगेऽपि न नितरां भृष्टं, न विनश्यतीति यावत्; रक्षोभिर्वा न बाधितं भवतीत्यर्थः । ‘वाचो बन्धुः ’ वाग्व्यवहारस्य कारणम् । ‘ तपोजाः ’ “ तप सन्तापे ” (धा. पा. भ्वा. प. १०१०) तपःशब्देनाग्निरुच्यते, तस्माज्जातः । ‘ सोमस्य ’ ‘ दात्रं ’ दानसाधनम्भवसि । उदकसम्बन्धादेव सोमरसनिष्पत्तिः; तादृशो रस एव हूयते, अतः सोमस्य दानसाधनभूता भवत । स्वाहाकारेण पूताः स्थ । अत्र स्वाहाशब्दो न होमार्थः; मन्त्रान्ते पाठाभावात् । ‘ राजस्वः ’ राजानं सुवते जनयन्तीति राजस्वः राजोत्पादका इत्यर्थः ॥

---

१—हिरण्यमेनयोः प्रवयति । का० श्रौ० सू० १५।१२५। २—ताभ्यामुत्पुनात्यपः सवितुर्व्व इति । का. श्रौ. सू. १५ । १२५ ।

तपोजा ऽइति । ( त्य ) अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिरग्नेर्वा ऽएता जायन्ते तस्मादाह तपोजा इति ॥ १७ ॥

सोमस्य दात्रमसीति । यदा वा ऽएनमेताभिरभिषुण्वन्त्यथाहुतिर्भवति तस्मादाह सोमस्य दात्रमसीति स्वाहा राजस्व ऽइति तदेनाः स्वाहाकारेणैवोत्पुनाति ॥ १८ ॥

ता ऽएतेषु पात्रेषु व्यानयति । सधमादो द्युम्निनीराप ऽएता ऽइत्यनतिमानिन्य ऽइत्येवैतदाह यदाह सधमाद इति द्युम्निनीराप ऽएता ऽइति वीर्यवत्य इत्येवैतदाहानाधृष्टा ऽअपस्यो वसाना ऽइत्यनाधृष्टा स्थ रक्षोभि-

---

तपोजा इति । अग्नेर्वै धूमो जायते, धूमादभ्रम्, अभ्राद्वृष्टिः । अग्नेर्वा ऽएता जायन्ते । तस्मादाह—तपोजा इति ॥ १७ ॥

"सोमस्य दात्रमसि"—इति । यदा वा ऽएनमेताभिरभिषुण्वन्ति—अथाहुतिर्भवति । तस्मादाह—सोमस्य दात्रमसीति । " स्वाहा राजस्वः "—( वा. सं. १०।६ ) इति । तदेनाः स्वाहाकारेणैवोत्पुनाति ॥ १८ ॥

ता एतेषु पात्रेषु व्यानयति—"सधमादो द्युम्निनीराप एताः"—इति । अनतिमानिन्य इत्येवै-

---

मन्त्रं भागशोऽनूद्य व्याख्यास्यन् सवितुर्व इति मन्त्रभागस्य प्रथमकाण्डे उत्पवनसमये समाम्नातमर्थवादब्राह्मणमतिदिशति—सोऽसाविति । तत्र ह्येवमाम्नातम्—" सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति, सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतदुत्पुनात्यच्छिद्रेण पवित्रेणेति, योवा अयं पवत एषोऽच्छिद्रं पवित्रमेतेनैतदाह सूर्यस्य रश्मिभिरिति, एते वा उत्पवितारो यत्सूर्यस्य रश्मयः, तस्मादाह सूर्यस्य रश्मिभिरिति " (श. प. १ । १।३।६ ) इति । अनिभृष्टमसीति । सामान्यविवक्षयैकवचान्तत्वेन प्रयुक्तम् । अपां बहुत्वेन बहुवचनान्ततया व्याचष्टे—अनाधृष्टाः स्थेति । अपां वाग्बन्धुत्वमुपपादयति—यावद्वै प्राणेष्विति । ' प्राणेषु ' मुखनासिकादिषु यावदपां सद्भावः, तावत् पुरुषा वाचं वदति; तद्विरहे शुष्का जिह्वा शब्दानुच्चारयितुं न शक्नोतीत्यर्थः ॥

तपोजा इति । अपां परम्परया अग्निजनकत्वं दर्शयति—अग्नेर्वा इति ॥

सोमदानसाधनत्वमुदकस्य निरूपयति—यदा वा एनमिति । ' यदा ' यस्मिन् काले ' एनं ' सोमम् ' एताभिः ' अद्भिः ' अभिषुण्वन्ति ' अभिषवं कुर्वन्ति, अध्वर्यवः । ' अथ ' अभिषवानन्तरम् 'आहुतिर्भवति ' ॥ १६–१८ ॥

विधत्ते—ता एतेष्विति । ' एतेषु ' अभिषेचनीयेषु ' पात्रेषु ' ' एताः ' उक्ताः ' अपः ' ' व्यानयति ' आसिञ्चेदित्यर्थः । ' सधमादः ' सह माद्यन्तीति सधमादः, परस्परमनतिमानिन्य इत्यर्थः । " सधमादस्थयो-

---

१-अभिषेचनीयेष्वेना व्यानयति सधमाद इति । का. श्रौ. सू. १५ । १२६ ।

रित्येवैतदाह यदाहानाधृष्टाऽ अपस्यो व्वसानाऽ इति पस्त्यासु चक्रे व्वरुणः सधस्थमिति व्विशो वै पस्त्या व्विक्षु चक्रे व्वरुणः प्रतिष्ठामित्येवैतदाहापाᳪं शिशुर्मातृतमास्वन्तरित्यपां वाऽएष शिशुर्भवति यो राजसूयेन यजते तस्मादाहापाᳪं शिशुर्मातृतमास्वन्तरिति ॥ १९ ॥

( त्यु ) अथैनं व्वासाᳪंसि परिधापयति । तत्तार्प्यमिति व्वासो भवति तस्मिन्त्सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति तदेनं परिधापयति क्षत्रस्योल्बमसीति तद्यदेव क्षत्रस्योल्बं ततऽ एवैनमेतज्जनयति ॥ २० ॥

---

तदाह–यदाह–सधमाद इति । द्युम्निनीराप एताः इति । वीर्यवत्य इत्येवैतदाह । "अनाधृष्टा अपस्यो वसानाः"–इति । अनाधृष्टा स्थ रक्षोभिरित्येवैतदाह–यदाह अनाधृष्टा अपस्यो वसाना इति । "पस्त्यासु चक्रे वरुणः सधस्थम्"–इति । विशो वै पस्त्या । विक्षु चक्रे वरुणः प्रतिष्ठामित्येवैतदाह । "अपां शिशुर्मातृतमास्वन्तः"–(वा. सं १०।७ ) इति । अपां वाऽएष शिशुर्भवति–यो राजसूयेन यजते तस्मादाह–अपां शिशुर्मातृतमास्वन्तरिति ॥ १९ ॥

अथैनं वासांसि परिधापयति । तत् तार्प्यमिति वासो भवति । तस्मिन् सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति । तदेनं परिधापयति–"क्षत्रस्योल्बमसि"–इति । तद्यदेव क्षत्रस्योल्बम्–तत एवैनमेतज्जनयाति ॥ २० ॥

---

श्छन्दसि" ( पा. सू. ६।३।९६ ) इति सहस्य सधादेशः । 'द्युम्निनीः' वीर्यवत्यः 'एता आपः' । 'रक्षोभिः' 'अनाधृष्टाः' अनभिभूताः, 'अपस्यः' अप इति कर्म्मनाम ( निघं. २।१।१) राजसूयाख्यं कर्म इच्छन्त्यः, 'वसानाः' "वस आच्छादने" ( धा पा. अदा. आ. १३ ) आच्छादयन्त्यो या आपः, सन्तीति शेषः । तासु अतिशयेन मातृभूतासु 'पस्त्यासु' 'पस्त्या' इति गृहनाम( निघं. ३।४।६। ) गृहावस्थितास्वप्सु 'अन्तः' मध्ये 'सधस्थं' सहस्थानं 'प्रतिष्ठाम्', 'अपां शिशुः' वरुणः; राजसूयेऽद्भिरभिषिक्तत्वात् तज्जन्यत्वमुच्यते । तथाविधो वरुणः 'चक्रे' कृतवानिति । यद्वा, 'पस्त्यासु' गृहावस्थितासु 'विक्षु' प्रजास्विति व्याख्येयम् । मन्त्रं प्रतिपादमनूद्य तात्पर्यपुरस्सरं व्याचष्टे–अनतिमानिन्य इति ॥ १९ ॥

विधत्ते अथैनं वासांसीति । 'एनं' यजमानं 'वासांसि' तार्प्यपाण्ड्वाधिवासोष्णीषाणि परिधापयेदिति सामान्यविधिः । तत्तात्पर्यार्थकथनपुरस्सरं विधत्ते–तत्तार्प्यमिति । 'तत्' तत्र, तेषु प्रथमं 'तार्प्यमिति' वासः; न त्वन्यत् कम्बलादिकमित्यर्थः । अत एव कात्यायनः–"तार्प्यं परिधापयति, क्षौमं, त्रिपाणं वा, घृतोन्नमेके–( का. श्रौ. सू. १९ । १२७ । १३० )–इति । तृपानामौषधिविशेषः, तत्तन्तुनिर्मितम्, क्षौमं वस्त्रं 'तार्प्यम् त्रिः कृत्वः पायितम् त्रिपाणम्', 'घृतोन्नम्' "उन्दी क्लेदने" (धातु. रु. प. २०) घृतसिक्तमिति 'एके आचार्या वदन्ति'॥ तत्र कश्चिद् विशेषं विधत्ते–तस्मिन्त्सर्वाणीति[1] । 'यज्ञरूपाणि' स्रुक्चमसादीनि 'सर्वाणि' तस्मिन् 'स्यूतानि' भवेयुः । तार्प्यस्य परिधापने मन्त्रं विधत्ते–क्षत्रस्येति । हे तार्प्य ! 'क्षत्रस्य' राज्ञो

---

१–याज्ञरूपस्यूतं यज्ञरूपाणी स्रुक्चमसादीनी यज्ञपात्राणीत्यर्थः । का. श्रौ, सू.१५।१३१ ।

( त्यु ) अथैनं पाण्ड्वं परिधापयति । क्षत्रस्य जराय्वसीति तद्यदेव क्षत्रस्य जरायु ततऽ एवैनमेतज्जनयति ॥ २१ ॥

( त्यु ) अथाधीवासं प्रतिमुञ्चति । क्षत्रस्य योनिरसीति तद्यैव क्षत्रस्य योनिस्तस्याऽ एवैनमेतज्जनयति ॥ २२ ॥

( त्यु ) अथोष्णीषꣳ सꣳहृत्य । पुरस्तादवगूहति क्षत्रस्य नाभिरसीति तद्यैव क्षत्रस्य नाभिस्तामेवास्मिन्नेतद्दधाति ॥ २३ ॥

---

अथैनं पाण्ड्वं परिधापयति-" क्षत्रस्य जराय्वसि "-इति । तद्यदेव क्षत्रस्य जरायु-तत एवैनमेतज्जनयति ॥ २१ ॥

अथाधीवासं प्रतिमुञ्चति-" क्षत्रस्य योनिरसि "-इति । तद्यैव क्षत्रस्य योनिः-तस्या एवैनमेतज्जनयति ॥ २२ ॥

अथोष्णीषं संहृत्य पुरस्तादवगूहति-" क्षत्रस्य नाभिरसि "-इति । तद्यैव क्षत्रस्य नाभिः तामेवास्मिन्नेतद्दधाति ॥ २३ ॥

---

यजमानस्य गर्भत्वेनोपचर्य्यमाणस्य ' उल्बम् ' आवरणम् 'असि' "उल्बावृतो गर्भः" इति छन्दोगा आमनन्ति । उल्बत्वं साधयति-तद्यदेवेति । ' यद् उल्बं ' तस्मादेव ' एनं ' यजमानम् ' एतत् ' एतेन तार्प्यपरिधापनेन उत्पादितवान् भवति ॥ २० ॥

विधत्ते-अथैनमिति । ' पाण्ड्वम् ' पाण्डुरम्, श्वेतं कम्बलं परिधापयेत् , तार्प्यस्योपरि प्रावृणुयादित्यर्थः[1] ' पाण्ड्व '-शब्दार्थ उक्तः । तदिदं पाण्डुरं द्वितीयम्; श्येतं पाण्डुरमित्याचक्षते । हे पाण्डुर-कम्बल ! ' क्षत्रस्य ' पूर्वोक्तविशेषणस्य ' जरायु ' जरायुस्थानीयम ' असि '-इति । ' एतेन ' पाण्डुरपरिधापनेन । ' ततः ' जरायोः ॥ २१ ॥

विधत्ते-अथाधीवासमिति[2] । अधि उपरि वसनीयमाच्छादनीयं वस्त्रम् ' अधीवासम्, ' तत् प्रतिमुञ्चेत् । तार्प्यमुपसंव्याय पाण्डुरमुत्तरीयवदाच्छाद्य, ' अधीवासं ' कञ्चुकादिकम् , उपरि प्रतिमुञ्चेदित्यर्थः । हे वस्त्र ! ' क्षत्रस्य ' 'योनिः' योनिस्थानीयम् ' असि ' इति । गर्भरूपयजमानस्य एतानि त्रीणि वस्त्राणि उल्ब-जरायु-योनिरूपत्वेन प्रशस्तानीति समुदितोऽर्थः ॥ २२ ॥

उष्णीषवेष्टनं विधत्ते-अथोष्णीषमिति[3] । ' उष्णीषं संहृत्य ' निवीतरूपेण कण्ठेऽवसज्य ' पुरस्तात् ' पूर्वभागे नाभिदेशे ' अवगूहति ' उष्णीषान्तं नीवीस्थाने ग्रथयेदित्यर्थः । तन्मन्त्रस्यायमर्थः-' क्षत्रस्य ' 'नाभिः' नाभिस्थानीयम् ' असि ' इति ॥ २३ ॥

---

१-पांड्वं च निवस्ते । का० श्रौ० सू० । १५ । १३२ । २-अधीवासं प्रतिमुच्य । का० श्रौ० सू० । १५ ; १३३ । ३-उष्णीषꣳ संवेष्ट्य । का० श्रौ० सू० १५ । १३३ ।

तद्धैके । समन्तं परिवेष्टयन्ति नाभिर्वा ऽअस्यैषा समन्तं वाऽइयं नाभिः पर्येतीति वदन्तस्तदु तथा न कुर्यात्पुरस्तादेवावगूहेत्पुरस्ताद्धीयं नाभिस्तद्यदेनं वासाꣳसि परिधापयति जनयत्येवैनमेतज्जातमभिषिञ्चानीति तस्मादेनं वासाꣳसि परिधापयति ॥ २४ ॥

तद्धैके । निदधत्येतानि वासाꣳस्यथैनं पुनर्दीक्षितवसनं परिधापयन्ति तदु तथा न कुर्यादङ्गानि वाऽअस्य जनूर्वासाꣳस्यङ्गैर्हैनꣳ सजन्वा तन्वा व्यर्धयति वरुण्यं दीक्षितवसनꣳ सऽएतेषामेवैकं वाससां परिदधीत तदेनमङ्गैर्जन्वा तन्वा समर्धयति वरुण्यं दीक्षितवसनं तदेनं वरुण्याद्दीक्षितवसनात्प्रमुञ्चति ॥ २५ ॥

---

तद्धैके समन्तं परिवेष्टयन्ति । नाभिर्वाऽअस्यैषा । समन्तं वाऽइयं नाभिः पर्येतीति वदन्तः । तदु तथा न कुर्यात् । पुरस्तादेवावगूहेत् । पुरस्ताद्धीयं नाभिः । तद्यदेनं वासांसि परिधापयति—जनयत्येवैनमेतद्—जातमभिषिञ्चानीति । तस्मादेनं वासांसि परिधापयति ॥ २४ ॥

तद्धैके—निदधत्येतानि वासांसि—अथैनं पुनर्दीक्षितवसनं परिधापयन्ति । तदु तथा न कुर्यात् । अङ्गानि वाऽअस्य जनूर्वासांसि । अङ्गैर्हैनं सजन्वा तन्वा व्यर्धयन्ति । वरुण्यं दीक्षितवसनम् । स

---

उक्तमुष्णीषाग्रस्य पूर्वदेशेऽवगूहनं द्रढयितुं पूर्वपक्षं सोपपत्तिकमनुवदति—तद्धैके इति । 'एके' शाखान्तरानुसारिणः 'तत्' उष्णीषं 'समन्तं' सर्वतो नाभिदेशे 'परिवेष्टयन्ति' । तदुपपादयति—नाभिर्वा इति । 'अस्य' क्षत्रियस्य 'एषा' उष्णीषरूपा 'नाभिः' अपि 'समन्तं' 'पर्येति' परिवेष्टिता भवति । अतः "क्षत्रस्य नाभिरसि"—इति मन्त्रे उष्णीषस्य नाभित्ववचनात् तत्साम्याय समन्ताद् वेष्टनमुक्तमित्येकेषां मतम् । तद्दूषयति—तदु तथेति । उक्तं स्वमतं निगमयति—पुरस्तादेवेति । तत्र हेतुमाह—पुरस्ताद्धीयमिति । तार्प्यादिवासःपरिधापनं सम्भूय प्रशंसति—तद्यदेनं वासांसीति । 'एतत्' एतेन वासःपरिधापनेन 'एनं' यजमानं 'जनयति' उत्पादितवान् भवति; तेषां वाससामुल्बजरायुयोनिरूपत्वोक्तेः । किमर्थं जननमिति तत्राह—जातमभीति । 'जातं' यजमानम् 'अभिषिञ्चानि' अभिषिक्तं करवाणि 'इति' बुद्ध्या 'वासांसि परिधापयति' परिधापयेदित्यर्थः[2] ॥ २४ ॥

पूर्वं निहितस्य दीक्षितवसनस्य परित्यागं विधित्सुरेकेषां मतमुपन्यस्यति । यद्वा, अयमपरः सम्बन्धः—विहितानां तार्प्यादीनां परिधापनादिकमेव द्रढयितुं पूर्वपक्षयति—तद्धैके इति । 'एके' शाखिनः एकवारं

---

१—निवीतेऽवगूहते नाभिदेशे परिहरते वा । का. श्रौ. सू. १५ । १३३ । २—तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमंत्रम् । का० श्रौ० सू० । १५ । १३४ ।

स य॒त्राव॑भृथम॒भ्यवै॑ति । त॒देत॒द॒प्य॒भ्यु॒वह॑रन्ति त॒त्स॒लो॑म क्रि॒यते स ऽए॒ते॒षा॑मे॒वैकं॒ वा॑ससां परि॒धायो॑दैति ता॒नि व॒शायै॑ वा व॒पाया॑ᳪ हु॒तायां॑ द॒द्याद॑ुद॒व॒सानी॒याया॑ं वे॒ष्टौ ॥ २६ ॥

एतेषामेवैकं वाससां परिदधीत । तदेनमङ्गैर्जन्वा तन्वा समर्धयति । वरुण्यं दीक्षितवसनम् । तदेनं वरुण्याद्दीक्षितवसनात्प्रमुञ्चति ॥ २५ ॥

स यत्रावभृथमभ्यवैति । तदेतदप्यभ्यवहरन्ति । तत् सलोम क्रियते । स एतेषामेवैकं वाससां परिधायोदैति । तानि वशायै वा वपायां हुतायां दद्यात्, उदवसानीयायां वेष्टौ ॥ २६ ॥

परिधापितानि 'एतानि वासांसि' 'निदधति' विसृज्य निदध्युः । 'अथ' तदानीमेव तार्प्यादिवसनकाले निहितं 'दीक्षितवसनम्' 'एतं' यजमानं 'पुनः परिधापयन्ति' । पुनःपरिधापनकालस्तु सूत्रकृता दर्शितः— "दीक्षितवसननिवृत्तिर्विरोधात्, माहेन्द्रादौ वा पुनः परिधानं निधायैतानि"—( का. श्रौ. सू. १९।१३९ ) इति । तद् दूषयति—तदु तथेति । अङ्गानि वा इति । 'वासांसि' इति यत् तानि 'अस्य' यजमानस्य 'जनूः अङ्गानि' सहोत्पन्नानि । तार्प्यादीनां वाससामुल्व-जरायुप्रभृत्यात्मकत्वादङ्गत्वम् । उल्बादीनां तु गर्भावस्थायां सह निवासादङ्गत्वमुपचरितम् ॥

यद्वा, अयमर्थः—'वासांसि जनूरङ्गानि' सहोत्पन्नानि त्वग्रूपाण्यङ्गानि । 'वै' शब्दः प्रसिद्धिद्योतकः । तृतीयकाण्डे दीक्षाप्रकरणे "अथ वासः परिधत्ते"—इत्युपक्रम्याम्नातम्—"तस्मिन्नेतां त्वचमदधुः वास एव तस्मान्नान्यः पुरुषाद् वासो बिभर्ति"—( श. प. ३ । १ । २ । १३–१६ ) इति । अतो वासोभिः परिधापनेन 'जन्वा' 'तन्वा' सहोत्पन्नैः शरीररूपैः 'अङ्गैः' समर्धितवान् भवति । अङ्गसमुदाय एव हि तनूः, शरीरेण तदङ्गैश्च संवर्द्धितवान् भवति । दीक्षितवसनस्य परित्यागं दर्शयितुं तस्य दुष्टत्वमाह—वरुण्यमिति । वरुणगृहीतं दुष्टमित्यर्थः ॥ स एतेषामित्यादिकस्यायमर्थः—उक्तानां वाससामेकेन तार्प्येण प्रथमातिक्रमे कारणाभावात् । यद्वा 'एकम्' प्रथममित्यर्थः । प्रथमन्तु तार्प्यम्, तेन परिधापनं कर्त्तव्यम् । न तु दीक्षितवसनस्य पुनःपरिधापनमित्यर्थः ॥ २५ ॥

विहितस्य दीक्षितवसनस्य अवभृथे प्रासनं विधत्ते—स यत्रेति । 'अवभृथम्' 'अभ्यवहरन्ति' आहरेयुः, अप्सु प्रक्षिपेयुरित्यर्थः । 'तत्' तथा सति 'सलोम क्रियते' प्रकृतिगतमनुसृतं भवतीत्यर्थः । प्रकृतौ तु दीक्षितवसनस्य अवभृथे परित्याग उक्तः । स एतेषामित्यादि । माहेन्द्रादौ दीक्षितवसनस्य पुनः परिधानं कृतम्, तदा तार्प्यादीनामेकैकेनैव परिहितेन वाससा अवभृथावतरणमुत्तरणं च कर्त्तव्यमित्यर्थः । 'उदैति' उत्तरेत् । तेषां वाससां दानकालं विधत्ते- तानि वशाया इति । अनुबन्ध्यावशाया वपायागकाले वाऽध्वर्यवे 'दद्यात्' । अवसाने कर्त्तव्या उदवसानीयेष्टिः, तस्यां वा दद्यात् । अत एव कात्यायनः—"अवभृथमेकेन तार्प्यादीनि चेदुदैत्येकेन, दीक्षितवसनं च प्रास्यति, अनूबन्ध्यावपाहोमान्ते दद्यादेनानि, उदवसानीयायां वा"—( का. श्रौ. सू. १९ । २०९–२१२ ) इति ॥ २६ ॥

( घ्राव ) अथ धनुरधितनोति । ( ती ) इन्द्रस्य वार्त्रघ्नमसीति वार्त्रघ्नं वै धनुरिन्द्रो वै यजमानो द्वयेन वाऽ एषऽ इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य वार्त्रघ्नमसीति ॥ २७ ॥

( त्य ) अथ बाहू विमार्ष्टि । मित्रस्यासि वरुणस्यासीति बाह्वोर्वै धनुर्बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रस्यासि वरुणस्यासीति तदस्मै प्रयच्छति त्वयाऽयं वृत्रं वधेदिति त्वयाऽयं द्विषन्तं भ्रातृव्यं वधेदित्येवैतदाह ॥ २८ ॥

( ह्या ) अथास्मै तिस्र इषूः प्रयच्छति । स यया प्रथमया समर्पणेन पराभिनत्ति सैका सेयं पृथिवी सैषा दृबा नामाथ यया विद्धः शयित्वा जीवति

---

अथ धनुरधितनोति--" इन्द्रस्य वार्त्रघ्नमसि "--इति । वार्त्रघ्नं वै धनुः । इन्द्रो वै यजमानः । द्वयेन वाऽएष इन्द्रो भवति--यच्च क्षत्रियो, यदु च यजमानः । तस्मादाह--इन्द्रस्य वार्त्रघ्नमसीति ॥ २७ ॥

अथ बाहू विमार्ष्टि । " मित्रस्यासि वरुणस्यासि "--इति । बाह्वोर्वै धनुः । बाहुभ्यां वै राजन्यो मैत्रावरुणः । तस्मादाह--मित्रस्यासि वरुणस्यासीति । तदस्मै प्रयच्छति--" त्वयाऽयं वृत्रं वधेत् "- इति । त्वयाऽयं द्विषन्तं भ्रातृव्यं वधेदित्येवैतदाह ॥ २८ ॥

अथास्मै तिस्र इषूः प्रयच्छति । स यया प्रथमया समर्पणेन पराभिनत्ति सैका । सेयं पृथिवी सैषा

---

अथ धनुरधीति[1] । 'अधितनोति' आतनोतीत्यर्थः । मन्त्रस्यायमर्थः--हे धनुः ! त्वम् 'इन्द्रस्य' 'वार्त्रघ्नं' वृत्रहननसाधनमायुधम् 'असि' भवसि । इन्द्रशब्दार्थमाह--इन्द्रो वा इति । कथं यजमानस्येन्द्रत्वमिति तदुपपादयति--द्वयेनेति । क्षत्रिय इति यत्, यजमान इति च यत्, तेन द्वयेनेत्यर्थः । क्षत्रं नाम बलम्; तत्स-म्बन्धात्, यष्टृत्वाच्चेत्यर्थः । इन्द्रस्य यजमानत्वं प्रागुक्तम् ॥ २७ ॥

विधत्ते--अथ बाहू इति[2] । हे बाहो ! 'मित्रस्य' 'असि' भवसि । तथाऽपरं बाहुं प्रत्याह--वरुणस्यासीति । बाहुद्वयं विमृज्यात् । कर्कोपाध्यायेन तु बाहुशब्दस्य धनुष्कोटिपरत्वं व्याख्यातम्[3] । तमिमं प्रशंसति--बाह्वोरिति । बाहुभ्यां खलु मित्रवरुणसम्बन्धी राजन्यो भवति; बाहुवीर्यसद्भावो राज्ञो लक्षणमित्यर्थः । धनुःप्रदानं समन्त्रकं विधत्ते--तदस्मा इति[4] । हे धनुः ! 'त्वया' साधनेन 'अयं' यजमानो 'वृत्रं' शत्रुं 'वधेत्' हिंस्यादिति । मन्त्रं व्याचष्टे--त्वयाऽयं द्विषन्तमिति ॥ २८ ॥

अथेषुत्रयदानं विधत्ते--अथास्मा इति । 'तिस्रः'--इति । लोकत्रयात्मकत्वेन शस्तानामिषूणां लक्षणं

---

१--इंद्रस्य वार्त्रघ्नमिति धनुरातनोति । का. श्रौ. सू. १५ । १३६ । २--मित्रस्य वरुणस्येत्यस्य बाहू विमार्ष्टि । का० श्रौ० सू० । १५ । १३७ । ३--कर्कभाष्ये--'बाहू धनुःकोट्यावुच्यते' इति पाठः । ४--धनुः प्रयच्छति त्वयाऽयमिति । का० श्रौ० सू० । १५ । १३८ ॥

वा म्रियते वा सा द्वितीया तदिदमन्तरिक्षꣳ सैषा रुजा नामाथ यया॒ऽपैव राध्नोति सा तृतीया साऽसौ द्यौः सैषा क्षुमा नामैता हि वै तिस्रऽइषवस्तस्मादस्मै तिस्रऽइषूः प्रयच्छति ॥ २९ ॥

ताः प्रयच्छति । पातैनं प्राञ्चं पातैनं प्रत्यञ्चं पातैनं तिर्यञ्चं दिग्भ्यः पातेति तदस्मै सर्वा एव दिशोऽशरव्याः करोति तद्यदस्मै धनुः प्रयच्छति वीर्यं वाऽएतद्राजन्यस्य यद्धनुर्व्वीर्यवन्तमभिषिञ्चानीति तस्माद्वाऽअस्माऽआयुधं प्रयच्छति ॥ ३० ॥

---

दृबा नाम । अथ यया विद्धः शयित्वा जीवति वा म्रियते वा—सा द्वितीया । तदिदमन्तरिक्षम् । सैषा रुजा नाम । अथ ययाऽपैव राध्नोति—सा तृतीया । साऽसौ द्यौः । सैषा क्षुमा नाम । एता हि वै तिस्र इषवः । तस्मादस्मै तिस्र इषूः प्रयच्छति ॥ २९ ॥

ताः प्रयच्छति—"पातैनं प्राञ्चम्, पातैनं प्रत्यञ्चम्, पातैनं तिर्यञ्चम्, दिग्भ्यः पात"—( वा. सं. १० । ८ )-इति । तदस्मै सर्वा एव दिशोऽशरव्याः करोति । तद् यदस्मै धनुः प्रयच्छति । वीर्यं वाऽएतद्राजन्यस्य—यद्धनुः । वीर्यवन्तमभिषिञ्चानीति । तस्माद्वाऽअस्मा आयुधं प्रयच्छति ॥ ३० ॥

---

सञ्ज्ञां च दर्शयति--स ययेति । 'समर्पणेन' परित्यागमात्रेण 'यया' 'परान् भिनत्ति' शत्रून् विदारयति, तस्या एकस्याः 'दृबा'--नामधेयायाः पृथिव्यात्मकत्वेन प्राशस्त्यमित्यर्थः । 'यया' विद्धस्य ताडितस्य जीवने सन्देहः, तस्या 'रुजा'--नाम्न्या अन्तरिक्षात्मकत्वम् । यया राजा शत्रुम् 'अपराध्नोति' हिनस्त्येव, तस्याः 'क्षुमा'--नामधेयायाः तृतीयलोकात्मकत्वेन प्राशस्त्यमित्यर्थः । अत्र कञ्चिद् विशेषं कात्यायनः सूत्रयामास--"दृबाऽसीति प्रतिमन्त्रमादाय तिस्र इषूः प्रयच्छति" (का. श्रौ. सू. १५।१।३९)--इति । तेषां मन्त्राणामयमर्थः ।--दृबा, "दृ विदारणे"--(धा. पा. क्र्या. प. २१ ) दृणातीति 'दृबा' विदारिका 'असि' इति । दृप्यतेर्वा रूपम् । इति प्रथमेषुग्रहणम् । 'रुजा' "रुजो भङ्गे" ( धा. पा. तु. प. १३९ ) भङ्गहेतुरिषुरसि । अनेन द्वितीयशरग्रहणम् । 'क्षुमा' "क्षुप विधूनने" ( सौत्रो धातुः ) क्षुपतीति क्षुपा, पकारस्य स्थाने मकारः; शत्रुक्षुपणकारिणी इषुरसि । अनेन तृतीयशरग्रहणम् । एवमादाय दद्यात् ॥ २९ ॥

इषुदानमनूद्य मन्त्रं विधत्ते—ताः प्रयच्छतीति । 'एनं' यजमानं 'प्राञ्चम्' प्रागञ्चनम्, प्राग् गन्तारम् हे इषवः 'पात' पालयत । 'प्रत्यञ्चम्' प्रत्यग्गन्तारम्, 'तिर्यञ्चम्' तिर्यग्गन्तारम्, किं बहुना 'दिग्भ्यः' सर्वाभ्यः 'पात' इति । तदस्मा इति । 'अशरव्याः' अहिंसकाः; शरव्यं शरलक्ष्यम्, तद्रहिताः 'करोति' । अनेन सर्वास्वपि

---

१—"महीधरेण तु 'क्ष्मायी विधूनने' क्ष्मायति शत्रून् कम्पयति इति क्षुमा"--इति व्याख्यातम् ।

( त्यु ) अथैनमाविदो वाचयति । ( त्या ) आविर्मर्याऽ इत्यनिरुक्तं प्रजापतिर्वाऽअनिरुक्तस्तदेनं प्रजापतयऽआवेदयति सोऽस्मै सवमनुमन्यते तेनानुमतः सूयते ॥ ३१ ॥

( तऽआ ) आवित्तोऽअग्निर्गृहपतिरिति । ब्रह्म वाऽअग्निस्तदेनं ब्रह्मणऽआवेदयति तदस्मै सवमनुमन्यते तेनानुमतः सूयते ॥ ३२ ॥

---

अथैनमाविदो वाचयति–" आविर्मर्याः "–इत्यनिरुक्तम् । प्रजापतिर्वाऽअनिरुक्तः । तदेनं प्रजापतय ऽआवेदयति । सोऽस्मै सवमनुमन्यते । तेनानुमतः सूयते ॥ ३१ ॥

" आवित्तोऽअग्निर्गृहपतिः "–इति । ब्रह्म वाऽअग्निः । तदेनं ब्रह्मणऽआवेदयति । तदस्मै सवमनुमन्यते । तेनानुमतः सूयते ॥ ३२ ॥

---

दिक्षु परकीयशरलक्ष्यत्वं निवर्त्यते । इमं मन्त्रमिष्वभिमर्शनेऽपि कात्यायनो विनियुक्तवान्–"पातैनमित्यभिमृशति" ( का. श्रौ. सू. १९ । १३९ ) इति । आपस्तम्बोऽपि–" पात मा प्रत्यञ्चमिति प्रदीयमानामनुमन्त्रयते " ( आ. श्रौ. सू. १८ । १४ । १३ ) इति । ॥ ३० ॥

विधत्ते–अथैनमाविद इति । आवित्त–पदयुक्ताः सप्त मन्त्राः ' आविदः ' तान् वाचयतीत्यर्थः । आवेदयन्ति ज्ञापयन्ति देवताभ्य एनं यजमानमित्याविदो मन्त्राः ॥ तत्र मन्त्रान् विधत्ते–आविर्मर्या इति । आविर्मर्याः ' ' इत्यनिरुक्तम् ' साक्षाद् देवतावाचकपदरहितं मन्त्रं वाचयेदित्यर्थः । हे ' मर्याः ' ! मरणयोग्या मनुष्याः ! ' आविः ' प्रकाशोऽभूत् । अनेन कस्यै देवतायै यजमानमावेदितवान् भवतीत्याशङ्क्य तां देवतां दर्शयति–प्रजापतिरिति । ' प्रजापतिः ' खलु ' अनिरुक्तः ' ईदृश इति वक्तुमनर्हः; तस्मादनेन यजुषा अनिरुक्तेन अनिरुक्तात्मने ' प्रजापतये ' ' एनं ' यजमानम् आवेदितवान् भवतीत्यर्थः । आवेदनस्य फलमाह–सोऽस्मा इति । ' सः ' आवेदितः ज्ञापितः प्रजापतिः ' अस्मै ' सुन्वते ' सवम् ' अभिषेकम् ' अनुमन्यते ' ' तेन ' प्रजापतिना ' अनुमतः ' अनुज्ञातः ' सूयते ' अभिषिच्यते । एवमुत्तरत्रापि व्याख्येयम् ॥ ३१ ॥

आवित्तोऽअग्निर्गृहपतिरिति । गृहपतिगुणकः ' अग्निः ' ' आवित्तः ' आवेदितः, ज्ञापितः । " वित्तो भोगप्रत्यययोः "–( पा. सू. । ८ । २ । ९८ ) इति निपातितः । अग्नये यजमानं ज्ञापितवानित्यर्थः ॥ ३२ ॥

---

१–इमं मंत्रमिष्वभिमर्शनेऽपीत्यादितः प्रदीयमानामनुमंत्रयते इतीत्यंतं भाष्यं चिंत्यम् । तद्यथा । शतपथं चानुसृत्य सूत्ररचनाशैलीशीलतया आचार्येण भगवता कात्यायनेन तथैव सूत्रितम् -" दवासीति प्रतिमंत्रमादाय तिस्र इषूः प्रयच्छति पातैनमिति प्रतिमंत्रम् " इति । पितृभूतिकर्कदेवयाज्ञिकानंतदेवप्रभृतिभाष्यकृद्भाष्याण्यपि सूत्रानुसारीण्येव । पद्धतिकृतां पद्धत्यस्तादृश्यः । एतादृक्स्थितावपि स्वस्यापस्तंबीयत्वात् तदभिमानितया कात्यायनस्य कृष्णयजुःशाखानुयायित्वप्रदर्शनाय पूर्ववदक्षरतारतम्यसंध्यवकाशमालोच्य आर्षमपि सूत्रमन्यथाऽचीक्लृपत् । इति । एतदतिसाहसदृढीकरणाय अस्मिन्नेव ब्राह्मणे एकोनत्रिंशकण्डिकाव्याख्याने अत्र कंचिद्विशेषं कात्यायनः सूत्रयामास दवासीति प्रतिमंत्रमादाय तिस्र इषूः प्रयच्छतीति अवतारितम् । स विशेषस्तु इमं मंत्रमिष्वभिमर्शनेऽपीत्यादिना ग्रंथेन त्रिंशत्तमकंडिकायां व्याख्याने उद्घाटितः । स्वयमेव अपीति वदता पातैनमिति मंत्राणामिषुप्रदाने विनियोगमंगीकृत्य इष्वभिमर्शने विकल्पप्रदर्शनं कृतं तद्विकल्पदर्शनं ( एवमन्यथाकृतौ ) भाष्यकृतां चेतोभयास्पदमिति स्पष्टमेव द्योतयतीति । अतः एकोनत्रिंशकंडिकायां अत्र कंचिद्विशेषमिति त्रीणि पदानि विहाय कात्यायनः सूत्रयामास दवासीति प्रतिमंत्रमादाय तिस्र इषूः प्रयच्छति पातैनमिति प्रतिमंत्रमिति । युक्तमेव । इमं मंत्रमित्यादि अनुमंत्रयते इत्यंतम् ।

२–आविर्मर्या इति वाचयति । का० श्रौ० सू० १५ । १४० ।

(तऽआ) आवित्तऽइन्द्रो वृद्धश्रवाऽ इति । क्षत्रं वाऽइन्द्रस्तदेनं क्षत्रायावेदयति तदस्मै सवमनुमन्यते तेनानुमतः सूयते ॥ ३३ ॥

(तऽ) आवित्तौ मित्रावरुणौ धृतव्रताविति । प्राणोदानौ वै मित्रावरुणौ तदेनं प्राणोदानाभ्यामावेदयाति तावस्मै सवमनुमन्येते ताभ्यामनुमतः सूयते ॥ ३४ ॥

(तऽ) आवित्तः पूषा विश्ववेदा ऽइति । पशवो वै पूषा तदेनं पशुभ्य ऽआवेदयति तेऽस्मै सवमनुमन्यन्ते तैरनुमतः सूयते ॥ ३५ ॥

(तऽ) आवित्ते द्यावापृथिवी विश्वशम्भुवाविति । तदेनमाभ्यां द्यावापृथिवीभ्यामावेदयाति तेऽअस्मै सवमनुमन्येते ताभ्यामनुमतः सूयते॥३६॥

(तऽ) आवित्ताऽदितिरुरुशर्म्मेति । (ती) इयं वै पृथिव्यदितिस्तदेनमस्यै पृथिव्याऽआवेदयति साऽस्मै सवमनुमन्यते तयाऽनुमतः सूयते तद्याभ्य

---

"आवित्तऽइन्द्रो वृद्धश्रवाः"–इति । क्षत्रं वाऽइन्द्रः । तदेनं क्षत्रायावेदयति । तदस्मै सवमनुमन्यते । तेनानुमतः सूयते ॥ ३३ ॥

"आवित्तौ मित्रावरुणौ धृतव्रतौ"–इति । प्राणोदानौ वै मित्रावरुणौ, तदेनं प्राणोदानाभ्यामावेदयति । तावस्मै सवमनुमन्येते । ताभ्यामनुमतः सूयते ॥ ३४ ॥

"आवित्तः पूषा विश्ववेदाः"–इति । पशवो वै पूषा । तदेनं पशुभ्य आवेदयति । तेऽस्मै सवमनुमन्यन्ते । तैरनुमतः सूयते ॥ ३५ ॥

"आवित्ते द्यावापृथिवी विश्वशम्भुवौ"–इति । तदेनमाभ्यां द्यावापृथिवीभ्यामावेदयति । तेऽअस्मै सवमनुमन्येते । ताभ्यामनुमतः सूयते ॥ ३६ ॥

"अवित्ताऽदितिरुरुशर्मा"–( वा. सं. १० । ९ ) इति । इयं वै पृथिव्यदितिः । तदेनमस्यै

---

अवित्तऽइन्द्र इति । 'वृद्धश्रवाः' । "श्रव इत्यन्ननाम, श्रूयते इति श्रवः" इति हि यास्कः ( निरु १० । १।३ । ) वृद्धं प्रभूतमन्नं यस्य ॥ ३३ ॥

आवित्तौ मित्रावरुणाविति । 'धृतव्रतौ' व्रतमिति कर्मनाम (निघं. २।१।७) अवधीरितकर्माणौ ॥ ३४ ॥

आवित्तः पूषा इति । 'विश्ववेदाः' सर्वधनः ॥ ३५ ॥

आवित्ते द्यावापृथिवी इति । विश्वशम्भुवौ सर्वस्य जगतः सुखस्य भावयित्र्यौ ॥ ३६ ॥

आवित्ताऽदितिरिति । 'उरुशर्म्मा' प्रभूतं सुखं यस्याः, 'अदितिः' अखण्डनीया देवमाता ।

ऽएवैनमेतद्देवताभ्य ऽआवेदयति ता ऽअस्मै सवमनुमन्यन्ते ताभिरनुमतः सूयते ॥ ३७ ॥

इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् ॥ ५-३-२ ॥ ( ३. ५. ) ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

---

पृथिव्याऽआवेदयति । साऽस्मै सवमनुमन्यते तयाऽनुमतः सूयते । तद्याभ्य एवैनमेतद्देवताभ्य आवेदयति । ता अस्मै सवमनुमन्यन्ते । ताभिरनुमतः सूयते ॥ ३७ ॥

---

भूमिरेव काञ्चिन्मूर्त्तिं धृत्वा देवमाताऽदितिरित्युच्यते । एता देवताः सम्भूय प्रशंसति—तद्याभ्य एवैनमिति ॥ ३७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥ ( ५-३-५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमचमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे तृतीयाध्यायः समाप्तः॥५-३॥



# अथ पञ्चमकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम् ।

केशवस्य पुरुषस्य । लोहायसमास्यऽआविध्यत्यवेष्टा दन्दशूकाऽ इति सर्वान्वाऽएषु मृत्यूनतिमुच्यते सर्वान्वधान्यो राजसूयेन यजते तस्य जरैव मृत्युर्भवति तद्यो मृत्युर्यो वधस्तमेवैतदतिनयति यद्दन्दशूकान् ॥ १

(नु) अथ यत्केशवस्य पुरुषस्य । न वाऽएष स्त्री न पुमान्यत्केशवः पुरुषो यदह पुमांस्तेन न स्त्री यदु केशवस्तेनो न पुमान्नैतदयो न हिरण्यं यल्लोहायसं नैते क्रिमयो नाक्रिमयो यद्दन्दशूका ऽअथ यल्लोहायसं भवति लोहिता इव हि दन्दशूकास्तस्मात्केशवस्य पुरुषस्य ॥ २ ॥

---

केशवस्य पुरुषस्य लोहायसमास्यऽआविध्यति–"अवेष्टा दन्दशूकाः"–इति । सर्वान्वाऽएष मृत्यूनतिमुच्यते, सर्वान् वधान् यो राजसूयेन यजते । तस्य जरैव मृत्युर्भवति । तद्यो मृत्युः, यो वधः–तमेवैतदतिनयति यद्दन्दशूकान् ॥ १ ॥

अथ यत्केशवस्य पुरुषस्य । न वाऽएष स्त्री, न पुमान्, यत्केशवः पुरुषः । यदह पुमान्–तेन न स्त्री । यदु केशवः–तेनो न पुमान् । नैतदयो, न हिरण्यम्–यल्लोहायसम् । नैते क्रिमयो नाक्रिमयो–यद्दन्दशूकाः । अथ यल्लोहायसं भवति । लोहिता इव हि दन्दशूकाः । तस्मात्केशवस्य पुरुषस्य ॥ २ ॥

---

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

कात्यायनः–" अवेष्टा इति लोहायसमाविध्यति केशवास्ये सदोऽन्त उपविष्टाय "–( का. श्रौ. सू. १९ । १४१ ) इति । सदसो मध्ये उपविष्टस्य केशवस्य क्लीबस्य वदने " अवेष्टा " इति मन्त्रेण ताम्रमर्पयेत् । तदिदं विधत्ते–केशवस्येति । ' लोहायसं ' ताम्रम् ' आविध्यति ' अर्पयेत् । ' दन्दशूकाः दंशनशीलाः, मृत्यव इहाभिप्रेताः । ' अवेष्टाः ' अवपूर्वो यजिर्नाशार्थे वर्त्तते, विनाशिता इति ॥

व्याचष्टे–सर्वान् वा इति । ' यो राजसूयेन यजते ' स ' सर्वान् मृत्यून् ' सर्वान् परकृतान् ' बधान् ' अपि ' अतिमुच्यते ' अतिक्रामेत् । सुन्वतो ' मृत्युः ' नाम ' जरा ' देहविदारकत्वात् । तस्माद्दन्दशूकपदेन मृत्यवो वधाश्च विवक्षिताः, तान् केशववदने ताम्रनिधानेन नाशितवान् भवतीति तात्पर्यार्थः ॥ १ ॥

केशवलोहायसदन्दशूकानामन्तरालवर्त्तित्वं सम्यगुपपादयति–अथ यत्केशवस्येति । एतद्वाक्यं परिस्रुत्क्रयणे व्याख्यातम् । दन्दशूकानामप्यन्तरालवर्त्तित्वं दर्शयति–नैते क्रिमय इति । दन्दशूकानामपि लोहितत्वात् लोहितायसेन भाव्यमित्यर्थः ॥ २ ॥

( स्था ) अथैनं दिशः समारोहयति । प्राचीमारोह गायत्री त्वाऽवतु रथन्तरꣳ साम त्रिवृत्स्तोमो व्वसन्त ऽऋतुर्ब्रह्म द्रविणम् ॥ ३ ॥

दक्षिणामारोह । त्रिष्टुप्त्वाऽवतु बृहत्साम पञ्चदश स्तोमो ग्रीष्म ऽऋतुः क्षत्रं द्रविणम् ॥ ४ ॥

( म्प्र ) प्रतीचीमारोह । जगती त्वाऽवतु व्वैरूपꣳ साम सप्तदश स्तोमो व्वर्षाऽऋतुर्व्विड्द्रविणम् ॥ ५ ॥

---

( १ )–अथैनं दिशः समारोहयति–"प्राचीमारोह गायत्री त्वाऽवतु रथन्तरं साम त्रिवृत्स्तोमो वसन्त ऋतुर्ब्रह्म द्रविणम् । " ॥ ३ ॥

( २ )–" दक्षिणामारोह त्रिष्टुप्त्वाऽवतु बृहत्साम पञ्चदश स्तोमो ग्रीष्म ऋतुः क्षत्रं द्रविणम् " ॥ ४ ॥

( ३ )–" प्रतीचीमारोह जगती त्वाऽवतु वैरूपं साम सप्तदश स्तोमो वर्षा ऋतुः, विड् द्रविणम् " ॥ ५ ॥

---

सूत्रम्–"सुन्वन्तमाक्रमयन् दिशः प्राचीमारोहेति वाचयति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गमाक्रम्य"–( का. श्रौ. सू. १९ । १४२ । १४३ । ) इति अध्वर्युः प्राच्यादिकाः पञ्च दिशो यजमानमाक्रमयन् " प्राचीमारोह"–इत्यादिकांस्तत्तद्दिक्प्रतिपादकान् मन्त्रान् वाचयेदित्यर्थः । तत्र दिगाक्रमणं विधत्ते–अथैनं दिश इति । ' समारोहयति ' आक्रमेत् । प्राचीदिगाक्रमणमन्त्रं विधत्ते–प्राचीमारोहेति । हे यजमान ! ' प्राचीम् ' ' आरोह ' तथा स्थितं ' त्वा ' त्वां छन्दसां मध्ये गायत्री ' अवतु ' साम्नां मध्ये ' रथन्तरं ' साम रक्षतु, स्तोमानां मध्ये ' त्रिवृत् ' ऋङ्नवकात्मकः स्तोमः, ऋतूनां मध्ये वसन्ताख्य ऋतुः, ' ब्रह्म ' त्वदीयं ' द्रविणं, धनं रक्षतु; ब्रह्मरूपं धनं वा अवत्विति । एवमुत्तरत्रापि । " अभि त्वा शूर नोनुमः "–इत्यस्याम्–( सा. छ. आ. ३ । १ । ९१ ) ऋच्युत्पन्नं साम रथन्तरमित्युच्यते । " उपास्मै गायता नरः "–( सा. गा. आ. २ । १ । २१ । इति सूक्तत्रये आद्याभिस्तिसृभिर्मध्यमाभिरुत्तमाभिश्चोद्गातृगानेन त्रिरावृत्तस्त्रिवृत्स्तोमो भवति । ( तां. ब्रा. १ । २ । १–३ ) ॥ ३ ॥

दक्षिणदिगाक्रमणं विधत्ते–दक्षिणामारोहेति । पूर्ववद् योजनीयम् । " त्वामिद्धि हवामहे "--इत्यस्यामृचि ( सा. छ. ३ । १ । ५ । २ ) उत्पन्नं साम ' बृहत् ' ( सा. गा. अ. १ । १ । २७ ) पञ्चदशस्तोमकरणमेवम्--पूर्वोक्तत्रिवृत्स्तोमः खलु सूक्तत्रयनिष्पाद्यः; अन्ये तु स्तोमा एकैकेन त्र्यृचात्मकेन सूक्तेन निष्पाद्यन्ते । तत्र चायं क्रमः–प्रथमं पर्यायं पञ्चभिर्ऋग्भिर्गीयते । तद्यथा–प्रथमामृचं त्रिर्गायेत्, इतरे द्वे सकृत्–सकृत्; तृतीये तु उत्तमां त्रिर्गायेत्, आद्ये द्वे सकृत्–सकृदिति ( तां. ब्रा. १ । २ । ४ । ६ ) ' क्षत्रम् ' क्षत्रियः ॥ ४ ॥

प्रतीच्या मन्त्रं विधत्ते—प्रतीचीमारोहेति । " यद् द्याव इन्द्र ते शतम् "–इत्यस्यामृचि ( सा. छ.-आ. ३ । २ । ४ । ६ ) उत्पन्नं साम ' वैरूपम् ' ( सा गा. आ. १ । ३ । ६ ) सप्तदशस्तोमसम्पादनमेवम्—प्रथमपर्याये प्रथमामृचं त्रिर्गायेत्, द्वितीयपर्याये मध्यमां त्रिः, तृतीयपर्याये मध्यमामुत्तमाञ्च त्रिः, अन्याः सकृत्–सकृदिति ( तां. ब्रा. १ । २ । ७–१३ ) वैश्यो जातिरित्यर्थः ॥ ५ ॥

(मु) उदीचीमारोह । (हा) अनुष्टुप्त्वाऽवतु वैराजꣳ सामैकविꣳश स्तोमः शरदृतुः फलं द्रविणम् ॥ ६ ॥

(मू) ऊर्ध्वामारोह । पङ्क्तिस्त्वाऽवतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणमिति ॥ ७ ॥

तद्यदेनं दिशः समारोहयति । (त्व्र) ऋतूनामेवैतद्रूपमृतूनेवैनमेतत्संवत्सरꣳ समारोहयति स ऽऋतून्त्संवत्सरꣳ समारुह्य सर्वमेवेदमुपर्युपरि भवत्यर्वागेवास्मादिदꣳ सर्वं भवति ॥ ८ ॥

---

(४)–" उदीचीमारोहानुष्टुप्त्वाऽवतु । वैराजं साम, एकविंश स्तोमः, शरदृतुः फलं द्रविणम् " ॥ ६ ॥

(५)–" ऊर्ध्वामारोह पङ्क्तिस्त्वाऽवतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिंशौ स्तोमौ हेमन्तशिशिरावृतू वर्चो द्रविणम् "–इति ॥ ७ ॥

तद्यदेनं दिशः समारोहयति । ऋतूनामेवैतद्रूपम् । ऋतूनेवैनमेतत्सम्वत्सरं समारोहयति । स ऋतून्त्संवत्सरं समारुह्य सर्वमेवेदमुपर्युपरि भवति । अर्वागेवास्मादिदं सर्वं भवति ॥ ८ ॥

---

उदीच्या मन्त्रं विधत्ते–उदीचीमारोहेति । " पिबा सोममिन्द्र मन्दतु त्वा "–इत्यस्यामृचि ( सा. छ.-आ. ९ । १ । १ । ८ ) उत्पन्नं साम ' वैराजम् ' ( सा. गा. गे २ । २ । ३१ ) एकविंशतिस्तोमनिष्पत्तिप्रकारस्त्वेवम्--प्रथमे पर्याये उत्तमां सकृद् गायेत्, द्वितीये पर्याये मध्यमां सकृद् गायेत्, तृतीये पर्याये सर्वत्रेतरास्त्रिस्त्रिरित्येवं कृते एकविंशः स्तोमो भवति । ( तां. ब्रा. १ । २ । १४--१७ ) ॥ ६ ॥

ऊर्ध्वाया मन्त्रं विधत्ते–ऊर्ध्वामारोहेति । " प्रोष्वस्मै पुरोरथम् "–इत्यस्यामृचि ( सा. उ. आ. ९ । १ । १४ । १ ) उत्पन्नं साम ' शाक्वरम् ' ( सा. गा. उ. ५ । २ । ६ । ) " रेवतीर्नः सधमादः "–इत्यस्यामृचि ( सा. छ. आ. २ । २ । १ । ९ । ) उत्पन्नं साम ' रैवतम् ' ( सा. गा. आ. १।५।१७ ) । त्रिणवस्तोमनिष्पत्तिप्रकारस्त्वेवम्–प्रथमे पर्याये प्रथमां त्रिर्गायेत्, मध्यमां पञ्चकृत्वो गायेत्; उत्तमां सकृत्; द्वितीये पर्याये प्रथमां सकृत्, मध्यमां त्रिः, उत्तमां पञ्चकृत्वः, तृतीये पर्याये प्रथमां पञ्चकृत्वः, मध्यमां सकृत्, उत्तमां त्रिर्गायेदिति । सोऽयं त्रिरावृत्तनवसङ्ख्योपेतत्वात् ' त्रिणव '–नामकः स्तोमो भवति । ( तां. ब्रा. १ । ३ । १ । २ ) । त्रयस्त्रिंशस्तोमनिष्पत्तिप्रकार उच्यते–प्रथमपर्याये प्रथमां त्रिः कृत्वः, मध्यमां सप्तकृत्वः, उत्तमां सकृत्; द्वितीये प्रथमां सकृत्, मध्यमां त्रिः, उत्तमां सप्तकृत्वः; तृतीये पर्याये प्रथमां सप्तकृत्वः, मध्यमां सकृत्, उत्तमां त्रिः । सोऽयं त्रयस्त्रिंशस्तोमो नाम ( तां. ब्रा. १।३।३–७ ) त्रिषु मन्त्रेषु ब्राह्मणक्षत्रियवैश्या धनरक्षकत्वेन धनरूपत्वेन वा कथिताः, चतुर्थे उदुम्बरादिफलस्य तद्रूपत्वम्, पञ्चमे ' वर्चसः ' प्रख्यातशूरताकृतस्य तेजसो रक्षकत्वं तद्रूपत्वं चोक्तम् ॥ ७ ॥

दिशां समारोहणं समस्य संवत्सरारोहात्मना प्रशंसति–तद्यदेनमिति । पञ्चानां दिशां समारोहणम् ऋतुरूपत्वम् । ऋतूनामपि " हेमन्तशिशिरयोः समासेन " ( ऐ. ब्रा. १ । १ । १ ) पञ्चसङ्ख्यात्मकत्वात् संवत्सरा-

शार्दूलचर्म्मणो जघनार्द्धे । सीसं निहितं भवति तत्पदा प्रत्यस्यति प्रत्यस्तं नमुचेः शिरऽ इति नमुचिर्ह वै नामासुरऽ आस तमिन्द्रो निविव्याध तस्य पदा शिरोऽभितष्ठौ स यदभिष्ठितऽउदबाधत सऽ उच्छ्वङ्कस्तस्य पदा शिरः प्रचिच्छेद ततो रक्षः समभवत्तद्ध स्मैनमनुभाषते क गमिष्यसि क मे मोक्ष्यसऽइति ॥ ९ ॥

तत्सीसेनापजघान । तस्मात्सीसं मृदु सृतजवᳬं हि सर्व्वेण हि वीर्येणापजघान तस्माद्धिरण्यरूपᳬं सन्न कियच्चनार्हति सृतजवᳬं हि सर्व्वेण हि वीर्येणापजघान तद्वै स तत्राघ्ना रक्षाᳬंस्युपजघान तथोऽएवैष ऽएतन्नाघ्ना रक्षाᳬंस्यतोऽपहन्ति ॥ १० ॥

---

शार्दूलचर्मणो जघनार्द्धे सीसं निहितं भवति । तत् पदा प्रत्यस्यति–"प्रत्यस्तं नमुचेः शिरः" ( वा. सं. १०।१०-१४ ) इति । नमुचिर्ह वै नामासुर आस । तमिन्द्रो निविव्याध । तस्य पदा शिरोऽभितष्ठौ । स यदभिष्ठित उदबाधत–स उच्छ्वङ्कः । तस्य पदा शिरः प्रचिच्छेद । ततो रक्षः समभवत् । तद्ध स्मैनमनुभाषते क गमिष्यसि, क मे मोक्ष्यसऽइति ॥ ९ ॥

तत् सीसेनापजघान । तस्मात्सीसं मृदु । सृतजवं हि । सर्वेण हि वीर्येणापजघान । तस्माद्धि-

---

रोहणेन यजमानः ' सर्वमेवेदं ' जगत् ' उपर्युपरि भवति ' सर्वस्योपरि वर्त्तमानो भवति; कालस्य सर्वेषामुपरि भावात् । ' अस्मात् ' सुन्वतः सकाशात् ' इदं सर्वम् ' ' अर्वाक् ' अर्वाचीनम् अधस्तनं ' भवति ' इति ॥८॥

पूर्वं मैत्रावरुणधिष्ण्यस्य पुरस्तादभिहितानामभिषेचनीयपात्राणामग्रे आस्तृतस्य शार्दूलचर्मणोऽपरेऽन्ते निहितस्य सीसस्य प्रासनमिदानीं विधत्ते–शार्दूलेति । ' शार्दूलचर्म्मणः ' ' जघनार्द्धे ' अपरभागे ' सीसं निहितं भवति '। निहितमिति निष्ठाप्रयोगेण पूर्वं चर्म्मास्तरणसमये एव सीसनिधानं सम्पन्नमिति मन्तव्यम् । तथैव कात्यायनः–"मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्म्मास्तृणाति सोमस्य त्विषिरिति, अपरेऽन्ते सीसं निदधाति–( का. श्रौ. सू. १५।१२२।१२३ ) इति । अत्र तु " आक्रम्य पादेन सीसं निरस्यति प्रत्यस्तं "–इत्येतावदेवासूत्रयत् ( का. श्रौ. सू. १५।१०३ ) 'तत्' सीसं ' पदा ' पादेन " प्रत्यस्तम् "–इति मन्त्रेण निरस्येत् । ' नमुचेः ' असुरस्य 'शिरः' ' प्रत्यस्तं ' निरस्तमिति तस्यार्थः ॥

नमुचिशिरसः सीसेन निरासमाख्यायिकयोपपादयति–नमुचिर्ह वा इति । पूर्वमिन्द्रो नमुचिनाम्नोऽसुरस्य ' शिरः ' स्वेन पादेन ' अभितष्ठौ ' आचक्रमे । ' सः ' आक्रान्तः ' उदबाधत ' । ' उच्छ्वङ्कः ' उद्गतः श्वङ्कः । श्वङ्को नाम प्राणिविशेषः, श्वङ्कानीतशीर्ष्णीति ह्यन्यत्राम्नातम् ' तस्य' शिरः ' पदा ' स्वीयेन पादेन 'प्रचिच्छेद' छिन्नवान्, 'ततः' छिन्नशिराः 'रक्षः' ' राक्षसः समभवत् ' 'तत्' रक्षः 'एनं' घातकमिन्द्रम् ' अनुभाषते वदति,हे इन्द्र ! 'क गमिष्यसि' 'मे' मत्तः सकाशात् 'क मोक्ष्यसे' मुक्तो भविष्यसि 'इति' वदति ॥९॥

तत्सीसेनेति । 'तत्' रक्षः,एतद्वदन्तं राक्षसं ' सीसेन अपजघान ' । 'तस्मात्' 'सीसं' ' मृदु ' जातम् । ' हि ' यस्मात् ' सृतजवं गतवेगम् । तत्त्वमुपपादयति–सर्वेण हीति । तस्माद् गतसारमेतत् सीसं ' हिरण्य-

( न्त्यु ) अथैनꣳ शार्दूलचर्मारोहयति । सोमस्य त्विषिरसीति यत्र वै सोमऽ इन्द्रमत्युपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति तवेव मे त्विषिर्भूयादिति शार्दूलत्विषिमेवास्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति ॥ ११ ॥

( त्यु ) अथ रुक्ममधस्तादुपास्यति । मृत्योः पाहीत्यमृतमायुर्हिरण्यं तदमृतऽ आयुषि प्रतितिष्ठति ॥ १२ ॥

( त्यु ) अथ रुक्मः शतवितृण्णो वा भवति । नववितृण्णो वा स यदि

---

रण्यरूपं सन्न कियच्चनार्हति । सृतजवं हि । सर्वेण हि वीर्येणापजघान । तद्वै स तन्नाष्ट्रा रक्षांस्यपजघान । तथो एवैष एतन्नाष्ट्रा रक्षांस्यतोऽपहन्ति ॥ १० ॥

अथैनं शार्दूलचर्मारोहयति–"सोमस्य त्विषिरसि"–इति । यत्र वै सोम इन्द्रमत्यपवत स यत्ततः शार्दूलः समभवत्–तेन सोमस्य त्विषिः । तस्मादाह–सोमस्य त्विषिरसि इति । "तवेव मे त्विषिर्भूयात्"–( वा. सं. १०।१५ ) इति । शार्दूलत्विषिमेवास्मिन्नेतद्दधाति । तस्मादाह–तवेव मे त्विषिर्भूयादिति ॥ ११ ॥

अथ रुक्ममधस्तादुपास्यति–"मृत्योः पाहि"–इति । अमृतमायुर्हिरण्यम् । तदमृतऽआयुषि प्रतितिष्ठति ॥ १२ ॥

अथ रुक्मः शतवितृण्णो वा भवति, नववितृण्णो वा । स यदि शतवितृण्णः, शतायुर्वाऽअयं

---

रूपं रजतरूपं 'सत्' अपि 'कियच्चन' कियदपि मूल्यं 'नार्हति' न लभते । रजतस्यापि हिरण्यशब्दव्यवहारोऽस्ति; "यदश्रवशीयत तद्रजतं हिरण्यमभवत्" ( तै. सं. १ ।५।१।१–२) इति तैत्तिरीयश्रुतेः । अतः पूर्वं रक्षसः सीसेन हतत्वादिदानीमपि सीसप्रासनेन रक्षांसि हतानि भवन्तीत्यर्थः ॥ १० ॥

विधत्ते–अथैनमिति[1] । 'आरोहयति' आक्रामयति । सोमस्य त्विषिरित्यादि । पूर्वं व्याख्यातम् ( श. प. ब्रा. ५।३।५।३ ) ॥ ११ ॥

विधत्ते–अथ रुक्ममिति । 'रुक्मं[2]' हिरण्यम्–'अधस्तात्' अधःप्रदेशे 'उपास्यति' निदध्यात् । अत्र सूत्रम्–" रुक्ममधःपदं कुरुते मृत्योरिति " का. श्रौ. सू. १५ । १४५ ) हे रुक्म !' मृत्योः' सकाशात् 'पाहि' पालय; एनमित्यर्थसिद्धम् । रुक्मस्य मृत्युपरिहारकत्वमुपपादयति–अमृतमिति । हिरण्यममृतमायुः; हिरण्यदानेन अपमृत्योः परिहर्तुं शक्यत्वात् आयुर्दत्वम् । तस्मात् असौ यजमानः पादस्याधःप्रदेशे रुक्मनिधानेन आयुषि एव प्रतिष्ठितवान् भवतीत्यर्थः ॥ १२ ॥

शिरसि निधीयमानस्य रुक्मस्य कञ्चिद्गुणं विधत्ते–अथ रुक्ममिति[3] । 'शतवितृण्णः' शतच्छिद्रः,

---

१–व्याघ्रचर्मारोहयति सोमस्य त्विषिरिति । का. श्रौ. सू. १५।१४४ । २–'रुक्मम्' आभरणविशेषः ' इति कर्कः ।
३–शिरसि च नवतर्द्मं शततर्द्मं त्वोजोसीति । का० श्रौ० सू० १५ । १४६ ।

शतवितृण्णः शतायुर्वाऽअयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्वु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नववितृण्णः ॥ १३ ॥

( स्तु ) तमुपरिष्टाच्छीर्ष्णो निदधाति । ( त्यो ) ओजोऽसि सहोऽस्यमृतमसीत्यमृतमायुर्हिरण्यं तदस्मिन्नमृतमायुर्दधाति तद्यद्रुक्माऽउभयतो भवतोऽमृतमायुर्हिरण्यं तदमृतेनैवैनमेतदायुषोभयतः परिबृꣳहति तस्माद्रुक्माऽउभयतो भवतः ॥ १४ ॥

(तोऽथ) अथ बाहूऽउदगृह्णाति । हिरण्यरूपाऽउषसो विरोकऽउभाविन्द्राऽउदिथः सूर्यश्च ॥ आरोहतं वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिं चेति बाहू वै मित्रावरुणौ पुरुषो गर्तस्तस्मादाहारोहतं वरुण मित्र गर्तमिति ततश्चक्षाथामदितिं दितिं चेति ततः पश्यतꣳ स्वं चारणं चेत्येवैतदाह ॥ १५ ॥

---

पुरुषः—शततेजाः शतवीर्यः । तस्माच्छतवितृण्णः । यद्वु नववितृण्णः—नवेमे पुरुषे प्राणाः—तस्मान्नववितृण्णः ॥ १३ ॥

तमुपरिष्टाच्छीर्ष्णो निदधाति—"ओजोऽसि सहोऽस्यमृतमसि"—(वा० सं० १०।१५)इति । अमृतमायुर्हिरण्यम् । तदस्मिन्नमृतमायुर्दधाति । तद् यद्रुक्माऽउभयतो भवतः—अमृतमायुर्हिरण्यम् । तदमृतेनैवैनमेतदायुषोभयतः परिबृंहति । तस्माद्रुक्माऽउभयतो भवतः ॥ १४ ॥

अथ बाहूऽउद्गृह्णाति—" हिरण्यरूपाऽउषसो विरोकऽउभाविन्द्राऽउदिथः सूर्यश्च । आरोहतं वरुण ! मित्र ! गर्तम्, ततश्चक्षाथाम्—अदितिम्, दितिं च" इति । बाहू वै मित्रा-

---

' नववितृण्णः ' नवच्छिद्रः 'वा' भवेत् । तदुभयं क्रमेणायुःप्राणात्मना प्रशंसति—स यदि शतेति । आयुरनुसारेण तेजोवीर्ययोरपि शतसंख्याकत्वं द्रष्टव्यम् ॥ १३ ॥

तस्य शिरसि निधानं विधत्ते—तमुपरिष्टादिति । ' शीर्ष्णः ' इति षष्ठी । ' ओजः ' इति मनोबलम् । ' सहः ' इति बाह्येन्द्रियबलम् । ' अमृतम् ' इति प्राणबलम् ; "प्राणो वा अमृतम् " इति श्रुतेः । हे रुक्म ! तत् त्रितयरूपोऽसीति मन्त्रार्थः । अधस्तादुपरिष्टाच्च रुक्मनिधानमायुःप्रवृद्धिरूपेण प्रशंसति—तद्यद्रुक्मा उभयत इति । रुक्मशब्दात् प्रथमाद्विवचनस्यावादेशे कृते " लोपः शाकल्यस्य " ( पा. सू. ८ ।३ १९ ) इति वकारलोपः । उभयतो रुक्मनिधानेन ' एनं ' यजमानम् अमृतरूपेण ' आयुषा ' ' उभयतः ' ' परिबृंहति ' संवर्द्धितवान् भवति ॥ १४ ॥

विधत्ते—अथ बाहू इति । ' उद्गृह्णाति ' यजमानः ऊर्द्ध्वौ प्रसारितौ कुर्यात् । अत्र " मित्रोऽसि वरुणोऽसि "—इत्ययमेव मन्त्रो बाहूद्ग्रहणे विधास्यते, तत्र पूर्वपक्षत्वेन मन्त्रं पठति—हिरण्यरूपाविति । अत एव

नैतेनोद्गृह्णीयात् । ( न्मि ) मित्रोऽसि व्वरुणोऽसीत्येवोद्गृह्णीयाद्बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मान्मित्रोऽसि व्वरुणोऽसीत्येवोद्गृह्णीयात् ॥ १६ ॥

( त्त ) तद्यदेनमूर्ध्वबाहुमभिषिञ्चति । व्वीर्यं वाऽएतद्राजन्यस्य यद्बाहू वीर्यं वाऽएतदपाᳬं रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति नेन्मऽइदं व्वीर्यं व्वीर्यमपाᳬं रसः सम्भृतो बाहू व्विनादिति तस्मादेनमूर्ध्वबाहुमभिषिञ्चति ॥ १७ ॥

इति तृतीयप्रपाठके तृतीयं ब्राह्मणम् ॥५।३।३॥ ( ४।१ ) ॥

---

वरुणौ, पुरुषो गर्तः । तस्मादाह--आरोहतं वरुण मित्र गर्तमिति । ततश्चक्षाथामदितिं दितिं चेति । ततः पश्यतं स्वं चारणश्चेत्येवैतदाह ॥ १५ ॥

नैतेनोद्गृह्णीयात् । " मित्रोऽसि वरुणोऽसि "–( वा० सं० १० । १६ । ) इत्येवोद्गृह्णीयात् । बाहू वै मित्रावरुणौ । बाहुभ्यां वै राजन्यो मैत्रावरुणः । तस्मान्मित्रोऽसि वरुणोऽसीत्येवोद्गृह्णीयात् ॥ १६॥

तद् यदेनमूर्ध्वबाहुमभिषिञ्चति । वीर्यं वाऽएतद्राजन्यस्य यद्बाहू । वीर्यं वाऽएतदपां रसः सम्भृतो

---

कात्यायनो विकल्पेन सूत्रयामास–" बाहू उद्गृह्णाति हिरण्यरूपा इति मित्रोऽसि वरुणोऽसीति वा "–( का. श्रौ. सू. १५।१४७।१४८ ) इति । हिरण्येति मन्त्रस्य अयमाध्यात्मिकोऽर्थः । हे वरुण ! हे मित्र ! बाहुद्वयस्य पृथक् सम्बुद्धिः । ' हिरण्यरूपौ ' हितरमणीयरूपौ, हिरण्यस्वरूपौ वा सालङ्कारत्वात् । ' इन्द्रौ ' परमैश्वर्यसम्पन्नौ उभौ युवाम् ' उषसः ' ' विरोके ' विरोचने ' उदिथः ' 'सूर्यश्च' उद्गतः । एतेर्लटि मध्यमद्विवचने रूपम् । हे मित्रावरुणौ ! बाहूरूपौ ' गर्तं ' पुरुषम् 'आरोहतम्' पुरुषस्योपरि भवतमित्यर्थः । ' ततः ' अनन्तरम् ' अदितिम् ' अखण्डनीयाम्, पृथिवीरूपां स्वीयां प्रजां ' चक्षाथाम ' पश्येताम् । ' दितिं ' खण्डनीयाम्, परामेताञ्च । तस्य तद्बाहुद्वयमेव स्वबलं रक्षति, परबलं हन्ति, अत एवमुच्यत इत्यध्यात्मविषयोऽर्थः ॥

आधिदैविके त्वयं विशेषः–' गर्तः ' रथः; हे ' मित्रावरुणौ ! ' हे देवते ! रथम् 'आरोहतम्' । ' ततः ' रथारोहणानन्तरम् ' अदितिम् ' अदीनं समर्थं विहितस्य कर्मणः कर्तारं पुरुषं प्रपश्यतम्, 'दितिं' दीनं विवेकरहितमनुष्ठातारं च पश्यतमिति । तमिमं मन्त्रं बाहुद्वयपरत्वेन व्याचष्टे–बाहू वै मित्रेति । अन्तिमपादस्यार्थमाह–ततः पश्यतमिति । ' स्वं ' स्वीयम् ' अरणम् ' अरमणीयम्, परं च पश्यतमिति । ' अदिति ' शब्दस्य स्वोऽर्थः ' दिति ' शब्दस्य परोऽर्थः इति विभागः ॥ १५ ॥

एतेन मन्त्रेणोद्ग्रहणं दूषयति–नैतेनेति । स्वमतमाह–मित्रोऽसीति । एवकारोऽन्यमन्त्रनिवृत्त्यर्थः । मन्त्रस्तु पूर्वं व्याख्यातः । तमिमं मन्त्रं प्रशंसति बाहू वै मित्रेति ॥ १६ ॥

एवमूर्ध्वबाहुत्वेनैव स्थितस्य यजमानस्याभिषेको विधास्यते, तमिमं पुनः प्रशंसति–तद्यदेनमिति । एवकारो

तं वै प्राञ्चं तिष्ठन्तमभिषिञ्चति । पुरस्ताद्ब्राह्मणोऽभिषिञ्चत्यध्वर्युर्वा यो वाऽस्य पुरोहितो भवति पश्चादितरे ॥ १ ॥

सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति । वीर्येणैतदाहाग्नेर्भ्राजसेति वीर्येणैवैतदाह सूर्यस्य वर्चसेति वीर्येणैवैतदाहेन्द्रस्येन्द्रियेणेति वीर्येणैवैतदाह क्षत्राणां क्षत्रपतिरेधीति राज्ञामधिराजऽएधीत्येवैतदाहाति दिद्यून्पाहीतीषवो वै दिद्युव ऽइषुवधमेवैनमेतदतिनयति तस्मादाहाति दिद्यून्पाहीति ॥ २ ॥

---

भवति—येनैनमेतदभिषिञ्चति । नेन्मऽइदं वीर्यम् । वीर्यमपां रसः सम्भृतो बाहू क्लिनादिति । तस्मादेनमूर्ध्वबाहुमभिषिञ्चति ॥ १७ ॥

तं वै प्राञ्चं तिष्ठन्तमभिषिञ्चति । पुरस्ताद्ब्राह्मणोऽभिषिञ्चति, अध्वर्युर्वा, यो वाऽस्य पुरोहितो भवति । पश्चादितरे ॥ १ ॥

" सोमस्य त्वा द्युम्नेनाभिषिञ्चामि "—इति । वीर्येणैतदाह । " अग्नेर्भ्राजसा "—इति ।

---

भिन्नक्रमः; ऊद्‌र्ध्वबाहुमेवेति योजना । राजन्यस्य बाहू एव वीर्ये । अभिषेचनीयपात्रेषु व्यासिक्तानामपां रसोऽपि वीर्यम्; वीर्योपादकत्वात् । अतः तेन रसेनाभिषेके ऊद्‌र्ध्वबाहुत्वमेव युक्तमित्यर्थः । तस्य कारणमाह—नेन्म इति । ' मे ' मम ' इदं वीर्यं ' वीर्यरूपौ ' बाहू ' कर्म, वीर्यरूपः ' अपां रसः ' ' नेत् क्लिनात् ' न वर्जयेत् ' इति ' अतो हेतोः ' ऊद्‌र्ध्वबाहुम् ' एव अभिषिञ्चेदित्यर्थः ॥ १७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे चतुर्थोऽध्याये प्रथमं ब्राह्मणम् ॥ ५ । ४ । १ ) ॥

अथ द्वितीयब्राह्मणेऽभिषेक उच्यते । अत्र कात्यायनः—" स्थितं प्राञ्चमभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात् पालाशेन प्रथमम्, पश्चादितरे द्वितीयेन, स्वस्तृतीयेन, मित्र्यो राजन्यो वैश्यश्चतुर्थेन, सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम्, अभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात्, क्षत्राणां क्षत्रपतिरेधीति चेममुष्य "—( का. श्रौ. सू. १५ । १४९–१५२ ) ऊद्‌र्ध्वबाहुत्वेन स्थितं प्राङ्मुखं यजमानं पुरोहिताध्वर्य्वोरन्यतरो ब्राह्मणः सुन्वतः पुरोदेशे स्थित्वा पालाशेन पात्रेणाभिषिञ्चेत् । इतरे स्वादयस्त्रयोऽभिषिच्यमानस्य पश्चाद्भागे स्थित्वा स्वस्वपात्रेणाभिषिञ्चेयुः । तत्र " सोमस्य "—इत्यादयश्चत्वारो मन्त्राश्चतुर्णाम् । तत्राभिषिञ्चामीति प्रथममन्त्रगतस्य पदस्योत्तरेषु त्रिष्वनुषङ्गः; साकाङ्क्षत्वान्मन्त्राणाम् । " क्षत्राणां क्षत्रपतिरेधि "—इति च सर्वत्रानुषज्यते, " इमं देवा असपत्नम् "—इत्येष मन्त्रश्च । तत्र 'इमम्' 'अमुष्य'—इति स्थाने यष्टुस्तत्पितुश्च नाम गृह्णीयादिति सूत्रार्थः ॥

तमिमं क्रमेण विधत्ते—तं वै प्राञ्चमिति । तच्छब्दः प्रकृतवाची, उद्‌र्ध्वबाहुमित्यर्थः । ' प्राञ्चं ' प्राङ्मुखं ' तिष्ठन्तम् ' अभिषिञ्चेत्; ' पुरस्ताद् ' अभिषिच्यमानस्य पुरोदेशे ' ब्राह्मणः ' अभिषिञ्चेत्, ' इतरे ' त्रयः ' पश्चात् ' सुन्वतः पश्चिमभागे स्थित्वा अभिषिञ्चेयुः ॥ १ ॥

तत्र मन्त्रान् सार्थवादं विधत्ते—सोमस्येति । हे यजमान ! ' त्वा ' त्वां ' सोमस्य ' ' द्युम्नेन ' द्योतन-

(ती) इमं देवाः । (ऽ) असपत्नꣳ सुवध्वमितीमं देवा ऽअभ्रातृव्यꣳ सुवध्वमित्येवैतदाह महते क्षत्राय महते ज्यैष्ठ्यायेति नात्र तिरोहितमिवास्ति महते जानराज्यायेति महते जनानाꣳ राज्यायेत्येवैतदाहेन्द्रस्येन्द्रियायेति वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेतीममुष्य पुत्रममुष्यै पुत्रमिति तद्यदेवास्य जन्म तत ऽएवैतदाहास्यै विश ऽइति यस्यै विशो राजा भवत्येष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳ राजेति तदस्मा ऽइदꣳ सर्वमाद्यं करोति ब्राह्मणमेवापोद्धरति तस्माद्ब्राह्मणोऽनाद्यः सोमराजा हि भवति ॥ ३ ॥ [ शतम् ३२०० ]

---

वीर्येणैवैतदाह । " सूर्यस्य वर्चसा "-इति । वीर्येणैवैतदाह । " इन्द्रस्येन्द्रियेण " इति । वीर्येणैवैतदाह । " क्षत्राणां क्षत्रपतिरेधि "-इति । राज्ञामधिराज एधीत्येवैतदाह । " अति दिद्यून्पाहि "-( वा. सं. १० । १७ ) इति । इषवो वै दिद्यवः । इषुवधमेवैनमेतदतिनयति । तस्मादाह-अति दिद्यून्पाहीति ॥ २ ॥

" इमं देवा असपत्नं सुवध्वम् "-इति । इमं देवा अभ्रातृव्यं सुवध्वमित्येवैतदाह । " महते क्षत्राय, महते ज्यैष्ठ्याय "-इति । नात्र तिरोहितमिवास्ति । " महते जानराज्याय "-इति । महते जनानां राज्यायेत्येवैतदाह । " इन्द्रस्येन्द्रियाय "-इति । वीर्यायेत्येवैतदाह-यदाह इन्द्रस्येन्द्रियायेति । " इममुष्य पुत्रममुष्यै पुत्रम् "-इति । तद्यदेवास्य जन्म तत एवैतदाह । " अस्यै विशः "-इति । यस्यै विशो राजा भवति । " एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा "-( वा० सं० १० । १८ ) इति । तद् अस्माऽइदं सर्वमाद्यं करोति । ब्राह्मणमेवापोद्धरति । तस्माद्ब्राह्मणोऽनाद्यः । सोमराजा हि भवति ॥ ३ ॥

---

शीलया दीप्त्या अभिषिञ्चामीत्येको मन्त्रः । " अग्नेर्भ्राजसा "-इत्यपरः । अभिषिञ्चामीत्यनुषज्यते; वाक्यस्य साकाङ्क्षत्वात् । " सूर्यस्य वर्चसा " इति तृतीयः । ' वर्चसा ' रोचिषा । "इन्द्रस्येन्द्रियेण"-इति चतुर्थः । 'इन्द्रियेण' वीर्येण । सर्वशेषं मन्त्रभागद्वयमर्थपुरस्सरमाह-क्षत्राणामिति । ' क्षत्राणां ' बहूनां क्षत्रियाणां राज्ञां वा ' क्षत्रपतिः ' क्षत्रियस्य पतिः ' एधि ' भव । आवृत्तिवृत्तिभ्यां स्वामित्वं बहुत्वं च विवक्ष्यते । ' दिद्यून् ' बाधकानिषून् ' अति '-क्रम्य ' पाहि ' रक्ष, इषुभिर्न बाधो भवेदित्यर्थः ॥ २ ॥

सर्वत्रानुषज्यमानं मन्त्रान्तं सार्थवादं विधत्ते-इमं देवा इति । अयं मन्त्रः पूर्वमेवार्थवादवाक्येन च सह विस्पष्टं व्याख्यातः ( श. प. ५।३।३।१२ भा. ) ॥ ३ ॥

(त्यु) अथैतमभिषेकम् । (ङ्कृ)कृष्णविषाणयाऽनुविमृष्टे व्वीर्यं वाऽएतदपाᳬं रसः सम्भृतो भवति येनैनमेतदभिषिञ्चतीदं मे व्वीर्यᳬं सर्व्वमात्मानमुपस्पृशादिति तस्माद्वाऽअनुविमृष्टे ॥ ४ ॥

सोऽनुविमृष्टे। प्र पुर्वतस्य व्वृषभस्य पृष्ठादिति यथाऽयं पर्वतोऽतिष्ठावा यथऽर्षभः पशूनतिष्ठावैवं वाऽएष इदᳬं सर्वमतितिष्ठत्यर्व्वागेवास्मादिदᳬं सर्व्वं भवति यो राजसूयेन यजते तस्मादाह प्र पर्वतस्य व्वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिचऽ इयानाः । ता आववृत्रन्नधरागुदक्ता अहिं बुध्न्यमनुरीयमाणाऽ इति ॥ ५ ॥

---

अथैतमभिषेकं कृष्णविषाणयाऽनुविमृष्टे । वीर्यं वाऽएतदपां रसः सम्भृतो भवति—येनैनमेतदभिषिञ्चति । इदं मे वीर्यं सर्वमात्मानमुपस्पृशादिति । तस्माद्वाऽअनुविमृष्टे ॥ ४ ॥

सोऽनु विमृष्टे—" प्र पर्वतस्य वृषभस्य पृष्ठात् "—इति। यथाऽयं पर्वतोऽतिष्ठावा, यथऽर्षभः पशूनतिष्ठावा । एवं वा एष इदं सर्वमतितिष्ठति । अर्वागेवास्मादिदं सर्वं भवति यो राजसूयेन यजते । तस्मादाह—प्र पर्वतस्य वृषभस्य पृष्ठात् । " नावश्चरन्ति स्वसिच इयानाः, ता आववृत्रन्नधरागुदक्ता अहिं बुध्न्यमनुरीयमाणाः "—इति ॥ ५ ॥

---

विधत्ते—अथैतमभिषेकमिति । एवं क्रियमाणम् ' अभिषेकं ' स्वदेहपतितमभिषेकजलमित्यर्थः । ' कृष्णविषाणया ' कण्डूयन्या ' अनुविमृष्टे ' प्रलिम्पति यजमानः । तमिमं वीर्यसम्पादनरूपेण प्रशंसति—वीर्यं वा इति । इदमभिषेकजलरूपं ' वीर्यं ' ' मे ' मम ' सर्वम् आत्मानम् ' ' उपस्पृशात् ' उपस्पृशतु ' इति ' बुद्ध्या विमार्जनं कुर्यादित्यर्थः ॥ ४ ॥

तत्र मन्त्रं विधत्ते—सोऽनुविमृष्टे प्र पर्वतस्येति[1] । या आपो 'वृषभस्य' वर्षणक्षमस्य 'पर्वतस्य' । पर्वत इति मेघनाम ( निघं० १ । १० । ९ ) । मेघस्य ' पृष्ठात् ' ' नावः ' नाव्या इत्यर्थः, ' प्रचरन्ति ' । कीदृश्यः ' स्वसिचः ' स्वमात्मीयं यजमानशरीरं सिञ्चन्तीति स्वसिचः । ' इयानाः ' गच्छन्त्यः, बाहुल्येन सर्वत्र प्रवहन्त्यः; ' ताः ' आपः ' उदक्ताः ' उत्क्षिप्ताः । उत्पूर्वस्याञ्चतेर्निष्ठायां रूपम् । इदानीम् ' अधराग् ' अधोभागे ' अहिम् ' आरभ्येति; अहिरुत्तमाङ्गम् । ' बुध्न्यम् ' बुध्नस्य पादस्याग्रभागो बुध्न्यः, तम् शिरःप्रभृति पादपर्यन्तम् ' अनु ' अनुक्रमेण ' रीयमाणाः ' लेपरूपेण स्रवन्त्यः. ' आववृत्रन् ' यजमानशरीरं सम्यगावृत्य स्थिताः, तिष्ठन्तीति इत्याध्यात्मिकोऽर्थः । आधिदैविकस्तु ' पर्वतः ' आदित्यः, ' वृषभस्य ' ' पृष्ठात् ' ' इयानाः ' निर्गच्छन्त्यः, ' नावः ' नाव्या आपः ' चरन्ति ' । तथा च श्रुतिः—" नाव्या उ एव यजुष्मत्य इष्टकाः " इत्युपक्रम्य, "षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या अभिक्षरन्ति"—(श. प. ब्रा. १०।५।४।१४ ) इति । ' ताः ' प्रावृट्काले 'आववृत्रन्' ' आवर्त्तन्ते; ' अधराग् ' आदित्यमण्डलाद् भूमिं प्रति अधोगमन-

---

१—कण्डूयन्याऽभिषेकेण प्रलिंपते प्र पर्वतस्येति । का. श्रौ. सू. १५ । ६ । १ ।

( त्यु ) अथैनमन्तरेव शार्दूलचर्मणि । व्विष्णुक्रमान्क्रमयति व्विष्णोर्व्विक्रमणमसि व्विष्णोर्व्विक्रान्तमसि व्विष्णोः क्रान्तमसीतीमे वै लोका व्विष्णोर्व्विक्रमणं व्विष्णोर्व्विक्रान्तं व्विष्णोः क्रान्तं तदिमानेव लोकान्त्समारुह्य सर्व्वमेवेदमुपर्युपरि भवत्यर्व्वागेस्मादिदᳬं सर्व्वं भवति ॥ ६ ॥

(त्यु) अथ ब्राह्मणस्य पात्रे । सᳬंस्रवान्त्समवनयति तद्ब्राह्मणᳬं राजानमनु यशः करोति तस्माद्ब्राह्मणो राजानमनुयशः ॥ ७ ॥

---

अथैनमन्तरेव शार्दूलचर्मणि विष्णुक्रमान् क्रमयति–" विष्णोर्विक्रमणमसि विष्णोर्विक्रान्तमसि विष्णोः क्रान्तमसि "–( वा. सं. १० । १९ ) इति । इमे वै लोका विष्णोर्विक्रमणम्, विष्णोर्विक्रान्तम्, विष्णोः क्रान्तम् । तदिमानेव लोकान्त्समारुह्य सर्वमेवेदमुपर्युपरि भवति । अर्वागेवास्मादिदं सर्वं भवति ॥ ६ ॥

अथ ब्राह्मणस्य पात्रे संस्रवान्त्समवनयति । तद्ब्राह्मणं राजानमनु यशः करोति । तस्माद्ब्राह्मणो राजानमनु यशः ॥ ७ ॥

---

शीलाः, ' उदक् ' 'ताः' पूर्वं भूमेः सकाशात् आदित्यमण्डलं प्रति ' उदक् ' ऊर्ध्वगमनशीलाः ' अहिम् ' मेघम् ' बुध्नम्' अन्तरिक्षम्, तत्र भवम् 'बुध्न्यं' मध्यमस्थानम् 'अनुरीयमाणाः' अनुप्रविश्य तस्मान्निर्गच्छन्त्यः, भूमिं प्राप्नुवन्तीति शेषः ॥

मन्त्रस्य प्रथमपादस्य तात्पर्यमाह–यथाऽयं पर्वत इति । ' यथा पर्वतः ' ' अतिष्ठावा ' सर्वमतिक्रम्य स्थाता । तिष्ठतेः " आतो मनिन् "–इति ( पा. सू. ३ । २ । ७४ ) इत्यादिना वनिप् । ' यथा ऋषभः ' पशूनतिक्रम्य तिष्ठति, एवमेष राजा तिष्ठति, सर्वस्योपरि भवति । ' अस्माद् ' यजमानात् ' इदं ' सर्वम् ' अर्वाक् ' भवति ' तस्मात् ' प्रपर्वतस्येति पाठः प्रशस्त इत्यर्थः ॥ ९ ॥

विधत्ते–अथैनमिति[1] । शार्दूलचर्ममध्ये एव यजमानं त्रीन् विष्णुक्रमान् क्रमयेदध्वर्युः । तत्र मन्त्रत्रयं विधत्ते–विष्णोरिति । एकैकस्य क्रमणस्यैकैको मन्त्र इत्यर्थः । ' विष्णोः ' यज्ञस्य यच्च ' विक्रमणं ' यच्च ' विक्रान्तं ' यच्च ' क्रान्तम्, ' तत्सर्वं त्वमसीति योजनीयाः । क्रमणत्रयं लोकत्रयात्मना प्रशंसति–इमे वै लोका इति ॥ ६ ॥

अथ स्वमित्रवैश्यपात्रत्रयशेषाणां पालाशपात्रे व्यासेचनं विधत्ते–अथ ब्राह्मणस्येति[2] । तद् ब्राह्मणमिति । ' तत् ' तेन व्यवनयनेन ' राजानम् ' ' अनु ' पश्चाद् ' ब्राह्मणं ' ' यशः ' यशस्विनं कृतवान् भवति । लोके हि राजा कीर्तिमान्, ब्राह्मणोऽपि तदनन्तरं कीर्तिमानित्युच्यते ॥ ७ ॥

---

१–चर्मणि त्रिर्विक्रमयति व्विष्णोरिति प्रतिमंत्रम् । का. श्रौ. सू. १५ । १६२ । २–पालाशे शेषानासिच्य । का० श्रौ० सू० १५ । १६३ ।

( स्तु ) तद्योऽस्य पुत्रः प्रियतमो भवति । तस्माऽएतत्पात्रं प्रयच्छतीदं मेऽयं वीर्यं पुत्रोऽनुसंतनवदिति ॥ ८ ॥

( त्यु ) अथ प्रतिपरेत्य गार्हपत्यमन्वारब्धे जुहोति । प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव ॥ यत्कामास्ते जुहुमस्तन्नोऽअस्त्वयममुष्य पितेति तद्यः पुत्रस्तं पितरं करोति यः पिता तं पुत्रं तदेनयोर्वीर्ये व्यतिषजत्यसावस्य पितेति तद्यः पिता तं पितरं करोति यः पुत्रस्तं पुत्रं तदेनयोर्वीर्ये व्यतिषज्य पुनरेव यथायथं करोति वयꣳ स्याम पतयो रयीणाꣳ स्वाहेत्याशीरेवैषैतस्य कर्मण ऽआशिषमेवैतदाशास्ते ॥ ९ ॥

---

तद्योऽस्य पुत्रः प्रियतमो भवति । तस्माऽएतत्पात्रं प्रयच्छति–" इदं मेऽयं वीर्यं पुत्रोऽनुसंतनवत "–इति ॥ ८ ॥

अथ प्रतिपरेत्य गार्हपत्यमन्वारब्धे जुहोति–"प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव । यत्कामास्ते जुहुमः; तन्नोऽअस्त्वयममुष्य पिता"–इति । तद् यः पुत्रस्तं पितरं करोति । यः पिता तं पुत्रम् । तदेनयोर्वीर्ये व्यतिषजति । "असावस्य पिता"–इति । तद् यः पिता, तं पितरं करोति । यः पुत्रस्तं पुत्रम् । तदेनयोर्वीर्ये व्यतिषज्य पुनरेव यथायथं करोति । " वयं स्याम पतयो रयीणां स्वाहा "–इति । आशीरेवैषैतस्य कर्मणः । आशिषमेवैतदाशास्ते ॥ ९ ॥

---

विधत्ते–तद् योऽस्येति[1] । ' एतत् ' संस्रवैः प्रासिक्तं ब्राह्मणस्य पालाशपात्रं राज्ञः प्रियतमाय पुत्राय प्रयच्छेत् । प्रदाने ब्राह्मणोक्तं मन्त्रमाह–इदं म इति । अत एव कात्यायनो मन्त्रं पपाठ–' पुत्राय प्रयच्छति प्रियतमायेदं मे कर्मेदं वीर्यं पुत्रोऽनुसन्तनोतु" ( का. श्रौ. सू. १९।१६३ ) ' अयं ' मे पुत्रः, 'मे' मम वीर्यरूपं कर्म ' अनुसन्तनोतु ' विस्तारयत्विति ॥ ८ ॥

विधत्ते–अथ प्रतीति । 'गार्हपत्यं प्रतिपरेत्य'–प्रत्यङ्मुखो गत्वा ' अन्वारब्धे ' प्रकृतत्वात्पुत्र इति गम्यते । अत्र सूत्रम् ' शालाद्वार्ये जुहोति पुत्रोऽन्वारब्धे प्रजापत इति ' ( का. श्रौ. सू. १९।१६४ ) इति । मन्त्रस्यार्थः–हे ' प्रजापते ! ' ' त्वदन्यः 'कोऽपि पुरुषः उत्पन्नानि तानि 'एतानि' 'विश्वा' विश्वानि 'न परि बभूव' 'परिभवितुं' व्याप्तुं समर्थोऽभूत् । परिपूर्वो भवतिर्व्याप्त्यर्थे वर्त्तते । अतस्तेन वयं ' यत्कामा जुहुमः, ' तत् ' फलमस्माकम् ' अस्तु ' । वयं धनानां पतयः स्यामेति । अत्र तृतीयपादान्ते ' अयम् अमुष्य पिता', ' असौ अस्य पिता' 'इति' मन्त्रभाग आम्नातः । ' अयं ' पुत्रः अभिमन्युः, ' अमुष्य ' अर्जुनस्य ' पिता ' ' इति ' पूर्वं पितृशब्दं पुत्रे कृत्वा ब्रूयात्, पश्चात् ' असौ पिता ' अर्जुनः 'अस्य' पुत्रस्याभिमन्योः ' पिता ' इति'यथायथं' ब्रूयादित्यर्थः । अत एव कात्यायनः–" प्रजापत इति पुत्रयजमानयोर्नाम गृह्णाति पितृशब्दं पुत्रे कृत्वा

---

१–पुत्राय प्रयच्छति । का. श्रौ. सू. १५ । १६३ ।

( स्तुेऽथ ) अथ युऽ एष सꣳस्रवोऽतिरिक्तो भवति । तमाग्नीध्रीये जुहोत्यतिरिक्तो वाऽएष सꣳस्रवो भवत्यतिरिक्तऽ आग्नीध्रीयो गार्हपत्ये हवीꣳषि श्रपयन्त्याहवनीये जुह्वत्यथैषोऽतिरिक्तस्तदतिरिक्तऽएवैतदतिरिक्तं दधात्युत्तरार्धे जुहोत्येषा ह्येतस्य देवस्य दिक्तस्मादुत्तरार्धे जुहोति स जुहोति रुद्र यत्ते क्रिवि परं नाम तस्मिन्हुतमस्यमेष्टमसि स्वाहेति ॥ १० ॥

इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् ॥ ५-३-४ ॥ ( ४. २. ) ॥

---

अथ य एष संस्रवोऽतिरिक्तो भवति- तमाग्नीध्रीये जुहोति । अतिरिक्तो वाऽएष संस्रवो भवति, अतिरिक्त आग्नीध्रीयः । गार्हपत्ये हवींषि श्रपयन्ति । आहवनीये जुह्वति । अथैषोऽतिरिक्तः । तस्मादतिरिक्तऽएवैतदतिरिक्तं दधाति । उत्तरार्द्धे जुहोति । एषा ह्येतस्य देवस्य दिक् । तस्मादुत्तरार्धे जुहोति । स जुहोति-" रुद्र यत्ते क्रिवि परं नाम-तस्मिन् हुतमस्यमेष्टमसि स्वाहा "-( वा० सं० १० । २० ) इति ॥ १० ॥

---

यथायथं पश्चात्"-(का.श्रौ.सू.१५।१६४)इति । तमिमं पादत्रयपुरस्सरं पठति-प्रजापत इति । तत्रायममुष्य पितेत्यस्यार्थमाह-तद्यः पुत्रः इति । पुत्रं पितरं, पितरं पुत्रं कृत्वा पठेदित्यर्थः । तदेतेन पुत्रस्य पितृकरणेन पितुश्च पुत्रकरणेन एनयोः पितापुत्रयोः वीर्यं ' व्यतिषजति'परस्परं संसृष्टे कृतवान् भवति । असावस्य पितेत्यस्यार्थमाह-तद्यः पितेति । अत्र पितुरेव पितृत्वम्, पुत्रस्यैव पुत्रत्वम् । अनेनैतयोर्वीर्ये पूर्वं व्यतिषज्य पश्चाद् यथा पुत्रस्य वीर्यं पुत्र एव, पितुर्वीर्यं पितर्येव कृतवान् भवतीत्यर्थः । अन्तिमपादस्याशीःपरत्वं दर्शयति-आशीरेवैषेति ॥ ९ ॥

पालाशपात्रशेषस्य आग्नीध्रीये ऋचा हवनं विधत्ते-अथ य एष संस्रव इति । अतिरिक्तस्य शेषस्य आग्नीध्रीये हवनस्योपपत्तिं दर्शयति-अतिरिक्त इति । तदेवोपपादयति-गार्हपत्ये हवीꣳषीति । गार्हपत्ये सर्वेषां हविषां श्रपणम्, आहवनीये तेषां होमः; अतः श्रपणहवनयोरनुपयुक्तत्वादाग्नीध्रीयोऽतिरिक्त इत्यर्थः । प्रदेशविशेषं विधत्ते-उत्तरार्द्ध इति । अस्य रुद्रसम्बन्धं दर्शयति-एषा हीति । ' एतस्य देवस्य ' रुद्रस्येत्यर्थः । होममनूद्य मन्त्रं विधत्ते-स जुहोतीति । हे ' रुद्र !' रुत् सांसारिकं दुःखं द्रावयतीति, तस्य सम्बुद्धिः । ' ते ' तव ' परम् ' उत्कृष्टं ' यत् नाम ' " नमः शिवाय "-" पशुपतये "-इत्यादि श्रुतिप्रसिद्धम् ( वा. सं. १६ । ४० । ४१ ) ( तै. सं. ४ । ५ । ८ । १ ) ' क्रिवि ' " कृवि हिंसाकरणयोः " ( धा. पा. भ्वा. प. ५९८ ) विरोधिनो हिंसकमसि, ' तस्मिन् ' नाम्नि ' हुतमसि ' अभिषेकशेषभूतमुख्यपात्रस्थजल ! त्वं हुतं भवेति जलं सम्बुध्यार्थ उन्नेयः । अमेष्टमसीति । ' अमा '-शब्दोऽत्र गृहवचनः । मदीये गृहे त्वम् इष्टं भव । ' स्वाहा ' सुहुतमस्त्विति ( तै. सं. १ । ८ । १४ । १-२ ) ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे चतुर्थोऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ५-४-२ ) ॥

---

१-आग्नीध्रीये पालाशेन शेषान् जुहोति रुद्र यत्त इत्युत्तरार्द्धे । का. श्रौ. सू. १५ । १६५ ।

तद्योऽस्य स्वो भवति । तस्य शतं वा परःशता वा गाऽ उत्तरेणाहवनीयꣳ सꣳस्थापयति तद्यदेवं करोति ॥ १ ॥

वरुणाद्ध वाऽअभिषिषिचानात् । ( दि ) इन्द्रियं वीर्यमुपचक्राम शश्वद्य ऽएषोऽपाꣳ रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति सोऽस्येन्द्रियं वीर्यं निर्जघान तत्पशुष्वन्वविन्दत्तस्मात्पशवो यशो यदेष्वन्वविन्दत्तत्पशुष्वनुविद्येन्द्रियं वीर्यं पुनरात्मन्नधत्त तथोऽएवैषऽ एतन्नाहैवास्मान्निन्द्रियं वीर्यमपक्रामति वरुणसवो वाऽएष यद्राजसूयमिति वरुणोऽकरोदिति त्वेवैषऽ एतत्करोति ॥ २ ॥

---

## अथ अभिषेकोत्तरकर्माणि ।

तद्योऽस्य स्वो भवति—तस्य शतं वा परःशता वा गा उत्तरेणाहवनीयं संस्थापयति । तद् यदेवं करोति ॥ १ ॥

वरुणाद्ध वा अभिषिषिचानादिन्द्रियं वीर्यमपचक्राम । शश्वद्य एषोऽपां रसः सम्भृतो भवति—येनैनमेतदभिषिञ्चति—सोऽस्येन्द्रियं वीर्यं निर्जघान । तत्पशुष्वन्वविन्दत् । तस्मात्पशवो यशः । यदेष्वन्वविन्दत् । तत् पशुष्वनुविद्येन्द्रियं वीर्यं पुनरात्मन्नधत्त । तथोऽएवैष एतत् । नाहैवास्मान्निन्द्रियं वीर्यमपक्रामति । वरुणसवो वाऽएष यद्राजसूयमिति । वरुणोऽकरोदिति त्वेवैष एतत्करोति ॥ २ ॥

---

कात्यायनः—" गवां शतमधिकं वा स्वस्याहवनीयस्योत्तरतः स्थापयति "—( का. श्रौ. सू. १९ । १६६ ) इति । ' स्वस्य ' ज्ञातेः भ्रातुः, तदर्थमाहवनीयस्योत्तरप्रदेशे शतसङ्ख्या अधिका वा गाः स्थापयेदिति । तदिदं सार्थवादं विधत्ते—तद्योऽस्य स्वो भवतीति । ' परःशताः ' शताधिका इत्यर्थः । ' एवं ' पशुसंस्थापनरूपं कर्म ' करोति ' इति ' यत् ' एतत् ' तत् ' ' तथो ' तथैव, वरुणेन कृतत्वादित्युत्तरत्र सम्बन्धः ॥ १ ॥

वरुणादिति । पूर्वं राजसूयेऽभिषिच्यमानाद् ' वरुणाद् ' ' इन्द्रियं ' ' वीर्यम् ' ' अपचक्राम ' अपसृतम् । वीर्यापसरणे कारणमाह—शश्वद्य एष इति । ' शश्वत् ' निश्चितं ' सम्भृतः ' ' अपां रसः ' ' येन ' सम्भृतेन रसेन इदानीमध्वर्युः ' अभिषिञ्चति ' ' सः ' रसः ' अस्य ' वरुणस्य ' वीर्यं ' ' निर्जघान ' हृतवान् । वरुणः ' पशुषु ' ' अन्वविन्दत् ' अलभत । ' तस्मात् ' पशूनां यशोरूपत्वम् ; पशुत एव यशःसम्भवात् । तल्लब्धं वीर्यं वरुणः ' पुनः ' आत्मनि स्थापितवान् । ' तथो ' तेनैव प्रकारेण ' एषः ' यजमानोऽपि ' एतत् ' पशुसंस्थापनेन ' इन्द्रियं ' ' वीर्यम् ' आत्मनि धत्ते । तदेव व्यतिरेकमुखेनाह—नाहैवास्मादिति । ' अह ' शब्दः प्रसिद्धिवाची । तस्मादेवं पशुनिधानरूपं कर्म कुर्वतः सुन्वतः सकाशात् ' वीर्यम् ' ' न अपक्रामति ' नापसरति । राजसूयमिति यत्, तद्वरुणसवः; राजसूये वरुण एवमकरोदिति बुध्या ' एषः ' यजमानोऽपि ' एतत् ' ' करोति ' ' यत् '—इति सङ्ग्रहार्थः ॥ २ ॥

( त्यु ) अथ रथमुपावहरति । यद्वै राजन्यात्पराग्भवति रथेन वै तद-नुयुङ्क्ते तस्माद्रथमुपावहरति ॥ ३ ॥

सऽ उपावहरति । (ती) इन्द्रस्य व्वज्रोऽसीति व्वज्रो वै रथ इन्द्रो वै यज-मानो द्वयेन वाऽएषऽ इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मा-दाहेन्द्रस्य व्वज्रोऽसीति ॥ ४ ॥

तमन्तर्व्वेद्यभ्यववर्त्य युनक्ति । मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मा-दाह मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति ॥ ५ ॥

---

अथ रथमुपावहरति । यद्वै राजन्यात्पराग्भवति रथेन वै तदनुयुङ्क्ते । तस्माद्रथमुपावहरति ॥ ३ ॥

स उपावहरति–" इन्द्रस्य वज्रोऽसि "–इति । वज्रो वै रथः । इन्द्रो वै यजमानः । द्वयेन वाऽएष इन्द्रो भवति–यच्च क्षत्रियः, यदु च यजमानः । तस्मादाह–इन्द्रस्य वज्रोऽसीति ॥ ४ ॥

तमन्तर्वेद्यभ्यववर्त्य युनक्ति–" मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि "–इति । बाहू वै मित्रावरुणौ । बाहुभ्यां वै राजन्यो मैत्रावरुणः । तस्मादाह–मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति ॥ ५ ॥

---

अथ रथोपावहरणं विधत्ते–अथ रथमिति । रथोपावहरणं प्रशंसति–यद्वै राजन्यादिति । ' यद् ' वस्तु ' राजन्यात् ' ' पराक् ' पराचीनमवशम् अस्ति, ' तत् ' एतत् अनेन ' रथेन ' ' अनुयुङ्क्ते ' अनुकूलं स्वाधीनं कुर्यात् । तस्माद् रथ उपावहर्त्तव्य इत्यर्थः ॥ ३ ॥

मन्त्रं विधत्ते–स उपावहरतीति[1] । इन्द्रस्येति । ( श. प. ५।१।४।३। भा. ) वाजपेये व्याख्यातः रथ-यजमानयोर्वज्रेन्द्रात्मकत्वमुपपादयति–वज्रो वा इति ॥ ४ ॥

रथस्य वज्रात्मकत्वमुक्तम् ( श. प. ५।१।४।३ ), तस्य प्रदेशविधानपुरस्सरमश्वयोर्योजनं समन्त्रकं विधत्ते–तमन्तर्वेदीति[2] । ' अन्तर्वेदि ' वेदिमध्ये 'अभ्यावर्त्य' अभिमुखमानीय दक्षिणस्यां वेदिश्रोणौ युञ्ज्या-दित्यर्थः । हे रथ ! त्वां ' प्रशास्त्रोः ' अनुशासकयोः आज्ञापयित्रोः ' मित्रावरुणयोः ' ' प्रशिषा ' प्रशासनेन यज्ञसम्बन्धनिमित्तं ' युनज्मि ' अश्वैः संयोजयामि ' इति ' । मित्रावरुणशब्दार्थमाह–बाहू वा इति ॥ ५ ॥

---

१–वाजपेयवद्रथमवहृत्य का. श्रौ. सू. १५ । १६८ । मरुत्वतीयांत इंद्रस्य वज्र इति रथावहरणम् । का. श्रौ. सू. १४।५७ ।
२–दक्षिणस्यां वेदिश्रोणौ युनक्ति पूर्ववन्मित्रावरुणयोरिति चतुर्भिः । का० श्रौ० सू० । १५ । १६६ ।

तं चतुर्युजं युनक्ति । स जघनेन सदोऽग्रेण शालां येनैव दक्षिणा यन्ति तेन प्रतिपद्यते तं जघनेन चात्वालमग्रेणाग्नीध्रमुद्यच्छति ॥ ६ ॥

तमातिष्ठति । ( त्यु ) अव्यथायै त्वा स्वधायै त्वेत्यनार्त्यै त्वेत्येवैतदाह यदाहाव्यथायै त्वेति स्वधायै त्वेति रसाय त्वेत्येवैतदाहारिष्टोऽअर्जुन ऽइत्यर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम द्वयेन वाऽएषऽइन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहारिष्टोऽअर्जुन इति ॥ ७ ॥

( त्यु ) अथ दक्षिणायुग्यमुपार्षति । मरुतां प्रसवेन जयेति विशो वै

---

तं चतुर्युजं युनक्ति । स जघनेन सदोऽग्रेण शालां येनैव दक्षिणा यन्ति; तेन प्रतिपद्यते । तं जघनेन चात्वालम् अग्रेणाग्नीध्रमुद्यच्छति ॥ ६ ॥

तमातिष्ठति । " अव्यथायै त्वा स्वधायै त्वा " इति । अनार्त्यै त्वेत्येवैतदाह—यदाह—अव्यथायै त्वेति । स्वधायै त्वेति । रसाय त्वेत्येवैतदाह । " अरिष्टोऽअर्जुनः "—इति । अर्जुनो ह वै नामेन्द्रो—यदस्य गुह्यं नाम । द्वयेन वाऽएष इन्द्रो भवति—यच्च क्षत्रियो, यदु च यजमानः । तस्मादाह—अरिष्टो अर्जुन इति ॥ ७ ॥

अथ दक्षिणायुग्यमुपार्षति—" मरुतां प्रसवेन जय "—इति । विशो वै मरुतः । विशा वै तत् क्षत्रियो जयति यज्जिगीषति । तस्मादाह—मरुतां प्रसवेन जयेति ॥ ८ ॥

---

रथस्याश्वचतुष्टयोपेतत्वं विधत्ते—तं चतुर्युजमिति । दक्षिणापथेन गमनं विधत्ते—स जघनेनेति[1] । ' सः ' अध्वर्युः ' सदो जघनेन ' सदोमण्डपस्य पश्चिमभागे ' शालामग्रेण ' प्राग्वंशस्याग्रभागे ' येनैव ' येन मार्गेण ' दक्षिणाः ' दक्षिणार्थं दीयमाना गावः ' यन्ति ' गच्छन्ति, ' तेन प्रतिपद्यते ' रथेन सहितं प्रविशेदित्यर्थः । " दक्षिणेन वेदिं दक्षिणा उपतिष्ठन्ते " इति चतुर्थकाण्डे दक्षिणागमनमुक्तम् ( श. प. ४ । ३ । ४ । १४ ) । रथसंस्थापनस्य प्रदेशविशेषं विधत्ते—तं जघनेनेति । आग्नीध्रचात्वालयोर्मध्यदेशे रथम् ' उद्यच्छति ' ऊर्ध्वमुखं स्थापयेत् ॥ ६ ॥

अथ यजमानस्य रथारोहणं समन्त्रकं विधत्ते—तमातिष्ठतीति[2] । ' आतिष्ठति ' आरोहेदित्यर्थः । ' अव्यथायै ' " व्यथ भयसंचलनयोः " ( धा. पा. भ्वा. प. ७६९ । ) अभयाय ' त्वा ' त्वाम्, आतिष्ठामीति शेषः । ' स्वधायै ' अन्नाय त्वामातिष्ठामि ' इति । ' अर्जुन इति ' इन्द्रस्य प्रियं नाम; इन्द्रात्मकोऽहमातिष्ठामीति सम्बन्धः ॥

मन्त्रं पदशोऽनूद्य व्याचष्टे—अनार्त्यै त्वेति । अर्जुनपदस्येन्द्रवाचकत्वं दर्शयति—अर्जुनो ह वा इति । ' इन्द्रस्य ' ' गुह्यं ' गूढं नामधेयम्, तस्मात् अर्जुन इन्द्रः । अस्त्विन्द्रस्यार्जुननामधेयम्, प्रकृते किमायातमित्याशङ्क्य, यष्टुरिन्द्रात्मकत्वमाह—द्वयेन वा इति । क्षत्रसम्बन्धात् यष्टृत्वाच्च सुन्वत इन्द्रत्वम्; तस्मान्मन्त्रे अर्जुनपदेन यजमानाभिधानं युज्यत इत्यर्थः ॥ ७ ॥

अथ दक्षिणभागे युक्तस्याश्वस्य प्राजनं समन्त्रकं विधत्ते—अथ दक्षिणेति[3] । ' उपार्षति ' " ऋषी

---

१—दक्षिणापथेन यात्वाऽपरेण चात्वालं स्थापयति । का. श्रौ. सू. १५ । १६९ । २—अव्यथायै त्वेति सुन्वन्नारोहति । का. श्रौ. सू. १५ । १७० । ३—मरुतामिति दक्षिणाधुर्यं प्राजति । का० श्रौ० सू० १५ । १७१ ।

मरुतो व्विशा वै तत्क्षत्त्रियो जयति यज्जिगीषति तस्मादाह मरुतां प्रस-
वेन जयेति ॥ ८ ॥

(त्यु) अथ मध्ये गवामुद्यच्छति । (त्या) आपाम मनसेति मनसा
वाऽइदꣳ सर्व्वमाप्तं तन्मनसैवैतत्सर्व्वमाप्नोति तस्मादाहापाम मनसेति ॥९॥
(त्यु) अथ धनुरात्न्यां गामुपस्पृशति । समिन्द्रियेणेतीन्द्रियं वै व्वीर्यं
गाव ऽइन्द्रियमेवैतद्वीर्यमात्मन्धत्तेऽथाह जिनामीमाः कुर्व्वऽइमाऽ इति ॥१०॥
तद्यत्स्वस्य गोषूद्यच्छति । यद्वै पुरुषात्पराग्भवति यशो वा किंचिद्वा

---

अथ मध्ये गवामुद्यच्छति—" आपाम मनसा "—इति । मनसा वाऽइदं सर्वमाप्तम् । तन्मनसै-वैतत्सर्वमाप्नोति । तस्मादाह—आपाम मनसेति ॥ ९ ॥

अथ धनुरात्न्यां गामुपस्पृशति—" समिन्द्रियेण "—( वा. सं. १० । २१ ) इति । इन्द्रियं वै वीर्यम्-गावः । इन्द्रियमेवैतद्वीर्यमात्मन्धत्ते । अथाह—" जीनामीमाः कुर्वऽइमाः "इति ॥ १० ॥

तद् यत्स्वस्य गोषूद्यच्छति, यद्वै पुरुषात्पराग्भवति यशो वा किञ्चिद्वा स्वं हैवास्य तत् । प्रतमामिवाभ्यपक्रामति । तत् स्वादेवैतदिन्द्रियं वीर्यं पुनरात्मन्धत्ते । तस्मात्स्वस्य गोषूद्यच्छति ॥ ११ ॥

---

गतौ " ( धातु. तु. प. ७ । ), प्राजतीत्यर्थः । हे अश्व ! ' मरुतां ' विद्युद्रूपाणां ' प्रसवेन ' प्रेरणया ' जय ' सर्वं स्वाधीनं कुर्विति ॥

मन्त्रं व्याचष्टे—विशो वा इति । यद् राज्ञा जेतव्यमस्ति, तद् ' विशा ' प्रजया ' जयति '; तस्माद् विड्रूप-मरुत्प्रतिपादनमन्त्रो युक्तः ॥ ८ ॥

विधत्ते—अथ मध्य इति[1] । ' गवां ' पूर्वं स्थापितानां ' मध्ये ' ' उद्यच्छति ' स्थापयति । ' मनसा ' ' आपाम ' आप्तवन्तो भवाम । आप्नोतेर्लुङि लृदित्त्वाच्च्लेरङि कृते रूपम् । मन्त्रस्य तात्पर्यमाह—मनसा वा इति ॥ ९ ॥

अथ धनुष्कोट्या स्वानां स्थापितानां गवां मध्ये एकस्याः स्पर्शनं समन्त्रकं विधत्ते—धनुरिति ( का. श्रौ. सू. १९ । १७३ ) । इन्द्रियेण बलेन सङ्गता भवामः । इन्द्रियं वा इति । " समिन्द्रियेण " इति मन्त्रेण गोस्पर्शने इन्द्रियस्यैव वीर्यस्य धारणं कृतं भवतीत्यर्थः । शिष्टानां गवां स्वाधीनकरणार्थं ' जिनामि ' इति ब्रूयात् । इदं ब्राह्मणोक्तं वाक्यम्, न तु मन्त्रः । तस्यायमर्थः—' ' इमाः ' गाः ' जिनामि ', अपि चेमाः 'कुर्वे' स्वाधीनाः करवा इति । " ज्या वयोहानौ ", ( धा. पा. क्र्या. प. २७ ) " ग्रहिज्या " इत्यादिना (पा.सू.६। १।१६) सम्प्रसारणम् । अत्र सूत्रम्—" धनुरात्न्योपस्पृशति गां यजमानः समिन्द्रियेणेति । जिनामीमाः कुर्व इमा इति चाह " ( का. श्रौ. सू. १९।१७३।१७४ ) इति ॥ १० ॥

स्वानां स्थापितासु गोषु रथस्य स्थापनं प्रशंसति—तद्यदिति । ' यद् ' वस्तु ' पुरुषात् ' ' पराक् ' परा-

---

१—गवाम्मध्ये स्थापयत्यापामेति । का. श्रौ. सू. १५ । १७२ ।

स्वुऽँ हैवास्य तुत्प्रतमामिवाभ्युपक्रामति तत्स्वाडेवैतुदिन्द्रियं व्वीर्यं पुनरात्मुन्धत्ते तुस्मात्स्वुस्य गोषूद्यच्छति ॥ ११ ॥

तुस्मै तावन्मात्रीर्व्वा भूयसीर्व्वा प्रतिददाति । न वाऽएषु क्रूरकर्मुणे भवति यद्युजमानः क्रूरुमिव वाऽएतुत्करोति यदाह जिनामीमाः कुर्व्वुऽइमाऽ इति तुथो हास्यैतदुक्रूरं कृतुं भवति तुस्मात्तावन्मात्रीर्व्वा भूयसीर्व्वा प्रतिददाति ॥ १२ ॥

( त्यु ) अुथ दुक्षिणानायच्छति । सोऽग्रेण यूपं दुक्षिणेन व्वेदिं युनैव दुक्षिणा युन्ति तेुन प्रतिपद्यते तं जघुनेन सदोऽग्रेण शालासुद्यच्छति ॥१३॥

---

तस्मै तावन्मात्रीर्वा भूयसीर्वा प्रतिददाति । न वाऽएष क्रूरकर्मणे भवति यद्यजमानः । क्रूरमिव वाऽएतत्करोति यदाह—जिनामीमाः कुर्वऽइमा इति । तथो हास्यैतदक्रूरं कृतं भवति । तस्मात्तावन्मात्रीर्वा भूयसीर्वा प्रतिददाति ॥ १२ ॥

अथ दक्षिणानायच्छति । सोऽग्रेण यूपं दक्षिणेन वेदिम्—येनैव दक्षिणा यन्ति—तेन प्रतिपद्यते । तं जघनेन सदः, अग्रेण शालासुद्यच्छति ॥ १३ ॥

---

धीनं बहिर्मुखं नष्टं 'भवति' । किं तत्? तदाह—यशो वा किञ्चिदिति । तद् यशआदिकं 'किञ्चित्' अन्यत् 'स्वं' स्वीयं वस्तु अभिलक्ष्य 'प्रतमां' प्रकर्षेण गच्छति । 'तद्' अनेन 'अस्य' ज्ञातेर्गोषु स्थापनेन पराङ्मुखं वीर्यं 'स्वात्' ज्ञातेः सकाशात् पुनः स्वाधीनं कृतवान् भवतीत्यर्थः ॥ ११ ॥

अथ स्थापितानां गवां स्वामिने स्वाय, अन्यासां तावतीनां गवां प्रतिदानं दर्शयति—तस्मै तावन्मात्रीरिति । यावत्सङ्ख्याकाः पूर्वमाहवनीयस्योत्तरतो गा अवस्थापिताः, 'तावन्मात्रीः' तावत् परिमाणं यासांताः तावन्मात्र्यः । प्रमाणे मात्रच्—प्रत्ययः ( पा. सू. ५ । २।३७ ) "टिड्ढाणञ्" इति सूत्रेण ङीप् ( पा. सू. ४।१।१५ ) । 'भूयसीः' ततोऽप्यधिकाः । प्रतिदानं प्रशंसति—न वा एष क्रूरेति । यजमान इति । यत् एष क्रूरकर्मणे न भवति इत्यन्वयः। यजमानेनान्यस्य प्रीतिजनकं कर्म कर्त्तव्यम् । किं तत् क्रूरकर्मेति तद् दर्शयति—यदाह जिनामीति । तस्माद्गोस्वामिने स्वाय अन्यास्तावतीः 'भूयसीर्वा' गाश्च दत्त्वा वेदिमध्ये स्थितानां गवां स्वाधीनकरणेन क्रूरं कर्म न कृतं भवतीत्यर्थः ॥ १२ ॥

आहवनीयस्योत्तरतः स्थापितानां गवां मध्ये दक्षिणतोऽश्वानां स्थापनं विधत्ते—अथ दक्षिणानिति । यूपस्य पूर्वतो वेदेर्दक्षिणतः 'दक्षिणान्' दक्षिणदिङ्मुखानश्वान् आयच्छेत् । अथान्तःपात्यदेशे रथस्य स्थापनं विधातुमुदग्गमनमार्गमाह—सोऽग्रेणेति । अनेन मार्गेण रथं प्रदक्षिणमावर्त्य । येनैव दक्षिणा इति ।

---

१–तावद्भ्यो वा गोस्वामिने दत्त्वा । का. श्रौ. सू. १५ । १७५ ।

मा तऽइन्द्र ते व्वयं तुराषाट् । ( ड ) अयुक्तासो ऽअब्रह्मता व्विदसाम ॥ तिष्ठा रथमधि यं व्वज्रहस्ता रश्मीन्देव यमसे स्वश्वानित्युद्यच्छत्येवैतया ऽभीशवो वै रश्मयस्तस्मादाहा रश्मीन्देव यमसे स्वश्वानित्यथ रथविमोचनीयानि जुहोति प्रीतो रथो व्विमुच्याताऽइति तस्माद्रथविमोचनीयानि जुहोति ॥ १४ ॥

स जुहोति । ( त्य ) अग्नये गृहपतये स्वाहेति स यदेवाग्नेयꣳ रथस्य तदेवैतेन प्रीणाति व्वहा वाऽआग्नेया रथस्य व्वहानेवैतेन प्रीणाति श्रीर्व्वै गार्हपतं यावतोयावत ऽईष्टे तच्छ्रियमेवास्यैतद्गार्हपतꣳ राज्यमभिविमुच्यते ॥ १५ ॥

---

"मा त इन्द्र ते वयं तुराषाट्, अयुक्तासोऽअब्रह्मता विदसाम । तिष्ठा रथमधि यं वज्रहस्ता रश्मीन्देव यमसे स्वश्वान्"–( वा. सं. १० । २२ ) इति । उद्यच्छत्येवैतया । अभीशवो वै रश्मयः । तस्मादाह–आ रश्मीन्देव यमसे स्वश्वानिति । अथ रथविमोचनीयानि जुहोति । प्रीतो रथो विमुच्याताऽइति । तस्माद्रथविमोचनीयानि जुहोति ॥ १४ ॥

स जुहोति–"अग्नये गृहपतये स्वाहा"–( वा. सं. १० । २३ ) इति । स यदेवाग्नेयं रथस्य तदेवैतेन प्रीणाति । वहा वाऽआग्नेयाः रथस्य । वहानेवैतेन प्रीणाति । श्रीर्वै गार्हपतम् । यावतो-यावत ईष्टे–तच्छ्रियमेवास्यैतद्गार्हपतं राज्यमभिविमुच्यते ॥ १५ ॥

---

दक्षिणागमनमार्गस्तु पूर्वमेवोक्तः । सदसः पश्चिमे, शालायाः पूर्वदेशे रथम् 'उद्यच्छति' स्थापयेत् । सूत्रितं हि–"पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयति मा त इति" ॥ १३ ॥

मा त इति–मन्त्रस्यायमर्थः;–हे 'वज्रहस्त !' 'यं रथम्' 'अधितिष्ठ' अधितिष्ठसि, हे 'देव !' यस्मिंश्च त्वमवस्थितः 'स्वश्वान्' शोभनाश्वान् 'रश्मीन्' 'आयमसे' नियच्छसि । हे 'तुराषाट् !' तूर्णं सहत इति तुराषाट्, तस्य सम्बुद्धिः, हे 'इन्द्र !' 'ते' तव स्वभूते 'रथे' 'अयुक्तासः' संयोगरहिता वयम् 'अब्रह्मता' अब्रह्मत्वम् 'विदसाम' । विदेर्लेटि सिचि, "लेटोऽडाटौ" ( पा. सू. ३ । ४ । ७ ।; २ । १ । ३४ ।; ३ । ४ । ९७ । ; ३ । ४ । ९४ ) इत्यडाटौ" च, विदेम । तत्र रथे अयुक्ताः वयं ब्रह्मवर्चसम् न लभामहे, किन्तु युक्ताः सन्तो ब्रह्मवर्चसमेव लभेमहीत्यर्थः । रश्मिपदस्यार्थमाह–अभीशव इति ॥

रथविमोचनीयहोमं विधत्ते–अथ रथेति[1] । रथः होमेन 'प्रीतः' सन् 'विमुच्यातै' विमुक्तो भवत्विति ॥ १४ ॥

होममनूद्य चतुरो मन्त्रान् सार्थवादं पृथग् विधत्ते–स जुहोत्यग्नय इति । चतुर्णां मन्त्राणामयमर्थः– 'गृहपतये अग्नये' 'स्वाहा' सुहुतमस्तु । 'वनस्पतये' वनस्पतिगुणकाय 'सोमाय स्वाहा' 'मरुतां'

---

१–अग्नये गृहपतय इति चत्वारि रथविमोचनीयानि जुहोति प्रतिमंत्रम् । का० श्रौ० सू० १५ । १७६ ।

सोमाय व्वनस्पतये स्वाहेति । द्वयानि वै व्वानस्पत्यानि चक्राणि रथ्यानि चानसानि च तेभ्यो न्वेवैतदुभयेभ्योऽरिष्टिं कुरुते सोमो वै व्वनस्पतिः स यदेव व्वानस्पत्यꣳ रथस्य तदेवैतेन प्रीणाति दारूणि वै व्वानस्पत्यानि रथस्य दारूण्येवैतेन प्रीणाति क्षत्रं वै सोमः क्षत्रमेवास्यैतद्राज्यमभिविमुच्यते ॥ १६ ॥

मरुतामोजसे स्वाहेति । स यदेव मारुतꣳ रथस्य तदेवैतेन प्रीणाति चत्वारोऽश्वा रथः पञ्चमो द्वौ सव्यष्टृसारथी ते सप्त सप्त सप्त वै मारुतो गणः सर्व्वमेवैतेन रथं प्रीणाति व्विशो वै मरुतो व्विशमेवास्यैतद्राज्यमभिविमुच्यते ॥ १७ ॥

---

" सोमाय वनस्पतये स्वाहा "–( वा. सं. १० । २३ ) इति । द्वयानि वै वानस्पत्यानि चक्राणि–रथ्यानि च आनसानि च । तेभ्यो न्वेवैतदुभयेभ्योऽरिष्टिं कुरुते । सोमो वै वनस्पतिः । स यदेव वानस्पत्यं रथस्य–तदेवैतेन प्रीणाति । दारूणि वै वानस्पत्यानि रथस्य । दारूण्येवैतेन प्रीणाति । क्षत्रं वै सोमः । क्षत्रमेवास्यैतद्राज्यमभिविमुच्यते ॥ १६ ॥

" मरुतामोजसे स्वाहा "–( वा० सं० १० । ३२ ) इति । स यदेव मारुतं रथस्य–तदेवैतेन प्रीणाति । चत्वारोऽश्वाः, रथः पञ्चमो, द्वौ सव्यष्टृसारथी–ते सप्त । सप्त सप्त वै मारुतो गणः । सर्वमेवैतेन रथं प्रीणाति । विशो वै मरुतः । विशमेवास्यैतद्राज्यमभिविमुच्यते ॥ १७ ॥

---

सम्बन्धिने ' ओजसे ' बलाय ' स्वाहा ' । ' इन्द्रस्य ' स्वभूताय ' इन्द्रियाय ' वीर्याय ' स्वाहा ' इति ॥ तत्र प्रथममन्त्रं प्रशंसति–यदेवाग्नेयमिति । मन्त्रैकदेशेनाग्निपदेन रथस्य आग्नेयमङ्गं प्रीणितवान् भवति । रथस्याग्नेयमङ्गं दर्शयति–वहा वा इति । अश्वैरुह्यमानस्य युगस्य प्रान्तप्रदेशा वहाः, ते आग्नेयाः; " अग्निदग्धमिवैषां वहं भवति "–( श. प. १ । १ । २ । ९ ) इति श्रुतेः । अग्निदग्धत्वसाम्यात् रथेऽपि वहा आग्नेयाः । प्रथमहोममन्त्रे ' अग्नये ' इत्येकदेशपाठेन रथाङ्गप्रीणनम् । ' गृहपतये ' इति भागं प्रशंसति–श्रीर्वा इति । ' गार्हपतं ' गृहपतित्वं नाम ' श्रीः '; यतः पुरुषो ' यावतः ' धनस्य पुरुषस्य वा ' ईष्टे ' ' तत् ' एतेन गृहपतय इति मन्त्रभागपठनेन यजमानस्य गार्हपतलक्षणं राज्यमभिलक्ष्य रथो विमुक्तो भवतीत्यर्थः । एवमुत्तरेषु मन्त्रेषु एकदेशेन रथाङ्गप्रीणनम्, अपरेण यजमानफलार्थं रथविमोक उच्यत इति ॥ १९ ॥

सोमायेति । द्वयानीति । वनस्पतिनिर्मितानि ' चक्राणि ' ' द्वयानि ' द्विप्रकाराणि ' रथ्यानि ' रथसम्बन्धीनि, ' आनसानि ' अनस्सम्बन्धीनि ' च ' इति । तदेतेन " सोमाय वनस्पतये "–इति मन्त्रपाठेन उभयविधेभ्यो रथ्यानसचक्रेभ्यः, तदर्थम्, ' अरिष्टिम् ' अहिंसां कृतवान् भवति । सोमस्य वनस्पतित्वात् ओषधिपोषकत्वात् वनस्पतिपदेन रथस्य दारुविनिर्मितान्यङ्गानि प्रीणयति । सोमस्य क्षत्ररूपत्वम्, राजत्वाद् बलसम्पादकत्वाद्वा ! तस्मात्सोमपदेन क्षत्रियसम्बन्धि स्वाराज्यमभिलक्ष्य रथो विमुक्तो भवतीत्यर्थः ॥ १६ ॥

मरुतामिति । तृतीयेऽत्र मन्त्रे मरुतामिति पदेन रथस्यैव प्रीणनम् । रथस्य मारुतत्वं सम्पादयति–चत्वारो-

( त॒ऽ ) इन्द्रस्येन्द्रियाय स्वाहेति । स यदेवैन्द्रꣳ रथस्य तदेवैतेन प्रीणाति सव्यष्ठा वाऽऐन्द्रो रथस्य सव्यष्ठारमेवैतेन प्रीणातीन्द्रियं वै वीर्यमिन्द्र ऽइन्द्रियमेवास्यैतद्वीर्यꣳ राज्यमभिविमुच्यते ॥ १८ ॥

( तेऽथ ) अथ वाराह्याऽउपानहाऽउपमुञ्चते । (तेऽग्नौ) अग्नौ ह वै देवा घृतकुम्भं प्रवेशयां चक्रुस्ततो वराहः सम्बभूव तस्माद्वराहो मेदुरो घृताद्धि सम्भूतस्तस्माद्वराहे गावः संजानते स्वमेवैतद्रसमभिसंजानते तत्पशूना-मेवैतद्रसे प्रतितिष्ठति तस्माद्वाराह्याऽउपानहाऽउपमुञ्चते ॥ १९ ॥

( तेऽथे ) अथेमां प्रत्यवेक्षमाणो जपति । पृथिवि मातर्मा मा हिꣳसीर्मो-

---

"इन्द्रस्येन्द्रियाय स्वाहा"–( वा० सं० १० । २३ ) इति । स यदेवैन्द्रं रथस्य–तदेवैतेन प्रीणाति । सव्यष्ठा वाऽऐन्द्रो रथस्य । सव्यष्ठारमेवैतेन प्रीणाति । इन्द्रियं वै वीर्यम्–इन्द्र इन्द्रियमेवास्यैतद्वीर्यं राज्यमभिविमुच्यते ॥ १८ ॥

अथ वाराह्याऽउपानहाऽउपमुञ्चते । अग्नौ ह वै देवा घृतकुम्भं प्रवेशयांचक्रुः । ततो वराहः सम्बभूव । तस्माद्वराहो मेदुरः । घृताद्धि सम्भूतः । तस्माद्वराहे गावः सञ्जानते । स्वमेवैतद्रसमभिसंजानते । तत्–पशूनामेवैतद्रसे प्रतितिष्ठति । तस्माद्वाराह्याऽउपानहाऽउपमुञ्चते ॥ १९ ॥

अथेमां प्रत्यवेक्षमाणो जपति–"पृथिवि मातर्मा मा हिंसीः, मोऽअहं त्वाम्"–( वा०

---

ऽश्वा इति । रथस्थाश्वचतुष्टयम्, 'रथः' स्वयं पञ्चमः, 'द्वौ सव्यष्टृसारथी' सव्यदक्षिणभागयोरवस्थितौ द्वौ सारथी इति 'सप्त' सङ्ख्या अस्ति; मरुतामपि सप्तगणात्मकत्वात् सप्तसंख्याकत्वम् ; अतः सप्तसंख्यासाम्यान्मरुतामिति पदेन रथस्यैव प्रीणनं कृतं भवतीत्यर्थः । मरुत्पदमेव यजमानस्य फलार्थमपि प्रशंसति–विशो वा इति ॥ १७ ॥

इन्द्रस्येति । अत्र चतुर्थमन्त्रे इन्द्रपदेन रथस्य सारथिप्रीणनम्। सव्यभागे तिष्ठतीति 'सव्यष्ठा' । तिष्ठतेरौणादिक ऋकारप्रत्ययः । किच, किच्वादाल्लोपः, "अम्बाम्बगोभूमि" ( पा. सू. ८ । ३ । ९७ ) इति सूत्रे 'स्थास्थिन् स्थृणाम' इति वचनात् षत्वम् ॥ १८ ॥

विधत्ते–अथ वाराह्या इति । 'वाराह्यौ' वराहचर्मनिर्मिते 'उपानहौ' 'उपमुञ्चते' । कात्यायनेन पशूनां रसोऽसीति मन्त्रेण वाराह्योरुपानहोरुपमोको ( ऐ. ब्रा. ६।४।७ ) विहितः । तत्र मन्त्रे वराहस्य पशुरसत्वममिधीयते, तदुपपादयति–अग्नौ ह वै देवा इति । पूर्वं देवा घृतकुम्भमग्नौ प्रासुः, तस्माद् वराह उत्पन्नः; अतो घृतोत्पन्नत्वाद् वराहस्य 'मेदुरत्वं' मांसलत्वम् । तस्मिन् 'वराहे' 'गावः' 'सञ्जानते' संवदन्ते; स्वीयरसभूतघृतोत्पन्नत्वात् । तस्माद् वाराह्योरुपानहोरुपमोकेन पशुरस एव स्वयं प्रतिष्ठितो भवतीत्यर्थः ॥ १९ ॥

अथेमामिति । 'पृथिवि' 'मातः !' सर्वेषां निर्मात्रि, पृथिव्या मातृत्वम् "द्यौः पिता पृथिवी माता" इति

---

१–पशूनाꣳ रसोऽसीति वराहोपानहा उपमुंचते । का. श्रौ. सू. १५ । १७६ । २–भूमिमवेक्षते पृथिवि मातरीति । का. श्रौ. सू. १५ । १७७ ।

ऽअहं त्वामिति व्वरुणाद्ध वाऽअभिषिषिचानात्पृथिवी बिभयाञ्चकार महद्वाऽअयमभूद्योऽभ्युषेचि यद्वै माऽयं नावदृणीयादिति व्वरुणऽउ ह पृथिव्यै बिभयाञ्चकार यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयमकुरुत न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥ २० ॥

व्वरुणसवो वाऽएष यद्राजसूयम् । पृथिव्यु हैतस्माद्बिभेति महद्वाऽअयमभूद्योऽभ्युषेचि यद्वै माऽयं नावदृणीयादित्येषुऽउ हास्यै बिभेति यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरं तस्मादेवं जपति ॥ २१ ॥

सोऽवतिष्ठति । हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता व्वेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जा गोजाऽऋतजाऽअद्रिजाऽऋतं बृहदित्येतामतिच्छन्दसं जपन्नेषा वै सर्व्वाणि च्छन्दाꣳसि यदतिच्छन्दास्तथैनं पाप्मा नान्ववतिष्ठति ॥ २२ ॥

---

सं० १० । २३ ) इति । वरुणाद्ध वाऽअभिषिषिचानात्पृथिवी बिभयाञ्चकार—महद्वाऽअयमभूद्, योऽभ्यषेचि । यद्वै माऽयं नावदृणीयादिति । वरुण उ ह पृथिव्यै बिभयाञ्चकार—यद्वै मेयं नावधून्वीतेति । तदनयैवैतन्मित्रधेयमकुरुत । न हि माता पुत्रं हिनस्ति, न पुत्रो मातरम् ॥ २० ॥

वरुणसवो वाऽएषः—यद्राजसूयम् । पृथिव्यु हैतस्माद्बिभेति—महद्वाऽअयमभूद्—योऽभ्यषेचि, यद्वै माऽयं नावदृणीयादिति । एष उ हास्यै बिभेति—यद्वै मेयं नावधून्वीतेति । तदनयैवैतन्मित्रधेयं कुरुते । न हि माता पुत्रं हिनस्ति, न पुत्रो मातरम्, तस्मादेवं जपति ॥ २१ ॥

सोऽवतिष्ठति—" हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्"–(वा. सं. १०।२४) इति । एतामतिच्छन्दसं जपन् । एषा वै सर्वाणि—छन्दांसि यदातिच्छन्दाः । तथैनं पाप्मा नान्ववतिष्ठति॥ २२॥

---

( ऋ. सं. १।१६४।३३ ) श्रुत्यन्तरेषु श्रूयते । 'मा' मां 'मा हिंसीः' मा वधिष्ठाः, 'अहम्' अपि 'त्वां' नैव हिंसिषमिति मन्त्रार्थः । "वरुणाद्ध वा अभिषिषिचानात्" इत्यादिकः, "न हि माता पुत्रं हिनस्ति, न पुत्रो मातरम्"—इत्यन्तो वाक्यसन्दर्भो वाजपेये भूम्यवेक्षणप्रसङ्गे व्याख्यातः (श. प. ५।२।१।१८ भाष्ये)॥ २०॥ २१॥

रथादवरोहणं विधत्ते सोऽवतिष्ठतीति । अवरुह्य तिष्ठतीति अवशब्दस्य रुहिकर्मणा समन्वये "समवप्रविभ्यः स्थः" इति ( पा. सू. १।३।२२ ) आत्मनेपदं न भवति; तिष्ठतिक्रियायोगाभावेन प्रेत्युपसर्गसंज्ञाय । अभावात्, अन्यथा आत्मनेपदं दुर्निवारं स्यात् । अथवा व्यत्ययेन परस्मैपदम् ॥

---

१—अवरोहति हꣳसः शुचिषदिति । का० श्रौ० सू० १५ । १७८ ।

तं नु संग्रहीताऽन्ववतिष्ठेत् । ( न्ने ) नेत्तं लोकमन्ववतिष्ठाद्यᳬं सुषुवाणो ऽन्ववास्थादिति तᳬं सरथमेव रथवाहन ऽआदधाति ततोऽवाङ्पप्रवते तथा तं लोकं नान्ववतिष्ठति यᳬं सुषुवाणोऽन्ववास्थात् ॥ २३ ॥

तं न सङ्गृहीताऽन्ववतिष्ठेत्–नेत् तं लोकमन्ववतिष्ठाद्–यं सुषुवाणोऽन्ववास्थादिति । तं सरथमेव रथवाहनऽआदधाति । ततोऽवाङ्पप्रवते । तथा तं लोकं नान्ववतिष्ठति–यं सुषुवाणोऽन्ववास्थात् ॥ २३ ॥

हंस इति । मन्त्रस्यायमर्थः—हन्ति पृथिवीमिति 'हंसः' रथः, शुचौ देवयजने रथवाहने च सीदतीति 'शुचिषत्', तस्योपरि यजमानं वासयतीति 'वसुः', तरुगुल्माद्यनवरुद्धेऽन्तरिक्षे सीदतीति 'अन्तरिक्षसत्', 'होता' होतृसमानः, तदेव कथमित्युच्यते–वेद्यां सीदतीति 'वेदिषत्', 'अतिथिः' अतिथिसदृशः, तदपि कथमित्युच्यते–दुरोणेषु गृहेषु सीदतीति 'दुरोणसत्' यो यस्तमारोढुं नयति तस्य गृहे सीदति, नृषु मनुष्येषूपकारं कर्तुं सीदतीति 'नृषत्', वरे श्रेष्ठे राजादिगृहे सीदतीति 'वरसत्', ऋते यज्ञे वाजपेयादौ सीदतीति 'ऋतसत्' सूर्यं वोढुं व्योमनि आकाशे सीदतीति 'व्योमसत्'। "अप्सुयोनिर्वा अश्वः" इति श्रुतेः ( श. प. १३।२।२।१९ ) अद्भ्यो जातैरश्वैरुपेतत्वात् 'अब्जाः', गोशब्दवाच्याद् वज्राज्जायत इति 'गोजाः', एतच्च "स्फ्यस्तृतीयᳬं रथस्तृतीयम्" इत्याम्नातम् (तै. सं ५।२।६।२)। ऋतार्थं यज्ञार्थं जातत्वात्'ऋतजाः' अद्रिभ्यो दृढकाष्ठेभ्यो जातत्वात् 'अद्रिजाः'। ईदृशो रथो 'बृहत्' प्रौढं राजसूयाख्यम्, 'ऋतं' यज्ञं सम्पादयत्विति रथपक्षेऽर्थः ॥

सूर्यपक्षे त्वयमर्थः—हन्ति गच्छतीति 'हंसः' आदित्यः, शुचौ निर्मले मण्डले सीदतीति 'शुचिषत्', 'वसुः' निवासहेतुः, प्राणात्मकवायुरूपेणान्तरिक्षे सीदतीति 'अन्तरिक्षसत्', अग्निरूपेण वेद्यां सीदतीति 'वेदिषत्', अप्सु सूक्ष्मभूतेषु जायत इति 'अब्जाः', गोषु पृथिवीप्रधानेषु स्थूलभूतेषु जायत इति 'गोजाः' ऋते सत्यभूते मण्डले जायत इति 'ऋतजाः' अद्रौ पाषाणे वा मेघे उदकरूपेण जायत इति अद्रिजाः। 'ऋतम्' "ऋ गतौ" ( धा. पा. भ्वा. प. ९६१ ) सर्वत्र व्याप्तं ज्ञानात्मकम्, 'बृहत्' "बृहि वृद्धौ" ( धा. पा. भ्वा. प. ७३९ ) प्रवृद्धम्, परमानन्दलक्षणमिति ॥

मन्त्रगतं छन्दोविशेषं प्रशंसति—एतामतिछन्दसामिति । हंसमन्त्रस्यातिजगतीच्छन्दः, सा च गायत्र्यादीनि च्छन्दांसि अतिक्रम्य वर्त्तत इति तस्या अतिच्छन्दस्त्वम् । सर्वासामेव च्छन्दसां तत्रान्तर्भावात् सर्वच्छन्दोरूपत्वम्, तस्मात् सर्वच्छन्दोऽतिक्रमणात् 'एतां' जपित्वा, अवरोहन्तम् 'एनम्' यजमानम् 'अनु' 'पाप्मा' 'नावतिष्ठति' नावरोहति, पाप्मानमतिक्रामेदित्यर्थः ॥ २२ ॥

सयन्तृकस्य रथस्य रथवाहनेऽनसि स्थापनं विधातुं यन्तुरवस्थानं निषेधति—तन्नेति । सम्यक् प्रग्रहं गृह्णातीति 'सङ्ग्रहीता' सारथिः सः, 'तं' यजमानम् 'अनु' 'नावतिष्ठेत्' नावरोहेत् । तत्र कारणमाह—नेदिति । सुन्वन् यं लोकं प्राप्नोति, तं लोकं सारथिरपि न प्राप्नुयादिति । तं सरथमिति । 'रथवाहने' रथस्थापन-

१–विमुच्य सयंतृकᳬं रथवाहने करोत्यनस्तत्कर्म । का. श्रौ. सू. १५ । १७९ ।

( डु ) उत्तरेणाहवनीयं पूर्वाग्निरुद्वृत्तो भवति । स रथवाहनस्य दक्षिण-मन्वनुष्यन्दꣳ शतमानौ प्रवृत्तावाबध्नाति ॥ २४ ॥

( त्यौ ) औदुम्बरीꣳ शाखामुपगूहति । तयोरन्यतरमुपस्पृशतीयदस्या-युरस्यायुर्मयि धेहि युङ्ङसि वर्चोऽसि वर्चो मयि धेहीति तदायुर्वर्च ऽआत्मन्धत्ते ॥ २५ ॥

---

उत्तरेणाहवनीयं पूर्वाग्निरुद्वृत्तो भवति । स रथवाहनस्य दक्षिणमन्वनुष्यन्दं शतमानौ प्रवृत्तावाबध्नाति ॥ २४ ॥

औदुम्बरीं शाखामुपगूहति । तयोरन्यतरमुपस्पृशति–" इयदस्यायुरस्यायुर्मयि धेहि । युङ्ङसि वर्चोऽसि वर्चो मयि धेहि "–इति । तद् आयुर्वर्च आत्मन्धत्ते ॥ २५ ॥

---

साधने ' अनसि ' ' तम् ' सयन्तृकं ' रथम् ' ' आदधाति ' निदध्यात् । तथा च तैत्तिरीयकम्–" यदुमौ सहावतिष्ठेतां समानं लोकमियातां सह संग्रहीत्रा रथवाहने रथमादधाति सुवर्गादेवैनं लोकादन्तर्दधाति " ( तै. ब्रा. १।७।९।६ ) तत इति । ' इति । ततः ' पश्चाद् यन्ता ' अवाङ् ' अवाङ्मुखः सन् 'अपप्रवते' " प्रुङ् गतौ" ( धा. पा. स्वा. प. ९८२ ) इति । धातुः,अवरोहतीत्यर्थः । तथा च सूत्रितम्–"शालाया दक्षिणतोऽपप्रवते यन्ता "–( का. श्रौ. सू. १५ । १७९ ) इति ॥ २३ ॥

पूर्वं स्वस्य भ्रातुरर्थाय गोः स्थापनकाले पूर्वाग्निवहनस्याहवनीयस्योत्तरतः स्थापनं सूत्रकृतोक्तम्–" गवां शतमधिकं वा स्वस्याहवनीयस्योत्तरतः स्थापयति, पूर्वाग्निवहश्च साग्नि " ( का. श्रौ. सू. १५।१६६ ।१६७ ) इति । तदिदानीं विधत्ते–उत्तरेणाहवनीयमिति । पूर्वाग्निरिति । शान्तिपौष्टिकार्थीयोऽग्निः ' पूर्वाग्निः, ' ' सः ' अनसा ' उद्वृतः ' ऊद्धृत्तः वृत्तः स्थापितो ' भवति ' ॥

अथ रथवाहनस्य दक्षिणे अंशे शतमानयोरासञ्जनम्, वर्त्मनि औदुम्बर्याः शाखाया उपगूहनञ्च विधत्ते–स रथेति । ' दक्षिणम् ' ' अनुष्यन्दं ' प्रान्तमनु ' प्रवृत्तौ ' वर्त्तुलौ ' शतमानौ ' शतमानपरिमितौ द्वौ रुक्मौ ' आबध्नाति ' आसजेत् ॥ २४ ॥

औदुम्बरीमिति । तयोः शतमानयोरन्यतरस्योपस्पर्शनं समन्त्रकं विधत्ते–तयोरिति । कात्यायनस्तु मन्त्र-द्वयं कृत्वा उभयोरपि स्पर्शने विनियोगमुक्तवान् " उपस्पृशति शतमानावियदसीत्येकं युङ्ङसीत्यपरम् " [२] इति । ' इयदसि ' एतावत्परिमाणोऽसि । अत्र तत्परिमाणं हस्तेनाभिधीयते; स्वल्पपरिमितत्वात् । ' आयुरसि ' आयुः-

---

१–रथवाहनस्य दक्षिणेंऽते शतमानावासजति व्र्वृत्तौ । का. श्रौ. सू. १५ । १८१ । २–कात्यायनस्तु मंत्रद्वयं कृत्वेत्यादि=युङ्ङसीत्यपर.मित्यंतं व्याख्यानं चिंत्यम् । तथ्था सूत्रं तु=उपस्पृशति शतमानाविथदसीत्येतावदेव अत्र । इयदसीत्यनेन मंत्रेणा-न्यतरं शतमानमुपस्पृशेत् । तयोरन्यतरमुपस्पृशतीति माध्यंदिनानां उभयोरुपस्पर्शनं शाखांतरादिति पितृभूतिः । इयदसीत्येकं युङ्ङसीति चापरमिति कर्काचार्याः । ततो यजमान एव इयदसीति मंत्रेण तौ शतमानावुपस्पृशति आलभते । श्रुतौ तु अन्य-तरस्योपस्पर्शनं विहितम् । तयोरन्यतरमुपस्पृशतीयदसीति श्रुतेरिति देवयाज्ञिकः । कर्कपादैः मंत्रद्वयस्य विनियोगव्यवस्थाप्रदर्शने-नान्यतरोपस्पर्शनमुद्बोधितम् । इत्थं मूलावस्थायां सत्यां कर्कविवरणमेव अक्षरतारतम्यसंघ्यवकाशमालोच्य कात्यायनः सूत्रयामासेति ध्येयम् । ३–अनुवर्त्ममौदुंबरीं शाखामुपगूहति । उपस्पृशति । शतमानावियदसीति । का० श्रौ० सू० १५ । १८२ ॥

( त्तेऽथौ ) अथौदुम्बरीᳫं शाखामुपस्पृशति । ( त्यू ) ऊर्गस्यूर्जं मयि धेहीति तदूर्जमात्मन्धत्ते तस्यैतस्य कर्मण एतावेव शतमानौ प्रवृत्तौ दक्षिणा तौ ब्रह्मणे ददाति ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति तस्मात्तौ ब्रह्मणे ददाति ॥ २६ ॥

( त्यु ) अग्रेण मैत्रावरुणस्य धिष्ण्यम् । मैत्रावरुणी पयस्या निहिता भवति तामस्य बाहूऽअभ्युपावहरतीन्द्रस्य वां वीर्यकृतो बाहूऽअभ्युपावहरामीति पशूनां वाऽएष रसो यत्पयस्या तत्पशूनामेवास्यैतद्रसं बाहूऽअभ्युपावहरति तद्यन्मैत्रावरुणी भवति मित्रावरुणाऽउ हि बाहू तस्मान्मैत्रावरुणी भवति ॥ २७ ॥

इति तृतीयप्रपाठके पञ्चमं ब्राह्मणम् ॥ ५-३-५ ॥ ( ४. ३. ) ॥

तृतीयः प्रपाठकः समाप्तः ॥ ५ । ३ ॥

---

अथौदुम्बरीं शाखामुपस्पृशति—" ऊर्गस्यूर्जं मयि धेहि "—इति । तद् ऊर्जमात्मन्धत्ते । तस्यैतस्य कर्मण एतावेव शतमानौ प्रवृत्तौ दक्षिणा । तौ ब्रह्मणे ददाति । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति । तस्मात्तौ ब्रह्मणे ददाति ॥ २६ ॥

अग्रेण मैत्रावरुणस्य धिष्ण्यं मैत्रावरुणी पयस्या निहिता भवति । तामस्य बाहूऽअभ्युपावहरति । " इन्द्रस्य वां वीर्यकृतो बाहूऽअभ्युपावहरामि "—( वा० सं० १० । २५ ) इति । पशूनां वाऽएष रसो—यत्पयस्या । तत्—पशूनामेवास्यैतत् रसं बाहूऽअभ्युपावहरति । तद्यन्मैत्रावरुणी भवति । मित्रावरुणाऽउ हि बाहू । तस्मान्मैत्रावरुणी भवति ॥ २७ ॥

---

स्वरूपोऽसि; " आयुर्हिरण्यम् " ( तै. ब्रा. १ । ७ । ६ । ३ ) इति श्रुतेः । तस्मात् ' आयुर्मयि धेहि ' यो हि यदात्मको भवति, स एव तद् दातुमुत्सहते । ' युङ्ङसि ' " युजिर् योगे " ( धा. पा. रु. उ. ७ । ) यज्ञं युनक्तीति ' युङ्, ' तथाविधः ' असि ' ' वर्चः ' तेजः ' असि ' । तस्माद् ' वर्चो मयि धेहि ' मन्त्रस्यार्थं सङ्कलय्याह—तदायुर्वर्च्च इति ॥ २५ ॥

शाखाया उपस्पर्शनं समन्त्रं विधत्ते—औदुम्बरीमिति[1] । ' ऊर्क् ' अन्नम् ' असि ' । तस्मात् ' मयि ' ' ऊर्जम् ' अन्नं ' धेहि ' इति । एतयोर्दानं विधत्ते—तस्यैतस्येति । ब्रह्मणे दानं प्रशंसति—ब्रह्मा हि यज्ञमिति ॥ २६ ॥

विधत्ते—अग्रेण मैत्रेति । मैत्रावरुणधिष्ण्यस्य पूर्वभागे व्याघ्रचर्मदेशे मित्रावरुणदेवत्या ' पयस्या ' आमिक्षा ' निहिता भवति ' । तस्यां यजमानबाह्वोरवहरणं विधत्ते—तामस्य बाहू इति । ' अस्य ' सुन्वतो ' बाहू ' ' ताम् ' ' अभि ' लक्ष्य ' उपावहरति ' प्रसारयति । हे ' बाहू ! ' ' वीर्यकृतः ' वीर्यकारिणः ' इन्द्रस्य ' यजमानस्य सम्बन्धिनौ ' वां ' युवां ' बाहू ' ' अभ्युपावहरामि ' ' अभि ' लक्ष्य स्थापयामि बाहुप्रक्षेपं

---

१—तौ ब्रह्मणे दत्त्वोर्गसीति । शाखामुपस्पृशति । का. श्रौ. सू. १५ । १८३ ।

२—इन्द्रस्य वामित्यवहरते बाहू पयस्यायां व्याघ्रचर्मदेशे स्थितायाम् । का० श्रौ० सू० । १५ । १८४ ।

# अथ चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ।
# चतुर्थाध्याये च चतुर्थं ब्राह्मणम् ।

मैत्रावरुण्या पयस्यया प्रचरति । तस्याऽ अनिष्ट ऽएव स्विष्टकृद्भवत्यथास्माऽआसन्दीमाहरन्त्युपरिसद्यं वाऽएष जयति यो जयत्यन्तरिक्षसद्यं तदेनमुपर्य्यासीनमधस्तादिमाः प्रजाऽ उपासते तस्मादस्माऽआसन्दीमाहरन्ति सैषा खादिरी वितृण्णा भवति येयं वर्ध्रव्यूता भरतानाम् ॥ १ ॥

तामग्रेण । मैत्रावरुणस्य धिष्ण्यं निदधाति स्योनाऽसि सुषदाऽसीति शिवामेवैतच्छग्मां करोति ॥ २ ॥

---

मैत्रावरुण्या पयस्यया प्रचरति । तस्या अनिष्ट एव स्विष्टकृद्भवति । अथास्माऽआसन्दीमाहरन्ति । उपरिसद्यं वाऽएष जयति । यो जयत्यन्तरिक्षसद्यम् । तदेनमुपर्यासीनमधस्तादिमाः प्रजा उपासते । तस्मादस्माऽआसन्दीमाहरन्ति । सैषा खादिरी वितृण्णा भवति—येयं वर्ध्रव्यूता भरतानाम् ॥ १ ॥

तामग्रेण मैत्रावरुणस्य धिष्ण्यं निदधाति । " स्योनाऽसि सुषदाऽसि "—इति । शिवामेवै तच्छग्मां करोति ॥ २ ॥

---

प्रशंसति—पशूनां वा इति । पयस्यायाः पशुरसात्मकत्वात् पशुरसमभिलक्ष्य बाहू स्थापितवान् भवतीति । पयस्याया मैत्रावरुणत्वं प्रशंसति—तद्यन्मैत्रावरुणीति ॥ २७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे चतुर्थोऽध्याये तृतीयं ब्राह्मणम् ॥ ( ५-४-३ ) ॥

अथ पयस्यायाः प्रचारं विधत्ते—मैत्रावरुण्येति । तस्या अनिष्ट इति । ' तस्याः ' पयस्यायाः स्विष्टकृत् ' अनिष्टः ' अहुतो भवति, प्राक् स्विष्टकृत इत्यर्थः । विधत्ते—अथास्मा आसन्दीमिति । आसन्दीलक्षणं पूर्वमुक्तम् । आसन्द्याहरणं प्रशंसति—उपरिसद्यमिति । एतद्वाक्यं वाजपेये व्याख्यातम् ( श. प. ५ । २ । १ । २२ भा. ) तस्याः वृक्षविशेषगुणान्तरं वाक्यभेदमङ्गीकृत्य विधत्ते—सैषा खादिरीति । ' वितृण्णा ' सच्छिद्रा भवेत् । तस्या आसन्द्या रज्जुव्यूतत्वमस्ति, तत्र यजमानविशेषेण रज्जुविशेषं दर्शयति—येयमिति । ' वर्ध्रव्यूता ' वर्ध्राश्चर्मरज्जवः, ताभिर्व्यूता सन्नद्धा भवति ' भरतानाम् ' अन्येषान्तु रज्जुमात्रम् । कात्यायनो निर्विशेषं सूत्रयामास—" खादिरीमासन्दीं रज्जूताम् " ( का. श्रौ. सू. १५ । १८७ ) इति ॥ १ ॥

तस्या निधानप्रदेशं विधत्ते- तामग्रेणेति । मन्त्रं विधत्ते—स्योनेति । हे आसन्दि ! ' स्योना ' सुखरूपा ' असि ', ' सुषदा ' सुषदनयोग्या ' असि ' । मन्त्रं विवृणोति—शिवामिति । ' शग्मां ' सुखकरीम् ॥ २ ॥

---

१-पयस्यया प्रचरति प्राक् स्विष्टकृतः । का. श्रौ. सू. १५।१८६। २-व्याघ्रदेशे निदधाति स्योनाऽसीति । का. श्रौ. सू. १५।१८७।

( त्यु ) अ॒थाधीवासमा॒स्तृणाति । क्ष॒त्रस्य य़ोनिरसी॒ति त॒द्यैव॒ क्ष॒त्रस्य यो॒निस्ता॒मे॒वैतत्करोति ॥ ३ ॥

( त्यु ) अथैनमा॒सादयति । स्योनामा॒सीद सु॒षदामा॒सीदेति शिवाᳬं शग्मामा॒सीदेत्ये॒वैतदाह क्षत्रस्य यो॒निमा॒सीदेति त॒द्यैव॒ क्षत्रस्य यो॒निस्त॒स्यामे॒वैनमेतद्दधाति ॥ ४ ॥

( त्यु ) अथान्तराᳬंसेऽभिमृ॒श्य जपति । नि॒षसाद धृ॒तव्र॒त इ॒ति धृ॒तव्र॒तो वै रा॒जा न वा॒ऽएष स॒र्व्वस्मा॒ऽइव व॒दनाय न स॒र्वस्मा॒ऽ इव॒ क॒र्मणे य॒देव॒ साधु व्व॒देद्य॒त्साधु॒ कु॒र्यात्त॒स्मै वा॒ऽएषु च श्रो॒त्रियश्चै॒तौ ह वै द्वौ म॒नुष्येषु धृ॒तव्र॒तौ त॒स्मादाह नि॒षसाद धृ॒तव्र॒तऽ इति व्व॒रुणः प॒स्त्यास्व्वे॒ति व्वि॒शो वै प॒स्त्या व्वि॒क्ष्वेत्ये॒वैतदाह सा॒म्राज्याय सु॒क्रतु॒रि॒ति रा॒ज्यायेत्ये॒वैतदाह यदाह सा॒म्राज्याय सु॒क्रतु॒रिति ॥ ५ ॥

---

अथाधीवासमास्तृणाति–" क्षत्रस्य योनिरसि "–इति । तद्यैव क्षत्रस्य योनिस्तामेवैतत्करोति ॥ ३ ॥

अथैनमासादयति–"स्योनामासीद सुषदामासीद"–इति । शिवां शग्मामासीदेत्येवैतदाह । " क्षत्रस्य योनिमासीद "–( वा. सं. १० । २६ ) इति । तद्यैव क्षत्रस्य योनिस्तस्यामेवैनमेतद्दधाति ॥ ४ ॥

अथान्तरांसेऽभिमृश्य जपति–" निषसाद धृतव्रतः "–इति । धृतव्रतो वै राजा । न वाऽएष सर्वस्माऽइव वदनाय, न सर्वस्माऽइव कर्मणे । यदेव साधु वदेत्, यत् साधु कुर्यात्–तस्मै वाऽएष

---

विधत्ते–अथाधीवासमिति[१] । 'अधीवासः' आस्तरणम्, चित्रकम्बलादिकम् । क्षत्रस्येति । एष मन्त्रो व्याख्यातः ( श. प. ५ । ३ । ५ । २२ । मा. ) ॥ ३ ॥

अस्यां सुन्वत उपवेशनं समन्त्रकं विधत्ते–अथैनमिति[२] । 'आसादयति' उपवेशयतीत्यर्थः । हे यजमान ! 'स्योनां' सुखरूपाम् आसन्दीम् 'आसीद' आरोह, सुखसाधनयोग्यामधितिष्ठेत्यर्थः । " क्षत्रस्य योनिमासीद " इति उपवेशनमन्त्रस्योत्तरभागः । अधीवासस्तरणे 'क्षत्रस्य योनिः' अधीवासः, तमारोहेत्यर्थः ॥ ४ ॥

हृदयदेशादिस्पर्शनपूर्वकं जपं विधत्ते–अथान्तरांस इति[३] । 'अन्तरांसे' अंसमध्ये 'अभिमृश्य' जपेत् ॥ मन्त्रस्यायमर्थः–अयं यष्टा 'धृतव्रतः' स्वीकृतयज्ञः, नियमितवचनादिव्यापारो 'वरुणः' अनिष्टनिवारको भूत्वा 'निषसाद' अस्यामासन्द्यामुपरिदेशे । 'पस्त्यासु' बहुषु वैरिगृहेषु, 'विक्षु' प्रजासु चागत्य साम्राज्यं कर्तुं 'सुक्रतुः' शोभनसङ्कल्पो भवतु ॥

---

१–अधीवासमस्यामास्तृणाति क्षत्रस्य योनिरिति । का० श्रौ० सू० १५ । १८८ । २–सुन्वंतमस्यामुपवेशयति स्योनामासीदेति । का० श्रौ० सू० १५ । १८९ । ३–निषसादेत्युरोऽस्यालभते । का० श्रौ० सू० । १५ । १९० ।

( त्यु ) अथास्मै पञ्चाक्षान्पाणावावपति । ( त्य ) अभिभूरस्येतास्ते पञ्च दिशः कल्पन्तामित्येष वाऽअयानभिभूर्यत्कलिरेष हि सर्वानयानभिभवति तस्मादाहाभिभूरसीत्येतास्ते पञ्च दिशः कल्पन्तामिति पञ्च वै दिशस्तदस्मै सर्वा ऽएव दिशः कल्पयति ॥ ६ ॥

---

च श्रोत्रियश्च । एतौ ह वै द्वौ-मनुष्येषु धृतव्रतौ । तस्मादाह-निषसाद धृतव्रत इति । "वरुणः पस्त्यास्वा"-इति । विशो वै पस्त्या । विक्ष्वेत्येवैतदाह-"साम्राज्याय सुक्रतुः"-( वा. सं. १० । २७ ) इति । राज्यायेत्येवैतदाह-यदाह साम्राज्याय सुक्रतुरिति ॥ ५ ॥

अथास्मै पञ्चाक्षान् पाणावावपति-"अभिभूरस्येतास्ते पञ्च दिशः कल्पन्ताम्"-इति । एष वाऽअयानभिभूः-यत्कलिः-एष हि सर्वानयानभिभवति । तस्मादाह-अभिभूरसीति । एतास्ते पञ्च दिशः कल्पन्तामिति । पञ्च वै दिशः । तदस्मै सर्वा एव दिशः कल्पयति ॥ ६ ॥

---

मन्त्रं प्रतिपादमनूद्य व्याचष्टे-धृतव्रतो वै राजेति । धृतव्रतत्वं दर्शयति-न वा एष, इति । 'एषः' सुन्वन् 'सर्वस्मै' 'वदनाय' वाक्याय, असम्बद्धप्रलापायेत्यर्थः । तथा अनुपयुक्तकर्मणे वा योग्यो न भवति । कस्मै योग्य इति तदाह-यदेवेति । तस्मै साधुवदनाय साधुकर्मणे च 'एषः' सुन्वन् राजा, 'श्रोत्रियश्च' ब्राह्मणः, उभावर्हौ भवतः । एतयोर्नियतव्रतत्वमाह-एतौ ह वा इति । 'मनुष्येषु' मध्ये 'एतौ' एव 'धृतव्रतौ' श्रोत्रियोऽपि न बहुभाषो नासाधुकर्मकारी । 'पस्त्या'-शब्दार्थमाह-विशो वा इति ॥ ५ ॥

यजमानहस्ते पञ्चाक्षावापं च विधत्ते-अथास्मा इति । अक्षा नाम कपर्दकाः सुवर्णनिर्मिताः, विभीतकफलानि सौवर्णानि वेत्येके ते चाक्षा द्यूतस्थाने निवपनीयाः । तेषां चतुर्णामक्षाणां 'कृत'-सञ्ज्ञा, पञ्चानां 'कलि' सञ्ज्ञा । तथा च शाखान्तरे स्तोमसङ्ख्यायां कृतादिव्यवहारः कृतः-"ये वै चत्वारः स्तोमाः कृतं तत् अथ ये पञ्च कलिः सः"-इति । यदा पञ्चाप्यक्षा उत्ताना भवन्ति, तदा देवितुर्जयो भवति, पञ्चसु त्वेकरूपासु जय एव भविष्यतीत्यन्यत्रोक्तम् । अतः कलेः सर्वाक्षाभिभावुकत्वात्, सुन्वतोऽपि जयापेक्षत्वात्पञ्चाक्षनिवाप इत्यर्थः । तथा च मन्त्रे कलिर्वा तत्सम्बन्धाद् यजमानो वा उच्यते । हे यजमान ! 'अभिभूः' इतरेषामक्षाणामभिभविता भवसि । तदर्थम् 'एताः पञ्च दिशः कल्पन्ताम्' स्वाधीना भवन्त्विति । मन्त्रं व्याचष्टे-एष वा अयानिति । अयशब्दोऽक्षवाची; 'कलिर्हि सर्वान् अयान् अभिभवति;' अधिकसंख्यत्वात् एषोऽपि यजमानस्तत्सम्बन्धादभिभावुको भवतीत्यर्थः ॥

पञ्चदिग्विजयसङ्कल्पसिद्धिमेव दर्शयति-पञ्च वै दिश इति ॥ ६ ॥

---

१-अभिभूरित्यस्मै पञ्चाक्षान् पाणावाधाय । का० श्रौ० सू० १५ । १९१ । २-कृतादि वा विदध्याद्राजप्रभृतिभ्यः सजातास कलिंगाम् । का० श्रौ० सू० १५ । २०४ । २०५ ।

१३६१

( त्यु ) अथैनं पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति तं दण्डैर्घ्नन्तो दण्डवधमतिनयन्ति तस्माद्राजा ऽदण्ड्यो यदेनं दण्डवधमतिनयन्ति ॥ ७ ॥

( न्त्यु ) अथ वरं वृणीते । यं ह वै कं च सुषुवाणो वरं वृणीते सोऽस्मै सर्वः समृध्यते तस्माद्वरं वृणीते ॥ ८ ॥

स ब्रह्मन्नित्येव प्रथममामन्त्रयते । ब्रह्म प्रथममभिव्याहराणि ब्रह्मप्रसूतां वाचं वदानीति तस्माद् ब्रह्मन्नित्येव प्रथममामन्त्रयते त्वं ब्रह्मासीतीतरः प्रत्याह सविताऽसि सत्यप्रसवऽ इति वीर्यमेवास्मिन्नेतद्दधाति सवितारमेव सत्यप्रसवं करोति ॥ ९ ॥

---

अथैनं पृष्ठतस्तूष्णीमेव दण्डैर्घ्नन्ति । तं दण्डैर्घ्नन्तो दण्डवधमतिनयन्ति । तस्माद्राजाऽदण्ड्यो यदेनं दण्डवधमतिनयन्ति ॥ ७ ॥

अथ वरं वृणीते । यं ह वै कं च सुषुवाणो वरं वृणीते सोऽस्मै सर्वः समृध्यते । तस्माद्वरं वृणीते ॥ ८ ॥

स "ब्रह्मन्"—इत्येव प्रथममामन्त्रयते—ब्रह्म प्रथममभिव्याहराणि । ब्रह्मप्रसूतां वाचं वदानीति । तस्माद्ब्रह्मन्नित्येव प्रथममामन्त्रयते । "त्वं ब्रह्मासि"—इतीतरः प्रत्याह । "सविताऽसि सत्यप्रसवः"—इति । वीर्यमेवास्मिन्नेतद्दधाति । सवितारमेव सत्यप्रसवं करोति ॥ ९ ॥

---

विधत्ते—अथैनमिति । 'दण्डैः' यज्ञियवृक्षकाष्ठैः 'एनं' सुन्वन्तं 'पृष्ठतः' पश्चाद्भागे 'तूष्णीम्' अमन्त्रकं 'घ्नन्ति' हन्युः । अत्र सूत्रकृत्समन्त्रकमवहननं शाखान्तरीयमन्त्रश्च विकल्पेन दर्शयामास—"पश्चादेनं यज्ञियवृक्षदण्डैः शनैस्तूष्णीं घ्नन्ति पाप्मानं तेऽपहन्मोऽति त्वा वधं नयामीति वा"—( का. श्रौ सू. १९ । १९१ । १९२ ) इति । तं दण्डैरिति । सुन्वतो दण्डवधेन अन्यकर्तृकस्य दण्डवधस्य प्रापणमेव कृतवन्तो भवन्ति, तस्माद् राज्ञो दण्डाभावः यथा राजा स्वा अपराद्धाः प्रजा दण्डयति, एवं स्वयं न दण्ड्य इत्यर्थः ॥७॥

विधत्ते—अथ वरमिति । 'वरं' 'वृणीते' याचते, यजमानः कर्त्ता । वरवरणं प्रशंसति—यं ह वै कञ्चेति ॥ ८ ॥

कात्यायनः—"वरं वृत्वा ब्रह्मन्नित्यामन्त्रयते पञ्चकृत्वः, प्रत्याह व्यत्यासं सविता वरुण इन्द्रो रुद्र इति, त्वं ब्रह्मासीत्यादिभिः" ( का. श्रौ. सू. १९ । १९३ । १९४ ) इति । अस्यार्थः—यजमानो वरं वृत्वा ब्रह्मन्निति पदं पञ्चकृत्वो वदेत् । तं सुन्वन्तं सवितृवरुणेन्द्ररुद्रवाचकैस्त्वं ब्रह्मासीत्यादिभिश्चतुर्भिर्मन्त्रैरितरः प्रतिवदेत्, पञ्चमामन्त्रणे केवलं त्वं ब्रह्मासीति प्रतिवदेदिति । तदिदं क्रमेण विधत्ते—स ब्रह्मन्निति । 'प्रथमं' 'पूर्वम्' प्रथममिति । स्पष्टोऽर्थः । प्रथमप्रतिवचनमन्त्रस्यायमर्थः—हे यजमान ! 'त्वं ब्रह्मा असि' 'सत्यप्रसवः' यथार्थाभ्यनुज्ञः 'सविता असि' 'इति' प्रथमामन्त्रयितारं सुन्वन्तं ब्रह्मा प्रतिब्रूयात्, सवित्रादिवाचकैः मन्त्रैः प्रतिवचनेन यजमानं तत्तद्देवतात्मकत्वेन कृतवान् भवतीत्यर्थः ॥ ९ ॥

ब्रह्मन्नित्येव द्वितीयमामन्त्रयते । त्वं ब्रह्मासीतीतरः प्रत्याह वरुणोऽसि सत्यौजा इति वीर्यमेवास्मिन्नेतद्दधाति वरुणमेव सत्यौजसं करोति ॥१०॥

ब्रह्मन्नित्येव तृतीयमामन्त्रयते । त्वं ब्रह्मासीतीतरः प्रत्याहेन्द्रोऽसि विशौजाऽ इति वीर्यमेवास्मिन्नेतद्दधातीन्द्रमेव विशौजसं करोति ॥११॥

ब्रह्मन्नित्येव चतुर्थमामन्त्रयते । त्वं ब्रह्मासीतीतरः प्रत्याह रुद्रोऽसि सुशेव ऽइति तद्वीर्याण्येवास्मिन्नेतत्पूर्वाणि दधात्यथैनमेतच्छमयत्येव तस्मादेष सर्वस्येशानो मृडयति यदेनꣳ शमयति ॥ १२ ॥

ब्रह्मन्नित्येव पञ्चममामन्त्रयते । त्वं ब्रह्मासीतीतरोऽनिरुक्तं प्रत्याह परिमितं वै निरुक्तं तत्परिमितमेवास्मिन्नेतत्पूर्वं वीर्यं दधात्यथात्रानिरुक्तं प्रत्याहापरिमितं वाऽअनिरुक्तं तदपरिमितमेवास्मिन्नेतत्सर्वं वीर्यं दधाति तस्मादत्रानिरुक्तं प्रत्याह ॥ १३ ॥

---

" ब्रह्मन् "–इत्येव द्वितीयमामन्त्रयते । " त्वं ब्रह्मासि "–इतीतरः प्रत्याह । " वरुणोऽसि सत्यौजाः "–इति । वीर्यमेवास्मिन्नेतद्दधाति । वरुणमेव सत्यौजसं करोति ॥ १० ॥

" ब्रह्मन् " इत्येव तृतीयमामन्त्रयते । " त्वं ब्रह्मासि " इतीतरः प्रत्याह । " इन्द्रोऽसि विशौजाः "–इति । वीर्यमेवास्मिन्नेतद्दधाति । इन्द्रमेव विशौजसं करोति ॥ ११ ॥

" ब्रह्मन् "–इत्येव चतुर्थमामन्त्रयते । " त्वं ब्रह्मासि "–इतीतरः प्रत्याह । " रुद्रोऽसि सुशेवः " इति । तद्–वीर्याण्येवास्मिन्नेतत् पूर्वाणि दधाति । अथैनमेतच्छमयत्येव । तस्मादेष सर्वस्येशानो मृडयति यदेनं शमयति ॥ १२ ॥

" ब्रह्मन् " इत्येव पञ्चममामन्त्रयते–" त्वं ब्रह्मासि "–इतीरोऽनिरुक्तं प्रत्याह । परिमितं वै निरुक्तम् । तत्परिमितमेवास्मिन्नेतत् पूर्वं वीर्यं दधाति । अथात्रानिरुक्तं प्रत्याह । अपरिमितं वाऽअनिरुक्तम् । तद् अपरिमितमेवास्मिन्नेतत् सर्वं वीर्यं दधाति । तस्मादत्रानिरुक्तं प्रत्याह ॥१३॥

---

द्वितीयादिषु मन्त्रेषु त्वं ब्रह्मासीति पूर्ववत् । ' सत्यौजाः ' सत्यवीर्यः ' वरुणः ' ' असि ' विक्षु प्रजासु ' ओजः ' बलं यस्य, यद्वा विश एवौजो यस्येति ' विशौजाः ' तादृशः ' इन्द्रः ' ' असि ' । ' देवतापक्षे मरुतो विशः तदात्मकाः, राजपक्षे प्रजाः । 'सुशेवः' सुसुखः 'रुद्रः' 'असि' रुद्रस्य सुशेवत्वं प्रशंसति–तद्वीर्याणीति । ईशानस्य सर्वसुखकरत्वात् पूर्वमन्त्रप्रतिवचनेन यजमाने स्थापितानि वीर्याणि शमयति वीर्यवन्तम् ' एनं ' ' रुद्रोऽसि सुशेवः ' इति सुखत्वप्रतिपादनात् ॥ १०–१२ ॥

यजमानकर्तृकपञ्चमामन्त्रणस्य प्रतिवचने विशेषं दर्शयति–ब्रह्मन्नित्येवेति[१] । त्वं ब्रह्मासीति । ब्रह्मन्नि-

---

१–आदिनैर्वात्यम् । का. श्रौ. सू. १५ । १९५ ।

( ह्रा ) अथ सुमङ्गुलनामानथ्ँ ह्वयति । बहुकार श्रेयस्कर भूयस्करेति यऽ एवंनामा भवति कल्याणमेवैतन्मानुष्यै वाचो वदति ॥ १४ ॥

( त्यु ) अथास्मै ब्राह्मण स्फ्यं प्रयच्छति । (त्य) अध्वर्युर्वा यो वाऽस्य पुरोहितो भवतीन्द्रस्य वज्रोऽसि तेन मे रध्येति वज्रो वै स्फ्यः सऽएतेन वज्रेण ब्राह्मणो राजानमात्मनोऽबलीयाथ्ँसं कुरुते यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान्भवति तदमित्रेभ्यऽएवैनमेतद्बलीयाथ्ँसं करोति ॥ १५ ॥

---

अथ सुमङ्गलनामानं ह्वयति–" बहुकार श्रेयस्कर भूयस्कर " इति । य एवंनामा भवति कल्याणमेवैतन्मानुष्यै वाचो वदति ॥ १४ ॥

अथास्मै ब्राह्मणः स्फ्यं प्रयच्छति, अध्वर्युर्वा, यो वाऽस्य पुरोहितो भवति । " इन्द्रस्य वज्रोऽसि तेन मे रध्य " ( वा. सं. १० । २८ )–इति । वज्रो वै स्फ्यः । स एतेन वज्रेण ब्राह्मणो राजानमात्मनोऽबलीयांसं कुरुते । यो वै राजा ब्राह्मणादबलीयान्–अमित्रेभ्यो वै स बलीयान्भवति । तद् अमित्रेभ्य एवैनमेतद्बलीयांसं करोति ॥ १५ ॥

---

त्यामन्त्रणे । ' त्वं ब्रह्मासि ' ' इति ' एतावदेव ' अनिरुक्तम् ' कस्यचिदपि देवताविशेषस्य प्रतिपादकं वाक्यं प्रतिवदेत् । तत् प्रशंसति—अपरिमितमिति । निरुक्तम् ' निःशेषेण वक्तुं योग्यं निरुक्तम् ' परिमितम् ', तत्पूर्वमन्त्रेषु " सविताऽसि " इत्यादिषु कृतम्; अत्रानिरुक्तप्रतिवचनेन यजमाने अपरिमितं वीर्यं निहितवान् भवतीति ॥ १३ ॥

विधत्ते–अथ सुमंगलेति[1] । सुमङ्गलनामानमाहूय बहुकारेति मन्त्रेण यजमानं कीर्तयेत् । पदत्रयं सम्बुध्यन्तम् । बहु करोतीति बहुकारः । " कर्मण्यण् " ( पा. सू. ३ । २ । १ ) श्रेयः करोतीति श्रेयस्करः । " कृञो हेतुताच्छील्यानुलोम्येषु " ( पा. सू. ३ । २ । २० ) इति टच् भूयो भूयो महत्तरं करोतीति भूयस्करः ! य एवमिति । ' यः ' पुरुषो लोके प्रियंकरनामा ' भवति ', स ' मानुष्यै ' मानुष्याः ' वाचः ' ' कल्याणं ' सर्वेषां प्रियमेव ' वदति ' ॥ १४ ॥

अत्र कात्यायनः उत्तरं तन्त्रं संगृह्य दर्शितवान्–" स्फ्यमस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वा इन्द्रस्य वज्र इति, राजा राजभ्राता सूतस्थपत्योरन्यतरो ग्रामणीः सजातश्चैवं पूर्वः पूर्व उत्तरस्मै " ( का.श्रौ. सू. १५ । १९७ । १९८ ) इति । तदिदं क्रमेण विधत्ते–अथास्मा इत्यादिना । ' अस्मै ' सुन्वते ' स्फ्यं ' ' ब्राह्मणः ' दद्यात् । हे स्फ्य ! ' इन्द्रस्य वज्रोऽसि ' । " स्फ्यस्तृतीयम्, रथस्तृतीयम् " ( तै. सं. ६ । २ । ६ । २ ) इति श्रुतेः । तेन कारणेन ' मे ' मम " रध्य ' रध्यतिर्वशगमने " ( निरु. १० । ४ । ३ ) मदीयाय यजमानाय सर्वं वशीकुरु । यद्वा, ' रध्य ' द्यूतस्थानपरिलेखनरूपं कार्यं साधयेति ॥

---

१–बहुकारेति च ह्वयत्येवंनामानम् । का० श्रौ० सू० १५ । १९६ ।

तꣳ राजा राजभ्रात्रे प्रयच्छति । (त्री) इन्द्रस्य वज्रोऽसि तेन मे रध्येति तेन राजा राजभ्रातरमात्मनोऽबलीयाꣳसं कुरुते ॥ १६ ॥

तꣳ राजभ्राता सूताय वा स्थपतये वा प्रयच्छति । (त्री) इन्द्रस्य वज्रोऽसि तेन मे रध्येति तेन राजभ्राता सूतं वा स्थपतिं वाऽऽत्मनोऽबलीयाꣳसं कुरुते ॥ १७ ॥

तꣳ सूतो वा स्थपतिर्वा ग्रामण्ये प्रयच्छति । (त्री इन्द्रस्य वज्रोऽसि तेन मे रध्येति तेन सूतो वा स्थपतिर्वा ग्रामण्यमात्मनोऽबलीयाꣳसं कुरुते ॥ १८ ॥

तं ग्रामणीः सजाताय प्रयच्छति । (त्री) इन्द्रस्य वज्रोऽसि तेन मे रध्येति तेन ग्रामणीः सजातमात्मनोऽबलीयाꣳसं कुरुते तद्यदेवꣳ सम्प्रयच्छन्ते नेत्पापवस्यसमसद्यथापूर्व्वमसदिति तस्मादेवꣳ सम्प्रयच्छन्ते ॥ १९ ॥

---

तं राजा राजभ्रात्रे प्रयच्छति—"इन्द्रस्य वज्रोऽसि तेन मे रध्य"—( वा. सं. १०।२८ ) इति । तेन राजा राजभ्रातरमात्मनोऽबलीयांसं कुरुते ॥ १६ ॥

तं राजभ्राता सूताय वा स्थपतये वा प्रयच्छति—"इन्द्रस्य वज्रोऽसि तेन मे रध्य"—इति । तेन राजभ्राता सूतं वा स्थपतिं वाऽऽत्मनोऽबलीयांसं कुरुते ॥ १७ ॥

तं सूतो वा स्थपतिर्वा ग्रामण्ये प्रयच्छति—"इन्द्रस्य वज्रोऽसि तेन मे रध्य"—इति । तेन सूतो वा स्थपतिर्वा ग्रामण्यमात्मनोऽबलीयांसं कुरुते ॥ १८ ॥

तं ग्रामणीः सजाताय प्रयच्छति—"इन्द्रस्य वज्रोऽसि तेन मे रध्य"—इति । तेन ग्रामणीः सजातमात्मनोऽबलीयांसं कुरुते । तद् यदेवं सम्प्रयच्छन्ते—नेत् पापवस्यसमसद्, यथापूर्वमसदिति । तस्मादेवं सम्प्रयच्छन्ते ॥ १९ ॥

---

मन्त्रस्य तात्पर्यमाह—वज्रो वा इति । अयमर्थः—ब्राह्मणो राज्ञे वज्ररूपस्फ्यप्रदानेन स्वस्मादबलीयांसमपि राजानं बलवत्तरं कृतवान् भवति । तदेवाह—यो वा इति । 'यः' खलु राजन्यो 'ब्राह्मणात्' हीनबलः, 'सः' 'अमित्रेभ्यः' शत्रुभ्यो बलवत्तरः भवति; तस्मात् ब्राह्मणः स्फ्यप्रदानेन शत्रुभ्योऽधिकबलं कृतवान् भवतीत्यर्थः ॥

एवमुत्तरत्रापि योज्यम् । सूतग्रामणीसजाता व्याख्याताः ( श. प. ५।३।१।५।६ ) राजादिषु सजातान्तेषु स्फ्यप्रदानं सम्भूय प्रशंसति—तद्यदेवमिति । 'पापवस्यसं' पापिष्ठं कर्म 'नेदसत्' न भवेत्, किन्तु यथापूर्वं भवेदिति बुद्ध्या प्रदानमित्यर्थः ॥ १६–१९ ॥

( न्तुऽथ ) अथ सजातश्च प्रतिप्रस्थाता च । (चै) एतेन स्फ्येन पूर्वाग्नौ शुक्रस्य पुरोरुचाऽधिदेवनं कुरुतोऽत्ता वै शुक्रोऽत्तारमेवैतत्कुरुतः ॥ २० ॥

( तोऽथ ) अथ मन्थिनः पुरोरुचा विमितं विमिनुतः । ( ऽ ) आद्यो वै मन्थी तदत्तारमेवैतत्कृत्वाऽथास्माऽएतदाद्यं जनयतस्तस्मान्मन्थिनः पुरोरुचा विमितं विमिनुतः ॥ २१ ॥

( तोऽथा ) अथाध्वर्युः । (श्च) चतुर्गृहीतमाज्यं गृहीत्वाऽधिदेवने हिरण्यं निधाय जुहोत्यग्निः पृथुर्धर्मणस्पतिर्जुषाणो ऽअग्निः पृथुर्धर्मणस्पतिराज्यस्य वेतु स्वाहेति ॥ २२ ॥

---

अथ सजातश्च प्रतिप्रस्थाता चैतेन स्फ्येन पूर्वाग्नौ शुक्रस्य पुरोरुचाऽधिदेवनं कुरुतः। अत्ता वै शुक्रः। अत्तारमेवैतत्कुरुतः ॥ २० ॥

अथ मन्थिनः पुरोरुचा विमितं विमिनुतः। आद्यो वै मन्थी। तदत्तारमेवैतत्कृत्वाऽथास्माऽएतदाद्यं जनयतः। तस्मान्मन्थिनः पुरोरुचा विमितं विमिनुतः ॥ २१ ॥

अथाध्वर्युश्चतुर्गृहीतमाज्यं गृहीत्वाऽधिदेवने हिरण्यं निधाय जुहोति—"अग्निः पृथुर्धर्मणस्पतिर्जुषाणोऽग्निः पृथुर्धर्मणस्पतिराज्यस्य वेतु स्वाहा"—इति ॥ २२ ॥

---

अथ द्यूतस्थानकरणं च सविशेषं समन्त्रकञ्च विधत्ते—**अथ सजातश्चेति** । आहवनीयस्योत्तरप्रदेशे स्थापितः स पूर्वाग्निः, तस्मिन् तत्संस्पृष्टम् अधिदीव्यन्त्यत्रेति 'अधिदेवनम्' द्यूतभूमिः, तां शुक्रग्रहस्य पुरोरुचा "तं प्रत्नथा पूर्वथा विश्वथेमथा"—इत्यनया ( वा. सं. ७।१२) ( ऋ. सं. ५।४४।१ ) 'कुरुतः' । अत एव सूत्रम्—"प्रत्तेन सजातः प्रतिप्रस्थाता च पूर्वाग्निसहितां शुक्रपुरोरुचा द्यूतभूमिं कुरुतः"—(का. श्रौ. सू. १५।१९९) ॥ चतुर्थकाण्डे द्वितीयेऽध्याये शुक्रामन्थिग्रहयोरत्त्राद्यमात्रेन स्तुतयोः पुरोरुग्द्वयं विहितम्; तदर्थस्तु तत्रैव व्याख्यात इति नेह पुनर्व्याख्यायते ( श. प. ४।२।१।३।१० ) । शुक्रस्यात्तृत्वात् तन्मन्त्रेण द्यूतभूमिकरणाद् यजमानमत्तारं कृतवन्तौ भवतः ॥ २० ॥

**अथ मन्थिन इति**[1] । मन्थिग्रहपुरोरुचा "अयं वेनश्चोदयत् पृश्निगर्भा"—( वा. सं. ७ । १६ ) इत्यनया 'विमितं' विमिन्वन्त्यत्रेति विमितं चतुर्द्वारं चतुरस्रं मण्डपं तद् 'विमिनुतः' कुरुतः । **आद्यो वा** इत्यादेरयमर्थः—मन्थिन आद्यत्वात् तन्मन्त्रेण विमितकरणादत्तृभूताय यजमानाय आद्यं सम्पादितवन्तौ भवत इत्यर्थः ॥ २१ ॥

अथाधिदेवने हिरण्यनिधानपूर्वकं होमं समन्त्रकं विधत्ते—**अथाध्वर्युरिति**[2] । यज्ञे देवानां प्रथनात् 'पृथुः', सः 'धर्मणस्पतिः' धर्म्मणः धारणस्य पतिः, अतो देवतोद्देशेन हूयमानं हविः 'जुषाणः' सेवमानः 'अग्निः'। 'पृथुर्द्धर्मणस्पतिः'—इति पुनर्वचनमादरार्थम्, विध्यनुवादाभिप्रायं वा । 'आज्यस्य' घृतस्य । कर्मणि

---

१—मंथिनो विमितम् । का० श्रौ० सू० १५ । २०० । २—द्यूतभूमौ हिरण्यं निधायाभिजुहोति चतुर्गृहीतेनाग्निः पृथुरिति । का. श्रौ. सू. १५। २०१ ।

( त्यु ) अथाक्षान्निवपति । स्वाहाकृताः सूर्य्यस्य रश्मिभिर्यतध्वᳪ सजातानां मध्यमेष्ठ्यायेत्येष वाऽअग्निः पृथुर्यदधिदेवनं तस्यैतेऽङ्गारा यदक्षास्तमेवैतेन प्रीणाति तस्य ह वाऽएषाऽनुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वैतदेवं वेदैतेष्वक्षेष्वाह गां दीव्यध्वमिति पूर्वाग्निवाहौ दक्षिणा ॥ २३ ॥

---

अथाक्षान्निवपति–" स्वाहाकृताः सूर्यस्य रश्मिभिर्यतध्वम् । सजातानां मध्यमेष्ठ्याय "-( वा० सं० १० । २९ ) इति । एष वाऽअग्निः पृथुः । यदधिदेवनम् । तस्यैतेऽङ्गाराः–यदक्षाः । तमेवैतेन प्रीणाति । तस्य ह वाऽएषाऽनुमता गृहेषु हन्यते–यो वा राजसूयेन यजते, यो वैतदेवं वेद । एतेष्वक्षेष्वाह–गां दीव्यध्वमिति । पूर्वाग्निवाहौ दक्षिणा ॥ २३ ॥

---

षष्ठी । आज्यं ' वेतु ' पिबतु । " वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु " ( धा. पा. अ. प. ३८ । ) ' स्वाहा '–इति होमार्थः ॥ २२ ॥

तत्र विमिते अक्षनिवापं समन्त्रकं विधत्ते–अथाक्षानिति । ' स्वाहाकृताः ' स्वाहाकारपूर्विकया आहुत्या तर्पिताः । हे अक्षाः ! ' सजातानां ' समानजन्मनां भ्रातॄणां ' मध्यमेष्ठ्याय ' मध्यमप्रदेशे यजमानावस्थानाय ' सूर्यस्य रश्मिभिः ' ' यतध्वम् ' सङ्गता भवतेति ॥

मन्त्रवत्कर्मकरणं प्रायेण कस्यैचिद् देवतायै भवति, अतो द्यूतभूमावक्षनिवापस्य देवतासन्तर्पकत्वं दर्शयति–एष वा अग्निरिति । ' अधिदेवनं ' द्यूतस्थानम् । तदेवोपपादयति–तस्यैत इति । ' तस्य ' अग्नेः 'अङ्गाराः' एव देवनसाधनभूताः ' अक्षाः ' तस्मात् तेनाक्षनिधानेन अग्निमेव प्रीणितवान् भवतीति ॥

अत्र यदुक्तं सूत्रे–" अक्षान् निवपति स्वाहाकृता इति, गां दीव्यध्वमित्याह "–इति " सजाताय कलिंगां " इति च ( का. श्रौ. सू. १९ । २०२–२०९ ) देवनकाले गामेव पणत्वेन कृत्वा, " गां दीव्यध्वम् "–इति द्यूतकरणप्रैषं ब्रूयात् । ततोऽस्य पणत्वेनाङ्गीकृतां गामानीय घ्नन्ति । " हन्तिश्च आहननमात्रार्थो न मारणार्थः " ( का. श्रौ. सू. १९ । २०९ भा. ) । तदिदं विधत्ते–तस्य ह वा इति । यो राजसूयेन यजते, यो वा एतत् कर्म वेत्ति, तस्य गृहेष्वेषा गौः ' अनुमता ' अङ्गीकृता ' हन्यते ' । अत्र गोप्रसक्तिं दर्शयति–एतेष्वक्षेष्विति । द्यूतकर्मणो दक्षिणां विधत्ते-पूर्वाग्नीति । पूर्वाग्निम् आहवनीयं वहत इति पूर्वाग्निवाहौ तावनड्वाहौ ' दक्षिणा ' । आपस्तम्बोऽप्याह–" पष्ठौहीं विदीव्यन्त ओदनमुद्ब्रुवते, तदेतस्य कर्मणः पूर्वाग्निवाहौ दक्षिणा, तौ ब्रह्मणे देयौ "–( आ. श्रौ. सू. १८।१९।२,३ ) इति ।

तदिदं देवनं सन्निधिबलादभिषेचनीयाख्यसोमयागमध्यगतमपि महाप्रकरणबलात् इष्टिपशुसोमयागात्मकराजसूयशेष इति गम्यते, प्रकरणेन सन्निधेर्बाध इति हि सिद्धान्तितम् ( मी. जै. सू. ३।३।१४ ) ॥ २३ ॥

---

१–पूर्वाग्निवाहौ दक्षिणा । का श्रौ. सू. १५ । २०६ ।

(णाऽथा) अथाहाग्नये स्विष्टकृतेऽनुब्रूहीति । तद्यदन्तरेणाहुतीऽएतत्कर्म क्रियत ऽएष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता ऽएतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत ऽएवैतस्य प्रजापतेर्दधाति मध्यतः सुवति तस्मादन्तरेणाहुतीऽएतत्कर्म क्रियतऽआश्राव्याहाग्निꣳ स्विष्टकृतं यजेति वषट्कृते जुहोति ॥ २४ ॥

(त्य) अथेडामादधाति । (त्यु) उपहूतायामिडायामप ऽउपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति तꣳ स्तोत्राय प्रमीवति स ऽउपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥ २५ ॥

इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् ॥ ५-४-१ ॥ ( ४. ४. ) ॥

वरुणाद्ध वाऽअभिषिषिचानाद्भर्गोऽपचक्राम । वीर्यं वै भर्ग ऽएष विष्णुर्यज्ञः सोऽस्मादपचक्राम शश्वद्ध ऽएषोऽपाꣳ रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति सोऽस्य भर्गं निर्जघान ॥ १ ॥

---

अथाह-' अग्नये स्विष्टकृतेऽनुब्रूहि '-इति । तद् यदन्तरेणाहुतीऽएतत्कर्म क्रियते । एष वै प्रजापतिः-य एष यज्ञस्तायते । यस्मादिमाः प्रजाः प्रजाताः । एतम्वेवाप्येतर्ह्यनु प्रजायन्ते । तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति, मध्यतः सुवति । तस्मादन्तरेणाहुतीऽएतत्कर्म क्रियते । आश्राव्याह । ' अग्निं स्विष्टकृतं यज '-इति । वषट्कृते जुहोति ॥ २४ ॥

अथेडामादधाति । उपहूतायामिडायामप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति । माहेन्द्रं ग्रहं गृहीत्वा स्तोत्रमुपाकरोति । तं स्तोत्राय प्रमीवति । स उपावरोहति । सोऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥ २५ ॥

वरुणाद्ध वाऽअभिषिषिचानाद्भर्गोऽपचक्राम । वीर्यं वै भर्गः । एष विष्णुर्यज्ञः । सोऽस्मादपचक्राम । शश्वद्-य एषोऽपां रसः सम्भृतो भवति-येनैनमेतदभिषिञ्चति । सोऽस्य भर्गं निर्जघान ॥ १ ॥

---

अथ पयस्यास्विष्टकृदिडादिकं दर्शयति-अथाहाग्नय इति । प्रधानसौविष्टकृतहविषोर्मध्ये यद् देवनादिकं कृतम्, तत् प्रजापतिमध्यनिधानरूपेण प्रशंसति-तद् यदन्तरेणेति । आश्राव्याहेत्यादि । स्पष्टम् (तै. सं. १ । ८ । ११ ) ॥ २४ ॥

" अथेडामादधातीति[1] ( श. प. १।२।२।१९ ) कण्डिका वाजपेये व्याख्याता ॥ २५ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥ ५-४-४ ॥

अथ पञ्चमे ब्राह्मणे संसृप्तां हवींषि दशसङ्ख्याकानि दशपेयाख्यस्य सोमयागस्य दीक्षाः, उपसद्यागाः, ऋत्विग्विशेषेण दक्षिणाश्च विधीयन्ते; तत्र हवींषि विधातुं प्रस्तौति-वरुणाद्ध वा इति । पूर्वमभिषिच्यमानाद्

---

१-पयस्यास्विष्टकृदिडं करोति माहेन्द्रादि च । का० श्रौ० सू० १५ । २०७ ।

तमेताभिर्देवताभिरनुसमसर्पत् । ( ख ) सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाऽग्निना तेजसा सोमेन राज्ञा विष्णुनैव दशम्या देवतयाऽन्वविन्दत् ॥ २ ॥

( ग ) तद्यदेनमेताभिर्देवताभिरनुसमसर्पत् । ( घ ) तस्मात्सꣳसृपो नामाथ यद्दशमेऽहन्प्रसुतो भवति तस्माद्दशपेयोऽथो यद्दशदशैकैकं चमसमनुप्रसृप्ता भवन्ति तस्माद्वेव दशपेयः ॥ ३ ॥

---

तमेताभिर्देवताभिरनुसमसर्पत् । "सवित्रा प्रसवित्रा सरस्वत्या वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा वरुणेनौजसाऽग्निना तेजसा सोमेन राज्ञा विष्णुनैव दशम्या देवतया"–( वा० सं० १० । ३० ) अन्वविन्दत् ॥ २ ॥

तद् यदेनमेताभिर्देवताभिरनुसमसर्पत्–तस्मात्संसृपो नाम । अथ यद्दशमेऽहन्प्रसुतो भवति–तस्माद् दशपेयः । अथो यद्दश–दशैकैकं चमसमनुप्रसृप्ता भवन्ति–तस्माद्वेव दशपेयः ॥ ३ ॥

---

'वरुणात्' सकाशात्, भर्गः' यज्ञरूपं वीर्यम् 'अपचक्राम' अपसृतम् । तदेव प्रतिपादयति–शश्वद् एष इति ॥ १ ॥

तमेताभिरित्यादि । 'तम्' अपसृतम् भर्गम् 'एताभिः' वक्ष्यमाणाभिः सावित्रादिभिः 'अनुसमसर्पत्' वरुणोऽनुक्रमेण प्राप्तवान् । तादृशदेवताः क्रमेण दर्शयति–सवित्रेति । 'प्रसवित्रा' प्रसवकारिणा 'सवित्रा' देवतया, 'अन्वविन्दत्'–इति सर्वत्रानुषङ्गः । 'वाचा' वाग्रूपया 'सरस्वत्या', 'रूपैः' उपलक्षितेन 'त्वष्ट्रा', 'पशुभिः' उपलक्षितेन 'पूष्णा', 'अस्मे' अस्मै अपसृताय वीर्याय तदधीनकरणार्थम् 'इन्द्रेण'; यद्वा, विभक्तिव्यत्ययः, अनेन वीर्येण वीर्यवता इन्द्रेण, 'ब्रह्मणा' ब्राह्मणजात्यभिमानिना 'बृहस्पतिना' 'ओजसा वरुणेन' स्वीयदेवतारूपेण, अतीतकल्पगतेन वरुणेन वा, 'तेजसा अग्निना' तेजोरूपेणाग्निना, 'राज्ञा सोमेन' 'दशम्या' दशसङ्ख्यापूरयित्र्या 'विष्णुना' 'एव' 'देवतया' 'अन्वविन्दत्' अपक्रान्तं वीर्यमिति ॥ २ ॥

हविषां नाम निर्ब्रूते–तद्यदेनमेताभिरित्यादिना । 'तत्' तत्र यस्मात् 'एताभिः' 'अनुसमसर्पत्' अन्वविन्दत् सम्यक् सृप्यते प्राप्यते वीर्यमाभिरग्न्यादिभिर्देवताभिरिति 'संसृपः' देवताः, तासां हवींष्यपि तन्नामानि । अथ दशपेयं विधातुं तच्छब्दं निर्वक्ति–अथ यद् दशमेऽहन्निति । पूर्वमुक्तानि दशसंसृपां हवींषि प्रत्येकमेकैकदिने कर्त्तव्यानि । तथाच सूत्रम्–"दशोत्तराणि संसृपां हवींषि निर्वपति, देवयजनान्तरमेकैकेनोत्सर्पति, शालायामन्त्यम्"–( का. श्रौ. सू. १९ ।२१९–२२१ ) इति । तैत्तिरीये तु स्पष्टमुक्तम्–"अग्निना देवेन प्रथमेऽहन्ननुप्रायुङ्क्त, सरस्वत्या वाचा द्वितीये, सवित्रा प्रसवेन तृतीये" इत्यादिना ( तै. ब्रा. १।८।१।१ ) संसृप्शब्दवाच्याभ्यो दशभ्य इष्टिभ्य ऊर्ध्वं दशपेयार्थसोमाभिषवः । तथा च दशमे दिने दशपेयार्थसोमाभिषवप्रवृत्तेर्दशपेयत्वम् ॥ अयमत्र क्रमः–दशानां संसृपां हविषां मध्ये सप्त हवींषि प्रतिदिनं क्रमेणैकैकं कृत्वा सप्तमे दिने सप्तम्यामिष्टौ अतीतायाम् अष्टमं हविर्निर्वपेत् । अपराह्णे दशपेयस्य द्वादशपुण्डरीकस्रक्प्रतिमोकलक्षणां दीक्षां कृत्वा तदानीमेव प्रथमामुपसदं कृत्वा, तदन्ते संसृपामष्टमं हविर्निर्वपेत् । अष्टमे दिने उपसदन्ते संसृपां

(स्त) तदाहुः । (ई) दश पितामहान्त्सोमपान्त्संख्याय प्रसर्पेत्तथो हास्य सोमपीथमश्नुते दशपेयो हीति तद्वै ज्या द्वौ त्रीनित्येव पितामहान्त्सोमपान्विन्दन्ति तस्मादेता ऽएव देवताः संख्याय प्रसर्पेत् ॥ ४ ॥

(दे) एताभिर्वै देवताभिर्वरुण ऽएतस्य सोमपीथमाश्नुत । तथोऽएवैष ऽएताभिरेव देवताभिरेतस्य सोमपीथमश्नुते तस्मादेताऽएव देवताः संख्याय प्रसर्पेदथ यदैवैषोदवसानीयेष्टिः संतिष्ठत ऽएतस्याभिषेचनीयस्य ॥ ५ ॥

---

तदाहुः–दश पितामहान्त्सोमपान्सङ्ख्याय प्रसर्पेत् । तथो हास्य सोमपीथमश्नुते । दशपेयो हीति । तद्वै ज्या द्वौ त्रीनित्येव पितामहान्सोमपान्विन्दति । तस्मादेता एव देवताः सङ्ख्याय प्रसर्पेत् ॥ ४ ॥

एताभिर्वै देवताभिर्वरुण एतस्य सोमपीथमाश्नुत । तथोऽएवैष एताभिरेव देवताभिरेतस्य सोमपीथमश्नुते । तस्मादेता एव देवताः सङ्ख्याय प्रसर्पेत् । अथ यदैवैषोदवसानीयेष्टिः सन्तिष्ठतऽएतस्याभिषेचनीयस्य ॥ ५ ॥

---

नवमं हविर्निरुप्य, नवमे दिवसे तृतीयोपसदन्ते संसृपां दशमं हविर्निरुप्य, तस्मिन्नेवाहनि अग्नीषोमीयपशुप्रचारं कुर्यात् । ततो दशमेऽहनि सोमोऽभिषूयते, हुतशेषश्च पीयत इति दशपेयत्वमिति ॥ निर्वचनान्तरं दर्शयति–अथ यद् दश-दशेति । एकैकस्मिन् पात्रे दशभिर्ब्राह्मणैः पातव्यः सोमरसो यस्मिन् काले स दशपेयो भक्षणकालः । " दशदशैकैकं चमसमनुभक्षयन्ति "–( का. श्रौ. सू. १५ । २३५ ) इति हि सूत्रम् ॥ ३ ॥

अत्र यदुक्तं सूत्रकृता दशपेयं प्रस्तुत्य–" पितामहदशगणं सोमपानां सङ्ख्याय सर्पणं सवित्रेति वाऽनुवाकमुक्त्वा "–( का. श्रौ. सू. १५ । २३३ । २३४ ) इति । अस्यार्थः–भक्षणार्थं सदःप्रसर्पणकाले सोम्यानां शतसङ्ख्याकब्राह्मणानां मध्ये एकैकस्य पात्रस्य भक्षयितारो दश–दश पुरुषाः यजमानस्य दश सोमपान् ' पितामहान् ' यजमानस्य पितामहः, तत्पितामहस्तत्पितामह इत्येवं पितामहदशगणं सङ्ख्याय गणयित्वा प्रसर्पेयुः । यद्वा " सवित्रा प्रसवित्रा सरस्वत्या वाचा "–( वा. सं. १० । ३० ) इति संहितोक्तमन्त्रेण प्रसर्पणं कुर्यादिति ॥

अत्र पितामहगणनेन प्रसर्पणं पूर्वपक्षयति–तदाहुरिति । तद् दूषयति–तद् वै ज्येति । ' ज्या ' ज्यानिः, निकृष्ट इत्यर्थः । अत्रोपपत्तिमाह–द्वौ त्रीनिति । यदि पितामहान् जानीयुः, तर्हि ' द्वौ त्रीन् एव ' जानीयुः, न सर्वान्; तस्मात् सवित्रादिदशदेवताः सङ्ख्याय प्रसर्पणं कुर्यादित्यर्थः ॥ ४ ॥

तदिदं वरुणवृत्तान्तेन प्रशंसति–एताभिर्वा इति । संसृप्शब्दवाच्यहविर्निर्वापकालं दर्शयति- अथ यदैवैषेति । ' अभिषेचनीयस्य ' एतदाख्यस्य सोमयागस्य ' उदवसानीयेष्टिः ' ' यदा ' ' सन्तिष्ठते ' समाप्यते ॥ ५ ॥

( स्या ) अथैतानि हवीᳪँषि निर्वपति । सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशᳪँ सविता वै देवानां प्रसविता सवितृप्रसूत ऽएव तद्वरुणोऽनुसमसर्पत्तथोऽ एवैष एतत्सवितृप्रसूत ऽएवानुसᳪँसर्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ६ ॥

(त्यु) अथ सारस्वतं चरुं निर्वपति । वाग्वै सरस्वती वाचैव तद्वरुणोऽनुसमसर्पत्तथो ऽएवैष एतद्वाचैवानुसᳪँसर्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ७ ॥

( त्यु ) अथ त्वाष्ट्रं दशकपालं पुरोडाशं निर्वपति । त्वष्टा वै रूपाणामीष्टे त्वष्ट्रैव तद्रूपैर्व्वरुणोऽनुसमसर्पत्तथोऽएवैष एतत्त्वष्ट्रैव रूपैरनुसᳪँसर्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ८ ॥

( त्यु ) अथ पौष्णं चरुं निर्वपति । पशवो वै पूषा पशुभिरेव तद्वरुणोऽनुसमसर्पत्तथो ऽएवैष ऽएतत्पशुभिरेवानुसᳪँसर्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ९ ॥

---

अथैतानि हवींषि निर्वपति । सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशम् । सविता वै देवानां प्रसविता, सवितृप्रसूत एव तद् वरुणोऽनुसमसर्पत् । तथोऽएवैष एतत्सवितृप्रसूत एवानुसंसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥ ६ ॥

अथ सारस्वतं चरुं निर्वपति । वाग्वै सरस्वती । वाचैव तद्वरुणोऽनुसमसर्पत् । तथोऽएवैष एतद्वाचैवानुसंसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥ ७ ॥

अथ त्वाष्ट्रं दशकपालं पुरोडाशं निर्वपति । त्वष्टा वै रूपाणामीष्टे । त्वष्ट्रैव तद्रूपैर्वरुणोऽनुसमसर्पत् । तथोऽएवैष एतत्त्वष्ट्रैव रूपैरनुसंसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥ ८ ॥

अथ पौष्णं चरुं निर्वपति । पशवो वै पूषा । पशुभिरेव तद्वरुणोऽनुसमसर्पत् । तथोऽएवैष एतत्पशुभिरेवानुसंसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥ ९ ॥

---

अथैतानीति । 'अथ' तदनन्तरम् 'एतानि हवींषि' निर्वपेदित्यर्थः । तत्प्रकारः कात्यायनेन स्पष्टीकृतः—" सावित्र-सारस्वत-त्वाष्ट्र-पौष्णैन्द्र-बार्हस्पत्य—वारुणाग्नेय सौम्य-वैष्णवानि यथोक्तं प्रतीष्टिपुण्डरीकाणि प्रयच्छति, हिरण्मयानि वोत्तमासु तिसृषु पञ्च तेषां स्रजं प्रतिमुञ्चते तद्दीक्षो भवति "—( का. श्रौ. सू. १९ ।-२२२–२२७ ) इति । सप्तम्यां ब्रह्मागारात् सोममाहृत्यासन्द्यभिमर्शनादि करोत्युपसद्देवताहवींषि निर्वपत्युपसदं त इच्छन्निति । उक्तानां दशसङ्ख्याकानां हविषां मध्ये सप्त हवींषि पूर्वमिष्टितन्त्रेण कृत्वा, सप्त हिरण्मयपुण्डरीकाणि दत्त्वा, उत्तरासु तिसृषु पञ्च दत्त्वा, द्वादश पुण्डरीकस्रक्प्रतिमोकदक्षिणां दशपेयदीक्षां कृत्वा,

( त्यु ) अथैन्द्रमेकादशकपालं पुरोडाशं निर्व्वपति । (ती) इन्द्रियं वै व्वीर्य्यमिन्द्र ऽइन्द्रियेणैव तद्वीर्येण व्वरुणोऽनुसमसर्पत्तथोऽएवैषऽएतदिन्द्रियेणैव व्वीर्येणानुसꣳसर्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ १० ॥

( त्यु ) अथ बार्हस्पत्यं चरुं निर्व्वपति । ब्रह्म वै बृहस्पतिर्ब्रह्मणैव तद्वरुणोऽनुसमसर्पत्तथोऽएवैष ऽएतद्ब्रह्मणैवानुसꣳसर्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ ११ ॥

( त्यु ) अथ व्वारुणं यवमयं चरुं निर्व्वपति । स येनैवौजसेमाः प्रजा व्वरुणोऽगृह्णात्तेनैव तदोजसा व्वरुणोऽनुसमसर्पत्तेनोऽएवैष तदोजसाऽनुसꣳसर्पति तत्रैकं पुण्डरीकं प्रयच्छति ॥ १२ ॥

(त्यु) उपसदो दशम्यो देवताः । (स्तु) तत्र पञ्च पुण्डरीकाण्युपप्रयच्छति तां द्वादशपुण्डरीकाꣳ स्रजं प्रतिमुञ्चते सा दीक्षा तया दीक्षया दीक्षते ॥ १३ ॥

---

अथैन्द्रमेकादशकपालं पुरोडाशं निर्वपति । इन्द्रियं वै वीर्यमिन्द्रः । इन्द्रियेणैव तद् वीर्येण वरुणोऽनुसमसर्पत् । तथोऽएवैष एतदिन्द्रियेणैव वीर्येणानुसंसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥ १० ॥

अथ बार्हस्पत्यं चरुं निर्वपति । ब्रह्म वै बृहस्पतिः । ब्रह्मणैवैतद्वरुणोऽनुसमसर्पत् । तथोऽएवैष एतद्ब्रह्मणैवानुसंसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥ ११ ॥

अथ वारुणं यवमयं चरुं निर्वपति । स येनैवौजसेमाः प्रजा वरुणोऽगृह्णात्–तेनैव तदोजसा वरुणोऽनुसमसर्पत् । तेनोऽएवैष तदोजसाऽनुसंसर्पति । तत्रैकं पुण्डरीकं प्रयच्छति ॥ १२ ॥

उपसदो दशम्यो देवताः । तत्र पञ्च पुण्डरीकाण्युपप्रयच्छति । तां द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते–सा दीक्षा । तया दीक्षया दीक्षते ॥ १३ ॥

---

सप्तम्यां संसृप्यागसम्बन्धिन्यां सप्तमदिने क्रियमाणायां वारुण्यामिष्टावतीतायां पूर्वमेवाभिषेचनीयदशपेययोरपि द्विधा सोमं क्रीत्वा दशपेयार्थं ब्रह्मागारे स्थापितं सोममाहृत्य, आसन्द्यभिमर्शनाद्यातिथ्यान्तं कृत्वा, संसृपां हविषां मध्ये अन्त्यानि आग्नेय-सौम्य-वैष्णवानि त्रीणि हवींषि उपसत्प्रतिनिधित्वेन कर्त्तव्यानि । उपसदामप्यग्निसोमविष्णुदेवता अन्तिमत्वात्, तथाप्यग्नीषोमयोरेकस्याप्यभावे दशसंख्यापूरणाभावात् तयोरपि दशमत्वमुच्यते । ‘ तत्र ’ तिसृषु देवतासु तद्देवत्यहविःषु ‘ पञ्च पुण्डरीकाणि ’ देयानि भवन्तीत्येतत् ॥

अथ द्वादशपेयस्य दीक्षां विधत्ते–तां द्वादशेति । दत्तानि सप्त, अन्तिमहविस्त्रये दास्यमानानि पञ्चेति द्वादश पुण्डरीकाणि भवन्ति । प्रकृतौ “ अप्सु स्नात्यपोऽश्नाति ”–इत्यादिना यद्दीक्षामात्रं विहितम्, तदत्रापवदितुं दत्तदास्यमानपुण्डरीकस्रक्प्रतिमोको विहितः । सूत्रन्तु पूर्वमुदाहृतम् । आपस्तम्बेन तु विशेष उक्तः– ‘ अपो दीक्षायाः स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते ”–( आ. श्रौ. सू. १९।२० । १४ ) इति । प्रतिमोचयेदित्यर्थः ॥ ६–१३ ॥

( तेऽथ ) अथ यद्द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य सर्व्वं वै संवत्सरः सर्व्वेणैवैनमेतद्दीक्षयति यानि पुण्डरीकाणि तानि दिवो रूपं तानि नक्षत्राणाᳪं रूपं ये व्वधकास्तेऽन्तरिक्षस्य रूपं यानि बिसानि तान्यस्यै तदेनमेषु लोकेष्वधि दीक्षयति ॥ १४ ॥

( त्यु ) अथ राजानं क्रीत्वा । द्वेधोपनह्य परिवहन्ति ततोऽर्धमासन्त्या-मासाद्य प्रचरत्यथ य ऽएषोऽर्धो ब्रह्मणो गृहे निहितो भवति तमासन्त्या-मासाद्यातिथ्येन प्रचरति यदातिथ्येन प्रचरत्यथोपसद्भिः प्रचरति यदो-पसद्भिः प्रचरति ॥ १९ ॥

( त्यु ) अथैतानि हवीᳪंषि निर्व्वपति । ( त्या ) आग्नेयमष्टाकपालं पुरोडाशᳪं सौम्यं चरुं व्वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन यथे-ष्टचैवं यजते ॥ १६ ॥

---

अथ यद्द्वादश भवन्ति । द्वादश वै मासाः सम्वत्सरस्य । सर्वं वै सम्वत्सरः । सर्वेणैवैनमेतद्दी-क्षयति । यानि पुण्डरीकाणि–तानि दिवो रूपम्, तानि नक्षत्राणां रूपम् । ये वधकास्तेऽन्तरिक्षस्य रूपम् । यानि बिसानि–तान्यस्यै । तदेनमेषु लोकेष्वधि दीक्षयति ॥ १४ ॥

अथ राजानं क्रीत्वा द्वेधोपनह्य परिवहन्ति । ततोऽर्धमासन्त्यामासाद्य प्रचरति । अथ य एषोऽर्धो ब्रह्मणो गृहे निहितो भवति–तमासन्त्यामासाद्य आतिथ्येन प्रचरति ।यदातिथ्येन प्रचरति–अथो-पसद्भिः प्रचरति । यदोपसद्भिः प्रचरति ॥ १९ ॥

अथैतानि हवींषि निर्वपति–आग्नेयमष्टाकपालं पुरोडाशम्, सौम्यं चरुम्, वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा यथेष्टचा एवं यजते ॥ १६ ॥

---

पुण्डरीकगतां सङ्ख्यां सम्भूय मासात्मकसम्वत्सरात्मना प्रशंसति–अथ यद्द्वादशेति । अतस्तावत्सङ्ख्या-विशिष्टपद्मैर्दीक्षाकरणेन सर्वात्मसंवत्सरेण यजमानं दीक्षायुक्तं कृतवान् भवति । प्रकारान्तरेण प्रशंसति–यानीति । पद्मगतपत्रनालबिसानां स्वर्गान्तरिक्षभूम्याख्यलोकत्रयात्मकत्वात्तत्प्रतिमोकलक्षणदीक्षाकरणेन ‘ एनं ’ यजमानम् ‘ एषु ’ त्रिषु ‘ लोकेषु ’ दीक्षितवान् भवतीत्यर्थः ॥ १४ ॥

अथ राजानं क्रीत्वेत्यादेरयमर्थः–पूर्वमभिषेचनीयदीक्षान्ते राजानं ‘ क्रीत्वा ’ ‘ द्वेधोपनह्य, ’ तत्रैकं दशपे-यार्थं पर्युह्य ब्रह्मागारे स्थापयित्वा, एकेनाभिषेचनीये प्रचारः कृतः; अथ दशपेये ब्रह्मगृहे स्थापितं तं सोममा-हृत्य, ‘ आसन्द्यामासाद्य, ’ आतिथ्यया प्रचरेयुः; तदनन्तरमुपसद्यागः । तत्राग्निसोमविष्णुदेवताकोपसत्प्रति-निधित्वेन संसृष्ट्यागसम्बन्धिनामुत्तमानां त्रयाणामाग्नेयसौम्यवैष्णवानामेव निर्वापं पूर्वपक्षयति––यदोपसद्भिः प्रचरतीति ॥ १९ ॥

अथैतानि हवींषि निर्वपत्याग्नेयमिति । तेन यथेष्टचेति । एकैकोपसत्स्थाने ‘ तेन ’ एकेन हविषा

तदु तथा न कुर्यात् । (ह्व) ह्वलति वाऽएष यो यज्ञपथादेत्येति वाऽएष यज्ञपथाद्यऽ उपसत्पथादेति तस्मादुपसत्पथादेव नेयात् ॥ १७ ॥

(त्स) स यदग्निं यजति । (त्य) अग्निनैवैतत्तेजसाऽनुसꣳसर्पत्यथ यत्सोमं यजति सोमेनैवैतद्राज्ञाऽनुसꣳसर्पत्यथ यद्विष्णुं यजति यज्ञो वै विष्णुस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥ १८ ॥

स एष सप्तदशोऽग्निष्टोमो भवति । सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥ १९ ॥

---

तदु तथा न कुर्यात् । ह्वलति वाऽएषः–यो यज्ञपथादेति । एति वाऽएष यज्ञपथाद्–य उपसत्पथादेति । तस्मादुपसत्पथादेव नेयात् ॥ १७ ॥

स यदग्निं यजति–अग्निनैवैतत्तेजसाऽनुसंसर्पति । अथ यत् सोमं यजति–सोमेनैवैतद्राज्ञाऽनुसंसर्पति–अथ यद्विष्णुं यजति । यज्ञो वै विष्णुः । तद्यज्ञं प्रत्यक्षमाप्नोति । तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥ १८ ॥

स एष सप्तदशोऽग्निष्टोमो भवति । सप्तदशो वै प्रजापतिः । प्रजापतिर्यज्ञः । तद्यज्ञं प्रत्यक्षमाप्नोति । तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥ १९ ॥

---

' यथेष्टया ' इष्टितन्त्रेण कुर्यात् । उपसत्त्वयार्थमेतद्धविस्त्रयं कर्त्तव्यमिति शाखान्तरीयः पक्षः ( आप. श्रौ. सू. १८ । २० । १८ ) ॥ १६ ॥

तमिमं निराकरोति–तदु तथेति । 'तत्' 'तथा' 'न कुर्यात्' । 'एषः ह्वलति वै ' प्रच्युतो भवेत् । एतच्छब्दार्थमाह–यो यज्ञपथादेतीति । 'एति' अपगच्छति । तदेव पुनर्दर्शयति–एति वा एष इति । तस्मात् ' उपसत्पथात्' उपसन्मार्गात् 'नेयात्' न प्रच्युतो भवेत्, तत उपसदो न पृथक् कुर्यात् । तदन्ते एतानि संसृपामन्तिमानि हवींषि त्रीणि चेष्टितन्त्रेण पृथक् कुर्यात् । अत एव सूत्रकार उपसद्यागान्ते एतेषां निर्वापं विकल्पेन दर्शयामास–"उपसदन्त इच्छन्" ( का. श्रौ. सू. १९ । २३२ ) इति ॥ १७ ॥

तद्धस्देवताहविषामाग्नेयसौम्य–वैष्णवानां संसृपां हविषामनिर्वापे तद्धेतुकसर्पणस्यासिद्धिमाशङ्क्य निरस्यति–स यदग्निमिति । उपसद्यागैरेव अग्निसोमविष्णव इष्टाः; तदानीमेव तैः संसर्पणं जातमिति ॥ १८ ॥

दशपेयस्य सोमसंस्थारूपं विधत्ते–स एष सप्तदश इति । ' स एषः ' दशपेयः क्रतुः सप्तदशस्तोमसाध्योऽग्निष्टोमसंस्थो भवतीत्यर्थः । " सप्तदशं स्तोत्रं भवति " ( तै. सं. १ । ८ । १८ । १ ) इति हि तैत्तिरीयकम् ॥ १९ ॥

तस्य द्वादश प्रथमगर्भाः । पष्ठौह्यो दक्षिणा द्वादश वै मासाः संव्वत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥ २० ॥

तासां द्वादश गर्भाः । (स्ता) ताश्चतुर्विंꣳशतिश्चतुर्विंꣳशतिर्वै संव्वत्सरस्यार्धमासाः संव्वत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥ २१ ॥

ता ब्रह्मणे ददाति । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति तस्मात्ता ब्रह्मणे ददाति हिरण्मयीꣳ स्रजमुद्गात्रे रुक्मꣳ होत्रे हिरण्मयौ प्राकाशावध्वर्युभ्यामश्वं प्रस्तोत्रे व्वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छꣳसिने व्वाससी नेष्टापोतृभ्यामन्यतरतो युक्तं यवाचितमच्छावाकाय गामग्नीधे ॥ २२ ॥

---

तस्य द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा । द्वादश वै मासाः सम्वत्सरस्य । सम्वत्सरः प्रजापतिः । प्रजापतिर्यज्ञः । तद् यज्ञं प्रत्यक्षमाप्नोति । तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥ २० ॥
तासां द्वादश गर्भाः । ताश्चतुर्विंशतिः । चतुर्विंशतिर्वै सम्वत्सरस्यार्धमासाः । सम्वत्सरः प्रजापतिः । प्रजापतिर्यज्ञः । तद् यज्ञं प्रत्यक्षमाप्नोति । तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥ २१ ॥
ता ब्रह्मणे ददाति । ब्रह्मा हि यज्ञं दक्षिणतो गोपायति । तस्मात्ता ब्रह्मणे ददाति । हिरण्मयीं स्रजमुद्गात्रे । रुक्मं होत्रे । हिरण्मयौ प्राकाशावध्वर्युभ्याम् । अश्वं प्रस्तोत्रे । वशां मैत्रावरुणाय । ऋषभं ब्राह्मणाच्छंसिने । वाससी नेष्टापोतृभ्याम् । अन्यतरतो युक्तं यवाचितमच्छावाकाय । गामग्नीधे ॥ २२

---

गर्भिणीनां गवां दानं विधत्ते—तस्य द्वादशेति[1] । ता द्वादशसङ्ख्याका गाः ब्रह्मणे दद्यादित्युत्तरेण (२२क०) सम्बन्धः । संख्यां सम्भूय संवत्सरात्मना स्तौति—द्वादश वै मासा इति ॥ २० ॥

प्रकारान्तरेणापि प्रशंसति—तासां द्वादश गर्भा इति । ता गावो द्वादश, तासां गर्भा अपि द्वादश, मिलित्वा चतुर्विंशतिः, संवत्सरस्यापि चतुर्विंशतिरर्द्धमासाः, तस्मात् संवत्सरात्मत्वेन ता बालगर्भा गावः प्रशस्ता इत्यर्थः ॥ २१ ॥

ता ब्रह्मणे ददातीति । हिरण्यस्रजो दानं विधत्ते—हिरण्मयीमिति । ददातीत्यनुवर्तते ॥

वर्तुलस्य स्वर्णाभरणस्य दानं विधत्ते—रुक्मं होत्र इति ( का. श्रौ. सू. १९ । २४० ) । द्वाभ्यां प्रत्येकं प्राकाशदानं विधत्ते—हिरण्मयाविति । प्राकाशौ दीपस्तम्भावित्येके, सुवर्णदर्पणावित्यपरे । अश्वदानं विधत्ते—अश्वं प्रस्तोत्र इति । वन्ध्याया गोर्दानं विधत्ते—वशामिति ( का. श्रौ. सू. १९ । २४० ) । रेतस्सेचनसम-

---

१—ब्रह्मणे ददात्यꣳ शुवद्दक्षिणा । का. श्रौ, सू. १५ । २३९ । २—हिरण्मयीꣳ स्रजमुद्गात्रे रुक्मꣳ होत्रे हिरण्मयौ प्राकाशावध्वर्युभ्यामश्वं प्रस्तोत्रे वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छंसिने व्वाससी नेष्टापोतृभ्यामन्यतरतो युक्तं यवाचितमच्छावाकाय गामग्नीधे । का. श्रौ. सू. १५ । २४० ।

ता वाऽएताः । ( ० ) द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संव्वत्सरस्य मासाः संव्वत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्षमाप्नोति तं प्रत्यक्षमाप्त्वाऽऽत्मन्कुरुते ॥ २३ ॥

इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् ॥ ५–४–२ ॥ ( ४. ५. )

इति चतुर्थोऽध्यायः ॥ ४ ॥

---

ता वाऽएताः द्वादश वा त्रयोदश वा दक्षिणा भवन्ति । द्वादश वा वै त्रयोदश वा सम्वत्सरस्य मासाः । सम्वत्सरः प्रजापतिः । प्रजापतिर्यज्ञः । तद् यज्ञं प्रत्यक्षमाप्नोति । तम्प्रत्यक्षमाप्त्वाऽऽत्मन् कुरुते ॥२३॥

---

र्थस्य गोदानं विधत्ते–ऋषभमिति । द्वाभ्यां प्रत्येकं वस्त्रदानं विधत्ते–वाससी इति । एकेनानडुहा युक्तस्य यवपूर्णस्य शकटस्य दानं विधत्ते–अन्यतरत इति । अनडुहो दानं विधत्ते–गामग्नीध इति । " अनड्वाहमग्नीधे " इति हि सूत्रितम् ( का. श्रौ. सू. १५ । २४० ) । " अनड्वाहमग्नीधे वह्निर्वा अनड्वान् " इति हि तैत्तिरीयकम् ( तै. ब्रा. १।८।२।५ ) ॥ २२ ॥

ता एता दक्षिणाः सम्भूय संवत्सरात्मना प्रशंसति–ता वा एता द्वादशेति । पष्ठौह्यादयोऽनडुदन्ता द्वादश दक्षिणाः; बालगर्भिणीनां गवां दक्षिणात्वाद्बालगर्भिणीनामपि दक्षिणात्वेन परिगणने त्रयोदश भवन्ति; संवत्सरस्यापि द्वादश चैत्रादयः अधिकमासेन सह त्रयोदश मासा भवन्ति । तस्मादेताभिर्दक्षिणाभिर्यज्ञरूपं संवत्सरमेवाप्तवान् भवतीत्यर्थः ॥ २३ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥ ( ५–४·५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्चसीरीस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलमत्रमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे चतुर्थाध्यायः समाप्तः ॥५–४॥

---

१–" गौश्चानड्वांश्च भवति " इति काण्वपाठात् । इति कर्कभाष्ये । सूत्रन्तु " गामग्नीधे " इत्येव ।

# अथ पञ्चमकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ।



आग्नेयोऽष्टाकपालः पुरोडाशो भवति । तं पूर्व्वार्धऽआसादयत्यैन्द्र ऽएकादशकपालः पुरोडाशो भवति सौम्यो वा चरुस्तं दक्षिणार्ध ऽआसादयति वैश्वदेवश्चरुर्भवति तं पश्चार्धऽआसादयति मैत्रावरुणी पयस्या भवति तामुत्तरार्धऽआसादयति बार्हस्पत्यश्चरुर्भवति तं मध्यऽआसादयत्येष चरुः पञ्चबिलस्तद्यत्पञ्च हवीꣳषि भवन्ति तेषां पञ्च बिलानि तस्माच्चरुः पञ्चबिलो नाम ॥ १ ॥

तद्यदेतेन राजसूययाजी यजते । यदेवैनं दिशः समारोहयति यदृतून्यत्स्तोमान्यच्छन्दाꣳसि तस्मादेवैनमेतेन निष्क्रीणाति स यद्धैतेन राज-

---

अथ पञ्चबिलाख्याश्चरुहोमाः ।

आग्नेयोऽष्टाकपालः पुरोडाशो भवति, तं पूर्वार्धऽआसादयति (१)। ऐन्द्र एकादशकपालः पुरोडाशो भवति। सौम्यो वा चरुः। तं दक्षिणार्धऽआसादयति (२)। वैश्वदेवश्चरुर्भवति। तं पश्चार्द्ध आसादयति (३)। मैत्रावरुणी पयस्या भवति। तामुत्तरार्धऽआसादयति (४)। बार्हस्पत्यश्चरुर्भवति। तं मध्यऽआसादयति (५)। एष चरुः पञ्चबिलः। तद् यत् पञ्च हवींषि भवन्ति। तेषां पञ्च बिलानि। तस्माच्चरुः पञ्चबिलो नाम ॥ १ ॥

तद्यदेतेन राजसूययाजी यजते—यदेवैनं दिशः समारोहयति, यदृतून्, यत्स्तोमान्, यच्छन्दांसि—

---

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्। निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ पञ्चमाध्याये पञ्चबिलसञ्ज्ञकश्चरुः, द्वादश प्रयुजां हवींषि, पशुद्वयम्, केशवपनीयातिरात्रः, सौत्रामणीप्रयोगः, राजसूयसमाप्त्युदवसानीयेष्टिश्च विधीयते। अत्र कात्यायनः-"उत्तरे शुक्ले पञ्चबिलः, आग्नेय ऐन्द्रः सौम्यो वा वैश्वदेवश्चरुः, पयस्या मैत्रावरुणीऽबार्हस्पत्यश्चरुः, प्रतिदिशमासादनमाग्नेयं पुरस्तात् प्रदक्षिणमितराणि मध्येऽन्त्यम्" (का. श्रौ. सू. १५।२४४-२४६) इति। आग्नेयादीनि पञ्च हवींषि पूर्वादिक्रमेण मध्ये च स्थापयेत्। सोऽयं पञ्चबिलसञ्ज्ञकश्चरुरित्यर्थः ॥ तदिदं विधत्ते—आग्नेयमिति। वेदिमध्ये 'पूर्वार्द्धे' पूर्वभागे आसादयेत्। एवमुत्तरत्र 'दक्षिणार्द्धे' इति योज्यम्। 'पयस्या' आमिक्षा ॥ हविःपञ्चकस्य पञ्चबिलसञ्ज्ञां निर्वक्ति—तद्यदिति। तेषां हविषामासादनार्थानि एकस्यां पात्र्यां प्रागादिक्रमेण यतः पञ्च बिलानि, तस्मादेषा यागपञ्चकस्य पञ्चबिलश्चरुरिति सञ्ज्ञा ॥ १ ॥

एतेषां हविषां करणे प्रयोजनमाह—तद्यदेतेनेति। 'एतेन' हविः—पञ्चकेन राजसूययाजिना यष्टव्यम्। कुतः? यतः पूर्वम् 'एनं' यजमानं प्राचीमारोहेत्यादिभिर्मन्त्रैः प्राच्याद्याः पञ्च दिशः, वसन्ताद्यृतून्, त्रिवृदा-

सूयुयाजी न युजेतोद्वा ह माद्येत्प्र वा पतेत्तस्माद्वाऽएतेन राजसूययाजी यजते ॥ २ ॥

स युदाग्नेयेनाष्टाकपालेन पुरोडाशेन प्रचरति । युदेवैनं प्राचीं दिशᳬं समारोहयति युद्वतून्यत्स्तोमान्यच्छन्दाᳬंसि तुस्मादेवैनमेतेन निष्क्रीणाति सᳬंस्रवं बार्हस्पत्ये चरावुवनयति ॥ ३ ॥

( त्यु ) अथ युदैन्द्रेणैकादशकपालेन पुरोडाशेन प्रचरति । सौम्येन वा चरुणा युदेवैनं दक्षिणां दिशᳬं समारोहयति युद्वतून्यत्स्तोमान्यच्छन्दाᳬंसि तुस्मादेवैनमेतेन निष्क्रीणाति सᳬंस्रवं बार्हस्पत्ये चरावुवनयति ॥ ४ ॥

( त्यु ) अथ युद्वैश्वदेवेन चरुणा प्रचरति । युदेवैनं प्रतीचीं दिशᳬं समारोहयति युद्वतून्यत्स्तोमान्यच्छन्दाᳬंसि तुस्मादेवैनमेतेन निष्क्रीणाति सᳬंस्रवं बार्हस्पत्ये चरावुवनयति ॥ ५ ॥

---

तस्मादेवैनमेतेन निष्क्रीणाति । स यद्धैतेन राजसूययाजी न यजेत । उद्वा ह माद्येत्, प्र वा पतेत् । तस्माद्वाऽएतेन राजसूययाजी यजते ॥ २ ॥

स यदाग्नेयेनाष्टाकपालेन पुरोडाशेन प्रचरति–यदेवैनं प्राचीं दिशं समारोहयति, यदृतून्, यत्स्तोमान्, यच्छन्दांसि–तस्मादेवैनमेतेन निष्क्रीणाति । संस्रवं बार्हस्पत्ये चरावनयति ॥ ३ ॥

अथ यदैन्द्रेणैकादशकपालेन पुरोडाशेन प्रचरति, सौम्येन वा चरुणा–यदेवैनं दक्षिणां दिशं समारोहयति, यदृतून्, यत्स्तोमान्, यच्छन्दांसि–तस्मादेवैनमेतेन निष्क्रीणाति । संस्रवं बार्हस्पत्ये चरावनयति ॥ ४ ॥

अथ यद्वैश्वदेवेन चरुणा प्रचरति–यदेवैनं प्रतीचीं दिशं समारोहयति, यदृतून्, यत्स्तोमान्, यच्छन्दांसि–तस्मादेवैनमेतेन निष्क्रीणाति । संस्रवं बार्हस्पत्ये चरावनयति ॥ ५ ॥

---

दीन्स्तोमान्, गायत्र्यादीनि च्छन्दांसि चाध्वर्युरारोहितवान्; ‘ तस्माद् ’ ‘ एतेन ’ हविःपञ्चकेन ‘ एनं ’ यजमानं दिगादिभ्यः सकाशात् पुनः ‘ निष्क्रीणाति ’ स्वाधीनं कृतवान् भवति ॥

अकरणे प्रत्यवायमाह–स यद्धेति । यदि न यजेत तर्हि यजमानः ‘ उन्माद्येत् ’ उन्मत्तो भवेत्, ‘ प्रपतेत् ’ प्रच्युतो भवेत् । ‘ वा ’–शब्दद्वयमन्योन्यविकल्पार्थम् ॥ २ ॥

हविषां क्रमेण निष्क्रयणसाधनत्वं विवृणोति–स यदाग्नेयेनेत्यादि । प्रत्येकहविःप्रचारादनन्तरं बार्हस्पत्ये चरौ संस्रवावनयनं विधत्ते–संस्रवमिति । सूत्रञ्च भवति–“ पूर्वैः-पूर्वैश्चरित्वा चरित्वा मध्यमे संस्रवासेचनम् ”–( का. श्रौ. सू. १९ । २४७ ) इति । ‘ मध्ये ’ मध्यमप्रदेशे स्थापिते बार्हस्पत्ये चरावित्यर्थः ॥ ३–५ ॥

( त्यु ) अ॒थ य॒न्मैत्रावरु॒ण्या पय॒स्यया प्रच॒रति । य॒देवै॒नमु॒दीचीं दि॒शᳶं समारो॒हयति य॒द्दतून्य॒त्स्तो॒मान्यच्छ॒न्दाᳶंसि त॒स्मादे॒वैनमे॒तेन नि॒ष्क्रीणाति सᳶंस्र॒वं बार्हस्पत्ये॒ चराव॒वनयति त॒द्य॒त्सᳶंस्र॒वान्बार्हस्पत्ये॒ चराव॒वनयति स॒र्व॒त ऽए॒वास्मिन्ने॒तद॒न्नाद्यं॑ दधाति त॒स्माद्ु दि॒शो दि॒श ए॒व रा॒ज्ञेऽन्ना॒द्यमभि॒ह्रियते ॥ ६ ॥

( तेऽथ ) अ॒थ य॒द्बार्हस्पत्येन च॒रुणा प्रच॒रति । य॒देवै॒नमू॒र्ध्वां दि॒शᳶं समारो॒हयति य॒द्दतून्य॒त्स्तो॒मान्यच्छ॒न्दाᳶंसि त॒स्मादे॒वैनमे॒तेन नि॒ष्क्रीणाति ॥ ७ ॥

स य॒ऽ ए॒षऽ आ॒ग्नेयो॒ऽष्टाक॒पालः पुरो॒डाशो भ॒वति । त॒स्य हि॒रण्यं॒ द॒क्षिणाऽऽग्नेयो वा॒ऽए॒ष य॒ज्ञो भवत्यग्ने॒ रेतो॒ हि॒रण्यं॒ त॒स्माद्धि॒रण्यं॒ द॒क्षिणा त॒द॒ग्नीधे द॒दात्य॒ग्निर्वा॒ऽए॒ष नि॒दानेन य॒दाग्नीद्ध्र॒स्त॒स्मात्त॒द॒ग्नीधे द॒दाति ॥ ८ ॥

---

अथ यन्मैत्रावरुण्या पयस्यया प्रचरति—यदेवैनमुदीचीं दिशं समारोहयति, यदृतून्, यत्स्तोमान्, यच्छन्दांसि—तस्मादेवैनमेतेन निष्क्रीणाति। संस्रवं बार्हस्पत्ये चरावनयति। तद् यत् संस्रवान्बार्हस्पत्ये चरावनयति—सर्वत एवास्मिन्नेतदन्नाद्यं दधाति। तस्माद्ु दिशो दिश एव राज्ञेऽन्नाद्यमभिह्रियते ॥ ६ ॥

अथ यद्बार्हस्पत्येन चरुणा प्रचरति—यदेवैनमूर्ध्वां दिशं समारोहयति, यदृतून्, यत्स्तोमान्, यच्छन्दांसि—तस्मादेवैनमेतेन निष्क्रीणाति ॥ ७ ॥

स य एष आग्नेयोऽष्टाकपालः पुरोडाशो भवति—तस्य हिरण्यं दक्षिणा। आग्नेयो वाऽएष यज्ञो भवति। अग्ने रेतो हिरण्यम्। तस्माद्धिरण्यं दक्षिणा। तदग्नीधे ददाति। अग्निर्वाऽएष निदानेन यदाग्नीध्रः। तस्मात्तदग्नीधे ददाति ॥ ८ ॥

---

अथ यन्मैत्रावरुण्येति। चतुर्णां हविषां संस्रवस्य बार्हस्पत्ये चरौ अवनयनं सम्भूयान्नाद्यसम्पादनरूपेण प्रशंसति—तद् यत् संस्रवानिति। यतो 'बार्हस्पत्ये चरौ' सर्वेषां हविषां हुतशिष्टस्यावनयनम्, 'तस्मात्' 'राज्ञे' 'दिशो दिशः' सर्वस्या अपि दिशः सकाशात् 'अन्नाद्यम्' 'अभिह्रियते' आनीयत इत्यर्थः ॥ ६ ॥

अथ यद् बार्हस्पत्येनेत्यादि। पूर्ववत्। अत्र संस्रवावनयनाभावो विशेषः ॥ ७ ॥

आग्नेयादिहविषामृत्विग्विशेषेभ्यो हिरण्यादिदक्षिणादानं विधत्ते-स य एष इति। आग्नेयहविषः, तद्दक्षिणात्वेन विहितस्य हिरण्यस्य च अग्निसम्बन्धित्वं समानो धर्म्मः। हिरण्यस्याग्निरेतस्त्वं श्रूयते—" तस्य रेतः परापतत्, तद्धिरण्यम्" ( तै. ब्रा. १।३।८ ) इति। अग्नेरेवाग्नीध्रत्वं प्रथमकाण्डे स्तम्बयजुर्हरणब्राह्मणे

( त्यु ) अ॒थ य॒ ऽए॒ष ऽऐन्द्र ऽए॒काद॑शकपालः पुरोडा॒शो भ॑वति । त॒स्य॑ऽर्ष॒भो द॒क्षिणा स ह्यैन्द्रो य॒दृष॒भो य॒द्यु सौम्य॒श्चरुर्भ॑वति त॒स्य ब॒भ्रुर्गौ॑र्द॒क्षिणा स हि सौम्यो य॒द्बभ्रुस्तं ब्र॒ह्मणे ददाति ब्र॒ह्मा हि य॒ज्ञं द॒क्षिण॒तो॑ऽभिगोपाय॒ति त॒स्मात्तं ब्र॒ह्मणे ददाति ॥ ९ ॥

( त्यु ) अ॒थ य॒ऽए॒ष वैश्वदेव॒श्चरुर्भ॑वति । त॒स्य पृ॒षन्गौ॑र्द॒क्षिणा भूमा वा॒ ऽए॒तद्रू॒पाणां यत्पृ॒षतो गोर्वि॒शो वै विश्वे॑ देवा॒ भूमो वै वि॒ट् त॒स्मा॑त्पृ॒षन्गौ॑र्द॒क्षिणा तथ्ँ होत्रे॑ ददाति होता॑ हि भूमा त॒स्मात्तथ्ँ होत्रे॑ ददाति ॥ १० ॥

( त्यु ) अ॒थ यैषा॒ मैत्रावरु॒णी पय॒स्या भ॑वति । त॒स्यै व॒शा द॒क्षिणा सा हि मैत्रावरु॒णी य॒द्वशा य॒दि व॒शां न वि॒न्देद॒प्यै॒षैव का चाप्रवी॑ता स्यात्सु॒र्वा

---

अथ य एष ऐन्द्र एकादशकपालः पुरोडाशो भवति—तस्यऽर्षभो दक्षिणा । स ह्यैन्द्रो—यदृषभः । यद्यु सौम्यश्चरुर्भवति—तस्य बभ्रुर्गौर्दक्षिणा । स हि सौम्यो—यद्बभ्रुः । तं ब्रह्मणे ददाति । ब्रह्मा हि यज्ञं दक्षिणतोऽभिगोपायति । तस्मात्तं ब्रह्मणे ददाति ॥ ९ ॥

अथ य एष वैश्वदेवश्चरुर्भवति—तस्य पृषन्गौर्दक्षिणा । भूमा वाऽएतद्रूपाणां—यत्पृषतो गोः । विशो वै विश्वेदेवाः । भूमो वै विद् । तस्मात्पृषन्गौर्दक्षिणा । तं होत्रे ददाति । होता हि भूमा । तस्मात्तं होत्रे ददाति ॥ १० ॥

अथ यैषा मैत्रावरुणी पयस्या भवति—तस्यै वशा दक्षिणा । सा हि मैत्रावरुणी—यद्वशा । यदि

---

स्पष्टमाम्नातम् ( श. प. १ । २ । २ । १३ ) । 'निदानेन' कारणेन, निरूपणे सतीत्यर्थः । हविष आग्नेयत्वात्, हिरण्यस्याग्निरेतस्त्वात्, अग्नेरेवाग्नीद्ध्रत्वात्, आग्नीद्ध्रसम्प्रदानकत्वं हिरण्यस्य युक्तमित्यर्थः । एवमुत्तरत्रापि यथायोग्यं साम्यं द्रष्टव्यम् ॥ ८ ॥

अथ य एष ऐन्द्र इति[२] । तस्यर्षभ इत्यादि । ऋषभस्यैन्द्रत्वम्, सेक्तृत्वसाम्यात् । बभ्रोः सोमसम्बन्धित्वम्, "सौम्यं बभ्रुमालभेत"—इति श्रुतेरवगतम् ( तै. सं. २।१।३ ) ॥ ९ ॥

अथ य एष वैश्वदेव इति । 'पृषन्' विन्दुयुक्तः चित्रवर्ण इत्यर्थः । तस्य वैश्वदेवत्वमुपपादयति—भूमा वा इति । भूमरूपत्वम्, नानाच्छन्दस्के बहुविधमन्त्रे शंसनादवगम्यते ॥ १० ॥

अथ यैषा मैत्रावरुणीति । 'वशा' वन्ध्या । तदभावे 'अप्रवीता' वेतेः प्रजनार्थान्निष्ठा । 'अप्रजाता' अगृहीतगर्भेत्यर्थः ॥ ११ ॥

---

१–आग्नेयो हिरण्यदक्षिणोऽग्नीधे ददाति । का० श्रौ० सू० । १५ । २४८ । २–ऐंद्रस्य ऋषभः सौम्यस्य बभ्रुर्ब्रह्मणे । का० श्रौ० सू० । १५ । २४८ । ३–वैश्वदेवस्य पृषन् होत्रे । का. श्रौ. सू. १५ । २४८ । ४–पयस्याया वशाऽभावेऽप्रवीताऽध्वर्युभ्यः । का० श्रौ० सू० १५ । २४८ ।

इ॒षे॒व॒ व॒शा॒ऽप्र॒वी॒ता॒ ता॒मध्व॒र्युभ्यां॑ ददाति प्राणोदा॒नौ व्वा॒ऽअ॒ध्व॒र्यू प्राणो॒दा॒नौ मि॒त्राव॒रु॒णौ त॒स्मा॒त्ता॒मध्व॒र्युभ्यां॑ ददाति ॥ ११ ॥

( त्यु ) अ॒थ य॒ऽए॒ष बार्हस्पत्य॒श्च॒रुर्भ॑वति । त॒स्य शि॒तिपृ॒ष्ठो गौर्द॒क्षिणै॒षा वा॒ऽऊ॒र्ध्वा बृ॒ह॒स्प॒तेर्दि॒क्तदे॒ष॒ ऽउ॒प॒रि॒ष्टा॒द॒र्य॒म्णः प॒न्था॒स्त॒स्मा॒च्छि॒ति॒पृ॒ष्ठो बार्हस्पत्य॒स्य द॒क्षि॒णा तं॑ ब्र॒ह्म॒णे ददाति बृ॒ह॒स्प॒तिर्वै दे॒वा॒नां ब्र॒ह्मै॒ष वा॒ऽए॒त॒स्य ब्र॒ह्मा भवति त॒स्मा॒त्तं ब्र॒ह्म॒णे ददाति स हैते॒नापि विष्ठाव्व्रा॒ज्यन्ना॒द्यका॑मो यजेत तदस्मिन्त्स॒र्व्वतो॒ऽन्ना॒द्यं द॑धाति स॒ हान्ना॒द॒ ऽए॒व॒ भवति ॥ १२ ॥

इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् ॥ ५-४-३ ॥ ( ५. १. ) ॥

---

वशां न विन्देद् । अपि यैव काचाप्रवीता स्यात् । सर्वा ह्येव वशाऽप्रवीता, तामध्वर्युभ्यां ददाति । प्राणोदानौ वाऽअध्वर्यू । प्राणोदानौ मित्रावरुणौ । तस्मात्तामध्वर्युभ्यां ददाति ॥ ११ ॥

अथ य एष बार्हस्पत्यश्चरुर्भवति–तस्य शितिपृष्ठो गौर्दक्षिणा । एषा वाऽऊर्ध्वा बृहस्पतेर्दिक् । तदेष उपरिष्टादर्यम्णः पन्थाः । तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा । तं ब्रह्मणे ददाति । बृहस्पति वैंर्देवानां ब्रह्मा । एष वा एतस्य ब्रह्मा भवति । तस्मात्तं ब्रह्मणे ददाति । स हैतेनापि विष्ठाव्राजी–अन्नाद्यकामो यजेत । तदस्मिन्त्सर्वतोऽन्नाद्यं दधाति । स हान्नाद एव भवति ॥ १२ ॥

---

अथ य एष बार्हस्पत्य इति । 'शितिपृष्ठः' श्वेतपृष्ठः । बार्हस्पत्यचरोः श्वेतपृष्ठस्य गोर्दक्षिणात्वमुपपादयति–एषा वा ऊर्ध्वेति । "ऊर्ध्वा दिक् बृहस्पतिर्देवता"–इति श्रुतेः ऊर्ध्वा दिक् बार्हस्पत्या । 'उपरिष्टात्' उपरिभागे 'अर्यम्णः' सूर्यस्य 'पन्थाः' मार्गः; 'तस्मात्' उपरिभागे श्वेतत्वसाम्यात्, तादृशो गौर्दक्षिणात्वेन युज्यत इत्यर्थः ॥

अथैतस्य हविःपञ्चकस्य फलान्तराय राजसूयाद् बहिः प्रयोगं दर्शयति–स हैतेनापीति । "विष्ठाव्राजी" एकत्र सन्निविष्टः इतस्ततः पर्यटनमकुर्वन् अन्नाद्यकामः एकत्र स्थित्वैव सर्वतो मेऽन्नं स्यादिति कामयमान इत्यर्थः । पुरुषोऽपि एतेन हविःपञ्चकेन यजनं कुर्यात् । तत् प्रशंसति–तदस्मिन्निति ( तै. सं. १ । ८।१९ ) ( तै. ब्रा. १।८।३ ) ॥ १२ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥ ( ५-५-१ ) ॥

---

१-बार्हस्पत्यस्य शितिपृष्ठो ब्रह्मणे । का० श्रौ० सू० १५ । २४८ । २–अन्नाद्यकामस्याप्येषा । का० श्रौ० सू० १५ । २४९ ।

स वै प्रयुजाᳬं हविर्भिर्यजते । तद्यत्प्रयुजाᳬं हविर्भिर्यजतऽऋतून्वाऽएत-त्सुषुवाणो युङ्क्ते तऽएनमृतवो युक्ता वहन्त्यृतून्वा प्रयुक्ताननुचरति तस्मा-त्प्रयुजाᳬं हविर्भिर्यजते ॥ १ ॥

तानि वै द्वादश भवन्ति । द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति मासि मासि यजेतेत्याहुः को वेद मनुष्यस्य तस्मान्न मासि मासि यजेत शम्यापराव्याधे शम्यापराव्याधऽएव षड्भिर्यजते प्राङ्यानथ पुनरावृत्तः शम्यापराव्याधे शम्यापराव्याधऽएव षड्भिर्यजते ॥ २ ॥

---

### अथ द्वादश प्रयुजां हवींषि ।

स वै प्रयुजां हविर्भिर्यजते । तद् यत्प्रयुजां हविर्भिर्यजते—ऋतून्वाऽएतत्सुषुवाणो युङ्क्ते—त ऽएनमृतवो युक्ता वहन्ति—ऋतून्वा प्रयुक्ताननुचरति—तस्मात्प्रयुजां हविर्भिर्यजते ॥ १ ॥

तानि वै द्वादश भवन्ति । द्वादश वै मासाः सम्वत्सरस्य । तस्माद्द्वादश भवन्ति । मासि मासि यजेतेत्याहुः—को वेद मनुष्यस्य । तस्मान्न मासि मासि यजेत । शम्यापराव्याधे शम्यापराव्याधऽएव षड्भिर्यजते प्राङ् यान् । अथ पुनरावृतः शम्यापराव्याधे शम्यापराव्याधऽएव षड्भिर्यजते ॥ २ ॥

---

द्वितीये ब्राह्मणे प्रयुजां हवींषि विधीयन्ते । कात्यायनः—" द्वादशोत्तराणि प्रयुग्घवींषि, मासान्तराणि, आहवनीयाद्वा पुरस्ताच्छम्याप्रासे शम्याप्रास आग्नेय—सौम्य—सावित्र—बार्हस्पत्य—त्वाष्ट्र—वैश्वानरा यथोक्तम्, एवमावृत्तस्य चरवः सारस्वत—पौष्ण—मैत्र—क्षैत्रपत्य—वारुणादित्याः षट्—षट् वैकतन्त्रे पूर्वाग्निवाहौ द्वौ—द्वौ षण्णां—षण्णां दक्षिणा "—( का. श्रौ. सू. १९ । २९०—२९९ ) इति । अयमर्थः । द्वादशाग्नेयादीनि प्रयुजां हवींषि आहवनीयात्—पूर्वदेशे एकैकशम्याव्याधप्रदेशे एकैकस्मिन् मासि एकैकं हविरिति क्रमेण षट् यष्टव्यानि; तथा प्रत्यावृत्य तेष्वेव स्थानेषु क्रमेण षट् यष्टव्यानि । यद्वा, षट्कं षट्कमेकीकृत्य एकतन्त्रेण कुर्यात् । तेषां पूर्वाग्निवाहकौ द्वौ—द्वौ अनड्वाहौ दक्षिणेति ॥

तदिदं विधत्ते—स वै प्रयुजामिति । विविधं प्रशंसति—ऋतून् वा इति । एष ' सुषुवाणः ' यष्टा ' ऋतून् ' मासानेव प्र—' युङ्क्ते ' कर्मणे योजयति । ' ऋतवः ' अपि ' एनं ' ' युक्ताः ' सन्तो ' वहन्ति ' प्रापयन्तीष्टं फलम् । इदानीमनुष्ठाताऽपि प्रयुक्तान् ' ऋतून् ' ' अनु '—लक्ष्य ' चरति ' अनुसरति, तत्तदनुसरण—जनितफलं प्राप्तुकामः, तस्मात् प्रयुजां हवियागः कर्त्तव्यः । तथा च तैत्तिरीयके—" मासि मासि एतानि हवींषि निरूप्याणीत्याहुः, तेनैवर्तून् प्रयुङ्क्ते "—( तै. ब्रा. १ । ८ । ४ । ३ । ) इति ॥ १ ॥

तेषां सङ्ख्यां विधत्ते-तानि वै द्वादशेति । तेषां प्रतिमासं यजनं पूर्वपक्षत्वेनोपन्यस्यति—मासि मासीति । तं पक्षं निराकरोति को वेदेति । मनुष्यस्यायुःपरिमाणस्यावगन्तुमशक्यत्वान्मासि—मासि यजनं न कर्त्तव्यमित्यर्थः ।

हविःषट्कस्यैकीकृत्य यागकरणेऽपि कश्चिद् विशेषं पूर्वपक्षत्वेनोपन्यस्यति—शम्यापराव्याध इति । शम्या-

१३६३

तद्ध तथा न कुर्यात् । ( षड् ) षडेवैतानि पूर्वाणि हवीꣳषि निर्वपति समानबर्हीꣳषि तासां देवतानाꣳ रूपं यथा शिशिरे युक्त्वा प्राञ्चऽआप्रावृषं यायुस्तत्षडृतून्युङ्क्ते तऽएनꣳ षडृतवो युक्ताः प्राञ्च ऽआप्रावृषं वहन्ति षड्वऽर्तून्प्रयुक्तानाप्रावृषमनुचरति पूर्वाग्निवाहौ द्वौ दक्षिणा ॥ ३ ॥

षडेवोत्तराणि हवीꣳषि निर्वपति । समानबर्हीꣳषि तासां देवतानाꣳ रूपं यथा पुनरावर्तेरन्वार्षिकमभि तत्षडृतून्युङ्क्ते तऽएनꣳ षडृतवो युक्ता

---

तद्ध तथा न कुर्यात् । षडेवैतानि पूर्वाणि हवींषि निर्वपति—समानबर्हींषि । तासां देवतानां रूपम् । यथा शिशिरे युक्त्वा प्राञ्च आप्रावृषं यायुः । तत् षडृतून्युङ्क्ते तऽएनं षडृतवो युक्ताः प्राञ्च आप्रावृषं वहन्ति । षड्वऽर्तून्प्रयुक्तानाप्रावृषमनुचरति । पूर्वाग्निवाहौ द्वौ दक्षिणा ॥ ३ ॥

षडेवोत्तराणि हवींषि निर्वपति—समानबर्हींषि । तासां देवतानां रूपम्—यथा पुनरावर्तेरन्वार्षिकमभि । तत् षडृतून्युङ्क्ते । तऽएनं षडृतवो युक्ता वार्षिकमभिवहन्ति । षड्वऽर्तून्प्रयुक्तान्वार्षिकमनुचरति ।

---

परास्ता विध्यति निपतति यत्रेति स शम्यापराव्याधो देशः । तत्र देशे पूर्वैः 'षड्भिः' 'प्राङ्' प्राङ्मुखो 'यान्' गच्छन् यजेत । आहवनीयात् पूर्वदेशे एकैकशम्याप्रासे षट् कर्त्तव्यानीत्यर्थः । अथ पुनरिति । पुनरावृत्तेन एकैकशम्याप्रासप्रदेशे अपराणि षट् कर्त्तव्यानीति ॥ २ ॥

तं पक्षं निराकृत्य पक्षान्तरं विधत्ते—तद्ध तथेति । 'पूर्वाणि' 'षट् हवींषि' 'समानबर्हींषि'; बर्हिः-शब्दस्तन्त्रोपलक्षकः, एकतन्त्राणि कर्त्तव्यानीत्यर्थः । पूर्वहविःषट्कदेवताः प्रशंसति—तासां देवतानामिति । 'तासां' पूर्वहविःषट्कस्य देवतानाम् अग्नीषोमादीनां षण्णां रूपमेतत् । 'यथा' 'शिशिरे' ऋतौ 'युक्त्वा' युक्ताश्वाः राजानः 'प्राञ्चः' सन्तः 'आप्रावृषं' प्रावृट्कालपर्यन्तं 'यायुः' गच्छेयुः । तदिदं प्राङ्मुखं यानं पूर्वपूर्वशम्याप्रासेषु यष्टव्यानामग्न्यादिदेवतानां सम्बन्धि रूपमित्यर्थः । प्रयुजां पूर्वाणि षड्हवींषि प्रस्तुत्य तैत्तिरीयके शिशिरादिषु षट्सु मासेषु राजभेदेन प्राङ्मुखा यात्रा प्रतिमासं व्यापारभेदश्च स्पष्टमाम्नातः—"आग्नेयमष्टाकपालं निर्वपति, तस्माच्छिशिरे कुरुपञ्चालाः प्राञ्चो यान्ति । सौम्यं चरुं, तस्माद् वसन्तं व्यवसायादयन्ति । सावित्रं द्वादशकपालं, तस्मात् पुरस्ताद्यवानां सवित्रा विरुन्धते । बार्हस्पत्यं चरुं, सवित्रैव विरुध्य ब्राह्मणा यवानादधते । त्वाष्ट्रमष्टाकपालं रूपाण्येव तेन कुर्वते । वैश्वानरं द्वादशकपालं, तस्माज्जवन्ये नैदाघे प्रत्यञ्चः कुरुपञ्चाला यान्ति"—( तै. ब्रा. १ । ८ । ४ । १, २ । ) इति । तदनेन पूर्वहविःषट्केन षडृतुमासानेव युङ्क्ते । 'ऋतु'—शब्दो मासपरः; "वासन्तिकावृतू"—इति व्यवहारात् ( वा. सं. १३।२५। ) यद्वा, "पक्षा वै मासाः" इति पक्षाणां मासत्वव्यवहारात् पक्षद्वयात्मक ऋतुरित्यर्थः ॥ पूर्वषट्कस्य दक्षिणां विधत्ते—पूर्वाग्नीति । पूर्वाग्निमाहवनीयं वहन्तीति पूर्वाग्निवाहोऽनड्वाहः । तेषां मध्ये द्वौ दक्षिणात्वेन देयावित्यर्थः ॥ ३ ॥

उत्तरहविःषट्कस्यापि समानतन्त्रत्वं दर्शयति—षडेवोत्तराणीति । तानि प्रशंसति—तासां देवतानामिति । 'वार्षिकमभि' वर्षर्तुसम्बन्धिनं प्रथमं मासमभिलक्ष्य पुनरावर्त्तेरन् । शिशिरे दिग्विजयाय प्राञ्चः प्रयाताः

व्वार्षिकमभि वहन्ति षड्वऽऋतून्प्रयुक्तान्वार्षिकमनुचरति पूर्व्वाग्निवाहौ द्वौ दक्षिणा तद्यत्पूर्वाग्निवाहो दक्षिणऽऋतून्वाऽएतत्सुषुवाणो युङ्क्ते व्वहन्ति वाऽअनड्वाहस्तस्मात्पूर्वाग्निवाहो दक्षिणा ॥ ४ ॥

तद्ध स्मैतत्पुरा कुरुपञ्चाला आहुः । ( ऋ ) ऋतवो वाऽअस्मान्युक्ता व्वहन्त्यृतून्वा प्रयुक्ताननुचरामऽइति यदेषाँ राजानो राजसूययाजिनऽआसुस्तद्ध स्म तदभ्याहुः ॥ ५ ॥

( रा ) आग्नेयोऽष्टाकपालः पुरोडाशो भवति । सौम्यश्चरुः सावित्रो द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशो बार्हस्पत्यश्चरुस्त्वाष्ट्रो दशकपालः पुरोडाशो व्वैश्वानरो द्वादशकपालऽएतानि षट्पूर्व्वाणि हवींषि भवन्ति ॥ ६ ॥ ( शतम् ३३०० )

षडेवोत्तरे चरवः । सारस्वतश्चरुः पौष्णश्चरुर्मैत्रश्चरुः क्षैत्रपत्यश्चरुर्व्वारुणश्चरुरादित्यश्चरुरेतऽउ षडुत्तरे चरवः ॥ ७ ॥

---

पूर्वाग्निवाहौ द्वौ दक्षिणा । तद्यत्पूर्वाग्निवाहो दक्षिणा । ऋतून्वाऽएतत्सुषुवाणो युङ्क्ते—वहन्ति वाऽअनड्वाहः—तस्मात्पूर्वाग्निवाहो दक्षिणा ॥ ४ ॥

तद्ध स्मैतत्पुरा कुरुपञ्चाला आहुः। ऋतवो वाऽअस्मान्युक्ता वहन्ति—ऋतून्वा प्रयुक्ताननुचराम इति । यदेषां राजानो राजसूययाजिन आसुः—तद्ध स्म तदभ्याहुः ॥ ५ ॥

आग्नेयोऽष्टाकपालः ( १ ) पुरोडाशो भवति, सौम्यश्चरुः ( २ ), सावित्रो द्वादशकपालो वाऽष्टाकपालो वा पुरोडाशः ( ३ ), बार्हस्पत्यश्चरुः ( ४ ), त्वाष्ट्रो दशकपालः पुरोडाशः ( ५ ), वैश्वानरो द्वादशकपालः ( ६ )—एतानि षट् पूर्वाणि हवींषि भवन्ति ॥ ६ ॥

षडेवोत्तरे चरवः । सारस्वतश्चरुः ( १ ), पौष्णश्चरुः ( २ ), मैत्रश्चरुः ( ३ ), क्षैत्रपत्यश्चरुः ( ४ ), वारुणश्चरुः ( ५ ), आदित्यश्चरुः ( ६ )—एतऽउ षडुत्तरे चरवः ॥ ७ ॥

---

कुरुपञ्चालादयो निदाघर्तुद्वितीयमासे परकीयं राष्ट्रं सर्वात्मना विनाश्य स्वदेशं प्रति प्रत्यङ्मुखा निवर्त्तन्ते । तत् 'एतत्' सरस्वत्यादिदेवतानां प्रतिनिवृत्त्या यष्टव्यानां रूपमित्यर्थः । तत् षडृतूनिति । 'तत्' तेन उत्तरहविःषट्कयागेन प्रावृडादीन् षण्मासान् योजितवान् भवति । तेषामनडुद्द्वयं दक्षिणां विधत्ते—पूर्वाग्नीति । पूर्वाग्निवाहां दक्षिणात्वं सम्भूय प्रशंसति - तद्यत्पूर्वाग्नीति ॥ ४ ॥

उक्तं द्वादशप्रयुग्हविःकरणेन ऋतुप्रयोगं कुरुपञ्चालवृत्तान्तमुखेन द्रढयति—तद्ध स्मैतदिति । पूर्वं 'कुरुपञ्चालाः' 'आहुः' वदन्ति, विचारयन्ति,—' अस्मान् ऋतवो युक्ताः ' सन्तो 'वहन्ति' 'प्रयुक्तान् ऋतून्' 'अनुलक्ष्य' 'चरामः' अनुसराम इति । आशंसमानानाम् ' एषां ' राज्ञां मध्ये ये 'राजानः राजसूययाजिनः आसुः', ते प्रयुग्हविःकरणमृतुप्रयोगरूपमिति प्रत्यूचुरिति तस्यार्थः ॥ ५ ॥

तानि द्वादश हवींषि उद्दिशति—आग्नेयोऽष्टाकपाल इति । तत्र पूर्वाणि षड्हवींषि च पुरोडाशात्मकानि, उत्तराणि तु चर्वात्मकान्येवेत्यर्थः ( तै सं. १ । ८ । ४ । २० ) ॥ ६ ॥ ७ ॥

( वो॑ऽथ ) अथ॑ श्येनीं॒ विचि॑त्रगर्भा॒मदि॑त्याऽआलभते । तस्या॑ ऽएषैवा-वृद्या॒ऽष्टाप॑द्यै व॒शाया॒ऽइयं वाऽअदि॑तिरस्या॒ऽएवैनमेतद्गर्भं करोति तस्या॑ ऽएताद्दश्ये॑व श्येनी विचि॑त्रगर्भा दक्षि॑णा ॥ ८ ॥

( णा॒ऽथ ) अथ॑ पृष॑तीं विचि॑त्रगर्भा॑ म॒रुद्भ्य॒ ऽआलभते । तस्या॑ एषैवा-वृद्विशो वै म॒रुतो विशा॑मेवैनमेतद्गर्भं करोति तस्या॑ ऽएताद्दश्ये॑व पृष॑ती विचि॑त्रगर्भा दक्षि॑णा ॥ ९ ॥

( णै ) एतौ पशुब॒न्धौ । तदे॑तावेव स॒न्तावन्यथे॑वालभन्ते यामदि॑त्याऽआ-

---

**अथ पशुद्वयम् ।**

( १ ) अथ श्येनीं विचित्रगर्भामदित्याऽआलभते । तस्या एषैवावृद्; याऽष्टापद्यै वशायै । इयं वाऽअदितिः । अस्या एवैनमेतद्गर्भं करोति । तस्या एताद्दश्येव श्येनी विचित्रगर्भा दक्षिणा ॥ ८ ॥

( २ ) अथ पृषतीं विचित्रगर्भां मरुद्भ्य आलभते । तस्या एषैवावृत् । विशो वै मरुतः । विशामेवैनमेतद्गर्भं करोति । तस्या एताद्दश्येव पृषती विचित्रगर्भा दक्षिणा ॥ ९ ॥

एतौ पशुबन्धौ । तदेतावेव सन्तावन्यथेवालभन्ते । यामदित्या आलभन्ते—आदित्येभ्यस्तामाल-

---

अथ पशुद्वयं विधीयते । तत्र कात्यायनः—" अष्टापदीवत्पशुबन्धौ गर्भिणीभ्यां स्वगुणदक्षिणौ, श्येन्यादित्येभ्योऽदित्यै वा, वैश्वदेवी पृषती मारुती वा "—( का. श्रौ. सू. १९ । २९६—२९८ ) इति । श्वेतां गर्भिणीमादित्येभ्योऽदित्यै वा आलभेत, पृषतीं गार्भिणीं विश्वेभ्यो देवेभ्यो मरुद्भ्यो वेति तदर्थः ।

तत्र स्वमतानुसारेणादितिदेवत्यं पशुबन्धं विधत्ते—अथ श्येनीमिति । ' श्येनीं ' श्वेतवर्णां ' विचित्रगर्भां ' प्रज्ञातगर्भाम् ' अदित्यै ' आलभेत । प्रयोगमतिदिशति—तस्या एषेति । ' आवृत् ' क्रिया ' या ' ' अष्टापद्यै ' 'वशायै' गार्भिण्या वशाया अनुबन्ध्यायाः प्रयोगक्रमः, स एवास्या इत्यर्थः । तत्प्रयोगस्तु चतुर्थकाण्डे पञ्चमेऽध्याये द्वितीये ब्राह्मणे—" उत्खिद्य वपामनुमर्शं गर्भमेष्टवै ब्रूयात् "—इत्यादिना स्पष्टमीरितः ( श. प. ४ । ९ । २ । १ । ) । एतद्देवतां प्रशंसति—इयं वा इति । ' अदितिः ' नाम ' इयं ' पृथिवी; तस्माददितिदेवत्यगार्भिणीयागेन ' एनं ' यजमानं भूमेरेव गर्भत्वेन कृतवान् भवति ॥ एतस्य कर्मणो दक्षिणां विधत्ते—तस्या एताद्दश्येवेति । ' एतादृशी ' एतद्वर्णा प्रज्ञातगर्भा ' दक्षिणा ' ॥ ८ ॥

पशुबन्धान्तरं विधत्ते—अथ पृषतीमिति । ' पृषतीं ' बिन्दुयुक्तां, ' विचित्रगर्भां ' विचित्रवर्णां गार्भिणीम् ' मरुद्भ्यः ' देवेभ्यः आलभेत । तस्यापि प्रयोगप्रकारं पूर्ववदतिदिशति—तस्या एषेति । मरुतां विट्त्वान्मरुद्देवत्यपशुयागेन ' एनं ' सुन्वन्तं ' विशां ' प्रजानां ' गर्भम्, ' तदुपजीव्यं कृतवान् भवति । तस्यापि दक्षिणां विधत्ते—तस्या एताद्दशीति । एवकारेणान्यवर्णदक्षिणानिवृत्तिः । दक्षिणाभेदेनानयोः कर्मभेदः ॥ ९ ॥

एतौ पशुबन्धाविति । उक्तस्य पशुबन्धद्वयस्य शाखाभेदेन देवतान्तरसम्बन्धं दर्शयति—तदेतावेवेति ।

---

१—' अष्टापदी अनुबन्ध्यानाम ' एतच्च कर्कभाष्ये ।

लभन्तऽआदित्येभ्यस्तामालभन्ते सर्व्वं वाऽआदित्याः सर्व्वस्यैवैनमेतद्गर्भं करोति यां मरुद्भ्य आलभन्ते विश्वेभ्यस्तां देवेभ्यऽआलभन्ते सर्व्वं वै विश्वेदेवाः सर्व्वस्यैवैनमेतद्गर्भं करोति ॥ १० ॥

इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् । ( ५–४–४ ) ( ५.२. )

अभिषेचनीयेनेष्ट्वा । केशान्न वपते तद्यत्केशान्न वपते व्वीर्यं वाऽएतदपाᳬं रसः सम्भृतो भवति येनैनमेतदभिषिञ्चति तस्याभिषिक्तस्य केशान्प्रथमान्प्राप्नोति स यत्केशान्वपेतैताᳬं श्रियं जिह्मां व्विनाशयेद्व्युदुह्यात्तस्मात्केशान्न वपते ॥ १ ॥

---

भन्ते । सर्वं वाऽआदित्याः । सर्वस्यैवैनमेतद्गर्भं करोति । यां मरुद्भ्य आलभन्ते–विश्वेभ्यस्तां देवेभ्य आलभन्ते । सर्वं वै विश्वेदेवाः, सर्वस्यैवैनमेतद्गर्भं करोति ॥ १० ॥

अथ केशवपनीयोऽतिरात्रः ।

अभिषेचनीयेनेष्ट्वा केशान्न वपते । तद् यत्केशान्न वपते । वीर्यं वाऽएतदपां रसः सम्भृतो भवति । येनैनमेतदभिषिञ्चति । तस्याभिषिक्तस्य केशान्प्रथमान् प्राप्नोति । स यत्केशान्वपेत । एतां श्रियं जिह्मां विनाशयेद् व्युदुह्यात् तस्मात्केशान्न वपते ॥ १ ॥

---

एवकारेणादितिमरुत्सम्बन्धो विवक्षितः । 'अन्यथैव' इति यदुक्तम्, तदेव स्पष्टयति–यामदित्या इत्यादिना । ( तै. सं. १ । ८ । १९ । ) ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मण-भाष्ये पञ्चमकाण्डे पञ्चमेऽध्याये द्वितीयं ब्राह्मणम् ॥ ( ५–५–२ ) ॥

तृतीये केशवपनीयातिरात्रस्य वैशेषिका धर्मा उच्यन्ते । सूत्रम्–"अभिषेचनीयाद्वा संवत्सरात् केशवपनीयोऽतिरात्रः सोमापवर्गः" ( का. श्रौ. सू. १५।२६।५। ) इति । पशुबन्धद्वयानन्तरं केशवपनीयातिरात्रयागः कर्त्तव्यः । अभिषेचनीयसोमयागं कृत्वा संवत्सरपर्यन्तं केशवपनाकरणलक्षणं व्रतमाचर्यम्, ततस्तद्व्रतविसर्जनार्थमेकः सोमयागः पौर्णमासीसुत्यः कार्यः, स एव केशवपनीयातिरात्र उच्यते । रात्रिमतीत्य वर्त्तत इत्यतिरात्रः अतिरात्रसंस्थया कार्य इत्यर्थः ॥

तमिमं विधत्ते–अभिषेचनीयेनेष्ट्वेति । अभिषेचनीययागादनन्तरं केशवपनीयकरणे कारणमाह–वीर्यं वा एतदपामिति । पूर्वमभिषेककाले वीर्यरूपोऽपां रसः प्रथमं केशानेव प्राप्तवान्, तेषां केशानां वपने अभिषेकेणागच्छन्तीं 'श्रियम्' एव 'जिह्मां' कुटिलां विनाशितवान् भवति । किञ्च 'व्युदुह्यात्' गतसारोऽपि भवेत् । तस्मात् केशवापो न कर्त्तव्य इत्यर्थः ॥ १ ॥

 


सं॒व॒त्स॒रं नु व॑पते । सं॒व्व॒त्स॒र॒सं॑मिता वै व्र॒त॒च॒र्या त॒स्मा॒त्सं॒व्व॒त्स॒रं नु व॑पते॒ स॒ऽ ए॒ष व्र॒त॒वि॒स॒र्ज॒नी॒यो॒प॒यो॒गो ना॒म स्तो॒मो भ॑वति के॒श॒व॒प॒नी॒यः ॥ २ ॥

त॒स्यैक॒वि॒ꣳ॒शं प्रा॒तः॒स॒व॒नꣳ स॒प्त॒द॒शं मा॒ध्य॒न्दि॒नꣳ स॒व॒नं प॒ञ्च॒द॒शं तृ॒ती॒य॒स॒व॒नꣳ स॒हो॒क्थैः स॒ह षो॒ड॒शि॒ना स॒ह रा॒त्र्या ॥ ३ ॥

त्रि॒वृ॒द्रा॒थ॒न्त॒रः सं॒धि॒र्भ॑वति । ( त्ये ) ए॒ष॒ऽ ए॒वैक॒वि॒ꣳ॒शो य॒ऽ ए॒ष त॒प॒ति स॒ऽ ए॒त॒स्मा॒दे॒क॒वि॒ꣳ॒शा॒द॒प॒यु॒ङ्क्ते स स॒प्त॒द॒श॒म॒भि॒प्र॒त्य॒वै॒ति स॒प्त॒द॒शा॒त्प॒ञ्च॒द॒शं प॒ञ्च॒द॒शा॒द॒स्या॒मे॒व त्रि॒वृ॒ति प्र॒ति॒ष्ठा॒यां प्र॒ति॒ति॒ष्ठ॒ति ॥ ४ ॥

---

संवत्सरं न वपते । सम्वत्सरसंमिता वै व्रतचर्या । तस्मात्सम्वत्सरं न वपते । स एष व्रतविसर्जनीयोपयोगो नाम स्तोमो भवति केशवपनीयः ॥ २ ॥

तस्यैकविंशं प्रातःसवनम्, सप्तदशं माध्यन्दिनं सवनम् पञ्चदशं तृतीयसवनम् । सहोक्थैः, सह षोडशिना, सह रात्र्या ॥ ३ ॥

त्रिवृद्राथन्तरः सन्धिर्भवति । एष एवैकविंशो य एष तपति । स एतस्मादेकविंशादपयुंक्ते । स सप्तदशमभि प्रत्यवैति, सप्तदशात्पञ्चदशम्, पञ्चदशादस्यामेव त्रिवृति प्रतिष्ठायां प्रतितिष्ठति ॥४॥

---

तस्यावधिकालं दर्शयति—संवत्सरं न वपत इति । केशवपनीयशब्दं निर्वक्ति—स एष व्रतेति । संवत्सरसम्मितव्रतविसर्जनद्वारा केशवपनार्थम् उपयुज्यमानः क्रियमाणः ' स्तोमः ' एकविंशादिस्तोमवान् यागः केशवपनीय इत्यर्थः ॥ २ ॥

तत्र सामगैर्गीयमानेषु स्तोत्रेषु चोदकेन प्रातस्सवनादिषु त्रिवृदादिस्तोमप्राप्तौ तानपवदितुं विशेषं दर्शयति—तस्यैकविंशमिति । प्रातस्सवनमेकविंशस्तोमयुक्तं कर्त्तव्यम्, माध्यन्दिनं सप्तदशस्तोमकम् ; अस्य सोमयागस्य अतिरात्रसंस्थात्वात् । तृतीयसवने अग्निष्टोमवद् द्वादशस्तोत्राणि, तत उत्तरं त्रीण्युक्थस्तोत्राणि, एकं षोडशिस्तोत्रम्, रात्रिपर्यायस्तोत्राणि द्वादश; तानि सर्वाण्यपि पञ्चदशस्तोमकानि कर्त्तव्यानीत्यर्थः । स्तोमक्लृप्तिप्रकारस्तु "प्राचीमारोह " इत्यत्र दिक्समारोहणमन्त्रव्याख्यावसरे दर्शितः ( श. प. ९ । ४ । १ । ४ ) ॥ ३ ॥

किंच—त्रिवृद्राथन्तर इति । पूर्वदिवसरात्रिशेषे उत्तरदिवसस्योषःकाले यज्ञसंस्थापकमेकं चरमं स्तोत्रं तृतीयस्तोत्रं तृतीयपर्यायस्यान्ते रथन्तरसाम्ना गातव्यम्, तत् सन्धिस्तोत्रमित्युच्यते । तत् स्तोत्रं त्रिवृत्स्तोमयुक्तं कार्यम् । एकविंशादवरोहणक्रमेण त्रिवृत्पर्यन्तं यत् स्तोमकरणमुक्तम्, तत् सूर्यलोकादिक्रमाद् भूम्यवस्थानात्मना प्रशंसति—एष एवैकविꣳश इति । ' य एष तपति ', ' सः ' ' एकविंशः ' सूर्य इत्यर्थः ; तस्मात् ' अपयुंक्ते ' अवरोहतीत्यर्थः । सोऽवरुह्यावरुह्य त्रिवृद्रूपायामस्यां भूमिलक्षणायां ' प्रतिष्ठायां प्रतिष्ठितवान् भवति ॥ ४ ॥

तुस्य रथन्तरं पृष्ठं भवति । ( ती ) इयं वै रथन्तरुमस्यामेवैतुत्प्रतिष्ठा- यां प्रतितिष्ठत्यतिरात्रो भवति प्रतिष्ठा वाऽअतिरात्रस्तुस्मादतिरात्रो भवति ॥ ५ ॥

स वै न्येवु व्वर्तयते । केशान्न वुपते व्वीर्यं वाऽएतुदपाᳯ रुसः सुम्भृतो भवति येनैनमेतुदभिषिञ्चति तुस्याभिषिक्तस्य केशान्प्रथमान्प्राप्नोति स यत्केशान्वुपेतैताᳯ श्रियं जिह्मां व्विनाशयेद्व्युदुह्याद्थ युन्निवर्तयते तुदात्मुन्येवैताᳯ श्रियं नियुनक्ति तुस्मान्न्येवु वर्तयते केशान्न वुपते तुस्यैषैवु व्व्रतचर्या भवति यावज्जीवं नास्यां प्रतितिष्ठति ॥ ६ ॥

( त्या ) आसन्द्याऽ उपानुहाऽउपमुञ्चते । (तऽ) उपानुद्भ्यामुधि युदस्य युानं भुवति रुथो वा किंचिद्वा सर्व्वं वाऽएषऽ इदमुपर्युपुरि भवत्यर्व्वागेवा-

---

तस्य रथन्तरं पृष्ठं भवति । इयं वै रथन्तरम् । अस्यामेवैतत्प्रतिष्ठायां प्रतितिष्ठति । अतिरात्रो भवति । प्रतिष्ठा वाऽअतिरात्रः । तस्मादतिरात्रो भवति ॥ ५ ॥

स वै न्येव वर्तयते, केशान्न वपते । वीर्यं वाऽएतदपां रसः सम्भृतो भवति—येनैनमेतदभिषिञ्चति । तस्याभिषिक्तस्य केशान्प्रथमान्प्राप्नोति । स यत् केशान्वपेत-एतां श्रियं जिह्मां विनाशयेद् व्युदुह्यात् । अथ यन्निवर्तयति । तदात्मन्येवैतां श्रियं नियुनक्ति । तस्मान्न्यैव वर्तयते । केशान्न वपते । तस्यैषैव व्रतचर्या भवति यावज्जीवं नास्यां प्रतितिष्ठति ॥ ६ ॥

आसन्द्या उपानहाऽउपमुञ्चते । उपानद्भ्यामधि यदस्य यानं भवति, रथो वा किञ्चिद्वा—सर्वं

---

माध्यन्दिने सवने रथन्तरं बृहत्साम वा पृष्ठस्तोत्रं प्रकृतौ विकल्पितम्, अत्र त्वेकं नियमयति—तस्य रथन्तरमिति । अस्य सोमयागस्यातिरात्रसंस्थात्वं प्रतिष्ठात्मना प्रशंसति—अतिरात्र इति । अतिरात्रसंस्थात्मना कृत एष क्रतुः प्रतिष्ठारूपः ॥ ५ ॥

अस्य क्रतोः केशवापव्रतविसर्जनार्थं क्रियमाणत्वात् तदन्ते केशवापः कार्यः; तत्र कश्चिद् विशेषं विधत्ते—स वै न्येव वर्तयत इति । 'सः' यजमानो निवर्त्तयते केशान् निकृन्तेदेव, न वपेत्; वपनं नाम मुण्डनं तन्न कुर्यात्, निवर्त्तनं कर्त्तनम्, तत् कुर्यादित्यर्थः । वीर्यं वा इत्यादेरर्थः पूर्वं व्याख्यातः । निवर्त्तनपक्षे केशांकुराणां विद्यमानत्वात् 'आत्मन्येव' 'एतां श्रियं' नियोजितवान् भवतीत्यर्थः ॥

सुव्रतः कांश्चिन्नियमान् दर्शयति—तस्यैषैवेति । 'एषा' केशकर्त्तनलक्षणा 'व्रतचर्या' यावज्जीवं कर्त्तव्या न केशमुण्डनं कार्यम् । कदाचिदपि 'अस्यां' भूमौ 'न प्रतितिष्ठति' अवस्थानं न कुर्य्यात् ॥ ६ ॥

क्वावतिष्ठेतेति तद्दर्शयति—आसन्द्या इति । 'आसन्द्याः' अवरोहणसमयेऽपि 'उपानहौ' पादुके उप-

स्मादिदꣳ सर्वं भवति यो राजसूयेन यजते तस्मादस्यैषैव व्रतचर्या भवति यावज्जीवं नास्यां प्रतितिष्ठति ॥ ७ ॥

इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् ॥ ५-४-५ ॥ (५. ३.) ॥

श्येत ऽआश्विनो भवति । श्येताविव ह्यश्विनावविर्मल्हा सारस्वती भवत्यृषभमिन्द्राय सुत्राम्ण ऽआलभते दुर्वेदा ऽएवꣳ समृद्धाः पशवो यद्येवꣳ समृद्धान्न विन्देदप्यजानेवालभेरंस्ते हि सुश्रपतरा भवन्ति स यद्यजानालभेरंल्लोहित ऽआश्विनो भवति तद्यदेतया यजते ॥ १ ॥

---

वाऽएष इदमुपर्युपरि भवति । अर्वागेवास्मादिदं सर्वं भवति—यो राजसूयेन यजते । तस्मादस्यैषैव व्रतचर्या भवति—यावज्जीवं नास्यां प्रतितिष्ठति ॥ ७ ॥

अथ चरकसौत्रामणिः ।

श्येत आश्विनो भवति । श्येताविव ह्यश्विनौ । अविर्मल्हा सारस्वती भवति । ऋषभमिन्द्राय सुत्राम्णऽआलभते । दुर्वेदा एवं समृद्धाः पशवः । यद्येवं समृद्धान्न विन्देद्—अप्यजानेवालभेरन् । ते हि सुश्रपतरा भवन्ति । स यद्यजानालभेरन्—लोहित आश्विनो भवति । तद् यदेतया यजते ॥ १ ॥

---

मुञ्चेत । इतस्ततः सञ्चरणसमये रथं वा यानं वाऽऽरोहेत् । एतादृशं व्रतं राजसूययाजिनो 'यावज्जीवं' कर्त्तव्यमित्यर्थः ॥ ७ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे पञ्चमेऽध्याये तृतीयं ब्राह्मणम् ॥ ( ५—५—३ ) ॥

सोमप्रधाने राजसूये सप्त सोमयागाः । तत्र, पवित्राख्यसोमयागे विशेषाभावात् स नोक्तः; अभिषेचनीय-दशपेय-केशवपनीयातिरात्रेषु केचिद् वैशेषिका धर्म्मा उक्ताः; व्युष्टिद्विरात्रोऽग्निष्टोमातिरात्रः क्षत्रधृतिरिति सोमयागत्रयं केशवपनीयादनन्तरं कर्त्तव्यम् । तेषां सोमयागविकृतित्वादग्निष्टोमवत् सर्वमङ्गजातं कर्त्तव्यम्, तत्र विशेषाभावादत्र नोक्ताः; तदनन्तरकर्त्तव्या सौत्रामण्यभिधीयते ( आ. श्रौ. सू. १८ । २२ । २० । २१ ) इति । तत्र पशुत्रयं देवतासम्बन्धविशिष्टं विधत्ते-श्येत आश्विन इति । अश्विदेवत्यः 'श्येतः' पशुरालभ्यः । 'मल्हा' गलस्तनयुतेत्यर्थः । ताम् 'अविम्' मेषीं सरस्वत्यै आलभेत । 'सुत्राम्णे' सुष्ठुत्रात्रे, एतद्गुणकाय 'इन्द्राय' 'ऋषभं' सेचनसमर्थमालभेत । उक्तपशुषु श्येतगलस्तनयुक्तत्वरूपं गुणमसम्भाविनं मत्वा श्रुतिः स्वयमेव पक्षान्तरमाह-दुर्वेदा इति । 'एवम्' उक्तरीत्या 'समृद्धाः' गुणवत्त्वेन सम्पूर्णाः पशवो 'दुर्वेदाः' दुर्लभाः, तेषामलाभे तत्तद्देवत्यान् 'त्रीन् अजान् एव' आलभेत । 'सुश्रपतराः' सुखेन श्रपयितुमर्हाः । अजत्रयपक्षे आश्विनपशोः कश्चिद्गुणं विधत्ते—लोहित आश्विन इति । अत एव कात्यायनः—

---

१—त्रिपशुः पशुबंधधर्मतुर्थ्याम् । का० श्रौ० सू० १५ । २७३ ।

त्वष्टुर्हं वै पुत्रः । ( त्रि ) त्रिशीर्षा षडक्षऽआस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवꣳरूपऽआस तस्माद्विश्वरूपो नाम ॥ २ ॥

तस्य सोमपानमेवैकं मुखमास । सुरापाणमेकमन्यस्माऽअशनायैकं तमिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद ॥ ३ ॥

स यत्सोमपानमास । ततः कपिञ्जलः समभवत्तस्मात्स बभ्रुकऽइव बभ्रुरिव हि सोमो राजा ॥ ४ ॥

( जाऽथ ) अथ यत्सुरापाणमास । ततः कलविङ्कः समभवत्तस्मात्सोऽभिमाद्यत्कऽइव वदत्यभिमाद्यन्निव हि सुरां पीत्वा वदति ॥ ५ ॥

( त्य ) अथ यदन्यस्माऽअशनायास । ततस्तित्तिरिः समभवत्तस्मात्स विश्वरूपतमऽइव सन्त्येव घृतस्तोकाऽइव त्वन्मधुस्तोकाऽइव त्वत्पर्णेष्वाश्चुतिताऽएवꣳरूपमिव हि स तेनाशनमावयत् ॥ ६ ॥

---

त्वष्टुर्हं वै पुत्रस्त्रिशीर्षा षडक्ष आस । तस्य त्रीण्येव मुखान्यासुः । तद् यदेवंरूप आस—तस्माद्विश्वरूपो नाम ॥ २ ॥

तस्य सोमपानमेवैकं मुखमास, सुरापाणमेकम्, अन्यस्माऽअशनायैकम् । तमिन्द्रो दिद्वेष । तस्य तानि शीर्षाणि प्रचिच्छेद ॥ ३ ॥

स यत्सोमपानमास—ततः कपिञ्जलः समभवत् । तस्मात्स बभ्रुक इव । बभ्रुरिव हि सोमो राजा ४॥

अथ यत्सुरापाणमास—ततः कलविङ्कः समभवत् । तस्मात्सोऽभिमाद्यत्क—इव वदति—अभिमाद्यन्निव हि सुरां पीत्वा वदति ॥ ५ ॥

अथ यदन्यस्माऽअशनायास—ततस्तित्तिरिः समभवत् । तस्मात्स विश्वरूपतम इव । सन्त्येव

---

"आश्विनोऽजः श्येतः, मल्हाऽविः सारस्वती, ऋषभमिन्द्राय सुत्राम्णे, तद्गुणामावेऽजाः, प्रथमो लोहितः"—(का. श्रौ. सू. १९ । २७९-२७८ ) इति । एतेषां पशूनां सौत्रामणीसम्बन्धं दर्शयति—तद्यदेतयेति । पशुत्रयवत्या 'एतया' सौत्रामण्या यष्टव्यमित्यर्थः ॥ १ ॥

अथ सौत्रामण्या सुत्रामेन्द्रसम्बन्धमश्विसरस्वतीसम्बन्धम्, तत्रोपयुक्तद्रव्यादिकञ्चाख्यायिकामुखेन दर्शयति—त्वष्टुर्हं वै पुत्र इति । पूर्वं त्वष्टुः पुत्रस्य विश्वरूपस्य त्रिशीर्ष्णः त्रीणि मुखान्यासुः । तत्र 'एकं' मुखं 'सोमपानम्', द्वितीयं 'सुरापाणम्' तृतीयम् 'अन्यस्मै अशनाय' बभूव । एवम्भूतस्य विश्वरूपस्य त्रीणि शिरांसि 'इन्द्रः' 'दिद्वेष' चिच्छेद । ततश्छिन्नेभ्यो मुखेभ्यः कपिञ्जलकलविङ्कतित्तिरयस्त्रयः पक्षिणः समभवन् । कपिञ्जलस्य सोमपानमुखजातत्वात् तत्समानो बभ्रुवर्णो जातः, कलविङ्कस्य सुरापाणमुखजातत्वात् सुरापायिवदभिमादवचनम्, तित्तिरस्याशनभोजकमुखजत्वान्नानारूपत्वम् । अशने हि घृतमधुबिन्दुसद्भावादस्मिन्नपि पक्षिणि तदाकारपक्षसद्भावः । 'अवयत्'—इति वेतेः खादनार्थाच्छान्दसः शप् ॥ २–६ ॥

( त्स ) स त्वष्टा चुक्रोध । कुविन्मे पुत्रमवधीदिति सोऽपेन्द्रमेव सोममाजह्रे स यथाऽयꣳ सोमः प्रसुतऽ एवमपेन्द्रऽ एवास ॥ ७ ॥

( से ) इन्द्रो ह वाऽईक्षांचक्रे । ( क्रऽ ) इदं वै मा सोमादन्तर्यन्तीति स यथा बलीयानबलीयसऽ एवमनुपहूतऽएव यो द्रोणकलशे शुक्रऽआस तं भक्षयांचकार स हैनं जिहिꣳस सोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्राव तस्मात्प्रायश्चित्तिरास स यद्धापि मुखादद्रोष्यन्न हैव प्रायश्चित्तिरभविष्यत् ॥ ८ ॥

( च्च ) चत्वारो वै वर्णाः । ( ० ) ब्राह्मणो राजन्यो वैश्यः शूद्रो न हैतेषामेकश्चन भवति यः सोमं वमति स यद्धैतेषामेकश्चित्स्यात्स्याद्धैव प्रायश्चित्तिः ॥ ९ ॥

---

घृतस्तोका इव त्वत्—मधुस्तोका इव त्वत्—पर्णेष्वाश्चुतिताः । एवंरूपमिव हि सः । तेनाशनमावयत् ॥ ६ ॥

स त्वष्टा चुक्रोध—कुविन्मे पुत्रमवधीदिति । सोऽपेन्द्रमेव सोममाजह्रे । स यथाऽयं सोमः प्रसुतः एवमपेन्द्र एवास ॥ ७ ॥

इन्द्रो ह वाऽईक्षाञ्चक्रे । इदं वै मा सोमादन्तर्यन्तीति । स यथा बलीयानबलीयसः—एवमनुपहूत एव—यो द्रोणकलशे शुक्र आस—तं भक्षयाञ्चकार । स हैनं जिहिंस । सोऽस्य विष्वङ्ङेव प्राणेभ्यो दुद्राव । मुखाद्धैवास्य न दुद्राव । तस्मात्प्रायश्चित्तिरास । स यद्धापि मुखादद्रोष्यत्—न हैव प्रायश्चित्तिरभविष्यत् ॥ ८ ॥

चत्वारो वै वर्णाः—ब्राह्मणो, राजन्यो, वैश्यः, शूद्रः । न हैतेषामेकश्चन भवति—यः सोमं वमति । स यद्धैतेषामेकश्चित् स्यात्—स्याद्धैव प्रायश्चित्तिः ॥ ९ ॥

---

स त्वष्टेति । ततस्तस्य च्छिन्नशीर्ष्णो विश्वरूपस्य पिता ' त्वष्टा ' ' कुवित् ' व्यर्थम् ' मे ' मम ' पुत्रम् ' ' अवधीत् ' ' इति ' क्रुद्धः सन् ' अपेन्द्रम् ' इन्द्रवर्जितम् ' एव ' ' सोमं ' सोमयागम् ' आजह्रे ' अनुष्ठितवान्;—यथा सोमः इन्द्रवर्जितः ' प्रसुतः ' अभिषुतः स्यात् तथेत्यर्थः ॥ ७ ॥

अथ ' इन्द्रः ' त्वष्ट्रादयः मां सोमव्यवहितं कुर्वन्तीति निश्चित्य ' अनुपहूतः ' सन् द्रोणकलशस्थितं सोममपहृत्य 'भक्षयाञ्चकार' । यथा बलवान् पुरुषो बलरहितस्य अन्नादिकमपहरति, तद्वत् । स पीतः सोमः ' एनं ' ' जिहिंस ' बाधितवान् । अस्य ' प्राणेभ्यः ' नासिकादिस्थानेभ्यः ' एव ' ' विष्वङ् ' सर्वतः 'दुद्राव' स्रुतः; ' न मुखाद् दुद्राव ' । ' तस्मात् ' ' सः ' इन्द्रः ' प्रायश्चित्तिः ' प्रायश्चित्तयोग्यः ' आस ' । प्रायो विनाशः, तस्य चित्तिः सन्धानं यस्येति तथाविधो बभूव । यदि मुखात्स्रुतः स्यात्, तर्हि प्रायश्चित्तियोग्य एव न स्यात्; उत्तरत्र सोमरसव्यृद्धस्येन्द्रस्याश्विभ्यां समर्द्धनं वक्ष्यते ॥ ८ ॥

मुखवमनपक्षे प्रायश्चित्तिर्नास्तीति दर्शयति—चत्वारो वा इति । लोके हि वर्णचतुष्टयस्यैव प्रायश्चित्त-

स युन्नस्तोऽद्रवत् । ( त्तु ) तुतः सिᳪँहः सुमभवदुथ यत्कुर्णाभ्यामुद्रवत्तुतो व्वृकः सुमभवदुथ यदवाचः प्राणादद्रवत्तुतः शार्दूलुज्येष्ठाः श्वापदाः सुमभवन्नुथ यदुत्तरात्प्राणादुद्रवत्सा परिस्रुदुथ त्रिर्निरष्ठीवत्तुतः कुवलं कुर्कन्धु बुदरमिति सुमभवत्स सुर्व्वेणैवु व्याध्यंत सुर्व्वᳪँ हि सोमः ॥ १० ॥

स सोमातिपूतो मङ्कुरिव चचार । तुमेतुयाऽश्विनावभिषज्यतां तᳪँ सुर्व्वेणैव सुमार्धयताᳪँ सुर्वᳪँ हि सोमः स व्वसीयानेवेष्ट्वाऽभवत् ॥ ११ ॥

---

स यन्नस्तोऽद्रवत्—ततः सिंहः समभवत् । अथ यत्कर्णाभ्यामद्रवत्—ततो वृकः समभवत् । अथ यदवाचः प्राणादद्रवत्—ततः शार्दूलज्येष्ठाः श्वापदाः समभवन् । अथ यदुत्तरात्प्राणादद्रवत्—सा परिस्रुत् । अथ त्रिर्निरष्ठीवत्ततः कुवलं कर्कन्धु बदरमिति समभवत् । स सर्वेणैव व्यार्ध्यत । सर्वं हि सोमः ॥ १० ॥

स सोमातिपूतो मङ्कुरिव चचार । तमेतयाऽश्विनावभिषज्यताम् । तं सर्वेणैव समार्धयताम् । सर्वं हि सोमः । स वसीयानेवेष्ट्वाऽभवत् ॥ ११ ॥

---

विधानम्, नान्यस्य; अतः सोमवामी एषां चतुर्णां मध्ये एकोऽपि न भवति । यथा पुल्कसादेः केवलपापशरीराणि स्युः, प्रायश्चित्तिविधिर्नास्ति, एवं सोमवामिनोऽपीति । यद्यपि तस्य " यः सोमवामी स्यात् तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत् "—इत्यादिना तैत्तिरीये ( तै. सं. २ । ३ । २ । ७ ) प्रायश्चित्तिरुक्ता, तथापि अत्यन्तसन्निकर्षं वक्तुं वर्णचतुष्टयानर्थक्यमुक्तम्; तस्मादिन्द्रस्य मुखवमनाभावात् प्रायश्चित्तियोग्यत्वं जातमित्यर्थः ॥ ९ ॥

इन्द्रियेभ्यः सोमद्रवणकाले नासिकादिस्रुतस्य सिंहाद्यात्मनोत्पत्तिं दर्शयति—स यन्नस्त इति । ' नस्तः ' नासिकायाः स्रुतः सोमः ' सिंहः ' अभवत् । ' अवाचः ' अधोमुखादपानद्वारात् निर्गतः सोमः शार्दूलमुख्याः ' श्वापदाः ' क्रूरकर्माणः, पशवः ' समभवन् ' । उत्तरात् प्राणात् गुह्यच्छिद्रात् स्रुतः ' परिस्रुत् ' सुरा अभूत् । " याऽवाची सा सुरा "—इति हि तैत्तिरीयकम् ( तै. ब्रा. १ । ८ । ९ । २ । ) । स चेन्द्रो वक्त्रेण त्रिवारं निष्ठीवनं कृतवान् । तेन द्रव्यत्रयमभूत्,—कुवलकर्कन्धुबदराणि सूक्ष्मतरस्थूलमध्यपरिमाणानि बैदरजातिफलानि एवं सर्वेन्द्रियेभ्यः सोमस्रवणात् इन्द्रो ' व्यार्ध्यत ' ऋद्धिविहीनो बभूव ॥ १० ॥

स सोमातिपूत इति । ' सोमातिपूतः ' अपानद्वारादिभ्यः स्रुतसोमः ' सः ' इन्द्रः ' मङ्कुः ' " मकि प्रतिबन्धे " ( धा. पा. भ्वा. आ. ८९ ) विकलगतिः पङ्गुः ' इव ' ' चचार ' । तं तथाविधमिन्द्रम्

---

१—कुवलकर्कन्धुबदराणां मध्यवदरादीनि लक्षणानि हरिस्वामिनोक्तानि ॥ याज्ञिकास्तु कुवलान्यामलकतुल्यानि । कर्कन्धूनि आरण्यकबदराणि । बदराणि चणकबदराणि । तैत्तिरीयब्राह्मणे १ । ८ । ५ । सायणभाष्ये कुवलं बालखर्जूरफलम् । बदरं क्रमुकपरिमितम् । कर्कन्धूः हरीतकीपरिमितं स्थूलम् । इति ।

( त्ते ) ते देवा ऽअब्रुवन् । ( न्सु ) सुत्रातं बतैनमत्रासातामिति तस्मा- त्सौत्रामणी नाम ॥ १२ ॥

स हैतयाऽपि सोमातिपूतं भिषज्येत् । ( त्सु ) सर्व्वेण वाऽएष व्यृध्यते यᳪ सोमोऽतिपवते सर्व्वᳪ हि सोमस्तᳪ सर्व्वेणैव समर्धयति सर्व्वᳪ हि सोमः स व्वसीयानेवेष्ट्वा भवति तस्माद्ध हैतयापि सोमातिपूतं भिषज्येत् १३

( त्त ) तद्यदेतया राजसूययाजी यजते । सर्व्वान्वाऽएष यज्ञक्रतूनवरुन्द्धे सर्व्वाऽ इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वाऽएषेष्टिर्यत्सौत्रा- मण्यनया मेऽपीष्टमसदनयाऽपि सूयाऽइति तस्माद्वा एतया राजसूय- याजी यजते ॥ १४ ॥

( तेऽथ ) अथ यदाश्विनो भवति । ( त्य ) अश्विनौ वाऽएनमभिषज्यतां तथोऽएवैनमेष ऽएतदश्विभ्यामेव भिषज्यति तस्मादाश्विनो भवति ॥ १५ ॥

---

ते देवा अब्रुवन्—सुत्रातं बतैनमत्रासातामिति । तस्मात् सौत्रामणी नाम ॥ १२ ॥

स हैतयापि सोमातिपूतं भिषज्येत् । सर्वेण वाऽएष व्यृध्यते यं सोमोऽतिपवते । सर्वं हि सोमः । तं सर्वेणैव समर्धयति । सर्वं हि सोमः । स वसीयानेवेष्ट्वा भवति । तस्माद्ध हैतयापि सोमातिपूतं भिषज्येत् ॥ १३ ॥

तद् यदेतया राजसूययाजी यजते । सर्वान् वाऽएष यज्ञक्रतूनवरुन्धे, सर्वा इष्टीः, अपि दर्विहोमान्, यो राजसूयेन यजते । देवसृष्टो वाऽएषेष्टिः—यत् सौत्रामणी । अनया मेऽपीष्टमसद्, अनयाऽपि सूया- ऽइति । तस्माद्वाऽएतया राजसूययाजी यजते ॥ १४ ॥

अथ यदाश्विनो भवति । अश्विनौ वाऽएनमभिषज्यताम् । तथोऽएवैनमेष एतदश्विभ्यामेव भिषज्यति । तस्मादाश्विनो भवति ॥ १५ ॥

---

'एतया' सौत्रामण्या 'अश्विनौ' 'अभिषज्यताम्' समाहितमकुरुताम् । "भिषक् चिकित्सायाम्"— ( धा. पा. कं. २३ ) इति धातुः । तदेवाह—सर्वेणेति । सर्वेण सोमेन एनं समृद्धं कृतवन्तौ । तत इन्द्रः एतया 'इष्ट्वा' 'वसीयान्' वसुमत्तरः 'अभवत्' ॥ ११ ॥

सौत्रामणीशब्दं निर्वक्ति—ते देवा इति । एवमश्विभ्यां सोमरसेन समर्द्धितमिन्द्रं प्रति 'देवा अब्रुवन्'— 'एनम्' सोमातिपूतं 'सुत्रातम्' सुष्ठु रक्षितवन्तौ अश्विनाविति । 'बत'—इति हर्षे; अतः सुत्राणसम्बन्धात् 'सौत्रामणी—नाम' इष्टिः ॥ १२ ॥

प्रसङ्गादन्यस्य सोमातिपूतस्यापीमामेवेष्टिं दर्शयति—स हैतयापीति । इयं राजसूयाद् बहिरपि प्रयोक्त- व्येत्यर्थः ॥ १३ ॥

तद्यदेतया राजसूयेत्यादेरयमर्थः—राजसूययाजिना सर्वेऽपि इष्टिपशु—सोम—दर्विहोमा इष्टाः, अत एषाऽपि इष्टित्वात् तेन कार्येति पूर्वमुक्तम् ॥ १४ ॥

आश्विनसारस्वतैन्द्रपशुविधिं पृथक्-पृथगनूद्य प्रशंसति—अथ यदाश्विनो भवतीति ॥ १५ ॥

( त्यु ) अथ यत्सारस्वतो भवति । वाग्वै सरस्वती वाचा वाऽएनमश्विनावभिषज्यतां तथोऽएवैनमेषऽएतद्वाचैव भिषज्यति तस्मात्सारस्वतो भवति ॥ १६ ॥

( त्यु ) अथ यदैन्द्रो भवति । ( त्री ) इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैनमेतद्भिषज्यति तस्मादैन्द्रो भवति ॥ १७ ॥

( त्ये ) एतेषु पशुषु । सिꣳहलोमानि वृकलोमानि शार्दूललोमानीत्यावपत्येतद्वै ततः समभवद्यदेनꣳ सोमोऽत्यपवत तेनैवैनमेतत्समर्धयति कृत्स्नं करोति तस्मादेतान्यावपति ॥ १८ ॥

तदु तथा न कुर्यात् । ( दु ) उल्कया ह स नखिन्या पशूननुषुवति य ऽएतानि पशुष्वावपति तस्मादु परिस्रुत्येवावपेत्तथा होल्कया नखिन्या पशून्नानुषुवति तथोऽएवैनꣳ समर्धयति कृत्स्नं करोति तस्मादु परिस्रुत्येवावपेत् ॥ १९ ॥

---

अथ यत्सारस्वतो भवति । वाग्वै सरस्वती । वाचा वाऽएनमश्विनावभिषज्यताम् । तथोऽएवैनमेष एतद्वाचैव भिषज्यति । तस्मात्सारस्वतो भवति ॥ १६ ॥

अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता । सा यैव यज्ञस्य देवता । तयैवैनमेतद्भिषज्यति । तस्मादैन्द्रो भवति ॥ १७ ॥

एतेषु पशुषु सिंहलोमानि, वृकलोमानि, शार्दूललोमानीत्यावपति । एतद्वै ततः समभवद्—यदेनं सोमोऽत्यपवत । तेनैवैनमेतत्समर्धयति, कृत्स्नं करोति । तस्मादेतान्यावपति ॥ १८ ॥

तद्दु तथा न कुर्यात् । उल्कया ह स नखिन्या पशूननुषुवति—य एतानि पशुष्वावपति । तस्माद्दु परिस्रुत्येवावपेत् । तथा होल्कया नखिन्या पशून्नानुषुवति । तथोऽएवैनं समर्धयति, कृत्स्नं करोति । तस्माद्दु परिस्रुत्येवावपेत् ॥ १९ ॥

---

वाचेति । 'वाचा' वाग्रूपया याज्यापुरोनुवाक्यया, जुहावमन्त्रवत्या सरस्वत्येत्यर्थः ॥ १६ ॥

इन्द्रो वा इति । 'यज्ञस्य' सर्वस्य 'देवता' ॥ १७ ॥

अथ परिस्रुत्सन्धानं वक्ष्यते, तत्र सिंहवृकव्याघ्रलोमसंसर्जनं सिद्धान्तयितुं विधिरसुः शाखान्तरीयं पक्षं सोपपत्तिकमनुवदति—एतेषु पशुष्विति । अत एव सूत्रकारो द्वेधा सूत्रयामास परिस्रुतं प्रस्तुत्य—"संसृजति, सिंहव्याघ्रलोमानि चावपति, पशुषु वा"—( का. श्रौ. सू. १९।२६८—२७० ) इति । 'एतेषु' उक्तेषु त्रिषु 'पशुषु' सिंहादीनां त्रीणि लोमानि 'इत्यावपति' । 'इति'—शब्द एतच्छब्दार्थः; 'इति' एतानि संसृजेत् । तस्मात् इन्द्रस्येन्द्रियद्वारेभ्योऽपसृतात् सोमादेते त्रयः सिंहाद्या उत्पन्नाः । तस्मात् तल्लोमावापेन इन्द्रमेव कृत्स्नं समृद्धं कृतवान् भवतीति ॥ १८ ॥

तं पक्षं निराकृत्य स्वमतं विधत्ते—तद्दु तथेति । यदि पशुषु लोमावापं कुर्यात् तर्हि 'नखिन्या' कण्टक-

( ड ) अथ पूर्व्वेद्युः । परिस्रुतꣳ संदधात्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति सा यदा परिस्रुद्भवत्यथैनया प्रचरति २०॥

द्वावग्नीऽउद्धरन्ति । ( न्यु ) उत्तरवेदावेवोत्तरमुद्धते दक्षिणं नेत्सोमाहुतीश्च सुराहुतीश्च सह जुहवामेति तस्माद्द्वावग्नीऽउद्धरन्त्युत्तरवेदावेवोत्तरमुद्धते दक्षिणमथ यदा वपाभिः प्रचरन्त्यथैतया परिस्रुता प्रचरति ॥२१॥

तां दर्भैः पावयति । पूताऽसदिति वायुः पूतः पवित्रेण प्रत्यङ्क्सोमोऽअतिस्रुतः । इन्द्रस्य युज्यः सखेति तत्कुवलसक्तून्कर्कन्धुसक्तून्बदरसक्तूनित्यावपत्येतद्वै ततः समभवद्यत्त्रिर्निरष्ठीवत्तेनैवैनमेतत्समर्धयति कृत्स्नं करोति तस्मादेतानावपति ॥ २२ ॥

---

अथ पूर्वेद्युः परिस्रुतं सन्दधाति—"अश्विभ्यां पच्यस्व, सरस्वत्यै पच्यस्व, इन्द्राय सुत्राम्णे पच्यस्व"—( वा० सं० १० । ३१ ) इति । सा यदा परिस्रुद्भवति—अथैनया प्रचरति ॥ २० ॥

द्वावग्नीऽउद्धरन्ति । उत्तरवेदावेवोत्तरम्, उद्धते दक्षिणम् । नेत् सोमाहुतीश्च सुराहुतीश्च सह जुहवामेति । तस्माद्द्वावग्नीऽउद्धरन्ति—उत्तरवेदावेवोत्तरम्, उद्धते दक्षिणम् । अथ यदा वपाभिः प्रचरन्ति । अथैतया परिस्रुता प्रचरति ॥ २१ ॥

तां दर्भैः पावयति—पूताऽसदिति । "वायुः पूतः पवित्रेण प्रत्यङ्क्सोमोऽअतिस्रुतः। इन्द्रस्य युज्यः सखा"—(वा.सं. १०।३१) इति । तत् कुवलसक्तून्, कर्कन्धुसक्तून्, बदरसक्तून् इत्यावपति। एतद्वै ततः समभवद् । यत्त्रिर्निरष्ठीवत् । तेनैवैनमेतत्समर्धयति । कृत्स्नं करोति । तस्मादेतानावपति ॥२२

---

वत्या 'उल्कया' एव पशून् प्रेरितवान् भवति । तस्मात् 'तथा न कुर्यात्; किन्तु 'परिस्रुत्येव' संसृजेत् । तत्रावापेन पशूनामुल्कया प्रेरणं कृतं न भवति । इन्द्रस्य तु कृत्स्नकरणमत्रापि कृतं भवेत् ॥ १९ ॥

अथ परिस्रुत्सन्धानं समन्त्रकं विधत्ते—अथ पूर्वेद्युरिति । 'सन्दधाति' सम्पादयेदित्यर्थः । तत्प्रकारः कात्यायनेन स्पष्टमीरितः—"व्रीहीन् विरूढाविरूढान् क्षौम उपनह्य क्रीणाति क्लीबात् सीसेन, पक्वौदनं विरूढांश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति संसृजति"—( का. श्रौ. सू. १९।२६७।२६८ ) इति। हे परिस्रुत्! 'अश्विभ्यां' 'पच्यस्व' पक्वा भव । एवमुत्तरत्रापि ॥ २० ॥

परिस्रुत्प्रचरणे कश्चिद् विशेषमाह—द्वावग्नी इति । उत्तरवेद्यामेकमग्निम्, तद्दक्षिणभागे 'उद्धते' प्रदेशे एकमग्निमुद्धरेत् । अग्निद्वयोद्धारे कारणमाह—नेदिति । एकस्मिन्नेवाग्नौ सोमसुराहुतयः सह होतुमयोग्याः, अतस्तत्संसर्गहोमनिवृत्त्यर्थमग्निद्वयं कार्यमित्यर्थः । तस्याः प्रचरणकालमाह—यदा वपाभिरिति । पशुवपाभिर्यदा प्रचरेयुः, तदैतयेत्यर्थः ॥ २१ ॥

विधत्ते—तां दर्भैरिति । सा परिस्रुत् 'पूता' 'असत्' भवेत् ' इति ' 'तां दर्भैः' पावयेत् । मन्त्रस्यायमर्थः—

( त्यु ) अथ ग्रहान्गृह्णाति । (त्ये) एकं वा त्रीन्वैकुस्त्वेव ग्रहीतुव्य ऽएका हि पुरोरुग्भवत्येकाऽनुवाक्यैका याज्या तुस्मादेक ऽएव ग्रहीतुव्यः ॥ २३ ॥

स गृह्णाति । कुविदङ्ग यवमन्तो यवं चिद्युथा दान्त्यनुपूर्व्वं वियूय ॥ इहेहैषां कृणुहि भोजनानि ये बुर्हिषो नमउक्तिं युजन्ति ॥ उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्ण ऽइति यद्यु त्रीन्गृह्णीयादेतयैव गृह्णीयादुपयामैस्तु तर्हि नाना गृह्णीयादथाहाश्विभ्याᳪं सरस्वत्याऽइन्द्राय सुत्राम्णेऽनुब्रूहीति ॥ २४ ॥

---

अथ ग्रहान्गृह्णाति एकं वा, त्रीन्वा । एकस्त्वेव ग्रहीतव्यः । एका हि पुरोरुग् भवति, एकाऽनुवाक्या, एका याज्या । तस्मादेक एव ग्रहीतव्यः ॥ २३ ॥

स गृह्णाति–"कुविदङ्ग यवमन्तो यवं चिद् यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नमउक्तिं यजन्ति । उपयामगृहीतोऽस्यश्विभ्यां त्वा, सरस्वत्यै त्वा, इन्द्राय त्वा सुत्राम्णे"–(वा. सं. १० । ३२ ।) इति । यद्यु त्रीन् गृह्णीयाद् एतयैव गृह्णीयात् । उपयामैस्तु तर्हि नाना गृह्णीयाद् । अथाह–अश्विभ्यां सरस्वत्याऽइन्द्राय सुत्राम्णेऽनुब्रूहीति ॥ २४ ॥

---

'पवित्रेण' पूतः 'सोमः' सोमात्मना निष्पादितः ( का. श्रौ. सू. १९ । २८२ ) तथा च। तैत्तिरीयकम्–"स्वाद्वीं त्वा स्वादुनेत्याह सोममेवैनां करोति" ( तै. ब्रा. १।८।५।४ ) इति । वायुः पात्राणि गच्छन्, वायुवच्छीघ्रगामी वा भूत्वा 'प्रत्यङ्' अधोवर्तिपात्राभिमुखः सन् ' अतिस्रुतः ' अतिक्रम्योद्गतः ' इन्द्रस्य ' युज्यः योग्यः ' सखा ' समानख्यानः ' इति ' ॥

विधत्ते–तत्कुवलेति । तस्यां परिस्रुति कुवलकर्कन्धुबदरसक्तुत्रयं निवपेदित्यर्थः । अत्र सूत्रम्–"वपामार्जनान्ते कुशैः परिस्रुतं पुनाति वायुः पूत इति, कुवलकर्कन्धुबदरचूर्णानि चावपति" ( का. श्रौ. सू. १९ । २८२ । २८३ ) इति ॥ २२ ॥

ग्रहग्रहणं विधत्ते–अथ ग्रहानिति । एको वा ग्रहः त्रयो वा ग्रहीतव्याः । तत्रैकं सिद्धान्तयति–एकस्त्वेवेति । एकस्यैव ग्रहणमुपपादयति–एका हीति । पुरोरुक्-पुरोनुवाक्या–याज्यानामेकत्वादेक एव ग्रहीतव्यः ॥ २३ ॥

ग्रहणमनूद्य मन्त्रं विधत्ते–स गृह्णाति कुविदङ्गेति । 'अङ्ग' शब्दः सम्बोधनवाची । हे सोम ! कुविच्छब्दो बह्वर्थवाची । चिच्छब्दः समुच्चये । यथा लोके 'यवमन्तः' यवादिधान्योपेताः कृषिकाः 'कुविद्' यवबहुलं, यवमन्यानि च गोधूमप्रियङ्ग्वादिधान्यानि 'अनुपूर्वं' तत्परिपाकानुक्रमेण इदं पक्वमिदमपक्वमिति 'वियूय' विशेषेण पृथक् कृत्य 'दान्ति' "दाप् लवने" ( धा. पा. अ. प. ४९ ) लुनन्ति तथा

---

१ ग्रहं गृह्णाति कुविदंगेति त्रीन् वा प्रतिदेवतमेतयैव । का. श्रौ. सू. १५ । २८४ ।

सोऽन्वाह । युवꣳ सुराममश्विना नमुचावासुरे सचा । विपिपाना शुभस्पतीऽइन्द्रं कर्मस्वावतमित्याश्राव्याहाश्विनौ सरस्वतीमिन्द्रꣳ सुत्रामाणं यजेति ॥ २५ ॥

स यजति । पुत्रमिव पितरावश्विनोभेन्द्रावथुः काव्यैर्दꣳसनाभिः । यत्सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णगिति द्विर्होता वषट्करोति द्विरध्वर्युर्जुहोत्याहरति भक्षं यद्यु त्रीन्गृह्णीयादेतस्यैवानुहोममितरौ हूयेते ॥ २६ ॥

---

सोऽन्वाह–" युवं सुराममश्विना नमुचावासुरे सचा । विपिपाना शुभस्पती इन्द्रं कर्मस्वावतम् "–( वा. सं. १० । ३३ ) इति । आश्राव्याह–अश्विनौ, सरस्वतीम्, इन्द्रं सुत्रामाणं यजेति ॥ २५ ॥

स यजति–"पुत्रमिव पितरावश्विनोभेन्द्रावथुः, काव्यैर्दंसनाभिः । यत् सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन् अभिष्णक्"–( वा. सं. १० । ३४ ) इति । द्विर्होता वषट्करोति, द्विरध्वर्युर्जुहोति । आहरति भक्षम् । यद्यु त्रीन्गृह्णीयात् । एतस्यैवानुहोममितरौ हूयेते २६॥

---

' एषां ' यज्वनां ' भोजनानि ' अन्नानि ' इह ' च ' कृणुहि ' कुरुत ' ये ' यजमानाः ' बर्हिषः ' यागस्य 'नमउक्तिं नम इत्यन्ननाम ( निघ. २ । ७ अ. ) नमस्कारो वा, तस्योक्तिं ' यजन्ति ' कुर्वन्तीत्यर्थः । " उपयामगृहीतः " इत्यादिर्मन्त्रशेषः स्पष्टः ॥

ग्रहत्रयग्रहणपक्षेऽपीममेव मन्त्रमुपयामेत्यत्र विशेषञ्च दर्शयति–यद्यु त्रीनिति । " नाना " पृथक् पृथक् उपयामेन तिसृभ्यो देवताभ्यो गृह्णीयात् ॥

अनुवचनप्रैषे विशेषं दर्शयति–अथाहेति ॥ २४ ॥

होतारमनूच्याश्विसरस्वतीन्द्रप्रतिपादकं मन्त्रमाह–सोऽन्वाह युवमिति । हे अश्विनौ ! ' युवं ' युवां ' सुरामम् ' सुरमणीयम् ' आसुरे नमुचौ ' स्थितं सोमं ' सचा ' सहभूतौ एकीभूय ' विपिपाना ' विविधं पिबन्तौ हे ' शुभस्पती ' शुभस्य पालकौ स्वामिनौ ! ' कर्मसु ' निमित्तभूतेषु कर्मकरणार्थम् ' इन्द्रम् ' ' आवतं ' रक्षतम् ' इति ' ॥

' यज ' इति प्रैषे देवताशंसनं विधत्ते–आश्राव्याहेति । देवतात्रयप्रतिपादिकां वा याज्यां पठतीति॥२५॥

स यजति पुत्रमिवेति । ' पितरौ पुत्रमिव ' यथा पालयतः, तथा उभौ अश्विनौ हे इन्द्र ! ' त्वा ' त्वाम् ' आवथुः ' " अव रक्षणे " ( धा. पा. भ्वा. प. ६०१ ) । पुरुषव्यत्ययः, रक्षितवन्तौ । ' काव्यैः ' कविकर्मभिः स्तोत्रैः, ' दंसनाभिः ', ' दंस ' इति कर्मनाम ( निघ. २।१ । ३ ) कर्मभिश्च इन्द्रं पालितवन्तौ कथमवगम्यते ? ' यद् ' यस्मात् ' सुरामं ' सुरमणीयं सोमं ' व्यपिबः ' विशेषेण पीतवानसि । ' शचीभिः '

---

१–समस्यानुवाचनं यजेति च । का० श्रौ० सू०१५ । २८५ ।

(ते॒ऽअ॒) अथ कु॒म्भः । श॒तवि॑तृण्णो वा भवति न॒ववि॑तृण्णो वा स य॒दि श॒तवि॑तृण्णः श॒तायु॒र्वा॒ऽअ॒यं पुरु॑षः श॒तते॑जाः श॒तवी॑र्य॒स्त॒स्मा॑च्छ॒त॒वि॑तृण्णो य॒द्यु न॒ववि॑तृण्णो न॒वेमे पुरु॑षे प्रा॒णास्त॒स्मा॑न्न॒ववि॑तृण्णः ॥ २७ ॥

( स्त॒ᳫँ ) त॒ᳫँ शि॒क्योद्धृ॒तम् । (स॒) उ॒प॒र्यु॒पर्या॑हव॒नी॒यं धा॑रयन्ति सा या प॒रि॒शि॒ष्टा परि॒स्रु॒द्भ॒व॑ति ता॒मा॒सि॑ञ्चति तां विक्षर॒न्ती॒मु॒प॒ति॑ष्ठते पि॒तॄ॒णाᳫँ सो॒मव॑तां ति॒सृ॒भि॒र्ऋ॒ग्भिः पि॒तॄणां ब॒र्हि॒षदां ति॒सृ॒भि॒र्ऋ॒ग्भिः पि॒तॄ॒णाम॒ग्नि॒ष्वा॒त्ता॒नां ति॒सृ॒भि॒र्ऋ॒ग्भि॒स्त॒द्य॒दे॒व॒मु॒प॒ति॑ष्ठते य॒त्र वै सोम॒ ऽइन्द्र॑मत्यप॒वत स य॒त्पि॒तॄ॒नग॑च्छत्त्र॒या वै पि॒तर॒स्तेनै॒वैन॑मे॒तत्स॑मर्धयति कृ॒त्स्नं क॑रोति त॒स्मा॑दे॒व॒मु॒प॒ति॑ष्ठते ॥ २८ ॥

---

अथ कुम्भः शतवितृण्णो वा भवति, नववितृण्णो वा। स यदि शतवितृण्णः—शतायुर्वाऽअयं पुरुषः शततेजाः शतवीर्यः । तस्माच्छतवितृण्णः । यद्यु नववितृण्णो—नवेमे पुरुषे प्राणाः—तस्मान्नववितृण्णः ॥ २७ ॥

तं शिक्योद्धृतमुपर्युपर्याहवनीयं धारयन्ति । सा या परिशिष्टा परिस्रुद्भवति—तामासिञ्चति । तां विक्षरन्तीमुपतिष्ठते—पितॄणां सोमवतां तिसृभिर्ऋग्भिः, पितॄणां बर्हिषदां तिसृभिर्ऋग्भिः, पितॄणामग्निष्वात्तानां तिसृभिर्ऋग्भिः। तद् यदेवमुपतिष्ठते। यत्र वै सोम इन्द्रमत्यपवत। स यत् पितॄनगच्छत्—त्रया वै पितरस्तेनैवैनमेतत्समर्धयति, कृत्स्नं करोति । तस्मादेवमुपतिष्ठते ॥ २८ ॥

---

कर्मभिः हे ' मघवन् ' इन्द्र ! त्वां सोमातिपूतं ' सरस्वती ' ' अभिष्णक् ' भेषजसन्धानं कृतवती । ' भिषक् ' इति कण्ड्वादिषु पठ्यते ( धा. पा. कं. २३ ) ॥

विधेयं विधत्ते—द्विर्होतेति । होत्रा द्विवारं वषट्कारः कर्त्तव्यः । ' द्विरध्वर्युः ' अध्वर्युणाऽपि द्विवारं हवनं कार्यम् । ' आहरति भक्षम् ' हवनानन्तरं भक्षार्थमाहरेयुः । ग्रहत्रयपक्षे हवने कश्चिद् विशेषमाह—यद्यु त्रीनिति । एतस्य होममनु इतरौ द्वौ परिस्रुद्धोमौ होतव्यौ । एष परिस्रुद्धोमो दक्षिणेऽग्नाविति प्रागुक्तः ॥ २६ ॥

कात्यायनः—" परिस्रुच्छेषमासिच्य रुक्मवच्छिद्रं कुम्भं शिक्ये कृत्वोपरि दक्षिणस्य धारयन् स्रवन्तमुपतिष्ठते तृचैः सोमवतां बर्हिषदामग्निष्वात्तानाम् "—( का. श्रौ. सू. १९ । २८८ ) इति । हुतायाः सुरायाः शेषं रुक्मवति शतच्छिद्रे नवच्छिद्रे वा कुम्भे आसिच्य, तं कुम्भं दक्षिणस्याहवनीयस्योपरि शिक्ये कृत्वा स्रवन्तं सोमवदादिपितॄणां त्रिभिस्तृचैरुपतिष्ठेतेति तदर्थः । तदिदं विवक्ते—अथ कुम्भ इति । रुक्मब्राह्मणे व्याख्यातम् ( श. प. ब्रा. ९ । ४ । १ । १३ ) ॥ २७ ॥

तं शिक्योद्धृतमिति । आहवनीयस्योपरि उद्धृते प्रदेशे परिस्रुत्प्रचारार्थं दक्षिणतः स्थापितस्याग्नेरुपरीत्यर्थः । तथा सूत्रमुदाहृतम् ( का. श्रौ. सू. । १९।२८८ ) । ' विक्षरन्तीं ' कुम्भात् स्रवन्तीम् परिस्रुतम् ' उपतिष्ठते ' ।

---

१–प्रथमस्यानुहोममितरौ का. श्रौ. सू. १९ । २८६ । २–भक्षमाहृत्य । का० श्रौ० सू० १९ । २८८ । ३–परिस्रुद्धोमो दक्षिणेऽग्नौ । का० श्रौ० सू० १९ । २८७ ।

( तेऽथै ) अथैतानि हवीᳬंषि निर्वपति । सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशं वारुणं यवमयं चरुमैन्द्रमेकादशकपालं पुरोडाशम् ॥ २९ ॥

( ᳬ ) स यत्सावित्रो भवति । सविता वै देवानां प्रसविता सवितृप्रसूत ऽएवैतद्भिषज्यति तस्मात्सावित्रो भवति ॥ ३० ॥

( त्यु ) अथ यद्वारुणो भवति । वरुणो वाऽआर्पयिता तद्य ऽएवार्पयिता तेनैवैतद्भिषज्यति तस्माद्वारुणो भवति ॥ ३१ ॥

( त्यु ) अथ यदैन्द्रो भवति । ( ती ) इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतद्भिषज्यति तस्मादैन्द्रो भवति ॥ ३२ ॥

---

अथैतानि हवींषि निर्वपति । सावित्रं द्वादशकपालं वाऽष्टाकपालं वा पुरोडाशम्, वारुणं यवमयं चरुम्, ऐन्द्रमेकादशकपालं पुरोडाशम् ॥ २९ ॥

स यत्सावित्रो भवति । सविता वै देवानां प्रसविता । सवितृप्रसूत एवैतद्भिषज्यति । तस्मात्सावित्रो भवति ॥ ३० ॥

अथ यद्वारुणो भवति । वरुणो वाऽआर्पयिता । तद् य एवार्पयिता—तेनैवैतद्भिषज्यति । तस्माद्वारुणो भवति ॥ ३१ ॥

अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता । सा यैव यज्ञस्य देवता तयैवैतद्भिषज्यति तस्मादैन्द्रो भवति ॥ ३२ ॥

---

उपस्थाने मन्त्रान् दर्शयति—पितॄणामिति । 'सोमवतां' सोमदेवतायुतानां ' पितॄणां ' याज्यापुरोनुवाक्यारूपाः " उदीरतामवर उत्परासः "—इत्याद्यास्तिस्र ऋचः ( वा. सं. १९ । ४९–५१ ) ' बर्हिषदां ' बर्हिषि सीदताम् एतद्गुणकानां ' पितॄणां ' " बर्हिषदः पितर ऊत्यर्वाग् "—इत्याद्यास्तिस्र ऋचः ( वा. सं. १९।५५–५७ ) ' अग्निष्वात्तानां ' पितॄणाम् " आयन्तु नः पितरः सोम्यासः "—इत्याद्यास्तिस्र ऋचः ( वा. सं. १९ । ५८–६० ) इति नवर्चः संहितायां क्रमेणाम्नाताः । ताभिरुपस्थानं कर्त्तव्यमित्यर्थः । पित्र्यमन्त्रैरुपस्थानं प्रशंसति—यत्र वै सोम इति । पूर्वमिन्द्रेण पीतः सोमः, अतिपूतः सन् पितॄनेव प्राप्नोत्, अतस्तन्मन्त्रोपस्थानेनेन्द्रमेव सम्पूर्णं कृतवान् भवतीति ॥ २८ ॥

अथ पशुपुरोडाशार्थं सावित्रवारुणैन्द्राख्यं हविस्त्रयं विधत्ते—अथैतानि हवींषीति ॥ २९ ॥

पुरोडाशदेवताः प्रशंसति—अथ यत् सावित्र इति । कात्यायनः—" सोमातिपूतस्याप्येषा, अनुयाजान्ते पशुपुरोडाशार्थैश्चरत्याश्विनेन प्रा गवदानेभ्यः, हविर्भिर्वाऽऽश्विनाभावस्तु "—(का.श्रौ.सू. १९।२९१–२९४)इति । अयमर्थः—एषा सौत्रामणी सोमातिपूतस्यापि भैषज्यार्थं कर्त्तव्येति । राजसूयाद्बहिः प्रयोगः । तत्र पशुपुरोडाशार्थं विहितान्येवैतानि सावित्रादिहवींषि अनुयाजान्ते यष्टव्यानि, तदा छिद्रापिधानार्थं पशुवपाप्रचरणानन्तरमवदानात्

स युदि हैतयापि सोमातिपूतं भिषज्येत् । ( दि ) इष्ट्वा ऽअनुयाजा भवन्त्युव्यूढे स्रुचावुथैतैर्हुविर्भिः प्रचरति पश्चाद्वै सोमोऽतिपवते पश्चादु-वैनमेतेन मेधेनापि दधात्याश्विनमु तर्हि द्विकपालं पुरोडाशं निर्व्व-पेदुथ यदा व्वपाभिः प्रचुरत्युथैतेनाश्विनेन द्विकपालेन पुरोडाशेन प्रचरति ॥ ३३ ॥

तुदु तथा न कुर्यात् । (द्ध्वु) ह्वलति वाऽएष यो यज्ञपथादेत्येति वाऽएष यज्ञपथाद्यऽएवं करोति तुस्माद्युत्रैवैतेषां पशूनां व्वपाभिः प्रचरन्ति तदेवै-तैर्हविर्भिः प्रचरेयुर्नो तर्ह्याश्विनं द्विकपालं पुरोडाशं निर्व्वपेत् ॥ ३४ ॥

तुस्य नपुᳫँसको गौर्दक्षिणा । न वाऽएष स्त्री न पुमान्यन्नपुᳫँसको गौर्यदह पुमांस्तेन न स्त्री युदु स्त्री तेनो न पुमांस्तुस्मान्नपुᳫँसको

---

स यदि हैतयापि सोमातिपूतं भिषज्येत्—इष्टा अनुयाजा भवन्ति । अव्यूढे स्रुचौ । अथैतैर्हविर्भिः प्रचरति । पश्चाद्वै सोमोऽतिपवते । पश्चादेवैनमेतेन मेधेनापि दधाति । आश्विनमु तर्हि द्विकपालं पुरोडाशं निर्वपेत् । अथ यदा वपाभिः प्रचरति । अथैतेनाश्विनेन द्विकपालेन पुरोडाशेन प्रचरति ॥ ३३ ॥

तदु तथा न कुर्यात् । ह्वलति वाऽएषः—यो यज्ञपथादेति । एति वाऽएष यज्ञपथाद्—य एवं करोति । तस्माद्यत्रैवैतेषां पशूनां वपाभिः प्रचरन्ति—तदेवैतैर्हविर्भिः प्रचरेयुः । नो तर्ह्याश्विनं द्विकपालं पुरोडाशं निर्वपेत् ॥ ३४ ॥

तस्य नपुंसको गौर्दक्षिणा । न वाऽएष स्त्री, न पुमान् । यन्नपुंसको गौः । यदह पुमान्—तेन न

---

पुरा आश्विनेन पुरोडाशेन यागः कर्त्तव्य इत्येकः शाखान्तरीयः पक्षः । पशुवपाप्रचरणानन्तरमेवैतैः सावित्रादिभिर्हविर्भिर्यागः करणीयः, तदा यज्ञपतिच्छिद्रपिधानार्थमेतेषामिष्टत्वादाश्विनहविर्निर्वापो न कर्त्तव्य इत्यपरः पक्षः ॥ ३० ॥ ३१ ॥ ३२ ॥

तत्र पूर्वपक्षमाह—स यदि हैतयापि सोमातिपूतमिति । 'यदि' 'एतया' सौत्रामण्या 'सोमातिपूतं' 'भिषज्येत्' समादध्यात्, तर्हि अनुयाजयागान्ते स्रुग्व्यूहनात् पुरस्तात् 'एतैः' सावित्रादिभिः 'हविर्भिः' प्रचरणं कर्त्तव्यम् । पश्चाद्वा इति । सोमः पश्चाद्भागे अतिपूतः, अत एतस्मिन् काले यज्ञस्य पश्चाद्भागे एत-द्धविःप्रचरणेन तं सोमातिपूतं पुरुषमपिहितवान् भवतीति । तत्पक्षे हविरन्तरं विधत्ते—आश्विनमु तर्हीति । तस्य प्रचारकालमाह—अथ यदेति ॥ ३३ ॥

तं पक्षं निराकृत्य स्वमतं दर्शयति—तदु तथेति । स्पष्टोऽर्थः ॥ ३४ ॥

तस्य दक्षिणां विधत्ते—तस्य नपुंसक इति । नपुंसकस्य स्त्रीपुंसेतरत्वप्रतिपादकं वाक्यं स्यात् । विकल्पेन

---

१—नपुंसको दक्षिणा रथवाही वा वडवा । का. श्रौ. सू. १५ । २९० ।

गौर्दक्षिणाऽश्वा वा रथवाही सा हि न स्त्री न पुमान्यदश्वा रथवाही यद्दह रथं वहति तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मादश्वा रथवाही दक्षिणा ॥ ३९ ॥

इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् ॥ ५-४-६ ॥ (५. ४.) ॥

ऐन्द्रावैष्णवं द्वादशकपालं पुरोडाशं निर्वपति । तद्यदेतया यजते वृत्रे ह वा ऽइदमग्रे सर्वमास यदृचो यद्यजूꣳषि यत्सामानि तस्माऽइन्द्रो वज्रं प्राजिहीर्षत् ॥ १ ॥

( तस् ) स ह विष्णुमुवाच । वृत्राय वै वज्रं प्रहरिष्याम्यनु मा तिष्ठस्वेति तथेति ह विष्णुरुवाचानु त्वा स्थास्ये प्रहरेति तस्माऽइन्द्रो वज्रमुद्ययाम स ऽउद्यताद्वज्राद्वृत्रो बिभयांचकार ॥ २ ॥

---

स्त्री । यदु स्त्री—तेनो न पुमान् । तस्मान्नपुंसको गौर्दक्षिणा । अश्वा वा रथवाही । सा हि न स्त्री न पुमान्—यदश्वा रथवाही । यद्दह रथं वहति—तेन न स्त्री । यदु स्त्री—तेनो न पुमान् । तस्मादश्वा रथवाही दक्षिणा ॥ ३९ ॥

अथ त्रैधातवीसंज्ञिका उदवसानीयेष्टिः ।

ऐन्द्रावैष्णवं द्वादशकपालं पुरोडाशं निर्वपति । तद् यदेतया यजते । वृत्रे ह वाऽइदमग्रे सर्वमास—यदृचो, यद्यजूंषि, यत्—सामानि । तस्माऽइन्द्रो वज्रं प्राजिहीर्षत् ॥ १ ॥

स ह विष्णुमुवाच—वृत्राय वै वज्रं प्रहरिष्यामि—अनु मा तिष्ठस्वेति । तथेति ह विष्णुरुवाच—अनु त्वा स्थास्ये, प्रहरेति । तस्माऽइन्द्रो वज्रमुद्ययाम । स उद्यताद्वज्राद्वृत्रो बिभयाञ्चकार ॥२॥

---

दक्षिणान्तरं विधत्ते—अश्वा वेति ( का. श्रौ. सू. १५।२९० ) । रथं वहतीति ' रथवाही ' । " कर्मण्यण् " ( पा. सू. ३।२।१ ) 'सा' वडवा वा दक्षिणेत्यर्थः। तस्या अपि नपुंसकत्वमुपपादयति—यद्दह रथं वहतीति । रथवहनात् स्त्रीत्वाभावः, स्त्रीव्यञ्जनसद्भावात् पुंस्त्वाभावः; सौत्रामण्यपि न इष्टिः ( तै. सं. १।८।२१ ) न पशुबन्ध इत्यभिप्रायः । तस्मात् अश्वा रथवाही दक्षिणेति निगमनवाक्यम् ॥ ३९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे पञ्चमाऽध्याये चतुर्थं ब्राह्मणम् ॥ ५।५।४ ॥

राजसूयान्ते कर्त्तव्यायास्त्रैधातव्युदवसानीयायाः देवतासम्बद्धं हविर्विधत्ते—ऐन्द्रावैष्णवमिति । द्वादशसु कपालेषु संस्कृतमिन्द्राविष्णुदेवताकं पुरोडाशं निर्वपेत् ( तै. सं. २।४।११।५ )। एतदिष्टिविधायककारणानुवादपूर्वकं देवतासम्बन्धस्तावकमितिहासमवतारयति—तद्यदेतयेत्यादिना ( तै. सं. २।४।१२ )।

---

१–त्रैधातव्युदवसानीय ऐंद्रावैष्णवो द्वादशकपालो व्रीहियवानाम् । का. श्रौ. सू. १५।२१४।



१००

स होवाच । ( चा ) अस्ति वाऽइदं वीर्यं तन्नु ते प्रयच्छानि मा नु मे प्रहार्षीरिति तस्मै यजूꣳषि प्रायच्छत्तस्मै द्वितीयमुद्ययाम ॥ ३ ॥

स होवाच । ( चा ) अस्ति वाऽइदं वीर्यं तन्नु ते प्रयच्छानि मा नु मे प्रहार्षीरिति तस्माऽऋचः प्रायच्छत्तस्मै तृतीयमुद्ययाम ॥ ४ ॥

---

स होवाच–अस्ति वाऽइदं वीर्यम्–तन्नु ते प्रयच्छानि–मा नु मे प्रहार्षीरिति । तस्मै यजूंषि प्रायच्छत् । तस्मै द्वितीयमुद्ययाम ॥ ३ ॥

स होवाच–अस्ति वाऽइदं वीर्यम्–तन्नु प्रयच्छानि–मा नु मे प्रहार्षीरिति । तस्माऽऋचः प्रायच्छत् । तस्मै तृतीयमुद्ययाम ॥ ४ ॥

---

यत्कारणादेतयेष्ट्या यजते, तत्कारणमुच्यत इति वाक्यशेषः । वृत्रे ह वा इति । पुरा किल वृत्रासुरे इदं सर्वमभूत् । तदेव विशदयति–यद्दच इति । ऋग्यजुस्सामवेदाधिष्ठात्र्यो देवताः वृत्रे विग्रहवत्य एव बभूवुरित्यर्थः । 'तस्मै' वृत्राय ' इन्द्रः ' वज्रं प्रहर्तुमैच्छत् । प्रजिहीर्षुः ' सः ' इन्द्रः ' विष्णुं ' प्रत्यवोचत् । किमुवाचेत्याह–वृत्राय वा इति । ' वृत्राय ' वृत्रहननार्थमित्यर्थः । वज्रप्रहारं करिष्याम्यहम्, तत्र ' मा ' मां त्वम् ' अनुतिष्ठस्व ' मत्समीपे आत्मानं प्रदर्शयेत्यर्थः । " अनुर्लक्षणे " कर्मप्रवचनीयः ( पा. सू. १।४।८४ ) तद्युक्ते द्वितीया ( पा. सू. २ । ३ । ८ ) तिष्ठतेः " प्रकाशनस्थेयाख्ययोश्च "–(पा. सू. १ । ३ । २३ ) इत्यात्मनेपदम् ' तथा इति ', अङ्गीकृत्याब्रवीद् ' विष्णुः ' । किमित्यत आह–अनु त्वेति । ' त्वा ' त्वाम् अहम् ' अनुस्थास्ये ' त्वत्समीपे आत्मानं प्रदर्शयिष्यामीत्यर्थः । त्वं ' प्रहर ' निर्भयः प्रहारं कुर्वित्यभिप्रायः । तथा सति इन्द्रस्य वीर्यं वर्द्धते, वृत्रस्यापचीयते ' इति ' । ' तस्मै ' वृत्राय ' वज्रम् ' ' उद्ययाम ' उत्क्षिप्तवान् ' इन्द्रः ' । तस्माद् ' उद्यताद् वज्राद् ' ' वृत्रः ' असुरः ' बिभयाञ्चकार ' । " भीत्रार्थानां भयहेतुः "–( पा. सू. १ । ४ । २५ ) इत्यपादाने पञ्चमी । बिभयाञ्चकारेति " भीह्री " ( पा. सू. ३ । १ । ३९ । ) इत्यादिना आम् ॥ १ ॥ २ ॥

स होवाचेति । ' सः ' उद्यतवज्राद् भीतो वृत्रोऽवोचत् । किमित्यत आह–अस्ति वा इति । ' इदं वीर्यम् ' ऋगादिलक्षणम् ' अस्ति ' खलु । वीरयति नानाप्रकारकार्यारम्भाय ईरयति तद् वीर्यम् ; विक्रियतेऽनेनेति वा वीर्यम् । ' तत् नु ' तदेव वीर्यम् ' ते ' इन्द्राय ' प्रयच्छानि ' अहं वृत्रो ददानीत्यर्थः । तेन च ' मे ' वृत्राय त्वं ' मा प्रहार्षीः ' प्रहारं मा कार्षीः ' इति ' संवदन् वृत्रः ' तस्मै ' इन्द्राय ' यजूंषि ' यजुर्वेदं प्रादात् ।

इत्थमेकेन वज्रोद्यमनेन यजुर्विद्यामादाय, ऋक्सामविद्ये अपि आदित्सोरिन्द्रस्यापरं द्विर्वज्रोद्यमनमाह–तस्मै द्वितीयमिति । तमेव वज्रं पुनरप्युद्यतवानित्यर्थः ॥ ३ ॥

स होवाचेत्यादि, व्याख्यातचरम् । ' ऋचः ' ऋग्वेदमित्यर्थः । तस्मै तृतीयमित्यादि, स्पष्टम् ॥ ४ ॥

सुहोवाच । ( चा ) अस्ति वाऽ इदं व्वीर्यं तन्नु ते प्रयच्छानि मा नु मे प्रहार्षीरिति तस्मै सामानि प्रायच्छत्तस्मादप्येतर्ह्येवमेवैतैर्व्वेदैर्यज्ञं तन्वते यजुर्भिरेवाग्रेऽथर्ग्भिरथ सामभिरेवꣳ ह्यस्माऽएतत्प्रायच्छत् ॥ ५ ॥

( चु ) तस्य यो योनिराशयऽ आस । तमनुपरामृश्य संलुप्याच्छिनत्सैषेष्टिरभवत्तद्यदेतस्मिन्नाशये त्रिधातुरिवैषा व्विद्याऽऽशेत तस्मात्त्रैधातवी नाम ६

( मा ) अथ यदैन्द्रावैष्णवꣳ हविर्भवति । ( ती ) इन्द्रो हि व्वज्रमुदयच्छद्विष्णुरन्वतिष्ठत ॥ ७ ॥

( ता ) अथ यद्द्वादशकपालो भवति । द्वादश वै मासाः संवत्सरस्य संव्वत्सरसंमितैषेष्टिस्तस्माद्द्वादशकपालो भवति ॥ ८ ॥

---

सहोवाच । अस्ति वाऽइदं वीर्यं–तन्नु ते प्रयच्छानि–मा नु मे प्रहार्षीरिति । तस्मै सामानि प्रायच्छत् । तस्मादप्येतर्हि–एवमेवैतैर्वेदैर्यज्ञं तन्वते । यजुर्भिरेवाग्रे, अथर्ग्भिः, अथ सामभिः । एवं ह्यस्माऽएतत्प्रायच्छत् ॥ ५ ॥

तस्य यो योनिराशय आस–तमनुपरामृश्य संलुप्याच्छिनत् । सैषेष्टिरभवत् । तद् यदेतस्मिन्नाशये त्रिधातुरिवैषा विद्याऽऽशेत–तस्मात्त्रैधातवी नाम ॥ ६ ॥

अथ यदैन्द्रावैष्णवं हविर्भवति । इन्द्रो हि वज्रमुदयच्छत्, विष्णुरन्वतिष्ठत ॥ ७ ॥

अथ यद्द्वादशकपालो भवति । द्वादश वै मासाः सम्वत्सरस्य । सम्वत्सरसम्मितैषेष्टिः । तस्माद्द्वादशकपालो भवति ॥ ८ ॥

---

स होवाचेति । एवं वेदप्रदानानुकरणेन यागविधानं सिद्धमिति दर्शयति–तस्मादिति । एवं कथमित्यत आह–यजुर्भिरेवाग्र इति ॥ ५ ॥

इष्टेर्नामनिर्वचनं प्रतिपादयति–तस्य य इति । तस्य यजुर्वेदादेर्वीर्यस्य 'यः' 'योनिः' स्थानम्, 'आशयः' हृदयप्रदेशरूपं बभूव । आशेतेऽस्मिन्नित्याशयः । 'तं' योनिमाशयम् 'अनुपरामृश्य' हृदयप्रदेशे किं धारकमङ्गमिति विचार्य, 'संलुप्य' हस्तेनावेष्ट्य 'अच्छिनत्' छिन्नवान्; इन्द्र इति शेषः । 'सा एषा इष्टिः' त्रैधातवी जाता तस्याधिदैविकस्य भावस्य इदमाधियज्ञिकं रूपं प्रवृत्तमित्यर्थः । तद्यदेतस्मिन्निति । यस्मात् 'एतस्मिन्नाशये' हृदयप्रदेशे 'त्रिधातुः' त्र्यवयवः 'इव' 'एषा' त्रयी विद्या 'आशेत' अवस्थिता, 'तस्मात्' स आशयस्त्रिधातुः; त्रिधातोरियमिति विद्यात्रयात्मिका इष्टिः 'त्रैधातवी नाम' ( तै. ब्रा. २ । ४ । १२ । ) ॥ ६ ॥

अथ यदिति । उभयोरिन्द्राविष्णवोर्व्यापृतत्वात् उभयदेवत्या सा भवेदित्यभिप्रायः ॥ ७ ॥

अथ यद् द्वादशकपाल इति । एषा त्रैधातवीष्टिः संवत्सरव्यापिनी ॥ ८ ॥

तमुभयेषां व्रीहियवाणां गृह्णाति । व्रीहिमयमेवाग्रे पिण्डमधिश्रयति तद्यजुषाꣳ रूपमथ यवमयं तदृचाꣳ रूपमथ व्रीहिमयं तत्साम्नाꣳ रूपं तदेतत्त्रय्यै विद्यायै रूपं क्रियते सैषा राजसूययाजिन ऽउदवसानीयेष्टिर्भवति ॥ ९ ॥

सर्वान्वा ऽएष यज्ञक्रतूनवरुन्द्धे । सर्वा ऽइष्टीरपि दर्विहोमान्यो राजसूयेन यजते तस्य यातयामेव यज्ञो भवति सोऽस्मात्पराङिव भवत्येतावान्वै सर्वो यज्ञो यावानेष त्रयो वेदस्तस्यैतद्रूपं क्रियतऽएष योनिराशयस्तदेतेन त्रयेण वेदेन पुनर्यज्ञमारभते तथाऽस्यायातयामा यज्ञो भवति तथो-ऽअस्मान्न पराङ् भवति ॥ १० ॥

---

तमुभयेषां व्रीहियवाणां गृह्णाति । व्रीहिमयमेवाग्रे पिण्डमधिश्रयति—तद् यजुषां रूपम् । अथ यवमयं—तदृचां रूपम् । अथ व्रीहिमयं—तत् साम्नां रूपम् । तदेतत्त्रय्यै विद्यायै रूपं क्रियते । सैषा राजसूययाजिन उदवसानीयेष्टिर्भवति ॥ ९ ॥

सर्वान्वाऽएष यज्ञक्रतूनवरुन्द्धे, सर्वा इष्टीः, अपि, दर्विहोमान्—यो राजसूयेन यजते । तस्य यातयामेव यज्ञो भवति । सोऽस्मात्पराङिव भवति । एतावान्वै सर्वो यज्ञो यावानेष त्रयो वेदः । तस्यैतद्रूपं क्रियते । एष योनिराशयः । तद् एतेन त्रयेण वेदेन पुनर्यज्ञमारभते । तथाऽस्यायातयामा यज्ञो भवति । तथोऽअस्मान्न पराङ् भवति ॥ १० ॥

---

त्रयीविधारूपतां सम्पादयितुं हविषो व्रीहियवमयत्वं विधत्ते—तमुभयेषामिति । 'तं' व्रीह्यादिपिण्डम् 'उभयेषाम्' इति ब्रुवन् अन्यत्र विकल्पं दर्शयति—अत एव कात्यायनः—"व्रीहीन् यवान् वा हविषि" (का. श्रौ. सू. १५ । २१३) इति । व्रीहिमयमेवाग्रे इति व्यवस्थावचनाद् ग्रहणवदेवासङ्कीर्णानामवहननं पेषणञ्चेति द्रष्टव्यम् । अत एव सूत्रम्—"तृतीयं यवानां मध्ये" (का. श्रौ. सू. १५ । २१५) इति । मध्ये तृतीयं भागं यवानां गृह्णीयात्, भागद्वयं तु व्रीहीणामेव । न केवलं यवानां तृतीयभागस्य मध्ये ग्रहणं किन्तु अधिश्रयणमपि तथैवेत्याह—व्रीहिमयमेवाग्र इति[1] ।

इत्थं त्रैधातव्यास्त्रयीरूपत्वं प्रतिपाद्य राजसूययज्वनो विधेयतामाह—सैषा राजसूययाजिन इति । उत्तरेषु विनियोगेषु राजसूयेनोदवसानीयाया अग्रहणमाशङ्क्य राजसूयान्तर्भावमापादयति आग्रयणादिवत् । ततश्च सैषा राजसूययाजिन उदवसानीयेष्टिर्भवतीत्येतावदेवात्र विधीयते । उदवसानीयेति[2] । एतत्तु, क्रमादेव प्राप्तमनूद्यते । उत्तमं कर्मावस्यति विमुञ्चत्यनयेति 'उदवसानीया' यौगिकोऽयं शब्दः ॥ ९ ॥

यज्ञस्यायातयामत्वसम्पादनाय त्रैधातवीष्टिः कर्तव्येत्याह—सर्वान् वा इत्यादिना । इष्टिपशुसोमदर्विहोमात्मकत्वाद् राजसूयस्य तदनुष्ठानेन यज्ञक्रत्वित्यादयः सर्वेऽनुष्ठिता भवन्तीति । 'तस्य' यजमानस्य अपेक्षितकर्मणः कृतत्वादवशिष्टः 'यज्ञो' 'यातयामा' गतसारः 'इव' 'भवति' । 'सः' 'यज्ञः' 'अस्माद्' यज-

---

१ अधिश्रयणं च । का. श्रौ. सू. १५ । २१६ । २—त्रैधातव्युदवसानीया । का. श्रौ. सू. १५ । २१४ ।

सुर्व्वान्वाऽएषु यज्ञक्रतूनुवरुन्द्धे । सुर्व्वाऽ इष्टीरुपि दर्विहोमान्यो राजसूयेन युजते देवुसृष्टो वाऽएषेष्टिर्य्यत्त्रैधातुव्यनुया मेऽपीष्टमसदनयापि सूयाऽइति तुस्माद्वा ऽएषा राजसूययाजिनऽउदवसानीयेष्टिर्भवति ॥ ११ ॥

( त्यु ) अुथो युः सहुस्त्रं वा भूयो वा दद्यात् । (त्तु) तुस्य ह्याप्युदवसानीया स्याद्रिरिचानुऽ इव वाऽएषु भवति युः सहुस्त्रं वा भूयो वा दुदात्येतद्वै सहुस्त्रं व्वाचः प्रुजातं युदेषु त्रयो व्वेदस्तुत्सहुस्त्रेण रिरिचानं पुनराप्यायति तुस्माद्दु ह तस्याप्युदवसानीया स्यात् ॥ १२ ॥

---

सर्वान्वाऽएष यज्ञक्रतूनवरुन्धे, सर्वा इष्टीः, अपि दर्विहोमान्–यो राजसूयेन यजते । देवसृष्टो वा एषेष्टिः यत्त्रैधातवी । अनया मेऽपीष्टमसद्, अनयापि सूयाऽइति । तस्माद्वाऽएषा राजसूययाजिन उदवसानीयेष्टिर्भवति ॥ ११ ॥

अथो यः सहस्रं वाऽ भूयो वा दद्यात्–तस्य हाप्युदवसानीया स्यात् । रिरिचान इव वाऽएष भवति–यः सहस्रं वा भूयो वा ददाति । एतद्वै सहस्रं वाचः प्रजातम्–यदेष त्रयो वेदः । तत् सहस्रेण रिरिचानं पुनराप्याययति । तस्माद्दु ह तस्याप्युदवसानीया स्यात् ॥ १२ ॥

---

मानात् कृतावशिष्टत्वेन 'पराङ्' पराचीन ' इव ' ' भवति ' । यातयामत्वपरिहारमुपपादयति–एतावानिति । ' एष त्रयः ' ऋग्यजुस्सामात्मक–त्र्यवयवो ' वेदः यत्परिमाणः सर्वो यज्ञः एतत्परिमाणः खलु । ' तस्य ' त्र्यवयवस्य वेदस्य ' एतत् ' स्वरूपं ' क्रियते, ' ' य एव आशयो योनिः; ' ' तत् ' तेन ' एतेन ' त्र्यवयवेन ' वेदेन ' ' पुनः ' ' यज्ञम् ' आरब्धवान् भवति, तथा सति ' अस्य ' ' यज्ञः ' अगतसारः स्यात्, यजमानाच्च न पराचीनः स्यात् ॥ १० ॥

**सर्वान् वा** इत्यादि । व्याख्यातचरम् । त्रैधातवी ' इष्टिरपि ' देवसृष्टत्वेन प्रशस्तत्वादत्रावरोद्धव्या, अतः ' अनया ' त्रैधातव्याऽपि मम ' इष्टमसत् ' यागः कृतो भवतु । ' अनयापि ' इष्ट्या ' सूयै ' अभिषिक्तो भूयासम् ' इति ' अभिप्रायेण त्रैधातवी कार्येत्यर्थः । तस्माद्वा एषेति, निगमनम् ॥ ११ ॥

एतस्या विनियोगान्तरमप्याह–**अथो य** इति । ' सहस्रं ' बहुतरं ' वा ' दक्षिणां ' दद्यात् ' तस्यापि तस्मिन्नपि कर्मणि एषाऽङ्गभूता भवेत् । सा च भवन्ती आगन्तुकत्वादन्ते एव भवतीत्युदवसानीयेति व्यपदिश्यते । ' रिरिचानः ' अतिरिक्तः । ' एतत् ' खलु ' सहस्रं ' बहु ' वाचः ' वागायतनान्मुखादुत्पन्नं, योऽयं त्र्यवयवो वेदः ' तत् ' तेन व्रीह्यादिपिण्डात्मकेनाधियाज्ञिकेन त्रयेण वेदेन ' पुनराप्याययति ' आपूरयति । तस्मादिति, निगमनम् ॥ १२ ॥

( दु ) अथो ये दीर्घसत्रमासीरन् । ( न्त्सं ) संव्वत्सरं वा भूयो वा तेषाᳬँ हाप्युदवसानीया स्यात्सर्व्वं वै तेषामाप्तं भवति सर्व्वं जितं ये दीर्घसत्रमासते संव्वत्सरं वा भूयो वा सर्व्वमेषा तस्मादु ह तेषामप्युदवसानीया स्यात् ॥ १३ ॥

( दु ) अथो हैनयाऽप्यभिचरेत् । ( दे ) एतया वै भद्रसेनमाजातशत्रवमारुणिरभिचचार क्षिप्रं किलास्तृणुतेति ह स्माह याज्ञवल्क्योऽपि ह वाऽएनयेन्द्रो व्वृत्रस्यास्थानमच्छिनदपि ह वाऽएनयाऽऽस्थानं छिनत्ति यऽएनयाऽभिचरति तस्मादु हैनयाऽप्यभिचरेत् ॥ १४ ॥

( दु ) अथो हैनयापि भिषज्येत् । ( द्यं ) यं न्वेवैकयऽर्चा भिषज्येदेकेन यजुषैकेन साम्ना तं न्वेवागदं कुर्यात्किमु यं त्रयेण व्वेदेन तस्मादु हैनयापि भिषज्येत् ॥ १५ ॥

---

अथो ये दीर्घसत्रमासीरन्–संवत्सरं वा भूयो वा–तेषां हाप्युदवसानीया स्यात् । सर्वं वै तेषामाप्तं भवति, सर्वं जितं–ये दीर्घसत्रमासते । संवत्सरं वा भूयो वा सर्वमेषा । तस्मादु ह तेषामप्युदवसानीया स्यात् ॥ १३ ॥

अथो हैनयाऽप्यभिचरेत् । एतया वै भद्रसेनमाजातशत्रवमारुणिरभिचचार । क्षिप्रं किलास्तृणु॰ तेति ह स्माह याज्ञवल्क्यः । अपि ह वाऽएनयेन्द्रो वृत्रस्यास्थानमच्छिनत् । अपि ह वाऽएनयाऽऽस्थानं छिनत्ति; य एनयाऽभिचरति । तस्मादु हैनयाऽप्यभिचरेत् ॥ १४ ॥

अथो हैनयापि भिषज्येत् । यं न्वेवैकयऽर्चा भिषज्येद्, एकेन यजुषा, एकेन साम्ना–तं न्वेवागदं कुर्यात्–किमु यं त्रयेण वेदेन । तस्मादु हैनयापि भिषज्येत् ॥ १५ ॥

---

अथो ये दीर्घसत्रमित्यादि । प्रसन्नम् । संवत्सरं वा भूयो वेति, दीर्घसत्रेण सम्बध्यते । सर्वमेषेति । वेदत्रयस्य पौरोडाशिकधातुत्रयीत्वेनेह कल्पनादित्यभिप्रायः ॥ १३ ॥

अथो हैनयेति । अजातशत्रोरपत्यम् ' आजातशत्रवः ' तम्, भद्रसेननामानं राजन्यम्, अरुणस्यापत्यम् ' आरुणिः ' ऋषिरुद्दालकः ' अभिचचार ' अभिचरितवान् । क्षिप्रं किलेति । ' क्षिप्रं किल ' शीघ्रमेव ' अस्तृणुत ' अभिचारेण तं हिंसितवानेवेत्यर्थः । एतस्मिन्नर्थे श्रुतिर्याज्ञवल्क्यं प्रमाणयति–इति ह स्माहेति । ' इन्द्रः ' ' अपि ' ' एनया ' इष्ट्या ' वृत्रस्यास्थानं ' त्रयीविद्याशयम् ' अच्छिनत् । ' ' तस्मात् ' परस्य स्थाननाशार्थम् ' एनया ' अभिचारः कर्त्तव्य इत्यर्थः ॥ १४ ॥

अथो हैनयापि भिषज्येदिति[1] । अनया इष्ट्या कथं परकृताभिचारपरिहार इत्याशङ्क्य तं कैमुतिकन्यायेन समर्थयते–यं न्वेवैकयर्चेति । एकैकेन यजुरादिमन्त्रेण नाम यदि भैषज्यं क्रियते, तेन परकृतबाधा परिह्रियते, ' किमु ' किमुत वेदत्रयरूपयाऽनया त्रैधातव्या अभिचारपरिहारः । ( तै. सं. २ । ४ । ११ । ७ ) इति ॥ १५ ॥

---

१–भैषज्यापचारयोरप्येषा । का० श्रौ० सू० । १५ । २१८ ।

( ग ) तस्यै त्रीणि शतमानानि हिरण्यानि दक्षिणा। तानि ब्रह्मणे ददाति न वै ब्रह्मा प्रचरति न स्तुते न शᳫँसत्यथ स यशो न वै हिरण्येन किं चन कुर्वन्त्यथ तद्यशस्तस्मात्त्रीणि शतमानानि ब्रह्मणे ददाति ॥ १६ ॥

तिस्रो धेनूर्होत्रे । भूमा वै तिस्रो धेनवो भूमा होता तस्मात्तिस्रो धेनूर्होत्रे ॥ १७ ॥

त्रीणि वासाᳫँस्यध्वर्यवे । तनुते वाऽअध्वर्युर्यज्ञं तन्वते वासाᳫँसि तस्मात्त्रीणि वासाᳫँस्यध्वर्यवे गामग्नीधे ॥ १८ ॥

---

तस्यै त्रीणि शतमानानि हिरण्यानि दक्षिणा । तानि ब्रह्मणे ददाति । न वै ब्रह्मा प्रचरति, न स्तुते । न शंसति । अथ स यशः । न वै हिरण्येन किंचन कुर्वन्ति । अथ तद् यशः । तस्मात्त्रीणि शतमानानि ब्रह्मणे ददाति ॥ १६ ॥

तिस्रो धेनूर्होत्रे । भूमा वै तिस्रो धेनवः । भूमा होता तस्मात्तिस्रो धेनूर्होत्रे ॥ १७ ॥

त्रीणि वासांस्यध्वर्यवे । तनुते वाऽअध्वर्युर्यज्ञम् । तन्वते वासांसि । तस्मात्त्रीणि वासांस्यध्वर्यवे । गामग्नीधे ॥ १८ ॥

---

कात्यायनेन राजसूयान्तःपातिनीमिष्टिं प्रस्तुत्य यद्दक्षिणादानमुक्तम्—"तिस्रस्तिस्रो दक्षिणा ददाति शतमानानि ब्रह्मणे धेनूर्होत्रे वासांस्यध्वर्यवे गामग्नीधे" ( का. श्रौ. सू. १९।२।१७ ) इति । तदिदमिदानीं विधत्ते—तस्यै त्रीणीति । शतमानलक्षणमुक्तं पुरस्तात् ( श. प. ब्रा. ९।४।३।२४ ) । न वै ब्रह्मेति । अस्यायमर्थः—'ब्रह्मा हि न प्रचरति' हवनादिकमध्वर्युवर्गवन्न करोति, 'न स्तुते' उद्गाता इव न स्तोत्रं प्रयुङ्क्ते, 'न शंसति' होतृवच्छस्त्रं न पठति । तस्मात् 'सः' ब्रह्मा यशोरूपः । 'हिरण्येन' अपि 'किञ्चन' 'न कुर्वन्ति'; हिरण्यं साधनं कृत्वा यदन्नादिकमुपभुञ्जते, न तु हिरण्यमेव भुञ्जन्ति । अतो व्यवहारादिषु सुवर्णे दत्तेऽपि तस्य स्वरूपहानिर्नास्ति, अतस्तदपि यशोरूपम् । तस्मात् हिरण्यस्य तत्सम्प्रदानकत्वं युक्तमित्यर्थः ॥ १६ ॥

तिस्रो धेनूरिति । पयस्विनीः सवत्सा गाः होत्रे दद्यात् । उभयोः परस्परं योग्यतामाह—भूमा वै तिस्र इति । तिसृणां सवत्सानां भूयस्त्वम्, होतुरपि नानामन्त्रपठनात्; अतस्तासां होतृसम्प्रदानकत्वं युक्तम् ॥ १७ ॥

त्रीणि वासांस्यध्वर्यव इति । दद्यादिति शेषः । वस्त्राणां सर्वशरीराच्छादकत्वात् वासस्त्वम्; अध्वर्योरपि यज्ञशरीरस्य विस्तारकत्वमस्ति; "यज्ञस्य मात्रां विमिमीत उ त्व." —इति मन्त्रवर्णात् ( ऋ. सं. १० । ७१।११ ) तत्र "त्व एकोऽध्वर्युः" इति यास्कवचनम् ( पा. निरु. १।३।३ ) यज्ञस्य मात्रां शरीरमित्यर्थः । गोर्दानं विधत्ते—गामग्नीध इति ॥ १८ ॥

ता वाऽएताः । ( ० ) द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संव्वत्सरस्य मासाः संव्वत्सरसंमितैषेष्टिस्तस्माद्द्वादश वा त्रयोदश वा दक्षिणा भवन्ति ॥ १९ ॥

इति पञ्चमकाण्डे चतुर्थप्रपाठके सप्तमं ब्राह्मणम् ॥ ५-४-७॥ (५.५.) ॥

चतुर्थः प्रपाठकः पञ्चमोऽध्यायश्च समाप्तः ।

अस्मिन्काण्डे कण्डिकासंख्या ॥ ४७१ ॥

इति माध्यन्दिनीये शतपथब्राह्मणे सवनाम पञ्चमं काण्डं समाप्तम् ॥ ५ ॥

---

ता वाऽएता द्वादश वा त्रयोदश वा दक्षिणा भवन्ति । द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः । संवत्सरसंमितैषेष्टिः । तस्माद्द्वादश वा त्रयोदश वा दक्षिणा भवन्ति ॥ १९ ॥

इति राजसूययज्ञाधिकारः ।

---

एता दक्षिणाः सम्भूय संवत्सरात्मना प्रशंसति—ता वा एता द्वादशेति । त्रीणि शतमानानि, तिस्रो धेनवः, त्रीणि वासांसि, इति नव श्रुत्युक्तानि; वत्ससहितानां पयस्विनीनां दानस्य सिद्धत्वात् तासां वत्सा अपि त्रय इति द्वादश । आग्नीध्रस्य ब्रह्मणा सह परिगणनाभावात् तद्दक्षिणां विहाय द्वादश दक्षिणा इत्युक्तम् । "गामग्नीधे" इति पृथक् दक्षिणाविधानात् तेन सह परिगणनपक्षे त्रयोदश भवन्ति; । संवत्सरस्यापि यथोक्ताः चैत्रादिमासाः द्वादश यदा मलिम्लुचो भवति तदा त्रयोदश । अतोऽस्या इष्टेर्द्वादशकपालसंस्कृतहविर्युक्तत्वात् संवत्सरसम्मितवत्म्, अतः संवत्सररूपाया इष्टेः द्वादश त्रयोदश वा दक्षिणा युक्ता इत्यर्थः ॥ १९ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनीयशतपथब्राह्मणभाष्ये पञ्चमकाण्डे पञ्चमेऽध्याये पञ्चमं ब्राह्मणम् ॥ ( ५-५-५ ) ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भं,
सप्ताब्धीन्पञ्च सीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपमहितरथौ सायणिः सिङ्गणार्यो,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटं च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान्गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजा,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे माध्यन्दिनशतपथब्राह्मणभाष्ये पञ्चमकाण्डे चतुर्थोध्यायः समाप्तः॥५-४॥

इति श्रीसायणभाष्यसमेतं सवनामकं पञ्चमं काण्डं समाप्तम् ।

१४०८